नमो नमो निम्मल दंसणस्स
पञ्चम गणधर श्री सुधर्मा स्वामिने नमः

# ३६/१ व्यवहार-छेदसूत्रं-१

(सटीकं)

## तृतीयं-छेदसूत्रं

**[भद्रबाहु स्वामिरचितं मूलम् + ] स्वोपयज्ञ निर्युक्ति युक्तं ] संघदास गणिविरचितं भाष्यं + मलयगिरि आचार्य विरचिता टीका]**

**[व्यवहार सूत्र-पीठिका]**

||१|| प्रणमत नेमिजिनेश्वर-मखिलप्रत्यूहतिमिरविबिंब म् ।
दर्शनपथमवतीर्णं, शशीव दष्टेः प्रसत्तिकरम् ॥

||२|| नत्वा गुरुपदकमलं, व्यवहारमहं विचित्रनिपुणार्थम् ।
विवृणोमि यथाशक्ति, प्रबोधहेतोर्जडमतीनाम् ॥

||३|| विषमपदविवरणेन, व्यवहर्तव्यो व्यध्यायि साधूनाम् ।
येनायं व्यवहारः, श्रीचूर्णिकृते नमस्तस्मै ॥

||४|| भाष्यं क्व चेदं विषमार्थगर्भ, क्व चाहमेषोऽल्पमतिप्रकर्षः ।
तथापि सम्यग्गुरुपर्युपास्ति-प्रसादतो जातद्दढप्रतिज्ञः ॥

**वृ-** उक्तंकल्पाध्ययनम्, इदानीं व्यवहाराध्ययनमुच्यते, तस्य चायमभिसंबंधः, कल्पाध्यायने आभवत् प्रायश्चित्तमुक्तं, न तु दान प्रायश्चित्त दानं, व्यवहारे तु दानप्रायश्चितमालोचनाविधिश्चा-भिधास्यते. तदनेन संबंधनायातस्याऽस्य व्यवहाराध्ययनस्य व्याख्या प्रस्तूयते । अस्य च महापुरस्येव चत्वारि अनुयोगद्वाराणि भवन्ति । तथाहि यथा नगरमकृतद्वारमनगरं, कृतैकद्वारमपि च दुरधिगमं, कृतचतुर्मूलद्वारं तु प्रतिद्वारानुगतं सुखाधिगममेवं व्यवहाराध्ययनपुरमप्यर्थाधिगमोपायशून्यम-शक्याधिगममेकद्वारानुगतमपि च दुरधिगमं, सप्रभेदचतुर्द्वारानुगतं तु सुखाधिगममिति फलयान् द्वारोपन्यासः, अनुयोगद्वाराणि नाम अध्ययनार्थप्रवेशमुखानि, तानि च अमूनि-उपक्रमो, निक्षेपोऽनुगमो, नया इतिः तत्र उपक्रमणमुपक्रमः, शास्त्रस्य समीपीकरणं, निक्षेपणंनिक्षेपो नामादिन्यासः अनुगमनमनुगमः सूत्रस्यानुरूपमर्थाख्यानं, नया नैगमादयो वस्तुनः पर्यायाणाम् यथासंभवम-धिगमकारिणः, तत्रोपक्रमो द्विविधः शास्त्रीयइतरश्च, इतरः षट्प्रकारः नामस्थापनाद्रव्यक्षे-त्रकालभावभेदात्, तत्र नामस्थापने सुप्रतीते; द्रव्योपक्रमो द्विविधः, आगमतो नोआगमतश्च, आगमत उपक्रम शब्दार्थस्य ज्ञाता तत्र चानुपयुक्तोऽनुपयोगो द्रव्यमिति वचनात् । नोआगमतस्त्रिविधो, ज्ञशरीर भव्यशरीर तद्व्यतिरिक्तभेदात् । तत्र यद् उपक्रम शब्दार्थज्ञस्य शरीरं जीवविप्रमुक्तं सिद्धिशिलातलादिगंत, तद्भूतभावित्वात् ज्ञशरीरद्रव्योपक्रमः, यस्तुबालकोनेदानी-मुपक्रमशब्दार्थ-

मवबुध्यते, अथवाऽवश्यमायत्यांभोत्स्यत, संभावनाभाविनिबंधनत्वाद्, भव्यशरीरद्रव्योपक्रमः ज्ञशरीर भव्यशरीर व्यतिरिक्त स्त्रिविधः सचित्ताचित्तमिश्रभेदात् ।

तत्र सचित्तद्रव्योपक्रमो द्विपद चतुः पदापदोपाधिभेदभिन्नः पुनरेकैको द्विविधः परिकर्म्मणि वस्तुविनाशे च, तत्र द्रव्यस्य गुणविशेषपरिणामकरणं परिकर्म्म, तस्मिन् सचित्र द्विपदद्रव्योपक्रमो यथा पुरुषस्य वर्णादिकरण, सचित्रचतुष्पदद्रव्योपक्रमो यथा हस्त्यादेः शिक्षाद्यापादनं, सचित्तापदद्रव्योपक्रमो-यथा वृक्षादे र्वृक्षायुर्वेदोपदेशाद् वृद्ध्यादि गुणकरणं वस्तुविनाशे पुरुषादीनां खड्गादिभिर्विनाशकरणं, अचित्तद्रव्योपक्रमः परिकर्म्मणि यथा पद्मरागमणेः क्षारमृत्पुटकादिना नैर्मल्यापादनं; वस्तुविनाशे विनाशकरणं, मिश्रद्रव्योपक्रमः परिकर्मणि कटकादिभूषितपुरुषादि द्रव्यस्यगुणविशेषकरणं, वस्तुविनाशे विवक्षितपर्यायोच्छेदः; क्षेत्रमाकाशंतच्चामूर्त्तं, नित्यं चेति न तस्य परिकर्मलक्षणो वा उपक्रमो घटते, तत उपचारात् तदाश्रितस्येक्षक्षेत्रादेस्तौ द्रष्टव्यौ; कालस्योपक्रमः परिकर्म्मणि चन्द्रोपरागादे-र्यथावस्थितमवगम्य परिज्ञानकरणं, वस्तुविनाशे विवक्षितेकाले तदुचितप्रयोजनस्यासंपादनं, तदसंपादने हि स कालो विनाशितो भवति; भावोपक्रमो द्विधा आगमतो नोआगमतश्च, तत्रागमत उपक्रम शब्दार्थस्य ज्ञाता तत्र चोपयुक्त उपयोगो भावनिक्षेप इति वचनात्, नोआगमतो द्विधा, प्रशस्ताऽप्रशस्तश्च तत्राऽप्रशस्तो गणिकादीनां, गणिकाद्यप्रशस्तेन संसाराभिवर्द्धिना व्यवसायेन परभावमुपक्रामन्ति, प्रशस्तं श्रुतादिनिमित्तमाचार्यभावोपक्रमः अनेनेहाधिकारः ।।

अथ व्याख्यांगप्रतिपादनाधिकारे गुरुभावोपक्रमाभिधानमनर्थकमव्याख्यांगत्वात्तदसम्यक्, तस्यापि व्याख्यांगत्वात् उक्तं च-गुर्वायत्ता यस्मात् शास्त्रारंभा भवंति, सर्वेपि तस्माद् गुर्वाराधनपरेण हितकांक्षिणा भाव्यं । आवश्यक भाष्यकारेणाप्यभ्यधायि।

।। १ ।। गुरुचित्तायत्ताई वक्खाणंगाई जेन सव्वाई ।।
जेन पुन सुप्पसन्नं,होइ तयं तं तहा कज्जं ।।

।। २ ।। आगारिंगियकुसलं, जइ सेयं वायसं वए पुज्जा ।
तह वियसिं न विकूडे विरहंमियकारणं पुच्छे ।।

**वृ-** आह यद्येवं गुरुभावोपक्रम एव भणनीयो, न शेषा निःप्रयोजनत्वात् न गुरुचित्तप्रसादनार्थं तेषामप्युपयोगित्वात् तथा च देशकालावपेक्ष्य परिकर्म्मविनाशौ द्रव्याणमुदकौदनादीनामाहारादिकार्येषु कुर्व्वन्नंतेवासी हरति गुरुणां चेतः, अथवा उपक्रमसामान्यात् ये केचन संभविन उपक्रमभेदास्ते सर्वेप्युक्ताः; येनानुपयोगिव्युदासेनोपयोगिनिष्प्रतिपक्षा प्रतिपत्तिरुपजायते तथा चाप्रस्तुतार्थापाकरणं प्रस्तुतार्थव्याकरणं च, नामादिन्यासव्याख्यायाः फलमुपवर्णयन्ति महाधियः; अप्रस्तुतार्थापाकरणात् प्रस्तुतार्थव्याकरणाच्चनिक्षेपः समवतार इति तत्रानुपूर्व्वी नामस्थापनाद्रव्यक्षेत्रकालगणनोत्कीर्त्तनसंस्थान सामाचारीभावभेदभिन्ना दशप्रकारा तस्यां यथा संभवमवतारणीयमिदमध्ययनं, विशेषतस्तूत्कीर्त-नानुपुर्व्यां गणानुपूर्व्या च, उत्कीर्त्तना नाम संशब्दना यथा कल्पाध्ययनं व्यवहारध्ययनमिति, गणनं परिसंख्यानमेकं द्वे त्रीणि इत्यादि, साच गणनानुपूर्वी त्रिप्रकारा पूर्वानुपूर्वी पश्चानुपूर्वी अनानुपूर्वी च तत्र पूर्वानुपूर्व्यामिदं द्वितीयं पश्चादानुपूर्व्यां प्रथमं, द्वयोस्त्वऽनानुपूर्वीनास्ति, अपरेतु दशभिर्दशाध्ययनैः सहेदंगणयंति, तत्र पूर्वानुपूर्व्यामिदं द्वादशं, पश्चादानुपूर्व्यां प्रथममनानुपूर्व्यामेकादयो द्वादशपर्यंता अंकाः श्रेण्यांव्यवस्थाप्यन्ते, तेषामू च परस्परमभ्यासे यावान् राशिः संपद्यते तावंतो द्विरुपोना भंगकाः ते च

कोटिसंख्याकास्तेषु च क्वचित्प्रथमं क्वचित् द्वितीयमित्यादि, नाम एक नामादि दश नामपर्यंतं यथानुयोगद्वारेषु षट् नाम्नि त्ववतारः

तत्र षट् भावा औदयिकादयो निरुप्यन्ते, तत्रास्य ज्ञायोपशमिके भावे अवतारः सर्वश्रुतस्य ज्ञायोपशमिकत्वात्; प्रमाणं चतुर्द्धा द्रव्यप्रमाणं क्षेत्रर्पमाणं काल प्रमाणं भावप्रमाणं च तत्र व्यवहाराध्ययनं भाव आत्मकत्वाद् भावप्रमाणविषयं, तदपि भावप्रमाणं त्रिधा तद्यथा गुणप्रमाणं नयप्रमाणं संख्याप्रमाणं च, गुणप्रमाणमपि द्विधा । जीवगुणप्रमाणमऽजीवगुणमाणं, तत्र जीवादपृथग्भूतव्यवहाराध्ययनस्य ज्ञानगुणप्रमाणे समवतारः तदपि जीवगुणप्रमाणं त्रिधा ज्ञानदर्शनचारित्रभेदात्, तत्र बोधात्मकत्वात् व्यवहाराध्ययनस्य ज्ञानगुणप्रमाणे समवतारः तत्र ज्ञानगुणप्रमाणं प्रत्युज्ञानुमानागमोपमानभेदात् चतुष्प्रकारं, तत्र व्यवहाराध्ययनस्य प्रायः परोपदेशसव्यापेक्षत्वादागमे समवतारः, आगमोऽपि लौकिकलोकोत्तरभेदात् द्विधा तत्रेदं व्यवहाराध्ययनं परमर्षिप्रणीतत्वात् लोकोत्तरे समवतरति, सोपि द्विधा आवश्यकमावश्यकव्यतिरिक्तश्च तत्रेदमावश्यकव्यतिरिक्त आवश्यकव्यतिरिक्तोपि द्विधा अंग प्रविष्टो अनंगप्रविष्टश्च तत्रेदमनंगप्रविष्टः सोपि द्विधा कालिकोत्कालिकभेदात् तत्रेदं कालिके, सोपि सूत्रार्थोभयात्मानंतरपरंपरभेदभिन्नः, तत्रेदं सूत्रार्थ रुपत्वात्तदुभये, तथेदं गणभृतां गौतमादीनां सूत्रत्र आत्मागमस्तच्छिष्याणाम् जंबूस्वामि प्रभृतीनामनंतरागमः प्रशिष्याणाम् तु प्रभवादीनां परंपरागमः अर्थतो भगवतामर्हतामात्मागमो गणधराणामनंतरागमः तच्छिष्याणां परंपरागमः ।

नयप्रमाणे तु नास्य संप्रत्यवतारो मूढनयत्वात् उक्तं च मूढनइयं सुयंकालियं च इत्यादि, संख्यानामस्थापनाद्रव्यक्षेत्रकालोपमपरिमाणभावभेदात् अष्टप्रकाश यथानुयोगद्वारेषु तथा वक्तव्या, तत्र कालिकश्रुतपरिमाण संख्याऽपि द्विधा सूत्रतोऽर्थतश्च तत्रार्थतोऽनंतपर्यायत्वादपरिमितपरिमाणं सूत्रतः परिमितप्रमाणं अक्षरपदपादश्लोकगाथादीनां संख्यातत्वात्, संप्रति वक्तव्यता साच त्रिधा स्वसमयवक्तव्यता परसमयवक्तव्यता उभयसमयवक्तव्यताच, स्वसमय स्वसिद्धांतवक्तव्यता पदार्थविचारः तत्र प्रायेण सर्वाण्यपि अध्ययनानि स्वसमयवक्तव्यतायां समवतरंतीत्यस्यापि स्वसमयवक्तव्यतायां समवतारः ।।

इदानीमर्थाधिकारः सचेह दान प्रायश्चित्तमा भवत् प्रायश्चित्तमालोचना विधिश्च; संप्रति समवतारः, स च लाधवार्थं प्रतिद्वारं समवतारणाद्वारेण प्रदर्शित एव, उक्तः उपक्रमः, इदानीं निक्षेपः स च त्रिधा ओघनिष्पन्नो नामनिष्पन्नः सूत्रालापकनिष्पन्नश्च तत्रौघोनाम यत्सामान्यशास्त्राभिधानं तच्च चतुर्द्धा अध्ययनमक्षीणमायः क्षपणा च, एकैकं नाम स्थापना द्रव्यभावभेदेन चतुर्भेदमनुयोगद्वारतः प्रपंचेनाभिधाय भावाध्ययनभावक्षीणभावायभावक्षपणास्वैतदध्ययनमायोज्यं, नामनिष्पन्ने निक्षेपे व्यवहारः इति, व्यवह्रियते यत् यस्य प्रायश्चित्तमाभवति स तद्दानविषयीक्रियतेऽनेनेति व्यवहारः; नृत्रोभावात् समश्च हल इति करणे घञ्प्रत्ययः तत्र व्यवहारग्रहणेन व्यवहारी व्यवहर्तव्यं चेति द्वितयसूचितमेव तद्व्यतिरेकेण व्यवहारस्यासंभवात् न खलु करणं सकर्म्मकक्रियासाधकतमरुपं कर्म्मकर्तारं च विना क्वचित्संभवदुपलब्धमिति, ततो यथा व्यवहारस्य प्ररुपणा कर्तव्या तथा व्यवहारी व्यवहर्तव्ययोरपीति, त्रयाणामपि प्ररुपणां चिकीर्षु भाष्यकृदेतदाह.

[भा. १] ववहारो ववहारी ववहरियव्वा य जे जहा पुरिसा ।

एएसिं तु पयाणं, पत्तेयं परूवणं वोच्छं ॥

**वृ-** व्यवहार उक्तशब्दार्थः, व्यवहरतीत्येवंशीलो व्यवहारी व्यवहारक्रियाप्रवर्त्तकः, प्रायश्चित्तदायीति यावत्, तथा ये पुरुषा पुरुषग्रहणं पुरुषोत्तमो धर्म इति ख्यापनार्थमन्यथास्त्रियोपिद्रष्टव्यास्तासामपि प्रायश्चित्तदानविषयतया प्रतिपादयिष्यमाणत्वात्, यथा येन वक्ष्यमाणेन प्रकारेण व्यवहर्त्तव्या व्यवहारक्रियाविषयीकर्त्तव्यः, पाठांतरं जे जहा काले अस्यायमर्थः, ये यथा यस्मिन् काले व्यवहर्त्तव्यास्तद्यथा यदा आगम व्यवहारिणः संति, तदा तदुपदेशेनैव व्यवहर्त्तव्यास्तेषु व्यविच्छिन्नेषु श्रुतज्ञानव्यवहार्युपदेशेन तदेवचाज्ञयापि तदेव धारणया तदेवतु जीतव्यवहारेणापि व्यवहर्त्तव्या इति, एतेषां व्यवहारव्यवहारिव्यवहर्त्तव्यरुपाणां त्रयाणां पदानां तु विशेषणे स चैतद्विशिनष्टि, संक्षेपप्ररुपणार्थमिदमाह ॥

**[भा. २]** ववहारी खलु कत्ता ववहारो होइ करणभूतो उ ।
ववहरियव्व कज्ज कुंभादितियस्स जह सिद्धी ॥

**वृ-** ववहारी खलु कत्तति व्यवहारस्य कर्त्ता व्यवहारस्य छेत्ताभिधीयते इति शेषः, व्यवहारः पुनर्भवति करणभूतः व्यवहार च्छेदक्रिया प्रतिकरणत्व प्राप्तः, तु शब्दः पुनरर्थे व्यवहारितसंबंधश्च, स च यथा स्थानयोजित एव स च व्यवहारः करणभूतः पंचधा १ आगमः २ श्रुतमा ३ धारणा ५ जीतश्च आह चूर्णिकृत्, पंचविधो व्यवहारः करणमिति, तेन च पंचविधेन व्यवहारेण करणभूतेन व्यवहरन् कर्त्ता यन्निष्पादयति कार्यं, तद् व्यवहर्त्तव्यमित्युच्यते, तथा चाह ववहरियव्वाय जे जहा पुरिसा इति, अथ कथं व्यवहारग्रहणेन व्यवहारी व्यवहर्त्तव्यश्च सूच्यते, न खलु देवदत्तग्रहणेन यज्ञदत्तस्य सूचा भवतीति तत आह कुंभादितियस्य जह सिद्धि कुंभ आदिर्येषामिति कुंभादयस्तेषां त्रिकं कुंभादित्रिकं, तस्य यथा सिद्धिः कुंभग्रहणेन तथा कुंभइत्युक्ते सकृतक इति तस्य कर्त्ता कुलालः करणं मृच्चक्रादिसामर्थ्यात् तन्यते, कृतकस्यासतः कर्तृकरण व्यतिरेकणासंभवात् एवमत्रापि, व्यवहार इत्युक्तेव्यवहारि व्यवहर्त्तव्यश्च सूच्यते करणस्यापि सकर्म्मकक्रिया साधकतमरुपस्य कर्म्मकर्तृव्यतिरेकेणासंभवादिति त्रितयसिद्धिः तदेवमेकग्रहणे सामर्थ्यादितरस्य द्वयस्य ग्रहणं भवत्येतत् सामान्येन सनिदर्शनमुक्तं, संप्रतिकरणग्रहणेऽवश्यकर्तृकर्म्मग्रहणं भवतीत्यर्थे निदर्शनमाह ॥

**[भा. ३]** नाणं नाणीनेयं, अन्ना वा मग्गणा भवेतितए ।
विविहं वा विहिणा वा, ववणहरणं च ववहारो ॥

**वृ-** मार्गणा भवति तामेवाह, नाणीनाणं नेयमिति, तत्र ज्ञायते वस्तु परिच्छिद्यते अनेनेति ज्ञानं, तत्र यथा ज्ञानमित्युक्ते ज्ञानिना ज्ञानक्रिया कर्तुर्ज्ञेयस्य च ज्ञानक्रियाविषयस्य परिच्छेदस्य सिद्धि र्भवति, तद्द्वितयसिद्धिमंतरेण ज्ञानस्य ज्ञानत्वस्यैवासंभवादेवमत्रापि व्यवहार ग्रहणेन व्यवहारी व्यवहर्त्तव्यश्च सूच्यते इति भवति त्रितयस्याप्युपक्षेपः एका तावन्मार्गणा त्रितयविषया कुंभादित्रिकसिद्धिदृष्टांते प्रागभिहिता, वा शब्द प्रकारांतरे अथवा इयमन्या त्रितया विषया तदेव संक्षेपतो व्यवहारादिपदत्रयस्य प्ररुपणा कृता, संप्रति यथाक्रमं विस्तरेण तां चिकीर्षुः प्रथमतो व्यवहारपदस्य निरुक्तं वक्तुकाम इदमाह विविहं वा इत्यादि विविधं तद्योग्यतानुसारेण विचित्रं विधिना वा सर्वज्ञोक्तेन प्रकारेण वपनं तपः प्रभृत्यनुष्टानविशेषस्य दानं टुवप् बीजतंतुसंताने इति वचनात् हरणमतीचारदोषजातस्य अथवा संभूय द्विव्यादिसाधुनां क्वचित्प्रयोजनं प्रवृत्तौयत् यस्मिन्वा भवति तस्य तस्मिन् वपनमितरस्माद्ध हरणमिति

व्यवहारः किमुक्तं भवति ? विविधो विधिना वा हारो व्यवहारः, पृषोदरादय इति विवाप शब्दयोर्व्यव आदेशः; संप्रति वपनहरणशब्दयोरर्थं वक्तुकामस्तदेकार्थिकान्याह ।।

[भा.४] ववणंति रोवणंतिय, पकिरण परिसाडणाय एगट्ठं ।
हारोत्तियहरणं, तिय एगठं हीरएव ति ।।

वृ- डुवप् बीजतंतुसंताने उप्यते इति वपनं, इति शब्दः शब्दस्वरूपपरिसमाप्तिद्योतकः एवमुत्तरेपि, रोपणमिति रुह जन्मनि रोहति कश्चित्तमन्यः प्रयुंक्ते प्रयोक्तृव्यापारे निच् रुहेः पो वाइति हकारस्य पकारः रोप्यते इति परिसाडणा इति, शद्लृ शातने धातोः परिपूर्वः परिशटति परिभ्रश्यति तमन्यः प्रयुंक्ते पूर्ववत् णिच् परिशाटयते इति परिशाटनानि वेत्यादि अनट् प्रत्ययः आप् चसमुच्चये, एगठमिति एतत् शब्दचतुष्टयमेकार्थं एकार्थप्रवृत्ताः परस्परमेते पर्याया इति भावस्तेन यदुक्तं भवति रोपणमिति प्रकरणमिति परिशाटनेति वा तदुक्तं भवति वपनमिति एतावता वपनशब्दस्य प्रदानलक्षणोऽर्थः समर्थितः; हारोति चेत्यादिग्रहणं हार इहर्हरणं ह्रियते इति वा एकार्थं त्रयोप्येते शब्दा एकार्थिका इत्यर्थः तदेव वापशब्दस्य हारशब्दस्य च प्रत्येकमर्थोऽभिहितः, संप्रति तयोरेव समुदितयोरर्थं जिज्ञापयिषुरिद-माह ।।

[भा.५] अत्थी पच्चत्थीणं हाउं एकस्सववइविइयस्स ।
एएण उववहारो अहिगारो एत्थ उ विहीए ।।

वृ- अर्थी याचको यः परस्मात्ममेदं लभ्यमिति याचते, प्रत्यर्थी अर्थिनः प्रतिकुलः, किमुक्तं भवति, यः परस्य गृहीत्वा न किमपि तस्मै प्रयच्छति तयोरर्थिप्रत्यर्थिनो विवदमानयोर्व्यवहारार्थ-स्थेयपुरुषमुपस्थितयोः स व्यवहारपरिच्छेदकुशलो व्यवहारविधापनसमर्थश्च स्थेयो यस्मात् हाउं एकस्सत्ति सूत्रेषष्ठी पंचम्यर्थे प्राकृते हि विभक्तिव्यत्ययोऽपि भवति, यदाह, पाणिनिः स्वप्राकृतलक्षणे व्यत्ययोप्यासामिति, यस्य यन्नभवति, तस्मात् तत् हृत्वा आदाय यस्या भवति तस्मै द्वितीयाय वपति प्रयच्छति, एएणउववहारो इति एतेन अनंतरोदितेन कारणेन स स्थेयव्यापारो व्यवहारः, किमुक्तं भवति यस्मादेषस्थेयपुरुषो विवादनिर्णयाय एकस्माद्धरति, अन्यस्मै प्रयच्छति, तस्मात्तद्व्यापारो वपनहरणात्मकत्वात् व्यवहार इति एतावता समुदायार्थकथनंकृतं, सच व्यवहारो विधिव्यवहारो अविधि व्यवहारश्च अधिकारः प्रयोजनं व्यवहारेण विधिनैव विधिपूर्वकेणैव तु शब्द एवकारार्थे भिन्नक्रमश्च, ना विधिना, अविधिर्मोक्ष प्रतिपंथित्वात् तदेवमुक्तं, व्यवहारशब्दस्य निर्वचनं तच्च क्रियामात्र-मपेक्षयोक्तमधिकृत ग्रंथयोजनायां तु करणव्युत्पत्तिराश्रयणीया, विधिना ह्रियते यनेन स व्यवहार इति, संप्रति व्यवहारस्य नामादिभेददर्शनार्थमाह ।।

[भा.६] ववहारंमि चउक्कं दव्वे पत्ताइलोइयादी वा ।
नो आगमतो पनगं, भावे एगठिया तस्स ।।

वृ- व्यवहारे व्यवहारविषये चतुष्कं, किमुक्तं भवति चतुर्द्धा व्यवहारस्तद्यथा-नामव्यवहारः स्थापनाव्यवहारो द्रव्यव्यवहारो भावव्यवहारश्च तत्र नामस्थापने सुप्रतीते, द्रव्यव्यवहारो द्विधा, आगमतो नोआगमतश्च, आगमतो व्यवहारपदज्ञाता तत्र चानुपयुक्तो, नोआगमत स्त्रिधा-ज्ञशरीरभव्यशरीर तद्व्यतिरिक्तभेदात् तत्र ज्ञशरीरभव्यशरीव्यवहारो गतौ, ज्ञशरीरभव्यशरीरयोरन्यत्रानेकशोभिहितत्वात् तद्व्यतिरिक्तमाह; दव्वेपत्ताइ लोइयादीवा द्रव्ये द्रव्यविषये व्यवहारो नोआगमतो

ज्ञशरीरभव्यशरीरव्यतिरिक्तः पत्रादिराधाराधेययोरभेदविवक्षणादयं निर्देशस्ततोयमर्थः ज्ञशरीरभव्यशरीर व्यतिरिक्तो द्रव्यव्यवहारः खल्वयं एव ग्रंथः पुस्तक पत्रलिखित आदि शब्दात् काष्टसंपुटफल-कपट्टिकादिपरिग्रहः, तत्राप्ये तद्ग्रंथस्य लेखनसंभवात्, लौकिकादि वेति, यदि वा ज्ञशरीरभव्य-शरीरयोर्व्यतिरिक्तो द्रव्यव्यवहारस्त्रिविधस्तद्यथा, लौकिकः कुप्रावचनिको लोकोत्तरिकश्च तत्र लौकिको यथा आनंदपुरे खड्गादावुद्दीर्णे रुपकाणामशीति सहस्र दंडो मारितेपि तावानेव, प्रहारे तु पतिते यदि कथमपि न मृतस्तर्हि रुपकपंचकं दंडः, उत्कृष्टे तु कलहे प्रवृत्ते अर्द्धत्रयोदशरुपको दंडः; कुप्रावचनिको यथा यत्कर्म्म यो न करोति, न ततः कर्म्मणस्तस्य किंचिदिति; लोकोत्तरिको यथा एते पांडुरपटप्रावरणा जिनानामनाज्ञया स्वच्छंदं व्यवहरंतः परस्परमशनपानादिप्रदानरुपव्यवहारं कुर्वंति, भावव्यवहारो द्विधा आगमतो नोआगमतश्च, आगमतो व्यवहारपदार्थज्ञाता तत्र चोपयुक्तः उपयोगो भावनिक्षेप इति वचनात् नोआगमतः पंचविधो व्यवहारस्तथाचाह; नोआगमतो पणगंभावे इति, भावे विचार्यमाणे नोआगमतो व्यवहारो व्यवहारपंचकं आगमः श्रुतम् आज्ञा धारणा जितमिति नोशब्दो देशवचनात्तस्य पंचविधस्यापि नोआगमतो भावव्यवहारस्य सामान्येन एकार्थिकान्यभूनिता न्येवाह ।।

[भा.७] सुत्ते अत्थे जीए कप्पे मग्गे तहेव नाएय ।
तत्तोय इच्छियव्वे आयरिए चेव ववहारे ।।

वृ- तत्तदर्थसूचनात् सूत्रं, ऊणादिकी शब्दव्युत्पत्तिः, तच्च पूर्वाणि च्छेदसूत्राणि वा, तथा अर्थ्यते मोक्षमभिलषद्भिः इत्यर्थः सूत्रस्याभिधेयं, तथा जीतं नाम प्रभूतानेकगीतार्थकृतमर्यादा; तत् प्रतिपादको ग्रंथोप्युपचारात् जीतं, तथा कल्पंते समर्था भवंति संयमाध्वनि प्रवर्त्तमाना अनेनेति कल्पः मृजूष शुद्धौ मृजंति शुद्धि भवत्यनेनातिचारकल्मषप्रक्षालनादिति मार्गः उभयत्र व्यंजनात् घञिति घञ् प्रत्ययः तथा इण् गतौ, निपूर्वः नितरामीयते गम्यते मोक्षोऽनेनेति न्यायः तथा सर्वैरपि मुमुक्षुभिरीप्यते प्राप्तुमिष्यते इप्सितव्यः आचर्यतेस्म, बृहत्पुरुषै रप्याचरितं, व्यवहार इति पूर्ववत् उक्तान्यं कार्थिकानि संप्रत्यत्रैवाक्षेपपरिहारावभिधित्सुराह ।।

[भा.८] एगठिया अभिहिया, न य ववहारपनगं इह दिट्ठं ।
भणइ एत्थेव तयं दट्ठव्वं अंतगयमेव ।।

वृ- नन्वभिहितान्येकार्थिकानि परमेतेष्वेकाऽर्थिकेषु व्यवहारपंचकमागमश्रुताज्ञाधारणाजीतलक्षणं न दृष्टं नोपात्तं; जीतस्यैव केवलस्योपात्तत्वादऽत्रसूरिराह भण्यते, अत्रोत्तरं दीयते, अत्रैव एतेष्वेव एकार्थिकेषु तत् व्यवहारपंचकमंतर्गतमेव द्रष्टव्यं, कथमित्याह ।।

[भा.९] आगमसुयाउ सुत्तेण, सुइया अत्थतो उ ति चउत्था ।
बहुजनमाइणं पुनजीयंउ चियंति एगाइं ।।

वृ- सूत्रेण सूत्रशब्देन सूचितं आगमश्रुत आगमश्रुतव्यवहारी, तथाहि आगमव्यवहारिणः षट् तद्यथा केवलज्ञानी मनःपर्यायज्ञानी अवधिज्ञानी चतुर्दशपूर्वी दशपूर्वी च, श्रुतव्यवहारिणोऽवशेषपूर्वधरा एकादशांगधारि कल्पव्यवहारादिसूत्रार्थतदुभयविदश्च ततो भवति सूत्रग्रहणेनागमश्रुतव्यवहारयो ग्रहणं चतुर्दशपूर्वादीनां कल्पव्यवहारादिच्छेदग्रंथानामपि च सूत्रात्मकत्वात्; तथा अर्थतः अर्थशब्देन सूचितौ त्रिचतुर्थौ तृतीयचतुर्थावा ज्ञाधारणलक्षणौ व्यवहारौ तथाहि आज्ञाव्यवहारो नाम यदाज्ञावप्या-चार्यावाऽऽसेवितसूत्रार्थत्वातिगीतार्थाच्च क्षीणजंघाबलौ व्यवहारक्रमानुरोधतः प्रकृष्टदेशांतरनिवासिना

च तौ एवान्योन्यस्य समीपं गंतुमसमर्थाविभूतां, तदान्यतरस्मिन् प्रायश्चित्ते समापतिते सति तथाविध-योग्यगीतार्थशिष्याभावे सति धारणाकुशलमगीतार्थमपि शिष्यगूढार्थान्यतिचारसेवनपदानि कथयित्वा प्रेषयति, यथा-

पढमस्सय कज्जस्सय पढमेण पएण सेवियं जंतु ।
पढमे छक्के अब्भिंत्तरं तु पढमं भवेट्ठाणं ।।

अत्र प्रथमं कार्यं दर्पः, तत्र प्रथमं पदं दर्पस्तन्निमित्तं प्रथमं षट्कं व्रतषट्कं तत्राभ्यंतरमंतर्गतं प्रथमं स्थानं प्राणातिपातः ।

पढमस्सय कज्जस्सय, पढमेण पएण सेवियं जंतु ।
पढमे छक्के अब्भिंतरं तु बीयं भवे ठाणे ।।

अत्र द्वितीयं स्थानं मृषावादः, एवमदत्तादानादिष्वपि भावनीयं ।

पढमस्सय कज्जस्सय पढमेण पएण सेवियं जंतु ।
बिइए छक्के अब्भिंतरं, तु पढमं भवेठाणं ।।

वृ- अत्र द्वितीयं षट्कं कायषट्कमित्यदि एवं तेन कथितेन आचार्यो द्रव्यक्षेत्रकाल-भावसंहननधृतिबलादिकं परिभाव्यस्वयं वागमनं करोति, शिष्यं वा तथाविधं योग्यं गीतार्थं प्रज्ञाप्य प्रेषयति, तदभावे तस्यैव प्रेषितस्य गूढार्थमतिचारविशुद्धिं कथयति, धारणाव्यवहारो नाम गीतार्थेन संविग्नेनाचार्येण द्रव्यक्षेत्रकालभावपुरुषान् प्रतिसेवनाश्चावलोक्य यस्मिन्नपराधे यत् प्रायश्चित्तम् अदायि,तत्सर्वमन्यो दृष्ट्वा तेष्वेव द्रव्यादिषु तादृश एवापराधे तदेव प्रायश्चित्तं ददाति, एष धारणाव्यवहारः, अथवा वैयावृत्यकरस्य गच्छोपग्राहिणः स्पर्द्धकस्वामिनो वादेशदर्शनसहायस्य वासंविग्नस्योचितप्रायश्चित्तदानं धारणमेष कोऽर्थः इत्यत आह बहुजणेत्यादि बहुभिर्जनैर्गीतार्थैश्चीर्णं बहुजनाचीर्णमिति, वा उचितमिति वा जीतमिति वा एकार्थं किमुक्तं भवति बहुजनाचीर्णनाम जीतमिति तमेवजीतव्यवहारं दर्शयति ।।

[भा.१०]                    दद्दुरमादिसु कल्लाणगं तु विगलिंदिएसु भत्तट्ठो ।
परियावणा एतेसिं चउत्थमायंबिला हुंति ।।

वृ- दर्दुरो मंडूकस्तदादिषु तत्प्रभृतिषु मकारालाक्षणिकः प्राकृतत्वात् तिर्यक्पंचेंद्रियेषुजीविता-द्व्यपरोपितेष्विति शेषः कल्याणकं त्विति तुशब्दो विशेषणार्थः, स चैतत् विशिनष्टि, पंचकल्याणकं प्रायश्चित्तं, विगलिंदिएसु भत्तट्ठो इति विकलान्यसंपूर्णानि इंद्रियाणि येषां ते विकलेंद्रियाएकद्वित्रि-चतुरिंद्रियास्तत्रव्याख्यानतो विशेषप्रतिपत्तिरित्येकेंद्रिया अनंतवनस्पतिकायिका दृष्टव्याप्रायश्चित्तं भक्तः, इयमत्रभावना यदि दर्दुरादीन् तिर्यक्पंचेंद्रियान् गाढं परितापयति ततोऽभक्तार्थप्रायश्चितमथ विकलेंद्रियान् अनंतवनस्पतिकाप्रभृतीन् गाढं परितापयति, तत आचाम्लं, उपलक्षणमेतत्, तेनैतदपिजीतव्यवहारानुगमतमवसेयं, यदि दर्दुरप्रभृतीन् तिर्यक्पंचेंद्रियान् मनाक् संघट्टयति तत एकाशनकमथानागाढं परितापयति, तत आचाम्लं, तथा अनंतवनस्पतिकायिकद्वित्रिचतुरिंद्रियाणांसंघट्टने पूर्वार्द्धमेतेषामेवानागाढपरितापने एकाशनं, तथा पृथिव्यप्तेजोवायुप्रत्येकवनस्पतीनां संघट्टने निर्विकृतिकमनागाढपरितापने पुरिमार्द्ध, आगाढपरितापने एकाशनं जीवितादृव्यपरोपणे आचाम्लमिति, इदमपि जीतमेवेति दर्शयति ।

[भा. ११] अपरिण्णकालाइसु, अपडिक्कंतस्स निव्विगइयं तु ।
निव्वीतियं पुरिमड्ढो अंबिलखवणाय आवासे ।।

वृ- अपरिज्ञा-प्रत्याख्यानपरिज्ञाया अग्रहणं गृहीताया वा भंगः, ततः सूत्रे विभक्तिलोप आर्षत्वात् तथा कालादिषु अप्रतिक्रामतो अव्यावर्तमानस्य प्रायश्चित्तं निर्विकृतिकं, किमुक्तं भवति, यदि नमस्कारपौरुष्यादिदिवसप्रत्याख्यानं वैकालिकं च पानाहारप्रत्याख्यानं न गृह्णाति, गृहित्वा विराधयति, तथा स्वाध्यायं प्रस्थाप्य यदि कालस्य न प्रतिक्रामति, न कालप्रतिक्रमणनिमित्तं कायोत्सर्गं करोती, आदिशब्दात् येषु स्थानेष्वीर्यापथिकया प्रतिक्रमेतव्यं, तेषु चेत् तथा न प्रतिक्रामति, तर्हि प्रायश्चित्तं निर्विकृतमिति, तथा निव्वीतिय इत्यादि आवासे आवश्यके एकादिकायोत्सर्गे सर्वावश्यकाकरणे च यथासंख्यं निर्विकृतिकपूर्वार्द्धाचाम्लक्षपणानि, इयमत्र भावना आवश्यके यद्येकं कायोत्सर्गं न करोति ततः प्रायश्चित्तं निर्विकृतिकं, कायोत्सर्गद्वयाकरणे पूर्वार्द्धं, त्रयाणामपि कायोत्सर्गाणामकरणे आचाम्लं, सर्वस्यापि वावश्यकस्याकरणे अभक्तार्थमिति ।

[भा. १२] जं जस्स च पच्छित्तं आयरियपरंपराए अविरुद्धं ।
जोगाय बहु विगप्पा एसो खलु जीयकप्पो ।।

वृ- यत् प्रायश्चित्तं यस्याचार्यस्य गच्छे आचार्यपरंपरागतत्वेनाविरुद्धं, न पूर्वपुरुषमर्यादातिक्रमेण विरोधभाक्, यथान्येषामाचार्याणां नमस्कारपौरुष्यादिप्रत्याख्यानस्याकरणे कृतस्य वा भंगे प्रायश्चित्तमाचाम्लं, तथा आवश्यकगतैककायोत्सर्गाकरणे पूर्वार्द्धं कायोत्सर्ग द्वयाकरणे एकाशनक मित्यादी तथा ये योगा उपधानानि बहुविकल्पा गच्छभेदेन बहुभेदा आचार्य परंपरागतत्वेन चाविरुद्धा यथा नागिलकुलवंशवर्त्तिनां साधूनामाचारादारभ्य यावदनुत्तरोपपातिकदशाः, तावन्नास्ति आचाम्लं, केवलं निर्विकृतिकेन ते पठंति आचार्यानुज्ञाताश्च विधिना कायोत्सर्गं कृत्वा विकृतीः परिभुंजते, तथा कल्पव्यवहारयोः चंद्रप्रज्ञप्तिसूर्यप्रज्ञप्त्योश्च केचिदागाढं योगं प्रतिपन्ना अपरे त्वनागाढमिति, एस खलु जीयकप्पो उ इति एष सर्व्वोपि खलु गच्छभेदेन प्रायश्चित्तभेदो योगभेदश्चाचार्यपरंपरागतो जीतकल्पो जीतव्यवहारो वेदितव्यः उक्तो व्यवहारः संप्रति व्यवहारिणः इति द्वितीयं द्वारमभिधित्सुराह-

[भा. १३] दव्वंमि लोइया खलु, लोंचिल्ला भावतो उ मज्झत्था ।
उत्तरदव्व अगीयागीयावालंचपक्खेहिं ।।

वृ- व्यवहारिणश्चतुर्द्धा तद्यथा नामव्यवहारिणः, स्थापनाव्यवहारिणः, द्रव्यव्यवहारिणो, भावव्यवहारिणश्च, तत्र नामस्थापने सुज्ञाते द्रव्यव्यवहारिणो द्विधा आगमतो नोआगमतश्च, तत्रागमतो व्यवहारिशब्दार्थज्ञास्ते चानुपयुक्ता, नोआगमतस्त्रिविधाज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्, तत्र ज्ञशरीरभव्यशरीर द्रव्यव्यवहारिणः प्रतीताः, तद् व्यतिरिक्ता द्विविधा लौकिका लोकोत्तरिकाश्च, भावव्यवहारिणोऽपि द्विधा आगमतो नोआगमतश्च आगमतो व्यवहारिशब्दार्थज्ञास्तत्रैवोपयुक्ताः नोआगमतो द्विधा लौकिका लोकोत्तरिकाश्च तत्र पूर्वार्द्धेन नो आगमतो द्रव्यभाव लौकिक व्यवहारिणः प्रतिपादयति, द्रव्ये विचार्यमाणे नो आगमतो ज्ञशरीभव्यशरीरव्यतिरिक्तालौकिकाव्यवहारिणः खलु लंचिल्लाइति, लंचाउत्कोच इत्यनर्थान्तरं तद्वन्तः किमुक्तं भवति ? परलंचामुपजीव्य ये सापेक्षाः संतो व्यवहारपरिच्छेदकारिणस्ते द्रव्यतो लौकिका व्यवहारिणः, भावतो उ मज्झत्थाइति भावतः पुनर्नो- आगमतो व्यवहारिणो मध्यस्था मध्य रागद्वेषयोरपांतराले तिष्ठंतीति मध्यस्थाः ये

परलंचोपचारमंतरेणारक्तद्विष्टाः संतोन्यायैकनिष्ठतया व्यवहारपरिच्छेत्तारस्ते नोआगमतो लौकिकभाव्यव्यवहारिण इति भावः, अधुना लोकोत्तरिकान् नोआगमतो द्रव्यव्यवहारिणः प्रतिपादयति, उत्तरदव्वअगीया इत्यादि उत्तरे लोकोत्तरे द्रव्ये विचार्यमाणा नोआगमतो द्रव्यव्यवहारिणोऽगीता अगीतार्थाः ते हि यथावस्थितं व्यवहारं न कर्तुमवबुध्यंते, ततस्तद्व्व्यव्यवहारो द्रव्यव्यहार एव भावस्य यथावस्थितपरिज्ञानलक्षणस्याभावात् द्रव्यशब्दोऽत्राप्रधानवाची, अप्रधानव्यवहारिणस्ते इत्यर्थः, गीयावालंयपक्खेहिं इति, यदिवागीतार्था अपि संतो ये लंचामुपजीव्य व्यवहारं परिच्छिंदंति, तेऽपि द्रव्यव्यवहारिणोऽथवा विना लंचां गीतार्था अपि ये ममायं भ्राता ममायं निजक इति पक्षेण पक्षपातेन व्यवहारकारिणस्तेपि द्रव्यव्यवहारिणः मध्यस्थरूपस्य भावस्यासंभवात् संप्रति नोआगमतो लोकोत्तरिकान् भावव्यवहारिणः प्राह ।।

[भा. १४] पियधम्मादढधम्मा, संविग्गा चेव वज्जभीरुअ ।
सुत्तत्थतदुभयविऊ अनिस्सियववहारकारी य ।।

वृ- प्रियो धर्म्मो येषां ते प्रियधर्माणः, धर्मे दृढा दृढधर्माः, राजदंतादित्वात् दृढशब्दस्य पूर्वनिपातः, अत्र चतुर्भंगिका प्रियधर्म्माणो नामैके नो दृढधर्म्मा इति प्रथमो भंगः, नो प्रियधर्म्माणो दृढधर्म्मा इति द्वितीयः, अपरे प्रियधर्माणो दृढधर्म्मश्चेति तृतीयः, अन्ये नो प्रियधर्माणो नो दृढदर्मा इति चतुर्थः, अत्र तृतीयोभंगोऽधिकृतो न शेषा इति प्रतिपत्त्यर्थं विशेषणांतरमाह, संविग्नाः संविग्न नामोत्त्रस्तास्ते च द्विधा, द्रव्यतो भावतश्च, द्रव्यतः संविग्ना मृगास्तेषां यतस्ततो वा बिभ्यतांप्रायः सदैवोत्त्रस्तमानसत्वात्, भावसंविग्ना ये संसारादुत्त्रस्तमानसतया सदैव पूर्वरात्रादिष्वेवंचिंतयंति, किं मे कडं किं च ममात्थिसेसं, किंसक्कणिज्जं न समायरामि इत्यादि, अत्र भावसंविग्नैरधिकारः भावसंविग्नप्रतिपत्त्यर्थमेव विशेषणांतरमाह, वज्जभीरुअवद्यं-पापं, तस्य भीरवः ये चावद्यभीरवस्ते भावसंविग्ना एवेति, वज्जभीरुग्रहणेन भाव संविग्नः प्रतिपत्तिः एते च यथोक्तविशेषणेन विशिष्टा अपि न गीतार्थत्वमृते भावव्यवहारकारिणो भवंतीति, गीतार्थत्वप्रतिपत्त्यर्थमाह; सुतत्थतदुभयविऊ सूत्रंच अर्थश्च तदुभयं चेति तद्य तत् सूत्रार्थलक्षणं, उभयंच तदुभयं च सूत्रार्थतदुभयानितानि विदंतीति सूत्रार्थतदु भयविदः,

किमुक्तंभवति ? सूत्रचिंतायां सूत्रमर्थचिंतायामर्थं, तदुभयचिंतायां च तदुभयं, ये विदंति, ते सूत्रार्थतदुभयविद इह सूत्रार्थवेदने चतुर्भंगिका, सूत्रविदो नामैको नो अर्थविदः, नो सूत्रविदोऽर्थविदः २ अपरे सूत्रविदो अर्थविदोपि, ३ अन्ये नो सूत्रविदोनाप्यर्थविदः अत्र तृतीभंगेनाधिकारस्तत्रापि सूत्रवेलायां सूत्रविद्भिरर्थवेलायामर्थविद्भिस्तदुभयवेलायां तदुभयविद्भिरिति, सूत्रार्थतदुभयग्रहणं ।। अनिस्सियववहारकारी य इति निश्रारागः निश्रा संजाता अस्येति निश्रितो, ननिश्रितोऽनिश्रितः स चासौ व्यवहारश्च अनिश्रितव्यवहारस्तत्करणशीला अनिश्रितव्यवहारकारिण न रागेण व्यवहारकारिण इति भावः एकग्रहणे तज्जातीयस्यापि ग्रहणमितिन्यायादनुपश्रितव्यवहारकारिण इत्यपिद्रष्टव्यं, तत्र उपश्रा नाम द्वेषः उपश्रा संजाता अस्येति उपश्रितो न उपश्रितोऽनुपश्रितः स चासौ व्यवहारश्च तत्करणशीला अनुपश्रितव्यवहारकारिण; न द्वेषेण व्यवहारकारिण इत्यर्थः अथवा एषांऽनुवर्त्तितः स न मह्यमाहारादिकमानीय दास्यतीत्यपेक्षा निश्रा एष मदीयः शिष्यो यदि वा प्रतीच्छकोऽथवामदीयं मात्रादिकुलमेतत् मदीया वा एते श्रावका इत्यपेक्षा उपश्राशेषं तथैव, अत्रानिश्रितव्यवहारकारिण इति किमुक्तं भवति ? लंचोपचारनिरपेक्षाव्यवहारकारिणः न रागेण व्यवहारकारिण इति किमुक्तं भवति

पक्षपातनिरपेक्षव्यवहारपरिच्छेत्ता इति, अथ प्रियधर्म्मदृढधर्म्मसंविग्नसूत्रार्थतदुभयविद्ग्रहणे किं फलमित्यत आह ।।

[भा.१५] पियधम्मे दढधम्मेय, पच्चओ होइ गीयसंविग्गे ।
रागो उ होइ निस्सा उवस्सितो दोससंजुत्तो ।।

वृ- प्रियधर्म्मणि दृढधर्म्मे च समुच्चये भिन्नक्रमश्च, गीते गीतार्थे सूत्रार्थतदुभयविदि संविग्ने च प्रायश्चित्तं ददति प्रत्ययो विश्वासो भवति यथायं प्रियधर्म्मा दृढधर्मो गीतार्थः संविग्नश्चेति नान्यथा प्रायश्चित्तव्यवहारकारीति, प्रियधर्म्मादिपदानामुपन्यासः; तथा अनिश्रितव्यवहारकारिण इत्यत्र योनिश्राशब्दस्तदर्थमाचष्टे, रागस्तु भवति निश्रा, अनुपश्रितव्यवहारकारिण इत्यत्रोपश्रितशब्दस्य व्याख्यानमाह, उपश्रितो द्वेषसंयुक्तः, उपश्रा द्वेष इत्यनर्थांतरमितिभावः; द्वितीयं व्याख्यानं निश्रोपश्राशब्दयोर्दर्शयति ।।

भा. [१६] अहवा आहारादी दाहिइ मज्झ तु एस निस्साओ ।
सीसो पडिच्छओ वा होइ उवस्सा कुलादी वा ।।

वृ- अथवेति व्याख्यानांतरप्रदर्शने, एषोऽनुवर्त्तितः सन् मह्यमाहारादिकं दास्यतीत्येषापेक्षा लंचोपजीवनस्वभावा, निश्रा तथा एष मे शिष्य एष मे प्रतीच्छक इदं मे मातृकुलमिदं पितृकुलमादिशब्दात् इमे मम सहदेशनिवासिनो भक्ता वा इमे सदैव ममेत्यपेक्षाभ्युपगमस्वरूपा भवत्युपश्रा, अस्यां हि व्यवहारिणो द्रव्यव्यवहारिणो भवंति, गोयावालंचपक्खेहिं इति वचनात् एतयोः प्रतिषेधः उक्ता व्यवहारिणः, संप्रति व्यवहर्त्तव्यास्ते च नामादिभेदाच्चतुर्द्धास्तद्यथा नामव्यवहर्त्तव्या, स्थापनाव्यवहर्त्तव्या द्रव्यव्यवहर्त्तव्या भावव्यवहर्त्तव्याश्च, तत्र नामस्थापने प्रतीते, द्रव्य व्यवहर्त्तव्या अपि द्विधा आगमतो नोआगमतश्च, तत्रागमतो व्यवहर्तव्यशब्दार्थज्ञास्ते चानुपयुक्ता नोआगमतोपि त्रिधा, ज्ञशरीरभव्यशरीररूपाः प्रतीताः तद्व्यतिरिक्तास्तु द्विधा, लौकिका, लोकोत्तरिकाश्च, भावव्यवहर्त्तव्या द्विधा, आगमनोआगमभेदात् तत्र आगमतो व्यवहर्त्तव्यपदार्थज्ञाः सूत्रे चोपयुक्ताः, नोआगमतो लौकिका लोकोत्तरिकाश्च तत्र लौकिकद्रव्यभावव्यवहर्तव्य प्रतिपादनार्थमाह-

[भा.१७] लोए चोराईया, दव्वे भावे विसोहिकामाओ ।
जायमयसूतकादिसु, निज्जूढा पायकहयाओ ।।

वृ- लोके लोकविषया व्यवहर्त्तव्या द्विधा, तद्यथा द्रव्यव्यवहर्त्तव्या भावव्यवहर्त्तव्याश्च तत्र द्रव्ये द्रव्यव्यवहर्त्तव्यश्चौरादयः चौरः तस्करः आदिशब्दात्पारदारिकघातकहेरिकादिपरिग्रहः, ते हि चौर्यादिकं कृत्वापि न सम्यक् प्रतिपद्यंते, बलात्प्रतिपद्यमाना अपि च न भावतो विशोधिमिच्छंति, ततस्ते द्रव्यव्यवहर्त्तव्या, भावे भावविषया व्यवहर्त्तव्या विशोधिकामा एव, तुशब्दस्य एवकारार्थत्वात् विशोधौ कामोऽभिलाषो येषां ते विशोधिकामाः कथमस्माकमेतत्कुकर्म्मविषया विशुद्धिर्भविष्यतीति विशुद्धिप्रतिपत्त्यभ्युद्यता भावव्यवहर्तव्या इतिभावः, न केवलं द्रव्यव्यहर्तव्याश्चौरादयः, किंतु जायमयसूयगाइसु निज्जूढा इत्यादि सूतकशब्दः प्रत्येकमभिसंबध्यते, जातसूतकं मृतसूतकं च, सूतकं नाम जन्मानंतरं दशाहानि यावत्, मृतकसूतकं नाम मृतानंतरं दशदिवसान् यावत्, तत्र जातकसूतके मृतकसूतके वा आदिशब्दात् तदन्येषु शूद्रगृहादिषु ये कृतभोजनाः संतो धिग्जातीयैर्निर्व्यूढा असंभाष्याः कृतास्तथा ये पातकहताश्च पातकेन ब्रह्महत्यालक्षणेन मातापित्रादिघातकलक्षणेन वा हताः पातकहताः

एते हि द्वयेऽपि यदा न स्वदोषं प्रतिपद्यंते प्रतिपद्यमाना वा न सम्यगालोचयंति, किंतु व्याजांतरेण कथयंति तदा द्रव्यव्यवहर्त्तव्या द्रष्टव्याः, तथाहि एगो धिज्जाइतो उरालाए ण्हुसाए चंडालीए वा अज्झो ववणो ततो तं काएण फासित्ता पायच्छित्तनिमित्तं चउव्वेयमुवट्ठितो भणति सुमिणेण्हुसं चंडालिं वा गतोमि इति, एवमादयो द्रव्यव्यहर्त्तव्या तथा चाह । -

**[भा. १८]** फासेऊण अगम्मं, भणेइ सुमिणे गओ अगम्मंति ।
एवमादिलोयदव्वे उज्जु पुनहोइ भावंमि ।।

**वृ** - स्पृष्ट्वा कायेनेतिगम्यते अगम्यांस्नुषां चांडाल्यादिकां वा स्त्रियमिति शेषः, भणति प्रायश्चित्तनिमित्तं चतुर्वेदमुपस्थितः सन् यथा स्वप्ने अपेयपानं कृतवानहमित्यादिपरिग्रहः, लोयदव्वेति, लौकिका द्रव्यव्यवर्हतव्याः उज्जु पुन होइ भावंमि, अत्र सामान्यविवक्षायामेकवचनं, ततोऽयमर्थः त [illegible] यदा सम्यगालोचयंति, तदा भावे भावविषया लौकिका व्यवहर्तव्या भवंति उक्ता लौकिकद्रव्यभावव्यवहर्तव्याः, संप्रति लोकोत्तरिकद्रव्यभावव्यवहर्तव्य-प्रतिपादनार्थमाह ।।

**[भा. १९]** परपच्चएण सोही दव्वुत्तरिओ उ होइएमादी ।
गीतो व अगीतो वा सब्भावउवट्ठिओ भावे ।।

**वृ** - यस्य शोधिः परप्रत्येयेन परआचार्यादिकः स एव प्रत्ययः कारणं तदा परप्रत्ययस्तेन किमुक्तं भवति, नूनमहं प्रतिसेवमान आचार्येण उपाध्यायेनाऽन्येन वा साधुना ज्ञातोऽस्मि, ततः सम्यगालोचयामीत्येवं परप्रत्ययेन यस्य शोधिप्रतिपत्तिरेवमादिशब्दात् यो गुरुदोषं सेवित्वा अल्पं कथयति, स्वकृतं चान्यकृतं ब्रवीति तदादिपरिग्रहः, लोकोत्तरिको द्रव्यव्यवहर्तव्यो भवति. भावे भावविषयः पुनः लोकोत्तरिको व्यवहर्तव्योगीतो वा गीतार्थो वा अगीतो वेति अगीतार्थो वा प्रायश्चित्तप्रतिपत्त्यर्थं सद्भावेनोपस्थितः स च वक्ष्यमाणगुणैरुपेतः सन् भवतीति, तानेव गुणानुपदर्शयति-

**[भा. २०]** अवंके अकुटिले यावि कारणपडिसेवि तहय आहच्च ।
पियधम्मे बहुसुए, विइयं उवदेसि पच्छित्तं ।।

**वृ** - वक्रोऽसंयतो, न वक्रोऽवक्रः, संयतो विरत इत्यर्थः, अकुटिलो अमायी चशब्दादक्रोधी अमानी अलोभीश्चेतिपरिग्रहः, अपि पदार्थसंभावने, स चामून् पदार्थान् संभावयति, कारणे समापतिते सति नामैको यतनया प्रतिसेवते इत्येको भंगः । कारणे अयतनयेति द्वितीयः, अकारणेयतनयेति तृतीयः, अकारणेऽयतनयेति चतुर्थः, अत्र प्रथमभंगशुद्ध इति तत्प्रतिपादनार्थमाह ।। कारणप्रतिसेवीकारणे अशिवादिलक्षणे विशुद्धेनालंबनेन बहुशो विचार्य शुल्कादिपरिशुद्धलाभाकांक्षिवणिग्दृष्टांतेनाकृत्यं यतनया प्रतिसेवते इत्येवं शीलं कारणप्रतिसेवी, तहय आहच्चेति तथा चेति समुच्चये कारणेप्य-कृत्यप्रतिसेवी, न यदा तदा वा, किंतु आहच्च कदाचित् अन्यथा कदाचित् अन्यथा वादीर्धसंय-मस्फातिमनुपलक्षमाणो अथवा आहच्चेति कदाचिदकारणे पि प्रतिसेवी पियधम्मे य बहुसुए इति आद्यंतयोर्ग्रहणेमध्यस्यापिग्रहणमिति न्यायात् प्रियधर्मा दृढधर्मा संविग्नोऽवद्यभीरुः सूत्रार्थतदुभयविद इत्यपि द्रष्टव्यं, एते सर्वेऽपि व्यवहर्त्तव्या, विइयंति अत्र द्वितियं मतांतरं केचिदाहुरवक्रादीनामपि प्रतिपक्षा व्यवहर्त्तव्या इति, उवदेव पच्छित्तं इह द्विविधः साधु गीतार्थोऽगीतार्थश्च तत्रयोगीतार्थः स

गीतार्थत्वाद्वेनाभाव्यं न गृह्णातीति न तस्योपदेशः यः पुनरगीतार्थस्तस्यानाभाव्यं गृह्णत उपदेशो दीयते, यथा न युक्तं तवानाभवात् गृहीतुं यदि पुनरनाभवत् ग्रहीष्यसि, ततस्तन्निभित्तं प्रायश्चितं भविष्यतीत्युपदेशदानं, तत एवमुपदेशे दत्ते सति दानप्रायश्चितं दीयते इति गाथासमासार्थः, अत्र शिष्यः प्राह कारणप्रतिसेवी भावव्यवहर्त्तव्य उक्तः स कथमुपपद्यते, प्रतिषिद्धं हि यतनयापि सेवमानो जिनाज्ञाप्रद्वेषकारी ननु स दुष्टभाव इति कथं भावव्यवहर्त्तव्यः ? नैष दोषो, जिनाज्ञाप्रद्वेषकारित्वाभावात् सति कारणे प्रतिसेवायामपि वर्त्तते, जिनाज्ञामवलंब्यैव यथास्यामवस्थायां दीर्घसंयमस्फातिनिमित्त-मकृत्यप्रतिसेवायामपि प्रवर्त्तितव्यमिति, ततो न कश्चिद्दोषः, अपि च भगवंतो वीतरागा न मिथ्या कदाचनापि ब्रुवते, वीतरागतया तेषां मिथ्यावचन कारणभावात्; उक्तंच -

रागाद्वा द्वेषाद्वा मोहाद्वावाक्यमुच्यते ह्यनृतम् ।
यस्यतु नैते दोषास्तस्याऽनृतकारणंकिं स्यात् ।।

भगवता वा यतनयापि कारणे प्रतिसेविनो भावव्यवहर्त्तव्या उक्तास्तद्यदि भगवद्वचनाद् द्वितीयभंगवर्त्तिनोपि भावव्यवहर्त्तव्यास्ततः प्रथमभंगवर्त्तिनः सुतरां भावव्यवहर्त्तव्या भवेयुः तथा चाह

[भा.२१] आहच्च कारणंमि, सेवंनो अजयणं सिया कुज्जा ।
एसोवि होइ भावे, कि पुन जयणाए सेवंतो ।।

वृ- आहच्च कदाचित् गत्वा कारणे अशिवादिलक्षणे अकृत्यं सेवमानः स्यात्कदाचित् अयतनां कुर्यात् अयतनया प्रतिसेवेतेतिभावः एषोपि भवद्वचनाद्भवति भावे व्यवहर्त्तव्य किं पुनर्यतनयाप्रतिसेवमानः प्रथमभंगवर्त्ती ससुतरांभवेद्भावेव्यवहर्तव्य इत्यर्थः, न तु केवलं प्रथमभंगवर्त्ती वा भगवद्वचनाद् भावे व्यवहर्त्तव्यः, किंतु तृतीयभंगवर्त्त्यपि तथा चाह -

[भा.२२] पडिसवियंमि सोहिं काहं आलंबणं कुणइ जो उ ।
सेवंतोवि अकिच्चं, ववहरियव्वो स खलु भावे ।।

वृ- कारणमंतरेणाऽपि यतनया प्रतिसेविते अकृत्ये पश्चात् शोधि प्रायश्चित्तमहं करिष्यामीत्येवंरुपमालंबनं यः करोति, किमुक्तं भवति, एवंरूपेणालंबनेनाकृत्ये यः प्रवृत्तिं चिकीर्षति, स तथा रुपमालंबनं कृत्वा प्रतिसेवमानोऽप्य कृत्यं खलु निश्चितं भावे व्यवहर्त्तव्यः अंतःकरण-विशुद्धिपुरस्सरं यतनया प्रवर्तमानत्वेन भावतो व्यवहारयोग्यत्वात्; किमुक्तं भवति ? अकारणे यतनयेति तृतीयभंगवर्त्त्यपि भगवद्वचनाद्य व्यवहर्त्तव्यो वेदितव्य इति, तदेवं चतुर्भंगिकायामाद्यभंगत्रयवर्तिनो भावव्यवहर्तव्य उक्ताः संप्रति चुतर्भंगिकामनपेक्ष्यान्यथैव भावव्यवहर्त्तव्यलक्षणमाह-

[भा.२३] अहवा कज्जाकज्जे जताजतो वावि सेविउं साहू ।
सब्भावसमाउट्टो, ववहरियव्वो हवइ भावे ।।

वृ- अथवेति प्रकारांतरे तच्च प्रकारांतरमिदं प्राक्चतुर्भंगिकां प्ररुप्य भावव्यवहर्तव्या उक्ताः संप्रति तु तामनपेक्ष्यैव भावव्यवहर्त्तव्योऽभिधीयते, कथमितिचेदत आह, कज्जाकज्ज कार्येऽशिवादिनिस्त-रणलक्षणे प्रयोजने अकार्य तथाविधपुष्ट प्रयोजनाभावे जयाजयोवेति यतमानो वा अयतमानो वा साधुरकृत्युं सेवित्वा सद्भावे पुनकरणलक्षणया तात्विकया वृत्यासमावृत्तोऽकृत्यकरणात् प्रत्यावृत्तः सन् गुरोः समीपे यः आलोचयतीतिशेषः, स भावे भवति व्यवहर्त्तव्यः, भावतोऽकृत्यकरणतः प्रत्यावृत्तत्वात् संप्रति प्राक्प्ररुपितायां चतुर्भंगिकायां यश्चतुर्थो भंगस्तत्प्ररुपणार्थमाह -

**[भा.२४]** निक्कारणं पडिसेवी कज्जे निद्धंधसी अणवेक्खो ।
देसं वा सव्वं वा गुहिस्सं दव्वओ एसे ॥

**वृ-** यो निष्कारणे कारणमंतरेण प्रतिसेवी, अकृत्यप्रतिसेवनशीलः, कज्जेनिद्धंधसोत्ति अत्र अपिशब्दोऽनुक्तोऽपि गम्यते सामर्थ्यात्, ततोऽयमर्थः कार्येऽपि तथाविधे समुत्पन्ने निद्धंधसो देशीवचनमेतत् अकृत्यं प्रतिसेवमानोनारंभाधिकतारंभविराध्यमान प्राण्यनुकंपा पर इत्यर्थः च समुच्चये स च भिन्नक्रमोऽनपेक्षश्चेत्येवं योजनीयः न विद्यतेऽपेक्षा वैरानुबंधो मे विराध्यमान जंतुभिः सह भविष्यति संसारो वा दीर्घतर इत्येवंरूपा यस्याऽसावनपेक्षः हा दुष्टुकृतं मयेति पश्चादनुतापरहितइतिभावः तथा यः प्रतिसेवित्वादेशं गूहयिष्यामि किंचिन् मात्रमालोचयिष्यामि न सर्वमिति भावः सव्वंवत्ति सर्वं वा गूहयिष्यामि न किंचिदालोचयिष्यामीत्यर्थ इति चिंतयति, चिंतयित्वा च तथैव करोति एष द्रव्यतो वेदितव्यः किंवानेत्यत आह -

**[भा.२५]** सो वि हु ववहरियव्वो, अनवत्थावारणं तदन्नेसिं ।
घडगारतुल्लसीलो अनुवरओसन्नमज्झत्ति ॥

**वृ-** सोऽप्यनंतरोक्तस्वरूपो द्रव्यव्यवहर्त्तव्यो, व्यवहर्त्तव्यमेव किं कारणमत आह, अनवस्था वारणंतदन्नेय इति तस्मिन् व्यवह्रियमाणे अनवस्थावारणं भवति, तदन्ये च निषिद्धा जायंते किमुक्तं भवति सोप्यनवस्थाया मा पुनरकृत्यं कार्षीत्, तदन्ये च तं तथा प्रवर्त्तमानं दृष्ट्वा मा तथाप्रवृत्तिंकार्षुरिति, स च व्यवहर्तुमिष्यमाणः पूर्वमेव वक्तव्यो, यथा आलोचय महाभाग स्वकृतमपराधमनालोचिताऽप्रतिक्रांतो हि दीर्घसंसारभाग्भवतीति, एवं च भण्यता यो ज्ञायते प्रतिपत्स्यते शिक्षावचनं प्रतिपद्य चाकृत्यकरणात् विरतो विरम्य च न भूयः प्रतिसेवीति, यस्तु तथा भण्यमानोपि न सम्यगकृत्यकरणादुपरमते, सोऽनुपरतो घटकारतुल्य शीलः कुंभकारसदृशस्वभावोऽवसन्नमध्यो द्रष्टव्यो न तु व्यवहर्त्तव्यः, अथ कोऽसौ कुंभकारो यत्सदृशस्वभावः सन्न व्यवहर्तव्यः ? उच्यते, कुंभकारसालाए साहू ठिया तत्थ आयरिएण साहू वुत्ता अज्जो ? एसु कंभगारभायणेसु अप्पमादी भवेज्जाह, मा भंजिहह तत्थ पमादी चेल्लगोकुंभगारभायणं भंजिऊण मिच्छामि दुक्कडं भणइ एवमभिक्खणं दिने दिने, ततो सो कुंभगारो रुट्ठो, तं चेल्लगं किया(कि)डियाए घेत्तुं सीसे खडुंकोक्को नामटोल्लत्तो मिच्छामि दुक्कडं भणइ; चेल्लओ भणइ, किं ममं निरवराहं पिट्टेसि ? कुंभगारो भणइ, भाणगाणि तए भंगाणि चेल्लओ भणइ, मिच्छादुक्कडं कयं कुंभकारो भणइ मएवि मिच्छादुक्कडं कयं, नत्थि कम्मबंधो मम तव पहारं देंतस्स, एसो कुंभगारमिच्छादुक्कडसरिस मिच्छादुक्कडो अव्ववहरियव्वो, तदेवं तइय आहच्चेति व्याख्यातं संप्रति पियधम्मे य बहुसुए इत्यस्य व्याख्यानमाह -

**[भा.२६]** पियधम्मोजावसुयंववहारन्ना उजेसमक्खाया ।
सव्वेवि जहादिट्ठा ववहरियव्वा य ते होंति ॥

**वृ-** इहाद्यंतग्रहणे मध्यस्यापि ग्रहणमिति न्यायात्, पियधर्मबहुश्रुतग्रहणे तदंतरालवर्तिनामपि दृढधर्मादीनां ग्रहणं; ततः प्रियधर्मण आरभ्य यावत् श्रुतं सूत्रार्थतदुभयविद इति पदं तावत् ये व्यवहारज्ञा व्यवहारपरिछेदकर्त्तारः प्राक्समाख्यातास्ते सर्वेऽपि यथोद्दिष्टा यथोक्तस्वरूपा व्यवहर्त्तव्या भावव्यवहर्त्तव्या भवंति, प्रत्येतव्या इति शेषः, प्रियधर्मादितया सूत्रार्थतदुभयवित्तया च तेषां प्रज्ञापनीयत्वात् इति व्यवहारः प्रायश्चितव्यवहार आभवत्सचित्तादिव्यवहारश्चतत्रद्विविधेऽपि व्यवहारे

व्यवहर्त्तव्यं प्रायो गीतार्थेन सह-नागीतार्थेन तथा चाह -

[भा.२७] अगीएणं सद्धिं, ववहरियव्वं न चेव पुरिसेन ।
जम्हा सो ववहारे कयंमि सम्मं न सद्दहति ।।

वृ- इह यः स्वयं व्यवहारमवबुध्यते [illegible] अगीतार्थ इतरस्त्वगीतार्थः, तत्रागीतेनागीतार्थेन सार्द्धं नैव पुरुषेण व्यवहर्त्तव्यं; कस्मादित्याह, यस्मात् सोऽगीतार्थो व्यवहारे कृतेऽपि न सम्यक् श्रद्धत्ते न परिपूर्नमपि व्यवहारं कृतं, तथेति प्रतिपद्यते, इति तस्माद् गीतार्थेन सह व्यवहर्त्तव्यं, यत आह -

[भा.२८] दुविहंमि ववहारे गीयत्थो पणविज्जई जं तु ।
तं सम्मं पडिवज्जइ गीयत्थंमी गुणा चेव ।।

वृ- द्विविधेऽपि प्रायश्चित्तलक्षणे आभवत्सचित्तादिव्यवहारलक्षणे च व्यवहारे गीतार्थो यत्प्रत्याख्याप्यते, पाठांतरं पणविज्जइ प्रज्ञाप्यते तत्सम्यक् प्रतिपद्यते गीतार्थत्वात्तथा चाह गीयत्थंमी गुणा चेव, गीतार्थे गुणा एव नाऽगुणाः अगुणवतो गीतार्थत्वायोगात्, यथा च गीतार्थः संप्रतिपाद्यमानः, सम्यक् प्रतिपद्यते, तथा प्रतिपादयन्नाह.

[भा.२९] सचित्तादुप्पन्ने, गीयत्था सइ दुवेण्ह गीयाणं ।
एगयरेउ निउत्ते, सम्मं ववहारसद्दहणा ।।

वृ- दोण्णि जना गीयत्थाविणओवसंपया इव विहरंति तेसिं सचित्ताइ किंचिउप्पण्णं, तन्निमित्तं ववहारो जातो एगो भणइ मम भवति बिइओ मम भवइ, तत्थयसमीवे अन्नो गीयत्थो नत्थि, जस्स सगासे गच्छंति; ततो एगेन बिइउ भणीतो अन्नो तुमं चेव ममं पमाणं मे भणाहि कस्सा भवति ततो सो एवं निउत्तो चिंतेइ तित्थयरानंतरे संघे अहं ठवितो, ता कहमहं तित्थयरानंतरं संघमइक्कमामिति भणइ तुमं चेवाभवति न ममंति एष भावार्थः, अक्षरयोजनात्वेवं सचित्ताद्युत्पन्ने आदिशब्दादचित्तमिश्रपरिग्रहः, समासश्च कर्मधारयस्ततोऽयमर्थः सचित्तशिष्येऽचित्ते वस्त्रादौ मिश्रे सोपकरणे शिष्ये उत्पन्ने सति द्वयोः गीतार्थयोः परस्परं विवदमानयोः अन्यस्मिन् समीपे व्यवहारपरिच्छेदकर्तरि गीतार्थेऽसति कथमप्येकतरस्मिन् गीतार्थतया निवृत्ते विवादात् प्रत्यावृते प्रागुक्तनीत्याव्यवहारश्रद्धानं भवति, सम्यक्व्यवहार-प्रतिपत्तिरुपजायते, कथमित्यत आह गीयोणाइयंतो इत्यादि ।

[भा.३०] गीतो आणाइयंतो, छिंद तुमं चेव छंदितो संतो ।
कहमंतरमिवाएति, तित्थयरानंतरं संघं ।।

वृ- गीतोगीतार्थो अनतिक्रामन् यत् विवादादनतिक्रामन् द्वितीयेन गीतार्थेन सचिताद्युत्पादन-सहवर्तिना व्यवहारममुं त्वमेव छिन्धि, न हि त्वमगीतार्थो, नापि युक्तमयुक्तं वा त्वं न जानासि इत्येव छिंदितो निमंत्रितः सन् चिंतयति, अहमनेनास्मिन् व्यवहारे प्रमाणीकुर्वता तीर्थकरानंतरसंघमध्यवर्ती स्थापितः संघश्च भगवदाज्ञावर्त्तितया यथावस्थितार्थवक्ता अन्यथा तीर्थकरानंतरत्वायोगात्, तद्यदिलोभादित्याकथमपि व्यवहारं विलोप्स्यामि ? ततो मयैव तीर्थकरानंतरः संघोऽतरितः कृतो भवेत्, तत् एवं जानन् व्यवहारविलोपनेन कथमहं तीर्थकरानंतरं संघमंतरं स्थापयामि अंतरयामीति चिंतयित्वा सोऽवादीत् तवैवेदमाभवति न ममेति, तस्मात् द्विविधो व्यवहारो गीतार्थेन सह कर्त्तव्यो, नागीतार्थे-नगीतार्थश्च प्रियधर्म्मादिगुणोपेत इति प्रियधर्मादयो भावव्यवहर्त्तव्याः, ननु ये प्रियधर्म्मादयस्ते

प्रियधर्म्मत्वादिगुणैस्त्वाकल्प्यं न किमपि प्रतिसेविष्यंति, इति, कथं व्यवहर्त्तव्या निर्दिश्यंते, व्यवहारहेत्व-कल्प्यंप्रतिसेवनासंभवात्, नैष दोषः, प्रमादवशतस्तेषामपिकदाचिदकल्प्यप्रतिसेवनोपपत्तेः, अन्यच्च प्रमादाभावेपि कदाचिदशिवाद्युत्पत्तौ गुरुलाघवं पर्यालोच्य दीर्घसंयमस्फातिनिमित्तमकल्प्यमपि-प्रतिसेवंते, ततो भवति तेषामपि व्यवहारयोग्यतेति व्यवहर्त्तव्या निर्दिष्टाः अथ ये पियधर्मादिगुणोपेता अपि प्रमादिनस्ते कथं व्यवह्रियंते, प्रमादितया तेषां व्यवहार योग्यताया अभावात् तत आह ।।

**[भा. ३१]** पियधम्मे दढधम्मे, संविग्गे चेव जे उ पडिवक्खा ।
तं वि हु ववहरियव्वा किं पुन जे तेसिं पडिवक्खा ।।

**वृ-** प्रियधर्म्मणि दृढधर्म्मे संविग्ने च ये प्रतिपक्षा अप्रियधर्म्मा अदृढधर्म्मा असंविग्नाश्च तेप्यनवस्थावारणाय तदन्यनिषेधाय वहु निश्चितं व्यवहर्त्तव्य भगवद्भिरुक्ताः किं पुनर्ये तेषामप्रियधर्म्मादीनां प्रतिपक्षाः प्रियधर्म्मदृढधर्म्मसंविग्नास्ते सुतरां व्यवहर्त्तव्या प्रियधर्मादितया तेषां भावतो व्यवहारप्रवृत्तेः, तदेवं पियधम्मेच बहुसुए इत्येतद्व्याख्यातं; संप्रति द्वितीयमित्यवयवं व्याचिख्यासुराह

**[भा. ३२]** बिइयमुवएस अवंकाइयाण जे होंति उ पडिवक्खा ।
तेवि हु ववहरियव्वा, पायच्छित्ताभवंते य ।।

**वृ-** द्वितीय उपदेश आदेशो मकारो[illegible], द्वितीयं [illegible] [illegible], अवक्रादीनां ये भवंति प्रतिपक्षाः वक्रः कुटिलो निष्कारणप्रतिसेवी, तथा सततप्रतिसेवनाशीलोऽप्रियधर्मा यावदबहुश्रुतस्तेऽपि केचिद्व्यवहारयोग्यतया अपरेऽनवस्थावारणाय तदन्यनिषेधायवा आभवति प्रायश्चित्ते व्यवहर्त्तव्याः, संप्रतिउवदेसपच्छित्तमित्येतत् व्याचिख्यासुराह-

**[भा. ३३]** उपदेसो उ अगीए दिज्जइ बिइओ उ सोधिववहारो ।
गहिएविअनाभव्वे, दिज्जइ बिइयं तु पच्छित्तं ।।

**वृ-** साधुर्द्विविधो गीतार्थोऽगीतार्थश्च, तत्र यो गीतार्थः स स्वयमेव जानीते, आनानस्य च नोपदेशः, यस्त्वगीतार्थः स युक्तायुक्तपरिज्ञानविकलतयाऽनाभाव्यमपि गृह्णाति ततस्तस्मै अगीताय अगीतार्थाय उपदेशो दीयते, यथा न युक्तं तवानाभाव्यं ग्रहीतुं यो ह्यनाभाव्यं गृह्णाति तस्य तन्निमित्तं प्रायश्चित्तमाभवति, एवमुपदिश्य तस्यानाभाव्यं ग्रहणप्रवृत्तिनिमित्तं दानप्रायश्चित्तं दीयते, तथा चाह विइओ उ सोहिववहारो शोधिः प्रायश्चित्तं अनाभाव्यं गृह्णाति, प्रथमत उपदेशो दीयते, द्वितीय-शोधिदानव्यवहारः तदेतदनाभाव्यं गृह्णंतं प्रत्युक्तं; संप्रति गृहीतानाभाव्यं प्रत्याह गहिए वीत्यादि अपिशब्दः समुच्चये न केवलमनाभाव्ये गृह्यमाणे, किंतु गृहीतेऽप्यनाभाव्ये दीयते, प्रथमत उपदेश इति गम्यं, तदनंतरं सूत्रमुच्चार्य प्रायश्चित्तं यथावस्थितं कथयित्वा एतत्तवाभवति प्रायश्चित्तमिति प्रथमं, ततो तद्दानप्रायश्चित्तं दीयते इति द्वितीयं. अथ प्रायश्चित्तमिति कः शब्दार्थः कतिविधं प्रायश्चित्तमिति प्रश्नमुपजीव्य प्रायश्चित्तनिरुक्तादि द्वारकलापप्रतिपादनाय द्वारगाथमाह ।-

**[भा. ३४]** पायच्छित्तनिरुत्तं, भेया जत्तो परुवणबहुलं ।
अज्झयणाण विसेसो, तदरिहपरिसा य सुत्तत्थो ।।

**वृ-** प्रथमतः प्रायश्चित्तशब्दार्थो वक्तव्यः, ततः प्रायश्चित्तस्य भेदाः प्रतिसेवनादयो वक्तव्याः,

तदनंतरं यतो निमित्तात् प्ररुपणात पृथक्त्वप्ररुपणाबाहुल्यं किमुक्तं भवति यतो निमित्तात् प्रतिसेवनातः संयोजन प्रायश्चित्तमारोपणा प्रायश्चित्तं परिकुंचना प्रायश्चित्तं च पृथगुपपद्यते तद् वक्तव्यं ततोऽनयोः कल्पाध्ययनव्यवहाराध्ययनयोर्विशेषो नानात्वं वक्तव्यं, तदनंतरं तदर्हा प्रायश्चित्तार्हा पर्षद् याच्या ततःसूत्रार्थः एव द्वारगाथा संक्षेपार्थः, व्यासार्थं तु प्रतिद्वारं वक्ष्यति, तत्र निरुक्तद्वारप्रतिपादनार्थमाह ।

[भा.३५] पावं छिंदइ जम्हा, पायच्छित्तं तु भन्नए तेनं ।
पाएण वा विचित्तं, विसोहए तेन पच्छित्तं ॥

वृ- यस्मात् शोधिरुपोव्यवहारोऽपराधसंचितं पापं छिनत्ति विनाशयति, तेन कारणेन सप्रायश्चित्तं भण्यते, पृषोदरादित्वादिष्टरुपसिद्धिः, अथवा प्रायोऽपराधमलिनं चित्तं जीवमत्र चित्तशब्देन चित्तचित्तवतोरऽभेदोपचारात् जीवोऽभिधीयते, तथा चाह चूर्णिकृत् चित्त इति जीवस्याख्येति विशोधयत्यपराधमलरहितं करोति तेन कारणेन प्रायश्चित्तं, प्रायः प्रायेण चित्तं यथावस्थितं भवत्यस्मादिति प्रायश्चित्तमितिव्युत्पत्तेः, गतं निरुक्तद्वारमिदानीं भेदद्वार प्रतिपादनार्थमाह ॥

[भा.३६] पडिसेवणा य संजोयणाय आरोवणा य बोधव्वा ।
पलिउंचणा चउत्थी पायच्छित्तंचउद्धा उ ॥

वृ- प्रतिषिद्धस्य सेवना प्रतिसेवना, अकल्प्यसमाचरणमिति भावः, च समुच्चये, संयोजना शय्यातरराजपिंडादिभेदभिन्नाऽपराधजनितप्रायश्चित्तानां संकलनाकरणं, आरोप्यते इति आरोपणा प्रायश्चित्तानामुपर्युपर्यारोपणं, यावत् षण्मासाः, परतो वर्द्धमानस्वामितीर्थे आरोपणायाः प्रतिषेधात्, परिकुंचनं परिकुंचना गुरुदोषस्य मायया लघुदोषस्य कथनं यथा सचित्तं प्रतिषेव्य मया अचित्तं प्रतिषेवितमित्याहेति एषा प्रतिसेवनाद् आरभ्य गण्यमाना चतुर्थी, एवमेतत् प्रायश्चित्तं चतुर्द्धा भवति, तत्र यथोद्देशं निर्देश इति न्यायत् प्रथमतः प्रतिषेवणोच्यते, प्रतिषेवणा प्रतिषेवकप्रतिषेव्यव्यतिरेकेण नोपपद्यते, सकर्म्मकक्रियायाः कर्त्तृकर्म्मव्यतिरेकेणासंभवात् ततस्त्रयाणामपि प्ररुपणां चिकीर्षुरिदमाह

[भा.३७] पडिसेवओ य पडिसेवणा य पडिसेवियव्वयं चेव ।
एएसिं तु पयाणं पत्तेयपरुवणं वोच्छं ॥

वृ- प्रतिषिद्धं सेवते इति प्रतिषेवकः, प्रतिषेवकः प्रतिषेवणक्रियाकारी, च समुच्चये प्रतिषेवणा अकल्प्यसमाचरणं, प्रतिषेवित व्यमकल्पनीयमेतेषां त्रयाणामपि पदानां प्रत्येकं प्ररुपणां वक्ष्ये प्रतिज्ञामेव निर्वाहयति ॥

[भा.३८] पडिसेवओ सेवंतो, पडिसेवणमूलउत्तरगुणे य ।
पडिसेवियव्वदव्वं रुविव्व सिया अरुविव्व ॥

वृ- प्रतिषेवकोनामाकल्पंसेवमानः प्रतिषेवना अकल्प्यसमाचरणंसा च द्विधा मूलउत्तरगुणे य इति गुणशब्दः प्रत्येकमभिसंबध्यते, मूलगुणविषया उत्तरगुणविषया च, यच्च कार्यं समाचर्यमाणं मूलगुणप्रतिघाति उत्तरगुणप्रतिघाति वा तत् प्रतिषेवितव्यं तच्च द्रव्यं पर्याया वा, तत्र पर्याया द्रव्य एवांतर्भूताविवक्षिताभेदाभावादिति द्रव्यंद्रष्टव्यं, तथा चाह, द्रव्यं तच्च स्यात् कदाचित् रुपि आधाकर्म्माद्योदनादि वा विकल्पे अरुपि वा आकाशादि तदपि हि मृषावादादिविषयतया भवति, कदाचित् प्रतिषेवनीयं, इह प्रतिषेवणामंतरेण न प्रतिषेवकस्य सिद्धि र्नापि प्रतिषेवनीयस्य, ततः प्रतिषेवणाया विशेषणः प्ररुपणामाह ॥

[भा.३९] पडिसेवणा उ भावो सो पुन कुसलो य होअकुसलो वा ।
कुसलेण होइ कप्पो, अकुसलपरिणामतो दप्पो ॥

वृ- प्रतिषेवणा द्विविधा द्रव्यरूपा भावरूपा च प्रतिषेवणक्रियायाः कर्तृकर्म्मगतत्वात् तत्र यातस्य तस्य वस्तुनः प्रतिषेव्य मानता सा द्रव्यरूपा प्रतिषेवणा, यस्तु जीवस्य तथा प्रतिषेवकत्वपरिणामः, सा भावरूपा प्रतिषेवणा सैव चेह गंह्या, जीवपरिणामानुरूपतः प्रायश्चित्तविधिप्रवृत्तेः, तथा चाह पडिसेवणा उ भावो प्रतिषेवणा नाम तुरेवकारार्थो भिन्नक्रमश्च, भाव एव जीवस्याध्यवसाय एव नान्य, स च भावो द्विधा कुशलोऽकुशलश्च, तत्र कुशलो ज्ञानादिरूपोऽकुशलोऽविरत्यादिरूपः, तत्र या कुशलेन परिणामेन बाह्यवस्तुप्रतिसेवना सा कल्पः पदैकदेशो पदसमुदायोपचारात् कल्प्यः प्रतिषेवणा कल्पिका इति भावः, या पुनरकुशलपरिणामतः प्रतिषेवणा सा दर्प्पः, दर्प्प प्रतिषेवणा दर्प्पिका इत्यर्थः, आह किमेषां त्रयाणामपि परस्परमेकत्वं नानात्वं, वा उच्यते, उभयमपि, कथमित्यत आह -

[भा.४०] णाणी न विणा णाणं नेवं पुनतं सणन्नमन्नं च ।
इय दोण्हमनाणत्तं भइयं पुनसेविवव्वेण ।।

वृ- यथा ज्ञानं विना अंतरेण ज्ञानी न भवति, ज्ञानपरिणामपरिणतस्यैव ज्ञानित्वव्यपदेशभावादिति तयोर्ज्ञानिज्ञानिनोरेकत्वं, इह दोण्हमनाणत्तंति इति एवं ज्ञानिज्ञानगतेन प्रकारेण द्वयोः प्रतिसेवक-प्रतिसेवनयोरनानात्वमेकत्वं, प्रतिषेवनामंतरेण प्रतिषेवकस्याप्यभावात्, प्रतिसेवनापरिणामपरिणतस्यैव प्रतिसेवकत्वव्यपदेशप्रवृत्तेः, नेवं पुनं तंसणन्न मन्नं च इति, पुनःशब्दो विशेषद्योतने स चामुं विशेषं द्योतयति, न ज्ञानज्ञानिनोः परस्परमविज्ञेयेनापि सहाय एकत्वं किंतु ज्ञेयं तयोर्ज्ञानज्ञानिनोरनन्यत् अन्यच्च, किमुक्तं भवति ज्ञानिनोज्ञानाच्च ज्ञेयं किंचिदन्यत् किंचिदनन्यत् तथाहि यदा ज्ञानी आत्मालंबन-ज्ञानपरिणामपरिणतस्तदा ज्ञानज्ञानिनोरेकत्वं यदात्वात्मव्यतिरिक्त-घटाद्यालंबनज्ञानपरिणाम-परिणतस्तदा न्यत्वमात्मनो घटादीनामन्यत्वात् ज्ञानमपि यदाभिनिबोधिकादिस्वरूपालंबनं तदा ज्ञानज्ञेययोरेकत्वं, यदा तु स्वव्यतिरिक्तघटाद्यालंबनं तदान्यत्वं. घटादीनां ज्ञानात् मूर्त्तामूर्त्ततया पृथग्देशादितया च भिन्नत्वात् भइयं पुन सेविचव्वेण अत्रापीतीत्यनुवर्त्तते, इति उक्तेन प्रकारेण प्रतिषेवकप्रतिषेवणीयोरनानात्वं भक्तं विकल्पितं, पुन र्नानात्वं सेवितव्येन प्रतिषेवितव्येन कदाचिन्नानात्वमित्यर्थः तथाहि यदा प्रतिसेवते, नानात्वं कीटकादिसत्वानां साधोः पृथग्भूतत्वात् प्रतिसेवनात् यदा प्रतिसेवना प्रतिसेवकस्याध्यवसायः स तर्हि यदात्मव्यापादनविषयस्तदा प्रतिसेवनाप्रतिसेवनयोरेकत्वं यदा तु बाह्यस्त्र्यादिप्रतिसेवनाविषयः तदानानात्वं स्त्र्यादिप्रतिसेव-कादन्यत्वात् संप्रति यत्प्रागमूलोत्तरगुणविषयतया प्रतिसेवनाया द्वैविध्यमुक्तं, तद्विभावयिषुराह ।।

[भा.४१] मूलगुणे उत्तरगुणे, दुविहा पडिसेवणा समासेन ।
मूलगुणे पंचविहात पिंडविसोहाइया इयरा ।।

वृ- प्रतिसेवना समासेन संक्षेपेण द्विविधा, तद्यथा मूलगुणे मूलगुणविषया उत्तरगुणे उत्तरगुणविषया, तत्र मूलगुण विषया पंचविधा प्राणतिपातमृषावादादत्तादानमैथुनपरिग्रहरूपा इतर उत्तर गुणविषया पिंडविशुध्यादिविषया अनेकविधा, अत्रादिशब्दात्समित्यादिपरिग्रहः किमुक्तं भवति मूलगुणेषु प्राणातिपातविरत्यादिषु उत्तरगुणेषु पिंडविशुध्यादिषु यथाक्रमं प्रतिसेवना प्राणतिपातादिलक्षणा पंचविधा आधाकर्मोपभोगादिलक्षणा अनेकविधेति, तत्र मूलगुणप्रतिसेवनासंरंभादिभेदतश्चित्रा

उत्तरगुणप्रतिसेवनात्यतिक्रमादिभेदतस्तथा चाह -

[भा.४२] सा पुन अइक्कमवइक्कमे य अइयारा तह
अनायारे संरंभ समारंभे आरंभ रागदोसादी ॥

वृ- सा उत्तरगुणप्रतिसेवना पुनरतिक्रमे व्यतिक्रमे अतिचारे अनाचारे च भवति, एतदुक्तं भवति, सर्वाप्युत्तरगुणप्रतिसेवना अतिक्रमादिभेदतश्चतुः प्रकाश, मूलगुणप्रतिसेवना संरंभे समारंभे, आरंभे च, संरंभादिभेदतस्त्रिप्रकारेतिभावार्थः, ते च संरंभाद्यो रागद्वेषादितः रागतो द्वेषत आदिशब्दादज्ञानतश्च; तत्र रागतो यथा चिलातीपुत्रस्य सुसुमावधः द्वेषतो यथा सत्यके द्वैपायनव्यापादनमज्ञानतो ब्राह्मणादीनां छागादिवधः ननु यथोद्देशस्तथा निर्देश इति प्रथमतो मूलगुणप्रतिसेवनाव्याख्यातुमुचिता पश्चादुत्तरगुणप्रतिसेवना अत्र तु विपर्यय इति कथं ? उच्यते, इह प्रायः प्रथमतोऽल्पसंक्लिष्टाऽध्यवसायः स तूत्तरगुप्रतिसेवनां कुरुते, पश्चादतिसंक्लिष्टाऽध्यवसायो मूलगुणप्रतिसेवनामिति ख्यापनार्थं विपर्ययेणोपन्यास इत्यदोषः, संप्रति अतिक्रमादीन्पिंड विशुद्धिमधिकृत्य व्याचिख्यासुराह -

[भा.४३] आहाकम्मनिमंतण, पडिसुणमाणे अतिक्कमो होई ।
पयभेयाइवइक्कम, गहिए तइएतरेगिलिए ॥

वृ- कोऽपि श्राद्धो नालप्रतिबद्धो ज्ञातिर्पतिबद्धो गुणानुरक्तो वा आधाकर्म्म निष्पाद्य निमंत्रयति, यथा भगवन् युष्मन्निमित्तमस्मद्गृहे सिद्धमन्नमास्ते इति समागत्य प्रतिगृह्यतामित्यादि तत् प्रतिशृणोति प्रतिश्रवणानंतरं चोत्तिष्टति, पात्राण्युद्गृहणाति उद्गृह्य च गुरोः समीपमागत्योपयोगं करोति, एष समस्तोपि व्यापारोऽतिक्रमः, उपयोगपरिसमाप्त्यनंतरं न राधाकर्म्मग्रहणाय पदभेदं करोति, आदिशब्दान् मार्गे गच्छति, गृहं प्रविशति, आधाकर्म्मग्रहणाय पात्रंप्रसारयति, न चाद्यापि प्रतिगृह्णाति, एष सर्वोपि व्यापारो व्यतिक्रमः गहिए तईओत्ति आधाकर्म्मणि गृहीत्ते उपलक्षणमेतत् यावद्वसतौ समानीते गुरुसमक्षमालोचिते भोजनार्थमुपस्थापिते मुखे प्रक्षिप्यमाणेऽपि यावन्नाद्यापिगिलति तावत् तृतीयोऽतिचारलक्षणो दोषः, गिलिते त्वाधाकर्म्मणानाचारः, एवं सर्वेष्वप्यौद्देशिकादिषु भावनीयं, अत्रैव प्रायश्चितमाह -

[भा.४४] तिन्निय गुरुगामा सा विसेसिया तिण्हवगुरु अंते ।
एए चेव य लहुया विसोहिकोडीए पच्छित्ता ॥

वृ- त्रयाणामतिक्रमव्यतिक्रमातिचाराणां त्रयो गुरुकामा सा कथंभूता इत्याह विशेषितास्तपः काल विशेषिताः किमुक्तं भवति अतिक्रमेऽपिमासगुरुरतीचारेऽपिमासगुरुरंते च त्रयोऽपि यथोत्तरं तपःकालविशेषिताः अथ अंते अनाचारलक्षणे दोषे चतुर्गरुचतुर्मासगुरुप्रायश्चित्तं, एते च मासगुर्वाद्यः प्रायश्चितभेदा अतिक्रमादिष्वपि शोधिकोट्या त्वेत एवमासादयोलघुका प्रायश्चितानि तद्यथा अतिक्रमे मासलघुव्यतिक्रमेऽपि मास लघु, अतिचारेऽपि मास लघु नवरमेते यथोत्तरंतपःकालविशेषिताः अनाचारे चतुर्म्मासलघुः मूलगुणे पंचविधा प्रतिसेवनेति यदुक्तं तत्र पंचविधत्वं दर्शयति ॥

[भा.४५] पाणिवहमुसावाएअदत्तमेहुणपरिग्गहे चेव ।
मूलगुणे पंचविहा परुपणा तस्सिमा होई ॥

वृ- प्राणवधस्त्रसस्थावरप्राणिहिंसा, मृषावादो भूतोपधातिवचः, अदत्तादानं स्वामिगुर्वननुज्ञात ग्रहणं, मैथुनं स्त्रीसेवा, परिग्रहः स च बाह्याभ्यंतरवस्तुषु मूर्छा सर्वत्र एकारांतता प्राकृतलक्षणवशात्

मूलगुणे मूलगुणविषया पंचविधा प्रतिसेवना तस्याश्च पंचविधायाः प्रतिसेवनायाः संरंभादिभेदतः प्रतिभेदत्रिरूपाया इयं वक्ष्यमाण प्ररूपणा संरंभादिव्याख्यानरूपा भवति तामेव दर्शयति ।।

**[भा.४६]** संकप्पो संरंभो परितावकरो भवे समारंभो ।
आरंभाउ द्दवउ, सव्वनयाणंपि सुद्धाणं ।।

**वृ-** प्राणातिपातं करोमीति यः संकल्पोऽध्यवसायः स संरंभो यस्तु परस्य परितापकरो व्यापार ससमारंभः अपद्रावयतो जीवितात्परं व्यपरोपयतो व्यापारः आरंभः आह च चूर्णीकृत् पाणाइवायं करोमीति जो संकप्पं करेइ चिंतयतीत्यर्थः संरंभे वट्टइ परितावणं करेइ समारंभे वट्टइति एतच्च संरंभादित्रितयं सर्वनयानामपि शुद्धानां सुम्मतं अथ शुद्धाणमित्यत्र प्राकृतत्वात् पूर्वस्याकारस्य लोपो द्रष्टव्यः ततोऽयमर्थः सर्वनयानामप्यशुद्धानामेव ननु संरंभादि त्रितयंसम्मतं न तु शुद्धानामिति, अथके नयाः शुद्धाः केवाऽशुद्धाः इति शुद्धाशुद्धनयप्रतिपादनार्थमाह -

**[भा.४७]** सव्वेति होंति सुद्धा, नत्थि असुद्धोनयोउ सठाणे ।
पुव्वावपच्छिमाणयउ सुद्धचउपच्छिमा तेसिं ।।

**वृ-** नयाः सप्त तद्यथा, नैगमः, संग्रहो, व्यवहारः, ऋजुसूत्रः, शब्द, समभिरूढ, एवंभूत इति, एते च सर्वे नया स्वस्थाने निजनिजवक्तव्यतायां शुद्धा नास्ति सकश्चिन्नयो यः स्ववक्तव्यतायामप्यशुद्धः सर्वेषामपि परिपूर्णस्ववक्तव्यताभ्युपगमपरत्वात् उक्तं च नियवयणिज्ज सच्चा सव्व नयापरवियालणे मोहा यद्यप्येतदस्ति तथापि नैतत् प्रस्तुतोपयोगि, सर्वनयानां संरंभादित्रितयानभ्युपगमात्: ततः प्रकारांतरेण शुद्धाशुद्धनयप्ररूपणामाह पुव्वावेत्यादि पूर्वा आदिना वा शब्दः प्रागुक्तपक्षापेक्षया पक्षांतरताद्योतनार्थः पश्चिमानां चतुर्णां ऋजुसूत्रादीनां नयानां वे नैगमसंग्रहव्यवहाररूपास्त्रयस्ते शुद्धाः शोधयंति कर्म्ममलिनं जीवमिति शुद्धाशुद्धेरंतरभूत ण्य ऽर्थात् क्तप्रत्ययः, न उ पच्छिमातेसिं न तुयंतेषामादिमानां पश्चिमाऋजुसूत्रादयस्ते शुद्धाः अनुयायिद्रव्याऽनभ्युपगमस्तेषां विशोधकत्वायोगात् कथं पुनराद्यास्त्रयोनयाः शुद्धा इत्यत आह-

**[भा.४८]** वेणइए मिच्छत्तं ववहारनयाउजं विसोहिंति ।
तम्हा तेव्विय सुद्धा भइयव्वं होइ इयरेहिं ।।

**वृ-** वैनयिको नाम मिथ्यादृष्टिस्तस्मिन् यत् मिथ्यात्वं यत् व्यवहारनया एवतुरेवकारार्थः, नैगमसंग्रहव्यवहारः शोधयंति अपनयंति, तेह्यनुयायिद्रव्याभ्युपगमपरा स्ततः कृतकर्म्मफलोप-भोगोपपत्तेः सद्धर्म्मदेशनादौ प्रवृत्तियोगतो भवति तात्त्विकी शुद्धिः तस्मात्तएव शुद्धः भइयव्वं होइ इयरेहिंति, इतैर ऋजुसूत्रादिभिर्नयैर्मिथ्यात्वशोधिमधिकृत्य भजनीयं, शुद्ध्यतीति भावः, तेहि पर्यायमात्रमभ्युपगच्छंति, पर्यायाणां परस्परमात्यंतिकं भेदं, ततः कृतविप्रणाशादि दोष प्रसंगः, तथाहि मनुष्येण कृतं कर्म्म किल देवो भुंक्ते, मनुष्यावस्थातश्च देवावस्था भिन्ना, ततोमनुष्यकृतकर्म्म विप्रणाशो, मनुष्येण सता तस्योपभोगाभावात् देवस्य च फलोपभोगो ऽकृताभ्यागमः, देवेन सता तस्य कर्म्मणो ऽकरणात् कृतविप्रणाशादि दोषपरिज्ञाने च न कोऽपि धर्म्मश्रवणे अनुष्ठाने वा प्रवर्त्तेत, इति मिथ्यात्वशुद्ध्यभावस्तदभावाच्च न ते शुद्धा इति, एतदेवस्पष्टतरं विभावयिषुराह ।।

**[भा.४९]** ववहारनयस्सायो कम्मं कोइ फलं समणु होइ ।
इय वेणइएकहणं विसेसणं माहु मिच्छत्तं ।।

**वृ** - व्यवहारः प्रधानोनयो व्यवहारनयस्तस्यमतेन आत्मा शुभमशुभं वा कर्म्म कृत्वा तत्फलं भवांतरे समनुभवति अनुयायि द्रव्याभ्युपगमात् इति एतस्मात्कारणाद्वैनयिके मिथ्यादृष्टौ मिथ्यात्वापगमाय कथनं सद्धर्म्मोपदेशस्तत्परिणतौ च मिथ्यात्वापगमइति मिथ्यात्वशोधकत्वात्ते त्रयोऽपि व्यवहारनयाः शुद्धा विसेसणेमाहु मिच्छतमिति, विशेष्यते परस्परं पर्यायजातं भिन्नतया व्यवस्थाप्यते अनेनेति विशेषणमृजुसूत्रादिनयस्तस्मिन् प्ररूप्यमाणे कृतविप्रनाशादिदोषाशंकालोऽधिकलरंभा जंतवो मिथ्यात्वंयासु रितिन तन्मतानुसारेण वैनयिकेऽपिका सद्धर्मदेशनाप्रवृत्तिस्तदभावाच्च न मिथ्यात्वशुद्धिरिति न ते शुद्धाः, स्वभ्युपगम परत्वात् उपरतिनास्तु चत्वारः शुद्धा नैश्चयिकत्वात् तत शुद्धाशुद्धनयलक्षणमधिकृत्य यत्प्राक्द्वितीयं व्याख्यानं कृतं सव्व नयाणं असुद्धाणमिति तत्प्रदर्शयन्नाह

[भा.५०] संकप्पा ईति ययं अविसुद्धाणं तुहोइउ नयाणं ।
इयरेबाहिरवत्थु, नेच्छंताया जतो हिंसा ॥

**वृ** - इह संकल्पशब्देन न संरंभ उपलक्ष्यते पर्यायत्वात् संकल्पादित्रितयमिति कोऽर्थः संरंभादित्रितयं संरंभ समारंभारंभलक्षणं अविशुद्धानामेव तु स्वकारार्थो भवति, नयानां मतेन ज्ञातव्यमिति शेषः, व्यवहारपरतया तेषां मतेन त्रितयस्यापि संभवात् इतरे शुद्धऋजुसूत्रादयो हिंसाविचारप्रक्रमं बाह्यवस्तुनेच्छंति, नाभ्युपगच्छंति न बाह्य वस्तुगतां हिंसामनुमन्यंते इति भावः, य तस्तन्मतेनात्मैव तथाध्यवसाय परिकल्पितो हिंसा न बाह्य मनुष्यादि पर्याय विनाशनमाया यथा चैव उ हिंसेति वचनात्ततः संरंभ एव हिंसा न समारंभोनप्यारंभ इति, न शुद्धनयानां संरंभादि त्रितयं, सांप्रतमस्यामेव सा पुन न अतिक्रमे इत्यादिकायां गाथायां यत्र मूलोत्तरगुणप्रतिसेवना या विपर्ययेणोपन्यसनमकारि तत्र कारणमाक्षेप पुरस्सरमुपन्यस्यन्नाह -

[भा.५१] चोएइकिमुत्तरगुणा, पुव्वं बहु अथोवगलहुयंच ।
अतिसंकिलिठभावो, मूलगुणेसंवते पच्छा ॥

**वृ** - चोदयति प्रश्नयति शिष्यो, यथाक्रमितरगुणा उत्तरगुण प्रतिसेवना पूर्वमुक्ता यथोद्देशंनिर्देश इति न्यायाद्धि पूर्व मूलगुण प्रतिसेवनावक्तुमुचितेति भावः अत्रोत्तरमाह बहवः उत्तरगुणाः, स्तोकामूलगुणा स्तथा लघु शीघ्रमुत्तरगुणानां सेवकः प्रतिसेवकः, ततो अतिसंक्लिष्ट भावः सन् पश्चात् मूलगुणान् सेवते प्रतिसेवते इति ख्यापनार्थं; विपर्ययेणोपन्यास इह प्रायश्चित्तं मुख्यवृत्त्याविशोधि स्तथाचापराधं विधाय विशुद्धमनसो गुरु समक्षं वदंति, भगवन्ननुकम्प्याऽपराधस्य प्रयच्छत प्रायश्चित्तमिति, प्रतिसेवनाभ्युपचारात् कदाचित् प्रायश्चित्तं, तथा चापराधे कृते वक्तारोभवंति, समापतितमस्माकमद्य प्रायश्चित्तमिति, तत्र यथोपचारतः प्रतिसेवनाप्रायश्चित्त मुच्यते, तथोपपादयन्नाह -

[भा.५२] पडिसेवियंमिदिज्जइ, पच्छित्तं इहरहाऽपडिसेहे ।
तेन पडिसेवणव्विय पचिछत्तं बिमंदसहा ॥

**वृ** - प्रतिसेविते प्रतिपिद्धे सेविते यस्मात् प्रायश्चित्तं दीयते, इतरथा प्रतिपिद्धासेवनमंतरेण प्रतिषेधः प्रायश्चित्तस्य, ततः प्रतिसेवना प्रायश्चित्तस्य निमित्तमितिकारणे कार्योपचारात् प्रतिसेवनैव प्रायश्चित्तं प्रतिसेवनारूपं प्रायश्चित्तमिदं दशधा, दशप्रकारं तामेव दशप्रकारतामुपदर्शयति -

[भा.५३] आलोयण पडिकमणे, मीसविवेगे तहाविउस्सग्गे ।
तवच्छेय मूल अणवठियाय पारंचिएचेव ॥

वृ- आङ्मर्यादायां सा च मर्यादा इयं । जहबालोजंपंतो कज्जमकज्जं उज्जुए भणइ तं तह आलोएज्जा मायामय विप्पिमुक्कोय ।। अनया मर्यादया लोकृदर्शनं चुरादिन्यात् निच लोकनं लोचना प्रकटीकरणं, आलोचनं गुरोः पुरतोवचसा प्रकटीकरणमितिभावः यत् प्रायश्चित्तमालोचना मात्रेण शुध्यति, तदालोचनार्हतया कारणे कार्योपचारादालोचनं, तथा प्रतिक्रमणं दोषात्प्रतिनिवर्त्तन मपुनः करणतया मिथ्यादुष्कृतप्रदानमत्यिर्थः, तदर्हप्रायश्चित्तमपि प्रतिक्रमणं, किमुक्तं भवतिप्रायश्चित्तं मिथ्यादुष्कृत मात्रेणैवशुद्धिमासादयतिनच गुरु समक्षमालोच्यते, यथा सहसानुपयोगतः श्लेष्मादि प्रक्षेपादुपजातं प्रायश्चित्तं तथाहसिहसानुपयुक्ते यदि श्लेष्मादि प्रक्षिप्तंभवति, न च हिंसादिकं दोषमापन्नस्तर्हि गुरुसमक्षमालोचनामंतरेणापि मिथ्यादुःकृतप्रदानमात्रेण स शुध्यति, तत् प्रतिक्रमणमार्हत्वात् प्रतिक्रमणं, यस्मिन् पुनः प्रतिसेविते प्रायश्चित्ते यदगिरुसमक्षमालोचयतआलोच्ययो गुरु संदिष्टः प्रतिक्रामति पश्चाच्च मिथ्यादुःकृतमिति ब्रूते, तदा शुध्यति तत् आलोचनाप्रतिक्रमणलक्षणोभयार्हत्वात् विवेकः परित्यागः यत् प्रायश्चित्तं विवेक एवकृते शुद्धिमासादयति नान्यथा, यथाधाकर्म्मणि गृहिते तत्विवेकार्हत्वात् विवेकः तथा व्युत्सर्गः कायचेष्टानिरोधोपयोगमात्रेण शुध्यति प्रायश्चित्तं, यथा दुःस्वप्नजनितं तद्व्युत्सर्गार्हत्वात् व्युत्सर्गः तवंतियस्मिन्प्रतिसेवितनिर्विकृतकादिपण्मासपर्यवसानं तपोदीयते, तत्तपोर्हत्वात् तपः यस्मिन्समापतिते प्रायश्चित्ते निरवशेषपर्यायोच्छेदमाधाय भूयोमहाव्रतारोपणं तन्मूलार्हत्वान्मूलं, येन पुनः प्रतिसेवितेनोत्थापनाया अप्ययोग्यः सन् कंचित्कालं न व्रतेषु स्थाप्यते, यावन्नाद्यापि प्रतिविशिष्टं तपश्चीर्णं भवति, पश्चाच्च चीर्णतपास्तद्दोषोपरतो व्रतेषु स्थाप्यते तदनवस्थित्यादनवस्थितप्रायश्चित्तं पारंचिए चेवत्ति अचूगतोच, यस्मिन् प्रतिसेवितेलिंगक्षेत्र-काललपसां पारमंचति तत् पारांचित मर्हतीति पारांचितं, एषसंक्षेपार्थः विस्तरार्थं तु प्रतिद्वारम् भाष्यकृद्देववक्ष्यति, तत्र प्रथमद्वारमालोचनेति विवरिषुरिदमाह -

[भा.५४] आलोयणत्तिकापुन कस्ससगासेचेवहोइकायव्वा
केसुच कज्जेसु भवे - गमणागमणादिएसुतु ।।

वृ- काकिंस्वरूपापुनरालोचनेति, प्रथमतः प्रतिपाद्यंतदनंतरं कस्य सकाशं समीपं भवति कर्त्तव्यालोचनेतिवाच्यं, तथा केषुकार्येषु भवत्यालोचना तत्र प्रतिपत्तिलाघवाय संक्षेपतोऽत्रैवनिर्वचनमाह गमनागमनादिकिपुगमनं आगमने आदिशब्दात् शय्या संस्तारक वस्त्रपात्रपादप्रोञ्छनक गहणादपरिग्रहः, तु शब्दो विशेषणे सचैतत् विशिनष्टि, गमनागमनादष्वि वश्यकर्त्तव्येषु सम्यक्उप-युक्तस्यादुष्टभावतया निरति चारस्य छद्मस्थस्या प्रमत्तस्य यतेरालोचना भवतीति आह, यानि नामावश्यकर्त्तव्यानि गमनादीनि तेषु सम्यगुपयुक्तस्या दुष्टभावतया निरतिचारस्या प्रमत्तस्य किमालोचनया ? तामंतेरणापि तस्य शुद्धत्वात् यथा सूत्रं प्रवृत्तेः सत्य मेतत् केवलं या चेष्टा निमित्ताः सूक्ष्मप्रमादनिमित्ता वा, सूक्ष्मा आश्रवक्रियास्ता आलोचनामात्रेण शुध्यंतीति, तच्छुद्धिनिमित्त मालोचना, उक्तं च -

।। १ ।। जया उवउत्तो निरइयारोय करेइ करणीज्जावत जोगा
तत्थका विसोही आलोइए अनालोइ एव ।।

।। २ ।। गुरुभणइतत्थ जाचिट्ठ निमित्ता वा सुहुमा -
आसव किरिया ताउ सुज्झंति आलोयणमित्तंणंति ।।

तत्र कानामालोचनेतयित् प्रथमंद्वारं नत्प्रसिद्धत्वादन्यत्र वा कल्पाध्ययनादिषुव्याख्यातत्वा-दहिभाष्यकृता न व्याख्यातं, तथापिस्थाना शून्यार्थंकिंचिदुच्यते, आलोचना नाम अवश्यकरणीयस्य कार्यस्य पूर्वंवा कार्यसमाप्ते रुर्ध्वंवा यदविपूर्वमपि पश्चादपि च गुरोः पुरतोवचसाप्रकटीकरणं सा चालोचना उपरितनेपु प्राश्चित्तेषु केषुचित् संभवति केषुचिन्न संभवति तत्रयेषुसंभवति तत्प्रसिध्यर्थमिदमाह -

**[भा.५५]** बिइएनत्थिविवडनावाउविवेगतहायिउस्सग्गो ।
आलोयणाउ नियमा गीयमगीयेच केसिंचि ।।

**वृ-** द्वितीयंसूत्रक्रमप्रामाण्या नुसरणात् प्रतिक्रमणं, तस्मिन् द्वितीये प्रतिक्रमणलक्षणप्रायश्चित्ते नास्ति विकटना आलोचना, तथाहि सहसानाभोगतोवा यदि किंचिदाचरितं भवति यथा मनोज्ञेषु शब्दादिष्विंद्रियगोचरमागतेपु रागगमनम् अमनोज्ञेपु द्वेपगमनं, तदा तदनंतरमेव मिथ्यादुष्कृतमिति ब्रूते तद्यतेनैव शुद्धिंयातीतिनालोचयति, वाउ विवेगत्ति वा शब्दो विभाषायां विवेक विवेकाई प्रायश्चित्ते, आलोचना या विभाषा कदाचिद् भवति, कदाचिन्न भवतीति भावः, तथाहि तद् विवेकार्हं नाम प्रायश्चित्तं यत्परिस्थापनया शुध्यति, तत्र यदकल्पिकमाधाकर्म्मिकादि पूर्वंउमविदितत्वेनगृहीतं, पश्चाद्य कथमपि ज्ञातं तद्यदा परिस्थापयतः शुभभावनाध्यारोहेकेवलज्ञानमुत्पद्यते, तदाऽ सौ कृतकृत्यो जात इतिनालोचयति, अनुत्पन्ने तुज्ञानातिशये नियमादागत्य गुरुसमीपमालोचयतीति, तहाविउस्सग्गे इति, यथा विवेक आलोचनायाविभाषा, तथा व्युत्सर्गेपि, किमुक्तं भवति, व्युत्सर्गेपि कदाचिदालोचना न भवति, यथास्वप्ने हिंसादिकमासेवितं तच्छुद्धिनिमित्तं च कायोत्सर्गः कृतः तदनंतरं च शुभभावनाप्रकार्पतः केवलज्ञानमुदपादि, मरणं वा तस्याकस्मिकिमुपजातमिति नास्त्यालोचना, अनुत्पन्ने ज्ञाने जीवन् नियमादावश्यकं विकटयन् आलोचयति, यथा स्वप्नेमया हिंसादिक मासेवितं कायोत्सर्गेणच शोधितमिति, गतमालोचनेतिद्वारमधुना कस्यसकाशे आलोचना कर्तव्येतिद्वारं विवरीपुराह, सा आलोचना नियमाद वश्यतया गीतमिति प्राकृतत्वात् पष्ठयर्थे प्रथमा तस्य गीतार्थस्य सकाशे कर्तव्या, नागीतार्थस्य, अत्रैवमतांतरमाह अगीयेकेसिंचि केषांचिदाचार्याणामिदंमतं उत्सर्गत-स्तावदाचार्यस्य समीपे आलोचयितव्यं, यदा पुनराचार्यः संज्ञादि प्रयोजनगतो भवति तदा अगीतार्थस्यापि समीपे भिक्षाद्यालोचनीयमिति, तद्यालोचनार्हप्रायश्चित्तमेतेपुस्थानेपुभवति ।

**[भा.५६]** करणिज्जेसुउजोगेसु, छउमत्थस्सभिक्खुणो ।
आलोयणपच्छित्तं, गुरुणं अंतिएसिया ।।

**वृ-** करणीयाः नाम अवश्यकर्तव्यः योगाः श्रुतोपदिष्टाः संयमहेतवः क्रियाः अथवा योगा मनोवाक्काय व्यापाराः -

जोगोविरियं थामो, उच्छाह परक्कमोतहाचेट्ठा ।
सत्तीसामत्थं चिय जोगस्स हवंति पज्जाया ।।

इतिवचनात् ते चावश्यकर्त्तव्य इमे कूर्म्मइव वसतीसंलीनगात्रः सुप्रणिहित पाणिपादोऽवतिष्ठते, वचनमपि सत्यमसत्यामृषां वाब्रूते, ना सत्यामृषेति, मनसोप्यकुशलस्य निरोधनं कुशलस्या-दीरणमेवंरुपेपु करणीयेपु सम्यगुपयुक्तस्य निरतिचारस्येतिवाक्यशेपः सातिचारस्योपरितनप्रायश्चित्त-संभवात् छद्मस्थस्यपरोक्षज्ञानिनो, ननुकेवलज्ञानिन स्तस्यकृतकृत्यत्वेना लोचनाया अयोगात् उक्तं

च छउमत्थस्सहवइ आलोयणा न केवलिणो इति तथा सूत्रोक्तेन प्रकारेण भिक्षते इत्येवं शीलोभिक्षु स्तस्ययतेरालोचना प्रायश्चित्तंस्यात् तदपि च गुरुणामंतिके समीपेनान्येपामिति, इह करणीया योगा इति सामान्येनोक्तमधुनानामग्राहं करणीययोग प्रतिपादनार्थमाह-

[भा.५७]                    भिक्खवियार विहारे अनेसुयएवमाइकज्जेसु ।
                                अविगडियंमिअ विनतो होज्ज असुद्धे व परिभोगो ।।

वृ- भिक्षायां विचारे विहारे अन्येष्वपि चैवमादिकेषु कार्येषु आलोचनाप्रायश्चितं भवतीति वर्त्तते इयमत्रभावना गुरुमापृच्छय गुरुणानुज्ञातः सन् श्रुतोपदेशेनोपयुक्तःस्वयोग्यभिक्षावस्त्रपात्रशय्या-संस्तारकपादप्रोंछनादि यदिवा आचार्योपाध्याय स्थविरबालग्लानशैक्षकक्षपकासमर्थप्रायोग्य-वस्त्रपात्रभक्तपानौषध्यादि गृहीत्वासमागतो विचारउच्चारभूमिस्तस्माद्वासमागतो विहारो वसतावस्वाध्याये स्वाध्यायमकृत्वा वसतेरन्यत्रगमनं, तत्तएवमादि ग्रहणाच्चैत्यवंदन निमित्तं, पूर्वगृहीतपीठ फलक शय्या संस्तारकप्रत्यर्पणनिमित्तं वा बहुश्रुतापूर्व संविग्नानां वंदनप्रत्ययं वा संशय्यवच्छेदाय वा श्राद्धस्य ज्ञात्यवपन्न विहाराणामवबोधाय, साधार्मिकाणां वा संयमोत्साहनिमित्तं हस्तशतात्परं दूरमासन्नं वा गत्वा समागतोयद्यपि नास्तिकश्चिदतीचारस्तथापि यथाविधि गुरुसमक्षमा-लोचयितव्यमन्यथा सूक्ष्मचेष्टा निमित्तानां सूक्ष्मप्रमादनिमित्ताना वा क्रियाणां शुध्यभावात् अन्यच्च निरतिचारोपि यदि गुरोः समक्षं नालोचयति, ततोऽ विनयोभवति, अशुद्धपरिभोगो वा तथाचाह अविकटिते अनालोचिते अविनयो वा अशुद्धस्य वा परिभोगो भवेत् आलोचिते तूभयदोषाऽभावः नन्वविनयदोषा भावःस्याद शुद्ध परिभोगाभावः कथं ? उच्यते केनापि साधुना भिक्षा प्रचुरसत्कारपुरस्सरा लब्धा, तस्य शंकितमुपजातं, किंनामेयं भिक्षा शुद्धाऽशुद्धावा, तत्रयद्यनालोच्यभुंक्तेततोऽशुद्धपरिभोगो भवति, तेन वालोचिते आचार्येण पृष्टमन्य दिवसेषुतस्मिन् गृहे कीदृशी भिक्षाअलभ्यत, किंवातोवा भोजनकारिणः ? प्राघूर्णका वाकेप्यागता, संखडीवाजाता:इत्यादि विभाषाएव च पृष्टे तेन यथावस्थितं कथितं, ततआचार्येण ज्ञाता शुद्धा अशुद्धा वा, तस्मादालोचयितव्यं, अन्यच्च -

[भा.५८]                    छाउमत्थो तहअहा याहवेज्ज उवजोगो ।
                                आलोएंतोउहइ, सोउंचवियाणइसोया

वृ- अन्यच्चकिंचान्यत् इत्यर्थः छद्मस्थिकः सामान्यसाधुगतउपयोगस्तथा यथावस्त्वनुसारी अन्यथा वा विपरीतो भवेत्; आचार्यस्त्वति मेधाधारणादि गुणसमन्विततया बहुश्रुततयावातिशय-ज्ञानीततः शंकितमालोचिते निःशंकितं करोति. तथायद्यपिगृहीतः शंकितमुपजातं तथापि कदाचित् आलोचयन् स्वप्रज्ञयाप्यूहते, ततःशुद्ध मशुद्धंवा स्वयमेव जानाति, यदि वातदीयामालोचनां श्रुत्वा श्रोता आचार्यादिकः पूर्वोक्तेन प्रकारेण यदिवा आचार्यादिकस्य पार्श्वे बहवो लोकाः समागच्छंति, बहुभ्यश्च शृण्वन् कदाचित्तमपि विषयं लोकतः श्रुत्वा जानाति शुद्धमशुद्धं वा, तस्मादालोचयितव्यं, यदुक्तं गुरुणंतिएसिया इति तत्रस्यादित्यस्य व्याख्यानमाह -

[भा.५८]                    आसंकम वहिंयमियहोइ सियाअवहिए तहिपगयं ।
                                गणतत्ति विप्पमुक्के, विविक्खेवेवावि आसंका ।।

वृ- स्याच्छद्ध आशंकमिति प्राकृतत्वादाशंकायामवधृतेचार्थे आशंकानामविभाषा यथास्यादिति कोऽर्थः कदाचिद्भवेत् अवधृतंनाम अवधारणं, तत्रनयोर्द्वयोरर्थयोमध्ये अवधृते अवधारणे

प्रकृतमधिकारः अवधारणार्थोऽथवाच्छब्दः इतिभावः ततोयमर्थः गुरुणा मंतिकनियमादालोचना, यदिवा आशंकायामपि प्रकृतं, ततोयमर्थः गुरुणामंतिकेस्यात्तावदालोचना यदि पुनराचार्यो गणतृप्तिविप्रमुक्तोभवति, ततस्तमस्मिन् गणतृप्तिविप्रमुक्ते उपाध्यायस्य समीपे आलोचना, अर्थोपाध्यायस्यापिकुलादि कार्यैः श्राद्धादि कथनैर्वाप्याक्षेपस्ततो अन्यस्य गीतार्थस्य तदभावे अगीतार्थस्य समीपे आलोचयितव्यं, मतमालोचनार्हंप्रायश्चित्त मिदानीं प्रतिक्रमणार्ह मभिधित्सुराह ।

**[भा.६०]** गुत्तीसुयसमितीसुय पडिरूवीजोगतहापसत्थेय ।
वइक्कमे अनाभोगे पायच्छित्तं पडिक्कमणं ।।

**वृ-** गुप्तयस्तिस्त्रस्तद्यथा मनोगुप्ति र्वचन गुप्तिः कायगुप्तिस्तासु, समितयः पंच तद्यथा ईर्यासमिति र्भाषासमितिरेषणासमितिरादानभांडमात्रनिक्षेपणा समिति रुच्चार प्रश्रवण श्लेष्मसिंघाणजल्लपारिष्ठा-पनिकासमितिश्च एतासु च सहसाकारतोऽनाभोगतोवा कथमपि प्रमादे सतीतिवाक्यशेषः प्रायश्चित्तं प्रतिक्रमणं मिथ्यादुष्कृतप्रदानलक्षणं, इयमत्रभावना, सहसाकारतोऽनाभोगतो यदिमनसादुश्चिंतितं स्यात् वचसादुर्भाषितं, कायेनदुश्चेष्टितं, तथा ईर्यायां यदि कथं कथयन् व्रजेत् भाषायामपि यदि गृहस्थ-भाषयाढङ्गस्वरेण वा भाषेत, एषणायांभक्तपानगवेषणवेलायामनुपयुक्तो भांडोपकरणस्यादाने-निक्षेपेवाऽप्रमार्जयिता अप्रत्युपेक्षितेस्थंडिले उच्चारादीनां परिष्ठापयिता न च हिंसादोषमापन्नः उपलक्षणमेतत् तेनयदि कंदर्पो वा हासो वा स्त्रीभक्तचौरजनपदकथया तथा क्रोधमानमायालोभेषु गमनं, विषयेषु वा शब्दरूपरसगंधस्पर्शलक्षणेष्वनुषंगः सहसानाभोगतो वा कृतः स्यात् ततएतेषु सर्वेषु स्थानेषु मिथ्यादुष्कृतत प्रदानलक्षणं प्रायश्चित्तमिति, तथा प्रतिरूपयोगे प्रतिरूपविनयात्मकं व्यापारेतथा प्रशस्तो यो यत्र करणीयो व्यापारः सतत्र प्रशस्तईच्छामिच्छाइत्यादिस्तस्मिंन्न पियाक्रियमाणे प्रायश्चित्तं प्रतिक्रमणं, इह प्रतिरूपग्रहणं ज्ञानादि विनयोपलक्षणं, ततो यमर्थः ज्ञानदर्शनचारित्रप्रतिरूपलक्षण प्रकारविनयाकरणे इच्छामिथ्यातथाकारादि प्रशस्तयोगाकरणे उपलक्षणमेतत् आचार्यादिषु प्रद्वेषादिकरणे वाच अंतर भाषादि कृतो कायेनपुरो गमनादौ प्रतिक्रमणं प्रायश्चित्तं, तथा उत्तरगुणप्रतिसेवनायां वइक्कमेइति मर्यादाकथनं तेनातिक्रमेव्यतिक्रमेच प्राग्व्याख्यातस्वरूपे तथा, अनाभोगादकृत्यप्रतिसेवने मिथ्यादुष्कृत प्रदानात्मकं प्रतिक्रमणं प्रायश्चित्तमिति गाथा समासार्थः व्यासार्थंतु भाष्यकृत् व्याचिख्यासुः प्रथमतो गुत्तीसुय समिइसुय इति व्याख्यानयति ।।

**[भा.६१]** केवलमेव अगुत्तो सहसानाभोगतो व अप्पहिंसा ।
तहियंतुपडिक्कमणं आउट्टि तवोनवादानं ।।

**वृ-** एवकारो भिन्नक्रमः अगुप्तएव गुप्तिरहित एवकेवलं, उपलक्षणमेतत् तेनसमितिरहित एव केवलमित्यपिद्रष्टव्यं, केवल ग्रहणमगुप्तत्वमसमितत्वं चैकं केवलं, नत्वगुप्तत्या समितत्वप्रत्ययं प्राणिव्यापादनमापन्नइति प्रतिपादनार्थं, तथा चाह अप्पहिंसा अल्पशब्दो अभाववाची, अल्पानैवकाचन प्राणिनो हिंसाभवेदिति शेषः, कथमगुप्तोऽसमितोवेत्यतआह सहसापदैकदेशेपदसमुदायोपचारात् सहसाकारतोऽनाभोगतोवातत्र सहसाकारतो नाम पुव्वं अपासिऊणं, छूढे पाएकुलिंगएपासे, नय तरइति नियत्तेउं, जोगं सहसाकारणमेयं । इत्थंवरूपः, अनाभोगो विस्मृतिः, तहियंतु पडिक्कमणमिति तत्र सहसाकारतो नाभोगतो वा केवल एवागुप्तत्वे असमितत्वे चसति प्रायश्चित्तं प्रतिक्रमणंयदिपुनः आउट्टित्ति उपेत्य अगुप्तत्वमसमितत्वं वा करोति तदा तत्र प्रायश्चित्तं तपोर्ह नवादानं तपसइति गम्यते,

कथमदानमितिचेत् ? उच्यते, यदि स्थविरकल्पिका उपन्यागुप्तत्वमसमितत्वं वा मनसा समापन्नास्ततस्तपोर्हं प्रायश्चित्तं तेषां न भवति, गच्छनिर्गतानां तुमनसाप्यापन्नानां चतुर्गुरुकं प्रायश्चित्तमिति, तदेवंगुप्तिषु समितिषु वेति व्याख्यातमिदानीं प्रतिरुपयोगपदव्यानार्थमाह -

[भा.६२] पडिरूवग्गहणेणं विनओखलुसूइओचउविगप्पो ।
नाणेदंसणेचरणे, पडिरूवंचउत्थओ होई ।।

वृ- प्रतिरूपग्रहणेन प्रतिरूपशब्दोपादानेन चतुर्विकल्पः चतुष्प्रकारः खलुविनयः सूचितः, चतुःप्रकारत्वमेव दर्शयति, ज्ञानं ज्ञानविषयः, दर्शन दर्शनविषयः, चरणे चरणविषय श्चतुर्थः प्रतिरूपको विनयो भवति; तत्र ज्ञानविनयाष्टप्रकारतां कथयति ।

[भा.६३] कालेविनए बहुमाणे उवहाणे तह अनिण्हवणे ।
वंजण अत्थ तदुभए अट्ठविहो नाण विनताउ ।।

वृ- योयस्यांगप्रविष्टादेः श्रुतस्यकाल उक्तस्तस्यतस्मिन्नेव स्वाध्यायः कर्त्तव्यो, नान्यदा, तीर्थंकर वचनात् दृष्टांत कृष्यादेः काल करणेफलं विपर्ययः अत्रोदाहरणं, एगोसाहू पादोसियं कालंघेत्तु-अतिक्कंताएवि पढमपोरिसीए अनुवयोगेन पढइ कालियसुयं, सम्मद्दिट्ठी देवयाचिंतइ, मानं पंतदेवया छलिज्जत्ति काउंतक्ककुडंघेत्तूण तक्क तक्कंति भणती तस्सपुरतो गया गयाइं करेइ, तेन य मेसज्झायस्स वाघायं करेइतिय पभणिया अयाणिएको इमो तक्कस्स विक्कयणकालो वेलंनालोएहि, तीएवि भणियं, अहो को इमो कालियसुयस्स सज्झायकालोत्ति ततो साहू न एसा पगतित्ति उवउत्तो नाओ अद्धरत्तो दिन्नं मिच्छादुक्कडं देवयाए भणियं मा एवंकरेज्जासि मापंतो छलेज्जा ततो काले सज्झाइयव्वं, नतुअकाले इति, तथाश्रुतं श्रवणंकुर्वतागुरो र्विनयः कर्त्तव्यः, विनयोनामअभ्युत्थानपादधावनादि, अविनय गृहीतं श्रुतमफलं भवति एत्थ उदाहरणं, सेणिउराया भज्जाए भन्नत्ति, ममेगखंभपासायं करेह तेनवड्ढिउ आतो गयाकट्ठछिंदगा तेहिं अडवीए सलक्खणो महइ माहालयोदुमोदिट्ठो धूवादित्ता जेणिस परिग्गहितो रुक्खोसोदरिसावेउ अप्पाणं तोनछिंदामो अहनदेइ दरिसावंतोछिंदामोत्ति ताहेतेन रुयक्खवासि ना वानमंतरेणअभयस्स दरिसावोदिन्नोभो ! अहरंन्नो एगखंभं पासायं करेमि, सव्वो उयं च आगमं सव्ववणजातिउववेयं, माछिंदह, इमंरुक्खं जतो ममआवासस्सउवरिएस चूलाकप्पोत्ति एवंतेन कातोपासादो अन्नया एगाएमायंगीए अगाले दोहलो जातो, सा भत्तारं भणइ, मम अंबयाणि आनेह, अगालो अंबगाणंतेन उ नामिणीए विज्जाएडालाउणामिया अंबगाणिगहियाणि पुणोवि उन्नामिणीए उन्नामिया ।

-पभाए रन्नादिट्ठं, पयंनदीसइ, को एस माणुसो अतिगतो जस्सएरिसी सत्तीसो मम अंतेउरंपिधरिसिहि इतिकाउं अभयंसद्दाविउण भणइ सत्तरत्तस्य अब्भंतरे जइचोरं नाणेसि तोते नत्थिजीवियं ताहेअभउ गतो गवेसिउमाढत्तो नवरंएगंमि पएसे एगोनडोनच्चिउकामोलोगो मिलितो तत्थगंतुं अभओभणइ जाव एसो नडो अप्पाणंमंडेइ तावममेगं अक्खाणगंसुणेह जहा कहिंम्हि नगरे एगोदरिद्दीसेट्ठीपरिवसइ तस्सधूया वड्डकुमारी अतीवरूवस्सिणीया सावरंच्छिणी कामदेवं अच्चेइ, साचएगंमि आरामेचोरियाए पुप्फाणि उच्चिणेइ, आरामिणा दिट्ठाकदिउमाढत्ता तीएसो भणितो मामइ कुमारिं विनासेहितवाविभगिनी भाणिज्जिओअत्थि, तेन भणिया एकहा तेमुंयामि, जइ नवरं जम्मि दिवसे परिनिज्जसि, तद्दिवसंचेव भत्तारेण अनुग्घाडिया समाणि मम सगासं एहिसि, तीए भणियं, एवंभवउ त्ति तेन विसज्जिया, अन्नया

परिणीयाजाहे अपवरकं पवेसिया ताहेच भत्तारस्ससब्भावं कहइ विसज्जिया, वच्चसुत्ति पडिया आरामं, अंतरायं चोरेहिं गहिया तेसिं सब्भावो कहितो, मुक्का गच्छंतीए अंतरा रक्खसो दिट्ठो, जोमच्छमासाणं आहारेड तेन गहिया सब्भावेकहिए मुक्का आरामियस्स सगासंगया तेनदिट्ठा सोसंभंतो भणइकहमागयासि, ताए भणियं, मएएक्कोसोपुव्विं संमउ सोभणइ कहंभत्तारेण मुक्का ताहेतस्सतं सव्वं कहियं, अहोसच्चपइन्ना, एसामहिलत्ति एहि मुक्का कहमहं दुहामिलि तेनविपमुक्का, पडिनियत्ता सव्वेसिंते मज्झेण आगया, तेहिं सव्वेहिं मुक्का भत्तारसगासं समागया ताहे अभउ तंजनं पुच्छइ, अक्खह केणदुक्करंकयं तोहेईसालुया भणंति भत्तारेणं छुहालुयाभणंति रक्खसेणं कामिणो भणंति मालाकारेण हत्थिकेसेण भणियं चोरेहिं पच्छा सोगहितो जहा एसचोरोत्ति ततो सेणियस्स उवणीतो पुच्छीएणसब्भावो कहितो ताहेरन्ना भणियं ।

-जइ नवरं एयातो विज्ञाउद्देसि तोनमारेमि त्तिअब्भुवगते, आसनेठितोपढइ, नठाइ गया भणइ किं न ठाइ भायंगो भणइजहा अविनएण पढसि, अहंभूमिए तुमंआसणे, ततो सेणिओ नीययरेआसनेठितो, इयरो महति महालए, ततोठियातो सिद्धाउय विज्ञाउत्ति एवं विणएण अहिज्ञियव्वं नो अविनएणं, तथा श्रुत ग्रहणोद्यतेन गुरौबहुमानः कार्यः, बहुमानो नाम आंतरो भाव प्रतिबंधः एतस्मिन् सत्य ऊक्षेपण अधिकफलंश्रुतं भवति; विनयबहुमानेसु चउभंगो एगस्स विनओ न बहुमानो, अवरस्स बहुमानो नविनओ अन्नस्स विनओ बहुमानो वि, अन्नस्स न विणओ न बहुमानो एत्थदुण्ह वि विसेसपदंसणत्थं इमंउदाहरणं, एगंमि गिरिकंदरे सिवोतंच बंभणो पुलिंदोय अच्चेइ बंभणो उवलेवण समज्ञणाइयं करेत्ता सुइभूतो अच्चिणइ, अच्चिणेत्ता विनयभुता थुणाति नय बहुमाणे पुलिंदो पुन तंमिसिवे भाव पडिवद्धो, गल्लोदएण ण्हवेति, नमिऊण उवविसइ ततोसिवो तेन समं आलोवसंकहाहिं अत्थइ, अन्नया यतेसिंउल्लावणसद्दो बंभणेन सुत्तं, तेन पडियरिऊणं उवालद्धो तुमंपि एसोचेव कडपूयणा सिवो एरिसेण उच्चिठएण समं मंतोसि, ताहे सिवोभणइ, एसोबहुमाणेइ, तुमंपुनाइन तहा, अन्नायाय सिवो अच्छीणि उक्खणिऊण अचछइ, बंभणो आगतोरडिउमुवसंतोपुलिंदोय आगतोसिवस्स अच्छिंनपेच्छइ ।

ततो अप्पणयं अच्छिकंडफलेण उक्खिणित्ता सिवस्सजोएइ, ततो सिवेणं बंभणो पत्तियावितो, एवं नाणमंतेसु विनयो बहुमानोय दोविकायव्वो; तथा श्रुत गहणमभीप्सता उपधानंकार्य उपदधाति, पुष्टिं नयत्यनेनेत्युपधानं तपः यत् यत्राध्ययने आगाढादि योग लक्षणमुपधानमुक्तं तत्तत्र कार्यं, तत्पूर्विकस्यैव श्रुतग्रहणस्य सफलत्वात् अत्रोदाहरणं, एगआयरियासे वायणाए सत्तापण्गिं सज्झाएवि असज्झायंधोसे उमारद्धा नागेतरायं बंधिउणकालमासेकालंकिच्चा देवलोगं गया, देवलोगातो आउक्खएणण चुया, आभीरकुले पच्चायात भोगंभुंजंति, अन्नया य संधूया जाया साय अतीव रूवस्सिणी तानिपच्चंतियाणि गोचारिनिमित्तं अनत्थ गच्छंति, तीएदारिआए पिउणोसगडं सव्वसगडाणं पुरतोगच्छइ सायदारिया तस्ससगडस्सधुरं उवेठिया वच्चइ, तरुणोहिं चिंतियं, समसेणीगाइं सगडाइं काउं दारिंग पेच्छामो, तेहिं सगडा उप्पहेण खेडिया विसमे आवडिया समाणा भग्गा, ततो लोगेणताए दारियाए नामं कयं असगडा, ताए पिया असगडपियत्ति ततो तस्सतंचेववेरग्गंजायं, तंदारियं एगस्सदाऊणं पव्वइओ; जावचउरंगियं तावपढिओ, असंखयं पढिउमारद्धो, तं नाणावरणीज्नं से कम्मं उदिन्नं, पढंतस्स किं न ठाइ, आयरिया भणंति, छट्ठेण अनुजाणेज्नउ ततो सो भणइ, एयस्स केरिसो जोगो, आयरिया भणंति, जाव न ठाइ, ताव आयंबिलं कायव्वं, ततो सो भणइ एवं चेव पढामि, तेन तहा पढंते बारसरूपगाणि

बारसहिं संवच्छरेहिं न अहियाणि ताव तेन आयंबिलाणि कयाणि, ततो से नाणावरणिज्जं कम्मं खीणं।

-एवं जहा असगडपियाए आगाढजोगो अनुपालितो, तहा सव्वेहिं सम्मसुवहाणं पालेयव्वं. तथा अनिण्हव इति गृहीतश्रुतेनानिह्नवः कार्यः, ततु यस्य सकाशे अधीतं, तत्र स एव व कथनीयो नान्यः, चित्तं कालुष्यापत्तेरत्रदृष्टांतः एगस्स ण्हावियस्स छुरभंडं विज्जासामत्थेणं आगासे अच्छइ तं च एगो य परिव्वायगो बहूहिं उवसंपज्जणाहिं उवसंपज्जिऊण तेन सा विज्जा लद्धा, ताहे अन्नत्थ गंतुं तिदंडेण आगासगएण महाजनेन पूइज्जइ, रण्णा पुच्छिओ भगवं किमेस विज्जाइसओ उत तवाइसओ? सो भणइ विज्जाइसओ कस्स सगासाओ गहिता, सो भणइ हिमवंते फलाहारस्स रिसिणो सगासे अहिज्जिओ एवं वुत्ते समाणे संकिलेसदुट्ठयाए तं तिदंडं खडत्ति पडियं एवं जो अप्पागमं आयरियं निन्हवेउण अन्नं, तस्स अविहिसंकिलेसदोसेण सा विज्जा परलोए न हवइ इति तथा व्यंजनार्थ तदुभये इति समाहारत्वादेकवचनं भेदो न कार्य इति वाक्यशेषः एतदुक्तं भवति, श्रुतप्रवृत्तेन तत्फलमभिप्सता व्यंजनभेदो ऽर्थभेद उभयभेदश्च न कार्य इति, तत्र व्यंजनभेदो यथा धम्मो मंगलमुक्कट्ठं इति वक्तव्ये पुनं कहाणमुक्कोसमित्याह अर्थभेदो यथा अवंती केयावंती लोगंसिविप्परामुसंती इत्यत्र आचारसूत्रे यावंतः केचन लोके अस्मिन् पार्षडिलोके विपरा मृशंतीत्येवंविधार्थाभिधाने अवंतीजनपदे केयारकुर्वन्नकूपे पतिता लोकाः परामुशंतीत्याह, उभयभेदो द्वयोरपि यथात्मोपमर्दन धम्मो मंगलमुक्कोठो ऽहिंसापर्वतमस्तके इत्यादिदोषश्चात्र व्यंजनभेदे अर्थभेदस्तद्भेदे क्रियाभेदे च मोक्षाभावस्तदभावे च निरर्थका दीक्षेति एवं कालादिभेदप्रकारेणाष्टविधोऽष्टप्रकारो ज्ञानविनयः, दर्शनविनयोऽप्यष्टप्रकारस्तामेवाष्टप्रकारतामुपदर्शयति

[भा.६४] निस्संकिय निक्कंखिय निव्वितिगिच्छा अमूढदिट्ठीच ।

उववूहथिरीकरणे वच्छलपभावणे अट्ठ ॥

वृ- शंकनं शंकितं शंका इत्यर्थः निर्गतं शंकितं यस्मादसौ निःशंकितः, देशसर्वशंकारहितं इत्यर्थः, तत्र देशशंका समाने जीवित्वे किमेको भव्यो, अपरस्त्वभव्य इति, सर्वशंका प्राकृतनिबद्धत्वात् सकलमेवेदं प्रवचनं परिकल्पितं भविष्यति इत्येवं नपुनरालोचयति यथा भावा हेतुग्राह्या अहेतुग्राह्याश्च, तत्र हेतुग्राह्या जीवास्तित्वादयः, अहेतुग्राह्या अस्मदाद्यपेक्षया भव्यत्वादयः प्रकृष्टज्ञानगोचरत्वात्तद्धेतू-नामिति प्राकृतनिबंधोऽपि बालादिसाधारणमुक्तं च -

॥१॥ बालस्त्रीमूर्खमूढानां, नृणां चारित्रकांक्षिणां ।

अनुग्रहाय तत्वज्ञैः, सिद्धांतः प्राकृतः स्मृतः ॥

वृ- एतश्च न परिकल्पितो दृष्टेष्टाविरुद्धत्वात् निःशंकितो जीव एवार्हच्छासनप्रतिपन्नो, दर्शनं प्रतिविनीतत्वाद्दर्शनप्राधान्यविवक्षया दर्शनविनय उच्यते एतेन विनयविनयवतोरभेदमाह एकांतभेदे त्वविनयवत इव तत्फलाभावान्मोक्षाभाव एवं शेषपदेष्वपि भावना कार्या, तथा निःकांक्षितो देशसर्वकांक्षारहितः तत्र देशकांक्षा यदेकं दिगंबरादिदर्शनं कांक्षति, सर्वकांक्षा यथा यः सर्वाण्येव दर्शनान्याकांक्षति, न पुनरालोचयति षट्जीवनिकायपीडामसत्प्ररूपणां च, विचिकित्सा मतिविभ्रमः निर्गता विचिकित्सा यस्मादसौ निर्विचिकित्सः साध्वेव जिनदर्शनं किंतु प्रवृत्तस्य सतो ममास्मात्फलं भविष्यति न वा कृष्यादिक्रियाया उभयथाप्युपलब्धेरिति चिकित्सयारहितः नह्यचिकित्सः उपायउपेयवस्तुपरिप्रापको भवतीति, संजाननिश्चयो निर्विचिकित्स उच्यते एतावता अंशेन निःशंकिताद् भिन्नः उदाहरणं चात्र विद्यासाधको यथावश्यके इति, यद्वा निर्विशुद्धजुगुप्सः साधु

जुगुप्सागर्हितः उदाहरणं यत्र अन्यकुहितो यथा प्रत्यक्ष एवं तथा याः तपोस्वितपो विद्यातिशयदर्शनेन मूढा स्वभावान्न चलिता दृष्टिः सम्यग्दर्शनरूपा यस्या ऽसावमूढदृष्टिः उक्तं च -

||१|| नेगविहा इड्ढीओ पूयं, परवादिणं च दट्ठूण जस्सः ।
न मुज्झइ दिट्ठी, अमूढदिट्ठि तयं बिंति ॥

अत्रोदाहरणं सुलसा श्राविका, यथा अंबडो रायगिहं गच्छंतो बहूणं भवियाणं थिरिकरणनिमित्तं सामिणा भणितो सुलसं पुच्छेजासि, अंबडो चिंतइ, पुन्नमंति सुलसा जं अरिहा पुच्छइ, ततो अंबडेण परिजाणनिमित्तं सा भत्तं मग्गिया तहवि न दिण्णं ततोतणबहूनिरूवाणि विउव्वियाणि तहविन दिन्नं न य संमूढा, तह किर कुतित्थियरिद्धीओ दट्ठूण अमूढदिट्ठिणा भवियव्वं, एतावान् गुणिप्रधानो दर्शनविनयनिर्देशः, अधुना गुणप्रधानं उपबृंहणं च तत्रोपबृंहणं नाम समानधार्मिकाणां क्षपण वैयावृत्त्यादिसद्गुणप्रशंसनेन तद्वृत्ति । कथं उक्तं च -

||१|| खमणे वेयावच्चे, विनए सज्झायमाइएसु य जुत्तं ।
जो तं पसंसए एस, होइ उववूहणाविनओ ॥

एतेष्वेव क्षपणादिषु सीदतां तत्रैव विशेषतः स्थापना स्थिरिकरणं आह च । -

||१|| एएसु चिय खमणादिएसु सीयंत चोयणा जाउ ।
बहुदोसे मानुस्से मा सीद थिरीकरणमेयं ॥

तत्र उपबृंहणायामुदाहरणं रायगिहे नगरे सेणिओ राया इन्दो य सक्को देवराया समत्तं पसंसइ, ततो देवो असद्दहंतो नगरबाहिं सेणियस्स निग्गियस्स चेल्लयरूवं काऊण अणिमिसे गेण्हइ, ताहे तं निवारेइ, पुनरवि अन्नत्थ संजती गुव्विणी पुरतो ठिया ताहे अपवरगे पविसिऊण जहा न कोइ जाणइ तहा सूतिगिहं करावेइ कं किंचि सूइकम्मं तं सयमेव करेइ, ततो सो देवो संजइरूवं पयहिऊण दिव्वं देवरूवं दरिसेइ भणइ सय भो सेणिय सुलद्धं ते जम्म जीवियस्स फलं, जेण ते पवयणस्स उवरि एरिसी भत्ती अत्थीत्ति, उववूहेऊणगतो, एवं उववूहेयव्वा साहम्मिया, थिरीकरणे उदाहरणं अज्जा साहारिया जहा ते चेल्लयसुंण थिरीकया तहा जे भविया ते थिरीकरेयव्वाः तथा वात्सल्यप्रभावने इति, वात्सल्यं च प्रभावना च वात्सल्यप्रभावने, तत्र वात्सल्यं समानधार्मिकस्याहारादिभिः प्रत्युपकरणं उक्तं च -

||१|| साहम्मिय वच्छल्लं आहारईसु होइ सव्वत्थ ।
आएसगुरुगिलाणे तवस्सिबालाइसु विसेसा ॥

प्रभाव्यते विशेषतः प्रकाश्यते इति प्रभावना, निचेण्यासश्रन्थेत्यादिना भावे अनप्रत्ययः स चार्थात् प्रवचनस्य यद्यपि प्रवचनं शाश्वतत्वात्तीर्थकरभाषितत्वाद्वा सुरासुरनमस्कृतत्वात्स्वयमेव दीप्यते, तथापि दर्शनशुद्धिमात्मनोऽभीप्सुर्यो येन गुणेनाधिकः स तेन तत् प्रवचनं प्रभावयतिः यथा भगवदार्यवज्रस्वामिप्रभृतिकः, उक्तं च -

||१|| कामं सभावसिद्धं तु पवयणं दिप्पते सयंचेवः ।
तहवि सय जो जेना हिओ सो तेन पभावए तं तु ॥

ते च प्रवचनप्रभावका अतिशय्यादयः उक्तं च -

||२|| अतिसेसइड्ढि धम्मकहि वादि आयरिय खवग नेमित्ती ।
विज्जारायागणसम्मया य तित्थं पभावेंति ॥

अस्याक्षरगमनिका अतिशयी अवध्यादिज्ञानयुक्तः, ऋद्धिग्रहणात् आमर्षौषध्यादिऋद्धिप्राप्तः आचार्यः वादि धर्म्मकथि क्षपक नैमित्तिकाः प्रतीताः विद्याग्रहणात् विद्यासिद्धः आर्यखपटवत् राजगणसंमताश्चेति राजसंमता मंत्र्यादयः, गणसंमता महत्तरादयः च शब्दाद्दानश्रद्धादिपरिग्रहः एते तीर्थं प्रवचनं प्रभावयंति, स्वतः प्रकाशस्वभावमेव सहकारितया प्रकाशयंतीति, अट्ठत्ति एवं दर्शनविनयभेदा अष्टौ भवंति, चारित्रविनयोऽप्यष्टप्रकारः तथा चाह -

**[भा. ६५]** पणिहाणजोगजुत्तो पंचहिं समिईहिं तिहिं य गुत्तीहिं ।
एस उ चरित्तविनओ अट्ठविहो होइ नायव्वो ॥

वृ- प्रणिधानं चेतःस्वास्थ्यं तत्प्रधाना योगाः प्रणिधानयोगाः योगा व्यापारास्तैर्युक्तः समन्वितः प्रणिधानयोगयुक्तः, अयं च यतो अविरतसम्यग्दृष्टिरपि भवति, तत् आह, पंचभिः समितिभिस्तिसृभिश्च गुप्तिभिर्यः प्रधानयोगयुक्त एष चारित्रविनयः विनयविनयवतोः कथंचिदव्यतिरेकादष्टविधो भवति इत्यर्थः, समितिगुप्तियोगभेदाः, तत्र समितयः प्रवीचाररूपा, गुप्तयः प्रतीचाराः प्रतीचाररूपाः, उक्तंच

॥ १ ॥ समिईण य गुत्तीण य एसो भेदो उ होइ नायव्वो ।
समिई पयारख्वा गुत्ती गुण उभयरूवाउ ॥

उक्तश्चारित्रविनयः, संप्रति प्रतिरूपविनयप्रतिपादनार्थमाह -

**[भा. ६६]** पडिरूवो खलु विनओ कायवइमने तहेव उवयारे;
अट्ठचउव्विहदुविहो सत्तविह परुवणा तस्स ॥

वृ- प्रतिरूपः उचितः खलु विनयश्चतुः प्रकारस्तद्यथा काये कायनिमित्तः एवं वाचि वाचिकः मनसि मानसिकः तथा उपचारे औपचारिकः अट्ठचउविह इत्यादि अत्र यथासंख्यं पदघटना कायिको विनयो अष्टविधः, वाचिकश्चतुर्विधः, मानसिको द्विविधः, उपचारिकः सप्तविधः परुवणा तस्सत्ति तस्य कायिकादिभेदभिन्नस्य चतुःप्रकारस्य प्रतिरुपविनयस्य प्ररुपणा वक्ष्यमाणा तत्र यथोद्देशं निर्देश इति न्यायात् प्रथमतः कायिकस्याष्टविधस्य प्ररुपणामाह -

**[भा. ६७]** अब्भुट्ठाणं अंजलि आसणदानं अभिग्गहकिई य ।
सुस्सूसणा य अभिगच्छणा य संसाहणा चेव ॥

वृ- अभ्युत्थानार्हे गुर्वादौ समागच्छति एष सामान्यसाधूनां विनयः अपूर्वं पुनः समागच्छंतं दृष्ट्वा सूरिणाप्युत्थातव्यं, अंजलिप्रश्नादौ यदि पुनः कथमप्येको हस्तः क्षणिको भवति, तदेकतरं हस्तमुत्पाट्यनम क्षमाश्रमणेभ्य इति वक्तव्यं, आसनदानं नाम पीठकाद्युपनयनं, अभिग्रहा गुरुनियोगकरणाभिसंधिः, कृतिश्चेति कृतिकर्म्म वंदनमित्यर्थः, शुश्रूषणा विधिवदनतिदूरासन्नतया सेवनं, अभिगमनमागच्छतः प्रत्युद्गमनं सूत्रे स्त्रीत्वं प्राकृतत्वात् संसाधना गच्छतोनुव्रजनं, संप्रति वाग्नियभेदानाह -

**[भा. ६८]** हियमियअफरुसभासी, अनुवीइभासिसवाइउ; ।
विनओ एएसिं तु विभागं वोच्छामि अहानुपुव्वीए ॥

वृ- अत्र भासिशब्दः प्रत्येकमभिसंबध्यते, हितभाषी मितभाषी अपरुषभाषी हितं परिणामसुंदरं तद्भाषते, इत्येवंशीलो हितभाषिस्वरुपं वक्तव्यं, हितं च द्विविधमिहलोके हितं परलोके हितं च तत्र इहलोकहितप्रतिपादनार्थमाह -

[भा.६९] वाहिविरुद्धं भुंजइ, देहविरुद्धं च आउरो कुणइ ।
आयास अकालचरियादिवारणं हियं तु ।।

वृ- यः कश्चित् पुरुषो व्याधिग्रस्तो व्याधिविरुद्धं व्याधिप्रतिकोपकारि भुंक्ते तथा य आतुरो ग्लानो ग्लानत्वभग्नः सन् देहविनाशकारि करोत्यनशनप्रत्याख्यानादि, तयोर्वारणं, तथा आयासस्य मानातिरेकेण क्रियमाणस्य अकालचर्या रात्रौ पथिगमनमादिशब्दात् कंटकाकुलादिपथि गमनादि-परिग्रहस्तस्य च वारणमेतत् ऐहिकं हितं तद्भाषी ऐहिकहितभाषी; संप्रति परलोकहितभाषित्वप्रतिपादनार्थमाह -

[भा.७०] सामायारीसीयंतचोयणा उज्जमंतसंसा य,
दारुणसहावतं चिय, वारेइ परत्थ हियवाई ।।

वृ- सामाचारी त्रिविधा ओघसामाचारी दशविधचक्रवालसामाचारी, पदविभागसामाचारी च तस्यां त्रिविधायामपि सामाचार्यां यथायोगं सीदतः शिथिलयतश्चोदना प्रोत्साहकरणं सामाचारीसीदतश्चोदना, तथा उद्यच्छतस्त्रिविधायामपि सामाचार्यां यथाशक्त्युद्यमं कुर्वतः शंसा प्रशंसा उपबृंहणमुद्यच्छंसा, चः समुच्चये परलोकहितभाषणमिति सामर्थ्यात् गम्यते, तत्कारी परलोकहितवादी; तथा दारुणः क्रोधाद्यन्वितः स्वभावो यस्यासौ दारुणस्वभावस्तद्भावो दारुणस्वभावता, तां यो वारयति, सोपि परत्र हितवादी, अत्र परः पृच्छति ।।

[भा.७१] अत्थि पुन काइकिट्ठा इह परलोगे य अहियया होइ, ।
थद्धफरुसत्तनियडी, अतिलुद्धत्तं इच्चादी ।।

वृ- ननु हितभाषीत्यत्र हितमिति विशेषणं च व्यवच्छेदकं भवति, व्यवच्छेद्यं चात्र हितं तदस्ति पुनः काचित् कायिकी वाचिकी मानसिकी वा चेष्टा या इह लोके परलोके वा हिता सती व्यवच्छिद्येत् सूरिराह थद्धफरुसत्यादि त्वप्रत्यय उभयत्रापि संबध्यते, स्तब्धत्वमनर्मता एतेन कायिकी चेष्टोक्ता, परुषत्वं निष्ठुरभाषिता, अनेन वाचिकी, मानसिकीमाह निकृतिर्माया अतिलुब्धत्वमत्युत्कटलोभता इत्यादि शब्दात् क्रोधशीलता कलहोद्दीपकत्वमित्यमित्यादिपरिग्रहः ततोऽस्त्यहितापि चेष्टेति तद्व्यवच्छेदार्थं हितग्रहणं, संप्रति मितभाषित्वव्याख्यानार्थमाह -

[भा.७२] तं पुन अनुच्चसद्दं वोच्छिन्नमिय पभासए मउयं ।
मम्मेसु अडूमंतो सियावए परिणागवयणेणं ।।

वृ- तत् इहलोकहितं परलोकहितं वा पुनर्भाषतेऽनुच्चशब्दं विद्यते न उच्चशब्दः स्वरो यस्य तत्तथा तत् व्यवच्छिन्नं विभक्तममिलिताक्षरमित्यर्थः, मितं परिमितं प्रभूतार्थ संग्राहकं स्तोकाक्षरमित्यर्थः, तथा मृदुकं कोमलं श्रोतृमनसां प्रल्हादकारि इत्थंभूतमपि मर्मानुवेधतया विपाकदारुणं स्यात् अत आह मर्मस्वडूनयन् मर्म्माण्यविध्यन् इत्यर्थः स्याद्वा तथाविधं कंचनमशिक्षणीयमधिकृत्य परुषस्य मर्म्मानुवेधकस्य च वक्ता परिवचनेन अन्यापदेशेन यथा दोषाः क्रोसेवादयः इह परत्र चाकल्याणकारिणो यथा अमुकस्य तस्मात् कुलीनेन शीलप्रमुखेषु गुणेष्वादरः कर्त्तव्यः एव मितभाषी, सांप्रतम परुषभाषित्वव्याख्यानार्थमाह ।।

[भा.७३] तंपि य अपरुसमउयं हिययग्गाहि सुपेसलं भणइ,
नेहमिव उग्गिरंतो, नयनमुखेहिं च वियसंतो ।।

वृ- तदपि हितं मितं च भणति अपरुषमनिष्टुरमेतदेव व्याचष्टे मृदुकं कोमलं कथंभूतमित्याह; हृदयं गृह्णाति हृदये सम्यग्निवेशिते इत्येवंशीलहृदयग्राहः तथा सुष्टु अतिशयेन पेशलं मनोज्ञं श्रोतृमनसां प्रीतिकारि सुपेशलं, तथा नयनमुखाभ्यां विकसन् तथा कथंचनापि भणति, यथा स्नेहमिवां-तरप्रतिबद्धमिव साक्षादुद्गिरन् प्रकटीकुर्वन् प्रतिभासते, इत्थंभूतो वक्ता अपरुषभाषी, संप्रत्यनु-चिंत्यभाषित्वप्रतिपादनार्थमाह ।।

[भा.७४] तं पुन विरहे भासइ न येव ततोऽपभासियं कुणइ ।
जोएइ तहा काले, जह वुत्तं होइ सफलं तु ।।

वृ- तत्पुनर्हितं मितपरुषं च भाषते, अविरहे विरहाभावे समक्षमित्यर्थः, न पुनस्ततो विरहादन्यत्र परोक्षे अपभाषितं दुष्टभाषणं करोति विरुपं भाषते इत्यर्थः, तथा जोएइति देशीवचनमेतत् निरुपयति कालं प्रस्तावं यथाप्रस्तावोचिततया उक्तं भणितं सफलं भवति ।।

[भा.७५] अमियं अदेसकाले भावियमिव भासियं निरुवयारं ।
आपत्तोवि न गिण्हइ, किमंग पुन जो पमाणत्थो ।।

वृ- अमितं प्रभूताक्षरं, तथा अदेशकाले भावितमेवेति देशकालाभ्यामभावितमिव न देशोचितं नापि कालोचितमिति भावः, अत एव निरुपकारी देशकालानुचिततया ततो लेशतोपि परस्योपकारायोगात् एवंरुपं भाषितमाप्तोपि स्ववशगोऽपि न गृह्णाति, नादेयबुद्धया श्रृणोति किमंग पुनः प्रमाणस्थो मान्य इति ।

[भा.७६] पुव्विं बुद्धीए पासित्ता तत्तो वक्कमुदाहरे ।
अचक्खुयो व नेयारं, बुद्धिं अन्नेसए गिरा ।।

वृ- प्रागुक्तप्रकारेण पूर्वं बुद्धया प्रेक्ष्य पर्यालोच्य पश्चात् वाक्यमुदाहरेत् उच्चारयेत अन्यथा यथा कथंचन प्रवृत्त्या सम्यगुपादेयत्वायोगात् तथा चाह अचक्षुष्कइवांधक इव नेतारमाकर्षयितारं बुद्धिमन्वेषते गीः सदसदर्थप्रतिपाद्यते, इत्थं च वक्ता अनुविचिंत्यभाषी, उक्तो वाचिको विनयः संप्रति मानसिक विनयद्वैविध्यप्रतिपादनार्थनाह -

[भा.७७] मानसिओ पुन विनओ दुविहो उ समासओ मुनीयव्वो ।
अकुसलमनोनिरोही कुसलमनउदीरणं चेव ।।

वृ- मानसिकः पुनर्विनयः समासतः संक्षेपेण द्विविधो द्विप्रकारो मुणितव्यो ज्ञातव्यः, तदेव द्वैविध्यमुपदर्शयति, अकुशलस्य आर्त्तध्यानाद्युपगतस्य मनसो निरोधः, अकुशलमनोनिरोधः कुशलस्य धर्म्मध्यानाद्युत्थितस्य मनस उदीरणं, च समुच्चये एवकारो अवधारणे एतावेव द्वौ भेदौ नान्याविति ।

उक्तो मानसिकोपि विनयः, सांप्रतमापैचारिकसप्तविधविनयप्रतिपादनार्थमाह -

[भा.७८] अब्भासवत्ति छंदोनुवत्तिया कज्जपडिकित्ती चेव,
अत्तगवेसणकालानुयायसव्वानुलोमं च ।।

वृ- गुरो रभ्यासे समीपे वर्त्तते इतिशीलोऽभ्यासवर्त्ती, गुरुपादपीठिकापर्त्यासन्नवर्त्तीति भावः छंदो गुरुणामभिप्रायस्तमनुवर्त्तते, आराधयतीत्येवंशीलः, छंदोनुवर्त्ती तद्भावः छंदोनुवर्त्तिता, तथा कार्ये कार्यनिमित्तं तृतीयो विनयः किमुक्तं भवति संग्रहमुपसंग्रहं वा मे करिष्यतीत्येवं बुद्ध्या यो विनयः क्रियते

स कार्यनिमित्तको विनयः, पडिकित्तीचेवत्ति कृते कार्ये यः क्रियते विनयः स प्रतिकृतिरुपत्वात् प्रतिकृतिरुपत्वात् प्रतिकृतिनिरन्तर कार्यहेतुके प्रतिकृतिरूपे च विनये आक्षेपपरिहारौ भाष्यकृद्वक्ष्यति, तथा द्रव्याद्यापत्सु आर्त्तस्य उपलक्षणमेतत् अनार्त्तस्य वा गवेषणं दुर्लभद्रव्यसंपादनादिरुपमार्त्तगवेषणं, तथा कालं प्रस्तावमुपलक्षणत्वात् देशं च जानातीति कालज्ञस्तद्भावः कालज्ञता देशकालपरिज्ञानं तस्मिन् सति गुर्वादिच्छंदसा गुर्वादिभ्य आहारादिप्रदानं करोति, ततो विनयहेतुत्वात्तदपि देशकाल परिज्ञानविनयः तथा सर्वेषु गुरुपदेशेष्वनुलोममप्रतिकूलतो सर्वानुलोमं, च समुच्चये एष गाथासंक्षेपार्थः, व्यासार्थं तु भाष्यकृद्विभणिषुः प्रथमतोऽभ्यासवर्त्तित्वं व्याख्यानयन्नाह-

[भा.७९] गुरुणोय लाभकंखी, अब्भासे वट्टते सया ।
साहू आगारइंगिएहिं, संदिट्ठो वत्ति काऊणं ।।

वृ- गुरोरभ्यासे समीपे लाभकांक्षी, ज्ञानदर्शनचारित्ररुपपरमार्थलाभार्थी सदा साधुः प्रवर्त्तते, किमर्थमित्यत आह-आगारित्यादि आकारो नेत्रवक्त्रगतं, इंगितं चेष्टा ताभ्यां गुरोरभिप्रायमवगम्य तत्समीहितं कुर्त्तुं संदिट्ठो चेति यत् किमपि गुरुणा संदिष्टः तद्वा कर्त्तुमिति, संप्रति चछंदानुवर्तितामाह -

[भा.८०] कालसहावानुमया, अहारुवहीउवस्सयं चेव ।
नाउं ववहरइ तहा, छंदं अनुवत्तमाणो उ ।।

वृ- आहारः पिंडः, उपधिः कल्पादिः, उपाश्रयो वसतिरेते कालस्वभावानुमता इति, अनुमतशब्दः प्रत्येकमभिसंबध्यते, कालानुमताः स्वभावानुमताश्च कालानुमता ये यस्मिन् काले सुखहेतुतयानुमताः ते कालानुमताः । प्रकृतिः स्वभावः स यार्थादिह गुरोः प्रतिगृह्यते तदनुमताः तदनुकूलाः तान् तथा ज्ञात्वा च्छंदो गुरोरभिप्रायमनुवर्त्तमानो व्यवहरति संपादयति, एष च्छंदोनुवर्त्तिताविनयः, संप्रति कार्यहेतुके विनये परकृतमाक्षेपं मनस्याधाय परिहारमाह ।

[भा.८१] इहपरलोकासंसविमुक्कं कामं वयंति विनयं तु ।
मोक्खाहिगारिएसु अविरुद्धो सो दुपक्खेवि ।।

वृ- ननु तीर्थकरैर्भगवद्भिरिहपरलोकाशंसाविप्रमुक्तविनयः कर्त्तव्यतयोपदिष्टस्ततः कथं साधूनां कार्यहेतुको विनयः ? उच्यते, काममिति अनुमते अवधृते ततोयमर्थः, यद्यपि नाम इह परलोकाशंसाविप्रमुक्तं कामं नियमाद्वदंति विनयं तथापि मोक्षाधिकारिषु मोक्षयोग्येषु मोक्षपथज्ञानदर्शनचारित्रवत्स्वित्यर्थः स कार्यहेतुकोपि विनयः द्वयो पक्षयोः समाहारे द्विपक्षं, तस्मिन्नपि साधुवर्गे चेत्यर्थः अविरुद्धो न विरोधभाक् इयमत्र भावना कार्यहेतुकोपि विनयः खलु संग्रहादि कार्यार्थं संग्रहादि कार्यं च मोक्षांगमिति, सोपि मोक्षार्थिना कर्त्तव्यो भगवदुपदिष्टत्वादिति, संप्रति कृत प्रतिकृत विनये तमेवाक्षेपं मनस्याधाय परिहारमाह । -

[भा.८२] एमेवय अनियाणं, वेयावच्चं तु होइ कायव्वं ।
कयपडिकित्ती विज्जइ, न कुणइ सव्वत्थ न जयइवि ।।

वृ- यथा मोक्षांगतया कार्यहेतुको विनयः साधुभिः कर्त्तव्यः, एवमेव मोक्षांगतयैव कृतप्रतिकृतिरुपमपि वैयावृत्त्यं अनिदानं निदानं भोगप्रार्थना तद्रहितं भवति, कर्त्तव्यं अनिदानमिति, च विशेषणं मध्यग्रहणे दंडादरिवाद्यंतयोरपि ग्रहणमिति न्यायात् पूर्वं पश्चाद्य द्रष्टव्यं, तेन सर्वोपि विनयो मोक्षार्थिभिरनिदानः कर्त्तव्यः अथ कथं कृतप्रतिकृतिरुपस्य विनयस्य मोक्षांगता ? उच्यते सुशिष्यो

ह्येवं परिभावयति, ज्ञानदर्शनचारित्रलाभैर्मामनुपकारिणमप्युपकुर्वंति भगवंतोऽमी सूरयस्तस्मादेतेष्ववश्यं विनयः कर्त्तव्यः, ''जस्स तियं वेनइयं पउंजे'' इति वचनादेवं च पर्यालोच्य यः क्रियते विनयः, स कृतप्रतिकृतिरूपत्वात् कृतप्रतिकृतिर्मोक्षांगत्वाद्यावश्यं कर्त्तव्य इति अन्यच्च उत्सर्गतस्तावत् साधुभिः सर्वं निर्जरार्थं कर्त्तव्यं, केवलं कदाचिदशुभोऽपि भाव उपजायते, कर्मणां गतेर्विचित्रत्वात् ततोऽशुभभावोदयवशात् यद्यपि सर्वदा न निर्जरार्थं प्रवर्त्तते, तथाप्येष ममापि करिष्यतीति कृतप्रतिकृतिबुद्ध्यापि वैयावृत्त्यं कर्त्तव्यं, तथा चाह 'कयपडिकितिविजुज्जइ' इत्यादि यद्यपि यत् वैयावृत्त्यं सर्वत्र सर्वेषु प्रयोजनेषु निर्जरानिमित्तं करोति तथापि कृतप्रतिकृतिरपि युज्यते कृतप्रतिकृतिबुद्ध्यापि वैयावृत्त्यं कर्त्तव्यमिति भावः, साधूनां ज्ञानादिपात्रतया विनयं स्थानत्वेन तेषु विनयस्य कल्याणपरंपराहेतुत्वात्। उक्तः कृतप्रतिकृतिरूपो विनयः । सांप्रतं कार्यहेतुकरूप विनयप्रतिपादनार्थमाह ।

[भा.८३/१] दव्वावईमाइसुं अत्तमणत्तेव गवेसणं कुणइ ।।

वृ- द्रव्यापदि दुर्लभद्रव्य संपतौ च तथा घभवति केषुचित् देशेष्ववंत्यादिषु दुर्लभं घृतादिद्रव्यमिति, आदिशब्दात् क्षेत्रापदि परिग्रहः, तत्र क्षेत्रापदि कांताराादि पतने, कालापदि दुर्भिक्षे, भावापदि गाढग्लानत्वे आर्त्तस्य पीडितस्य अत्यन्तसहिष्णुतया अनार्त्तस्य वा यथाशक्तियत् गवेषणं करोति, दुर्लभद्रव्यादि संपादयति, स आर्त्तगवेषणविनयः; संप्रति कालज्ञताविनयप्रतिपादनार्थमाह-

[भा.८३/२] आहारादिपयाणं छंदंमि ऊ छट्ठउ विनउ ।।

वृ- षष्ठः कालज्ञतालक्षणो विनयः एष यदुत छंदंमिउ इति तृतीयार्थे सप्तमी यथा तिसु तेसु अलंकिया पुहवी इत्यत्र ततोऽयमर्थः । छंदसा गुरूणामभिप्रायेणैव तुशब्दस्यैवकारार्थत्वात् आहारादिप्रदानं किमुक्तं भवति, यत् यस्मै प्रतिभासते तदिंगिताकारादिभिरभिज्ञाय आचार्यग्लानोपाध्यायप्रभृतिनामकालक्षेपं संपादयति, स एष कालज्ञताविनयः उक्तः कालज्ञताविनयः, संप्रति सर्वत्रानुलोमतालक्षणं विनयमाह।

[भा.८४] सामायारिपरुवणनिद्देसे चेव बहुविहे गुरुणो, ।
एमेयत्ति तहत्तिय, सव्वत्थनुलोमयाएसा ।।

वृ- गुरुणो इत्यत्र कर्त्तरि षष्ठी, गुरोः सामाचारीप्ररूपणे किमुक्तं भवति, इच्छामिथ्यादिरूपायां तस्यां सामाचार्यां गुरुणा प्ररूप्यमाणायां एवमेतत् यथा भगवंतो वदंति नान्यथेति प्रतिपत्तिस्तथा बहुविधे बहुप्रकारे निर्देशे तत्कर्त्तव्यताज्ञापनलक्षणे गुरोर्गुरुणा क्रियमाणे वा तथेति वचनतः कर्त्तव्यतया च प्रतिपत्तिरेषा सर्वापि सर्वानुलोमता नाम विनय उपसंहारमाह-

[भा.८५] लोगोवयारविनओ, इय एसो वन्निओ सपक्खंमि ।
आसज्ज कारणं पुन कीरइ जइणा विपक्खेवि ।।

वृ- इति एवमुक्तेन प्रकारेण एष लोकोपचारविनयः स्वपक्षे सुविहितलक्षणे वर्णितः आसाद्य कारणं विपुनर्विपक्षेपि गृहस्थेषु तथाविधागारिषु श्रावकेषु पार्श्वस्थादिषु एष लोकोपचारविनयाभ्यासवर्त्तित्वादिलक्षणो यतनया प्रवचनोन्नतिव्याघातपरिहारेण संयमानाबाधया च क्रियते, तदेवं कायवाङ्मनोलोकोपचारभेदतश्चतुःप्रकारः प्रतिरूपविनययुक्तः अथवा अन्यथा चतुःप्रकारः प्रतिरूपविनयस्तानेव प्रकारान् दर्शयति ।।

[भा.८६] चउहा वा पडिरुवो तत्थेगनुलोमवयणसहियत्तं ।
पडिरुवकायकिरिया फासणसव्वानुलोमंच ।।

**वृ-** वाशब्दः प्रकारांतरद्योतनार्थः, अन्यथा वा चतुष्प्रकारः प्रतिरुपविनयः तत्र तेषु चतुर्षु प्रकारेषु मध्ये एकः प्रतिरुपविनयस्तावदयं यदुत अनुलोमवचनसहितत्वं यत्किमपि कार्यमादिष्टः करोति, तत्सर्वमनुलोमवचनपूर्वकं करोति नान्यथेति भावः, द्वितीयप्रतिरुपकायक्रिया यथा परिपाट्या शरीरविश्रामणमित्यर्थः, तृतीयः संस्पर्शनाविनयः यथा गुर्वादेः सुखासिको यः जायते तथा मृदुसंस्पर्शनप्रत्येकः संस्पर्शनविषय इतिभावः, चतुर्थः सर्वानुलोमता सूत्रे सर्वानुलोममिति भावप्रधानो निर्देशः, चः समुच्चये सा च सर्वानुलोमता व्यवहारविरुद्धेपि प्राणव्यपरोपणकारिण्यपि वा समादेशे यथाक्रमं तथेति प्रतिभाषितस्यैव च कार्यसंपादकमित्येवं रूपा एतानेव प्रकारान् क्रमेण व्याचिख्यासुः प्रथमतोऽनुलोमवचनसहितत्वं व्याख्यानयति -

**भा. [८७]** अमुगं कीर उ आमंति भणइ अनुलोमवयणसहितो उ,
वयणपसायाईहि य अभिनंदइ तं वयं गरुणो ॥

**वृ-** इच्छाकारेण भो शिष्याः अमुकं क्रियतामित्येवं गुरुणा समादिष्टो यो वचसा आममिति ब्रूते एव किंतु गुरोस्तां वाचं वदनप्रसादादिभिः वदनस्य प्रसादेन मुखस्य प्रसन्नतया आदिशब्दात् उत्फुल्लनयनकमलोऽञ्जलिप्रग्रहादिना चाभिनंदति, महान् कृतः प्रसादो यदेवं समादिष्ट इति एवं ज्ञापनेन स्फीतीकरोति स विनयविनयवतोरभेदोपचारात् अनुलोमवचनसहितः प्रतिरुपविनयः तुशब्द एवकारार्थः एवंरुप एवानुलोमवचनसहितो नान्य इति, अस्यैव विनयस्य करणे उपदेशमाह -

**[भा. ८८]** चोदयंते परं थेरा इच्छानिच्छेय तं वई;
जुत्ता विनयजुत्तस्स गुरुवक्कनुलोमता ॥

**वृ-** स्थविरा आचार्यादयः ते परं शिष्यं चोदयंते तेषां तत्राधिकारित्वात् तत्र तां चोदनात्मिकां वाचं प्रति यदि इच्छा भवति तदादिष्टकार्यकरणाय यदिवा अनिच्छा तथापि विशुद्धान्वयतया विनययुक्तस्य गुरुवाक्यानुलोमता आममित्येवं गुरुवाक्योपबृंहणं, गुरुवाक्योपदिष्टकार्यसंपादकता चेति लक्षणा युक्ता इयमत्र भावना जातिकुलसमन्वितेन विनयमिच्छता सदैव गुरोर्निकटवर्त्तिना भवितव्यं तत्र यदा गुरुः शिक्षयते, तदा तां शिक्षामिच्छता अनिच्छता वाऽवश्यं गुरुवाक्यमाममिति तथैवेत्येवं उपबृंहणीयं कार्यं च संपादनीयमिति एतदेव सविस्तरमाह ।

**[भा. ८९]** गुरवो जं पभासंति तत्थ खिप्पं समुज्जमे ।
नउसच्छंदया सेया, लोए किमुत उत्तरे ॥

**वृ-** गुरवो यत्प्रभाषंते, कर्त्तव्यतयोपदिशंति, तत्र क्षिप्रं शीघ्रं समुद्यच्छेत् सम्यगुद्यमं कुर्यात् यतो नहु नैव स्वच्छंदता स्वाभिप्रायेण वर्त्तिता श्रेयसी लोकेपि, अपिशब्दोत्राऽनुक्तोऽपि सामर्थ्यात् गम्यते, किमुत उत्तरे लोकोत्तरे सुविहितजनमार्गे परलोकार्थिनस्तस्य सुतरां न श्रेयसी, ज्ञानादिविच्युतिप्रसंगात्।

**[भा. ९०]** जदुत्तं गुरुनिद्देसं जोवि आइसई मुनी ।
तस्सावि विहिणा जुत्ता, गुरुवक्कानुलोमता ॥

**वृ-** यथोक्तं गुरुनिर्देशं गुर्वाज्ञारुपं योपि मुनिरादिशति कथयति, तस्यापि तथा दिशतः प्रतिविधिना सूत्रोक्तेन युक्ता गुरुवाक्यानुलोमता यतो यथोक्तस्वरुपात्तदेवमुक्तोऽनुलोमवचनसहितस्वरुपो विनयः, संप्रति प्रतिरुपकायक्रियाविनयमाह -

**[भा. ९१]** अद्धाण वायणाए निव्वासणयाए परिकिलंतस्स ।

सीसाई जा पाया किरिया पायादविनउ य ॥

वृ- अध्वनि मार्गे वाचनायां सूत्रार्थप्रदानलक्षणायां निन्यासनतया निरंतरोपवेशनतः परिक्रांतस्य समंततः क्रममुपागतस्य क्रिया प्रतिरूपकायक्रिया विश्रामणेति तात्पर्यार्थः कर्त्तव्येतिवाक्यशेषः, कथं कर्त्तव्येत्यतः आह शीर्षादिर्यावत्पादौ शिरस्यारभ्य अंगेन [illegible] कर्त्तव्या [illegible] करोति तदा अविनयः पादादिमलस्य शीर्षादिषु लग्नात् अत्रैवापवादमाह -

[भा. १२] जत्तो व भणाइ गुरु करेइ कियकम्म मो ततो ।
पुव्वं संफरिसणविनउ पुन परिमउयं वा जहा सहइ ॥

वृ- यतो वा अंगादारभ्य गुरुर्भणति तत पूर्वमारभ्य कृतिकर्म्म विश्रामणां, मो इति पादपूरणे करोति तथा च सति पादादप्यारभ्य कुर्वतो नाविनयः गुर्वाज्ञाकारित्वात् उक्तोनुलोमकायक्रियाविनयः, संप्रति संस्पर्शनविनयमाहः संफरिसणेत्यादि संस्पर्शनविनयः पुनः परिमृदुकं वाशब्दादल्पमृदुकं वा यथा सहते तथा विश्रामणां करोति, अतिस्वरेण विश्रामणायां परितापनसंभवात् अथ विश्रामणायां को गुण इत्यत आह । -

[भा. १३] वायाइ सठाणं वयंति बद्धासणस्स जे खुभिया ।
खेयजओ तनुथिरया, बलंचअसिादओ नेवं; ॥

वृ- वातादयो वातपित्तश्लेष्माणो ये बद्धासनस्य सतः क्षुभिताः स्वस्थानात् प्रतिचलितास्ते स्थानं व्रजंति स्वस्थानं प्रतिपद्यंते, ते न विक्रियां भजंतीति भावः, तथा वाचनाप्रदानतो मार्गगमनतो वा यः खेद उपजातः तस्य जयो ऽपगमो भवति, तथा तनोः शरीरस्य स्थिरता दार्ढ्यं भवति, न विशरारुभावः, अत एव च बलं शरीरं तदुपष्टंभतो आदिशब्दात्तदन्यरोगा न उपजायंते, एते विश्रामणायां गुणास्ततः कर्त्तव्योऽवश्यमनुलोमकायक्रियाविनयः, संस्पर्शलविनयश्च संप्रति सर्वत्रानुलोमताविनयमाह -

[भा. १४] सेयवपु मे काको, दिठो चउदंतपंडुरो वेभो ।
आमंति पडिभणते सव्वत्थनुलोमपडिलोमे ॥

वृ- श्वेतवपुः श्वेतशरीरो मे मया काको दृष्टः यदिवा इभो हस्ती चतुर्दंतो पांडुरश्च मया दृष्ट इति वर्त्तते, एवं प्रतिलोमे लोकव्यवहारविरुद्धे गुरुणा कथमप्युच्यमाने आमभिति प्रतिभणति शिष्ये सर्वत्रानुलोमलक्षणो विनयः प्रतिपत्तव्यः, किमुक्तं भवति, यदि नाम श्वेतवपुर्मया काको दृष्ट इत्यादिकं लोकव्यवहारप्रतिकूलं कथमपि गुरुर्भणति तथापि तदानीं सकलजनसमक्षमामित्येवं वक्तव्यं, न पुनस्तद्वचः कुट्टयितव्यं, केवलं विशेषार्थिना जनविरहे कारणं प्रष्टव्यं, एवं हि सर्वानुलोमतालक्षणो विनयः प्रकटितो भवति मान्यथा । -

[भा. १५] मिणु गोणसं गुलेहिं गणेह से दाहवक्कलाइं से ।
अग्गंगुलीए वग्घं तु दडिवगडं भणति आममिति ॥

वृ- मिणु प्रमिणु गोनसं सर्प्पजातिविशेषं अंगुलैः यथा कियत्यंगुलानि अयं गोनसो विद्यते इति तथा गणय परिसंख्याहि से तस्य गोनसस्य दंष्ट्राः यदिवा से तस्य वक्र वालानि पृष्ठस्योपरि मंडललक्षणानि गणय कियंत्योऽस्य दंष्ट्राः कियंति वास्य पृष्ठस्योपरि वक्रवालानीत्येतत् गणयित्वा कथयेति भावः, तथा अग्रांगुलया अंगुल्य ग्रभागेन व्याघ्रं तुदतो त्रेणेव व्यथय, तथा डिप प्रोल्लंघय अवटं कूपं, एवं प्राणप्रतिलोमं वदति गुरौ सर्वत्रानुलोमताविनययुक्तः शिष्य आममिति भणति, गुरवो हि सकलजगत्प्राणिवर्गविषय-

परमकरुणापरितचेतसस्ततस्त एव युक्तमयुक्तं वा जानंति किमत्र शिष्यस्य चिंतयेति शिष्येण सर्वत्रानुलोमविनयमिच्छता ईदृशमपि गुरुवचनं तथेति प्रतिपत्तव्यमिति, संप्रति गुत्तिसु य समिईसु य इत्यादि गाथायां यदुक्तं पसत्थे य इति तत्र प्रशस्तग्रहणव्यवच्छेद्यं दर्शयति -

[भा.१६] तत्थ उ पसत्थगहणं परिपिट्ठणछेज्जमाइ वारेइ, ।
उस्सन्नगिहत्थाण, य उट्ठाईय पुव्वुत्ता ।।

**वृ-** जोगे तहा पसत्थे य इत्यत्र यत् प्रशस्तग्रहणं कृतं तत् अप्रशस्तयोग परिपिट्ठनछेद्यादिकं वारयति निराकरोति, न तदकरणे प्रतिक्रमणं प्रायश्चित्तं भवतीति भावः, तस्याप्रशस्तत्वेन तत् करणस्यैव प्रायश्चित्तविषयत्वात्, तथा अवसन्नानामुपलक्षणमेतत् पार्श्वस्थकुशीलानां च तथा गृहस्थानां पूर्वोक्ता उत्थानादयोऽभ्युत्थानजल्पासनप्रदानादयस्तानपि वारयति, तेषामपि तान् प्रति अप्रशस्तत्वात्, अत्रैव प्रायश्चित्तयोजनामाह ।।

[भा.१७] जो जत्थ उ करणिज्जो, उट्ठाणाइउ अकरणे तस्स ।
होइ पडिक्कमियव्वं एमेवय वाए मानसिए ।।

**वृ-** यो योग उत्थानादिरभ्युत्थानां जलिप्रदानादिको यत्र आचार्यादिविषये करणीय उक्तस्तस्य तत्राकरणे प्रतिक्रमितव्यं भवति, मिथ्यादुःकृतं प्रायश्चित्तं भवतीति भावः, तदेव तत् कायिकप्रतिरुपयोगविषये उक्तमेव अनेनैव प्रकारेण वाचिके मानसिकेपि योगे प्रतिरुपे वक्तव्यं, यथा वाचिको मानसिकोपि यः प्रतियोगरुपयोगो यत्र करणीय उक्तस्तस्य तथा तत्राकरणे मिथ्यादुःकृतं प्रायश्चित्तमिति, चशब्दोऽनुक्तसमुच्चयार्थस्तेन इच्छामिथ्यादिप्रशस्तयोगाकरणेपि मिथ्यादुःकृतं द्रष्टव्यं, संप्रति यत् मूलगाथायामतिक्कमे अनाभोगे इत्युपन्यस्तं, तद्व्याख्यानयन्नाह ।।

[भा.१८] अवराहे अतिक्कमणे वइक्कमे चेव तह अनाभोग ।
भयमाणे उ अकिच्चं, पायच्छित्तं पडिक्कमणं ।।

**वृ-** अपराधे उत्तरगुणप्रतिसेवनरुपे अतिक्रमणं तथा व्यतिक्रमं च तथाऽनाभोगतोऽकृत्यमपि मूलोत्तरगुण प्रतिसेवनालक्षणं भजमाने प्रतिक्रमणं मिथ्यादुष्कृतं प्रायश्चित्तं तदेवमुक्तं प्रतिक्रमणार्हं प्रायश्चित्तमिदानीं तदुभयार्हमभिधातुकाम आह ।

[भा.१९] संकिए सहसागारे भयाउरे आवतीसु य ।
महव्वयातियारे य, छण्हं ठाणाण वज्जंतो ।।

**वृ-** शंकितः प्राणातिपातोदौ यथा मया प्राणातिपातः कृतः किंवा न कृतस्तथा मृषा भणितं नवा, अवग्रहोऽनुज्ञापितो नवा, स्नानादिदर्शननिमित्तं जिनभवनादिगतस्य स्त्रीस्पर्शे रागगमनमभूत्रवा, इष्टानिष्टेषु शब्दादिषु रागद्वेषौ गतौ नवा तक्रादिलेपकृदवयवाः कथमपि पात्रगताः पर्युषिता भिक्षार्थमटितुकामेन धौताः किंवा न धौता इत्यादि तत्र षण्णां स्थानानां बाह्यं तदुभयलक्षणं प्रायश्चितमिति योगः, तथा उपयोगवतोपि सहसाकारे सहसा प्राणातिपातादिकरणे तथा भये दुष्टम्लेच्छादिसमुत्थे यदिवा हस्त्यागमने मेघोदकनिपातस्पर्शने दीपादिस्पर्शनेन वा आकुलतया प्राणातिपातादिकरणे तथा आतुरः क्षुधापिपासया वा पीडितः भावप्रधानश्चायं निर्देशस्ततोयमर्थः आतुरतायां तथा आपत्चतुर्द्धा तद्यथा द्रव्यापत् क्षेत्रापत् कालापत्, भावापत्; तत्र द्रव्यापत् दुर्लभं प्रायोग्यं द्रव्यं, क्षेत्रापत्छिन्नमंडपादि कालापत् दुर्भिक्षादि, भावापत् गाढग्लानत्वादि एतासु स हिंसादोषमापद्यमानस्यापि अनात्मवशगस्य

तथाहि ईर्यासमितावुपयुक्तोऽप्युद्धालिते पादे सहसा समापतितं कुलिंगिनमपि व्यापादयेत् मृषापि कदाचित्सहसा भाषते ऽग्रहमपि कदाचिद्व्रमसिकतया अननुज्ञातमपिपरिभोगयति अत्युल्बणमबलारूप-मवलोक्य कदाचनिपि सहसारागमुपैति इत्यादि, तथा भयात्प्रपलायमानो भू जल ज्वलन वनस्पति-द्वित्रिचतुःपंचेंद्रियानपि व्यापादयन् मृषापि भयाद् भाषते, परिग्रहमपि धर्मोपकरणबाह्यस्य करोति, आतुरतायामपि सम्यगीर्यापथाशोधने संभवति प्राणातिपातः, अत्यातुरतायां कदाचिन् मृषाभाषणमपि अदत्तादानमपि च एवमापत्स्वपि भावनीयं, यथा महाव्रतानां प्राणातिपातनिवृत्यादीनां सहसाकारः स्फुटबुद्ध्याकारणतो वा अतिचारं चशब्दादतिक्रमव्यतिक्रमयोश्च तथाऽतिक्रमादीनां महावृतविषयाणा-मन्यतमस्याशंकायां वा किमित्याह छण्हठाणाणवज्झतोइति इह केषांचित् अनवस्थितपारांचिते प्रायश्चिते द्वे अपि कं प्रायश्चित्तमिति प्रतिपत्तिः तन्मतेन नवधा प्रायश्चित्तं, तत्रचाद्ये द्वे प्रायश्चिते मुकत्वा शेषाणि सप्त प्रायश्चित्तानि तेषां च सप्तानां प्रायश्चित्तानां यदाद्यं प्रायश्चित्तं तत् उपरितनानां षण्णां बाह्ये नाभ्यंतरमिति, षण्णां स्थानानां बाह्यतः इति वचसा तदेव प्रतिपत्तव्यं, यश्च तदुभयं तच्चैवं भावनीयं, शंकितादिषु यथोक्तस्वरुपेषु सत्सु प्रथमं गुरुणां पुरत आलोचनं, तदनंतरं गुरुसमादेशेन मिथ्यादुःकृतदानमिति तत्र यदुक्तं संकिए इति तत् विवृण्वन्नाह -

[भा.१००] हित्थोव न हित्थोमे, सत्तो भणियं व नभणियं मोसं ।
उग्गहनुण्णमणुन्ना, तइए फासे चउत्थम्मि ॥

[भा.१०१] इंदियरागदोसए, पंचमे किं गतोमि न गतोत्ति ।
छट्ठे लेवाडाइ, धोयम धोयं न वा वेत्ति ॥

वृ. सत्त्वः प्राणी हित्थोत्ति देशीपदमेतत् हिंसितो मे मया न वा हिंसित इति, तथा भणितं यदि वा न भणितं तथा तृतीये अदत्तादान विरति लक्षणे अवग्रहो ऽनुज्ञा न कारिता, तथा चतुर्थे मैथुनविरति लक्षणे, जिनभवनादिषु स्नानादि दर्शन प्रयोजनतो गतः सन् फासे इति स्त्री स्पर्शरागं गतो न वा, तथा पंचमे परिग्रह विरमणलक्षणे इन्द्रियेषु विषयिणा विषयोपलक्षणादिन्द्रिय विषयेषु इष्टानिष्टेषु रागद्वेषौ गतोस्मि किं वा न गत इति, तथा षष्ठेरात्रिभोजन विरमणे लेपकृदादि तक्राद्यवयवरूपं कथमपि यात्रादि गतं पर्युषितं भिक्षाटनार्थमुद्यतेन धौतमथवा न धौतं मयेति यद्येवं ततः किमित्याह -

[भा.१०२] इंदिय अव्वागडिया जे अत्था अनुवधारिया ।
तदुभयपायच्छित्तं पडिवज्जइ भावतो ॥

वृ. उक्तेन प्रकारेण य अर्थः प्राणातिपातादयः इन्द्रियैश्चक्षुरादिभिरव्याकृता अप्रकटीभूताः प्रकटीकृता अपि ये अनुपधारिता न सम्यक् धारणा विषयी कृतास्तेषु प्रायीति प्रतिपद्यते भावतः सम्यक् अपुनरावर्तनेन तदुभयमिति तच्च तद् उभयं च पूर्वं गुरुणां पुरत आलोचना तदनंतरं तदादेशतो मिथ्या-दुःकृतदानमित्येवं रूपं तदुभयं एतदेव सविस्तरमभिधित्सुराह -

[भा.१०३] सद्दा सुया बहुविहा तत्थय केसु विगतोमि रागंति; ।
अमुगत्थ मेवितक्का, पडिवज्जइ तदुभयं तत्था ॥

वृ - शब्दामया बहुविधा बहुप्रकाराः श्रुताः श्रवणविषयीकृतास्तत्र तेषु बहुविधेषु शब्देषु श्रुतेषु मध्ये वितर्क्केति एवं मे वितर्क्क संदेहो यथा केषुचिदपि अमुगत्थति अमुकेषु रागमुपलक्षणमेतत् द्वेषं वा गतोस्मि तत्र तस्मिन् शंकाविषये तदुभयमुक्तलक्षणंप्रायश्चित्तं भावतः प्रतिपद्यते, यदि हि निश्चितं भवति यथा

अमुकेषु शब्देषु रागद्वेषं वा गत इति तत्र तथार्हं प्रायश्चित्तं अथवं निश्चयो न गतो रागद्वेषं वा तत्र स शुद्ध एव न प्रायश्चित्तविषयः, ततोवितर्के यथोक्तलक्षणं तदुभयमेव प्रायश्चित्तमिति ।

**[भा.१०४]** एवमेव सेसएवि विसए आसेविऊणजे पच्छा; ।
काऊणएगपक्खे न तरइ तहियं तदुभयं तु ॥

**वृ-** एवमेव उक्तेनैव प्रकारेण यान् रुपादीन् विषयान् आसेव्योपभुज्य उपलक्षणमेतत् प्राणातिपातादीनप्यासेव्य पश्चात् एकतरस्मिन् पक्षे अपराधलक्षणे निर्दोषतालक्षणे वा कर्तुं न शक्नोति, यथा रुपादिषु विषयेषु रागद्वेषं वा गतः प्राणातिपातादयो वा कृता इति यदि वा न गतो रागद्वेषौ, नापि कृताः प्राणातिपातादय इति तत्र तदुभयं च तदुभयमेव तु शब्दस्यैवकार्थत्वात् यथोक्तलक्षणं प्रायश्चित्तं शंकास्पदत्वात् तदेवं शंकिते इति व्याख्यातं, संप्रति सहसाकारे इत्यादि व्याचिख्यासुराह -

**[भा.१०५]** उपयोगवतो सहसा, भएण वा पेल्लिए कुलिंगादि ।
अच्चाउरावतीसु य अनेसियादिगहणभोगो ॥

**वृ-** उपयोगवतोपि ईर्यासमितौ सम्यगुपयुक्तस्यापि उत्पाटिते पादे कथमपि सहसायोगतः समापतितः सन् कुलिंगी व्यापद्यते भयेन वा चौरसिंहादीनां भृशं प्रपलायमाने भयग्रहणमुपलक्षणं तेन एतदपि द्रष्टव्यं परेण वा पेल्लिए इति परेण प्रेरितो वा तद्व्यापारमासाद्य कुलिंगी उपलक्षणमेतत् पृथिव्यादिजीवनिकायो वा व्यापत्तिमाप्नुयात् तथा अत्यातुरे क्षुधापिपासया वा अत्यंतपीडिते तथा आपत्सु द्रव्यापदादिषु यदि अनेषितादिग्रहणे भोगो भवतः अनेषितमनेषणीयमादिशब्दादकल्पनीयस्य परिग्रहः, न केवलमनेषितादिग्रहणभोगो किंतु गमनागमनादौ पृथिव्यादिजंतुविराधनापि भवति तथापि तत्र प्रायश्चित्तं यथोक्तलक्षणं तदुभयमिति वर्त्तते सहसाकारादिविषयत्वात्, संप्रति महव्वयाइयारे य इत्येत-द्व्याख्यानयन्नाह -

**[भा.१०६]** सहसाकारे अइक्कमवइक्कमे चेव तह अइयारे ।
होइ व सद्दग्गहणा पच्छित्तं तदुभयं तिसुवि ॥

**[भा.१०७]** अतियारस्स व वा, एगयरे तत्थ होइ आसंका ।
भवहा जस्स विसोही तस्सुवरिं छण्हं वज्जं तु ॥

**वृ-** सहसाकारतः सहसाकारतोतिक्रमे व्यतिक्रमे अतिचारे च प्राग् व्यावर्णितस्वरुपे महाव्रतविषये इति सामर्थ्यात् गम्यते महव्वयाइयारे य इति पदस्य व्याख्यायमानत्वात् एतेषु त्रिष्वपि दोषेषु तदुभयमुक्तस्वरुपं प्रायश्चित्तमिति योगः, अथ मूलगाथायां महाव्रतातीचारे चेत्येवोक्तं ततः कथमत्र विवृतं अतिक्रमे व्यतिक्रमे वेति ? अत आह, चशब्दग्रहणात् किमुक्तं भवति ? चशब्दग्रहणतः मूलगाथायामतिक्रमव्यतिक्रमयोरपि समुच्चयः कृत इत्यदोषः, अथवा अतिचारस्य पर्यंतग्रहणा-दतिक्रमव्यतिक्रमयोरपि उपयोग स्फुटबुद्ध्याकरणे तदुभयं प्रायश्चित्तमिति योगः, वाशब्दो भिन्नक्रमत्वादेगयरे इत्यत्र योजनीयः ततोऽयमर्थ एकतरस्मिन् वा तत्र अतिक्रमे व्यतिक्रमे व्यतिक्रमे अतिचारे वा यदि भवत्याशंका यथा मयातिक्रमः कृतो न वा व्यतिक्रमो कृतो न वा अतिचारः कृतो नवेति तत्रापि तदुभयं प्रायश्चित्तं इह सहसाकारशंके संकिए सहसागारे पदद्वयेनापि गतं, केवलं महाव्रतानामतिक्रमणादिष्विन्याशंकायां सहसाकारे चैतदेव प्रायश्चित्तं नान्यत् परिकल्पनीयमिति भाष्यकृता सहसाकारशंके अपि योजिते, छण्ह ठाणाण वज्जं तु इति व्याख्यानयन्नाह नवहेत्यादि

यस्याचार्यस्य मतेऽनवस्थितपराचितयोरव्याविवक्षणात् नवधा नवप्रकाश विशोधिः प्रायश्चित्तं, तस्य आद्यप्रायश्चित्तद्वयस्योपरि यद्वर्तते प्रायश्चित्तं तत् षणामुपरितनानां बाह्यमेव तुशब्दस्यैवकारार्थत्वात्, ततः छण्हं ठाणाण बज्झंतु इति तदुभयं प्रायश्चित्तं प्रतिपत्तव्यमिति उक्तं तदुभयार्हं प्रायश्चित्तमिदानीं विवेकार्हमाह । -

**[भा.१०८]** कडजोगिण उ गहियं सेज्जासंथारभत्तपानं वा ।
अफासुएसणिज्जं नाउं, विवेगो उ पच्छित्तं ॥

**वृ-** कृतयोगी नाम गीतार्थः, कश्च गीतार्थ उच्यते वस्त्रपात्रपिंडशय्यैषणाध्ययनानि छंदसूत्राणि च सूत्रतोऽर्थतः तदुभयतो वा येन सम्यगधीतानि स गीतार्थः, तेन कृतयोगिना श्रुतोपदेशानुसारिपरिणाम-परिणतेन शय्या उपाश्रयः उपाश्रयग्रहणात् तृणडगलकमल्लकादिपरिग्रहस्तेषामपि प्रायस्तत्रैव संभवात् संस्तारकः प्रतीतः, संस्तारकग्रहणं सकलौधिकौपग्रहिकोपलक्षणं भक्तमशनं, पानं सौवीरादि वाशब्दात् खादिमं स्वादिमं वा गृहीतं पश्चात् कथमपि अप्रासुकमनेषणीयं वा ज्ञातं, तत्र प्रायश्चित्तं तस्य गृहीतस्य शय्यादेर्विवेकः परित्यागः उक्तं च - तं सेज्जाइयं विहिणा सुज्झइठेणे विगिंचमाणो परिसुद्धो इति ॥

**[भा.१०९]** पउरण्णपाणगामे किं साहु न वेंति सावए पुच्छा नत्थि ।
वसहित्ति पकया ठिएसु अतिसेसियविवेगो ॥

**वृ-** केचित् साधवः प्रचुरान्नपाने ग्रामे गतास्तत्र वसतिर्दुःप्रापा नोचिता लभ्यते इति न स्थिताः ततः सावए पुच्छा इति षष्ठिसमम्योरर्थं प्रत्यभेदात् श्रावकस्य तथाभिनवदीक्षितस्य पार्श्वे पृच्छा अभवत् यथा किमिति साधवो नात्र तिष्ठंति स प्राह नास्त्यत्र वसतिरिति कृत्वा ततः साधुषु गतेषु श्रावकैः पर्यालोच्य वसतिः प्रकृता प्रकृष्टा कृता तस्यां च कृतायां कालांतरेण ते वान्ये वा साधवः समागतास्तत्र स्थिता स्थितेषु च कतिपयदिनातिक्रमे अतिशेषितं ज्ञातं च सति ततः प्रायश्चित्तं विवेकः किमुक्तं भवति, ज्ञाते सति तां वसतिं परित्यजंतस्ते शुद्धा इति उपलक्षणमेतत्, तेन एतदपि द्रष्टव्यं ॥ अशठभावेन गिरि राहु मेघ महिकारजःसमावृते सवितरि उद्गतबुद्धया अनस्तमितबुध्ध्या वा गृहीतमशनादिकं पश्चात् ज्ञातमनुद्गते अस्तमिते वा सूर्ये गृहीतं तथा प्रथम पौरुष्यां गृहीत्वा चतुर्थामपि पौरुषीं यावत् धृतमशनादि शठभावेनाऽशठभावेन वा अर्द्धयोजनातिक्रमेण नीतमानीतं वाशनादि तत्र विवेक एव प्रायश्चित्तमिति शठाशठयोश्चेदं लक्षणं इंद्रियविकथामायाक्रीडादि कुर्वन् शठः ग्लानसागारिकस्थंडिलभयादिकारण-तोऽशठ इति उक्तं विवेकार्हं प्रायश्चित्तं संप्रति व्युत्सर्गार्हमाह -

**[भा.११०]** गमनागमनवियारे सुत्ते वा सुमिणे दंसणे राओ ।
नावा नईसंतारे पायच्छित्तंवि उस्सग्गो ॥

**वृ-** गमनमुपाश्रयात् गुरुमूलाद्वा बहिर्गमनं भूयः स्वोपाश्रये गुरुपादमूले वा बहिःप्रदेशात् प्रत्यावर्त्तनमागमनं च गमनं च गमनागमनं समाहारो द्वंद्वः गमनपूर्वमागमनं गमनागमनं गमनं आगमनं च गमनागमने स्यादावसंख्येय इत्येकशेषः तयोस्तत्र यदा भक्ताद्यर्थमन्यस्मिन् ग्रामे गतः सन् विश्रमणनिमित्तमासितुकामोऽथवा यावन्नाद्यापि वेला च भवति तावत् प्रतीक्षितुकामो यदिवा प्रथमालिकां कर्तुकामो यदा शून्यगृहादिषु प्रविशति तदेवमादिषु प्रयोजनेषु गमनमात्रेऽपि ऐर्यापथिकीप्रतिक्रमणपुरस्सरं कायोत्सर्गः प्रायश्चित्तं, तदनंतरं कार्यसमाप्तौ भूयः स्वोपाश्रयप्रवेशे आगमनमात्रे कायोत्सर्गः, शेषेषु प्रयोजनेष्वपांतराले विश्रामणासंभवे गमनागमनयोरिति वियार इति

विचारो नाम उच्चारादिपरिष्ठापनं, तत्रापि प्रायश्चित्तं कायोत्सर्गः सुत्ते वा इति सूत्रे सूत्रविषयेषु उद्देशसमुद्देशानुज्ञाप्रतिक्रमण श्रुतस्कंधांगपरिवर्त्तनादिश्च विधिसमाचरणपरिहाराय प्रायश्चित्तं कायोत्सर्गः, वासमुच्चये सुमिणदंसणेराउ इति उत्सर्गतो दिवा स्वप्तुमेव न कल्पते ततो रात्रिग्रहणं रात्रौ स्वप्नदर्शने प्राणातिपातादिसावद्यबहुले कदाचिदनवद्यस्वप्नदर्शने वा अनिष्टसूचके उपलक्षणमेतत् दुःशकुनदुर्निमित्तेषु वा तत्प्रतिघातकरणाय कायोत्सर्गकरणं प्रायश्चित्तं; नावा नइसंतारे इति नौश्चतुर्द्धा तद्यथा समुद्रनौ उद्यानी अवयानी तिर्यग्गामिनी च तत्र समुद्रनौः प्रवहणं येन समुद्रो लंध्यते, शेषास्तिस्रो नद्यां तत्रापि या नद्याः प्रतिश्रोतोगामिनी सा उद्यानी अनुश्रोतोगामिनी अवयानी या पुनर्नदीं तिर्यक् छिनत्ति सा तिर्यग्गामिनी तत्र यतनयोपयुक्तस्य यथायोगं चतुर्विधयापि नावा तथाविधप्रयोजनोत्पत्तिवशतो गमने सूत्रोक्तविधिना कायोत्सर्गः प्रायश्चित्तं नदीसंतारश्चतुर्विधस्तत्र पादाभ्यां त्रिधा तद्यथा संघट्टः, लेपस्तदुपरि च तत्र जंघार्द्धप्रमाणे उदकसंस्पर्शे संघट्टः, नाभिप्रमाणे उदकसंस्पर्शे लेप तत उपरि उदकसंस्पर्शे तदुपरि चतुर्थो नदीसंस्तारो बाहूडुपादिभिः एतेष्वपि सर्वत्र यतनयोपयुक्तस्य प्रायश्चित्तं कायोत्सर्गः व्युत्सर्गः कायोत्सर्ग इत्यर्थः [illegible] ।। सांप्रतमेनामेव गाथां विवरीषुर्येषु स्थानेषु गमनमागमनं गमनागमनं वा प्रतिक्रमणीयं संभवति यो विचारविषयो यत्प्रमाणं च तत्र कायोत्सर्गप्रायश्चित्तं तदेतदुपदर्शयन्नाह -

[भा.१११] भत्ते पाने सयणासणे य अरहंतसमणसेज्जासु ।
उच्चारे पासवणे पणवीसं होंति उस्सासा ।।

**वृ-** भक्ते पाने शयनासने च अरिहंतसमणे सेज्जासु इति शय्याशब्दः प्रत्येकमभिसंबध्यते अर्हच्छय्यायामर्हद्भवने, श्रमणशय्यायां श्रमणोपाश्रये, गमनमागमनं च प्रतिक्रमणीयं संभवति उच्चारप्रश्रवणयोस्तु हस्तशताद्बहिर्गत्वा परिस्थापने गमनागमनंतर्भावः हस्तशताभ्यंतरत एव तद्व्युत्सर्गे तन्मात्रकपरिष्ठापने वा विचारविषये एतेषु च सर्वेष्वपि स्थानेषु च कायोत्सर्गप्रायश्चित्तस्य प्रमाणं भवति पंचविंशतिरुच्छ्वासाः तत्र भक्ते पाने वा कथं गमनमात्रं प्रतिक्रमणीयं संभवतीति प्रतिपादनार्थमाह -

[भा.११२] वीसमण असइ काले पढमालियवास संखंडीए ।
वा इरियावहियठाए गमनं तु पडिक्कमंतस्स ।।

**वृ-** यदा भक्तार्थं पानार्थं वा भिक्षाचर्यया ग्रामांतरं गत्वा मार्गगमनसमुत्थपरिश्रमभजयाय विश्राम्यति, असति कालेति अथवा असति भिक्षाकाले यावत् भिक्षावेला भवति तावत्प्रतीक्षितुकामः पढमालियत्ति यदिवा क्षुधापीडितः सन् प्रथमालिकां कर्तुकामो यत्र शुन्यगृहादिषु प्रविशति, वासत्ति अथवा तस्मिन्नन्यस्मिन् वा ग्रामे भिक्षामटतोंतरा वर्षं पतितुमारब्धं ततः छन्नं किमपि स्थानं प्रविश्य तत्रासितुकामः संखंडीए वा इति संखड्यां वा अप्रमाणायां ध्रुवं भूयात् लाभ इति ज्ञात्वा क्वचिदन्यत्र प्रतीक्षितुमिच्छुर्भवति तदा तस्यैर्यापथिक्यर्थं ईर्यापथिकपापविशुध्द्यर्थं गमनं प्रतिक्रामतो गमनविषयं प्रतिक्रमणं कुर्व्वतः कायोत्सर्गः प्रायश्चित्तं स च कायोत्सर्गः पंचविंशत्युच्छ्वासप्रमाणः उच्छ्वासाश्च पादसमास इति पंचविंशतेश्चतुर्भिः भागे हृते षट् श्लोका एकपादाधिका लभ्यंते ततश्चतुर्विंशतिस्तवः चंदेसु निम्मलयरा इति पादपर्यंतं कायोत्सर्गो चिंतनीय इति भावः ।।

[भा.११३] एवमेव सेसएसुवि होइ निसज्जए अंतरे गमनं ।
आगमनं जं तत्तो निरंतरगयागयं होइ ।।

वृ- एवमेव भक्तपानयोरिव शेषेष्वपि स्थानेषु शयनसनादिषु यावत्ताश्चापि वेला भवति तावत् यावत् प्रतीक्षणं तदेतदन्तरं तस्मिन् अंतरे निषद्यायामुपवेशने केवलं गमनं प्रतिक्रमणीयं भवति तथाहि शयनं नाम संस्तारकादि आसनं पीठकादि तद्याचनार्थं क्वचनापि गतस्तत्र ग्लानचारित्वादिभिः कारणैः शरीरदुर्बलतया जातपरिश्रमो विश्रमितुकामः, संस्तारकादिप्रभुर्वा न विद्यते क्वचिदन्यत्र गतत्वात् ततस्तं प्रतीक्षितुकाम एर्यापथिक पापविशोधनाय गमनं प्रतीक्रमतीति आगमनं जं तत्तो इति एवं भक्तपानाद्यर्थं विश्रम्य कार्यसमाप्तौ ततः स्थानात् यदा भूयः स्वोपाश्रये प्रत्यावव्रते तदा केवलमागमनं प्रतिक्रमणीयं भवति यदि पुनरेतेष्वेव प्रयोजनेषु नोक्तप्रकारेणापांतराले विश्रमणं भवति तदा निरंतरे भवति उक्तलक्षणस्यांतरस्याभावे गतागतं गमनागमनं समुदितं प्रतिक्रमणीयं जायतेएवमर्हच्चङ्क्रमणशय्यास्वपि गमनमागमनं गमनागमनं च प्रतिक्रमितव्यं भावनीयं, तद्यथा पाक्षिकादिषु जिनभवनादौ चैत्यवंदको गत्वा यदा स्नानादिदर्शननिमित्तमैर्यापथिकी प्रतिक्रम्य विश्राम्यति तदा केवलं गमनमेव प्रतिक्रमणीयं, ततः स्वोपाश्रये प्रत्यायतावागमनं विश्रामणासंभवे गमनागमनमिति, तथा पाक्षिकादौ येऽन्यवसतिषु सुसाधवस्तेऽश्यं वंदनीय इति विधिस्ततस्तत्र वंदको गतो यदा विश्राम्यति तदागमनं, ततः स्वोपाश्रये प्रत्यागमने आगमनं, विश्रामणाभावे गमनागमनं प्रतिक्रमणीयमिति; उच्चारं प्रश्रवणं च हस्तशताद् बहिर्व्युत्सृष्टेऽपांतराले प्राये विश्रामणासंभवात् गमनागमनं समुदितं प्रतिक्रमणीयं भवति, यदापि हस्तशतस्याभ्यंतरे उच्चारं प्रश्रवणं तन्मात्रकं वा परिष्ठापयति तदापि विचारे इति वचनात् एर्यापथिकीप्रतिक्रमणपुरस्सरः पंचविंशत्युच्छ्वासप्रमाणः कायोत्सर्गः प्रायश्चित्तं, संप्रति सुत्ते इति पदं व्याचिख्यासुराह -

[भा. ११४] उद्देससमुद्देसे सत्तावीसं तहा अनुन्नाए ।
अट्ठेव य ऊसासा पट्ठवणा पडिक्कमणमादी ।।

वृ- उद्देशो वाचनासूत्रप्रदानमित्यर्थः समुद्देशो व्याख्या अर्थप्रदानमिति भावः, अनुज्ञासूत्रार्थयोरन्य-प्रदानं प्रदानं प्रत्यनुमननं एतेषु तथेतिशब्दोऽनुक्तसमुच्चयार्थस्तेन श्रुतस्कंधपरिवर्त्तने अंगपरिवर्त्तने च कृते तदुत्तरकालमविधिसमाचरणपरिहाराय प्रायश्चित्तं कायोत्सर्गः सप्तविंशत्युच्छ्वासप्रमाणं पर्यन्तैकपादहीनः समस्तश्चतुर्विंशतिस्तवस्तत्र चिंतनीय इति भावः, अट्ठेव इत्यादि । प्रस्थापनं स्वाध्यायस्य प्रतिक्रमणः कालस्य तयोः करणे कायोत्सर्गः प्रायश्चित्तमष्टावेवोच्छ्वासः अष्टोच्छ्वासप्रमाणः आदिशब्दात् पानकमपि परिस्थाप्यैर्यापथिकी प्रतिक्रमणोत्तरकालं कायोत्सर्गोऽष्टोच्छ्वासप्रमाणः करणीय इति द्रष्टव्यमेतच्चास्यैव व्यवहारस्य चूर्ण्यां दृष्ट्वा लिखितमिति । अत्रैवाक्षेपमभिधित्सुराह -

[भा. ११५] पुव्वं पट्ठवणा खलु उद्देसाईय पच्छत्तो होंति ।
पट्ठवणुद्देसादिसु अनानुपुव्वी कया किंनु ।।

वृ- ननु पूर्वं प्रस्थापना खलु स्वाध्यायस्य क्रियते, पश्चादुद्देशादयो भवंति, ततः प्रस्थापनोद्देशादिषु व्यवस्थितेषु किंनु इत्याक्षेपे किमर्थं ननु अनानुपूर्वी अनंतरगाथायां कृता किमिति पश्चात् गाथायां पूर्वमुद्देशादय उक्तास्तदनंतरं प्रस्थापनमिति भावः, नैष दोषो मतांतरेणैवंरूपाया अप्यानुपूर्व्याः संभवात् तथाचाह-

[भा. ११६] अज्झयणाणंति तयं पुव्वुत्तं पट्ठविज्जई जंहिं ।
तेसिं उद्देसादि, पुव्वमतो पच्छपट्ठवणा ।।

वृ- यैराचार्यैरध्ययनानामुपलक्षणमेतदुद्देशकप्रभृतीनां च त्रितयं उद्देशसमुद्देशानुज्ञालक्षणं पूर्वोक्तं पूर्वप्रवर्तितं प्रस्थाप्यते उद्देशादिषु कृतेषु पश्चात्तेषां प्रस्थापना यैराचार्यैरुपवर्ण्यते तेषां मतेनायमेवक्रम इति वाक्यशेषः, अतः प्राक् गाथायां पूर्वमुद्देशादयः उक्ताः पश्चात् प्रस्थापनेति, संप्रति सुलेवा इति वाशब्दसमुच्चितं दर्शयति ।।

[भा.११७] सव्वेसु खलियादिसु, ज्झाएज्जा पंचमंगलं ।
दो सिलोगेव चिंतेज्जा एगग्गो वावितक्खणं ।।

वृ- इह यदि बहिर्गमनं प्रयोजनानंतरप्रारंभे वा वस्त्रादेः स्खलनं भवति, आदि शब्दात् शेषापशकुनदुर्निमित्तपरिग्रहः तेषु सर्वेषु स्खलितादिषु समुपजातेषु विवक्षितप्रयोजनव्याघातसूचकेषु समुद्भूतेषु तत्प्रतिघातनिमित्तं पंचमंगलमष्टोच्छ्वासप्रमाणं नमस्कारसूत्रं ध्यायेत् यदिवा यौ वा तौ वा स्वाध्यायभूतौ द्वौ श्लोकौ चिंतयेत्, अथवा यावताकालेन द्वौ श्लोकौ चिन्त्येते तत्क्षणं तावंतं कालं एकाग्रः कायोत्सर्गस्थः सन् शुभमना भूयात् ।।

[भा.११८] बिइयं पुन खलियादिसु उस्सासा होंति तहय सोलसय ।
तइयंमि उ बत्तीसा चउत्थंमि न गच्छए अण्णं ।।

वृ- द्वितीयं वारं पुनस्तथा तेनैव प्रकारेण स्खलितादिषु विवक्षितप्रयोजनव्याघातसूचकेषु समुद्भूतेषु तत्प्रतिघातनिमित्तं कायोत्सर्गउच्छ्वासाः षोडश भवंति षोडशोच्छ्वासप्रमाणः कायोत्सर्गः क्रियते इति भावः, तइयंमिउ इत्यादि, तृतीयवारे तृतीयस्यां वेलायां स्खलितादिजातेषु तत्प्रतिघातनिमित्तं कायोत्सर्गे द्वात्रिंशदुच्छ्वासाः प्रतिक्षपणीयाः चतुर्थे वारे स्खलितानां प्रवृत्तौ स्वस्थानात् विवक्षितादन्यत् स्थानं न गच्छति, उपलक्षणमेतत् नाप्यन्यत् प्रयोजनं प्रारभते, अवश्यं भाविविघ्नसंभवात् संप्रति सुमिणदंसणे रातो इति व्याख्यानयन्नाह -

[भा.११९] पाणवहमुसावादे अदत्तमेहुणपरिग्गहे ।
सुमिणे सयमेगंति अनुनऊसासाण भवेज्जासि ।।

वृ- प्राणवधे मृषावादे अदत्तादाने मैथुने परिग्रहे च स्वप्ने कृते कारिते अनुमोदिते च केवलं मैथुने कारितेऽनुमोदिते एवं स्वयं कृते इत्थीविप्परियासे इत्यादिना प्रायश्चित्तस्य वक्ष्यमाणत्वात् कायोत्सर्गः प्रायश्चित्तं, तत्र कायोत्सर्गे शतमेकमन्यूनमुच्छ्वासानां क्षपयेत् पंचविंशत्युच्छ्वासप्रमाणं चतुर्विंशस्तवं चतुरो वारान् ध्यायेत् इति भावः अथवा अपरः प्रकारस्तमेव दर्शयति ।।

[भा.१२०] महव्वयाइं ज्झाएज्जा सिलोगे पंचविंशति ।
इत्थीविप्परियासे सत्तावीस सिलोइओ ।।

वृ- महाव्रतानि दशवैकालिकश्रुतबद्धानि कायोत्सर्गे ध्यायेत् तेषामपि प्रायः पंचविंशतिश्लोक-प्रमाणत्वात् यदिवा यान्तान्वा स्वाध्यायभूतान् पंचविंशतिश्लोकान् ध्यायेत् स्त्रीविपर्यासे पुनः स्वप्नसंभूते प्रायश्चित्तं कायोत्सर्गः सप्तविंशतिश्लोकिकः सप्तविंशतिश्लोकवान् अष्टोत्तरशतमुच्छ्वासानां तन्निमित्ते कायोत्सर्गे क्षपयेदिति भावः, उत्सर्गे प्रमाणमेव निरूपयति ।।

[भा.१२१] पायसमा उसासा कालपमाणेण होंति नायव्वा ।
एवं कालपमाणं काउस्सग्गे मुनेयव्वं ।।

वृ- उच्छ्वासाः कालप्रमाणेन भवंति ज्ञातव्याः पादसमाः किमुक्तं भवति यावत् कालेनश्लोकस्य

पादर्श्चिंस्चले तावत्कालप्रमाणः कायोत्सर्गे उच्छ्वास इति तत्कालमुच्छ्वासानां कायोत्सर्गो ज्ञातव्यं, अथ ध्यानं योगनिरोधात्मकं, तत्र कायोत्सर्गो किं ध्यानं उच्यते ध्येयो योगनिरोध इति पूर्वमहर्षिवचनात् तच्च योगनिरोधात्मकं ध्यानं त्रिधा, तद्यथा काययोगनिरोधात्मकं, वाग्योगनिरोधात्मकं मनोयोग-निरोधात्मकं च तत्र कायोत्सर्गो किं ध्यानं ? उच्यते त्रिविधमपि मुख्यतस्तु मूकायिकं तथा चाह -

[भा.१२२] कायचेट्ठं निरुंभित्ता मनं वायं च सव्वसो ।
वट्टइ काइए ज्झाणे. सुहुमुस्सासवं मुनी ।।

वृ- कायचेष्टां कायव्यापारं तथा मनोवाचं सर्वशः सर्वात्मना निरुध्य कायोत्सर्गः क्रियते, ततः कायोत्सर्गस्थो मुनि सूक्ष्मोच्छवासवान् उपलक्षणमेतत् सूक्ष्मदृष्टिसंचारादिवांश्च न खलु कायोत्सर्गे सूक्ष्मोच्छवासादयो निरुध्यंते, तन्निरोधस्य कर्तुमशक्यत्वात् वर्त्तते, कायिके ध्याने एतच्चैवमुच्यते तस्य स्पष्टमुपलक्ष्यमाणत्वात् यावता पुनर्वाचिकमानसे अपि ध्याने द्रष्टव्ये तथा चाह -

[भा.१२३] न विरुज्झंति उस्सग्गज्झाणा वाइयमानसा ।
तीरिए उस्सग्गे तिण्हमन्नयरेसिया ।।

वृ- न विरुध्येते उत्सर्गो कायोत्सर्गो ध्याने वाचिकमानसे वाङ्मनोयोगयोरपि विषयांतरतो निरुध्यमानत्वात् सूत्रे च द्वित्वेपि बहुवचनं प्राकृतत्वात् उक्तं च बहुवयणमिति तीरं संजातमस्येति तीरितः परिपूर्णे सति सम्यग्विधिना पारितस्तस्मिन् तीरिते कायोत्सर्गे पुनस्त्रयाणां ध्यानानामन्यतरत् । अन्यतमत् स्यात् । पुनस्त्रितयमपि भंगिकश्रुतगुणनव्यतिरेकेण प्रायोऽन्यत्र व्यापारांतरे ध्यानत्रितयासंभवात्; अथ यथा कायोत्सर्गे किमन्येपि गुणाः संभवंति किंवा नेति उच्यते, संभवतीति ब्रूमस्तथा चाह -

[भा.१२४] मनसो एगग्गत्तं जनयइ देहस्स हणइ जड्डत्तं ।
काउस्सग्गगुणा खलु सुहदुहमज्झत्थया चेव ।।

वृ- कायोत्सर्गस्य गुणाः कायोत्सर्गगुणाः खल्वमी तद्यथा कायोत्सर्गः सम्यग्विधिना विधीयमानो नाम मनसश्चित्तस्य एकाग्रत्वमेकाग्रलंबनतां जनयति, तच्चैकाग्रत्वं परमं ध्यानं जं थिरमज्झवसाणं तं ज्झाणमिति वचनान् देहस्य शरीरस्य जडत्वं जाड्यं हंति विनाशयति, प्रचलविशेषतः परमलाघवसंभवात् तथा कायोत्सर्गस्थितानां वासीचंदनकल्पत्वात् सुखदुःखमध्यस्थता सुखदुःखे परैरुदीर्यमाणं रागद्वेषाकरणमन्यथा सम्यक्कायोत्सर्गस्यैवासंभवात् उक्तं व्युत्सर्गार्हप्रायश्चित्तमिदानीं तपोर्हं वक्तव्यं, तपश्च रात्रिंदिवपंचकादारभ्य रात्रिंदिवपंचकादिवृध्धया तावन्नेयं यावत्षण्मासाः, तत्र येषु स्थानेषु रात्रिंदिवपंचकतपसान्युपदर्शयतिः -

[भा.१२५] दंडगगहिनिक्खेवे, आवसियाए निसिहियाए य ।
गुरुणं च अप्पणामे, पंचराइंदिया होंति ।।

वृ- दंडं गृह्णन् प्रत्युपेक्षते न प्रमार्जयतीत्येको भंगः, न प्रत्युपेक्षते प्रमार्जयतीति द्वितीयः न प्रत्युपेक्षते न प्रमार्जयतीति तृतीयः, प्रत्युपेक्षते प्रमार्जयतीति चतुर्थः । तत्राद्येषु भंगकेषु पश्चादानुपूर्व्या यथोत्तरं तपः कालविशेषिते लघुमासः प्रत्येकं प्रायश्चित्तं, चतुर्थे चत्वारो भंगास्तद्यथा दुःप्रत्युपेक्षते दुःप्रमार्जयति । १ । दुःप्रत्युपेक्षते सुप्रमार्जयति । २ । सुप्रत्युपेक्षते दुःप्रमार्जयति । ३ । सुप्रत्युपेक्षते सुप्रमार्जयति । ४ । अत्राद्येषु त्रिषु भंगेषु पश्चादानुपूर्व्या यथोत्तरं तपः कालविशेषितानि पंचरात्रिंदिवसानि प्रायश्चित्तं, चतुर्थे भंगे शुद्धो विधिना प्रवृत्तेः, इहाद्यास्त्रयो भंगका मासलघुप्रायश्चित्तविषयाः,

प्रस्तावादुक्ता यावता वक्ष्यमाणेषु मासिकेषु प्रायश्चित्तेषु द्रष्टव्याः यथा दंडकग्रहणेऽभिहितं तथा दंडकनिक्षेपेऽपि तथा वक्तव्यं, नवरं निक्षेपेऽधस्तात् भूमेरुपरि च दंडशिरःसंपर्कविषयभित्तिप्रदेशे प्रमार्जना कर्त्तव्या । तथा वसतेर्निर्गच्छन् यद्यावश्यकी न करोति वसतौ प्रविशन्वा नैषेधिकीं तत्र आवश्यक्या अकरणे नैषेधिक्या अकरणे च प्रत्येकं प्रायश्चित्ते रात्रिंदिवपंचकं तथा गुरूणां च अप्पनामे इति अप्रणामग्रहणं हस्तोत्सेधादेरुपलक्षणं ततोऽयमर्थः अवश्यकरणीयप्रयोजनवशतः स्वोपाश्रयाद्बहिर्निर्गतो भूयः प्रतिश्रये प्रविशन् नमो खमासमणाणमिति न ब्रूते प्रणामं वा न करोति नापि हस्तानां क्षणिकत्वेपि हस्तोत्सेधं तदा प्रायश्चित्तं रात्रिंदिवंपंचकं ।।

**[भा. १२६]** चेंटियगहनिक्खेवे निट्ठीवणा आयवो य छायं ध ।
थंडिल्लकण्हभोमे गामे राइंदिया पंच ।।

**वृ-** संस्तारकं चेटलिकाया ग्रहणे निक्षेपे च प्रत्येकं दंडक इव सप्तभंगकं तत्रापि दंडक इवाद्येषु त्रिषु भंगकेषु पश्चादनुपूर्व्या यथोत्तरं तपः कालविशेषितं प्रत्येकं लघुमास उत्तरेषु त्रिषु भंगकेषु प्रत्येकं रात्रिंदिवपंचकं, सप्तमे तु भंगे शुद्धः निट्ठीवणादित्ति निष्ठीवनादौ इह साधवो द्विधा गच्छगता गच्छविनिर्गताश्च तत्र ये गच्छनिर्गतास्ते नियमादनिष्ठीवका औपग्राहिकमल्लकाद्युपकरणासंभवात् गच्छगता अपि ये विधिना निष्ठीव्यंति, ते अनिष्ठीवका एव, न प्रायश्चित्तविषयाः । अविधिना खेलमल्लकनिष्ठीवने दंडक इव सप्त भंगा दंडक इवैव चाद्येषु प्रत्येकं लघुमासः, उत्तरेषु त्रिषु प्रत्येकं रात्रिंदिवपंचकं, सप्तमभंगवर्त्तिनस्त्वनिष्ठीवका एव विधिना निष्ठीवनात् उपरितनेष्वपि च त्रिषु भंगेषु यदि भूमौ निष्ठीवति, तदा मासलघु, यच्च निष्ठीवने प्राणिनां परितापनाद्युपजायते, तन्निष्पन्नं च प्रायश्चित्तं, आदि शब्दात् कंडूयनपरिग्रहः कंडूयनेपि हि दंडक इव सप्तभंगकं तथैव प्रायश्चित्तविधिः तथा वस्त्रादिकमातपात् छायं छायाया वा आतपे संक्रामयन्न प्रत्युपेक्षते न प्रमार्जयतीत्यादयो पूर्ववत् सप्त भंगाः। पूर्ववदेव चाद्येषु षट्सु भंगकेषु प्रायश्चित्तविधिः सप्तमे भंगे शुद्धः, संप्रति लाघवमपेक्षमाणश्छेदार्हमपि प्रायश्चित्तमत्रैव विषये प्रतिपादयति -

**[भा. १२७]** एएसिं अन्नयरं, निरंतरं अतिचरेज्ज तिक्खुत्तो ।
निक्कारणम गिलाणे पंच उ राइंदिया छेदो ।।

**वृ.** एतेषामनंतरोदितानां रात्रिदिवपंचकप्रायश्चित्तविषयाणां स्थानानामन्यतरत् स्थानमग्लानो निष्कारणं यदि निरंतरमतिचरेत् त्रिकृत्वस्त्रीन् वारान् तदा तत्पर्यायस्य छेदः क्रियते पंचरात्रिंदिवानि उपलक्षणमेतत् येष्वनंतरोदितेषु स्थानेषु मासलघुकानि प्रायश्चित्तान्युक्तानि तेषामन्यतरत् स्थानमग्लानो निष्कारणं यदि निरंतरं त्रीन्वारानतिचरति तदा तत्पर्यायस्य छेदो मासिक इति द्रष्टव्यं, संप्रति मासिकानि प्रायश्चित्तानि विभणिषुराह -

**[भा. १२८]** हरियाले हिंगुलए मनोसिले अंजनेय लोणेत्थ ।
मीसगपुढविकाए जह उदउल्ले तहा मासो ।।

**वृ-** यथा उदकार्द्रे तथेति वचनात् एवमत्र प्रतिपत्तव्यं, यथा उदकार्द्रे उदकम्रक्षिते करे मात्रके वा भिक्षां गृह्णतः प्रायश्चित्तं लघुर्मासः, तथा हरितालं हिंगुलक मनःशिलाः प्रतीताः, अंजनं सौवीरंजनादि लवणं सामुद्रादि एते सचित्त पृथिवीकायभेदाः, उपलक्षणमेतत् तेन शुद्ध पृथिव्यूषरोरुकवर्णिका सेटिका सौराष्ट्रिक्यादयोऽपि सचित्तपृथिवीकायभेदाः प्रतिपत्तव्याः । तथा मिश्रकः सचित्ताचित्तरूपः

कर्दमादिर्हरितालदिर्वा पृथिवीकायः, एतेष्वपि, किमुक्तं भवति ? एतैरपि प्रत्येकं म्रक्षिते करे मात्रके वा भिक्षामाददानस्य लघुर्मासः, एतत्पुनः संप्रदायादवसातव्यम्, सचित्तमिश्रपृथिवीरजोगुंठिते सचित्तमिश्रोदकस्निग्धे वा करे मात्रके वा भिक्षामुपाददानस्य पंचरात्रिं दिवानी उक्तं च ससणिद्धे ससरक्खे पनगमिति तथा वनस्पतिकायो द्विविधः परीत्तोऽनंतकायश्च एकैकस्य त्रयो भेदाः पिट्ठं कुक्कुसा उक्कुट्टितं च पिट्ठं कुक्कुसाश्च प्रतीताः उक्कुट्टितश्चिंचनकादिः तत्र त्रिविधैरपि सचित्तमिश्रमपरीत्तवनस्पतिकायैः संस्पृष्टे करे मात्रके वा भिक्षां गृह्णतो लघुर्मासः, अनंत सचित्त मिश्रवनस्पतिकायैस्त्रिविधैरपि संस्पृष्टे गुरुमासः पुरःकर्म्मणि पश्चात्कर्म्मणि च केचिदाहुर्न्नुमन्यन्ते चत्वारो लघवः, उक्तं च कल्पचूर्णौ पुरकम्मपुच्छकम्मेहिं चउलहु इति ॥

[भा. १२९] सज्झायस्स अकरणे, काउस्सग्गे तहा अपडिलेहा ।
पोसहियतवेयतहा अवंदना चेइयाणं च ॥

वृ- स्वाध्यायस्य वाचनादेरकरणे सामान्यतो मासनिष्पन्नं प्रायश्चित्तमिति योगः । अत्रेयं भावना सूत्रपौरुषीं यदि न करोति, ततो मासलघु प्रायश्चित्तं, अर्थपौरुषीं न करोति मासलघु द्वेसूत्रपौरुष्यावकुर्वतो द्वौ लघुमासौ, तिसृणां सूत्रपौरुषीणामकरणे त्रयो लघुमासाः, चतसृणामपि सूत्रपौरुषीणामकरणे चतुर्मासलघु काउस्सग्गे इति अकरणे इत्यत्राप्यनुवर्त्तते आवश्यकप्रतिबद्धकायोत्सर्गस्य सूत्रे सप्तमी षष्ठीसप्तम्योर्थं प्रत्यभेदात् अकरणे सामान्यतो मासनिष्पन्नं प्रायश्चित्तमिति सर्वत्रापि योजनीयं, भावना त्वत्रापीयं आवश्यके एकं कायोत्सर्गं न करोति मासलघु, द्वौ न करोति द्विमासलघु, त्रीन् कायोत्सर्गान्न करोति त्रिमासलघु, सकलमेवाश्यकं न करोति चतुर्मासलघु, तथा उपविष्टः सुप्तो वा यद्यावश्यकं करोति प्रावरणप्रावृतो वा वंदनकानि आवश्यके ददाति, दोषैरुपेतानि वा ददाति प्रायश्चित्तं मासलघु, नवरं यत्र माया तत्र मासगुरु, तथा पडिलेहा इति विभक्तेरत्र लोपः प्राकृतत्वात् अप्रत्युपेक्षायां प्रत्युपेक्षाया अकरणे सामर्थ्यादवसीयते तत्रोपधिर्द्विधा औधिकऔपग्रहिकश्च औघिकस्त्रिधा जघन्यो मध्यमः उत्कृष्टश्च, तत्र जघन्यः चतुर्द्धा तद्यथा । मुखपोतिका पात्रकेसरिका गोच्छकः पात्रस्थापनं च उक्तं च मुहपोत्ती पायकेसरिया गोच्छए पायठवणं च एस चउव्विहो जहन्नो इति मध्यमः षड्विधः तद्यथा पटलानि रजस्त्राणं पात्रबंध चोलपट्टः मात्रकं रजोहरणं च आह च पडलाइं रयत्ताणं पत्ताबंधो य चोलपट्टो य, मत्तग रयहरणं वि य मज्झिमगो छव्विहो नेओ; उत्कृष्टश्चतुर्विधः तद्यथा पतद्ग्रहस्त्रयःकल्पाः उक्तं च उक्कोसो चउव्विहो पडिग्गहो तिन्निपच्छागा इति । आर्यिकाणामप्युपधिरौघिकस्त्रिविधस्तद्यथा जघन्यो मध्यम उत्कृष्टश्च तत्र जघन्यः चतुर्विधो मुखपोतिकादिरूपः प्रागुक्तः, मध्यमस्त्रयोदशविधस्तद्यथा पात्रबंधो १ रजोहरणं २ पटलानि ३ रजस्त्राणं ४ मात्रकं ५ कमठकं ६ अवग्रहानंतकं ७ पट्टः ८ अर्द्धोरुकाः ९ चलनिका १० कंचुकः ११ अवकक्षी १२ वैकक्षी १३ उक्तंच -

पत्ताबंधाइया चउरो ते चेव पुव्वनिद्दिट्ठा, मत्तो य कमढकं वा, तह ओग्गहनंतगं चेव ।
पट्टो अद्धोरु चिय चलणि य तह कंचुगे य उगच्छी; वेगच्छी तेरसमा अज्जाणं होइ नायव्वा ॥

उत्कृष्टोऽष्टविधस्तद्यथा पतग्रहस्त्रयः कल्पा अभ्यंतरनिवसनी बहिर्निवसनी संघाटी स्कंधकरणी उक्तं च उक्कोसा अट्ठविहो चउरो ते चेव पुव्वदिट्ठा जे साहूणं अन्ने य इमे चउरो अब्भिंतरबाहिनियंसणी संघाडी खंधकरणी य इति औपग्राहिकोपी साधूनामार्यिकाणां च त्रिविधस्तद्यथा जघन्यो मध्यम उत्कृष्टश्च तत्र पीठनिषद्यादंडकप्रमार्जनीडगलक पिप्पलकसूची नखरदनिकादिर्जघन्यः, मध्यमो दंडक पंचविध

उच्चारप्रश्रवणखेलमल्लकादिरूपः आर्यिकाणामधिको वारकः उत्कृष्टोऽक्षाः संस्तारक एकांगिका इतरो वा, द्वितीयपदं पुस्तकपंचकं फलकं च उक्तं च -

अक्खासंथारो वा दुविहो एगंगिको य इयरो वा ।
बिइय पय पोत्थपनगं फलगं तह होइ उक्कोसो ।।

तत्रोत्कृष्टमुपधिं यदि यथाकालं न प्रत्युपेक्षते चतुर्मासलघु मध्यमं यदि न प्रत्युपेक्षते तदा मासगुरु जघन्यं न प्रत्युपेक्षते पंचरात्रिंदिवानि, येषि प्रत्युपेक्षते मासलघु पोसहिय [illegible] न रहा इति पोषं दधाति इति पोषधं अष्टमी पाक्षिकादि, पोषधे भवं पौषधि तच्च तत् तपश्चर्या पौषधिकतपस्तस्मिन्नक्रियमाणे इति सामर्थ्यात् गम्यते, सामान्यतो मासनिष्पन्नं प्रायश्चित्तमिति योजना, तद्यथा अष्टम्यां चतुर्थं न करोति मासलघु पाक्षिके न चतुर्थं करोति मासगुरु चतुर्म्मासके षष्ठस्याकरणे चतुर्म्मासिलघु सांवत्सरिके अष्टमं न करोति चतुर्मासगुरु, तथा एतेष्वेव अष्टमीपाक्षिकादिषु चैत्यानां जिनबिंबानां च शब्दात् ये अन्यस्यां वसतौ सुसाधवस्तेषामप्यवंदने मासलघु तथा ये चैत्यभवनस्थिता वैकालिकं प्रतिक्रम्य अकृते आवश्यके प्रभाते च कृते आवश्यके यदि चैत्यानि न वंदंते तेषामपि मासलघु उक्तं चास्यैव व्यवहारस्य चूर्णौ एएसु चेव अट्ठमीमादीसु चेइयाइं साहुणो वाजे अणाए वसहीए ठिया ते न वंदंति मासलघु जइ चेइयघरे ठिया वेयालियं कालं पडिक्कंता अकए आवस्सए गोसे य कए आवस्सए चेइए न वंदंति तो मासलहु इति, सांप्रतमेनामेव गाथां व्याचिख्यासुः प्रथमतः सज्झायस्स अकरणे इत्येतत् व्याख्यानयति ।

[भा.१२०] सुत्तत्थपोरिसीणं अकरणे मासो उ होइ गुरुलहुगो ।
चाउक्कालं पोरिसि उव्वायणं तस्स चउलहुगा ।।

**वृ-** सूत्रार्थपौरुष्योः सूत्रपौरुष्याः अर्थपौरुष्या इत्यर्थः अकरणे यथाक्रमं गुरुमासो लघुमासः, अर्थपौरुषी हि प्रज्ञादिविशिष्टसामग्र्यपेक्षा सूत्रायत्ता च, सूत्रपौरुषी त्वभिनवदीक्षितेनापि जडमतिनापि च यथाशक्ति अवश्यं कर्तव्या, सूत्राभावे सर्वस्याप्यभावादतः सूत्रपौरुष्या अकरणे मासगुरु, अर्थपौरुष्या अकरणे मासलघु, द्वयोः सुत्रपौरुष्योरकरणे द्वौ लघुमासौ तिसृणां पौरुषीणामकरणे त्रयो लघुमासा इति सामर्थ्यात् प्रतिपत्तव्यं, चाउक्कालमित्यादि चतुःकालं दिवारात्रिगतं प्रथमचरमप्रहररूपेषु चतुर्षु कालेषु सुत्रपौरुषीरवपातयतो भ्रंशयतोऽकुर्वत इत्यर्थः चतुर्लघुका श्चत्वारो लघुमासाः संप्रति काउसग्गे इति व्याख्यानयति ।।

[भा.१२१] जइ उसग्गे न कुणइ तइमासा निसण्णए निवण्णेय ।
सव्वं चेवावस्सं न कुणइ तहियं चउ लहुंति ।।

**वृ-** आवश्यके प्राभातिके वैकालिके वा यावतः कायोत्सर्गान् न करोति ततिमासा स्तस्य प्रायश्चित्तं, एकं चेन्न करोति एको लघुमासः । द्वौ न करोति द्वौ लघुमासौ त्रीन्न करोति त्रयो लघुमासा तथा निषण उपविष्टो निर्वन्नः पतितः सुप्त इत्यर्थः । चशब्दात् प्रावरणप्रावृतो वा यद्यावश्यकं करोति तदा सर्वत्र मासलघु, यदि पुनः सर्वमेवावश्यकं न करोति चतुर्लघु चत्वारो लघुमासा प्रायश्चित्तं । अधुना अपडिलेहा इति व्याचष्टे ।।

[भा.१२२] चाउम्मासुक्कोसे, मासिय मज्झे य पंचउ जहन्ने ।
उवहिस्स अपेहाए एसा खलु होइ आरुवणा ।।

**वृ-** उत्कृष्टे उत्कृष्टस्य प्रागुक्तस्वरूपस्य उपधेरप्रेक्षायामप्रत्युपेक्षायां चत्वारो लघुमासा मध्ये

मध्यस्योपधेरप्रत्युपेक्षायां लघुमासा जघन्ये जघन्यस्य पंचरात्रिं दिवानि एसा खलु भवति आरोपणा प्रायश्चित्तमप्रत्युपेक्षायामिति, संप्रति पोसहियतवेय इति व्याख्यानयति ।।

[भा.१२३] चउछट्ठऽट्ठमकरणे अट्ठमिपक्ख चउमास वरिसेय ।
लहुगुरुलहुगागुरुगा, अवंदने चेइ साहूणं ।।

वृ- अत्र यथासंख्येन पदयोजना सा चैवं अष्टम्यां चतुर्थस्याकरणे मासलघु, पाक्षिके चतुर्थस्याकरणे मासगुरु चतुमासि षष्टस्याकरणे चत्वारो लघुमासा सांवत्सरिके अष्टमस्याकरणे चत्वारो गुरुमासाः, तथा एतेषु चाष्टम्यादिषु दिवसेषु चैत्यानामनामन्यवसतिगतसुसाधूनां चावंदने प्रत्येकं मासलघु, संप्रति लाघवार्थमत्रैव छेदार्हं प्रायश्चित्तमाह ।।

[भा.१२४] एएसु तिठाणेसुं, भिक्खु जो वट्टए पमाएणं ।
सो मासियं ति लग्गइ उग्घायं वा अनुग्घायं ।।

वृ- एतेष्वनंतरोदितेषु स्थानेषु तित्ति त्रिः त्रीन् वारान् सो भिक्षुः प्रमादेन वर्त्तते, प्रमादेनैषां स्थानानामन्यतरत्त्रीन्वारान् अति चरति स मासिकं सामान्यतो मासनिष्पन्नं, छेदमुधातं लघु, अनुद्घातं गुरुकं लगति प्राप्नोति, यत्र मासा लघवो गुरुवो तपःप्रायश्चित्तं, तत्र तति मासा लघवो गुरवो वा छेद इति यावत्, संप्रति शेषाणि यानि चातुर्म्मासिकानी षण्मासिकानि वा प्रायश्चित्तानि ये वा भणिता छेदा यानि च मूलानवस्थितपारांचितानि तदेतत् सर्वमेकगाथया विवक्षुराह -

[भा.१२५] छक्कायचउसु लहुगा, परित्तलहुगा य गुरुग साहारे ।
संघट्टण परितावण लहुगुरुगतिवायणेमूलं ।।

वृ- षट्कायाः पृथिव्यप्तेजोवायुवनस्पतित्रसकायरुपाः तेषां मध्ये चतुर्षु पृथिव्यप्तेजोवायुरुपेषु संघट्टनादिभिर्लघुकाः प्रायश्चित्तं परीत्ते प्रत्येकवनस्पतिकायेपि च लघुकाः साधारे अनंतवनस्पतिकायिके संघट्टनादिषु गुरुकाः तथा द्वीन्द्रियादीनां संघट्टने परितापने च यथायोगं लघुका गुरुकाश्च प्रायश्चित्तमतिपातने विनाशे मूलंइयमत्र भावना पृथिवीकायं संघट्टयति मासलघु, परितापयति मासगुरु। अपद्रावयति जीवितात् व्यपरोपयति इत्यर्थः । चतुलघु एवमप्काये तेजस्काये वायुकाए, प्रत्येकवनस्पतिकाये च द्रष्टव्यं । उक्तं च -

छक्कायादिम चउ तहयपरित्तंमि होंति वणकाए ।
लहुगुरुमासो चउलहु संघट्टण परिताव उद्दवणे ।।

एतत् प्रायश्चित्तमेकैकस्मिन् दिवसे संघट्टनादिकरणे यदि पुनर्द्वौ दिवसौ पृथिव्यादीन् संघट्टयति तदा मासगुरु परितापयति चतुर्लघु जीवितात् व्यपरोपयति चतुर्गुरु परितापने षट्लघु अपद्रावणे षट्गुरु पंचदिवसान् निरंतरं पृथिव्यादीनां संघट्टने षट्लघु परितापने षट्गुरु अपद्रावणे मासिकछेदः षट्दिवसान्निरंतरं संघट्टने षट्गुरु परितापने मासिकच्छेदः अपद्रावणे चतुर्म्मासच्छेद सप्तदिवसान्निरंतरं पृथिव्यादीनां संघट्टने मासिकच्छेदः परितापने चतुर्मासिकः अपद्रावणे षण्मासिकः अष्टौ दिवसान्निरंतरं पृथिव्यादीनां संघट्टने चातुर्मासिकः परितापने षण्मासिकः अपद्रावणे मूलम् । उक्तं च -

दोहि दिवसेहिं मासगुरुए आढवेत्ता ।
चउगुरु ते वातिजाव ठाइहिसयं ति ।।

अनंतवनस्पतिकायिकं संघट्टयति मासगुरु परितापयति चतुर्लघु, अपद्रावयति चतुर्गुरु, द्वित्रिदिवसादि निरंतरसंघट्टनादिपूत्तरोत्तरैककस्थानवृद्धितः सप्तभिर्दिवसैर्मूलं, द्वींद्रियं संघट्टयति चतुर्लघु परितापयति चतुर्गुरु अपद्रावयति षट्लघु, अत्रद्वयादिदिवसनिरंतरं संघट्टनादिषु षड्भिर्दिवसैर्मूलं, त्रींद्रियं संघट्टयति चतुर्गुरु परितापयति षट्लघु अपद्रावयति षड्गुरु अत्रपंचभिदिवसैर्मूलं चतुरिंद्रियं संघट्टयति षट्लघु, परितापयतः षड्गुरु अपद्रावयतो मासिकछेदः अत्र चतुर्भिर्दिवसैर्मूलं पंचेंद्रियं संघट्टयतः षड्गुरु परितापयतः च्छेदापद्रावयतो मूलमत्र द्वयोर्दिवसयोरनवस्थाप्यं त्रिषु दिवसेषु पारांचितमिति, तदेवमुक्तं सप्रभेदं प्रतिसेवनाप्रायश्चित्तमधुना संयोजनाप्रायश्चित्तं वक्तव्यं; अस्मिंश्च व्याख्याते यतः प्ररूपणापृथक्त्वमित्यं तदपि द्वारं व्याख्यातं द्रष्टव्यं तत्र चोदकः संयोजनादीनां भेदानां प्ररूपणा पृथक्त्वमाक्षिपन्नाह -

**[भा.१३६]** पडिसेवणं विना खलु संजोगारोवणा न विज्जंति ।
मायाचिय पडिसेवा अइप्पसंगोयं इति एक्कं ॥

**वृ-** इह प्रायश्चित्तं सर्वमुत्पद्यते प्रतिसेवनातो, न खलु मूलगुणप्रतिसेवनामुत्तरगुणप्रतिसेवनां वा विना क्वापि प्रायश्चित्तः संभवः पडिसेवियंमि दिज्जइ पच्छित्तं इहराउपडिसेहो इति वचनात् ततः संयोजनाप्रायश्चित्तमारोपणाप्रायश्चित्तं च प्रतिसेवनामंतरेण न भवतीति तयोः प्रतिसेवनायामेवांतर्भावः प्रतिकुंचनाप्रायश्चित्तमपि न प्रतिसेवनातः पृथगुपपन्नं, यतः प्रतिकुंचना नाम माया तथा चोक्तं पलिउंचणंति य मायत्तियनियडित्तियएगट्ठाए इति माया च प्रतिसेवना तत एकमेव प्रतिसेवनाप्रायश्चित्तमुपपन्नमस्तु, न शेषाणि त्रीणि संयोजनादीनि पृथक् प्रायश्चित्तानि अन्यथैवमतिप्रसंगआपद्यते, तथाहि संयोजनादीनि त्रीणि प्रायश्चित्तानि प्रतिसेवनारूपाणि भवंत्यपि प्रतिसेवना भवंति ततः प्रतिसेवनापि न प्रतिसेवना स्यात् विशेषाभावात् अनिष्टं चैतत् तस्मादेकमेव प्रायश्चित्तं प्रतिसेवना, न शेषाणीति एव चोदकेनाक्षिप्ते प्ररूपणापृथक्त्वे सूरिरुत्तरमाह -

**[भा.१३७]** एगाहिगाणवि नाणत्तं केत्तियाव दिज्जंति ।
आलोयणाविहीविय इयनाणत्तं चउण्हंपि ॥

**वृ-** एकाधिकारिकानि नाम एकस्मिन् शय्यातरपिंडादावधिकृतदोषेऽनालोचिते एव यानि शेषदोषसमुत्थितानि प्रायश्चित्तानि तान्येकाधिकारिकाणि, एकाधिकारे भवानि एकाधिकारिकाणि अध्यात्मादित्यादिकणितिव्युत्पत्तेः तेषामप्येकाधिकारिणां नानात्वं न पुनरेकाधिकारितया एकत्वमिति प्रज्ञापनाय तदर्थं संयोजनाप्रायश्चित्तं पृथगुच्यते नानात्वमेव गाथाद्वयेन दर्शयति ॥

**[भा.१३८]** सेज्जायरितिपिंडे याउदउल्ले खलु तहा अभिहडेय ।
आहाकम्मेय तहा सत्तउ सागारिए मासा ॥

**वृ-** केनापि साधुना प्रथमतः शय्यातरपिंड उपभुक्त तस्मिन्ननालोचित एव तदनंतरमुदकार्दमासेवितं, ततोऽभ्याहृतं तदनंतरमाधाकर्म्मिकं एतानि चत्वार्यप्येकाधिकारिकाणि अधिकृत एव शय्यातरपिंडदोषे अनालोचिते शेषदोषप्रायश्चित्तानां संभवात् एतेषां चैकाधिकारिकाणामपि नानात्वं नतु शय्यातरपिंडे एव शेषाण्यंतर्भवंति, ततः सर्वाण्यपि पृथगालोचनीयानि न केवल एवैकः शय्यातरपिंड इति परिज्ञानाय संयोजना दर्श्यते तत्र शय्यातरपिंडे मासलघु उदकार्द्रेपि मासलघु स्वग्रामाहृतेपि मासलघु आधाकर्म्मिके चत्वारो गुरुमासाः गुरुगा आहय इति वचनात् एवं शय्यातरपिंडे अधिकृते संयोजनाप्रायश्चित्तं

सत्तमासास्तथा चाह सत्तउ सागरिए मासा सागारिको नाम शय्यातरस्तस्मिन्सागारिकेसागारिकापिंड अधिकृते एकाधिकारिकाणामपि नानात्वात् संयोजनाप्रायश्चित्तं सप्तमासाः ।

[भा.१३९] गुरुगा आहाकम्मे उदउल्ले खलु तहा ।
अभिहडेय दसमास रायपिंडे उग्गमदोसाइणाचेय ।।

वृ- केनापि प्रथमतो राजपिंड उपभुक्तस्ततस्तेनैव राजपिंडे उपभुक्ते अनालोचिते एवाधाकर्मिकमुपभुक्तं, तदनंतरमुदकार्द्रं, ततोऽभ्याहृतमेवमेतान्यपि चान्यार्येकाधिकारिकाणि अधिकृत एव राजपिंडदोषे शेषदोषाणां संभवात् एतेषां च नानात्वमिति पृथगालोचनायां संयोजना दर्शयति राजपिंडे चत्वारो गुरुमासाः आधाकर्म्मिकेपि चत्वारो गुरुमासाः उदकार्द्रे लघुमासः अभ्याहृतेपि लघुमास इत्यधिकृते राजपिंडे उद्गमदोषादिना उद्गमदोषेण आदिशब्दादुत्पादनादोषैरेषणादोषैम चशब्दादन्येन च यथासंभवं संयोजनायां दसमासाः प्रायश्चित्तं एवमनया दिशा तत्तद्दोषं संयोजनातः संयोजनाप्रायश्चित्तमवसातव्यं, एवं संयोजनायामनुमतायां माभूदपरिमाणा शंकेति कस्मिन् तीर्थे कति मासा दीयंते प्रायश्चित्तमिति परिज्ञानाय संयोजनात् आरोपणा प्रायश्चित्तं पृथक्कृतं आलोयणाविहीवियत्ति यत् यथा प्रतिसेवितं तत्तथैवालोचितव्यं नतु मायया प्रतिकुंचनीयमन्यथा मायया प्रतिकुंचने मायाप्रत्ययमधिकं मासगुरुं प्राप्नोतीत्येवं ज्ञापितः सन् यथाप्रतिसेवितमालोचयते, तत आलोचनाविधि-रपिसम्यग् ज्ञापितः स्यात् अपिशब्दादेवं ज्ञापितो यदा माययान्यथालोचयते तदा आरोपणायां क्रियमाणायां यत्र मासलघु आभवति तत्र मासगुरु प्रदातव्यमिति ज्ञापनार्थमारोपणातः प्रतिकुंचनाप्रायश्चित्तं भिन्नं कृतमिति एवमुक्तेन प्रकारेण चतुर्णामपि प्रायश्चित्तानां नानात्वमिति उक्तं संयोजनाप्रायश्चित्तं तदुक्तौ यतः प्ररुपणापृथकत्वमिति द्वारमप्युक्तं, सांप्रतमारोपणाप्रायश्चित्तमाह -

[भा.१४०] पंचादि आरोवणनेयव्वा जाव होंति छम्मासा ।
तेन परं गादियाणं छण्हुवरि ज्झोसणं कुज्जा ।।

वृ- रात्रिंदिवपंचकादारभ्यारोपणा पंचादि रात्रिंदिवपंचकादिका आदिशब्दात् दश पंचदश विंशतिः रात्रिंदिवमासिकादिपरिग्रहः ज्ञातव्यः तावत् यावत् षणमासा भवंति, नाधिकं यत् एवं तेन कारणेन षण्णां मासानामुपरिपनगाइयाणंति रात्रिंदिव पंचकादीनां ज्झोषणामपनयनं कुर्यात्, षण्मासानामुपरि यदापद्यते प्रायश्चित्तं, तत्सर्वं त्यज्यते इति भावः उक्तं च चूर्णौ - "छम्मासाणपरं जं आवज्जइतं सव्वं छंडिज्जइ." इति अत्र चोदक आह -

[भा.१४१] किं कारणं न दिज्जइ छम्मासाण परतोउ आरुवणा ।
भणइ गुरु पुन इणमो, जं कारण ज्झोसियासेसा ।।

वृ- षण्मासानां परत आरोपणाप्रायश्चित्तं न दीयते । अत्र किं कारणमाचार्यः प्रतिवचनमाह । जं कारणं ति निमित्तकारणहेतुषु सर्वा विभक्तय इति वचनात् । अत्र हेतौ प्रथमा ततोयमर्थः येन कारणेन षण्मासानां परतः शेषाणि रात्रिंदिवपंचकादीनि प्रायश्चित्तनिज्झोषितानि त्यक्तानि तत्कारणं पुनरिदं वक्ष्यमाणमिति गुरुर्भणति तदेव कारणं दर्शयति ।

[भा.१४२] आरोवणनिप्फन्नं छउमत्थे जं जिनेहि उक्कोसं ।
तं तस्सउ तित्थंमीववहरणं धन्नपिडगं च ।।

वृ. छद्मस्थे छद्मस्थकाले यत् जिनैः स्वस्वकालापेक्षया उत्कृष्टं तपः कर्म्म कृतं तस्य तीर्थकरस्य तीर्थे

तुरेवकारार्थो भिन्नक्रमश्च स चैवं योजनीयस्तदेव तावत्प्रमाणमेवारोपणानिष्पन्नं तपःकर्म्म व्यवह्रियते इति व्यवहरणं बहुलवचनात्कर्म्मण्यनट् व्यवहरणीयमिति भावः किंवदित्यत आह धान्यपिटकमिव धान्यप्रस्थक इव किमुक्तं भवति येन राज्ञा यो धान्यप्रस्थकः स्थापितस्तत्काले स एव व्यवहर्त्तव्यो न पुरातनो नाप्यन्यः स्वमतिपरिकल्पितस्तथा भगवतापि तीर्थकरेण येन छद्मस्थकाले यावत् प्रमाणमुत्कृष्टं तपःकर्म कृतं तस्य तीर्थे आरोपणानिष्पन्नप्रायश्चित्तमपि तावत्प्रमाणमेव व्यवहरणीयं नाधिकमन्यथा राजाज्ञाखंडनतो राजप्रयुक्तदंडस्य च भगवदाज्ञाखंडनतः संसारदंडस्य प्रवृत्तेः एतमेव धान्यपिटकदृष्टांतं भावयति ।

**[भा. १४३]** जो जस्स पत्थिवो होइ सो तया धन्न पत्थगं ।
ठावे अन्नं पुरिल्लेणं ववहरंते य दंडए ।।

**वृ-** यो यदा पार्थिवः पृथिवीपतिर्भवति स तदा स्वकाले धान्यं प्रस्थकमन्यं स्थापयति, तस्मिंश्च स्थापिते ये पुरिल्लेणं-ति, पुरातनेनोपलक्षणमेतत् स्वमतिपरिकल्पितेन वा व्यवहरंति तान् तथा व्यवहरतो दंडयति एवं तिर्थकृदपि भगवान् यो यावत् प्रमाणमुत्कृष्टं तपःकर्म्म छद्मस्थकाले कुर्वन् तपः कर्म्मपरिमाणं व्यवस्थापयति स स्वतीर्थे तावत्प्रमाणादधिकं तपःकर्म्म व्यवहारतः संसारदंडेन दंडयति तस्मात्तस्य तीर्थे तावत्प्रमाणमेव व्यवहर्त्तव्यमिति । अथ कस्य तीर्थे कियत्प्रमाणं तपःकर्म्मेत्यत आह -

**[भा. १४४]** संवच्छरं तु पढमे मज्झिमगाणट्ठमासियं होइ ।
छम्मासपच्छिमस्स उ मानं भणियं उक्कोसं ।।

**वृ-** प्रथमे प्रथमतीर्थकरकाले मानं तपःकर्म्मपरिमाणमुत्कृष्टं भणितं संवत्सरमेव तुरेवकारार्थः मध्यमकानां द्वाविंशतितीर्थकृतां तपःकर्म्मपरिमाणमुत्कृष्टं भवत्याष्टमासिकमष्टमासप्रमाणं, पश्चिमस्य तु भगवतो वर्द्धमानस्वामिनः तपः कर्म्मपरिमाणमुत्कृष्टं भणितं षण्मासाः अत्रैव भूयः शिष्यशंकामाह-

**[भा. १४५]** पुनरवि चोएइ ततो पुरिमा चरमा य विसमसोहीया ।
किह सुज्झंती तेऊ चोयग इणमो सुणसु वोच्छं ।।

**वृ-** एवमनंतरोदिते सूरिणाभिहिते पुनरपि शिष्यश्चोदयति प्रश्नयति यदि नामैवं ततः पूर्वादितीर्थंकरतीर्थवर्त्तिनश्चरमाः पश्चिमतीर्थकरतीर्थवर्त्तिनो विषमशोधिका विषमप्रायश्चित्ता अभवन् ततः कथं ते विषमशोधिका अविशेषेण शुद्ध्यंति सर्वात्मना शुद्धिमासादयंति न खलु कारणवैषम्ये कार्यमविषमं दृष्टमत्र तु विषमं प्रायश्चित्तं विशोधिस्तु सर्वेषामप्यविशेषेणतुल्या, ततो दुर्घटमेतदिति भावः । अत्रसूरिर्यत् प्रायश्चित्तवैषम्ये कारणं यथा च कारणविषमतायामपि तुल्या विशोधिस्तदेतत् प्रतिपादयिषुः प्रथमतः प्रायश्चित्तवैषम्यकारणमभिधित्सुरिदमाह चोयगेत्यादि हे चोदक उपपन्नप्रश्नकारिन् प्रायश्चित्तवैषम्ये इदं वक्ष्यमाणकारणं वक्ष्ये तच्च वक्ष्यमाणमवहितमनाः शृणु, प्रतिज्ञातमेव निर्वाहयति।

**[भा. १४६]** कालस्स निद्धयाए देहबलं धिइबलं व जं पुरिमे ।
तदनंतभागहीनं कमेण जा पच्छिमा अरिहा ।।

**वृ-** पुरिमे पूर्वे आदितीर्थकरतीर्थे कालस्य स्निग्धतया प्राणिनां देहबलं शरीरं बलं तदुपष्टंभतो धृतिबलं च यत्, आसीत् तत् अवसर्प्पिणीकालतस्य तथा स्वभावतया क्रमेण प्रतिक्षणमनंतभागहीनमनंत-भागहीनं एतत् तावदायातं यावत् पश्चिमो भगवानर्हन् वर्द्धमानस्वामी ततः शरीरबलस्य धृतिबलस्य च विषमत्वात् विषमं प्रायश्चित्तं तथा चाह -

**[भा. १४७]** संवच्छरेणावि न तेसिं आसी जोगाण हानी दुविहे बलंमि ।
जेयाविधिइत्ताइ अनोववेयानद्धम्मया सोहयए तएवि ।।

**वृ-** तेषामादितीर्थकरवर्त्तिनां साधूनां द्विविधे बले शारीरे बले धृतिबले च अत्यंतमुपचयप्राप्ते सति संवत्सरेणापि संवत्सरप्रमाणमपि तपः कुर्वतां न योगानां संयमव्यापाररूपाणां हानिरासीत् मध्यवतीर्थ-करतीर्थवर्त्तिनां द्विविधमपि बलं क्रमेणानंतभागहीनमनंतभागहीनम् पश्चिमतीर्थकरतीर्थवर्त्तिनामनं-तहीनमतो मध्यमकानां संवत्सरप्रमाणं तपः कुर्वतां महतीयोगहानिरिति तेषाम ष्टमासिकमुत्कृष्टं तपः कर्म्म व्यवस्थापितं पश्चिमतीर्थकरतीर्थवर्त्तिनां तदपि कुर्वतां योगहानिरिति षण्मासिकमुत्कृष्टं तपः कर्म्म तेषां प्रवर्त्तितं तदेवमुक्तं प्रायश्चित्तवैषम्ये कारणं सप्रति तुल्यां विशोधिं प्रतिपादयति । जेयावीत्यादि ये चापि मध्यमतीर्थकरतीर्थवर्त्तिनोपश्चिमतीर्थकरतीर्थवर्त्तिनश्च धैर्याद्यनुपपेता धैर्येण धृतिबलेन आदिशब्दात् संहननबलेन च कालदोषतोऽनुपपेताः तएविति तकाऽपि तद्धर्म्मता तेषामिव आदितीर्थकरतीर्थ-वर्त्तिनामिव धर्म्मोऽशठत्वादिकः स्वभावो येषां ते तद्धर्म्माणस्तद्भावः तद्धर्म्मता सा शोधयति इयमत्र भावना इह अशठभावेनानिगूहितबलवीर्यतया यथाशक्ति तपःकर्म्मणि प्रवृत्तिर्विशोधेरंतरं कारणं तच्च बाह्यतपः कर्म्मणो वैषम्येपि सर्वेषामप्यविशिष्टमतः सर्वेषां तुल्या विशोधिः युक्तं चैतत् तथाहि प्रथमतीर्थकर तीर्थेपि न सर्वेषां देहबलं धृतिबलं च समानमथ च सर्वेषामप्यशठभावतया प्रवृत्तेस्तुल्या विशोधिरेवमत्रापि भावनीयमित्यदोषः । अत्रैव निदर्शनमाह -

**[भा. १४८]** पत्थगा जे पुरा आसि हीनमानाउ तेधुना ।
मान भंडाणि धन्नाणि सोहे जाणं तहेवय ।।

**वृ-** ये पुरा पूर्वकाले प्रस्थक आसीरन् ते कालदोषतः क्रमेण हीना हीनतरा जायमाना अत्यंतहीनमाना जातास्तथा धान्यादिभांडानि प्रस्थकादिपरिमाणपरिछेद्यानि तथैव संख्याव्यवहारस्य सर्वदाप्यवि-शिष्टत्वात् एवमिहापि प्रायश्चित्तानां वैषम्येपि तथैव धान्यानां प्रस्थकपरिच्छेद्यतामिव तुल्यां जानीहि प्रस्थकदृष्टांतेन सर्वत्र तुल्यां विशोधिमवबुध्यस्वेति भावः, उक्तमारोपणाप्रायश्चित्तमिदानीं प्रतिकुंचनाप्रायश्चित्तमाह -

**[भा. १४९]** दव्वे खेत्ते काले भावे पलिउंचणा चउविगप्पा ।
चोयगकप्पारोवण इहइं भणिया पुरिसजाया ।।

**वृ-** प्रतिकुंच्यते अन्यथा प्रतिसेवितमन्यथा कथ्यते, यया सा प्रतिकुंचना सा चतुर्विधा तद्यथा द्रव्ये द्रव्यविषया एवं क्षेत्रे काले भावे च अत्र परस्य प्रश्नमभिधित्सुराह चोयगत्ति । अत्र चोदको ब्रूते ननु कल्पेपि प्रायश्चित्तमभिहितं, व्यवहारेपि तदेव प्रायश्चित्तमभिधीयते इति द्वयोरप्यध्ययनयोर्विशेषाभावः अत्रार्थे सूरिवचनं । कप्पारोवणेत्यादि । कल्पे कल्पाध्ययने कल्पितानां मूलोत्तरगुणापराधप्रायश्चित्तानामारोपणं, दानमिह व्यवहाराध्ययने भणितं, इंइति पादपूरणे इजेराः पादपूरणे इति वचनात्, सानुस्वारता प्राकृतत्वात् प्राकृते हि पादांते सानुस्वारता भवतीति किमुक्तं भवति । कल्पाध्ययने आभवत् प्रायश्चित्तमुक्तं नतु दानमिह तु दानं भणितमिति विशेषः, तथा कल्पाध्ययने प्रायश्चित्तार्हाः पुरुषजाता न भणिता इह तु भणिता इति महान् विशेषः एष गाथासंक्षेपार्थः सांप्रतमेनामेव गाथां व्याचिख्यासुः प्रथमतो द्रव्यादिभेदभिन्नां प्रतिकुंचनां व्याख्यानयति -

**[भा. १५०]** सचित्तं अचित्तं जनवयपडिसेवियं तु अद्धाणे ।

सुभिक्खंमि दुभिक्खे हठ्ठेण तहा गिलाणेणं ।।

**वृ-** द्रव्यविषया प्रतिकुंचना नाम सचित्तं उपलक्षणमेतत् मिश्रं वा प्रतिसेविते अचित्तं मया प्रतिसेवितमित्यालोचयति, क्षेत्रप्रतिकुंचना जनपदे प्रतिसेव्य यदध्वनि प्रतिसेवितमित्यालोचयति, कालप्रतिकुंचना यत्सुभिक्षे काले सेवित्वा दुर्भिक्षे मया प्रतिसेवितमित्यावेदयति, भावप्रतिकुंचना यत् हृष्टेन सता ग्लानेन सता मया प्रतिसेवितमित्यालोचयति उक्ता प्रतिकुंचना अधुना अनंतरगाथोत्तरार्धं व्याख्यानयन् अज्झयणाण विसेसो इति द्वारं व्याख्यानयति तत्र चोयग इत्यवयवं व्याचिख्यासुराह -

**[भा.१५१]** कप्पंमिवि पच्छित्तं ववहारंमिवि तहेव पच्छित्तं ।
कप्पववहाराणं को नु विसेसोत्ति चोएइ ।।

**वृ-** ननु कल्पे प्रायश्चित्तमुक्तं, व्यवहारेपि तदेव प्रायश्चित्तमभिधीयते ततः कल्पव्यवहारयोः को नु विशेषो नैव कश्चनापीतिभावः न नुशब्दस्याक्षेपद्योतकत्वादिति चोदयति । प्रश्नयति शिष्यः । अपि चाभिधानतोपि कल्पव्यवहारयोर्विशेषानुपपत्तिः तथाचाह -

**[भा.१५२]** जो अवितहववहारी सो नियमा वट्टए उ कप्पंमि ।
इय बिहु नत्थि विसेसो अज्झयणाणं दुवेण्हंपि ।।

**वृ-** यो नाम साधुरवितथव्यवहारी स नियमादवश्यंभावेन वर्त्तते एव तुरेवकारार्थः कल्पे आचारे आचारवर्त्तिन एव यथोक्तावितथव्यवहारकारित्वात् । यश्च वर्त्तते कल्पे आचारे स नियमादवितथव्यवहारकारी तथाहि कल्पो व्यवहार आचार इत्यनर्थांतरमिति इयबिहु इत्यपि एवमपि अर्थगत्याभिधानाभेदतोपि आस्तां प्रागुक्तप्रकारेणाभिधेयाभेद इत्यपि शब्दार्थः हुर्निश्चितं द्वयोरपि कल्पव्यवहारयोरध्ययनयोनास्ति विशेषः एवं परेणाभिधेयाभेदतोऽभिधानाभेदतश्चैक्ये प्रतिपादिते सूरिरभिधेयभेदं दर्शयन् कप्पारोवणत्ति अवयवं व्याख्यानयति ।

**[भा.१५३]** कप्पंमि कप्पिया खलु मूलगुणे चेव उत्तरगुणे यः
ववहारे ववहरियं । पायच्छित्ता भवंते य ।।

**वृ-** कल्पे कल्पाध्ययने कल्पितान्येव प्ररुपितान्येव खलु शब्दस्यैवकारार्थत्वात् नतु दानव्यवहारप्रवर्तितानि कानीत्यत आह मूलगुणा चेव उत्तरगुणा य इति विषयेण विषयिणो लक्षणात् मूलगुणापराधप्रायश्चित्तानि उत्तरगुणापराधप्रायश्चित्तानि । व्यवहारे व्यवहाराध्ययने पुनर्व्यवहृतानि दानव्यवहारविषयीकृतानि किमुक्तं भवति कल्पाध्ययने मूलगुणापराधे वा आभवंति प्रायश्चित्तान्युक्तानि अस्मिंस्तु व्यवहाराध्ययने तेषामाभवतां प्रायश्चित्तानां दानमुक्तमिति यानि च कल्पाध्ययने आभवंति प्रायश्चित्तानि नोक्तानि तानि व्यवहारेभिधीयंते तेषां दानं च किंच -

**[भा.१५४]** अविसेसियं च कप्पे इहइं तु विसेसियं इमं ।
चउहा पडिसेवण संजोयणा आरोवण कुंचियं चेव ।।

**वृ-** चः समुच्चये अन्यच्चेत्यर्थः । कल्पे कल्पाध्ययने प्रायश्चित्तमविशेषितं विशेषरहितमुक्तं । इहइन्तुलिंगः पादपूरणे सानुस्वारता पूर्ववत् तुः पुनरर्थे इह व्यवहाराध्ययने पुनरिदं प्रायश्चितं चतुर्द्धा चतुर्भिः प्रकारैर्विशेषितं, तानेव प्रकारानाह । प्रतिसेवनं संयोजनमारोपणं कुंचनमिति प्रतिकुंचनं एतानि अनंतरमेव सप्रपंचं व्याख्यातानीति न भूयो व्याख्यायंते तदेवमभिधेयाभेदतो नास्ति विशेष इति यदुक्तं तदसिद्धमिति प्रतिपादितमभिधेयभेदस्य दर्शितत्वात् । यत्पुनरुच्यते अभिधानाभेदतो नास्ति विशेष इति

तदनैकांतिकमिति दर्शयति -

**[भा.१५५]**　　नाणत्तं दिस्सए अत्थे, अभिन्ने वंजणम्मि वि ।
वंजणस्स य भेदंमि कोइ अत्थो न भिज्जए ।।

**वृ**- व्यज्यते प्रकटीक्रियते अर्थोऽनेन प्रदीपेनेव घट इति व्यंजनं शब्दस्तस्मिन् अपिशब्दो भिन्नक्रमः स चैवं योजनीयोऽभिन्नेपि एकरूपेपि एकअर्थे अर्थविषये नानात्वं दृश्यते यथा सैंधव इत्युक्ते तत्तत्प्रस्तावादिना अश्वलवणवस्त्राद्यर्थनानात्वं, तथा व्यंजनस्य शब्दस्य भेदेपि च शब्दोऽपिशब्दार्थो भिन्नक्रमश्चेत्यत्र संबध्यते कश्चिदर्थो न भिद्यते, यथा खं, व्योम, आकाशमिति कस्मादेवं शब्दाभेदेपि अर्थनानात्वमिति चेत् ? उच्यते, शब्दार्थयोर्भेदाभेदविषये चतुर्भंगिकाया भावात् तथाहि अर्थस्याप्यभेदः शब्दस्याप्यभेद इति प्रथमो भंगः अर्थस्याभेदः शब्दस्य भेद इति द्वितीयः, अर्थस्याभेदः शब्दस्याभेदः इति तृतीयः अर्थस्य भेदः शब्दस्य भेदः इति चतुर्थः एतेष्वेव चतुर्थभंगकेषु क्रमेणोदाहरणान्युपदर्शयति-

**[भा.१५६]**　　पढमो इंदोत्ति बिइयओ होइ इंदसक्कोत्ति ।
तइओ गो भूप पसू रस्सिणोत्ति चरमो घडपडोत्ति ।।

**वृ**- प्रथमो भंगोऽर्थभेदः शब्दोऽभेदः इत्येवंरूपो यथा इंद्र इंद्र इति । तथाह्येकेनापि इंद्र इत्युक्तं द्वितीयेनापि इंद्र इति अत्र च द्वितीयेनापि इंद्र इति । अत्र च द्वयोरपि शब्दयोः स्वरूपाभेदेऽर्थाभेदश्च । द्वितीयोर्थभेदः शब्दस्य भेद इति रूपो यथा इंद्रशक्र इति अत्र हि शब्दस्य नानात्वमर्थस्त्वभिन्न एव द्वयोरप्येकार्थिकत्वात् तृतीयोऽर्थस्य भेदः शब्दस्याभेद इत्येवंलक्षणो यथा भूप पशु रश्मिषु पुरुषभेदेन कालभेदेन वा प्रयुज्यमाना गोशब्दाः । अत्र हि गौरिति सर्वत्राप्यभिन्न इति, चरमो यथा घट पट इति अत्र हि द्वयोरपि शब्दयोः रूपभेदोप्यस्ति अर्थभेदोपि तत उपपद्यते शब्दाभेदेपि अर्थनानात्वमर्थभेदेपि शब्दनानात्वं तेन यदुच्यते अभिधानाभेदतो नास्ति विशेष इति । तदनेकांतिकमुपदर्शितं भूपपशुरश्मिवाचिनां । गोशब्दानामभिधानाभेदेप्यर्थविशेषदर्शनात् स चार्थविशेषोऽत्रोऽप्यस्ति, यदुक्तं प्राक् अभिधानाभेदत इति यदुक्तं तत् प्रत्यक्षविरुद्धं व्यंजनभेदस्य साक्षादुपलभ्यमानत्वात्, तथाह्येकत्र कल्प इति-अपरत्र व्यवहार इति ।। अथार्थगत्याभिधानाऽभेद उच्यते स स्वरूपतस्तदप्यसत् अर्थविशेषस्याप्युभयत्र भावात्तथा चाह -

**[भा.१५७]**　　वंजणेण य णाणत्तं अत्थतो अविकप्पियं ।
दिस्सए कप्पनामस्स ववहारस्स तहेव य ।।

**वृ**- कल्पनाम्नोध्ययनस्य तथैव व्यवहारस्य व्यवहाराध्ययनस्य दृश्यते व्यंजनेन व्यंजनभेदेन नानात्वं, प्रत्यक्षतः व पृथग्विभिन्नानां व्यंजनानामुपलभ्यमानत्वात् । तथाऽर्थतोऽर्थमाश्रित्यास्ति नानात्वं, अविकल्पितं निश्चितं प्रायश्चित्तभेदानां प्रतिसेवनासंयोजनादीनां प्रायश्चित्तार्हपुरुषजातानां च कल्पाध्ययनानुक्तानामिह व्यवहाराभिधानात् तदरिहपरिसाय इत्येतत् द्वारं व्याचिख्यासुरिहं भणिया पुरिसजाया इत्यवयवं व्याख्यानयन्नाह -

**[भा.१५८]**　　वट्टंतस्स अकप्पे पच्छित्तं तस्स वणिया भेदा ।
जे पुन पुरीसजाया तस्सरिहा ते इमे होंति ।।

**वृ**- इह कल्पे वर्त्तमानस्य सूत्रोक्तविधिनायतनया प्रवृत्तेः प्रायश्चित्तविषयतैव नोपजायते, इत्यकल्पगृहणमकल्पे दर्पादौ वर्त्तमानस्य यत् प्रायश्चित्तं तस्ययेभेदाः प्रतिसेवनासंयोजनादयस्ते वर्णिता

ये पुनस्तस्य प्रायश्चित्तस्यार्हा योग्याः पुरुषजाताः पुरुषप्रकाराः पुरुषभेदा इत्यर्थः, तइमे वक्ष्यमाणस्वरूपा भवंति । तानेव दर्शयति ।।

[भा. १५९] कयकरणा इयरे वा सावेक्खा खलु तहेव निरवेक्खा ।
निरवेक्खा जिनमादी सावेक्खा आयरियमादी ।।

वृ- कृतकरणा नाम षष्ठाष्ठमादिभिर्विविधतपोविधानैः परिकर्म्मितशरीराः इतरे अकृतकरणाः षष्ठाष्ठमादिभिस्तपोविशेषैरपरिकर्म्मितशरीराः तत्र ये कृतकरणास्ते द्विविधास्तद्यथा सापेक्षाः खलु तथैव निरपेक्षाः, सह अपेक्षा गच्छस्येति गम्यते येषां ते सापेक्षा गच्छवासिनः, निर्गता अपेक्षा येभ्यस्ते निरपेक्षाः तत्र ये निरपेक्षास्ते त्रिविधा जिनादयः तद्यथा । जिनकल्पिकाः शुद्धपरिहारविशुद्धिका यथालंदकल्पिकाश्च, एते नियमतः कृतकरणा एव अकृतकरणानामन्यतमस्यापि कल्पस्य प्रतिपत्त्ययोगात् सापेक्षा अपि त्रिविधा आचार्यादयस्तद्यथा - आचार्या उपाध्याया भिक्षवश्च एते प्रत्येकं द्विधा भूयो भवंति तद्यथा-आचार्याः कृतकरणा अकृतकरणाश्च उपाध्याया अपि कृतकरणा अकृतकरणाश्च भिक्षवोऽपि कृतकरणा अकृतकरणाश्च तत्र कृतकरणानां चिंत्यमानत्वादस्यां गाथायामेते कृतकरणा ग्राह्याः ।

[भा. १६०] अकयकरणावि दुविहा, अणहिगया अहिगया य बोधव्वा ।
जं सेवेइ अहिगए अनहिगएअत्थिरे इच्छा ।।

वृ- इहाचार्या उपाध्यायाश्च कृतकरणा अकृतकरणा वा नियमात् गीतार्थाः स्थिराश्च, तत इहाकृतकरणा भिक्षव एव ग्राह्याः, ते अकृतकरणा भिक्षवो द्विविधास्तद्यथा अनधिगताश्च अधिगताश्च अनधिगता नाम अगीतार्थाः अधिगता गीतार्थाः, अपिशब्दः संभावने स चैतत्संभावयति, ये भिक्षवोऽनधिगतास्ते द्विविधास्तद्यथा स्थिरा अस्थिराश्च स्थिरा नाम धृतिसंहननसंपन्नाः तद्विपरीता अस्थिराः, अधिगता अपि द्विधा स्थिरा अस्थिराश्च कृतकरणा अपि भिक्षवो द्विधा अधिगताः अनधिगताश्च अनधिगता अपि द्विधा स्थिरा अस्थिराश्च अधिगता अपि द्विविधाः स्थिरा अस्थिराश्च अत्रैव संक्षेपतः प्रायश्चित्तदानविधिमाह जं सेवेइ इत्यादि यत् प्रायश्चित्तस्थानं सेवते प्रतिसेवते अधिगतो गीतार्थ उपलक्षणमेतत् कृतकरणः स्थिरश्च तस्मै तदेव परिपूर्नं दीयते, तदेव प्रायश्चित्तस्थानं प्राप्ते अनधिगते अस्थिरे च अस्थिरे, च शब्दादकृतकरणे च गुरोः प्रायश्चित्तदानविधौ इच्छा सूत्रोपदेशानुसारेण स्वेच्छा तथाहि यदि श्रुतोपदेशानुसारतः कृतकरणः स्थिरोधिगत इति वा कृतकरणादिरपि समर्थ इति विज्ञातो भवति तदा यदेव प्रायश्चित्तमापन्नस्तदेव तस्मै दीयते, । अथासमर्थ इति परीक्षित इति गाथावत्प्रायश्चित्तं प्राप्तस्तस्यार्वाक्तनमनंतरं दीयते, तत्राप्यसमर्थतायां ततोप्यनंतरं तत्राप्यसामर्थ्ये ततोप्यनंतरमेवं यथापूर्व क्रमेण तावन्नेयं यावन्निर्विकृतिकं तत्राप्यसमर्थतायां पौरुषीप्रत्याख्यानं, तत्राप्यशक्तौ नमस्कारसहितं गाढग्लानत्वादिना तस्याप्यसंभवे एवमेवलोचनामात्रेण शुध्यापादनमिति, संप्रति पुरुषभेदमार्गणायामेव प्रकारांतरमाह -

[भा. १६१] अहवा सावेक्खियरे निरवेक्खा सव्वहा उकय करणा ।
इयरे कयाऽकयावा, थिराऽथिरा होंति गीयत्था ।।

वृ- अथवेति प्रकारांतरद्योतनार्थः, नद्य प्रकारांतरमिदं पूर्वं कृतकरणा कृतकरणभेदावादौ कृत्वा पुरुषभेदमार्गणाकृता, अत्र तु सापेक्षनिरपेक्षभेदौ तथाचाह - सावेक्खियरेत्ति द्विविधाः प्रायश्चित्तार्हाः पुरुषास्तद्यथा । सापेक्षा इतरे च, सापेक्षा गच्छवासिनस्ते च त्रिधा आचार्या उपाध्याया भिक्षवः, निरपेक्षा

जिनकल्पिकादयस्तत्र ये निरपेक्षास्ते सर्वशः सर्वात्मना कृतकरणास्तुशब्दस्य समुच्चयार्थत्वादधिगताः स्थिराश्च, इतरे सापेक्षा द्विविधास्तद्यथा कयाकयावा इति पदैकदेशे पदसमुदायोपचारात् कृतकरणा अकृतकरणाश्च वाशब्दः समुच्चये कृतकरणा अपि द्विधा स्थिरा अस्थिरा अस्थिराश्च, अकृतकरणा अपि द्विधा स्थिरा अस्थिराश्च एकैके द्विधा गीतार्था अगीतार्थाश्च सूत्रे गीतार्था इत्युपलक्षणं, ततोऽगीतार्था अपि विवृताः अथ किंस्वरूपाः कृतकरणा इति कृतकरणस्वरूपमाह -

[भा.१६२] छट्ठट्ठमाइएहिं कयकरणा ते उ उभयपरियाए !
अहिगयकयकरणात्तं जोगयतगारिहा केई ।।

वृ- कृतकरणा नाम ये षष्ठाष्टमादिभिस्तपोविशेषैरुभयपर्याये श्रामण्ये पर्याये चेत्यर्थः परिकर्म्मित-शरीरास्ते ज्ञातव्यास्तद्विलक्षणा इतरे सामर्थ्यादकृतकरणाः अत्रैव मतांतरमाह । अहिगयेत्यादि केचि-दाचार्या ये अधिगतास्ते नियमात् कृतकरणा इत्यधिगतानां कृतकरणत्वमिच्छंति, कस्मादिति चेदत आह जोगायतगारिहाइति, निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायोदर्शनमिति वृद्धवैयाकरणप्रवादात् हेतावत्र प्रथमा ततोयमर्थः यतस्तैर्महाकल्पश्रुतादीनामायतकाला योगा उद्व्यूढास्तत आयतकयोगार्हा अभवन्निति नियमतो अधिगताः कृतकरणा इति, तदेवं कृताः पुरुषभेदमार्गणा सांप्रतममीषां प्रायश्चित्तदानविधिर्वक्तव्यस्तत्र ये निरपेक्षा जिनकल्पिकादयस्ते यत् प्रायश्चित्तमापन्नास्तदेव तेभ्यो दीयते न तद्विषया गुरुलाघवचिंता निरपेक्षत्वात् सापेक्षाणां तु सापेक्षतयैव प्रायश्चित्तदानविधौ तद्विषया गुरुलाघवचिंता कर्तव्या, तत्र यानि प्रायश्चित्तानि दातव्यानि, तानि संक्षेपतो गाथाद्वयेनाह ।

[भा.१६३] निव्विइए पुरिमड्ढे, एक्कासण अंबिले चउत्थेय ।
पनगं दस पनरसा वीसा तह पन्नवीसाय ।।

[भा.१६४] मासो लहुओ गुरुगो, चउरो मासा हवंति लहुगुरुगा ।
छम्मासा लहुगुरुगा छेदो मूलं तह दुगं च ।।

वृ- निर्विकृतिकं विकृतिप्रत्याख्यानं पुरिमड्ढंति दिवसपूर्वार्द्धप्रत्याख्यानं, एकाशनाचाम्लचतुर्थानि प्रतितानि, पनगंति, रात्रिंदिवानां पंचकं लहुगुरुयंति वक्ष्यमाणं पदमत्रापि व्याख्यानतो विशेषप्रति-पत्तिरिति विभक्तिपरिणामेन संबंध्यते, लघुरात्रिंदिवपंचकं गुरुरात्रिंदिवपंचकं च तत्र लघुरात्रिंदिवपंच-कमाचाम्लेन एकद्व्यादिदिनैर्वा हीनं, परिपूर्णं गुरुरात्रिंदिवपंचकं एवं दसत्ति लघुरात्रिंदिवदशकं गुरुरात्रिं-दिवदशकं, पन्नरसत्ति लघुरात्रिंदिवपंचदशकं गुरुरात्रिंदिवपंचदशकं, पनवीसत्ति लघुरात्रिंदिवपंचविं-शतिकं गुरुरात्रिंदिवपंचविंशतिकं । मासो लहुओ गुरुओत्ति लघुमासो गुरुमासाः । चत्वारो लघुमा-साश्चत्वारो गुरुमासा, षण्मासा लघवः षण्मासा गुरवः, तथा छेदः कतिपयपर्यायस्य, मूलं सर्वपर्यायोच्छे-देन व्रतारोपणं, तहदुगंचत्ति अनवस्थाप्यं पारांचितं च; इह पारांचितप्रायश्चित्तवर्त्ती प्रायो जिनकल्पिक-प्रतिरूपको वर्त्तते उक्तं च -

पारंचिउएगागीइत्यादि, जिनकप्पियपडिरूवगो इति अनवस्थाप्यप्रायश्चित्तवर्त्यप्येवं गुणः ।
संघयणविरियआगम सुत्तविही एजो समुज्जुत्तो निग्गाहजुत्तो तवस्सी, पवयणसारे गहियअत्थो ।।
तिलतुसतिभागमित्तोवि जस्स असुभो न विज्जए, भावो; निज्जूहणारिहो सो, सेसे निज्जूहणा नत्थि; ।।
एयगुणसंपन्ना पावइ अनवट्ठाणमुत्तमगुणो हो, एय गुण विप्पहीणो-तारिसगंमीरि भवे मूलं ।।
एतौ चैकांततो निरपेक्षौ, सापेक्षाणां त्वयं प्रायश्चित्तदानविधिः कथयितुमुपक्रांतस्ततो मूलादारभ्य

प्रायश्चित्तदानविधिरुच्यते तथा चाह -

[भा.१६५] पढमस्स होइ मूलं विइए मूलं छेदो च छग्गुरुगा ।
जयणाए होइ सुद्धो, अजयणा गुरुगा तिविहभेदो

वृ- प्रथमस्याचार्यस्य कृतकरणस्य सापेक्षस्य महत्यपिअपराधे सापेक्षत्वात् प्रायश्चित्तं मूलमुपलक्षणमेतत् तेन तस्यैवाकृतकरणस्यासमर्थात् । छेद इत्यपि द्रष्टव्यं, द्वितीये उपाध्याये कृतकरणे । तथारूपायां धृतिबलसमर्थतायां मूलमितरथा छेदः । अकृतकरणे गुरुषण्मासिकं, इहाचार्य उपाध्यायो वा यदि यतनया कारणे देशकालानुरूपं प्रायश्चित्तस्थाने अवर्तिष्ट, तदा शुद्धो न प्रायश्चित्तविषयः यतनया कारणप्रवृत्तेः अयतनया तु प्रायश्चित्तस्थाने प्रवृत्तौ मूलं छेदो वाचार्यस्य, उपाध्यायस्य तु गुरुकादारभ्योक्तप्रकारेण त्रिविधा प्रायश्चित्तस्य भेदः षड्गुरुछेदो मूलं च, एवमुक्तानुसारतो भिक्षुष्वपि प्रायश्चित्तदानविधिरनुसरणीयः एतदेव व्याचक्षाण आह -

[भा.१६६] सव्वेसिं अविसिट्ठा आवत्तीतेन पढमया मूलं ।
सावेक्खे गुरुमूलं कयाकए होइ पुन छेओउ ।।

[भा.१६७] सावेक्खोत्ति च काउं, गुरुस्स कयजोगिणो भवे छेदो ।
अकयकरणंमि छग्गुरु इइअट्ठोक्कतीए नेयं ।।

वृ- इति प्रायश्चित्तदानविधिरुक्तप्रकारेण कथयितुमभीष्टो, यदा सर्वेषामाचार्यादीनामापत्तिः प्रायश्चित्तस्यापादनं, अविशिष्टा सापेक्षाणां च महत्यपराधे मूलं नानवस्थाप्यं, पारांचितं वा ततः प्रथमतया सर्वेषां मूलमापन्नमविशिष्टमधिकृत्य गुरुलाघव चिंतया प्रायश्चित्तदानविधिरुच्यते, तत्र सापेक्षे गुरौ आचार्ये गाथायां विभक्तिलोपः प्राकृतत्वात्कृते कृतकरणे प्रायश्चित्तं मूलं, सापेक्षे इति वचनात्, महत्यप्यपराधे गुरौ सापेक्षत्वात् मूलमेव प्रायश्चित्तं, नत्वनवस्थाप्यं, परांचितं वेति ज्ञापितं एतदेव चोपजीव्य प्रागप्येवमस्माभिर्व्याख्यातं; अकृते अकृतकरणे गुराविति संबंधादाचार्ये भवति प्रायश्चित्तं छेदः, सावेक्खोत्ति च काउमित्यादि, अत्र गुरुशब्देनोपाध्यायः प्रोच्यते आचार्यस्योक्तत्वात् गुरोरुपाध्यायस्य कृतयोगिनः कृतकरणस्य मूलं प्रायश्चित्तमापन्नस्यापि सापेक्ष्य इति कृत्वा प्रायश्चित्तं छेदो भवति, तस्यापि कृतकरणस्य मनाक् निरपेक्षतायां मूलमपि प्रायश्चित्तं विइए मूलं च छेदो छग्गुरुगा इति वचनाद् अकृतकरणे तु तस्मिन्नेवोपाध्याये मूलमापन्नेपि प्रायश्चित्तं षड्गुरुकाः । गुरवः षण्मासाः । अकृतकरणतया छेदप्रायश्चित्तस्याप्यनर्हत्वात् इति एवममुना प्रकारेण अट्ठोक्कंतीए इति एकैकस्मिन्नाचार्यादौ स्थाने कृतकरणभेदतो द्वे द्वे प्रायश्चित्ते तयोश्च द्वयोरेकमाद्यं प्रायश्चित्तमुपक्रामति न तूत्तरस्थाने ऽनुवर्त्तते द्वितीयं चोत्तरस्थाने ऽनुवर्त्तते एकं च द्वयोरर्द्धमित्यर्थावक्रांत्या ज्ञेयं प्रायश्चित्तदानमिदमिति संक्षिप्तमुक्तमिति, विनेयजनानुग्रहाय यंत्रककल्पनया विशेषतो भाव्यते, तत्र यंत्रकविधानमिदं तिर्यक् द्वादशगृहकानि क्रियंते, अधोमुखं च विंशतिगृहाणि एवं च द्वादशगृहात्मिका विंशतिगृहपंक्तयो जाताः ।

तत्र विंशतितमायां पंक्तौ दक्षिणतो ये अंतिमे ये द्वे द्वे गृहके ते मुक्त्वा तस्या अधस्तात् दशगृहात्मिका एकविंशतितमा पंक्तिः स्थाप्या, तस्यामप्येकविंशतितमायां पंक्तौ ये द्वे अंतिमे गृहके ते मुक्त्वा अधस्तात् अष्टगृहात्मका द्वाविंशतितमा पंक्तिः स्थापनीया, तस्यामपि ये द्वे अंतिमे गृहके ते मुक्त्वा तस्या अधस्तात् षड्गृहात्मिका त्रयोविंशतितमा पंक्तिर्न्यसनीया, तस्यामपि ये द्वे अंतिमे गृहके ते विमुच्य तस्या

अधस्ताच्चतुर्गृहात्मिका चतुर्विंशतितमा पंक्तिः स्थापयितव्या तस्यामपि ये द्वे अंतिमे गृहके ते परित्यज्य तस्या अधस्तात् द्विगृहात्मिका पंचविंशतितमा पंक्तिः स्थाप्या, तस्या अधस्तादेकगृहात्मिका षड्विंशतितमा पंक्तिः, एवं षड्विंशपंक्त्यात्मकस्य यंत्रकस्य सर्वोपरि तस्याः प्रथमपंक्ते रुपरि प्रथमगृहके कृतकरण आचार्यः स्थापनीयः, द्वितीये गृहके अकृतकरणः, तृतीये कृतकरण उपाध्यायः, चतुर्थे स एवाकृतकरणः, पंचमे अधिगतस्थिरभिक्षुः कृतकरणः, दशमे स एवाकृतकरणः सप्तमे अधिगतास्थिरभिक्षुः कृतकरणः, अष्टमे स एवाकृतकरणः, नवमे अनधिगतस्थिरभिक्षुः कृतकरणः, दशमे स एवाकृतकरणः; एकादशे अनधिगतास्थिरभिक्षुः कृतकरणः, द्वादशे अनधिगतोऽस्थिरोऽकृतकरणस्यः, एवं स्थापयित्वा कृतकरणस्याचार्यस्य मूलं तस्मिन्नेवापराधेऽकृतकरणस्य छेदः उपाध्यायस्य मूलमापन्नस्य कृतकरणस्य च्छेदः अकृतकरणस्य षण्मासगुरुस्तत्रैवापराधे भिक्षोरधिगतस्य स्थिरस्य कृतकरणस्य षण्मासगुरुः, अकृतकरणस्य षण्मासलघुः ।

अधिगतस्य भिक्षोरस्थिरस्य कृतकरणस्य षण्मासलघु, अकृतकरणस्य चतुर्मासगुरुः, अनधिगतस्य भिक्षोः स्थिरस्य कृतकरणस्य चतुर्मासगुरु, अकृतकरणस्य चतुर्मासलघु अनधिगतस्य भिक्षोरस्थिरस्य कृतकरणस्य चतुर्मासलघु अस्थिराकृतकरणस्य मासगुरु । एवं प्रथमपंक्तौ मूलादारब्धं मासगुरुके निष्ठितं, द्वितीयपंक्तौ प्रथमगृहके च्छेदः, द्वितीये षड्गुरु, तृतीयेपि षड्गुरु, चतुर्थे षड्लघु पंचमे षट्लघु षष्ठे चतुर्गुरु सप्तमेऽपि चतुर्गुरु सप्तमेऽपि चतुर्गुरु । अष्टमे चतुर्लघु नवमेपि चतुर्लघु, दशमे मासगुरु एकादशेपि मासगुरु, द्वादशे मासलघु अत्र छेदादारब्धं मासलघुके निष्ठितं ।

तृतीयपंक्तौ प्रथमे गृहके षड्गुरु द्वितीये षड्लघु तृतीयेपि षड्लघु चतुर्थे चतुर्मासगुरु । पंचमेपि चतुर्मासगुरु, षष्ठे चतुर्मासलघु सप्तमे चतुर्मासलघु अष्टमे मासगुरु नवमेपि मासगुरु दशमे मासलघु एकादशेपि मासलघु द्वादशे भिन्नमासगुरु अत्र षड्गुरुकादारब्धं भिन्नमासे गुरौ निष्ठितं चतुर्थपंक्तौ प्रथमे गृहके षड्लघु, द्वितीये चतुर्मासगुरु, तृतीयेपि चतुर्मासगुरु, चतुर्थे चतुर्लघु, पंचमेपि चतुर्लघु, षष्ठे मासगुरु, सप्तमेपि मासगुरु, अष्टमे मासलघु, नवमेपि मासलघु, दशमे भिन्नमासो गुरुएकादशेपि भिन्नमासगुरु, द्वादेश भिन्नमासो लघुः । अत्र षट्लघुकादारब्धं लघुभिन्नमासे निष्ठितं, पंचमपंक्तौ प्रथमे गृहे चतुर्मासगुरु, द्वितीये चतुर्लघु, तृतीयेपि चतुर्लघु चतुर्थे मासगुरु पंचमेति मासगुरु, षष्ठे मासलघु सप्तमेपि मासलघु अष्टमे भिन्नमासोगुरुः । नवमेपि भिन्नमासो गुरुर्दशमे भिन्नमासो लघु एकादशेपि भिन्नमासो लघु द्वादशे गुरुविंशति रात्रिदिवं, अत्र चतुर्गुरुकादारब्धं गुरुके विंशतिरात्रिदिवे स्थितं; षष्ठपंक्तौ प्रथमगृहे चतुर्मासलघु द्वितीये मासगुरु, तृतीयेपि मासगुरु, चतुर्थे मासलघु, पंचमेपि मासलघु, षष्ठे गुरुकं पंचविंशतिकं, सप्तमेपि गुरुकं पंचविंशतिकं, अष्टमे लघुपंचविंशतिकं, नवमेपि लघुपंचविंशतिकं दशमे गुरुविंशतिके एकादशेपि गुरुविंशतिके द्वादशे लघुविंशतिके अत्र चतुर्लघुकादारब्धं लघुविंशतिके निवृत्तं सप्तमपंक्तौ प्रथमग्रहे मासगुरु द्वितीये मासलघु तृतीयेपि मासलघु चतुर्थे गुरुपंचविंशतिकं पंचमे गुरुपंचविंशतिकं षष्टे लघुपंचविंशतिकं सप्तमे लघुपंचविंशतिकं अष्टमे गुरुविंशतिकं नवमे गुरुविंशतिकं दशमे लघुविंशतिकं एकादशेपि लघुविंशतिके द्वादशे गुरुपंचदशकं।

अत्र मासगुरुकादारब्धं गुरुपंचदशके पर्याप्तं । अष्टमपंक्तौ प्रथमे गृहके मासलघु द्वितीये गुरुपंचविंशतिकं तृतीये गुरुपंचविंशतिकं चतुर्थे, पंचविंशतिकं लघु पंचमे पंचविंशतिकं लघु षष्ठे गुरुविंशतिकं सप्तमे गुरुविंशतिकं, अष्टमे लघुविंशतिकं नवमे लघुविंशतिकं, । दशमे गुरुपंचदशकं,

एकादशे गुरुपंचदशकं द्वादशे लघुपंचदशकं, अत्र मासलघुकादारब्धं लघुपंचदशके पर्याप्तं, नवमपंक्तौ प्रथमगृहे गुरुपंचविंशतिकं द्वितीये लघुपंचविंशतिकं, तृतीये लघुपंचविंशतिकं चतुर्थे गुरुविंशतिकं पंचमे गुरुविंशतिकं, षष्ठे लघुविंशतिकं सप्तमे लघुविंशतिकं, अष्टमे गुरुपंचदशकं नवमे गुरुपंचदशकं, दशमे लघुपंचदशकमेकादशके लघुपंचदशकं, द्वादशे गुरुदशकं, अत्र गुरुपंचविंशतिकादारभ्य गुरुदशके निष्ठितं, दशमपंक्तौ प्रथमगृहे लघुपंचविंशतिकं, द्वितीये गुरुविंशतिकं तृतीये गुरुविंशतिकं चतुर्थे लघुविंशतिकं, पंचमे लघुविंशतिकं, षष्ठे गुरुपंचदशकं सप्तमे गुरुपंचदशकं, अष्टमे लघुपंचदशकं नवमे लघुपंचदशकं, दशमे गुरुदशकमेकादशे गुरुदशकं, द्वादशे दशकं लघु, । अत्र लघुपंचविंशतिकादारब्धं लघुदशके स्थितं, एकादशपंक्तौ प्रथमे गृहके गुरुविंशतिकं, द्वितीये लघुविंशतिकं तृतीये लघुविंशतिकं, चतुर्थे गुरुपंचदशकं, पंचमे गुरुपंदशकं, षष्ठे लघुपंचदशकं सप्तमे लघुपंचदशकं । अष्टमे गुरुदशकं नवमे गुरुदशकं । दशमे लघुदशकं एकादशमे लघुदशकं द्वादशे गुरुपंचकं, अत्र गुरविंशतिकादारब्धं गुरुपंचके पर्याप्तं, द्वादशपंक्तौ प्रथमे गृहके लघुविंशतिकं, द्वितीये गुरुपंचदशकं, तृतीये गुरुपंचदशकं, चतुर्थे लघुपंचदशकं, पंचमे लघुपंचदशके षष्ठे गुरुदशके सप्तमे गुरुदशकं, । अष्टमे लघुदशके । नवमे लघुदशकं, दशमे गुरुपंचकमेकादशे गुरुपंचकं, द्वादशे लघुपंचकं अत्र लघुविंशतिकादारब्धं लघुपंचके पर्याप्तं,

त्रयोदशपंक्तौ प्रथमे गृहके गुरुपंचदशकं द्वितीये लघुपंचदशकं तृतीये लघुपंचदशकं, चतुर्थे गुरुदशकं पंचमे गुरुदशकं, । षष्ठे लघुदशकं सप्तमे लघुदशकं, अष्टमे गुरुपंचकं नवमे गुरुपंचकं, दशमे लघुपंचकं एकादशे लघुपंचकं, द्वादशे दशमं । अत्र गुरुपंचदशकादारब्धं दशमे निष्ठितं । चतुर्दशपंक्तौ प्रथमगृहके लघुपंचदशकं, द्वितीये गुरुदशकं तृतीये गुरुदशकं, चतुर्थे लघुदशकं । पंचमे लघुदशकं, । षष्ठे गुरुपंचकं सप्तमे गुरुपंचकं, अष्टमे लघुपंचकं नवमे लघुपंचकं, दशमे दशममेकादशे दशमं, द्वादशे अष्टमं अत्र लघुपंचदशकादारब्धमष्टमे निष्ठितं, । पंचदशपंक्तौ प्रथमे गृहके गुरुदशकं, द्वितीये लघुदशकं तृतीये लघुदशकं, चतुर्थे गुरुपंचकं पंचमे गुरुपंचकं, षष्ठे लघुपंचकं सप्तमे लघुपंचकमष्टमे दशमं नवमे दशमं, दशमे अष्टममेकादशे अष्टमं द्वादशे षष्ठं । अत्र गुरुदशकादारब्धं षष्ठे निष्ठितं, षोडशपंक्तौ प्रथमगृहके लघुदशकं द्वितीये गुरुपंचकं तृतीये गुरुपंचकं, चतुर्थे लघुपंचकं पंचमे लघुपंचकं, षष्ठे दशमं सप्तमे दशमं, अष्टमे अष्टमं नवमे अष्टमं, दशमे षष्ठं एकादशे षष्ठं द्वादशे चतुर्थमत्र लघुदशकादारब्धं चतुर्थे निष्ठितं, सप्तदशपंक्तौ प्रथमगृहके गुरुपंचकं द्वितीये लघुपंचकं, । तृतीये लघुपंचकं । चतुर्थे दशमं पंचमे दशमं, षष्ठे अष्टमं सप्तमे अष्टमं, अष्टमे षष्ठं, दशमे चतुर्थमेकादशे चतुर्थं द्वादशे आचामाम्लमिति ।

अत्र गुरुपंचकादारब्धमाचामाम्ले निष्ठितमष्टादशपंक्तौ प्रथमगृहके लघुपंचकं द्वितीये दशमं, तृतीये दशमं चतुर्थेऽष्टमं पंचमे अष्टमं, षष्ठे षष्ठं सप्तमे षष्ठं, अष्टमे चतुर्थं नवमे चतुर्थं दशमे आचामाम्लं, एकादशे आचामाम्लं द्वादशे एकाशनकमत्र लघुपंचकादारब्धमेकाशने निष्ठितमेकोनविंशतितमायां पंक्तौ प्रथमगृहके दशमं द्वितीये अष्टमं तृतीये अष्टमं चतुर्थे षष्ठं पंचमे षष्ठं षष्ठे चतुर्थं सप्तमे चतुर्थं अष्टमे आचामाम्लं नवमे आचामाम्लं दशमे एकाशनकं एकादशे एकाशनकं द्वादशे पूर्वार्धं अत्र दशमादारब्धं पूर्वार्धे स्थितं, विंशतितमायां पंक्तौ प्रथमग्रहके अष्टमं द्वितीये षष्ठं तृतीये षष्ठं चतुर्थे चतुर्थं पंचमे चतुर्थं षष्ठे आचामाम्लं सप्तमे आचामाम्लं अष्टमे एकाशनकं नवमे एकाशनकं दशमे पूर्वार्धमेकादशे पूर्वार्धं द्वादशे निर्विकृतिकमत्राष्टमादारब्धं निर्विकृतिके निष्ठित मेकविंशतितमायां पंक्तौ प्रथमे गृहके षष्ठं, द्वितीये चतुर्थं । तृतीये चतुर्थं चतुर्थे आचामाम्लं, पंचमे आचामाम्लं, षष्ठे एकाशनं सप्तमे एकाशनं अष्टमे

पूर्वार्द्धं, नवमे पूर्वार्द्धं दशमे निर्विकृतिकं, अत्र षष्ठादारब्धं निर्विकृतिकं निष्ठितं द्वाविंशतितमायां पंक्तौ प्रथमे गृहके चतुर्थं द्वितीये आचाम्लं चतुर्थे एकाशनं पंचमे एकाशनं षष्ठे पूर्वार्द्धं सप्तमे पूर्वार्द्धं अष्टमे निर्विकृतिकमत्र चतुर्थादारब्धं निर्विकृतिकं निष्ठितं, त्रयोविंशतितमायां पंक्तौ प्रथमे गृहके आचामाम्लं द्वितीये एकाशनकं । तृतीये एकाशनकं । चतुर्थे पूर्वार्द्धं पंचमे पूर्वार्द्धं, षष्ठे निर्विकृतिकं, चतुर्विंशतितमपंक्तौ प्रथमे गृहके एकाशनकं द्वितीये पूर्वार्द्धं तृतीये पूर्वार्द्धं । चतुर्थे निर्विकृतिकं, पंचविंशतितमपंक्तौ प्रथमे गृहके पूर्वार्द्धं द्वितीये निर्विकृतिकं षड्विंशतितमायां पंक्तौ निर्विकृतिकमिति, तदेवं कयकरणा इयरे वा इत्यादिना ये पुरुषभेदाः प्रागुक्तास्तेषां प्रायश्चित्तदानविधिरुक्तः । संप्रति जं संघेइ अहिगतो इत्यादि यत् गाथोत्तरार्द्धमुक्तं, तद्व्याख्यानार्थमाह, -

**[भा.१६८]** अकयकरणाउ गीया जे य अगीया य अकय अथिरा य ।
ते सावत्ति अनंतरबहुयं तरियं व झोसो वा ।

**वृ-** ये गीता गीतार्था अधिगता इत्यर्थः, अकृतकरणाः ये च अगीता अगीतार्था अनधिगता इति भावः, अकयत्ति अकृतकरणाश्च, चशब्दात् अकृतकरणाश्च । अस्थिराश्च कृतकरणा अकृतकरणाश्च तेषां कदाचित् आपत्तिप्रायश्चित्तं दीयते, यत् यत् प्रायश्चित्तं आपन्नं तदेव दीयते इति, यावत् कदाचित् तथाविधायामसमर्थतायां यत्प्रायश्चित्तमापन्नं, तस्यार्वाक्तनमनंतरं दीयते, कदाचित्प्रभूतायामसमर्थतायां बह्वंतरित बहुभिः प्रायश्चित्तैरंतरितमर्वाक्तनं दीयते इति यावत् अत्यंतासमर्थतायां झोसो वा सर्वस्य प्रायश्चित्तस्य परित्यागः आलोचनमात्रेणैवतस्यामवस्थायां तस्य शुद्धिभावात् ।, यथा कृतकरणस्योपाध्यायस्य मूलमापन्नस्य तथाविधयोग्यतायां मूलं दीयते, अकृतकरणस्य पुनरसमर्थ इति कृत्वा छेदस्तथाप्यसमर्थतायां षट्गुरु तत्राप्यशक्तौ षट्लघु एवं तावत् नेयं यावत् निर्विकृतिकं तत्राप्यशक्तौ पौरुषी तत्राप्यसमर्थतायां नमस्कारसहितं तस्यापि गाढग्लानत्वभावतोऽसंभवे एवमेवालोचनामात्रतः शुद्धिरिति । तदेव कयकरणा इयरे वा इत्यादिगाथाद्वयसकलमपि भावितमधुना सावेक्खा आयरियमादीति यदुक्तं तत्र परस्याक्षेपमाह -

**[भा.१६९]** आयरियादी तिविहो सावेक्खाणंतु किं कतो भेदो ।
एएसिं पच्छित्तं दानंचऽन्नं अतो तिविहो ।।

**वृ-** नन्वाचार्योपाध्याययोरपि भिक्षुत्वस्यावस्थितत्वात् तद्ग्रहणे तयोरपि ग्रहणमिति किं किमर्थं सापेक्षाणां त्रिविध आचार्यादिकः आचार्योपाध्यायभिक्षुलक्षणः कृतो भेदः ? एवमुक्ते सूरिराह एएसिणमित्यादि । एतेषामाचार्यादीनां यत् आभवति प्रायश्चित्तं यश्च तस्य प्रायश्चित्तस्य समर्थासमर्थपुरुषाद्यपेक्ष्य दानं, तत् पृथक् पृथक् अन्यत् अतः सापेक्षाणामाचार्यादिकस्त्रिविधो भेदः कृतः, एतदेव सविशेषमाह -

**[भा.१७०]** कारणमकारणं वा जयणा अजयणा व नत्थि अगीयत्थे ।
एएण कारणेणं आयरियाई भवे तिविहा ।।

**वृ-** इदं कारणं प्रतिसेवनाया इदमकारणं वा, तथा इयं यतना इयमयतना इत्येतन्नास्ति अगीतार्थे, गीतार्थस्य तु, अर्थात्गीतार्थस्यास्तीति प्रतीयते, तत्राचार्योपाध्यायौ गीतार्थौ, भिक्षुः गीतार्थोऽगीतार्थश्च, गीतार्थस्य अगीतार्थस्य च कारणे यतनया कारणे अयतनया अकारणे यतनया अकारणे अयतनया पृथक् पृथक् अन्यत् प्रायश्चित्तं, सहासहपुरुषाद्यपेक्षातुल्यंपि प्रायश्चित्ते आपद्यमाने पृथगन्योऽन्यो दानविधिरत

एतेन कारणेनाचार्यादयस्त्रिविधा भवंति, सूत्रे भवं इति बहुत्वेप्येकवचनं प्राकृतत्वात् प्राकृते हि वचनव्यत्ययोपि क्वचिद् भवति इति, एनामेव गाथां व्याख्यानयति ।।

**[भा. १७१]** कज्जाकज्जजयाजय अविजाणंतो अगीतो जं सेवे ।
सो होइ तस्स दप्पो गीये दप्पो जह दोसा ।।

**वृ-** कार्यं नाम प्रयोजनं, यच्च प्रयोजनं तच्च अधिकृतप्रवृत् कारणं, अत एवान्यत्रोक्तं कारणंति वा कज्जंति वा एगट्ठं, ततोयमर्थः अगीतोऽगीतार्थः कारणं न जानाति, यस्मिन्प्राप्ते प्रतिसेवना क्रियते । अकारणं न जानाति यस्मिन् प्रतिसेवना न क्रियते, तथा कारणे अकारणे वा प्राप्ते सेवनं कुर्वन् यतनामयतनां वा न जानाति, एतान्यजानानो यः सेवते प्रतिसेवते, तस्य दर्प्पो भवति । सा तस्य दर्प्पिका प्रतिसेवना भवतीति भावः, गीतार्थः पुनः सर्वाण्यप्येतानि जानाति ततः कारणे प्रतिसेवते, ना कारणेपि यतनया न पुनरयतनया ततः शुद्ध एव न प्रायश्चित्तविषयोऽगीतार्थस्य त्वज्ञानतया दर्प्पेण प्रतिसेवमानस्य प्रायश्चित्तं यदि पुनः गीतार्थोपि दर्प्पेण प्रतिसेवते, कारणेप्ययतनया च तदा तुल्यामगीतार्थेन समं तस्य प्रायश्चित्तं । तथाचाह गीए दप्पा जए दोसा, गीते गीतार्थे दर्प्पेण प्रवर्तमाने प्रतिसेवनायामिति गम्यते कारणेपि प्रतिसेवनाया अयतमाने अगीतार्थेन तुल्यं तस्य प्रायश्चित्तमिति भावः, प्रतिसेव्यमाने तुल्ये वस्तुनि दर्प्पेणापि क्रियमाणायां प्रति सेवनायां यतनया प्रवृत्तौ न तुल्यं प्रायश्चित्तं, कारणे पुनर्यतनया प्रवर्त्तमानः शुद्ध एव न प्रायश्चित्तविषयः । तत्राचार्या उपाध्यायश्च नियमात् गीतार्था इति गीतार्थत्वापेक्षया समाः केवलं प्रतिसेव्यमानं वस्तुप्रतीत्य विषमाः भिक्षवो गीतार्थाऽगीतार्थाश्च भवंति प्रतिसेव्यमपि वस्त्वधिकृत्य भेद इति, वस्तुभेदतो गीतार्थत्वागीतार्थत्वतश्च पृथक् विभिन्नं विभिन्नं प्रायश्चित्तं, सहासहपुरुषाद्यपेक्षया तु तुल्येप्याभवति प्रायश्चित्ते पृथक् विभिन्नं विभिन्नं प्रायश्चित्तदानं तथाचाह -

**[भा. १७२]** दोसविहवानुरुवो लोए दंडोवि किमुत उत्तरिए ।
तित्थुच्छेदो इहरा निरानुकंपा नय विसोही ।।

**वृ-** दंडोवीत्यपिशब्दो भिन्नक्रमत्वात् लोकेपीत्येवं द्रष्टव्यः लोकेपि दंडो दोषानुरुपो विभवानुरुपश्च, तथाहि महत्यपराधे महान् दंडोऽल्पेऽल्पीयान् तथा समानेऽपि दोषेऽल्पधनस्याल्पो महाधनस्य महान् लोकेपि तावदेवं किमुत किंपुनरौत्तरिके लोकोत्तरसंबंधिनि व्यवहारे, तत्र सुतरां दोषसामर्थ्यानुरुपो दंडस्तस्य सकलजगदनुकंपायाः प्रधानत्वात् यदि पुनरल्पेपि दोषे महान् दंडो महत्यप्यल्पीयान् तथा यदि समानेप्यपराधे कृतकरणत्वमकृतकरणत्वं वाचार्योपाध्याययोर्भिक्षोरपि कृतकरणत्वमकृतकरणत्वमधिगतत्वं स्थिरत्वमस्थिरत्वं चानपेक्ष्य न तदनुरुपो दंडः स्यात् किंतु तुल्य एव, तदा व्यवस्थाया अभावतः संतानप्रवृत्त्यसंभवे तीर्थोच्छेदः स्यात्, तथा निरनुकंपा अनुकंपाया अभावः । प्रायश्चित्तदायकस्य असमर्थभिक्षुप्रभृतीनामनुग्रहात् न च तस्य प्रायश्चित्तदायकस्य विशोधिरप्रायश्चित्तस्य प्रायश्चित्तेप्यतिमात्रप्रायश्चित्तस्य दानतो महाऽशातनासंभवात् अप्पच्छित्ते य देइ पच्छित्तं पच्छित्ते आसायणा तस्स महतीउ, इति वचनात् ततः सापेक्षा आचार्यादयस्त्रिविधा उक्ताः अत्रैव प्रकारांतरमाह ।

**[भा. १७३]** अहवा कज्जा कज्जे जयाजयं ते य कोविदो गीयो; ।
दप्पाजातो निसेवे, अनुरुवं पावए दोसं ।।

**वृ-** अथवेति प्रकारांतरे गीतार्थः सकारणमपि जानाति । अकारणमपि जानाति, यतनामपि जानाति ।

अयतनामपि [illegible] एवं कार्याकार्ये [illegible] गीतार्थो [illegible] प्रतिसेवते । कारणेप्ययतनया तदा स दर्पायतनातो निषेवमाणोऽनुरूपं दर्पानुरूपमयतनारूपं दोषं प्रायश्चित्तं प्राप्नोति, दर्पाऽयतनानिष्पन्नं तस्मै प्रायश्चित्तं दीयते इति भावः ।

**[भा.१७४]** कप्पेय अकप्पम्मिय, जो पुन अविनिच्छितो अकज्जंपि ।
कज्जमिति सेवमाणो अदोसवंतो असढभावो ॥

**वृ-** यः पुनः कल्पेऽकल्पे च अविनिश्चितः किंकल्प्यं किमकल्प्यमिति विनिश्चयरहितः सोऽकार्यमपि अकरणीयमपि अकल्प्यमिति भावः कार्यमिति कल्पिकमिति बुध्या सेवमानोऽशठभावः अत्र हेतौ प्रथमाऽशठभावत्वाददोषवान् प्रायश्चित्तभाग् भवतीति भावः ।

**[भा.१७५]** जं वा दोसमयाणंतो हेहंभूतो निसेवई ।
निद्दोसवं केण हुज्जा, वियाणंतो समायारं ॥

**वृ-** हेहंभूतो नाम गुणदोषपरिज्ञानविकलोऽशठभावः स यं दोषमजानानो निषेवते प्रतिसेवते तमेव दोषं विजानानः कोविदो गीतार्थः आचरन् समाचरन् केन हेतुना निर्दोषवान् ? दोषस्याभावो निर्दोषं तदस्यास्तीति निर्दोषवान् दोषाभाववान् न भवेत् नैव भवतीत भावः । तीव्रदुष्टाध्यव्यवसायभावात् । न खलु जानानस्तीव्रदुष्टाध्यवसायमंतरेण तथा प्रवर्त्तते इति तदेवं दृष्टांतमभिधायाधुना दार्ष्टांतिकयोजनामाह -

**[भा.१७६]** एमेवय तुल्लंमिवि अवराहपयंमि वट्टिया दोवि ।
तत्थवि जहानुरूवं दलंति दंडं दुवेण्हंपि ॥

**वृ-** एवमेव अनेनैव प्रकारेण अनेनैव दृष्टांतेनेति भावः द्वावपि जनौ आस्तामेक इत्यपि शब्दार्थः । तुल्येपि समानेप्यपराधपदे वर्त्तितौ तत्रापि तुल्येप्यपराधपदे द्वयोरपि तयोर्यथानुरूपं गीतार्था-गीतार्थयतनासंहननविशेषानुरूपं दंडं दलयंति प्रयच्छन्ति, तस्मात् प्रायश्चित्तभेदतः प्रायश्चित्त-दानभेदतश्चाचार्यादिकस्त्रिविधो भेदः कृतः, तदेवमाचार्यादित्रिविधभेदसमर्थनायोक्तरूपदृष्टांतवशतो गीतार्थागीतार्थादिभेदतः आभवत् प्रायश्चित्तनानात्वं चोपदर्शितमिदानीमत एव दृष्टांतादवस्थाभेदतो गीतार्थे एव केवले शोधिनानात्वमुपदर्शयति ।

**[भा.१७८]** एसेवय दिट्ठंतो तिविहे गीयंमि विसोहिनाणत्ते ।
वत्थुसरिसो उ दंडो दिज्जइ लोएवि पुव्वुत्तं ॥

**वृ-** गीते गीतार्थे त्रिविधे त्रिप्रकारे बालतरुणवृद्धलक्षणे यत् शोधिनानात्वं तद्विषये एष एवानंतरोदितस्वरूपो दृष्टांतस्तथाहि यथाकल्प्यविधिपरिज्ञानविकलोऽकल्पनीयमपि कल्पनीयमिति बुद्ध्या प्रतिसेवमानो न दोषवान् भवति । कोविदस्तु कल्प्याकल्प्ये जानानोऽकल्पनीयं प्रतिसेवमानो दोषवान् एवमिहापि तुल्ये प्रतिसेव्यमाने वस्तुनि तरुणे प्रभूतं प्रायश्चित्तं समर्थत्वात् । बालवृद्धयोः स्तोकमसमर्थत्वात् न चैतदन्याय्यं, यतो लोकेपि वस्तुसदृशः पुरुषानुरूपो दंडो दीयते, तथाहि बाले वृद्धे च महत्यप्यपराधे करुणास्पदत्वात् स्तोको दंडः तरुणे महान्, एतच्च पुव्वुत्तमिति प्रागेवोक्तं दोसविहवानुरुवो इत्यादिना ततो न्याय्यमनंतरोदितमिति, संप्रत्याचार्योपाध्यायभिक्षूणामेव चिकित्साविषये विधिनानात्वं दर्शयति -

**[भा.१७८]** तिविहे तेगिच्छंमि उज्जुय वाउलणसाहुणा चेव ।

पन्नवणमनिच्छंते, दिट्ठंतो भंडिपोएहिं ।।

**वृ-** त्रिविधे त्रिप्रकारे आचार्योपाध्यायभिक्षुलक्षणे चिकित्स्यमाने गीतार्थे इति गम्यते, उज्जुयत्ति ऋजुकं स्फुटमेव व्यापृत साधुना व्यापृतक्रियाकथनं कर्त्तव्यं इयमत्र भावना आचार्याणामुपाध्यायानां गीतार्थानां च भिक्षूणां विचिकित्स्यमानानां यदि शुद्धं प्रासुकमेषणीयं लभ्यते, तदा समीचीनमेव न तत्र विचारः अथ प्रासुकमेषणीयं न लभ्यते, अवश्यं च चिकित्सा कर्त्तव्या, तदा ऽशुद्धमप्यानीय दीयते, तथाभूते च दीयमाने स्फुटमेव निवेद्यते, इदमेवंभूतमिति, तेषां गीतार्थत्वेनापरिणामदोषस्याति-परिणामदोषस्य चासंभवात् । अगीतार्थभिक्षोः पुनः शुद्धालाभे चिकित्सामशुद्धेन कुर्वंतो मुनिवृषभा यतनया कुर्वीत, न चाशुद्धं कथयंति । यदि पुनः कथयंत्ययतनया कुर्वंति, तदा सोऽपरिणामत्वादनिच्छन् यत् आगाढादि परितापनमनुभवति । तन्निमित्तं प्रायश्चित्तमापद्यते तेषां मुनिवृषभाणां यद्वाति-परिणामतया सोऽतिप्रसंगं कुर्यात्, तस्मान्न कथनीयं नाप्ययतना कर्त्तव्या, अथ कथमपि तेनागीतार्थेन भिक्षुणा ज्ञातं भवेत् यथा अकल्पिकमानीय मह्यं दीयते इति, तदा तदनिच्छन् प्रज्ञाप्यते तथाचाह पन्नवणमणिच्छंते इति अकल्पिकमनिच्छत्यगीतार्थे भिक्षौ प्रज्ञापना कर्त्तव्या । यथा ग्लानार्थं यदकल्पिकमपि यतनया सेव्यते, तत्र शुद्धो ग्लानो, यतनया प्रवृत्तेरल्पीयान् दोषोऽशुद्धग्रहणात् सोपि च पश्चात् प्रायश्चित्तेन शोधयिष्यते न चासावल्पीयान् दोषो नांगीकर्तव्यः । उत्तरकालं प्रभूतसंयमलाभात् । तथाहि चिकित्साकरणतः प्रगुणीभूतः सन्परिपालयिष्यति चिरकालं संयमं, संयमप्रभावतश्च कदाचित् गम्यते तद्भव एव मोक्षो, यदि पुनश्चिकित्सां न कारयिष्यसि । ततस्तदकरणतो मृतः सन्नसंयतो भविष्यसि, असंयतस्य च भूयान् कर्म्मबंधस्तस्मादल्पेन बहन्वेष्यतामेतद्विद्वत्ताया लक्षणं, उक्तं च, अप्पेण बहुमेसेज्जा एयं पंडियलक्खणमिति, एवं प्रज्ञापना तरुणे क्रियते, यः पुनः बालः स बालत्वात् यथा भणितं करोत्येव यस्तु वृद्धस्तरुणो वातिरोगग्रस्तोऽचिकित्सनीयः स प्रोत्साह्यते महानुभाव ! कुरु भक्तप्रत्याख्यानं, साधय ! पूर्वमहर्षिसेवितमर्थमेतज्जिनवचनाधिगमफलमिति, यदि पुनरेवमुत्साह्य-मानोपि न भक्तप्रत्याख्यानं कर्त्तुमिच्छति, तदा भंडीपोताभ्यां दृष्टांतः करणीयः, भंडीगंत्री, पोतः प्रवहणं, दृष्टांतकरणं चाग्रे स्वयमेव दर्शयिष्यति । एष गाथासमासार्थः सांप्रतमेनामेव गाथां विवृणोति ।।

**[भा.१७९]** सुद्धालाभे अगीते अजयणकरणकहणे भवे गुरुगा ।
कुज्जा व अति पसंगं, असेवमाणेव असमाही ।।

**वृ-** अगीते अगीतार्थे भिक्षौ शुद्धालाभे प्रासुकैषणीयालाभे अशुद्धेन चिकित्स्यमाने यदि अयतना क्रियते कथ्यते वा, तदा मुनिवृषभाणामयतनाकारिणां कथयतां प्रायश्चित्तं भवति, गुरुकाश्चत्वारो मासा गुरवः, इयमत्र भावना यदि अयतनाकरणतोऽकरणतो वा ज्ञानं भवति । यथा ममाशुद्धेन चिकित्सा क्रियते तदा तेषां मुनिवृषभाणां चत्वारो गुरुकाः एतच्चासामाचारीप्रवृत्तिनिषेधार्थं प्रायश्चित्तं, या पुनरनिच्छतोऽसमाधिप्रवृत्तेरागाढादिपरितापना तन्निष्पन्नमन्यदेव पृथगिति, यदिवा सोऽतिपरिणाम-कत्वादतिप्रसंगं कुर्यात् । अथवा चिकित्सायाः प्रतिषेधतोऽकल्पनीयमसेवमाने रोगवृद्धिवशादस-माधिस्तस्य स्यात् असमाहितस्य च कुगतिप्रपातस्तस्मात् तस्मिन् यतनया कर्त्तव्यं, न च कथनीयमिति, सांप्रतं यदुक्तं भंडीपोताभ्यां दृष्टांतः कर्त्तव्य इति । तत्र भंडीदृष्टांतं भावयति ।

**[भा.१८०]** जा एगदेसे अदढाउ भंडी, सीलप्पए साउ करेइ कज्जं ।
जा दुब्बला संठवियाविसंती न तंतु सीलंति विसन्न दारुं ।।

**वृ-** या भंडी गंत्री एकदेशे क्वचित् अदढा सा शीलाप्यते तस्याः परिशीलनं कार्यतं तुशब्दो यस्मादर्थे यतः सा तथाशीलिता सती करोति कार्यं, या पुनः संस्थापिता सती दुर्बला न कार्यकरणक्षमा तां विषन्नदारुं नैव तुशब्द एवकारार्थो भिन्नक्रमत्वादत्र संबध्यते, शीलयंति, कार्यकरणाक्षमत्वात् एष भंडीदृष्टांत एतदनुसारेण पोतदृष्टांतोपि भावनीयः। तद्यथा -

**[भा.१८१]** जो एगदेसे अदढा उ पोती, सीलप्पए सोउ करेइ कज्जं।
जो दुब्बलो संठवितोवि संतो न तंतु सीलंति विसन्नदारुं ॥

**वृ-** दार्ष्टांतिकयोजना त्वेवं, यदि प्रभूतमायुः संभाव्यते, प्रगुणीकृतश्च देहः संयमव्यापारेषु समर्थ इति ज्ञायते, तदा चिरकालं संयमपरिपालनाय युक्ता चिकित्सा, अल्पेन प्रभूतमन्वेषयेदिति वचनात्, यदा चायुः संदिग्धं न प्रगुणीकृतोपि देहः संयमव्यापारक्षमस्तदैवं पन्नापनानिष्फला चिकित्सेति न चिकित्सा कारयितुमुचितोति अन्यच्च -

**[भा.१८२]** संदेहियमारोग्गं, पउणोवि न पच्चलोनुजोगाणं।
इइ सेवंतो दप्पे वट्टइ नय सो तहा कज्जो ॥

**वृ-** संदिग्धमारोग्यप्रतिरोगग्रस्तत्वात् न च प्रगुणोपि प्रगुणीकृतोपि योगानां संयमव्यापाराणां करणे प्रत्यलः समर्थ इति जानानो यदि यतनयाप्यकल्प्यं प्रतिसेवते, तदा स दर्पे वर्त्तते, न च स तथारूपो सेवनाया दीर्घसंसारमूलत्वात् इति प्रज्ञाप्यते यदि पुनरेवमपि प्रज्ञाप्यमानो नावबुध्यते, तदा यतनया रूपेक्षितव्यं; यः पुनस्तरुणो मनाक् वृद्धो वा प्रगुणीकृतः सन् तपःसंयमादिषु प्रत्यलो भवितेति ज्ञायते, तदा तं चिकित्सामप्रतिपद्यमानं प्रत्येवं प्रज्ञापना ॥

**[भा.१८३]** कोहं अछित्तिं अदुवा अहीहं तवोविहाणसुय उज्जमिज्जं ॥
गणं वनीइएयसारविस्सं सालंबसेवी समुवेइ मोक्खं ॥

**वृ-** यो ग्लानः सन्नेवमवबुध्यते, समर्थो भूतः सन्नछित्तिं प्रभूतलोकप्रव्राजनादिना तीर्थाव्यवच्छेदं करिष्यामि। अदुवेति अथवा अहमध्येष्ये सूत्रतोऽर्थतश्च द्वादशांगं दर्शनप्रभावकाणि वा शास्त्राणि। यदिवा तपोलब्धिसमन्वितत्वात्तपोविधानेषु नानाप्रकारेषु उज्जमिस्सामि उद्यमिष्यामि उद्यमं करिष्यामि, गणं वा गच्छं वा नीत्या सूत्रोक्तया सारयिष्यामि गुणैः प्रवृद्धं करिष्यामि स एवं सालंबसेवी एतैरनंतरोदितैरालंबनैर्यतनया चिकित्सार्थमकल्पमपि प्रतिसेवमानः समुपैति प्राप्नोति मोक्षं सिद्धिमिति।

<u>व्यवहार सूत्रस्य पीठिका समाप्ता</u>

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता व्यवहारसूत्रस्य पीठिकायाः**
**[सनिर्युक्तिः] भाष्यं एवं मलयगिरि आचार्येण विरचिता टीका परिसमाप्ता।**

## उद्देशक : १

**वृ-** गतो नाम निष्पन्नो निक्षेपः; संप्रति सूत्रालापक निष्पन्नस्य निक्षेपस्यावसरः, सच सूत्रे सति भवति, सूत्रं चानुगमे, सचानुगमो द्विधा सूत्रानुगमो निर्युक्त्य नुगमश्च, तत्र निर्युक्त्य नुगमस्त्रिविधस्तद्यथा निक्षेप निर्युक्त्यनुगमः उपोद्घात निर्युक्त्यनुगमः सूत्र स्पर्शिक निर्युक्त्यनुगमश्च, निक्षेप निर्युक्त्य नुगमोऽनुगतः; सूत्र स्पर्शिक निर्युक्त्य नुगमो वक्ष्यते, उपोद्घात निर्युक्त्य नुगम स्त्वाभ्यां द्वार गाथाभ्यां समवगंतव्यः, तद्यथा -

उद्देसे निद्देसे य निग्गमे खित्तकालपुरिसेय ।
कारणपच्चयलक्खण नए समोयारणुमए ।।
किं कइविहं कस्स कहिंकेसुकहिंकेचिरं हवइ काले ।
कइसंतरमविरहियं भवागरिसफासणनिरुत्ती ।।

वृ- अनयोरर्थः आवश्यकटीका तोऽवसेयः, महार्थत्वात्‌सूत्रस्पर्शिक निर्युक्त्यनुगमस्तु सूत्रप्रवृत्तौ भवति, सूत्रं सूत्रानुगमे सचावसरप्राप्त एव युगपद्य सूत्रादयो व्रजंति । तथा चोक्तं -

सुत्तंसुत्तानुगमो सुत्तालावगततोनिक्खेवो ।
सुत्तफासिय निज्जुत्ति नवाय समगंतु वच्चंति ।।

विषय विभागः पुनरयममीषामवसातव्यः-

होइ कयत्थो वोत्तुं सपयच्छेयं भवे सुयानुगमो
सुत्तालावगनासो ।नामदिन्नासविनिओगं ।।

सुत्त फासिय निज्जुत्तिनियोगोसेसएपयत्थादी ।पायंसोच्चियनेगमनयादिनयगोयरोहोइ ।। अत्राक्षेपपरिहारांसामायिकाध्ययने निरुपिताविति, नेहविलायेते, सूत्रानुगमेचाऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं तच्चेदं सूत्रं -

*(मू. १) जे भिक्खू मासियं परिहारठाणं पडिसेवित्ता आलोएज्जा अपलिउंचियं आलोएमाणस्स मासियं, पलिउंचियं आलोएमाणस्सदोमासियं ॥*

वृ- अस्य व्याख्या । तल्लक्षणंचेदं संहिताचपदंचैव पदार्थः पदविग्रहः, चालनाप्रत्यवस्थानं व्याख्यासूत्रस्यपड्विधा । तत्रास्खलितपदोच्चारणंसंहिता साचैवंजेभिक्खूमासियमित्यादिपाठः । अधुनापदानि -यः भिक्षुर्मासिकंपरिहारस्थानंप्रतिसेव्यआलोचयेत् ।अपरिकुंच्यआलोचयमानस्यमासिकं परिकुंच्य आलोचयमानस्यद्वैमासिकमितिअधुना पदार्थः ।। अस्मिन्प्रस्तावे यत्पीठिकायामुक्तं "सुत्तत्थो" इतिद्वारम् तदापतितम् य इति सर्वनाम अनिर्दिष्टनाम्नानिर्देशे, भिक्षियाञ्चायां ।यमनियमव्यवस्थितः कृतकारित्वानुमोदितपरिहारेण भिक्षतेइत्येवंशीलोभिक्षुःसन् भिक्षासंसरुरितिउ-प्रत्ययः । यदिवानिरुक्तीशब्दव्युत्पत्तिः क्षुधबुभुक्षायां अध्यतिबुभुक्षतेभोक्तुमिच्छति, चतुर्गतिकमपि-संसारमस्मादितिसंपदादित्वात्क्षुत्‌अष्टप्रकारंकर्म्मतंज्ञानदर्शन चारित्र तपोभिर्भिनत्तीतिभिक्षुः पृषोदरादय इतीष्टरुपनिष्पत्तिः ।मासेन निर्वृत्तंमासिकं, ध्रञ्तिष्ठंति जंतवःकर्म्मकलुषिताअस्मिन्नितिस्थानं करणाधारे इत्यनटपरिहारःस्थानंपरिहारस्थानंविशेषणसमासः पडिसेवितोत्ति प्रतिशब्दोभृशार्थेप्रकर्षेवा सेवित्वा प्रतिसेव्यगतिक्रन्यस्तत्पुरुष इतिसमासः अनञक्त्वोयबादेशः सूत्रेयबभावः प्राकृतत्वात् ।आलोचयेत्‌लोचृदर्शने चुरादित्वात्णिच आङ्मर्यादायांआमर्यादया जहबालो जंपंतोइत्यादिरुपयालोचयेत्-यथात्मनस्तथागुरोः प्रकटीकुर्यात् यच्छब्दस्तच्छब्दापेक्षोऽतोऽत्रतस्येतिसामर्थ्यादवसीयते, तस्य अपलिउंचियत्ति कुचु कुंचु कौटिल्याअल्पाल्पीभावयोः परिसर्वतोभावेपरिसमंतात कुंचित्वा-कौटिल्यमाचर्यपरिकुंच्यसूत्रेङश्चक्रपीडादीनामिति विकल्पवचनतोरेफस्यलकारभावः न परिकुंच्य-अपरिकुंच्य आलोचयमानस्यमासिकंलघुकं गुरुकंवा, प्रतिसेवनानुसारतः प्रायश्चित्तंदद्यादितिशेषः, परिकुंच्यकौटिल्यमाचर्य आलोचयमानस्यद्वैमासिकंदद्यात्मायाकरणतोऽधिकस्यगुरुमासस्यभावात् तथाहियः प्रतिकुंचयन्नालोचयतितस्ययदापन्नंदयितेऽन्यश्चमायाप्रत्ययोगुरुकोमासः इति उक्तःपदार्थः

अधुनापदविग्रहः, सचसमासभाक्षु पदेषुभवतीति, परिहारस्थानमित्यत्रपरिकुंच्यत्यत्र च द्रष्टव्यः । स च यथाभवति तथादर्शित एव संप्रति चालनावसरस्तत्रचादेकआह यदिपरिहारएवस्थानं, ततोद्वयोरप्येकार्थत्वात् परिहारशब्दस्यैवग्रहणमुचितं, परमस्योक्तार्थत्वादप्रयोगः । उक्तार्थानामप्रयोगः। इति न्यायात् अत्राचार्यः प्रत्यवस्थानं करोति, स्थानशब्दोनामशब्दशक्तिस्वाभाव्यादनेकविशेषाधार-सामान्याभिधायी, तेनएतत् ध्वनयति । अनेकप्रकाराणिनाममासिकप्रायश्चित्तानि, अनेकप्रकारेण च मासिकेन प्रायश्चित्तेनोपन्यस्तेन प्रयोजनं, कल्पाध्ययनोक्तसकलमासिकप्रायश्चित्तविषयदानालोचन-योरभिधातुमुपक्रमात् । अतोअत्रस्थानग्रहणं पुनरप्याह, किं कारणं मासिकप्रायश्चित्तमधिकृत्यादिसूत्रो-पनिबंधः कृतः, अथमतंजघन्यमिदंप्रायश्चित्तमत एतदधिकृत्यकृतोजघन्यमध्यमोत्कृष्टेषुप्रथमतो-जघन्यस्याभिधातुमुचितत्वात् तदसम्यक्, रात्रिंदिवपंचकस्यजघन्यत्वात् । अत्रभाष्यकृत्प्रत्यवस्था-नार्थमिदमाह -

[भा. १८४] दुइटोमिह पलंबे, भणियसो इह पसिद्ध कप्पे ।
तस्सपुनइमं दानंभणियंआलोयणविहीय ।।

वृ- कल्पाध्ययनेआदिसूत्रेआमेताल पलंबे इत्यादिरूपेप्रलंबते । प्रकर्षेण वृद्धिंयातिवृक्षोऽस्मा-दितिप्रलंबंमूलं । अकर्तरीतिधञ प्रत्ययः तस्मिन् उपलक्षणमेतत् तलोवृक्षस्तत्रभवंतालं तालवृक्षफलं तस्मिन्नपिचद्विधातोभिन्ने द्रव्यतोपि भावतोपि भिन्ने, मासकोशोधिरुपवर्णिता मासिकं प्रायश्चित्तमुपवर्णितमिति भावः । अथ चा स्मिनव्यवहाराध्ययनोक्तस्यप्रायश्चित्तस्यदानविधिरालोचना-विधिश्चवक्तुमुपक्रांतस्ततोयदादौकल्पाध्ययने मासिकं प्रायश्चित्तमुक्तं, तस्सपुन इत्यादि पुनः शब्दोविशेषणे स चेमं विशेषं द्योतयति तत्रहि सामान्यतएव मासिकं प्रायश्चित्तमुक्तंनदानविधिरा-लोचना-विधिर्वेति, इहपुनर्व्यवहारेनस्य मासिकस्यप्रायश्चित्तस्येदंदानं भणितमालोचनाविधिश्च, न केवल-मस्यैवमासिकस्य प्रायश्चित्तस्य, किंत्वन्येषामपिमासिकप्रायश्चित्तानां तत्रोक्तानां सामान्ये नसूत्रस्य-प्रवृत्तत्वात् तथा चाह -

[भा. १८५] एमेवसेसएसुवि सुत्तेसुकप्पेनाम अज्झयणे
जहिं मासिय आवत्ती । तीसेदानं इहं भणियं ।।

वृ- एवमेव अनेनैव प्रकारेण कल्पनाम्नि अध्ययने यानि शेषाणि सूत्राणि सपरिक्खेवे अबाहिरिए कप्पइहेमंतगिम्हासु मासं वत्थए, जइमासकप्पंभिंदइ मास लहु एवं निग्गंथीणवि तहा अत्रस परिक्खेवे इति सपरिक्षेपेवृत्ति वरंडकादिसमन्वितेअबाह्येग्रामस्या त्वंतमबहिर्भूतेउपाश्रये इति गम्यतेवत्थए इति वस्तुंशेषंसुगमं, तथा अभिनिव्वगडाए तइएभंगे मासलहु । अत्र अभिनिव्वगडाएइति अभिनिर्व्याकृतायां पृथग्विभिन्नद्वारायां वसतावित्यर्थः एवंशेषाण्यपिसूत्राण्युच्चारणीयानि तेषुशेषेष्वपिसूत्रेषुगहिंति-अगृहीतवीप्स्योप्येषशब्दःसामर्थ्यात् वीप्स्यांगमयतिशेषः सूत्राणामतिप्रभूतत्वात् । ततोयमर्थः तत्रयत्रमासिका आपत्तिरुक्ता तीसेइति । अत्रापिवीप्सार्थोद्रष्टव्यः तच्छब्दस्ययच्छब्दापेक्षत्वात् । तस्यास्तस्याइहआदिसूत्रेदानंभणितमुपलक्षणत्वात् । आलोचनाविधिश्च ।

[भा. १८६] छट्टअपच्छिमसुत्तेजिनथेराणंठिई समक्खाया ।
तहियंपिहोइमासो अमेरतोसोउनिष्फन्नो ।।

वृ- पष्ठेषष्ठोद्देशके अपश्चिमे सूत्रे अंतिमसूत्रे जिनकल्पिकानांस्थविराणां च स्थितिः

समाख्यातातत्रापियदिजिनानांस्थविराणां च स्वकल्पस्थित्यनुरूपसामाचार्यतिक्रमस्ततोभवति मासोमासलघुप्रायश्चित्तंतथाचाह अमेरतोसां अनिष्पन्न स्तस्याप्यस्मिन्नादिसूत्रेदानमालोचना-विधिश्चोक्तः । अतोमासिकंप्रायश्चित्तमधिकृत्यादिसूत्रोपनिबंधः कृतः एषः सूत्रार्थः अधुनानिर्युक्ति-कृत्विस्तरं वक्तुकामआह -

[भा.१८७] जेत्तिवसेत्तिकेत्तिवनिद्देसाहोंतिएवमादीया ।
भिक्खुस्सपरुवणया जेत्ति कएहोइ निद्देसा ।।

वृ- जेइतिवासेइतिवाकेइतिवा कियंतोनामनामग्राहंदर्शयितुंशक्यंते, ततआह - एवमादिकाआ-दिशब्दादेगइत्यादिपरिग्रहादनिर्देशाभवंति । सामान्यार्थेइतिगम्यते तत्र जे इति निर्देशो यथा अत्रैव-सूत्रेअथवा जेणं भंते, अपरं असंतएणं अब्भक्खाणेणं अब्भक्खाइज्जाइत्यादि से इति निर्देशो यथासे गामंसि वा । नगरंसिवा । इत्यादि, के इति यथाके आगच्छइ दित्तरुवेइत्यादि सामान्यंचविशेषनिष्ट-मतो जे इति निर्देशेकृतेभिक्षोर्भवति निर्देशो, योभिक्षुर्नान्यइतितस्यचभिक्षोस्तथानिर्दिष्टस्य-प्ररुपणा-नामादिनिक्षेपरुपकर्त्तव्या सूत्रस्पर्शिकनिर्युक्तेरवसरप्राप्तत्वात् तामेवाह ।।

[भा.१८८] नामंठवणाभिक्खू दव्वभिक्खूभावभिक्खूय ।
दव्वेसरीरभवितो भावेणयसंजतोभिक्खू ।।

वृ- भिक्षुशब्दस्यनिक्षेपश्चतुष्कोनामंति भिक्षुशब्दस्यात्रापिसंबंधात्नामभिक्षुः द्रव्यभिक्षुश्चचशब्दौ स्वगतानेकभेदसूचकौ तत्र यस्यपुरुषस्यभिक्षुरितिनामसनाम्नाभिक्षुर्नामभिक्षुर्यदिवा नामनामवतोरभेदो-पचारात्नामासौभिक्षुश्चनामभिक्षुरितिव्युत्पत्तेर्नामभिक्षुः स्थापनया आकारमात्रेण असत्कल्पन-याभिक्षुस्थापनाभिक्षुः चित्रकर्मादिलिखितोबुद्धिकल्पितोवाऽक्षादिः द्रव्यभिक्षुर्द्विधा आगमतोनो-आगमतश्च तत्रागमतोज्ञातातत्रचानुपयुक्तोऽनुपयोगोद्रव्यमितिवचनात् नोआगमतस्त्रिविधस्तद्यथाज्ञ-शरीरं, भव्यशरीरं, तदव्यतिरिक्तश्च तत्रभिक्षुपदार्थज्ञस्ययत्शरीरंव्यपगतजीवितंतत् शरीरंद्रव्यभिक्षुर्भूत-भावत्वात्, यस्तु वालको नेदानींभिक्षुशब्दार्थमवबुध्यते । अथचायत्यांतेनैवशरीरेणभोत्स्यते, तस्ययत् शरीरं तत् भव्यशरीरं द्रव्यभिक्षुः भाविभावत्वात् । तद्व्यतिरिक्तस्त्रिधा तद्यथा एकभविकोवद्धायुष्कः अभिमुखनामगोत्रश्च तत्रएकभविकोनामयोनैरयिकस्तिर्यङ्मनुष्योदेवोवाऽनंतरभवेभिक्षुर्भावी, वद्धायुष्कोनामयेनभिक्षुपर्यायनिमित्तमायुर्वद्धं, अभिमुखनामगोत्रो यस्यभिक्षुपर्यायप्रवर्त्तना-भिमुखेनामगोत्रकर्म्मणीसचार्थदेशेत्रेमनुष्यभवेभाविभिक्षुपर्याये समुत्पद्यमानः । यदिवास्वजनधनादि-परित्यज्यगुरुसमीपेप्रव्रज्याप्रतिपत्त्यर्थंस्वगृहात्विनिर्गच्छन्तथाचाहदव्वेसरीरभवितोत्ति द्रव्येइति-द्वारपरामर्शः । द्रव्यभिक्षुर्नोआगमतो इतिगम्यतेइति, शरीरत्तिशरीरग्रहणेनज्ञशरीरंभव्यशरीरंचपरिगृहीतो भवियत्तिभव्योभावीत्यनर्थांतरं भावीचत्रिविधपर्यायइतितद्ग्रहणेएकभविकादित्रिभेदपरिग्रहः । भावभिक्षुर्द्विधाआगमतोनोआगमतश्च । आगमतोभिक्षुशब्दार्थस्यज्ञातातत्रचोपयुक्तः उपयोगोभाव-निक्षेपइतिवचनात्नोआगमतः संयतस्तथा चाह ।। भावेनउसंजतो भिक्खू भावेन भिक्षुस्तुशब्दोविशेष-णार्थः । सचामुं विशेषंद्योतयति नो आगमतः संयतः सम्यक् त्रिविधंत्रिविधेनसमस्त सावद्यादुपरतः । अत्रैवनोआगमतो भावभिक्षुर्भिक्षणशीलोभिक्षुरिति व्युत्पत्तिमधिकृत्याक्षेपपरिहारावभिधित्सुराह -

[भा.१८९] भिक्खण सीलोभिक्खू, अन्नेविनतेअननवित्तित्ता ।
निप्फिसिएणंनायंपिसियालंभेणसेसाउ ।।

**वृ-** ननुयदेतत्त्वयोक्तं, भिक्षणशीलोभिक्षुरितितदसमीचीनमतिव्याप्तिदोषप्रसंगात् । तथाहि-भिक्षुरित्युच्यमानेऽन्येपिरक्तपटादयोनोआगमतोभावभिक्षवः प्राप्नुवंति तेषामपि, भिक्षाजीवितया-भिक्षणशीलत्वात् । नचैतदिष्यते तस्मादतिव्याप्तिर्भावभिक्षुलक्षणस्यदोषः । अत्रसूरिराह नतेरक्त-पटभृतयोभिक्षवः कुलइत्याह - अनन्यवृत्तित्वात्नविद्यतेअन्याभिक्षा मात्रात्व्यतिरिक्तावृत्तिवर्त्तनं-येषां तेअनन्यवृत्तयस्तद्भावस्तत्वंतस्मादनन्यगतिकत्वदित्यर्थः किमुक्तंभवतियदा आधाकर्मि-कर्मौद्देशिकमभ्याहृतं वा नलभंते तदा अनन्यगतिकयाभिक्षापरिभ्रमणशीलास्ततो नतेभिक्षवः इयमत्रभावना, द्वेशब्दस्यनिमित्ते तद्यथा व्युत्पत्तिनिमित्तं प्रवृत्ति निमित्तं च यथागोशब्दस्य । तथा-हिगोशब्दस्यव्युत्पत्तिनिमित्तगमनक्रियागच्छतीतिगौरितिव्युत्पादनात् तेनचगमनेनैकार्थिसम-वायितयायदुपलक्षितंसास्नादिमत्वंतत्प्रवृत्तिनिमित्तंतेनचगच्छति अगच्छति वागोपिंडेगोशब्दः प्रवर्त्तते उभय्यामप्यवस्थायांप्रवृत्तिनिमित्तभावात्अश्वादौतु न प्रवर्त्तते । यथोक्तरूपस्यप्रवृत्तिनिमित्तस्यतत्रा-भावात । एवमत्रापिभिक्षुशब्दस्यद्वेनिमित्ते, व्युत्पत्तिनिमित्तं प्रवत्तिनिमित्तं च तत्र भिक्षणंव्युत्पत्ति-निमित्तं भिक्षणे इत्येवंशीलो भिक्षुरिति व्युत्पत्तेः तेन च भिक्षणेनैकार्थसमवायितया यदुपलक्षितमिह-परलोकाशंसाविप्रमुक्ततया यमनियमेषुव्यवस्थितत्वंतत् प्रवृत्तिनिमित्तं तेनभिक्षमाणे अभिक्षमाणे वाभिक्षौ भिक्षुशब्दः प्रवर्त्तते, उभय्यामपि अवस्थायां प्रवृत्तिनिमित्तसद्भावात्; रक्तपटादौतुन प्रवर्त्तते, नवकोट्य परिशुद्धान्नभोजितयातेषुयथोक्त रूपस्यप्रवृत्तिनिमित्तस्याभावात्, अत्रार्थेज्ञातमुदाहरणं कर्त्तव्यं, पिशितालाभेन यो निःपिशित स्तेनयथा कोऽपि ब्रुयात् यावत् मांसं न लभेतावदहं निःपिशितः पिशितव्रती ॥

**[भा.१९०]** अविहिंसा बंभयारी, पोसहिय अमज्जमंसियाचोरा ॥
सतिलंभे परिच्चाई होंतितदक्खानसेसाउ ॥

**वृ-** कोपि भाषेत अहमहिंसावृत्तिर्यावन् मृगादीन् न पश्यामि, । अन्यः कोप्येवंब्रूते अहं ब्रह्मचारी यावन्मम स्त्री न संपद्यते अथवा कोप्येवमाह । अहमाहारपोषधीयावन्ममाहारोन संपद्यते, यथावा कोपिवदेत् अहम्मद्यमांसवृत्तिर्यावत् मद्यमांसे न लभे यथा वा कोपि नियमं प्रतिपद्यते । अचोरवृत्तिरहंयावत् परस्यचिछद्रं न पश्यामि इतिएते यथा पिशिताद्य लाभेन निःपिशितादयोनाम पिशिवव्रत्तादयः व्रतं च सति असतिवावस्तुनि तदिच्छापरित्यागतस्तन्निवृत्तिः निः पिशितादीनां तुपिशितादिष्विच्छा सततानुबंधिनीततो नतेपिशितव्रत्यादयः व्रतिशब्दप्रवृत्तिनिमित्ताभावात् । तथा चाह सति लंभे इत्यादि सति विवक्षितस्य पिशितादेर्वस्तुनो लाभेपितत्परित्यागिनस्ते तदाख्या भवंति सत्यपिवस्तुनो लाभेतत्परित्यागतः सत्यसतिवावस्तुनितद्विपर्यच्छापरित्यागात् शेषास्त्वनंतरोदिता निपिशितादयोन तदाख्यापिशिताद्य लाभेपितद्विषयेच्छा निवृत्त्यभावात् एवं रक्तपटादयो पिनभिक्षवः पचन पाचनादिनवकोटीविषयेच्छा निवृत्त्यभावात् तदभावश्चाधाकर्म्मादिष्वपि प्रवृत्तेः तदेवं निःपिशितादि दृष्टांतोपन्यासेन रक्तपटादिषु यथोक्तरूपप्रवृत्ति निमित्ताभावतो भिक्षुशब्द प्रवृत्त्यभावः उक्तः । अथवा किमेतैरुपन्यस्तैर्दृष्टांतैर्भिक्षुप्रवृत्ते जगत्प्रसिद्धायास्तेषु साक्षादभाव दर्शनतएव भिक्षुशब्द प्रवृत्यभावस्य सिद्धत्वात् तथाचाह -

**[भा.१९१]** अहवाएसणासुद्धं जहागिहणंतिसाहुणो ।
भिक्खं नेवकुलिंगत्था, भिक्खजीवीविते जदि ॥

वृ- अथवेतिप्रकारांतरद्योतने, तच्चप्रकारांतरं पातनिकायामेवभावितं, तद्यद्यपिरक्तपटादयोभिक्षाजीविनस्तथापि यथासाधवः एषणाशुद्धं एषणादोषैः शंकितादिभिरुपलक्षणमेतत्, उद्गमदोषैराधा कर्म्मादिभिरुत्पादनादोषैर्धात्री दूत्यादिभि; परिशुद्धां भिक्षांगृह्णंति नैवममुनाप्रकारेण कुलिंगस्थाः कुत्सितलिंगधारिणोरक्त पटादयस्ततो भिक्षुवृत्तेर्जगत्प्रसिद्धाया स्तेष्वभावतोनते भिक्षवस्तथाचाह -

**[भा.१९२]** दगमुद्देसियंचेव कंदमूलफलाणि य सयं गाहा ।
परातोय गिण्हंता कहंभिक्खुणो ।।

वृ- दकमुदकंसचित्तं तडागादिगतं उद्देसिकमुद्दिष्टकृत कर्म्मभेदमुपलक्षणमेतत् आधाकर्म्मादिच तथा कंदमूलफलानिच स्वयमात्मना गृह्णंतीतिस्वयंग्राहा, धा ज्वलादिइणोभूग्रहात्मार्णः इति वैकल्पिको णप्रत्ययः स्वयं गृहणंत इत्यर्थः, परतश्चगृहणंतः कथं भिक्षवः, भिक्षावृत्तेरभावात् । अथकासाजगत्प्रसिद्धा भिक्षुवृत्तिर्यदभावान्नते भिक्षवइति भिक्षुवृत्तिमुपदर्शयति -

**[भा.१९३]** अचिता एसणिज्ञा यमियाकाले परिक्खिया ।
जहालद्धा विसुद्धाय एसावित्तीय भिक्खुणो ।।

वृ- अचित्ताप्रासुकानतुसचित्तामिश्रावाएषणीया आधाकर्म्मादि दोषरहिता मिता एकत्रिंशदादिकवल प्रमाणतः परिमिताकालदिवा, अथवातृतीयस्यां पौरुष्यां, परीक्षा दायकादिदोष विशुद्धा, यथा लब्धासंयोजनादि दोषरहिता, विशुद्धा परिभोगकाले रागद्वेषाकरणतोअंगारादि दोषरहिता, एवं रुपा या सदाभिक्षाएषाभिक्षूणां वृतिः, साचरक्तपटादिषुसर्वथानास्तीति तेषु भिक्षुत्वाभावतोनातिप्रसंगः, तदेव भिक्षणशीलोभिक्षुरितिव्युत्पत्तौयदतिप्रसंगापादनं परेणकृतंतदपाकृतं, क्षुधंभिनत्ति इतिभिक्षुरितिनिर्वचने तु परस्यानवकाशएवकेवलं किंचिद्वक्तव्यमस्तीतितद्भिक्षुराह -

**[भा.१९४]** दव्वेयभावभेयग, भेयणभेत्तव्वयंचतिविहं तु ।
नाणाइभावभेचण कम्मक्खुहे गहुय भेज्ञं ।।

वृ- क्षुधं भिनत्तीतिभिक्षुरितिव्युत्पत्याभिक्षुर्भेदक उक्तो, भेदकोनामभिदिक्रियाकर्त्ताभिदिक्रिया च सकर्म्मिका, सकर्म्मिकायाश्च क्रियायाः कर्त्ताकरणकर्म्मव्यतिरेकेण न भवतीति तद्ग्रहणेनभेदनं भेत्तव्यमितिद्वयंसूचित्तं, एतच्च भेदकभेदनभेत्तव्यरुपंवस्तुनिकुर्वंत्रिविधमपि, तु शब्दोऽपि शब्दार्थः त्रिभेदमपिप्रत्येकं द्विधा तद्यथा दव्वेयभावेति, च शब्दोभिन्नक्रमः द्रव्यतोभावतश्चेत्यर्थः तथाहिभेदकोद्विधाद्रव्यस्यभावस्य च, भेदनमपि द्विधाद्रव्यस्यभावस्यच, भेत्तव्यमपिद्विधाद्रव्यरुपं, भावरुपं च। तत्रभेदकोरथकारादिर्द्रव्यस्यभेदनं परश्वादि द्रव्यंभेत्तव्यं काष्टं भावस्यभेदकोभिक्षुर्भावस्यभेदनानि-ज्ञानादीनि भावभेत्तव्यंकर्म्मतथाचाह - नाणादीत्यादिज्ञानादि आदिशब्दात्दर्शनचारित्रपरिग्रहः भाव-भेदनं भेद्यं भावत इति च संबध्यतेकर्मकर्म्मक्षुध इति एकार्थं । तथा चोक्तं । कम्मंतिवा खुहंतिवा कलुसंतिवा वज्ञंतिवावेरंति वा पंकोतिवा ।मलोत्तिवा एएएगट्ठियाइति; भिक्षोरपिशक्रपुरंदरादिवदमून्ये-कार्थिकानिभिक्षुः यतिः तपस्वीभावांत इति तथा चैतेषांव्युत्पत्तिमाह -

**[भा.१९५]** भिंदंतोयाविखुहंभिक्खू जयमाणगोजई होइ ।
तवसंजमेतवस्सीभवखवंतोभवंतोय ।।

वृ- क्षुधमष्टप्रकारंकर्म्मभिंदानोभिक्षुः यतेप्रयत्ने संयमयोगेषुयतमानःप्रयत्नवान् यतिः, तपः

संयमेतपःप्रधान संयमेवर्त्तमानस्तपस्वीतपोऽस्यास्तीतितपस्वीतिव्यूत्पत्तेः भवं नारकादि भवं क्षपयन् भवान्तः भवमंतयति भवस्यांतं करोतीतिव्युत्पत्तेः अनेन चनोआगमतो भावभिक्षुणाधिकारः भिक्षुरिति गतमिदानीं मासिकमित्यत्रयोमासशब्दस्तन्निपप्ररुपणार्थमाह -

[भा.१९६] नामंठवणादविए खित्तेकालेतहेवभावेय
मासस्सपरुवणया पगयंपुनकालमासेण ।।

वृ- नामंति मासशब्दसंबंधात् नाममासः एवंस्थापनामासः दविएत्ति द्रव्यमासः एवं क्षेत्रमासः कालमासोभावमासश्च एषाषड्‌विधा मासस्यप्ररुपणता प्ररुपणस्य प्ररुपणा शब्दस्यभावःप्रवृत्तिनिमित्तं प्ररुपणताप्ररुपणेत्यर्थः । प्रकृतमधिकारःपुनरत्रकालमासेन एषगाथा संक्षेपार्थः । सांप्रतमेनामेवगाथां विवरीषुर्नामस्थापनेसुप्रतीतत्त्वादनादृत्यद्रव्याख्यानार्थमाह -

[भा.१९७] दव्वेभवेनिव्वत्तिओयखेत्तंमि जमिवएननया ।
कालेजहि वणिजइनक्खत्तादीवपंचविहो ।।

वृ- द्रव्यमासोद्विधा आगमतो नोआगमतश्च तत्रागमतोमासशब्दार्थज्ञातातत्रचानुपयुक्तः । नोआगमतस्त्रिविधस्तद्यथा ज्ञशरीरभव्यशरीर तदव्यतिरिक्तश्च तत्र ज्ञशरीरभव्यशरीरेप्राग्वत् । तद्‌व्यतिरिक्तमाह दव्वेभवोनिव्वत्तिओत्ति द्रव्येमासो, भव्यइति भावि एकभविकादि इहमास इतिरुपंप्राकृतेषशब्दस्यापिभवति, ततएकभविकादिरत्रमाषोद्रष्टव्यः तत्र एकभविको नाम योदेवोमनुष्यस्तिर्यङ्‌वाअनंतरमुध्धृत्यमाषोभविष्यति, बद्धायुष्कोयेनमापभवायुर्बद्धं । अभिमुखनामगोत्रोयो मापबावेसमुत्पत्तुकामःसमवहतःस्वदेशान् तत्रविक्षिपन्वर्त्तते । अथवा-तद्‌व्यतिरिक्तोद्रव्यमाषोद्विधा निवत्तिओयत्ति मूलगुण निवर्तनानिवर्तितःउत्तरगुणनिर्वर्त्त-नानिर्वर्तितश्चतत्रमूलगुणनिर्वर्तिता नामयेनजीवेनतत्प्रथमतयामापभवानुगतनामगोत्रकर्म्मोद-यतोमापद्रव्यप्रायोग्यानि द्रव्याणिगृहीतानि उत्तरगुणनिर्वर्तनानिर्वर्तितोमापस्तंवश्चित्रकर्म्मणिलिखितः, खेत्तंमीत्यादि यस्मिन् क्षेत्रे मासस्यवर्णनासमासक्षेत्रप्राधान्यविवक्षायांतत्क्षेत्रमासइत्यपिद्रष्टव्यं । तथायत्रकालेयोमासोवर्ण्यतेसकालप्रदानताविवक्षणात्तत्कालमासः । अथवामासः श्रावणभाद्रप-दादिकः । यदिवा स्वलक्षणनिष्पन्नोनाक्षत्रादिकः पंचविधः पंचभेदः कालमासः तानेवभेदानुपदर्शयति

[भा.१९८] नक्खत्ते चंदेयाउ उ, आदिच्चेय होइ बोधव्वो .
अभिवड्डिएयतत्तो पंचविधो कालमासोउ ।।

वृ- नक्षत्रेषुभवानाक्षत्रः किमुक्तंभवति चंद्रश्चारंचरन्यावताकालेनाभिजितंआरभ्योत्तरषाढानक्षत्र-पर्यंतं गच्छति । तत्कालप्रमाणोनाक्षत्रोमासः । यदिवा चंद्रस्य नक्षत्रमंडलेपरिवर्त्तनतो निष्पन्न इत्यु-पचारतोमासोपिनक्षत्रम्, तथाचंदेयाइति चंद्रेभवश्चांद्रःयुगादौश्रावणेमासेबहुलपक्षप्रतिपद-आरभ्ययावत्पौर्णमासी परिसमाप्तिस्तावत्कालप्रमाणश्चांद्रोमासः एकपौर्णमासी परावर्त्तश्चांद्रोमास इति यावत् अथवा चंद्रचारनिष्पन्नत्वादुपचारतो मासोपि चंद्रः । चः समुच्चये, दीर्घत्वमार्षत्वात् उउइतिऋतुःऋःसचकिल लोकरुढ्यापष्ट्यहोरात्रप्रमाणो द्विमासात्मकस्तस्याद्धमपिमा-सोऽवयवेसमुदायोपचारात्ऋतुरेवार्धात्परिपूर्नत्रिंशदहोरात्रप्रमाणः एषएवऋतुमासः, । कर्म्ममासइतिवा सावनमासइतिवा व्यवह्रियते, उक्तंच एसचेव उउमासो कम्ममासोसावणमासोभन्नइइति । आदित्यस्यायमादित्यः । पत्युत्तरपदयमादित्यदितेर्ण्योऽणपवादोवेतिण्यप्रत्ययः, व्यंजनात्‌यम्यन्तस्य-

सरुपेवा इतिपाक्षिकस्य एकस्य यकारस्यलोपः । स चैकस्य दक्षिणायनस्योत्तरायणस्य वा त्र्यशीत्यधि-कदिनशतप्रमाणस्य षष्ठभागमानः यदि वा आदित्य चार निष्पन्नत्वादुपचारात्तोमासोप्यादित्यः, अभिवड्ढिए यतत्तो इति ततश्चतुर्थादादित्यान् मासादनंतरपंचमोमासोऽभिवर्द्धितः, अभिवर्द्धितोनाम-मुख्यतस्त्रयो-दशचंद्रमासप्रमाणः संवत्सरद्वादशचंद्रमासप्रमाणात्संवत्सरादेकेन मासेनाभिवर्द्धितत्वात्, परंत द्वादश-भागप्रमाण ओमासोप्यवयवेसमुदायोपचारादभिवर्द्धितः एषपंचविधः कालमासः तुः पुरणार्थः तदेव-मुक्तानामतोनाक्षत्रादयः पंचापिमासाः सांप्रतमेषामेव मासानां दिनपरिमाणमभिधित्सुस्तदानयनाय करणमाह -

**[भा.१९९]** रिक्खाईमासाणं करणमिणमंतुआणणाबाओ ।
जुगदिनरासिंठाविय अट्ठारसयाइंतीसाइं ।।

**वृ**- ऋक्षेषुचंद्रस्यपरिवर्त्तनतोमासोप्याधेये आधारोपचारात्ऋक्षः ऋक्षआदिर्येषांतेऋक्षादयः । आदिशब्दात्चंद्रमासादिपरिग्रहः । तेषामृक्षादीनां मासानामानयनोपायकरणमिदं वक्ष्यमाणं तदेवाह जुगदिनेत्यादि युगेचंद्राभिवर्द्धित संवत्सरप्रमाणे दिन राशिरहोरात्र राशियुंगादिनराशिस्तंस्थापयित्वा-कियत्प्रमाणमित्याहअष्टादशशतानित्रिंशानित्रिंशदधिकानिएतावान् दिनराशिर्युगे भवतीति कथमवसीयतेइतिचेत् ? उच्यते, इहसूर्यस्यदक्षिणुत्तरंवा अयनं त्र्यशीत्यधिकदिनशतात्मकंयुगेच पंचदक्षिणायनानिपंचोत्तरायनानि सर्व संख्यया दशायनानि ततस्त्रयशीत्यधिकं दिन शतंदशकेन गुण्यते इत्यागतो यथोक्तो दिनराशिरेवं प्रमाणं दिनराशिं स्थापयित्वा किमित्याह -

**[भा.२००]** ताहेहरहिभागं, रिक्खाईयाणदिनकरंताणं ।
सत्तट्ठी बावट्ठी एगट्ठी सट्ठी भागेहिं ।।

**वृ**- ततो दिनराशि स्थापनानंतरमृक्षादीनां ऋक्षमासप्रभृतीनां दिनकरांतानां सूर्यमास पर्यंतानां नक्षत्र चंद्रर्त्वादित्यमासानामित्यर्थः दिनमानानयनाय यथाक्रमं सप्तषष्टि द्वाषष्टि एकषष्टि षष्टिभागैः सप्त-षष्ट्यादिभिर्भागहारैरित्यर्थः भागंहराहित्ति हर ततो यथोक्तं नक्षत्रादिमासगतदिनपरिणामा-गच्छतितच्चोत्तरत्रदर्शयिष्यते, सांप्रतमभिवर्द्धित मासगतदिन परिमाणानयनायवेदंकरणमिति करणांतरमाह -

**[भा.२०१]** अभिवड्ढियकरणंपुनठाविय रासिइमंतुकायव्वं ।
ऊणाली ससयाइं पणठाइंअनूनाइं ।।

**वृ**- अभिवर्द्धितकरणमभिवर्द्धितमासगतदिनपरिमाणानयनायकरणं पुनरिदं वक्ष्यमाणं कर्त्तव्यंप्रयोक्तव्यमितियोगः तदेवाहस्थापयित्वाराशिंकिंप्रमाणमित्यतआह एकोनचत्वारिंशत् शतानिपंचषष्ट्यधिकान्यन्यूनानिपरिपूर्णानिकेयंराशिःउच्यमितिचेत् । उच्यते, अभिवर्द्धित मासगतदिन चतुर्विंशत्युत्तर शतभागानां तथाह्यभिवर्द्धितमासस्य दिनपरिणाममेकात्रिंशदहोरात्रएकविंशत्युत्तरं-शतंभागानां अहोरात्राश्च प्रत्येकं एकत्रिंशत्चतुर्विंशत्युत्तरशतेनगुण्यते जातान्यष्टात्रिंशत्शतानि चतुश्चत्वारिंशदधिकानी उपरितनं च एकविंशत्युत्तरं शतं तत्रप्रक्षिप्यते जातोयथोक्तप्रमाणो राशिः ।। तं स्थापयित्वाकिमित्याह -

**[भा.२०२]** एयस्सभागहरणं चउवीसेणं सएणकायव्वं ।
जलद्धाते दिवसा सेसाभागा मुनेयव्वा ।।

वृ- एतस्य अनंतरोदितस्य पंचषष्ट्यधिकैकोनचत्वारिंशच्छतप्रमाणस्यराशेश्चतुर्विंशत्यधिकेन-शतेनभागहरणं भागेन्हृते अंकालब्धास्ते दिवसा ज्ञातव्याः शेषास्त्वंका उद्धरिता अहोरात्रस्य चतुर्विंशत्युत्तरशतभागाः ।

[भा.२०३] अहवाविंतीसइगुणे, सेसंतेनेवभागहारेण ।
भइयं मिजंतु लब्भइ तेउमुहुत्तामुणेयव्वा ।।

वृ- अथवेतिप्रकारांतरद्योतने, तच्चप्रकारांतरमिदंलब्ध दिवसानामुपरिभागास्तावत्तदवस्था एव ध्रियंते तथैव शास्त्रे व्यवहारदर्शनात् अथवा अपिसमुच्चये स च समुच्चयः प्रकारांतरस्यै वान्यस्या श्रूयमाणत्वात् शेषे उद्धरिते राशौमुहूर्त्तानयनायत्रिंशद्गुणेकृतेततस्तेनैव चतुर्विंशत्युत्तरशतप्रमाणेन भागहारेण भक्ते यत्लभ्यतेतेमुहूर्त्ताज्ञातव्या ।

[भा.२०४] तस्सविजंअवसेसं बावठीएउतस्सगुणकारो ।
गुणकारभागहारे बावठीएय उववट्टो ।।

वृ- तस्यापिमुहूर्त्तस्यसंबंधियदवशेषमुद्धरितं तस्यमुहूर्त्तगतद्वाषष्टिभागानयनाय द्वाषष्ट्या गुणकारः गुणकरणं किमुक्तं भवति यदवशेषंतिष्टति, ततुद्वाषष्ट्या गुण्यते ततोगुणकारभागहारेइतियस्यो-परितनस्यराशेर्गुणकरमभवत् स गुणकार योगात्गुणकारः, अधस्तनस्तुभागंहरतीति भागहारः गुणकारश्च भागहारश्चगुणकारभागहारं समाहारो द्वंद्वस्तस्मिन् षष्टीसप्तम्योरर्थप्रत्यभेदस्ततएतदुक्तं भवति गुणकार-भागहारयोर्द्वाषष्ट्याअपवर्त्तोऽपवर्त्तनाक्रियते ।

[भा.२०५] दोहिं तु हितंभागे जेलद्धाते बिसठिभागाओ ।
एएसिमागयफलंरिक्खाईणं कमेणइमं ।।

वृ- भागहाराशेश्चतुर्विंशत्यधिकशतप्रमाणस्यद्वाषष्ट्या पवर्त्तनायां जातौद्वौ ताभ्यांतुद्वाभ्यांहृतेभागे ये अंका लब्धास्तेद्विषष्टिभागाएव तुरेवकारार्थोः मुहूर्त्तस्य ज्ञातव्याः सांप्रतमागतफलप्रतिपादनार्थ-मिदमाह एएसिमित्यादि एतेषां भागहाराणांमृक्षादीनां नक्षत्रादिमासानां दिनपरिमाणा नयनायभागं हरतां, यत् आगतमेवफलमागतफलं तत् क्रमेण ऋक्षादि मासपरिपाट्या इदं वक्ष्यमाणं तदेवाह -

[भा.२०६] अहोरत्तसत्तवीसंति सत्तसत्तट्ठिभागनक्खत्तो ।
चंदो उउगुणतीसं बिसट्ठिभागायबत्तीसं ।।

वृ- नाक्षेत्रो नक्षत्र संबंधीमासः सप्तविंशतिरहोरात्राः सप्तषष्टिभागाः त्रिःसप्त त्रयोवारासप्त एकविंशतिरित्यर्थः तथाहियुगदिनराशिः त्रिंशदधिकाष्टादश शतप्रमाणो ध्रियते, तस्य सप्तषष्टिर्युगेनक्षत्र मासा, इति सप्तषष्ट्या भागोहियते लब्धासप्तविंशति रहोरात्रा एकविंशतिरहोरात्रस्यसप्तषष्टिभागाः, तथा चांद्रश्चंद्रमासएकोनत्रिंशदहोरात्राद्वाषष्टिभागा अहोरात्रस्यद्वात्रिंशत् तथाहितस्यैवयुगदिनराशेस्त्रिं-शदधिकाष्टादशशतमानस्य युगे चंद्रमासाद्वाषष्टिरिति द्वाषष्ट्याभागेहृतेएतावदेवलभ्यते इति ।

[भा.२०७] उडुमासोतीसदिना आइच्चोतीसहोइ अद्धं च ।
अभिवड्ढिएकतीसाएगवीससयं च भागाणं ।।

वृ- ऋतुःमासपरिपूर्नानि त्रिंशद्दिनानि एकषष्टिर्युगेऋतुर्मासइत्येकषष्ट्या अनंतरोदितस्यध्रुवराशेर्भा-गहरणे एतावत्तोलभ्यमानत्वात् । आदित्य आदित्य मासो भवति, त्रिंशदहोरात्रा अहोरात्रस्यार्द्धं यतः सूर्यस्ययुगे मासाः षष्टिस्ततः षष्ट्याध्रुवराशेर्भागहरणे एतावल्लभ्यते इति अभिवर्द्धितो अभिवर्द्धितमास

एकत्रिंशदहोरात्रा एकस्यचाहोरात्रस्य चतुर्विंशत्युत्तरशतभागानामेकविंशशतं एकविंशत्यधिकंशतं तथाहि एकोनचत्वारिंशच्छतानांपंचषष्ट्यधिकानां चतुर्विंशत्युत्तरेण शतेनभागे ह्रियमाणे यथोक्तं लभ्यतएवेति अथवा न भागैः संख्या किंतुमुहूर्त्तादिभिरतआह -

[भा.२०८] एकत्तीसंचदिनाइ गुत्तीसमुहुत्तसत्तरसभागा ।
एत्थपुणअहिगारो नायव्वोकम्ममासेण ।।

वृ- एकत्रिंशद्दिनानि एकोनत्रिंशन्मुहूर्त्ताःसप्तदशद्वाषष्टिभागाः एकत्रिंशत्दिनानितावत् पूर्ववत् ततो यदेकविंशत्युत्तरंशतमवशेषं जा तंतत् अहोरात्रस्यत्रिंशत्मुहूर्ता इति मुहूर्त्तानयनायत्रिंशतागुण्यतेजातानि त्रिंशदधिकानिषट्त्रिंशत्शतानि एतेषांचतुर्विंशत्यधिकेनशतेनभागहरणां लब्धाएकत्रिंशत्मुहूर्त्ता शेषमवतिष्ठते चतुःत्रिंशत् सद्वाषष्टिभागानयनायद्वाषष्ट्यागुण्यते जातान्येकविंशतिशतान्यष्टोत्तराणि तेषां चतुर्विंशत्युत्तरशतेनभागोह्रियतेलब्धाः परिपूर्णाः सप्तदशद्वाषष्टिभागाः अत्र पुनः प्रायश्चित्तविधाव-धिकारः प्रकृतं ज्ञातव्यो नक्षत्रादिनांमासानां मध्येकर्म्ममासेन, संप्रति भावमासप्रतिपादनार्थमाह -

[भा.२०९] मूलादिवेदगोखलु भावेजोवाविजाणतो तस्स ।
नहिअग्गिनाणतोग्गीणाणं भावो ततो अन्नो ।।

वृ- भावेभावोमासोद्विधा आगमतो नोआगमतश्चतत्रनोआगमतः खलुमूलादिवेदकः, मूल-कंदकांडपत्रपुष्पफलवेदकः किमुक्तं भवते । योधान्यमाषजीवोधान्यमाषभवेवर्त्तमानो मूलरूपतया कंदरूपतया कांडरूपतया पत्ररूपतया पुष्परूपतया फलरूपतया वा धान्यमाषभावायुर्वेदयते, सनोआगमतोभावमासः, प्राकृतेमाषशद्वस्यापिमासइतिरूपसंभवात्; आगमतआह जोवाविजाणतो तस्स तस्यमाषस्यमासस्य वा यो ज्ञायको ज्ञाता अपि शब्दादुपयुक्तश्च स आगमतोभावमासः, उपयोगोभावनिक्षेप इतिवचनात् अत्रपरआह नहीत्यादि, ननु यदि मासस्यज्ञाता तत्रचोपयुक्त-स्तथापिकथमसौभावमासः तर्ह्यग्नि ज्ञानोपयुक्तोमाणवकोग्निर्दाहपाकाद्यर्थ क्रियाकारित्वाभावस्सुर्निह नाणमित्यादि यदेतदुक्तं तदसत् सम्यग्वस्तुतत्त्वापरिज्ञानात् इहाद्यर्थाभिधानप्रत्ययास्तुल्यनामधेयाः। तथाहिघटोपिघट इत्यभिधीयते घटशब्दोपिघटज्ञानमपि घटइति एतद्य सर्ववादिनामविसंवादस्थानं ततोमासज्ञानमपिमासशब्दवाच्यंतच्चभावो जीवगुणात्वात् स च ज्ञानलक्षणोभावस्तस्मादात्म-नोऽनन्यइतिमास ज्ञानोपयुक्तोभावमासः अत्र षड्विधमासनिक्षेप मध्येकालमासेनाधिकारस्तत्रा-पिकर्म्ममासेनेत्यनंतरमेवोक्तं शेषास्त्वपाकरणबुद्ध्योपन्यस्ताः एतदेवनिक्षेप प्ररूपणायाः फलं यत् प्रस्तुतस्यव्याकरणमप्रस्तुतस्यनिराकरणमिति, यदुक्तम प्रस्तुतार्थापाकरणात् प्रस्तुतार्थव्या-करणाच्चनिक्षेपः फलवानिति तदेवं मासनिक्षेप प्ररूपणाकृता संप्रति परिहार शब्द निक्षेप प्ररूपणार्थमाह -

[भा.२१०] नामं ठवणा दविए परिय परिहरण वज्जणुग्गहत्ता;
भावावण्णेसुद्धे नव परिहारस्स नामाइं ।

वृ- परिहारशब्दोविभक्तिपरिणामेन सर्वत्रसंबध्यते, तद्यथानाम परिहारः स्थापनापरिहारः । दविए इति द्रव्योद्रव्यविषयः परिहारोद्रव्यपरिहारः, परियपरिहारः परिहरण परिहारःवृजोवर्जनेवृज्यतेइति वर्जनकर्म्मएयनटवर्जनमित्यर्थः वर्जनस्यपरिहारोवर्जनपरिहारः अनुगृह्यते इति अनुग्रहः कर्म्मण्य च तस्यभावो अनुग्रहताऽनुग्रहणमित्यर्थः, । अनुग्रहतया परिहारोऽनुग्रहता परिहारः, भावत्तिभावचिंता-यामापन्ने आपन्नस्यपरिहार आपन्नपरिहारः, अशुद्धे शुद्धस्य परिहारः एवं परिहारस्यनामादि विशेषणतो

नवनामानि भवंति, एषगाथाक्षरार्थः अधुना भावार्थ उच्यते, तत्र नामस्थापने प्रतीते, द्रव्यपरिहारो द्विधाआगमतो नो आगमतश्च, तत्रागमतः परिहारशब्दार्थज्ञः तत्र चोपयुक्तः, नोआगमतस्त्रिधा ज्ञशरीरं भव्यशरीरं तद्व्यतिरिक्तः तत्र ज्ञ शरीर भव्य शरीरे प्राग्वत् । तद्व्यतिरिक्त परिहार परिरय परिहारादि प्रतिपादनार्थ माह -

**[भा.२११]** कंटगमादी दव्वे, गिरिनदि माईण परिरयो होइ;
परिहरणधरणाभोगे, लोउत्तरवज्ज इत्तरिए ।

**वृ-** द्रव्य इति द्वार परामर्शः नो आगमतो ज्ञ शरीर भव्यशरीर व्यतिरिक्तो द्रव्यपरिहारोनाम यत् कंटकादि कंटकमादि शद्बात् स्थाणु विषसर्पादिकं च परिहरति द्रव्यस्य परिहारो द्रव्यपरिहार इति व्युत्पत्तेः । परिरयो नाम पर्याहारः परिधिरितियावत् उक्तं च पज्जाहारोत्तिवा परिओति वा एगट्ठं; परिरयेण परिहारः । परिरय परिहारः स च परिरयो भवति संभवति, गिरि नद्यादीनां विपर्वेद्वयमत्र भावनायत् गिरिनदीमादि शब्दात् समुद्रमटवी वा परिरयेण परिहरति एष परिरयपरिहारः । तथा परिह्रियते इति परिहरणं भावे अनट्तत्धद्विधा लौकिकं लोकोत्तरं च तत्र लौकिकं यथा माता पुत्रं परिहरति भ्रातरं परिहरति न परिभुंक्ते इत्येवमादि, लोकोत्तरं साक्षादाह - परिहरणाधरणाभोगे -

लोकोत्तरं परिहरणं द्विधाधरणे भोगेच । धरण परिहरणां, परिभोगपरिहरणं चेत्यर्थः, तत्र धरणपरिहरणां नाम यत् किमप्युपकरणां संगोपयति प्रतिलेखति च न परिभुंक्ते, परिभोग परिहरण यत् सौत्रिककल्पादि परिभुंक्ते प्रावृणोतीत्यर्थः । उक्तं च, -

लोगे जहमाताऊ पुत्तं परिहरति, एवमादीओ लोउत्तर परिहारो दुविहो परिभोग धरणेयं ।

अत्रैवंव्युत्पत्ति परिहरणमेवपरिहारः । परिहरणा परिहारः लोउत्तरवज्जइतरिए वर्जवर्ज्यं, तत्द्विधा लोगत्ति लौकिकं, उत्तरति लोकोत्तरं, लौकिकं द्विधा इत्वरं यावत् कथितं च, तत्रेत्वरंयत् सूतकं मृतकादिदशदिवसान् यावत्वर्ज्यते इति यावत्कथितं वरुडछिंपकचर्म्मकारडोंबादि एतेहियावज्जीवं शिष्टैः संभोगादिना वर्ज्यते, लोकोत्तरमपविर्ज्य द्विधा इत्वरंयावत्कथितं च तत्रेत्वरं दाने अभिगमसड्ढे इत्यादि यावत्कथि कमट्ठारसपुरिसेसुं वीसं इत्थीसुदसनपुंसे, इत्यादि वर्ज्यं इत्तरिएइत्यत्रेत्वरग्रहणमुपलक्षणां तेन यावत्कथिकमित्यापिद्रष्टव्यं, तस्यपरिहारः परित्यागो वर्जन परिहारः ।

**[भा.२१२]** खोडादिभंगनुग्गहभावे आवणसुद्धपरिहारो ।
मासादी आवणो तेनउ पगयं न अन्नेहिं ।।

**वृ-** खोटभंगइतिवाउक्कोडभंगइतिवा अक्षोटभंगइतिवा एकार्थं, उक्तंच निशीथचूर्णौखोटभंगोत्ति-वाउक्कोडभंगोत्तिवा अक्खोड भंगोत्ति एगट्ठं ।। खोटनामयत् राजकुलेहिरण्या दिद्रव्यंदातव्यं । आदि-शब्दात् वेष्टिकरणं चारभटादीनां भोजनादि प्रदानमित्यादि परिग्रहः, खोडादेर्भंगः खोडादिभंगाऽनुग्रहः पदैकदेशेपदसमुदायोपचारादनुग्रहपरिहारः । एतदुक्तं भवति राजकृतानुग्रहवशेन एकद्वित्र्यादि वर्ष मर्यादयाथयोक्तरूपखोटादिभंजन एकंद्वे त्रिणि वर्षाणि यावत् वसति तावन्तंवाकालंयावत् राज्ञानुग्रहः कृतस्तावंतंकालं वसति न च हिरण्यादि प्रददाति नापि वेष्टिं करोति न चापि चारभटादीनां भोजनादि प्रदानं विधत्तेएष खोटादिभंगोअनुग्रह परिहारः, भावइति भावविषय परिहारो द्विधातद्यथा आपन्नपरिहारः शुद्धपरिहारश्च तत्र यत् विशुद्धः सन् पंचयाममनुत्तरं धर्म्मं परिहरति करोति, परिहारः शब्दस्य परिभोगेऽपिवर्त्तमानत्वात् स शुद्धपरिहारः शुद्धस्य सतः परिहारः पंचयामानुत्तरधर्म्मकरणं शुद्धपरिहार

इति व्युत्पत्तेः यदिवा यो विशुद्ध कल्पव्यवहार क्रियते, स शुद्धपरिहार शुद्धश्चासौ परिहारश्च शुद्धपरिहार इति व्युत्पत्तेः । यथा यत् मासिकं वा यावत् षण्मासिकं वा प्रायश्चित्तमापन्नं तत् आपन्न अपरिभोगपिवर्त्तते, परिह्रियते इति, परिहारः । कर्म्मणिधञ् आपन्नेमेव परिहारः । आपन्नपरिहार इति व्युत्पत्तेः तथाचाह मासादी आवन्ने इति मासादिकं यत्प्रायश्चित्तस्थानमापन्नं तत् आपन्ने आपन्नपरिहारे द्रष्टव्यं मासादिकं यत् प्रायश्चित्तस्थानमापन्नं तत् आपन्नपरिहार इति भावः । अथवा परिहरणां परिहार इति भावेधञ् । आपन्नेन प्रायश्चित्तस्थानेन परिहारो वर्जनं साधोरितिगम्यते आपन्नपरिहारः । तथाहि स प्रायश्चित्ती अविशुद्धत्वात् विशुद्धचरणैः साधुभिर्यावत् प्रायश्चित प्रतिपत्त्यान विशुद्धो भवति तावत् परिह्रियते इति इह तेन आपन्नपरिहारेण प्रकृतमधिकारो न शेषैः परिहारैः तदेवं परिहार शब्दनिक्षेप प्ररूपणकृता, संप्रतिस्थानशब्दे निक्षेपप्ररूपणार्थमाह -

**[भा.२१३]** नामंठवणादविए, खेत्तउद्धाउड्डवसहि विरतीय ।
संगमपग्गहजोहे अचलगणाण संधणा भावे ॥

**वृ.** इह स्थानशब्द प्रकरणात् प्रत्येकमभिसंबध्यते । नामस्थानं दविए इति द्रव्ये द्रव्यस्य स्थानं द्रव्यस्थानं क्षेत्रस्थानं अद्धाकाल इत्यनर्थांतरकाले काल एववास्थानं कालस्थानं उर्ध्वस्थानां वसतिस्थानं विरतिस्थानं संयमस्थानं प्रग्रहस्थानं योधस्थानमचलस्थानं गणनास्थानं संधनास्थानं भावेभावविषयं । एषगाथाक्षरार्थः । भावार्थ उच्यते तत्र नामस्थापने प्रतीते द्रव्यस्थानं द्विधा आगमतो नोआगमतश्च आगमतः स्थानशब्दार्थज्ञातातत्रचानुपयुक्तः, नोआगमतो ज्ञशरीर भव्यशरीर तद्व्यतिरिक्त भेदात् त्रिविधं तत्र ज्ञशरीरभव्यशरीरे प्रतीते इति, तद्व्यतिरिक्त द्रव्यस्थानं क्षेत्रादि स्थानं च प्रतिपादयति ॥

**[भा.२१४]** सचित्तादीदव्वेखेत्ते गामादि अद्ध दुविहाओ ।
सुरनारगभवठाणं सेसाणं कायभवठाणं ॥

**वृ-** ज्ञशरीर भव्यशरीर व्यतिरिक्तं नोआगमतो द्रव्ये द्रव्यस्य स्थानं त्रिधा सचित्तादि । पदैकदेशे पदसमुदायोपचारादेवं निर्देशो यावत्पुनरिदंद्रष्टव्यं सचित्तद्रव्यस्थानादि तद्यथा सचित्तद्रव्यस्थानमचित्त-द्रव्यस्थानं मिश्रद्रव्यस्थानं च । तत्र सचित्तद्रव्यस्थानमपि त्रिधा द्विपद सचित्तद्रव्यस्थानं चतुष्पद सचित्तद्रव्यस्थानमपदसचित्तद्रव्यस्थानं च, तत्र दिने दिने यत्र मनुष्या उपविशंति, तद्य द्विपदानां सचित्तद्रव्याणां स्थानं यत्र पुनर्दिनेदिने चतुष्पदागवादयो निवसंति तद्य चतुष्पद सचित्तद्रव्यस्थानं यत्रपुनर्गुत्स्यंफलं निक्षिप्यते तत्रापदानां हरितकायानां स्थानं जायते किलेति तत् अपदसचित्तद्रव्यस्थानं यत्र फलकादीनि निक्षिप्यंतेतत् अचित्तद्रव्यस्थानं यत्पुनस्तेषामेव द्विपदादी नामलंकृतविभूषितानां स्थानं जलभृतस्य वाघटस्य यत् स्थानं तत् मिश्रद्रव्यस्थानं खेत्ते गामादि इति । क्षेत्रे विचार्यमाणे गामादि द्रष्टव्यं किमुक्तं भवति, क्षेत्रं नामग्रामनगरादिस्तस्यस्थानं क्षेत्रस्थानं, अथवा यत्र क्षेत्रे ग्रामादिग्राम नगरादि निवेश्यते तत् क्षेत्रं ग्रामादीनां स्थानमिति क्षेत्रस्थानं क्षेत्रमेवस्थानं क्षेत्रस्थानमिति व्युत्पत्तेः, तथा च लोके ग्रामादीनामुद्वसितानां स्थानमवलोक्यवक्ताभवति । इदं ग्रामस्थानमिदं नगरस्थानमिति अद्धदुविहाउ इत्यादि । अद्धाकालः स द्विधा जीवेषु अजीवेषु च तत्राजीवेषु यस्य यावती स्थितिः तस्यतावान् कालः स्थानं जीवेषु संसारिषु पुनर्द्विविधः कालः कायस्थितिः भवस्थितिश्च तत्र सुरनारकाणामेकभवावस्थानात् भवस्थानंभवस्थितिः कालस्थानं, शेषाणां तिर्यङ्मनुष्याणामनेकभव-ग्रहणसंभवात् कायभवस्थानं यथासंभवाकाय स्थितिः कायस्थानं भवस्थितिः, भवस्थानं

कालस्थानमित्यर्थः अथवा कालस्थानं समय आवलिका इत्यादि कालसामान्यस्य एतेषु विशेषेष्ववस्थानात्, ऊर्ध्वादिस्थानप्रतिपदनार्थमाह -

[भा.२१५] ठाणनिसीयतुअट्टण उड्ढा दीवसहि निवसए जथ्थ ।
विरतीविसे तव्वे संजमठाणा असंखाउ ।।

वृ- मूलगाथायां उर्ध्वग्रहणंतज्जातीयतया निषीदनत्वग्वर्त्तनयोरुपलक्षणं ततइहोक्तमूर्ध्वादि किं तत् ऊर्ध्वादीनिचेदत आहस्थान निषीदनत्वग्वर्त्तनानिसूत्रेविभक्तिलोपः प्राकृतत्वात् तत्रस्थानमूर्ध्वस्थानं कायोत्सर्गइत्यर्थः, निषीदनमुपवेशनंत्वग्वर्त्तनंशयनं तथा साधुजनइतरो वा यत्रनिवसतिसा वसतिः सैवस्थानं वसतिस्थानं, विरतिद्विधादेशे सर्वस्मिंश्च तत्रदेशविरतिः श्रावकाणां पंचाणुव्रतभावात् सर्वविरति साधूनाम्पंचमहाव्रत भावात् सैवस्थानं तत्र श्रावकाणां साधूनां चावस्थानात् विरतिस्थानं संयमस्थानं ज्ञानदर्शनचारित्र परिणामात्मकोध्यवसाय विशेषः तान्यसंख्येयानि तत्रप्रथममपि संयमस्थानं पर्यवपरिमाणचिंतायां सर्वाकाशप्रदेशेभ्योऽनंतगुणं द्वितीयादीनितु संयमस्थानानि तानि उत्तरोत्तर विशुध्ध्याप्रवर्द्धमानानि यथोत्तरमनंतभागाधिकादीनि षट्स्थानक परिवृध्ध्याज्ञातव्यानि, तानि च सामायिकवतः छेदोपस्थापनवतश्च प्रत्येकं मूलदारभ्यासंख्येयानिपरस्परंतुल्यानि चतानि, परिहारवि शुद्धित्वात् ततः पर्यान्यसंख्येयानि संयमस्थानानि तानि प्रत्येकंत्रयाणामपि परिहारविशुद्धिक १। सामायिक । २ । छेदोपस्थापनवतां च प्रत्येकंप्रायोग्याणि, नतु परिहारविशुद्धिकानामतिविशुद्धत्वात्। ततः पराणि सूक्ष्मसंपरायस्यैव केवलस्यप्रायोग्याणि नतु सामायिकादिवतामतिविशुद्धत्वात्, तानिचांतर्मुहूर्त्तसमयप्रमाणान्यसंख्येयानि ततः परमनंतगुणमेकं यथाख्यातं संयमस्थानं स्थापना: प्रग्रस्थान प्रतिपादनार्थमाह -

[भा.२१६] पग्गहलोइयरेय, एक्केको तत्थ होइ पंचविहो ।
रायजुयरायमच्चे सेट्ठिपुरोहिय लोगंमि ।।

वृ- प्रकर्षेण प्रधानतया वागृह्यते उपादीयते इति प्रग्रहः कर्म्मण्यल् प्रत्ययः प्रधानपुरुषः स द्विधा लौकिक इतरश्चतत्र तयोर्द्वयोर्म्मध्येएकैकोलौकिक इतरश्चप्रत्येकंभवति पंचविधः पंचप्रकारः । तानेवपंचप्रकारान् लौकिके तावद्दर्शयति राजाप्रजापतिर्युवराजः द्वितीयस्थानवर्त्ती अमात्यो राजकार्य चिंताकृत् श्रेष्ठीतुष्टनरपति प्रदत्त श्रीदेवताध्यासित सौवर्णपट्ट विभूषितोत्तमांगोनगरचिंताकारी नागरिकजन श्रेष्टः, पुरोहितः शांतिकर्म्मकृत् । एषपंचविधः प्रग्रहोलोके राजादीनांजनैः प्रधानतया पादीयमानत्वात् इतरमाह -

[भा.२१७] आयरिय उवज्झाए पवत्तिथेरे तहेव गणवच्छे ।
एसो लोगुत्तरितो पंचविहो पग्गहो होइ ।।

वृ- आचार्योनुयोगाचार्यादिको, उपाध्यायः सूत्रप्रदायी, प्रवर्त्तयतीत्येवंशीलः प्रवर्त्ताःप्रवर्तकः धर्म्मे विषीदतां प्रोत्साहकः स्थविरः श्रुतस्थविरादिः, गणावच्छेदको गणतप्तिकारी एप लोकोत्तरिको लोकोत्तरभावी पंचविधःप्रग्रहो भवति आचार्यादीनां लोकोत्तरेप्रधानतयोपादीयमानत्वात्; योधादिस्थानप्रतिपादनार्थमाह -

[भा.२१८] आलीढपच्चालीढे वेसाहे मंडले य समपाए ।
अयलेयनिरयकाले गणणे एक्काइजोकोडी ।।

वृ- योधानां स्थानं पंचविधं तद्यथा आलीढं प्रत्यालीढं वैशाखं मंडलं समपादं च, तत्र दक्षिणमूरुमग्रतो मुखं कृत्वा वाममूरुं पश्चात्मुखमपसारयति । अंतरा च द्वयोरपि पादयोः पंचपादाः ततो वामहस्तेन धनुर्गृहीत्वा दक्षिणाहस्तेन प्रत्यंचामाकर्षति तत् आलीढस्थानं यत्पुनर्वाममूरुमग्रतो मुखमाधाय दक्षिणमूरुं पश्चात्मुखमपसारयति अंतरा चात्रापि द्वयोरपि पादयोः पंचपादास्ततः पूर्वप्रकारेण युध्यते तत् प्रत्यालीढं स्थानमालीढस्य प्रतिपथिविपरीतत्वात् प्रत्यालीढं प्रत्युनः पार्ष्णी अभ्यंतराभिमुखे कृत्वा समश्रेण्याकरोति अग्रिमतले च बहिर्मुखे ततो युध्यते तत् वैशाखं स्थानं तथा द्वावपि पादौ समौ दक्षिणवामतोऽपसार्य ऊरू प्रसारयति यतामध्ये मंडलं भवति अंतरा चत्वारः पादास्तत् मंडलं द्वावपि पादौ समौ निरंतरं यत् स्थापयति जानुनी ऊरु चाति सरले करोति तत्समपादं, एतैर्हि पंचभिरपि स्थानैर्योधायथायोगं युध्यंते, तत् एतानि योधस्थानानि, तथा अचलो निःप्रकंपः परमाण्वादिर्भवति, यत् निरेजकालं तत् अचलस्थानं अचलं च तत्स्थानं चावस्थानमचलस्थानमिति व्युत्पत्तेर्वा निरेजकालश्च परमाण्वादीनामयं परमाणुपुग्गलेणं भंते निरेयकालओकेवचिरं होइ जहन्नेणं एक्कं समयं, उक्कोसेणं असंखेज्जं कालं असंखेज्जा वा उस्सप्पिणि ओसप्पिणिओ इत्यादि । तथा गणने संख्यायां स्थानमेकादि एकं दशशतं सहस्रमित्यादि यावत् कोटी कोट्यः पर्यंतत्वमभिदधान एतज्ज्ञापयति, प्रायो लोकव्यवहारःकोट्याः परं संख्यास्थानं कोट्येव दशशतादि विशेषितानि त्वन्यत् संख्यांतररूपस्थानमिति । संधनास्थानमाह ।

[भा.२१९] रज्जुयमादि अच्छिन्नं, कंचुयमादीण छिन्नसंधणया ।
सेढिदुगं अछिन्नं अपुव्वगहणं तु भावंमि ।।

वृ- संधना संधानकरणं सा द्विधा द्रव्यसंधना भावसंधना च द्रव्यसंधना द्विविधा छिन्नसंधना अच्छिन्नसंधना च तत्र रज्जुकादिकमछिन्नं यत् वलयति एषा छिन्ना द्रव्यसंधना कंचुकादीनां छिन्नसंधनता कंचुकादयो ह्यन्योन्यखंडमीलनतः संधीयते ततस्ते छिन्नसंधना । भावसंधनापि द्विधा, छिन्नसंधना अछिन्नसंधना च तत्राछिन्नसंधना श्रेणिद्विकमुपशमश्रेणिः क्षपकश्रेणित्युपशमश्रेणिरछिन्नसंधना क्षपकश्रेण्यामपि दर्शन सप्तकक्षयानंतरं कषायाष्टकादि क्षपयितुं प्रवृत्तो नियमादाकेवलप्राप्तेर्ननिवर्त्तते, ततः क्षपकश्रेणिरप्यच्छिन्नसंधना, अपुव्वगहणं तु भावंमि इति प्रशस्तेषु भावेषु प्रवर्त्तमानो यदपूर्वं भावं संदधाति एषाप्यछिन्ना भावसंधना शुभभावसंधनस्या व्यवछिन्नत्वात् । इयं पुनः छिन्नसंधना ।।

[भा.२२०] मीसातो उदइयं गयस्स मीसगमनेपुनोच्छिन्नं ।
अपसत्थ पसत्थं वा भावे पगयं तु च्छिन्नेण ।।

वृ- छिन्नाभावसंधनामिश्रः क्षायोपशमिको भावः तस्मात् मिश्रात् क्षायोपशमिकात् भावात् यदा औदयिकं भावं संक्रामति तदा तस्य औदयिकं गतस्य छिन्नं भावसंधानं भावांतरं संक्रांतत्वात्, तथा तस्मादौदयिक भावात् यदापुनर्मिश्रगमनं भवति मिश्रं भावं संक्रामति तदापि छिन्नं भावसंधानं एवं शेषेष्वपि भावेषु यथा यथायोगं भावनीयं, अथवा द्विविधा छिन्नभावसंधना प्रशस्ताऽप्रशस्ता च तत्र यदा प्रशस्ते चरणादिभावे स्थितः सन् तथाविधकर्मोदयवशतोऽप्रशस्तं चरणभावं संक्रामति, तदा अप्रशस्ता छिन्नाभावसंधना यदा पुनरप्रशस्तादचरणभावात् प्रशस्तं चरणभावं संक्रामति तदा प्रशस्ता छिन्नाभावसंधना अत्र प्रकृतमधिकारः च्छिन्नेन भावसंधानेन तत्राप्यप्रशस्तेन तथाहि प्रायश्चित्तस्थानं तदा प्रतिसेवते यदा प्रशस्तादूभावाद प्रशस्तं भावं संक्रांतो भवति तदेवं स्थाननिरूपणा कृता, संप्रति यदुक्तं सूत्रे पडिसेवित्ता इति तत्र प्रतिसेवना व्याख्यानार्थमाह -

[भा.२२१] मूलुत्तरपडिसेवा मूले पंचविहि उत्तरे दसहा ।
एक्केक्का वि य दुविहा दप्पे नायव्वा ।।

वृ- प्रतिसेवनानाम प्रतिसेवना सा च द्विधा मूलोत्तरत्ति, पदैकदेशे पदसमुदायोपचारात् मूलगुणातिचार प्रतिसेवना, उत्तरगुणातिचारप्रतिसेवना च तत्र मूले पंचविहत्ति मूले मूलगुणातिचारप्रतिसेवना पंचविधा पंचप्रकारा, मूलगुणातिचाराणां प्राणातिपातादीनां पंचविधित्वादुत्तरे त्ति उत्तरगुणातिचारप्रतिसेवना दशधा दशप्रकारा उत्तरगुणानां दशविधतया तदतिचाराणामपि दसविधत्वात् ते च दशविधा उत्तरगुणा दशविधं प्रत्याख्यानं तद्यथा - अनागतमतिक्रांतं कोटीसहितं नियंत्रितं, साकारमनाकारं, परिमाणकृतं निरवशेषं सांकेतिकमद्धा प्रत्याख्यानं च । अथवा इमे दशविधा उत्तरगुणाः । तद्यथा पिंडविशोधिरेक उत्तरगुणः पंचसमितयः पंचउत्तरगुणाः एवं षट् तपोबाह्यं षट्प्रभेदं सप्तम उत्तरगुणः अभ्यंतर षट्प्रभेदमष्टमः, भिक्षुप्रतिमा द्वादश नवमः अभिग्रहा द्रव्यक्षेत्रकालभावभेदभिन्ना दशमः एतेषु दशविधेषूत्तरगुणेषुयाति-चारप्रतिसेवना सापि दशविधेति एक्केक्काविय दुविहा इत्यादि एकैका मूलगुणातिचारप्रतिसेवना उत्तरगुणातिचारप्रतिसेवना च प्रत्येकं सप्रभेदा द्विविधा द्विप्रकारा ज्ञातव्या तद्यथा दप्पे कप्पे च दर्प्पिका कल्पिका चेत्यर्थः । तत्र या कारणमंतरेणप्रतिसेवना क्रियते सा दर्प्पिका या पुनः कारणे सा कल्पिका । अत्र शिष्यः पृच्छति -

[भा.२२२] किहभिक्खू जयमाणो आवज्जइ मासियं तु परिहारं ।
कंटगपहेवछलना भिक्खूवि तहा विहरमाणो ।।

वृ- कथं केन प्रकारेण भिक्षुर्यतमानः सूत्रोक्तनीत्या प्रयत्नपरो मासिकं परिहारं प्रायश्चित्तस्थान-मापद्यते, नैवापत्तिसंभवो, यतनया सर्वत्र प्रवृत्तेरितिभावः, आचार्य आह कंटगेत्यादि कंटकाकीर्णः पंथाः कंटकपथस्तस्मिन्निव यतनयापि वर्त्तमानस्यच्छलना भवति, ततो भिक्षुरपि तथा विहरन् यतमानो मासिकमापद्यते प्रायश्चित्तस्थानमिति, अत्रैव दृष्टांतमाह -

[भा.२२३] तिक्खम्मि उदगवेगे, विसमं विवज्जलंभि वच्चंतो ।
कुणमाणो विपयत्तं अवसो जह पावए पडणं ।।

वृ- तीक्ष्णे अतिप्रवले शीघ्रे च उदकवेगे उदकरये यदि वा विषमे अतिदुर्गमे विज्जले सकर्दमस्थाने व्रजन् पुरुषः कुर्वन्नपि प्रयत्नमवशो यथा प्राप्नोति पतनं -

[भा.२२४] इह समणसु विहियाणं सव्वपक्षेण वीजयंताणं ।
कम्मोदय पच्चइया विराधना कस्सइ भवेज्जा ।।

वृ- इह श्रमणा लिंगमात्रधारिणोपि व्यवह्रियंते शाक्यादयोपि च, ततस्तद्व्यवच्छेदार्थं सुविहितग्रहणं शोभनं विहितमनुष्ठानं येषां ते सुविहितास्ततः श्रमणशब्देन सह विशेषणसमासः तथा प्रागुक्तदृष्टांतप्रकारेण सुविहितानां सर्वप्रयत्नेन सर्वात्मना स्वशक्त्यनतिक्रमेण अपिशब्दो भिन्नक्रमः स चैवं योजनीयः, यतमानामपि मध्ये कस्यापि कर्मोदयप्रत्ययिका कर्मोदयहेतुका विराधना भवेत् आह? किमेकांतेनैव प्रतिसेवना कर्मोदयप्रत्ययिका उतान्योपि कश्चित्प्रकारः प्रतिसेवनाया अस्ति ? उच्यते अस्तीति ब्रूमः तथाचाह -

[भा.२२५] अन्नविहु पडिसेवा सा उ न कम्मोदएण जा जयतो ।
सा कम्मक्खयकरणी दप्पाजय कम्मजननीउ ।।

**वृ-** कर्मोदयहेतुका या प्रतिसेवना सा तावदेकारिति किंत्वन्यापि, कर्मोदयहेतुका या व्यतिरिक्तापि प्रतिसेवा प्रतिसेवनास्ति साउन कम्मोदएणंति तु शब्दोऽव्ययत्वेनानेकार्थत्वात् हेतौ ततोयमर्थः यतः सान्या प्रतिसेवना न कर्म्मोदयहेतुका, कर्म्मोदयहेतुकत्वं अन्यथा योगात् । सा च कारणे तत्रापि यतनया द्रष्टव्या तत्रया कारणे जयतोत्ति यतमानस्य यतनया प्रवर्त्तमानस्य प्रतिसेवना सा कर्मक्षयकरणी कर्म्मक्षयं क्रियतेऽनयेति कर्म्मक्षयकरणी करणे अनद् साहि नावशस्य यतः कर्मोदयहेतुका, किंतु सूत्रोक्तनीत्या, कारणे यतनया यतमानस्य ततस्तत्राज्ञाराधनात् सा कर्म्मक्षयकारिणी या पुनः प्रतिसेवना दर्प्पेण या च कल्पेप्ययतनया सा कर्म्मजननी तथाचाह । दप्पाजय कम्मजननीउ दप्पेणकारणेपि चा यतस्य प्रतिसेवा कर्म्म जन्यते अनया कर्म्मजननी तदेवं यतो दर्प्पेण कल्प्येपि चायतनया प्रतिसेवना कर्म्मजननी तत इदं सिद्धं ।।

**[भा.२२६]** पडिसेवणाउ कम्मोदएण कम्ममवि तन्निमित्तागं ।
अन्नोन्नहेउसिद्धी तेसिंबीयंकुराणं च ।।

**वृ-** प्रतिसेवना कर्मोदयेन किमुक्तं भवति, प्रतिसेवनाया हेतुः कर्मोदयः कर्म्मापि च तन्निमित्तकं प्रतिसेवनानिमित्तकं, कर्म्मणोपि हेतुः प्रतिसेवना इतिभावः एवंतेषां प्रतिसेवनाकर्म्मणामन्योन्यं परस्परं हेतुसिद्धिः हेतुभावसिद्धिः केषामिव परस्परं हेतुभावसिद्धिरित्यत आह बीजांकुरयोरिव गाथायां द्वित्वेपि बहुवचनं प्राकृतत्वात् यथा बीजमंकुरस्य हेतुरंकुरोपि च परस्परया बीजस्य हेतुरित्यनयोः परस्परं हेतुभावस्तथा कर्म्मप्रतिसेवनयोरपि ।।

**[भा.२२७]** दिट्ठा खलु पडिसेवा सा उ कहं होज्ज पुच्छिए एवं ।
भणइ अंतोवस्सए बाहिं ववियारमादीसु ।।

**वृ-** परस्य चक्षुरादिप्रत्यक्षतस्तस्य स्वसंवेदनप्रत्यक्षेण दृष्टा खलु प्रतिसेवा सा नु क्षेत्रतः क्व भवेत् इति एवमनुना प्रकारेण पृष्टे सति भण्यते उत्तरं दीयते । अंतर्म्मध्ये उपाश्रये उपाश्रयस्य बहिर्वा विचारादिषु विचारादि निमित्तं बहिर्विनिर्गतस्य उपलक्षणमेतत् तेन कालतः प्रश्ने दिवा रात्रौ वा भावतः प्रश्ने दर्प्पेणकल्पेन वेत्यपि वक्तव्यमिति ।।

**[भा.२२८]** पडिसेविए दप्पेणं, कप्पेणं चावि अजयणाएउ ।
नवि णज्जइ वाघातो के वेलं होज्ज जीवस्स ।।

**वृ-** दर्प्पेण कल्पेनाप्ययतनया प्रतिसेविते मासिकादिकमतीचारं प्राप्तेन संवेगमुपगच्छता आलोचना प्रयोक्तव्या एतच्च चिंतयितव्यं नापि नैव ज्ञायते कां वेलां कस्यां वेलायां व्याघातो जीवस्य जीवप्राणधारणे, जीवनं जीवः तस्य जीवितस्येत्यर्थः व्याघातो भवेत् अनालोचिते च यदि म्रियते, ततो दीर्घसंसारी भवति तत एतत् भण्यते ।।

**[भा.२२९]** तं न खमं खु पमातो मुहुत्तमवि आसिउं ससल्लेण ।
आयरियपादमूले गंतूण समुद्धरे सल्लं ।।

**वृ-** यस्मादचिंतितः पतति, जीवितस्य व्याघातोऽनालोचिते च मृतस्य दीर्घसंसारिता, तस्मात् पमातो इति अत्र दकारस्य लोपः प्राकृतत्वात् प्रमादतः प्रमादवशेन सशल्येनातीचारशल्ययुक्तेन मुहूर्त्तमप्यासितुं न क्षमं, खु निश्चितं किंत्वाचार्यपादमूले गत्वा आलोचनाविधानेन प्रायश्चित्त प्रतिपत्त्या शल्यमतीचाररूपं समुद्धरेत् विशोधयेत् यस्मात् -

[भा.२३०] नहु सुज्झइ ससल्लो जह भणियं सासणे जिनवराणं ।
उद्धरियसव्वसल्लो सुज्झइ जीवो धुयकिलेसो ॥

वृ- यथा भणितं जिनवराणां भगवतामर्हतां शासने तथा ज्ञायते जिनवचनतो ज्ञायते इत्यर्थः नहु नैव सशल्यो अतीचार शल्यपरिकलितस्तपश्चरणादिकं प्रभूतमपि कुर्वन् शुध्यति अविसुद्धस्स न वड्ढइ गुणसेढितत्तिमं ठाइ इति वचनात् किंतुध्धृत सर्वशल्य संस्तपश्चरणादि भावतोधुतक्लेशोऽपगमित समस्त कर्म्मजालो जीवः शुद्धयति मुक्तात्मा भवतीति ॥

[भा.२३१] अहगं च सावराहो आसोविवपच्छिलो गुरुसगासं ।
वइयगगामे संखडि पत्ते आलोयणा तिविहा ॥

वृ- इदमपि च चिंतनीयं, अहकं च अहमपि च सापराधस्तस्मान् मया गुरुपादमूले गत्वा प्रायश्चित्ताभ्युपगमेन शल्यमुद्धरणीयं एवं च चिंतयित्वा तस्यातीचारस्य विशोधनार्थमश्व इवयथा सारथिमनुवर्त्तयन् क्वचिदप्यप्रतिबद्धो अश्वो याति तथा संयमंकेवल मनु वर्त्तयन् गुरुसकाशं गुरोः समीपं प्रतिप्रस्थितो व्रजिकायां गोकुले ग्रामे प्रचुरोत्कृष्टभिक्षालाभे संखड्यां वाकस्यांचिदप्रतिबद्धः सन् गच्छेत् गुरुसमीपं च प्राप्तः सन् आलोचनां दद्यात् सा चाऽलोचना त्रिविधा तद्यथा विहारालोचना उपसंपदालोचना अपराधालोचना च तथा चाह पत्ते आलोयणतिविहा । प्राप्ते तस्मिन् तेनालोचना दातव्या सा च त्रिविधा यथोक्तरुपानवरमत्राधिकारोऽपराधालोचनया सूत्रे तस्या एव साक्षादुपादानात् तत्र यदुक्तमश्व इवेति, तद्व्याख्यानार्थमाह -

[भा.२३२] सिग्घुजुगई आसो अनुयत्तई सारहिं न अत्ताणं ।
इय संजमनुयत्त इवयादि अवंकितो साहू ॥

वृ- कशोत्पाटादिना सारथ्यभिप्रायमुपलक्ष्य यथाऽश्वः शीघ्रं गतिऋजुगतिश्च सन् सारथिमनुवर्त्तयति न आत्मानं मंदगत्या वा इत्येवममुना प्रकारेण व्रजिकादिषु अवक्रियतो व्रजिकादिष्वगमनेन वक्रमगच्छन् साधु संयमं वाकु यस्य व्यवच्छेदफलत्वात् संयममेवकेवलमनुवर्त्तयति नतु व्रजिकादिषु गमनेनात्मानं आलोचना दातव्येत्युक्तं । तत्रालोचनादानं तावदस्तु आलोचना परिणामो पि महाफल इत्येतद्दर्शयति।

[भा.२३३] आलोयणापरिणतो संमं संपत्थितो गुरुसगासं ।
जइ अंतराउकालं करेइ आराहतो सोउ ॥

वृ- सम्यक्आलोचनापरिणतः आलोचनापरिणामपरिणतः सन् गुरुसकाशं गुरुसमीपं संप्रस्थितो यद्यंतरा कालं करोति तथापि स आराधक एव स्वशक्त्यनिगूहनेन प्रवृत्तेस्तु शब्दएवकारार्थो भिन्नक्रमश्च स च यथा स्थानं योजितः आलोचना त्रिविधेत्युक्तं तत्र प्रथमां विहारालोचनां तावदाह -

[भा.२३४] पक्खिय चउ संवच्छर, उक्कोसं बारसण्हवरिसाणं ।
से मणुन्ना आयरिया फड्डगपतियाय वियडेंति ॥

वृ- समनोज्ञा एकसंभोगिका आचार्याः परस्परं तथास्य साधुसमुदायः तथास्पर्द्धकपतयश्च स्वमूलाचार्यस्य समीपे पाक्षिके तत्राभावे चातुर्म्मासिके तत्राप्यभावे सांवत्सरिके तत्राप्यसत्यन्यदा उक्कोसमित्यादिउत्कर्षतो । द्वादशभिर्वर्षैः सूत्रे षष्ठीतृतीयार्थे प्राकृतत्वात् दूरादप्यागत्य विहारं विकटयंति प्रकटयंति । आलोचयंति इत्यर्थः । भावार्थो वृद्धसंप्रदायादवसातव्यः, सचायं-संभोइया आयरिया

पक्खिए आलोयंति, उमोवारायणीयस्स आलोएइ, रायनितोवितमरायनियस्स आलोएइ, जइ सोरायणिओ नत्थि, । जइ पुन उमरायणितोवि ओगो, वागीयत्थो न भवइ, तो चउम्मासिए आलोएई तत्थवि असइ संवच्छरिए तत्थवि असतीए जत्थमिलइ रायनियस्स उमगीयत्थस्स वा तत्थ उक्कोसेणंबारसहि वरिसेहिं दूरतोवि आगंतुं आलोएयव्वं, फड्डगपइहिं वि आगंतू आलोएयव्वं, फड्डगपइयावि आगंतु पक्खियाइसु मूलायरियस्समोवे आलोएंति इति ।।

**[भा.२३५]** तं पुन ओहविभागे दरभूते उह जावभिन्नोउ ।
तेन परेण विभागो संभमसत्थाइभयणाओ ।।

**वृ-** तत्पुनर्विहारालोचनं द्विधा । तद्यथा उहविभागे इति प्राकृतत्वात् तृतीयार्थे सप्तमी ओघेन विभागेन च ओघः सामान्यं विभाभागो विस्तरः । तत्र ये साधवः समनोज्ञादरभुत्तेइति ईषद्भुंक्ते वास्तव्यसाधुभिरितिगम्यते । भोक्तुमारब्धवतां वास्तव्यसाधूनामित्यर्थः, प्राधुर्णकासमागतोतेउहत्ति ओघेनालोचयंति यता अल्पाविराधनामूलगुणेतूत्तरगुणेत्वल्पापार्श्वस्थादितुदानग्रहण तश्चेत्येवमालोच्य मंडल्यांभुंजते तत्र यदिमूलगुणापराधनिमित्तं वा प्रायश्चित्तं पंचकादि यावत् भिन्नो भिन्नमासः भिन्नमासपर्यन्तमापन्ना भवंति तदालोचनया आलोच्य साधुभिः सहैकत्र समुद्दिशंति तदनंतरं विभागत आलोचयंति तेनपरेणविभागोत्ति तेनेत्यव्ययमनेकार्थत्वात्ततइत्यर्थे द्रष्टव्यं ततोभिन्नमासात् परेण परतो मासादिकं यदि प्रायश्चित्तमापन्नास्ततो विभागं पृथग्भावः विष्वक्समुद्दिशंति पश्चाद्विभागेनालोचयंति संभ्रमसत्थादि भयणाउ इति संभ्रमसार्थादिषु आदिशब्दात् गाढग्लानत्वादिकारणपरिग्रहः । भजना विकल्पना विष्वग्भोजने पृथग्भोजनसंभवेभवति विष्वग्भोजनं तदभावेनेतिभावः इयमत्रभावना संभ्रमोनाम अग्न्यादिभयसमुत्थंत्वरणं तत्र सार्थेन सह व्रजतोऽन्तरासार्थनिवेशतः साधवः प्राधूर्णाः प्राधूर्णिकाः समागताः सार्थश्च प्रचलितुकामः । अन्यद्वा तत्र ग्रामोतंरं वा गाढग्लानत्वादिकं प्रयोजन-मुपस्थितं ततः प्रतीक्षणं न सहंते, अथवा ते मासादिकं परिहारस्थानमापन्नाः भाजनानि पृथग्भूतानि न विद्यंते येषु विष्वग्भोजनं कुर्युः तत ओघेनालोच्य वास्तव्यसाधुभिःसहैकत्रैव भुंजते क्षणिकीभूत-पृथग्भाजनप्राप्ती विष्वक् ततो विभागेनालोचयंति; सांप्रतमालोचनायाः कालनियममाह -

**[भा.२३६]** उहेणेगदिवसिया विभागतोणेगएगदिवसाउ ।
इति च दिवसतोवाविभागतो उघतो दिवसं ।।

**वृ-** ओघेनालोचना नियमाद्वैकदैवसिकी एकदिवसनिर्वृत्ता अल्पापराधत्वात् आसन्नभोजन-कालत्वाच्च विभागेनालोचना एक दिवसिकी अनेकदिवसिकी वा कथं पुनरनेकदिवसिकी संभवतीति चेत् उच्यते, बहवो यदा अपराधास्तदा बह्वालोचयितव्यमाचार्याश्च कथमपि व्यापृता भवेयुस्ततो न बह्वीं वेलां प्रतीच्छंति, आलोचको वा गच्छादि प्रयोजनतो व्यापृतोभवेत् । तत एवमनेक दिवसिकी विभागालोचना भवति सा च विभागालोचना रत्तिं वा इति रात्रौ वा गाथायां द्वितीय सप्तम्यर्थे प्राकृतत्वात्प्राकृते हि विभक्तीनां व्यत्ययो भवति, व्यत्ययोप्यासामितिवचनात्, दृश्यते च । लौकिकप्रयोगेपि सप्तम्यर्थे द्वितीया यथाउअविनयततिन्नपूरंसि सरिद्दहमएसूरकत्तोरत्तिमुद्देपाणि-उसन्द्धासउणवाणमिति दिवसतो वा सप्तम्यंतात् तस् प्रत्ययःदिवागतो विभागालोचना विस्तरबहुलत्वात्साह्वाचार्यस्यालोचकस्य वा प्रपारितं न भवति ततोदिवसे रात्रौ वा सा न विरुध्यते इति ओघतओघालोचनापुनर्दिवसं दिवसे अत्रापि द्वितीया सप्तम्यार्थे ओघालोचना हि भोजनकाले प्रत्यासन्ने

भवति साधवश्च रात्रौ न भुंजंते ततः । सा नियमतोदैवसिकी संप्रति त्रिविधाया अप्यालोचनाया वैभागिक्याः प्रशस्ताप्रशस्तदिनचिंतां चिकीर्षुरिदमाह ।।

[भा.२३७] विभागेन अप्पसत्थे दिनं मि रत्तिंयिवक्खवतोवावि ।
आइल्लादोणि भवेति वक्खवतो होइ तइया उ ।।

वृ- इह त्रिविधालोचना वक्तुमुपक्रांता तद्यथा विहारालोचना उपसंपदालोचना अपराधालोचना च एकैका द्विधा ओघतो विभागतश्च, तत्रोघतो भोजनकाले प्रत्यासन्ने भावान्न प्रशस्ताप्रशस्तदिनचिंता विभागतः पुनरस्तीति सा प्रोच्यते । आदिल्लादोत्निभवेइत्ति आद्ये द्वे आलोचने विहारालोचना उपसंपदालोचना चेत्यर्थः विभागेन विस्तरेण दीयमाने भवेयातामप्रशस्ते दिने रात्रौ वा अप्रशस्तायां विष्टिव्यतीपातादिदोषकलितेपि दिवसरात्रौ वा दीयते इति भावः दोषाभावात्, तथा पूर्वसूरिभिरनुज्ञातत्वात्, विक्खवतो वा वेति विपक्षतो वापि ते द्वे आद्ये आलोचने भवेयातां अप्रशस्तस्य प्रशस्तो विपक्षस्ततोऽयमर्थः प्रशस्ते वा दिवसे रात्रौ वा ते स्यातामिति विवक्खतो होउ तइयाओ इति तृतीया पुनरपराधालोचना विभागतो दीयमाना विपक्षतः सर्वस्य वाक्यस्य विपक्षव्यवच्छेदफलतया सावधारणत्वाद्विपक्षत एव प्रशस्तएव दिवसे रात्रौ वा भवतीति भावः सांप्रतमोघालोचनायाः प्रकारमाह-

[भा.२३८] अप्पामूलगुणेसु उत्तरगुणतो विराधना अप्पा ।
अप्पापा सत्थादिसु दानगह संपयोगोहा ।।

वृ- अल्पा स्तोकविराधना मूलगुणेषु प्राणातिपातनिवृत्त्यादिषु रात्रिभोजनविरमणपर्यंतेषु अल्पा विराधना उत्तरगुणेषु पिंडविशुद्ध्यादिषु अल्पा विराधना पार्श्वस्थादिषु पार्श्वस्थावसन्नकुशीलसंसक्तेषु दानग्रहसंप्रयोगतः दानसंप्रयोगतो ग्रहणसंप्रयोगतश्च एषा ओघत ओघेनालोचना एवमालोच्य मंडल्यामेकत्रसमुद्दिशंति विहारविभागालोचनाया विधिमाह -

[भा.२३९] भिक्खादिनिग्गए सुरहिते वियर्डति फड्डगपईओ ।
सव्वसमक्खं केई ते विसरियंनुसारेंति ।।

वृ- भिक्षादिनिर्गतेषु भिक्षार्थमादिशब्दाद्विचारभूमिगमनार्थमन्यप्रयोजनार्थं वा बहिर्विनिर्गतेषु साधुषु किमुक्तंभवतियस्यां वेलायां शिष्याः प्रतीच्छकाश्च बहिर्विनिर्गता भवंति तदानिं रहिते रहितस्य एकाकिन आचार्यस्य समीपे स्पर्द्धकपतिकाः स्पर्द्धकस्वामिनो विकटयंति, केचित् पुनराचार्या एतत् ब्रुवते ये स्पर्धकपतिना सहसमागताःसाधवस्तेषां समक्षं स्पर्धकपतयो विकटयंति, किंकारणमिति चेत् । आहते वीसरियंनुसारेंति, यस्मात्ते यत् किमपि विस्मृतं तत् स्मारयंति कथयंति संप्रति यत् आलोचनीयं तदालोचनाविषयं विधिमाह -

[भा.२४०] मूलगुणापढमकाजा तत्थवि पढमं तु पंथमादीसु ।
पायअमपज्जणादी बिइए उल्लाइ पंथे वा ।

वृ- इह द्विविधा अपराधा मूलगुणापराधा उत्तरगुणापराधाश्च, तत्र उभयसंभवे प्रथमं, मूलगुणत्ति मूलगुणापराधा आलोचनीयाः, तेष्वपि मूलगुणापराधेषु मध्ये प्रथमं मूलगुणापराधः प्राणातिपात इति, स प्रथममालोचनीयः, । स च षड् जीवकायविषय इति कायाः प्रथमतः आलोचयितव्यास्ते च कायाः पृथिव्यादिक्रमेण तत्र सूत्रे उपन्यस्ता इति, तत्थविति, तेष्वपि कायेषु पृथिव्यादिषु प्रथमं पृथिवीकायमेवमालोचयेत्, पंथमादीसु पायअपमज्जणादी, पंथादिषु यत्पादाप्रमार्जनादि कृतं किमुक्तं

भवति ? पथि व्रजता स्थंडिलादस्थंडिलमस्थंडिलात् स्थंडिलं कृष्णमृत्तिकातो वा नीलमृत्तिकां नीलमृत्तिकातो वा कृष्णमृत्तिकां, एवं शेषवर्णेष्वपि भावनीयं, संक्रामता पादयोर्यत् प्रमार्जनं न कृतं तथा वातोद्धतेन सचित्तेन रजसा सचित्तया वा मृत्तिकया संसृष्टेन हस्तेन संसृष्टेन मात्रकेण वा यत् भिक्षाग्रहणं कृतं, तदेवमाद्यालोचयेदिति सर्वत्रापि सामर्थ्यात् योजनीयं, बितिए उदगाइपंथे वा इति पृथिवीकायविराधनालोचनानंतरं द्वितीये अप्कायविषयं यत् उदकार्द्रादि आदिशब्दात् सस्निग्धादि परिग्रहः एतदुक्तं भवति, उदकार्द्रेन सस्निग्धेन वा हस्तेन मात्रकेण वा भिक्षाग्रहणं कृतं पथि वा मार्गे वा अयतनया उदकमुत्तीर्णा च । एवमादि तदालोचयेत् ।

**[भा.२४१]** तइए पइट्ठियादी, अभिधारणवीयणादि वाउंमि;
बीयाइ घट्टपंचमे, इंदिये अनुवायतो छट्ठे ।

**वृ-** अप्काय विराधनालोचनानंतरं तृतीये तेजस्काये यत् प्रतिष्ठितादि तेजसि परंपरादिप्रतिष्ठितं भक्तं पानं वा गृहीतं, आदिशब्दात् सज्योतिषि वसतावपस्थानं कृतमित्येवमादीति भाव तदालोचयेत् तदनंतरं वायौ वातकाये यत् अभिधारण वीजनादि कृतं धर्मार्त्तेन बहिर्वातोभिसंधारितो भक्तं पानं शरीरं वा वीजनकादिना वीजितं एवमादि तदालोचयेत्, ततः पंचमे वनस्पतिकाये बीयाइघट्टि त्ति यवबीजादिघट्टनं आदिशब्दात् हरितकायादिपरिग्रहः उपलक्षणमेतत् तेन यदि वा बीजादिकं भिक्षासु पतितं ग्रहीतमित्येवमादि तदालोचयेत् तदनंतरं षष्ठे त्रसकाये इंद्रियानुपाततः इंद्रियवृद्धिक्रमेणालोचना दातव्या, तद्यथा प्रथमतो द्वींद्रियाणां संघट्टनपरितापनाद्यालोचयेत्, तदनंतरं त्रींद्रियाणां ततश्चतुरिंद्रियाणां ततः पंचेंद्रियाणामिति एवं प्रथममूलगुणापराधेषु क्रमेणालोचितेषु सत्सु ।

**[भा.२४२]** दुब्भासिय हसियादी बीए तइए अ जाचियग्गहणं ।
घट्टणपुव्वरयाई इंदिय आलोगमेहुण्णे ।

**वृ-** द्वितीये मूलगुणापराधे मृषावादे मृषावादविषयं यत् किमपि दुर्भाषितं भणितं हासेन वा मृषावादो भणित आदिशब्दात् क्रोधेन वा मानेन वा मायया वा लोभेन वा भयेन वा यत् किमपि मृषाभणितमिति परिग्रहस्तदालोचयेत्, तदनंतरं तृतीये मूलगुणापराधे एदत्तादानलक्षणे यत् अयाचितस्य तृणडगलादेर्ग्रहणं उपलक्षणमेतत् तेन अननुज्ञाप्य वा अवग्रहं कायिकादि व्युत्सृष्टं भवेदित्यादि परिग्रहः तदालोचयेत् ततो मैथुने मैथुनविषयं यद्घट्टने पूर्वरतादि, किमुक्तं भवति, ? चैत्यभवनमहिमादिषु प्रभूतजनसंमर्द्दे स्त्रीशरीरसंघट्टने स्पर्श आस्वादितो भवेत: पूर्वरतक्रीडितं वा अनुस्मृतं स्यात् । इंदियत्ति इंद्रियाणि वा मनोहराणि उपलक्षणमेतत् वदनस्तनादिकमतिसुमनोहरमवेक्ष्य मनाक् रागं गतो भवेत् इत्यादि तदालोचयेत् ।

**[भा.२४३]** मुच्छातिरित्तपंचमे: छट्ठे लेवाडअगयसुंठादी:
गुत्तिसमिईविवक्खाणामि गहणुत्तरगुणेसु ।

**वृ-** चतुर्थमूलगुणापराधालोचनानंतरं पंचमे मूलगुणापराधे परिग्रहविषयभूते यत् उपकरणेषु मूर्च्छा कृता भवेत्, अईरित्तत्ति अतिरिक्तो वा उपधिः परिगृहीत एतदालोचयेत् तदनंतरं षष्ठे मूलगुणापराधे रात्रिभोजने लेवाडित्ति लेपकृद्दवयवः कथमपि पर्युषितो भवेत् । अगदं वा शुंठ्यादि किंचित् सन्निहितं परिभुक्तं भवेत् एवमादि आलोचयेत्, एवं क्रमेण मूलगुणापराधालोचना दत्वा तदनंतरमुत्तरगुणेषु उत्तरगुणविषयं गुप्ति समितिविपक्षाः कृताः । अनेषणीयग्रहणं वाकारि, किमुक्तं भवति गुप्तिषु

कदाचिदगुप्तः स्यात् समितिषु कदाचिदसमितोऽनेषणीयं वा भक्तं पानं वा गृहीतं स्यादित्यादि आलोचयेत् तथा -

[भा.२४४] संतंमिवि बलविरिए, तवो वहाणे य जं न उज्जमियं;
एसा विहारवियडणा, वोच्छं उवसंपनाणत्तं ।

वृ- सत्यपि विद्यमानेपि बलं शरीरं प्राणः वीर्यमांतरी शक्तिस्तद्वशात् तपः कुर्वन् शरीरस्यातिकृशतायामपि न संयमयोगेषु सीदति; बलं च वीर्यं च बलवीर्यं समाहारे द्वंद्वस्तस्मिन् तपसो द्विप्रभेदस्यापि उपधानं करणं तपउपधानं तस्मिन् नोद्यतं, नोद्यमः कृतः एतदपि आलोचयेत् । एषा विहारविकटना विहारालोचना उपसंपदालोचनादि प्राय एवंरूपा, केवलं यन्नानात्वं तद् वक्ष्ये, तत्र प्रथमतः उपसंपदालोचनाया अपराधा लोचनायाश्च विहारलोचनया सह नानात्वं दर्शयति -

[भा.२४५] एगमणोगा दिवसेसु होइ ओहे य पयविभागे य,
उवसंपयावराहे, नायमनायं परिच्छंति ।

वृ- उपसंपच्चापराधश्च उपसंपदपराधस्तस्मिन् आलोचना इति प्रस्तावात् गम्यते उपसंपदालोचना अपराधालोचना चेत्यर्थः, । प्रत्येकं द्विधा, ओहेय इत्यादि तृतीयार्थे सप्तमी ओधेन पदविभागेन च । तथा एकैकापि दिवसेषु चिंत्यमाना एगमनोगा इति पदैकदेशे पदसमुदायोपचारात्: एकदिवसिकी अनेकदिवसिकी च भवति । ओघालोचना एकदिवसिकी विभागालोचना एकादिवसिकी अनेकदिवसिकी चेत्यर्थः, तदेवमुक्तमनानात्वमधुना नानात्वमुपदर्शयति । नायमनायं परिच्छंति, उपसंपद्यमानं पूर्वं ज्ञातमज्ञातं च परीक्षंते परिभावयंति, परिभाव्य वा ज्ञानमावश्यकपदादिभिः परीक्षंते इयमत्र भावना, । उपसंपद्यमानो द्विविधो भवति ज्ञातोऽज्ञातः, तत्र यदि ज्ञातः स न परीक्ष्यते तस्याग्रेपि ज्ञातत्वात् अथाज्ञातस्तर्हि स आवश्यकादिभिः पदैः परीक्षणीय इति, संप्रति यदुक्तं विभागेण अप्पसत्थे दिनमित्यादि, तद् व्याख्यातुकाम आह -

[भा.२४६] दिवसातो उवसंपय अवराहे दिवसतो पसत्थंमि;
उव्वातो तद्दिवसं, तिराहं तु अतिक्कमे गुरुगा ।

वृ- विहारालोचनावत् उपसंपदालोचनापि विभागेन प्रशस्ते अप्रशस्ते वा दिवसे रात्रौ दातव्या दोषाभावात् । तथा पूर्वसूरिभिरनुज्ञातात्, अपराधे अपराधविषया पुनरालोचना, दिवसतो इति सप्तम्यंतात् तद्दिवसे उपलक्षणमेतत् रजन्यां वा, प्रशस्ते विष्टिव्यतीपातादिदोषवर्जिते व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात्, द्रव्यादिषु च प्रशस्तेषु दातव्या, नाप्रशस्तेषु एषा जिनाज्ञा, तथा उव्वातो तद्दिवसमिति यस्मिन् दिवसे उपसंपद्यमान आगतः, तस्मिन् दिवस यदि उद्वातः परिश्रांत इति कृत्वा न पृष्ट आचार्येण, ततः स आचार्यः शुद्धः । त्रयाणां तु दिवसानामतिक्रमे विमुक्तं भवति । त्रिषु दिवसेषु मध्ये यदि न पृष्टस्ततश्चतुर्थे दिवसे तस्यापृच्छतः परिहारस्थानं गुरुकाश्चत्वारो गुरुमासा एतच्च उपरि व्याख्यास्यते ।

[भा.२४७] समणुन्नदुगनिमित्तं, उवसंपज्जे तं य होइ एमेव ।
अणमणुने नवरं, विभागतो कारणे भइयं ।।

वृ- उपसंपद्यमानो द्विधा, तद्यथा समनोज्ञोऽसमनोज्ञश्च तत्र समनोज्ञस्य समीपं समनोज्ञ उपसंपद्यमानो द्विकनिमित्तं उपसंपद्यते, तद्यथा ज्ञानार्थं दर्शनार्थं च, न चारित्रार्थं, येन चरणं प्रति सदृश

एव तस्मिन् समनोज्ञे द्विकनिमित्तमुपसंपद्यमाने एवमेव, विहारालोचनेव भवत्यालोचना इयमत्र भावना, समनोज्ञो द्विकनिमित्तमुपसंपद्यमान आलोचनां विहारालोचनामिव ओघेन ददाति, पदविभागेन च पदविभागालोचना एक दिवसेन वा भवत्यनेकदिवसैर्वा एवं समनोज्ञस्य उपसंपदालोचना, अण्णमणुन्ने इत्यादि अन्यो नाम भिन्नसांभोगिकः अमनोज्ञाऽसंविग्नः । सोन्योऽसमनोज्ञश्च उपसंपद्यमानस्त्रिकनिमित्तमुपसंपद्यते । तद्यथा ज्ञानार्थं दर्शनार्थं चारित्रार्थं वा तस्मिंश्च तथोपसंपद्यमाने पूर्ववदालोचनाविधिः। अत्रापीयं भावना । अन्योऽसमनोज्ञो वा आलोचनां ददाति ओघेन पदविभागेन ददान एकदिवसेन वा ददाति, अनेकदिवसैर्वा नवरमिति विशेष एष पुनरत्र विशेषः तस्यान्यस्यामनोज्ञस्य वा आलोचना उत्सर्गतो विभागतः सर्व वाक्यं सावधारणमिति विभागेन तत एव कारणे पुनर्भजितं विकल्पितं वेलाप्राप्तौ विभागालोचना भवति संभ्रमसार्थादिषु पुनः कारणेषु तदप्राप्तावोघेनालोचनेति भावः एषा भजना अपराधालोचनायामपि द्रष्टव्या, तथाहि अपराधालोचनायामप्युत्सर्गत एव विभागेन दातव्या, । अपवादकारणे पुनः भ्रमसार्थादिलक्षणे ओघेनापीति, संप्रति उद्दातो तद्दिवसमिति व्याख्यातुकाम आह।

**[भा. २४८]** पढमदिनमविप्फाले, लहुओ बितिए गुरु तइए लहुया ।
तेच्चिय तस्साकहणे, सुद्धमसुद्धो इमेहिं तु ।।

**वृ** - समनोज्ञ उपसंपादनार्थमागतस्तं यद्याचार्यः प्रथमदिवसमिति सप्तम्यर्थे द्वितीया प्रथमदिवसेन विप्फालेइ, पीवचनभेदतु न पृच्छतीत्यर्थः । अत्रांय विप्फालणमिति पुच्छणत्ति वा एगट्ठमिति, यथा कुत आगतः । कुत्र वा गमिष्यसि, किंनिमित्तं वा समागत इति । ततस्तस्य प्रथमदिवसे एवमविप्फालने परिहारस्थानं लहुयत्ति मासलघु द्वितीयेपि दिवसे यदि न पृच्छति ततो गुरुत्ति मासगुरुः, लइएत्ति तृतीयदिवसेप्यपृच्छने लहुया इति चत्वारो लघुमासाः, । चतुर्थेपि दिवसे यदि न पृच्छति । , ततः तिण्हं तु अतिक्कमे गुरुगा इति वचनाच्चतुर्गुरु, पंचमादिष्वपि दिवसेष्वपृच्छने तदेव चतुर्गुरु, तिराहं तु अतिक्कमे गुरुगा इति निरवधितया वचनप्रवृत्तः तेच्चिय तस्साकहणे इति, ते एव प्रायश्चित्तविशेषाः क्रमेण तस्याकथने, तद्यथा स पृष्टः सन् यदि ब्रूते कथयिष्यामि नतु कथयति, ततस्मिन् प्रथमदिवसे अकथने मासलघु द्वितीयदिवसेप्यकथयतो मासगुरु, इदानीं उद्घातो तद्दिवसमिति व्याख्याया अवसरः । तद्दिवसे प्रथमदिवसे उद्घात इति कृत्वा न पृच्छति ततः स आचार्यः प्रथमदिवसे अविप्फाले अपृच्छने लहुयत्ति लघु न दोषगुरु, शुद्ध इत्यर्थः । कारणवशेनापृच्छनात् द्वितीयदिवसे न पृच्छति मासगुरु, तृतीयदिवसेप्यपृच्छने चतुर्लघु, चतुर्थदिवसेप्यपृच्छने चतुर्गुरु, एवं तेनोपसंपद्यमानेन पृष्टेनापृष्टेन वा यदाख्यातं भवति, यथाहममुकेन कारणेन समागत इति ततः स आगताश्चिंतनीयः सुद्धमसुद्धो यत्ति शुद्धोऽशुद्धो वा अत्र चत्वारो भंगास्तद्यथा निर्गमनमप्यशुद्धं आगमनमप्यशुद्धं, १ निर्गमनमशुद्धमागमनं शुद्धं २, निर्गमनं शुद्धमागमनमशुद्धं ३, निर्गमनमपि शुद्धमागमनमपि शुद्धं ४, अत्र प्रथमभंगे निर्गमनस्य इमेहिं तुत्ति एभिर्वक्ष्यमाणैर्द्वारैश्चिंतितान्येव द्वाराणि दर्शयति -

**[भा. २४९]** अहिगरणविगतिजोगे, पडिनीए थद्धलुद्धनिद्धम्मे ।
अलसअनुबद्धवेरे, सच्छंदमती पयहीयव्वो ।।

**वृ** - यदि स उपसंपद्यमानोऽधिकरणदोषतः स्वस्थानान्निर्गतः, विगतित्ति विकृतिलांपट्यात् जोगति योगोद्वहनभीरुतया, पडिनीएत्ति प्रत्यनीकोऽत्रम साधुरिति बुध्धया, तथा थद्धलुद्धेत्यादि स्तब्ध इति वा लुब्ध इति वा, निर्द्धर्म्म इति वा अलस इति वा अनुबद्धवैर इति वा स्वच्छंदमतिरिति वा

विनिर्गतस्ततस्तस्य निर्गमनमशुद्धमिति कृत्वा पयहीयव्वोत्ति परिहर्त्तव्यः । तदपरिहरणे प्रायश्चित्तं, तत्राधिकरणविषये प्रायश्चित्तमाह -

[भा.२५०] गिहिसंजयअहिगरणे, लघुगुरु तस्स अप्पणोच्छेदे ।
विगइ न देइ घेत्तुभुत्तउद्धरियं च गहिएवि ॥

वृ- गृहिभिः संयतैश्च सहाधिकरणे विनिर्गतं यद्याचार्यः स्वीकरोति, ततो यथाक्रमं प्रायश्चित्तं लघुगुरुके इयमत्र भावना यदि गृहस्थेन सहाधिकरणं कृत्वा विनिर्गतस्तं यद्याचार्यः संगृह्णाति, ततस्तस्याचार्यस्य परिहारस्थानं चत्वारो लघुमासाः, अथ संयतेन समधिकरणं कृत्वा समागतं संगृह्णाति ततश्चत्वारो गुरुकाः, तस्य पुनरागंतुकस्य पणत्ति रात्रिंदिवसपंचकप्रमाणः पर्यायस्य च्छेदः इहाधिकरणादिदोषतो विनिर्गतास्ते प्रश्नेऽप्रश्ने वा सति तदुक्तिवशादवसीयंते, तत्र विकृतिदोषविनिर्गतस्य पृष्टस्यापृष्टस्य वा य उक्तिविशेषस्तं दर्शयति विगइमित्यादि । स आचार्यो विकृतं घृतादिकं ग्रहणाय न ददाति, तथा योगवाहिभिर्योगोत्तीर्णैः कायोत्सर्गकरणतो गृहीतेपि परिपूर्णे विकृतिजातेऽन्यैर्भुक्ते या उद्धरिता विकृतिस्तामपि नानुजानाति किंच -

[भा.२५१] नववज्जियाव देहो पाइए दुब्बलो अहं भंते,
तदभावियस्स इण्हिं न य गहणं धारणं कत्तो ।

वृ- वज्जियावो नाम देशीवचनत्वादिक्षुः उक्तंच वज्जियावगो उच्छु इति नववज्जियावत् देहो यस्य स तथा इयमत्र भावना स ब्रूते अहं भगवन् नवेक्षुतुल्यो मम देहो यथा स इक्षुः पानीयेन विना शुष्यति, तथा ममापि देहो विकृतिं विना सीदति, अन्यच्चाहं स्वभावेन दुर्बलो, न विकृतिमंतरेण बलिको भवामि, तथा सर्वदैव विकृत्या भावितदेहस्ततस्तद्भावितस्य सतो ममेदानीं तस्याभावेन बलं न सूत्रस्यार्थस्य वा ग्रहणमशक्तत्वात् पूर्वगृहीतस्य तु सूत्रस्यार्थस्य वा धारणं कुतः । तत् अशक्त्या सर्वं दूरत एव विस्मृतं, ततोहं विनिर्गतः संप्रति योगविषये प्रत्यनीकविषये चोक्तिविशेषं दर्शयति -

[भा.२५२] एगंतरनिव्वगति, जोगो पच्चत्थिगोव मे अत्थि ।
बुक्कखलिएसु गेण्ह, छिद्दाणि कहेइ य गुरूणं ।

वृ- तस्मिन् गच्छे योग एकांतरनिर्विकृतिकः विमुक्तं भवति ।; स पृष्टोऽपृष्टो वा ब्रूते तस्याचार्यस्य गच्छे योगं एकांतरोपवासेनोह्यते, एकांतराचाम्लेन वा तथा योगवाहिनो योगोत्तीर्णस्यापि ते आचार्या विकृतिं न विसृजंति, ततः कर्कशास्तत्र योगा इति विनिर्गतः । तथा तद्गच्छे मे मम प्रत्यर्थिकः प्रत्यनीकोस्ति स कथंचित्त सामाचारीयोगेषु बुक्कखलिएसुत्ति बुक्के विस्मृते, सामाचारीविशेषे स्खलिते दुःप्रत्युपेक्षणादिके मां गृह्णाति, अत्यर्थं खरंटयति, अथवा चुक्कखलितेषु जातेषु तानि चुक्कस्खलितानि अपराधपदे छिद्राणीव छिद्राणि गृह्णाति गृहीत्वा च गुरूणां कथयति पश्चात् गुरुवो मां खरंटयंति, ततो विनिर्गतः, संप्रति लुब्धस्य स्तब्धस्य चोक्तिविशेषं दर्शयति -

[भा.२५३] चंकमणादि उट्ठाणे, कटिगहणं झाउ नत्थि थद्धेवं;
भुंजइ सयमुक्कोसं, न य देंत तेसिं लुद्धेवं ।

वृ- स्तब्ध एवं भाषते, चंक्रमणादावुत्थाने कटिग्रहणं स्वाध्यायश्च नास्ति एतदुक्तं भवति, यद्याचार्याश्चंक्रमणं कुर्वन् आदिशब्दात् यदिवा कायिक्यादिभूमिं गच्छंत्यागच्छंति वा तथा अभ्युत्थातव्याः तेषां नायकत्वात् तत एवं चंक्रमणादावभ्युत्तिष्ठतामस्माकं कटी वातेन गृह्यते भूयो

भूयो उत्थाने पलिमंथभावात् सूत्ररूपस्यार्थरूपस्य वा स्वाध्यायस्य हानिः । अथनाभ्युत्थीयंते तत्र आचार्याः प्रायश्चित्तं ददति खरंटयंति च, ततोहं विनिर्गतः, लुब्धः पुनरेवं ब्रूते, यत् किमप्युत्कृष्टं शिखरिणी मोदकादि तदाचार्यः स्वयं भुंक्ते, न त्वस्माद्दशेभ्यो ददाति, अन्येभ्यो वा बालवृद्धदुर्बलप्राधूर्णकेभ्यो ददाति, तत एतदसहमानोहं निर्गतः अधुना निर्द्धर्म्मालसयोरुक्तिविशेषं प्रकटयति ॥

**[भा.२५४]** आवस्सियापमज्जण अकरणे उग्गदंडनिद्धम्मा,
बालावुड्ढादीहा, भिक्खायरिया य उब्भामा ।

**वृ-** यो निर्द्धर्म्मा स पृष्टः सन्नेवं वक्ति, आवश्यकीप्रमार्जनाकरणे उग्रदंडा आचार्याः । इयमत्र भावना, यदि कथमपि निर्गच्छन् प्रविशन् आवश्यकी नैषेधिकीं च न करोति, दंडादिकं गृह्णन् निक्षिपन्वा न प्रमार्जयति तत आचार्या निरनुकंपाः संत उग्रं प्रायश्चित्तरूपं दंडं प्रयच्छंति, ततोहं दंडभयात् विनिर्गतः, य पुनरलसः स एवं ब्रूते, बालाद्यर्थाय बालवृद्धादीनामर्थाय तस्मिन् गच्छे दीर्घा भिक्षाचर्या, अथवा क्षुल्लकं कर्कशं वा तत् क्षेत्रं, ततो दिने दिने उद्‌भ्रामा, भिक्षाचर्या प्रतिदिवसमन्यत्र ग्रामांतरे गत्वा नीयते इति भावस्तथा यदि कथमप्यपर्याप्तेन समागम्यते ततो गुरुः खरंटयति, किं वसतौ महानसमस्ति येनापर्याप्तः समागतः तस्माद् भूयोऽपि व्रज भिक्षार्थं, यतः कालोऽद्यापि बहुः प्राप्यत इति । ततोहं निर्गतः, सांप्रतमनुबद्धवैरस्वच्छंदमत्योरुक्तिविशेषं दर्शयति -

**[भा.२५५]** पानसुणगाव भुंजंति एगत्तो भंडिउंपि अनुबद्धोः
एगागिस्स न लब्भा, वलिउं थेवंपि सच्छंदो ।

**वृ-** अनुबद्धोऽनुबद्धवैरो भवति भंडित्वापि भंडनं कलहस्तमपि कृत्वा पानशुनका इव एकत्र भुंजते, इयमत्र भावना यथा पाणश्चांडालाः शुनकाः कुक्कुराः परस्परं भंडित्वा तत्क्षणदेवैकत्र भुंजते, एवं तत्र संयता अपि, नवरं मिथ्यादुःकृतं परस्परं दाप्यते इति विशेषः, अहं पुनर्न शक्नोमि हृदयस्थेन शल्येन तैः सह एकत्र समुद्देष्टुमिति विनिर्गतः, स्वच्छंदमतिः पुनरेवं भाषते, एकाकिनः सतः स्तोकमपि न लभ्यं चलितुं, किमुक्तं भवति ! संज्ञाभूमावप्येकाकिनः सतो गंतुं न प्रयच्छंति, किंत्वेवं ब्रुवते, नियमात्संघाटकरूपतया केनापि सहितेन गंतव्यं, ततस्तमसहमानोहमत्रागतः एतान्यधिकरणादिपदान्याचार्यः श्रुत्वा तं परित्यजति, एतैश्चाधिकरणादिपदैरागतस्य तस्योपसंपद्यमानस्य प्रतीच्छतश्चाचार्यस्येदं प्रायश्चित्तं ॥

**[भा.२५६]** जइभंडणपडिनीए, लुद्धे अनुबद्धरोसचउगुरुगा,
सेसाणं हुंति लहुगा एमेव पडिच्छमाणस्स ।

**वृ-** यो यतिभिः सह भंडनं कृत्वा समागतः यत्र तत्र मे प्रत्यनीकः साधुरिति कृत्वा समागच्छेत् यश्च लुब्धो यश्चानुबद्धरोषः । एतेषामुपसंपदं प्रतिपद्यमानानां प्रायश्चित्तं चतुर्गुरुकाश्चत्वारो गुरुमासाः, शेषाणां गृहिभंडनकारिविकृतिलंपटयोगभीरुस्तब्धनिर्धर्म्मस्वच्छंदमतीनां लघुका इति चत्वारो लघुकाः, । यः पुनराचार्यस्तदाचार्याननुज्ञया प्रायश्चित्तदानमंतरेण च प्रतीच्छति तस्यापि प्रायश्चित्तमेवमेव, तद्यथा यतिभंडनकारिप्रत्यनीकलुब्धानुबद्धवैरान् प्रतीच्छतश्चत्वारो गुरुमासाः शेषान् षट् प्रतीच्छतश्चत्वारो लघुमासाः । अथवा ये एते दोषा उक्तास्तेषां मध्ये एकेनापि दोषेण नागतो भवेत् किंत्वेभिर्वक्ष्यमाणैस्तानेवाह ॥

**[भा.२५७]** एगे अपरिणह वा अप्पाधारे व थेरए,

गिलाणे बहुरोगी य, मंदधम्मे य पाहुडे ।

**वृ-** यदि एक एकाकी पश्चादाचार्यः । यदिवा अपरिणतः अकल्पिकवस्त्रादिसहितः स च कल्पिकवस्त्राद्युत्पादने लब्धिमान् । अथवा पश्चादाचार्योऽल्पाधारसूत्रार्थनिपुनविकलः स च पृष्टः सन् सूत्रार्थकथने निपुणशक्तिमान् यदिवाचार्यः परिवारो वा स्थविरो जरसा वृद्धशरीरः स च तेषां प्रतिजागरकः अथवा पश्चादेको ग्लानः । स च चिंताकारी यदिवा पश्चात्तत्रैको बहुरोगी बहुरोगी नाम बहुभिः साधारणैः रोगैर्व्याप्तशरीरः स च तस्य वर्त्तापकः, यदिवा पश्चात्तेनाचार्यपरिवारः सर्वोपि निर्द्धर्म्मा न गुर्वाज्ञां करोति केवलं तद्भयात् किमपि करोति तथा तत्र पश्चात् गुरोः केनापि सह प्राभृतं वर्तमानमस्ति । प्राभृतं नाम अधिकरणं, स च गुरोः क्रमेणाधिकरणापनयनतः साहाय्यकारी एवं प्राग्वर्त्तमाने यदि समागतो भवति तदा तस्य निर्गमनमशुद्धमशुद्ध त्वाच्च परित्याज्य इति । एतामेव गाथां व्याख्यातुकामः प्रथमत एकापरिणताल्पाधारद्वाराणि व्याख्यानयति -

**[भा.२५८]** एगानियं पमोत्तुं । वत्थादिअकप्पिएहिं वा सहियं;
अप्पाधारोवायेण तं चेव च पुच्छिउं देह ।

**वृ-** एकमेकाकिनं पश्चादाचार्यं मुक्त्वा यदि समागतः, अथवा वस्त्राद्यकल्पिकैः कथमपि गृहीतैरकल्पकैर्वस्त्रादिभिः सहितं मुक्त्वा एतेनापरिणत इति व्याख्यातं, यदिवा अल्पः सूत्रस्यार्थस्य वा आधार इति स आचार्यस्तमेव पृष्ट्वा शेषसाधुभ्यो वाचनां ददाति, तादृशं मुक्त्वा एतेनाल्पाधार इति विवृतं ।।

**[भा.२५९]** थेरं अतीमहल्लं, अजंगमं मोत्तु आगतो गुरुं तु ।।
सो च परिसाबथेरअहं तु वट्टावतोतेसिं ।

**वृ-** स्थविरमेव व्याचष्टे, अतीव महान्तमजंगमं गमनशक्तिविकलं गुरुं उपलक्षणमेतत् परिवारं स्थविरमुक्तरूपं मुक्त्वा यदि समागतः स च प्रतिजागरकस्तथा च तस्य पृष्टस्य सतोऽमुमेवोक्तिविशेषं दर्शयति स आचार्यः स्थविरः पर्षदापरिवारो वा अहं तु तेषां गुर्वादीनां वर्त्तापकः प्रतिजागरक आसम् एतेन स्थविर इति पदं व्याख्यातं, ग्लानबहुरोगनिर्द्धर्म्मपदानि व्याख्यानयति ।।

**[भा.२६०]** तत्थ गिलाणो एगो जप्पसरीरो य होइ बहुरोगी;
निद्धम्मा गुरुआणं न करेंति ममं पमोत्तूणं ।

**वृ-** तत्र गच्छे ग्लान एकोस्ति, यदिवा बहुरोगी यो जाप्यशरीरो भवति, स बहुरोगी, तं ग्लानबहुरोगिणं वा विमुच्य यदि समागतस्तथा निर्द्धर्म्मपरिषद्विषये तस्य पृष्टस्य सत उक्तिविशेषं दर्शयति, निर्द्धर्म्मणो धर्मवासनारहितास्तस्य ममाचार्यस्य शिष्याः सर्वथा गुर्वाज्ञां न कुर्वंति मां प्रमुच्य, मम पुनराज्ञां कुर्वंति, तादृशं वा निद्धर्म्मपरिवारं मुक्त्वा यदि समागतस्तर्हि स न प्रतिग्राह्यः केवलमयमुपदेशस्तस्मै दातव्यः । तमेवाह -

**[भा.२६१]** एयारिसं विउसज्ज विप्पवासो न कप्पइ ।
सीसायरिय पडिच्छे, पायच्छितं विहिज्जइ ।।

**वृ-** एतादृशमेकाक्यादिस्वरूपं गुरुमन्यं वा ग्लानादिकं व्युत्सृज्य परित्यज्य विशेषेण प्रवासोऽन्यत्र गमनं विप्रयासो भद्रतव न कल्पते बहुगुणाधारो भवान् कथमीदृशं कृतवान्, तस्मात् अद्यापि प्रायश्चित्तं प्रतिपद्य, पश्चात् गच्छ, स च समागतस्तस्य प्राक्तनस्याचार्यशिष्यो वा स्यात् प्रतीच्छको वा एवमागतं

तमुपसंपद्यमानं योप्याचार्यः प्रतीच्छति, सोपि प्रायश्चित्तभाक् ततः शिष्यप्रतीच्छकाचार्याणां प्रायश्चित्तं विवक्षुरिदमाह, सीसायरिए इत्यादि, शिष्ये आचार्ये प्रतीच्छके च प्रायश्चित्त विधीयते प्रायश्चित्तदानविधिरुच्यते इति भावः, प्रतिज्ञातमेव निर्वाहयति ।

**[भा. २६२]**		एगे गिलाणगे वा, तिण्हवि गुरुगाउ सीसमादीणं;
		सेसे सिस्से गुरुगा, पडिच्छलहुगा गुरुसरिसं ।

**वृ-** एकस्मिन् एकाकिनि गुरौ ग्लाने वा तत्र गच्छे तिष्ठति यदि समागतः शिष्यः प्रतीच्छको वा आचार्येणा तथासमागतः सन् यदि प्रतीच्छितस्तदा शिष्यादीनां शिष्यप्रतीच्छकाचार्याणां त्रयाणमपि प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासाः, यः पुनरन्यः शेषोऽपरिणताल्पाधारस्थविरबहुरोगमंदधर्म्म-परिवारलक्षणः, तस्मिन् शेषे यदि समागतः शिष्यः ततस्तस्य प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासाः अथ प्रतीच्छकः समागतस्तर्हि तस्य लघुकाश्चत्वारो लघुमासाः गुरुसरिसमिति, गुरोरपि शिष्यप्रतीच्छकसदृशं प्रायश्चित्तं, किमुक्तं भवति यदि शिष्यं प्रतीछति ततः प्रायश्चित्तं चत्वारो गुरुमासाः, अथ प्रतीच्छकं तर्हि चत्वारो लघुका इति ।

**[भा. २६३]**		सीसपडिच्छे पाहुडे, च्छेदो राइंदियाणि पंचेव ।
		आयरियस्सवि गुरुगा, दोवेए पडिच्छमाणस्स ।

**वृ-** यदि प्राभृते गुरोः केनापि सहाधिकरणे वर्त्तमाने शिष्यः प्रतीच्छको वा समागतः तदा तस्य शिष्यस्य प्रतीच्छकस्य वा प्रायश्चित्तं पंच रात्रिंदिवानि पर्यायस्य च्छेदः, आचार्यस्य पुनर्द्वावप्येतौ प्रतीच्छतः प्रतिगृह्णतः प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासा तदेव प्रथमभंगे निर्गमनदोषा उक्ताः आगमनमशुद्धं तदा भवति, यदा व्रजिकादिषु प्रतिबध्यमानः समागतः तत्रापिप्रतिबंधनिमित्तं प्रायश्चित्तं सूत्रानुसारतो वक्तव्यं गतः प्रथमोभंगः द्वितीयभंगोप्येतादृश एव नवरं तत्रागमनं शुद्धं क्वचिदपि व्रजिकादौ प्रतिबंधाकरणात् तृतीयचतुर्थभंगावनुक्रमेणाह -

**[भा. २६४]**		एतद्दोसविमुक्कं वइयादीपडिबद्धमायातं,
		दाऊण पच्छित्तं; पडिबद्धंपि पडिच्छेज्जा ।

**वृ-** एतैरनंतरोदितैरधिकरणकारित्वविकृतितालापव्यादिदोषैर्विमुक्तमेतेन निर्गमनं शुद्धमुक्तं, तथा व्रजिकादौ अप्रतिबद्धं क्वचिदपि प्रतिबंधमाकुर्वंतमायातमेतेन गमनं शुद्धमुपदर्शितं एष चतुर्थो भंगः एष एवोत्सर्गतः श्रेयानिति ज्ञापनार्थं तृतीयभंगात्पूर्वमुक्तः । एवंभूतं प्रतीच्छेत् तृतीयभंगमाह - दाउणेत्यादि । यस्त्वधिकरणकारित्वादिदोषविनिर्मुक्तो निर्गतः केवलं व्रजिकादिषु प्रतिबध्यमानः समागतस्तमप्यपवादपदेन यत् व्रजिकादिषु प्रतिबंधकरणम भूत्तन्निमित्तं प्रायश्चित्तं दत्वा प्रतीच्छेद् ।

**[भा. २६५]**		सुद्धं पडिच्छिऊणं, अपडिच्छणा लहुयातिन्निदिवसानि;
		सीसे आयरिए वा, परिच्छा तत्थिमा होइ ।

**वृ-** शुद्धं निर्गमनमागमनदोषरहितं प्रतीच्छ्य प्रतिगृह्य त्रीन् दिवसान् यावत् परीक्षेत् किमेष धर्म्मश्रद्धावान् किंवा नेति, यदि पुनर्न परीक्ष्यते ततोप्य परीक्षणे लहुयत्ति मासलघुप्रायश्चित्तं, आचार्यांतराभिप्रायेण चतुर्मासलघु, सा च परीक्षा उभयथापि शिष्य आचार्यां परीक्षते, आचार्याः शिष्यः उभयथापि च परीक्षा आवश्यकादिपदैस्तथा चाह सिस्से इत्यादि, तत्र तस्मिन् उपसंपद्यमाने प्रतीच्छिते सति शिष्ये आचार्ये च परस्परमियमावश्यकादिपदैर्वक्ष्यमाणा परीक्षा भवति तामेवाह -

**[भा.२६६]** आवस्सय पडिलेहण, सज्झाए भुंजणाय भासाय;
वियारे गेलण्णे भिक्खगहणे परिच्छंति ।

**वृ-** आवश्यक प्रतिलेखने स्वाध्याये भोजने भाषायां विचारे बहिर्भूमौ ग्लाने भिक्षाग्रहणे च परस्परमाचार्यशिष्यौ परीक्षेते, तत्रावश्यकादिपदान्यधिकृत्य यथाचार्यः शिष्यं परीक्षते तथोपदर्शयति।

**[भा.२६७]** केई पुव्वनिसिद्धा, केई सारइ तत्थ सारेइ;
संविग्गो सिक्खमग्गइ मुत्तावलिमो अणाहोहं ।

**वृ-** केचित्साधवो वरवृषभादयस्तस्योपसंपत्कालात् पूर्वमेव आवश्यकादिपदेषु ये दोषास्तेभ्यो निषिद्धा, यथा आचार्या इदमिदं च माकार्षुर्गिति ते तथैव वर्त्तमानास्तिष्ठंति, ये पुनः केचित् अभिनवदीक्षितत्वाद् विना कारणेन प्रमाद्यंति तान् गुरुः सारयति सम्यग् यथोक्तानुष्ठाने प्रवर्त्तयति, तं पुनरुपसंपन्नं प्रमादस्थाने वर्त्तमानमपि न सारयति, तत्र यदि स उपसंपद्यमानः संविग्नो भवति, ततः सोऽप्रतिनोध्यमानः सन्नेवं चिंतयति, येषु स्थानेष्वहं प्रमादं कृतवान् तेष्वेव स्थानेष्वन्यान् प्रमाद्यत आचार्याः सारयंति अहो अहमनाथः परित्यक्त एतैरिति चिंतयित्वा संविग्नविहारमिच्छन् आचार्यपादमूलं गत्वा मुत्तावलिमो इति निपातः पादपूरणे छिन्नमुक्तावलीप्रकाशान्यश्रूणि विमुंचन् पादयोः पतित्वा शिक्षां मार्गयते । याचते यथा मामप्य त्यादरेण भगवंतः शिक्षयंतां मा शरणमुपागतं परित्यजत एवं परीक्षानिर्वहतः परिग्राह्यः इतरस्तु परित्याज्यः तत्रावश्यके यथा परीक्षा कर्तव्या तथोपदर्शयति ।

**[भा.२६८]** हीनाहियविवरीए, सतिवि बले पुव्वट्ठंते चोएइ ।
अप्पणचोयोदेन्ती नममंति इहं सुहं वसिउं ।।

**वृ-** हीनं नाम यत् कायोत्सर्गसूत्राणि मंदमंदमुच्चार्य शेषसाधुषु चिरकालं कायोत्सर्गस्थितेषु पश्चात् स कायोत्सर्गे तिष्ठति इत्यादि अधिकं नाम कायोत्सर्गसूत्राण्यतित्वरितं त्वरितमुच्चार्यानुपेक्षाकरणार्थं पूर्वमेव कायोत्सर्गे तिष्ठति, रत्नाधिके चोत्सारिते कायोत्सर्गे पश्चाच्चिरेण स्वं कायोत्सर्गमुत्सारयति इत्यादि, विपरीतं नाम प्रादोषिकान् कायोत्सर्गान् प्राभातिकानिव करोति, प्राभातिकान् प्रादोषिकानिव इत्यादि हीनं वाधिकं च विपरीतं समाहारो द्वंद्वस्तस्मिन् प्रमादतो वर्त्तमानान् अथवा सूर्ये किल अस्तमितमात्रे एव निर्व्याघाते सर्वैरपि साधुभिराचार्येण सह प्रतिक्रमितव्यं, यदि पुनराचार्यस्य श्राद्धाधिधर्म्मकथा-दिभिर्व्याघातस्ततो बालवृद्धग्लानासहान् निषद्याधरं च मुक्त्वा शेषैः सूत्रार्थस्मरणार्थं कायोत्सर्गेण स्थातव्यं, ये पुनः सत्यपि बले पूर्वं कायोत्सर्गे न तिष्ठंति । तान् पूर्वमतिष्ठतश्चोदयति, यः पुनः परीक्षते तं प्रमाद्यंतमपि न शिक्षयति, ततो यदि स एवं व्यवस्यति, यथात्मीयान्, प्रमाद्यतश्चोदयति न मामिति सुखमिह वसितुमिति, स इत्थंभूतः पंजरभग्नो ज्ञातव्यो न प्रतीच्छनीयः ।।

**[भा.२६९]** जो पुन चोइज्जंते दट्ठूण नियत्तए ततो ठाणा;
भणइ अहं भे चत्तो, चोएह ममंपि सीयंतं ।

**वृ-** यः पुनश्चोद्यमानान् शिक्षमाणान् शेषसाधून् दृष्ट्वा ततः स्थानात् निवर्त्तते, भणति च गुरुपादमूले गत्वा मन्युभराक्रांतो गद्गदस्वरेण अहं युष्मच्छरणमागतोपि भो भगवन् युष्माभिः शिक्षाया अप्रसादतस्त्यक्तः । न चैतत् भगवतां परमकरुणापरीतचेतसामुचितं तस्मात् प्रसादमाधाय मामपि सीदंतं शिक्षयध्वमिति, एष इत्थंभूतः प्रतिग्राह्यः कृता आवश्यकमधिकृत्य परीक्षा संप्रति प्रतिलेखन स्वाध्यायभोजनभाषाद्वाराणि अधिकृत्य तामाह -

[भा.२७०] पडिलेहणसज्झाए एमेवय हीणअहियविवरीयं,
दोसेहिं वा विभुंजइ, गारत्थियढड्डरभासा ।

वृ- एवमेवाश्यकोक्तेनैव प्रकारेण प्रतिलेखन स्वाध्याये च हीनमधिकं विपरीतं च कुर्वत आत्मीयान् शिक्षयते न तु तं परीक्ष्यमाणमित्यादि पूर्ववत् तत्र प्रतिलेखनायां हीनाधिकता नाम यत् कालतो हीनामधिकां चाप्रतिलेखनां करोति, खोटकादिभिर्वा हीनाधिकां वा, विपरीतता नाम प्रभाते यन्मुखपोतिकादिक्रमेण न प्रत्युपेक्षते किंतु स्वेच्छया यदिवा पूर्वाह्ने रजोहरणं निःपश्चिमं प्रत्युपेक्षते अपराह्ने तु सर्वप्रथममित्यादि, स्वाध्याये हीनता नाम यद्यप्राप्तायामपि कालवेलायां कालप्रतिक्रमणं करोति, अधिकता यदिक्रांतायामपि कालवेलायां न कालं प्रतिक्रामति, वंदनादिक्रियां वा तदनुगतां हीनाधिकां करोति, विपरीतता पौरुषीपाठमतिक्रांतायां पौरुष्यां पठति उत्कालिकं पौरुष्यामिति, तथा भोजनद्वारे आलोकादिविधिना सूत्रोक्ते न न भुंक्त दोषैर्वाऽि, अप्पसुरं अचवचवं अदुयमविलंबियमित्यादि विपरीतरूपैर्भुक्ते, तत्रात्मीयान् तथा भुंजानान् शिक्षयते न तु परीक्ष्यमाणमित्यादि पूर्ववत्, भाषाद्वारे या अगारस्थितभाषा गृहस्थभाषा च ढड्डरभाषा स्थूरस्वरभाषा तां भाषते, तत्रात्मीयान् तथारूपतां भाषमाणान् शिक्षयते, न पुनः परीक्ष्यमाणमित्यादि विभाषा पूर्ववत्, शेषाणि त्रीणि द्वाराण्येकगाथया प्रतिपादयति -

[भा.२७१] थंडिल सामायारीह वेतिअतरंगतनपडिजग्गे;
अभणितो भिक्खं न हिंडइ अनेसणादी च पिल्लेइ ।

वृ- स्थंडिले समाचारी पादप्रमार्जनडगलकग्रहणा, दिगालोकनादिरूपां हापयति परिभवति विलुंपतीत्यर्थः, तत्र तथा सामाचारीं विलुंपत आत्मीयान् साधून् शिक्षयते । न परीक्ष्यमाणमित्यादि प्राग्वत् गतं विचारद्वारं, ग्लानद्वारमाह । अतरंगतं असमर्थं ग्लानमित्यर्थः न प्रतिजागर्ति नापि तस्य ग्लानस्य खेलमल्लकादिकं समर्प्पयति । अत्रापि ग्लानमप्रतिजाग्रत आत्मीयान् साधून् शिक्षयते न तु परीक्ष्यमाणमित्यादि विभाषा पूर्ववत् गतं ग्लानद्वारं, भिक्षाग्रहणद्वारमाह । अभणितः सन् भिक्षां न हिंडते भणितोपि च इषाद्धिंडिते सति प्रतिनिवर्त्तते, अनेषणादि वा प्रेरयति प्रवर्त्तयति किमुक्तं भवति । अनेषणीयां भिक्षां गृह्णाति, आदिशब्दात् कौटिल्येन चोत्पादयति । इत्यादिपरिग्रहः, तं च तथा भिक्षाग्रहणे प्रवर्त्तमानमपि न शिक्षयति, किंत्वात्मीयान् साधून् इत्यादि प्राग्वत्, तस्य चागमो द्वाभ्यां स्थानाभ्यां भवति, ततस्ते एव द्वे स्थाने प्रतिपादयति ।।

[भा.२७२] जयमाणपरिहवंते, आगमनं तस्स दोहिं ठाणेहिं;
पंजरभग्गअभिमुहे आवस्सगमादि आयरिए ।

वृ- तस्योपसंपद्यमानस्यागमनं द्वाभ्यां स्थानाभ्यां भवेत् । तद्यथा यतमानेभ्यः परिभवद्भ्यश्च, यतमाना नाम संविग्नाः परिभवंतः पार्श्वस्थादयः, उक्तं च -

सो पुन जयमाणगाण वा साहूण मूलातो आगतो होज्ञा ।
परिभवंताण मूलातो, आगतो होज्ञापरिभवंता ना पासत्था ।।

वृ- इति तत्र योयतमानसाधूनां मूलादागतः स ज्ञानदर्शनार्थं पंजरभग्नो वा समागतो भवेत्, यः पुनः परिभवतां मूलादागतः स चारित्रार्थमुद्यंतुकामः समागतो भवेत् अनुद्यंतुकामो वा ज्ञानदर्शनार्थमिति । अथवा यो यतमानेभ्यः समागतः स पंजरभग्नः, यः पुनः परिभवद्भ्यः उद्यंतुकामश्चारित्रार्थं समागतः,

सोऽभिमुखः पंजरभिमुखः एतयोर्द्वयोरपि समागतयोरावश्यकादिभिः पदैराचार्येण परीक्षा कर्त्तव्या तदेवमागंतुकस्य यथा आवश्यकादिभिः पदैराचार्येण परीक्षा कर्त्तव्या तथा दर्शिता, संप्रति तेनागंतुकेन यथाचार्यपरीक्षा कर्त्तव्या । तथोपदर्शयति । आवस्सगमाइ आयरिए आवश्यकादिभिः पदैरागंतुकेनापि आचार्येण आचार्यस्य परीक्षा कर्त्तव्याः सा चेवं । आवश्यकादिषु पूर्वभणितेषु द्वारेषु मध्ये क्वापि यदि गच्छवासिनः कानपि सीदतः पश्यति ततः आचार्येभ्यः कथयति । तेन कथिते सति यथाचार्यः सम्यक् प्रतिपद्य तान् प्रमादिनः प्रतिचोदयति, । प्रायश्चित्तं प्रयच्छति, ततस्तत्रोपसंपत्तव्यं, अथ कथितेपि आचार्याः तूष्णीतिष्ठंति भणंति वा, किं तव यद्येते न सम्यग्वर्त्तंते, तर्हि अन्यत्र गच्छांतरे उपसंपत्तव्यं न तत्रेति अथ यतमानेभ्यः समागतः पंजरे भग्न इत्युक्तं तत्र पंजरेति किमुच्यते, । तत आह -

[भा.२७३] पणगाइसंगहो होइ, पंजरो जा य सारणा नोत्रं ।
पच्छित्तंव मढणाहिं, निवारणं सउणिदिट्ठंतो ।।

वृ- आचार्योपाध्यायप्रवर्त्तकस्थविरगणावच्छेदकरूपमादिशब्दात् भिक्षवो वृषभाः क्षुल्लका वृद्धाश्च परिगृह्यंते, तेषां संग्रहः पंचकादिसंग्रो भवति, पंजरः अथवा आचार्यादीनां अन्योन्यं परस्परं सारणा, किमुक्तं भवति आचार्यादयः परस्परं यत् मृदुमधुरभाषया सोपालंभं वा शिक्षयंति एष वा पंजरः, यदिवा यत्प्रायश्चित्तं च मढनाभिरसमाचार्या निवारणपूर्वं खरपरुषैस्तर्जयित्वा पश्चात् प्रायश्चित्तप्रदानेन यदसामाचारितो निवर्त्तनं तत् पंजरः, अत्रार्थे शकुनिदृष्टांतः यथा पंजरे शकुनेः शलाकादिभिः स्वच्छंदगमनं निवार्यते, तथा आचार्यादिपुरुषगच्छपंजरे सारणाशलाकया असमाचारीरूपोन्मार्गगमनं निवार्यते इति, । अत्र ये यतमानानां मूलात् ज्ञानदर्शनार्थमागता ये च परिभवता मूलात् । चारित्रार्थमागच्छन् ते संग्रहीतव्याः । ये पुनः पंजरभग्ना ज्ञानदर्शनार्थमागता ये च परिभवता मूलात् ज्ञानदर्शनार्थमागच्छन् ते न संग्रहीतव्याः । तत्र ये न संग्रहीतव्यास्ते एको वा स्यादनेके वा यत आह ।।

[भा.२७४] ते पुन एगमनेगानेगाणं सारणा जहा पुव्वं ।
उपसंपयत्ता आउट्टे अनउट्टे अन्नहिगच्छे ।।

वृ- ते पुनरुपसंपद्यमानाः कदाचिदेको वा स्यादनेके वा । तत्रानेकेषां या सारणा सा यथापूर्वं कल्पाध्ययने उवएसो सारणा चेव । तईया पडिसारणा इत्यादिना ग्रंथेन भणिता, तथात्रापि द्रष्टव्या, यः पुनरेकोऽसमाचारिकर्वन् शिक्ष्यते शिक्ष्यमाणश्च यदि व्यावृत्तः शिक्षां प्रत्यभिमुखो भवति, ततस्तस्मिन् आवृत्ते षष्ठीसप्तम्योरर्थं प्रत्यभेदात् तस्यावृत्तस्य उपसंपद्भवति, यदि पुनर्नावर्त्तते तदा तस्मिन् अनावृते इदं भण्यते, अन्यत्र गच्छ, स्था इति अथवा इदमुत्तरार्द्धं, आवस्सगमाइ आयरिए इति यदुक्तं । तस्य व्याख्यानं आवश्यकादिषु पदेषु गच्छवासिनः प्रमादिना दृष्ट्वा आचार्याय कथयेत् । कथिते च सति यदि स आचार्यः सम्यग् आवर्त्तते निजसाधून् सम्यग् शिक्षयते । प्रायश्चित्तं च तेभ्यः प्रयच्छति, ततस्तस्मिन्नावर्त्ते तस्य तत्रोपसंपद्भवति, अथ कथितेनावर्त्तते, तूष्णीं करोति भणति वा किं तवैतेः स्वयं सम्यग्वर्त्तेथा इति, तदा अन्यत्र गच्छेदिति यदुक्तं प्राक् दाऊण पच्छित्तं बज्झंतेपी पडिच्छेज्जा इति तत् व्याख्यानयति ।।

[भा.२७५] निग्गमणे परिसुद्धे आगमने असुद्धेदेंति पच्छित्तं ।
निग्गमणेअ परिसुद्धं इमाए जयणाए वारिंति ।।

वृ- तृतीये भंगे निर्गमने परिशुद्धे प्रागुक्तदोषवर्जिते, आगमने अशुद्धे व्रजिकादिषु प्रतिबंधकरणात्

द्वितीयपदे अल्पदोषतया प्रतीच्छाबुद्धौ सत्यां प्रायश्चित्तं प्रतिबंधमात्रनिष्पन्नं ददाति । दत्वा च प्रतीच्छति, निर्गमने पुनः प्रथमभंगे द्वितीयभंगे वा अधिकारणमेव अधिकरणादिभिः एगे अपरिणए वा इत्यादिभिर्वा दोषैरशुद्धे न प्रतीच्छनीयः किंतु वारणीयः [illegible] वक्ष्यमाण[illegible] वार्यते [illegible] तामेवाह ।।

[भा.२७६] नत्थी संकियसंघाडमंडलीभिक्खबाहिगनयनं ।
पच्छित्त विउस्सग्गे निग्गममुत्तस्स छन्नेणं ।।

वृ- यः पंजरभग्नो ज्ञानदर्शनार्थमागतः । तं प्रतीयं वाक्ययतना यत् त्वं श्रुतमभिलषसि, तन्मम पार्श्वे नास्ति, अथ स ब्रुयात्, मया श्रुतं यथाऽमुको ग्रंथोऽमुकस्य पार्श्वे युष्माभिः श्रुत इति, तत इदं वक्तव्यं, श्रुतः स ग्रंथः केवलमिदानीं बहुषु स्थानेषु शंकितं जातं, न च शंकितं श्रुतमन्यस्मै दीयते, प्रवचने निषेधात्। तस्मादन्यत्र निःशंकितश्रुतान् गवेषयस्व यस्तु स्वच्छंदमतिः संघाटकोद्विग्नः संज्ञाभूमिमात्रमप्येकाकिना गंतुं न लभ्यमिति समागतस्तं प्रतीदं वक्तव्यं, अस्माकमाचार्यपरंपरात् इयं सामाचारी संज्ञाभूमिमात्रमपि न गंतव्यमेतच्च तव दुष्करमतोन्यत्र गच्छ तावदिति, यः पुनरसुबद्धवैरत्वेनागतस्तं प्रतीदं वक्तव्यं, मंडलीति अस्माकमीदृशी सामाचारी यदवश्यं मंडल्यां समुदेष्टव्यं, यद्यपि च न पठति न श्रृणोति वा तथापि सूत्रपौरुष्यां मंडल्यामुपवेष्टव्यमर्थपौरुष्यां मंडल्यामुपविश्यार्थः श्रोतव्यः, न कदाचनापि साधूनां स्वच्छंदत्वमेतच्च भवतोऽप्रीतिकरं, तस्मादन्यत्र गम्यतां । यस्त्वलसत्वेनागतस्तं प्रतीदं वाच्यं, भिक्खबाहिगणयणं, भिक्षायाः बहिःप्रदेशादानयनं, किमुक्तं भवति अस्माकमत्र क्षेत्रे बहवो बालवृद्धाः ग्लानाः साधवः ते च भिक्षां न हिंडंते, ततो यदि प्रतिदिवसं भिक्षा बहिः प्रदेशादानयसि । ततस्तिष्ठ, परमेतत् दुष्करं तव तस्मात् यत्र सुखेन तिष्ठसि, तत्र याहि, किमत्र क्लेशसहनेन यस्तु निर्द्धर्म्मा उग्रदंडा आचार्या इति विनिर्गतस्तं प्रतीदमुत्तरं, पच्छित्तत्ति । अस्माकमियं सामाचारी यदि दुःप्रमार्जनादिमात्रमपि करोति, तदा तत्कालमेव प्रायश्चित्तं यथोक्तं दीयते, न कालक्षेपेण नापि पक्षपातादिनास्तोकहासेन यस्तु विकृतिलंपटो न मह्यं विकृतिमनुजानातीति विनिर्गतस्तं प्रतीयं वाग्यतना ।

अविउसग्गत्ति अस्माकमप्ययं सामाचार्यागमः अव्युत्सर्गोऽनुत्कलनं विकृतेरिति व्याख्यानतो गम्यते, योगवाहिना अयोगवाहिना वा विकृतिर्न ग्राह्या इत्यर्थः, अत्राधिकरणप्रत्यनीकस्तब्धलब्धविषये यतना नोक्ता विचित्रत्वात्सूत्रभाष्यगतेस्तत्राधिकरणे यतना यथा कल्पाध्ययने तथा द्रष्टव्या, शेषविषया तु विनेयजनानुग्रहायाभिधीयते, तत्र यः प्रत्यनीकस्तत्र मेरत्तीत्यागतः, भण्यते ममापि शिष्याः प्रतीच्छकाश्च ईषदपि प्रमादं न क्षमंते, मह्यं कथयति अहं च दोषानुरूपं दंडं प्रयच्छामि । अन्यथैकतरपक्षपातकरणतो गच्छ, मुद्राभंगः सर्वज्ञाज्ञाविलोपश्च, तस्मादत्रापि तव दुष्करमिति न स्थातुमुचितं, स्तब्धः पुनरेवं भण्यते, अस्माकमियं सामाचारी चंक्रमणादि कुर्वंति गुरावभ्युत्थातव्यं, अनभ्युत्तिष्ठतः प्रायश्चित्तप्रदानमिति, लुब्धं प्रत्येषा वाग्यतना उत्कृष्टद्रव्याणि मोदकादीनि अस्माकमपि बालवृद्धग्लानप्राघूर्णकेभ्यो दीयंते, तदेवं स्वच्छंदचारित्रप्रभृतीनां निवारणे वाग्यतनोक्ता. यदि पुनरेते तथा निवारिता अपि न वक्ष्यमाणप्रकारेण प्रत्यावर्त्तते, नापि निर्गच्छंति येपि च विशुद्धनिर्गमाः प्रतीच्छिताः संतः सीदंति तेषां परिस्थापने यतनामाह- निग्गममुत्तस्स छण्णेणं यदा परिस्थापयितुमिष्य-माणस्य स्वयं भिक्षादिनिमित्तं निर्गमो भवति, यदा वा रात्रौ निर्भरनिद्रया सुप्तस्तदा तं त्यक्त्वा नंष्टव्यं, कथमित्याह छन्नाप्रकटमल्पसागारिकं किमुक्तं भवति, येऽपरिणता बालादयो वा गच्छे तत्रा तेषां न कथ्यते । यथामुमेवं त्यक्त्वा नष्टव्यमिति, मा रहस्यभेदं कार्षुरिति एष गाथार्थः, सांप्रतमेनमेव गाथार्थं

विनेयजमानुग्रहाय विवृणोति -

**[भा.२७७]** नत्थि यं मि जमिच्छसि सुयं मया आमसंकियं तं तु ।
न य संकियं तु दिज्जइ निस्संकसुए गवेस्साहि ।।

**वृ-** यदिच्छसि शास्त्रं श्रोतुं तदेतत् मे मम पार्श्वे नास्ति, अथ ब्रूयात् मवेदं श्रुतं यथामुकं शास्त्रं भवद्भिः श्रुतमिति तत्राह आमं तत् शास्त्रं मया श्रुतं केवलमिदानीं शंकितं जातं, नच शंकितं दीयते तस्मान्निःशंकश्रुतान् गवेषय, संघाडइतिमंडलीति च द्वारद्वयं व्याचिख्यासुराह -

**[भा.२७८]** एगागिस्स न लब्भा, वियारादीवि जयणसच्छंदे ।
भोयणसुत्ते मंडलि पढंते वा नियोयंति ।।

**वृ-** स्वच्छंदे स्वच्छंदमतौ निवारणार्थमियं वाग्यतना, अस्माकमेकाकिनः सतो विचारादावपि बहिर्भूम्यादावपि न लभ्यं गंतुमिति । अनुबद्धवैरे इयं वाग्यतना अस्मदीया मुनिवृषभा भोजने सूत्रे उपलक्षणमेतत् अर्थे वा पठंतोपि मंडल्यां नियोजयंति, एतच्च तव दुष्करमिति, अधुना भिक्खवाहिराणवणं पुच्छित्तविउस्सग्ग इति त्रीणि द्वाराणि व्याख्यानयति ।।

**[भा.२७९]** अलसं भणंति बाहिं जइ हिंडसि अम्ह एत्थ बालादी ।
पच्छित्तं हाडहडं अवि उस्सग्गो तहा विगई ।।

**वृ-** अलसं प्रतिभणंत्याचार्या अस्माकमत्र क्षेत्रे बहवो बालादयस्ते च भिक्षां न हिंडंते ततो यदि बहिर्भिक्षां हिंडसे तर्हि तिष्ठ, तर्हि, अन्यथा व्रज स्थानांतरमिति, निर्द्धर्म्माणं प्रति पुनरिदं वदंति अस्माकं स्तोकेपि दुःप्रमार्जनादौ कृते प्रायश्चित्तं हाडहडं देशीपदमेतत् तत्कालमित्यर्थः दीयते, अन्यथा मूलत एव सामाचारीविलोपप्रसक्तेः, विकृतिलंपटं प्रति पुनरियं वाग्यतना योगवाहिनो अयोगवाहिनो वाऽस्माकं गच्छे विकृतेर्व्युत्सर्गोऽनुत्कलनं भवांश्च दुर्बलशरीरो नवश्चुरिव पानयिनं विकृत्या पाल्यस्वभावस्तस्मा-दन्यत्र प्रयाहीति, यत्र चोदक आह -

**[भा.२८०]** तत्थ भवे मायमोसो एवं तु भवे नज्जवं तस्स ।
वत्तं च उज्जुभूते सोही तेलोक्कदंसीहिं ।।

**वृ-** यदेतन्निर्गमनाशुद्धे उपायेन प्रतिषेधनमुक्तं, तत्र कस्यचित् मतिः स्यात् । एवं प्रतिषेधतो माया भवति मृषावादश्च तत्र यत्परविप्रतारणचिंतनं, तन्माया, विद्यमानमपि श्रुतं नास्ति शंकितं वा तिष्ठति इत्यादि ब्रूवाणस्य मृषावादः, एवं तु अमुना प्रकारेण पुनर्म्मायामृषां कुर्व्वतो भवेत् तस्यानार्ज-वमनृजुतामायातः, । कुटिलभावभावात् उक्तं पुनस्त्रैलोक्यदर्शिभिरिदं शोधिः ऋजुभूते सोही उज्जुय-भूयस्सेत्यादि प्रदेशांतरे श्रवणात् । ततो नेदं मायामृषाभाषणमुचितमिति । अत्र सूरिः प्रत्युत्तरमाह -

**[भा.२८१]** एस अगीते जयणा गीते विकरेंति जुज्जइ जंतु ।
विद्देसकरं इहरा मच्छरिया दो फुडरुक्खे ।।

**वृ-** एषा अनंतरोदिता वाग्यतना अगीते अगीतार्थे गीतेपि गीतार्थेपि निर्गमनाशुद्धे निवारणा क्रियते, केवलं स्फुटाक्षरैर्यथा एवंभूतात् दोषात् त्वमत्रागतः एवंभूतदोषश्च न सुविहितैः प्रतीच्छ्यते इति, न चैवं भणितः सुन् स रुष्यति गीतार्थत्वात्, गीतार्था हि सर्वामपि सामाचारीमवबुद्ध्यंते, अवबुद्ध्यमाना कथमप्रीतिं विद्वेषं कुर्वंतीति, तथाचाह । करेंति जुज्जइ जंतु ।यत् युज्यते युक्तिमापतति तत् गीतार्थाः कुर्वंति नाप्रीत्यादिकमिति, इहरत्ति इतरथा यद्यगीतार्थेपि स्फुटरुक्षैर्निवारणा क्रियते केवलं स्फुटाक्षरैर्यथा

एवंभूतदोषवान् त्वमत्रागतः ततः स्फुटरुक्षं भाषिते सति स्फुटं नाम सद्भूतदोषोच्चारणं, रुक्षं स्नेहोपदर्शनरहितं, यदिवा स्फुटमेव परस्य रुक्षतोत्पादनात्, रुक्षं स्फुटरुक्षं तस्मिन् भाषिते तत् भाष्यमाणं वचस्तेषां विद्वेषकरं विद्वेषोत्पादकं भवति । अगीतार्थत्वात्, चिंतयंति च मत्सरभावेनैते सूत्रमर्थं वा न प्रयच्छंति, ततो मत्सरिण एते इति, एवं च चिंतयित्वा स्वपक्षे परपक्षे च मत्सरिण एते इति प्रकाशयंति ततो लोके [illegible] प्रागुक्तयतनया निवारणा क्रियते, न च मायामृषादोषसंभवो यतः पराप्रीत्यनुपादकतया परिणामसुंदरतया चोभयोरपि गुणकारित्वमवेक्ष्य तथा वाग्यतना क्रियते, न विप्रतारणबुद्ध्येति । एतेषामेव प्रतीच्छने अपवादमाह -

[भा.२८२] निग्गमसुद्धमुवाएण, वारियं गेण्हते समाउट्टं ।
अहिगरण पडिनि अनुबद्ध मेगागिजढं न साएज्जा ।।

**वृ-** निर्गमोऽशुद्धो यस्य स निर्गमाशुद्धस्तं उपायेन प्रागुक्तयतनालक्षणेन वारितं समावृत्तं संतं गृह्णाति, किमुक्तं भवति यदि स तथा प्रतिषिद्धः सन् ब्रूते, भगवन् मिथ्या मे दुःकृतं न पुनरेवं करिष्यामि किंतु यथा यूयं भणिष्यथ, तथा करिष्यामि मुक्तो मया स पापस्वभावो दुर्गतिवर्द्धन इति, तत एवं तं समावृत्तं गृह्णाति, किं सर्वमपि नेत्याह अहिगरणेत्यादि नेत्याह अहिगरणेत्यादि योऽधिकरणं कृत्वा समागतस्तं यश्च तत्र मे प्रत्युनीकोऽस्तीत्युक्तवान् तं तथा अनुबद्धरोषं येन च पश्चादेकाकी आचार्यस्त्यक्तस्तं च न साएज्जा न सात्मयेत् न सात्मीकुर्यात् न स्वीकुर्यादिति भावः केवलं प्रत्यनीके अपवादोऽस्ति तमेवाभिधित्सुराह -

[भा.२८३] पडिनीयंमिउ भयणा, गिहिम्मि आयरियमादिदुट्ठंमि ।
संजयपडिनीए पुन, न होति उवसामिए भयणा ।।

**वृ-** प्रत्यनीके भजना तामेवाह । गृहिणि गृहस्थे आचार्यादिदुष्टे किमुक्तं भवति, यदि कोऽपि नाम गृहस्थ आचार्यस्य आदिशब्दात् उपाध्यायप्रवर्त्तिस्थविरगणावच्छेदानां शेषभिक्षूणां च प्रद्विष्टः स चानेकधा उपशम्यमानोपि नोपशांतस्ततस्तस्मिन् आचार्यादिप्रदिष्टे गृहिण्यनुपशांते तद्भयादागतः सन् प्रतिगृह्यते यदि पुनः स ब्रूयात् संयतो मे तत्र प्रत्यनीकोऽस्ति ततस्तस्मिन् संयतप्रत्यनीके न भवत्युपसंपत् न प्रतिसंगृह्यते इत्यर्थः । अथवा स भण्यते गच्छ त्वं तं क्षमयित्वा समागच्छ एवमुक्तो यदि तत्र गत्वा तं न क्षमयति ततो न स प्रतिगृह्यते अथ तेन गत्वाऽसौ क्षामितः केवलं स एव न क्षमते, तर्हि स पश्चादागतः प्रतिग्राह्यः । अथ स वक्ति मया स तदानीमेवागच्छता क्षामितः । तदा तस्मिन्नुपशांते स नियमात् प्रतिगृह्य एव न भवति भजना निर्दोषत्वात् ।

[भा.२८४] सो पुन उवसंपज्जे, नाणट्ठा दंसणे चरित्ते य ।
एएसिं नाणत्तं वोच्छामि अहानुपुव्वीए ।।

**वृ-** स पुनरुक्तप्रकारेण संगृह्यमाण उपसंपद्यते ज्ञानार्थं ज्ञाननिमित्तं दर्शने दर्शननिमित्तं सप्तम्या निमित्ते विधानात् दर्शनप्रभावकशास्त्रनिमित्तमित्यर्थः चारित्रार्थं चारित्रनिमित्तं एतेषां ज्ञानाद्यर्थमुपसंपद्यमानानां नानात्वं भेदं यथोपन्यासं या अनुपूर्वी सा यथानुपूर्वी तया वक्ष्यामि प्रतिज्ञातमेव निर्वाहयति ।

[भा.२८५] वत्तणा संधणा चेव गहणे सुत्तत्थ तदुभये ।
वेयावच्च खमणे काले आवकहाएअ ।।

**वृ-** ज्ञानार्थं दर्शनार्थं चोपसंपत् प्रत्येकं त्रिधा, तद्यथा सूत्रं चार्थश्च तदुभयं च सूत्रार्थतदभयं तस्मिन् सूत्रेष्वेतदुभयस्मिंश्चेत्यर्थे निमित्तं सप्तमी चेयं ततयो भावार्थः । ज्ञानार्थं दर्शनार्थं चोपसंपद्यमानः प्रत्येकं सूत्रार्थं वा उपसंपद्यते अर्थार्थं वा तदुभयार्थं चेति पुनरेकैकं त्रिधा तद्यथा वर्त्तनेति अत्र सप्तमीलोपः प्राकृतत्वात् वर्त्तनायां । वर्त्तनानिमित्तं एवमेव संधनायां संधनानिमित्तं तत्र पूर्वगृहीतस्य सूत्रार्थस्य तदुभयस्य वा ग्रहणनिमित्तं, एवं ज्ञाने दर्शने च प्रत्येकं भवति त्रिधा उपसंपत् चरणोपसंपदा पुनरुपसंपद्यमानो द्विधोपसंपद्यते, तद्यथा वैयावृत्तनिमितं क्षपणे क्षपणानिमितं ते च द्विधापि उपसंपद्यमानाः कालतो यावज्जीवं भवेयुः । च शब्दादित्वरश्च एनामेवगाथां व्याख्यानयति -

**[भा. २८६]**　　दंसणनाणे सुत्तत्थतदुभये वत्तणा य एक्केके ।
　　उवसंपया चरित्ते वेयावच्चे य खमणे य ।।

**वृ-** दर्शनविशोधिकानि यानि सूत्राणि शास्त्राणि वा तानि दर्शनं, शेषाणि सूत्राणि शास्त्राणि वा ज्ञानं, तत्र दर्शने ज्ञाने च प्रत्येकमुपसंपत् त्रिधा, सूत्रनिमित्तमर्थनिमित्तं तदुभयनिमित्तं च, एकैकस्मिंश्च सूत्रादौ प्रत्यकं वर्त्तनादि त्रिभेदं वर्त्तना संधना ग्रहणं च, किमुक्तं भवति सूत्रेपि वर्त्तनानिमित्तमुपसंपद्यते, संधनानिमित्तमुपसंपद्यते, अपूर्वग्रहणनिमित्तं वा उपसंपद्यते, एवमर्थेपि त्रितयमुभयेपि त्रितयमिति, दर्शनेपि नवविधोपसंपत् ज्ञानेपि नवविधेति, चारित्रे चारित्रविषया उपसंपत् वैयावृत्ते क्षपणे च ।

**[भा. २८७]**　　सुद्धपडिच्छिन्नो लहुगा अकारेंते सारणा अनापुच्छा ।
　　तीसुवि ठाणे[illegible]सु ।।

**वृ-** यत् गुरुसकाशे सूत्रं तत्सर्वमधीतं ततो गुरुभिरनुज्ञातो विधिना आपृच्छय व्रजिकादिष्व-प्रतिबध्यमान आगतः । आगतश्च सन् त्रीन् दिवसान् यावत् परीक्षितः शुद्धः इत्थंभूतं यो न प्रतीच्छत्या-चार्यस्तस्य प्रायश्चित्तं लघुकाश्चत्वारो लघुमासाः, योपि उपसंपन्नो वर्त्तमाननिमित्तं संधनानिमित्तं ग्रहणनिमित्तं वा स यदि वर्त्तनां संधनां ग्रहणं वा न करोति तदा तस्मिन् वर्त्तनादिकमकुर्व्वति प्रत्येकं त्रिष्वपि स्थानेषु वर्त्तनादिषु मासो लघुकः प्रायश्चित्तं, आचार्योपि यद्युपसंपन्नं प्रमाद्यंतं न सारयति ततस्तस्मिन्नपि सारणे अत्र विभक्तिलोप आर्षत्वात् । अकुर्वति त्रिष्वपि वर्त्तनादिषु स्थानेषु मासलघु एतच्च प्रायश्चित्तविधानं सूत्रविषयमर्थे पुनर्वर्त्तनादिमकुर्व्वति शिष्ये अर्थनिमित्तमुपसंपन्नं प्रमाद्यंतं वर्त्तनादिष्वसारयति गुरौ च प्रत्येकं त्रिष्वपि वर्त्तनादिषु स्थानेषु प्रायश्चित्तं मासगुरु, उभयविषयेषु द्वयोरपि प्रत्येकं वर्त्तनादिषु त्रिष्वपि स्थानेषु पृथक् उभयं प्रायश्चित्तं मासगुरु मासलघु चेति, एवं गाथायामनुक्तमपि संप्रदायादवसितं, तथा अणापुच्छाइति अनापृच्छायामनुज्ञामित्यर्थः अत्र चत्वारो भंगास्तद्यथा अननुज्ञातोऽननुज्ञातेन सह वर्त्तनां करोतीत्येको भंगः, अननुज्ञातोऽनुज्ञातेन सहेति द्वितीयः, अनुज्ञातो अननुज्ञातेनेति तृतीयः अनुज्ञातो अनुज्ञातेनेति चतुर्थः एवं संधनायां ग्रहणेपि च प्रत्येकं चत्वारो भंगाः एवमर्थेपि तदुभयस्मिन्नपि च प्रत्येकं वर्त्तनादिषु चत्वारश्चत्वारो भंगाः तत्र सूत्रविषये त्रिष्वपि वर्त्तनादिषु स्थानेषु प्रत्येकमाद्येषु भंगेषु ददानस्य च गृह्णानस्य च प्रायश्चित्तं मासलघु तपः कालविशेषितं तद्यथा वर्त्तनायामाद्येषु त्रिषु भंगेषु मासलघु, संधनायां मासलघु तपो गुरुकाललघु, ग्रहणे मासलघु, द्वाभ्यां गुरु तद्यथा - तपसा कालेन च, एवमर्थे तपः कालविशेषितं मासगुरु । तदुभयस्मिन् तदुभय-प्रायश्चित्तमर्थं विषयं तदुभयविषयं च प्रायश्चित्तं गाथायानुपात्तमपि व्याख्यानादुपगंतव्; चतुर्थभंगः

पुनः सर्वत्रापि शुद्ध इति न तत्र कस्यापि प्रायश्चित्तमिति, इहाचार्यस्यापि प्रमादतः सूत्रादिषु वर्त्तनादिकम-कुर्वतमुपसंपन्नमसारयतः प्रायश्चित्तमतो नियमात्स आचार्येण सारयितव्यस्तथा च एतदेवाह -

**[भा.२८८]** सारेयव्वो नियमा उवसंपन्नोसि जं निमित्तं तु ।
तं कुणसु तुमं भंते अकरेमाणे विवेगो उ ।।

**वृ-** स उपसंपन्नो नियमात्सारयितव्यः कथमित्याह । अहो भदंत ज्ञानाद्यभ्यासकारितया परमकल्याणयोगिन् इह शिष्यस्याप्याचार्येण प्रोत्साहनार्थं तथाविधयोग्यतासंपन्नमधिकृत्यैवंविधमभ्या-मंत्रणं कर्त्तव्यमिति ज्ञापनार्थं, अन्यथा भदंतेति गुर्वामंत्रणे रुढत्वात्तन्नैव न्याय्यं न शिष्ये इति यन्निमित्त-मुपसंपन्नस्त्वं तत् कुरु एवमेकद्वित्रिवारं सारितोपि य दि न करोति वर्त्तनादिकं, ततस्तस्मिन्नकुर्व्वति विवेक एव परित्यागः कर्त्तव्यः तुरेवकारार्थः; यदुक्तमनापुच्छाइति तं व्याख्यानयति -

**[भा.२८९]** अननुन्नाए देंत पडिच्छंतभंगचउरोउ ।
भंगतियंमिवि मासो, दुहतोणुन्नाए सुद्धोउ ।।

**वृ-** अननुज्ञातो मकारोऽलाक्षणिकः । अनुनुज्ञाते ददाति इतरस्तु प्रतीच्छतीत्येवं ददानप्रतीच्छतां चत्वारो भंगाः सूत्रभंगत्रिकेपि आद्येषु वर्त्तनादिषु प्रत्येकं प्रायश्चित्तं मासो लघुमासः, अर्थे गुरुमासस्तदुभयस्मिन् तदुभयं प्रायश्चितमिति व्याख्यानात् दुहतोणुन्नाए इति उभयतो ददानतया प्रतीच्छकतया वानुज्ञाते भंगश्चतुर्थः शुद्ध एव तुरेवकारार्थः एषोऽक्षरार्थः । भावार्थस्तु प्रागेवोपदर्शितः, एष प्रायश्चित्तविधिः ज्ञानार्थं उपसंपद्युक्त एवं दर्शनार्थमप्युपसंपदि द्रष्टव्यस्तथा चाह -

**[भा.२९०]** एमेव दंसणे वी वत्तणमादीपयाउ जहनाणे ।
वेयावच्चकरो पुन इत्तरितो आवकहितोय ।।

**वृ-** यथा ज्ञाने वर्त्तनादिपदान्यधिकृत्य प्रायश्चित्तविधिरुक्तः एवमेव अनेनैव प्रकारेण दर्शनेपि वर्त्तनादीनि पदान्यधिकृत्य वेदितव्यः गता ज्ञानदर्शनोपसंपत् । इदानीं चारित्रोपसंपत् भावनीया, तत्र काले आवकहाए इति व्याख्यानयन् वेयावच्चेइति पदं व्याख्यानयति वेयावच्चेत्यादि वैयावृत्त्यकरो वैयावृत्त्यार्थं उपसंपन्नः पुनर्द्विधा इत्वरः स्वल्पकालभावी यावत्कथितो यावज्जीवभावी अस्य च द्विविधस्यापि वैयावृत्यकारापणविधिरयं, एको गच्छवासी वैयावृत्त्यकरोपरः प्राघूर्णकः स च वक्ति, अहं वैयावृत्त्यं करोमि तत्र विधिमाह ।

**[भा.२९१]** तुल्लेसु जो सुलद्धी अन्नस्सव वारएण निच्छंते ।
तुल्लेसुव आवकही तस्स मएणं च इत्तरितो ।।

**वृ-** यदि द्वावपि कालतस्तुल्यावित्वरौ च तत्र यद्येको लब्धिमान् अपरोऽलब्धिकस्तर्हि तयोस्तुल्ययोर्यः सलब्धिकः स कार्यते, इतरस्तु उपाध्यायादिभ्यो दीयते अथ द्वावपि यावत्कथिकौ तत्रापि यो लब्धिमान् स कार्यते, इतरोऽन्येभ्यो दीयते, यदि पुनर्द्वावपि सलब्धिकौ यावत्कथिकौ च तत्र अन्यतर उपाध्यायादेः कार्यते, अथैकोपि तस्य नेच्छति ततः आगंतुको विमुच्यते, अथ द्वावपि सलब्धिकावित्वरौ च तत आगंतुक उपाध्यायादीनां वैयावृत्यं कार्यते, सूत्रालापकश्च उपाध्यायादिवैयावृत्त्यफल-प्रदर्शकस्ततः प्रोत्साहनार्थं पठनीयः । उवज्झायवेयावच्चं, करेमाणे समणं निग्गंथे महानिज्जरे महापज्जवसाने होइ इत्यादि ।

अथ नेच्छति तर्हि तस्मिन्नन्यस्योपाध्यायादेर्वैयावृत्त्यमनिच्छति वा शब्दो भिन्नक्रमत्वात्

चारएणवेत्येवं योजनीयः द्वावपि वारकेण कार्येते, कियत्कालमेकः कियत्कालमपर इति यदि वास्तव्यो वैयावृत्यकरोनुमन्यते अथ नानुमन्यते, तत आगंतुकस्यावर्त्तं काले प्रतीक्षाप्यते, यावत् वास्तव्यस्य वैयावृत्तस्य इत्वरकालः समाप्तिमुपयाति अथ न प्रतीक्षते तर्हि विसृज्यते, एप द्वयोरित्वरयोर्वैया-वृत्त्यकारापणविधिः अथ एक इत्वरः एको यावत्कथिकस्तत्राह तुल्लेसुव इत्यादि तुल्ययोर्लब्ध्या समानयोर्यो यावत्कथिकः स कार्यते, इत्वरोऽन्यस्योपाध्यायादेः संनियोजनीयः अथ वास्तव्यो यावत्कथिकस्तर्हि स भण्यते विश्राम्य, त्वं तावत् यावदित्वरः करोति तथाचाह तस्य वास्तव्यस्य वैयावृत्यकरस्य मतेन इच्छया इत्वरो वा कार्यते वैयावृत्त्यं अथ वास्तव्यस्तथा प्रज्ञापितोपि नेच्छति तर्हि न कार्यते स हि पश्चादपि यास्यति, । तत इतरो वास्तव्यो न करिष्यतीति, अथ इत्वरो यावत्कथिकश्च द्वावपि लब्धिकौ तत्रयावत्कथिकः कार्यते, इत्वरो अन्यस्य नियुज्यते, विसृज्यते वा अथवा इत्वरः सलब्धिकःयावत्कथिकोऽलब्धिकस्तत्र यावत्कथिको भण्यते विश्राम्य, तावत् यावदेष इत्वरः सलब्धिकः करोति । पश्चात्त्व मेव करिष्यसि, अथ नेच्छति तर्हि स एव कार्यते इतरस्त्वन्यस्मै दीयते, तस्य तत्रानिच्छायां विसृज्यते । अथेत्वरोऽलब्धिको यावत्कथिको लब्धिमान् तत्र यावत्कथिकः कार्यते इतर उपाध्यायादेः समर्प्यते अथ तस्य तत्रानिच्छा तर्हि विसृज्यते इति, इह यदि वास्तव्यवैयावृत्त्यकरणे अननुज्ञातो वैयावृत्त्यं कारयति यदिवानापृच्छया अन्यं वैयावृत्त्यकरं स्थापयति । तदा तस्याचार्यस्य बहवो दोषास्तानेवाह -

**[भा.२९२]** अननुनाए लहुगा अवियत्तमसहजोगदाणादी ।
निज्जरमहती हु भवे, तवस्सिमादीनकरणेवी ।।

**वृ-** वास्तव्य वैयावृत्त्य करेणाननुज्ञायामुपलक्षणमेततस्याना पृच्छायां ना यद्यागंतुकमित्वरं वैयावृत्त्ये स्थापयति ततस्तस्य प्रायश्चित्तं लघुकाश्चत्वारो लघुमासः अन्येब्रुवते अनापृच्छायां मासलघु, अननुज्ञायां चतुलघु अन्यच्चाननुज्ञायामना पृच्छायां वा वैयावृत्त्यपदे अन्यस्येत्वरस्य स्थापने वास्तव्यस्य अवियत्तमप्रीतिरुपजायते अप्रीत्या च कलहं कुर्यात् असाहगा जोगदानादी इति, यानि दानादीनि दानश्रद्धादीनि कुलानि आचार्यस्य प्रायोग्याणि तान्यागंतुकवैयावृत्त्यकरस्य न साधयति, न कथयति तस्मात् स इत्वर आगंतुकोवैयावृत्त्यकरः प्रज्ञाप्यते, त्वं तपस्यादीनां क्षपकादीनां वैयावृत्त्यं कुरु, तेषामपि क्रियमाणे वैयावृत्त्ये महती निर्जरा तदेवं वैयावृत्त्यद्वारं गतमिदानीं क्षपणद्वारावसरः ।

**[भा.२९३]** आवकही इत्तरिय इत्तरिय विगिट्ठ तह अविगिट्ठे य ।
समणामंतणखमणे, अनिच्छमाणं नउ नियोगो ।।

**वृ-** क्षपक उपसंपद्यमानो द्विधा यावत्कथिक इत्वरश्च, तत्रेत्वरो द्विधा विकृष्टतपःकारी अविकृष्टतपःकारी च, तत्र चतुर्थषष्ठाष्टमकारी अविकृष्टतपःकृत्, दशमादितपकारी विकृष्टतपः कृतयोर्द्वयोरप्युपसंपद्यमानयोः समणामंतणत्ति आचार्येणस्वगणस्य स्वगच्छस्यामंत्रणं प्रच्छन्नं कर्त्तव्यं, आर्या एव विकृष्टतपःकरणार्थमविकृष्टतपःकरणार्थं वा समागतः, किंप्रतीक्ष्यतामुत प्रतिषिध्यतामिति? तत्र यदि तेषामनुमतं भवति, तदा प्रतीष्यते, अनिच्छायां प्रतिषिध्यते, यदि पुनः केचिन्मन्यंते केचिन्न मन्यंते ते तर्हि यः कश्चिन्नेष्टवान् तमनिच्छंतं तस्य क्षपकस्य वैयावृत्ते बलान्न नियोजयेत्, बलाभियोगस्य सूत्रे निषेधात्, यस्तु प्रतीच्छितः । स प्रष्टव्यः किंत्वं वैकृष्टं तपः करोषि अविकृष्टं वा ? यदिब्रूते आविकृष्टं, ततो भूयोपि पृष्टव्यं त्वं पारणकदिने कीदृशो भवसि, यदि प्राह, ग्लानोपमः, तत्राह -

[भा.२९४] अविगिट्ठ किलम्मंतं भणंति माखम करेहि सज्झायं;
सक्का किलंमिउं जेवि, विगिट्ठेणं तहिं विवरे ।

वृ- अविकृष्टतपसि क्लाम्यंतं भणंति सूरयो, मा क्षपय मा क्षपणं कुरु न युक्तं भद्र तव क्षपणं कर्तुं न शक्त्यभावादित्यर्थः तस्मात्कुरु स्वाध्यायं, तपःकरणात् स्वाध्यायकरणस्य बहुगुणत्वात्, अपि च स्वाध्यायोपि परमं तपः, यत उक्तं -

बारसविहिम्मिवि तवे, सब्भिंतरबाहिरे कुसलदिट्ठे;
नवि अत्थि नवि होहिइ, सज्झाइ समं तवो कम्मं ।

अग्लानोपमस्त्वं विकृष्टतपःकारी तपःकार्यते, यस्तु विकृष्टं तपःकरोति स यद्यपि पारणकदिनेपि ग्लानोपमो जायते, तथापि स कार्यते, यत आह सक्का इत्यादि अपि शब्दः पुनरर्थे ये पुनस्तपस्विनो विकृष्टेन तपसा पारणकदिने क्लमयितुं शक्याः क्षाम्यंते इति भावः । तत्र तेपु तपस्विषु विवरेत् दद्यात् तपः करणं, तेषां तथारूपाणामपि समनुजानीयात्, न तु वारणीयं, विकृष्टतपःकरणस्य महागुणत्वात् केवलं भक्तपानं भैषजादिकमानाय्य दातव्यं अथ स ग्लानो न भवति, किंतु स्वयमेव प्रतिलेखनादिकांश्च व्यापारान् सर्वानप्यहीनातिरिक्तान् करोति, प्रतीच्छते, एवं तत्र यो विकृष्टेन तपसा ग्लानोपमो भवति तत्रेयं सामाचारी

[भा.२९५] अनपुच्छिऊणे लहुगा असति गिलाणोवमे अदेंतिय;
पडिलेहण संथारए पानग तहमत्तगतिगं च ।

वृ- तस्मिन् गच्छे यद्यन्यः कोपि विकृष्टतपःकारी क्षपको विद्यते, स च पारणकदिने ग्लानोपमो वा भवेदग्लानोपमो वा । तथापि तस्मिन्विद्यमाने क्षपके अन्यं क्षपकमाचार्यो न प्रतीच्छेत्, प्राक्तनस्य हि क्षपकस्य पारणकदिने ग्लानोपमस्याग्लानोपमस्य वा सतोवश्यं कर्तव्यं, न च द्वयोर्वैयावृत्त्यकरणे साधवः प्रभवंति, तस्मात् न प्रत्येषणीयः, यदि पुनः साधवोनुमन्यंते सोपि प्रतीक्ष्यतां, तस्यापि वैयावृत्त्यकरणेन समाधिमुत्पादयिष्याम इति, तदा प्रतीच्छनीयः । यदि पुनर्गच्छे विद्यमानेपि विकृष्टतपःकारिणि क्षपके गच्छाननुमतावाचार्योऽन्यं प्रतीच्छति तदा तस्यान्यप्रतीच्छने प्रायश्चित्तं लघुकाश्चत्वारो लघुमासाः; असतित्ति तथा असति प्रायोग्यद्रव्ये ये दोषास्ते च वक्तव्याः, ते चामी द्वयोः क्षपकयोर्युगपत्पारणकदिने समापतिते पर्याप्त्या पारणद्रव्ये अलाभतो असति असंस्तरणं भवेत्, असंस्तरणाच्च यदेषणादि प्रेरयंति, तन्निमित्तं प्रायश्चित्तमाचार्यस्यापतति, आज्ञाभंगादयश्च दोषा जायंते, तथा पारणकप्रायोग्यद्रव्यसंपादनेन संस्तरणमकुर्वत्सु साधुषु विषये सोऽप्रीतिं कुर्यात्, अप्रीत्या च अनागाढामागाढां वा परितापनां प्राप्नुयात्, तथा च सति तन्निष्पन्नमपि प्रायश्चित्तमाचार्यस्य, अन्यच्च शिष्याः प्रतीच्छकाश्च द्वयोरपि क्षपकयोर्वैयावृत्त्यकरणतो भग्ना एवं चिंतयेयुर्यथान्यान्यक्षपकवैयावृत्त्यकारणेन नास्माकं सूत्रमर्थो वा, तस्मादन्यत्र व्रजाम इति ।

तथा गिलाणोवमे इति तेषु गच्छवासिषु साधुषु वास्तव्यक्षपकवैयावृत्त्यकरणव्यापृतेषु ग्लानोपमो जायते, तदा तस्याचार्यस्य प्रायश्चित्तं चतुर्गुरुकाः, अदेंतेयत्ति तथा गच्छे वास्तव्यक्षपककरणव्यावृततया भक्तपानं वागंतुकस्याददाने स भक्तार्थं पानार्थं वा स्वयं हिंडेत प्रतिलेखनादिक्रियां च स्वयमेव कुर्यात्, हिंडमानश्च क्षुधापिपासया शीतेनोष्णेन वा पीडितो यद्यनागाढां परितापनां प्रायश्चित्तमाचार्यस्य चतुर्लघु, अथ गाढां तदा चतुर्गुरु अथ मूर्च्छति तदा षट् लघु, तथा परिताप्यमानो यद्येषणां प्रेरयति, तदा तन्निमित्तं प्रायश्चित्तं, अथ न प्रेरयति, तथा प्रभूतमटतो यदा नागाढादिपरितापनां प्राप्नोति, तन्निमित्तं प्रायश्चित्तं,

अथ तत्र गच्छे अन्यो वास्तव्यः क्षपको न विद्यते, तदा नियमतः स प्रतीच्छनीयः, केवलं सोपि गच्छानुमत्या, अन्यथा न किमपि तस्य गच्छः करिष्यति, तत्र यदि प्रमादतो वैयावृत्त्यभीरुतया गच्छो नानुमन्यते, तदा स प्रज्ञापनीयः । अथ कारणवशतस्तदा न प्रतीच्छनीयः, यदि पुनर्गच्छाननुमत्यापि प्रतीच्छति तदा तस्य प्रायश्चित्तं चत्वारो लघुकास्तथा गच्छानुमतो यो यतः प्रतिलभ्यते स सततः क्षपकप्रायोग्यमानयति, अननुमतौ च न कोपि किमप्यानेष्यतीत्यसति पारणकदिने पर्याप्त्या प्रायोग्यद्रव्ये असंस्तरणमसंस्तरणाच्च परितापनादुःखं तन्निमित्तं प्रायश्चित्तमाचार्यस्य, तथा पारणकदिने ग्लानोपमो जायते, तथा शेषेषु साधुषु प्रयोजनांतरव्यापृततया भक्तं पानं वा ददानेषु स्वयं हिंडमाने ये दोषास्तेपि वक्तव्याः; संप्रति तस्य क्षपकस्य वास्तव्यस्यागंतुकस्य वा कृतप्रत्याख्यानस्यापि यत्प्रतिदिवसं कर्त्तव्यं तदाह- पडिलेहणेत्यादि तस्योपकरणं कल्पादि यथायोगमुभयकालं प्रतिलेखनीयं, संस्तारकश्च तस्य कर्त्तव्यः, तथा पानकं पानीयं तस्योचितमानीय दातव्यं तथा मात्रकत्रिकं च उच्चारमात्रकं प्रश्रवणमात्रकं खेलमात्रकं च यथाकालं समर्प्पणीयं परिष्ठापनीयं च, सांप्रतमेनामेव गाथां व्याख्यानयन् प्रथमतो अनपडिच्छणे लहुगा इति असइ इति च व्याख्यानयति -

[भा.२९६] दुण्हेगतरे खमणो, अन्नुपडिच्छंतसंथरेआणा ।
अप्पत्तियपरितावण सुत्तेहानिअन्नहिं च इमे ।

वृ- वास्तव्ये क्षपके क्षपणे द्वयोर्ग्लानोपमयोरन्यतरस्मिन् विद्यमाने यदि गच्छानापृच्छ्या अन्यं प्रतीच्छति तदा तस्मिन्नन्यं प्रतीच्छति प्रायश्चित्तं लघुकाश्चत्वार इति वाक्यशेषः, तथा युगपत् तद्द्वयोः क्षपकयोः पारणकदिने युगपत्समापतिते प्रायोग्यद्रव्ये अलाभतो असति यदि वास्तव्यक्षपकवैयावृत्त्य-करणव्यापृतानामागंतुकस्य वैयावृत्त्यकरणवेलातिक्रमतोऽसंस्तरणं भवेत् तस्मिंश्चासंस्तरणे यदेषणादि प्रेरयंति तन्निमित्तं प्रायश्चित्तमाचार्यस्य तथा आणत्ति आज्ञापदैकदेशेसमुदायोपचारादाज्ञाभंगानवस्था मिथ्यात्वविराधनादोषाः प्रादुष्युः तस्य चासंस्तरणे अप्रीतिरप्रीत्या च परितापनं ततः परितापन निमित्त-मपि प्रायश्चित्तं तथा शिष्याः प्रतीच्छकाश्चैवं चिंतयेयुरस्माकं द्वयोः क्षपकयोर्वैयावृत्त्यकरणे व्यापृतानां सूत्रे हानिरुपलक्षणमेतत् अर्थे च, तस्मादन्यत्र व्रजामः; संप्रति । गिलाणोवमे अडंते यत्ति व्याख्यानयति-

[भा.२९७] गेलणतुल्लगुरुगा अडंतेपरितावणा सयंकरणे ।
नेसनगहणागहणे दुगट्ठ हिंडलमुच्छाय ॥

वृ. साधुषु वास्तव्यक्षपकवैयावृत्त्यकरणतः प्रयोजनांतरे व्यापृततया वैयावृत्त्यमकुर्वत्सु यद्यागंतुकः क्षपकोग्लानतुल्यो ग्लानोपमो जायते, तदा सूरेः प्रायश्चित्तं चतुर्गुरुकाः, तथा भक्तं पानं च अददत्सु स्वयंदुगट्ठहिंडंतत्ति द्विकार्थं भक्तार्थं पानार्थं च हिंडमाने स्वयं वा उपकरणस्य प्रत्युपेक्षणादेः करणे या परितापना अनागाढा अगाढा वा मुच्छायत्ति मूर्च्छा च तन्निमित्तं प्रायश्चित्तं आचार्यस्य तत्रानागाढपरितापनानिमित्तं चतुर्लघु आगाढपरितापनानिमित्तं चतुर्गुरु मूर्च्छानिमित्तं षट्लघु नेसणगहहणागहणे इति स स्वयं हिंडमानः क्षुधापिपासया वा शीतेन वा उष्णेन वा परितापितः सन् यदनेषणीयमपि गृह्णाति तन्निमित्तं प्रायश्चित्तमग्रहणे नेषणीयस्य प्रभूतं हिंडमानो यद्याप्नोति आगाढपरितापनादिकं तन्निमित्तमपि यत एवमादयो दोषास्तस्माद्गच्छमापृच्छ्य तदनुमत्या प्रतीच्छेत्, प्रतीच्छितस्य च सर्वं सर्वप्रयत्नेन निर्जरार्थतया कर्त्तव्यमिति इह आगतः सन् प्रथम दिवसेपि प्रच्छनीयो यथा केन कारणेन त्वमिहागतोसीति, अन्यथा यदि तमपृष्ट्वैव आलोचनामदापयित्वा च संवासयति,

तदा प्रायश्चित्तं तदेवाह -

**[भा.२९८]** पढमदिनंमि न पुच्छे, लहुओ मासो उ बिइय गुरुओ य,
तइयंमि होंति लहुगा, तिण्हं तु अतिक्कमे गुरुगा ।

**वृ-** यदि प्रथमे दिने न पृच्छेत्, तर्हि तस्याचार्यस्य प्रायश्चित्तं लघुमासः, द्वितीये गुरुमासः, तृतीये भवंति चत्वारो लघुमासाः, त्रयाणां तु दिनानामतिक्रमे चतुर्थादिषु दिवसेषु प्रायश्चित्तं चतुर्गुरुकाश्चत्त्वारो गुरुमासाः, अधुनापवादो भण्यते यदि कार्यादिप्रयोजनवशाद्यावत्तामेकं द्वे त्रीणि वा दिनानि षण्मासानपि यावन्न पृच्छति, तथापि न प्रायश्चित्तभाक् तथा चाह -

**[भा.२९९]** कज्जे भत्तपरिण्णा गिलाणराया य धम्मकहवादी,
छम्मासा उक्कोसा तेसिं तु वइक्कमे गुरुगा ।

**वृ-** कार्ये कुलगणसंघविषये व्यापृतो भवेदाचार्यः तथा केनापि साधुना भक्तपरिज्ञा कृता, तस्य समीपे लोको भूयानागच्छति, तत्राचार्यो धर्म्मकथने व्यापृतः गिलाणत्ति ग्लानप्रयोजने वा व्यापृतः रायाएधम्मकहीति राजा वा धर्म्मार्थी प्रतिदिवसमेति, ततस्तस्य धर्मः कथयितव्य इति धर्म्मकथिकत्वेन व्यापृतः, वादी वा कश्चन प्रबलः समुत्थितः स निगृहीतव्यस्तत एतैः कारणैर्व्यापृतः सन् आचार्यो जधन्यत एकं द्वे त्रीणि वा दिनानि उत्कर्षतो यावत् षण्मासास्तावदागंतुकं प्रष्टुमालोचनां वा प्रदापयितुं न प्रपारयेत् इत्थमप्रपारणे च दोषाभावस्तेषां षण्मासानां पुनर्व्यतिक्रमे किमुक्तं भवति षण्मासेभ्यः परतोपि यदि न पृच्छति नापि दापयत्यालोचनां, ततः प्रायश्चित्तमाचार्यस्य गुरुकाश्चत्वारो गुरुमासाः, अन्ये तु ब्रुवते, षण्मासानां परतो प्रथमदिने न प्रतीच्छत्यालोचनां, तदा लघुमासः द्वितीयदिनेप्यप्रतीच्छने मासगुरु, तृतीयदिने चतुर्लघु, दिनत्रयातिक्रमे चतुर्थादिषु दिनेष्वप्रतीच्छने च चतुर्गुरुका इति; कार्यादिप्रयोजनवशतो व्यापृत इमां यतनां कुर्यात् ।

**[भा.३००]** अन्नेण पडिच्छावे, तस्सासति सयं पडिच्छते रत्तिं,
उत्तरवीमंसाए खिन्नो य, निसिंपि न पडिच्छे ।

**वृ-** यद्यन्यो गीतार्थस्तस्याचार्यस्य समीपेऽस्त्यालोचनार्हस्तर्हि स संदेशनीयो, यथायमापृच्छ्य-तामालोचनां वा प्रतीष्यतामिति, अथ नास्त्यन्यो गीतार्थस्तदा तस्य गीतार्थस्यासति भावप्रधानोयं निर्देशोऽभावे स्वयमेव रात्रौ प्रतीच्छत्यालोचनां, अथ यथा श्रीगुप्तेन षडुलूकः षण्मासान् यावत् वादं दत्वा निर्जित एवं दीर्घकालावलंबिनि विवादे रात्रावप्युत्तरविमर्शेन प्रत्युत्तरचिंतया खिन्नः श्रांतो निशायामपि न प्रतीच्छतीत्यालोचनां दत्तामिति अथवा अत्राप्यपवादस्तमेवाह -

**[भा.३०१]** दोहिं तिहिं वा दिनेहिं जइ छिज्जइ इत्तो न होइ पच्छित्तं;
तेन परमणुन्नवणं, कुलाइरन्नोव दीवंति ।

**वृ-** यदि षण्णां मासानां परतो द्वाभ्यां त्रिभिर्वा दिनैः परप्रवादी नियमात् पराजेष्यते, कुलादिकार्यं वा समाप्तिमुपयास्यतीत्येवं निश्चीयते, ततस्तेष्वपि दिनेष्वप्रच्छने आलोचनाया अप्रतीच्छने वा न प्रायश्चित्तं भवति अथ ज्ञायते तेष्वप्येकद्वित्र्यादिषु दिवसेषु न कुलादिकार्यसमाप्तिर्भविष्यति, न च परवादी जेष्यते तदा षण्मासमाप्तावेव राज्ञः समीपे गत्वा ज्ञापनीयं यथाहं दिनमेकमक्षणिको भविष्यामि, नान्यथा गृह्णिथ इति कुलादिकार्येष्वपि कुलादीन्यनुज्ञापयति तथा चाह तेनपरमित्यादि तेनेत्यव्ययं, तत इत्यर्थे ततः षण्मासेभ्यः परं कार्यपरिच्छित्तौ संभाव्यमाना या अनुज्ञापना कुलादेर्दिनमेकं यावत्

कर्त्तव्या, राज्ञश्च वादिविषये कारणं दीपयंत्याचार्याः, यथाहं कारणवशेन दिनमेकमक्षणिको भविष्यामीति एवं चेन्न कुर्वीत तदा प्रायश्चित्तं चतुर्गुरुकाः । [illegible] ज्ञानार्थं दर्शनार्थं चारित्रार्थं चोपसंपद्यमानः प्रतीच्छितो नियमादालोचनां दापयितव्यः, स च दाप्यमानः कथमालोचनां ददाति, उच्यते ।

[भा.२०२] आलोयणं तहच्चेवय, मूलुत्तरे नवरि विगडिए इमं तु; ।
इत्थं सारण चोयण, निवेयणंतेवि एमेव ।

वृ- यथा संभोगिकानां विहारालोचनायां मूलगुणातिचारविषये उत्तरगुणातिचारविषये च भणितं, तथात्रापि भणितव्यं, किमुक्तं भवति उपसंपद्यमानोप्यालोचनां ददानः पूर्वं मूलगुणतिचारान् प्रागुक्तक्रमेणालोचयति, पश्चादुत्तरगुणानिति नवरमयं विशेषः, विकटिते आलोचिते एकत्र स्थितान् विभिन्नस्थितान्वा प्रत्येकं वंदित्वा इदं भणति,

आलोयणा मे दिन्ना इच्छामि सारणवारणचोयणंति तेप्येवमेव ।
प्रतिभणंतो निवेदनं कुर्वंति अज्जो अम्हे सारिज्जा, वारेज्जा, चोइज्ञा इति ।।

गता उपसंपदालोचना सांप्रतमपराधालोचना यचात्र प्रकृतं -

[भा.२०३] एमेवय अवराहे किं न ते कया तहिं चिय विसोही ।
अहिगरणादीसाहति गीयच्छो वा तहिं नत्थि ।।

वृ- यथा विहारालोचनायामुपसंपदालोचनायां च विधिर्भणित एवमेव तथैव अपराधालोचनायामपि द्रष्टव्यो, यावत् पृष्टो वा अपृष्टो वा ब्रूते अहमपराधालोचकः समागतः तत आचार्यैर्वक्तव्यः किं केन कारणेन ते त्वया तत्रैव स्वगच्छ एव न कृता विशोधिः प्रायश्चित्तांगीकरणेन, एवमुक्ते यदि साधयति कथयति अधिकरणादीनि अधिकरणं तैस्सहजातमादिशब्दैत् प्रागुक्तविकृतियोगप्रत्यनीकादिकारणपरिग्रहः अथवा वक्ति तत्र गीतार्थो नास्ति तत्राधिकरणादिष्वविशुद्धिकारणेषु समागत एवं प्रतिभणनीयः ।

[भा.२०४] नच्छि इहं पडियरगा, खुलखेत्तं उग्गमविय पच्छित्तं
संकियमादीवपदे जहक्कमं ते तहवि भासे ।

वृ- अस्तीति निपातो बहुवचनार्थः प्रतिचारका नाम अपराधापन्नस्य प्रायश्चित्तं दत्ते तपः कुर्वतो ग्लानायमानस्य वैयावृत्यकरास्ते इह मम पार्श्वे न संति, खुलक्षेत्रं नाम मंदभिक्षं यत्र वा प्रभूतमुपग्रहकारि घृतादि द्रव्यं न लभ्यते, तादृशमिदं क्षेत्रं तथाविधदानं शुद्धश्रावकाभावत् वयमपि स्तोकमप्यपराधं उग्रं प्रायश्चित्तं दद्मः तथा गुरुपारंपर्यसमागमात्, तथा यानि नत्थी संकियसंघाडेत्यादि प्रागुक्तगाथोपन्यस्तानि शंकितादीनि पदानि संभवेन यथाक्रमं तथेति समुच्चये विभाषेत ब्रूयात् यथा प्रायश्चित्तसूत्रमनुसृत्य प्रायश्चित्तं दीयते, तदिदानीं विस्मृतं शंकितं जातं न चार्थं स्मरामि, ततः कथं प्रायश्चित्तं प्रयच्छामि, अथवा प्रायश्चित्तं प्रतिपन्ने सति तत्तपस्त्वयेह कर्त्तव्यं तत्र चेयमस्माकं सामाचारी बहिर्भूमिमात्रमपि संघाटकं विना न गंतव्यं, यदि पुनः कोपि गच्छति तलस्तस्मै प्रायश्चित्तमत्युग्रं ददामि, इत्येव यथासंभवं शंकितादीनि पदानि ब्रूयात् न तु दद्यादालोचनामिति, यस्तु निर्गमनशुद्ध आगमनेन तु शुद्धोऽशुद्धो वा प्रतीच्छ्यते । तस्यालोचनायां विधिर्वक्तव्यः तत्र यदुक्तमधस्तात् अवराहे दिवसतो पसच्छंमि इति तदिदानीं व्याख्यानयति -

[भा.३०५] दव्वादिचउरभिग्गह, पसत्थमपसत्थ ते दुहेक्केक्के ।
अपसत्थे वज्जेउं, पसत्थएहिं तु आलोए ।

वृ- अपराधालोचनायां दीयमानायां द्रव्यादयो द्रव्यक्षेत्रकालभावाश्चत्वारश्चतुःसंख्याका अपेक्षणीया भवंति, तथा अभिग्गहत्ति दिशामभिग्रहः कर्त्तव्यस्ते च द्रव्यादयो दिशश्च एकैकप्रत्येकं द्विधा द्विप्रकारास्तद्यथा, प्रशस्ता अप्रशस्ताश्च, तत्राप्रशस्तान् द्रव्यादीन प्रशस्ताश्च दिशो वर्जयित्वा प्रशस्तैर्द्रव्यादिभिर्दिग्विशेषैश्च, किमुक्तं भवति ? प्रशस्तेषु द्रव्यादिषु प्रशस्ताश्च दिशोऽभिगृह्य आलोचयेत्, आलोचनां दद्यात् तत्राप्रशस्तद्रव्यादिप्रतिपादनार्थमाह -

[भा.३०६] भग्गघरे कुड्डेसु य, रासीसु य जे दुमा य अमणुन्ना ।
तत्थ न आलोएज्जा, तप्पडिकूले दिसा तिन्नि ।

वृ- यत्र स्थंभतुलाकुड्यादीनामन्यतम् किमपि पतितं तत् भग्नग्रहं तत्र तथा कुड्डेसु इति कुड्यग्रहणात् कुड्यमात्रावशेषं, तत्र पाठांतरे रुद्देसु य इति तत्र रुद्रेषु रुद्रग्रहेषु तथा राशिषु अमनोज्ञतिलमाषकोद्रवादिधान्यराशिषु ये च द्रुमा अमनोज्ञा निष्प त्रककंटकिप्रभृतयोऽमनोज्ञा अप्रशस्तास्तत्र तेष्वप्याश्रयभूतेषु उपलक्षणमेतत् अप्रशस्तासु तिथिषु अप्रशस्तेषु संध्यागतादिषु नक्षत्रेषु अप्रशस्ताश्च याम्यादीर्दिशाभिगृह्य नालोचयेत् किंतु तत्प्रतिपक्षे प्रशस्तद्रव्यादिरूपे आलोचयेत्, तथा प्रशस्ताश्च तिस्रो दिशः पूर्वामुत्तरां चरंतीं चाभिगृह्य आलोचयेत् इदानीममनोज्ञधान्यराश्यादिषु द्रव्यादित्वयोजनामाह -

[भा.३०७] अमणुन्नधन्नरासी, अमणुन्नदुम्मा य होंति दव्वंमि ।
भग्गघरे रुद्दऊसर, पवायदड्ढाइ खित्तंमि ।

वृ- अमनोज्ञा धान्यराशयो अमनोज्ञद्रुमाश्च भवंति, द्रव्ये द्रष्टव्याः, भग्नग्रहं प्रागुक्तस्वरूपं, रुद्दत्ति रुद्रग्रहं, ऊसरत्ति ऊपरं यत्र तृणादि नोद्गच्छति, च्छिन्नटंकातटीप्रपातः भृगुप्रपातादिकं वा; दग्धं दवदग्धमादिशब्दात् विद्युत्हतादिपरिग्रहः, इत्यादि सर्वं क्षेत्रे द्रष्टव्यं तत्र यत् अमणुन्नदुमा य होंति दव्वंमीत्युक्तं तदेतत् व्याख्यानयति -

[भा.३०८] निपत्त कंटइल्ले, विज्जुहते खारकडुयदड्ढे य ।
अयतउयतंबसीसग, दव्वे धम्माय अमणुणा ।

वृ- निःपत्रा स्वभावयतः पत्ररहिताः करीरादयः, कंटकिनो बदरीबब्बूलप्रभृतयः, विद्युद्धता विद्युत्प्रपातभग्नाः, क्षाररसामोरडप्रभृतयः, कटुकाः कटुकरसा रोहिणीकुटजलिंबादयः, दग्धाश्च दवदग्धाः, एतान् द्रुमान् अमनोज्ञान् जानीहीति वाक्यशेषः । न केवलममनोज्ञकुधान्यराशयोऽमनोज्ञा द्रुमाश्च द्रव्ये वर्जनीयाः किंतु अयस्त्रपुताम्रसीसकराशयो द्रव्ये वर्जयितव्याः । अमणुना धन्नरासी इति व्याख्यानयति, अमनोज्ञानि धान्यानि पुनश्च शब्दः पुनरर्थे अमनोज्ञधान्यराशयः, संप्रति कालतो ये दिवसा वर्जनीयास्तानाह -

[भा.३०९] पडिकुट्ठेल्लगदिवसे, वज्जेज्जा अट्ठमिं च नवमिं च
छट्ठिं च चउत्थिं च बारसिं दोण्हंपि पक्खाणं ।

वृ- इह इल्लप्रत्ययः प्राकृते स्वार्थे प्रतिकुष्टा एव प्रतिकुष्टेल्लकाः । ते च दिवसाश्च प्रतिकुष्टेल्लकदिवसाः प्रतिषिद्धा दिवसास्तान् वर्जयेत्, तानेव नामत आह द्वयोरपि शुक्लकृष्णरूपयोः पक्षयोरष्टमीं नवमीं षष्ठीं चतुर्थीं द्वादशीं च एता हि तिथयः शुभप्रयोजनेषु सर्वेष्वपि स्वभावत एव प्रतिकूलास्ततो वर्जनीयाः,

इदं कालतोऽप्रशस्तं वर्ज्यं, वर्ज्यं संध्यागतादिकं नक्षत्रं तदेवाह -

[भा.३१०] संज्झागयं रविगयं, विड्डारं संगहं विलंबिं च,
राहुहयं गहभिन्नं वज्जेए सत्त नक्खत्ते ।

वृ- संध्यागतं नाम यत्र नक्षत्रे सूर्योऽनंतरं स्थास्यति तत आदित्यपृष्ठस्थितमन्ये पुनराहुर्यस्मिन्नुदिते सूर्य उदेति तत् संध्यागतमपरे त्वेवं ब्रुवते, यत्र रविस्तिष्ठति । तस्माच्चतुर्दशं पंचदशं वा नक्षत्रं संध्यागतं, रविगतं यत्र रविस्तिष्ठति, पूर्वद्वारिकें नक्षत्रे पूर्वदिशा गंतव्ये यदा अपस्या दिशा गच्छति । तदा तत् विड्डारं विगतद्वारमित्यर्थः, यत् क्रूरग्रहेणाक्रांतं तत् संग्रहं, विलंबि यत् सूर्येण परिभुज्य मुक्तं, अन्ये त्वाहुः सूर्यस्त पृष्ठतोऽग्रतो वा अनंतरं नक्षत्रं संध्यागतं यत्पुनः सूरगतात् नक्षत्रात् पृष्ठतस्तृतीयं तत् विलंबि इति । राहुहतं यत्र सूर्यस्य चंद्रस्य वा ग्रहणं, यस्य मध्येन ग्रहो गतः तत् ग्रहभिन्नं इत्येतानि सप्त नक्षत्राणि वर्जयेत् यत एतेष्विमे दोषाः ।

[भा.३११] संज्झागयंमि कलहो, होइ कुभत्तं विलंबिनक्खत्ते; ।
विड्डारे परविजयो आदिच्चगए अनिव्वाणीओ ।।

[भा.३१२] जं संगहंमि कीरइ, नक्खत्ते तत्थवुग्गहो होइ,
राहुहयंमि य मरणं, गहभिन्ने सोणिउग्गालो ।।

वृ- संध्यागते नक्षत्रे शुभप्रयोजनेषु प्रारभ्यमाणेषु कलहो रटिर्भवति, विलंबिनक्षत्रे कुभक्तं, विड्डारे परे परेषां शत्रूणां विजयः । आदित्यगते रविगते अनिर्वाणिरसुखं, संग्रहे पुनर्नक्षत्रे यत् क्रियते तत्र व्युद्ग्राहः संग्रामो भवति, राहुहते मरणं, ग्रहभिन्न शोणितोद्गारः । शोणितविनिर्गमः एवंभूतेष्वप्रशस्तद्रव्यक्षेत्र-कालाभावेषु नालोचयेत; प्रशस्तेषु तत्र प्रशस्ते द्रव्ये शाल्यादिप्रशस्तधान्यराशिषु मणिकनकमौक्तिक-वज्रवैडूर्यपद्मरागादिराशिषु च प्रशस्तं क्षेत्रं साक्षादाह -

[भा.३१३] तप्पडिवक्खे खेत्ते उच्छुवणे सालिचेइघरे वा;
गंभीरसानुनाए, पयाहिणावत्तउदए य ।

वृ- तस्य प्रागुक्तस्याप्रशस्तस्य प्रतिपक्षे प्रशस्ते क्षेत्रे इक्षुवने उपलक्षणमेतत् । आरामे वा पत्रपुष्पफलोपेते सालित्ति वनशब्दोऽत्रापि संबध्यते शालिवने चैत्यगृहे वा शब्दाविकल्पने, तथा गंभीरं नाम भग्नत्वादिदोषवर्जितं, शेषजनेन च प्रायेणालक्षणीयमध्यभागं स्थानं गंभीरमस्थाघमिति वचनात्, सानुनादे यत्रोच्चारिते शब्दे प्रतिशब्दः समंतत उत्तिष्ठति, तत्, सानुनादं तथा प्रदक्षिणावर्त्तमुदकं यत्र नद्यां पद्मसरसि वा तत् प्रदक्षिणावर्त्तोदकं तस्मिन्वा च शब्दो वा शब्दार्थः, । क्वचित् वा शब्दस्यैव पाठः, प्रशस्तं कालमाह -

[भा.३१४] उत्तदिने सेसकाले उच्चट्ठाणा गहा य भावंमि;
पुव्वदिस उत्तरा वा, चरंति य जाव नवपुव्वी ।

वृ- उक्तानि यानि दिनानि अष्टम्यादीनि तेभ्यो ये शेषा द्वितीयादयो दिवसास्ते च शेषकालश्च उक्तदिनशेषकालस्तस्मिन् प्रशस्ते व्यतीपातादिदोषवर्जितं उपलक्षणमेतत् प्रशस्ते च करणे प्रशस्ते च मुहूर्त एतत् कालतः प्रशस्तमुक्तं । भावतः प्रशस्तमाह उच्चस्थानं येषां ते उच्चस्थाना ग्रहा भावे भावविषयं प्रशस्तं किमुक्तं भवति भावतः उच्चस्थानगतेषु ग्रहेषु तत्र ग्रहाणामुच्चैः स्थानमेवं, सूर्यस्य मेष उच्चं स्थानं सोमस्य वृषभः, मंगलस्य मकरः, बुधस्य कन्या, बृहस्पतेः कर्कटकः शुक्रस्य मीनः, शनैश्चरस्य तुला

सर्वेषामपि च ग्रहाणामात्मीयादुच्चः स्थानाद्यत् सप्तमं स्थानं तत् नीचैः स्थानं । अथवा भावतः प्रशस्ताये सोमग्रहा बुधशुक्रबृहस्पतिशशिन एतेषां संबंधिषु राशिषु एतैरवलोकितेषु च लग्नेषु आलोचयेत्, तथा तिस्रो दिशः प्रशस्ता ग्राह्याः, तद्यथा पूर्वोत्तरा चरंती चरंती नाम यस्यां भगवानर्हन् विहरति सामान्यतः केवलज्ञानी मनःपर्यवज्ञानी अवधिज्ञानी चतुर्दशपूर्वी त्रयोदशपूर्वी यावन्नवपूर्वी, यदिवा यो यस्मिन् युगे प्रधान आचार्यः सयां यवा विहरति एतासां तिसृणां दिशामन्यतमस्या दिशोऽभिमुख आलोचनार्होऽवतिष्ठते, तस्येयं सामाचारी ।

[भा.३१५] निसज्जासति पडिहारिय. किइकम्मं काउ पंजलुक्कुडुओ;
बहुपडिसेवरिसा सुय अनुन्न वउ निसेज्जगतो ।

वृ- आत्मीयकल्पैरपरिभुक्तैराचार्यस्य निषद्यां करोति । असति आत्मीयकल्पानामभावे अन्यस्य सत्कान् प्रातिहारिकान् कल्पान् गृहीत्वा करोति । कृत्वा च यद्याचार्यः पूर्वाभिमुखो निषीदति, तत आलोचको दक्षिणत उत्तराभिमुखो अवतिष्ठते, अथाचार्य उत्तराभिमुखो निषण्णः । तत आलोचको वामपार्श्वे पूर्वाभिमुखस्तिष्ठति, चरंतीं वा दिशं प्रत्यभिमुखो भवति ततः कृतिकर्म द्वादशावर्त्त वंदनकं दत्वा प्रबद्धांजलिर्येन स प्रांजलिः उत्सर्गत उत्कुडुकः स्थितः सन् आलोचयेत् । यदि पुनर्बहुप्रति- सेवितमस्तीति चिरेणालोचना समाप्तिमुपयास्यति तावंतं च कालमुत्कुटुकः स्थातुं न शक्नोति, यदिवा अर्शोरोगवत उत्कुटुकस्य सतो अर्शांसि क्षोभमुपयांति । ततो बहुप्रतिसेवी अर्शःसु च सत्सु गुरुमनुज्ञाप्य निषद्यायामौपग्रहिकपादप्रोंछने वा अन्यस्मिन्वा यथार्ह आसने स्थित आलोचयति, किं पुनस्तदा आलोचनीयं उच्यते चतुर्विधद्रव्यादि तथाचाह -

[भा.३१६] चेयणमचित्तदव्वं जनावय मद्वाणा य होइ खेत्तंमि,
दिननिसिसु भिक्ख दुभिक्खकाले भावंमि हट्ठियरे ।

वृ- द्रव्यतश्चेतनं सचित्तमुपलक्षणमेतत् मिश्रं वा अचित्तमचेतनं वा अकल्पिकं यत् प्रतिसेवितं, क्षेत्रतो जनपदे वा, कालतो दिने निशि वा सुभिक्षे दुर्भिक्षे वा भावे हट्ठियरे इति सप्तमी तृतीयार्थे हृष्टेन इतरेण वा ग्लानेन सता यतनया वा दर्पतः कल्पतो वा तत् आलोचयति कथमित्याह -

जह बालो जंपंतो जंपंतो कज्जमकज्जं च उज्जुयं भणइ;
तं तह आलोएज्जा मायामयविप्पमुक्को उ ।

यथा बालो मातुः पितुर्वा पुरतो जल्पन् कार्यमकार्यं च ऋजुकमकुटिलं भणति । तथा आलोचकोपि मायामदविप्रमुक्तः सन् तत् आलोचयेत्; यथा ऋजुकभावेनालोचयेत् आलोचनायाश्चेमे गुणाः ।

[भा.३१८] लहुयाहलादीजननं अप्पपरनियतिअज्जवं सोही ।
दुक्करकरणं विनाओ निसल्लत्तं यसोहिगुणा ।

वृ- लघोर्भावो लघुता यथा भारवाही अपहृतभारो लघुर्भवति । तथा आलोचकोऽप्युद्धृतशल्यो लघुर्भवति इति लघुता । तथाह्लादनं ह्लादिरौणादिक इप्रत्ययः । प्रल्हातिस्तस्य जननमुत्पत्तिह्लादिजननं प्रमोदोत्पाद इति यावत् तथा ह्यतिचारधर्म्मतप्तस्य चित्तस्य मलयगिरिपवनसंपर्केणेव आलोचना- प्रदानेनातीचारघर्म्मापगमतो भवति संविग्नानां परममुनीनां महान् प्रमोद इति, तथा अप्पपरनियत्तित्ति आलोचना प्रदानतः स्वयमात्मनो दोषेभ्यो निवृत्तिः कृतोत च दृष्ट्वा अन्येप्यालोचनाभिमुखा भवंति इति अन्येषामपि दोषेभ्यो निवर्त्तनमिति. तथा यदतिचारजातं प्रतिसेवितं तत् परस्मै प्रकटतो आत्मन

आर्जवं सम्यग्विभावितं भवति आर्जवं नाम अमायाविता तथा अतिचार पंकमलिनस्यात्मनश्चरणस्य वा प्रायश्चित्तजलेन अतिचारपंकप्रक्षालनतो निर्म्मलता शोधिः तथा दुष्करकरणं दुष्करकारिता तथाहि यत् प्रतिसेवनं तन्न दुष्करं, अनादिभवाभ्यस्तत्वात् यत् पुनरालोचयति तत् दुष्करं प्रबलमोक्षानुयायिवीर्योल्लासविशेषेणैव तस्य कर्तुं शक्यत्वात् तथा विराओ इति आलोचयता चारित्रविनयः सम्यगुपपादितो भवति निस्सल्लत्तमिति सशल्य आत्मा निःशल्यः कृतो भवतीति निःशल्यता एते शोधिगुणाः आलोचनागुणा आलोचनाशोधिरित्यनर्थान्तरत्वात् अथ कस्य समीपे आलोचना दातव्या उच्यते । आगमव्यवहारिणः श्रुतव्यवहारिणो वा तथाचाह -

**[भा.३१८]** आगमसुयववहारी आगमतो छव्विहो उ ववहारी।
केवलमनोहिचोद्दसदसनवपुव्वी नायव्वो ।

**वृ-** आगमसुयववहारीति व्यवहारशब्दः प्रत्येकमभिसंबध्यते आलोचनार्हो द्विविधस्तद्यथा आगमव्यवहारी श्रुतव्यवहारी च, तत्रागमव्यवहारी षड्विधस्तद्यथा केवली केवलज्ञानी । मनोहित्ति पदैकदेशे पदसमुदायोपचारात् मनःपर्यायज्ञानी अवधिज्ञानी, चोद्दसदसनवपुव्वी इति पूर्विशब्दः प्रत्येकमभिसंबध्यते चतुर्द्दशपूर्वी दशपूर्वी नवपूर्वी ज्ञातव्याः एते चागमव्यवहारिणः प्रत्यक्षज्ञानिन उच्यंते: चतुर्द्दशादिपूर्वबलसमुत्थस्यापि ज्ञानस्य प्रत्यक्षतुल्यत्वात् तथाहि येन यथा योतिचारः कृतस्तं तथा सर्वमेते जानंतीति ।

**[भा.३१९]** पम्हुट्टे पडिसारण, अपडिवज्जं तयं न खलु सारे ।
जइ पडिवज्जइ सारे दुविहतियारेवि पच्चक्खी ।

**वृ-** प्रत्यक्षाप्रत्यक्षज्ञानी आगमव्यवहारीत्यर्थः द्विविधमपि मूलगुणविषयमुत्तरगुणविषयं वातिचारमालोचयतो यत् किमप्यालोचनीयं पम्हुट्ठंति विस्मृतं भवति तस्मिन् विस्मृते प्रतिसारणं करोति यथाऽमुकं तवालोचनीयं विस्मृतमिति, तदप्यालोचयेति, केवली यदि केवलज्ञानादिबलेनैतत् जानाति, यथैव भणितः सन् शुद्धभावत्वात् सम्यक् प्रतिपद्यते, वर्तमानवद्वेति वचनतो भविष्यति वर्त्तमानाभिधानात्प्रतिपत्स्यते इति तदा स्मारयति, यदि पुनरेतदवगच्छति यथैव भणितोपि सन् न सम्यक् प्रतिपत्स्यतेइति, तदा तमप्रतिपद्यमानं अप्रतिपत्स्यमानं न खलु नैव स्मारयति निष्फलत्वात् अमूढलक्षो हि भगवानागमव्यवहारी; अत एव दत्तायामप्यालोचनायां यथालोचकः सम्यगावृत्तो ज्ञातस्ततस्तस्मै प्रायश्चित्तं प्रयच्छति, अथ न प्रत्यावृत्तस्ततो न प्रयच्छतीति; श्रुतव्यवहारिणः प्राह -

**[भा.३२०]** कप्पपकप्पी उसुए, आलोयवावेति तेउ तिक्खुत्तो ।
सरिसत्थमपलिउंची विसरिसपरिणामतो कुंची ।।

**वृ-** कल्पग्रहणेन दशाश्रुतस्कंधकल्पव्यवहारा गृहीताः प्रकल्पग्रहणेन निशीथः कल्पश्च प्रकल्पश्च कल्पप्रकल्पं, तदेषामस्तीति कल्पप्रकल्पिनः, दशाकल्पव्यवहारादिसूत्रार्थधरास्तु शब्दात् महाकल्पश्रुतमहानिशीथनिर्युक्तिपीठिकाधराश्च, श्रुते श्रुतव्यवहारिणः प्रोच्यंते, ते चालोचकं त्रिःकृत्वस्त्रीन् वारान् आलोचापयंति ते ह्येकद्वी वारावालोचितं अनेन प्रतिकुंचनयालोचितमप्रतिकुंचनया वेति विशेषं नावबुध्यंते । ततस्त्रीन् वारान आलोचापयंति कथमिति चेत् उच्यते, प्रथमवेलायां निद्रायमाण इव शृणोति ततो ब्रूते निद्राप्रमादं गतवानहमिति न किमप्यश्रौषमतो भूयोप्यालोचय, द्वितीयवारमालोचिते भणति न सुष्ठु मयावधारितमनुपयोगभावादतः पुनरप्यालोचय, एवं त्रिष्वपि वारेषु यदि सदृशार्थमालोचितं

ततो ज्ञातव्यमेषो अप्रतिकुंचो अमायावी अथ विसदृशं तर्हि ज्ञातव्यमेष परिणामतः कुंची कुटिलो मायावी अथैकं द्वौ वा वारावालोचनादापनेन मायावी अमायावी वा किन्नोपलभ्यते, येन त्रीन् वारानित्युक्तं, उच्यते, उपलभ्यते, परं स्फुटतरोपलब्धिनिमित्तं त्रीन्वारानालोचाप्यते, तस्यापि च प्रत्ययो भवति यथाहं विसदृशभणनेन मायावी लक्षितस्ततो मायानिष्पन्नं मासगुरुप्रायश्चित्तं पूर्वं दातव्यं । तदनंतरमपराधनिमित्तं प्रायश्चित्तमितः अत्रैवार्थे दृष्टांतमाह -

**[भा.३२१]** तिन्निउ वारा जह दंडियस्स पलिउंचियंमि अस्सुवमाः
सुद्धस्स होइ मासो, पलिउंचिइतंचिमंवऽन्नं ॥

**वृ-** दंडको नामकरणपतिस्तस्य यथा अपन्यायपीडितं करणमुपस्थितं करणमुपस्थितं किं मायाव्येषोऽमायावी चेति परिज्ञानाय त्रीन् वारान् अपन्यायमुच्चारयितुमभियोग, एवं श्रुतव्यवहारिणापि अतिचारशल्यपीडितं प्रायश्चित्तव्यवहारार्थमुपस्थितमेष प्रतिकुंचनापरो न वेति परिज्ञानार्थं त्रीन् उच्चारयितुं संरंभः, ततो यदा श्रुतव्यवहारिभिस्त्रिकृत्व आलोचनादापनेनाप्यव्यवहारिभिः प्रथमवेलायामप्यागमबलेन तस्य प्रतिकुंचितकौटिल्यं ज्ञातं भवति, तदा तस्मिन् प्रतिकुंचिते ज्ञाते अश्वोपमा अश्वदृष्टांतः क्रियते, यथा आर्य शृणु, तावदिदमुदाहरणं । जहा कस्सइ रण्णो एगो आसो सव्वलक्खणसंजुत्तो धावणपवणसमत्थो, तस्स आसस्स गुणेणं अजेयो, सो राया सव्वे सामंतराइणो आज्ञापयति, ताहे सामंतराइणो अप्पणो सभासु भणंति, नत्थि एरिसो कोइ पुरिसो जो तमवहारित्तो आनेति, सव्वेहिं भणियं, सो पुरिसपंजरत्थो चिट्ठइ, गच्छइ वा न पवनो सक्को हरिउं, एगस्स रन्नो एगेन पुरिसेण भणियं, जइ सो मारेयव्वो तो मारेमि, ताहे रन्ना भणियं, मा अम्हं तस्स वा भवउ बाहएहत्ति, ततो सो तत्थ गतो, तेन छन्नपदे संठिएणश्लक्ष्णाया इषीकाया अग्रभागे क्षुद्रकीकंटकं प्रोतं कृत्वा दिक्कल्यधनुएण मेल्लइ तेन सो आसो विद्धो इषीका अश्वमाहत्य पतिता, रिंगिणिकाकंटको अश्वशरीरेऽनुप्रविष्टः, ततोसो आसो, तेन अव्वत्तसल्लेण परिहायइ पभूयगुणजोग्गासणमपि चरंतो, ततो वेज्जस्स अक्खातो वेज्जेण परिचिंतिऊण भणियं; नत्थि अन्नो कोइ रोगो, अवस्समव्वत्तो कोइ सल्लो, ताहे वेज्जेण सो आसो जमगसमगं पुरिसेहिं चिक्खल्लेण आलिंपावितो, ततो जत्थ पढमं सुक्कं दिट्ठं फालेत्ता अवनीतो सो क्षुद्रकंटकसल्लो जहा सो आसो ससल्लो न सक्केइ सामंतरायाणो निज्जिणिउं पुव्वं एवं तुमंपि किरियाकलावं करेंतो वि संजमबुद्धिमकरेमाणो न कम्पाणं जयं करेसि, ता सव्वं सम्मं आलोएहि इति, यदि पुनर्न किमपि तस्य प्रतिकुंचितं ज्ञातं भवति तदा नाशावश्वदृष्टांतः क्रियते, स्वभावत एव तस्य सम्यगालोचकत्वात् तस्य तु शुद्धस्य मासिकं परिहारस्थानं प्राप्तस्य प्रायश्चित्तं भवति मास इतरस्य तु कृतप्रतिकुंचनस्य तथापन्नमासिकं प्रायश्चित्तमिदं चान्यत् मायानिष्पन्नं मासगुरु इति गाथार्थः । संप्रति यदुक्तं, जहदंडियस्सेति तद्विभावयति

**[भा.३२२]** अत्थुप्पत्ती असरिस निवेयणे दंडो पच्छववहारो;
इय लोउत्तरियंमिवि, कुंचियभावं तु दंडंति ॥

**वृ-** उत्पद्यते यस्मादिति उत्पत्तिः । अर्थस्योत्पत्तिरर्थश्चोत्पद्यते व्यवहारादिति अर्थोत्पत्तिर्व्यवहार उच्यते, तस्यायमर्थोत्पत्तौ करणव्यवहारे असदृशनिवेदने दंडः, इयमत्र भावना यथा कोऽपि पुरुषोऽपन्यायपीडितो राजकरणमुपस्थितो निवेदयते, हं देवदत्तेनापन्यायेन पीडितः । ततः कारणिकाः पृच्छंति कथमन्यायः संवृत्तः, सोऽकथयत्, कथिते करणपतिर्ब्रूते, पुनः कथय, ततो भूयः कथयति, ततः पुनरपि कथय, तत्र यदि तिसृष्वपि वेलासु सदृशं वक्ति, ततो ज्ञायते यथा अनेन यथावस्थितः

सद्भावः कथितः, अथ विसदृशं, ततो जानाति करणपतिरेष प्रतिकुंच्य कथयति ततः स निर्भर्त्सयति, किमिति राजकुलेपि समागतस्त्वं मृषा वदसीति पूर्वं मायामृषा प्रत्ययं दंड्यते, पच्छव्ववहारो इति पश्चाद् व्यवहारं कार्यते, व्यवहारेपि यदि पराजितो भवति, ततो द्वितीयवेलं दंड्यते । एष दृष्टांतो, दार्ष्टांतिकयोजनामाह; इय इत्यादि इति एवमुक्तप्रकारेण लोकोत्तरेपि वारत्रयमालोचनादापनेन यदि कुंचितो भावो ज्ञातो भवति, ततस्तं कुंचितभावं पूर्वमाचार्यो निर्भर्त्सयति । किमित्यालोचनाया-मभ्युपस्थितो मायामृषा वदसि ततो दंडे इति प्रथमतो मायानिष्पन्नेन मासगुरुणा प्रायश्चित्तेन दंडयति, पश्चात् यदापन्नं मासिकं तेन द्वितीयवेलं दंडयति । अथ वारत्रयमालोचनादापनेपि कथं श्रुतव्यवहारिणो मायामंतर्गतां लक्षयंते तत आह -

[भा.३२३] आगारेहिं सरेहिं य पुव्वावरवाहयाहियगिराहिं;
नाउं कुंचियभावं परोक्खनाणी ववहरंति ।।

वृ- आकाराः शरीरगता भावविशेषास्तत्र यः शुद्धस्तस्य सर्वेप्याकाराः संविग्नभावोपदर्शका भवंति, इतरस्य तु न तादृशाः । स्वरा अप्यालोचयतः शुद्धस्य विविक्ता विस्पष्टा अक्षुभिताश्च निस्सरंति इतरस्य त्वव्यक्ता अविस्पष्टाः । क्षुभितगद्गदाश्च, तथा शुद्धस्य वाणी पूर्वापराव्याहता, इतरस्य तु पूर्वापरवि-संवादिनी, तत् एवं परोक्षज्ञानिः श्रुतव्यवहारिण आकारैः स्वरैः पूर्वापरव्याहताभिश्च गीर्भिस्तस्या-लोचकस्य कुंचितभावं कुटिलभावं ज्ञात्वा तथा व्यवहरंति, पूर्वं मायाप्रत्ययेन प्रायश्चित्तदंडेन दंड्यते, पश्चादपराधप्रत्ययेन प्रायश्चित्तदंडेनेति भावः ।

*मू. (२) जे भिक्खू दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा, अपलिउंचियं आलोएमाणस्स दोमासियं पलिउंचियं आलोएमाणस्स तिमासियं ।।*

वृ- द्वैमासिकं प्रायश्चित्तं यो भिक्षुर्द्वाभ्यां मासाभ्यां निर्वृत्तं द्वैमासिकं परिहारस्थानं प्रतिसेव्य आलोचयति तस्याप्रतिकुंच्य मायामकृत्वा आलोचयतो द्वैमासिकं प्रायश्चित्तं शुद्धत्वात् । प्रतिकुंच्यालोचयतस्त्रैमासिकं प्रतिकुंचनानिष्पन्नस्य गुरुमासस्य प्रक्षेपात्, इह द्वैमासिकं परिहारस्थानमात्रमापन्नस्य प्रतिकुंचकस्य दृष्टांतः कुंचिको नाम तापसः तद्यथा, कुंचिगो तावसो सो फलाण अट्ठाए अडविं गतो तेण नदीए सयं मतो मच्छो दिट्ठो, तेन अप्पसागारिए पइत्ता खइतो । तस्स तेन अनुचियाहारेण अजीरंतेन गेलन्नं जायं, तेन विज्जो पुच्छिओ, सो भणइ, किं ते खइयं जतो रोगो उप्पन्नो ? तावसो भणइ फलाइं मोत्तुं अन्नं न किंचि खइयं, वेज्जो भणइ कंदादीहिं ते निक्करिसियं सरीरं, तो घयं पिवाहि; तेन पीयं सुट्ठयरं, गिलाणीभूतो, पुनो पुच्छितो वेज्जो, तेन भणियं, सम्मं कहेहि, कहियं मच्छो मे खइतो, ततो वेज्जेण संसोहणवमणविरेयणकिरियाहिं लट्ठीकओ, इमो उवणओ, जो पलिउंचइ तस्स पच्छित्तकिरिया न सक्कइ गुणं काउं सम्मं, पुन अइयारोगं आलोयं तस्स सक्कइ ।

*मू. (३) जे भिक्खू तेमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा, अपलिउंचियं आलोएमाणस्स तेमासियं, पलिउंचियं आलोएमाणस्स चउमासियं ।।*

वृ- अत्र व्याख्या पूर्ववत् नवरं त्रैमासिकमिति त्रिभिर्मासैर्निर्वृत्तं त्रैमासिकं शेषं तथैव केवलं त्रयो मासा अवस्थिता अन्यो मायाप्रत्ययनिष्पन्नश्चतुर्थो मासो गुरुर्दीयत इति चातुर्मासिकं, अत्र प्रतिकुंचकस्य दृष्टांतो योधः ।। दो रायाणो संगामं संगामेंति । तत्थ एगस्स रन्नो एगो मणूसो सूरत्तणेणं अतीव वल्लभो, सो य बहूहिं सल्लितो, ते तस्स सल्ले वेज्जो अवणेइ, अवणिज्जमाणेहिं य सल्लेहिं, सो अतीव दुक्खाविज्जइ

ततो एक्कमि अंग सल्लो विज्जमाणवि दुक्खाविज्जामिति वेज्जस्स न कहितो, ताहे सो तेन सल्लेण विघट्टमाणेण बलं न गेण्हइ दुब्बली भवति, पुनो तेन पुच्छिज्जमाणेण निब्बंधे कहियं, नीणितो सल्लो, पच्छा बलवं जातो, अत्राप्युपनयः प्राग्वत् ।

**मू. (४)** *जे भिक्खू चाउम्मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा, अपलिउंचियं आलोएमाणस्स चाउम्मासियं, पलिउंचियं आलोएमाणस्स पंचमासियं ॥*

**वृ-** अस्य व्याख्या प्राग्वत् नवरं प्रतिकुंचनानिष्पन्नं पंचमो गुरुमासोऽधिको दीयते इति, पांचमासिकं अत्र प्रतिकुंचके दृष्टांतो मालाकारः, दो मालागारा कोमुदीवारे आसन्नीभूतेत्ति पुप्फाणि बहूण आरामतो उच्चिणित्ता एगेण वीही कड्ढेऊणं एगेण पागडाणि कयाणि, बीएण न पागडाणि कयाणि, जेन पागडाणि कयाणि तेन बहुलाभो लद्धो, जेन न पागडाणि, कयाणि, तस्स न कोइ कयगो अल्लीणो तेन न लद्धो लाभो, एवं जो मूलगुणावराहे उत्तरगुणावराहे य न पागडेइ, सो निव्वाणं लाभं न लहइ ।

**मू. (५)** *जे भिक्खू पंचमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा, अपलिउंचियं आलोएमाणस्स पंचमासियं, पलिउंचियं आलोएमाणस्स छम्मासियं ॥*

**वृ-** इदमपि तथैव नानात्वमिदं, प्रतिकुंचनायां षष्ठो गुरुमासोऽधिको दीयते, इति षाण्मासिकमत्र प्रतिकुंचके मेघदृष्टांतः यथा मेघो गज्जितानामेगे नोवरिसित्ता, एवं तुमंपि आलोएमिति गज्जित्ता निसिज्जं काउं आलोइउमाढत्तो, पलिउंचेसि, मा विप्रतिज्ञो भवाहि, सम्मं आलोएहि । एतानेव दृष्टांतान् गाथापूर्वार्द्धेन भाष्यकृदाह -

**[भा. ३२४/१]** कुंचियजोहे मालागारे मेहे पलिउंचिए तिगट्ठाणा ॥

**वृ-** द्वैमासिकादिपरिहारस्थानेषु परिकुंचिते यथाक्रममिमे कुंचिकादयो दृष्टांताः तद्यथा, द्वैमासिकं परिहारस्थानमापन्नस्य प्रतिकुंचकस्य दृष्टांतः कुंचिकस्तापसः, त्रैमासिकं परिहारस्थानमापन्नस्य योधः, चतुर्म्मासिकं परिहारस्थानमापन्नस्य मालाकारः पंचमासिकं परिहारस्थानमापन्नस्य मेघः, पलिउंचिएत्ति प्रतिकुंचनायां कृतायामाचार्येण सम्यगालोचय मा प्रतिकुंचनां कार्षीरित्युपालब्धः सन् सम्यक् प्रत्यावर्त्तते, भगवन् मिथ्या मे दुःकृतं सती चोदना सम्यगालोचयामीति, ततः स श्रुतव्यवहारी प्रतिकुंचिते तं तथाप्रत्यावृत्तं संतं पुनरपि त्रीन् वारान् आलोचापयति, तत्र यदि त्रिभिरपि वारैः सदृशमालोचयति, ततो ज्ञातव्यो यथा सम्यगेष प्रत्यावृत्त इति, तदनंतरं च यद्देयं प्रायश्चित्तं तद्दातव्यमिति, । अथ विसदृशमालोचयति ततो भणति अन्यत्र त्वं शोधिं कुरु, नाहं तव शक्नोम्येतादृश्या आलोचनायाः सद्भावमजानानः शोधिं कर्त्तुमिति, अथवा शिष्यः पृच्छति भगवन् एतानि मासादीनि षण्मासपर्यंतानि परिहारस्थानानि कुतः प्राप्तानि सूरिराह तिगट्ठाणा उद्गमादित्रिकरूपात् स्थानात् किमुक्तं भवति ? । उद्गमोत्पादनैषणासु यत् अकल्प्यप्रतिसेवनाया अनाचारकरणं, तस्मादेतानि प्राप्तानि; ।

सांप्रतं षाण्मासिकं परिहारस्थानसूत्रमाह । तेन्न परं पलिउंचिए वा अपलिउंचिए वा ते चेव षण्मासा; तेनेत्यव्ययं, तत इत्यर्थे ततः पंचमासिकात् परिहारस्थानात् परमित्येतदप्यव्ययं सप्तम्यर्थप्रधानं परस्मिन् षण्मासिकं परिहारस्थाने प्रतिसेविते आलोचनाकाले प्रतिकुंचिते वा अप्रतिकुंचिते वा प्रतिकुंचनया वा अप्रतिकुंचनया वा आलोचिते इत्यर्थः । ते एव प्रतिसेवनानिष्पन्नाः स्थिताः षण्मासाः, नाधिकं प्रतिकुंचनानिमित्तमारोपणं, कस्मादिति चेत् । उच्यते, इह जीतकल्पोयं, यस्य तीर्थकरस्य यावत्प्रमाणमुत्कृष्टं तपःकरणं, तस्य तीर्थे तावदेव शेषसाधूनामुत्कृष्टं प्रायश्चित्तदानं चरमतीर्थकरस्य तु

भगवतो वर्द्धमानस्वामिन उत्कृष्टतपः षाण्मासिकं, ततोऽस्य तीर्थे सर्वोत्कृष्टमपि प्रायश्चित्तदाने षण्मासा एवेति, षण्मासिकपरिहारस्थानं प्रतिसेव्य प्रतिकुंचनयाप्यालोचयतो नाधिकमारोपणमतस्त एव षण्मासाः स्थिता उक्ताः ।

**मू. (६)** *जे भिक्खू बहुसोविमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा, अपलिउंचियं आलोएमाणस्स मासियं, पलिउंचियं आलोएमाणस्स दोमासियं ।। (एवं)*

**मू. (७)** *जे भिक्खू बहुसोविदोमासियं - जाव - तेमासियं ।*

**मू. (८)** *जे भिक्खू बहुसोवितेमासियं - जाव - चाउम्मासियं ।*

**मू. (९)** *जे भिक्खू बहुसोविचाउम्मासियं - जाव -पंचमासियं ।*

**मू. (१०)** *जे भिक्खू बहुसोवि पंचमासियं - जाव - आलोएमाणस्स पंचमासियं पलिउंचियं आलोएमाणस्स छम्मासियं तेनं परं पलिउंचिए वा अपलिउंचिए वा ते चेव छम्मासा ।*

**वृ.** जे भिक्खू बहुसोवि मासियं परिहारट्ठाणमित्यादि यो भिक्षुर्बहुशोपि त्रिप्रभृतिवारानपि आस्तामेकं द्वौ वा वाराविल्यपि शब्दार्थः । मासिकं परिहारस्थानं प्रतिसेव्य आलोचयेत् तस्याप्रतिकुंच्यालोचयतो मासिकमेकं प्रायश्चित्तं, प्रतिकुंच्यालोचयतो द्वितीयो मायानिष्पन्नो गुरुमासो दीयते इति द्वैमासिकंइयमत्र भावना, केनापि गीतार्थेन कारणे अयतनया त्रीन् वारान् बहून् वारान् वा मासिकं परिहारस्थानं प्रतिसेवितमालोचनाकाले चाप्रतिकुंचनयालोचित्तं तस्मै एकमेव मासिकं प्रायश्चित्तं दीयते, ननु यावतो वारान् प्रतिसेवना मासिकस्य कृतवान् तावंति मासिकानीति कारणप्रतिसेवनायाः कृतत्वात्, अथ प्रतिकुंचनयालोचयति, ततो द्वितीयो मासो मायानिष्पन्नो गुरुर्दीयते । इति द्वैमासिकं, एवं शेषाण्यपि द्वैमासिकादीनि विषयाणि चत्वारि सूत्राणि भावनीयानि, नवरं द्वैमासिकसूत्रे तृतीयो मायानिष्पन्नो गुरुमासो दीयते इति त्रैमासिकं, त्रैमासिकसूत्रे चतुर्थो मायानिष्पन्नो मास इति, चातुर्मासिकं चातुर्मासिकसूत्रे पंचमो मायाप्रत्ययो मास इति पंचमासिकं, पांचमासिकसूत्रे षष्ठो मायानिष्पन्नो गुरुमास इति षण्मासिकं, ततः षण्मासिके परिहारस्थाने आलोचनाकाले प्रतिकुंचनायामप्रतिकुंचनायां वा त एव स्थिताः षण्मासा इति; अमीषां पंचानामपि सूत्राणां सूचकमिदं गाथायाः पश्चार्द्धं ।

**[भा. ३२४/२]** पंचगमानेयव्वा बहूहिं उक्खडमड्डाहिं वा ।

**वृ -** पंचगमाः सूत्रप्रकारा ज्ञातव्याः । कथमित्याह । बहूहिं इत्यादि । उक्कड्डमड्डा । इति देशीपदमेतत् पुनः पुनः शब्दार्थश्च वारंवारं, ततोयमर्थः । बहुभिर्वारैर्विशेषिता बहुशब्द इति पदविशेषिता इत्यर्थः, । अत्र चोदक आह -

**[भा. ३२५]** बहुएसु एगदाने, रागो एक्केक्कदाने दोसो उ ।
एवमगीते चोयग गीयंमि य अजयसेविम्मि ।।

**वृ -** ननु यूयं न मध्यस्था रागद्वेषकरणात् तथाहि बहुशः प्रतिसेवितेष्वेतेषु पंचसु सूत्रेषु मासिकेषु परिहारस्थानेषु बहुशः प्रतिसेवितेष्वपि एकमेव मासं प्रयच्छथ, द्वैमासिकेषु परिहारस्थानेषु बहुशः प्रतिसेवितेष्वप्येकं द्वैमासिकं, त्रैमासिकेषु परिहारस्थानेषु बहुशः प्रतिसेवितेष्वप्येकं त्रैमासिकं, चातुर्मासिकेषु परिहारस्थानेषु बहुशः प्रतिसेवितेष्वेकं चातुर्मासिकं, पंचमासिकेषु परिहारस्थानेषु बहुशः प्रतिसेवितेषु एकं पंचमासिकं, एवं बहुकेषु बहुशः प्रतिसेवितेषु मासिकादिषु परिहारस्थानेष्वेकदाने एकैकसंख्याकस्य मासिकादेर्दानेयेष्वेवं प्रयच्छथ, तेषु रागः आद्येषु पंचसूत्रेषु एकैकदाने एककवारं

यत् प्रतिसेवितं मासिकादि तस्य परिपूर्णस्य दानेष्वेवं प्रयच्छथ, तेषु विषये द्वेष एव, तु: शब्द: एवकारार्थ: न च रागद्वेषवंत: परेषां शोधिमुत्पादयितुं क्षमा: सम्यक् प्रायश्चित्तदानविधिस्करणादिति । अत्र सूरिराह एवमित्यादि । अहो चोदक एवमादिमेषु पंचसु सूत्रेषु यावन्मात्रं प्रतिसेवितं तावन्मात्रस्य परिपूर्णस्य दानमगीते अगीतार्थे प्रतिसेवके, यत् पुनर्बहुश: शब्दविशेषितेषु पंचसु सूत्रेषु बहुश: प्रतिसेवितेष्वपि मासिकादिषु स्थानेष्वेकैकेन संख्यांकस्य मासिकादेर्दानं तत् गीतार्थे अयतनासेविनि अयतनया प्रतिसेवके ततो गीतार्थागीतार्थभेदेन प्रतिसेवकस्य भेदादित्थं प्रायश्चित्तविधानमित्यदोष: अत्रैवार्थे दृष्टांतमाह -

**[भा.३२६]** जो जत्तिएण रोगो, पसमइ तं देह भेसजं वेज्जो;
एवा गमसुयनाणी, सुज्झइ जेणं तयं देंति ।

**वृ-** यो रोगो यस्मिन् पुरुषे अल्पो महान्वा पुरुषप्रकृतिमपेक्ष्य यावन्मात्रेण प्रशाम्यति, तस्य पुरुषस्य तत् तावन्मात्रं भेषजं वैद्य: प्रयच्छति नाधिकं, एवममुना दृष्टांतप्रकारेण, मकारस्य लोप: प्राकृतत्वात् । आगमसुयनाणीति, ज्ञानिशब्द: प्रत्येकमभिसंबंध्यते, आगमज्ञानिन: श्रुतज्ञानिनश्च यो गीतार्थोऽगीतार्थश्च येन यावन्मात्रेण प्रायश्चित्तेन परिणामवशात् शुध्यति, तस्मै तत्तावत्प्रमाणं प्रायश्चित्तं ददाति, ततो यथौचित्यप्रवृत्तेर्न रागद्वेषवत्तेति न काचित्क्षति:, संप्रति वक्ष्यमाणार्थसूचिकामिमां संग्रहणिगाथामाह ।

**[भा.३२७]** सुत्तं चोयग मा गद्दभत्ति कोट्ठारतिय दुवेय खल्लाडा;
अद्धाणे संविग्गो सव्वेसिं घेत्तुणं दिन्नं ।

**वृ-** प्रथमत: प्रमाणत्वेन सूत्रमुपन्यसनीयं ततश्चोदकवचनमुत्क्षिप्य मा इति प्रतिषेधो वक्तव्यस्त-दनंतरं गर्दभदृष्टांत: तत्तोऽध्वनि सेवितेऽनेकवारं मासिके परिहारस्थाने तेषां समविषमतया दिवसान् गृहीत्वा दत्तमेकं मासिकं प्रायश्चित्तमित्युक्ते चोदकवचनमुत्क्षिप्य कोष्ठागारत्रयं दृष्टांतत्वेनोपन्यस्तव्यं, तदनंतरं च भूय: परवचनमाशंक्य द्वौ खल्वाटौ दृष्टांतौ करणीयाविति गाथाक्षरयोजना, भावार्थं स्वयमेव भाष्यकृद्वक्ष्यते, तत्र सुत्तं चोयग मा इत्येतत् व्याख्यानयन्नाह -

**[भा.३२८]** अविय हु सुत्ते भणियं सुत्तं विसमंति मा भणसु एवं;
संभवइ न साहेऊ अत्ता जेनालियं बूया ।

**वृ-** अपिचेति रागद्वेषवत्ता भावहेत्वंतरसमुच्चये न आस्तां गीतार्थागीतार्थभेदेनयथौचित्य-प्रायश्चित्तदानतो न वयं रागद्वेषवंतोऽपि च अन्यद्य सूत्रमेवंविधेष्वर्थेषु प्रमाणं, सूत्रे बहुनिश्चितं विषमास्वपि प्रतिसेवनासु तुल्यं प्रायश्चित्तं भणितं, ततो न कश्चिद्दोष: एतावता सूत्रमिति व्याख्यातं, अत्र चोदक आह । ननु सूत्रमेव विषमं न समीचीनं परस्परविरुद्धत्वात्, तथाह्यादिमेषु पंचसु सूत्रेषु यावत् प्रतिसेवितं तावत् परिपूर्णस्य दानमुक्तेषु तु पंचसूत्रेषु बहुश: प्रतिसेवितेष्वपि मासिकादिष्वेकैकसंख्या-कस्य मासिकादेर्दानं न च विषमासु प्रतिसेवनासु समं प्रायश्चित्तदातुमुचितमिति । एतावता चोदक इति व्याख्यातमिदानीमेतदेव चोदकवचनमुत्क्षिप्यमिति व्याख्यानयति, सुत्तं विसमंतीत्यादि एवमुपदर्शितेन प्रकारेण सूत्रं विषममिति, मा भण मा वादी:, यत: सूत्रस्य अर्थत: कर्तारो भगवंतो वीतरागा: सर्वज्ञा: अत्थं भासइ अरिहा इति वचनात् एवं च परमार्थत: आप्ता: क्षीणरागादितया परिपूर्णयथावस्थिततत्त्व-लक्षणसद्भावात् न च तेषामित्थंभूतनामाप्तानां स हेतु: कारणं संभवति, येन ते आप्ता अलीकं ब्रूयु: ।

अलीकभाषणहेतो रागादेर्निर्मूलकाषं कर्षणात् उक्तंच-

रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतं; यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यात् ।

ननु यद्यप्येवं तथापि विषमाणि खलु प्रतिसेवनावस्तूनि विषमेषु च प्रतिसेवनावस्तुषु कथं तुल्यं प्रायश्चित्तमिति तत्राह -

**[भा.३२९]** कामं विसमावत्थू तुल्ला सोही तहावि खलु तेसिं;
पंचवणिति पंच खरा अतुल्लमुल्लाय आहरणं ।

**वृ-** काममित्यनुमतौ, काममनुमन्यामहे विषमाणि वस्तूनि प्रतिसेवनालक्षणानि, तथापि खलु निश्चितं तेषां शुद्धिस्तुल्या भवति प्रतिसेवकभेदात्, एकत्र ह्यगीतार्थः प्रतिसेवकोऽन्यत्र गीतार्थः तथाचात्र पंचवणिजां पंचानां वणिजां । त्रिपंच खराः पंचदश गर्दभाः, पंचवणिजि पंचखराः कथंभूता इत्याह - अतुल्यमूल्या अतुल्यमसद्दशं मूल्यं येषां ते, आहरणं द्दष्टांतः पंचवणिया समभागसामाइया ववहरंते, तेसिं पन्नरस खरा लाभतो जाता, ते विसमभारवाहित्तेण विसममोल्लत्तेण य समं विभइउमवाएंता भंडिउमारद्धा, ततो ते एकस्य बुद्धिमंतस्स समीवमुवट्ठिया, तेन खराण मुल्लं पुच्छिया तेहिं कहियं, ततो भणति समं विभयामित्ति, धीरा होह, मा भंडेह, ततो तेन एक्को खरो सट्ठिमोल्लो एकस्य वाणियगस्स दिनो दोनि खरा पत्तेयं तीसमो ल्लाबिइयस्सदिणा, तिण्हं खराणं पत्तेयं वीसंवीसं मोल्लं तइयस्स दिन्ना, चउण्हं खराणं पत्तेयं पन्नरस द मोल्लं ते चउत्थगस्स वाणि यगस्स दिन्ना पंचखरा पत्तेयं बार समोल्ला ते पंचमस्स वाणियगस्स दिन्ना एतदेवाह -

**[भा.३३०]** विनिउत्तभंडभंडण मा भंडह तत्थ एगोसट्ठीओ,
दो तीस तिन्निवीस चउ पन्नरस पंचबारसग ।

**वृ-** पंचानां वणिजांसमभागसामाजिकानां विनियुक्तभांडानां विनियुक्तं व्यापारितं भांडं क्रयाणकं यैस्ते तथा तेषां पंचदश खरा अभूवन्निति वाक्यशेषः, ते च विषमभारवाहिनो विषममूल्याश्चततो यद्यपि समविभागेन विभज्यमानरूपास्त्रयस्त्रयो भवंति तथाप्यतुल्यमूल्या इति, परस्परभंडनमभूत् तत्र एकोपरो मध्यस्थः समागत्य ब्रूते, मा भंडयताहं समविभागेन विभज्य दास्यामीति, तत्रैकः षष्टिकः षष्टिमूल्य एकस्य दत्त इति वाक्यशेषः, एवं द्वौ त्रिंशन्मूल्यौ द्वितीयस्य त्रयो विंशतिमूल्यास्तृतीयस्य, चत्वारः पंचदशमूल्याः चतुर्थस्य पंच द्वादशमूल्याः पंचमस्य, यथा तेषां पंचानां वणिजां पंचदश खराः परस्परमतुल्य मूल्यतया विभिन्नास्तथा केनापि विभज्य दत्ता, यथा तुल्या लाभप्राप्तिर्भवति, तथा साधूनामपि गीतार्थादिभेदानामनेकविधानामागमव्यवहारिणाश्रुत व्यवहारिणा वा तथा कंचनापि रासभस्थानीया मासा विभज्य दीयंते; यथा तुल्या विशोधिर्भवति इति एतदेवाह-

**[भा.३३१]** कुसलविभागसरिसउ गुरुसाहुय होंति वणिया वा;
रासभसमा य मासा, मोल्लं पुनरागदोसाउ ।

**वृ-** कुसलो विभागे कुसलविभागः, राजदंतादित्वाभ्युपगमात् कुशलशब्दस्य पूर्वनिपातः तेन सद्दशकस्तुल्यो गुरुरागमव्यवहारी श्रुतव्यवहारी वा साधवश्च भवंति वणिजइव वणिजतुल्याः, या शब्द उपमानार्थः वा विकल्पोपमानयो रिति वचनात्, रासभसमश्चमासा मूल्यं पुन रागद्वेषावेव तु शब्द एवकारार्थः तथाहि यथा रासभद्रव्यगुणवृद्धिहानितो मूल्यस्य वृद्धिहानी तथा रागद्वेषवृद्धिहानिकृते

प्रतिसेवनात: प्रायश्चित्तस्य वृद्धिहानी यथा केनापि तीव्ररागद्वेषाध्यवसायेन मासिकं स्थानं प्रतिसेवितं, तस्य मास: परिपूर्णो दीयते अपरेण मंदाध्यवसायेन द्वे मासिकस्थाने प्रतिसेविते तस्य एकैकस्य मासस्य पंचदश २ दिनानि गृहीत्वा मासो दीयते, शेषं त्यज्यते मंदाध्यवसायेन प्रतिसेवनात् अन्येन मंदतमाध्यवसायेन त्रीणि मासिकस्थानानि प्रतिसेवितानि, तस्यैकैकस्य मासस्य दश दश दिनानि गृहीत्वा मासो दीयते, शेषं सर्वं त्याज्यं, अपरेणातिमंदतमाध्यवसायेन चत्वारि मासिकस्थानानि प्रतिसेवितानि: तस्मै चैकैकस्य मासस्य अर्धाष्टमानि २ दिनानि गृहीत्वा मासो दीयते इत्यादि ततो भवति मूल्यं रागद्वेषौ एवं सकलद्वैमासिकादिसूत्रेषु बहुश: सूत्रेषु च कारणायतनाप्रतिसेविनो रागद्वेषवृद्धिहानित उपयुज्य बहुविस्तारं वक्तव्यं, तदेव गदभत्ति व्याख्यातमधुना अद्धाणसंवियमीत्यादि व्याख्यायते गीतार्थेनाध्वनि उपलक्षणमेतदन्यस्मिन् कारणांतरे यदयतनया प्रतिसेवितं तत्र बहूनि मासिकस्थानान्यापन्नानि तानि चालोचनाकाले सर्वाण्यप्येकवेलयालोचितानि गुरुश्चालोचनाप्रदानविशेषतो जानाति यथैव गीतार्थ: कारणे च प्रतिसेवना कृता परमयतनया ततोऽयतनाप्रसंगनिवारणार्थं सर्वेषामपि मासानां समविषमाणां समविषमतया दिवसान् गृहीत्वा मास एकस्तस्मै दत्त: अगीतार्थोपि यो मंदनाध्यवसायेन बहूनि मासिकस्थानानि प्रतिसेव्य तीव्रेण वाध्यवसायेन प्रतिसेव्य हा मयादुष्टकृतमित्येवमादिभिर्निंदनैरालो-चितवान् सोप्येकेन मासेन शुध्यति तथाप्यगीतार्थोऽपरिणामको वा चिंतयेत् द्वैमासिकाद्यापन्नोहं कथमेकेन मासेन शुद्धयामि तत: श्रुतव्यवहारी तस्य प्रत्ययकरणार्थमेकैकस्मात् मासात् कपिपयान् कतिपयान् दिवसान् गृहीत्वा मासमेकं प्रयच्छति ।

यथा द्वयोर्मासयो: प्रतिसेवितयोरेकैकस्यार्द्धमासमर्द्धमासं गृहीत्वा इति एवं सर्वेपि मासा: सफलीकृता इति तस्य महति धृतिरुपजायते, यस्त्वागमव्यवहारी स न व्यवहारी सद् द्वैमासिकं प्राप्तस्य द्वावपि मासौ सफलीकरोति किंत्वेकं ददाति, द्वितीयं त्यजति स हि प्रत्यक्षज्ञानी ततो न तद्वचने कस्याप्यशुद्धयाशंकेति यदा पुन: तीव्राध्यवसायो निष्कारणप्रतिसेवी, तस्य मासादिकमापन्नस्य परिपूर्णमासादिकमेव दीयते ।

**[भा. २३२]** दोसु दिन्ने पुच्छा, दिट्ठंतो तत्थ दंडलतिएणं,
दंडो रक्खा तेसिं भयजननं चेव सेसाणं ।

**वृ-** एवं गीतार्थानामगीतार्थानां च कारणे निष्कारणे वा विष्वक् पृथक् प्रायश्चित्ते दत्ते पृच्छति शिष्य: पृच्छति किं: कारणमगीतार्थानां निष्कारणे कारणे च विसदृशं प्रायश्चित्तं दत्तमिति । अत्र कोटागारत्तिए इत्यस्य व्याख्याया अवसर: दिट्ठंतो तत्थ दंडललिएणा तत्र पुरुषभेदेन विसदृशप्रायश्चित्तदाने दृष्टांतो दंडलातिकेन दंडालातो गृहीतो येन स दंडलात: सुखादिदर्शनात् निष्टांतस्य परनिपात: । दंडलात एव दंडलातिक: प्राकृतत्वात् स्वार्थिक इकप्रत्ययो यथा पृथिवीकायिका इत्यत्र तेन दंडलातिकेन गृहीतदंडेन राज्ञा इत्यर्थ: । यथा तेन दंडलातिकेन राज्ञा राजकार्ये प्रवृत्तानामपि तेषां दंडानां रक्षा भवति मा भूयो ग्रहीतु: कोठागाराणीति निवारणार्थं, तथा शेषाणां भयजननं च भयोत्पादश्च स्यादित्येवमर्थं स्तोको दंड: कृतस्तथा गीतार्थस्यापि कारणे प्रवृत्तस्यायतनाप्रसंगनिवारणार्थमगीतार्थस्य मंदाध्यवसायप्रतिसेविनो दुष्टाध्यवसायप्रतिसेविनो वा, वा बहुभिर्निंदनैर्दत्तालोचनस्य प्रमादनिवारणार्थं मासानां समविषमतया दिवसान् गृहीत्वा मासो दीयते, तथा वा स राजा शेषस्य राजकार्याप्रवृत्तस्य कोष्ठागारलूपकस्य सर्वात्मना दंडं करोति, एवं यो निष्कारणप्रतिसेवितस्य मासमापन्नस्य परिपूर्णं मासादिकं दीयते । अथ के ते दंडा: कथं च तेषां राजा दंडं कृतवानिति तत्कथानकसूचकमिदं गाथाद्वयमाह -

[भा.३३३] दंडं तिगं तु पुरतिगे ठवियं पच्चंतपरनिवारोहे,
मत्तट्ठं तीसतीसं कुंभग्गहआगया जे तु ।

[भा.३३४] कामंममेयकज्जं । कयवित्तीएवि कीस भे गहियं,
एस पमाओ तुज्झं दस दस कुंभे दलह दंडं ।।

वृ- एगस्स पयंडरन्नो पच्चंति रायाविउड्डो, ततो तेन पयंडेण रण्णा, तस्स पच्चासन्नेसु तिसु तिन्नि दंडा विसज्जिया गच्छह पुराणि रक्खह ततो तेसु नयरेसु पत्तेयं पत्तेयं ठिया पच्चंतियराइणा ते आगंतुरोहिया, तेहिं रोहिएहिं खीणभत्तेहिं जेते पुरेसु पयंडस्स रन्नो कोठागारा तेहिं तो पत्तेयं धन्नस्स तीसं तीसं कुंभा गहिया, ततो तेहिं सो पच्चंतितो राया जितो, आगया रन्नो समीवं कहियं सव्वं सवित्थरं तुट्ठो राया पुनो तेहिं कहियं तुज्झं कज्जं करेंतेहिं धन्नं गहियं, रन्ना चिंतियं जइ एएसिं दंडो न कीरइ, तो मे पुनो पुनो उप्पन्नपयोगणेहिं कोठागाराए विलुप्पेहिंति नय अन्नेसिं भयं भवति । तम्हा मे दंडो कायव्वो, एवं चिंतिऊणं भणति, कामं मम कज्जं तहावि तुज्झं मए वित्ती कया आसि ततो कयवित्तीहिं कीस भे धन्नं मज्झं गहियं, तुज्झं एस पमाओ, ततो अनवत्थपसंगनिवारणत्थं भणति, एस तुज्झं दंडो, ममधन्नं देह एवं भणित्ता राया अनुग्गहं करेइ । जेहिं कोट्ठागारेहिंतो तीसं कुंभा गहिया तेसु अप्पणिज्जस्स धन्नस्स दस दस कुंभे पक्खिवह वीसं वीसं कुंभा मुक्का, अक्षरयोजना त्वेवं प्रत्यंतपरनृपावरोधनिमित्तं दंड तिकं पुरत्रिके स्थापितं, तेन च प्रत्येकं भक्तार्थं तीसतीसकुंभगहणत्ति त्रिंशत्त्रिंशतः कुंभानां ग्रहो ग्रहणं कृतं ततस्ते प्रत्यंतनृपं जित्वा आगतास्ते दंडा राजानं विज्ञपयंतो यथा युष्मत्कार्यार्थं त्रिंशत्कुंभा गृहीताः राजा प्राह कामं ममैतत्कार्यं परं युष्माकं मया वृत्तिः कृतासीदिति, कृतवृत्तिभिर्भे भवद्भिः किमर्थं मम धान्यं गृहीतं युष्माकमेष प्रमादस्तस्मात् दंडं दशकुंभान् ददत एष दृष्टांतः अयमर्थोपनयः ।

[भा.३३५] तित्थयरा रायाणो, जइणो दंडाय कायकोठारा ।
असिवाइ वुग्गह पुन अजय पमायारुहणा दंडो ।।

वृ- तीर्थंकरा राजानो राजस्थानीयाः, साधवो दंडा दंडस्थानीयाः कायाः, पृथिवीकायिकादयः कोष्ठागाराणि कोष्ठागारतुल्याः । अशिवादीनि कारणानि, व्युद्ग्रहाः प्रत्यंतपरनृपेण सह ये व्युद्ग्रहास्तत्स्थानीयानि अयतनाप्रमादरोधनार्थं गीतार्थस्यायतनाप्रसंगनिवारणार्थमगीतार्थस्य प्रमादनिवारणार्थं सर्वेषां प्रतिसेवितानां मासानां समविषमतया दिवसान् गृहीत्वा मासो दंडो दीयते इति। अत्र पर आह -

[भा.३३६] बहुएहिंवि मासेहिं एगो जइ दिज्जतीउ पच्छित्तं ।
एवं बहुसेवित्ता एक्कासि वियडेमो चोएइ ।।

वृ- यदि गीतार्थस्य कारणेन अयतनया बहुकेष्वपि मासेषु सूत्रे तृतीया सप्तम्यर्थे प्राकृतत्वात् प्रतिसेवितेषु एकवेलायामालोचिता इति कृत्वा एको मासः प्रायश्चित्तं दीयते, ततः इतः प्रभृति वयं बहूनि मासिकादीनि प्रतिसेव्य एक्कसिं एकवेलायां विकटयिष्यामः । तत एकमेकमासिकादिकं लप्स्यामहे इति चोदयति चोदकः तत्राचार्य आह -

[भा.३३७] मा वय एवं एक्कसिं वियडेमो सुबहुएवि सेवित्ता,
लब्भिसि एवं चोयगदेंते खल्लाड खड्डुगं च ।।

वृ- मा वद, मा वादीरेवं, यदुत सुबहून्यपि मासिकादीनि स्थानानि सेवित्वा प्रतिसेव्य एक्कसिं

एकवेलायां विकटयिष्यामो येनैकमेव मासिकादिकं लप्स्यामहे इति यत् एवं कुर्वन् चोदक ! लप्स्यसे महांतमपराधं, खल्वाटे खड्डुकां ददान इव, अत्र द्वयेय खल्लाडा इत्यस्यावसरः द्वौ खल्वाटावत्र दृष्टांतः । एगो खल्लाडो तंबोलवाणियउ पत्ते विकिणइ सो एक्केण चारभडपोट्टेण पत्ते मग्गितो अरे खलाडवाणिया पत्ते देहि, तेन सककसाएण न दिन्ना । अन्ने भणंति थोवा दिन्ना, ततो तेन रूसिएण चारभटपोट्टेग खल्लाडं सिरे खड्डुगा दिन्ना, टक्करा दिन्नेति वुत्तं भवति, वाणिएण चिंतियं, जइ कलहेमि तो मए स दूमितो मारेज्जा, तम्हा उवाएण वेरनिज्जामणं करेमि, एवं चिंतिऊणा तंबोलवाणिएण उट्ठित्ता हत्थो से मलिओ, वत्थजुयलं दिन्नं, पाएसु पडिओ बहु च से तंबुलं दिन्नं । चारभडपोट्टो पुच्छति, किं कारणं न तुमं रुट्ठो, पच्चुन्नं ममं पूएसि, पाएसु य पडिसित्ति, वाणिएणा भणियं अम्ह विसए सव्वखल्लाडाणमेरिसा चेव ठिती, चारभडपोट्टेग, चिंतियं, लद्धो मए जीवणोवाओ, ततो पुनोवि चिंतियं तारिसस्स खट्टुगं देमि जो मं अदरिद्दं करेज्जा, ताहे तेन एगस्स टक्कुरस्स खल्लाडगस्स खड्डुगा दिन्ना, तेन मारितो एतदेवाह -

[भा.३३८] खल्लाडगंमि खुड्डगा दिन्ना तंबोलियस्स एगेन;
सक्कारित्ता जुयलं दिन्नं बिइएण योरवितो ।

वृ- एकेन चारभटपोतेन तांबूलिकस्य शिरसि खल्वाटे खड्डुका टक्करा दत्ता, ततस्तेन वणिजा तांबुलिकेन सत्कार्य तस्मै वस्त्रयुगलं दत्तं, द्वितीयेन खल्वाटेन व्यपरोपितो मारितः एप दृष्टांतो-ऽयमर्थोपनयः ॥

[भा.३३९] एवं तुमंपि चोयग, एक्कसि पडिसेविऊण मासेणं,
मुच्चिहेसि बिइयगं, पुन लभिहिसि मूलं तु पच्छित्तं ॥

वृ- एवं त्वमपि चोदक एक्कसि एकवारं बहूनि मासिकानि स्थानानि प्रतिसेव्य एकवेलायां सर्वाण्यप्यालोचितानीति मासेन मुक्तो द्वितीयवारमुपेत्य प्रतिसेव्य तथालोचयन् लक्षितस्वभावो मूलं तु शब्दात् च्छेदं वा लप्स्यसे, यथा लब्धवान् चारभटो मरणं अन्यच्च स चारभटो वा इह एकं प्राप्तवान् त्वं पुनः संसारे अनेकानि मरणानि प्राप्स्यसि, तस्मात् प्रतिसेवकपरिणामानुरूप एपप्रायश्चित्त दानविधिर्नालोचनामात्रविशेषकृत इति नान्यथा प्रसंजनीयः एतदेवाह -

[भा.३४०] असुहपरिणामजुत्तेण सेविए एगमेगमासोऽ;
दिज्जइ य बहुसु एगो सुहपरिणामो जया सेवे ।

वृ- अशुभपरिणामयुक्तेनासेविते निष्कारणमयतनया प्रतिसेविते इत्यर्थः । एतस्मिन् मासे एको मासः परिपूर्णो दीयते, दुष्टाध्यवसायेन प्रतिसेवनात पुनः प्रत्यावृत्तेरभावाच्च, यदा पुनः शुभपरिणामः सेवते, पुष्टमालंबनमालंब्य प्रतिसेवते, इत्यर्थः दुष्टाध्यवसायेन वा सेवित्वा पश्चाद्गृह्रात्मनिंदनं करोति, तस्य बहुष्वपि मासेषु प्रतिसेवितेष्वेको मासो दीयते, इह कश्चित् दंडदानादात्मानमपभ्राजनास्थानं दुःखितं मन्येत, तं प्रति दंडदानानफलमाह -

[भा.३४१] दिनमदिन्नो दंडो, सुहदुहजननो उदोण्हवग्गाणं;
साहूणं दिन्नसुहो अदिन्नसोक्खो गिहत्थाणं ।

वृ- द्वौ वर्गौ तद्यथा - साधुवर्गो गृहस्थवर्गश्च, तयोर्द्वयोर्वर्गयोर्दंडो दत्तो, दत्तश्च यथायोगं सुखदुःख जननः तत्र साधूनां दत्तः सन् दंडः सुखहेतुरदत्तः सन् दुःखकारणमिति सामर्थ्यात् गम्यते गृहस्थानामदत्तः सन् सुखावहो दत्तः सन् दुःखावह इति सामर्थ्यात् प्रत्येयं कस्मादेवमिति चेदत आह -

[भा.३४२] उद्धियदंडो साहु अचिरेण उवेइ सासयं ठाणं ।
सोच्चिय अनुद्धियदंडो संसारपवट्टती होइ ।।

[भा.३४३] उद्धियदंडो गिहत्थो, असनवसन विरहितो दुही होइ;
सोच्चिय अनुद्धियदंडो असनवसणभोगवं होइ

वृ- उध्धृत उत्पादितो गृहीतो दंडो येन स उध्धृतदंडः साधुरचिरेण स्तोकेन कालेनापि शाश्वतं स्थानं, प्रायश्चित्तं प्रतिपत्त्यातीचारमलापगमकरणत उत्तरोत्तरविशुद्धसंयमलाभात्; स एव साधुरनुध्धृतदंडः संसारप्रवर्त्तको भवति । अतिचारजातस्य संसारकारणत्वात्; तथा उध्धृतदंडो गृहस्थोऽशनवसनविरहितो भोजनवस्त्रपरिहीनो दुःखी भवति स एवानुध्धृतदंडोऽशनवसनभोगवान् भवति ।

*मू. (११) जे भिक्खू मासियं वा दोमासियं वा जाव पंचमासियं वा एएसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचियं आलोएमाणस्स मासियं वा जाव पंचमासियं वा पलिउंचियं आलोएमाणस्स दोमासियं वा जाव छम्मासियं वा तेन परं पलिउंचिएवा अपलिउंचिए वा तं चेव छम्मासा ।*

*मू. (१२) जे भिक्खू बहुसोवि मासियं वा जाव पंचमासियं वा एएसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचियं आलोएमाणस्स मासियं वा जाव पंचमासियं वा पलिउंचियं आलोएमाणस्स दोमासियं जाव छम्मासियं तेन परं पलिउंचिए वा अपलिउंचिए वा ते चेव छम्मासा ।*

*मू. (१३) जे भिक्खू चाउम्मासियं वा साइरेगचाउम्मासियं वा पंचमासियं वा साइरेग पंचमासियं वा एएसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचियं आलोएमाणस्स चाउम्मासियं वा साइरेग चाउम्मासियं वा पंचमासियं वा साइरेग पंचमासियं वा पलिउंचियंआलोएमाणस्स पंचमासियं वा साइरेग पंचमासियं वा छम्मासियं तेनं परं पलिउंचिए वा अपलिउंचिएवा ते चेव छम्मासा ।*

*मू. (१४) (एवं) जे भिक्खू बहुसोवि० ---*

वृ- यो भिक्षुर्मासिकं वा द्वैमासिकं वा त्रैमासिकं वा चतुर्मासिकं वा पंचमासिकं वा, वाशब्दाः सर्वे विकल्पार्थास्तथाचाह - एतेषां परिहारस्थानानामन्यतमत् सूत्रे मकारस्य रेफः प्राकृतत्वात् परिहारस्थानं प्रतिसेव्यालोचयेत् तस्येति सामर्थ्यादवसीयते यच्छब्दस्य तच्छब्दापेक्षित्वादप्रतिकुंच्य आलोचयतो मासिकं वा द्वैमासिकं वा त्रैमासिकं वा चातुर्म्मासिकं वा प्रतिकुंच्यालोचयतः । सर्वत्र आपन्नप्रायश्चित्तापेक्षया अधिको मायानिष्पन्नो गुरुमासो दीयते, इति द्वैमासिकादि क्रमेणेह द्वैमासिकं वा त्रैमासिकं वा पंचमासिकं वा षाण्मासिकं वा तेनपरमित्यादि ततः परं पंचमासिकात्परिहारस्थानात्परे परस्मिन् षण्मासिकं परिहारस्थाने प्रतिसेविते आलोचनायां प्रतिकुंचिते वा त एव स्थिताः षण्मासाः । ततः ऊध्धर्वमस्मिन् तीर्थे आरोपणायाः असंभवात् । अत्र शिष्यः प्राह ।

[भा.३४४] कसिणारुवणा पढमे, बिइए बहुसोविएसरिसा;
संजोगो पुन तइय तत्थंतिमसुत्त वल्लीवा ।

वृ- इह आदिमानि पंचापि सकलसूत्राणि सकलसूत्रसामान्यादेकं प्रथमं सूत्रं विवक्षितं, द्वितीयानि पंच सूत्राणि बहुशः शब्दविशेषितानि बहुशः शब्दविशेषितान्यपि बहुशः शब्दविशेषयित्वा विशेषात् द्वितीयं सूत्रं, तत्र प्रथमसूत्रे कृत्स्नारोपणा कृता किमुक्तं भवति, यत्प्रतिसेवितं तत्सर्वं परिपूर्णं दत्तं न

पुनः किंचिदपि तस्मात् मुक्तमिति, द्वितीय सूत्रे बहुशोपि सेविते मासिकादौ परिहारस्थाने ज्ञापित्वा शुद्धिः सदृशी प्रथमसूत्रगमसदृशी दत्ता, एवं प्रथमे द्वितीये च सूत्रे गते अयं तृतीयः सूत्रगमः किंप्रसिद्धयर्थमारब्धः । आचार्य आह । संयोगा इत्यादि तृतीयेऽस्मिन् सूत्रे संयोगः पंचपदगतः उपदर्शितः पुनः शब्दो विशेषणार्थः स चैतद्विशिनष्टि, पंचानामादिसूत्रगमानां संयोगज्ञापनार्थमिदं तृतीयं सूत्रमारब्धमिति, तथाहि पंचानां पदानां दशद्विकसंयोगे भंगाः, दशत्रिकसंयोगे, पंच चतुष्कसंयोगे, एकः पंचसंयोगे, तत्र योसावेकः पंचकसंयोगे सोऽनेन सूत्रेऽत्र साक्षात् गृहीतः तथाचाह तत्थंतिमसुत्तति तत्र तेषु द्विकसंयोगादिभंगकेषु मध्ये अंतिमः पंचकसंयोगात्मको भंगः सूत्रेण गृहीतः विभक्तिलोपोऽत्र प्राकृतत्वात् अस्य ग्रहणादितरेपि सर्वे भंगका गृहीताः ।

किमिवेत्यत आह वल्लीवा वा शब्द उपमानार्थे वल्लीवत् यथा वल्ली अग्रे गृहीत्वा समाकृष्टा सर्वा समूलमध्या समाकृष्टा भवति एवमेतेनांतिमसंयोगसूत्रेण सर्वेप्यंते द्विकादयः संयोगा गृहीता भवंत्यत एतदर्थमिदं सूत्रारब्धं, तत्र द्विकं संयोगे दशभंगा इमे जे भिक्खू मासियं वा दोमासियंवा एएसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा; अपलिउंचित आलोएमाणस्स मासियं वा दोमासियं वा पलिउंचिय आलोएमाणस्स दोमासियं वा तेमासियं वा, १ एवं जे भिक्खू मासियं वा तेमासियं वा २ जे भिक्खू मासियं वा चाउम्मासियं वा ३ जे भिक्खू मासियं वा पंचमासियं वा ४ जे भिक्खू दोमासियं वा तेमासियं वा ५ दोमासियं वा चाउम्मासियं वा ६ दोमासियं वा पंचमासियं वा ७ जे भिक्खू तेमासियं चउमासियं वा ८ तेमासियं वा पंचमासियं वा ९ चाउम्मासियं वा पंचमासियं वा १०; त्रिकसंयोगे दश भंगा इमे तद्यथा जे भिक्खू मासियं वा दोमासियं वा तेमासियं वा, -

एएसिं परिहारट्ठाणाणमन्नयरमित्यादि १ जे भिक्खू मासियं वा दोमासियं वा चउमासियं वा २ मासियं वा दोमासियं वा तिमासियं वा पंचमासियं वा ३ मासियं वा तेमासियं वा चउमासियं वा ४ मासियं वा तेमासियं वा पंचमासियं वा ५ मासियं वा चउमासियं वा पंचमासियं वा ६ दोमासियं वा तेमासियं वा चउमासियं वा ७ दोमासियं वा तेमासियं वा पंचमासियं वा ८ दोमासियं वा चउमासियं वा पंचमासियं वा ९ तेमासियं वा चउमासियं वा पंचमासियं वा १० पंचचतुष्कसंयोगे भंगा इमे जे भिक्खू मासियं वा दोमासियं वा तेमासियं वा चउमासियं वा एएसिं परिहारट्ठाणाणमन्नयरं परिहारट्ठाणमित्यादि १ जे भिक्खू मासियं वा दोमासियं वा तेमासियं वा पंचमासियं वा २ मासियं वा दोमासियं वा । चउमासियं वा पंचमासियं वा ३ मासियं वा तेमासियं वा चाउमासियं वा से वा पंचमासियं वा ४ दोमासियं वा तेमासियं वा चाउमासियं वा पंचमासियं वा ५ यस्त्वेकः पंचकसंयोगे भंगः स साक्षात् सूत्रे गृहीतः ।

सूत्र बहुसोवि एमेवेति यथादिमसकलसूत्रपंचकसंयोगप्रदर्शनपरं तृतीयसूत्रमुक्तमेव अनेनैव प्रकारेण बहुशः शब्दविशेषिते द्वितीयसूत्रपंचकसंयोगप्रदर्शनपरं बहुसोवीति एतदविशेषितं चतुर्थ सूत्रं वक्तव्यं, तद्यथा जे भिक्खू बहुसो मासियं बहुसो दोमासियं, बहुसो तेमासियं वा, बहुसो वा चाउमासियं बहुसो पंचमासियं वा एएसिं परिहारट्ठाणाणं बहुसो पडिसेवित्ता आलोएज्जा, अपलिउंचिय आलोएमाणस्स मासियं वा दोमासियं वा तेमासियं वा चाउमासियं वा पंचमासियं वा; पलिउंचियं आलोएमाणस्स दोमासियं वा तेमासियं वा चउमासियं वा पंचमासियं वा छमासियं वा तेन परं पलिउंचिय वा अपलिउंचिए वा ते चेव छम्मासा इति । एतदेव निर्युक्तिकृदाह -

**[भा. ३४५]** जे भिक्खू मासियाई सुत्तं विभासियव्वं तु;

दोमासियं तेमासियं कयाइं एगुत्तरवुड्डी ॥

वृ- बहुसो इति त्रिप्रभृति न केवलं बहुसो मासिकानि किंतु दोमासिय तेमासियकयाइं इति द्वैमासिकानि त्रैमासिकान्यपि च बहुशः प्रतिसेवनया कृतानि उपलक्षणमेतत् चातुर्मासिकानि पंचमासिकानि च द्रष्टव्यानि, एवंरूपं सूत्रं विभाषितव्यं, बहुशः शब्दविशेषितद्वितीयसूत्रपंचकं गतव्याख्याप्रकारेण व्याख्यातव्यं; एगुत्तरवुड्डीति द्विकादिसंयोगचिंतायां पदानामेकोत्तरा वृद्धिः कर्त्तव्या एतेनापि द्विकादिसंयोगभंगा द्रष्टव्या इति ख्यापितं, सूत्रस्य तथास्थितत्वात् तथाहि अंतिमः पंचकसंयोगनिष्पन्नो भंगः सूत्रेणसाक्षादुपात्तः । अंत्यग्रहणादादिमा अपि द्विकसंयोगादिभंगावली दृष्टांतात् गृहीताऽवसेयास्ते च सर्वसंख्यया षट्विंशतिर्द्विकादिभंगे चैकैकं सूत्रमित्यनेन चतुर्थेन सूत्रेण षड्विंशतिः सूत्राणि सूचितानितृतीयेनापि सूत्रेण षड्विंशतिरिति सर्वमिलितानि संयोगसूत्राणि द्वापंचशत् । पंचादिमानि सकलसूत्राणि, पंच च बहुशः शब्दविशेषितानि इति सर्वसंख्यया द्वाषष्ठिः सूत्राणि एतानि च उद्घातानुद्घातादिविशेषरहितान्युक्तानि, सांप्रतमेतेषामेवोद्घातादिविशेषपरिज्ञानार्थमिदमाह -

[भा.३४६] उग्घायमनुग्घायमूलुत्तरदप्पकप्पतो चेव;
संजोगा कायव्वा पत्तेयं मीसगा चेव ॥

वृ- उद्घातं लघु अनुद्घातं गुरु उद्घाते अनुद्घाते तथा मूलत्ति मूलगुणापराधे उत्तरत्ति उत्तरगुणपराधे तथा दर्पे कल्पतश्चैव कल्पे चैव संयोगा अनंतरोदिताः कर्त्तव्या भणितव्याः, कथमित्याह- प्रत्येकमेकैकस्मिन् उद्घातादिपदे मिश्रका वा, उद्घातानुद्घातसंयोगनिष्पन्नाः, उपलक्षणमेतत्, तेन न केवलं संयोगाः किंत्वादिमानि अपि दशसूत्राण्युद्घातादिभिर्विशेषैर्वक्तव्यानि, तत्रोद्घातविशेषाण्युपदर्श्यते जे भिक्खू उग्घाइयं मासियं परिहारट्ठाणं पडिसेवित्ता, आलोएज्जा, इत्यादि इत्येवमादिमानि पंचसकलसूत्राणि पंच बहुशः शब्दविशेषितानि षड्विंशतिस्तृतीयसूत्रसूचितानि षड्विंशतिः चतुर्थसूत्रसूचितानि, सर्वसंख्यया द्वाषष्टिः सूत्राणि वक्तव्यानि, एवं द्वाषष्टिः सूत्राण्यनुद्घाताभिधानेन वक्तव्यानि, तद्यथा जे भिक्खू अनुग्घातियं मासियपरिहारट्ठाणं पडिसेवित्ता आलोएज्जा इत्यादि ।

एवमेतास्तिस्रो द्वाषष्ट्यः सूत्राणां सर्वसंख्यया षडशीतं सूत्रशतमत च त्रिंशदसंयोगसूत्राणि षट्पंचाशं शतं संयोगसूत्राणां सांप्रतमुद्घातमिश्रकाभिधानेन संयोगसूत्राणि वक्तव्यानि तानि चैवमुच्चारणीयानि जे भिक्खू उग्घातमासियं अनुग्घातमासियं वा परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स उग्घाइयं मासियं वा अनुग्घातियं मासियं वा, पलिउंचिय आलोएमाणस्स उग्घायदोमासियं वा अनुग्घाइदोमासियं वा, जे भिक्खू उग्घाइयमासियं वा अनुग्घातियं मासियं वा, पलिउंचिय आलोएमाणस्स उग्घायदोमासियं वा अनुग्घाइदोमासियं वा, जे भिक्खू उग्घाइयमासियं वा अनुग्घाइयमासियं वा परिहारट्ठाणं पडिसेवित्ता इत्येवमुद्घातिपदममुंचता अनुद्घातितद्विमासिकादान्यपि एवमेते भंगाः पंच एते च उद्घातितद्विमासिकादीन्यपि । एवमेते भंगाः पंच एते च उद्घातितमासिके अनुद्घातितमासिके द्वैमासिकाद्येकसंयोगेन लब्धाः एवमुद्घातितद्वैमासिकेपि पंच, त्रैमासिकेपि पंच, चातुर्मासिकेपि पंचेत्युभयोरप्येकसंयोगेन सर्वसंख्यया भंगाः पंचविंशतिः, तथा उद्घातितमासिके एवमनुद्घातित मासिकादि द्विकसंयोगे एकभंगा दशएवमुद्घातिते द्वैमासिके त्रैमासिके चतुर्मासिके पंचमासिके च प्रत्येकं दश दशे ति सर्वसंख्यया उद्घातितैकैकसंयोगे अनुद्घातितद्विकसंयोगे भंगाः पंचाशत् इह एकैककस्मिन् अनुद्घातितसंयोगे उद्घातितमासिकद्वैमासिकादिक्रमेण पंच पंच भंगा

लभ्यंते, ततो ये ऽनुद्घातिते त्रिकसंयोगे दश भंगास्ते पंचभिर्गुण्यंते जाता सूत्रे भंगाः पंचाशत् ।।

चतुष्क संयोगे भंगाः पंचपंचभिर्गुणिता जाताः पंच सर्वसंख्यया उद्घातितैक संयोगेन अनुद्घातितद्विकसंयोगे भंगाः पंचाशत् इह एकैकस्मिन् अनुद्घातितसंयोगे उद्घातितमासिकद्विमासिकादि क्रमेण पंच पंच भंगा लभ्यंते, ततो ये ऽनुद्घातिते त्रिकसंयोगे दश भंगास्ते पंचभिर्गुण्यंते जाता सूत्रे भंगाः पंचाशत्, सर्वसंख्यया उद्घाते द्विकसंयोगे भंगानां त्रीणि शतानि दशोत्तराणि । तथा पंचानां पदानां त्रिकसंयोगेपि भंगा दशेत्युक्त्वा तत्र त्रिकसंयोगे [illegible] मध्येकस्मिन् उद्घातितसंयोगे भंगा [illegible] कसंयोगे पंच, द्विकसंयोगे दश, त्रिकसंयोगे दश, चतुष्कसंयोगे पंच, पंचकसंयोगे एकः प्रत्येकं दशभिर्गुण्यंते जाता क्रमेणयं भंगानां संख्या पंचाशत्, शतं, शतं, पंचाशत्दश । अत्रापि सर्वसंख्यया भंगानां त्रीणि शतानि दशोत्तराणि । पंचानां चतुष्कसंयोगे भंगाः पंच, तत उद्घातिते चतुष्कसंयोगचिंतायामेकैकस्मिन् अनुद्घातितसंयोगे भंगाः पंच पंच लभ्यंते इति, तत्रैकैक संयोगजाः पंच, द्विकसंयोगे एक; प्रत्येकं दशभिर्गुण्यंते जाता क्रमेणेयं भंगानां संख्या पंचाशत्, शतं, शतं पंचाशत्दश । अत्रापि सर्वसंख्यया भंगानां त्रीणि शतानि दशोत्तराणि । पंचानां चतुष्कसंयोगे भंगाः पंच, तत उद्घातिते चतुष्कसंयोगचिंतायामेकैकस्मिन् अनुद्घातितसंयोगे भंगाः पंच पंच लभ्यंते इति, तत्रैकैक संयोगजाः पंच, द्विकसंयोगजा दश, त्रिकसंयोगजा दश, चतुष्कसंयोगजाः पंच, पंचकसंयोगजाएकः प्रत्येकं पंचभिर्गुण्यंते ततो जाता क्रमेणेयं भंगानां संख्या पंचविंशतिः पंचाशत् पंचाशत् पंचविंशतिः पंच । सर्वसंख्यया उद्घातिते चतुष्कसंयोगे भंगानां पंच पंचाशदधिकं शतं १ पंचसंयोगे पंचानां पदानामेको भंग इत्युद्घातिते पंचकसंयोगचिंतायामनुद्घातिते एकैकसंयोगाः पंच, द्विकसंयोगाः दश, त्रिकसंयोगा दश, चतुष्कसंयोगाः पंच, पंचसंयोग एकः, प्रत्येकमेकेन गुण्यंते एकेन च गुणितं तदेव भवतीति सैव भंगसंख्या तद्यथा पंच दश दश पंच एक ।

सर्वसंख्यया उद्घातिते पंचकसंयोगा एकत्रिंशत् मूलत आरभ्य भंगानां सर्वसंख्या नवशतान्येकषष्ठ्यधिकानि एतावंति किल सूत्राणि पंचस्वादिमेषु सकलसूत्रेषूद्घातानुद्घातसंयोगतो जातानि एतावंत्य च बहुशः शब्दविशेषितेष्वपि पंचसु सूत्रेष्वनेनैव विधिना सूत्राणि द्रष्टव्यानि ।। सर्वसंख्यापिंडनेन मिश्रकसूत्राणि द्वाविंशत्युत्तराण्येकोनविंशतिशतानि । एतानि च तृतीयचतुर्थसूत्राभ्यामुत्पन्नानीति तत्र पृथकमिश्रकसूत्राणां संभवः तदेवममीषां मिश्रकसूत्राणा-मेकोनविंशति-शतानि द्वाविंशति । षडशीतं शतं प्राक्तनं सूत्राणामिति सर्वसंख्यया सूत्राणामेकविंशतिशतान्यष्टोत्तराणि। तथा यस्मादपराधो द्विधा तद्यथा मूलगुणे उत्तरगुणे च तत एतानि सर्वाण्यप्यनंतरोदितानि सूत्राणि मूलगुणापराधाभिधानेनाप्यभिधातव्यान्युत्तरगुणापराधाभि-धानेनापीत्येष राशिर्द्वाभ्यां गुण्यते जातानि चत्वारि सहस्राणि द्वे शते षोडशोत्तरे । अपराधापि च यस्मान्मूलगुणेषूत्तरगुणेषु च दर्पतः कल्पतो वाप्ययतनया तत एष राशिर्भूयोद्वाभ्यां गुण्यते जातान्यष्टौ सहस्राणि चत्वारि शतानि द्वात्रिंशदधिकानि। एतावती संक्षेपतः सूत्रसंख्या भणिता इयं चैतावती भंगकवशात्प्रायेण जाता ततो भंगकपरिज्ञानार्थमाह-

[भा.२४७] एत्थ पडिसेवणाओ, एक्कगदुगतिगचउक्कपनगेहिं ।
दसदसपंचगएक्का अदुव अनेगाउ एयाओ ।।

वृ- अत्र च एतस्मिन् सूत्रसमूहे एतावत्यः प्रतिसेवना एवं संख्याकाः प्रतिसेवनाप्रकाराः पंचानां पदानां एकक द्विक त्रिक चतुष्क पंचकैरेकक द्विक त्रिक चतुष्कपंचकसंयोगैर्व भवंति भंगाः ।। क्रमेण

दशदशेत्यादिना द्विकसंयोगे [illegible] पंच मासात् सूत्रे एव [illegible] इति [illegible] [illegible]त्त्ववसेया स्ततोऽयमऽर्थः । पंच पंच्च दश दश पंचक इति तेभ्योऽवसेयाः यथावसानव्या स्तथा प्रागेवोक्ताः ।। अदुव अनेगा तो एयाओ इति । अथवा न केवलमेतावत्य एवैताः प्रतिसेवना, किंत्वन्या सामपि भावादनेका एता द्रष्टव्याः, ताश्चान्याः प्रतिसेवना इमाः । जे भिक्खू पंचराइंदियं पडिसेवित्ता आलोएज्जा, अपलिउंचियं आलोएमाणस्स पंचराइंदियं मासियं, एवं दश पंचदश विंशति पंचविंशति रात्रिंदिवेष्वपि सूत्राणि वक्तव्यानि; एवमेव पंचसूत्राणि बहुशः शब्दाभिलापेनाभिधातव्यानि; ।। तदनंतरं तृतीयसंयोगसूत्रं षड्विंशतिसूत्रात्मकं वक्तव्यं ततश्चतुर्थे संयोगसूत्रं षड्विंशतिसूत्रात्मकं बहुशः शब्दविशेषितमेवमेतानि सामान्यतो द्वाषष्टिः सूत्राणि भणित्वा तदनंतरमुद्घातानुद्घातमिश्रमूलोत्तर-दर्पकल्पैः प्रागुक्तप्रकारेण तावत् सूत्राणि वक्तव्यानि यावदष्टौ सहस्राणि चत्वारि शतानि द्वात्रिंश-दधिकानि परिपूर्णानि भवंति, ।। अत्र पंचकादीनि मासिकद्वैमासिकादिभिः सह न वारयितव्यानि यत उपरि पंचसातिरेकसूत्रं वक्ष्यति ।। तत्र च सातिरेकता पंचकादिभिरिति पुनरुक्तता स्यादिति सांप्रतमेतेषां सूत्राणामर्थावगमेनोत्कलितप्रज्ञः सन् शिष्यः पृच्छति;

**[भा.३४८]** जहमन्ने बहुसो मासियाइं सेवितुं वड्ढइ उवरिं,
तह हेट्ठा परिहायइ दुविहं तिविहं च आमंति ।।

**वृ-** इह मासिक द्वैमासिकादि प्रायश्चित्तापत्तिः, प्रतिसेवक परिणामानुरूपा, ततोहं मन्ये चिंतयामि, यथा येन प्रकारेण बहूनि मासिकानि प्रतिसेव्य कदाचित् मासिकमेव प्रायश्चित्तमापद्यते ।। मंदाध्यवसायेन प्रतिसेवनात् कदाचिदुपरि वर्द्धते, तद्यथा कदाचित् द्वैमासिकं तीव्रेणाध्यवसायेन प्रतिसेवनायाः करणात् त्रैमासिकं वा, यावत् षाण्मासिकं वा कदाचिदतिदुष्टाध्यवसायेन प्रतिसेवनात् छेदं वा कदाचिन्मूलं वा यावत् कदाचित् पारांचितं वा; तथा तेन प्रकारेणाधस्तादपि परिहीयते हानिमुपगच्छति ।। तद्यथा मासिकं प्रतिसेव्य कदाचित् भिन्नमासमापद्यते, कदाचित् पंचविंशतिरात्रिंदिवं यावत् रात्रिंदिवपंचकं दुविहं तिविहं चेति, द्विविधौ प्रकारौ मासलक्षणौ यस्य तत् द्विविधं द्वैमासिकमित्यर्थः ।। तदेवं त्रिविधं त्रैमासिकं, च शब्दात् चातुर्मासिकं पांचमासिकं षाण्मासिकं च प्रतीत्योक्तरूपेण प्रायश्चित्तवृद्धिहानी वक्तव्ये, तद्यथा द्वैमासिकं स्थाने प्रतिसेविते कदाचित् तदेव द्वैमासिकमापद्यते कदाचित् त्रैमासिकं कदाचित् चातुर्मासिक-मेवं यावत् पारांचितं अधस्ताद्धानिरेवं द्वैमासिकं प्रतिसेव्य कदाचित् मासिकप्रायश्चित्तं लभते, कदाचित् भिन्नमासमेवं यावत् पंचरात्रिंदिवं एवं त्रैमासिकं चातुर्मासिक पांचमासिक षण्मासिकेष्वपि भावनीयं । अत्राचार्य आह, आमंति, आम शब्दोऽनुमती संमतमेतत् तदस्माकं सर्वमिति भावः ।।

**[भा.३४९]** केन पुन कारणेणं जिनपन्नत्तानि कानि पुन तानि ।
जिन जाणंति उ ताइं चोयग पुच्छा बहु नाउं ।।

**वृ-** शिष्यः प्रच्छति केन पुनः कारणेन मासिकादौ प्रायश्चित्त स्थाने प्रतिसेविते प्रायश्चित्तस्य वृद्धिहानी भवतः ।। आचार्य आह, अत्र कारणानि जिनप्रज्ञप्तानि सर्वज्ञोपदिष्टानि कानि पुनस्तानीति चेदुच्यते । रागद्वेषहर्षादीनि, तथाहि रागाध्यवसायानां चोपर्युपरि वृद्ध्या यदि वा सिंहव्यापादकस्येव पश्चाद्दर्प वृद्ध्या मासिक प्रतिसेवनाया मप्युत्तरोत्तर प्रायश्चित्त वृद्धिर्भवति, तथा प्रथमत एव रागाध्यवसायहानितो द्वेषाध्यवसायहानितो वा, यदिवा पश्चात् ।। हा दुट्ठुकयं, हा दुट्ठुकारियं दुट्ठु अनुमयं चेत्यनुतापकरणतो मासिकप्रतिसेवनायामपि भिन्नमासः, पंचविंशतिर्वा रात्रिंदिवानि एवम धोऽधस्तात् प्रायश्चित्त

हानिर्भवति, ततो रागद्वेषहर्षादीन्येव वृद्धिहानिमंति करणानि; ।।पुनः शिष्यः पृच्छति, ननु यदि प्रायश्चित्त वृद्धि हानि तु रागद्वेषहर्षादिभिर्वृद्धिहानिमंति करणानि, तत्कथमिति प्रतिसेवकगतानि परमार्थतो जिना एव तु शब्द एवकारार्थो भिन्नक्रमत्वादत्र संबध्यते, केवल्यवधिमनःपर्यायज्ञानिचतुर्दशदशनवपूर्विणो जानंति, केवलादिबलात् (भावात्); ये पुनः कल्पप्रकल्पव्यवहारिणस्ते कथं जानंति ? तेषामतिशयाभावात्, अत्राचार्य प्रतिवचनं, तेऽपि जानंति तदुपदिष्टश्रुतज्ञानप्रमाणतस्तथाहि ।।तेऽपि वारत्रयमालोचनां दापयंतः श्रुतोपदेशानुसारेणाऽवबुध्यंते; रागद्वेषाद्यध्यवसायस्थानानां वृद्धिं हानिं चेति, चोयगपुच्छा बहुंनाऊंति ।।बहुशः शब्द विशेषितेषु सूत्रेषु बहुशब्दोऽस्ति, तमर्थतो ज्ञातुं चोदकस्य पृच्छा, यथा भगवन् तेषु सूत्रेषूपात्तस्य बहुशब्दस्य कोऽर्थ ? इति, आचार्य आह -

[भा.३५०] तिविहं च होति बहुगं, जहन्नयं मज्झिमं च उक्कोसं ।
जहन्नेण तिन्नि बहुगा, उक्कोसो पंच चुलसीया ।।

वृ- त्रिविधं बहुकं भवति, तद्यथा जघन्यं मध्यमं उत्कृष्टं च, तत्र जघन्येन त्रीणि बहूनि किमुक्तं भवति, जघन्येन त्रयो मासा बहव उक्ताः, उत्कर्षतः पंचमासशतानि चतुरशीत्यधिकानि एतेषां मध्ये यानि । प्रायश्चित्तस्थानानि चतुरादीनि यावत् पंचशतानि त्र्यशीत्यधिकानि तानि मध्यमतः ।। संप्रति यथा प्रायश्चित्तं दीयते, तथा भणनीयं; तत्र मासादारभ्य यावत् षण्मासास्तावत् स्थापनारोपणा व्यतिरेकेणापि सूत्रेणैव दीयते, ततः पराणि तु यानि सप्तमासादीनि प्रायश्चित्तानि मध्यमानि, उत्कृष्टं यत् प्रायश्चित्तं तत् स्थापनारोपण प्रकारेणैव दीयते, इति तत् प्रतिपादनार्थमिदमाह -

[भा.३५१] ठवणा संचयरासी, माणाइपभूयकित्तिया सिद्धा ।
दिठा निसीह नामे सव्वेवि तहा अनायारा ।।

वृ- स्थाप्यते इति स्थापना वक्ष्यमाणेनारोपणाप्रकारेण शुद्धा भूतेभ्यः संचयमासेभ्यो ये शेषा मासास्तेषां प्रतिनियतदिवसपरिमाणतया व्यवस्थापनं; ताभ्यां स्थापनारोपणाभ्यां संचयनं-संकलनं संचयः, किमुक्तं भवति ? षण्णां मासानामुपरि प्रतिसेवनायां कृतायां कुतोपि मासात् पंचदश रात्रिंदिवसानि कुतोपि दश कुतोपि पंच गृहीत्वा स्थापनारोपणाविधानेन षण्मासपूर्ण संचयः ।। तथा राशित्ति एष प्रायश्चित्तराशिः, कुत उत्पद्यते ? इति वक्तव्यं, तथामानानि प्रायश्चित्तस्य वक्तव्यानि, यथा प्रथम तीर्थकृतस्तीर्थे प्रायश्चित्तमानं संवत्सरः, मध्यमानामष्ट मासाः, चरमस्य षण्मासाः, तथा प्रभवः प्रायश्चित्तदाने स्वामिनः केवलिप्रभृतयो वक्तव्याः ।। तथा कत्तियासिद्धा; इति कियंतः खलु प्रायश्चित्तभेदाः सिद्धा इति वक्तव्यंः, तथा एते सर्वेपि प्रायश्चित्तभेदा दृष्टा निशीथनाम्नि अध्ययने न केवलमेते, किंतु तथा सर्वेप्यनाचार अतिचार अतिक्रमाद्यो निशीथनाम्नि दृष्टाः, एष द्वारगाथासंक्षेपार्थः। संप्रति प्रतिद्वारं व्यासार्थो भणनीयस्तत्र यान् प्रति स्थापनारोपणे क्रियेते तानुपदर्शयति -

[भा.३५२] बहुपडिसेवी सो यो, वि अगीतो अविय अपरिणामोवि ।
अहवा अतिपरिणामो तप्पच्चय कारणे ठवणा ।।

वृ- इह प्रायश्चित्तप्रतिपत्तारः पुरुषा इमे तद्यथा, गीतार्थोऽगीतार्थः परिणामकोऽपरिणामकोऽति-परिणामकश्च, तत्र यः प्रायश्चित्तप्रतिपत्ता बहूनां मासिकस्थानानां प्रतिसेवी एकस्मिन् हि मासिके स्थाने प्रतिसेवित प्रायो न स्थापनारोपणाविधिस्ततो बहुसेवीत्युक्तं सोपि च गीतोऽगीतार्थः ।। गीतार्थे हि प्रायश्चित्तप्रतिपत्तरि च बहुष्वपि मासेषु प्रतिसेवितेषु न स्थापनारोपणे क्रियेते, तस्य गीतार्थतया ताभ्यां

विनापि यदुक्तार्थग्राहित्वात्, ततोऽगीतार्थ इत्युक्तं, सोपि यदि परिणामकोभवेत्, तर्हि तमपि प्रतिस्थापनारोपणे तस्यापि परिणामकतया ताभ्यां विनापि यदुक्तार्थप्रतिपत्तेः, तत आह, अपिच अपिच अपरिणामोपि न विद्यते, परिणामो यदुक्तार्थपरिणमनं यस्य स, तथा आस्ताम गीतार्थः ।। किंत्वपरिणामकश्चेत्यपि शब्दार्थः, अथवा अतिपरिणामः अतिव्याप्त्या परिणामो यथावस्तस्वरूपो यस्यासावतिपरिणामस्तत्प्रत्ययकारणात् तयोरगातीर्थयोरपरिणामातिपरिणामयोः प्रत्ययो ज्ञानं यावंतो मासाः प्रतिसेवितास्तावंतः सर्वेपि सफलीकृता इत्येवंरूपं स्यादिति हेतोः स्थापनाग्रहणेनारोपणापि गृह्यते इति आरोपणापि क्रियते तद्यथा, यावंतो मासा दिवसा वा प्रतिसेविता स्तावंतः सर्वे एकत्र स्थाप्यंते, स्थापयित्वा च यत् संक्षेपार्हं विंशिकादिकं प्रतिसेवितं तत् स्थाप्यते, एषा स्थापना; तदनंतरं येऽन्ये मासाः प्रतिसेवितास्ते सफली कर्त्तव्या इत्येकैकस्मात् मासात् प्रतिसेवनापरिणामानुरूपं स्तोकान् स्तोकतरान् समान् विषमान् वा दिवसान् गृहीत्वा एकत्र रोपयति एषा आरोपणा, एषा चोक्तरूपतस्तावत् कर्त्तव्या, यावत्या स्थापनया सह संकलध्यमाना षण्मासाः पूर्यंते नाधिकाः ।। ततः स्थापनारोपणयो र्यदेकत्र संकलनमेष संचयः, अयं स्थापनारोपणासंचयानां परस्परप्रतिभक्तोऽर्थः, अनेन हि प्रकारेण प्रायश्चित्तदानेतिपरिणामकोऽपरिणामको वा चिंतयति, सर्वे मासाः सफलीकृता इति, शुद्धोहमिति; गीतार्थ परिणामकयोः पुन र्न स्थापनारोपणा प्रकारेण प्रायश्चित्तं दीयते, प्रयोजनाभावात् किंत्वेवमेव तथाचाह -

**[भा.३५३]** एगंमि णेगदाने णेगेसु व एगदानमेगेगं ।
जं दिज्जइ तं गिण्हइ गीयमगीतो य परिणामी ।।

**वृ**- यो गीतार्थो यश्चागीतार्थोपि परिणामी तस्मै एकस्मिन् मासे प्रतिसेविते रागद्वेपहर्षोत्तरोत्तरवृद्धया प्रतिसेवनात् यदि अनेकदानं, अनेके अनेकेषु मासेषु प्रतिसेवितेषु कारणे मंदाध्यवसाये वा प्रतिसेवनात् तीव्राध्यवसायतः प्रतिसेवनाद्वा पश्चाद् हा दुष्टु मया कृतमित्यादि बहुनिंदनादेकदानमेको मासो दीयते, बहवो मासा दीयंते, अथवा एकस्मिन् मासे प्रतिसेविते एकदानमेकः-परिपूर्णो मासो दीयते, दुष्टाध्यवसायेन प्रतिसेवनात्, पश्चाच्च हर्षरागद्वेषवृद्धयासंभवतानेकमासदानायोगात् उपलक्षणमेतत् तेनैतदपि द्रष्टव्यं, बहुषु मासेषु सप्तादि संख्येषु प्रतिसेवितेषु यदि बहवो मासाः षट् पंच चत्वारो वा दीयंते, तथापि तत् सम्यग् गृह्णाति, श्रद्धत्ते च, शुद्धिं प्राप्तोहमिति ततस्तयोन स्थापनारोपणाप्रकारेण प्रायश्चित्तदानमिति ।। यदि पुनरपरिणामकेऽतिपरिणामके वा अगीतार्थे न स्थापनारोपणाप्रकारेण दीयते, तदा बहवो दोषा; तत्र अपरिणामके दोषं दर्शयति;

**[भा.३५४]** बहुएसु एगदाने, सो च्चिय सुद्धो न सेसया मासा ।
मा अपरिणामे उ संका, सफला मासा कया तेन ।।

**वृ**- बहुकेषु मासेषु प्रतिसेवितेषु यदा प्रागुक्तकारणवशात् एको मासःस्थापनारोपणाव्यतिरेकेण-परिणामके दीयते, तदा तस्मिन्नपरिणामिके एवमाशंका स्यात्, यथा यस्यैकमासस्य मे दत्तं प्रायश्चित्तं स एवैको मासः शुद्धो, न शेषा मासास्ततो नाद्याप्यहं शुद्ध इति, तस्मादेवं भूता आशंका मा भूदित्यपरिणामके स्थापनारोपणाप्रकारेण सर्वे मासाः सफलाः कृताः, समस्तमाससफलीकरणार्थं तत्रस्थापनारोपणं क्रियेते, इतिभावः, अतिपरिणामके दोषानुपदर्शयति -

**[भा.३५५]** ठवणामेत्तं आरोवणत्ति नाऊणमति परिणामी ।

कुञ्जा च अइपसंगं बहुए सेवितुमाविगङे ।।

वृ- अतिपरिणामकेपि यदि बहुकेषु मासेषु प्रतिसेवितेष्वेका मासः स्थापनारोपणाद्यतिरेकेण दीयते, ततः सोऽप्येवं चिंतयत्, भाषेत वा, यथा यदेतदागमे गीयते आरोवणेत्ति प्रायश्चित्तमिति, ततः स्थापनामात्रं, मात्र शब्दस्तात्पर्यार्थविश्रांतस्तुल्यवाची यदाह, निशीथचूर्णिकृत्, मात्रशब्दस्तुल्यवाचीति, यथाहि स्थापना शक्रादः शक्रादिलक्षणतात्त्विकार्थशून्या एवमारोपणाप्यागमे गीयमाना तात्त्विकार्थशून्या बहुष्वपि मासेषु प्रतिसेवितेष्वेकस्य मासस्य प्रदानात्; यद्वा स्थापनामात्रमारोपणेति ज्ञात्वाऽतिपरिणामोऽतिप्रसंगं कुर्यात्, पुनःपुनस्तत्रैव प्रवर्त्तेतः बहुकेष्वपि मासेषु प्रतिसेवितेष्वेकस्य प्रायश्चित्तं लभे इति बुद्धेः, यदिवा अकल्प्यप्रतिसेवनया बहून्मासान् प्रतिसेव्य सर्वान् मासान् नायिकटयेत्, नालोचयेत् किंत्वेकमेव बहुष्वपि मासेषु प्रतिसेवितेष्वेकमासस्यैकत्वतः प्रायश्चित्तमित्यवगमात् ।।तस्मादपरिणामकेऽतिपरिणामके च सकलमाससफलीकरणाय स्थापनारोपणाप्रकारेण प्रायश्चित्तं दातव्यं इह स्थापनायाश्चत्वारि स्थानानि तद्यथा, प्रथमं त्रिंशत्स्थानात्मक, द्वितीयं त्रयस्त्रिंशत्स्थानात्मकं, तृतीयं पंचत्रिंशत्स्थानात्मकं चतुर्थमेकोनाशीत्यधिकस्थानशतात्मकमारोपणाया अपि चत्वारि स्थानानि तद्यथा, प्रथमं त्रिंशत्स्थानात्मकं द्वितीयं त्रयस्त्रिंशत्स्थानात्मकं तृतीयं पंचत्रिंशत्स्थानात्मकं चतुर्थमेकोनाशीत्यधिकस्थानकशतप्रमाणमतः सांप्रतमेतेषां चतुर्णां स्थापनास्थानानां चारोपणास्थानानां यानि जघन्यानि स्थानानि तानि प्रतिपादयति ।

[भा.३५६] ठवणा वीसिय पक्खिय पंचिय एगाहिया उ बोधव्वा ।
आरोवणावि पक्खिय पंचिय तह पंच एगा हीं ।।

वृ- स्थापनायाः प्रथमे स्थाने जघन्ये स्थापना विंशिका विंशतिरात्रिंदिवसप्रमाणा द्वितीये पाक्षिकी तृतीये पंचिका पंचदिवसात्मिका चतुर्थे च एकाहिका एकाहमात्रः आरोपणापि प्रथमस्थाने जघन्या पाक्षिकी द्वितीये पंचिका पंचदिनप्रमाणा तृतीयेपि पंचिका चतुर्थे एकाहिका सर्वजघन्यान्येतानि स्थापनारोपणास्थानानि ।।आह च चूर्णिकृत् ।।एयाणि सव्वजहन्नगाणि ठवणा रुवणा ठाणाणि इतिः इह न ज्ञायते, कस्मिन् जघन्ये स्थापनास्थाने किं जघन्यस्थापनास्थानं भवति, तत् परिज्ञानार्थमिदमाह

[भा.३५७] वीसाए अद्धमासं पक्खे पंचाहमारोहिज्जा हि ।
पंचाहे पंचाहं एगाहे चेव एगाहं ।।

वृ- विंशिकायां विंशिकारूपे जघन्ये स्थापनास्थाने जघन्यमारोपणास्थानमर्धमासमारोहयेत्, स्वबुद्धावारोपयेत्, जानीयादित्यर्थः ।।तथा पक्षे पक्षप्रमाणे जघन्ये स्थापनास्थाने पंचाहं पंचाहप्रमाणं जघन्यमारोपणास्थानं, तथा पंचाहे पंचाहप्रमाणे जघन्येस्थापनास्थाने पंचाहप्रमाणमेव जघन्यमारोपणास्थानमेकाहे एकदिनप्रमाणे जघन्ये स्थापनास्थाने जघन्यमारोपणास्थानमेकाहमेव, एकदिनप्रमाणमेव; संप्रति प्रथमेस्थापनामेकाहे एकदिनप्रमाणे जघन्ये स्थापनास्थाने जघन्यमारोपणास्थानमेकाहमेव, एकदिनप्रमाणमेव; संप्रति प्रथमेस्थापनास्थाने या जघन्या स्थापना, या च उत्कृष्टा तां प्रतिपादयति ।

[भा.३५८] ठवणा होइ जहन्ना वीसइ राइंदियाइं पुन्नाइं ।
पणउं चेव सयं ठवणा उक्कोसिया होति ।।

वृ- प्रथमे स्थापनास्थाने जघन्या स्थापना भवति, पूर्णानि परिपूर्णानि विंशतिरात्रिंदिवसप्रमाणेति

भावः ।। उत्कृष्टा भवति स्थापना पंचषष्ठं शतं पंचषष्ट्यधिकं रात्रिदिवानां शतं, शेषाणि तु स्थानानि मध्यमानि, संप्रति प्रथमे आरोपणस्थाने या जघन्या आरोपणा वा चोत्कृष्टा तां प्रतिपादयिषुराह -

**[भा.३५९]** आरोवणा जहन्ना पन्नरसराइंदियाइं पुन्नाइं ।
उक्कोसं सट्ठिसयं, दोसुवि पक्खेवगो पंच ।।

**वृ-** प्रथमे आरोपणास्थाने जघन्या आरोपणा पूर्णानि परिपूर्णानि पंचदश रात्रिंदिवानि, उत्कृष्टां पुनरारोपणां जानीयात्; षष्ठिशतं षष्ठ्यधिकं रात्रिंदिवशतं शेषाणि तु स्थानानि मध्यमानि तत्परिज्ञानार्थमाह दोसुवि पक्खेवगो पंच, द्वयोरपि स्थापनारोपणयोः प्रत्येकं जघन्यपदादारभ्योत्तरोत्तरे मध्यमे स्थाने प्रक्षेपकः पंच पंच परिणामो ज्ञातव्यो, यावदुत्कृष्टं पदं, इयमत्र भावना, प्रथमे स्थापनास्थाने जघन्या स्थापना विंशतिका, ततः पंचकप्रक्षेपेऽन्या द्वितीया पंचविंशतिदिनमाना, ततः पुनः पंचकप्रक्षेपे तृतीया त्रिंशद्दिना, एवं पंच पंच परिवर्धयता तावन्नेतव्यं, यावत् पंचषष्ठरात्रिंदिवशतप्रमाणा त्रिंशत्तमा स्थापनेति, तथा प्रथमे आरोपणास्थाने जघन्यारोपणा पक्षप्रमाणा ततः पंचकप्रक्षेपे विंशतिदिनप्रमाणा द्वितीया, ततोपि पंचकप्रक्षेपे पंचविंशतिदिनमाना तृतीया, एवं यथोत्तरं पंच पंच परिवर्धयता तावन्नेयं यावत् षष्ठ्यधिकरात्रिंदिवशतप्रमाणा त्रिंशत्तमेति, एतदेव सुव्यक्तमाह -

**[भा.३६०]** पंचण्हपरिवुड्ढी, उक्कड्डी चेव होइ पंचण्हं ।
एएण पमाणेणं, नेयव्वं जाव चरिमंति ।।

**वृ-** स्थापनायामारोपणायां च प्रत्येकं जघन्यपदादारभ्योत्तरोत्तरस्थान जिज्ञासायां पंचानां परिवृद्धिर्ज्ञातव्या; प्रत्येकमेवमेवांतिमस्थापनादारभ्य क्रमेणाधोऽधः स्थानचिंतायां पंचानामपकृष्टिर्हानि-र्भवत्यऽव सातव्या तद्यथा-पंचषष्ठ्यधिकरात्रिंदिवशतप्रमाणा सर्वोत्कृष्टा त्रिंशत्तमा स्थापना, ततः पंचानामपसारणे रात्रिं दिवषष्ठ्यधिकशतमाना एकोनत्रिंशत्तमा मध्यमा, ततोपि पंचानामपगमे पंचपंचाशदधिकशतप्रमाणा अष्टाविंशतितमा, एवं क्रमेणाधोधस्तात् पंच पंच परिहापयता तावन्नेतव्यं, यावत् विंशतिदिनप्रमाणा प्रथमा स्थापना, तथा षष्ठ्यधिकरात्रिंदिवशतप्रमाणा सर्वोत्कृष्टा त्रिंशत्तमा आरोपणा, ततः पंचानामपगमे पंचपंचाशदधिकशतमाना एकोनत्रिंशत्तमा मध्यमा, ततोपि पंचानामपगमे पंचाशच्छतप्रमाणा अष्टाविंशतितमा, एवं क्रमेणाधोधः पंच पंच परिहापयता तावन्नेयं, यावत् प्रथमा पक्षप्रमाणेति, तथा चाह, एएणेत्यादि एतेन पूर्वानुपूर्व्या पंचकपरिवृद्धिरूपेण पश्चादनुपूर्व्या पंचकापकृष्टिरूपेण प्रमाणेन पूर्वानुपूर्व्या जघन्यपदादारभ्य पश्चादनुपूर्व्यामुत्कृष्टात् स्थानात् प्रभृति तावन्नेतव्यं, यावच्चरमं स्थानं परिवृद्धौ सर्वांतिमं स्थानं चरममपकृष्टौ जघन्यमादिमं चरममिति, अथवेयं गाथा अन्यथा आख्यायते, पूर्वं किल स्थापनायामारोपणायां च प्रत्येकं जघन्यमध्यमोत्कृष्टभेदभिन्नानि स्थानानि उक्तानि, सांप्रतमेकैकस्मिन् स्थापना स्थाने जघन्यादौ कियत्यारोपणास्थानानि एकैकस्मिन् वारोपणास्थाने कियंति स्थापनास्थानानीत्येतत् प्रतिपादयति पंचण्ह परिवुड्ढि इत्यादि पूर्वस्मात् स्थापनास्थनादारोपणास्थानाद्वा उत्तरस्मिन्नुत्तरस्मिन् स्थापनास्थाने आरोपणस्थाने वा वृद्धिर्भवति, यस्मिंश्च यदपेक्षया स्थापनास्थाने आरोपणास्थाने वा पंचानां वृद्धिर्भवति, तस्मिन् तदपेक्षया स्थापनास्थाने आरोपणाचिंतायामारोपणास्थाने वा स्थापनास्थानचिंतायामंते पंचानामपकृष्टिर्हा-निर्भवति, एतेन प्रमाणेन पंचकपरिवृद्धिरूपेण पंचकहानिरूपेण च तावन्नेयं, यावदंकत्रांतिमं चरममपत्रादिमं चरममिति, तथाहि विंशिकायां स्थापनायां जघन्या पाक्षिकी आरोपणा, ततोऽन्या

विंशतिका, ततोऽप्यन्या पंचविंशतिदिनमाना, ततोऽप्यन्या त्रिंशिका एवं पंच पंच आरोपयता तावन्नेयं, यावत्तस्यामेव विंशिकायां सर्वोत्कृष्टष ठ्यधिकदिनशतप्रमाणा त्रिंशत्तमा आरोपणा, तथा पंचविंशतिकायां स्थापनायां जघन्या पाक्षिकी आरोपणा, ततोऽन्या विंशतिका ततोऽप्यन्या ।

पंचविंशतिदिनमाना ततोऽप्यन्या त्रिंशद्दिना एवं पंच पंच आरोपयता तावन्नेयं, यावत्तस्यामेव विंशतिकाया सर्वोत्कृष्टा पष्ठ्यधिकदिनशतप्रमाणा त्रिंशत्तमा आरोपणा, तथा पंचविंशतिकायां स्थापनायां जघन्या पाक्षिकी आरोपणा ततोन्या विंशतिका ततोऽप्यन्या पंचविंशतिदिना ततोन्यात्रिंशद्दिना एवं च परिवर्धयता तावद्नेतव्यं, यावदेकोनत्रिंशत्तमा पंचपंचाशदधिकदिन शतमाना सर्वोत्कृष्टा आरोपणा, अस्यामेकोनत्रिंशदारोपणास्थानानि, पूर्वस्थानापेक्षया अस्याः स्थापनायाः पंचभिर्दिनैः परिवर्धमानतया पर्यंते पंचानां दिनानां त्रुटितत्वात् एवमुत्तरत्रापि भावनीयं, तथा त्रिंशद्दिनायां स्थापनायां जघन्या पाक्षिकी आरोपणा, ततोऽन्या विंशतिदिना ततोऽप्यन्या पंचविंशतिदिना एवं पंच पंच परिवर्धयता तावन्नेतव्यं, यावत्सर्वोत्कृष्टा पंचाशत्शतदिनाऽष्टाविंशतितमारोपणा, अस्यामष्टाविंशतिरारोपणा-स्थानानि तथा पंचत्रिंशद्दिनायां स्थापनायां जघन्या पाक्षिकी आरोपणा, ततोऽन्या विंशतिदिना ततोऽप्यन्या पंचविंशतिदिना एवं पंच पंचारोपयता तावद्नेतव्यं, यावत्सर्वोत्कृष्टा पंचचत्वारिंशद्दिनशत-माना सप्तविंशतितमारोपणा, अस्यां सप्तविंशतिरारोपणास्थानानि कारणं प्रागेवोक्तं, एवमुत्तरोत्तर-स्थापनासंक्रांतावंतिममंतिमं स्थानं परिहरता तावन्नेतव्यं, यावत् पंचषष्ठिदिनशतायां त्रिंशत्तमायां स्थापनायामेकैव जघन्या पाक्षिकी आरोपणा नान्येति, तथा पाक्षिक्यामारोपणायां जघन्या विंशतिदिना स्थापना ततोऽन्या पंचविंशतिदिना मध्यमा, ततोऽप्यन्या त्रिंशद्दिना, एवं पंच पंच परिवर्धयता तावन्नेतव्यं, यावत्पंचपष्ठिदिनशतप्रमाणा सर्वोत्कृष्टा त्रिंशत्तमा स्थापना, तथा विंशिकायामारोपणायां जघन्या स्थापना विंशतिदिना, ततोन्या मध्यमा पंचविंशतिदिना, ततोऽप्यन्या त्रिंशद्दिना एवं यथोत्तरं पंच पंच विलगयता तावद्नेतव्यं, , यावत् पष्ठ्यधिकदिनशतमाना सर्वोत्कृष्टा एकोनत्रिंशत्तमा स्थापना, पूर्वारो-पणातो ह्यस्यामारोपणायां पंच दिनान्यधिकानि तानि चोपरि त्रुटितानीत्येकोन त्रिंशदेवास्यामारोपणायां स्थापनास्थानानि, तथा पंचविंशतिदिनायामारोपणायां जघन्या विंशिका स्थापना, ततोऽन्या पंचविं-शतिदिना मध्यमा, ततोऽप्यन्या त्रिंशद्दिना एवं पंच पंच परिवर्धयता तावन्नेयं, यावत् पंचपंचाशद्दिनशत-माना सर्वोत्कृष्टाऽष्टाविंशतितमा स्थापना, अस्यां हि प्रागुक्तयुक्त्याष्टाविंशति स्थापनास्थानानि, एव-मुत्तरोत्तरारोपणासंक्रांतावंतिममंतिमं स्थापनास्थानं परिहरता तावद्नतव्यं, यावत् पष्ठिदिनशतमायारोप-णायां जघन्या विंशिका स्थापनेति, यथा च प्रथमे स्थापनास्थाने आरोपणास्थाने च प्रत्येकं संबंधतश्च स्थापना कृता, तथा द्वितीये तृतीये च कर्त्तव्या, तद्यथा द्वितीये स्थापनास्थाने जघन्या स्थापना पाक्षिकी,

ततः पंचकप्रक्षेपेऽन्या विंशतिदिना तत्रापि पंचकप्रक्षेपेऽन्या पंचविंशतिदिना एवं पंच पंच प्रक्षिपता तावद्नेतव्यं, यावत् पंचसप्ततिरात्रिंदिवशतप्रमाण त्रयस्त्रिंशत्तमा स्थापनेति, तथा द्वितीये स्थाने जघन्यारोपणा पंचाहिका, ततः पंचकप्रक्षेपे दशाहिका ततोऽपि पंचकप्रक्षेपे पाक्षिकी, एवं पंच पंच परिवर्धयता तावन्नेयं, यावत्पंचपष्ठिदिनशतमाना त्रयस्त्रिंशत्तमा सर्वोत्कृष्टा आरोपणेति, इदानीं संबंधभावना पाक्षिक्यांस्थापनायां जघन्या पंचाहिका आरोपणा, ततोऽन्या दशदिना मध्यमा, ततोऽप्यन्या पाक्षिकी, ततोऽप्यन्या विंशतिदिना, एवं पंच पंच परिवर्धयता तावद्नेतव्यं, यावत्त्रयस्त्रिंशत्तमा पंचपष्ठिदिनशतमाना सर्वोत्कृष्टा आरोपणा, अस्यां त्रयस्त्रिंशदारोपणास्थानानि तथा विंशिकायां

स्थापनायां जघन्या पंचाहिका आरोपणा, ततोऽन्या दशदिना ततोऽन्या पाक्षिकी.

एवं विंशिकां स्थापनाममुंचता पंच पंच परिवर्धयता तावन्नेयं, यावत्षष्टिशतदिनमाना सर्वोत्कृष्टा, द्वात्रिंशत्तमा आरोपणा, अस्यां द्वात्रिंशदारोपणास्थानानि पूर्वस्थापनातोऽस्यां पंचकपरिवृद्धेरंते पंचानां त्रुटितत्वात्, पंचविंशतिदिनायां स्थापनायां जघन्या पंचाहिका आरोपणा, ततोऽन्या मध्यमा दशदिना, ततोऽप्यन्या पाक्षिकी, एवं पंचविंशतिदिनानां स्थापनाममुंचता पंच पंच परिवर्धयता तावन्नेयं, यावत्पंचपंचाशद्दिनशतमाना सर्वोत्कृष्टा एकत्रिंशत्तमा आरोपणा, एवमुत्तरोत्तरस्थापनास्थानसंक्रांतावंतिममंतिमं स्थानं परिहरता तावन्नेयं, यावत् पंचसप्ततिरात्रिंदिवशतमानायां स्थापनायामेकैव जघन्या पंचाहिकारोपणेति, तथा पंचाहिकायामारोपणायां जघन्या पाक्षिकी स्थापना, ततोऽन्या मध्यमा विंशतिदिना, ततोऽप्यन्या पंचविंशतिदिना, एवं पंचाहिकामारोपणामपरित्यजता पंच पंच परिवर्धयता तावद्वंतव्यं, यावत् पंचसप्ततिदिनशतमाना सर्वोत्कृष्टा त्रयस्त्रिंशत्तमा स्थापना, तथा दशाहिकाया-मारोपणायां जघन्या पाक्षिकी स्थापना ततोऽन्या मध्यमा विंशतिदिना ततोऽप्यन्या पंचविंशतिदिना एवं दशाहिकामारोपणाममुंचता पंच पंच परिवर्धयता तावद्वंतव्यं, यावत् सप्ततिदिनशतमाना सर्वोत्कृष्टा, द्वात्रिंशत्तमा स्थापना, अस्यां द्वात्रिंशदेव स्थापनास्थानानि, पूर्वारोपणातोऽस्यामारोपणायां पंचकवृद्धेरंते पंचानां त्रुटितत्वादेवमुत्तरोत्तरारोपणास्थानसंक्रांतावंतिममंतिमं स्थानं परिहरता तावद्वंतव्यं, यावत् पंचषष्टिदिनाशतमानायां त्रयस्त्रिंशत्तमायामारोपणायामेकैव जघन्या पाक्षिकी स्थापनेति ।।

तथा तृतीये स्थापनास्थाने जघन्या पंचाहिका स्थापना, ततः पंचानां प्रक्षेपाऽन्या मध्यमा दशदिना, ततोऽपि पंचकप्रक्षेपेऽन्या पाक्षिकी एवं पंच प्रक्षिपता तावद्वंतव्यं, यावत् पंचसप्ततिरात्रिंदिवशतप्राण पंचत्रिंशत्तमा स्थापनेति, तथा तृतीये स्थाने जघन्यारोपणा पंचदिना, ततः पंचकप्रक्षेपेऽन्या मध्यमा दशदिना, ततोऽपि पंचकप्रक्षेपेऽन्या पाक्षिकी एवं पंच पंच प्रक्षिपता तावद्वंतव्यं, यावत्पंचसप्तति दिनशतमाना सर्वोत्कृष्टा पंचत्रिंशत्तमा आरोपणेति, संप्रति संवेधभावना पंचदिनायां स्थापनायां जघन्या आरोपणा पंचदिना, ततोऽन्या मध्यमा दिनदशकमाना ततोऽपि अन्या पाक्षिकी, एवं पंचदिनां स्थापनाममुंचता पंच पंच परिवर्धयता तावन्नेयं, यावत् पंचत्रिंशत्तमा सप्ततिदिनशतमाना सर्वोत्कृष्टा आरोपणा, अस्यां पंचत्रिंशदारोपणास्थानानि, तथा दशदिनायां स्थापनायां जघन्या पंचाहिका आरोपणा, ततोऽन्या दशदिना, ततोऽप्यन्या पाक्षिकी, एवं दशदिनां स्थापनाममुंचता पंच पंच परिवर्धयता तावद्वंतव्यं, यावदुत्कृष्टा चतुस्त्रिंत्तमा सप्ततिदिनशतमाना आरोपणेति, अस्यां चतुस्त्रिंशदारोपणास्थानानि, एवमुत्तरोत्तरस्थापनास्थानसंक्रांतौ अंतिममंतिमं स्थानं परिहरता तावद्यातव्यं, यावत्पंचसप्ततिदिन-शतमानायां स्थापनायामेकैव जघन्या पंचदिना आरोपणेति: तथा पंचदिनायामारोपणायां जघन्या पंचदिना स्थापना, ततोऽन्या मध्यमा दशदिना, ततोऽप्यन्या पंचदशदिना एवं पंचदिनामारोपणाम-परित्यजता पंच पंच परिवर्धयता तावद्वंतव्यं, यावत् पंचसप्ततिदिनशतमाना सर्वोत्कृष्टा पंच त्रिंशत्तमा स्थापना, ततो दशदिनायामारोपणायां जघन्या पंचदिना स्थापना ततोऽन्या पंचदिना स्थापना ततोऽन्या मध्यमा च दशदिना स्थापना, ततोऽन्या पंच दशदिना एवं दशदिनामारोपणाममुंचता पंच पंच परिवर्धयमानेन तावद्वंतव्यं, यावत् सप्ततिदिनशतमाना सर्वोत्कृष्टा चतुस्त्रिंशत्तमा स्थापना, एवमुत्तरोत्तरारोपणास्थानसंक्रांतावंतिममंतिमं स्थानं परिहरता तावन्नेयं, यावत् पंचसप्ततिदिनशतमानायां पंचत्रिंशत्तमायामारोपणायामेकैव जघन्या पंचदिना स्थापनेति, चतुर्थे स्थाने स्थापनास्थाने

आरोपणास्थाने च न पंचकवृद्धिर्नापि पंचकापकृष्टिः, किंतु वृद्धिहानिर्वा एकोत्तरा, ततो यद्यपि तद्भावना अधिकृतगाथाक्षरगननुयायिनी तथापि विनेयजनानुग्रहाय क्रियते ।।

तद्यथा, चतुर्थे स्थापनास्थाने जघन्या स्थापना एकदिना, अन्या मध्यमा द्विदिना, अन्या त्रिदिना, एवमेकैकं प्रक्षिपता तावद्रंतव्यं, यावदेकोनाशीत्यधिकदिनशततमा स्थापनेति, तथा चतुर्थस्थाने जघन्यारोपणा एकदिना, ततोऽन्या मध्यमा द्विदिना, ततोऽन्या त्रिदिना, एवमेकैकं परिवर्धयता तावद्रंतव्यं, यावदेकोनाशीत्यधिकदिनशतमाना सर्वोत्कृष्टा एकोनाशीत्यधिकशततमा आरोपणेति, संप्रति संवेधभावना एकदिनायां स्थापनायां जघन्यारोपणा एकदिना, ततोऽन्या द्विदिना, मध्यमा ततोऽन्या त्रिदिना एवमेकदिनां स्थापनाममुंचता एकैकं परिवर्धयता तावद्रंतव्यं यावदेकोनाशीत्यधिकदिनशतमाना सर्वोत्कृष्टा एकोनाशीतिशततमारोपणा अस्यामेकोनाशीत्यधिकशतप्रमाणान्यारोपणास्थानानि, तथाहि द्विदिनायां स्थापनायां जघन्यारोपणा एकदिना, ततोऽन्या द्विदिना मध्यमा, ततोऽन्या त्रिदिना एवं द्विदिनां स्थापनाममुंचता एकैकं परिवर्धयता तावन्नेयं, यावदष्टसप्तत्यधिकदिनशतमाना सर्वोत्कृष्टा अष्टसप्ततिशततमा आरोपणा, अस्यामष्टसप्ततिशतप्रमाणान्यारोपणास्थानानि, पूर्वस्थापनातोऽस्यां स्थापनायामेकस्य परिवृद्धत्वे एकस्य त्रुटितत्वात् ।।

एवमुत्तरोत्तरस्थापनास्थानसंक्रांतौ तदंतिममंतिमं स्थानं परिहरता तावद्यातव्यं, यावदेकोनाशीत्यधिकशततमायां स्थापनायामेकैव जघन्या एकदिना आरोपणेति, तथा एकदिनायामारोपणायां जघन्या स्थापना एकदिना, ततोन्या मध्यमा द्विदिना, ततोऽन्या त्रिदिना, एवमेकदिनामारोपणाममुंचता एकैकं परिवर्धयता तावद्रंतव्यं, यावदेकोनाशीत्यधिकदिनशतमाना सर्वोत्यकृष्टा एकोनाशीतिदिनशततमा स्थापना, अस्यामेकोनाशीत्यधिकशतसंख्यानिस्थापनास्थानानि, तथा द्विदिनायामारोपणायां जघन्या स्थापना एकदिना, ततोऽन्या द्विदिना मध्यमा, ततोऽन्या त्रिदिना एवं द्विदिनामारोपणाममुंचता एकैकंपरिवर्धयता तावद्रंतव्यं, यावदष्टसप्तत्यधिकदिनशतमाना सर्वोत्कृष्टा अष्टसप्ततिशतमाना स्थापना अस्यामष्टसप्ततिप्रमाणानि स्थापनास्थानानि, कारणं प्रागुक्तमनुसर्त्तव्यं, एवमुत्तरोत्तरारोपणास्थानसंक्रांतावंतिममंतिमं स्थानं परिहरता तावद्रंतव्यं, यावदेकोनाशीत्यधिकशततमायामारोपणायामेकैव जघन्या एकदिना स्थापनेति, इह एकैकस्मिन् स्थापनास्थाने आरोपणा जघन्या मध्यमा उत्कृष्टा च प्रतिपादिता, ततःसांप्रतमुत्कृष्टारोपणापरिज्ञानार्थमाह ।।

[भा. ३६१] जा ठवणा उद्दिट्ठा, छम्मासा ऊणिया भवे ताए ।
आरोवण उक्कोसा तीसे ठवणाए नायव्वा ।।

**वृ-** षण्णां मासानामशीतदिवसशतं भवति, तत् स्थापयित्वा या स्थापना उद्दिष्टेति, यस्याः स्थापनायाः उत्कृष्टा आरोपण ज्ञातुमिष्टा सा उद्दिष्टेत्यभिधीयते, उद्दिष्टा ईप्सिता, इत्यनर्थांतरं तया षण्मासाः षण्मासदिवसा ऊनकाः क्रियंते, किमुक्तं भवति तामुद्दिष्टां स्थापनां षण्मासदिवसेभ्यो अशीत्यधिकशतप्रमाणेभ्यः शोधयेत्, ततो यच्छेषभवतिष्ठते, ततस्याः ईप्सितायाः स्थापनाया उत्कृष्टा आरोपणा भवति ज्ञातव्या० ।। यथा विंशतिदिनायाः स्थापनाया उत्कृष्टा आरोपणा ज्ञातुमिष्टा, ततो विंशतिरशीत्यधिकशतात् षण्मासदिवससंख्याभूतात् शोध्यते, जातं षष्ट्यधिकं शतं, एषा विंशिकायाः स्थापनाया उत्कृष्टा आरोपणा, ततः परमारोपणाया असंभवात्, विंशत्या सह षण्णां मासानां परिपूर्णानां भावात्, षण्मासाधिकस्य च प्रायश्चित्तस्यादानात् ।। तथा पंचविंशतिदिनायाः किलोत्कृष्टा आरोपणा

ज्ञातुमिष्टा ततोऽशीत्यधिकशतात् पंचविंशतिः शोध्यते जातं पंचपंचाशदधिकं शतं एषा पंचविंशदिनायाः स्थापनाया उत्कृष्टा आरोपणा, एवं सर्वत्र भावनीयं, सांप्रतमारोपणास्थाने उत्कृष्टस्थापनापरिज्ञानार्थमाह -

**[भा.३६२]** आरोवणा उद्दिट्ठा, छम्मासा ऊणागा भवे ताए ।
आरोवणाए तीसे, ठवणा उक्कोसिया होइ ।।

**वृ-** आरोवणा उद्दिठा या आरोपणा उद्दिष्टा स्थापना किल ज्ञातुमिष्टेतिभावः, तथा षण्मासा ऊनकाः क्रियन्ते, सा षण्मासदिवसेभ्यः शोध्यते इत्यर्थः, ततो यच्छेषमवतिष्ठते, ततस्या ईप्सिताया आरोपणाया उत्कृष्टा स्थापना भवति, यथा पंचदशदिनायाः आरोपणाया उत्कृष्टा स्थापना ज्ञातुमिष्टा, ततः पंचदश अशीत्यधिकशतादपनीयंते, जातं पंचषष्ठ्यधिकं शतं तावत्प्रमाण पंचदशदिनाया, आरोपणाया उत्कृष्टा स्थापना भवति, तथा विंशतिदिनाया आरोपणाया उत्कृष्टा स्थापना किल ज्ञातुमिष्टेति, विंशतिरशीत्यधिकशतादपनीयते, जातं षष्ठ्यधिकशतं एतावती विंशतिदिनाया आरोपणाया उत्कृष्टा स्थापना एवं सर्वत्रापि भावनीयं, सांप्रतं प्रथमे स्थाने कियंति स्थापनास्थानानि कियंत्यारोपणास्थानानि कियंतो वा स्थापनारोपणास्थानानां संवेधतः संयोगा इत्येतत्प्ररूपणार्थमाह -

**[भा.३६३]** तीसं ठवणाठाणा तीसं आरोवणाए ठाणाइं ।
ठवणाणं संवेहो चत्तारिसयाउ पन्नठा ।।

**वृ-** प्रथम स्थाने त्रिंशत् स्थापनास्थानानि, त्रिंशच्चारोपणायाः स्थानानि, एतच्च प्रागेवानेकशो भावितमिति न भूयो भाव्यते, ठवणाणमित्यादि स्थापनानामारोपणाभिः सह संवेधाः संयोगाः सर्वसंख्यया: चत्वारि शतानि पंचषष्ठानि भवंति; तथाहि प्रथमे विंशतिदिनरूपे स्थापनास्थाने त्रिंशदारोपणास्थानानि, द्वितीये पंचविंशतिदिनरूपे एकोनत्रिंशत् तृतीयेऽष्टाविंशतिरेवमेकैकरूपहान्या तावद्वक्तव्यं, यावत् पंचषष्टिदिनशतरूपे त्रिंशत्तमे स्थापनास्थाने एकमारोपणास्थानमेतानि च सर्वाण्यप्येकत्र लिखितानि, यथोक्तसंख्याकानि भवंति; स्थापनाग्रहणं चारोपणापि गृह्यते; अनयोः परस्परसंवेधात्, तत एतदपि द्रष्टव्यमारोपणास्थानानां स्थापनाभिः सह संवेधाः, सर्वसंख्या चत्वारि शतानि पंचषष्टीनि भवंति; तथाहि प्रथमे पंचदशदिनरूपे आरोपणास्थाने त्रिंशत्स्थापनास्थानानि, द्वितीये विंशतिदिनरूपे एकोनत्रिंशत्, तृतीयेऽष्टाविंशतिरेवमेकैकरूपहान्या तावत् वक्तव्यं यावत् षष्टिदिनशतप्रमाणे त्रिंशत्तमे आरोपणास्थाने एकविंशतिदिनं स्थापनास्थानमेतच्च सर्वं प्रागेव सप्रपंचं भावितमेतानि च सर्वाण्यप्येकत्र मिलितानि यथोक्तसंख्याकानि भवंति, यथोक्तसंवेधसंख्या-परिज्ञानार्थमेव करणगाथामाह ।

**[भा.३६४]** गच्छुत्तरसंवग्गो, उत्तरहीनंमि पक्खिवे आइं ।
अंतिमधनमादिजुयं, गच्छद्धगुनं तु सव्वधनं ।।

**वृ-** इह यद्यपि प्रथमे स्थाने त्रिंशदारोपणास्थानानि, द्वितीये एकोनत्रिंशत् तृतीये अष्टाविंशतिरिति क्रमस्तस्तथापि संकलनायां यथोत्तरमंका निवेश्यंते, इत्येकद्वित्र्यादिक्रमः, तत्र गच्छः त्रिंशत् त्रिंशतोऽकस्थानानां भावादुत्तरमेकं, एकोत्तरया वृद्धेर्भावात्, आदिरप्येकं सर्वांकस्थानानामादावेकस्य भावात् गच्छस्य त्रिंशत् उत्तरेण एकेन संवर्गो गुणनं, गच्छोत्तरसंवर्गस्तस्मिन् किमुक्तं भवति; त्रिंशदेकेन

गुण्यते, एकेन च गुणितं तदेव भवतीति जाता त्रिंशदेव, तत्र उत्तरहीणमिति उत्तरेणैकेन हीनं, तस्मिन् कृते एकेन हीना त्रिंशत् क्रियते इत्यर्थः, जाताएकोनत्रिंशत् ततः प्रक्षिपेदादिममेकं जाता भूयस्त्रिंशत् एतदंतिमधनमंतिमे अंकस्थाने परिमाणमेतत्, आदिना एकेन युतं क्रियते, जाता एकत्रिंशत् गच्छस्त्रिंशत् तस्यार्धं पंचदश तैः सार्द्धं एकत्रिंशता गुण्यते, जातानि सर्वधानां चत्वारि शतानि पंचपष्ट्यधिकानि अथवाऽयमन्यो गणितप्रकारः -

**[भा.३६५]** दो रासीउ ठविज्जा, रूवं पुन पक्खिवाहि एगत्तो ।
अन्नाय वइ अद्धं तेन गुन जाण संकलियं ।।

**वृ-** राशिर्गच्छ इत्यर्थांतरं, ततो द्वौ राशी स्थापयेत्, किमुक्तं भवति ? द्वौवारावुपर्यधोभागेन त्रिंशतं स्थापयेत् ततः एकत एकस्मिन् राशौ रूपं पुनः प्रक्षिपेत् जातः स एकत्रिंशत् यतश्च यस्माद्राशेरर्धमात्मानं ददाति तस्यार्धं गृह्यते, तत्रेह त्रिंशदर्धमर्पयति तेनैकत्रिंशदिति, त्रिंशतोर्धं पंचदशगृह्यन्ते, तेन इतरो राशिरेकत्रिंशल्लक्षणो गुण्यते, गुणिते च सति यत् जायते, तज्जानीहि, संकलितं सर्वसंवेधसंकलनं तच्च चत्वारि शतानि पंचपष्ठानि, इह चत्वारि स्थापनास्थानानि चत्वारि चारोपणास्थानानि तत्र कस्मिन् स्थापनास्थाने कियंति स्थापनापदानि कस्मिन्नारोपणास्थाने कियंत्यारोपणापदानीत्येतत् परिज्ञानाय करणमाह -

**[भा.३६६]** आसीया दिवससया, दिवसा पढमाण ठवणरुवणाणं ।
सो हि उत्तरभइए ठाणादुराहंपि रूवजुया ।।

**वृ-** षण्णां मासानामशीतं दिवसशतं भवति, तस्मादशीतात् दिवसशतात् प्रथमयोः स्थापनारोपणयोर्ये दिवसास्तान् शोधयेत्, शोधयित्वा च यत्र यदुत्तरा वृद्धिस्तत्र तदुत्तरं तत्राद्येषु त्रिषु स्थापनास्थानेषु त्रिषु चारोपणास्थानेषु पंचानां पंचोत्तरा वृद्धिरिति, तत्रोत्तरं पंचचरिमे स्थापनास्थाने चरिमे चारोपणास्थाने पदानामेकोत्तरा वृद्धिरिति, तत्रोत्तरमेकः, ततस्तेनोत्तरेण भक्ते सति यदागच्छति, तावंति रूपयुतानि द्वयोरपि स्थापनारोपणयोः स्थानानि, एप गाथार्थः, भावार्थस्त्वयं पट्सु मासेषु किल दिवसानामशीतं शतमित्यशीतं शतं ध्रियते ।। ततः प्रथमे स्थाने प्रथमायाः स्थापनाया दिनानि विंशति प्रथमाया आरोपणायाः पंचदशेत्युभयमीलने जाता पंचत्रिंशत् सा शोध्यते, जातं पंचचत्वारिंशतं, तत उत्तरेण पंचलक्षणेन भागो ह्रियते, लब्धा एकोनत्रिंशत् । सा रूपयुता क्रियते, प्रथमस्थापनारोपणयोः प्रथमत एव शोधित्वात्, जाता त्रिंशत्, एतावंति प्रथम स्थाने स्थापनापदानि, एतावंत्येव चारोपणापदानि, तथा द्वितीये स्थाने प्रथमस्थापनाया दिवसा पंचदश प्रथमारोपणायाः पंच उभयेपां मीलने जाता विंशतिः सा अशीतिशताच्छोध्यते, जातं पष्ठं शतं, तस्योत्तरेण पंचकलक्षणेन भागो ह्रियते, लब्धा द्वात्रिंशत् रूपयुता क्रियते, जाता त्रयस्त्रिंशत्, एतावंति द्वितीये स्थाने स्थापनापदान्येतावंत्येव चारोपणापदानि, तृतीये स्थाने प्रथमस्थापनाया दिवसाः पंच, प्रथमारोपणाया अपि पंच उभयमीलने जाता दश, ते अशीतात् शतात् अपनीयंते, जातं सप्ततिशतं, ।। तस्योत्तरेण पंचकलक्षणेन भागो ह्रियते, लब्धा चतुस्त्रिंशत् सा रूपयुता क्रियते, जाता पंचत्रिंशत् एतावंति तृतीये स्थाने स्थापनापदान्येतावंत्येव चारोपणापदानि, चतुर्थे स्थाने प्रथम स्थापनाया एकं दिनं प्रथमारोपणाया अपि चैकं उभयमीलने जाते द्वे दिने, ते अशीतात् शतात् शोध्यते, जातमष्टसप्ततं शतं ।। तस्योत्तरेण एककलक्षणेन भागो ह्रियते, लब्धमष्टसप्ततं शतं तद्रूपयुतं क्रियते, जातमेकोनाशीतिशतमेतावंति चतुर्थे स्थाने स्थापनापदानि

एतावंत्येव चारोपणापदानि उत्तरभइए इत्युक्तं तत्र कस्मिन् स्थाने किमुत्तरमित्युत्तरविभागकरणार्थं माह-

**[भा.३६७]** ठवणा रुवणाण तिण्हं उत्तरं तु पंच पंच विन्नेया ।
एगुत्तरिया एगा सव्वावि हवंति अट्ठेव ।।

**वृ-** तिसृणामाद्यानां स्थापनानां तिसृणामाद्यानामारोपणानां च पदचेतानामुत्तरं पंच पंच विज्ञेयाः तिसृष्वपि पदानां यथोत्तरं पंचोत्तरवृद्धया प्रवर्धमानत्वात्, एका चतुर्थी आरोपण एकोत्तरवृद्धया प्रवर्धमाना ततस्तत्रोत्तरमेकं जानीयात्, सर्वसंख्य या च सर्वा अपि स्थापनारोपणा अष्टौ भवंति, चतस्रः स्थापनाश्चतस्र आरोपणा इत्यर्थः ।। संप्रति करणवशात् यल्लब्धं पदपरिमाणं तत् दर्शयति ।।

**[भा.३६८]** तीसा तेत्तीसावि य पणतीसा अउनसीयसयमेव ।
एए ठवणाण पया, एवइया चेव रुवणाणं ।।

**वृ-** एतानि च तिसृणामपि स्थापनानां यथाक्रमं पदानि तद्यथा, प्रथमायास्त्रिंशत् द्वितीयायास्त्रयस्त्रिंशत्, तृतीयायाः पंचत्रिंशत्, चतुर्थ्या एकोनाशीतं शतं, एतावंत्येव चतसृणामप्यारोपणानां यथाक्रमं पदानि तद्यथा प्रथमायास्त्रिंशत् द्वितीयस्याः त्रयस्त्रिंशत् तृतीयस्याः पंचत्रिंशत् चतुर्थ्या एकोनाशीतं शतमिति, अथ का स्थापना का आरोपणा च कतिषु मासेषु प्रतिसेवितेषु द्रष्टव्येत्येतत्परिज्ञानार्थमाह -

**[भा.३६९]** ठवणारोवणा दिवसे माणाउ विसोहइत्तु जं सेसं ।
इच्छियरुवणाए भए असुज्झमाणे खिवइ ज्झोसं ।।

**वृ-** मानात् पण्णां मासानां दिवसपरिमाणादशीत्यधिकशतरूपात् विवक्षितायाः स्थापनाया विवक्षितायाश्चारोपणाया ये दिवसास्तान् विशोधयेत्, विशोध्य च यच्छेषमुपलभ्यते, तत् ईप्सितया अधिकृतया यस्या दिवसाः पूर्वं विशोधितास्तया इत्यर्थः ।। आरोपणयाभजेद् भागं हियात भागे च हते यदि राशिर्निर्लेपः शुध्यति, ततोन किमपि प्रक्षिप्यते, केवलं सा आरोपणा कृत्स्नभागहरणात् कृत्स्नेति व्यवह्रियते, ।। यदि पुनर्निर्लेपो न शुद्धयति, ततः क्षिपति झोषां यस्मिन् प्रक्षिप्ते समो भागहारो भवति, स राशिः समकरणो झोष उक्तंच, झोसित्ति वा समकरणत्ति वा एगठं ।। सा च आरोपणा अकृत्स्नभागहरणात् अकृत्स्नेति व्यवहर्त्तव्या, तथाच यथोक्तस्वरूपमेव झोषमुपदर्शयति ।

**[भा.३७०]** जेत्तियमेत्तेणं जो, सुद्धं भागं पयच्छती रासी ।।
तत्तियमेत्तं पक्खिव अकसिणरुवणाए झोसग्गं ।।

**वृ-** यावन्मात्रेण प्रक्षिप्तेन सोऽधिकृतराशिः शुद्धं निर्लेपं भागं प्रयच्छति, तावन्मात्रं प्रक्षिप, एतत् अकृत्स्ना, आरोपणाया उक्तशब्दार्थाझोषाग्रं झोषपरिमाणं; यथा केनापि पृष्टं, विंशिका स्थापना पाक्षिकी चारोपणा कतिभिर्मासैः प्रतिसेवितैर्निष्पन्ना ? उच्यते, त्रयोदशभिर्मासैः; कथमेतदवसीयते, इति चेदुच्यते, इह पण्णां मासानामशीतं दिवसशतमित्यशीतं शतं ध्रियते ततो विंशिकायाः स्थापनाया विंशतिदिनानि पाक्षिक्याश्चारोपणायाः पंचदशदिनानि शोध्यंते, ठवणारोवणादिवसे माणाइ विसोहइ त्तु इति वचनात्, शेषं जातं, पंचचत्वारिंशं शतं इच्छियरुवणाए भइए इति वचनात् अधिकृतया पंचदशदिनया आरोपणाया भागो ह्रियते, तत्र चोपरितनो राशिः शुद्धं भागं न प्रयच्छति, पंचसु प्रक्षिप्तेषु प्रयच्छतीति पंचपरिमाणोऽत्र झोषः प्रक्षिप्यते, ततो भागे हृते लब्धा दशमासाः तथा दिवसाः पंचहि भइया दुरूवहीणाउ ते भवे मासा इति वक्ष्यमाणवचनात् ।। स्थापनादिवसानां विंशतेः पंचभिर्भागो ह्रियते,

लब्धाश्चत्वारस्ते द्विरूपहीनाः क्रियंते, स्थितौ द्वौ मासौ स्थापनायाः तथा पंचदशदिनाया आरोपणायाः पंचभिर्भागो ह्रियते, लब्धास्त्रयस्ते द्विरूपहीनाः कृता जात एको लब्ध आरोपणाया एको मासः, तेन यदि वा प्रथमेयमारोपणेति लब्धा मासा दश एकेन गुण्यंते जाता दशैव एकेन गुणितं, तदेव भवतीति न्यायात्, ततो द्वौ स्थापना पंचविंशतिदिना चारोपणा कतिभिर्मासैः प्रतिसेवितैर्निष्पन्ना ? उच्यते, त्रयोविंशतिभिर्मासैस्तथाहि स्थापनादिवसा विंशतिरारोपणादिवसाः पंचविंशतिरेतेमिलिताः पंचचत्वारिंशत् ते षण्मासदिवसेभ्योऽशीतिशतसंख्येभ्यः शोध्यंते, जातं शेषं पंचत्रिंशत्शतं, ततोऽधिकृतया पंचविंशतिदिनया आरोपणया तस्य भागो ह्रियते, तत्रोपरितनो राशिः शुद्धं भागं न प्रयच्छति, पंचदशसु च प्रक्षिप्तेषु प्रयच्छतीति पंचदशपरिमाणोऽत्र झोषः प्रक्षिप्यते, लब्धाः षण्मासाः, तथाधिकृतारोपणायाः पंचभिर्भागो ह्रियते, लब्धा पंच, ते द्विरूपहीनाः क्रियंते, जातास्त्रयः एतावंतश्चारोपणाया मासा यदि चेयं तृतीयारोपणेति तिण्हंपि गुणसु लद्धं इच्छियरूवणाए जइमासा इति वक्ष्यमाणवचनात् ते षण्मासास्त्रिभिर्गुण्यंते, जाता अष्टादश द्वौ स्थापनामासौ त्रयश्चारोपणामासा इति, सर्वसंख्यया त्रयोविंशतिमासाः अथवा अन्यथा झोषपरिमाणं कथयति -

**[भा. ३७१]** ठवणा दिवसे माना विसोहइत्ताण भयह रूवणाए ।।
जो छेयं सविसेसो अकसिणरुवणाए सो झोसो ।।

**वृ-** मानात् षण्मासदिवसपरिमाणात् अशीतिशतात् स्थापनादिवसात् अधिकृतस्थापनावासरान् विशोधय, विशोध्य च यच्छेषमवतिष्ठते, तदारोपणया अधिकृतारोपणादिवसैर्भज, भागहारं कुर्यात्, भागे च हृते यः छेदांशानां विश्लेषः इह विश्लेषे कृते सति यदवतिष्ठते, तदपि विश्लेषतो जातत्वात् विश्लेषः, स तावत्प्रमाणोऽकृत्स्नारोपणायां झोषः, यथा षण्मासदिवसपरिमाणभूतात् अशीतिशतात् विंशिकायाः स्थापनायाः दिवसा विंशतिरिति, ततो विंशतिःशोध्यंते जातं षष्ट्यधिकं शतं ।। ततः पाक्षिक्यामारोपणायां संचयमासा ज्ञातुमिष्टा इति, पंचदशभिर्भागो ह्रियते, स्थिताः शेषा दश अधस्ताच्छेदः पंचदश, तेभ्यो दश विश्लिष्यंते, स्थिताः पंच आगतंपंचदशिक्यामकृत्स्नारोपणायां पंचको झोषः, तथा अशीतिशतात् स्थापनादिवसा विंशतिः शोध्यंते, जातं षष्टंशतं ।। ततः पंचविंशतिदिनाया आरोपणायाः संचयमासा ज्ञातुमिष्टा इति, पंचविंशत्या भागो ह्रियते, तथा शेषा । दश छेदोऽधस्तात् पंचविंशतिस्तस्या दश विश्लिष्यंते, स्थिताः पंचदश आगतं पंच विंशतिदिनायामारोपणायां पक्षो झोषः, एवं सर्वत्र भावनीयं ।

**[भा. ३७२]** जत्थ पुन देइ सुद्धं, भागं आरोवणाउ सा कसिणा ।।
दोण्हंपि गुणसु लद्धं इच्छियरुवणाए जइ मासा ।।

**वृ-** यस्यां पुनरारोपणायामुपरितनो राशिः शुद्धं भागं प्रयच्छति, न किंचित् पश्चादस्यावतिष्ठते, इति भावः सा आरोपणा कृत्स्ना भागहरणात् कृत्स्नेति प्रतिपत्तव्या, यथा विंशतिदिना, तथाहि केनापि पृष्टं विंशिका स्थापना विंशिका चारोपणा कतिभिर्मासैः प्रतिसेवितैर्निष्पन्ना ? उच्यते, अष्टादशभिर्मासैः, कथमेतदवसेयमिति चेत् ? उच्यते, षण्णां मासानामशीतं दिवसशतं, तेभ्यो विंशतिर्दिनानि, स्थापनाया विंशतिर्दिनान्यारोपणायाः शोध्यंते, जातं शेषं चत्वारिंशतं, तत इच्छियरुवणाए भए इति वचनात्, विंशिकया आरोपणया भागो ह्रियते, भागे च हृते उपरितनो राशिर्निर्लेपः, शुद्ध एषा कृत्स्नारोपणा लब्धाः सप्तमासाः ततो दोण्हंपि गुणसुलद्धं इच्छियरुवणाए जइ मासा इति, वक्ष्यमाणवचनात् इयमारोपणा

प्रागुक्तक्रमेण द्वाभ्यां मासाभ्यां निष्पन्नेति सप्तमासा द्वाभ्यां गुण्यंते, जाताश्चतुर्दशमासाः, ततो द्वौस्थापनामासौ चारोपणामासाविति समुदिताश्चत्वारः ते चतुर्दशसु प्रक्षिप्यंते, आगतं विंशिका स्थापना विंशिका चारोपणा अष्टादशभिर्मासैर्निष्पन्नेति, दोण्हंतु इत्यादि द्वयोरपि आरोपणायाः कृत्स्नाकृत्स्न-योर्लब्धुमीप्सिताया आरोपणाया यतिमासा यतिभिर्मासैरीप्सितारोपणा निष्पन्नेति यावत् तातिभिर्गुणय, यद्येकेन मासेन निष्पन्ना तत एकेन गुणाय, अथ द्वाभ्यां मासाभ्यां निष्पन्ना तर्हि द्विकेनाप्यथ त्रिभिस्ततस्त्रिभिरित्यादि, अथवा द्वयोरप्यारोपणयोः कृत्स्नाकृत्स्नयोर्लब्धं, यतिमासास्तत ईप्सितया आरोपणया गुणय, यदिप्रथमा तत एकेन गुणयते, अथ द्वितीया ततो द्वाभ्यामथ तृतीया ततस्त्रिभिरित्यादि, एतच्च प्रागपि भावितं, तदेवमशीतिशतात् स्थापनारोपणादिवसेषु शोधितेषु यच्छेषं तद्वक्तव्यतोक्ता, संप्रति स्थापनारोपणादिवसेभ्यो यथा मासा आगच्छंति मासेभ्यो वा दिवसास्तथा प्रतिपादयति -

**[भा. ३७३]** दिवसा पंचहिं भइया दुरूवहीणाउ ते भवे मासा ॥
मासा दुरूवसहिया पंचगुणा ते भवे दिवसा ॥

**वृ-** स्थापनाया आरोपणाया वा दिवसाः पंचभिर्भज्यंते, पंचभिस्तेषां भागो ह्रियते इति भावः, ततो भागे हृते लब्धास्ते द्विरूपहीनाः क्रियंते, ततो रूपद्वयं स्फेट्यते इति भावः, रूपद्विक वा स्फेटिते यदवशिष्यते, ते भवेयुर्मासा, यथा विंशिकायाः स्थापनाया दिवसा विंशति स्तेषां पंचभिर्भागो ह्रियते, लब्धाश्चत्वारस्ते द्विरूपहीनाः क्रियंते, स्थितौ द्वौ, आगतं विंशिका स्थापना द्वाभ्यां मासाभ्यां निष्पन्ना, तथा पाक्षिक्या आरोपणाया दिनानि पंचदश तेषां पंचभिर्भागहरणं लब्धास्त्रयस्ते द्विरूपहीनाः क्रियंते, स्थित एक आगतं पाक्षिकी आरोपणा एकेन मासेन निष्पन्ना, विंशिकारोपणा विंशिका स्थापना च द्विमासनिष्पन्ना भावनीया, तृतीयायाः पंचविंशतिदिनाया आरोपणायाः दिवसाः पंचविंशतिस्तेषां पंचभिर्भागहारो, लब्धाः पंच ते द्विरूपहीनाः कृताः स्थितास्त्रयः, आगतं पंचविंशतिदिना, तृतीयारोपणा त्रिभिर्मासैर्निष्पना एवं सर्वत्र भावनीयं, मासा दूरुवसहिया इत्यादि, यतिमासाः स्थापनायामारोपणायां वाधिकृतकरणवशाल्लब्धास्ते दिवसा नयनाय द्विरूपसहिताः क्रियंते, तत पंचगुणास्ततो भवेयु यथोक्ता दिवसाः, यथा विंशिकायाः स्थापनाया द्वौ मासौ तौ द्विरूपसहितौ क्रियेते, जाताश्चत्वारस्ते पंचभिर्गुण्यंते, आगतं विंशिकायाः स्थापनाया विंशतिर्दिनानि तथा पाक्षिक्या आरोपणाया एको मासः, स द्विरूपसहितः क्रियते, जातास्त्रय स्ते पंचभिर्गुण्यते, आगतं पाक्षिक्या आरोपणायाः पंचदश दिनानि तथा पंचविंशतिदिनाया आरोपणायास्त्रयो मासास्ते द्विरूपयुताः क्रियंते, जाताः पंच ते पंचभिर्गुण्यंते, आगतं पंचविंशतिर्दिनानि एवं सर्वत्र भावनीयं, तदेवं करणान्यभिधायोपसंहारमाह,

**[भा. ३७४]** ठवणारोवणसहिया संचयमासा हवंति एवइया ॥
कत्तो किं गहियं तिय ठवणामासे ततो सोहे ॥

**वृ-** पूर्व ठवणारोवणदिवसे माणाउ विसोहइत्तु इत्यादि करणवशात् ये लब्धा मासास्तेऽनंतरोक्त-करणवशादानीता ये स्थापनारोपणा मासा स्तत्सहिता क्रियंते, ततः शिष्येभ्यः एवं प्ररूपय, अस्यां स्थापनायामस्यां चारोपणायामेतावंतः संचयमासाः, सर्वप्रायश्चित्तसंकलनमासा भवंति, तदेवं यतिभि-र्मासैः प्रतिसेवितैर्या स्थापना आरोपणा च निष्पन्ना, तदेतत् प्रतिपादितमधुना तस्यां तस्यां स्थापनाया-मारोपणायां संचयमासानां मध्येकुतो मासात् किं गृहीतमिति प्रतिपादनार्थमाह, कत्तो इत्यादि - शिष्यः

पृच्छति, तस्यां तस्यां स्थापनायामारोपणायां च संचयमासानां मध्ये कुतो मासात् किं गृहीतमत्र सूरिः करणमाह, ठवणामासे ततो सोहे, ततः संचयमाससंख्यातः स्थापनामासान् शोधयेत् शोधिते च सति

[भा.३७५] दिवसेहिं जइहिं मासो निप्फन्नो हवई सव्व रुवाणं ।।
तइहिं गुणियाउ मासा, ठवणदिनजुया उ छम्मासा ।।

वृ- सर्वासामारोपणानां यतिभिर्दिवसैर्मासो भवति, निष्पन्नस्ततिभिर्गुणितास्ते मासाः कर्तव्याः, पुनः स्थापनादिनयुक्तास्ततस्ते षण्मासा भवंति, यथा प्रथमायामारोपणायां त्रयोदश संचयमासास्तेभ्यः स्थापनामासौ द्वौ शोधितो, स्थिताः पश्चादेकादश, अत्रारोपणायामेको मासः, स च पंचदशभिर्दिनैर्निष्पन्न इति, ते एकादश पंचदशभिर्गुण्यंते, जातं पंचषष्टंशतं, ततो विंशतिर्दिवसाः स्थापनासत्काः प्रक्षिप्यंते, जातं पंचाशीतं शतं पंचझोष इति ते त्यक्ता जाताः षण्मासाः आगतं द्वाभ्यां स्थापनीकृताभ्यां मासाभ्यां दश दश दिनानि गृहीतानि, शेषेभ्यस्त्वेकादशभ्यः पंचदश पंच दिनानि, केवलं तन्मध्यात्पंचझोषः कृतः पंचदिनानि त्यक्तानीति भावः, झोषशब्दस्य तत्त्वतस्त्यागवचित्वादत एव च यान्यमूनि पंचदिनानि त्यक्तानि, तान्येव प्राक्राशिसमकरणार्थं प्रक्षिप्तानीति समकरणप्रक्षेपणीयो राशिर्झोषशब्देनोक्तः, एवं सर्वत्र झोषभावना भावनीया, तथा विंशिकायां स्थापनायां विंशिकायां चारोपणायामष्टादश किल संचयमासास्तेभ्यो द्वौ स्थापनामासौ शोधितो जाताः षोडश, अत्र विंशतिदिनारोपणा द्विमासेत्येकैको मासो दशभिर्दिनैर्निष्पन्नस्ततस्ते षोडश दशभिर्गुण्यंते, जातं षष्टं शतं ।। ततः स्थापनादिवसा विंशतिः प्रक्षिप्यंते, जातमशीतं शतं आगतमत्र द्वाभ्यां स्थापनामासाभ्यां दश दश वासरा गृहीताः शेषेभ्योपि षोडशभ्यो मात्रतो दश दशेति तथा विंशिकायां स्थापनायां पंचविंशिकायां चारोपणायां त्रयोविंशतिः संचयमासास्तेभ्यो द्वौ स्थापनामासौ शोधितो, जाता पश्चादेकविंशतिः, पंचविंशतिदिना चारोपणा त्रिभिर्मासैर्निष्पन्नेत्येकैको मासः, स त्रिभागैरष्टभिर्दिनैर्निष्पन्नस्तत एकविंशतिरष्टभिर्गुणिता, जातमष्टषष्टं शतं त्रिभागगुणिते च लब्धाः सप्त तेपितत्र प्रक्षिप्यंते, जातं पंचसप्ततं शतं; तत्र विंशतिः स्थापनादिवसाः प्रक्षिप्यंते, जातं पंचनवतं शतं तत्र पंचदश दिनानि झोष इति तान्यपनीयंते, जातमशीतं शतमागतमत्र द्वाभ्यां स्थापनीकृताभ्यां मासाभ्यांदश दश रात्रिंदिवानि गृहीतानि, शेषेभ्यस्त्वेकविंशतिमासेभ्यो मात्रतः सत्रिभागान्यष्टावष्टौ रात्रिंदिवानि, केवलं तत्रापि पंचदश दिनानि झोषीकृतानीति, तदेवं स्थापनातः शेषमासेभ्यो मात्रतो यत् गृहीतं, तत्प्रतिपादितमधुना शेषमासेभ्यो यत् येभ्योविशेषतो गृहीतं तत् प्रतिपादनार्थं करणमाह -

[भा.३७६] ठवणाई जइ मासा, तइभागं तं करे ति पंचगुणं ।।
सेसंच पंचगुणियं ठवणादिवसा जुया दिवसा ।।

वृ- स्थापनामासेषु शोधितेषु यच्छेषमवतिष्ठते, तत् आरोपणायां यतिमासास्ततिभागं तावत्संख्याकभागं करोति, कृत्वा चाद्यभागं त्रिपंचगुणं पंचदशगुणं करोति, शेषं तु समस्तमपि पंचगुणं एतच्चैवं द्रष्टव्यं, पाक्षिक्यादिष्वारोपणासु यदिपुनरेकदिना द्विदिना यावच्चतुर्दशदिना आरोपणा तदा यतिदिना आरोपणा ततिगुणं कुर्यात्, ततस्ते दिवसा स्थापनादिवसयुताः क्रियंते, ततो दिवसाः षण्मासदिवसा भवंति, तद्यथा प्रथमासो स्थापनायां प्रथमायां चारोपणायां त्रयोदश संचयमासाः तेभ्यो द्वौ स्थापनामासौ शोधितो जाता एकादश, अन्ये तु ब्रुवते, अत्रायं वृद्धसंप्रदायः यदेकस्मात् मासात् निष्पन्ना आरोपणा, ततः प्रतिसेवितमासेभ्यः स्थापनाया आरोपणायाश्च मासाः शोधयितव्याः अथ

द्व्यादिमासे निष्पन्नारोपणा ततः प्रति सेवितमासेभ्यः स्थापनामासा एव शोध्यंते, नारोपणामासा इति ततः तन्मतेन द्वौ स्थापनामासावेकश्चारोपणामास इति त्रयः संचयमासेभ्यः त्रयोदशभ्यः शोध्यंते, जाता दशेति । तत्र स्वमतं अधिकृतारोपणा एकमासनिष्पन्नेति एकादश भागेन क्रियंते, एकभागकृतं च तत्तथारूपमेव भवतीति जाताः समुदिता एव ते एकादश, ततः तिपंच गुणितमिति वचनात् पंचदशभिर्गुण्यंते, जातं पंचषष्टं शतं ।। तत्र स्थापना दिवसाः विंशति प्रक्षिप्ता जातं पंचाशीतं शतं ततः पंच रात्रिदिवान्यत्र झोषीकृतानीति तान्यपसार्यंते, जातमशीतं शतं, मतांतरेण तु ते दशमासा एक भागीकृताः पंचदशभिर्गुण्यंते, जातं पंचाशं शतं । ततः स्थापना दिवसा विंशति रारोपणा दिवसाः पंचदश प्रक्षिप्यंते, जातं पंचाशीतं शतं ।। पंच दिनानि झोष इति तानि ततोऽपनीयंते, जातमशीतं दिवसशतमागतं, द्वाभ्यां स्थापनीकृताभ्यां मासाभ्यां दश दश दिनानि गृहीतानि, शेषेभ्यस्त्वेकादशमासेभ्य पंचदश पंचदश दिनानि यावत् पंच दिनानि झोषीकृत्यानि तथा विंशिकायां स्थापनायां विंशिकायां चारोपणायामष्टादश संचयमासास्तेभ्यो द्वौ स्थापनामासावपनीतौ, जाताः षोडश, ततोऽत्रारोपणा द्वाभ्यां मासाभ्यां निष्पन्नेति कृत्वा ते षोडश द्वाभ्यां भागाभ्यां क्रियंते, एकतोऽप्यष्टावुपरितोऽप्यष्टावधः तत्रोपरितनमाद्यभागं तिपंचगुणमिति वचनात् पंचदशभिर्गुणयेत्, जातं विंशं शतं ।। अधस्तनास्त्वष्टौ सेसं च पंचगुणियमिति वचनतः पंचभिर्गुण्यंते, जातं चत्वारिंशत् ।। उभयमिलिते जातं षष्टं शतं ।।

अत्र स्थापनामासाभ्यां दश दश रात्रिदिवानि गृहीतानि, अष्टाभ्यो मासेभ्यः पंचदश पंचदशान्येभ्यस्त्वष्टाभ्यः पंच पंचेति तथा विंशिकायां स्थापनायां पंचविंशिकायां चारोपणायां त्रयोविंशतिः संचयमासास्तेभ्यो द्वौ स्थापनामासौ शोधितौ जाताः पश्चादेकविंशतिस्त्रारोपणा त्रिभिर्मासैर्निष्पन्नेति कृत्वा ते एकविंशतिः संचयमासास्त्रिभागाः क्रियंते, जातास्त्रयः सप्तकाः पुंजाः ततः प्रथमे सप्ततिपंचगुणमिति वचनात् पंचदशभिर्गुण्यंते, जातं पंचोत्तरशतं तत्र पक्षो झोष इति पंचदश शोध्यंते, जाता नवतिः शेषौ च द्वौ भागौ सप्तकौ शेषं च पंचगुणमिति वचनात्, प्रत्येकं पंचभिर्गुण्यंते, जाता उभयत्र प्रत्येकं पंचत्रिंशत् उभयमीलने जाताः सप्ततिः सा पूर्वराशौ प्रक्षिप्ता जातं षष्ट्यधिकं शतं अत्र विंशतिः स्थापनादिनाः प्रक्षिप्ता जातमशीतं शतमागतमत्र द्वाभ्यां स्थापपनीकृताभ्यां मासाभ्यां दश दश वासरा गृहीताः सप्तभ्यो मासेभ्यः पंचदश चतुर्दशभ्यो मासेभ्यः पंच पंच पंचदश वासराश्च झोषीकृता इति एवं सर्वत्र भावनीयं, तदेवं या स्थापना आरोपणा च यतिभिर्मासैः प्रतिसेविते निष्पन्ना यस्यां च स्थापनायामारोपणायां च संचयमासानां मध्ये यतो मासात् यत् गृहीतं तदेतत् सर्वं प्रतिपादित मधुना यत्स्थापनाया आरोपणायाश्च मासानयनाय करणमुक्तं, दिवसा पंचहिं भइया इत्यादि तत् प्रथमस्थाने एवं सर्वात्मना व्यापि न द्वितीयादिषु स्थाने तेषु हि क्वचित्तदप्यस्ति, क्वचिदन्यथापि ततस्तत्रोभयं विवक्षुः प्रथमतस्तावदेव करणमाह -

**[भा. ३७७]** दिवसा पंचहिं भइया, दुरूवहीना य ते भवे मासा ।।
मासा दुरूवसहिया पंचगुणा ते भवे दिवसा ।।

**वृ.** अस्या व्याख्या पूर्ववत् ।

**[भा. ३७८]** जत्थ य दुरूवहीनं न होज्ज भागं च पंचहि न दिज्जा ।
तहिं ठवणरूवणा मासो एगो उ ते चेव ।।

**वृ-** यत्र पुनः स्थापनासु आरोपणासु च पंचदिनादिकासु पंचभिभगि हृते यल्लब्धं तत् द्विरूपहीनं भवेत्,

पंचदिनादिकासु नवदिन पर्यंतासु द्वायोरेव रूपयोरसंभवात्, दशादिनासु चतुर्दशदिन पर्यंतासु द्विहीनरूपतायां शून्यतापत्तेः, यदिवा यत्सु स्थापनास्वारोपणासु चैकदिनादिषु चतुर्दिनपर्यंतासु पंचभिर्भागमुपरितनो राशिर्न दद्यात् स्तोकत्वात्, तत्र तासु स्थापनास्वारोपणासु चैको मासो द्रष्टव्यः ।। दिनाउ ते चेवत्ति - दिनान्यपि तान्येव यान्युपात्तानि न पुनर्मासंख्यां द्विरूपसहितां कृत्वा पंचभिश्च गुणयित्वा दिनान्यानेतव्यानीति भावः, अथ कियंतो दिवसाः स्थापनायामारोपणायां च प्रागुक्तकरणमंतरेणैव मेवैकस्मान्मासात् प्रतिपत्तव्याः ? तत्र आह -

**[भा.३७९]** एकादीया दिवसा नायव्वा जाव होंति चउद्दसओ ।
एकातो मासातो निष्फन्ना परतो दुगहीना ।।

**वृ-** एकस्मान्मासात् निष्पन्ना दिवसा एकादयो ज्ञातव्या, यावत्त चतुर्दश भवंति, किमुक्तं भवति, एकदिनादिकाश्चतुर्दशदिनपर्यंताः स्थापना आरोपणाश्च दिवसा पंचहिं भइया, इत्यादि करणप्रयोगमंतरेणैवमेव एकस्मान् मासात्प्रतिपत्तव्या इति, परतो दुगहीणत्ति, परतः पंचदशदिनादिकासु स्थापनास्वारोपणासु च दुगहीणत्ति पदैकदेशे पदसमुदायोपचारात् दिवसा, पंचहिं भइया, दुरूवहीना इति करणतो मासाः प्रत्येतव्याः, तत्रैव प्रकारांतरमाह -

**[भा.३८०]** जइ वा रूवहीने कयंमि होज्जा जहिं तु आगासं ।।
तत्थवि एगो मासो, दिवसो ते चेव दोण्हंपि ।।

**वृ-** यदिवेति प्रकारांतरेण तच्च प्रकारांतरमिदं पूर्वं दशादिनादिकासु चतुर्दशदिनपर्यंतासु द्विरूपहीनतया एवासंभवत एको मास उक्तो, यदिवा भवतु तत्र द्विरूपहीनता तथाप्येतत् करणवशात्तत्रैको मासः प्रतिपत्तव्य इति, तदेव करणमाह ।। दुरूवहीने इत्यादि यत्र यासु दशदिनादिकासु चतुर्दशदिनपर्यंतासु पंचभिर्भागे हृते यल्लब्धं, तस्मिन् द्विरूपहीने कृते सति भवेदाकाशं शून्यं, तत्राप्येको मासो द्रष्टव्यः, दिवसा अपि द्वयानां स्थापनारोपणानां त एव ज्ञेया, ये उपात्ता नतु प्रागुक्तकरणवशतो मासंख्यात आनेतव्या इति भावः । अथ यत्रोत्कृष्टा स्थापनारोपणा वा तत्र स्थापनारोपणाभ्यामेव षण्णां मासानां परिपूर्णभवनात् ठवणारोवणदिवसे माणाउ विसोहइत्तु जं सेसमित्यादि करणं न प्रवर्त्तते, तदप्रवृत्तौ च कथं संचयमाससंकलनं कर्त्तव्य तत आह -

**[भा.३८१]** उक्कोसा रुवणाणं मासा जं होंति करणनिद्दिट्ठा ।।
ते ठवणामासजुया संचयमासाउ सव्वासिं ।।

**वृ-** सर्वासामुत्कृष्टानामारोपणानां ये मासा भवंति, करणनिर्दिष्टाः दिवसा पंचहिं भइया इत्यादिना आरोपणाकरणेन निर्दिष्टास्ते स्थापनामासयुताः स्थापनायां ये करणवशतो लब्धा मासाः संयुक्ताः संचयमासा द्रष्टव्याः, यथा विंशिकायां स्थापनायां पष्टदिनशतायामारोपणायां द्वात्रिंशन्मासाः तथाहि स्थापनायां द्वौ मासौ लब्धौ, तौ च प्रागेव भावितौ, आरोपणायाः पंचभिर्भागो ह्रियते, लब्धा द्वात्रिंशत् सा द्विरूपहीना क्रियते जाता त्रिंशत् स्थापनामासौ तत्र प्रक्षिप्तावागतं द्वात्रिंशत् प्रतिसेविता मासाः, अथात्र कुतो मासात् किं गृहीतं ? उच्यते, द्वौ द्वात्रिंशतः संचयमासेभ्यः स्थापनामासौ शोध्येते, स्थिताः पश्चात् त्रिंशन्मासाः तत इयमारोपणा त्रिंशता मासैर्निष्पन्ना त्रिंशत्तमा चेति त्रिंशद्भागाः क्रियंते, आगत एकैकस्मिन् भागे एकैको मासः, तत्र प्रथमो भागः पंचदशभिर्गुण्यते, जाता पंचदश, शेषा एकोनत्रिंशत् पंचभिर्गुण्यते, जातं पंचचत्वारिंशतृशतं उभयमीलने षष्टं शतं । तत्र स्थापनादिवसा विंशतिः प्रक्षिप्ता

जातमशीतंशतमागतमत्र द्वाभ्यां स्थापनीकृताभ्यां मासाभ्यां दश दश दिवसा गृहीताः, एकस्मात् पंचदश शेषेभ्यः पंच पंचेति एवं सर्वत्र भावनीयं तत्र प्रथमं स्थाने यावती प्रथमा स्थापना यावती च प्रथमारोपणा यावंतश्च तत्र संचयमासास्तदेतत्प्रतिपादयति-

[भा.३८२] पढमा ठवणा वीसा, पढमा आरोवणा भवे पक्खो ।।
तेरसहिं मासेहिं पंचय राइंदिया झोसो ।।

वृ- प्रथम स्थाने प्रथमा स्थापना विंशिका विंशतिदिना प्रथमा चारोपणा भवति, पक्षः पक्षप्रमाणा एषा स्थापनारोपणा च त्रयोदशभिर्मासैर्निष्पन्ना, तथा एषारोपणा अकृत्स्ना ततोऽवश्यमस्यां झोषोऽभूदिति, झोषपरिमाणमाह, पंचरात्रिंदिवानि झोषः एतद्विषया भावना प्रागेव कृता, न भूयोपि क्रियते, अधुना प्रथम स्थाने एव प्रथमस्थापनायां द्वितीयारोपणायाश्च यावद्दिना भवंति, यावद्भिश्च संचयमासैरेषा स्थापनारोपणा च निष्पन्ना तदेतत् प्रतिपादयति -

[भा.३८३] पढमा ठवणा वीसा, बिइया आरोवणा भवे वीसा ।
अठारसमासेहिं एसा पढमा भवे कसिणा ।।

वृ- प्रथम स्थाने प्रथमा स्थापना विंशतिर्द्वितीया आरोपणा भवेद्विंशिका विंशतिदिना एषा स्थापना आरोपणा च निष्पन्ना अष्टादशभिर्मासैरेषा चारोपणा कृत्स्नभागहरणात् कृत्स्ना प्रथमा स सर्वासां कृत्स्नारोपणानामिति, एवद्विषयापि भावना प्रागेवकृतेति न भूयः क्रियते, संप्रति प्रथम स्थाने प्रथमायां स्थापनायां यावद्दिना तृतीया आरोपणा यतिभिश्च संचयमासैस्ते उभे निष्पन्ने तत् प्रतिपादयति -

[भा.३८४] पढमा ठवणा वीसा तइया आरोवणा उ पणवीसा ।।
तेवीसा मासेहिं पक्खोउ तहिं भवे झोसो ।।

वृ- प्रथम स्थाने एव प्रथमा स्थापना विंशतिदिना तृतीया चारोपणा पंचविंशतिदिना एषा प्रथमा स्थापना तृतीया चारोपणा त्रयोविंशतिभिर्मासैर्निष्पन्ना, इयमप्यकृत्स्नारोपणा इति झोसोऽत्राभूत् अतो झोपपरिमाणमाह पक्षस्तत्र तस्यां तृतीयायामारोपणायां झोष इति विशेषः स्थापनारोपणानां दिन परिमाणं संचयपरिमाणं चेति, देशपरिमाणमाह -

[भा.३८५] एवं एया गमिया, गाहातो होंति आनुपुव्वीए ।।
एएणा कमेण भवे चत्तारिसयाउ पणट्ठा ।।

वृ- एवमुक्तेन प्रकारेण एषोऽनंतरोदितो दिनमानादिलक्षणो गमः प्रकारो यासां ता एतद्गमिका गाथा भवंत्यानुपूर्व्यानुक्रमेणाऽन्यापि ज्ञातव्या, यथा –

पढमा ठवणा वीसा चोत्था आरोवणा भवे तीसा ।
छव्वीसा मासेहिं वीसइराइंदिया झोषो ।।

इत्यादि; अथानेन प्रकारेण कियत्संख्याका गाथा अनुगंतव्याः तत आह, एएणंत्यादि एतेन क्रमेण चत्वारिशतानि पंचषष्टानि गाथानां भवंति, इयमत्र भावना विंशिकां स्थापनाममुंचता पंच पंच आरोपणायां प्रक्षिप्ताः तावन्नेतव्यं, यावदंतिमा आरोपणा एतासु संचयमासानयनाय प्रागुक्तकरणलक्षणं प्रयोक्तव्यं, तद्यथा अशीतात् दिवसशतात् प्राक् स्थापनारोपणादिवसाः शोधयितव्याः, ततो यच्छेषमवतिष्ठते, तस्याधिकृताया आरोपणाया भागो हर्तव्यस्तत्र यदि शुद्धं भागं न प्रयच्छति, ततो यावता प्रक्षिप्तेन परिपूर्णो भागः शुद्ध्यति, तावन्मात्रो झोषः प्रक्षेपणीयः, तत्प्रक्षेपानंतरं च भागे हृते ये

लब्धा मासास्ते यतिभिर्मासैरारोपणा निष्पन्नाः तत्तिभिर्गुणयितव्यास्ततः स्थापनारोपणमासा अपि तत्र प्रक्षिप्यंते, ततः समागच्छति प्रतिसेवितमासपरिमाणमिति कृत्वामासात् किं गृहीतमित्यस्यामपि जिज्ञासायां संचयमासेभ्यः प्रथमं स्थापनामासाः शोधयितव्यास्ततः शेषा ये मासास्तिष्ठंति, यतिभिर्मासैर्निष्पन्ना यत्संख्याका या आरोपणा तावंतो भागाः कर्त्तव्याः, तत्र प्रथमो भागः पंचदशभिर्गुणयितव्यः, शेषाः सर्वे पंचभिर्गुणनीयाः एते सर्वेऽपि दिवसा एकत्र मीलयितव्याः, यश्चझोषः प्रक्षिप्तः स शोधयितव्यः ततः स्थापनादिवसाः प्रक्षेपणीयाः, आगतफलमप्येवं कथनीयं, यतिभिर्दिवसैः स्थापनामासो निष्पन्नस्ततिदिवसाः स्थापनीकृतेभ्यो मासेभ्यः प्रत्येकं गृहीता यावंतश्च मासाः पंचदशभिर्गुणितास्तावदभ्यः पंचदशशेषेभ्यः पंच पंचेति एवं पंचविंशिकायामपि स्थापनायां पाक्षिक्यादय आरोपणा द्रष्टव्याः, यावच्चरमा पंचपंचाशद्दिनशतमाना त्रिंशत्कायां स्थापनायां पाक्षिक्यादय आरोपणा यावत् पंचाशद्दिनशतमाना एवं तावत् यावच्चरमायां स्थापनायां पंचषष्टि दिनशतमानायां पाक्षिक्येकारोपणा एतासु च पूर्वभणितेन प्रकारेण चत्वारिंशतानि पंचपष्टाधिकानि गाथानां कर्त्तव्यानीति प्रथमं स्थापनारोपणास्थानं समाप्तं ।।

संप्रति द्वितीयं स्थापनारोपणास्थानं प्रतिपिपादयिषुरिदमाह -

**[भा. ३८६]** तेत्तिसं ठवणपया तेत्तीसारोवणाए ठाणाइं;
ठवणाणं संवेहो, पंचेव सयाउ एगट्ठा ।।

**वृ-** द्वितीये स्थाने त्रयस्त्रिंशत् स्थापनापदानि, त्रयस्त्रिंशच्चारोपणायाः स्थापनापदानि एतच्च प्रागेव भावितमिति न भूयो भाव्यते, संप्रति संवेधपरिमाणमाह, ठवणाणमित्यादि स्थापनानामारोपणाभिः सह संवेधाः सर्वसंख्यया भवंति, पंचशतान्येकपष्टानि एकषष्ट्यधिकानि ।। कथमेतदवसातव्यमिति चेदुच्यते, इह संवेधसंख्यानयनाय प्रागुक्ता गच्छोत्तरसंवर्गे इत्यादि करणगाथा गच्छश्चात्र त्रयस्त्रिंशत् तथा च गच्छानयनाय पूर्वसूरिप्रदर्शितेयं करणगाथा ।

**[भा. ३८७]** ठवणारोवणविजुया छम्मासा पंचभागभइया जे ।।
रूवजुया ठवणपया तिसु चरिमा देसभागेक्को ।।

**वृ-** अस्या व्याख्या-पण्णां मासानां समाहारः पण्मासं, तस्मात् पण्मासात् स्थापनारोपणदिव सैर्विरहितात् तदनंतरं पंचभागसक्तात् ये लब्धास्ते रूपयुताः संतो यावंतो भवंति, एतावंति स्थापनापदानि एतावान् तत्र गच्छ इति भावः, एतच्च त्रिष्वाद्येषु स्थानेषु द्रष्टव्यं, चरमेपरिस्थाने एप एवादेशः, केवलमेकेन भागो हर्त्तव्यः, एष गाथाक्षरार्थः भावार्थस्त्वयं प्रथमे स्थाने प्रथमा स्थापना विंशतिदिना प्रथमा चारोपणा पंचदशदिना उभयमीलने दिनानि पंचत्रिंशत्तानि षण्मासदिवसेभ्योऽशीतिशतप्रमाणेभ्यः शोध्यंते, जातं पंचचत्वारिंशंशतं, तस्य पंचभिर्भागो ह्रियते, लब्धा एकोनत्रिंशत् सा रूपयुता क्रियते, जाता त्रिंशत् आगतं प्रथमे स्थाने त्रिंशत् गच्छः, तथा द्वितीये स्थाने प्रथमा स्थापना पंचदशदिना प्रथमा चारोपणा पंचदिना उभयमीलनं जातानि दिनानि विंशतिः, षण्मासदिवसेभ्यो अशीतशतप्रमाणेभ्यः शोध्यंते, जातं षष्टिशतं ।। तस्य पंचभिर्भागो ह्रियते, लब्धा द्वात्रिंशत् सा रूपयुता क्रियते, जाता त्रयस्त्रिंशत्, आगतं द्वितीये स्थाने त्रयस्त्रिंशत् गच्छः, उत्तरमेकः आदिरप्येकः अत्र भावना प्रागुक्तानुसर्त्तव्याः, तत्र गच्छस्त्रयस्त्रिंशत् एकेन गुण्यते, एकेन गुणितं तदेव भवतीति जातास्त्रयस्त्रिंशदेवसा उत्तरेणैकेन हीना क्रियते, जाता द्वात्रिंशत् तत्रादिमेकलक्षणं प्रक्षिपेत् जाता भूयस्त्रयस्त्रिंशत् एतदंतिमं धनं,

एतच्चांतिमं धनमादिना एककेन युतं क्रियते, जाता चतुस्त्रिंशत्, सा गच्छार्धेन गुणयितव्या, तत्र गच्छराशेर्विषमत्वात् परिपूर्णमर्धं न लभ्यते इति चतुस्त्रिंशदर्धं क्रियते, जाता सप्तदश, ते गच्छेन परिपूर्णेन गुण्यंते, जातानि पंचशतान्येकषष्टानि ।। संप्रत्यस्मिन् द्वितीये स्थाने कतिदिना प्रथमा स्थापना कतिदिना च प्रथमारोपणा सा च प्रथमा स्थापनारोपणा च कतिभिः संचयमासैः प्रतिसेवितैर्निष्पन्नेत्येतत् प्रतिपादयति -

**[भा.३८८]** पढमा ठवणा पक्खो, पढमा आरोवणा भवे पंच ।
चोत्तीसाए मासेहिं एसा पढमा भवे कसिणा ।।

**वृ-** द्वितीये स्थाने प्रथमा स्थापना पक्षः, पक्षप्रमाणा प्रथमारोपणा भवति, पंच पंच पंचदिना एषा स्थापनारोपणा च निष्पन्ना चतुस्त्रिंशता मासैः प्रतिसेवितैः कथमिति चेदुच्यते, षण्मासानां दिवसाः अशीतं शतं तस्मात् ठवणारोवणादिवसे मानाउ विसोहइत्तुमिति वचनात् स्थापना दिवसाः पंचदश आरोपणा दिवसाः पंच उभयमीलने विंशतिः शोध्यंते, जातं षष्ठं शतं ।। ततोऽधिकृतया पंचकलक्षणया आरोपणया भागो ह्रियते, लब्धा द्वात्रिंशन्मासाः राशिश्चात्र निर्लेपः शुद्ध इत्येषारोपणा कृत्स्ना, तथा चाह, एषा आरोपणा भवति कृत्स्ना कृत्स्नभागहरणात् सा चान्यासां कृत्स्नारोपणानां प्रथमा स्थापनादिवसानां च मासानयनाय पंचभिर्भागो ह्रियते, लब्धास्त्रयः ते द्विरूपहीनाः क्रियंते, जात एककः आगत एको मासः आरोपणायामप्येको मासो लब्धः, जत्थ उ दुरूवहीनं न होज्ज इत्यादि वचनात्, ततः एकः स्थापनामास एक आरोपणामास इति द्वौ मासौ तौ पूर्वराशौ प्रक्षिप्येते, आगतं चतुस्त्रिंशन्मासाः प्रतिसेविताः अथ कुतो मासात् किं गृहीतं ? उच्यते, चतुस्त्रिंशतः प्रतिसेवितमासेभ्यः एकः स्थापनामासः शोध्यते, जातास्त्रयस्त्रिंशत् ते आरोपणया पंचदिनमानया भागं हृतं लब्धा इति पंचभिर्गुण्यंते, जातं पंचषष्टिशतं ।। तत्र स्थापनादिवसा पंचदश प्रक्षिप्ता जातमशीतं शतमागतमेकस्मात् स्थापनीकृतान्मासात् पंचदश दिनानि गृहीतानि, शेषेभ्यस्तु पंच पंचेति, अधुना द्वितीये स्थाने प्रथमायां स्थापनायां यावद्दिना द्वितीया आरोपणा यतिभिश्च संचयमासैः प्रतिसेवितैः प्रथमा स्थापना द्वितीया चारोपणा निष्पन्ना, तदेतत्प्रतिपादयति -

**[भा.३८९]** पढमा ठवणा पक्खो, बितीया आरोवणया भवे दसेउ ।
अट्ठारसमासेहिं पंचयराइंदिया झोसो ।।

**वृ-** द्वितीये स्थाने प्रथमा स्थापना पक्षो द्वितीया चारोपणा दशदशदिना भवति, एषा च स्थापना आरोपणा च अष्टादशमासैः प्रतिसेवितैर्निष्पन्ना, तथाहि अशीतात् दिनशतात् स्थापनादिवसाः पंचदश आरोपणादिवसा दश उभयमीलने पंचविंशतिः शोध्यंते, जातं पंचपञ्चाशतं शतं ।। ततोऽधिकृतया दशदिनया रोपणया भागो ह्रियते तत्र शुद्धो भागो न शुद्धयति, पंचसु प्रक्षिप्तेसु शुद्धयतीति, पंचकोऽत्र झोषः तथाचाह-पंचरात्रिंदिवानि झोष इति लब्धाः षोडशमासाः स्थापनायां च प्रागुक्तप्रकारेणैको मास आरोपणायास्तु दशदिनात्मिकायाः पंचभिर्भागो ह्रियते, लब्धौ द्वौ तौ रूपहीनौ कृतौ जातं शून्यं, लब्ध एको मासः, जइ वा दुरूवहीणे कयम्मि होज्जा जहिं तु आगासं, तत्थवि एगो मासो इति वचनात् तौ द्वावपि मासौ पूर्वराशौ प्रक्षिप्येते, आगतमष्टादश मासाः प्रतिसेविताः । अथ कुतो मासात् किं गृहीतं ? उच्यते षोडशमासेभ्यो दश दशरात्रिंदिवानि, पंच झोषीकृतानि स्थापनामासात् पंचदश आरोपणा-मासाद्दशकप्रत्यय इति उच्यते, षोडश दशभिर्गुणिता जातं षष्टं शतं ।। पंच झोषीकृतास्ततः शोध्यंते,

जातं पंचपंचाशं शतं, ततः स्थापनादिवसाः पंचदश आरोपणादिवसा दस उभयमीलने पंचविंशतिः प्रक्षिप्यंते जातमशीतं शतं ।

**[भा.३९०]** पढमा ठवणा पक्खो, तइया आरोवणा भवे पक्खो ।
बारसहिं मासेहिं एसा बिइया भवे कसिणा ॥

**वृ-** द्वितीये स्थाने प्रथमास्थापना पक्षस्तृतीया चारोपणा भवति पक्षः एषा स्थापना आरोपणा च द्वादशभिर्मासैर्निष्पन्ना, कथमवसीयते इति चेदुच्यते, अशीतात् दिवसशतात् स्थापनादिवसाः पंचदश आरोपणादिवसाश्च पंचदश उभयमीलने त्रिंशत् शोधिता जातं पंचाशं शतं ॥ ततोऽधिकृतया पंचदशदिनया आरोपणया भागो ह्रियते, लब्धा दशमासाः प्रागुक्तप्रकारेण चैकैकमासः स्थापनायां आरोपणायां मासमिति द्वौ मासौ तत्र प्रक्षिप्तौ, आगतं द्वादशमासैः प्रतिसेवितैर्निष्पन्ना, अथ कुतो मासात् किं गृहीतमुच्यते, एकैकस्मात् पंचदश वासराः तथाहि द्वादश मासाः, पंचदशभिर्गुणिता जातमशीतं शतमिति ।

**[भा.३९१]** एवं एया गमिया गाहाओ होंति आनुपुव्वीए ।
एएण कमेण भवे, पंचेव सयाउ एगट्ठा ॥

**वृ-** एवमुक्तप्रकारेण एतद्गमिका अनंतरोक्तप्रकारा गाथा आनुपूर्व्या क्रमेण भवंत्यन्या अपि ज्ञातव्याः, कियत्कियत् संख्याकास्ता एतेन क्रमेण ज्ञातव्या इत्याह एतेन क्रमेण भवंति, पंचशतान्येकपष्ठानि गाथानामिति, इयमत्र भावना पाक्षिकी स्थापनाममुंचता आरोपणायां च पंच पंच प्रक्षिपता तावन्नेतव्यं, यावत्त्रयस्त्रिंशत्तमा पंचपष्ठदिनशतमाना आरोपणा, ततो विंशतिदिनां स्थापनामुंचता पंचाहिकायामारोपणायां पंच पंच प्रक्षिपता तावन्नेतव्यं, यावत् द्वात्रिंशत्तमा पष्टदिनशतमाना आरोपणा, एवं स्थापनासु पंच पंच प्रक्षिपता आरोपणासु चैकैकं स्थानमुपरितनभागात् परिहरता तावन्नेतव्यं, यावद्गाथानां पंचशतान्येकपष्टानि भवंति, द्वितीयं स्थापनारोपणायां स्थानं समाप्तं, संप्रति तृतीयं स्थापनारोपणास्थानं प्रतिपादयन्निदमाह -

**[भा.३९२]** पणतीसं ठवणपया पणतीसा रोवणाइं ठाणाइं ।
ठवणाणं संवेहो छच्चेव सया भवे तीसा ॥

**वृ-** तृतीये स्थाने पंचत्रिंशत् स्थापनापदानि पंचत्रिंशदारोपणायाः स्थानानि पदानि एतदपि पूर्वमेव भावितं, संप्रति संवेधपरिमाणमाह- ठवणाणमित्यादि स्थापनानामारोपणाभिः सह संवेधाः सर्वसंख्यया भवंति, पट्शतानि त्रिंशानि ॥ एतानि च गच्छोत्तर संवर्गो इत्यादि करणवशादानेतव्यानि, तत्रगच्छः पंचत्रिंशत् कथमिति चेदुच्यते, ठवणारोवणदिवजुयाइत्यादि करणवशात् तथाहि अशीतात् शतात् पंच दिनानि प्रथमास्थापनायाः पंच दिनानि प्रथमारोपणाया उभयमीलने दश शोध्यंते, जातं सप्ततं शतं तस्य पंचभिर्भागो ह्रियते, लब्धा चतुस्त्रिंशत् सा रूपयुता क्रियते, आगतः पंचत्रिंशत् गच्छः उत्तरमेक आदिरप्येकः ततः पंचत्रिंशदेकेन गुण्यते, एकेन गुणितं तदेव भवतीति जाता पंचत्रिंशदेव सा उत्तरेणैकेन हीना क्रियते, जाता चतुस्त्रिंशत् तत्रादिमेकं प्रक्षिपेत् भूयोऽभवत्पंचत्रिंशत् एतदंतिमधनमंतिमेऽकस्थाने परिमाणं एतत् आदियुतं क्रियते, जाता पट्त्रिंशत् गच्छार्धेन गुणयितव्या, तत्र गच्छराशिर्विषमत्वात् परिपूर्णं अर्धं न ददातीति पट्त्रिंशदर्द्धीक्रियते जाता अष्टादश शतं गच्छेन परिपूर्णेन गुण्यते जातानि पट्शतानि त्रिंशदधिकानि, संप्रत्यस्मिन् तृतीये स्थाने कियद्दिना च प्रथमारोपणा सा च स्थापनारोपणा

च कियद्भिः संचयमासैः प्रतिसेवितैः निष्पन्नेत्येतदभिधित्सुराह -

[भा.३९३] पढमा ठवणा पंच उ, पढमा आरोवणा भवे पंच ।
छत्तीसा मासेहिं एसा पढमा भवे कसिणा ।।

वृ- तृतीये स्थाने प्रथमा स्थापना पंच पंचदिनप्रमाणा प्रथमा आरोपणा भवति पंच पंचदिना एषा स्थापना आरोपणा च निष्पन्ना षड्त्रिंशता मासैः प्रतिसेवितैः कथमिति चेदुच्यते, अशीतात् शतात् पंच स्थापनादिवसाः पंच आरोपणादिवसाः उभयमीलनं दश शोधिता जातं सप्ततं शतं एतस्य पंचदिनाया आरोपणाया भागो ह्रियते, लब्धाः चतुस्त्रिंशत् मासाः एकस्थापनायां पूर्वप्रकारेण मास एक आरोपणायामिति द्वौ मासौ तत्र प्रक्षिप्तौ जाताः षड्त्रिंशन्मासाः अथ कुतो मासात् किं गृहीतमुच्यते, प्रतिसेवितमासेभ्यः षट्त्रिंशदेकः स्थापनामासः शोधिते जाता पंचत्रिंशत् यद्येकद्वित्र्यादिना आरोपणा पंचदिना दशदिना वा ततस्तयैवारोपणया संचयमासा गुण्यंते, इति वचनादत्र पंचदिना रोपणेति पंचभिर्गुण्यंते जातं पंचसप्ततं शतं ।। स्थापनादिनाश्च पंच तत्रैव प्रक्षिप्ता जातमशीतं शतमागतमेकै-कस्मात् मासात् पंच पंच रात्रिंदिवानि गृहीतानि अत्र भागः शुद्धः पतित इति कृत्स्नेषारोपणा सर्वासां च कृत्स्नारोपणानामाद्येति । प्रथमा तथा चाह एसा पढमा भवे कसिणा-

[भा.३९४] पढमा ठवणा पंच उ, बिइया आरोवणा भवे दस उ ।
एगुणवीसमासेहिं, पंचहिं राइंदिया झोसो ।।

वृ- तृतीये स्थाने प्रथमा स्थापना पंचपंचदिना द्वितीया आरोपणा भवति दशदशदिना एषा प्रथमा स्थापना द्वितीया चारोपणा निष्पन्ना, एकोनविंशत्या मासैः प्रतिसेवितैः । तथाहि अशीतात् पंच स्थापनादिवसा दश आरोपणादिवसाः उभयमीलनं पंचदश शोध्यंते, जातं पंचषष्टं शतं ।। अस्य दशभिर्भागो ह्रियते, तत्र परिपूर्णो भागो न पततीति पंच रात्रिंदिवानि झोषः प्रक्षिप्यते तथाचाह - पंचराइंदिया झोसो, झोषे च प्रक्षिप्ते लब्धाः सप्तदश मासाः एकः स्थापनाया मास एक आरोपणाया इति द्वौ मासौ तत्र प्रक्षिप्तौ जाता एकोनविंशतिरागतमेकोनविंशत्या प्रतिसेवितैर्मासैर्निष्पन्नेति ।। अथ कुतो मासात् किं गृहीतमुच्यते, प्रतिसेवितमासेभ्य एकोनविंशतेरेकः स्थापनामासः शोधितो, जाता अष्टादश मासाः अत्र दशदिनारोपणेति दशभिर्गुण्यंते जातमशीतं शतं, पंच वासरा झोष इति पंच ततोऽपसारिता जातं पंचसप्ततं शतं, अत्र स्थापनादिवसाः पंच प्रक्षिप्ता जातमशीतं शतं आगतं, स्थापनीकृतात् मासात् पंच रात्रिंदिवानि गृहीतानि, पंच झोषीकृत्यशेषेभ्यो दश दश रात्रिंदिवानीति ।

[भा.३९५] पढमा ठवणा पंच उ तइया आरोवणा भवे पक्खो ।
तेरसहिं मासेहिं पंच उ राइंदिया झोसो ।।

वृ- तृतीये स्थाने प्रथमा स्थापना पंचपंचदिना, तृतीया चारोपणा भवति पक्षः, पक्षप्रमाणा एषा प्रथमा स्थापना, तृतीया चारोपणा त्रयोदशभिः प्रतिसेवितैर्मासैर्निष्पन्ना, तथाहि अशीतात् दिवसशतात् पंच स्थापनादिवसाः पंचदश आरोपणादिवसा, उभयमीलने विंशतिः शोध्यंते, जातं षष्टं शतं ।। तस्याधिकृतया पंचदशदिनया आरोपणया भागो ह्रियते, तत्र शुद्धो भागो न पततीति पंच झोषः प्रक्षिप्यते, तथा चाह, पंच उ राइंदिया झोसो झोषे च प्रक्षिप्ते लब्धा एकादश एकः स्थापनाया मासः, एक आरोपणाया इति द्वौ मासौ तत्र प्रक्षिप्ता वागतं त्रयोदशभिर्मासैः प्रतिसेवितैर्निष्पन्ना, अथ कुतो मासात् किं गृहीतमुच्यते, प्रतिसेवितमासेभ्यस्त्रयोदशभ्य एकः स्थापनामासः शोधितः स्थिताः पश्चात् द्वादश

आरोपणा एकमासनिष्पन्नत्येकभागीक्रियंते, आद्यश्च भागः पंचदशभिः किल गुणयितव्य इति, पंचदशभिस्ते द्वादशापि गुण्यंते, जातमशीतं शतं, पंच झोप इति ततोऽपनीयंते, जातं पंचसप्ततं शतं, तत्र पंच स्थापनादिवसाः प्रक्षिप्यंते, जातमशीतं शतमागतमत्र स्थापनीकृतान्मासात् पंच दिवसा गृहीताः शेषेभ्यस्तु द्वादशमासेभ्यः पंच झोपीकृत्य पंचदश पंचदशेति ।

**[भा. ३१६]** एवं एया गमिया गाहाओ होंति आनुपुव्वीए ।
एएण कमेण भवे, छच्चेव सयाइं तीसाइं ॥

**वृ-** एवमुक्तेन प्रकारेण एतद्गमिका अनंतरोदितगमा गाथा आनुपूर्व्या क्रमेणान्या अपि भवंति ज्ञातव्याः कियत्संख्याका इत्याह- एतेनानंतरोदितेन क्रमेण भवंति गाथानां षट्शतानि, किमुक्तं भवति, पंचदिनां स्थापनाममुंचतारोपणायां च यथोत्तरं पंच पंच प्रक्षिपता तावद् गंतव्यं, यावत् पंचत्रिंशत्तमा पंचसप्तत शतदिना आरोपणा पुनर्दशदिनां स्थापनां कृत्वा यथोक्तप्रकारेण तावन्नेयं यावच्चतुस्त्रिंशत्तमा सप्ततदिनशतारोपणा एवं स्थापनासु पंच पंच प्रक्षिपता आरोपणास्वेकैकमुपरितनं स्थानं हापयता तावन्नेयं यावत् गाथानां षट्शतानि त्रिंशदधिकानि भवंति, तृतीयं स्थापनारोपणास्थानं समाप्तः संप्रति चतुर्थं स्थापनारोपणास्थानं प्रतिपिपादयिषुरिदमाह -

**[भा. ३१७]** अउनासीयं ठवणा न सयं आरोवणावि तह चेव ।
सोलस चेव सहस्सा दसोत्तरसयं च संवेहो ॥

**वृ-** चतुर्थे स्थाने एकोनाशीतं स्थापनानां स्थापनापदानां शतं भवति, आरोपणाया अपि तथैव ज्ञातव्यं, किमुक्तं भवति, आरोपणानामपि पदानां शतमेकोनाशीतं भवतीति, एतच्च प्रागेव भावितं, संप्रति संवेधपरिमाणमाह, स्थापनानामारोपणाभिः सह संबंधे संयोगाः षोडश सहस्राणि दशोत्तरं शतं भवंतीति एव संख्याकाश्च संवेधा गच्छोत्तरसंवर्ग इत्यादि करणवशादानेतव्यः ॥ गच्छस्थात्र एकोनाशीतं शतं, तथाहि अशीतात् शतात् प्रथमस्थापना दिवस एकः प्रथमारोपणादिवस एक इत्युभयमीलने द्वौ शोधितौ, जातमष्टसप्ततं शतं तस्य चरमादसभागेको इति वचनादेकेन भागो ह्रियते, लब्धमष्टसप्ततमेव शतं तत्र रूपं प्रक्षिप्तं, जातमेकोनाशीतशतं उत्तरमेक आदिरप्येकस्तत्र गच्छ एकोनाशीतिशतलक्षण उत्तरेणैकेन गुण्यते, जातं तदेव एकोनाशीतं शतं तदेकेन हीनं क्रियते, जातमष्टसप्ततं शतं, तत्रादिमेकं प्रक्षिपेत्, भूयस्तदेवाभूदेकोनाशीतं शत मेतदंतिमधनं एतत् आदिना एकेन युतं क्रियते, जातमशीतं शतं गच्छराशिरत्र विषम इत्यस्यैवाशीतस्य शतस्यार्धं क्रियते जाता नवतिः, सा गच्छेन परिपूर्णेन एकोनाशीतशतप्रमाणेन गुण्यते, आगतं षोडश सहस्राणि शतं दशोत्तरमिति, अथास्मिन् चतुर्थे स्थाने कतिदिना प्रथमा स्थापना कतिदिना च प्रथमारोपणा कतिभिश्च सा प्रथमा स्थापना आरोपणा च प्रतिसेवितैर्मासैर्निष्पन्नेत्यत आह -

**[भा. ३१८]** पढमा ठवणा एक्को पढमा आरोवणा भवे एक्का ।
आसीया माससया एसा पढमा भवे कसिणा ॥

**वृ-** चतुर्थे स्थाने प्रथमा स्थापना एको दिवसः एकदिनप्रमाणा इत्यर्थः प्रथमा आरोपणा भवत्येकएकदिना, एषा स्थापना आरोपणा च अशीतादशीत्यधिकात् मास शतात् निष्पन्ना, तथाहि अशीतात् शतादेकः स्थापनादिवस एक आरोपणादिवस इति द्वौ शोधितौ जातमष्टसप्ततं शतं, तस्य एकदिनप्रमाणया भागो ह्रियते, लब्धमष्टसप्ततमेव शतं, एकः स्थापनामास एक आरोपणामास इति द्वौ

तत्र प्रक्षिप्तौ, लब्धमशीतं मासशतं, अथ कुतो मासात् किं गृहितमुच्यते, एकैकस्मात् मासात् एकको दिवसः, अत्र भागः शुद्धः पतित इति कृत्स्नारोपणा सा चान्यासां कृत्स्नारोपणानामाद्येति प्रथमा, तथा चाह ।। एसा पढमा भवे कसिणा ।।

[भा.३९९] पढमा ठवणा एक्को बिइया आरोवणा भवे दोन्नि ।
एगा नउअ मासेहिं एगोउ तहिं भवे झोसो ।।

वृ- चतुर्थे स्थाने प्रथमा स्थापना एकः एकवासरा द्वितीया आरोपणा भवति द्विदिने द्विदिनप्रमाणा, एषा स्थापना आरोपणा च निष्पन्ना एकनवतिमासैस्तथाहि अशातीत् शतात् एकस्थापनादिवसो द्वावारोपणादिवसौ उभयमीलने त्रयः शोध्यंते, जातं सप्तसप्ततं शतं, तस्याधिकृतया द्विदिनप्रमाणया आरोपणया भागो ह्रियते, तत्र भागः शुद्धो न पततीत्येको झोषः प्रक्षिप्यते, तथाचाह ।। एगोउतहिं भवेझोसो, ततो जातमष्टसप्ततं शतं, भागे हृते लब्धा एकोन नवतिस्तिः स्थापनामासः एक आरोपणामास इति द्वौ मासौ तत्र प्रक्षिप्तौ, आगता एकनवतिमासाः, अथ कुतो मासात् किं गृहीतमुच्यते, एकैन नवतिसंख्याकेभ्यः संचयमासेभ्यः एकः स्थापनामासः शोध्यते, जाताः पञ्चान्नवतिमासाः द्विदिना आरोपणेति द्वाभ्यां गुण्यंते, जातमशीतं शतं एको झोष इति स ततः शोध्यते, ततोऽभवदेकोनाशीतं शतं, तत्र स्थापनादिवस एकस्तत्र प्रक्षिप्तो, जातमशीतं शतमागतमेकस्मात् स्थापनीकृतात् मासात् एको दिवसो गृहीतः शेषेभ्यः एवं झोषीकृत्य द्वौ द्वौ दिवसाविति ।।

[भा.४००] पढमा ठवणा एक्को, तइया आरोवणा भवेतिन्नि ।
एगट्ठी मासेहिं, एगोउ तहिं भवे झोझो ।।

वृ- चतुर्थे स्थाने प्रथमा स्थापना एकः एकदिना तृतीया आरोपणा त्रीणि दिनानि एषा स्थापना आरोपणा च निष्पन्ना एकषष्ठिमासैस्तथाहि अशीतात् दिवसशतात् एकः स्थापनायाः दिवसस्त्रय आरोपणाया उभयमीलने चत्वारः शोध्यंते, जातं षट्सप्तत् शतं ।। तस्य त्रिभिर्भागो ह्रियते, आरोपणायास्त्रिदिननिष्पन्नत्वात् तत्र भागः शुद्धो न पततीत्येको झोषः प्रक्षिप्यते, जातं सप्तसप्ततं शतं भागे हृते लब्धा एकोनषष्ठिर्मासाः, एकः स्थापनाया मास, एक आरोपणाया मास इति द्वौ मासौ तत्र प्रक्षिप्तौ आगतमेकषष्ठिभिर्मासैः प्रतिसेवितैर्निष्पन्ना, अथ कुतो मासात् किं गृहीतमुच्यते - संचयमासेभ्यः एकषष्ठिसंख्याकेभ्यः एकः स्थापनामासः शोध्यते, जाता षष्ठिः, त्रिदिना अधिकृता आरोपणेति ते त्रिभिर्गुण्यते, जातमशीतं शतमेको झोष इत्येकस्ततोऽपनीतो जातमेकोनाशीतं शतमेकः स्थापनादिवसस्तत्र प्रक्षिप्तो जातमशीतं शत मागतमेकस्मात् स्थापनीकृतान्मासात् एकदिनं गृहीतं, शेषेभ्यः षष्ठिमासेभ्यः एकं दिनं झोषीकृत्य त्रीणि त्रीणि दिनानीति ।

[भा.४०१] एवं खलु गमियाणं गाहाणं होंति सोलस सहस्सा ।
सयमेगं च दसहियं, नायव्वं आणुपुव्वीए ।।

वृ- एवमुक्तेन प्रकारेण गमिकानामुक्तरूपगमोक्तानां गाथानामानुपूर्व्या क्रमेण खलु निश्चितं भवंति ज्ञातव्यानि षोडश सहस्राणि शतमेकं च दशाधिकमिति, एतदुक्तं भवति, एकदिनां स्थापनाममुंचता आरोपणायां यथोत्तरमेकैकमारोपयता तावन्नेयं यावदेकोनाशीतदिनशता चरमारोपणा द्विदिनादिष्वपि स्थापनास्वेकादिकारोपणादि तावत् ज्ञेया, यावत् स्वस्वचरमा आरोपणा, एवं षोडश सहस्राणि गाथानां शतमेकं च दशोत्तरं पूर्णीयमिति, एतासु च स्थापनारोपणासु मासकरणं कुर्वता एकादिषु चतुर्दिनपर्यंतासु

पंचभिभागमददानासु पंचदिनादिषु नवदिनपर्यंतासु प्रतिसेवनासु, दशदिनादिषु चतुर्दशदिनपर्यंतासु मूलादिकशुद्धौ जायमाने शून्ये मास एको गृहीतव्यः। एवं पंचदशदिनादिष्वप्येकोनविंशतिदिनपर्यंता-स्वेकोनविंशतिदिनादिषु चतुर्विंशतिदिनपर्यंतासु द्वौ मासावेवं सर्वत्र यावत् पंचकं न पूर्यते, तावत् पूर्व संख्याकान् मासान् ददता पंचके तु पूर्णे रूपमधिकं प्रक्षिपता भावनीयं, तदेवमुक्तं स्थापनासंचयद्वारमधुना राशिद्वारमाह-

**[भा.४०२]** असमाहि ठाणा खलु सबला य परीसहा य मोहंमि ।
पलितोवम सागरोवम परमाणु ततो असंखेज्जा ।।

**वृ-** एष प्रायश्चित्तराशिः कुत उत्पन्नः ? उच्यते, यानि खल्वसमाधिस्थानानि विंशतिः खलु शब्दः संभावने, स चैतत् संभावयति, असंख्यातानि देखलापुरुषभेदतोऽसमाधिस्थानानि, एवमेकविंशतिः सबलानि, द्वाविंशतिः परीषहाः, तथा मोहे मोहनीये कर्म्मणि येऽष्टाविंशतिर्भेदाः, अथवा मोहे मोहविषयाणि त्रिंशत्स्थानानि एतेभ्योऽसंयमस्थानेभ्य एष प्रायश्चित्तराशिरुत्पद्यते, भूयः शिष्यः पृच्छति, कियंति खलु तान्यसंयमस्थानानि ? उच्यते, पलितोवमेत्यादि पल्योपमे सागरोपमे यावंति वालाग्राणि तावंति न भवंति, किंतु व्यावहारिकपरमाणुमात्राणि यानि वालाग्राणां खंडानि तेभ्योऽसंख्येयानि, इयमत्र भावना, यावंति खलु पल्योपमे वालाग्राणि, तावंत्यसंयमस्थानानि भवंति नायमर्थः, यावंति सागरोपमे वालाग्राणि तावंति नायमर्थः समर्थः, यद्येवं तर्हि सागरोपमे यानि वालाग्राणि प्रत्येकमसंख्येयखंडानि क्रियंते, तानि च खंडानि सांव्यवहारिकपरमाणु तावंति भवंति, नायमप्यर्थः समर्थः, कियंति पुनस्तानि भवंति ? उच्यते, तेभ्योऽप्यसंख्येयगुणानि, अन्ये तु ब्रुवते, परमाणुमात्राणि खंडानि सूक्ष्मपरमाणुमात्राणि खंडानि, सूक्ष्मपरमाणुमात्राणि द्रष्टव्यानि, तदसम्यक् सूक्ष्मपरमाणवो हि तत्रानंताः, असंयमस्थानानि चोत्कर्षतोऽप्यसंख्येयलोकाकाशप्रदेशप्रमाणानीति; गतं राशिद्वारमधुना मानद्वारमाह-

**[भा.४०३]** बारस अठय छक्कग मानं भणियं जिनेहिं सोहिकरं ।
तेन परं जे मासा, सा हणंता परिसडंति ।।

**वृ-** मीयते परिछिद्यते वस्त्वनेनेति मानं, तत् द्विधा द्रव्ये, भावे च, तत्र द्रव्येषु प्रस्थकादिषु, भावतः पुनरिदं मानं प्रायश्चित्तमानं जिनैस्तीर्थकृद्भिस्त्रिविधं शोधिकरं भणितं, तद्यथा प्रथमतीर्थकरस्य द्वादश मासा मध्यमतीर्थकृतामष्टौ मासाः वर्धमानस्वामिनः षट्कं षण्मासाः इतोऽधिकं न दीयते, किन्तु बहुष्वपि प्रतिसेवितेषु मासेष्वेतावन्मात्रमेव, अत्र प्रस्थकदृष्टांतो यथा प्रस्थकेन मीयमानं धान्यं तावन्मीयते, यावत्प्रस्थकस्य शिखा परिपूर्णा भवति, ततः परमधिकमारोह्यमानमपि परिपतति, एवं षण्णां मासानामधिकं यद्यपि प्रतिसेवितं, तथापि तत् स्थापनारोपणप्रकारेण संहन्यमानं परिशटति, तथा चाह-तेनपरमित्यादि तत उक्तरूपात् षण्मासादिकात् मानात् परमित्यव्ययं परा ये मासास्ते स्थापनारोपणाप्रकारेणा संहन्यमानाः संघात्यमानाः परिशटंति, तावन्मात्रेणापि च प्रायश्चित्तप्रतिपत्तारः शुध्यंति, शुद्धस्वभावत्वात् भगवतां तीर्थकृतामाज्ञया सम्यगनुष्ठेया इति, संप्रति प्रभुद्वारमाह-

**[भा.४०४]** केवलमनपज्जव नाणिणो य तत्तो य ओहिनाण जिना; ।
चोद्दसदसनवपुव्वी, कप्पधर पकप्पधारीय ।।

**वृ-** केवलमनपज्जवनाणिणोत्ति ज्ञानिशब्दः प्रत्येकमभि संबध्यते, केवलज्ञानिनो मनपर्यायज्ञानिनश्च

ततस्तदनंतरमवधिज्ञानेन जिना अवधिज्ञानजिनाः, जिनशब्दो विशुद्धावधिप्रदर्शकः, विशुद्धावधिज्ञाना इत्यर्थः ।। ततश्चतुर्दशपूर्विणो, दशपूर्विणो नवपूर्विणश्च इहासतां नवपूर्विणः, न परिपूर्णनवपूर्वधराः, किंतु नवमस्य पूर्वस्य यत् तृतीयमाचारनामकं वस्तु तावन्मात्रधारिणोपि नवपूर्विणः, तथा कल्पधराः कल्पव्यवहारधारिणः प्रकल्पो निशीथाध्ययनं तद्धारिणः च शब्दोऽनुक्तसमुच्चयार्थः, तदेवानुक्तं च शब्देन सूचितं दर्शयति -

[भा.४०५] घेप्पंति चसद्देणं, निज्जुत्तीसुत्तपेढियधराय ।
आणाधारण जीए होंति पहुणो उ पच्छित्ते ।।

वृ- चशब्देन गृह्यंते निर्युक्तिसूत्रपीठिकाधराः, तत्र निर्युक्तिर्या भद्रबाहुस्वामिकृता, सूत्रपीठिका निशीथकल्पव्यवहारप्रथमपीठिका गाथारूपाः तथा आज्ञायां धारणे जीते च ये व्यवहारिण आज्ञाव्यवहारिणो धारणाव्यवहारिणो जीतव्यवहारिणश्च एते प्रायश्चित्तदाने प्रभवः, तदेवं गतं प्रभुद्वारमिदानीं कियंति सिद्धानि प्रायश्चित्तस्थानानीति द्वारावसरः, तत्र शिष्यः पृच्छति कियंति खलु प्रायश्चित्तानि ? आचार्य आह, ।। अर्थत अपरिमितानि, सूत्रतः पुनरिदं परिमाणं ।।

[भा.४०६] आनुग्घाइयमासाणं दो चेव सया हवंति बावन्ना ।
तिन्नि सया बत्तीसा होंति अउग्घाइयाणंपि ।।

[भा.४०७] पंचसया चुलसीया सव्वेसिं मासियाण बोधव्वा ।
तेन परं वोच्छामी चाउमासाण संखेवं ।।

वृ- अनुद्घातिता नाम गुरवः, उद्घातिता लघवः, निशीथनाम्नि अध्ययने प्रथमोद्देशके अनुद्घातिता गुरवो मासा अभिहितास्तेषामेकत्र संक्षिप्ता नाम द्वेशते द्वापंचाशद् द्विपंचाशदधिके भवतः, द्वितीयतृतीयचतुर्थपंचमोद्देशकेषु उद्घातिता मासा उक्तास्तेषामुद्घातितानां मासानामेकत्र संक्षिप्तानां त्रीणि शतानि द्वात्रिंशानि भवंति, एतेषां सर्वेषामप्युद्घातितमासानामनुद्घातितमासानां चैकत्र मीलने मासानां प्रायश्चित्तानां बोधव्यानि पंचशतानि चतुरशीतानि । तेन परमित्यादि अतः परं चातुर्मासिकानां संक्षेपं वक्ष्ये, प्रतिज्ञातमेव निर्वाहयति ।

[भा.४०८] छच्चसया चोयाला चाउमासाण होंति अनुग्घाया ।
सत्तसया चउवीसा चाउमासाण उग्घाया ।।

[भा.४०९] तेरसच अट्ठसट्ठा, चाउमासाण होंति सव्वेसिं ।
तेन परं वोच्छामी सव्वसमासेण संखेवं ।।

वृ- षष्ठसप्ताष्टमनवमदशमैकादशोद्देशकेषु अनुद्घातितानि चातुर्मासिकान्युक्तानि, एतेषामेकत्र संक्षिप्तानां भवंति षट्शतानिचतुश्चत्वारिंशानि ।। गाथायां होंति अनुग्घाया इत्यत्र षष्ठ्यर्थे प्रथमा प्राकृतत्वात् एवमुत्तरार्धेपि द्वादशत्रयोदशचतुर्दशपंचदशषोडशसप्तदशाष्टादशैकोनविंशतिमेष्वष्टसूद्देशकेषु उद्घातिता चतुर्मासिका उक्तास्तेषामेकत्र संक्षिप्तानां सप्तशतानि चतुर्विंशानि ।। उद्घातितानामनुद्घातितानां सर्वेषां चतुर्मासानामेकत्र मीलितानां भवंति त्रयोदशशतानि अष्टषष्ठानि ।। तेन परमित्यादि ततः परं सर्वेषां मासिकानां चातुर्मासिकानां च यः समासो मीलनं तेन संक्षेपं सर्वसंख्या संग्रहं वक्ष्ये, प्रतिज्ञातमेव निर्वाहयति ।।

[भा.४१०] नववसया य सहस्सं ट्ठाणाणं पडिवत्तिओ होंति ।
बावन्ना ठाणाइं सत्तहिं आरोवणा कसिणा ।।

वृ- स्थानानां मासादिप्रायश्चित्तस्थानानां प्रतिपत्तयः प्रतिपादनानि सहस्रं नवशतानि द्वापंचाशच्च स्थानानि ।। तथाहि भवंति सर्वाणि प्रागुक्तानि मासादिप्रायश्चित्तस्थानान्येकत्र मीलितान्येतावंतीति सप्ततिः पुनरारोपणा कृत्स्नाऽथ कोऽस्य सूत्रस्याभिसंबंध ? उच्यते, नन्वेष एवं संबंधः कियंति प्रायश्चित्तानि सिद्धानि कियत्पश्चाऽरोपणा जघन्या अजघन्योत्कृष्टास्तथा कृत्स्ना अकृत्स्नाच सिद्धास्तत्र प्रथमं स्थापनारोपणास्थाने एक जघन्या त्रिंशत् उत्कृष्टा एकैकस्यां स्थापनायां आरोपणाभिः सह संबंधे एकैकस्या उत्कृष्टाया लभ्यमानत्वात् अजघन्योत्कृष्टानां चत्वारिंशतानि चतुस्त्रिंशदधिकानि ।। द्वितीये स्थापनारोपणास्थानं एक जघन्या त्रयस्त्रिंशत् उत्कृष्टा अजघन्योत्कृष्टानां पंचशतानि सप्तविंशानि ।। तृतीये स्थापनारोपणास्थाने एका जघन्या पंचत्रिंशत् उत्कृष्टऽजघन्योत्कृष्टा पंचशतानि चतुर्णवतानि। चतुर्थे स्थापनारोपणास्थाने एका जघन्या एकोनाशीत शतमुत्कृष्टानां पंचदश सहस्राणि नवशतानि त्रिंशानि ।। अजघन्योत्कृष्टानां तथा प्रथमे स्थापनारोपणास्थाने सप्ततिरारोपणाः कृत्स्नाः कृत्स्नभागहारिण्य इत्यर्थः, झोषविरहिता इति यावत्, ताश्चेमाः -

[भा.४११] सव्वेसिं ठाणाणं, उक्कोसारोवणा भवे कसिणा ।
सेसा चत्ता कसिणा ता खलु नियमा अनुक्कोसा ।।

वृ- प्रथमं स्थापनारोपणास्थानं त्रिंशत् स्थानानि तेषां च सर्वेषामपि स्थानानामेतिमारोपणा उत्कृष्टा भवति, ताश्च सर्वसंख्यया त्रिंशत् एताश्च नियमतो झोषविरहिता इति कृत्स्नाः, शेषाश्चोत्कृष्टारोपणाव्यतिरिक्तानामारोपणानां मध्ये झोषविरहिततया कृत्स्नारोपणाश्चत्वारिंशत् ताश्च खलु नियमान्नियमेन अनुत्कृष्टा जघन्यामध्यमावाइत्यर्थ एता उत्कृष्टानां मीलिता जाताः सप्ततिः, अथ कास्ता अनुत्कृष्टाश्चत्वारिंशत् कृत्स्ना इत्यत आह -

[भा.४१२] वीसाए उव्वीसा चत्त असीयाय तिन्नि कसिणाओ ।
तीसाए पक्खपणवीस तीस, पन्नाय पन्नसयरी ।।

[भा.४१३] चत्ताए वीस पणतीस सत्तरी चेव तिन्नि कसिणाओ ।
पणयालाए पक्खो पणयाला चेव दो कसिणा ।।

[भा.४१४] पन्नाए पन्नठी पणपन्नाए य पन्नचीसा य ।
सट्ठि ठवणाए पक्खो वीसा तीसा य चत्ताय ।।

[भा.४१५] सयरीए पणपन्ना, तत्तो पन्नत्तरीए पक्ख पणतीसा ।
असतीए ठवणाए वीसा पणुवीस पन्ना सा ।।

[भा.४१६] नउईए पक्खतीसा पणयाला चेव तिन्नि कसिणाओ ।
सतीयाए वीस चत्ता पंचुत्तरि पक्ख पनवीसाऊ ।।

[भा.४१७] दसुत्तरसइयाए पनतीसा वीस उत्तरं पक्खो ।
वीस तीसा य तहा कसिणाओ तिन्नि बीए य ।।

[भा.४१८] तीसुत्तर पणुवीसा पनतीसं पक्खिया भवे कसिणा ।
चत्तला वीसाऊ, पन्नासं पक्खिया कसिणा ।।

वृ- विंशिकायां विंशतिदिनायां स्थापनायां विंशतिर्विंशतिदिना एवं एवं चत्वारिंशद्दिना अशीतिदिना च एतास्तिस्रोप्यारोपणाः कृत्स्नाः, । तथा त्रिंशति त्रिंशद्दिनायां स्थापनायामिमाः पंचारोपणाः कृत्स्नाः तद्यथा पक्षः पंचविंशतिस्त्रिंशत् पंचाशत् पंचसप्ततिश्च । तथा चत्वारिंशति स्थापनायामिमास्तिस्र आरोपणाः कृत्स्नास्तद्यथा विंशतिदिना पंचत्रिंशद्दिना सप्ततिदिना च । तथा पंचचत्वारिंशति स्थापनायामिमे द्वे कृत्स्ने आरोपणे तद्यथा पक्षः पक्षप्रमाणा पंचचत्वारिंशच्च पंचचत्वारिंशद्दिना च । पंचाशद्दिनायां स्थापनायां च एका पंचषष्ठिदिना कृत्स्ना आरोपणा । पंचपंचाशद्दिनायामप्येका पंचविंशतिः ।। षष्ठिदिनायां स्थापनायामारोपणाः कृत्स्नास्तिस्रस्तद्यथा पक्षो विंशतिस्त्रिंशत् अशीतिः। सप्ततिदिनायां स्थापनायामेका पंचपंचाशद्दिना कृत्स्नारोपणा ।। पंचसप्ततिदिनायां स्थापनायां द्वे कृत्स्ने आरोपणे पाक्षिकी पंचविंशद्दिना च ।। अशीतिदिनायां स्थापनायां च एका पंचषष्ठिदिना कृत्स्ना आरोपणा पंचपंचाशद्दिनायामप्येका पंचविंशतिः । षष्ठिदिनायां स्थापनायामारोपणाः कृत्स्नाश्चतस्रस्तद्यथा पक्षो विंशतिस्त्रिंशत् चत्वारिंशत् । सप्ततिदिनायां स्थापनायामेका पंचपंचाशद्दिना कृत्स्नारोपणा ।।

पंचसप्ततिदिनायां स्थापनायां द्वे कृत्स्ने आरोपणे पाक्षिकी पंचविंशद्दिना च ।। अशीतिदिनायां स्थापनायां तिस्रः कृत्स्ना आरोपणास्तद्यथा विंशतिः पंचविंशतिः पंचाशद्दिना च । नवतिदिनायां स्थापनायामिमास्तिस्रः । कृत्स्ना आरोपणाः पक्षस्त्रिंशत् पंचचत्वारिंशच्च । शतिकायां स्थापनायां द्वे कृत्स्ने आरोपणे विंशतिदिना चत्वारिंशद्दिना च । पंचोत्तरशतिकायां पुनः स्थापनायामिमे द्वे कृत्स्ने आरोपणे पाक्षिकी पंचविंशतिदिना च । दशोत्तरशतिकायां स्थापायामेका पंचत्रिंशत् कृत्स्नारोपणा । विंशत्युत्तरशतिकायां स्थापनायामेतास्तिस्रः कृत्स्ना आरोपणास्तद्यथा पाक्षिकी विंशतिदिना त्रिंशद्दिना च । त्रिंशदुत्तरशतिकायां स्थापनायामेका पंचविंशतिदिना कृत्स्ना आरोपणा । पंचत्रिंशदुत्तरशतिकायां स्थापनायामेका पाक्षिक्यारोपणा कृत्स्ना । चत्वारिंशदुत्तरशतिकायां स्थापनायां पुनरप्येका कृत्स्नारोपणा विंशतिदिना । पंचाशदुत्तरशतिकायां स्थापनायामेका पाक्षिक्यारोपणा कृत्स्ना एवमेताश्चत्वारिंशत् त्रिंशदुत्कृष्टाः सर्वा मिलिताः सप्ततिः कृत्स्ना आरोपणा शेषाः पंचनवतिः त्रिंशतसंख्या अकृत्स्ना आरोपणाः, एवं शेषेष्वपि त्रिषु स्थापनारोपणास्थानेषु कृत्स्नारोपणानां परिणाणमुपयुज्य परिभावनीयमिति, अतः परमेतासां सर्वासामपि स्थापनारोपणानां स्वरूपं येन लक्ष्यते, तद्विभणिषुरिदमाह-

**[भा.४१९]** सव्वासिं ठवणाणं एत्तो सामन्नलक्खणं वोच्छं ।
मासग्गे ओसग्गे हीनाहीने य गहणे य ।।

वृ- चतुर्ष्वपि स्थापनारोपणास्थानेषु याः स्थापना आरोपणाश्चान्योऽन्यानुवेधतो भवंति, । तासां सर्वासामपि स्थापनानामारोपणानां च इति उर्ध्वं सामान्येन सकलव्यापितया लक्षणं लक्ष्यते, येन तासां तल्लक्षणमुक्तानुक्तस्वरूपं वक्ष्ये, केत्याह मासाग्रे प्रतिसेवितसंचयमासानां परिमाणे तथा प्रतिसेवितमासानयननिमित्तमेवारोपणादिवसैर्भागे ह्रियमाणे कियति प्रक्षिप्ते शुद्धं भागं दास्यतीत्येवं झोषाग्रे झोषपरिमाणे लक्षणं वक्तव्यं, तथा हीनाहीने च ग्रहणे च हीनग्रहणं नाम विषमग्रहणं अहीनग्रहणं समग्रग्रहणमेतच्च यथासंचयमासेभ्यो भवति, तथा लक्षणं वक्तव्यं, तत्र मासपरिमाणविषयं लक्षणमभिधित्सुरिदं पूर्वोक्तमेव तावदाहः-

**[भा.४२०]** जइमि भवे आरोवणा तति भागं करे तिपंचगुणं ।

सेसं पंचहिं गुणए ठ्वणादिणजुया उ छम्मासा ।।

**वृ-** इयमर्थत प्रागेव व्याख्याता परमन्यथा कियान् शब्दसंदर्भ इति भूयोपि व्याख्यायते, संचयमासेभ्यः स्थापनामासेषु शुद्धेषु यच्छेषमवतिष्ठते, तत्र जइमिति यतिमासा भवत्यारोपणा, किमुक्तं भवति, यतिभिर्मासैर्निष्पन्ना आरोपणा यतिभागं तावत्संख्याकं भागं करोति कृत्वा चाद्यं तिपंचगुणमिति त्रिपंचगुणं पंचदशगुणं करोति, शेषं समस्तमनेकभागात्मकमपि संपिंड्य पंचभिर्गुणयेत्, ततः स्थापनादिनयुताः षण्मासा भवंति, एतत्कर्म पंचदशादिष्वारोपणासु कर्त्तव्यं, एकादिषु चतुर्दशदिनपर्यंतासु पुनरारोपणासु यावंत्यारोपणादिनानि तावद्भिर्गुणयितव्यं, एवं संचयमासानां मध्ये यावतो मासात् यत् गृहीतं तद्दिनपरिमाणाभिधानतो मासपरिमाणविषयलक्षणमभिहितं संप्रत्येतदेव प्रकारांतरेणाभिधित्सुराह-

**[भा.४२१]** जतिमि भवे आरुवणा ततिभागं तस्स पनरसहिं गुणए ।

ठवणारोवणसहिया छम्मासा होंति नायव्वा ।।

**वृ-** ये संचयमासास्ते पूर्वं स्थापनारोपणामासविशुद्धाः कर्त्तव्याः तेन जइमीति यतितमा प्रथमा द्वितीया तृतीया इत्यादि आरोपणा ततिभागस्थांस्ते कर्त्तव्याः तत्र यद्येकभागस्थास्ततः सर्वानपि पंचदशभिर्गुणयति, गुणने च कृते स्थापनारोपणादिवससहिता झोषविशुद्धास्ते षण्मासा भवंति, अथानेककभागस्थास्तर्हि अनेकस्य भागस्य आद्यं भागं पंचदशभिर्गुणयेत्, शेषान् समस्तानपि पंचगुणानिति वाक्यशेषस्तेन स्थापनारोपणदिवससहिताः षण्मासा ज्ञातव्या भवंति, तद्यथा विंशतिदिनायां स्थापनायां पंचदशदिनायां चारोपणायां त्रयोदश संचयमासास्तेभ्य एक आरोपणामासो द्वौ स्थापनामासावुभयमीलने त्रयो मासाः शोधिता जाता दश मासा इयमारोपणा प्रथमे स्थाने प्रथमेति ते दश मासा एकभागस्थाः क्रियंते, कृत्वा पंचदशभिर्गुण्यंते, जातं पंचाशं शतं ।। अत्र झोषः पंचक इति पंच ततो विशोधिता जातं पंचचत्वारिंशं शतं ।। तत्र स्थापनादिवसा विंशतिः आरोपणादिवसाः पंचदशेति मीलिताः पंचत्रिंशत् ते प्रक्षिप्यंते, जातमशीतं शतमिति, तथा विंशतिदिनायां स्थापनायां पंचविंशतिदिनायां आरोपणायां पंचविंशतिदिनायां आरोपणायां त्रयोविंशतिः संचयमासाः तेभ्यो द्वौ स्थापनामासौ त्रय आरोपणामासा उभयमीलने पंचमासाः शोधिता जाता अष्टादश इयमारोपणा प्रथमे स्थाने तृतीयेति त्रिभागस्थाः क्रियंते, जाता एकैकस्मिन् भागे षट् षट् तत्राद्यो भागः पंचदशभिर्गुण्यते, जाता नवतिः, अत्र पक्षो झोष इति तेभ्यः पंचदश शोधिता जाता पंचसप्ततिः ।। शेषौ द्वावपि भागावेकत्र मीलितौ जाता द्वादश, ते पंचभिर्गुण्यंते जाता षष्टिः ते पूर्वराशौ प्रक्षिप्यंते, जातं पंचत्रिंशंशतं । तत्र स्थापनादिवसाः विंशतिरारोपणादिवसाः पंचविंशतिः उभयमीलने पंचचत्वारिंशत् प्रक्षिप्ता जातमशीतं शतमेवमन्यत्रापि भावनीयं, नवरमेतत्कर्म्म कचिदेव प्रतिनियतेषु पदेषु कर्त्तव्यं, नावश्यं सर्वत्रेति संप्रति गुणकारवशेन यथा कृत्स्नारोपणापरिज्ञानं भवति तथा प्रतिपादयति -

**[भा.४२२]** जेन उ पण गुणिएहोऊणं सो न होइ गुणकारो ।

तस्सुवरि जेन गुणे होइ समं सहु गुणकारो ।।

**वृ-** जेणउ पएण गुणिया पदमेकद्वित्र्यादिकं येन पदेन दशादिलक्षणेन गुणिते आरोपणादिवसे षण्मासपरिमाणमशीतं दिवसशतमूनमुपलक्षणमेतत् अधिकं वा भवति, समकरणं प्रतीत्य गुणकारो न भवति, यथा पाक्षिक्या आरोपणाया दशादिकस्तथाहि विंशिकायां स्थापनायां पाक्षिकी आरोपणा

दशभिर्गुणिता, जाताः पंचाशंशतं ।। तत्र स्थापनादिवसा विंशतिः प्रक्षिप्ता जातं सप्ततं शतं ।। तदेवं दशभिर्गुणने ऊनाः षण्मासा एकादशभिर्गुणने अधिका इति पाक्षिक्यामारोपणायां समकरणं प्रतीत्य न दशादिको गुणकार इतीयमकृत्स्नारोपणेति प्रतिपत्तव्यं, तस्सुवरिमित्यादि तस्याधिकृतस्य विंशिकादिरूपस्य पदस्योपरि त्रिंशत्प्रभृतिके स्थापनापदे येन गुणकारेण दशादिलक्षणेन गुणने षण्मासदिवसपरिमाणं समं भवति, स तत्र गुणकारस्तेन गुणकारेण सा आरोपणा तस्मिन् स्थापनापदे कृत्स्नेत्यवगंतव्या यथा पाक्षिक्येवारोपणा त्रिंशत्स्थापनायां तथाहि पंचदशदिनारोपणा दशभिर्गुणिता जातं पंचाशं शतं, त्रिंशत् स्थापनादिवसाः प्रक्षिप्ता जातमशीतं शतं ।। एवं पंचचत्वारिंशद्दिने स्थापनापदे नवभिः, षष्टिदिनेऽष्टभिः, पंचसप्ततिदिने सप्तभिर्नवतिदिने षड्भिः, पंचोत्तरशतदिने पंचभिः, विंशत्युत्तरशतदिने चतुर्भिः पंचत्रिंशदुत्तरशतदिने त्रिभिः पंचाशशतदिने द्वाभ्यां षष्ठिशतदिने एकेन गुणने, समं षण्मासदिवसपरिमाणं भवति, पंचचत्वारिंशदादिषु स्थापनापदेषु पाक्षिक्यारोपणा कृत्स्ना प्रतिपत्तव्या, तथा विंशिकायां आरोपणायां विंशतिदिने स्थापनापदेऽष्टभिः चत्वारिंशद्दिने सप्तभिः षष्ठिदिने षड्भिरशीतिदिने पंचभिः, शतदिने चतुर्भिः, विंशतिशतदिने त्रिभिः, चत्वारिंशशतदिने द्वाभ्यां, षष्ठिदिनशतदिने एकेन समं षण्मासदिवसपरिमाणं भवतीति, विंशिकाप्यारोपणा विंशिकादिषु स्थापनापदेषु कृत्स्नेत्यवसेया । एवं शेषा आरोपणा गुणकारैर्विचारयितव्या इति, एतदेव सुव्यक्ततरमाह

**[भा.४२३]** जइहिं गुणा आरोवण ठवणाजुत्ता हवंति छम्मासा ।
तावइयारुवणाओ हवंति सरिसा भिलावाओ ।।

**वृ-** यतिभिर्यावद्भिर्गुणकारैर्गुण्यते स्म, गुणा गुणिता आरोपणा तदनंतरं स्थापनायुक्ता स्थापनादिवसयुक्ताः षण्मासा भवंति, तावत्यो गुणकारसंख्यास्तुल्यास्ता आरोपणाः कृत्स्ना इति गम्यते प्रतिपत्तव्याः कथंभूतास्तास्तावत्यः कृत्स्नारोपणा इत्याह, सदृशाऽभिलापा एकाभिलापा इति भावः, यथा पाक्षिकी आरोपणा त्रिंशद्दिनादिषु स्थापनादिषु दशादिभिर्गुणकारैर्गुणितास्तदनंतरं च स्थापनादिवसयुताः षण्मासान् पूरयतीति दश कृत्स्ना आरोपणाः सदृशाभिलापा एवमन्या अपि तैस्तैर्गुणकारैस्तावत् संख्याकैस्तेषु तेषु स्थापनापदेषु गुणितास्तदनंतरं तत्र स्थापनादिवसयुक्ताः षण्मासपूरिकास्तावत्संख्याकाः कृत्स्ना आरोपणाः सदृशाभिलापा भावनीया संप्रति आलोचकमुखात् प्रतिसेवितमासाग्रं श्रुत्वा तन्मासाग्रस्थापनायामारोपणायां च स्थापयित्वारोप्य च परस्मै विविक्तमुपदर्शयितुपदेशमाह ।

**[भा.४२४]** ठवणारोवणमासे, नाऊणं तो भणाहि मासग्गं ।
जेन समं तं कसिणं, जेनऽहियं तं च झोसग्गं ।।

**वृ-** आलोचकमुखात्प्रतिसेवितमासपरिमाणमाकर्ण्य तदनंतरमेतावंतो मासाः स्थापनायामेतावंत आरोपणायामिति ज्ञात्वा ततः संचयमासाग्रं विविक्तमालोचकाय भण, प्रतिपादय, यथाऽष्टापंचाशत् प्रतिसेवितमासा आलोचकमुखादुपलब्धाः, तत आचार्येण स्थापनारोपणादक्षेण विंशिकास्थापना पंचाशशतिका चारोपणा स्थापिता तत्र स्थापनारोपणादिवसानामेकत्र मीलने जातं सप्ततं शतं ।। ततः षण्मासदिवसेभ्योऽशीतिशतसंख्येभ्यः शोधितं, स्थिताः पश्चात् दश, तेषामधिकृतया पंचाशशतिकया आरोपणया भागो ह्रियते तत्र भागो न लभ्यते इति चत्वारिंशं शतं प्रक्षिप्तं, ततो भागे हृते लब्ध एकोमास, इयमारोपणा अष्टाविंशतिमासनिष्पन्ना अष्टाविंशतितमा चेति एकोऽष्टाविंशत्या गुणितो जाता

अष्टाविंशतिः । तत एवमालोचकाय कथयति, यथा द्वौ स्थापनामासौ अष्टाविंशतिरारोपणामासा एते मिलितास्त्रिंशत् अष्टाविंशतिरन्ये मासा आरोपणाया भागे हृते लब्धा एवं सर्वत्र संचयमासाग्रमालोचकाय विविक्तं भणनीयमिति, येन पुनरारोपणाभागहारेण भागे ह्रियमाणे झोषविरहेण समं शुध्यति, तत्कृत्स्नमारोपणं द्रष्टव्यं, येन यावत्प्रमाणेन तु दिवसमीलनचिंतायां षण्मासपरिमाणमधिकं भवति, तद्य तावत्प्रमाणं पुनर्झोषाग्रं झोषपरिमाणमवसातव्यं, यथा विंशिकायां स्थापनायां पाक्षिक्यामारोपणायां पंचेति एतेन झोषपरिमाणलक्षणमुक्तं द्रष्टव्यं -

**[भा.४२५]** जत्थउ दु रूवहीणा, न होंति तत्थओ हवंति सा भावी ।
एक्काई जा चोद्दस, एक्का तो सेस दुगहीना ।।

**वृ-** इह सर्वासां स्थापनानामारोपणानां च दिवसेभ्यो मासानामुत्पादनाय पंचभिर्भागो हर्तव्यः, तत्र भागे हृते यल्लब्धं तन्नियमात् द्विरूपहीनं कर्तव्यं, यत्र पुनरारोपणाशुद्धहीना लब्धामासा न भवंति, एकादिषु चतुर्दिनपर्यंतासु पंचभिर्भागहारस्य एवासंभवात् पंचदिनादिषु नवदिनपर्यंतासु पंचभिर्भागे हृते लब्धस्य द्वयोरूपयोरभावात् दशदिनादिशु चतुर्दशदिनपर्यंतासु शुद्धिरूपापसरणे शून्यस्य भावात् ता एकाद्य एकदिनादयो यावच्चतुर्दशदिनपर्यंताः स्थापनारोपणाश्च स्वाभाविका एकस्मात् मासात् द्रष्टव्याः किमुक्तं भवति, स्वभावेनैव न तु मासोत्पादननिमित्तकरणप्रयोगत एकस्मान्मासान्निर्वृत्ताः प्रतिपत्तव्या इति ।। सेसदुगहीनत्ति शेषाः पुनः पंचदशदिनादयः स्थापना आरोपणाश्च द्विकहीना ज्ञेयाः पंचभिर्भागे हृते लब्धद्विरूपहीन स्वभावात् उपचारतो द्विकहीना उक्ताः ।।

**[भा.४२६]** उवरिं सु पंचभइए जइ सेसा तत्थ केइ दिवसा उ ।
ते सव्वे एगातो, मासातो होंति नायव्वा ।।

**वृ-** पंचदशदिनायाः स्थापनाया आरोपणायाश्च उपरिषोडशदिनादिषु स्थापनारोपणासु पंचभिर्भागे हृते उपरिभागलब्धेभ्यः शेषा ये एकद्विकाद्यो दृश्यंते ते सर्वे लब्धानां पूरणभूतत्वादेकस्मात् मासाद् भवंति ज्ञातव्याः, किमुक्तं भवति, तेषु शेषीभूतेष्वपि स एवैको मासो गृह्यते, यः पंचदशदिनायां लब्ध इत्येवमेकविंशतिदिनादिष्वपि भावनीयं, संप्रति हीनाहीने ग्रहणे लक्षणं प्रतिपिपादयिषुर्यथा स्थापनारोपणामासेभ्यः शेषसंचयमासेभ्यश्च दिवसग्रहणं क्रियते, तथा प्रतिपादयति ।

**[भा.४२७]** होइ समे समगहणं तहवि य पडिसेवणाउ नाऊणं ।
हीनं वा अहियं या सव्वत्थ समं वा गेण्हेज्जा ।।

**वृ-** स्थापनारोपणादिवसानां दिवसपरिमाणे समे तुल्ये तासु स्थापनारोपणासु मासेभ्यो दिवसग्रहणं समं भवति, यावंतः स्थापनामासेभ्यः प्रत्येकं दिवसा गृहीतास्तावंत आरोपणामासेभ्योपीति भावः, शेषमासेभ्यो दिवसग्रहणं समं विषमं वा यथा सप्तदिनायां स्थापनाया सप्तदिनायां चारोपणायां तथाह्यत्र पूर्वकरणप्रयोगतः षड्विंशतिसंचयमासा लब्धाः, तत्र स्थापनारोपणामासाभ्यां सप्त सप्त दिनानि गृहीतानि, ये चारोपणाया भागे हृते लब्धाश्चविंशतिमासास्तेष्वेकस्मात् पंच दिनानि गृहीतानि, द्वयोर्दिनयोर्झोषे पतितत्वात् शेषेभ्यस्तु त्रयोविंशतिमासेभ्यः सप्त सप्त दिनानीति एवमन्यास्वपि स्थापनारोपणासु तुल्ये दविसपरिमाणे स्थापनारोपणामासेभ्यस्तुल्यदिवसग्रहणं, शेषमासेभ्यस्तुल्यं विषमं वा भावनीयं, कासुचित् पुनः स्थापनारोपणासु यद्यपि दिवसपरिमाणं समं भवति, तथापि प्रतिसेवनां ज्ञात्वा कस्यापि मासस्य कीदृशी प्रतिसेवना उत्कटरागाद्यध्यवसाया इति ज्ञात्वा तदनुरोधतः

स्थापनारोपणासु दिवसग्रहणं कदाचिद्धीनं कदाचिदतिरिक्तं वा, किमुक्तं भवति, कदाचित् स्थापनायां हीनमारोपणायामधिकं कदाचिदारोपणायां हीनं स्थापनायामधिकं यथा विंशिकायां स्थापनायां विंशिकायामारोपणायामत्र हि द्वाभ्यामपि स्थापनामासाभ्यां प्रत्येकं दश दश दिवसा गृहीता आरोपणाया मासयोस्त्वेकस्मात् पंचदश एकस्मात् पंच अथवा स्थापनाया मासयोरेकस्मात् पंचदश दिवसा गृहीता अपरस्मात् पंच आरोपणामासाभ्यां तु द्वाभ्यां प्रत्येकं दश दशेति प्रतिसेवनाविशेषमंतरेण तु स्थापनामासाभ्यां आरोपणामासाभ्यां च प्रत्येकं दश दश दिवसा गृह्यंते इति, ।। सव्वत्थ समं वा गेण्हेज्जा, कदाचित् पुनः सर्वत्र स्थापनायामारोपणायां तथा आरोपणाया भागे हृते ये लब्धा मासास्तेषु च समं दिवसग्रहणं भवति, यथा प्रथमे स्थाने विंशिकायां स्थापनायां विंशिकायामारोपणायां द्वितीये स्थाने पाक्षिक्यां स्थापनायां पाक्षिक्यामारोपणायां तृतीये स्थाने पंचदिनायां स्थापनायां पंचदिनायामारोपणायां, चतुर्थे स्थाने एकदिनायां स्थापनायां एकदिनायां चारोपणायामेवमन्यास्वपि द्विन्यादिदिनासु स्थापनारोपणासु यथायोगं भावनीयं -

[भा.४२८] विसमा आरोवणातो विसमं गहणं तु होइ नायव्वं ।
सरिसेवि सेवियम्मी जहा झोसो खलु विसुद्धो ।।

वृ- इह आरोपणाग्रहणेन स्थापनापि गृहीता द्रष्टव्या, तत्र प्रतिसेवनां कुर्वता यद्यपि सर्वेपि मासाः सदृशापराधप्रतिसेवनेन प्रतिसेवितास्तथापि सदृशे सेवितेपि सदृश्यामपि प्रतिसेवनायां याः स्थापनारोपणाः परस्परं दिवसमाने विषमास्ताभ्यस्तदनुरोधेन आरोपणाया भागे हृते ये लब्धा मासास्तेषु दिवसग्रहणं विषमं भवति ज्ञातव्यं, स्थापनारोपणादिवसानां परस्परविषमत्वतस्तेष्वपि ग्रहणं विषमं भवतीति प्रतिपत्तव्यमिति भावः, एवं विषमासु कृत्स्नारोपणास्वभिहितं, याः पुनरारोपणा विषमा अकृत्स्नाश्च तत्र दिवसग्रहणं कुर्वता यथा झोषो विशुध्यति, तथा खलु निश्चितं-कर्त्तव्यं नान्यथेति ।

[भा.४२९] एवं खलु ठवणातो आरुवणातो विसेसतो होंति ।
ताहिं गुणा तावइया नायव्व तहेव झोसा य ।।

वृ- एवमुक्तप्रकारेण स्थापनात आरोपणा विशेषतो भवंति, तथाहि यदा स्थापनामासशुद्धाः शेषामासा यावंतोऽधिकृतायामारोपणायां मासास्तावत्संख्याका भागाः क्रियंते, कृत्वा च प्रथमो भागः पंचदशगुणः क्रियते, शेषाः पंचगुणा यदिवा सर्वेप्यारोपणादिवसगुणा मासाः क्रियंते, एवमारोपणाया दिवसपरिमाणं लब्धं भवति, तदा एतावद्भिः स्थापनादिवसैः प्रक्षिप्तैः षण्मासाः पूर्यंते इति तदनुसारतः स्थापनादिवसाः स्थाप्यंते, तत आरोपणानुरोधिनी स्थापनेति स्थापनात आरोपणा विशेषयती तथाचाह, ताहिं गुणा तावइया इति ताभिरारोपणामाससंख्याभिरारोपणादिवससंख्याभिर्वा आरोपणाया भागे हृते ये लब्धा मासास्ते गुणाः गुणिताः, स्थापनारोपणादिवसयुक्तास्तावंतः संचयमासा आगच्छंति, नतु स्थापनामाससंख्याभिः स्थापनादिवससंख्याभिर्वा गुणितास्ततो विशेषवत्यः स्थापनाभ्य आरोपणा इति, नायव्व तहेव झोसा य इति, झोषा अपि तथैव ज्ञातव्यास्तद्यथा आरोपणया भागे ह्रियमाणे यावता भागो न शुध्यति, तावत्प्रमाणा ज्ञातव्या झोषा इति-

[भा.४३०] कसिणा आरुवणाए समगहणं होति तेसु य मासेसु ।
आरुवणा अकसिणाए वि समं झोसो जहा सुज्झे ।।

वृ- कृत्स्ना आरोपणा नाम या झोषविरहिता, तस्यां कृत्स्नायामारोपणायां आरोपणाया भागे हृते ये

लब्धा मासास्तेष्वेकभागः, तेष्विति वाक्यशेषः समं दिवसग्रहणं भवति, अथ द्व्यादिभागस्थास्तेनः प्रत्येकं भागेषु ग्रहणं द्रष्टव्यं तद्यथा आद्यभागगतेषु मासेषु प्रत्येकं पंचदशदिवसग्रहणं, शेषभागगतेषु पुनः सर्वत्र पंचदिवसग्रहणमिति ।। अकृत्स्नायामारोपणायां पुनर्नियमतो विषमं दिवसग्रहणं, तच्चावश्यंभावि विषमं दिवसग्रहणं झोपवशाद् भवति तथाचाह, झोपः यथा शुध्यति, तथा दिवसग्रहणं भवति, ततो विषममिति दिवसग्रहणविषयं च करणमिदं -

[भा.४३१] जइ इच्छसि नाऊणं ठवणारोवण जहाहि मासेहिं ।
गहियं तद्दिवसेहिं तम्मासेहिं हर भागं ।।

वृ- अस्यायमर्थः यदि दिवसग्रहणं ज्ञातुं इच्छसि, ततः स्थापनारोपणाः स्थापनारोपणामासान्मासेभ्यः संचयमासेभ्यो जहाहि परित्यज च, परित्यज्य च कुतो मासात् किं गृहीतमिति जिज्ञासायां तद्दिवसेभ्यः स्थापनारोपणाशुद्धशेषसंचयमासदिवसेभ्यः, किमुक्तं भवति, षण्मासदिवसेभ्यः स्थापनारोपणादिवस-रहितेभ्यः तन्मासैः स्थापनारोपणादिवसरहितशेषषण्मासदिवसमासैः स्थापनारोपणामासशुद्धशेष-संचयमासैर्भागं हरेत्, तत्र यल्लब्धं तान् दिवसान् जानीहि, शेषं पुनर्जानीयात् दिवसभागान् स्थापना रोपणादिवसानां तु स्थापनारोपणामासैर्भागो हर्त्तव्यः तथापि यल्लब्धं ते दिवसा यच्छेषं ते दिवसभागा इति, यथा प्रथमे स्थाने विंशिकायां स्थापनायां पंचदशदिनायां चारोपणायां पूर्वप्रकारेण त्रयोदशसंचयमासा लब्धास्तेभ्यः स्थापनामासौ द्वावेक आरोपणामास उभयमीलने त्रयः शोध्यंते जाताः पश्चाद्दश ततः स्थापनारोपणादिवसाः पंचत्रिंशत्रहिता ये षण्मासदिवसाः, पंचचत्वारिंशतं ।। ते किम तद्दिवसास्तेभ्यः तन्मासैस्तैः शेषीभूतैर्दशभिर्मासैर्दशकेनेत्यर्थः भागो ह्रियते, हृते च भागं लब्धाश्चतुर्दश शेषास्तिष्ठंति पंच, आगतमेकैकस्मात् चतुर्दश चतुर्दश दिवसा गृहीताः पंचपंचदिवसस्यदश भागाः, यदिवा एकस्मात्मासाच्चतुः सार्धान् दिवसान् गृहीत्वा शेषेसु मासेष्वर्धमर्धं प्रक्षिपेत्, तत आगतं नवभ्यो मासेभ्यः प्रत्येकं पंचदश दिवसा गृहीता एकस्माद्दश, एतत् प्रागुक्तमनुस्मारितं, स्थापनादिवसानां विंशतेः स्थापनामासाभ्यां भागो ह्रियते, लब्धा एकैकस्मिन् मासे दश दश दिवसा आरोपणामासस्त्वेक एव, तत्र पंचदश दिवसा लब्धा, आगतं स्थापनामासाभ्यां दश दश दिवसा गृहीता आरोपणामासात् पंचदश एवं विषमदिवसग्रहणं सर्वत्रानेतव्यं, यत्र पुनः स्थापनारोपणा च नास्ति, अकृत्स्नत्वात् अथ च संचितमासा ज्ञायंते, तत्राशीतस्य शतस्य संचितमासैर्भागे हृते यल्लभ्यते, तद्दिवसग्रहणं प्रत्येकमासेभ्योऽवगंतव्यं, उक्तं च -

जहिं नत्थि ठवण आरोवणा य नज्जंति संचिया मासा ।
संचियमासेहिं भए असीयं लद्धमागहियं ।।

[भा.४३२] एवं तु समासेणं भणियं सामन्नलक्खणं बीयं ।
एएण लक्खणेणं झोसेयव्वाउ सव्वाओ ।।

वृ- एवमुक्तेन प्रकारेण सामान्येनैव तु शब्द एवकारार्थो भिन्नक्रमत्वादेवं संबंध्यते, सामान्यलक्षणे बीजमिव बीजं सकलमाससामान्यलक्षणावगमप्ररोहसमर्थं किंचिद् भणितं, एतेनानंतरोदितेन बीजकल्पेन लक्षणेन सर्वा अपिकृत्स्ना अकृत्स्ना चारोपणा झोपयितव्याः, स्वबुद्धौ शिष्यबुद्धौ च यथावस्थिततया प्रक्षेपणीयाः, तदेवं कियंतः सिद्धा इति द्वारमुक्तम्; अधुना दिन्न निर्सोहमाने इति द्वारं व्याचिख्यासुराह -

[भा.४३३] कसिणाऽकसिणा एया सिद्धाता भवे पकप्पनामंमि ।
चउरो अतिक्कमादि सिद्धा तत्थेव अज्झवणे ।।

वृ- कृत्स्ना अकृत्स्नाश्चारोपणा एते अनंतरोदितसामान्यलक्षणाः प्रकल्पनाम्नि निशीथे अध्ययने सिद्धाः प्रतीताः एतेन दिट्ठा निसीहनामे इति व्याख्यातमधुना तत्थेव तहा अतीयारा इति व्याख्यानयति, चउरो इत्यादि अतीचारा ये चत्वारोऽतिक्रमादयस्तेपि प्रायश्चित्तभेदास्तत्रैव प्रकल्पनाम्न्यध्ययने सिद्धाः, संप्रति तानेवातिक्रमादीन् दर्शयति ।

[भा.४३४] अतिक्कमे वइक्कमे चेव अतियारे तहा अनायारे ।
गुरुतोय अतीयारो गुरुयतरगो अनायारो ।।

वृ- अतिक्रमणं प्रतिश्रवणतो मर्यादाया उल्लंघनमतिक्रमः विशेषेण पदभेदनतोऽतिक्रमणो व्यतिक्रमः, तथा अतिचरणं ग्रहणतो व्रतस्यातिक्रमणमतीचारः, आचारस्य साध्वाचारस्याभावः परिभोगतो ध्वंसोऽनाचारः, एते चातिक्रमादय आधाकर्माधिकृत्यैवं व्याख्याताः, आधाकर्मणा निमंत्रितः सन् यः प्रतिशृणोति, सोऽतिक्रमे वर्त्तते, तद्ग्रहणनिमित्तं पदभेदं कुर्वन् व्यतिक्रमं गृह्णातो अतीचारे, भुंजानो अनाचारे, एवमन्यदपि परिहारस्थानमधिकृत्यातिक्रमादयो योजनीयाः, एतेषु च प्रायश्चित्तमिदम्, अतिक्रमे मासगुरु व्यतिक्रमे पि मासगुरु काललघु अतिचारे मासगुरु द्वाभ्यां विशेषितं, तद्यथा तपोगुरु कालगुरु च अनाचारे मासगुरु व्यतिक्रमे पि मासगुरु काललघु अतिचारे मासगुरु द्वाभ्यां विशेषितं, तद्यथा तपोगुरु कालगुरु च अनाचारे चतुर्गुरु, यस्मात् गुरुको अतीचारश्च शब्दोऽनुक्तसमुच्चायार्थः, स चैतत् समुच्चिनोति, अतिक्रमात् व्यतिक्रमो गुरुकस्तस्मादपि गुरुकोऽतीचार इति, ततोप्यतीचारात् गुरुतरकोऽनाचारः, तत इत्थं प्रायश्चित्तविशेषः ।

[भा.४३५] तत्थ भवे न उ सुत्ते अतिक्कमादीउ वन्निया केई ।
चोयगसुत्ते सुत्ते अतिक्कमादीउ जोएज्जा ।।

वृ- तत्र एवमुक्ते भवेन् मतिश्चोदकस्य यथा नतु नैव सूत्रे निशीथाध्ययनलक्षणे केचिदतिक्रमादय उपवर्णिताः संति, ततः कथं चत्वारो अतिक्रमादयस्तत्रैवाध्ययने सिद्धा इति, सूरिराह ।। चोदकसर्वोप्येष प्रायश्चित्तगणो अतिक्रमादिषु भवति, ततः साक्षादनुक्ता अपि सूत्रे तानतिक्रमादीन् योजयेत्; अर्थतः सूचितत्वात् कथमर्थतः सूचिता इत्याह -

[भा.४३६] सव्वेवि य पच्छित्ता, जे सुत्ते ते पडुच्चऽनायारं ।
थेराण भवे कप्पे जिनकप्पे चउसु विपएसु ।।

वृ- यानि कानिचित् सूत्रेऽभिहितानि प्रायश्चित्तानि सर्वाण्यपि स्थविराणां कल्पे स्थविरकल्पिकानामनाचारं प्रतीत्य भवंति, यतः स्थविरकल्पिकानां त्रिष्वतिक्रमादिषु पदेषु प्रायश्चित्तं भवति, *तथाहि प्रतिश्रुतेपि यदिस्वतः परतो वा प्रतिबोधतः पदभेदं न कुरुते, कृतेपि वा पदभेदं न गृह्णाति,* गृहीतेपि यदि न भुक्तं किंतु परिष्ठापयति तदा स मिथ्यादुष्कृतमात्रप्रदानेनापि शुध्यति, इति न सूत्राभिहितप्रायश्चित्तविषयः, भुंजानसत्वनाचारेवर्त्तते, इति तस्य सूत्रोक्तप्रायश्चित्तविषयता, जिनकल्पे जिनकल्पिकानां पुनः चतुर्ष्वप्यतिक्रमादिषु पदेषु प्रायश्चित्तं भवति, किंचिदं प्रायस्ते न कुर्वंति, तदेवं सर्वमपि सूत्राभिहितं प्रायश्चित्तं, यतोऽनाचारमधिकृत्य प्रवृत्तमनाचारश्चातिक्रमाद्यविनाभावी, ततोऽर्थतः सूचितत्वात्, प्रतिसूत्रमतिक्रमादयो योजनीयाः इति स्थितं, ननु यद्येतत् सर्वं निशीथसिद्धांते,

ततो निशीथमपि कुतः सिद्धमित्यत आह -

[भा.४३७] निसीहं नवमा पुव्वा, पच्चक्खाणस्स तइय वत्थूओ ।
आयारनामधेज्ञा, वीस इमा पाहुडछेया ।।

वृ- प्रत्याख्यानस्याभिधायकं नवमं पूर्वं प्रत्याख्याननामकं तस्मात्; तत्रापि तृतीयादाचारनामधेयाद्वस्तुनस्तत्रापि विंशतितमात् प्राभृतछेदान्निशीथमध्ययनं सिद्धं, इयमत्र भावना उत्पादपूर्वादीनि चतुर्दश पूर्वाणि, तत्र नवमं पूर्वमं प्रत्याख्याननामकं तस्मिन् विंशतिवस्तूनि, वस्तूनि नाम अर्थाधिकारविशेषास्तेषु विंशतौ वस्तुषु तृतीयमाचारनामधेयं वस्तु तत्र विंशतिः प्राभृतभेदाः, परिमाणपरिछिन्नाः, प्राभृतशब्दवाच्याः छेदा अर्थच्छेदास्तेषु यो विंशतितमः प्राभृतछेदः, तस्मान्निशीथं सिद्धमिति, अत्राह शिष्यः, सर्वसाधूक्तं किंतु -

[भा.४३८] पत्तेयं पत्तेयं पए पए भासिऊण अवराहे ।
तो केन कारणेणं दोसा एगत्तमावन्ना ।।

वृ- एकोनविंशतावुद्देशकेषु पदे पदे सूत्रे सूत्रे वा यदिवा उद्देशके प्रत्येकं प्रत्येकं एकस्य दोषस्य प्रति प्रत्येकं अत्राभिमुख्ये प्रतिशब्दो यथा प्रत्यग्नि शलभाः पतंतीत्यत्र वीप्सायामतः प्रत्येकशब्दस्य वीप्साविवक्षायां द्विवचनं अपराधान् अपराधे सति मासिकादिकं प्रायश्चित्तं दीयते इति उपचारतः प्रायश्चित्तानि यावापराधशब्देनोक्तानि, तान् भणित्वा यथा केषुचिदपराधेषु मासलघु, केषुचित् मासगुरु, केषुचिच्चातुर्मासलघु, केषुचिच्चातुर्मासगुरु, एवं सूत्रतो अर्थतश्च केषुचिल्लघुपंचकं, केषुचिद्गुरुपंचकमेवं, यावत् केषुचिद् भिन्नलघु, केषुचिद् भिन्नमासगुरु, तथा केषुचिदपराधेषु षट्लघु केषुचित् षट्गुरु, केषुचित् छेदंकेषु चित् मूलं, केषचिदनवस्थाप्यं, केषुचित् पारांचितं, एवं दोषेषु प्रत्येकं प्रत्येकं प्रायश्चित्तानि भाषित्वा भूय इदमुक्तं यथा एकः पुरुषो गुरुकं मासिकमापन्नो ऽपरो लघुमासिकं, तयोर्द्वयोरपि कदाचित् गुरुकं मासिकं दद्यात्, कदाचिल्लघुमासिकं, तथा एको लघुपंचकमापन्नोऽपरो गुरुपंचकं, तयोर्द्वयोरपि कदाचिल्लघु पंचकं दद्यात् गुरुपंचकं, तथा एकः पंचकमापन्नोऽपरोदशकं, तयोर्द्वयोरपि कदाचित् पंचकं दद्यात्, कदाचित् दशकमेवं, पंचदशक विंशति रात्रि भिन्नमास मास द्विमास त्रिमास चतुर्मास पंचमास षण्मास छेदादिक्रमेण तावद् वाच्यं, यावत् पारांचितं तद्यथा एकः पंचकमापन्नो- ऽपरः पारांचितं तयोर्द्वयोरपि कदाचित् पंचकं दद्यात्, कदाचित्पारांचितमिति, एवं दशकादिकमपि स्वस्थाने गुरुलघु विकल्पतः परस्थाने पंचदशादिभिः सह वक्तव्यं, यावत्पारांचितमेतच्च तदोपपद्यते, यदा दोषाणामेकत्वं भवति, तच्चदुरुपपादमतः पृच्छति, तो केनेत्यादि, यतो दोषेषु प्रत्येकं प्रायश्चित्तान्युक्त्वा पश्चात् दोषाणामेकत्वे प्रायश्चित्तान्ययुक्तानि, ततः कथय केन(प्रकारेण) कारणेन दोषाः परस्परंगुरुगुरुतरादिन या महद् लराला अपि एकत्वमापन्नाः सूरिराह-

[भा.४३९] जिन चोद्दसजातीए आलोयण दुब्बले य आयरिए ।
एएण कारणेणं दोसा एगत्तमावन्ना ।।

वृ- जिनं प्रतीत्य चोदसत्ति चतुर्दशपूर्वधरमुपलक्षणमेतत् यावद् भिन्नदशपूर्वधरं प्रतीत्य तथा जातिएत्ति एकजातीयं प्रतीत्य तथा आलोचनां प्रतीत्य दुर्बलं प्रतीत्य आचार्यं प्रतीत्य दोषाणामन्यथात्वमपि भवति, तत एतेन जिनाद्याश्रयलक्षणेन कारणेन दोषा एकत्वमापन्नाः, जिनादीन् प्रतीत्य दोषाणामेकत्वमभूदिति भावः तद्यथाद्ययोर्द्वयोर्यथाक्रमं घृतकुटनालिकादृष्टांतावपरयोस्तुद्र-

योर्यथाक्रममेकानेक द्रव्यमेकानेकनिषधा च विषय इति दर्शयति ।

[भा.४४०] घयकुडगो उ जिनस्सा चोद्दसपुव्विस्स नालिया होइ ।
दव्वे एगमनेगा निसज्ज एगा अणेगाय ।।

वृ- जिनस्य जिनविषये घृतकुटको दृष्टांतः, चतुर्दशपूर्विणो नालिका भवति दृष्टांतः, एकजातीयस्य एकानकद्रव्यविषयः आलोचनायामेकानेकनिषद्याविषयः, तत्र यथा जिनं प्रतीत्य दोषा एकत्वमापन्नास्तथा विभंगिप्रयुक्तघृतकुटदृष्टांतेन भण्यते -

[भा.४४१] उप्पत्तिं रोगाणं तस्समनं ओसहे य विब्भंगी ।
नाउं तिविहामयीणं देंति तहा उसहगहणं तु ।।

वृ- मिथ्यादृष्टिरुत्पन्नाऽवधिर्विभंगी स हि चिकित्सां करोति, न साधुरिति तदुपादानं विभंगिनो विभंगज्ञानि रोगाणामुत्पत्तिं उत्पद्यंते रोगा अस्यामुत्पत्तिर्निदानं तां ज्ञात्वा तथा तदित्यनेन रोगाः संबध्यंते, श्म्यंते उपशमं नीयंते रोगा यैस्तानि शमनानि औषधानि तेषां रोगाणां शमनानि तच्छमनानि तानि औषधानि यथावत् ज्ञात्वा त्रिविधा वातादिजन्यरोगयोगतस्त्रिप्रकाराः, आमः यो रोगः स येषां विद्यते, ते आमविनः त्रिविधाश्च ते आमयिनश्च तेषां त्रिविधामयिनां तथा औषधगणं ददति, प्रयच्छंति, यथानियमतो रोगोपशमो भवित, औषधप्रदाने च चत्वारो भंगास्तथथा-

[भा.४४२] एक्केनेक्को छिज्जइ, एक्केन अनेगऽनेगहिं एक्को ।
नेगेहिंपि य नेगे, पडिसेवा एव मासेहिं ।।

वृ- क्वचित् एकेन घृतकुटेन एको वातादिको रोगः छिद्यते, एष प्रथमो भंगः क्वचिदेकेनघृतकुटेन अनेके त्रयोपि वातादयो दोषाः छिद्यंते, एष द्वितीयः तथा कचिदनेकैर्घृतकुटैरेकोऽत्यंतमवगाढो रोगो वातादिकश्छेदमुपयाति एष तृतीयः, कचिदनेकैर्घतकुटैरनेके वातादयो दोषा उपशाम्यंति, एष चतुर्थो भंगः, एवं प्रतिसेवाप्येकानेकमासविषया चतुर्थभंगिकया एकानेकैर्मासैः शुध्यतीति घृतकुटदृष्टांतः उपलक्षणं, तेन सामान्यतोपि औषधदृष्टांतोपि द्रष्टव्यः, तत्रापि चतुर्भंगिका तामेवाह -

[भा.४४३] एक्कोसहेण छिज्जंति केवि कुविया ओ तिन्नि वायादी ।
बहुएहिं छिज्जंती, बहुए एक्केकतो वावि ।।

वृ- एकेनौषधेन तथाविधेन केनचित् वातादयस्त्रयोपिकुपितास्छिद्यंते, उपशमं नीयंते इति भावः एष हि द्वितीयो भंगः, तथा बहुभिरौषधैर्बहवो वातादयो रोगाश्छिद्यंते, एष चतुर्थो भंगः, तथा एक्केकतो वावित्ति एकोनौषधैनैको वातादिको रोगो उत्पन्नः अवगाढः छिद्यते, एष तृतीयो भंगः ।। इयमत्र भावना यथा विभंगज्ञानिनः सर्वरोगाणां निदामेकानेकौषधसामर्थ्यं चावबुध्यमाना उपसंपन्नानां रोगिणां घृताद्यौषधगणं प्रयुंजते, तेन च प्रयुज्यमानेन घृतकुटेन औषधेन वा कदाचिदेकेनैको रोग उपशमं नीयते, कदाचिदेकेन अनेके कदाचिदनेकैरेकः कदाचिदनेकैरनेक एवं भगवंतोपि जिनाः केवलिनो मासाहिं रागादिभिरासेवितो मास इत्ययमवश्यं मासेन शुध्यतीति जानानाः तस्मै एकं मासं प्रयच्छंति, एष प्रथमो भंगः, तथा यद्यपि बहवो मासाः प्रतिसेवितास्तथापि मंदनाभावतः प्रतिसेविता यदिवा प्रश्चात् हा दुष्टुकृतमित्यादिनिंदनैः प्रतनूकृता स्तत एष एकेन मासेन शुध्यतीति जानानां एकं मासं प्रयच्छंति, यदिवा पंचरात्रिं आदिकं एष द्वितीयो भंगः, एकेन मासेन पंचरात्रादिना वा बहूनां मासिकादिपरिहारस्थाना-नामुपशमनात्, तथा येन तीव्रेण रागाद्यध्यवसायेन एको मास एकं पंचरात्रादिकं वा प्रतिसेवितं, स

किलैकेन मासेन पंचरात्रादिना वा न शुध्यतीति तस्मै अनेकान् मासान् प्रयच्छंति उपर्युपरि रागद्वेषादिवृद्धि पश्यंतः, छेदमपि मूलमपि यावत्पारांचितमपि प्रयच्छंति, एष तृतीयो भंगः, अनेकैर्मासैश्छेदादिभिर्वा पारांचिपर्यंतैरेकस्य मासस्य पंचरात्रादिकस्य शोधनात्, तथा बहुषु मासेषु प्रतिसेवितेषु नूनमेष बहुभिर्मासैः शोधिमासादयिष्यतीत्यवबुध्यमानाः स्थापनारोपणाव्यतिरेकेण षण्मासान् प्रयच्छंति, परतस्तपः प्रायश्चित्तदानस्यासंभवात् एष चतुर्थो भंगोऽनेकैर्मासैरनेकेषां मासानां शोधनात्, उपनययोजनमाह ।।

**[भा.४४४]** विब्भंगीव जिना खलु रोगी साहूय रोग अवराहा ।
सोही य ओसहाइं तीए जिनाउ विसोहंति ।।

**वृ-** इह विचारप्रक्रमे विभंगिनो विभंगीतुल्याः खलु जिनाः प्रतिपत्तव्याः, रोगिणो रोगितुल्याः साधवः रोगा रोगतुल्या अपराधा मूलगुणोत्तरगुणापराधा औषधानि औषधतुल्या शोधिः प्रायश्चित्तलक्षणा यतस्तया शोध्या कृत्वा जिना अपि शोधयंति, नैवमेव तत औषधस्थानीया शोधिः एवं जिनं प्रतीत्य दोषा एकत्वमापन्नाः संप्रति यथा चतुर्दशपूर्विणमधिकृत्य दोषाणामेकत्वं भवति, तथा प्रतिपादयति -

**[भा.४४५]** एसेव य दिट्ठंतो, विब्भंगिकएहिं विज्ज सत्थेहिं ।
भिसज्जा करेंति किरियं, सोहेंति तहेव पुव्वधरा ।।

**वृ-** एष एव घृतकुटलक्षण औषधलक्षणो वा दृष्टांतश्चतुर्दशपूर्विणापि योजनीयः, यतो यथा भिषजो भिषग्वरा विभंगिकृतैर्वैद्यशास्त्रैर्विभंगिवत् चतुर्भंगिकविकल्पनाऽपि तथा रोगापनयनक्रियां कुर्वंति, तथा चतुर्दशपूर्वधरास्त्रयोदशपूर्वधरा यावदभिन्न दशपूर्वधरा जिनोपदिष्टैः शास्त्रैर्जिना इव चतुर्भंगविकल्पतः प्रायश्चित्तप्रदानेन प्राणिनोपराधमलिनान् शोधयंति, ततस्तत्रापि घृतकुटदृष्टांतः केवलौषधदृष्टांतो वा योजनीय इति, आह परः ननु जिनाः केवलज्ञानसामर्थ्यतः प्रत्यक्षं रागादिवृद्ध्यवृद्धी पश्यंति, ततस्ते चतुर्भंगविकल्पतः प्रायश्चित्तं ददतु, तथा शुद्धिदर्शनाच्चतुर्दशपूर्विणस्तु साक्षात् नैवेक्षंते ततः कथं ते तथादद्युरिति, नैष दोषः, तेषामपि तथाज्ञानात्, तथाचात्र नालिकादृष्टांतः ।।

**[भा.४४६]** नालीए परुवणया, जह तीए गतो उ नज्जए कालो ।
तह पुव्वधरा भावं, जाणंति विसुज्झए जेन ।।

**वृ-** नालिका नाम घटिका, तस्याः पूर्वं प्ररूपणा कर्तव्या, यथा पादलिप्तकृतविवरणे कालज्ञाने सा चैवं-

दाडिमपुप्फागारा लोहमयी नालिगा उ कायव्वा ।
तीसेतलंमि छिद्दं छिद्दपमाणं च मे सुणह ।।
छन्नउयमूलबालेहिं तिवरस जाया एगयकुमारीए ।
उज्जुकयपिंडिएहिं कायव्वं नालियाछिद्दं ।।
अहवा दुवरस जाया एगयकुमारीए पुच्छबालेहिं ।
बिहिं बिहिं गुणेहिं तेहिं उ कायव्वं नालियाछिद्दं ।।
अहवा सुवणमासेहिं, चउहिं चउरंगुला कया सूई ।
नालयतलंमि तीए कायव्वं नालियाछिद्दं ।।

**वृ-** इत्यादि, तया नालिकया यथोदकसंगलनेन दिवसस्य रात्रेर्वा गतोऽतीतो वाऽवशिष्टो वा कालो ज्ञायते, यथा एतावत् दिवसस्य रात्रेर्वा गतमेतावत्तिष्ठति, तथा पूर्वधरा अपि चतुर्दशपूर्वधरादयः

आलोचयतां भावमभिप्रायं दुरुपलक्षमप्यागमबलतः सम्यग् जानंति, ज्ञाने च भावे यो येन प्रायश्चित्तेन शुध्यति, तस्मै तत् चतुर्भंगिकविकल्पतो जिना इव प्रयच्छंतीति, न किंचिदनुपपन्नं, तदेवं चतुर्दशपूर्विणमधिकृत्य दोषा एकत्वमापन्ना इति भावितम्. अधुना यथा जातिं प्रतीत्य दोषा एकत्वमापद्यंते, तथा प्रतिपादयति-

**[भा.४४७]** मासचउमासेहिं, बहुहिं वेगं तु दिज्जए सरिसं ।
असनाई दव्वाई, विसरिसि वत्थूसु जं गरुयं ।।

**वृ-** जातिर्द्विधा, प्रायश्चित्तैकजातिर्द्रव्यजातिश्च तत्र प्रायश्चित्तकजातिमधिकृत्येदमुच्यते, मासचतुर्मासिकैर्बहुभिरपि प्रतिसेवितैरेकं मासं चतुर्मासादिकं दीयते, इयमत्र भावना बहुषु लघुमासिकेषु प्रतिसेवितेष्वेकवेलायामालोचितेषु प्रतिसेवनायां मंदानुभावकृतत्वात् प्रतिसेवितमासानामपि सादृश्यत्वात् आलोचनायामपि सर्वेषामशठभावेनैकवेलायामालोचितत्वात्; एकं लघुमासिकं दातव्यं, एवं बहुषु गुरुमासिकेषु प्रतिसेवितेष्वेकं गुरुकं, बहुषु लघुषु द्वैमासिकेष्वेकं लघु द्वैमासिकं बहुषु गुरुद्वैमासिकेष्वेकं गुरु द्वैमासिकं, एवं त्रैमासिके चातुर्मासिक पांचमासिकेषाण्मासिकेष्वपि भावनीयं, विसरिसिवत्थूसु जं गरुयमिति विसदृशवस्तुषु यत् गुरुकं तद्दातव्यं, तद्यथा बहुषु लघुगुरुमासिकेषु प्रतिसेवितेष्वेकं गुरुकं, बहुषु लघुगुरुद्वैमासिकेष्वेकं गुरु द्वैमासिकमेव त्रैमासिक चातुर्मासिक पांचमासिक षण्मासिकेष्वपि द्रष्टव्यं, तथा बहुषु मासिकेषु बहुषु च द्वैमासिकेषु प्रतिसेवितेष्वेकं द्वैमासिकमेवं त्रैमासिक चातुर्मासिक पांचमासिक षण्मासिकेष्वपि भावनीयं, बहुषु मासिकेषु द्वैमासिके त्रैमासिकेषु चातुर्मासिकेषु पांचमासिकेषु षाण्मासिकेषु प्रतिसेवितेष्वेकं षाण्मासिकमिति, संप्रति द्रव्यजातिमधिकृत्य दोषाणामेकत्वं भावयति -

असनाई दव्वाइ इति, द्रव्याणि अशनादीनि अशनपानखादिमस्वादिमानि तान्येकान्यधिकृत्य दोषाणामेकत्वमुपजायते, तत्रैव द्रव्यमधिकृत्येवं अनेकानि अशनैक द्रव्यविषयाण्याधाकर्मिकान्यभवन्, तत्रैकमाधाकर्मिकं चतुर्गुरु दीयते यदिवा बहून्याहृतान्यभवन् तत्रैकमाहृतनिष्पन्नं मासिकं दीयते, एवमुदकार्द्रराजपिंडादिष्वपि भावनीयं, अनेकद्रव्याण्यधिकृत्येवं अशनमाधाकर्म्मिकं पानमाधाकर्म्मिकं प्रतिसेवितं, तेषां सर्वेष्वेकवेलमालोचितेषु एकमाधाकर्म्मिकं चतुर्गुरु दीयते, बहुष्वनेकद्रव्यविषयेषूदकार्देषु एकमुदकार्द्रनिष्पन्नं मासलघु दीयते, एवमनेकद्रव्यविषयेष्वपि स्थापनौद्देशिकादिष्वपि भावनीयं, विसरिसवत्थूसु जं गुरुयमित्येतदत्रापि संबध्यते, तद्यथा एकमशनं राजपिंडो अपरमशनमाहृतमन्यदुदकार्द्रमपरमाधाकर्म्मिकमत्रैकमेव गुरुत्वमाधाकर्म्मिकनिष्पन्नं चतुर्गुरु दीयते, एवं पानकादिष्वपि स्वादिममौद्देशिकमत्राप्येकमाधाकर्मिकनिष्पन्नं चतुर्गुरु दीयते अत्र चागारी दृष्टांतः यथा एगा रहगारी तस्स भज्जाए बहू अवराहा कया, न य भत्तुणा नाया, अन्नया सा घरं उग्घाडदुवारं पमोत्तु पमाया आं सयज्झियघरे ठिया, तत्थ य घरं साणो पविट्ठो, तस्समयं च पई आगतो, तेन साणो दिट्ठो पच्छा सा अगारी आगया, अवराहकारिणीति भत्तुणा पिट्टिउमारद्धा सा चिंतइ, अन्नेवि मे बहू अवराहा अत्थि, ते विमाणाउं एस पिट्टिहिइ, ता इयाणिं चेव सव्वे कहेमि, गावी वच्छेण पीता वासी हारिया कंसभायणमवि हत्थातो पडियं भिन्नं, पडओवि तुम्हाणं नट्ठोत्ति, एवमादि अवराहे, एकसरा कहिएसु तेन सा एकवारं पिट्टिया, एवं लोकोत्तरेपि अनेकेष्वपराधपदेष्वेकप्रायश्चित्तदंडो दीयते, तदेवं दव्वे एगमनेगसि, गतमिदानीमालोचनादीनि त्रीणि द्वाराणि वक्तव्यानि, तेषां यथाक्रममिमे दृष्टांताः ।

|भा.४४८| अगारि दिट्ठंता एगमणेगे य ते य अवराहा ।
भंडी चउक्कभंगा सामी पत्तेय तेनंमि ।।

**वृ-** आलोचनायामगारी दृष्टांतः, तेषु चापराधेषु विषयेषु अगारी दृष्टांतस्ते अपराधा एके अनेके च दुर्बले भंडी दृष्टांतः; तत्र च भंड्या चतुष्कभंगः भंगचतुष्टयमिति भावः आचार्य स्वामित्वप्रातेस्तेन-दृष्टान्ततः तत्रालोचनाविकल्पा इमे -

|भा.४४९| निसज्ज वियडणाए एगमणेगा य होइ चउभंगो ।
वीसरिउस्सणपए विइयतिचरिमे सिया दोवि ।।

**वृ-** इह स्त्रीत्वं पुंस्त्वं प्राकृतत्वात् निषद्याविकटनायां च भवति, चतुर्भंगी चतुर्णां भंगानां समाहारश्चतुर्भंगी गाथायां स्त्रीत्वेपि पुंस्त्वं प्राकृतत्वात् कथं चतुर्भंगीत्यत आह - एकानेका च एका निषद्या अनेका च तथा एका विकटना अनेका वा इयमत्र भावना, एका निषद्या एका आलोचना इहालोचनां ददानेन गुरोर्निषद्या कर्तव्या, यावतश्च वारान् आलोचनां ददाति, तावतो वारान् निषद्यां करोति, तत्र यदा विधिना अशनपानष्वतीचारगनविघ्ने नैकवेलायामालोचयति, तदा एकस्यामेव निषद्यायां सर्वातीचारलोचनात् प्रथमो यथोक्तभंगः ।। वीसरिउस्सणपए विइयतिगि द्वितीयो भंगो विस्मृतो, तृतीयो भंग उस्सणपदे प्रभूतपदेषु किमुक्तं भवति, द्वितीयो भंग एका निषद्या अनेकालोचना एष विस्मृतातिचारस्य, यदिवा मायाविन आलोच्य वंदिते गुरौ पुनः स्मरणतो मायाविनः पश्चात् सम्यगालोचनापरिणामपरिणतस्य गुरौ तथैव स्थित एव वंदनकं कृत्वा आलोचयतो वंदितव्यः तृतीयो अनेका निषद्या एका आलोचना एष प्रभूतेन कालेन प्रतिसेविते बहुकस्य एकदिने नालोचनामपारयतोऽन्यस्मिन्नन्यनस्मिन् दिने निषद्यां कृत्वालोचयतो भावनीयः, यदिवा निषदनं निषद्या गुरौ बहुवेलं कायिकाभूमिगतप्रत्यागतेऽनेका निषद्या एकालोचनेति, चरिमे सिया दोवि चरमभंगे अनेका निषद्या अनेका आलोचना इत्येवंरूपे अशठभावोपेतस्य स्यातां द्वे अपि कारणं विस्मृतत्वं, यदिवा अपराधबाहुल्यं इदमुक्तं भवति, प्रभूतेन कालेन प्रभूतमासेवितमतो बहुविस्मृतमित्यन्यस्मिन् अन्यस्मिन् दिने स्मृत्वा आलोचयतो, यदिवा अपराधबाहुल्यत एकदिनेनालोचयितुमप्रपारयतोऽपरस्मिन्नपरस्मिन्नहन्यालोचयतो यथोक्तस्वरूपचतुर्थोभंगः, तत्र एका निषद्या एकालोचनेति प्रथमे भंग एकमेव गुरुतरं प्रायश्चित्तं दीयते, शेषाणां सर्वेषामपि प्रायश्चित्तानामाच्छादकं, तथाचोक्तं तं चरो ओहाडणं दिज्जइ इति, अस्यायमर्थः तदेकं गुरुतरं प्रायश्चित्तं शेषाणां प्रायश्चित्तानामवघाटनमाच्छादकं दीयते, इति अत्र दृष्टांतः क्षारयोगः यथाहि पंकापनयनाय प्रयुक्तः क्षारयोगोऽवशेषमपि मलं शोधयति, तथैकमप्यवघाटनं प्रायश्चित्तानि शोधयतीति उक्तं च ।

जह पंकावणयणपउत्तो खारजोगो सेसमलंपि सोहेइ ।
तह ओहाडणं पच्छित्तं, पि सेसपच्छित्तं सोहेइ ।। इति

अथवा स एवागारी दृष्टांतो, यथा सा अगारि एकापराधे हन्यमाना अन्यानप्यपराधान् कथयंत्येकवारं पिट्टिता, यदि पुनर्बहवोऽपराधाः कृता इत्यस्मिन्नन्यस्मिन् दिवसे एकैकमपराधं कथयेत् तर्हि यावतो वारान् कथयेत् तावतो वारान् हन्येत, एवमत्रापि यद्येकैकमपरस्मिन्नहन्यालोचयेत्, ततो यावंतोऽपराधास्तावंति प्रायश्चित्तान्याप्नुयादेकनिषद्यायामेकालोचनायांत्वेकमेव गुरुतरकं प्रायश्चित्तं दीयते, इति द्वितीये भंगे बहुप्रतिसेवितमशठेन सता सर्वं न स्मृतं, तद्यदि पश्चादालोचयति, तथापि यथा प्रथमे भंगे गुरुतरकमेकं शेषे प्रायश्चित्तानामाच्छादकं दत्तं, तथात्रापि अशठभावेन नालोचितवान् ततो यावंति

प्रायश्चित्तान्यालोचयति तावंति दीयंते इति, तृतीयेपि भंगे बहुप्रतिसेवितमोतऽशठस्य सत एकनिषद्ययालोचना न समापित्मुपगता, ततो यस्मिन् दिने समाप्तिमुपयाति, तस्मिन् दिने प्रथमभंगक इवैकं गुरुतरकं प्रायश्चित्तं दातव्यं, अथ शठतया अन्यस्मिन् अन्यस्मिन्नहन्यालोचयति, तर्हि यावंत्यपराधपदानि आलोचयति, तावंति प्रायश्चित्तानि दातव्यानि, चरमभंगेपि यद्यशठभावतो विस्मृततया बहुप्रतिसेवनातो वा अनेकेषु दिवसेष्वालोचना समाप्तिं गच्छति, ततस्तत्रापि प्रथमभंगक इवैकं गुरुतरकमवघाटनं प्रायश्चित्तं देयमथ मायावितया ततो यावंत्यपराधपदानि तावंति प्रायश्चित्तानि दातव्यानीति, इह आगारी दृष्टांतः पूर्वमुपक्षिप्तमिदानीं कथयति -

**[भा.४५०]** गावी पीया वासी, य हारिया भायणं च ते भिन्नं ।
अज्जेव ममं सुहयं कारउ पडओवि ते नट्ठो ॥

**[भा.४५१]** एगावराहदंडे अन्नेय कहेय गारिहम्मंती ।
एवंनेगपएसुवि दंडो लोगुत्तगे एगो ॥

**वृ-** अगारी गृहस्था रथकारस्य भार्या, एकापराधदंडे शून्ये गृहे चाप्रविष्टइत्येकस्यापराधस्य दंडे पिट्टनलक्षणे भर्त्राक्रियमाणे हन्यमानाऽचिंतयत् बहवोऽपराधा मया कृतास्ततो मा प्रतिदिवसमेव मां हन्यात्, किं अद्यैव मां सुहतां करोतु, एवं चिंतयित्वा अन्यानप्यपराधान् कथयति, यथा गौर्वत्सेन पीता, किमुक्तं भवति, गां वत्सो धावितवान्, तथा वासी च हारिता क्वापि मुक्ता कस्मै समर्पिता वा न जानामि, तथा भाजनमपि कांस्यभाजनमपि ते तव संबंधी यत्र भयान् भुंक्ते हस्तात् पतितं सत् भग्नं तथा पटोपि ते तवसम्बन्धी नष्टो न दृश्यते केनापि हृत इति भावः एवं लोकोत्तरेपि एक निषद्यायामे कालोचाना-यामित्यादि, चतुर्भङ्ग्याममायाविनो अनेकेष्वपराधपदेषु दण्ड एको गुरुतरको दीयते, अथवा अत्रैवालोचनविषयेऽयमन्यो दृष्टान्तः

**[भा.४५२]** नेगासु चोरियासु मारणदंडो न सेसया दंडा ।
एवमनेग पएसुवि एक्को दंडो न उ विरुद्धो ॥

वृ- एगो चोरो तेन य बाहुयाओ चोरियाओ कयाओ तं जहा, कस्सइ भाणं हरियं, कस्सइ पडओ, कस्सइ हिरण्णं कस्सइ रुप्पं, अनया तेन राउले खत्तं खणियं रयणा हिया दिट्ठो, आरक्खगेहिं गहितो रन्नो उवढविलो, तस्समयं च अन्ने बहवो उवटिया भणंति, अम्हवि एएण हडं, ततो रन्ना रयणह रित्ति काउं तस्स मारणदंडो एक्को आणत्तो, सेस चोरिया दंडा तत्थेव पविट्ठा तथा चाह, अनेकासु चौरिकासु रत्नचौरिकानिमित्तं तस्यैको मारणदंडः प्रयुक्तो, न शेष चौरिका दंडा स्तेषां तत्रैव प्रविष्टत्वात्, एवं लोकोत्तरेप्यनेकपदेषु गुरुकैकपदनिमित्त एको दंडोऽविरुद्धः शेषदंडाना तत्रैव प्रवेशत्, तदेवमालोचनां प्रत्येकत्वं दोषाणामुपपादितं, साम्प्रतं दुर्बलं प्रतीत भाव्यते, तत्र भंडी दृष्टांत स्तत्रापि भङ्ग चतुष्टयं, तद्यथा भंडी बलिका बलीवर्द्दा बलिका ? भंडी बलिका बलिवर्द्दा दुर्बलाः, २ भंडी दुर्बला बलीवर्द्दा दुर्बल्काः ३ दुर्बलाबलीवर्द्दाश्च दुर्बल्काः ४ तत्र प्रथमभंगे बाह्यं परिपूर्णमारोप्यते, द्वितीयभंगे यावत् बलीवर्द्दा आक्रष्टुं शक्नुवंति तावदारोप्यते तृतीयभंगे यावता आरोपितेन भंडा न भज्यते तावदारोहयते चरमभंगे यावन्मात्रेण न भंडी भंगमुपयाति, यावन्नबलीवर्द्दा आक्रष्टुमलं तावदारुहयते एष दृष्टांतोऽयमुपनयः -

**[भा.४५३]** संघयणं जह सगडं धित्तीउ धोज्जेहि होंति उवनीया ।
बिय तिय चरिमे भंगे, तं दिज्जइ जं तरइ वोढुं ॥

वृ- यथा शकटं तथा संहननं शकटस्थानीयं संहननमित्यर्थः, धृतयो धुर्यधौरेयैर्भवंत्युपनीता उपनयं नीताः धौरेयतुल्या धृतय इति भावः अत्रापि भंगचतुष्टयं, तत्र प्रथमे भंगे यावदापन्नं तत्सर्वं दीयते, द्वितीये धृत्यनुरूपं, तृतीये संहननानुरूपं, चतुर्थे धृतिसंहननानुरूपं तथा चाह, बियतिवेत्यादि, द्वितीयतृतीये चरमे भंगे तत् प्रायश्चित्तं धृत्याद्यऽनुरूपं दीयते, यत् शक्नोति वोढुमिति, सांप्रतमाचार्यमधिकृत्य दोषाणामेकत्वं यथोपपद्यते तथा भाव्यते, तत्र स्यामित्यप्रशस्तेन दृष्टांतरत्नमेवाह ।।-

[भा.४५४] नियमरणमूलदेवो आसेहि वासे य पट्टि न उ दंडो ।
संकप्पियगुरुदंडो मुच्चइ जं वा तरइ वोढुं ।।

वृ- एगत्थ नगरे राया अपुत्तो मतो, तत्थवि रज्जचिंतगेहिंतत्थ देवयाराहणनिमित्तं आसो य हि वासीओ, हत्थीय, इतो य मूलदेवो चोरियं करेंतो आरक्खगेहिं गहितो, तेहिं रज्जचिंतगेहिं बज्झो आनंतो नगरं हिंडाविज्जइ, इतो य सो आसो हत्थी य मुक्को तेहिं अट्ठारसपयइपरिवारेहिं दिट्ठो मूलदेवो आसेन हिसियं, पट्ठी अल्लिइीया, हत्थिणा गुलुगुलाइयं गंधोदकं करे घेत्तुं अहिसित्तो खंधे य अट्टितो, सामुद्रिकलक्षणपाठकैरादिष्ट एष राजा इति, तस्य चौरिकापराधाः सर्वमुक्ताः, राज्ये स्थापितस्तखधाचाह नृपमरणमभूत् ततोऽश्वोधिवासितोऽश्वाधिवासः कृतः, तेनाश्वेन मूलदेवस्य पृष्टं दत्तं, ततो मूलदेवो राजा बभूव, न पुनस्तस्य चौरिकादंडः कृतः एष दृष्टांतोऽयमुपनयः एकस्य साधोर्बहुश्रुतस्य अपराधे प्रायश्चित्तं दंडो गुरुकः संकल्पित आचार्यश्च कालगताः स चाचार्यपदयोग्य इत्याचार्यः स्थापितः गच्छे च सूत्रार्थः तदुभयादिभिः संग्रहः कर्त्तव्यः, तत् यत् शक्नोति वोढुं तद्दीयते, अथ न शक्नोति, तर्हि न किंचिद्दीयते, तथा चाह संकप्पेत्यादि संकल्पितगुरुदंड आचार्यपदे स्थापितः सन् एवमेव उच्यते, यद्वा शक्नोति वोढुं तद्दीयते इति, एवमाचार्यमधिकृत्य दोषा एकत्वमापन्नाः अत्राह चोदकः साधूक्तमिदं दोषैकत्वकारणं, किमनया एतावत्प्रमाणया स्थापनारोपणाभ्यामाकृष्टिविकृष्टया इतः पंच दिवसा गृहीता, इतो दशेत्यादिरूपया गुरुणा ह्यागममलसुल्य यत्प्रायश्चित्तमाभवति, तत्स्थापनारोपणाभ्यामंतरेणैव दीयतामिदं ते प्रायश्चित्तमिति, अत्र सूरिराह-

[भा.४५५] चोयगपुरिसा दुविहा, गीयागीयपरिणामि इयरे य ।
दोण्हवि पच्चयकरणं सव्वे सफला कया मासा ।।

वृ- चोदकपुरुषा द्विविधास्तद्यथा, गीयागीयत्ति गीतार्था अगीतार्थाश्च, अगीतार्था द्विविधाः परिणामिनः, इतरे च, इतरे नाम अपरिणामा अतिपरिणामाश्च तत्र गीतार्थानामपि च परिणामिकानां परिहारस्थानमापन्नानां यत् दातव्यं, तत् स्थापनारोपणाभ्यामाकृष्टिविकृष्ट्या विना दीयते, अत्र दृष्टांतो वणिक् ।। एगो वाणियओ तस्स वीसं भंडीतो एकजातीयभंडभरियाओ सव्वातो समभरातो तस्स गच्छंतो सुंकठाणेसु किंयतो उवठितो भणइ, सुंकं देहि, वणिओ भणइ, किं दायव्वं, सुंकिओ भणइ, वीसतिमो भागो, तहेव वणिएण सुंकिएण य परिच्छिन्ना मा ओयारणपच्चारोहेसु विक्खेवो हवउत्ति एका भंडी सुंके दिन्ना, एवं सव्वेसिं गीयत्थाणमगीयत्थाण पारिणामगाणं विणा आकड्ढिविगड्ढिए पायच्छित्तं दिज्जइ, जे उन अगीयत्था अपरिणामगा अतिपरिणामगा य ते जइ छण्हं मासाणं परेणं आवणा, तेसिं दोण्हं पच्चयकरणट्ठा सव्वे मासा ठवणारोवणविहाणेण सफलीकाउं दिज्जंति, तथा चाह दोण्हवीत्यादि द्वयानामपि अपरिणामकानामतिपरिणामिकानां च प्रत्ययकारणं स्यात्, इति हेतोः सर्वे मासाः स्थापनारोपणाभ्यां सफलाः कृता अत्र दृष्टांतो मुरुंडमरुकेन, मुरुंडमरुगस्स वीसं भंडीतो एगजातीयभंडभरियातो सव्वातो

समभारियातो तस्स गच्छतो सुंकठाणंसु किलो उवठितो भणइ, एगं भंडिं दाउं वच्च, किं मम उयारणाविक्खेवेण मुक्खमरुगो भणइ उयारिलाए एक्ककातो वीसइमं भागं गेण्हसु, सुंकिएण तस्स सव्वभंडीतो उयारिला, एक्कातो वीसइमो भागो गहितो, मरुगसरिच्छा अगीया, सुंकियसरिसो गुरु, अहवा निहिदिट्ठंतो कज्जा कज्जे जयमाणा जयमाणासु, एक्केण वाणिएण निही उक्खणितो, तं अणेहिं नाउं निवेइयं वणिओ दंडितो निही य से हडो, एवं मरुएणवि निही दिट्ठो, रणो निवेइओ, रणो पुच्छितो. तेन सव्वं कहियं, मरुगो पूइतो निहीवि से दिक्खिणादिन्नो, एवं जो कज्जे जयणागारी तस्स सव्वं मरुगस्सेव मुच्चइ, जो कज्जे अजयणागारी अकज्जे य जयणागारी य अजयणागारी य, एतेसु वणिगस्सेव पच्छित्तं दिज्जइ, नवरं कज्जे अजयणाकारिस्स लघुतरं दिज्जइ एतदेवाह -

**[भा.४५६]** वणिमरुगनिही य पुनो, दिठंता तत्थ होंति कायव्वा ।
गीयत्थमगीयाण य उवणयणं तेहिं कायव्वं ।।

**वृ-** गीतार्थानामगीतार्थानां च विषये वणिक्मरुकनिधयः पुनः दृष्टांता भवंति, कर्त्तव्याः, तत्र वणिजा गीतार्थानामुपनयनं कर्त्तव्यं, मरुकेनागीतार्थानां एवमेतच्चानंतरमेव भावितं, तत्र वणिग्मरुकदृष्टांतावेव भावयति ।

**[भा.४५७]** वीसं वीसं भंडी वणिमरुसव्वा य तुल्लभंडातो ।
वीसइ भागं सुंके मरुगसरित्थो इहमगीतो ।।

**वृ-** वणिजा मरुकेण च प्रत्येकं विंशतिविंशतिभांड्यो गंत्र्यः कृताः, कथं भूता इत्याह, सर्वास्तुल्यभंडाः तुल्यक्रयाणकाः तत्र शौल्किको विंशतितमो भागः प्रत्येकमेकैकं विंशतितमं भागं याचितवान्, वणिक् एकां भांडीमेव दत्तवान्, मरुकस्तु प्रत्येकं प्रत्येकं भंडीभ्य एकैकं विंशतितमं भागं, अत्र वणिक्सदृशो गीतार्थो, मरुक्सदृशः पुनरिह अगीतो ऽगीतार्थः, अथवा कार्याकार्येषु यतनायतनयोर्निधिलाभे यौ वणिग्मरुकौ दृष्टांतौ कर्त्तव्यौ, तथा चाह, अथवा -

**[भा.४५८]** वणिमरुगाय निहिलंभ निवेइए वणिय दंडो ।
मरुए पूय विसज्जण इय कज्जमकज्ज जयमजओ ।।

**वृ-** अथवेति प्रकारांतरे एतच्चप्रकारांतरमिदं पूर्वं गीतार्थागीतार्थयोर्वणिग्मरुकदृष्टांतावुक्ताविदानीं तु कार्याकार्येषु यतनायामयतनायां च निधिलाभोपलक्षितौ वणिग्मरुकदृष्टांतावुच्येते, इति, वणिजा निधिलाभे अनिवेदिते वणिजो राज्ञा दंडः कृतः, मरुकेणनिधिलाभे निवेदिते तस्मिन् मरुके राज्ञा पूजा कृता, विसर्जनं च प्रदानं च निधिः मरुकाय कृतं इत्येवममुना दृष्टांतेन कार्यमकार्यं वाऽधिकृत्य यतमानोऽयतमानश्चोपनेतव्यः, यः कार्ये यतनाकारी, स मरुक इव पूज्यः, सर्वमपि च तस्य प्रायश्चित्तं मुच्यते, कार्ये अयतनाकारी अकार्ये यतनाकारी अकार्ये यतनाकारी च वणिगिव दंड्यते नवरं कार्येऽयतनाकारिणः स्तोको दंडः, अथवा यदधस्तादवाचि आचार्यस्य सर्वमुच्यते, किमिति वा शेषाः साधवः सर्वं प्रायश्चित्तं वाह्यं अत्र निधिदृष्टांतस्तथा चाह-

**[भा.४५९]** मरुयसमाणो उ, गुरू मुच्चइ पुव्वंपि सव्वं से ।
साहू वणिउव्व जहा, वाहिज्जइ सव्वपच्छित्तं ।।

**वृ-** कथानकं प्रागुक्तमेव उपनयनस्त्वन्यथा, यथा मरुको निधिलाभनिवेदनेन राज्ञो अनुग्रहं कृतवान्

तथा आचार्योऽपि गच्छोपग्रहं करोति, गच्छोपग्रहणं च कुर्वन् भगवदाज्ञां पालयति, ततो मरुकवत् स पूज्यः, सर्वं च तस्य प्रायश्चित्तं मुच्यते इत्यदोषः, तथा चाह, मरुकसमानो गुरुरिति पूज्यते, अत एव च से तस्य पूर्वं प्रायश्चित्तं मुच्यते, साधुः पुनर्यथा वणिक् तथा द्रष्टव्यः, ततः सर्वं प्रायश्चित्तं वाह्यते, अथवा वणिक् मरुकनिही य पुनो इत्यत्र वणिग्दृष्टांतोऽगीतार्थो नाम्, मरुकदृष्टांतो गीतार्थानामुभयेषामपि यादृशः, षण्मासालोचनायामाचार्यस्य विनयोपचारः करणीयस्तथा मासिकालोचनायामपि इत्यत्रार्थे निधिदृष्टांतरस्तथा चाह:-

[भा.४६०] अहवामहानिहिम्मी जो उवयारो स एव थोवेवि ।
विनया दुवयारो पुन, जो छम्मासे समासे वि ॥

वृ- अथवेति निधिशब्दस्यार्थांतरार्थदृष्टांते चोपदर्शने महानिधावुत्खनितव्ये, यो यादृश उपचारः क्रियते, स एव तादृश एव स्तोकेऽपि निधावुत्खनितव्ये करणीयः, एवमपराधालोचनायामपि यादृशः षण्मासालोचनायां विनयाद्युपचारः क्रियते, आदिशब्दात् प्रशस्तद्रव्यक्षेत्रकालभावपरिग्रहः स तादृशो मासेपि मासिकायामपि कर्तव्यः, अत्राह परः यूदिदं सूत्रखंडं यूयं प्ररूपयथ तेन परं पलिउंचाए वा अपलिउंचिए वा ते चेव छम्मासा इति, स किमेष सर्वस्यापि नियम उत पुरुषविशेषस्य ? सूरिराह ॥

[भा.४६१] सुबहूहिंवि मासेहिं छम्मासाणं परं न दायव्वं ।
अविकोवियस्स एवं विकोविए अन्नहा होइ ॥

वृ- षण्मासेभ्यः परतः सुबहुभिरपि मासैः प्रतिसेवितैः प्रायश्चित्तं षण्मासानां परं सप्तमासादिकं न दातव्यं, किंतु षण्मासावधिकमेव, यतोऽस्माकमेतावदेव भगवता वर्धमानस्वामिना तपोर्हं प्रायश्चित्तं व्यवस्थापितं, एतदेवमुक्तप्रकारेण स्थापनारोपणाप्रकारेणलक्षणेन दातव्यं, अविकोविदस्य अपरिणामकस्य अतिपरिणामकस्य वा अगीतार्थस्य च, इयमत्र भावना, सर्वस्याप्येष नियमो यदुत सुबहुष्वपि षण्मासेभ्यः परतो मासेषु प्रतिसेवितेषु प्रायश्चित्तं षण्मासावधिकमेव दातव्यं, न ततोऽधिकमपि, केवलमेतावांस्तु विशेषो योऽपरिणामको अतिपरिणामिको वा तस्यागीतार्थस्यस्थापनारोपणाप्रकारेण सर्वान् मासान् सफलीकृत्य पाण्मासिकं तपो दीयते, यस्तु विकोविदो गीतार्थोऽगीतार्थो वा परिणामकस्तस्मिन्नन्यथा भवति प्रायश्चित्तदानं, किमुक्तं भवति, विकोविदस्य षण्मासानां परतः सुबहुष्वपि मासेषु प्रतिसेवितेषु शेषं समस्तं त्यक्त्वा षण्मासा दीयंते, न पुनरस्ति तत्र स्थापनारोपणाप्रकार इति, आह परः, यदि भगवता तपोर्हे प्रायश्चित्ते उत्कर्षतः षण्मासा दृष्टास्ततः षण्मासातिरिक्तमासादिप्रतिसेवनं छेदादि कस्मान्न दीयते, येन शेषं समस्तमपि त्यज्यते इति तत्राह -

[भा.४६२] सुबहूहिं वि मासेहिं छेदो मूलं तहिं न दायव्वं ।
अविकोवियस्स एवं विकोविए अन्नहा होंति ॥

वृ- यो नामागीतार्थोऽपरिणामकोऽतिपरिणामिको वा यो वा छेदादिकं नश्रद्दधाति तस्य एवमवसातव्यं, षण्मासानामुपरि सुबहुभिरपि मासैः प्रतिसेवितैः छेदो मूलं वा न दातव्यपरिणामादिस्वभावतया तस्य छेदमूलानर्हत्वात्, किंतुस्थापनारोपणाप्रकारेण सा दीयंते: विकोविदे गीतार्थेऽगीतार्थे परिणामके तदेव षण्मासदानमन्यथा भवति, स्थापनारोपणाप्रकारमंतरेणापि एवमेव दीयंते षण्मासा इति भावः, अयमत्र संप्रदायः, अविकोविदा उक्तस्वरूपा निःकारणं प्रतिसेवनया यतनया प्रतिसेवनया वा अभीक्ष्णप्रतिसेवनया वा यदिवा कथमपि छेदमूलादिकं प्राप्तास्तथापि तेषां छेदो मूलं वा न देयं, किंतु

षाण्मासिकं तपः, यदि पुनरकोविदोऽप्युपेत्य पंचेन्द्रियघातं करोति, दर्पेण वा मैथुनं प्रतिसेवते, तदा तपः छेदो मूलं वा दीयते, विकोविदस्य पन्नां मासानामुपरि बहुष्वपि प्रतिसेवितेषु मासेषु प्रथमवेलायामुद्घातिताः षण्मासा दीयंते, द्वितीयवेलायामनुद्घातितास्तृतीयवेलायां छेदो मूलं वा इति, अथ कोऽसौ विकोविदः कोविदो वा अविकोविदः इत्यत आह-

[भा.४६३] गीतोविकोविदो खलु कयपच्छित्तोसिया अगीतोवि ।
छम्मासियपट्ठवणाए तस्स सेसाण पक्खेवो ॥

वृ- गीतो गीतार्थः खलु कृतप्रायश्चित्तो विकोविदः, योऽप्युक्तो यथा आर्य यदीदं भूयः सेविष्यसे, ततः छेदं मूलं वा दास्यामः, सोपि कोविदः, तद्विपरीतोऽगीतार्थः यश्च प्रथमतया प्रायश्चित्तं प्रतिपद्यते, यश्चोक्तोपि तथा न सम्यक् परिणमयति, स स्याद् भवेदकोविदः, तत्र यदि कोविदः षट्मासेषु तपसा कर्तुमारब्धेष्वंतरा यदिवा मासादिकं प्रतिसेवितं तत् तस्य पूर्वप्रस्थापितषण्मासस्य ये शेषा मासा दिवसा वा तिष्ठंति तेषां मध्ये प्रक्षिप्यंते, न पुनः षण्मासपरिपूर्णानंतरं तद्विपर्य भिन्नं प्रायश्चित्तं दातव्यमिति तथा चाह षण्मासप्रस्थापनायां षण्मासेषु तसाकर्तुमारब्धेषुइत्यर्थः तस्यमासिकादेरपांतराले प्रतिसेवितस्य षण्मासस्ययेशेषामासा स्तिष्ठंति, तेषांमध्ये अनुग्रह कृत्स्नेननिर नुग्रहकृत्स्नेन वा प्रक्षेपः, आह, एतत् तपः छेदमूलार्हं प्रायश्चित्तं कुत उत्पद्यते: सूरिराह-

[भा.४६४] मूलातिचारे चेयं, पच्छित्तं होइ उत्तरेहिं वा ।
तम्हा खलु मूलगुणेऽनतिक्कमे उत्तरगुणे वा ॥

वृ- एततपः छेदमूलार्हं प्रायश्चित्तं यस्माद् भवति, मूलातिचारमूलगुणातिचारे प्राणातिपातादि प्रतिसेवने इत्यर्थः, उत्तरैर्वा उत्तरगुणैर्वा पिंडविशुद्ध्यादिभिरतिचर्यमाणैर्भवति प्रायश्चित्तं, तस्मात् मूलगुणात् प्राणातिपातादिसेवनया उत्तरगुणाद्वा उद्गमादिदोषासेवनया नातिक्रमेत्, अत्र पर आह-

[भा.४६५] मूलव्वयाइयारा जयाऽसुद्धाचरणभंसगा होंति ।
उत्तरगुणातियारा, जिनसासने किं पडिकुट्ठा ॥

वृ- यदि मूलगुणातिचारा अशुद्धा इति कृत्वा चरणभ्रंशका भवंति, ततः साधूनामुत्तरगुणाति-चाराश्चरणस्याभ्रंशकाः प्राप्ता मूलगुणातिचाराणां चरणभ्रंशकतया प्रतिपन्नत्वात्, ततः किमुत्तरगुणा जिनशासने प्रतिक्रुष्टाः न युक्तस्तेषां प्रतिषेधो दोषाकारित्वादिति भावः ।

[भा.४६६] उत्तरगुणातियारा जयसुद्धा चरणभंसया होंति,
मूलव्वयातियारा, जिनसासने किं पडिकुट्ठा ॥

वृ- यदि उत्तरगुणातिचारा अशुद्धा इति कृत्वा चरणभ्रंशका भवंति, ततः मूलव्रतातिचारांश्चरण-भ्रंशकान् प्राप्नुवंति, उत्तरगुणातिचाराणां चरणभ्रंशकतया प्रतिपन्नत्वात् तथाच सति मूलव्रतातिचाराः किं जिनशासने प्रतिक्रुष्टाः दोषाभावात् अत्र सूरिराह -

[भा.४६७] मूलगुणउत्तरगुणा जम्हा भंसंति चरणसेढितो ।
तम्हा जिनेहिं दोनिवि, पडिकुट्ठा सव्वसाहूणं ॥

वृ- यस्मात् मूलगुणा उत्तरगुणा वा पृथक् पृथक् युगपद् वा अतिचर्यमाणाश्चरणश्रेणीसंयमश्रेणीतो भ्रंशयति साधून् ततो जिनैः सर्वज्ञैर्द्वयोरपि मूलगुणातिचारा उत्तरगुणातिचाराश्च प्रतिक्रुष्टाः अन्यच्च मूलगुणेष्वतिचर्यमाणेषु मूलगुणास्तावद्धता एव किंतूत्तरगुणा अपि हन्यंते, उत्तरगुणेष्वतिचर्यमाणेषूत्तर-

गुणास्तावद्धता एव, किंतु मूलगुणा अपि हन्यंते तथा चात्र दृष्टांतमाह -

**[भा.४६८]** अग्गग्घातो हणे मूलं, मूलघातोउ अग्गयं ।
तम्हा खलु मूलगुणा न संति न य उत्तरगुणा य ।।

**वृ-** यथा तालद्रुमस्याग्रसूच्या घातो मूलं हंति मूलघातोपि चाग्रं हंति, एवं मूलगुणानां विनाश उत्तरगुणानपि नाशयति, उत्तरगुणानामपि विनाशो मूलगुणान् तस्मात्मूलगुणातिचाराश्च जिनैः प्रतिक्रुष्टाः, अत्र चोदक आह, यदि मूलगुणानां नाशे उत्तरगुणानामपि नाश उत्तरगुणानां नाशे मूलगुणानामपि, तस्मात्ततो न खलु नैव मूलगुणा संति, नाप्युत्तरगुणाः यस्मान्नास्त्येव संयतो, यो मूलोत्तरगुणानामन्यतमं गुणं न प्रतिसेवते, अन्यतमगुणप्रतिसेवनं च द्वयानामपि मूलोत्तरगुणानामभावः, तेषामभावे सामायि-कादिसंयमाभावः, तदभावे बकुशादिनिर्ग्रंथानामभावस्ततः प्राप्तं तीर्थमचारित्रमिति, अत्र सूरिराह -

**[भा.४६९]** चोयग छक्कायाणं, तु संजमो जाऽनुधावए ताव ।
मूलगुणउत्तरगुणा दोण्णिवि अनुधावते ताव ।।

**वृ-** चोदक यावत् षट्जीवनिकायेषु संयमोऽनुधावति, अनुगच्छति, प्रबंधेन वर्तते, तावत् मूलगुणा उत्तरगुणाश्च द्वयेप्येते अनुधावंति, प्रबंधेन वर्त्तते"।

**[भा.४७०]** इत्तरसामाइयछेयसंजमा तह दुवे नियंठाय ।
बउस पडिसेवगातो अनुसज्जंत य जा तित्थं ।।

**वृ-** यावत् मूलगुणा उत्तरगुणाश्चानुधावंति, तावदित्वरसामायिकछेदसंयमावानुधावतः, यावच्चेत्वरसामायिकछेदोपस्थापनसंयमो तावद् द्वौ निर्ग्रंथावनुधावतः तद्यथा बकुशः प्रतिसेवकश्च तथाहि यावत् मूलगुणप्रतिसेवना, तावत् प्रतिसेवको, यावदुत्तरगुणप्रतिसेवना, तावद् बकुशः, ततो यावत् तीर्थं तावत् बकुशाः प्रतिसेवकाश्च अनुसज्जंति, अनुवर्तंते, ततो नाचारित्रं प्रसक्तं प्रवचनमिति, अथ मूलगुणप्रतिसेवनायामुत्तरगुणप्रतिसेवनायां वा चारित्रभ्रंशेऽस्ति कश्चिद्विशेष उत नास्ति ? अस्तीति ब्रूमः, कोसावित्याह -

**[भा.४७१]** मूलगुणदइयसगडे, उत्तरगुणमंडवे सरिसवाई ।
छक्कायरक्खणट्ठा दोसुवि सुद्धे चरणसुद्धी ।।

**वृ-** मूलगुणेषु दृष्टांतो दृतिः, शकटं च केवलम्, उत्तरगुणा अपि तत्र दर्शयितव्याः, उत्तरगुणेषु दृष्टांतो मंडपे सर्षपादि, आदिशब्दात् शिलादिपरिग्रहः, अत्रापि मूलगुणा अपि दर्शयितव्याः इयमत्र भावना, एकेनापि मूलगुणप्रतिसेवनेन तत्क्षणादेव चारित्रभ्रंश उपजायते, उत्तरगुणप्रतिसेवनायां पुनः कालेन अत्र दृष्टांतो दृतिकः, तथाहि यथा दृतिक उदकभृतः, पंचमहाद्वारस्तेषां महाद्वाराणामेकस्मिन्नपि द्वारे मुत्कलीभूते तत्क्षणादेव रिक्तीभवति, सुचिरेण तु कालेन पूर्यते, एवं महाव्रतानामेकस्मिन्नपि महाव्रते अतिचर्यमाणे तत्क्षणादेव समस्त चारित्रभ्रंशो भवति, एकमूलगुणघाते सर्वमूलगुणानां घातात्, तथा च गुरवो व्याचक्षते, एकव्रतभंगे सर्वव्रतभंग इति, एतन्निश्चयनयमतं, व्यवहारतः पुनरेकव्रतभंगे तदेवैकं भग्नं प्रतिपत्तव्यं, शेषाणां तु भंगः क्रमेण, यदि प्रायश्चित्तप्रतिपत्त्या नाऽनुसंधत्ते इति, अन्ये पुनराहु श्चतुर्थमहाव्रतप्रतिसेवने तत्कालमेव सकलचारित्रभ्रंशः, शेषेसु पुनर्महाव्रतेष्वभीक्ष्णं प्रतिसेवनया महत्यतिचरणे वा वेदितव्यः, उत्तरगुणप्रतिसेवनायां पुनः कालेन चरणभ्रंशो, यदि पुनः प्रायश्चित्त-प्रतिपत्त्या नोज्ज्वालयति, एतदपि कुतोऽवसेयमिति चेत् उच्यते, ते शकटदृष्टांतात्तथाहि, शकटस्य

मूलगुणा द्वे चक्रे उद्धी अक्षश्च, उत्तरगुणा वर्धनकीलकलोहपट्टकादयः एर्नमूलगुणैरुत्तरगुणैश्च सुसंप्रयुक्तं सत् शकटं यथा भारवाहनक्षमं भवति, मार्गे च सुखं भवति. साधुरपि मूलगुणैरुत्तरगुणैश्च सुसंप्रयुक्तः सन् अष्टादशशीलांगसहस्रभारवहनक्षमो भवति. विशिष्टविशिष्टतरसंयमाध्यवसायस्थानपथे च सुखं वहति, अथ शकटस्य मूलांगानामेकमपि मूलांगं भग्नं भवति, तदा न भारवहनक्षमं, नापि मार्गे वर्तते, उत्तरांगैस्तु कैश्चिद्विनापि शकटं कियत्कालं भारक्षमं भवति, प्रवहति च मार्गे कालेन पुनर्गच्छता अन्यान्यपि परिशटनादयोग्यमेव तदुपजायते।

एवमिहापि मूलगुणानामेकस्मिन्नपि मूलगुणे हते न साधुनामष्टादशशीलांगसहस्रभारवहनक्षमता, नापि संयमश्रेणिपथे प्रवहनं, उत्तरगुणैस्तु कैश्चित् प्रतिसेवितैरपि भवति कियंतं कालं चरणभारवहन-क्षमता, संयमश्रेणिपथे प्रवर्त्तनं च, कालेन पुनर्गच्छता तत्राप्यन्यान्यगुणप्रतिसेवनातो भवति समस्त-चारित्रभ्रंशस्ततः शकटदृष्टांतादुपपद्यते, मूलगुणानां एकस्यापि मूलगुणस्य न नाशे तत्कालं चारित्रभ्रंश, उत्तरगुणनाशे कालक्रमेणेति, इतश्चैतदेवं मंडपसर्षपादिदृष्टांतात्, तथाऽरंडादि मंडपे यद्येको द्वौ बहवो वा सर्षपा, उपलक्षमेतत् तिलतंदुलादयो वा प्रक्षिप्यंते, तथापि न स मंडपो भंगमापद्यते, अतिप्रभूतैः आढकादिसंख्याकैर्भज्यते, अथ तत्र महती शिला प्रक्षिप्यते, तदा तयैकयापि तत्क्षणादेव ध्वंसमुपयाति, एवं चारित्रमंडपोऽप्येकाद्विव्यादिभिः उत्तरगुणैरतिचर्यमाणैर्न भंगमुपयाति, बहुभिस्तु कालक्रमेणातिचर्य-माणैर्भज्यते, शिलाकल्पेन पुनरेकस्यापि मूलगुणस्यातिचारेण तत्कालं भ्रंशमुपगच्छतीति, तदेवं यस्मान्मूलगुणातिचरणे क्षिप्रमुत्तरगुणातिचरणे कालेन चारित्रभ्रंशो भवति, तस्मान्मे मूलगुणा उत्तरगुणाश्च निरतिचाराः स्युरिति षट्कायरक्षणार्थं सम्यक् प्रतिपत्तव्यं, षट्कायरक्षणे हि मूलगुणा उत्तरगुणाश्च शुद्धा भवंति तेषु च द्वयेष्वपि शुद्धेषु, अत्र गाथायामेकवचनं प्राकृतत्वात्, प्राकृते हि वचनव्यत्ययोपि भवतीति, चरणशुद्धिश्चारित्रशुद्धिः, अत्र शिष्य प्राह, ये प्राणातिपातादिनिवृत्त्यात्मकाः पंचमूलगुणास्ते ज्ञाता ये तूत्तरगुणास्तान्न जानीमस्ततः के ते उत्तरगुणा इति सूरिराह-

**[भा.४७२]** पिंडस्स जा विसोही, समितीओ भावना तवो दुविहो ।
पडिमा अभिग्गहाविय, उत्तरगुणा मो वियाणाहि ।।

**वृ-** पिंडस्य या विशोधिर्याश्च ईर्य्यासमित्यादिका याश्च भावना महाव्रतानां, यच्च द्विभेदं तपः, याश्च प्रतिमा भिक्षूणां द्वादश ये चाभिग्रहा द्रव्यादिभेदभिन्ना एतानुत्तरगुणान् मो इति पादपूरणं विजानीहि, एतेषां चोत्तरगुणानामियं क्रमेण संख्या ।।

**[भा.४७३]** बायाला अट्ठेव उ पणवीसा बार बारस य चेव ।
दव्वाइचउरभिग्गह, भेया खलु उत्तरगुणाणं ।।

**वृ-** उत्तरगुणानां प्रागुक्तानां पिंडविशुध्यादीनां क्रमेण खल्वमी भेदास्तद्यथा, पिंडविशुद्धेर्द्विचत्वारिं-शद्भेदाः षोडशविध उद्गमः, षोडशविधा उत्पादना, दशविधा एषणा च, समितीनामष्टौ भेदास्तद्यथा पंच ईर्यासमित्यादयस्तथा मनःसमितिर्वाक्समितिः कायसमितिरित्यष्टौ, भावनानां भेदाः पंचविंशतिः, एकैकस्य महाव्रतस्य पंच पंच भावनाः सद्भावात्, तपसो द्विविधस्यापि सर्वसंख्यया भेदा द्वादश, द्विविधं हि तपो बाह्याभ्यंतरभेदात्, बाह्याभ्यंतरस्य च प्रत्येकं षट्भेदा इति, प्रतिमानां भेदा द्वादश, ते च मासाेसत्ता इत्याद्यावश्यकग्रंथतो वेदितव्याः, अभिग्रहभेदाश्चत्वारो द्रव्यादिकाः द्रव्याभिग्रहाः क्षेत्राभिग्रहाः कालाभिग्रहा भावाभिग्रहाश्च तदेवमुक्ता उत्तरगुणाः; संप्रति यदधस्तात् प्रायश्चित्तमुपवर्णितं, तद्व्रतानां

पुरुषाणामिमे विशेषा इति प्रतिपादयति ।

|भा.४७४| निग्गयवट्टंतावि य संचइया खलु तहा असंचइया ।
एक्केक्काते दुविहा उग्घाया तहा अनुग्घाया ।।

वृ- ये प्रायश्चित्तं वहंति, ते द्विविधास्तद्यथा निर्गताः वर्तमानाश्च वर्तमानाश्च निर्गता नाम ये तपोर्हं प्रायश्चित्तमतिक्रांताच्छेदादिप्राप्ताः, वर्तमाना ये तपोर्हप्रायश्चित्ते वर्तंते, तत्र ये वर्तमानास्ते पुनर्द्विविधाः संचयिता असंचयिताश्च संचयः संजात एषामिति संचयिताः, तारकादिदर्शनादितचप्रत्ययः येषां षण्णां मासानां परतः सप्तमासादिकं यावदुत्कर्षताऽशीतं शतं मासानां प्रायश्चित्तं प्राप्तास्ते संचयितास्तेषां मासेभ्यः स्थापनारोपणाप्रकारेण दिवसान् गृहीत्वा षण्मासावधिकं प्रायश्चित्ते वर्त्तते, ते संचयिता असंचयिताश्च एकैके द्विविधा उद्घातास्तथा अनुद्घाता, उद्घातो नाम लघुरनुद्घातो नाम गुरुस्तत्र ये संचये असंचये च उद्घाते वर्त्तंते, ते संचयिता असंचयिताश्च उद्घाताः, ये पुनरनुद्घाते वर्तंते, संचयिता असंचयिताश्च ते अनुद्घाताः सांप्रतमेनामेवगाथां यथोक्तव्याख्यानेनव्याख्यानयति ।।

|भा.४७५| छेयाईआवण्णाउ निग्गयांत तवाउ बोधव्वा ।
जे पुन वट्टंति तवे, ते वट्टंता मुनेयव्वा ।।

|भा.४७६| मासादीआवणे जा, छम्मासा असंचयं होइ ।
छम्मासाउ परेणं, संचइयं तं मुनेयव्वं ।।

वृ- ये छेदादिप्रायश्चित्तमापन्नास्ते निर्गता उच्यंते, कुतस्ते निर्गता इत्याह, ते तवाउ बोधव्वा, ते निर्गतास्तपसस्तपोर्हात् प्रायश्चित्तात्तु बोधव्वा, ये पुनर्वर्त्तंते, तपसि तपोर्हे प्रायश्चित्ते, ते वर्त्तमाना ज्ञातव्याः, मासादी इत्यादि-मासादिकं प्रायश्चित्तस्थानमापन्ने मासादारभ्य यावत् षण्मासास्तावत् प्रायश्चित्तमसंचयं असंचयसंज्ञं भवति, षण्मासात् षड्भ्यो मासेभ्यः परेण परतो यत् प्रायश्चित्तं तत् संचयितं ज्ञातव्यं, उद्घातानुद्घातविशेषस्तु सुप्रतीत इति न व्याख्यातः; संप्रति संचयासंचये-षूद्घातानुद्घातेषु प्रस्थापनविधिं विवक्षुरिदमाह -

|भा.४७७| मासाइ असंचइए, संचइए छहिं तु होइ पट्ठवणा ।
तेरसपय असंचइए संचये एक्कारस पयाइं ।।

वृ- असंचयिते प्रायश्चित्तस्थाने प्रस्थापना मासादि मासप्रभृतिका, संचयिते पुनः प्रस्थापना नियमतः षड्भिर्मासैर्भवति, प्रस्थापना नाम दानं, उक्तं च निशीथचूर्णौ; पट्ठवणा नाम दाणंति, इयमत्र भावना, असंचयिप्रायश्चित्तस्थानं विषये यो मासिकं प्रायश्चित्तस्थानमापन्नस्तस्य मासिकी प्रस्थापना द्वौ मासावापन्नस्य द्वैमासिकी, त्रीन् मासान्नापन्नस्य त्रैमासिकी एवं यावत् षण्मासानापन्नस्य षाण्मासिकी, यः पुनः संचयापन्नस्तस्य नियमात् षाण्मासिकी प्रस्थापनातत्रासंचये प्रस्थापनायाः पदानि त्रयोदश, संचये एकादश, तत्रा संचये प्रस्थापनायाः पदानि त्रयोदशामूनि ।।

|भा.४७८| तवतियं छेयतियं वा मूलतियं अनवट्ठावणतियं च ।
चरमं च एक्कसरयं, पढमं तववज्जियं बिइयं ।।

वृ- तपस्त्रिकं, छेदत्रिकं मूलत्रिकं, अनवस्थाप्यत्रिकं चरमं पारांचितं, तदेकसरं एकवारं दीयते, इदमुक्तं भवति, असंचयं उद्घातं मासादिकमापन्नस्य प्रथमवेलाया मुद्घातो मासो दीयते, द्वितीयवेलाया-मुद्घातचातुर्मासिकं, तृतीयवेलायामुद्घातषण्मासिकं, चतुर्थवेलायां छेदः पंचमवेलायामपि छेदः,

षष्ठवेलायामपि छेदः, सर्वत्र त्रीणि त्रीणि दिनानि छेदः सप्तमवेलायां मूलमष्टमवेलायां मूलं, नवमवेलाया-मपि मूलं, दशम वेलाया मनवस्थाप्य मेकादश वेलाया मनवस्थाप्यं, द्वादश वेलायामप्य नवस्थाप्यं त्रयोदशवेलायां पाराञ्चितमिति । एवमनुद्घातितेऽपि असंचये त्रयोदशपदानि प्रस्थापनायां वक्तव्यानि। 'पढमं' ति प्रथममसंचयं पदं पदम् ।। द्वितीयं संचयपदं 'तवखज्जियं' ति मासचतुर्मासलक्षणाभ्यामाद-मिभ्यां वर्जितमेकादशपदं भवति । एतदेव व्याख्यानयति-

**[भा.४७९]** बिइयं संचइयं खलु तं आइपएहिं दोहिं रहियं तु ।
छम्मासतवादीयं एक्कारसपएहिं चरमेहिं ।।

**वृ-** द्वितीयं खलु संचयितमुच्यते । तत् द्वाभ्यामादिदाभ्यां रहितं षण्मासतपआदिकं षण्मासतपःप्रभृतिकं चरमैरेकादशपदैर्द्रव्यम् । तत्रापीयं भावना-संचयितप्रायश्चित्तस्थानमापन्नस्य प्रथममुद्घातं षाण्मासिकं तपो दीयते । द्वितीयवेलायां च्छेदः, तृतीयवेलायां च्छेदः, चतुर्थवेलायामपि छेदः, पञ्चमवेलायां मूलं, षष्ठवेलायां मूलं, सप्तमवेलायामपि मूलं, अष्टमवेलायामनवस्थाप्यं, नवमवेलायामनवस्थाप्यं, दशमवेलायामनवस्थाप्यं, एकादशवेलायां पाराञ्चितमिति । एतदेवाह -

**[भा.४८०]** छम्मास तवो छेदा मयगा तिगतिग तहेक्क चरमं च ।
संवट्टियावराहे, एक्कारस पयाउ संचइए ।।

**वृ-** संचयिते कथंभूते ? इत्याह-संवर्तितापराधे संवर्तिताः-पिण्डीभूता अपराधा यत्र तत् संवर्तितापराधं । तथाहि- बहुषु मासेषु प्रतिसेवितेषु स्थापनारोपणाप्रकारेण तेभ्यो मासेभ्यो दिनानि दश दश पञ्च पञ्चेत्यादिरूपतया गृहीत्वा षाण्मासिकं तपः । ततः छेदादीनां त्रिकं त्रिकं । किमुक्तं भवति ? तदनन्तरं वेलात्रयमपि यावत् च्छेदत्रिकं, ततो मूलत्रिकं तदनन्तरमनवस्थाप्य त्रिकं । तथा एकमेक वेलं वा चरमं पाराञ्चितमिति । एवं अनुद्घातितेऽपि संचयिते एकादश पदानि वाच्यानि । सम्प्रति येऽत्र प्रायश्चित्तस्यार्हाः पुरुषास्तान् प्रतिपादयति-

**[भा.४८१]** पच्छित्तस्स उ अरिहा इमे उ पुरिसा चउव्विहा होंति ।
उभयतर आयतरगा परतरगा अन्नतरगा य ।।

**वृ-** प्रायश्चित्तस्यार्हा योग्या इमे चतुर्विधाश्चत्वारः पुरुषा भवन्ति । तद्यथा-उभयतरा आत्मतरकाः परतरका अन्यतरकाश्च । तत्र ये उत्कर्षतः षण्मासानपि यावत्तपः कुर्वतोऽग्लानाः सन्तः आचार्यादीनामपि वैयावृत्यं कुर्वन्ति, तत् लब्ध्युपेतत्वात्, ते उभयमात्मानं परं चाचार्यादिकं तारयन्तीत्युभयतराः । पृषोदरादित्वात् ह्रस्वः ये पुनस्तपोबलिष्ठा वैयावृत्यलब्धिहीनास्ते तप एव यथोक्तरूपं कुर्वन्ति, न वैयावृत्यमाचार्यादीनामित्यात्मानं केवलं तारयन्तीत्यात्मतराः । स्वार्थिकप्रत्ययविधानात् आत्मतरकाः । ये पुनस्तपः कर्तुमसमर्था वैयावृत्यं चाचार्यादीनां कुर्वन्ति, ते परं तारयन्तीति परतरकाः । येषां तपसि वैयावृत्ये च सामर्थ्यमस्ति केवलमुभयं युगपत्कर्तुं न शक्नुवन्ति, किन्त्वन्यतरत् ते एकस्मिन् काले आत्मपरयोरन्यमन्यतरं तारयन्तीति अन्यतरकाः ।।

**[भा.४८२]** आयतर परतरे वि य, आयतरे अभिमुहे य निक्खित्ते ।
एक्केक्कमसंचइए, संचइ उग्घायमनुग्घाया ।।

**वृ-** आत्मतरश्च स परतरश्च आत्मतरपरतर उभयतर इत्यर्थः । यश्चात्मतर एतौ द्वावपि प्रायश्चित्तवहनाभिमुखौ भवतः । ततस्तस्मिन् प्रत्येकं प्रायश्चित्तमभिमुखमुच्यते । यस्तु परतरोऽन्यतरको

चा यावत् वैयावृत्त्यं करोति, तावत्तयोः प्रायश्चित्तं निक्षिप्तं क्रियते, इति तन्निक्षिप्तमभिधीयते । एकैकमभिमुखं निक्षिप्तं च द्विधा संचयितमसंचयितं च, पुनरेकैकं द्विधा-उद्घातमनुद्घातं च । तदेतत् संक्षेपत उक्तमिदानीं विस्तरेऽभिधेयस्तत्र यः प्रथम उभयतरस्तस्येमं दृष्टान्तमाचार्याः परिकल्पयन्ति: सेवक दृष्टान्त भावना ।

[भा.४८३] जह मासतो उ लद्धो, सेवियपुरिसेन जुयलयं चेव ।
तस्स दुवे तुट्ठीतो वित्तीय कया जुयलयं च ।।

वृ- एगो सेवगपुरिसो, रायं ओलग्गइ । सो राया तस्स वित्तिं न देइ । अन्नया तेन राया कणइ कारणेण परितोसितो । ततो तेन रन्ना तस्स तुट्ठेण पइदिवसं सुवन्नमासगो वित्ति कया । पहाणं च सेवत्थजुयलं दिन्नं, तथा चाह- 'जहेत्यादि' यथेति दृष्टान्तोपन्यासे माषकः सुवर्णमाषकः सेवकपुरुषेण लब्धो, युगलं च वस्त्रयुगलं च तस्य च सेवकपुरुषस्य द्वे तुष्टयौ जाते- एकं वृत्तिः कृता द्वितीयं वस्त्रयुगलमिति एष दृष्टान्तोऽयमुपनयः ।

[भा.४८४] एवं उभयतरस्सा दो तुट्ठीओ उ सेवगस्सेव ।
सोही य कयामेत्ती वेयावच्चे निउत्तो य ।।

वृ- एवं सेवकपुरुषदृष्टान्तप्रकारेण उभयतरस्य सेवकस्येव द्वे तुष्टयौ भवतस्तद्यथा-एकं तावन्मे प्रायश्चित्तदानेन शोधिः कृता, द्वितीयं वैयावृत्त्ये नियुक्तस्य महती मे निर्जरा भविष्यति । अथ प्रायश्चित्तं वहन् वैयावृत्त्यं च कुर्वन् यदि पुनरपि श्रोत्रादीनां पञ्चानामिन्द्रियाणामन्यतमेनेन्द्रियेण । आदिशब्दात् क्रोधादिभिश्च स्तोकं बहु वा प्रायश्चित्तमापद्यते । यदि अन्यदपि प्रायश्चित्तमापद्यते तदा कथम् ? उच्यते-

[भा.४८५] सो पुन जइ वहमाणो, आवज्जइ इंदिया इह पुनोवि ।
तं पि य से आरुहिज्जइ, भिन्नाई पंचमासंतं ।।

वृ- स पुनरुभयतरः प्रायश्चित्तं वहन् वैयावृत्त्यं च कुर्वन् यदि पुनरपि श्रोत्रादीनां पञ्चानामिन्द्रियाणा-मन्यतमेनेन्द्रियेण । आदिशब्दात्क्रोधादिभिश्च स्तोकं बहु वा प्रायश्चित्तमापद्यते । तत्र स्तोकं विंशति-रात्रिंदिवादारभ्य पश्चादानुपूर्व्या यावत् पञ्चरात्रिंदिवं बहु पराशीतादारभ्य पश्चादनुपूर्व्या यावत्मासिकं तदपि से तस्य आरुह्यते, भिन्नादिभिन्नमासादि । आदिशब्दात्सकलमासादिपरिग्रहः पञ्चमासान्ते पञ्चमा-सपर्यन्तं इयमत्र भावना-स्तोकं बहु वा यथोक्तस्वरूपं यदि प्रायश्चित्तस्थानमापन्नस्तथापि तस्य भिन्न-मासादि दीयते । कस्मादिति चेदत आह-

[भा.४८६] तवबलितो सो जम्हा, तेन तेन अप्पं वि दिज्जये बहुयं ।
परतर उ पुन जम्हा, दिज्जइ बहुए वि तो तावं ।।

वृ- यस्मादुभयतरकः प्रायश्चित्ततपः करणे धृतिसंहननबलिष्ठस्तेन कारणेन रेफः पादपूरणे 'इजेराः' पादपूरणे इतिवचनात् । अल्पेऽपि पञ्चरात्रिंदिवादिके प्रायश्चित्तस्थाने बहुकं भिन्नमासादि दीयते । यस्माच्च परतरः परमाचार्यादिकं वैयावृत्त्यकरणतस्तारयति । ततो बहुकेऽपि पराशीतादिके प्रायश्चित्ते प्राप्ते स्तोकं भिन्नमासादि दीयते, तदेवं स्तोके बहुके वा प्रायश्चित्तस्थाने प्राप्ते भिन्नमासादिदाने कारणमुक्तम् । सम्प्रति भिन्नमासादि यथा दातव्यं तथा प्रतिपादयति -

[भा.४८६] वीसट्ठारस लहु गुरु, भिन्नाणं मासियाणमावन्नो ।
सत्तारस पन्नरस, लहुगुरुगा मासिया होंति ।।

वृ- स उभयतरकः प्रस्थापितंप्रायश्चित्तं वहन् वैयावृत्यं च कुर्वन् यदिस्तोकं बहुं वा उद्घातमनुद्घातं वा प्रायश्चित्तस्थानमन्यदापन्नस्ततो यदि पूर्वप्रस्थापितं प्रायश्चित्तमुद्घातं तमुद्घातो भिन्नमासो दीयते। यदि पुनरप्यापद्यते ततो भूयोऽपि भिन्नमासो दीयते, एवं विंशतिवारान् भिन्नमासो दातव्यः । यदि विंशतेर्वारेभ्यः परतोऽपि भूय आपद्यते, ततः स्तोके बहुके वा प्रायश्चित्ते प्राप्ते लघुमासो दीयते । एवं भूयो भूयस्तावद्यावत् सप्तदश वारा नवरमत्र स्तोकं पञ्चकादिभिन्न मासान्तं बहु द्विमासादि पाराञ्चितान्तं ततः परतो यदि पुनरपि भूयो भूय आपद्यते, ततोऽन्यत् सप्तदशवारान् द्वैमासिकं दातव्यं । अत्र स्तोकं पञ्चकादिलघुमासपर्यन्तं बहुत्रिमासादिपाराञ्चितान्तं । एवं त्रैमासिकादिष्वप्यधस्तनानि स्थानानि स्तोकमुपरितनानि बहु वेदितव्यानि । ततः सप्तदशवारेभ्यः परतो यदि भूयः पुनः पुनरापद्यते ।। ततस्त्रैमासिकं सप्तदश वारान् दीयते । ततोऽपि परतो यदि पुनः पुनरापद्यते, ततः सप्तवारान् लघु चातुर्मासिकं दीयते । ततोऽपि परतो यदि पुनर्भूयो भूय आपद्यते ततः पञ्च वारान् लघु पञ्च मासिकं दीयते । यदि ततोऽपि परतो भूय आपत्तिस्ततः एकवारं लघु षाण्मासिकं दीयते । तदनन्तरं यदि पुनरपि भूयो भूय आपत्तिस्ततस्त्रीन् वारान् छेदो दीयते । यदि ततः परमपि पुनः पुनरापत्तिस्ततस्त्रीन् वारान् मूलं दीयते । ततोऽपि परतो भूयो भूय आपत्तौ त्रीन् वारान् अनवस्थाप्य दानं । तदनन्तरं यदि पुनरप्यापद्यते ततः एकं वारं पाराञ्चितं दानमिति । एवमसञ्चयितमुद्घातितं गतमथासञ्चयमनुद्घातितं प्रस्थापितं । ततोऽल्पं बहु वा यदि प्रायश्चित्तस्थानमापद्यते तर्हि गुरुको भिन्नमासो दीयते । ततः पुनः पुनरापत्तौ स अष्टादश वारान् दीयते । ततः परं भूयो भूय आपत्तौ पञ्चदश वारान् गुरुमासिकं । ततः परं पञ्चदश वारान् गुरु द्वैमासिकं । ततः परं पञ्चदश वारान् गुरु द्वैमासिकं । ततः परं पञ्चदश वारान् गुरु त्रैमासिकम् ततो भूयोपि परं पंचवारान् गुरुचातुर्मासिकम् । ततः परं यदि भूयो भूय आपत्तिस्ततस्त्रीन् वारान् गुरुपञ्चमासिकं । तदनन्तरमेकवारं षट्गुरु । ततः परं छेदत्रिकं, ततो मूलत्रिकं, ततोऽनवस्थाप्य त्रिकं । तत परमेकं वारं पाराञ्चितम् । सम्प्रत्यक्षरार्थो विव्रियते-यदि पूर्वस्थापितमुद्घातमनुद्घातंच प्रायश्चित्तं वहतो लघुभिन्नानां मासिकानां विंशतिवारान् प्रदानम्, अनुद्घातं प्रायश्चित्तं वहतो गुरुभिन्नानां मासिकानामष्टादश वारान्। तदनन्तरं भूयो भूय आपत्तावुद्घातं प्रायश्चित्तं वहतः सप्तदश वारान् लघुमासिका भवन्ति, अनुद्घातं प्रायश्चित्तं वहतः पञ्चदश वारान् गुरुमासिकाः ।।

[भा.४८८] उग्घाइयमासाणं सत्तरसेव य अनुमयंतेनं ।
नायव्वा दोन्नि तिन्नि य, गुरुया पुन होंति पन्नरस ।।

[भा.४८९] सत्त चउक्का उग्घाइयाणं, पंचेव होंत अनुग्घाया ।
पंच लहुया ओ पंच उ गुरुगा पण पंचगा तिन्नि ।।

वृ- उद्घातितमासानामनुद्घातितमासानां ये सप्तदश वारा स्तान् अमुञ्चता ज्ञातव्यौ द्वौ मासौ, त्रयश्च मासा ज्ञातव्याः ये पुनर्गुरुका द्वौ त्रयश्च मासास्ते पञ्चदश वारान् ज्ञातव्याः । किमुक्तं भवति ? उद्घातितं प्रायश्चित्तं वहतो मासिकानन्तरं भूयो भूय आपत्तौ द्वौ मासौ सप्तदश वारान् दीयते । ततोऽपि भूयो भूय आपत्तौ सप्तदश वारान्त्रीन् मासान् अथानुद्घातितं प्रायश्चित्तं वहति, तर्हि गुरुमासिकानन्तरं भूयो भूय आपत्तौ द्वौ गुरुकौ मासौ पञ्चदश वारान् दीयते । तदनन्तरं पञ्चदशवारान् त्रीन् गुरुकान् मासानिति सप्तचउक्केत्यादि उद्घातितानां चतुष्काः सप्त भवन्ति । अनुद्घातितानामत्र गाथायां प्रथमा षष्ठ्यर्थे चतुष्काः पञ्च भवन्ति लघुकाः पञ्च मासा पञ्च वारान् भवन्ति, गुरुकाः पुनः पञ्चकाः पञ्चमासास्त्रीन्

वारा निदमुक्तं भवति- उद्घातं प्रायश्चित्तं वहतः त्रैमासिकानन्तरं भूयो भूय आपत्तौ सप्तवारान् लघुकाश्चत्वारो मासा दीयन्ते । तदनन्तरं पञ्चवारान् लघुकाः पञ्चमासाः अनुद्घातितं प्रायश्चित्तं वहतः त्रैमासिकानन्तरं पुनरापत्तौ पञ्च वारान् गुरुका श्चत्वारोमासाः तदनन्तरं त्रीन् पञ्च गुरुमासान् ।। साम्प्रतमत्रैवास्थ श्रये उद्घातानुद्घातापत्तिस्थानानानां सुखावगमोपायमाह—

[भा.४९०] उक्कोसा उग्घातो वा ठाणे ठाणे दुवे परिहेज्जा ।
एवं दुगपरिहाणी, नेयव्वा जाव तिन्नेव ।।

वृ- उत्कृष्टं नाम उद्घातभिन्नमासगतं विंशतिलक्षणं तस्मादारभ्योद्घातगते स्थाने स्थाने यदुत्कृष्टं तदपेक्षया अनुद्घात गतेषु स्थानेषु द्वौ द्वौ परिहापयेत् । एवं द्विकपरिहानिस्तावत् ज्ञातव्या यावदुद्घातगतपञ्चकोत्कृष्टापेक्षया अनुद्घाते त्रय इति । इयमत्र भावना-उद्घाते भिन्नमासे विंशतिः, अनुद्घाते द्विकपरिहान्या अष्टादश । तथा उद्घाते मासे सप्तदश, अनुद्घाते पञ्चदश । एवं द्विमासे त्रिमासेऽपि । तथा उद्घाते चतुर्मासि सप्त अनुद्घाते पञ्च । तथा उद्घाते पञ्चमासे पञ्च अनुद्घाते त्रय इति । तदेवमापत्तिस्थानान्युक्तानि ।। उद्घातानुद्घातदानविधिः साम्प्रतमेतेषां दानविधिमाह-

[भा.४९१] अट्ठट्ठ अवनेत्ता सेसा दिज्जंति जाव उ तिमासो ।
जत्थट्ठगावहारो न होज्ज तं झोसए सव्वं ।।

वृ- ये भिन्नमासादयो विंशत्यादिवारा आपन्नास्तेभ्यः प्रत्येकमष्टावष्टावपनयेत् । अपनीय शेषा दीयंते, एवं तावत् वाच्यम् यावत्त्रिमासाः त्रैमासिके । अयमत्र भावार्थः । विंशतिवाराः किलोद्घाता भिन्नमासा आपन्नास्तत्राष्टौ भिन्नमासा झोषिताः, शेषा द्वादश दीयन्ते । तेऽपि स्थापनारोपणाप्रकारेणाधिकं परिशाट्या षण्मासाः कृत्वा दीयन्ते । तथा अष्टादश अनुद्घाता भिन्नमासा आपन्नास्तेभ्योऽष्टौ त्यक्त्वा शेषा दश भिन्नमासाः प्रदातव्याः । तेऽपि स्थापनारोपणाप्रकारेण अधिकं समस्तमपि त्यक्त्वा षण्मासाः कृत्वा दानीय इति । तथा सप्तदशवारा लघुमासाः प्राप्तास्तेभ्योऽष्टौ परित्यज्य शेषा नवलघुमासा दीयन्ते। पञ्चदशवारा गुरुमासा आपन्नास्तेभ्योऽष्टौ परित्यज्य शेषाः सप्त गुरुमासा देयाः । एवं द्वैमासिके त्रैमासिकेऽपि वाच्यम् । सर्वत्र स्थापनारोपणाप्रकारेणाधिक्यं त्यक्त्वा षण्मासाः कृत्वा देयाः । अथ अष्टकझोषणाभिधानं किमर्थम् ? एतदेव कस्मान्नोक्तं विंशत्यादयो भिन्नमासादयः स्थापनारोपणप्रकारेण षण्मासीकृत्य दातव्या इति ? उच्यते । मध्यमतीर्थकृतामष्टमासिकी या तपोभूमि स्तदनुग्रहाऽर्थमित्यदोषः । उक्तं च निशीथचूर्णो- 'अट्ठमसिया मज्झिमातवो भूमी तीए अनुग्गहकरणत्थमट्ठमभागहारझोसणा कया इति । यत्र पुनश्चतुर्मासिके वा पञ्चमासिके वा अष्टकापहारो न भवेत् । अष्टानामेवासम्भवात् । तं सर्वं झोपयेत्सर्वमपि तत्परित्यजेत् न किमपि तत्र दानं भवतीति भावः । येभ्योऽष्टकापहारे यदवतिष्ठते तदेतदुभयं दर्शयति—

[भा.४९२] बारस दस नव चेव य सत्तेव जहन्नगाइं ठाणाइं ।
वीसठारस सत्तरस, पन्नरठाणाण बोधव्वा ।।

वृ- द्वादश दश नव सप्तेत्यमूनि जघन्यानि स्थानानि बोधव्यानि । जघन्यतो येषां विंशत्याद्यपेक्षयामीषां स्तोकत्वात् केषां स्थाने इत्याह- विंशत्यष्टादशसप्तदशपञ्चदशस्थानानां स्थाने इदमुक्तं भवति- विंशतिस्थानानामष्टकापहारे द्वादश स्थानानि । अष्टादशानामष्टकापहारे दश । सप्तदशानामष्टकापहारे नव । पञ्चदशानामष्टकापहारे सप्तेति ।।

**[भा.४९३]** पुनरवि जे अवसेसा मासा जहिं पि छन्हमासाणं ।
उवरिं झोसे उगं, छम्मासा सेस दायव्वा ।।

**वृ-** अष्टकापहारे कृते सति पुनरपि षन्नां मासानामुपरि येऽवशेषा मासा वर्तन्ते जेहिं जेहिं पील्यादि अनुग्रहकृत्स्नविषयमेतत् यैरपि च दिवसैर्मासैर्वा पूर्वं प्रस्थापितानां षन्नां मासानामुपरि गच्छति तत्सर्वं स्थापनारोपणाप्रकारेण झोषयित्वा षण्मासाः शेषा दातव्याः । अनुग्रहचित्तायां पूर्वं स्थापितषण्मासो-द्व्युढदिवसैः सह परिपूर्णीकृत्य षण्मासाः शेषा दातव्या । निरनुग्रहकृत्स्नचिन्तायां परिपूर्णाः षण्मासाः शेषा देयाः । झोषस्तु पूर्वप्रस्थापितषण्मासविषय इति ।।

**[भा.४९४]** छहिं दिवसेहिं गएहिं, छण्हं मासाण होति पक्खेवो ।
छहिं चेव य सेसेहिं छण्हं मासाण पक्खेवो ।।

**वृ-** सूत्रे तृतीया सप्तम्यर्थे । ततोऽयमर्थः । षट्सु दिवसेषु गतेषु षण्मासानां भवति प्रक्षेपः । इयमत्र भावना-ये ते प्रस्थापिताः षण्मासास्तेषां षड् दिवसा व्यूढास्तदनन्तरमन्यान् षण्मासानापन्नास्ततः पूर्वं प्रस्थापितषण्मासानां पञ्चमासाश्चतुर्विंशतिदिनाश्च झोष्यंते । झोषयित्वा च तत्र पाश्चात्याः षण्मासाः प्रक्षिप्यन्ते । ते च यथा प्रक्षिप्यन्ते यथा पूर्वप्रस्थापितषण्मासाव्यूढदिवसैः सह षण्मासा भवन्ति । एवं पाश्चात्यानामपि षण्मासानां षड् दिवसा झोषिता इति । एतद् धृतिसंहननाभ्यां दुर्बलमपेक्ष्यानुग्रहकृत्स्न-मेष मित्रवाचकक्षमाश्रमणानामादेशः । सम्प्रति [illegible] एतदेवं कुरुते, छहिं चेवयेत्यादि, षट्सु चैव दिवसेषु षण्मासानां प्रक्षेपः । इदमुक्तं भवति ?-ये पूर्वप्रस्थापिताः षण्मासास्ते षड्भिर्दिवसैरूनाः परिपूर्णव्यूढाः शेषाः षट् दिवसास्तिष्ठन्ति । अत्रान्तरे अन्यान् षण्मासानापन्नास्ते षण्मासास्तेष्वेव षट्सु दिवसेषु प्रक्षिप्यन्ते । किमुक्तं भवति ? तेषां षन्नां मासानां षट् दिवसाः प्रायश्चित्तं, शेषं समस्तमपि झोषितं । पूर्वप्रस्थापितषण्मासानामपि षट् दिवसाः झोषिताः । एतत् धृतिसंहननदुर्बल-मपेक्ष्यानुग्रहकृत्स्नमिति; सम्प्रति निरनुग्रहकृत्स्नमाह—

**[भा.४९५]** एवं बारस मासा छद्दिवसूना य जेट्ठपठवणा ।
छद्दिवसएऽनुग्गह निरनुग्गह छागपक्खेवो ।।

**वृ-** इह निरनुग्रहकृत्स्ने आदेशद्वयं एकस्तावदयमादेशः । पूर्वप्रस्थापितानां षण्मासानां षट् दिवसा व्यूढास्तेषु षट्सु दिवसेषु व्यूढेषु अन्यत् षाण्मासिकमापन्नः । ततः पूर्वप्रस्थापिताः षण्मासास्तेष्वेव षट्सु दिवसेषु व्यूढेषु परिसमाप्यन्ते । किमुक्तं भवति ? । ये व्यूढाः षट् दिवसास्ते व्यूढा एव शेषा पञ्च मासाश्चतुर्विंशतिदिवसा झोषिताः यत्पुनरन्यत् षाण्मासिकं तत्परिपूर्णं दीयते । एवं षट् मासाः षड्भिर्दिवसैरधिका भवन्ति । एतत् धृतिसंहननबलिष्ठस्य निरनुग्रहकृत्स्नं द्वितीय आदेशः, पूर्वप्रस्थापितानां षण्मासानां षट् दिवसाः शेषास्तिष्ठन्ति । अन्यत्समस्तमपि व्यूढं ततोऽन्यान् षण्मासान् प्राप्तः । ततो ये शेषाः षट् दिवसास्ते झोष्यन्ते पाश्चात्यं षाण्मासिकं परिपूर्णं दीयते । धृतिसंहनन-बलिष्ठत्वात् । एवं च षण्मासाः षड्भिर्दिवसैर्न्यूनाः पूर्वस्थापिताः पाश्चात्याः परिपूर्णाः षण्मासाः ततः सर्वसंकलनया द्वादश मासाः षड्भिर्दिवसैर्न्यूना भवन्ति । एषा ज्येष्ठा प्रस्थापनादानं । नातः परा तपोऽर्हे प्रायश्चित्ते उत्कृष्टतरा प्रस्थापनास्तीति भावः, अत्रापि सानुग्रहनिरनुग्रहचिन्तां कुर्वन्नाह-छद्दिवसगएत्यादि पूर्वप्रस्थापितानां षण्मासानां षट्सु दिवसेषु गतेषु यदन्यदापन्नं षण्मासादिकं तपस्तदारोप्यते । पूर्वप्रस्थापिताश्च अव्यूढेषु षट्दिवसा शेषा अव्यूढाः सन्ति । अन्यच्च समस्तमपि व्यूढमिति भावः ।

अत्रान्तरे अन्यत् पाण्मासिकमापन्नस्तत्परिपूर्णमारोप्यते । प्राकृताश्च शेषीभूताः षट् दिवसाः त्यज्यन्ते एतन्निरनुग्रहकृत्स्नं । इति ।

**[भा.४१६]** चोएइ रागदोसे दुब्बलबलिए व जाणए चक्खू ।
भिन्ने खंधग्गिम्मिय, मास चउमासिए चेडे ।।

**वृ-** परश्चोदयति, यूयं रागद्वेषवन्तस्तथाहि यस्य पणां मासानां षट्सु दिवसेषु शेषीभूतेष्वन्यत् पाण्मासिकमापन्नं षट्सु दिवसेषु परिसमाप्यते । तस्य दुर्बलस्योपरि रागो यतो यूयं जानीथ एष बलिकः सन् सुखं विनयवैयावृत्यं करोति । यस्य पुनः पूर्वप्रस्थापितषण्मासानां पञ्चसु मासेषु चतुर्विंशतौ दिवसेषु व्यूढेषु षट् दिवसाः शेषीभूता झोपिताः ।। अन्यत् पाण्मासिकमारोपितं, तस्य बलिष्ठस्योपरि विद्वेषः । अत्रापि जानीथ यथैष तपःकृशशरीरो नास्माकं शक्नोति वैयावृत्यं कर्तुं तस्माद्दीयतामस्य निरनुग्रहप्रायश्चित्तमिति । एवं भवन्तः कुर्वन्तो नूनं चक्षुर्मलंकुरुथ । चक्षुर्मलो नाम यदेकं चक्षुरुन्मीलयति। अपरं निमीलयति । एवमेकं सानुग्रहप्रायश्चित्तदानेन जीवापयथ । अपरं निरनुग्रहप्रायश्चित्तदानेन मारयथेति । अत्राचार्य आह भिन्नेत्यादि पश्चार्द्धं भिन्नो नाम तत्कालमरणिनिर्मन्थनेन नवोदितोऽग्निः स यथा महति काष्ठादिके प्रक्षिप्ते तद्दग्धुमसमर्थो भवति, शीघ्रं च विध्यायति, स एव श्लक्ष्णकाष्ठछगणा-दिचूर्णादिषु स्तोकं प्रक्षिप्यमाणेषु क्रमेण प्रबल उपजायते । स्कन्धाग्निर्नाम महत्काष्ठं प्रज्वल्याग्निरूपतया परिणमितः स महत्यपि काष्ठादिके प्रक्षिप्ते तद्दग्धुं समर्थो भवति । प्रबलः प्रबलतरश्चोपजायते । एवं दुर्बलस्य षट्सु मासेषु पूर्वप्रस्थापितेषु बहुषु व्यूढेषु षट्सु दिवसेषु शेषीभूतेषु यदि वा षट्सु मासेषु पूर्वस्थापितेषु षट्सु दिवसेषु व्यूढेषु यदन्यत् पाण्मासिकं तपः पृथिग् दीयते । ततः सभिन्नोऽग्निरिव विषीदति धृतिसंहननाभ्यां बलीयानिति न विद्राति न च विषादमुपगच्छति, स्कन्धाग्निरिव । तथा द्वौ चेटौ, तद्यथा-मासजातश्चतुर्मासजातश्च तत्र यदि मासजातस्य चेटस्य चतुर्मासचेटाहारो दीयते, तदा सोऽजीर्णेन विद्राति, चतुर्मासजातस्यापि यदि मासजातवदाहारो दीयते, तदा स तेनाहारेण नात्मानं सन्धारयितुमलं । एवं यो दुर्बलस्तस्य यदि बलिष्ठं प्रायश्चित्तं दीयते, तदा स विद्राति दुर्बलत्वात् मासिकचेटकवत्, बलिष्ठस्यापि यदि दुर्बलप्रायश्चित्तं दीयते, तदा स तावता न शुद्धिमासादयतीत्यशुद्धया विषीदति । ततो यथा भिन्नाग्नौ स्तोकमिन्धनं स्कंधाग्नौ प्रभूतमिन्धनं तथा मासजाते चेटे स्तोकमाहारं, चतुर्मासजाते प्रभूतमाहारं प्रयच्छतो न रागद्वेषवत्तायोग्यतानुरूपप्रवृत्तः । तथा दुर्बले बलिष्ठे च यथोक्तरूपं प्रायश्चित्तं ददाना न वयं रागद्वेषवंत इति उक्त उभयतरकः ।

इदानीं आत्मतरकादयो वक्तव्याः । परमुभयतरस्य द्वेशोऽन्यतर इति स एवोत्क्रमेण प्रथमतो भण्यते तस्य स्वरूपमिदमयथा एकेन स्कन्धेन द्वेकापोत्यौ युगपत् वोढुं न शक्नोति तथा सोऽप्यन्यतरकः प्रायश्चित्तवैयावृत्यं युगपत्कर्तुं न शक्नोति । स च संचयितमसंचयितं वा प्रायश्चित्तमापन्नोऽथ च तदा गुरूणामन्यो वैयावृत्यकरो न विद्यते । ततस्तदापन्नं प्रायश्चित्तं निक्षिप्तं क्रियते । एतेन यदुक्तमधस्तात् निक्षिप्तमिति तद्भावितमवसेयं । गुरूणां वैयावृत्यं कार्यते तच्च वैयावृत्यं कुर्वन् यदीन्द्रियादिभिरन्यदापद्यते तत्सर्वं झोष्यते यदा तु वैयावृत्यं समाप्तं भवति, तदा तत्प्राग् निक्षिप्तं प्रायश्चित्तमुत्क्षिप्यते । तच्च वहन् यदीन्द्रियादिभिरन्यदापद्यते तदनेन विधिना दातव्यं ।

**[भा.४१७]** सत्त चउक्का उग्घाइयाण पंचेव होंति अणुग्घाया ।
पंच लहु पंच गुरुगा, गुरुगा पुनपंचगा तिन्नि ।।

**[भा.४१८]** सत्तारस पन्नारस निक्खेवा होंति मासियाणं तु ।
वीसट्ठारस भिन्ने तेन परं निक्खिणवयाउ ।।

**वृ-** सोऽन्यतरः पूर्वप्रस्थापितं प्रायश्चित्तं वहन् यदि स्तोकं बहु उद्घातमनुद्घातं वा प्रायश्चित्तस्थानमापन्नस्ततो यदि पूर्वप्रस्थापितं प्रायश्चित्तमुद्घातस्तत उद्घातो भिन्नमासो दीयते । यदि पुनरापद्यते तदा भूयोऽ[illegible]मासदानमेवं भूयो भूय आ[illegible]ो विंशतिवारान् भिन्नमासा दातव्याः ।। तदनन्तरं सप्तदशवारा लघुमासाः । एवं द्विमासत्रिमासा अपि वक्तव्यास्तदनन्तरमपि भूयो भूय आपत्तौ सप्तवाराश्चतुर्मासाः ७ । ततः परं पञ्चवाराः । पञ्च लघुमासाः ५ । तदनन्तरं त्रीन्वारान् च्छेदः । ततः परं वारत्रयं मूलं, तदनन्तरं वारत्रयमनवस्थाप्यं, तदनन्तरमेकं वारं पाराञ्चितमिति ।

अथ तस्य पूर्वस्थापितमनुद्घातितं । ततोऽष्टादश वारा गुरुभिन्नमासा दातव्याः । तदनन्तरं पञ्चदशवारा गुरुमासाः । एवं द्विमासात्रिमासा अपि वक्तव्याः । तदनन्तरं पञ्चवाराश्चत्वारो गुरुमासाः । ततोऽपि परं त्रिवाराः पञ्च गुरुमासाः ३ । ततो वारत्रयं छेदः ४ । तदनन्तरं वारत्रयं मूलं । ततः परं वारत्रयमनवस्थाप्यं । एवं संचयितेऽप्युद्घातेऽनुद्घाते वक्तव्यम् । नवमादिमासतपोभेदा न वक्तव्याः । किन्तु प्रथमत एव षाण्मासिकं, तदनन्तरं च्छेदत्रिकादि अष्टकापहारादिकं पूर्ववद्वक्तव्यम् । अधुनाक्षरगमनिका-इह विचित्रा व्याख्या प्रवृत्तिरिति पश्चानुपूर्व्या व्याख्या विधेया । पूर्वप्रस्थापितमुद्घातमनुद्घातं च वहतो यथाक्रमं भिन्ने भिन्नमासविषये दानं विंशत्यष्टादशवारान् । किमुक्तं भवति ? पूर्वप्रस्थापितमुद्घातं प्रायश्चित्तं वहतो विंशतिवारा भिन्नमासा दातव्याः । अनुद्घातं वहतोऽष्टादश वारा भिन्नमासाः तेनपरमित्यादि, ततो भिन्नमासदानात् पश्चानुपूर्व्या परं प्रागिति भावार्थः । निक्षेपणता निक्षिप्तता आसीत् विंशत्यष्टादशवारानन्तरं च उद्घातं पूर्वप्रस्थापितं वहतो मासिकानां लघूनां मासिक द्वैत्रैमासिकानां सप्तदशक्षिपा भवन्ति । सप्तदशवारं दानं भवतीत्यर्थः । अनुद्घातं पूर्वप्रस्थापितं वहतो मासिकानां निक्षेपाः पञ्चदश भवन्ति । पञ्चदशवारं मासिकानां दानमित्यर्थः । तथा उद्घातितानां चतुष्कमासचतुष्यानि सप्त भवन्ति । अनुद्घाताः चतुष्काः पञ्च भवन्ति । तथा पञ्च मासा लघुकाः पञ्च भवन्ति, गुरुकाः पुनः पञ्चकाः पञ्चमासास्त्रय इदमुक्तं भवति ? पूर्वप्रस्थापितमुद्घातं वहतस्त्रिमासदानानन्तरं सप्तवाराश्चत्वारो लघुमासा दातव्यास्तदनन्तरं पञ्चवाराः पञ्चमासा लघवः अनुद्घातं पूर्वप्रस्थापितं वहतो गुरुमासत्रिमासदानानन्तरं पञ्चवारा लघवः गुरुवश्चतुर्मासा दातव्याः । ततः परं गुरवः पञ्च मासास्त्रिवारा इति तदेवमेकेषामाचार्याणां व्याख्यानमुपदर्शितमन्ये पुनरेवं व्याख्यानयन्ति—

अन्यतरो नाम द्विधा आत्मतरः परतरश्च । तत्रात्मतरस्य प्रायश्चित्तदानविधानमिदम्-सत्तचउक्काउग्घाइयाणमित्यादि, यदि पूर्वस्थापितमुद्घातं वहन् भूयो भूयोऽन्यदापद्यते प्रायश्चित्तं तदा प्रथमत एव सप्तवारा उद्घातितानां लघूनां मासानां चतुष्का दातव्याः । सप्तवारा लघवः चतुर्मासा देयाः, तदनन्तरं पञ्चवारा लघवः पञ्चमासास्तदनन्तरं वारत्रयं च्छेदः । ततः परं वारत्रिकं मूलं । ततो वारत्रिकमनवस्थाप्यं । तत एकवारं पाराञ्चितम् । अथानुद्घातं पूर्वप्रस्थापितं वहन् पुनः पुनरापद्यते प्रायश्चित्तं । तत आदौ पञ्च वारा अनुद्घाता गुरुवश्चत्वारो मासा दाने भवन्ति । तदनन्तरं त्रीन्वारान् पञ्च मासा गुरुवस्ततो वारत्रयं च्छेदं । तदनन्तरं वारत्रयं मूलं, ततो वारत्रयमनवस्थाप्यं । तत एकवारं पाराञ्चितो यस्त्वन्यतर परतरस्तस्येदं प्रायश्चित्तविधानम्-सत्तरसपन्नरसेत्यादिपूर्वप्रस्थापितमुद्घातं प्रायश्चित्तं वहन् यदि भूयो भूयो भूयः स्तोकं बहु वा अन्यत् प्रायश्चित्तमापद्यते । ततस्तस्य सप्तदश त्रैमासिकानां निक्षेपा

भवन्ति । सप्तदशवारं त्रैमासिकं दीयते इति भावः । तदनन्तरं भूयो भूय आपत्तौ सप्तदश निक्षेपा द्वैमासिकानां । तदनन्तरं सप्तदश निक्षेपा मासिकानां तत परं निक्षेपणता निक्षेपणं दानं भिन्ने भिन्नमासस्य विंशतिवारान् । ततः परं वारत्रयं छेद स्तदनन्तरं वारत्रयं मूलं, ततः परं वारत्रयमनवस्थाप्यं, तत एकवारं पाराञ्चितं- अनुद्घातं पूर्वप्रस्थापितं वहन् यदि भूयो भूयः स्तोकं बहु वा प्रायश्चित्तमन्यदापद्यते । तस्य पञ्चदश गुरूणां द्वैमासिकानां निक्षेपा भवन्ति । पञ्चदशवारं द्वैमासिकं गुरु दीयते इत्यर्थः । तत परं निक्षेपणता भिन्नमासानां गुरूणामष्टादशवारान्, ततः परं वारत्रयं च्छेदस्तदनन्तरं वारत्रयं मूलं, ततोऽनवस्थाप्यत्रिकं, ततः एकवारं पाराञ्चितमिति उक्तोऽन्यतरः ।।-

साम्प्रतमात्मतरस्य प्रायश्चित्तदानमुच्यते- संचयितमसंचयितं वा प्रत्येकमुद्घातमनुद्घातं वा वहन् यदि भूयो भूयः स्तोकं बहु वान्यदिन्द्रियादिभिः प्रायश्चित्तमापद्यते । तदा सप्तवारं लघुमासिकं दीयते । तत परं भूयो भूय आपत्तौ चतुर्वारं लघुकं चातुर्मासं । ततः परं च्छेदत्रिकं, तदनन्तरं मूलत्रिकं । तदनन्तरं अनवस्थाप्यत्रिकं । तत एकवारं पाराञ्चितं । यदि पुनः पूर्वप्रस्थापितमनुद्घातं वहन् स्तोकं बहु वान्यदापद्यते, भूयो भूयस्ततः पञ्चवारान् गुरुमासिकं दीयते । ततः परं त्रीन् वारान् चतुर्गुरुकं, ततो वारत्रयं च्छेदस्तदनन्तरं वारत्रयं मूलं ततो वारत्रयमनवस्थाप्यं, तत एकवारं पाराञ्चितमेतदेवाह-

**[भा.४९९]** आइत्तरमाइयाणं मासा लहुगुरुगसत्तपंचेव ।
चउतिगचाउम्मासा तत्तो य चउव्विहो भेओ ।।

**वृ-** आत्मतरो नाम यस्य वैयावृत्यकरणे लब्धिर्नास्ति । आदिशब्दात् परतरपरिग्रहः आत्मतरआदिर्येषां ते आत्मतरादयः आत्मतराः परतराश्चेत्यर्थः । तेषामात्मतरादीनां प्रायश्चित्तदाविधिरुच्यते- तत्रात्मतराणामपमुद्घातं पूर्वप्रस्थापितं वहतां सप्तवारान् लघुमासा दीयन्ते । तदनन्तरं चतुरो वारान् चतुर्मासा लघवः । ततश्चतुर्विधो भेदस्छेदमूलानवस्थाप्य पाराञ्चितलक्षणो दातव्यः । अनुद्घातं पूर्वप्रस्थापितं वहतां पञ्च वारान् गुरुमासा दीयन्ते । तदनन्तरं त्रीन् वारान् गुरवश्चतुर्मासाः । ततो यथोक्तरूपश्चतुर्विधो भेदः । सम्प्रति परतरस्य प्रायश्चित्तदानविधिरभिधीयते । परतरो नाम यस्य वैयावृत्यकरणे लब्धिरस्ति न तपसि, ततः स यदा तपः करोति न तदा वैयावृत्यं कर्तुं समर्थ इति । अत्रापि एकस्कन्धेन कापोतीद्वयं वोढुं न शक्यमिति दृष्टान्तो वक्तव्यः । यश्च प्रायश्चित्तं संचयितमसंचयितं वापन्नस्तत् तु यावद्वैयावृत्यं करोति, तावत् निक्षिप्तं क्रियते, वैयावृत्यं च कुर्वन् यद्यन्यदापद्यते तत् सर्वं झोष्यते । वैयावृत्ये च समाप्ते तत् पूर्वनिक्षिप्तं प्रस्थाप्यते, तच्च वहन् यदि भूयो भूयः इन्द्रियादिभिरन्यदापद्यते । तत उद्घातं पूर्वप्रस्थापितं वहतः सप्तवारान् लघुमासिकं दीयते । तदनन्तरं पञ्चवारान् चतुर्लघुकं । ततः परं वारत्रयं च्छेदस्तदनन्तरं वारत्रयं मूलं, ततः परं वारत्रयमनवस्थाप्यं, ततः एकवारं पाराञ्चितमिति । अनुद्घातं पूर्वप्रस्थापितं वहतः षट्वारान् गुरुमासिकं दीयते । तदनन्तरं चतुरो वारान् चतुर्गुरुकं । ततः परं वारत्रयं च्छेदस्तदनन्तरं वारत्रयं मूलं, ततः परं वारत्रयमनवस्थाप्यं । तत एकवारं पाराञ्चितं । एतदेव सुव्यक्तार्थमाह–

**[भा.५००]** आवन्नो इंदिएहिं परतरए झोसणा ततो परेणं ।
मासलहुगाय सत्त उ छच्चेव होंति मास गुरु ।।

**[भा.५०१]** चउ लहुगाणं पनगं चउगुरुगाणं तहा चउक्कं च ।
तत्तो च्छेदादीयं, होइ चउक्कं मुनेयव्वं ।।

वृ- परतरको वैयावृत्त्यं तु कुर्वन् यदि इन्द्रियादिभिः स्तोकं बहु वा आपद्यते प्रायश्चित्तं ततस्तस्मिन् परतरके ततो वैयावृत्यकरणादारभ्य यावद्वैयावृत्त्यं करोति तावत् परोपकारीति । स्तोकं बहु वा यदन्यदापद्यते, तस्य सर्वस्य झोषणता परित्यागः । ततो वैयावृत्यसमाप्त्यनन्तरं पूर्वनिक्षिप्तं प्रायश्चित्तमुद्घातं वहतो भूयो भूय आपत्तौ मासलघुकाः सप्त भवन्ति दातव्याः, सप्तवारान् लघुमासो दीयते इति भावः । अनुद्घातं वहतः षट् भवन्ति मासगुरवो देयाः षट् वारान् गुरुमासो दीयते इत्यर्थः । चउलहुगाणमित्यादि उद्घातं वहतः सप्तवारलघुमासिकदानानन्तरं भूयो भूय आपत्तौ चतुर्लघुकानां पञ्चकं दातव्यम् । पञ्च वारान् चत्वारो मासलघुका दातव्या इत्यर्थः । अनुद्घातं वहतः षड्वारगुरुमासिकादानानन्तरं चतुर्गुरुकाणां चतुष्कं चतुरो वारान् चतुर्गुरुकं देयम् । ततः परमभुयस्यापि छेदादि चतुष्कं छेदमूलानवस्थाप्य पाराञ्चित लक्षणं भवति । पूर्वप्रकारेण दानबुद्धया ज्ञातव्यं । साम्प्रतं झोषणा ततो परेणं एतस्य व्याख्यानार्थमाह–

**[भा.५०२]** तं चेव पुव्वभणियं परतरए नत्थि एगखंधादी ।
दो जोए अचयंते, वेयावच्चट्ठया झोसो ॥

वृ- यत्पूर्वमन्यतरके भणितं यथा नास्त्येतत् यत् एगखंधाई एकेन स्कन्धेन एककालं द्वे कापोत्यावुह्येते इति तदेव परतरकेऽपि सर्वं भणनीयम् । ततो द्वौ योगौ तपःकरणवैयावृत्यलक्षणौ युगपदशक्नुवन् संचयितमसंचयितं वा यदापन्नस्तन्निक्षिप्तं कृत्वा वैयावृत्यं कुरुते । वैयावृत्यं च कुर्वतो यद्यदापन्नं स्तोकं बहु वा तस्य सर्वस्यापि वैयावृत्यार्थतया प्रवृत्तत्वात् झोषः परित्यागः कर्त्तव्यः । तदेवं तपो भणितं यानि यत्र भिन्नमासादीनि मासादीनि वा तपःस्थानानि पट् पञ्चेत्यादिलक्षणानि तावन्ति दिनानि छेदप्राप्ते छेदाः कर्त्तव्याः । अथ मूलं कीदृशस्य देयमुच्यते-

**[भा.५०३]** तवतीयमसद्दहए तवबलिए चेव होइ परियागे ।
दुब्बल अप्परिणामे अत्थिरअबहुस्सुए मूलं ॥

वृ- यो मासादिकं षण्मासपर्यन्तं तपोऽतीतो व्युत्क्रान्तः । किमुक्तं भवति ? । मासादिना षण्मासपर्यन्तेन तपसा यो न शुद्धयति, तपोग्रहणमुपलक्षणं देशच्छेदमपि योऽतीतो देशच्छेदेनापि यो न शुद्धयतीति भावः, तस्य मूलं दीयते, इति सर्वत्र सम्बद्धयते । तथा असद्दहिए इति तपसा पापं शुद्धयतीति एतद्यो न श्रद्दधाति, तस्मिन्नप्यश्रद्दधाने मूलं अथवा अश्रद्दधानो नाम मिथ्यादृष्टिः । ततो यो अश्रद्दधान एव सन् व्रतेषु स्थापितः पश्चात्सम्यक्त्वं प्रतिपन्नः सन् सम्यगावृत्तो भवति तस्य मूलं देयं यथा गोविन्दवाचकस्य दत्तमिति । तव बलिएत्ति तपसा बलिको बलिष्ठोऽसौ तपोबलिकः । किमुक्तं भवति ? । महतापि तपसा यो न क्लाम्यति, यत्र तत्र स्वल्पे प्रयोजने तपः करिष्यामीति विचिन्त्य प्रतिसेवते । यदि वा षाण्मासिके तपसि दत्ते वदति समर्थोऽहमन्यदपि तपः कर्तुं तदपि मे देहीति तस्मिन् तपोबलिके मूलं पर्याये इति यस्य छेदेन छिद्यमानः पर्यायो न पूर्यते न पूर्यते स्तोकत्वात् । अथवा छेदपर्यायं यो न सम्यक् श्रद्दधाति । यथा कोऽयमर्धजरतीयो न्यायः कियत्पर्यायस्य छिद्यते कियन्नेति, छिद्यते तर्हि मूलत एव छिद्यतां । यदि वा न किमपीति, यदि वा वक्ति रत्नाधिकोऽहं बहुकेऽपि परिच्छिन्ने पर्याये अस्ति मे दीर्घः पर्याय इति न किमपि छेत्स्यति, तस्य सर्वस्यापि पर्याये हीनस्य पर्याये श्रद्धानरहितस्य पर्याये गर्वितस्य मूलं, तथा यो बहु प्रायश्चित्तमापन्नोऽथ च धृतिसंहननाभ्यां दुर्बलत्वात् तपःकर्तुमसमर्थस्तस्मिन् दुर्बले मूलं, तथा योऽपरिणामत्वात् ब्रूते । यदेतत्तपः षाण्मासिकं युष्माभिर्मे

दत्तमेतेनाहं न शुद्ध्यामि प्रायश्चित्तस्य बहुत्वात् तस्मिन्नप्यपरिणामे मूलं, तथा यो धृतिदुर्बलतया पुनः पुनः प्रतिसेवते तस्मिन्नस्थिरे धृत्यवष्टम्भरहिते मूलं, तथाऽबहुश्रुतोऽगीतार्थः । अथवानवस्थाप्यंपाराञ्चितं वा आपन्नस्तस्य वाऽबहुश्रुततया तद्वानायोग्यता तस्मिन्नप्यबहुश्रुते मूलं दातव्यमिति । साम्प्रतमाचार्यो विशेषं दर्शयितुकामो यदुक्ताधस्तादुक्तं तदेव प्रच्छयन्नाह –

**[भा.५०४]** जह मन्ने एगमासियं सेविऊण एगेन सो निग्गच्छे ।
तह मन्ने मासिय सेविऊण चरमेन निग्गच्छे ॥

**वृ-** चोदको वक्ति- अहं एवं मन्ये यथा मासिकं परिहारस्थानं सेवित्वा सोऽधिकृतप्रायश्चित्तप्रतिपन्ना एकेन मासेनेति गम्यते निर्गच्छति शुद्ध्यति । तथा आस्तामन्येन द्वैमासिकादिना एतदप्यहमन्ये, अतिशयज्ञापनार्थं भूयो मन्ये इत्युपादानं मासिकं सेवित्वा चरमेण पाराञ्चितेन निर्गच्छति शुद्ध्यति । एवं चोदकेनोक्ते सत्याचार्य आह-सत्यमेतत् । यथा मासिकं सेवित्वा मासेन स निर्गच्छति तथा मासिकं सेवित्वा कदाचिच्चरमेण शुद्ध्यति । इह मासिकं सेवित्वा मासेन शुद्ध्यतीत्यादि गमो गृहीतो मासिकं सेवित्वा चरमेण शुद्ध्यति । इत्यन्तगमः आद्यन्तग्रहणमध्यमस्यापि ग्रहणमिति शेषा अपि गमाः सूचिताः। मासिकग्रहणेन द्वैमासिकादीन्यपि । तद्यथा मासं सेवित्वा मासेन निर्गच्छति तथा मासं सेवित्वा द्वाभ्यां मासाभ्यां निर्गच्छति, मासं सेवित्वा त्रिभिर्मासैर्निर्गच्छति, मासं सेवित्वा चतुर्भिर्मासैर्निर्गच्छति, मासं सेवित्वा पञ्चभिर्मासैर्निर्गच्छति, मासं सेवित्वा षड्भिर्मासैर्निर्गच्छति । मासं सेवित्वा छेदेन निर्गच्छति, मासं सेवित्वा मूलेन निर्गच्छति । मासं सेवित्वा अनवस्थाप्येन निर्गच्छति, मासं सेवित्वा चरमेण पाराञ्चितेन निर्गच्छति, तथा द्वैमासिकं सेवित्वा द्वाभ्यां मासाभ्यां निर्गच्छति । द्वैमासिकं सेवित्वा त्रिभिर्मासैर्निर्गच्छति एवं यावत् द्वैमासिकं सेवित्वा चरमेण निर्गच्छति, तथा त्रैमासिकं सेवित्वा त्रिभिर्मासैर्निर्गच्छति, त्रैमासिकं सेवित्वा चतुर्भिर्मासैर्निर्गच्छति । एवं यावत् त्रैमासिकं सेवित्वा चरमेण निर्गच्छति, तथा चातुर्मासिकं सेवित्वा चतुर्भिर्मासैर्निर्गच्छति यावच्चरमेण निर्गच्छति । तथा पञ्चमासिकं सेवित्वा पञ्चभिर्मासैर्निर्गच्छति । एवं यावच्चरमेण निर्गच्छति, तथा षाण्मासिकं सेवित्वा षड्भिर्मासैर्निर्गच्छति यावच्चरमेण निर्गच्छति । छेदं सेवित्वा छेदेन निर्गच्छति, यावच्चरमेण निर्गच्छति, मूलं सेवित्वा मूलेन निर्गच्छति यावच्चरमेण, अनवस्थाप्यं सेवित्वा अनवस्थाप्येन निर्गच्छति, अनवस्थाप्यं सेवित्वा चरमेण निर्गच्छति । अत्र शिष्यः प्राह-यस्मिन्नापन्ने यत्तदेव दीयते तदापत्तिसमं दानमुचितं अन्यच्छत्वा सेविते यदन्यादृशं दीयते । तत्र को हेतुः ? । आचार्य आह-

**[भा.५०५]** जिननिल्लेवणकुडए मासे अपलिउंचमाणे सट्ठाणं ।
मासेण विसुज्झिहिई, तो देइ गुरुवएसेणं ॥

**वृ-** जिनाकेवलिनो जिनग्रहणादवधिमनः पर्यायज्ञानिनः चतुर्दशदशनवपूर्वधरा गृहीताः एते यथावस्थिताः संक्लेशविशोधीः परिज्ञाय अपराधनिष्पन्नं मासकादिभावनिष्पन्नं च द्विमासिकादि यथा विशुद्ध्यति तथा तद्विशोधिनिमित्तं प्रायश्चित्तं ददति । तत्राध्यवसानेन मासे प्रतिसेविते यद्यप्रतिकुञ्चितमालोचयति । ततस्तस्मिन्नालोचनायामप्रतिकुञ्चति स्वस्थानं मासमेव प्रयच्छन्ति । अथ प्रतिकुञ्चनया आलोचयति । अथवा यानि द्वैमासिकादीनां प्रायश्चित्तानामर्हाणि यानि अध्यवसाय स्थानानि तैर्मासः प्रतिसेवितः । एष द्विमासादिभिर्मासैर्विशोत्स्यतीति जिनाः केवलादिबलतः श्रुतव्यवहारिणो वा गुरूपदेशेनाधिकमपि प्रायश्चित्तं प्रयच्छंति । अत्र चार्थे निल्लेवण कुडे इति

निर्लेपनकुटदृष्टान्तः । निर्लेपनो रजकः । कुटो जलभृतो घटः । यथा जलकुटैर्वस्त्राणि रजकः प्रक्षालयति तथापराधपदानि जिनादयो मासादिभिः शोधयन्ति । अथवा निर्लेपनं लेपस्य मलस्याभावः । कुटो जलकुटः स दृष्टान्तः । अत्र चत्वारो भङ्गाः-एकं वस्त्रमेकेन जलकुटेन निर्लेपनं क्रियते १, एकवस्त्रमनेकैर्जलकुटैः २, अनेकानि वस्त्राणि एकेन जलकुटेन ३, अनेकानि वस्त्राणि अनेकजलकुटैः ४ । तत्र प्रथमद्वितीयभङ्गव्याख्यानार्थमाह–

**[भा.५०६]** एगुत्तरिया घडच्छक्कएण छेयादि होंति नियमाणं ।
एएहिं दोसवुड्ढी कप्पिज्जइ दोहिं ठाणेहिं ॥

**वृ-** एकोत्तरिका घटस्य वृद्धिः, घटषट्केन परिसमापयितव्या । इयमत्र भावना-कोऽप्यल्पमलः पट एकेन जलकुटेन शुद्धयति । स गृह एव प्रक्षाल्यते, एष प्रथमो भंगः । ततो मलिनतरः कठिनमलो वा पटो द्वाभ्यां कुटाभ्यां शुद्धिमासादयति, सोऽपि गृह एव प्रक्षाल्यते । ततोऽपि मलिनतरस्त्रिभिः कुटैः सोऽपि गृहे प्रक्षाल्यते । एवमेकोत्तरिका वृद्धिस्तावज्ज्ञेया यावत् कोऽपि मलिनतरः षड्भिर्जलकुटैः शुद्धयति । सोऽपि गृहे एव प्रक्षाल्यते । अत्र वस्त्रस्थानीयान्यपराधपदानि मलस्थानीयानि रागद्वेषाध्यवसायस्थानानि तज्जनितो वा कर्मसंचयः, जलकुट स्थानीयानि मासिकादीनि प्रायश्चित्तानि, तथा ह्यल्पमपराधपदमेकेन मासेन शुद्धयति । ततो गुर्वपराधपदं द्वाभ्यां मासाभ्यां, गुरुतरमपराधपदं त्रिभिर्मासैस्ततोऽपि गुरुतरं चतुर्भिर्मासैः [illegible] गुरुतमपराधपदं षड्भिर्मासैः । छेयाई होंति निग्गमणमिति ये गाढगाढतरादिमलाः पटास्ते गृहान्निर्गत्य बहिः सरित्तडागादि गत्वा प्रभूतप्रभूततरैः क्षारगोमूत्रादिभिर्बहुबहुतरैरास्फोटनपिट्टनादिभिर्महन्महत्तरप्रयत्नैः शुद्धिमासादयन्ति । तथापराधपदान्यपि गाढगाढतराध्यवसायनिर्वर्तितानि छेदमूलानवस्थाप्य पाराञ्चितैः पर्यायादिभ्यो निःकाशेन शुद्धयन्ति। ततो निर्गमनं निर्गमनतुल्याश्छेदादयो भवन्ति । अथ कथं जलकुटबहिर्निर्गमनतुल्यामासादिच्छेदादय इति अत्राह-एएहिं इत्यादि । एताभ्यामनन्तरोदिताभ्यां द्वाभ्यां स्थापनाभ्यां मासादिच्छेदादिलक्षणाभ्यां दोषवृद्धिस्तीव्रतीव्रतररागद्वेषाध्यवसायवृद्धिस्तज्जनिताकर्मोपचयवृद्धिर्वा कल्प्यते, छिद्यते, ततो मासादि छेदादयो जलकुटनिर्गमनसमानाः । साम्प्रतमेगोत्तरिया घडच्छक्कएणंति व्याख्यानयति–

**[भा.५०७]** अप्पमलो होइ सुई, कोइ पडो जलकुडेण एक्केण ।
मलपरिवुड्ढीए भवे कुडपरिवुड्ढी उ जा छन्नू ॥

**वृ-** कोऽपि पटोऽल्पमलः सन् एकेन जलकुटेन शुचिर्भवति शुद्धयति । एष प्रथम भङ्ग उक्तः, मलपरिवृद्धौ कुटपरिवृद्धिर्भवति । सा च तावत् यावत्षट् । तुशब्दोऽतिविशेषणार्थः । स चैतद्विशिनष्टि, षट्केन यावत् पटस्य शुद्धिर्गृह एव क्रियते । इयमत्र भावना-बहुमलः पटो द्वाभ्यां जलकुटाभ्यां शुद्धयति बहुमलतरस्त्रिभिर्जलकुटैरेवं मलपरिवृद्धया जलकुटपरिवृद्धिस्तावदवसेया यावत् बहुमलतमः षड्भिर्जलकुटैरेते च गृह एव प्रक्षाल्यन्ते, एवमपराधपदान्यपि मासिकादीनि साधूनां स्वपर्यायमंडल्यादिरूपगृहे एव स्थितानि मासिकादिभिः प्रायश्चितैः शोध्यन्ते, एतेन द्वितीयो भंग उपदर्शितः । छेयाई होंति निग्गमणमित्यस्य व्याख्यानमाह–

**[भा.५०८]** तेन परं सरियादी गंतुं सोहिंति बहुतरमलं तु ।
मलनाणत्तेन भवे, आयं च ण जतनाणत्तं ॥

**वृ-** तस्मादनन्तरोदितात् पटात् परं बहुतरमलं पटं सरिदादि, सरिन्नदी, सरिन्नदी, आदिशब्दात् हृदकूपतडागादिपरिग्रहः, तत्रगत्वा शोधयन्ति । एवं साधूनामप्यपराधपदानि च्छेदादिभिः पर्यायमण्डल्यादिरूपात् गृहान्निष्काशनेन जिनादयः शोधयन्ति । मलनाणत्तेनेत्यादि द्वितीयादिपदेषु यथा यथा मलनानात्वं तथा तथा आदंचनं । यत्ननानात्वमपि । आदञ्चनं नाम गोमूत्राजालिण्डिकोखादि यत्न आच्छोटनपिट्टनादिषु प्रयत्नः तन्नानात्वमपि । तथा हि-यथा यथा मलस्योपचयस्तथा तथा बहुतरगोमूत्रादिप्रक्षेपो बहुबहुतरआच्छोटनपिट्टनादिषु प्रयत्नस्ततो भवति । मलनानात्वे आदञ्चन यत्ननानात्वमिव साधूनामप्यपराधपदेषु रागद्वेषोपचयवृद्धौ मासादिवृद्धिस्तपः क्रियाविशेषवृद्धिश्चेति चरमतृतीयभङ्गव्याख्यानार्थमाह-

**[भा.५०९]** बहुएहिं जलकुंडेहिं बहूनि वत्थाणि कानि वि विसुज्झे ।
अप्पमलाणि बहूणिवि कानि बसिज्झंति एक्केण ।।

**वृ-** कानिचित् वस्त्राणि तथाविधगाढमलानि बहूनि बहुभिर्जलकुटैर्विशुद्धयन्ति । एवमपराधपदान्यपि तथाविधानि बहूनि साधूनां बहुभिर्मासैः शुद्धिमासादयन्ति । एतेन चतुर्थभङ्गो व्याख्यातः । तथा कानिचित् अल्पमलानि बहूनि वस्त्राणि एकेन जलकुटेन शुद्धयन्ति । एवं मन्दानुभावकृतानि बहून्यपि साधूनामपराधपदानि एकेन मासेन शुद्धयन्ति । एष तृतीय भंग उपदर्शितः अत्र शिष्यः प्राह-रागद्वेषवृद्धिवशतः प्रायश्चित्तवृद्धिरुपलब्धा तथा किं रागद्वेषहानिवशतः प्रायश्चित्तहानिरप्युपलब्धा । आचार्य प्राह-उपलब्धा तथा चैतदेव पृच्छति-

**[भा.५१०]** जहमन्ने दसमं सेविऊण निगच्छए उदसमेणं ।
तहमन्ने दसमं सेविऊण नवमेण निगच्छे ।।

**वृ-** अहं एवं मन्ये, यथा दशमं प्रायश्चित्तं पाराञ्चितं प्रतिसेव्य दशमेन पाराञ्चितेन प्रायश्चित्तेन निर्गच्छति । तथा एतदपि मन्ये दशमं पाराञ्चितं सेवित्वा नवमेन अनवस्थाप्येन प्रायश्चित्तेन निर्गच्छति शुद्धयति । आचार्य आह-सत्यमेतत् । दशमं सेवित्वा दशमेन शुद्धयति कदाचिन्नवमेनापि अनया गाथया सर्वेऽधोमुखागमाः सूचिताः । ते चामी-दशमं सेवित्वा मूलेन निर्गच्छति, एवं षाण्मासिकेन पाञ्चमासिकेन चातुर्मासिकेन त्रैमासिकेन द्वैमासिकेन मासिकेन च वक्तव्यम् । दशमं सेवित्वा भिन्नमासेन निर्गच्छति। दशमं सेवित्वा विंशत्या रात्रिंदिवैर्निर्गच्छति दशमं सेवित्वा पंचदशभीरात्रिंदिवैर्निर्गच्छति दशमं सेवित्वा दशभीरात्रिंदिवैर्निर्गच्छति दशमं सेवित्वा पंचभीरात्रिंदिवैर्निर्गच्छति दशमं सेवित्वा दशमभक्तेन निर्गच्छति, दशमं सेवित्वा अष्टमेन निर्गच्छति, दशमं सेवित्वा षष्ठेन निर्गच्छति, दशमं सेवित्वा पूर्वार्द्धेन निर्गच्छति । दशमं सेवित्वानिर्विकृतिकेन निर्गच्छति । तथा अनवस्थाप्यं सेवित्वा अनवस्थाप्येन निर्गच्छति अनवस्थाप्यं सेवित्वा मूलेन निर्गच्छति । एवं यावन्निर्विकृतिकेन निर्गच्छति । एवं मूलेऽपि नेतव्यम् । यावन्मूलं सेवित्वा निर्विकृतिकेन निर्गच्छति । एवं च्छेदे एवं षाण्मासिके, एवं पाञ्चमासिके, एवं चातुर्मासिके, एवं त्रैमासिके, एवं द्वैमासिके, एवं मासिके, एवं भिन्नमासे विंशति रात्रिंदिवे पञ्चदशरात्रिंदिवे दशरात्रिंदिवे पञ्चरात्रिंदिवे, दशमभक्ते अष्टमे षष्टे चतुर्थे-आचामाम्ले एकाशनके पूर्वार्द्धे निर्विकृतिके च गमा वक्तव्याः, । तथा एतेऽपि गमा द्रष्टव्याः । सूत्रस्य सूचकत्वात् निर्विकृतिकं सेवित्वा तेनैव निर्विकृतिकेन शुद्धयति । निर्विकृतिकं सेवित्वा पूर्वार्द्धेन निर्गच्छति । एवं यावच्चरमेण पाराञ्चितेन निर्गच्छति । तथा पूर्वार्धं सेवित्वा पूर्वार्धेन निर्गच्छति । पूर्वार्धं सेवित्वा एकाशनेन निर्गच्छति यावच्चरमेण

एकाशनं सेवित्वा एकाशनेन निर्गच्छति । एकाशनं सेवित्वा आयामाम्लेन निर्गच्छति । यावच्छ्रमेण एवमायाम्लादिष्वप्यूर्ध्वगमा वक्तव्याः । अत्र शिष्यः प्राह-

[भा.५११] जहमन्ने बहुसो मासियाइं सेविय एगेन सोउ निग्गच्छे ।
तहमन्ने बहुसो मासियाइं सेविय बहूहिं निग्गच्छे ।।

वृ- अहमेवं मन्ये, यथा बहुशो बहून् वारान्मासिकानि परिहारस्थानानि सेवित्वा एकेन मासेन सोऽपराधकारी निर्गच्छति । अपराधपदान्निर्यातिं, मन्दानुभावेन प्रतिसेवनायाः कृतत्वात् । तथा एतदपि मन्ये बहुशो बहून् वारान् मासिकानि सेवित्वा कदाचित् बहुभिर्मासैर्निर्गच्छति । यदि तीव्रानुभावेन प्रतिसेवना कृता स्यादिति भावः, अत्रार्थे आचार्येणाममिति वक्तव्यम् । रागद्वेषवृद्धिहानिवशत एकैकस्मिन्नापत्तिस्थाने सर्वप्रायश्चित्तानामारोपणाभावात् । तत्र यदुक्तं दशमं प्रायश्चित्तस्थानं सेवित्वा दशमेन शुद्धयति । दशमं सेवित्वा नवमेन शुद्धयति । तत्र कुट दृष्टान्तं प्रागुक्तमेव दर्शयति-

[भा.५१२] एगुत्तरिया घडछक्कएण छेयाइं होंति निग्गमनं ।
तेहिं तु दोसवुड्डी, उप्पत्तीरागदोसेहिं ।।

वृ- एकोत्तरिका जलकुटस्य वृद्धिर्घटषट्केन जलभृतघटकषट्केन नियमयितव्याः । किमुक्तं भवति ? कोऽपि [illegible]मलः पट एकेन जलकुटेन गृहे प्रक्षाल्यते, कोऽपि बहुतरमलो द्वाभ्यां कुटाभ्यां ततोऽपि बहुतरमलस्त्रिभिः कुटैरेवं यावत् बहुतममलः षड्भिः कुटैः । एवं किमपि साधूनाम-पराधपदमतिप्रभूतरागद्वेषाध्यवसायोपचितं स्वपर्यायमण्डल्यादिरूपे गृह एवावस्थितानां षड्भिर्मासैः शुद्धयति किमपि स्तोकरागद्वेषाध्यवसायोपचितं पञ्चभिर्मासैस्ततोऽपि स्तोकरागद्वेषाध्यवसायोपचितं चतुर्भिर्मासैरेवमेकैकहानिस्तावद्वक्तव्या यावत्किमप्यल्पतररागद्वेषाध्यवसायोपचितमेकेन शुद्धयतीति छेयादी होंति निग्गमनं । यथा केऽपि पटा अतिप्रभूतकठिनमला गृहान्निर्गत्य बहिः सरित्तडागादि गत्वा बहुभिर्गोमूत्रादिभिर्बहुभिश्चाच्छोटनपिट्टनप्रकारैः शुद्धयन्ति । तथा निर्गमतुल्याश्छेदादयो भवन्ति । तथा हि- किञ्चिदतिप्रबलरागद्वेषाध्यवसायोपचितमपराधपदं साधूनां दशमेव पाराञ्चितामिधानेन शुद्धयति किञ्चित्ततो हीनरागद्वेषाध्यवसायोपचितमनवस्थाप्येन, ततोऽपि हीनतररागद्वेषाध्यवसायोपचितं मूलेन, ततोऽपि हीनतमरागद्वेषाध्यवसायोपचितं छेदेन छेदादयश्च पर्यायादि गृहान्निःकाशनेन भवन्तिः । ततो निर्गमनतुल्याः-छेदादयः कस्मादेवं प्रायश्चित्तहानिरत आह-तेहि तु इत्यादि, तै रागद्वेषैस्तीव्रतीव्रतरैर्दोषवृद्धे कर्मोपचयवृद्धे रुत्पत्तिरतो यथा यथा रागद्वेषाध्यवसायवृद्धिस्तथा तथा प्रायश्चित्तस्यापि वृद्धिः । यथा यथा च रागद्वेषहानिस्तथा तथा प्रायश्चित्तस्यापि हानिरिति एतदेवाह-

[भा.५१३] जिननिल्लेवणकुडए, मासे अपलिउंच माणे सट्ठाणं ।
मासेन विसुज्झिहिई तोदेंति गुरुवएसेणं ।।

वृ- जिनाः केवल्यवधिमनःपर्यायज्ञानिप्रभृतयः ते केवलादिबलतो यथावस्थिता रागद्वेषाध्य-वसायहानिवृद्धिरूपलभ्यमाना निर्लेपनकुटान् प्रागुक्तप्रकारेण दृष्टान्तीकृत्य यो यथा शुद्धयति तस्मै तथा प्रायश्चित्तं प्रयच्छन्ति । तथा हि-मासार्हे रागद्वेषाध्यवसायैर्मासि मासे प्रतिसेविते तदनन्तरमालोच-नायामप्रतिकुञ्चति जिनाः केवलादिबलतः श्रुतव्यवहारिणो गुरूपदेशतः पाठान्तरे जिनोपदेशेन मासेनैव विशोत्स्यतीति विज्ञाय स्वस्थानं मासिकमेव प्रायश्चित्तं ददति प्रयच्छन्ति । यदि पुनर्द्वैमासिकं त्रैमासिकं यावत्पाराञ्चितं वा मासार्हैरेवं रागद्वेषाध्यवसायैस्ततो हीनतरैर्वा प्रतिसेवितं यदि पश्चात् हा दुट्ठु

कृतमित्यादिभिर्निन्दनैः प्रतनुकृतं तदा जिनाः केवलादिबलतः श्रुतव्यवहारिणो गुरूपदेशतस्तथा विज्ञाय तस्मै मासं भिन्नमासं यावदन्ते निर्विकृतिकमपि प्रयच्छन्ति, ततो न कश्चिद्दोषः । पुनरप्याह चोदकः -

**[भा.५१४]**　पत्तेयं पत्तेयं, पए पए भासिऊण अवराहे ।
तो केन कारणेणं, हीनब्भहिया व पट्ठवणा ॥

**वृ-** पदे पदे सूत्रगते प्रत्येकं प्रत्येकमपराधान् भाषित्वा तदनन्तरमर्थतः केन कारणेन हीना अभ्यधिका वा प्रस्थापना भणिता ? । यथा स्तोके प्रायश्चित्तस्थाने बहु प्रयच्छथ, बहुके वा स्तोकं, यदि वा सर्वथा झोषं कुरुथेति आचार्य आह-

**[भा.५१५]**　मनपरमोहिजिनं वा चउ दस दस पुव्वियं च नवपुव्विं ।
थेरं च समासज्ज ऊ नब्भहिया च पट्ठवणा ॥

**वृ-** मनःपर्यायज्ञानिं परमावधिं प्रभूतावधिं जिनं वा केवलज्ञानिनं चतुर्दशपूर्विणं दशपूर्विणं नवपूर्विणं च स्थविरांश्च समासाद्याश्रित्य हीना अभ्यधिका वा प्रस्थापना भवति । इयमत्र भावना-मनःपरमावधि-जिनादयः प्रत्यक्षज्ञानिनस्ततस्ते प्रतिसेवकेषु रागद्वेषाध्यवसायस्थानानां हानिं वृद्धिं वा साक्षादवेक्षमाणास्तुल्येऽप्यपराधपदे रागद्वेषानुरूपं हीनमधिकं या प्रस्थापयन्ति ददतीत्यर्थः । अथ ये मनःपरमावधिजिनादयः प्रत्यक्षज्ञानिस्तेषामेतत् युक्तं रागद्वेषाध्यवसायवृद्धिहान्या साक्षादवेक्षणात् । ये पुनः स्थविरास्ते खलु रागद्वेषाणां हानिं वा वृद्धिं वा जानीयुरुच्यते । बाह्यपश्चात्तापादिलिङ्गतस्तत्र हानि-परिज्ञानलिङ्गं पश्चात्तापादिकमाह-

**[भा.५१६]**　हा दुट्ठु कयं हा दुट्ठु कारियं हा दुट्ठमनुमयंमेत्ति ।
अंतो अंतो डज्झइ, पच्छातावेण वेवंते ॥

**वृ-** प्राणातिपातादि कृत्वा कारयित्वा अनुमोद्य च तदुत्तरकालं हा इति विषादे दुट्ठु अशोभनं मया कृतं हा दुट्ठु कारितं, हा दुट्ठु अनुमतं मे ममेत्येवंलक्षणेन पश्चात्तापेन पश्चात्तापवह्निना वेपमानः पश्चात्तापकरणतः एव कम्पमानो अनन्तरश्चित्तमध्ये दह्यते । ततो ज्ञायते स्थविरैरेतस्य रागद्वेषहानिरिति तदनुरूपं प्रायश्चित्तं प्रस्थाप्यते वृद्धिपरिज्ञानलिङ्गमाह-

**[भा.५१७]**　जिनपन्नत्ते भावे, असद्दहंतस्स तस्स पच्छित्तं ।
हरिसमिव वेदयंतो, तहा तहा वड्ढए उवरिं ॥

**वृ-** तस्य प्रायश्चित्तप्रतिपत्तुर्जिनैः सर्वज्ञैः प्रकर्षेण ज्ञाताः भावा जीवादिकास्तान् जिनप्रज्ञप्तान् भावान् अश्रद्दधानस्य तथा प्राणातिपातादि कृत्वा आस्तां तदुत्तरकालं किं चा लोचनायामपि निधिलाभे हर्षमिव वेदयमानस्य यथा यथा हर्षगमनं तथा तथा प्रायश्चित्तमुपर्युपरि वर्धते । किमुक्तं भवति ? स्थविरा अपि जिनप्रज्ञप्तभावाश्रद्धानेन तथा तथा हर्षगमनेन च प्रतिसेवकस्य रागद्वेषवृद्धिमवगच्छन्त्यवगत्य च तदनुरूपमुपर्युपरि प्रायश्चित्तं प्रयच्छन्ति । *(सूत्र- १४ - व्याख्या)*

यो भिक्षुश्चातुर्मासिकं वा सातिरेकचातुर्मासिकं वा पाञ्चमासिकं वा सातिरेकपाञ्चमासिकं वा एतेषां परिहारस्थानानामन्यतरत् परिहारस्थानमालोचयेत् तस्याप्रतिकुञ्च्यालोचयतः चातुर्मासिकं वा सातिरेकचातुर्मासिकं वा पाञ्चमासिकं वा सातिरेकपाञ्चमासिकं वा दद्यात्सातिरेक इति शेषः यत्प्रतिसेवितं तद् दद्यादिति भावः तद्योगैरेवाध्यवसानैस्तस्य तस्य प्रतिसेवनादालोचनायां वा तत्प्रतिकुञ्चनात् प्रतिकुञ्च्यालोचयतश्चातुर्मासिकप्रतिसेवकस्य पाञ्चमासिकं सातिरेकचातुर्मासिकप्रतिसेवकस्य

सातिरेकपाञ्चमासिकं मायानिष्पन्नस्य गुरुमासस्याधिकस्य दानात् पाञ्चमासिकप्रतिसेवकस्य सातिरेकपाञ्चमासिकप्रतिसेवकस्य षण्मासिकं षण्मासात् परस्य भगवद्वर्धमानस्वामितीर्थे तपोदानस्यासंभवात् । तेन परमित्यादि ततः पाञ्चमासिकात् स्थानात् परस्मिन् षाण्मासिके सातिरेके वा षाण्मासिके प्रतिसेविते आलोचनाकाले प्रतिसेविते प्रतिकुञ्चित अप्रतिकुञ्चिते वा त एव स्थिताः षण्मासाः प्रदातव्याः । परतस्तपोदानस्य निषेधनात्तदेवं त्रयोदशमसूत्रमुक्तम् ।

इदानीं चतुर्दशं सूत्रमाह-एवं बहुसो विनेयव्वं, एवममुना प्रकारेण बहुशोऽपि बहुशः शब्देन विशिष्टमपि सूत्रं चतुर्दशं वक्तव्यम् । तद्यथा-जे भिक्खू बहुसो चाउम्मासियं बहुसो सातिरेगचाउम्मासियं वा बहुसो पञ्चमासियं वा बहुसो सातिरेगपञ्चमासियं वा एएसिं परिहारठाणाणं अन्नयरं परिहारठाणं पडिसेवित्ता आलोएज्जा । अपलिउंचिय आलोएमाणस्स चाउम्मासियं वा साइरेगचाउम्मासियं वा पञ्चमासियं वा साइरेगपञ्चमासियं वा पलिउंचियं आलोएमाणस्स पञ्चमासियं वा सातिरेगपञ्चमासियं छम्मासियं वा तेन परं पलिउंचिए वा अपलिउंचिए वा ते चेव छम्मासा इति अस्याक्षरगमनिका पञ्चमसूत्रानुसारतः कर्त्तव्या । नवरं बहुशोऽपि चातुर्मासिके प्रतिसेविते यदेकं चातुर्मासिकं दत्तं तत् बहुशोपि प्रतिसेवनाया मन्दानुभावकृतत्वात् आलोचनावेलायामप्येककाले सर्वेषामालोचितत्वात् । एवं सातिरेकचातुर्मासादावपि भावनीयम् । सम्प्रति वक्तव्यविशेषमभिधित्सुराह- आलोचनायां दन्तपुरकथानकम् ।

[भा.५१८] एत्तो निकायणा मासियाण जह घोसणं पुहविपालो ।
दंतपुरे कासी या, आहरणं तत्थ कायव्वं ॥

वृ- इत इति तृतीयार्थे पञ्चमी । ततोऽयमर्थः । एतैरनन्तरोदितैः सर्वैरपि सूत्रैर्मासिकानां मासनिष्पन्नानां मासिकद्वैमासिकत्रैमासिक यावत् षण्मासिकानां निकाचनोक्ता । निकाचना नाम यन्मासिकादि प्रतिसेवितं तत् यावदद्याप्यालोचनार्हस्य पुरतो नालोच्यते तावदनिकाचितमवसेयमालोचितं तु निकाचितं तत आलोएज्जा आलोचनार्हेण अपरिश्राविणा भवितव्यं, धनमित्रोदाहरणमत्र । इत्यादि पदैर्निकाचना भाविता द्रष्टव्या । तत्र आलोचनार्हे आहरणं ज्ञातं कर्तव्यं । किं तदित्याह-जह घोसणमित्यादि, यथेत्याहरणोपन्यासोपदर्शने दन्तपुरे पत्तने पृथिवीपालो राजा, दन्तवक्त्रनामा घोषणामकार्षीत्- 'दन्ता न केनापि क्रेतव्याः स्वगृहे वसन्तः समर्पणीयाः । इत्येवंरूपामित्यादि । तच्चेदं-

दन्तपुरं नयरं, दन्तवक्त्रो राया । तस्स सच्चवती देवी । तीसे दोहलो जातो- 'जइ अहं सव्वदंतमए पासाए कीलिज्जामि' । रन्नो कहियं । रन्ना अमच्चो आणत्तो । सिग्घमेवं ते उवट्ठवेसि । तेन नगरे घोसावियं 'जो अन्नो दंतं किणेइ न देइ वा घरे संते तस्स सारीरो दंडो' । तत्थ नगरे धणमित्तो सत्थवाहो । तस्स दो भज्जाओ- धनसिरी । पउमसिरी य । अन्नया तासिं दुन्हवि कलहो जाओ । तत्थ धनसिरीए पउमसिरी भणिया- 'किमेवं गव्वमुव्वहसि, न किं ते सच्चवतीए विव दंतमओ पासाओ कतो' । ताहे पउमसिरीए असग्गाहो गहितो 'जइ मे दंतमओ पासादो न किज्जइ तो अलं मे जीविएणं न देइ धनमित्तस्स वि उल्लावं । तस्स वयंसो दढमित्तो नाम तस्स कहियं । तेन भणियं अकालहीनं अहं ते इच्छं पूरेमि, उट्ठाविया असग्गाहं ताहे सो दढमित्तो वणयरदाणमणिसंगाहए करेइ तेहिं भणियं किं आणेमो किंवा पइच्छामो तेन भणियं दंते मो देह, तेहिं य ते दंता खडपूयमेहिं गोविया, सगडं भरियं, नगरदारे पवेसिज्जंताण एगो खडपूयगोत्ति गोणेणाकड्ढितो दंतो पडिओ, चोरो त्ति सो रायपुरिसेहिं वणयरो गहितो । पुच्छितो कस्सेते दंता ? । सो न साहइ । एत्थंतरे दढमित्तेण भणियं-ममेते दंता । एस कम्मकरो । ततो वणयरो मुक्को । दढमित्तो गहितो ।

रन्ना पुच्छितो । कस्सेते दंता ? सो भणति- ममंति । एत्थंतरे दढमित्तं गहियं नाउं धनमित्तो आगतो । रन्नो पुरतो भणइ-ममेते दंता मम दंडं सारीरं वा निग्गहं करेह । दढमित्तो भणति- अहमेयं न जाणामि । ममं सन्तिया दंता । मम निग्गहं करेह । एवं ते अन्नोन्नावराहरक्खाट्ठिया, रन्ना भणिया तो तुब्भे निरपराधी भूयत्थं कहेह, तेहिं सव्वं जहाभूयं कहियं । तुट्ठेण रन्ना मुक्का; उम्मुक्को जहा सो दढमित्तो निरवलावो अवियमरणमब्भुवगतो न य परावराहो सिट्ठो, तहा आलोयणारिहेण अपरिसाविणा भवियव्वं । जहा सो धनमित्तो भूयत्थं कहेइ, ममेसो अवराहोत्ति- एवं आलोयगेन मूलुत्तरावराहा अपलिउंचमानेन जहा ट्ठिया कहेयव्वा । निकाचना किल तत्वत आलोचना । सा च आलोचना आलोचनार्हालोचकाभ्यां विना न भवतीति त्रितयमपि सप्रपञ्चं विवक्षुरिदमाह–

**[भा.५१९]** आलोयणारिहोआलोयओ य आलोयणाए दोसविही ।
पनगातिरेग जा पन्नवीस पंचमसुत्ते अह विसेसो ।।

**वृ-** आलोचनार्हो यादृग् भवति, तादृग् वक्तव्यः । तथा आलोचकश्च यथावस्थितो यादृशो भवति तादृशोऽभिमतस्तथा, आलोचनाया दोषविधयो [illegible] वक्तव्याः । तथा अहेति एष सूत्रे पञ्चमसूत्रे विशेषो यदुत चातुर्मासिकस्य पांचमासिकस्य पञ्चकातिरेको रात्रिंदिवपञ्चकेनातिरेकोऽत्यर्गलता, एव पञ्चक वृद्धयातिरेकस्तावद्वाच्यो यावत्पञ्चविंशतिः । पञ्चविंशत्यातिरेक इत्यर्थः । इयमत्र भावना-सूत्रे चातुर्मासिकस्य च या सातिरेकता सा दिनानां पञ्चकेन दशकेन पञ्चदशकेन विंशत्या पञ्चविंशत्या वा द्रष्टव्येति । साम्प्रतमालोचनार्हो यादृग् भवति तादृशमुपदर्शयति-

**[भा.५२०]** आलोयणारिहो खलु निरवलावी उ जह उ दढमित्तो ।
अट्ठहिं चेव गुणेहिं, इमेहिं जुत्तो नायव्वो ।।

**वृ-** आलोचनार्हः खलु निरपलापी । अपलपति गूहतीत्येवं शीलोऽपलापी निश्चितमपलापी निरपलावी, नियमतोऽपरिश्रावीति भावार्थः । यथैव तुरेवकारार्थः । दृढमित्रोऽनन्तरकथानकोक्तः तथैव द्रष्टव्यः । स चाष्टभिर्गुणैरभिवक्ष्यमाणस्वरूपैर्युक्तो ज्ञातव्यः । तानेव गुणानाह–

**[भा.५२१]** आयार व आहारव ववहारो वीलए पकुव्वीया ।
निज्जव अवायदंसी, अप्परिसावीय बोधव्वो ।।

**वृ-** आचारो ज्ञानाचारादिरूपः पञ्च प्रकारः । सोऽस्यास्तीति आचारवान् । आ सामस्त्येन आलोचितापराधानां धारणमाधारः । सोऽस्यास्तीत्याधारवान् । आलोचकेनालोच्यमानो यः सर्वमवधारयति स आधारवानित्यर्थः । व्यवह्रियतेऽपराधजातं प्रायश्चित्तं प्रदानतो येन स व्यवहारः आगमादिरूपञ्चप्रकारः । सोऽस्यास्तीति व्यवहारवान् । यः सम्यगागमादिव्यवहारं जानाति, ज्ञात्वा च सम्यक् प्रायश्चित्तदानतो व्यवहरति स व्यवहारवानिति भावः । तथा अपव्रीडयति लज्जां मोचयतीत्यपव्रीडकः । आलोचकं लज्जया अतीचारान् गोपयन्तं यो विचित्रमधुरवचनप्रयोगैस्तथा कथंचनापि वक्ति । यथा स लज्जामपहाय सम्यगालोचयेति सोऽपव्रीडक इत्यर्थः । पकुव्वीयत्ति कुर्व इत्यागमप्रसिद्धो धातुरस्ति यस्य विकुर्वणेति प्रयोगः । प्रकुर्वतीत्येवं शीलः प्रकुर्वी । किमुक्तं भवत्यालोचकेनालोचितेष्वपराधेषु यः सम्यक् प्रायश्चित्तप्रदानत आलोचकस्य विशुद्धिमुपजनयति स प्रकुर्वीति । निज्जवत्ति, निश्चितंयापयति प्रायश्चित्तविधिषु याप्यमालोचकं करोति निर्वाहयतीति यावदिति निर्यापः । अच् प्रत्ययः । अपराधकारी यथोक्तं प्रायश्चित्तं कर्तुमसमर्थो यथा निर्वहति तथा

प्रायस्तदुचितप्रायश्चित्तप्रदानतः प्रायश्चित्तं कारयति स निर्यापक इति भावः । तथा इहलोकापायान् परलोकापायांश्च दर्शयतीत्येवं शीलोऽपायदर्शी । किमुक्तं भवति ? यः सम्यग्नालोचयति प्रतिकुञ्चितं वा आलोचयति दत्तं वा प्रायश्चित्तं सम्यग् न करोति तस्य यदि त्वं सम्यग् नालोचयिष्यसि प्रतिकुञ्चितं वा करिष्यसि दत्तं वा प्रायश्चित्तं न सम्यक् पूरयिष्यसि ततस्ते भूयान् मासिकादिको दण्डो भविष्यतीत्येवमिह लोकापायान् तथा संसारे जन्ममरणादिकं त्वया प्रभूतमनुभवितव्यम् । दुर्लभबोधिता च तवैवं भविष्यतीत्येवं परलोकापायांश्च दर्शयति सोऽपायदर्शीति भावः । तथा न परिश्रवतीत्येवं शीलोऽपरिश्रावी । आलोचितं गोप्यमगोप्यं वा योऽन्यस्मै न कथयति सोऽपरिश्रावीति भावः । साम्प्रतमालोचकमभिधित्सुराह—

**[भा.५२२]** आलोयंतो एत्तो दसहिं गुणेहिं तु होइ उववेओ ।
जाइकुलविनयनाणे दंसणचरणेहिं संपन्नो ।।

**[भा.५२३]** खंते दंते अमाईअ अपच्छतावी य होति बोधव्वे ।
आलोयणाए दोसे एत्तो वोच्छं समासेणं ।।

**वृ-** इत ऊर्ध्वमालोचयन्नालोचको वक्तव्यः स च दशभिर्गुणैरुपेत एव युक्त एव भवति । तुरेवकारार्थो भिन्नक्रमत्वादत्र सम्बध्यते । तानेव गुणानुपदर्शयति जाति इत्यादि जातिसम्पन्नः, कुलसम्पन्नः, मातृपक्षो जातिः, पितृपक्षः कुलम् । विनयसम्पन्नः, ज्ञानसम्पन्नः, दर्शनसम्पन्नः, चरण-सम्पन्नः, क्षान्तः दान्तः अमायी अपश्चात्तापी च बोधव्यः । अथ कस्मादालोचकस्यैतावत् गुणसमूहोऽन्विष्यते उच्यते । जातिसम्पन्नः प्रायोऽकृत्यं न करोति । अथ कथमपि कृतं तर्हि सम्यगालोचयति, । कुलसम्पन्नः प्रतिपन्नप्रायश्चित्तनिर्वाहक उपजायते । विनयसम्पन्नो निषद्यादानादिकं विनयं सर्वं करोति, सम्यगालोचयति । ज्ञानसम्पन्नः श्रुतानुसारेण सम्यगालोचयति, । अमुकश्रुतेन मे तद्दत्तं प्रायश्चित्तमतः शुद्धोऽहमिति च जानीते, दर्शन संपन्नः प्रायश्चित्तात् शुद्धिं श्रद्धत्ते, चरणसंपन्नः पुनरतिचारं प्रायो न करोति, अनालोचिते चारित्रं मे न शुद्धयतीति सम्यगालोचयति; क्षान्तो नाम क्षमायुक्तः । स कस्मिंश्चित् प्रयोजने गुर्वादिभिः स्वरपरुषमपि भणितः सम्यक् प्रतिपद्यते । यदपि च प्रायश्चित्तमारोपितं तत्सम्यग् वहति । दान्तो नाम इन्द्रियनोइन्द्रियजयसम्पन्नः प्रायश्चित्ततपः सम्यक्करोति । माया अस्यास्तीति मायी, न मायी अमायी सोऽप्रतिकुञ्चितमालोचयति । अपश्चात्तापी नाम यः पश्चात्परितापं न करोति हा दुष्टु कृतं मया यत् आलोचितमिदानीं प्रायश्चित्ततपः कथं करिष्यामीति किन्त्वेवं मन्यते । कृतपुण्योऽहं यत्प्रायश्चित्तं प्रतिपन्नवानिति अत ऊर्ध्वमालोचनाया दोषान् समासेन संक्षेपेण वक्ष्ये प्रतिज्ञामेव निर्वाहयति—

**[भा.५२४]** आकंपयित्ता अनुमानयित्ता जं दिठं बायरं च सुहुमं वा ।
छण्णं सदा उलयं बहुजनअव्वत्त तस्सेवी ।।

**वृ-** आवर्जितः सन् आचार्यः स्तोकं मे प्रायश्चित्तं दास्यतीति बुद्धया वैयावृत्यकरणादिभि-रालोचनाचार्यमाकंप्य आराध्य यत् आलोचयत्येष आलोचनादोषः । तथा अनुमान्य अनुमानं कृत्वा लघुतरापराधनिवेदनादिना मृदु दण्डप्रदायकत्वादिस्वरूपमाचार्यस्याकलय्य आलोचयत्येषोऽप्या-लोचनादोषः । तथा यद्दृष्टमपराधजातं क्रियमाणमाचार्यादिना तदेवालोचयति नापरमिति तृतीय आलोचनादोषः । बायरत्ति बादरं दोषजातमालोचयति न सूक्ष्मं तत्रावज्ञापरत्वादेष चतुर्थ आलोचनादोषः । सुहुमं त्ति सूक्ष्मं वा दोषजातमालोचयति न बादरं यः किल सूक्ष्ममालोचयति स कथं बादरं

नालोचयिष्यतीत्येवं रूपभाव सम्पादनार्थमाचार्यस्येत्येष पञ्चम आलोचनादोषः । तथा छन्नमिति प्रच्छन्नं आलोचयति किलमुक्तं भवति । लज्जालुतामुपदर्श्यापराधानल्पशब्देन तथालोचयति यथा केवलमात्मैव शृणोति न गुरुरित्येष षष्ट आलोचनादोषः । सद्दाउलत्ति शब्दाकुलं बृहच्छब्दं यथा भवत्येवमालोचयति इदम् उक्तं भवति । महता शब्देन तथा लोचयति यथान्ये ऽप्यगीतार्थादयः शृण्वन्तीत्येष सप्तम आलोचनादोषः । तथा बहुजनत्ति बहुजनमध्ये यदालोचनं तद्बहुजनं अथवा बहवो जना आलोचना गुरवो यत्र तत् बहुजनमालोचनं । किमुक्तं भवत्येकस्य पुरत आलोच्य तदेवापराधजातमन्यस्यान्यस्य पुरत आलोचयति एषोऽष्टम आलोचनादोषः । अव्वत्तत्ति अव्यक्तोऽगीतार्थः । तस्याव्यक्तस्य गुरोः पुरतो यदपराधालोचनं तदव्यक्तमेव नवम आलोचनादोषः ।। तस्सेवीति शिष्योऽयमपराधमालोचयिष्यामि तमेव सेवते यो गुरुस्सी ऽस्सेवी । सोऽस्मीपे यदपराधालोचनमेष ममातिचारेण तुल्यस्ततो न किमपि मे प्रायश्चित्तं दास्यत्यल्पं वा दास्यति । न च मां खरण्टयिष्यति । यथा विरूपं कृतं त्वयेति बुद्ध्या तदालोचनं तत्सेवी एष दशम आलोचनादोषः ।।

तदेवमालोचनाविधिर्दोषा उक्ताः । सम्प्रति यथाभूतेषु द्रव्यादिष्वालोचनं तथाभूतद्रव्यादिप्रतिपादयन्नाह-

**[भा.५२५]** आलोयणाविहाणं तं चेव दव्वखेत्तकाले य ।
भावे सुद्धमसुद्धे स सणिद्धे सातिरेगाई ।।

**वृ-** आलोचनाविधानं तदेवात्रापि सविस्तरमभिधातव्यम् । यदुक्तं प्रथमसूत्रे दव्वादि चउरभिग्गहेत्यादिना ग्रन्थेन ततः प्रागुक्तदोषवर्जिताः आलोचना प्रशस्ते द्रव्ये क्षेत्रे काले भावे च प्रागुक्तस्वरूपे दातव्या, नाप्रशस्ते । इह प्रतिसेवितं द्विधा भवति- शुद्धमशुद्धं च । तत्र यत् शुद्धेन भावेन प्रतिसेवितं यतनया च तत् शुद्धं । तच्च शुद्धत्वादेव न प्रायश्चित्तविषयः । यत्त्वशुद्धेन भावेन प्रतिसेवितमयतनया च तदशुद्धं । तच्च प्रायश्चित्तविषयोऽशुद्धत्वात् । तस्मिंश्चाशुद्धे प्रायश्चित्तानि केवलानि मासिकादीनि सातिरेकाणि च तत्र सातिरेकाणि ससणिद्धे इति सस्निग्धे हस्ते मात्रके वा सति तेन भिक्षाग्रहणत उपलक्षणमेतत् । तेन बीजकायसंघट्टनादिनापि सातिरेकाणि द्रष्टव्यानि । तत्र सातिरेकतामेव भावयति-

**[भा.५२६]** पनगेणाहियो मासो, दसपक्खेणं च वीसभिन्नेणं ।
संजोगा कायव्वा, गुरुलहुमीसेहिं य अनेगा ।।

**वृ-** इह मूलत आरभ्यामूनि सर्वाण्यप्यालोचनासूत्राणि किल सर्वसंख्यया दश भवन्ति । तत्राद्यानि चत्वारि सूत्राणि साक्षात् सूत्रत एव परिपूर्णान्युक्तानि । शेषाणि तु षट् सूत्राण्याभ्यां द्वाभ्यां सूत्राभ्यामर्थतः सूचितानि तानि चामूनि सातिरेकसूत्रं १ बहुसातिरेकसूत्रं २ सातिरेकसंयोगसूत्रं ३ बहुसातिरेकसंयोगसूत्रं ४ नवमं सकलस्यसातिरेकस्य च संयोगसूत्रं ५ दशमं बहुशः शब्दविशिष्टस्य सकलस्य बहुशः शब्दविशिष्टस्य सातिरेकस्य च संयोगसूत्रं ६ । तत्र पञ्चमं सातिरेकसूत्रं पञ्चसूत्रात्मकं । तद्येवमुच्चारणीयम्- 'जे भिक्खू सातिरेगमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स सातिरेगमासियं पलिउंचिय आलोएमाणस्स सातिरेगदोमासियं' इदं पञ्चमसूत्रे प्रथमसूत्रम्, अत्र मासिकस्य सातिरेकतां पूर्वार्द्धेन व्याख्यानयति-पञ्चकेन रात्रिंदिवपञ्चकेन मासोऽधिकः । दशत्ति दशभिरहोरात्रैः पक्षेण, वीसत्ति विंशत्या रात्रिंदिवैर्भिन्नेन भिन्नमासेन पञ्चविंशत्यादिनैरित्यर्थः,

तत्रपञ्चकातिरिक्तो मासो यथा केनापि शय्यातरपिण्डः सस्निग्धेन हस्तकेन मात्रकेण वा गृहीतः । तत्र मासः शय्यातरपिण्डग्रहणात् रात्रिंदिवपञ्चकं सस्निग्धेन मात्रकेण वा भिक्षाग्रहणात् रात्रिंदिवदशके-नाधिको मासो, यथा केनापि शय्यातरपिण्डः परित्तकायानन्तरनिक्षिप्तः सस्निग्धेन हस्तेन मात्रकेण वा गृहीतः । तत्र मासः शय्यातरपिण्डग्रहणात् रात्रिंदिवपञ्चकं परित्तकायानन्तरनिक्षेपग्रहणात् [illegible] रात्रिंदिवपञ्चकं सस्निग्धेन हस्तकेन मात्रकेण वा भिक्षाग्रहणात् एवं पक्षाद्यतिरेकेऽपि भावना कार्या । एवं द्वितीयतृतीयसूत्रादिष्वपि द्वैमासिकादीनां सातिरेकता पञ्चकादिभिर्भावनीया । सूत्रपाठस्त्वेवम्- 'जे भिक्खू सातिरेगं दोमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स सातिरेगं दोमासियं पलिउंचिउं आलोएमाणस्स साइरेगं तेमासियं ।

जे भिक्खू सातिरेगं तिमासियं परिहारट्ठाणमित्यादि । षष्ठमपि बहुशः शब्दविशिष्टं सातिरेकसूत्रं पञ्चसूत्रात्मकं तदेवमुच्चारणीयम्- 'जे भिक्खू बहुसो सातिरेगमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स सातिरेगमासियं पलिउंचिय आलोएमाणस्स सातिरेगदोमासियं जे भिक्खू बहुसो सातिरेगदोमासियं पडिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणस्स सातिरेगं दोमासियं पलिउंचिय आलोएमाणस्स सातिरेगतेमासियमित्यादि । सप्तमं सातिरेकसंयोगसूत्रम् । अष्टमं बहुशः सातिरेकसंयोगसूत्रं । तत्र सातिरेकाणां मासिकादीनां संयोगाः सातिरेकसंयोगाः । तदात्मकं सूत्रं सातिरेकसंयोगसूत्रं । तदेव बहुशः शब्दविशिष्टं बहुशः सातिरेकसंयोगसूत्रं । तत्र सातिरेकाणि पञ्च पदानि, तद्यथा-सातिरेकं मासिकं १, सातिरेकं द्वैमासिकं २, सातिरेकं त्रैमासिकं ३ सातिरेकं चातुर्मासिकं ४, सातिरेकं पाञ्चमासिकं ५ । पञ्चानां च पदानां द्विकसंयोगे भंगा दश, त्रिकसंयोगेऽपि दश, चतुष्कसंयोगे पञ्च, पञ्चकसंयोगे एकः । एते च तृतीय चतुर्थसूत्रचिन्तायामिव भावनीयाः । सर्वसंख्यया भङ्गाः षड्विंशतिः । एवमेव षड्विंशतिर्भङ्गा बहुशः सातिरेकं संयोगसूत्रेऽपि भावनीयाः । उभयमीलने भङ्गा द्वापञ्चाशत् । पञ्चसूत्राणि पञ्चमे सातिरेकसूत्रे पञ्चसूत्राणि षष्ठे बहुशः सातिरेकसूत्रे तान्यप्यत्र मीलितानि जातानि सर्वसंख्यया द्वाषष्टिसूत्राणि । एतानि च उद्‌घातानुद्‌घातविशेषरहितानि तत एतावन्त्येवोद्‌घातविशेषपरिकल्पितान्यन्यानि सूत्राणि द्रष्टव्यानि । एतावन्त्येव चानुद्‌घात-विशेषपरिकल्पितान्यपि । एवमेतास्तिस्रो द्वाषष्टयः सूत्राणां सर्वसंख्यया षडशीतीसूत्रशतं ।

अत ऊर्ध्वं तु उद्‌घातानुद्‌घातमिश्रकाभिधानतः संयोगसूत्राणि भवन्ति तत्सूचनार्थमिदमुत्तरार्द्धमाह- संयोगा कायव्वा इत्यादि । गुरवश्च लघवश्च गुरुलघवस्ते च ते मिश्राश्च गुरुलघुमिश्रास्तैरनेक संयोगा भवन्ति कर्तव्याः । ते चैवमुच्चारणीयाः-जे भिक्खू सातिरेगउग्घायमासियं वा सातिरेगअनुग्घायमासियं वा परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलाएमाणस्स सातिरेगमुग्घायमासियं वा सातिरेगअनुग्घायमासियं वा परिहारट्ठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलाएमाणस्स सातिरेगमुग्घायमासियं वा । जे भिक्खू सातिरेकमुग्घायमासियं वा सातिरेगमनुग्घाय दोमासियं वा परिहारट्ठाणं पडिसेवित्ता । इत्येवमुद्‌घातितपदममुञ्चता अनुद्‌घातद्वैमासिकादीन्यपि वक्तव्यानि । एवमेते भङ्गाः पञ्च एते उद्‌घातमासिके अनुद्‌घातमासिकद्वैमासिकाद्येकसंयोगेन लब्धाः । एवमुद्‌घातिते द्वैमासिकेऽपि पंच एवं त्रैमासिकेऽपि पञ्च चातुर्मासिकेऽपि पञ्च पाञ्चमासिकेऽपि पञ्चेत्युभयोरप्येककसंयोगेन सर्वसंख्यया भङ्गाः पञ्चविंशतिः, तथा उद्‌घातसातिरेकमासिक एवमनुद्‌घातसातिरेकमासिकद्वैमासिकादिद्विकसंयोगे भङ्गा दश, एवमुद्‌घातितेऽपि सातिरेके द्वैमासिके

त्रैमासिके चातुर्मासिके पाञ्चमासिके च प्रत्येकं दश दशेति सर्वसंख्यया उद्घातितद्विकसंयोगे अनुद्घातितद्विकसंयोगेभङ्गाः पञ्चाशत् ।

एवं तृतीयसूत्रानुसारतो भङ्गा स्तावद्वाच्या यावत्सर्वसंख्यया भङ्गानां नवशतान्येकपष्ट्याधिकानि भवन्ति, एतावन्त एव च भङ्गका अष्टमेऽपि । बहुशः सातिरेक संयोगसूत्रे भवन्ति पञ्चशीतं शतं सूत्राणां प्राक्तनमिति स'संख्यया पञ्चमषष्ठसप्तमाष्टमसूत्रेषु सूत्राणामेकविंशतिशतान्यष्टोत्तराणि भवन्ति । एतानि च मूलगुणापराधाभिधानेन च उत्तरगुणापराधाभिधानेन च प्रत्येकं वक्तव्यानीत्येष राशिर्द्वाभ्यां गुण्यते जातानि द्वाचत्वारिंशत्शतानि षोडशोत्तराणि । एतानि च दर्पतः कल्पतो वाप्ययतनया भवन्तीति द्वाभ्यां गुण्यन्ते जातानि अष्टौ सहस्राणि चत्वारि शतानि द्वात्रिंशदधिकानि । एतावन्त्येवचादिमेषु चतुर्ष्व अपि सूत्रेषु सूत्राणि भवन्ति इत्यष्टास्वपि सूत्रेषु सर्वसंख्यया सूत्राणां षोडशसहस्राण्यष्टौ शतानि चतुःषष्ट्यधिकानि भवन्ति । नवमं सूत्रं सकलस्य सातिरेकस्य च संयोगात्मकं ।

तत्र सकलसंयोगामासिकद्वैमासिकादिसंयोगाः सातिरेकसंयोगा लघुगुरुपञ्चकदशकादिसंयोगाः । तत्र प्रथमतो लघुगुरुरहितः पञ्चकादिसूत्राणि केवलान्युपदर्श्यन्ते- 'जे भिक्खू पनगातिरेगं मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा' इत्यादि । जे भिक्खू दसगातिरेगं मासियं परिहारट्ठाणं पडिसेवित्ता इत्यादि । एवं पञ्चदशकेन विंशत्या पञ्चविंशत्या च सातिरेकसूत्राणि मासिकविषयाणि च वक्तव्यानि । एवमेव प्रत्येकं द्वैमासिकत्रैमासिकचातुर्मासिकपांचमासिकविषयाण्यपि पञ्च पञ्च सातिरेकसूत्राणि वक्तव्यानि । सर्वसंख्यया पञ्चविंशतिसूत्राणिः । एवं लघुपञ्चकादिविषयाण्यपि पञ्चविंशति सूत्राणि वाच्यानि, । एवमेव पञ्चविंशतिसूत्राणि गुरुपञ्चकादिविषयाण्यपि सर्वमीलने पञ्चसप्ततिसूत्राणि । एतानि गुरुलघुविशेषरहितमासिकादिविषयाणि । तदनन्तरमेतावन्त्येव लघुमासिकादिविषयाण्यपि वक्तव्यानि । ततः पुनरप्येतावन्ति गुरुमासिकादिविषयाणि सर्वसंख्यया एककसंयोगे सूत्राणां द्वे शते पञ्चविंशति अधिके । तदनन्तरं जे भिक्खू पनगातिरेगं मासियं वा पनगातिरेगं दो मासियं वा परिहारट्ठाणं पडिसेवित्ता आलोएज्जा इत्यादि; । तथा जे भिक्खू पनगातिरेगमासियं वा दसगातिरेग मासियं वा परिहारट्ठाणं पडिसेवित्ता आलोएज्जा इत्यादि । एवं मासिकं पञ्चकं चामुंचता द्वैमासिके पञ्चक दशक पञ्चदशकविंशति पञ्चविंशतिभिः सह पञ्चसूत्राणि वक्तव्यानि । एवं त्रैमासिके चातुर्मासिके पाञ्चमासिके च प्रत्येकं पञ्च पञ्चेतिमासिके पञ्चकेन विंशतिसूत्राणि लब्धानि । एवं दशकेन पञ्चदशकेन विंशत्या पञ्चविंशत्या च विंशतिर्विंशतिसूत्राणि लभ्यन्ते इति । पञ्चविंशतयः शतं; तदनन्तरं तु द्वैमासिके पञ्चकमुञ्चता त्रैमासिके पञ्चकदशकपञ्चदशकविंशतिभिन्नमासैः सह पञ्च सूत्राणि । एवं चातुर्मासिके पञ्च पञ्चमासिके दशचेतपिञ्चदशसूत्राणि वक्तव्यानि । एवं दशकं पञ्चदशकं विंशति पंचविंशति वाऽमुञ्चता पञ्चदश पञ्चदश सूत्राणि लभ्यन्ते । इति सर्वमीलने पञ्चसप्ततिः सूत्राणि, तथा त्रैमासिकं पञ्चकममुञ्चता चातुर्मासिके पञ्चकादिभिः सह पञ्च सूत्राणि पञ्च पाञ्चमासिकपञ्चकादिभिः सहेति दश सूत्राणि । एवं दशकादीन्यप्यमुञ्चता प्रत्येकं प्रत्येकं दश दश लभ्यन्ते इति पञ्चाशत् सूत्राणि ।

तदनन्तरं चातुर्मासिके पञ्चकममुञ्चता यानि षड्मासिकपञ्चकादिभिः सह पञ्च सूत्राणि वाच्यानि एवं दशकादीन्यप्यमुञ्चता प्रत्येकं पञ्च पञ्चेति पञ्चविंशति सूत्राणि सर्वसंख्यया अर्धतृतीयानि शतानि सूत्राणां भवन्ति । एतावन्ति लघुपञ्चकादिभिरप्येतावन्त्येव गुरु पञ्चकादिभिरपीति सर्व संख्यया पञ्चाशदधिकानि सप्तशतानि सूत्राणामेतानि च मासिकद्वैमासिकादीनां गुरुलघुविशेषाभावे लब्धानि

ततो मासिकादीनां लघुविशेषविवक्षायामप्येतावन्ति सूत्राणि लभ्यन्ते, । एतावन्त्येव च गुरुविशेषविवक्षायामपि, सर्वमीलने द्वाविंशति शतानि पञ्चाशदधिकानि । तदनन्तरं 'जे भिक्खू पनगातिरेगमासियं वा पनगातिरेगदोमासियं वा पणगातिरेग ते मासियं वा एएसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणं परिसेवित्ता इत्यादीनि सूत्राणि त्रिसंयोगविषयाणि । जे भिक्खू पणगातिरेगमासियं वा पणगातिरेग दो मासियं वा पणगातिरेग तिमासियं वा पणगातिरेग चाउम्मासियं वा एएसिं परिहारट्ठाणाणमित्यादीनि चतुः संयोगविषयाणि । जे भिक्खू पणगातिरेगमासियं वा पणगातिरेगदोमासियं वा पणगातिरेगतेमासियंवा पणगातिरेगचाउम्मासियं वा पणगातिरेगपञ्चमासियं वा । एएसिं परिहारट्ठाणाणमन्नयरं परिहारट्ठाणमित्यादीनि पञ्चसंयोगविषयाणि बहूनि सूत्राणि वक्तव्यानि । एतानि च गुरुलघुगतपरस्परसंयोगरहितान्युपदर्शितानि ।

सम्प्रति लघुगुरुगतपरस्परसंयोगविषयाण्युपदर्श्यन्ते- जे भिक्खू लहुगपनगगुरुगपनगातिरेगमासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा इत्यादि । जे भिक्खू लहुगपनगलहुदसगातिरेगमासियं परिहारट्ठाणमित्यादि । जे भिक्खू लहुगपणगगुरुदसगातिरेगमासियं परिहारठाणमित्यादि एवंमासिकं लघुपञ्चकं वा मुञ्चता तावद्वक्तव्यं यावद्गुरुभिन्नमासाः । ततो मासिकं गुरुपञ्चकं वा मुञ्चता तावद्वक्तव्यं यावद्गुरुभिन्नमासः । एवं मासिकममुञ्चता पञ्चकादीनां सर्वे द्विकसंयोगास्तदनन्तरं सर्वे त्रिकसंयोगास्ततः परं सर्वे चतुष्कसंयोगा यावत्सर्वे नवकसंयोगा वक्तव्यास्ततः परमेको दशकसंयोगो वाच्यः । ततो मासलघुममुञ्चता पञ्चकदशकपञ्चदशकविंशतिपञ्चविंशतीनां गुरुलघुभेदभिन्नानां द्विकादिसंयोग-दशकैकसंयोगपर्यन्ताः सर्वे वक्तव्यास्ततः परमेवं मास गुरु पंचकंचा मुञ्चता वक्तव्याः । एवं द्वैमासिकादिस्थानेष्वपि प्रत्येकं संयोगतश्च पञ्चकादीनां सर्वे संयोगाः कर्त्तव्याः । एवमनेकसंयोगात्मकं सूत्रमेवं दशमसूत्रमपि बहुशः सकलबहुशः सातिरेकसंयोगरूपं वक्तव्यं । तत्र येषु स्थानेषु पञ्चकं भवति तानि स्थानान्युपदर्शयति ।

[भा.५२७] ससणिद्ध बीयघट्टे काएसु मीसाएसु परिट्ठविए ।
इत्तरसुहुमसरक्खे पनगा एमाइया होंति ।।

वृ- सस्निग्धे हस्ते मात्रके वा सति तेन भिक्षाग्रहणेन तथा बीजघट्टे बीजकायसंघट्टं कुर्वत्याः सकाशात् भिक्षादाने, तथा कायेषु पत्तिकायेषु सचित्तेषु मिश्रेषु सचित्ताचित्तरूपेषु परीत्तकायेषु परिस्थापिते परंपरस्थापिते इतरस्मिन् वा अनन्तरस्थापिते गृह्यमाणे तथा सुहुमत्ति सूक्ष्मप्राभृतिकाग्रहणे सरक्खत्ति सरजस्केन हस्तेन मात्रकेन वा भिक्षाग्रहणे सर्वत्र पञ्चकं भवतीति वाक्यशेषः । किमेतेष्वेव स्थानेषु पञ्चकं भवति किं चान्येष्वपि इति चेत् उच्यते, अन्येष्वपि तथा चाह- पनगाएमाइया होंति पञ्चकान्येवमादीनि एवमाद्यपराधहेतुकानि भवन्ति । एवमादिष्वन्येष्वप्यपराधेषु पञ्चक- द्रष्टव्यमिति भावार्थः । साम्प्रतमालोचनार्हस्य यथा पञ्चकादि परिज्ञानं यथा च प्रायश्चित्तदानविधिः तथा प्रतिपादयति ।

[भा.५२८] ससणिद्धमादि अहियं, परोक्खी सोच्च देंति अहियं तु ।
हीनाहिय तुल्लं वा नाउं भावं तु पच्चक्खी ।।

वृ- परोक्षेषु विषयेषु भवं पारोक्षं परोक्षविषयं ज्ञानं तदस्यास्तीति परोक्षी श्रुतव्यवहारी, शय्यातरपिण्डादेरधिकं सस्निग्धादि आलोचकमुखात् श्रुत्वा मासं पञ्चकादिभिरधिकमेव तुरवकारार्थः

ददति प्रयच्छन्ति । आलोचकमुखात् श्रवणानुसारतः प्रायेण तस्य प्रायश्चित्तदानविधिप्रवृत्तेः; यः पुनः प्रत्यक्षी प्रत्यक्षज्ञानी केवल्यादिः स पञ्चकातिरिक्ते मासे आलोचिते भावमेव तुरेवकारार्थः । रागद्वेषपरिणामं लक्षणं ज्ञात्वा रागद्वेषपरिणामानुसारतः प्रतिसेवनातो हीनमधिकं वा, यदि वा प्रतिसेवनातुल्यं प्रायश्चित्तं प्रयच्छति; साम्प्रतमस्मिन्नर्थतो नवमे सूत्रतः पञ्चमसूत्रे संयोगविधि-प्रदर्शनार्थमाह-

**[भा.५२९]** एत्थ पडिसेवणातो एक्कगदुगतिग चउक्कपनगेहिं ।
छक्का सत्तग अट्ठग नवदसगेहिं अनेगा उ ॥

**वृ-** इहार्थतो नवमे सूत्रतः पञ्चमे सूत्रे साक्षाद्दशकसंयोगस्यान्तिमानि चत्वारि पदान्युपात्तानि; तत एतैर्दशकसंयोगो दर्शितः । स चायम्-मासिकं १ सातिरेकमासिकं २ द्वैमासिकं ३ सातिरेकद्वैमासिकं ४ त्रैमासिकं ५ सातिरेकत्रैमासिकं ६ चातुर्मासिकं ७ सातिरेकचातुर्मासिकं ८ पाञ्चमासिकं ९ सातिरेकपाञ्चमासिकं १० । तेन च दशकसंयोगेन शेषा अप्येककादयः संयोगाः सूचितास्तानन्तरेण दशकसंयोगविकल्पस्यासंभवात्तथा चात्र पूर्वसूरयो वल्लीदृष्टान्तमुपन्यस्यन्ति । स च प्राग्वद् भावनीयस्तत आह-अत्राधिकृतेऽर्थतो नवमे सूत्रतः पञ्चमे सूत्रे प्रतिसेवना एककद्विकत्रिकचतुष्कपञ्चकैः षट्सप्तकाष्टनवकदशकैरनेकः प्रतिसेवना उपात्ताः प्रतिपत्तव्याः । किमुक्तं भवति ? दशानां पदानामेककद्विकादिसंयोगेषु यावन्तो भंगका भवन्ति, तावत्यः प्रतिसेवना अनेक सूत्रेण सूचिता द्रष्टव्याः तत्रैककादिसंयोगेषु भंगसंख्यानयनाय करणमाह-

**[भा.५३०]** करणं एत्थ उइणमो एक्कादेगुत्तरा दसठवेउं ।
हिठा पुन विवरीयं काउं रूवं गुणेयव्वं ॥

**वृ-** अत्र एषु एककादिसंयोगेषु भङ्गकसंख्यानयनाय करणमिदं-एककादीन् एकोत्तरान् दश स्थापयित्वा एक्कादीन् एकोत्तरानेकोत्तरवृद्धया प्रवर्धमानान् दशकपर्यन्तान् अङ्कान् स्थापयित्वेत्यर्थः । अधस्तात् पुन-र्विपरीतं राशिं कृत्वा, किमुक्तं भवति ये एककादय एकोत्तरदशाक पर्यन्ता अङ्काः पूर्व्यानुपूर्व्या उपरि स्थापितास्तेषामधस्तात् पश्चानुपूर्व्या भूय एककादय एकोत्तदशकपर्यन्ता अङ्काः स्थापनीयाः । अत्र उपरितना अङ्का गुणकारा अधस्तना भागहाराः । अत्रैककसंयोगसंख्यामिच्छन् अन्यदेकं सकलरूपं स्थापयेत् । स्थापयित्वा अन्तिमेनदशमेन गुणकारेण गुणयितव्यं, । तेन तस्य गुणने जाता दशैव, एकस्य गुणने तदेव भवतीति वचनात्;

**[भा.५३१]** दसहिं गुणेउं रूवं एक्केन हियंमि भागे जं लद्धं ।
तं पडिरासेऊणं पुनवि नवेहिं गुणेयव्वं ॥

**वृ-** दशभिर्गुणयित्वा रूपं एकेनाधस्तनेन भागहारेण भागो हरणीयः । भागे च हृते यल्लब्धं तत्प्रतिराशीक्रियते । तस्माल्लब्धाश्चात्र दश एकेन भागहारेण यदेवोपरि तदेव लभ्यते इति वचनात् लब्धा एककसंयोगे भङ्गा दश । ते एकान्ते स्थापनीयाः । तान् प्रतिराश्य स्थापयित्वा द्विकसंयोगे भङ्गसङ्ख्यामिच्छता तत्प्रतिराशीकृतं दशकलक्षणमङ्कस्थानं पुनरपि नवभिर्गुणयितव्यं जाता भवतिः ।

**[भा.५३२]** दोहिं हरिऊण भागं पडिरासेऊणं तंपि जं लद्धं ।
एएण कमेणं तु कायव्वं आनुपुव्वीए ॥

**वृ-** तस्या नवतेरधस्तनेन द्विकेन भागं ह्रियात् । भागे हृते लब्धा पञ्चचत्वारिंशत् । आगतं द्विकसंयोगे

पञ्चचत्वारिंशद् भंगा, । ते चैवं सूत्रत उच्चारणीया: जे भिक्खू मासियं च सातिरेगमासियं च १, जे भिक्खू मासियं च दोमासियं च २, जे भिक्खू मासियं च सातिरेगदोमासियं च ३, जे भिक्खू मासियं च तेमासियं च ४, जे भिक्खू मासियं च सातिरेगतेमासियं च ५ इत्यादि । ततो यल्लब्धं पञ्चचत्वारिंशल्लक्षणं तत्त्रिकसंयोगभंगसंख्यामिच्छता प्रतिराशीकर्त्तव्यम् । प्रतिराश्यांपरितनेनाष्टकेन गुणयेत् । एतेनान्तरोदितेन क्रमेण सर्वेष्वप्यङ्कस्थानेष्वानुपूर्व्या सर्वं कर्त्तव्यं । कैरित्याह-

[भा.५३३] उवरिमगुणकारेहिं हेट्ठिल्लेहिं भागहारेहिं ।
जा आइमं तु ठाणं गुणिते इमे हुंति संजोगा ।।

वृ- उपरितनैर्गुणकारैस्तस्य तस्य प्रतिराशीकृतस्य क्रमेण गुणनं कर्त्तव्यम् । गुणने च कृतेऽधस्तनैर्भागहारैर्भागो हर्त्तव्यः, । भागे च हृते यल्लभ्यते तैर्विवक्षितस्य त्रिकसंयोगादेर्भंगा । एतच्च तावत्कर्त्तव्यं यावदादिमं स्थानमङ्कस्थानं तत्रैवमुपरितनैर्गुणकारैर्गुणिते उपलक्षणमेतत् । अधस्तनैर्भागहारैर्भागे हृते इमे वक्ष्यमाणसङ्ख्याकाः क्रमेण संयोगा एककद्विकादिसंयोगभङ्गा भवन्ति तानेवाह-

[भा.५३४] दस चेव य पणयाला वीसालसयं च दो दसहिया य ।
दोन्निसया बावन्ना दसुत्तरा दोन्नि उसयाउ ।।

[भा.५३५] वीसालसयं पणयालीसं दस चेव होंति एक्को य ।
तेवीसं च सहस्सं अदुव अनेगा उनेयाउ ।।

वृ- एककसंयोगे दश भङ्गा, द्विकसंयोगे पञ्चचत्वारिंशत्, एते च प्रागेव भाविताः । त्रिकसंयोगे वीसालसयं चेति विंशत्युत्तरं शतं ।। तच्चैवम्-पञ्चचत्वारिंशत् अष्टकेन गुणिता जातानि त्रीणि शतानि षष्ट्यधिकानि, एतेषां त्रिकेनाधस्तनेन भागो ह्रियते । लब्धं विंशं शतं । चतुष्कसंयोगे भङ्गकानां द्वे शते दशाधिके । तथाहि-त्रिकसंयोगे लब्धं विंशं शतं प्रति राशीक्रियते । प्रतिराश्योपरितनेन सप्तकेन गुण्यते, जातानि अष्टौ शतानि चत्वारिंशदधिकानि । तेषामधस्तनेन चतुष्केण भागो ह्रियते । लब्धे द्वे शते दशोत्तरे । एवं सर्वत्र भावना कार्या । पञ्चकसंयोगे भङ्गकानां द्वे शते द्विपञ्चाशदधिके, षट्कसंयोगे दशोत्तरे द्वे शते, सप्तकसंयोगे विंशत्युत्तरं शतं, अष्टकसंयोगे पञ्चचत्वारिंशत्, नवकसंयोगे दश, दशकसंयोगे एकः । सर्वसङ्ख्यया भङ्गानां त्रयोविंशं त्रयोविंशत्यधिकं सहस्रं । अदुव-अथवा अनेके इतोऽप्यतिप्रबूतसंख्याकाः प्रतिसेवना ज्ञातव्याः । कथमिति चेदुच्यते-एता हि अनन्तरोदिताः प्रतिसेवनाः सामान्यत उक्तास्तत एता एव भूय उद्घातविशेषणविशिष्टा ज्ञातव्याः । कथमिति चेदुच्यते-एता हि अनन्तरोदिताः प्रतिसेवनाः सामान्यत उक्तास्तत एता एव भूय उद्घातविशेषणविशिष्टा ज्ञातव्याः । एता एव चानुद्घातविशेषणविशिष्टास्तदनन्तरमनेका उद्घातानुद्घातसंयोगविकल्पत । ततः सर्वा अपि पिण्डीकृत्य मूलगुणोत्तरगुणापराधाभ्यां गुणयितव्यास्ततो दर्पकल्पाभ्यामेवमनेका भवन्ति । अथवा अनेकप्रतिसेवानयनार्थमियं त्रिंशत्पदात्मका रचना कर्त्तव्याः । मासिकं १ पञ्चदिनातिरेकमासिकं २ दशदिवातिरेकमासिकं ३ पञ्चदशदिनातिरेकमासिकं ४ विंशतिदिनातिरेकमासिकं ५ भिन्नमासातिरेकमासिकं ६ । एवं द्वैमासिकत्रैमासिकचातुर्मासिकपञ्चमासिकेषु प्रत्येकं षट् षट् स्थानानि वेदितव्यानि । एवं षट् कानि त्रिंशदेतेषु च त्रिंशतिपदेषु करणमनन्तरोदितं प्रवर्तयितव्यम् । तत्र सर्वेषामागतफलानामेकत्र संपिण्डनेनेयं सूत्रसंख्या-

[भा.५३६] कोडिसय सत्तहियं सत्ततीसं च होंति लक्खाइं ।
एयालीस सहस्सा अठसया अहिय तेवीसा ।।

**वृ-** एता अपि सामान्यतः प्रतिसेवना उक्तास्तत एता एवोद्घातविशेषणविशिष्टा ज्ञातव्यास्तदनन्तरमेता एवानुद्घातविशेषणविशिष्टास्ततोऽनेका उद्घातानुद्घातसंयोगतः ततः सर्वाः संपिण्ड्य मूलोत्तरापराधाभ्यां गुणयितव्यास्तनन्तरं दर्पकल्पाभ्यामेवमनेकाः प्रतिसेवनाः ।

**मू. (१५)** *जे भिक्खू चाउम्मासियं वा सातिरेगचाउम्मासियं वा पंचमासियं वा सातिरेगपंचमासियं वा एतेसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणं पडिसेवित्ता आलोएज्ञा, अपलिउंचियं आलोएमाणस्स ठवणिज्ञं ठवणित्ता करणिज्ञं वेयावडियं० जाव पुव्वं पडिसेविय पच्छा आलोइयं० जाव पलिउंचिएमाणस्स सव्वमेयं सगयं साहणियं० जाव आरुहियव्वेसिया ।।*

**मू. (१६)** *जे भिक्खू बहुसो चाउम्मासियं वा० एवं तं चेवं आरुहियव्वेसिया ।।*

**मू. (१७)** *जे भिक्खू चाउम्मासियं वा साइरेग चाउम्मासियं वा पञ्चमासियं साइरेग पञ्चमासियं वा एएसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणं पंडिसेविता आलोएज्जा पलिउंचियं आलोएमाणे जाव आरुहियव्वेसिया ।*

**मू. (१८)** *एवं बहुसो वि० .....*

**वृ-** जे भिक्खू इत्यादि । जे भिक्खू चाउमासियं वा सातिरेगचाउमासियं वा पञ्चमासियं वा सातिरेगपञ्चमासियं वा एएसिं परिहारट्ठाणाणं अन्नयरं परिहारट्ठाणाणं पडिसेवित्ता आलोएज्ञा । अपलिउंचियमाणोएमाणे इत्यस्य सूत्रावयवस्य व्याख्या प्राग्वत् । इदं सूत्रं परिहारप्रायश्चित्ततपःप्रतिपादकमतः तद्विधिमाह- ठवणिज्ञं ठवइत्ता इत्यादि यः परहिरतपःप्रायश्चित्तस्थानमापन्नः तस्य परिहरतपोदानार्थं सकलसाधुसाध्वीजनपरिज्ञानाय सकलगच्छसमक्षं निरुपसर्गप्रत्ययं कायोत्सर्गः पूर्वं क्रियते । तत्करणानन्तरं गुरुर्ब्रूते-अहं ते कल्पस्थितोऽयं च साधुरनुपारिहारिकस्ततः स्थापनीयं स्थापयित्वेति यत्नेन सहाचरणीयं । तत् स्थाप्यते इति स्थापनीयं वक्ष्यमाणमालापनपरिवर्तनादि तत् सकलगच्छ समक्षं स्थापयित्वा कल्पस्थितेनानुपरिहारिकेण च यथायोगमनुशिष्टयुपालम्भोपग्रहरूपं वक्ष्यमाणवैयावृत्त्यं करणीयं । ताभ्यां क्रियमाणेऽपि वैयावृत्ते स्थापितेऽप्यालापनादौ कदाचित् किमपि प्रतिसेवित्वा गुरोः समीपमुपतिष्ठेत् । यथा भगवन् अहममुकं प्रायश्चित्तस्थानमापन्नस्ततः सेवित्ति तदपि कृत्स्नं परिहारतपसि उह्यमाने आरोहयितव्यं, आरोपणीयं स्यात् । स्यादित्यव्ययमत्रावधारणे आरोहयितव्यम् ।

केवलं तत्कृत्स्नमारोपयितव्यमनुग्रहकृत्स्नेन निरनुग्रहकृत्स्नेन तस्य प्रतिसेवितस्य गुरुसमक्षमालोचनायां चतुर्भङ्गी, तामेवाह-पुव्वं पडिसेवियमित्यादि । पूर्वमिति पदैकदेशे पदसमुदायोपचारात् पूर्वानुपूर्व्येति द्रष्टव्यं । ततोऽयमर्थः-गुरुलघुपर्यालोचनया पूर्वानुपूर्व्या लघुपंचकादिक्रमेण प्रतिसेवितं पूर्वं पूर्वानुपूर्व्या प्रतिसेवनानुक्रमेणेतिभावः आलोचितं एष प्रथमो भंगः, तथा पूर्वं गुरुलघुपर्यालोचनया पूर्वानुपूर्व्या मासलघुकादि प्रतिसेवितं तदनन्तरं च तथाविधाल्पप्रयोजनोत्पत्तौ गुरुलघुपर्यालोचनयैव लघुपञ्चकादि प्रतिसेवितं, आलोचनाकाले तु पश्चात् पश्चानुपूर्व्या आलोचितं पूर्वं लघुपञ्चकाद्यालोचितं पश्चात् लघुमासादीति भावः, । एष द्वितीयो भङ्गः । तथा पश्चात् अनुपूर्व्या प्रतिसेवितं गुरुलघुपर्यालोचनामन्तरेण पूर्वं गुरुमासादिकं प्रतिसेवितं पश्चात् लघुपञ्चकादीति भावः ।

आलोचनावेलायामनुपूर्व्या आलोचितं पूर्वं लघुपञ्चकाद्यालोचितं पश्चात् गुरुमासादीत्यर्थः । एषस्तृतीयो भङ्गः ।तथा पश्चानुपूर्व्या प्रतिसेवितं गुरुलघुपर्यालोचनादिविरहितो यथा कथंचन प्रतिसेवितमिति भावः । पश्चात् पश्चादनुपूर्व्या आलोचितं प्रतिसेवनानुक्रमेणैवालोचितमथवा स्मृत्वा स्मृत्वा यथा कथञ्चनाप्यालोचितमित्यर्थः । एष चतुर्थो भङ्गः । इह प्रथमचरमभंगावप्रतिकुञ्चनायां द्वितीयतृतीयभङ्गौ प्रतिकुञ्चनायामिति, प्रतिकुञ्चनाऽप्रतिकुञ्चनाभ्यां चतुर्थभङ्गी कृता तामेवाह-अपलिउंचिए अपलिउंचियमित्यादि । यदा अपराधानापन्न आलोचनाभिमुखस्तदैवं कश्चित्संकल्पितवान्, यथा सर्वेप्यपराधा मया आलोचनीयाः ।

एवं पूर्वसंकल्पकालेऽप्रतिकुञ्चिते आलोचनवेलायामप्रतिकुञ्चितमालोचयति । एष प्रथमो भङ्गः । तथा पूर्वं संकल्पकालेऽप्रतिकुञ्चितमालोचनावेलायां तु प्रतिकुञ्चितमालोचयतीत्येष द्वितीयः । पूर्वं संकल्पकाले केनापि प्रतिकुञ्चितं यथा न मया सर्वेऽपराधा आलोचनीयाः । एवं पूर्वं संकल्पकाले प्रतिकुञ्चिते आलोचनावेलायां भावपरावृत्तेः सर्वमपि अप्रतिकुञ्चितमालोचयति । एष तृतीयो भङ्गः । तथा पूर्वं सङ्कल्पकाले केनापि प्रतिकुञ्चितं यथा न मया सर्वे अपराधा आलोचनीयाः । तत एवं संकल्पकाले प्रतिकुञ्चिते आलोचनावेलायामपि प्रतिकुञ्चितमेवालोचयति । एष चतुर्थो भङ्गः । तत्राप्रतिकुञ्चितमालोचयतो वीप्सा साकल्येन व्याप्त्या भवति । ततोऽयमर्थो निरवशेषमालोचयतः सर्वमेतद्यदापन्नमपराधजातं, यदि वा कथमपि प्रतिकुञ्चना कृता स्यात्ततः प्रतिकुञ्चनानिष्पन्नं, यच्च गुरुणा सहालोचनावेलायां समासनोच्चासननिष्पन्नं या चालोचनाकाले असमाचारी तन्निष्पन्नं च सकलमेतत् स्वयमात्मना अपराधकारिणा कृतं स्वकृतं साहणिया इति संहत्य एकत्र मीलयित्वा यदि संचयितं प्रायश्चित्तस्थानमापन्नस्ततः षाण्मासिकं प्रायश्चित्तं दद्यात् । यत्पुनः षाण्मासातिरिक्तं तत्सर्वं झोषयेत् । अथ मासादिकं प्रायश्चित्तमापन्नस्ततस्तदेव देयमिति, वाक्यशेषः, । जे एयाइ इत्यादि यः साधुरेतयानन्तरोदितया षाण्मासिक्या मासिक्यादिकया वा प्रस्थापनायाः प्राक्कृतस्यामपराधस्य विषये स्थापना प्रायश्चित्तदानप्रस्थापना तया प्रस्थापितः प्रायश्चित्तकरणे प्रवर्तितो निर्विशमानस्ततः प्रायश्चित्तमुपभुञ्जानः कुर्वाण इत्यर्थः । यत्प्रमादतो विषयकषायादिभिर्वा प्रतिसेवते ततस्तस्यां प्रतिसेवनायां यत्प्रायश्चित्तं सेवते तदपि कृत्स्नमनुग्रहकृत्स्नेन निरनुग्रहकृत्स्नेन वा तत्रैव पूर्वप्रस्थापिते प्रायश्चित्ते आरोहयितव्यं स्यात् चढापयितव्यमित्यर्थः । एव संक्षेपतः सूत्रार्थः व्यासार्थं तु भाष्यकारो वदन् जे भिक्खू इत्यादि सूत्रावयवस्य व्याख्यानमतिदेशत आह-

[भा.५३७] जे च्चिय सुत्तविभासा हेट्ठिल्लसुयंमि वणिया एसा ।
स च्चिय इहंपि नेया नाणत्तं ठवणपरिहारे ॥

वृ- या चैषा सूत्रविभाषा जे भिक्खू इत्यादिसूत्रावयवव्याख्या एकद्विकादिसंयोगोपदर्शनरूपा अधस्तनसूत्रे अनन्तरोदितसूत्रे वर्णिता । सैव इहापि अस्मिन्नपि सूत्रे वर्णयितव्या यदि सैव वर्णयितव्यास्ततः को विशेषः ? तत आह-नानात्वं पूर्वसूत्राद्विशेषः स्थापनापरिहारे, ।इयमत्र भावना-अधस्तनसूत्रे परिहारतपो नोक्तमिह तु परिहारतपो विभाव्यते इति; तत्र येन वक्तव्यक्रमेण परिहारतपो वक्तव्यं भवति । तद्वक्तव्यक्रमसंसूचिकां द्वारगाथामाह-

[भा.५३८] को भंते परियाओ सुत्तत्थाभिग्गहो तवो कम्मं ।
कक्खडमकक्खडे वा सुद्धतवे मंडवा दोन्नि ॥

**वृ-** प्रथमतः परिहारतपो योग्यता परिज्ञानाय को भदन्त त्वमसीति पृच्छा कर्तव्या । तदनन्तरं परिहारतपो योग्यस्य पर्यायो वाच्यः । ततः सूत्रार्थों तदनन्तरमभिग्रहस्ततस्तपः कर्म तत्र यदि तपसा कर्कशो भवति । किमुक्तं भवति ? कर्कशे तपसि सदा कृताभ्यासतया न कर्कशेन तपसा परिभूयते । ततः परिहारतपस्तस्मै दीयते । इतरस्मिंस्त्वकर्कशे शुद्धं तपः । अत्रार्थे द्वौमण्डपावेरण्डशिलानिष्पन्नौ दृष्टान्तौ । एष द्वारगाथासंक्षेपार्थः । व्यासार्थं तु प्रतिद्वारं विवक्षुः प्रथमतः पृच्छाद्वारं विवृणोति ।।

**[भा.५३९]** सगणंमि नत्थि पुच्छा, अन्नगणा आगतं तु जं जाणे ।
अन्नायं पुन पुच्छे परिहारतवस्स जोगट्ठा ।।

**वृ-** स्वगणे स्वगणसम्बन्धिनि पृच्छा उक्तस्वरूपा वक्ष्यमाणा वा नास्ति । स्वगणवास्तव्यतया परिचितत्वात् । अन्यगणादपि तुः ... पि शब्दार्थः । स च भिन्नक्रमत्वादत्र सम्बध्यते । आगतं यं जानाति गीतादिरूपमाकारेङ्गितादिभिस्तस्मिन्नपि नास्ति पृच्छा । अज्ञातं पुनः परगणादागतं परिहारतपसो योग्यार्थं योग्योऽयं न वेति परिज्ञानार्थं पृच्छेत्कथमित्याह--

**[भा.५४०]** गीयमगीतो गीतो अहंति किं वत्थुकासवसि जोग्गो ।
अविगीएत्ति व भणिए थिरमथिरतवे य कयजोग्गो ।।

**वृ-** स प्रायश्चित्तस्थानप्राप्त आलोचयितुमुपस्थितः पृच्छयते किं त्वं गीतो गीतार्थः । मकारो लाक्षणिकः । अगीतोगीतार्थः । तत्र यदि ब्रूते अहं गीतो गीतार्थः ततः पुनरपि पृच्छयते-त्वं किं वस्त्विति । आचार्य उपाध्यायो वृषभादिर्भिर्वा ? तत्रान्यतरस्मिन् कथिते भूयः पृच्छयते-कासवसिजोगित्ति, कस्य वा तपसस्त्वमसि योग्यः । किमुक्तं भवति ? किं तपः कर्तुमुत्सहसे, कस्य वा तपसः समर्थ इति पृच्छनीय इति । अथ स ब्रूते- अहमविगीतो न विशिष्टो गीतोऽगीतार्थ इत्यर्थः । ततोऽविगीत इति भणितेन पुनः पृच्छति । थिरमथिरत्ति, किं त्वं स्थिरोऽस्थिरो वा ? तत्र स्थिरो नाम धृतिसंहननाभ्यां बलवान् । तद्विपरीतोऽस्थिरः । तत्र यदि ब्रूयादहमस्थिरः ततः पुनरपि पृच्छा कार्या । तवे य कयजोगेत्ति, तपसि कृतयोगो नाम कर्कशतपोभिरनेकधा भावितात्मा इतरस्तु नेति । तत्र यदि तपसि कृतयोगस्ततस्तस्मै परिहारतपो दीयते इति, इतरस्मै शुद्धं तपः, गतं पृच्छाद्वारमधुना पर्यायद्वारमाह--

**[भा.५४१]** गिहि सामन्ने य तहा परियातो दुविह होइ नायव्वो ।
इगुतीसा वीसाया जहन्न उक्कोस देसूना ।।

**वृ-** पर्यायो भवति द्विधा ज्ञातव्यस्तद्यथा-गृहे गृहविषयः जन्मत आरभ्येत्यर्थः । तथा श्रामण्ये श्रामण्यविषयः श्रमणभावप्रतिपत्तेरारभ्येति भावः । इयमत्र भावना- द्विविधः पर्यायस्तद्यथा- जन्मपर्यायो दीक्षापर्यायश्च । इगुतीसा वीसा य जहन्नति यथासंख्येन योजना जन्मपर्यायो जघन्यत एकोनत्रिंशद्वर्षाणि विज्ञेयो दीक्षापर्यायो विंशतिवर्षाणि, उत्कर्षत उभयत्रापि देशोना पूर्वकोटी । उक्तं च -'परियातो दुविहो-जन्मपरियातो दिक्खपरियातो । जन्मपरियातो जहन्नेणं इगुणतीसं वासा । उक्कोसेणं देसूणा पुव्वकोडी दिक्खापरियातो जहन्नेणं वीसं वासो उक्कोसेणं देसूणा पुव्वकोडीति ।। गतं पर्यायद्वारम् सम्प्रति सूत्रार्थमाह द्वारम्-

**[भा.५४२]** नवमस्स तईयवत्थू जहन्न उक्कोस ऊणगा दसओ ।
सुत्तत्थाणि अभिग्गह दव्वादि ततो रयणमादी ।।

**वृ-** जघन्यतः सूत्रमर्थश्च यावत् नवमस्य पूर्वस्य तृतीयमाचारनामकं वस्तु उत्कर्षतो यावदूनानि

किञ्चिन्न्यूनानि दशपूर्वाणि, परिपूर्णदशपूर्वधरादीनां परिहारतपोदाना योगात् । तेषां हि वाचनादिपञ्चविधस्वाध्यायविधानमेव सर्वोत्तमं कर्मनिर्जरास्थानं । गतं सूत्रार्थद्वारमिदानीमभिग्रहद्वारमाह-अभिग्रह-द्रव्यादि अभिग्रहा-द्रव्यादिकास्तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्र द्रव्याभिग्रहा अद्य मया कुल्माषा ग्राह्या यदि वा तक्रादिकमेकं द्रव्यमिति । क्षेत्रतोऽभिग्रहा देहलीमाक्रम्येत्यादिकाः । कालतोऽभिग्रहास्तृतीयस्यां पौरुष्यां । भावतोमभिग्रहा यदि हसन्ती रुदन्ती वा भिक्षां ददातीत्येवमादिकाः । गतमभिग्रहद्वारमधुना तपोद्वारमाह तपो रयणमादी तपो रत्नादिकं, पदैकदेशे पदसमुदायोपचारात् रत्नावल्यादिकं आदिशब्दात्कनकावलिमुक्तावलिसिंहविक्रीडितादि तपः परिग्रहः । एवं गीतार्थत्वयथोक्तपर्यायसूत्रार्थाभिग्रहकर्कशतपः कर्मलक्षणगुणसमूहयुक्तस्य परिहारतपो दीयते । एतद्गुणविहीनस्य पुनः शुद्धं तपो देयम् । अत्र शिष्य पृच्छति-

[भा.५४३] एयगुणसंजुयस्स उ किं कारणदिज्जए उ परिहारो ।
कम्हा पुन परिहारो न दिज्जए तव्विहूणस्स ॥

वृ- भगवन् किं कारणमेतैरनन्तरोदितैर्गीतार्थत्वादिभिर्गुणैर्युक्तस्य परिहारः परिहारतपो दीयते, । कस्मात्पुनस्तद्विहीनस्य गीतार्थत्वादिगुणविकलस्य परिहारो न दीयते ? अत्राचार्यो द्वौ मण्डपौ दृष्टान्तीकरोति-शैलमण्डपमेरण्डमण्डपं च । तथा चाह-

[भा.५४४] जं माइ तत्तं छुब्भइ सेलमंडवेन एरंडे ।
उभयबलियंमि एयं, परिहारो दुब्बले सुद्धो ॥

वृ- शैलमये पाषाणमये मण्डपे यत्किमपि माति तत्सर्वं क्षुभ्यते प्रक्षिप्यते । तस्य तावत्यपि प्रक्षिप्ते भङ्गासम्भवात् । एरण्डे एरण्डमये पुनर्मण्डपे यन्माति न तत्सर्वं प्रक्षिप्यते भङ्गसम्भवात्, किन्तु यावत्क्षमते तावत् प्रक्षिप्यते । एवं उभयेन धृत्या शरीरसंहननेन च बलिके बलिष्टे गीतार्थत्वादिगुणयुक्ते परिहारः परिहारतपो दीयते । दुर्बले धृत्या संहननेन वा उभयेन वा बलिविहीने शुद्धतपो दीयते । एते च परिहारशुद्धतपसी तुल्यायामप्यापत्तौ पुरुषविशेषाश्रयणेन दीयते । तथा चाह-

[भा.५४५] अविसिठा आवत्ती सुद्धतवे चेव तहय परिहारे ।
वत्थुं पुन आसज्ञा दिज्जइ इयरो वइयरो वा ॥

वृ- शुद्धतपसि दातुमिष्टे परिहारे च अविशिष्टा तुल्या आपत्तिस्तथापि वस्तुधृतिसंहननसम्पन्नं पुरुषवस्तु आसाद्य अपेक्ष्य इतरत् परिहारतपो दीयते । धृतिसंहननविहीनं पुनः पुरुषवस्तु आसाद्य इतरत् शुद्धतपो दीयते । किमुक्तं भवति । यद्यपि द्वावपि जनौ तुल्यमापत्तिस्थानमापन्नौ तथापि यो धृतिसंहननसम्पन्नस्तस्मै परिहारतपो देयमितरस्मै तुल्यायामप्यापत्तौ शुद्धतपः । अत्र दृष्टान्तमाह-

[भा.५४६] वमणविरेयणमाई कक्खडकिरिया जहाउरे बलिए ।
कीरइ न दुब्बलंमी, अह दिट्ठंतो भवे दुविहो ॥

वृ- यद्यपि द्वावपि पुरुषौ सदृशरोगाभिभूतौ तथापि तयोर्मध्ये य आतुरः शरीरेण बलवान् तस्मिन् बलिके यथा वमनविरेचनादिका कर्कशक्रिया क्रियते, न तु दुर्बले तस्मिन् यथा सहते तथा अकर्कशा क्रिया क्रियते । अहत्ति एष दृष्टान्तस्तपसि द्विविधे परिहारशुद्धतपोलक्षणे । इदमुक्तं भवति । अयमत्रोपसंहारो बलवत्यातुरे कर्कशक्रियेव धृतिसंहननसम्पन्ने परिहारतपो दीयते,

वलहीनत्वकर्कश क्रियेव धृतिसंहननविहीने शुद्धतप इति, । सम्प्रति येभ्यो नियमतः शुद्धतपः परिहारतपो वा शुद्धतपः परिहारतपो योग्यापत्तिस्थानापत्तौ तपो देयम् । तत्प्रतिपादनार्थमाह-

[भा.५४७] सुद्धतवो अज्जाणं अगयित्थे दुब्बले असंघयणे ।
धितिबलिए य समन्ना गएय सव्वेसिं परिहारो ।।

**वृ-** परिहारतपो योग्येऽप्यापत्तिस्थाने समापतिते आर्यणामार्यिकाणां शुद्धतपो देयमार्यिकाणां धृतिसंहननदुर्बलतया पूर्वोऽनाधिगमाच्च परिहारायोग्यत्वात् । तथा यो गीतार्थो यश्च धृत्या दुर्बलो रोगादिना वा अनुपचितदेहो दुर्बलो यश्चासंहनन आदिमानां त्रयाणां संहनानामन्यतमेनापि संहननेन विकल एतेभ्योऽपि सर्वेभ्यो नियमतः शुद्धतपो दातव्यमगीतार्थत्वादिना परिहारायोग्यत्वात् यः पुनः धृत्या बलिको बलवान् वज्रकुड्यसमानो यश्च समन्वागत-आदिमानां त्रयाणां संहननानामन्यतमेन संहननेन गीतार्थत्वादिगुणैश्च युक्त एतेभ्यः सर्वेभ्योऽपि नियमतः परिहारतपो योग्यापत्तिस्थानप्राप्तौ परिहारः परिहार तपो देयं । तस्यायं विधिः । ठवइज्जं ठवइत्ता यत्तेन सह नाचरणीयं तत् स्थापनीयमुच्यते तत्सकलगच्छसमक्षं स्थापयित्वा कथं स्थापयित्वेत्यत आह-

[भा.५४८] विउस्सग्गो जाणणट्ठा ठवणा तीएसु दोसु ठविएसु ।
अगडे नदीयराया दिट्ठंतो भीय आसत्थे ।।

**वृ-** परिहारतपोदानात् प्राक् आदावेव कायोत्सर्गः क्रियते । कथमिति चेदुच्यते गुरुः पूर्वदिगभिमुख उत्तरदिगभिमुखो वा चरन्ती दिगभिमुखो वा चैत्यानां वाभिमुख एवं परिहारतपस्थोपि नवरं गुरोर्वामपार्श्वे ईषत्पृष्ठतस्तौ द्वावपि भणतः परिहारतवपवज्जावणट्ठा करेमि काउस्सग्गं निरुवसग्गवत्ति आए सद्धाए मेहाए धिइए धारणाए जाव वोसिरामि । पणवीसुस्सासकालं सुभज्झवसायी चउवीसत्थयं वा चिंतेउं नमोक्कारेण पारेत्ता अक्खलियं चउवीसत्थयं उच्चरंति । अत्र शिष्यः प्राह-किमर्थमेव कायोत्सर्गः क्रियते ? उच्यते जाणणट्ठा-साधूनां परिज्ञानार्थमथवा निरुपसर्गनिमित्तमेतच्चानन्तरगाथायां वक्ष्यति, । ठवणति-कल्प स्थितस्य अनुपारिहारिकस्य च स्थापना कर्तव्या, । ततो दोसु ठविएसुत्ति कल्पस्थिते अनुपारिहारिके च स्थापिते सति स पारिहारिकः कदाचिद्भीतो भवेत कथमहमालापनादिपरिवर्जितः सन् उग्रं तपः करिष्यामीति, तत एवं स भीतः सन्नाश्वासयितव्यः । तत्रावटः कूपो नदी सरित् राजा च दृष्टान्तस्तथाहि । यथा कोऽप्यवटे पतितः सन् भयमगमत् कथमुत्तरिष्यामि ततः स तटस्थैः आश्वास्यते । मा भैस्त्वं वयं त्वामुत्तारयिष्यामः । तथा च रज्जुरियमानीला वर्ततइति, । एवमाश्वासितो निर्भयः सन् स्थैर्यं बध्नाति । यदि पुनस्तं प्रत्येवमुच्यते 'मृत एव वराको न एतं कोऽप्युत्तारयिष्यति ततः स निराशः सन्नंगं निस्सहं मुक्त्वा म्रियते । ततः स यथा नियमत आश्वासनीयस्तथा पारिहारिकोऽप्याश्वासनीयः, यथा वा कोऽपि नद्या अनुश्रोतसोह्यमानो भयमायासीत् । ततः स तटस्थैराश्वास्यते । आश्वासितः सन् स्थाघां प्राप्नोति अनाश्वासितो निराशो भयेनैव म्रियते, यथा वा कस्यचित् राजा रुष्टः ततः स भीतो नूनमहं मारयिष्ये । ततः सोऽन्यैराश्वास्यते 'मा भैर्वयं राजानं विज्ञापयिष्यामो, न च राजाऽन्यायं करोति' । एवं पारिहारिक आश्वासनीयः, आश्वासनादानेन च तस्मिन् भीते आ समंतात् स्वस्थे जाते अधिकृते तपसः प्रतिपत्तिः क्रियते । सम्प्रति कायोत्सर्गकरणाय कारणान्तरमाह-

[भा.५४९] निरुवसग्गं निमित्तं भयजननट्ठाए सेसगाणं च ।
तस्सप्पणो य गुरुणो य साहूए होइ पडिवत्ती ।।

वृ- कायोत्सर्गकरणमादौ निरुपसर्गनिमित्तं निरुपसर्गं परिहारतपः समाप्तिं यायादित्येवमर्थं, तथा शेषाणां साधूनां भयजननार्थं । यथामुकमापत्तिस्थानमेष प्राप्त इत्यस्मै महाघोरं परिहारतपो दास्यते, तस्मान्नैतदापत्तिस्थानं सेवनीयं, किन्तु यत्नतो रक्षणीयमिति । ततः कायोत्सर्गकरणानन्तरं तस्य परिहारतपः प्रतिपत्तुर्गुरोश्च साधकोऽनुकूले शुभे तिथिकरणमुहूर्तादिके शुभे ताराबले शुभे च चन्द्रबले परिहारतपसः प्रतिपत्तिर्भवति । अन्यच्च कायोत्सर्गकरणानन्तरमादावेव तं पारिहारिकमिदं गुरुर्बूते-

[भा.५५०] कप्पट्ठितो अहं ते, अनुपरिहारीय एस ते गीतो ।
पुव्वं कयपरिहारो, तस्सासितियरोवि दढदेहो ।।

वृ- यावत्तव कल्पपरिहारसमाप्तिस्तावदहं तव कल्पस्थितः वन्दनवाचनादिषु कल्पभावे स्थितो न तु परिहार्यः, शेषाः पुनः साधवः परिहार्याः । अन्यच्च एष साधुर्गीतो गीतार्थः पूर्वं कृतपरिहारः, कृतपरिहारत्वेन सकलसामाचारी ज्ञाता तवानुपरिहारी यत्र यत्र भिक्षादिनिमित्तं परिहारी गच्छति तत्र तत्र अनु पश्चात् पृष्ठतो लग्नः सन् गच्छतीत्यनुगच्छतीत्यनुपरिहारी अथवा अनुपरिहारीत्यपि शब्दसंस्कारः । तत्रायमन्वर्थः-परिहारिणोऽणु स्तोकं प्रतिलेखनादिषु साहाय्यं करोतीत्यणुपरिहारी । तत्र यदि पूर्वं कृतपरिहारोऽनुपरिहारी न लभ्यते । ततस्तस्य असति अभावे इतरोऽपि अकृतपरिहारतया अपि दृढदेहो दृढसंहननो गीतार्थोऽनुपरिहारी स्थाप्यते, । एवं कल्पस्थितमनुपरिहारिणं च स्थापयित्वा स्थापना स्थापनीया । तां च स्थापनां स्थापयन्नाचार्यः शेषसाधूनिदं वक्ति ।

[भा.५५१] एस तवं पडिवज्जइ न किंचि आलवति मा य आलवह ।
अत्तट्ठचिंतगस्सा वाघातो भे न कायव्वो ।।

वृ- आचार्यः समस्तमपि सबालवृद्धं गच्छमामन्त्र्य ब्रूते-एष साधु परिहारतपः प्रतिपद्यते । ततः कल्पस्थितिरेषा न किञ्चित्साधुमितरं वा आलापयति, वर्तमानसमीपे वर्तमानवद्वेति वचनतो भविष्यति वर्तमाना ततोऽयमर्थः-न किञ्चिदालापयिष्यति, मा च यूयमपि एनमालापयथ, आलापयिष्यथ । तथा आत्मन एव केवलस्यार्थ भक्तादिलक्षणं चिन्तयति, । न बालादीनां तथा कल्पसामाचारादित्यात्मार्थ-चिन्तकः, । यदि वा आत्मार्थो नाम अतीचारमलीनस्यात्मनो यथोक्तेन प्रायश्चित्तविधिना निरति-चारकरणं विशोधनमित्यर्थः, । तं चिन्तयन्तीत्यात्मार्थचिन्तकः । तस्य भे-भवद्भिरेतैः पदैर्व्याघातो न कर्तव्यः । तान्येव पदान्याह-

[भा.५५२] आलावण पडिपुच्छण परियट्टुट्ठाण वंदणग मत्ते ।
पडिलेहण संघाडग भत्तदान संभुंजणा चेव ।।

वृ- एष न किञ्चिदप्यालापयिष्यति, युष्माभिरप्येष नालापयितव्यः । तथा सूत्रमर्थमन्यद्वा किञ्चिदेष न युष्मान् प्रक्ष्यति, युष्माभिरप्येष सूत्रार्थादौ न प्रष्टव्यस्तथा युष्माभिः सह नैष सूत्रमर्थं वा परिवर्तयिष्यति । नापि युष्माभिरनेन सह सूत्रादि परिवर्तनीयं, । तथैव कालवेलादिषु युष्मान्नोत्था-पयिष्यति, युष्माभिरप्येष नोत्थापयितव्यस्तथा न वन्दनं युष्माकमेष करिष्यति, नापि युष्माभिरेतस्य कर्तव्यम् । तथा उच्चारप्रस्रवणखेलमात्रकाण्येष युष्मभ्यं न दास्यति, नापि युष्माभिरेतस्मै दातव्यम् । तथा न किञ्चिदुपकरणमेष युष्माकं प्रतिलेखयिष्यति । नापि युष्माभिरुपकरणमेतस्य प्रतिलेखनीयं । यथा नैव युष्माकं सङ्घाटकभावं यास्यति, न च युष्माभिरेतस्य संघाटकैर्भवितव्यम् । तथा न युष्मभ्यमेष भक्तं पानं वा आनीय दास्यति, न च युष्माभिरेतस्यानीय दातव्यम् । तथा नायं युष्माभिः सह भोक्ष्यते,

नापि युष्माभिस्तेन सह भोक्तव्यम् । तथा कल्पे समाचारात्तस्मात् आलापने प्रतिप्रच्छने परिवर्तने उत्थापने वन्दने वन्दनदापने मात्रे उच्चारप्रस्रवणखेलमात्रकानयने प्रतिलेखने सङ्घाटके संघाटककरणे भक्तदाने संभोजने च सह भोजनविषये व्याघातो न कर्तव्य इति सम्बन्धः । आलापनादिभिर्व्याघातो न कार्य इत्यर्थः । एवमेतैर्दशभिः पदैर्गच्छेन स परिहृतः सोऽपि गच्छमेतैः पदैः परिहरति, यदि पुनर्गच्छवासी एतानि पदान्यतिचरति तत इदं प्रायश्चितम् ।

[भा.५५३] संघाडगो उ जाव य लहुओ मासो दसण्ह उ पयाण ।
लहुगा य भत्तपाणे, संभोजने होंत अनुग्घाया ।।

वृ- दशानां पदानां मध्ये आलापनापदादारभ्य यावदष्टमं पदं संघाटकरूपं तावदेकैकस्मिन् पदेऽतिचर्यमाणे लघुको मासः प्रायश्चित्तं, यदि पुनर्भक्तं पानं च गच्छवासिनः प्रयच्छन्ति । ततो भक्तदानं भक्तपानदानविषये लघुकाश्चत्वारो लघुमासाः प्रायश्चित्तं, संभोजने सह भोजने भवत्यनुद्घाताः चत्वारो गुरुमासा इत्यर्थः । साम्प्रतमेतेष्वेव पदेषु परिहारिणः प्रायश्चित्तमाह-

[भा.५५४] संघाडगो उ जाव य गुरुमासो दसण्ह उ पयाणं ।
भत्तपाने य संभुंजणे य परिहारिगे गुरुगा ।।

वृ- दशानां पदानामालोचनपदादारभ्य यावत्संघाटकः संघाटकपदं तावदेतेषु पदेषु अतिचर्यमाणेषु प्रत्येकं प्रत्येकं परिहारिके गुरुको मासः । यदि पुनर्गच्छवासिभ्यो भक्तप्रदानं करोति तैः सह भुंक्ते वा तदा प्रत्येकं भक्तदाने संभोजने च प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासाः । यः पुनः कल्पस्थित स इदं करोति-

[भा.५५५] कितिकम्मं च पडिच्छइ परिण पडिपुच्छियं पि से देइ ।
सो चिअ गुरुमुवचिट्ठइ उदंतमवि पुच्छितो कहइए ।।

वृ- कृतिकर्म वन्दनकं तत् यदि परिहारिको ददाति तदा गुरुः प्रतीच्छति । उपलक्षणमेतत्, आलोचनमपि प्रतिच्छति परिण्यत्ति प्रत्यूषसि अपराह्ने च परिज्ञां प्रत्याख्यानं तस्मै ददाति । तथा सूत्रार्थे यदि वा पृच्छति ततः प्रतिपृच्छां च ददाति । सोऽपि च परिहारिको गुरुमाचार्यमागच्छन्तमभ्युत्थानादिना विनयेनोपतिष्ठते । उदन्तः शरीरस्य च वार्तमानिकी वार्त्ता तमपि गुरुणा पृष्टः सन् कथयति । एवं स्थापनायां स्थापितायां भीतस्य पूर्वोक्तप्रकारेणाश्वासनायां च कृतायां स परिहारिकतपो वोढुं प्रवर्तते । तपो वहंश्च क्लमं गतो वीर्याचारमनिगूहयन् यद्यन्ततरां क्रियां कर्तुमसमर्थो भवति, तदा अनुपारिहारिकः करोति तथा चाह-

[भा.५५६] उट्ठिज्ज निसीइज्जा भिक्खं हिंडिज्ज भंडयं पेहे ।
कुवियपियबंधवस्स व करेइ इयरोवि तुसिणीओ ।।

वृ- यद्युत्थातुं न शक्नोति ततो ब्रूते उत्तिष्ठामि तदनन्तरमनुपारिहारिकः समागत्योत्थापयेत् तथा यदि निषीदनं कर्तुमसमर्थस्तदा निषीदामीति वचनानन्तरं सत्वरमागत्य निषीदयेत् । यद्य भिक्षां गतः सन् कर्तुं न शक्नोति तदपि भिक्षाग्रहणादिकं करोति । अथ ब्रूते भिक्षा एव हिण्डितुमसमर्थः । यदा भिक्षामनुपारिहारिकः केवलो हिण्डेत एवं भण्डकप्रत्युपेक्षणेऽपि साहाय्यं करोति । समस्तं वा भाण्डकं प्रत्युपेक्षते । कथमेतत्सर्वं करोतीत्यत आह कुवितेत्यादि, यथाकोपि कुपित प्रिय बांधवस्य-यत्करणीयंतत्सर्वं तुष्णीकः करोति, एवमितरोप्यनुपरिहारिक स्तूष्णीकः सन् सर्वं करोति, अतः पर आह-

[भा.५५७] अवसो य रायदंडो न एय एवं तु होइ पच्छित्तं ।
संकरसरिसवसगडे भंडववत्थेण दिट्ठंतो ।।

वृ- अवसो इत्यत्र प्रथमा तृतीयार्थे आर्षत्वात्ततोऽयमर्थः-यथा राजदण्डोऽवश्यमवशेनापि वोढव्यः, किमेवमध्यवसायं कृत्वा प्रायश्चित्तं वोढव्यमुतान्यदालम्बनं कृत्वा ? । सूरिराह-नएवं राज्यदण्डन्यायेन वोढव्यं किं तु चरणविशुद्धिनिमित्तमेतत् प्रायश्चित्तमित्येवमध्यवसायेन भवति प्रायश्चित्तं वोढव्यम् । अथवा यथा राजदण्डोऽवश्यमवशेनाप्युह्यते यदि पुनर्नैतिनोह्यते ततः शरीरविनाशो भवति । एवशब्द एवं शब्दात्परतो द्रष्टव्यः । एवमेव राजदण्डन्यायेनैव प्रायश्चित्तमप्यवश्यं भवति वोढव्यं, । तद्वहनाभावे चारित्रशरीरविनाशापत्तेः, । पुनरप्याह-प्रभूतं प्रायश्चित्तस्थानमापन्नमुह्यतां किं स्तोकमापन्नमुह्यते न खलु किमपि तावता प्रायश्चित्तस्थानेनापन्नेन भवति । अत्र आचार्यः प्राह-संकरेत्यादि, पश्चार्धं सङ्करस्तृणाद्यवकरस्तेन तथा सर्षपाः प्रतीताः सर्षपग्रहणं पाषाणोपलक्षणं ततोऽयमर्थः-शकटे पाषाणेन मण्डपे सर्षपेण चात्र दृष्टान्तस्तथा हि-यथा सारण्या क्षेत्रे पाय्यमाने सारणिस्रोतसि तृणशूकमेकं तिर्यग् लग्नं तैर्नापनीतं तन्निश्रया अन्यान्यपि तृणशूकानि लग्नानि तन्निश्रया प्रभूतः पंको लग्नः । तत एवं तस्मिन् स्रोतसि रुद्धे क्षेत्रं समस्तमपि शुष्कम् । एवं स्तोकेन स्तोकेनाशोध्यमाने चरणकुल्यानिरोधे चरणक्षेत्रविनाशो भवति, तत एवं ज्ञात्वा स्तोकमपि प्रायश्चित्तस्थानमापन्नं वोढव्यमिति, शकटदृष्टान्तः । तथा एकः पाषाणः शकटे प्रक्षिप्तः स नापनीतः, अन्यः प्रक्षिप्तः सोऽपि नापनीतः । एवं प्रक्षिप्यमाणेषु प्रक्षिप्यमाणेषु भविष्यति । स कोऽपि गरीयान् पाषाणो यस्मिन् प्रक्षिप्ते तच्छकटं भङ्क्ष्यति, । एवं स्तोकेन स्तोकेन समापन्नेन प्रायश्चित्तस्थानेनाशोध्यमानेन कालक्रमेण चारित्रशकटं भज्यते । अथवा अन्यथा शकटदृष्टान्तभावना शकटे-एकं दारुभग्नं तत्र संस्थापितमेवमन्यदन्यत् भग्नं तत्र संस्थापितमिति सर्वभग्नमेवं चारित्रशकटेऽप्युपसंहारो भावनीयः । तथा एरण्डमण्डपे एकः सर्षपः प्रक्षिप्तः स नापनीतः, अन्यः प्रक्षिप्तः सोऽपि नापनीतः । एवं प्रक्षिप्यमाणेषु प्रक्षिप्यमाणेषु सर्षपेषु भविष्यति सर्षपो येन प्रक्षिप्तेन सोऽल्पीयानेरण्डमण्डपो भज्यते । एवं स्तोकेनापन्नेनाशोध्यमानेन कालक्रमेण चारित्रमण्डपो भज्यते, । वस्त्रदृष्टान्त भावना, यथा-शुद्धे वस्त्रे कर्दमबिन्दुः पतितः, स न प्रक्षालितः, अन्यः पतितः सोऽपि न प्रक्षालितः, । एवं पतत्सु कर्दमबिन्दुष्वप्रक्षाल्यमानेषु कालक्रमेण स तद्वस्त्रं कर्दमवर्णं संजातम् एवं तु शुद्धचारित्रं स्तोकायां स्तोकायामापतितायामापत्तौ प्रायश्चित्तेनाशोध्यमानायां कालक्रमेणा चारित्रं सर्वथा भवति । एवं दृष्टान्तैः प्रायश्चत्तस्य दानकरणे च प्रसाधिते पर आह-

[भा.५५८] अनुकंपिया य चत्ता अहवा सोही न विज्जए तेसिं ।
कप्पट्ठगभंडीए दिट्ठंतो धम्मया सुद्धो ।।

वृ- तुल्यायामप्यापत्तौ यस्य शुद्धतपः प्रयच्छतः स युष्माभिरनुकम्पितस्तद्विषये च भवतामवश्यं रागोऽन्यथेत्थमनुकम्पाकरणानुपपत्तेः यस्य पुनः परिहारं प्रयच्छत स परित्यक्तः कर्कशतपोदानात् तथा च सति तस्मिन् व्यक्तं प्रद्वेषः । अथवा परलोकमपेक्ष्य परिहारतपस्वी अनुकम्पितः परिहारतपोदानेन तच्चरणशुद्धिकरणात् शुद्धतपस्वी च परित्यक्तः शुद्धतपसा तच्चारित्रस्य शुद्ध्यभावात् । एवं विवक्षातो द्वावप्यनुकम्पितौ यदि वा त्यक्ताविति, अहवा सोहीत्यादि अथवा तयोः शोधिः सर्वथा न विद्यते । तथा हि-यदि परिहारतपसा शुद्धिस्ततः शुद्धतपस्विनो न शुद्धिस्तस्य परिहारतपोऽभावात् । अथ शुद्धतपसा शुद्धिस्तर्हि पारिहारिकस्य यत् परिहारतपसः कर्कशस्य करणं-तत्सर्वं निरर्थकं । शुद्धतपसा शुद्ध्यभ्युपगतौ

तेन शुद्ध्यभावात् । अत्राचार्य आह- कप्पट्ठगंत्यादि, कल्पस्थगा बालास्तेषां भंडी गंत्री तया दृष्टान्तस्तथा हि-कल्पस्थकग्रहणं महदुपलक्षणं, तेन महद्गंत्र्या दृष्टांत इत्यपि द्रष्टव्यम्, इयमत्रभावना अत्र बालकगंत्र्या बृहत् पुरुषगंत्र्या च दृष्टांतः तथा हि डिम्भा आत्मीयया गंत्र्या क्रीडन्ति स्वकार्यनिष्पत्तिं च साधयन्ति न पुनः शक्नुवन्ति बृहत्पुरुषगंत्र्या कार्यं कर्तुं, तथा बृहत्पुरुषाणामपि आत्मीयया बृहद्गान्त्र्या कार्यं कुर्वन्ति । न डिम्भकद्गं अथ डिम्भकगंत्र्या कुर्वन्ति ततो भूयान् पलिमन्थदोषो न चाभिलषितस्य कार्यस्य परिपूर्णा सिद्धिः । अत्र बृहद्गंत्र्या भारस्तस्यामारोप्यते तर्हि सा भज्यते मूलत एव कार्यं न शुद्ध्यति । एवं शुद्धतपस्विनां शुद्धतपसा शुद्धिर्भवति परिहारतपस्विनां च परिहारतपसा, यदि पुनः शुद्धतपस्विनां परिहारतप आरोप्यते ततस्तत्र तेषां शक्त्यभावात् मूलत एव भ्रंशः, । अथवा परिहारतपस्विनां शुद्धतपस आरोपस्तर्हि चरणशुद्ध्यभावस्तावता तेषां चरणशुद्ध्ययोगात् । अथ कथं शुद्धतपस्वी परिहारतपस्वी च स्वस्वतपसा शुद्ध्यति नान्येन तत आह- धम्मया शुद्धो इह शुद्धतपस्वी परिहारतपस्वी वा शुद्धो भवति । धम्मया स्त्रीत्वं प्राकृतत्वात् । धर्मेण स्वशक्तिलक्षणेन स्वभावेन, । तत एवमेव शुद्धिर्नान्यथा । एतदेव स्पष्टतरं भावयति ।

[भा.५५९] जो जं काउं समत्थो स्सो तेन विसुज्झए असढभावो ।
गूहियबलो न सुज्झइ, धम्मसहावोत्ति एगट्ठं ।।

वृ- यः साधुर्यत् शुद्धतपः परिहारतपो वा कर्तुं समर्थः स साधुरशठभावः स्ववीर्यं प्रतिमायामकुर्वाणः स्वधर्मव्यवस्थितत्वात्तेन तपसा शुद्ध्यति, । यः पुनर्गूहितबलः स्ववीर्यंनिगूहति, स न शुद्ध्यति स्वधर्मगूहनात् । धर्मस्वभाव इति द्वयमप्येकार्थं । तेन धर्मया शुद्धो इति धर्मशब्दस्य पर्यायेण व्याख्या कृता पादत्रयेण त्वादिमेन तत्वत इति । अथ शुद्धतपः परिहारतपसोः कतरत् कर्कशं तपः सूरिराह-

[भा.५६०] आलवणादी उ पया सुद्धतवे अत्थि कक्खडो न भवे ।
इयरंमि उ ते नत्थि कक्खडओ तेन सो होइ ।।

वृ- यस्मात् शुद्धतपसि दशाप्यालापनादीनि पदानि सन्ति तेन कारणेन तत्तपः कर्कशं न भवति, । इतरस्मिंस्तु परिहारतपसि यस्मात्तान्यालापनादीनि पदानि न सन्ति, तेषा पूर्वमेव सकलगच्छसमक्षं स्थापितत्वात्तेन सद्भवति कर्कशमिति । यः पुनस्तपः कालो यश्च तपः करणं तत् द्वयोरपि तुल्यम् ।

[भा.५६१] तम्हा उ कप्पट्ठियं अनुपरिहारिं च तो ठवेऊणं ।
कज्जं वेयावच्चं किच्चं तं वेज्जवच्चं तु ।।

वृ- यस्मादेवं परिहारतपःस्थितिः तस्मात्कल्पस्थितम् अनुपरिहारकं च स्थापयेत्, स्थापयित्वा च तौ तदनंतरं समापन्नं परिहितपो वोढव्यं, तद्यापन्नं परिहारतपः प्रपन्नस्य ताभ्यां कल्पस्थितानुपारिहरिकाभ्यां स्थापिताभ्यां करणिज्जं वेयावच्चमिति सूत्रपदमेतदेवानुवदति कार्यं वैयावृत्यं एतदेव व्याचष्टे, कृत्यं करणीयं, तत् स्वोचितंताभ्यां वैयावृत्यं । अथ किं तत् वैयावृत्यं यत्ताभ्यां कर्तव्यमित्यत आह-

[भा.५६२] वेयावच्चे तिविहे, अप्पाणंमि य परे तदुभए य ।
अनुसिट्ठि उवालंभे, उग्गहे चेव तिविहम्मि ।।

वृ- वैयावृत्यं त्रिविधं, तद्यथा-अनुशिष्टिरुपालम्भोऽनुग्रहश्च । त्रिविधेऽप्यस्मिन् वैयावृत्यं प्रत्येकं त्रयो भेदास्तद्यथा- अनुशिष्टिरात्मनि आत्मविषया, परस्मिन् परविषया, तदुभयस्मिन् उभयविषया । आत्मपरतदुभयविषया इत्यर्थः । एवमुपालम्भोपग्रहावपि प्रत्येकमात्मपरतदुभयविषयौ भावयितव्यौ ।

तत्र उपदेशप्रदानमनुशिष्टिः, स्तुतिकरणं वा अनुशिष्टिः । तत्र यत् आत्मानमात्मना अनुशास्ति सा आत्मानुशिष्टिः । यत्पुनः परस्य परेण चानुशासनं सा परानुशिष्टिः । तत्रोदाहरणम्-चम्पायां नगर्यां सुभद्रा सा हि सर्वैरपि नागरिकजनैरनुशिष्टा । यथा-धन्यासि त्वं, कृतपुण्यासि त्वमिति, । यत्पुनरात्मानं परं चानुशास्ति, सा उभयानुशिष्टिः । तथा अनाचारे कृते सति यत् सानुनयोपदेशदानमेष उपालम्भः । सोऽपि त्रिविधस्तद्यथा-आत्मनि परे तदुभये च । तत्र यदात्मानमात्मनैवोपालभते । यथा त्वयेदं कृतं तस्मात् सम्यक् सहस्वेति स आत्मोपालम्भः । परेणाचार्यादिना यदुपालम्भनं स परोपालम्भः । तत्रोदाहरणं-मृगावतिर्देवी सा हि आर्यचन्दनया अकालचारिणीति [illegible] उपालब्धा । उभयोपालम्भो नाम यत्पुनः प्रथमत आत्मानमात्मनोपालभते पश्चादाचार्यादिना परेणोपालभ्यते, । यदि वा गुरुणोपालभ्यमानस्तत् गुरुवचनं सम्यक् प्रतिपाद्यमानं प्रत्युच्चरति, । एषउभयोपालम्भः । तथा उपग्रहणमुपग्रहः उपष्टंभकरणमित्यर्थः । सोऽपि त्रिविधस्तद्यथा, आत्मोपग्रहः परोपग्रह उभयोपग्रहश्च । तत्र यदात्मन उपष्टम्भकरणं, स आत्मोपग्रहः । यत्पुनः परमुपगृह्णाति स परोपग्रहः । आत्मनः परस्य चोपष्टम्भकरणमुभयोपग्रहः । उपग्रहश्च स्वरूपतो द्विधा-द्रव्यतो भावतश्च । अत्र चतुर्भङ्गिका-द्रव्यतो नामैक उपग्रहो न भावतः, । भावत एको न द्रव्यतः । एको द्रव्यतो भावतोऽपि । एको न द्रव्यतो नापि भावतः । अत्र चतुर्थो भङ्गः शून्यः । तृतीयभङ्गे उदाहरणमाचार्यः तथा उक्तानेव दृष्टान्तानुपदर्शयति-

**[भा.५६३]** अनुसट्ठीए सुभद्दा उवालंभंमिय मिगावती देवी ।
आयरिओ दोसु उवग्गहो य सव्वत्थ वायरिओ ॥

**वृ-** अनुशिष्टौ परानुशिष्टावुदाहरणं सुभद्रा, उपालंभे परोपालंभे उदाहरणं मृगावतिर्देवी । एते च द्वेऽप्युदाहरणे प्रागेव भाविते । परस्यद्रव्यभावयोर्विषय उपग्रहे उदाहरणमाचार्यः । स हि द्रव्यमन्नपानादि दापयति, भावतः प्रतिपृच्छादिकं करोति । अथवा दोसु उवग्गहेयत्ति यद्द्वयोः पारिहारिकानुपारिहारिकयोरुपग्रहे आचार्यो वर्तते तस्मात् परोपग्रहे आचार्य उदाहरणं । अथवा सर्वत्र अनुशिष्टौ उपालम्भे उपग्रहे च उदाहरणमाचार्यः । यतः स पारिहारिकस्यानुपारिहारिकस्य समस्तस्यापि गच्छस्यानुशिष्ट्यादीनि करोतीति । सम्प्रति त्रिविधामप्यनुशिष्टिं भावयति--

**[भा.५६४]** दंडसुलभंमि लोए, मा अमतिं कुणसु दंडितोमित्ति ।
एस दुलहो हु दंडो, भवदंडनिवारओ जीव ॥

**[भा.५६५]** अवि पहु विसोहिओ ते, अप्पा णायार मइलिओ जीव ।
अप्प परे उभए अनुसट्ठी थुइत्ति एगट्ठा ॥

**वृ-** दण्डः सुलभो यत्रासौ दण्डसुलभस्तस्मिन् लोके । ए जीव मा एवंरूपाममतिं कुमतिं कुर्याः यथाहमाचार्येण प्रायश्चित्तदानतो दण्डितोऽस्मीति यत एष प्रायश्चित्तदानरूपो दण्डो दुर्लभः । कस्मात् दुर्लभ इत्याह-भवदण्डनिवारकः निमित्तकारणहेतुषुसर्वासां विभक्तीनां प्रायोदर्शनमिति न्यायात् । हेतौ प्रथमा । ततोऽयमर्थः-यत एष दण्डो भव एव संसार एव दुःसहः दुःखात्मकत्वात् । दण्डो भवदण्डस्तस्य निवारको भवदण्डनिवारकः तस्मात् दुर्लभः अपि च हु निश्चितं हे जीव ते आत्मा अनाचारमलिनः प्रायश्चित्तप्रतिपत्त्या विशोधितो भवति, । तस्मात् न दण्डितोऽस्मीति बुद्धिरात्मनि परिभावयितव्या । किन्तूपकृतोऽहमनुपकृतपरहितकारिभिराचार्यैरिति चिन्तनीयमिति । एवम मुनोल्लेखेन आत्मनि परस्मिन् उभयस्मिंश्चानुशिष्टिरनुगन्तव्या । आत्मनि साक्षादियमुक्ता एतदनुसारेण परस्मिन्नुभयस्मिन्नपि च सा

प्रतिपत्तव्येति भावः । अनुशिष्टिस्तुतिरित्येकोऽर्थोऽत्रापिशब्दः सामर्थ्याद्गम्यते । एतावपि द्वौ शब्दावेकार्थौ । किमुक्तं भवति ? अनुशिष्टिः स्तुतिरित्यपि द्रष्टव्यमिति । सम्प्रत्यात्मोपालं भोल्लेखं दर्शयति-

[भा.५६६] तुमए चेव कयमिणं न सुद्धगारिस्स दिज्जए दंडो ।
इह मुक्कोवि न मुच्चइ परत्थ इह होउवालंभो ।।

वृ- त्वयैव स्वयं कृतमिदं प्रायश्चित्तस्थानं तस्मान्न कस्याप्युपरि अन्यथाभावः कल्पनीयः न खलु शुद्धकारिणो लोकेऽपि दण्डो दीयते । किं च यदि इह भवे कथमप्याचार्येणैव मेवमुच्यते तथापि इह भवे मुक्तोऽपि परत्र परलोके न मुच्यते । तस्मात्प्रमादापन्नं प्रायश्चित्तमवश्यं गुणवृद्धया कर्तव्यं इति इह एष भवत्युपालम्भः । एष आत्मोपालम्भः । एतदनुसारेण परोपालम्भ उभयोपालम्भोऽपि भावनीयः । सम्प्रति परोपग्रहं यदुक्तं 'आयरिओ दोसुवग्गहे य' इति तत् व्याख्यानयति-

[भा.५६७] दव्वेण य भावेण य उवग्गहो दव्व अनपानाइं ।
भावे पडिपुच्छाइं, करेति जं वा गिलाणस्स ।।

वृ- उपग्रहो द्विविधो-द्रव्येण भावेन च । अत्र दव्वे इति तृतीयार्थे सप्तमी । द्रव्येणोपग्रहः कल्पस्थितोऽनुपारिहारिको वाऽसमर्थस्य सतोऽन्नपानाद्यानीय ददाति । भावे भावेनोपग्रहो यत् सूत्रेऽर्थे वा प्रतिपृच्छादि करोति । अथवा यत् ग्लानस्य क्रियते समाधानोत्पादनमेष भावोपग्रहः अधुना दोसु उवग्गहे य इत्यस्य व्याख्यानान्तरमाह--

[भा.५६८] परिहारानुपरिहारी दुविहेण उवग्गहेण आयरिओ ।
उवगेण्हइ सव्वं वा, स बालवुड्ढाउलं गच्छं ।।

वृ- पारिहारिकमनुपारिहारिकं च एतौ द्वावपि द्विविधेन द्रव्यरूपेण भावरूपेण चोपग्रहेणाचार्य उपगृह्णाति, उपष्टम्भाति । ततः परोपग्रहे आचार्य उदाहरणम् । 'सव्वत्थवायरिओ' इत्यस्य व्याख्यानमाह- सर्व्वं वा इत्यादि वाशब्दः पूर्वार्द्धोक्तपक्षापेक्षया पक्षान्तरसूचने सर्वं पारिहारिकमनुपारिहारिकं स बालवृद्धाकुलं च गच्छमाचार्यो द्रव्यतो भावतश्चोपगृह्णाति । ततः सर्वत्रसमस्तेऽपि गच्छे आचार्य उपग्रहे वर्तते । तस्मात्परोपग्रहे स उदाहरणं अत्रैव व्याख्यानान्तरमाह-

[भा.५६९] अहवानुसट्ठु वालंभुवग्गहं कुणति तिन्नि वि गुरु से ।
सव्वस वि गच्छस्स अनुसट्ठाईणि सो कुणति ।।

वृ- अथवेति प्रकारान्तरे अनुशिष्टि उपालम्भ उपग्रहान् त्रीनपि गुरुराचार्यः से तस्य पारिहारिकस्य यथायोगं करोति । न केवलं पारिहारिकस्य यथायोगं करोति किन्तु सर्वस्यापि गच्छस्य अनुशिष्ट्यादीनि त्रीण्यपि स आचार्यः करोति । अत्र शिष्यः प्राह-

[भा.५७०] आयरिओ केरिसओ, इह लोगे केरिसो व परलोए ।
इह लोए असारणिओ, परलोए फुडं भणंतो उ ।।

वृ- य एष उपगृह कृत आचार्यस्तमेव ज्ञातुमिच्छामि कीदृशः खल्वाचार्य इहलोके हितकारी कीदृशः परलोके इति सूरिराह- चतुर्विधः सामान्येनाचार्यः । तद्यथा-इहलोके हितो नामैको न परलोकहितः १, परलोकहितो नेहलोकहितः २ इहलोकहितोऽपि परलोकहितोऽपि ३, न इहलोकहितो नापि परलोकहितः ४ । तत्र प्रथमद्वितीयभंगव्याख्यानमाह- 'इहलोए' इत्यादि । तत्र यो वस्त्रपात्रभक्तपानादिकं समस्तमपि

साधूनां पूरयति न पुनः संयमे सीदतः सारयति सोऽसारणिकः सारणारहितो इहलोकेहितो न परलोके । एषा प्रथमभंगभावना । यः पुनः संयमयोगेषु प्रमाद्यतां सारणां करोति न च वस्त्रपात्रभक्तपानादिकं प्रयच्छति, स केवलं स्फुटं भणन् ब्रुवाणः परलोके हितो न इहलोके इति सामर्थ्याद्गम्यते, । एषा द्वितीय-भङ्गभावा । तृतीयचतुर्थभङ्गभावना तु स्वयंभावनीया । सा चैवम्-यो वस्त्रपात्रभक्तपानादिकं समस्तमपि साधूनां पूरयति संयमयोगेषु च सीदतः सारयति स इहलोके हितः परलोके च हितः । चतुर्थ उभयरहितः । अत्र पर आह-'ननु यो भद्रस्वभावतया न सारयति वस्त्रपात्रभक्तादिकं तु समस्तं पूरयति स भद्र समीचीनो यः पुनः खरपरुषं ब्रुवाणश्चण्डरुद्राचार्य इव सारयति न समीचीनोऽसमाध्युत्पादकत्वात्तत्राह -

**[भा.५७१]** जीहाए विलिहंतो न भद्दतो जत्थ सारणा नत्थि ।
दंडेनवि ताडेंतो स भद्दतो सारणा जत्थ ॥

**वृ-** यत्र नाम संयमयोगेषु सीदतां सारणा नास्ति, स आचार्यो जीह्वया विलिहन् मधुरवचोभिरनन्दयन् उपलक्षणमेतत् वस्त्रपात्रादिकं च पूरयन् न भद्रको न समीचीनः, परलोकापायेषु पातनात् । यत्र पुनः सीदतां साधूनां सम्यक् सारणासंयमयोगेषु प्रवर्तना समस्ति स आचार्यो दण्डेनापि ताडयन् भद्रकः एकान्तसमीचीनः सकलसांसारिकापायेभ्यः परित्राणकरणात् । अथ सारणामकुर्वाणो जिह्वया विलिहन् कस्मान्न समीचीन इत्यत्राह-

**[भा.५७२]** जह सरणमुवगयाणं जीवियववरोवणं नरो कुणइ ।
एवं सारणियाणं आयरितो असारओ गच्छे ॥

**वृ-** यथा कोऽपि नर एकान्तेनाहितकारी शरणमुपगतानां जीवितव्यपरोपणं करोति एवं साधूनामपि सारणमुपगतानां सारणीयानां संयमयोगेषु प्रमादव्यावर्त्तनेना प्रवर्तनीयानामाचार्योऽसारको गच्छे भावनीयः । सोऽपि शरणोपगतशिरो निकर्त्तक इव एकान्तेनाहितकारीति भावः शरणमुपगतानां संसारापारपारावारे निरनुकम्पं प्रक्षेपणात् स च तादृश इह परलोकहितार्थिना परित्याज्यः । यस्तु खरपरुषभणनेनापि संयमयोगेषु सीदतः सारयति संसारनिस्तारकत्वादेकान्तेनाश्रयणीयः । ततस्तृतीयभङ्गवर्ती आचार्यः परिहारिकस्यानुशिष्ट्यादित्रिविधं करोति कारयति अनुमन्यते च ।

**[भा.५७३]** एवं च कीरमाणे अनुसट्ठाइंमि वेयवच्चे उ ।
कोवि य पडिसेविज्जा से वियकसिणेऽरुहेयव्वे ॥

**वृ-** एवमपि यथागममनन्तरोदितेनापि प्रकारेण अनुशिष्ट्यादौ त्रिविधे वैयावृत्यं क्रियमाणे कोऽपि प्रतिसेवितप्रायश्चित्तस्थानमापद्यते इति भावः । सेविय कसिणे रुहेयव्वे इति तदपि कृत्स्नमारोपयितव्यं । कृत्स्नं नाम निरवशेषम् । एतेन 'ठविए वि पडिसेवित्ता सेवि कसिणे तत्थेव आरुहियव्वे सिया इति सूत्रपदं व्याख्यातं । कृत्स्नमित्युक्तं तत्र कृत्स्नप्ररूपणार्थमाह-

**[भा.५७४]** पडिसेवणाय संचय आरुवण अनुग्गहे य बोधव्वे ।
अनुग्घाय निरवसेसं कसिणं पुन छव्विहं होइ ॥

**[भा.५७५]** पारंचियमासीयं छम्मासारुवण छद्दिणगएहिं ।
कालगुरुनिरंतरं वा, अनुनमहियं भवेच्छट्ठं ॥

**वृ-** अनयोर्गाथयोर्यथासङ्ख्येन पदयोजना । सा चैवं-कृत्स्नं पुनः शब्दो वाक्यभेदार्थः । स च वाक्यभेद एवं वैयावृत्ये क्रियमाणे प्रतिसेवेत ततस्तत् कृत्स्नमारोपयेत् । तत् पुनः कृत्स्नं षड्विधं षट्प्रकारं

भवति । तद्यथा- प्रतिसेवनेति प्रतिसेवना कृत्स्नमेवं संचयकृत्स्नमारोपणाकृत्स्नं अनुग्रहकृत्स्नमनुद्घातं कृत्स्नं निरवशेषं कृत्स्नमिति । तत्र प्रतिसेवनाकृत्स्नं । ततः परस्यान्यस्य प्रतिसेवनास्थानस्यासम्भवात् । संचयकृत्स्नमशीतं मासशतं । ततः परस्य संचयस्याभावात् आरोपणाकृत्स्नं षाण्मासिकं, । ततः परस्य भगवतोवर्धमानस्वामिनः तीर्थे आरोपणस्याभावात् अनुग्रहकृत्स्नं यत् षण्णां मासानामारोपितं षट् दिवसा गतास्तदनन्तरमन्यत् षण्मासान् आपन्नस्ततो यत् अव्यूढं तत्समस्तंझोषितं पश्चात् यदन्यत् षाण्मासिकमापन्नं तद्वहति, तथा चाह- 'छहिंगगहिएहिं' ति, अत्र तृतीया सप्तम्यर्थे पूर्वषण्मासस्सम्बन्धिषु षट्सुदिनेषु गतेषु यदन्यत् षाण्मासिकमारोपितमुह्यते । अत्र यस्मात् पञ्चमासाश्चतुर्विंशतिदिवसाश्चा- रोपितास्तत एतदनुग्रहकृत्स्नमनुग्रहकृत्स्नग्रहणेन निरनुग्रहकृत्स्नमपि सूचितं द्रष्टव्यं । तत्रैवं भावनीयं- षण्मासे प्रतिस्थापिते पञ्चमासाश्चतुर्विंशतिदिवसाश्च व्यूढास्तदनन्तरमन्यत् षाण्मासिकमापन्नस्ततः तद्वहति । पूर्वषण्मासस्य षट् दिवसा झोषिताः अनुद्घातकृत्स्नं यत् कालगुरु यथा मासगुरुकादि अथवा निरन्तरं दानमनुद्घातकृत्स्नं । अत्र मासलघुकाद्यपि निरन्तरं दीयमानमनुद्घातमवसातव्यं । यदि वा अनुद्घातं त्रिविधं तद्यथा -कालगुरु तपोगुरु उभयगुरु च । तत्र कालगुरुनाम यत् ग्रीष्मादौ कर्कशे काले दीयते । तपोगुरु यदष्टमादि दीयते निरंतरं वा उभयगुरु यत् ग्रीष्मादौ काले निरन्तरं च दानं निरवशेषं कृत्स्नं नाम यदापन्नं तत्सर्वमन्यूनमनतिरिक्तं दीयते । अथात्र कतमेन कृत्स्नेनारोपयितव्यं । उच्यते –

**[भा.५७६]** एत्तो समारोहेज्जा अनुग्गहकसिणेण चिन्नसेसंमि ।
आलोयणं सुणेत्ता पुरिसज्जायं च विनाय ॥

**वृ-** एत्तो इति, प्राकृतशैलीवशात् षष्ठ्यर्थे पञ्चमी । अमीषां षणां कृत्स्नानां मध्ये अनुग्रहकृत्स्नेन प्रागारोपितस्य चीर्णशेषे चीर्णशेषेषु दिवसेषु आरोपयेत् । किंकृत्वा अनुग्रहकृत्स्नेनारपयेत् इत्यत आह- आलोचनां हा दुष्टु कृतमित्यादि निन्दन् पुरःसरं श्रुत्वा आकर्ण्य तथा पुरुषजातं धृतिसंहननाभ्यां दुर्बलं विज्ञाय । इयमत्र भावना-यदि षण्मासापन्नो धृतिसंहननाभ्यां च दुर्बलस्ततस्ते अनुग्रहकृत्स्नेन दीयन्ते । अथ तीव्राध्यवसायेन प्रतिसेवितं रागद्वेषाध्यवसायकलुषितेन वालोचितं धृतिसंहननाभ्यां च न दुर्बलस्ततस्ते निरनुग्रहकृत्स्नेनारोप्यन्ते षट्सु दिवसेषु शेषेषु तदन्यत् षाण्मासिकमारोप्यते इति भावः । सम्प्रति प्रतिसेवनालोचनाविषयाचतुर्भंगिकाखण्डसूत्रं पुव्वं पडिसेवियमित्यादि व्याख्यानयति-

**[भा.५७७]** पुव्वानुपुव्वि दुविहा, पडिसेवणाए तहेव आलोए ।
पडिसेवण आलोयणपुव्वं पच्छाव चउभंगो ॥

**वृ-** सूत्रे पूर्वमिति पदैकदेशे पदसमुदायोपचारात् पूर्वानुपूर्वीति प्रतिपत्तव्यम् । पूर्वानुपूर्वीति प्रतिपत्तव्यम् । पूर्वानुपूर्वी नाम अनुपरिपाटिः सा द्विधा । तद्यथा-प्रतिसेवने तथैव आलोचे आलोचनायां तत्र प्रतिसेवने आलोचनायां च पूर्वं पश्चादिति पदाभ्यां चतुर्भङ्गी । सा च यथा सूत्रे तथा उच्चारयितव्या परं सूत्रे पूर्वशब्दः पश्चाच्छब्दश्च साक्षादुपात्तः । पूर्वशब्दश्च पूर्वानुपूर्वीवाचकः । पश्चाच्छब्दश्च पश्चादनुपूर्व्याभिधायी । तत एवं भङ्गोच्चारणं द्रष्टव्यम् । पूर्वानुपूर्व्या प्रतिसेवितं पूर्वानुपूर्व्या आलोचितम् १, पूर्वानुपूर्व्या प्रतिसेवितं पश्चादनुपूर्व्या आलोचितम्, पश्चादानुपूर्व्या प्रतिसेवितं पूर्वानुपूर्व्या आलोचितं ३, पश्चादानुपूर्व्या प्रतिसेवितं पश्चादानुपूर्व्या आलोचितं ४ । चतुर्भङ्गी भावनार्थमाह-

**[भा.५७८]** पुव्वानुपुव्वि पढमो, विवरीए बिइय तइयए गुरुगो ।
आयरियकारणा वा पच्छा पच्छाव तुणो उ ॥

**वृ-** या पूर्वानुपूर्वी प्रतिसेवनायामालोचनायां च एष प्रथमो भङ्गः । अस्य त्वियं भावना । गीतार्थः कारणे समुत्पन्ने सति लघुगुरुपर्यालोचनापुरस्सरं लघुगुरुपञ्चकादि यतनया प्रतिसेवते एषा प्रतिसेवनानुपूर्वी । तदनन्तरं गुरुसकाशे यत् यथा प्रतिसेवितं तत्तथैवालोचयति-एषा आलोचनानुपूर्वी विवरीए बिइय तइयत्ति यथाक्रममनुत्तरपूर्वयोः पदयोर्विपरीतभावप्रधानोऽयं निर्देशः वैपरीत्ये द्वितीयतृतीयभङ्गौ पूर्वानुपूर्व्या प्रतिसेवितं पश्चादानुपूर्व्या आलोचितमिति द्वितीयः । पश्चादानुपूर्व्या प्रतिसेवितं पूर्वानुपूर्व्या आलोचितमिति तृतीय इति भावः । तत्रेयं द्वितीयभङ्गभावना पूर्वं लघुगुरुपर्यालोचनेन लघुगुरुमासादिक्रमेण यतनया प्रतिसेवितं तदनन्तरं तथाविधकारणोत्पत्तौ लघुगुरुपञ्चकादि आलोचनावेलायां तु प्रथमतो लघुगुरुपञ्चकादि कथयति, पश्चात् मासादि । कस्मादेवं कथयतीति चेत् ? उच्यते-आशङ्कासम्भवात् । तथा यदि पूर्वं मासादि कथयिष्यामि तस्मात् पञ्चकादि तत एवं गुरूणां चित्ते स्थास्यति । यथा एषोऽयतनया प्रतिसेवी कथमन्यथा यतस्ततो मासादि प्रथमतः प्रतिसेवितमान् । ततोऽयतनानिष्पन्नं च द्वे प्रायश्चित्ते मह्यं दद्युरिति पूर्वानुपूर्व्या प्रतिसेवते पश्चादानुपूर्व्या आलोचयति तृतीयभङ्गे त्वियं भावना पूर्वं गुरुलाघवचिन्ता विकलतया प्रथमतो गुरुमासादीनि प्रतिसेवितानि तदनन्तरं गुरुपञ्चकादीनि । आलोचनावेलायां तु पूर्वं लघुपञ्चकादीनि कथयति, तदनन्तरं गुरुमासिकादीनि मा मह्यमयतनया प्रतिसेवनाकारीति ज्ञात्वा अयतनानिष्पन्नं प्रतिसेवना निष्पन्नं चेति प्रायश्चित्तद्वयं दद्युरिति बुद्ध्या अथवा एवमालोचयन्तं श्रुत्वा गुरवो ज्ञास्यन्ति ।

यथा एष महानुभावो यतनया प्रतिसेवितवान् ततो न प्रायश्चित्तभागिति मह्यं प्रायश्चित्तं दास्यन्ति अल्पं वा दास्यन्ति । ततो द्वितीयभङ्गे च यथापन्नं तद्दीयते । मायां च कृतवानिति मायानिष्पन्नो गुरुक इति गुरुमासोऽधिको दीयते । अथवा पच्छा पडिसेवियं पुव्वं आलोइयमित्यत्र न पूर्वशब्दः पूर्वानुपूर्व्यभिधायी । नापि पश्चाच्छब्दः पश्चादानुपूर्वीवाचकः, किन्तु प्रसिद्धार्थप्रतिपादको ज्ञेयः । ततोऽयमर्थः-पश्चात्प्रतिसेवितं पूर्वं प्राक् आलोचयति । एष भङ्गः कथं संभवतीति चेत् ते आहुः-'आयरियकारणा वा' इति । वा शब्दस्तृतीयभङ्गस्य प्रकारान्तरताव्याख्यापनार्थः । आचार्यकारणात् । उपलक्षणमेतत् । पश्चात् प्रतिसेवते पूर्व मालोचयति । इयमत्र भावना आचार्यादिकारणतोऽन्यग्रामं गन्तुमना यदि वा कारणान्तरे समुत्पन्ने सति विकृतिमाहारयितुकाम आचार्य विज्ञपयति ।-'इच्छामि भदन्त युष्माभिरनुज्ञातः सन् एतेन कारणेन अमुकां विकृतिमेतावन्तं कालमाहारयितुमिति । एवं पूर्वमालोचना पश्चात् प्रतिसेवनोपजायते । अथवायं तृतीयो भङ्गः शून्य एव द्रष्टव्यः । तथानुज्ञायामपि कृतायां प्रतिसेवनानन्तरं भूय आलोचनात् । तथा चाह-पच्छावसुन्नोत्ति, पश्चात् प्रतिसेवनापूर्व-मालोचनेति शून्य एव भङ्गस्तुरेवकारार्थः । तत्र यदुक्तं पुव्वाणुपुव्विं पढमो इत्यस्य व्याख्यानमाह-

**[भा.५७१]** पच्छित्तऽनुपुव्वीए जयणापडिसेवणाए अनुपुव्वी ।
एमेव विगडणाए, बितियतइय माइणो गुरुगो ॥

**वृ-** गरुलघुपर्यालोचनया प्रायश्चित्तानुपूर्व्या प्रायश्चित्तानुपरिपाट्या गुरुलघुपञ्चकादिक्रमेणेत्यर्थः । यत् यतनया प्रतिसेवितमेषा प्रतिसेवनायामनुपूर्वी एवमेव यथैव प्रतिसेवितवान् तथैव यत् आलोचयति । एषा विकटनायामालचोनायामनुपूर्वी द्वितीयतृतीयभंगयोः । पुनर्यदापन्नं तावन्नियमतो दीयते, केवलं मायिनो मायाविन्सतौ भङ्गविति द्वयोरपि भङ्गयोरधिको गुरुमासा दीयते । साम्प्रतमनयोरेव भङ्गयोर्भावनामाह—

[भा.५८०] पुव्वं गुरुणि पडिसेविऊण पच्छा लहूणि सेवित्ता ।
लहुए पुव्वं कहयति मा मे दो दिज्ज पच्छित्ते ।।

वृ- अत्र द्वितीयभङ्गभावनायां गुरुशब्दो बृहदभिधायी, लघुशब्दोऽल्पवाचकः । ततोऽयमर्थः-पूर्वं गुरूणि मासलघुकादीनि प्रतिसेव्य पश्चात् लघूनि लघुपञ्चकादीनि प्रतिसेवते । प्रतिसेव्य च तदनन्तरमालोचनावेलायां पूर्वं लघुकानि लघुपञ्चकादीनि कथयति पश्चात् मासलघुकादीनि । कस्मादेवं कथयतीति चेदत आह-'मा मे' इत्यादि । पूर्वमासलघुकादिकथने अयतनया प्रतिसेवित्वं मे गुरुणा विज्ञायेत । ततो द्वे प्रायश्चित्ते गुरुर्दद्यात् । अयतनानिष्पन्नं प्रतिसेवनानिष्पन्नं च । तस्मात् मामे द्वे प्रायश्चित्ते दद्यादिति पूर्वं लघुपञ्चकादि कथयति । तृतीयभङ्गभावनायां त्वियं भावना-गुरुलघु-पर्यालोचनामन्तरेण गुरूणि मासगुरुकादीनि प्रतिसेव्य पश्चात् लघूनि लघुपञ्चकादीनि प्रतिसेवते । प्रतिसेव्य च पूर्वं लघुकानि लघुपञ्चकादीनि कथयति । पश्चात् गुरुमासादेवं कथयतीति चेदत्र आह-मा मे इत्यादि पूर्ववत् । अथवेयं तृतीयभङ्गविशेषतो भावना-

[भा.५८१] अहवा जय पडिसेवित्ति नव दाहिंति मज्झ पच्छित्तं ।
इय दो मज्झिमभंगा चरमो पुन पढम सरिसोउ ।।

वृ- अथवेति प्रकारान्तरं यत् यतनया प्रतिसेवी प्रतिसेवनाकारीति ज्ञात्वा नैव मम दास्यंति प्रायश्चित्तं, उपलक्षणमेतत् । स्वल्पं वा दास्यन्ति प्रायश्चित्तमिति हेतोरुक्तेन प्रकारेण कथयति । तत इति एवममुना प्रकारेण द्वौ मध्यमभङ्गौ द्वितीयतृतीयभङ्गौ मायाविन इति शेषः । चरमः पुनर्भङ्गः पश्चादानुपूर्व्या प्रतिसेवितं पश्चादानुपूर्व्यालोचितमित्येवंरूपः प्रथमसदृशः । यथा प्रथमे भङ्गे यथैव प्रतिसेवना तथैवालोचनेत्यमायाविनः स भङ्गः । तथा चरमभङ्गेऽपि प्रतिसेवनाक्रमेणालोचना न मायावशतो-ऽन्यथेत्येषोऽप्यमायिन एवेति प्रथमसदृशश्चरमभङ्गः । तदेवं यतः प्रथमचरमभङ्गावमायाविनो द्वितीय-तृतीयभङ्गौ प्रतिकुञ्चनायामतः प्रतिकुञ्चनाऽप्रतिकुञ्चनाविषयचतुर्भङ्गी सूत्रखण्डं अपलिउञ्चियं इ-त्यादि । तद्व्याख्यानार्थमाह ।।

[भा.५८२] पलिउंचण चउभंगो वाहे गोणीय पढमतो सुद्धो ।
तं चेवय मच्छरित्ते सहसा पलिउंचमाणे उ ।।

वृ- प्रतिकुञ्चनमधिकृत्य प्रतिषेधाप्रतिषेधाभ्यां चतुर्भङ्गी । गाथायां पुंस्त्वनिर्देशः प्राकृत्वात् । सा च चतुर्भङ्गी यथा सूत्रेण तथोच्चारणीया । तद्यथा अप्रतिकुञ्चितेऽप्रतिकुञ्चितं १, अप्रतिकुञ्चिते प्रतिकुञ्चितं २, प्रतिकुञ्चिते अप्रतिकुञ्चितं ३, प्रतिकुञ्चिते प्रतिकुञ्चितं ४ । अस्यां चतुर्भङ्ग्यां व्याधो गोणी च शब्दात् भिक्षुकी च दृष्टान्तः । तत्र व्याधदृष्टान्तोऽयम्-जहा कोवि वाहो कस्सइ ईसरस्स कयवित्तीतो मंसं उवनेइ अन्नया सो वाहो मंसं सुंदरं घेत्तुं ईसरसमीवं संपट्ठितो चिंतेइ च इमस्स सव्वं मंसं दायव्वंति पत्तो ईसरसमीवं तेन आभट्ठो स्वागतं सुस्वागतं उवविसाहित्ति वाहेणं तुट्ठेणं सव्वं मंसं दिन्नं । एवं कोवि सावगाहो आलोइउकामो आयरियस्सगासं ट्ठितो चिंतेइ य सुहुमबायरा सव्वे अइयारा मए आलोइयव्वा इति पत्तो आयरियसमीवं । आयरिएणं सुट्ठु आढाइत्तो धन्नोसि तुमं, संपुन्नोसि तुमं, न दुक्करं जं पडिसेविज्जइ तं दुक्करं जं सम्मं आलोइज्जइ । तोतं तुट्ठेण सव्वं जहा चिंतियमपलिउंचियमालोइयं । इह चिंतावेलायामप्यप्रतिकुञ्चितमालोचनावेलायामप्यप्रतिकुञ्चितमिति प्रथमो भङ्गः शुद्धः । तं चेवय मच्छरिए इत्यादि । यदेव प्रथमं व्याधोदाहरणे व्याधस्यागमनं तदेव द्वितीये भङ्गेऽपि वक्तव्यं

तथैवाप्रतिकुञ्चितबुद्धया व्याध आगत इति वक्तव्यमित्यर्थः । तद्यथा-वाहो सुंदरं मंसं घेत्तुं इस्सराभिमुहं संपट्ठितो चिंतेइय सव्वं मंसं इमस्स दायव्वंति । पत्तो इस्सरसमीवं । तेन च ईश्वरेण कारणे अकारणे व सहसा पूर्वापरमपर्यालोच्य मत्सरितो मत्सरस्तस्योत्पादितो यथा किमिति त्वमुत्सूरे समागत इति ।

[भा.५८३] खरंटणभीतो रुट्ठो सक्कारं दिंति ततियए सेसं ।
भिक्खुणि वाह चउत्थो सहसा पलिउंचमानेउं ।।

वृ- स उक्तप्रकारेण मत्सरितः सन् खरण्टनभीतः खरण्टनमुक्तप्रकारेण निर्भर्त्सनं तेन भीतः खरण्टनभीतो रुष्टो रोषं गतवान् ततस्तेन रुष्टेन प्रतिकुञ्चितं न सर्वं मासं दिन्नं । ततस्तस्मिन् सहसा मत्सरिते खरण्टनभीते रुष्टे प्रतिकुञ्चिते द्वितीयभङ्गस्योपनयः कार्यः । स चैवं आलोयगो वि आगतो पुच्छितो केन कारणेन आगतोऽसि भणियमिवसहमालोएउं आयरिएणं खरण्टितो कीस तहा विहरियं जहा अवग्गहं पत्तो आलोएन्तो वा खरण्टितो ततो तेन न सम्ममालोइयं इति । गतो द्वितीयभङ्गस्तृतीयभङ्गभावनार्थमाह-सक्कारं देंति तइयए असेसं तृतीयभंगे स ईश्वरस्तस्य व्याधस्य सत्कारं कृतवान् । ततः स व्याधस्तस्मै अशेषं समस्तं मांसं ददाति । एषोऽक्षरार्थो भावार्थस्त्वयम्-तहेव वाहा संपट्ठितो मंसं घेत्तुं चिंतेइ य न सव्वं मंसं मए दायव्वं ति पत्तो ईसरसमीवं ईसरेण सुट्ठु आढाइतो तेन से सव्वं मंसं दिन्नं । एवमालोयगोवि संपट्ठितो, पाडिपहिय साहुं पुच्छति-अमुगस्स आयरियस्स मज्झेण आगतोऽसि । सो भणति आमं, केरिसो-सो आयरितो सुहाहिगमो नवत्ति तेन भणियं । दुरहिगमो तहेव तेन चिंतियं न सम्मं मए आलोइयव्वंति । आगतो गुरुसमीवं । तेन सम्ममाढातितो पुच्छितो य- किमागमनं । तेन भणियं-आलोइउं । ताहे आयरिएणं सुट्ठु उववूहितो धन्नोसत्तिमिच्चादि विभासा । तेन तुट्ठेण सव्वं सम्मं आलोइयं गतस्तृतीयो भङ्गः । चतुर्थभङ्गस्य त्वेषा भावना-सो वाहो मंसं घेत्तुं पट्ठितो चिंतेइ य न सव्वं मंसं मए दायव्वंति । एवं पलिउंचिय आगतो ईसरेण खरण्टितो तेन य खरंटिएण पुव्वपलिउंचिय भावेण न सव्वं दिन्नं । एवमालोयगे वि उवनयो कायव्वो ।।

सम्प्रति चतुर्ष्वपि भङ्गेषु गोणीदृष्टान्तभावना । जहा-गोणी दोहिउकामा पन्हुया आगया सामिणा उवज्झिया गृहं प्रविशन्ती मधुरभणित्या नाम्ना उपाहुता आकारिता इत्यर्थः । ततो हट्ठेण पुट्ठा धूमाईहिय उवग्गहिया बलिमत्ताए य निउत्ता भक्खे नियोजिता इत्यर्थः । ततो सव्वं खीरं पएहुया एवमालोचकेऽपि प्रागुक्तानुसारेण स्वयमुपनयो भावनीयः । बिइया गोणी दोहिउकामा पन्हुया आगया न ढाइया पिट्टिया य वंसाईहिं । तीए न सव्वं खीरं दिन्नं । एवमालोचकेप्युपनयो भावनीयः । तइया गोणी अ दोहेउकामा आगया उज्झया पलिमित्ताए निउत्ता सव्वं पन्हुया एवमालोयगेवि विभासा । चतुत्थी गोणी अ दोहिउकामा आगया सामिणा पिट्टिया । सव्वं खीरं न हु पन्हुया । अत्राप्यालोचके तथैवोपनयः ।। अधुना चतुर्ष्वपि भङ्गेषु भिक्षुकीदृष्टान्तो भाव्यते-काइ भिक्खुणी कस्सइ पुव्वपरिचियस्स घरं गया तीए पइरिके खोरियं दिट्ठं गहियं च । गया नियट्ठाणं पच्छा से भावो परिणतो अप्पेमि त्ति घरं गया तेहिं आढाइया तुट्ठाए दिन्नं खोरियं, एवमालोयगेवि विभासा । अना भिक्खुणी कस्सइ पुव्वपरिचियस्स घरं गया तीए पइरिके खोरयं गहियं चिंतियं च पाए दायव्वं ति घरं गया सा नाढाइया खरंटिया य तीए न दिन्नं, एवमालोयगे विभासा । तइयाए भिक्खुणीए खोरयं गहियं चिंतियं च न दायव्वं त्ति । घरं गया स्वागतं सुस्वागतं उवविसाहि त्ति आसणाईहिं आढाइया तीए दिन्नं । एवमालोयगे वि उवण तो ३ । चउत्थाए भिक्खुणीए गहियं खोरयं च चिंतियं च नाए न दायव्वंति, घरं गया नाढाइया खरंटिया य न दिन्नं । एवमालोयगेवि विभासा भिक्खुनिवाह

इत्यादि । चतुर्ष्वपि भङ्गेषु भिक्षुकी व्याध उपलक्षणमेतत् गौश्च दृष्टान्तो भावनीयः । यथा च भिक्षुक्यादिषु त्रिष्वपि दृष्टान्तेषु स्वयं भिक्षुक्यादिभिः प्रतिकुञ्चिते स्वामिना स्वार्थप्रीडिता सहसा अनादरः खरण्टना वा कृता तथा आलोचकेऽपि चतुर्थभङ्गे स्वयं प्रतिकुञ्चत्याचार्येण सहसा कृताऽनादरः खरण्टना वा योजनीयेति एतदेव विभावयिषुरिदमाह-

[भा.५८४] अपलिउंचिय उपलिउंचियंमि चउरो हवंति भंगाओ ।
वाहे य गोणी भिक्खुणि, चउसु विभंगेसु दिट्ठंतो ।।

वृ- अप्रतिकुञ्चितं च प्रतिकुञ्चितं च अप्रतिकुञ्चितप्रतिकुञ्चितं तस्मिन् । किमुक्तं भवति ? अप्रतिकुञ्चितप्रतिकुञ्चिताभ्यां चत्वारो भङ्गा भवन्ति । चतुर्ष्वपि भंगेषु प्रत्येकं व्याधो गोणी गौः भिक्षुकीदृष्टान्तः ।

[भा.५८५] पढमतइएसु पूया खिंसा इयरेसुवि सियपयखोरे ।
एमेव उवनतो खलु चउसु वि भंगेसु विवडंते ।।

वृ- पिशितं मांसं, पयः क्षीरं, खोरकं वृत्ताकारो भाजनविशेषः । एतेषां समाहारो द्वन्द्वः, तस्मिन् विषये यथाक्रमं ये व्याधगोभिक्षुकीदृष्टान्तास्तेषां यथा प्रथमे तृतीये च भङ्गे पूजा स्वाम्यादिना कृता । इतरयोस्तु द्वयोर्द्वितीय चरमयोर्भङ्गयोः खिंसा खरण्टना एवमेव अनेनैव प्रकारेण चतुर्ष्वपि भङ्गेषु विकटयत्यालोचयति खलूपनयः कर्तव्यः । तत्रादौ व्याधदृष्टान्तमधिकृत्योपनययोजनामाह-

[भा.५८६] इस्सरि सरिसो उ गुरू वाहो साहू पडिसेवणा मंसं ।
तूमणया- पलिउंचण सक्कारो वीलणा होइ ।।

वृ- ईश्वरसदृश ईश्वरस्थानीयो गुरुर्व्याधो व्याधस्थानीयः साधुः प्रतिसेवनास्थानीयमांसं तूमणयेति देशीपदमेतत् स्थागनमित्यर्थः । स्थगनस्थानीया प्रतिकुञ्चना, सत्कारः सत्कारस्थानीया व्रीडना स्थगनविषये लज्जापादनं भवतीति । सम्प्रति अपलिउंचिय आलोएमाणस्स सव्वमेयं सकयं साहनियजे इएयाए पठवणाए पठविए निव्विसमाणे पडिसेवित्ति संवकसिणे तत्थेव आरोहियव्वे सिया इति व्याख्यानयत्राह-

[भा.५८७] आलोयणत्ति य पुनो जा एसा अकुंचिया उभयतो वि ।
सच्चेव होइ सोही तत्थय मेरा इमा होति ।।

वृ- आलोएमाणस्सेति किमुक्तं भवति ? आलोचयतः । सा पुनरेषा आलोचनाया उभयतः संकल्पकाले आलोचनाकाले च अप्रतिकुञ्चिता न विद्यते प्रतिकुञ्चितं प्रतिकुञ्चनं यत्र सा तथा प्रतिकुञ्चनरहिता इत्यर्थः । सैव भवति शुद्धिस्तात्त्विकी शुद्धिरुभयत्रापि प्रतिकुञ्चनाया अभावात् । इयमत्र भावना यो नाम संकल्पकालेऽप्यप्रतिकुञ्चितमालोचनाकालेऽप्यप्रतिकुञ्चितमालोचयति, यदि वा उभयत इति प्रतिसेवनानुलोमतः प्रायश्चित्तानुलोमतश्चाप्रतिकुञ्चितमालोचयति, । एष एव तत्त्ववृत्त्या शुद्धो मायालेशस्याप्यभावात् । सा चालोचना आचार्यशिष्यभावे भवति । तत्राचार्य शिष्याणामियं मर्यादा सामाचारी, तामेवाह-

[भा.५८८] आयरिए कह सोही सीहानुग वसभ कोट्ठगानुगे ।
अहवा वि सहावेणं निमंसुए मासिया तिनि ।।

वृ- आचार्ये आलोचनार्हाचार्यसमीपे यदा आलोचक आलोचनां प्रयुंक्ते तदा कथं

शुद्धिरुक्तलक्षणमेतत् कथमशुद्धिर्भवतीति ? उच्यते- आचार्यास्त्रिविधस्तद्यथा- सिंहानुगो वृषभानुगः क्रोष्टानुगश्च । क्रोष्टुकः शृगालः यत्र यो महत्यां निषद्यायां स्थितः सन् सूत्रमर्थं वाचयति तिष्ठति वा स सिंहानुगः, यः पुनरेकस्मिन् कल्पे स्थितः सन् वाचयति तिष्ठति वा स वृषभानुगः, यस्तु रजोहरणनिषद्यायामौपग्रहिकपादप्रोञ्छने वा स्थितो वाचयति तिष्ठति वा स क्रोष्टुकानुग इति । यदाचार्य आलोचनार्हो न प्राप्यते, तदा वृषभस्यापि पुरत आलोचना दातव्या । तदभावे गीतार्थस्य भिक्षोरपीति वृषभभिक्षू अपि आचार्यवत् सिंहवृषभक्रोष्टुकानुगतया प्रत्येकं त्रिविकल्पौ वाच्यौ, । आलोचका अपि त्रिविधास्तद्यथा- आचार्या वृषभा भिक्षवश्च । एकैके त्रिविकल्पाः- सिंहानुगाः, वृषभानुगाः, क्रोष्टुकानुगाश्च । नवरं क्रोष्टुकानुगे विशेषः । स यदा निषद्यायां पादप्रोञ्छने वा उत्कुटुको वा आलोचयति, तत्र यद्युत्कुटुकः स आलोचयति, ततः शुद्धि निषद्यापादप्रोच्छनयोस्तु भजना । किमुक्तं भवति ? यद्याचार्यो महान्वा वृषभो यदि वा भिक्षुरपि ग्लान आलोचयति आलोचनार्हेण च क्रियते अनुज्ञा तदा शुद्धिः, शेषकालमशुद्धिरिति । अहवावि सभावेणं निमंसुए इति । अथवा स आचार्यो वृषभो भिक्षुर्वा स्वभावेन स्व आत्मीयो भावः स्वभावः स्वशीलमित्यर्थः । तेन क्रोष्टानुगो भवेत् । यदि वा कोऽपि धर्मश्रद्धया निषद्यायामुपवेष्टुंनेच्छति तस्य किं निषद्या कर्त्तव्या ? किं वा न कर्त्तव्या ? उच्यते- भवतु यो वा स वा नियमेन तस्य निषद्यां कृत्वा आलोचकेनालोचयितव्यं । यदि पुनर्न करोति ततः प्रायश्चित्तमाप्नोति, । अत्र दृष्टान्तो निःश्मश्रुको राजा । जहा- एगो राया निम्मंसुओ तस्स कयवित्तीकासवो सो परिभवेण न कयाइ उवट्ठाएति बाला नत्थित्ति काउं सो विणासित्तो । एवमिहापि यो निषद्यां न करोति स प्रायश्चित्तदण्डेन दण्डयते । अण्णो कासवो कतो सो सत्तमे सत्तमे दिवसे उव्वट्ठाति सो रण्णा पूइतो । एवमिहापि यो निषद्यां करोति स विनीतोऽयमिति यशः प्राप्नोति । परलोके कर्मक्षपणतः सिद्धिमिति । तत्पुनः प्रायश्चित्तं त्रीणि मासिकानि । तानि च सदृशे सदृशानुगे सदृशस्य सदृशानुगस्य पुरत आलोचयति वेदितव्यानि । कथमिति चेदुच्यते- सिंहानुगस्याचार्यस्य सिंहानुग एवाचार्ये आलोचयत्येकं मासिकं वृषभस्य वृषभानुगस्य वृषभ एव वृषभानुगे आलोचयति द्वितीयं, भिक्षोः क्रोष्टुकानुगस्य भिक्षावेव क्रोष्टुकानुगे आलोचयति तृतीयमिति, । एतत्स्वस्थाने प्रायश्चित्तमुक्तमिदानीं स्वस्थानपरस्थानज्ञापनार्थं स्वस्थानपरस्थानेषु प्रायश्चित्तं वक्तु काम इदमाह-

[भा.५८९] सट्ठाणानुगकेई परट्ठाणानुगय केइ गुरुमादी ।
स निसिज्जाए कप्पो, पुंच्छ निसिज्जा च उक्कुडुओ ।।

वृ- गुर्वादयो गुरुवृषभभिक्षवः केचित् स्वस्थानानुगाः केचित् परस्थानानुगाः । तत्र आचार्यस्य सती शोभना निषद्या तस्यां स्थितस्य प्रस्थापनानुगता वृषभस्य कल्पे स्थितस्य भिक्षोः पादप्रोञ्छनकनिषद्यायां रजोहरणनिषद्यायां यदि वा यदि उत्कुडुकोऽवतिष्ठते । एव भिक्षोः स्वस्थानानुगताः । इयमत्र भावना- आचार्यस्य महत्यां निषद्यायामुपविष्टस्य यत् सिंहानुगतत्वमेतत् स्वस्थानं वृषभानुगत्वं, क्रोष्टुकानुगत्वं च परस्थानं, वृषभस्य कल्पेऽवस्थितस्य यत् वृषभानुगत्वमिदं स्वस्थानं । यत्पुनर्महत्यां निषद्यायां पादप्रोञ्छनके निषद्यायां चोपवेशनतः सिंहानुगत्वं क्रोष्टुकागत्वं च तत् परस्थानम्, भिक्षोः पादप्रोञ्छनके रजोहरणनिषद्यायामुत्कुडुकत्वेनावस्थितस्य यत् क्रोष्टुकानुगतत्वं तत् स्वस्थानं, यत्तु संनिषद्यायां कल्पे चोपवेशनतः सिंहानुगत्वं वृषभानुगत्वं च तत्परस्थानं । तत्र सिंहानुगस्याचार्यस्य सिंहानुगः सन्नाचार्य आलोचयति एष प्रथमः ।। सिंहानुगस्याचार्यस्य वृषभानुगः सन्नाचार्य आलोचयति । एष द्वितीयः २

सिंहानुगस्याचार्यस्य क्रोष्टुकानुगः सन्नाचार्य इति तृतीयः ३ । वृषभानुगस्याचार्यस्य सिंहानुगः सन्नाचार्य इति षष्ठः ६ । क्रोष्टुकानुगस्याचार्यस्य सिंहानुगः सन्नाचार्य आलोचयतीति सप्तमः ७ । क्रोष्टुकानुगस्याचार्यस्य वृषभानुगः सन्नाचार्य इत्यष्टमः ८ । क्रोष्टुकानुगस्याचार्यस्य क्रोष्टुकानुगः सन्नाचार्य आलोचयतीति नवमः ९ । एतेषां नवानामप्याचार्याणामालोचयतां यथासङ्ख्यमिति प्रायश्चित्तम् ॥

**[भा.५९०]** मासो दुन्निओ सुद्धो चउलहु लहु य अंतिमो सुद्धो ।
गुरुया लहुया लहुय भेया गणिणो नवगणिंमि ॥

**वृ-** गणिन्याचार्ये लोचनार्हेगणिनि गणिन आचार्यस्यालोचकस्य भेदा नव ते चानन्तरमेवोपदर्शिता एतेषां च यथाक्रमं प्रायश्चित्तमिदं मासो इत्यादि सिंहानुगस्याचार्यस्य पुरतः सिंहानुगतयालोचयत आचार्यस्य प्रायश्चित्तं मासलघु । वृषभानुगतया आलोचयन् शुद्धः क्रोष्टुकानुगतयालोचयन् शुद्धः वृषभानुगस्याचार्यस्य पुरतः सिंहानुगतया आलोचयत आचार्यस्य प्रायश्चित्तं चत्वारो लघवो लघुमासाः, वृषभानुगतया आलोचयतो लघुको मासः, क्रोष्टुकानुगतयालोचयन् शुद्धः क्रोष्टुकानुगतस्याचार्यस्य पुरतः सिंहानुगतयालोचयत आचार्यस्य चत्वारो गुरुका गुरुमासाः, वृषभानुगतयालोचयतश्चत्वारो लघुका लघुमासाः, । क्रोष्टुकानुगतयालोचयतो लघुक एको लघुमासः । पादप्रोञ्छने रजोहरणनिषद्यायां च क्रोष्टुकानुगालोचनार्हाचार्यसदृशासने उपविष्टस्य वेदितव्यः । यदा पुनरुत्कुटुकः सन्नालोचयति तदा शुद्ध एव, एतानि प्रायश्चित्तानि तपसा कालेन च गुरुकाणि द्रष्टव्यानि । तथा सिंहानुगवृषभानुगक्रोष्टुकानुगरूपाणां त्रयाणां आचार्याणां वृषभा आलोचका नव, तेषामपि यथाक्रमं तान्येव प्रायश्चित्तानि नवरं तपसा गुरूणि कालतो लघूनि वेदितव्यानि, तथा त्रयाणां सिंहानुगवृषभानुगक्रोष्टुकानुगरूपाणामाचार्याणां भिक्षवोऽप्यालोचकानव तेषामपि यथाक्रमं तान्येव प्रायश्चित्तानि नवरं तपसा लघूनि कालतो गुरूणि । तथा चाह-

**[भा.५९१]** दोहिं वि गुरुणि एते गुरुंमि नियमा तवेण कालेन ।
वसभंमि य तव गुरुगा कालगुरू होंति भिक्खुंमि ॥

**वृ-** गुरावाचार्ये आलोचके जातावेकवचनं गुरुलघुषु आचार्येषु आलोचकेषु नवसु नियमादेतानि यथाक्रममनन्तरोदितानि प्रायश्चित्तानि द्वाभ्यां गुरुकाणि द्रष्टव्यानि । तद्यथा-तपसा कालेन च वृषभेऽपि जातावेकवचनं वृषभेषु तपसा गुरुकाणि कालतो लघूनीति सामर्थ्यादवसीयते, । भिक्षौ भिक्षुषु कालतो गुरूणि, सामर्थ्यात्तपसा लघूनि भवन्ति, तदेवमालोचनार्हमाचार्यं प्रतीत्याचार्यवृषभभिक्षुष्वालोचकेषु सप्तविंशतिः प्रायश्चित्तस्थानानि प्रतिपादितान्यधुना सिंहवृषभक्रोष्टुकानुरूपतया त्रयाणामालोचनार्हाणां वृषभाणां ये पूर्वक्रमेणाचार्या आलोचका नव भवन्ति तेषां यथासङ्ख्यं प्रायश्चित्तमाह-

**[भा.५९२]** लहुया लहुओ सुद्धो गुरुया लहुओ य अंतिमो सुद्धो ।
छल्लहु चउलहु लहुओ वसभस्स उ नवसु ठाणेसु ॥

**वृ-** वृषभस्यालोचनार्हस्य सिंहानुगादिरूपतया त्रिविधस्य नवसु स्थानेषु नवस्वाचार्येषु आलोचकेषु यथाक्रममिदं प्रायश्चित्तम् । तद्यथा-वृषभस्य सिंहानुगस्य पुरतः सिंहानुगतया आलोचयति आचार्यस्य चत्वारो लघुमासा, वृषभानुगतया आलोचयतो लघुको लघुमासः क्रोष्टुकानुगतया आलोचयन् शुद्धः, वृषभस्य वृषभानुगस्य पुरतः सिंहानुगतया आलोचयन् शुद्धः वृषभस्य क्रोष्टुकानुगतस्य पुरतः

सिंहानुगतयालोचयत आचार्यस्य प्रायश्चित्तं षट्लघवो लघुमासाः भवन्ति वृषभानुगतयालोचयतश्चत्वारो लघुमासाः, क्रोष्टुकानुगतयालोचयतो लघुमासः ।

[भा.५९३] दोहिं वि गुरुगा एते गुरुंमि नियमा तवेन कालेणं ।
वसभंमि य तव गुरुगा कालगुरू होंति भिक्खुंमि ।।

वृ- गुरौ नवप्रकारे आलोचयति नियमादेतानि यथाक्रममनन्तरोदितानि प्रायश्चित्तानि द्वाभ्यां गुरुकाणि प्रतिपत्तव्यानि, । तद्यथा-तपसा कालेन च । वृषभस्यैव सिंहवृषभक्रोष्टुकानुगतया त्रिविधस्यालोचनार्हस्य पुरतो वृषभे नवप्रकारे आलोचयति यथाक्रममनन्तरोदितानि प्रायश्चित्तानि तपसा गुरूणि सामर्थ्यात् कालतो लघूनि वेदितव्यानि, । तथा वृषभस्यैव सिंहवृषभक्रोष्टुकानुगतया त्रिप्रकारस्य पुरतो नवप्रकारे भिक्षावालोचयति यथासङ्ख्यमुक्तानि प्रायश्चित्तानि कालतो गुरूणि सामर्थ्यात्तपसि लघूनि भवंति प्रतिपत्तव्यानि, । तदेवं वृषभमालोचनार्हं प्रतीत्य नवानामाचार्याणां नवानां वृषभाणां नवानां भिक्षूणामालोचयतां प्रायश्चित्तमुक्तम् ।। इदानीं सिंहवृषभक्रोष्टुकानुगतया त्रयाणामालोचनार्हाणां भिक्षूणां ये पूर्वक्रमेणाचार्या आलोचका नव तेषां प्रायश्चित्तस्थानमाह-

[भा.५९४] चउ गुरु चउ लहु सुद्धो अलहु चउ गुरुगा अंतिमो सुद्धो ।
छग्गुरु चउ लहु लहुओ भिक्खुस्स उ नवसु ठाणेसु ।।

वृ- भिक्षोरालोचनार्हस्य सिंहवृषभक्रोष्टुकानुगतया त्रिविकल्पस्य नवसु स्थानेषु नवस्वालोचकेषु यथाक्रममिदं तद्यथा-भिक्षोः सिंहानुगस्य पुरतः सिंहानुगतया आलोचयत आचार्यस्य चत्वारो गुरुकाः, वृषभानुगतया आलोचयतश्चत्वारो लघुका लघुमासाः क्रोष्टुकानुगतयालोचयतो लघुमासः, । सोऽप्यालोचनार्हसद्दशासने प्रतिपत्तव्यः, । उत्कृष्टकस्त्वालोचयन् शुद्धः, एतानि च प्रायश्चित्तानि तपसा कालेन च गुरुकानि द्रष्टव्यानि, । तथा सिंहानुगवृषभानुगक्रोष्टुकानुगरूपाणां त्रयाणामालोचनार्हाणां भिक्षूणां वृषभा अप्यालोचका नव तेषामपि यथाक्रममभून्येव प्रायश्चित्तानि, नवरं तपसा गुरूणि कालतो लघूनि । तथा त्रयाणां सिंहानुगादिरूपाणां भिक्षूणामालोचनार्हाणां भिक्षवोऽप्यालोचका नव तेषामपि यथाक्रममून्येव प्रायश्चित्तानि, नवरं तपसा लघूनि । कालतो गुरूणि । तथा चाह-

[भा.५९५] दोहिं वि गुरुया एते, गुरुंमि नियमा तवेण कालेणं ।
वसभंमि य तव गुरुगा कालगुरू होंति भिक्खुंमि ।।

वृ. गतार्था । सम्प्रति व्याख्या प्रायश्चित्तलक्षणप्रतिपादनार्थमाह-

[भा.५९६] सव्वत्थवि संठाणं अमुंचमाणस्स मासियं लहुयं ।
परठाणंमि य सुद्धो जइ उच्चतरो भवे इयरो ।।

वृ- स्वस्थानं नाम स्वोचितमुपवेशनत आलोचयन्नपि यदि न मुञ्चति । ततस्तदमुञ्चतः सर्वत्रापि सर्वेष्वप्याचार्यत्वादिषु स्थानेषु प्रायश्चित्तं मासिकं लघु । इयमत्र भावना-यथालोचनार्हस्याचार्यस्य सिंहानुगस्य पुरतः सिंहानुग एव सन्नाचार्य आलोचयति, तथा वृषभस्य वृषभानुगस्य वृषभ एव वृषभानुग आलोचयति तथा भिक्षोः क्रोष्टुकानुगस्य भिक्षुरेव क्रोष्टुकानुग आलोचयति तत एतेषु त्रिष्वपि स्थानेषु प्रत्येकं प्रायश्चित्तं मासिकं लघु, । एतच्च मासिया तिन्निसि प्रागेवोक्तं परस्थाने वर्त्तमानः सर्वत्र शुद्धो यदि नीचतरानुगः सन्नालोचयति । इतर आलोचनार्हः पुनरुच्चतरानुगो भवेत् । तदेवं विभागत एकाशीति

विधप्रायश्चित्तमुक्तम् । इदानींमोघतो नवविधं प्रायश्चित्तमाह-

[भा.५९७] चउगुरुयं मासो वा मासा छल्लहुगा चउ गुरुमासो ।
छग्गुरुयं छल्लहुयं चउगुरुयं वा बितिएणं ।।

वृ- सिंहानुगस्य पुरतः सिंहानुगो भूत्वा यद्यालोचयति, ततश्चतुर्गुरु प्रायश्चित्तं; सिंहानुगस्य वृषभानुगीभूयालोचयतो मासलघुः सिंहानुगस्य क्रोष्टुकानुगीभूय पादप्रोञ्छने रजोहरणनिषद्यायां वा स्थितस्यालोचयतो मासलघु, उत्कुटुकः सन् आलोचयन् शुद्धः । वृषभानुगस्य पुरतः सिंहानुगो भूत्वा यद्यालोचयति, ततः षट् लघु षट् मासा लघवः प्रायश्चित्तं, वृषभानुगस्य पुरतो वृषभानुगीभूयालोचयतश्चतुर्गुरु चत्वारो गुरुमासाः, वृषभानुगस्य क्रोष्टुकानुगीभूयालोचयतो मासो लघुमासः, । क्रोष्टुकानुगस्य पुरतो यदि सिंहानुगो भूत्वा आलोचयति ततः षट् गुरु षट् मासा गुरवः क्रोष्टुकानुगस्यैव पुरतो वृषभानुगीभूयालोचयतः षट् लघु षण्मासा लघवः, क्रोष्टुकीभूयालोचयतश्चतुर्गुरु एतच्च सदृशासनपरिग्रहे प्रतिपत्तव्यं यदि पुनरुत्कुटुकः सन्नालोचयति तदा शुद्धः, । अत्रैव व्याप्त्या प्रायश्चित्तलक्षणमाह -

[भा.५९८] सव्वत्थवि समासणे आलोएंतस्स चउगुरू होंति ।
विसमासण निच्चतरे अकारणे अ निसिज्ज मासो ।।

वृ- सर्वत्रापि सिंहानुगे वृषभानुगे क्रोष्टुकानुगे च समे आसने उपविष्टस्य सत आलोचयतः किमुक्तं भवति ? यादृशे आसने निविष्ट आलोचनार्हः आलोचकोऽपि यदि तादृश एवासने उपविष्टः सन्नालोचयति, तदा तस्य प्रायश्चित्तं भवति चतुर्गुरु चत्वारो गुरुमासाः, अत एव प्राक् सिंहानुगस्य पुरतः सिंहानुगस्यैवालोचयतो वृषभानुगस्य पुरतोवृषभानुगस्यालोचयतः, क्रोष्टुकानुगस्य पुरतः क्रोष्टुकानुगस्य समानासनस्यालोचयतश्चतुर्गुरुकमुक्तम्, । अथ विषमे अधिके आसने स्थितः सन् आलोचयति ततः षट् लघु षट् गुरुर्वा, तत्र वृषभानुगस्य पुरतः सिंहानुगस्यालोचयतः षट् लघु, क्रोष्टुकानुगस्य पुरतः सिंहानुगस्यालोचयतः षट् गुरु, । एतच्चानुक्तमपि सामर्थ्यादवसितं, । तत्र विषमे आसने नीचतरे स्थितः सन्नालोचयति । ततः प्रायश्चित्तं मासो लघुमासः । एतच्चाकारणे निषीदतो वेदितव्यम् । कारणे निषीदन् शुद्ध एव । तथा आलोचनाकाले ये शेषा अप्रमार्जनादयो विधयस्तेष्वपि प्रत्येकं प्रायश्चित्तं मासलघु ।

सम्प्रति जे एयाए पट्ठवणाए पट्ठविए निव्विसमाणे पडिसेवितो स विकसिणे तत्थेव आरोहेयव्वे सिया इति तद्व्याख्यानार्थमाह-

[भा.५९९] मासादी पठविए जं अन्नं सेवए तयं सव्वं ।
साहनिऊणं मासा, छद्दिज्जं ते परे झोसो ।।

वृ- प्रागुक्तया प्रस्थापनया प्रायश्चित्तदानलक्षणया प्रस्थापिते प्रायश्चित्तकरणे प्रवर्तिते यदन्यत् मासादि सेवते प्रतिसेवते तत्सर्वं संहृत्य एकत्र मीलयित्वा षण्मासा दीयन्ते । यत्पुनः षण्मासेभ्यः परं तस्य समस्तस्यापि गाथायां सप्तमी षष्ठ्यर्थे झोषः परित्यागः । सूत्रे पट्ठवेत्युक्तं ततः प्रस्थापनाया भेदानाह-

[भा.६००] दुविहा पट्ठवणा खलु एगमनेगा य हो अनेगा य ।
तव तिय परियत्त तिगं तेरस उ जाणि य पयानि ।।

वृ- सा प्रायश्चित्तप्रस्थापना द्विविधा । तद्यथा-एका अनेका च । तत्र या संचयिता सा नियमात्

षाण्मासिकोऽत्येकविधा । सापि स्वभेदाचेन्ताया द्विधा-उद्घाता अनुद्घाता च । अनेका पुनरियं भवति यमित्यादि तत्र पञ्चकादिषु भिन्नमासान्तेषु परिहारतपो न भवति, किन्तु मासादिषु । ततो मासिकमेकं तपः स्थानकं द्वैमासिकादि यावच्चातुर्मासिकमेतत् द्वितीयं तपः स्थानं, पञ्चमासिकं षाण्मासिकं च तृतीयंतपःस्थानं । एतान्यपि प्रत्येकं द्विविधानि । तद्यथा-उद्घातानुद्घातानि च । एतत् तपस्त्रिकं परियित्ततिगं ति प्रव्रज्यापर्यायस्य परावर्त्तः । तस्य त्रिकं परिवर्तत्रिकं तत्र च्छेदत्रिकं मूलत्रिकमनवस्थाप्य त्रिकं च । च्छेदो द्विधा-उद्घातोऽनुद्घातो वा पाराञ्चितमेकमेतानि तपस्त्रिकसहितानि यानि त्रयोदशपदानि एषा पाराञ्चितवर्जा अनेका प्रस्थापना ।

अथैतानि त्रयोदश पदानि प्रागेवाभिहितानि किमर्थमिह पुनरुच्चार्यन्ते ? । उच्यन्ते-स्मरणार्थं, । अथवा यदेतत् प्रस्थापितोऽपि प्रतिसेवते तत् कृत्स्नमनुग्रहकृत्स्नेन निरनुग्रहकृत्स्नेन वा आरोप्यते । प्राक्तत्वं त्वनुग्रहकृत्स्नेनैवारोपितमिति ज्ञापनार्थं । इह अपलिउंचिय पलिउंचिए इत्यादि सूत्रम् । अपलिउंचिए अपलिउंचियामिति प्रथमभङ्गानुगतमित्युक्तम् । एतच्चोपलक्षणं, तेन द्वितीयेन तृतीयभङ्गानुगतेऽपि सूत्रे वक्तव्ये । तच्चैवम्- 'जे भिक्खू चाउम्मासियं वा सातिरेगचाउम्मासियंवा' इत्यादि 'जाव 'अपलिउंचिए अपलिउंचियं', अपलिउंचिए पलिउंचियं, पलिउंचिए अपलिउंचियं, पलिउंचिए पलिउंचियमालोएमाणस्स सव्वमेयं साहणिय जाव आरोहेयव्वे सिया' तृतीयभङ्गानुगतमपि सूत्रमेवमुच्चारणीयम् । नवरं पलिउंचिए अपलिउंचियमालोएमाणस्से ति वक्तव्यं, शेषं तथैवा चतुर्भङ्गानुगतं तु सूत्रं साक्षादाह- 'जे भिक्खू चाउम्मासियं वा सातिरेगचाउम्मासियं वा' इत्यादि । अस्य व्याख्या निरवशेषा प्राग्वत् ज्ञातव्या नवरमेषोऽत्र विशेषः -'पलिउंचिए पलिउंचियमालोएमाणस्स' इति, शेषं तथैव । एवममूनि चत्वारि सूत्राणि चतुर्भङ्गविकल्पेन उक्तानि, एवं मासिकद्वैमासिकादि सूत्राण्यप्युपयुज्य चतुर्भङ्गविकल्पनतः सविस्तरं भणनीयानि । एवं बहुशः शब्दविशिष्टान्यपि प्रथमतश्चतुर्भङ्गविकल्पेन चत्वारिसूत्राणि वक्तव्यानि । तत्र प्रथमभङ्गानुगतसूत्रं प्रागेवातिदेशनत उक्तम् द्वितीयतृतीयभङ्गानुगते सूत्रे प्राग्वद्वक्तव्ये, चतुर्थभङ्गानुगतं सूत्रं साक्षादतिदेशत आह- 'एवं बहुसो वि' इति । एवमनन्तरोदितसूत्रप्रकारेण बहुशोऽपि बहुशः शब्दविशिष्टमपि सूत्रं वक्तव्यम् । तद्यथा-जे भिक्खू बहुसो चउमासियं वा बहुसो सातिरेगचाउम्मासियं वा बहुसो पंचमासियं वा बहुसो सातिरेगपंचमासियं वा । एएसिं परिहारठाणाणं अनयरं परिहारठाणं पडिसेवित्ता आलोएज्जा अपलिउंचिय आलोएमाणे ट्ठवणिज्जं ठवयित्ता करणिज्जं वेयावडियं ठविए पडिसेवित्ता । सेवि कसिणे तत्थेव आरुहेयव्वे सिया, पुव्वं पडिसेवियं पुव्वं आलोइयं जाव पच्छा पडिसेवियं पच्छा आलोइयं अपलिउंचिय अपलिउंचियं जाव पलिउंचिए पलिउंचिय आलोएमाणस्स सव्वमेयं सकयं साहणियं जे एयाए पट्ठवणाए जाव तत्थ आरोहव्वे सिया इति तदनन्तरं मासिकद्वैमासिकादीन्यपि सूत्राणि सम्यगुपयुज्य विस्तरतोऽनेकानि वक्तव्यानि । आह-से वि तत्थेव आरोहेयव्वे सिया, पुव्वं पडिसेवियं पुव्वं आलोइयं जाव पच्छा आलोइयं अपलिउंचिय जाव पलिउंचिए पलिउंचिय आलोएमाणस्स सव्वमेयं सकयं साहणियं जे एयाए पट्ठवणाए जाव तत्थ आरोहव्वे सिया इति तदनन्तर मासिकद्वैमासिकादीन्यपि सूत्राणि सम्यगुपयुज्य विस्तरतोऽनेकानि वक्तव्यानि । आह-से वि तत्थेव आरोहेयव्वे सिया इत्युक्तं तत्र कति भेदा आरोपणाया ? उच्यते-पञ्च । तथा चाह-

**[भा. ६०१]** पट्ठविितिया ठ्ठविया कसिणा कसिणा तहेव हाडहडा ।

आरोवण पंचविहा पायच्छित्तं पुरिसजाते ।।

**वृ-** आरोपणा पञ्चविधा पञ्चप्रकारा, तद्यथा-प्रस्थापनिका, स्थापिता, कृत्स्ना, अकृत्स्ना, हाडहडा च । एषा पञ्च प्रकाराप्यारोपणा प्रायश्चित्तस्य । तत्र प्रायश्चित्तं पुरुषजाते कृतकरणादौ यथायोग्यमवसेयमेव गाथासंक्षेपार्थः । इदानीमेनामेव गाथां व्याख्यानयन् प्रथमतः प्रस्थापनिकादि भेदचतुष्टयं व्याख्यानयति-

**[भा.६०२]** पट्ठवितियावहंते वेयावच्चट्ठिया ठवितियाउ ।
कसिणा झोसविरहिया जहिं झोसो सा अकसिणाउ ।।

**वृ-** यदारोपितं प्रायश्चित्तं वहति एषा प्रस्थापितिकारोपणा, या वैयावृत्यकरणलब्धिसम्पन्न आचार्यप्रभृतीनां वैयावृत्यं कुर्वन् यत् प्रायश्चित्तमापन्नस्तस्यारोपितमपि स्थापितं क्रियते, यावत् वैयावृत्य परिसमाप्तिर्भवति । द्वौ योगावेककालं कर्तुमसमर्थ इति कृत्वा सा आरोपणा स्थापनिका; कृत्स्ना नाम यत्र झोषो न क्रियते । अकृत्स्ना यत्र किञ्चित् झोष्यते । हाडहडा त्रिविधा, तद्यथा-सद्योरूपा स्थापिता प्रस्थापिता च । तत्रेयं सद्योरूपा-

**[भा.६०३]** उग्घायमणुग्घायं मासादितवाओदिज्जए सव्वं ।
मासादीनि क्खित्तं, जं सेसं तं अनुग्घायं ।।

**वृ-** उद्घातं लघु अनुद्घातं गुरु यत्मासादि मासिकमादिशब्दात् द्वैमासिकं त्रैमासिकं वा इत्यादि तप आपन्नस्तद्यदि सद्यस्तत्कालं दीयते । न कालक्षेपेण तदा सा हडाहडा आरोपणा सद्योरूपा । यदि पुनर्यन्मासादिकमापन्नस्तत् वैयावृत्यमाचार्यादीनां करोतीति स्थापितं क्रियते । तस्मिंश्च स्थापिते यदन्यत् शेषमुद्घातमनुद्घातं वा पद्यते तत्सर्वमपि प्रमादनिवारणार्थमनुद्घातं दीयते, सा हाडहडा आरोपणा स्थापिता । प्रस्थापितायाः स्वरूपमाह-

**[भा.६०४]** छम्मासादि वहंते अंतरे आवन्न जा उ आरुवणा ।
सा होति अनुग्घाया तिन्नि विगप्पा उ चरिमाए ।।

**वृ-** षाण्मासिकं तपो वहन्, आदिग्रहणात्पाञ्चमासिकं चातुर्मासिकं त्रैमासिकं द्वैमासिकं वा वहन् अन्तरा यदन्यदापद्यते उद्घातमनुद्घातं तत्तस्यातिप्रमादनिवारणार्थमनुग्रहकृत्स्नेन चानुद्घातं यदारोप्यते एषा हाडहडा आरोपणा प्रस्थापिता । एते त्रयो विकल्पाश्चरमाया हाडाहडाया अथवा इमे त्रयो विकल्पाः -

**[भा.६०५]** सा पुन जहन्न उक्कोस मज्झिमा तिन्नि विगप्पा ।
मासो छम्मासा वा अजहन्नुक्कोसजेमज्झे ।।

**वृ-** सा हाडहडा आरोपणा त्रिविधा, तद्यथा-जघन्या मध्यमा उत्कृष्टा च । एते त्रयो विकल्पा हाडहडाया भवन्ति । तत्र गुरुको मासो जघन्या 'षण्मासा गुरव उत्कृष्टा । एतयोर्द्वयोर्मध्ये ये गुरुद्विमासादयो गुरुमासपञ्चकपर्यन्ता एषा जघन्योत्कृष्टा हाडहडा सा चतुर्विकल्पा, तद्यथा-द्वैमासिकं गुरुकं, त्रैमासिकं गुरुकं चातुर्मासिकं गुरुकं पाञ्चमासिकं गुरुकमिति । सम्प्रति यत्प्रागुक्तं प्रायश्चित्तं पुरुषजाते इति तद्व्याख्यातुकामः प्रस्तावनामाह-तालपलंबादि आमेतालमलंबेत्यादिना समस्तेन कल्प ग्रन्थेन । आदिशब्दस्यानेकाभिधायकत्वात् व्यवहाराध्ययनेनापि यः प्रायश्चित्तराशिरुक्तो वक्ष्यते च तस्य समस्तस्यापि यथायोगमिमे वक्ष्यमाणाः कृतकरणादयः पुरुषु वहत्का वहमानकाः । ते च यद्यपि प्रागुक्तास्तथापि प्रकरणानुरोधात् भूय आह-

[भा.६०६] कयकरणा इयरे य सावेक्खा खलु तहेव निरवेक्खा ।
निरवेक्खा जिनमाई सावेक्खा आयरियमादी ।।

वृ- एतत्प्रभृतिका गाथा यद्यपि प्रागपि व्याख्याता तथापि मूलटीकाकारेणापि भूयो व्याख्याता इति तन्मार्गानुसारतः स्थानाशून्यार्थं वयमपि लेशेन व्याख्यामः-तत्र प्रायश्चित्तस्य वहमानकाः पुरुषा द्विविधास्तद्यथा-कृतकरणा अकृतकरणाश्च । तत्र ये षष्ठाष्टमादितपो भाविातास्ते कृतकरणास्त द्विलक्षणा इतरे । तत्र ये कृतकरणास्ते द्विविधास्तद्यथा-सापेक्षाः तथैव खलु निरपेक्षाः । तत्र ये गच्छं शरीरं वापेक्षन्ते ते सापेक्षा, ये पुनर्गच्छं शरीरं वा नापेक्षन्ते ते निरपेक्षाः । तत्र निरपेक्षा जिनादयो जिनकल्पिका आदिशब्दात् शुद्धपारिहारिका यथालन्दिकाः प्रतिमाप्रतिपन्नाश्च, एते नियमतः कृतकरणाः । सापेक्षाः त्रिविधा आचार्यादयः, आचार्योपाध्याया भिक्षवश्चेत्यर्थः ।

[भा.६०७] अकयकरणा य दुविहा अनहिगहिया अहिगयाओ बोधव्वा ।
जं सेवेइ अहिगतो अनहिगए अत्थिरे इच्छा ।।

वृ- अकृतकरणा द्विविधा-अनधिगता अधिगताश्च । तत्र येऽग्रहीतसूत्रार्थास्ते अनधिगता गृहीतसूत्रार्थास्त्वधिगताः । तत्र योऽधिगत उपलक्षणमेतत् कृतकरणो धृतिसंहननयुक्तश्च यत्सेवते प्रायश्चित्तस्थानं तस्य तत्परिपूर्णं दीयते । यः पुनरनधिगतोऽस्थिरोऽधिकृतकरणो धृतिसंहननविहीनश्च तस्य यदापन्नं तद्वा परिपूर्णं दीयते । यदि वा ह्रस्वतरं यद्वा सर्वात्मनाझोषस्तया चाहानधिगतेऽस्थिरे उपलक्षणमेतत् अकृतकरणे धृतिसंहननविहीने च गुरोः प्रायश्चित्तदानविधाविच्छा श्रुतोपदेशानुसारतः कदाचित् यदापन्नं तदेव कदाचित् हीनं कदाचित् स्तोकं कदाचित् सर्वथा झोष इति भावः । सम्प्रति पुरुषभेदमार्गणामेव प्रकारान्तरेणाह-

[भा.६०८] अहवा सावेक्खियरे निरवेक्खो नियम सा उ कयकरणा ।
इयरे कया कयावि य थिराथिरा होंति गीयत्था ।।

वृ- अथवा द्विविधाः प्रायश्चित्तस्यवहमानकाः पुरुषास्तद्यथा-सापेक्षा इतरे च निरपेक्षास्तत्र ये निरपेक्षास्ते नियमसा उ इति, नियमतः कृतकरणा उपलक्षणमेतत् ततः कृतकरणादिसमस्तगुणोपेता इत्यर्थः । इतरे सापेक्षास्ते त्रिविधा-आचार्योपाध्यायभिक्षुभेदात् । ते प्रत्येकं द्विधास्तद्यथा-कृतकरणा अकृतकरणाश्च । पुनः प्रत्येकं द्विधा-अधिगता अनधिगताश्च गीतार्था अगीतार्थाश्चेत्यर्थः । गाथायां गीतार्थग्रहणमुपलक्षणं तेनागीतार्था अप्युपात्ता द्रष्टव्याः । भूयः प्रत्येकं द्विविधास्तद्यथा-स्थिरा अस्थिराश्च तत्र ये चरकादिभिर्दर्शनतः परीषहोपसर्गैः चरणतोऽतिकर्कशप्रायश्चित्तदानतः स्वभावतो वा न चाल्यन्ते ते स्थिरास्तद्विपरीता अस्थिराः । साम्प्रतं कृतकरणस्वरूपमाह-

[भा.६०९] छट्ठट्ठमाइएहिं कयकरणा ते य उभय परियाए ।
अहिगयकयकरणत्तं जोगा य तवारिहा केई ।।

वृ- ये उभयपर्याये गृहस्थपर्याये श्रामण्यपर्याये च षष्टाष्टमादिभिः परिकर्मितशरीरास्ते कृतकरणा इतरेऽकृतकरणाः । केचिदाचार्या येऽधिगतास्तेषां नियमतः कृतकरणत्वमिच्छन्ति । कस्मादिति चेदत आह-जोगा य तवारिहा इति, यतस्तैर्महाकल्पश्रुतादीनामायता दीर्घकाला योगा व्यूढाः ।

[भा.६१०] सव्वेसिं अविसिट्ठा आवत्ती तेन पढमया मूलं ।
सावेक्खे गुरुमूलं कयाकए होइ चछेदो उ ।।

[भा.६११] सावेक्खोत्ति च काउं गुरुस्स कयजोगिणो भवे च्छेदो ।
अकयकरणं मिच्छगुरु इइ अट्ठो कंतीए नेयं ।।

वृ- इह ये निरपेक्षास्ते यत् प्रायश्चित्तस्थानमापद्यन्ते तदेव तेभ्यो दीयते । गुरुलाघवचिन्तया अपवादपदेनान्यत् तेषां निरनुग्रहत्वात् । ततः सापेक्षाणामयं प्रायश्चित्तदानविधिः । तत्र महत्यप्यपराधे सापेक्षाणां मूलं नानवस्थाप्यं पाराञ्चितं वा । तयोर्निरपेक्षाणामेव सतां दानभावात् । तेन प्रथमतया सर्वेषां मूलमविशिष्टमाधिकृत्य गुरुलाघवचिन्तायां प्रायश्चित्तदानविधिरुच्यते । तत्र सापेक्षे गुरौ आचार्ये गाथायामत्र विभक्तिलोपः प्राकृतत्वात् । कृते कृतकरणे मूलं, अकृतेऽकृतकरणे च्छेदः । सावेक्खोत्ति च काउमित्यादि अत्र गुरुशब्देनोपाध्याय उच्यते आचार्यस्योक्तत्वात् । गुरोरुपाध्यायस्य कृतयोगिनः कृतकरणस्य मूलं प्रायश्चित्तमापन्नस्यापि सापेक्ष इति कृत्वा प्रायश्चित्तं च्छेदो भवति । अकृतकरणे तु तस्मिन्नेवोपाध्याये मूलमापन्ने प्रायश्चित्तं षट् गुरुकाः गुरवः । षण्मासाः अकृतकरणतया च्छेदस्यानर्हत्वात् एवममुना प्रकारेण 'अट्ठोकंतीए' इति अधापक्रान्त्या प्राग् व्याख्यानरूपया नेयं । तद्यथा भिक्षोरधिगतस्य कृतकरणस्य षट् गुरवः अकृतकरणस्य षट् लघवः अस्थिरस्य कृतकरणस्य षट् लघवः अकृतकरणस्य षट् लघवः अकृतकरणस्य तस्यैव चतुर्गुरवः अनधिगतस्य स्थिरस्य कृतकरणस्य चतुर्गुरवः । तस्यैवाकृतकरणस्य चतुर्लघवः । अस्थिरस्य कृतकरणस्य चतुर्लघवः । तस्यैवाकृतकरणस्य गुरुमासः एवं मूलापत्तौ मूलादारभ्य मासगुरुके समाप्तम् । छेदापत्तौ च्छेदादारभ्य मासलघुके निष्ठितिः, षट् गुरुकादारभ्य भिन्नमासे गुरुके षट् लघुगुरुकादारभ्य लघुके भिन्नभिन्नमासे चतुर्गुरुकादारभ्य गुरुविंशतिरात्रिंदिवेषु चतुर्लघुकादारभ्य लघुविंशतिरात्रिंदिवेषु मासगुरुकादारभ्य लघुके भिन्नभिन्नमासे चतुर्गुरुकादारभ्य गुरुविंशतिरात्रिंदिवेषु चतुर्लघुकादारभ्य लघुविंशतिरात्रिंदिवेषु मासगुरुकादारभ्य गुरुषु पञ्चदशरात्रिंदिवेषु मासलघुकादारभ्य लघुपञ्चदशरात्रिंदिवेषु भिन्नमासगुरुकादारभ्य गुरुषु दशरात्रिंदिवेषु भिन्न मासलघुकादारभ्य लघु दशरात्रिंदिवेषु गुरुविंशतिरात्रिंदिवेभ्य आरभ्य गुरुपञ्चरात्रिं दिवेषु लघुविंशतिरात्रिंदिवेभ्य लघुपंचरात्रिं दिवेषु, गुरुपंचदशरात्रिं दिवेभ्यो दशमे, लघुपंचदशरात्रिं दिवेभ्योऽष्टमे, गुरुदशरात्रिंदिवेभ्य आरभ्य षष्ठे लघुदशरात्रिंदिवेभ्य आरभ्य चतुर्थे, गुरुपंचरात्रिंदिवेभ्य आरभ्य आयामाम्ले लघुपञ्चरात्रिं दिवेभ्यः आरभ्य एकाशने दशमादारभ्य पूर्वार्धेऽष्टमादारभ्य निर्विकृतिके सम्प्रति 'जं सेवेइ अहिगतो' इत्यादि यत् गाथोत्तरार्धं प्रागुक्तं तद्व्याख्यानार्थमाह-

[भा.६१२] अकयकरणा उ गीया जे अगीया य अकय अथिरा य ।
ते सावत्ति अनंतर बहुयंतरियं च झोसोवि ।।

वृ- ये गीता गीतार्थाः अकृतकरणाः ये चागीता अगीतार्था अकयत्ति य कृतकरणाश्चशब्दात् कृतकरणाश्च अस्थिराश्च कृतकरणाऽकृतकरणाश्च तेषां कदाचिदापत्ति प्रायश्चित्तं दीयते । कदाचित्तथाविधायामसमर्थतायां यदापन्नं प्रायश्चित्तं तस्य अर्वाकृतनमनन्तरं दीयते । कदाचित् प्रभूतायामसमर्थतायां बह्वन्तरितमत्यन्तमसमर्थतायां झोषो वा । अत्र शिष्यः प्राह-ये निरपेक्षास्ते एकविधा ये सापेक्षास्तेषां किं निमित्तस्त्रिविधो भेदस्तत आह-

[भा.६१३] कारणमकारणं वा जयणा अजयणा नवत्थगीयत्थे ।
एएण कारणेणं आयरियाई भवे तिविहा ।।

वृ- इदं प्रतिसेवनायाः कारणमिदमकारणं । किमुक्तं भवति ? यादृशे कारणे प्रतिसेवना क्रियते यादृशे

च न क्रियते इत्येतत् परिज्ञानं । तथा इयं यतना इयमयतना इत्येतदपि नास्ति अगीतार्थऽगीतार्थस्य, अर्थात् गीतार्थस्यास्तीति प्रतीयते तत्राचार्योपाध्यायौ गीतार्थाविव भिक्षुर्गीतार्थः अगीतार्थश्च गीतार्थस्यागीतार्थस्य च कारणे यतनया कारणे अयतनया अकारणे यतनया अकारणे अयतनया पृथक् अन्यत् प्रायश्चित्तं । तथा तुल्येऽपि प्रायश्चित्ते आपद्यमाने सहासहपुरुषाद्यपेक्षया पृथगन्योन्यादान-विधिरेतेन कारणेन त्रिविधा आचार्यादयो भवन्ति । किं चान्यत्-

[भा.६१४] तिविहे तेगिच्छंमि उ उज्जुय वाउलण साहणा चेव ।
पन्नवणमणिच्छंते दिठ्ठंतो भंडिपोएहिं ।।

वृ- त्रिविधे त्रिप्रकारे आचार्योपाध्यायभिक्षुलक्षणे विचिकित्से चिकित्स्यमाने गीतार्थ इति गम्यते । ऋजुकं स्फुटमेव प्रावृतसाधनाव्यापृतक्रियाकथनं । इयमत्र भावना- आचार्याणामुपाध्यायानां गीतार्थानां च भिक्षूणां चिकित्स्यमानानां यदि शुद्धं प्रासुकमेषणीयं लभ्यते तदा न तत्र विचारः । अथ प्रासुकमेषणीयं न लभ्यते, अथ चावश्यं चिकित्सा कर्तव्या तदा अशुद्धमप्यानीय दीयते, तथाभूतं चानीय दीयमानं स्फुटमेव कथनीयं इदमेवंभूतमिति । गीतार्थत्वेनापरिणामदोषस्यातिपरिणामदोषस्यासंभवात् अगीतार्थस्य पुनर्भिक्षोः शुद्धालाभे चिकित्सामशुद्धेन कुर्वंतो मुनिवृषभा यतनया कुर्वन्ति । न चाशुद्धं कथयन्ति । यदि पुनः कथयन्ति अयतनया वा तदा सोऽपरिणामत्वादनिच्छन् अनागाढादिपरितापन-मनुभवति, तन्निमित्तं प्रायश्चित्तमापतति मुनिवृषभाणां, यद्वा अतिपरिणामकतया सोऽतिप्रसङ्गं कुर्यात् तस्मान्न कथनीयं नाप्ययतना कर्तव्या । अथ कथमपि तेनागीतार्थेन भिक्षुणा ज्ञातं भवति, यथा अकल्पिकमानीय मह्यं दीयते, तदा तस्मिन्ननिच्छति अगीतार्थे भिक्षौ प्रज्ञापनादि क्रियते । यथा ग्लानार्थं यदकल्पिकमपि यतनया सेव्यते तत्र शुद्धो ग्लानो यतनया प्रवृत्तेरल्पीयान् दोषोऽशुद्धग्रहणात् सोऽपि पश्चात् प्रायश्चित्तेन शोधयिष्यते, एवंरूपा च प्रज्ञापना क्रियते तरुणे दीर्घायुषि, यस्तु वृद्धस्तरुणो वाऽतिरोगग्रस्तोऽचिकित्सनीयः स भक्तप्रत्याख्यानं प्रति प्रोत्साह्यते । यदि पुनः प्रोत्साह्यमानोऽपि न प्रतिपद्यते तदा भण्डीपोताभ्यां दृष्टान्तः कर्तव्यः । सम्प्रति भण्डीपोतावेव दृष्टान्तावाह-

[भा.६१५] जो एगदेसे अदढाउ भंडी सीलप्पए सा उ करेइ कज्जं ।
जा दुब्बला संठवियाविसंती न तं तुसीलंति विसन्नदारुं ।।

[भा.६१६] जो एगदेसे अदढो उ पोतो सीलिज्जते सो उ करेइ कज्जं ।
जो दुब्बलो संठवितो वि संतो न तं तु सीलंति विसन्नदारुं ।। (कण्ठ्यम्)

[भा.६१७] एसे व गमो नियमा समणीणं दुगविवज्जितो होइ ।
आयरियादीण जहा पवित्तिणमादीण वि तहेव ।।

वृ- यो गमोऽनन्तरोदित मूलसूत्रादारभ्य श्रमणानामभिहित एष एव गमो नियमात् संयतीनामपि वक्तव्यः । किमविशेषेण ? नेत्याह- द्विकवर्जितः पाराञ्चितानवस्थाप्य लक्षणद्विकवर्जितो भवति वक्तव्यः । तदापन्नावपि तासां तयोर्दानाभावात् उपलक्षणमेतत् । परिहारतपोऽपि तासां न भवति यथा च आचार्यादीनां त्रिविधो भेद उक्तस्तथा प्रवर्तिन्यादीनामपि त्रिविधो भेदोऽभिक्षुस्थानीया भिक्षुकी चेति,। तदेवं मूलसात्रादारभ्य यत् प्रकृतं तत् परिसमाप्तम् ।। तत्र परिहारिकापारिहारविषयं सूत्रमाह-

*मू. (१९) बहवे परिहारियाऽपरिहारिया इच्छेज्जा- एगंतओ अभिनिसिज्जं वा अभिनीसिहं वा चेएत्तए, नो से णं कप्पति थेरे अनापुच्छित्ता एगंतओ अभिनिसिज्जं वा अभिनीसिहं वा चेइत्तए; कप्पइ ण्हं थेरे*

*आपुच्छित्ता ते एगंतओ अभिनिसेज्जं वा अभिनिसीहियं वा चेइत्तवाए, थेराय ण्हं से नो वियरिज्जा एवं ण्ह कप्पइ अभिनिसेज्जं वा अभिनिसीहियं वा चेतेतए । थेरा य ण्हं से नो वितरेज्जा - एवं ण्हं नो कप्पइ एगंतओ अभिनिसेज्जं वा अभिनिनिसीहियं वा चेतेतए । जो नो थेरे हिं अवितिण्हं अभिनिसिज्जं वा अभिनिसीहियं वा चेतेति से संतरा छेदे वा परिहारे वा ।।*

**वृ.** बहवे पारिहारिया इत्यादि । अथ कोऽस्य सूत्रस्य पूर्वसूत्रेण सह सम्बन्धः ? उच्यते - इहानन्तरसूत्रे परिहारतप उक्तं, परिहारश्च परिहर्तव्यापेक्षया प्रतिषेध्यानान्तरीयकत्वात् । ततः परिहारग्रहणेन परिहारोऽप्याक्षिप्तस्तत्र ये परिहारेण चरन्ति तेपरिहारिका इतरे वा पारिहारिकाः । पूर्वसूत्रं च पारिहारिकविषयमतस्तत्प्रकरणानुरोधत इदं पारिहारिकापारिहारिकविषयं सूत्रं पठन्ति । अथवा पूर्वसूत्रे पारिहारिकस्य सामाचारी उक्ता । सा च न निरवशेषा किन्तु शेषमवतिष्ठते । तत्रापारिहारिकाणामपि साधारणमतस्तत्प्रतिपादनार्थं पारिहारिकापारिहारिकविषयं सूत्रमुक्तवान् । तथा चाह-

**[भा.६१८]** पारिहारियाण उ विना हवंति इयरेहिं वा अपरिहारी ।
मेरावसेसकहणं इइमिस्सगसुत्तसंबंधो ।।

**वृ.** - पारिहारिका उक्तशब्दार्था न तु नैव इतरैरपारिहारिकैर्विना भवन्ति । परिहारिकस्य अपरिहारिणानान्तरीयकत्वात् । अपरिहारिणो वा इतरैः परिहारिकैर्विना न भवन्ति । अपरिहारस्यापि परिहारानान्तरीयकत्वात् । तत्पारिहारिकसूत्रानन्तरं पारिहारिकापारिहारिकविषयं सूत्रं तथा मेरा मर्यादा सामाचारीत्यर्थः । सा पूर्वसूत्रे पारिहारिकाणामुक्ता किञ्चिच्छेषमपारिहारिकसाधारणमवतिष्ठते । तस्य सामाचार्यविशेषस्य कथनमनेन सूत्रेणारभ्यते क्रियते इति, एष मिश्रकसूत्रस्य पारिहारिकापारिहारिकसूत्रस्य पूर्वसूत्रेण सम्बन्धः । अनेन सम्बन्धेनायातस्येयं व्याख्या । बहवस्त्रिप्रभृतयोऽनेके पारिहारिका उक्तशब्दार्थाः बहवोऽपारिहारिका इच्छेयुरेकान्त एकान्ते विविक्तप्रदेशान्तरे वसत्यंतरे वा अभिनिषद्यां अभिरात्रिमभिव्याप्य स्वाध्यायनिमित्तमागता निषीदत्यस्यामित्यभिनिषद्या तां वा तथा निषेधः । स्वाध्यायव्यतिरेकेण सकलव्यापारप्रतिषेधः तेन निवृत्ता नैषेधिकी अभि आभिमुख्येन संयतप्रायोग्यतया नैषेधिकी अभिनैषेधिकी तां वा । इयमत्र भावना । तत्र दिवा स्वाध्यायं कृत्वा रात्रौ वसतिमेव साधवः प्रतियन्ति सा अभिनैषेधिकी । अभिनैषेधिकयामेव स्वाध्यायं कृत्वा रात्रिमुषित्वा प्रत्यूषे वसतिमुपगच्छन्ति सा अभिनिषद्येति तामभिनिषद्यामभिनैषेधिकी वाचेतितए इति गन्तुं तत्र नो नैवमेतेषां पारिहारिकाणामपारिहारिकाणां च कल्पते स्थविरानाचार्यादीन् अनापृच्छ्य एकान्त एकान्ते विविक्ते प्रदेशे वसत्यन्तरे वा भिनिषद्यामभिनैषेधिकी वा गन्तुं, उच्छ्वासनिःश्वासव्यतिरेकेण शेष साधुव्यापाराणां समस्तानामपि गुरुपृच्छाधीनत्वात् । तदेवं प्रतिषेधसूत्रमभिधाय सम्प्रति विधिसूत्रमाह- 'कप्पतिण्हं थेरे आपुच्छित्ता' इत्यादि सुगमं । इह पारिहारिका नाम आपन्नपरिहारतपसोऽभिधीयन्ते । तत्र चोदकः प्राह-

**[भा.६१९]** पुव्वंसि अप्पमत्तो, भिक्खू उववन्निती भयंतेहिं ।
एक्को व दुवे होज्जा बहुया उ कहं समावन्ना ।।

**वृ.** - पूर्वस्मिन्कल्पनाम्नि अध्ययने भिक्षुरप्रमत्तो भदन्तैः परमकल्याणयोगिभिरुपवर्णितः, ततः कथं परिहारतपः प्रायश्चित्तापत्तिर्यतः पारिहारिका भवेयुः । अपि च एको द्वौ वा परिहारतप आपद्येयातामेकस्य एकाकिदोषाणां द्वयोरसमासकल्पदोषाणां संभवात् । ये च बहवस्ते च समासकल्पकल्पत्वात्

परस्परक्षणपरायणाः कथं पारिहारिकित्वं समापन्ना इति, अत्राचार्य आह-

[भा.६२०] चोयग बहुउप्पत्ती जोहाव जहा तहा समणजोहा ।
दव्वच्छलणे जोहा, भावच्छलणे समणजोहा ।।

वृ- हे चोदक परीषहाणामसहनेन श्रोत्रेन्द्रियादिविषयेष्विष्टानिष्टेषु रागद्वेषाभिगमनतो वा परिहारतपः प्रायश्चित्तस्थानापत्त्या बहूनां पारिहारिकाणामुत्पत्तिर्न विरुद्धा । अथवा यथा योधाः सन्नद्धबद्धकवचा अपि रणप्रविष्टाः प्रति पन्थिपुरुषैस्तथाविधं कमप्यवसरमवाप्य देशतः सर्वतो वा च्छल्यन्ते तथा श्रमणयोधा अपि मूलगुणोत्तरगुणेष्वत्यन्तमप्रमत्ततया यतमाना अपि च्छलनामाप्नुवन्ति । सा च च्छलणा द्विधा-द्रव्यतो भावतश्च । द्रव्यतश्छलना खड्गादिभिर्भावतः परीषहोपसर्गाद्यैः । तत्र द्रव्यच्छलने द्रव्यतच्छलन विषया योधा रणे प्रविष्टा भटाः । भावच्छलने भावच्छलनविषया श्रमणयोधाः । सम्प्रति यदुक्तं यथा योधास्तथा श्रमणयोधा इति तत् व्याख्यानयति-

[भा.६२१] आवरिया वि रणमुहे जहा च्छलिज्जंति अप्पमत्ता वि ।
च्छलनावि होइ दुविहा जीयंतकरी य इयरी य ।।

वृ- यथा योधा आवृता अपि सन्नद्धसन्नाहा अपि अप्रमत्ता अपि च रणमुखे प्रविष्टाः प्रतिभटैश्छल्यन्ते। सा च च्छलना द्विधा-जीवितान्तकरी इतरा च । तत्र यया जीविताद् व्यपरोप्यते सा जीवितान्तकरी । यया तु परितापनाद्यापद्यते न प्रद्रावणं सा इतरा-

[भा.६२२] मूलगुण उत्तरगुणे जयमाणा वि हु तहा छलिज्जंति ।
भावच्छलनाए जति सा वि य देसे य सव्वे य ।।

वृ- तथा यतयो रागादिप्रतिपक्षभावनासन्नहन्या (सन्नाह) सन्नद्धा यथागमं मूलगुणेषूत्तरगुणेषु चात्यप्रमत्ततया यतमाना अपि हु निश्चित्तं भावच्छलनया परीषहोपसर्गादिभिः सन्मार्गच्यावनरूपया च्छल्यन्ते, । सापि च भावच्छलना द्विधा-देशतः सर्वतश्च । तत्र यया तपोऽर्हं प्रायश्चित्तमापद्यते, सा देशतो भावच्छलना, यया मूलमाप्नोति सा सर्वत एवं परिहारियाहरियहोज्ज बहुयतो ते एगतो निसीहिं अभिसिज्जं वा चिवेएज्जा यतो रणे प्रविष्टा योधा इव श्रमणयोधा अपि परीषहादिभिश्छल्यन्ते । तत एवमुक्ते न प्रकारेण बहवः पारिहारिका अपरिहारिकाश्च भवेयुस्तदेवं पारिहारिकापारिहारिकबहुत्व-मुपपाद्याधुना सूत्रावयवान् व्याचिख्यासुराह-ते एगं तो इत्यादि ते बहवः पारिहारिका अपरिहारिका वा एकान्तत एकान्ते विविक्ते प्रदेशे प्रत्यासन्ने दूरतरे वा नैषेधिकीमभिशय्यां वापि अभिनिषद्यामपि चेतयेयुर्गच्छेयुः, गन्तुमिच्छेयुरित्यर्थः । तत्र का नैषेधिकी का वा । अभिशय्येति व्याख्यानयति-

[भा.६२३] ठाणं निसीहियत्ति य एगट्टं जत्थ ठाणमेवेगं ।
चेतेति निसिदिया वा सुत्तत्थ निसीहिया सा उ ।।

[भा.६२४] सज्झायं काऊणं निसीहियातो निसिं चिय उवेंति ।
अभिवसिउं जत्थ निसिं, उवेंति पातो तई सेज्जा ।।

वृ- तिष्ठन्ति स्वाध्यायव्यापृता अस्मिन्निति स्थानं, निषेधेन स्वाध्यायव्यतिरिक्तशेषव्यापार-प्रतिषेधेन निर्वृता नैषेधिकी, । ततः स्थानमिति वा नैषेधिकीति वा एगट्ठमिति एकार्थं, द्वावप्येतौ तुल्यार्थाविति भावः, । व्युत्पत्त्यर्थस्य द्वयोरप्यविशिष्टत्वात् । तत्र यत्र स्थानमेव स्वाध्यायनिमित्तमेकं न तु ऊर्ध्वं स्थानं त्वग्वर्तनस्थानं वा चेतयन्ति निशि रात्रौ दिवा वा सा सूत्रार्थहेतुभूता नैषेधिकी, सूत्रार्थ

नैषेधिकी एतेनास्मिन् या नैषेधिक्युक्ता सा सूत्रार्थप्रायोग्या नैषेधिकी प्रतिपत्तव्या । न तु कालकरणप्रायोग्या नैषेधिकी प्रतिपत्तव्या, । किमुक्तं भवति ? यस्यां नैषेधिक्यां दिवा स्वाध्यायं कृत्वा दिवैव यदि वा दिवा निशि च स्वाध्यायं कृत्वा निश्येव निशायाममश्वं नैषेधिकीतो वसतमिपयन्ति सा अभिनैषेधिका यस्यां पुनर्नैषेधिक्यां दिवा निशायां वा स्वाध्यायं कृत्वा रात्रिमुषित्वा प्रातर्वसतिमुपयन्ति तई इति तका अभिशय्या अभिनिषद्येति भावः । अथ स्थविरा आपृष्टा अपि यदा तमुत्कलन्ति तदा किं कल्पते न वेत्याशङ्कायामाह-थेरायण्हमित्यादि स्थविरा आचार्यादयः । चशब्दो वाक्यभेदे, ण्हमिति वाक्यालङ्कारे स तेषां पारिहारिकाणामपरिहारिकाणां वा वितरेयुजानीयुरभिनैषेधिकीमभिशय्यां वा गन्तुं एवममुना प्रकारेण ण्हमिति पूर्ववत्कल्पते । अभिशय्यायामभिनैषेधिक्यां वा चेतेत्तए इति गन्तुम् ।

थेराण्हमित्यादि स्थविरा ण्हमिति प्राग्वत् नो नैव तेषां वितरेयुरेवममुना प्रकारेण नो कल्पते एकान्ततो निषद्याम भिनिषद्यामभिनैषेधिकी वा गन्तुं । जेणल्यिंदि यः पुनर्ण्हमिति वाक्यालंकृतौ स्थविरैरवितीर्णोऽननुज्ञातः सन् एकान्ततो अभिनिषद्यामभिनैषेधिकी वाचेतेति-गच्छति । ततः से तस्य स्वान्तरस्त्वकृतमन्तरं स्वान्तरं तस्माद्यावन्न मिलति यावद्वा स्वाध्यायभूमेर्नोत्तिष्ठति तावत् यत् विद्यालं तदन्तरं तस्मात् स्वकृतादन्तरात् च्छेदो वा पञ्चरात्रिंदिवादिकः परिहारो वा परिहारतपो वा मासलघुकादिरेषसूत्रार्थः, अधुना निर्युक्तिविस्तरः -

[भा.६२५] निक्कारणंमि गुरुगा कज्जे लहुया अपुच्छणे लहुओ ।
पडिसिहम्मि य लहुया गुरुगमणे होंति अनुग्घाया ।।

वृ- यदि निष्कारणे कारणाभावे अभिशय्यामभिनैषेधिकी वा गच्छन्ति ततस्तेषां प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासाः अथ कार्ये समुत्पन्ने गच्छन्ति, तत्र प्रायश्चित्तं लघुकाश्चवारो लघुमासाः, कार्यमुपरिष्टात् भाष्यकृद्वर्णयिष्यति । यदि पुनः कार्ये समुत्पन्ने अनापृच्छ्य गच्छन्ति, तदा अपृच्छने लघुको मासः आपृच्छायामपि कृतायां यदि स्थविरैः प्रतिषेधे गच्छन्ति । ततो लघुकाश्चत्वारो लघुमासाः। गुरु गमने इत्यादि गुरुराचार्यः स यदि गच्छत्यभिशय्यामभिनैषेधिकी वा ततस्तस्य भवत्यनुद्घाता गुरुकाश्चत्वारो गुरुमासाः । ये पुनर्वसतिपालाः समर्था भिक्षवस्त यदि गच्छन्ति । ततस्तेषामिमे दोषाः -

[भा.६२६] तेनादेसगिलाणे कामण इत्थी नपुंस मुच्छा वा ।
ऊणत्तणेण दोसा, हवंति एए उ वसहीए ।।

वृ- ये वसतपिलास्तैर्वसतेरूनत्वे हीनत्वे एते गाथा पूर्वार्धोक्ता दोषा भवन्ति । तद्यथा-स्तेनाश्चौरास्ते गताः साधवो वसतेरिति ज्ञात्वा वसतावापतेयुः आदेशाः प्राघूर्णकास्ते वा समागच्छेयुस्तेषां च समागतानामविश्रामणादिप्रसक्तिः समर्थसाध्वभावात् । गिलाणत्ति ग्लानो वा तेषामभावे व्याधिपीडितोऽसमाधिमाप्नुयात् । कामणत्ति दाहो वा प्रदीपनकेन वसतेर्भूयात् । तथा स्तोकाः साधवो वसतौ तिष्ठन्तीति स्त्रियो नपुंसका वा कामविह्वलाः समागच्छेयुः । तत्रात्मपरोभयसमुत्था दोषास्तथा मूर्च्छा कस्यापि पित्तादिवशतो भूयात् । तदेवं यतो वसतिपालानामिमे विनिर्गमे दोषास्तस्मात्तैरभिशय्यादिषु न गन्तव्यमित्येष द्वारगाथासंक्षेपार्थः । व्यासार्थं तु भाष्यकृदाह-

[भा.६२७] दुविहाविहारसोही य एसणघातो य जा य परिहानी ।
आएसय विस्सामण परितावणया य एक्कतरे ।।

वृ- स्तेनैरपहारो द्विविधस्तद्यथा-साध्वपहार उपध्यपहारश्च । तस्मिन् द्विविधेऽप्यपहारे शोधिः

प्रायश्चित्तं, तद्यथा यद्येकं साधुमपहरन्ति स्तेनास्तदा वसतिपालानां प्रायश्चित्तं मूलं, अथ द्वावपहरन्ति । ततोऽनवस्थाप्यं त्रिप्रभृतीनामपहरणे पाराश्चितं, । तथा जघन्योपध्यपहारे पञ्चरात्रिंदिवं, मध्यमोपध्यपहारे मासलघु, उत्कृष्टोपध्यपहारे चतुर्गुरुकं, । तथा एषणाया घातः प्रेरणमेषणाघातः, स च स्यात् । तथाहि भवत्युपधिं पात्रादिकमन्तरेण एषणाघातस्तत एषणा प्रेरणे यत्प्रायश्चित्तं तदापद्यते तेषां वसतिपालानामिति । तथा जायपरिहाणेत्ति या च परिहानि रुपधिमन्तरेण शीतादिबाधितस्य तद्गवेषणप्रयतमानस्य वा सूत्रार्थस्य च भ्रंशस्तन्निमित्तकमपि समापद्यते प्रायश्चित्तं, तत्र सूत्रपौरुष्या अकरणे मासलघु, अर्थपौरुष्या अकरणे मासगुरु अथोपधिगवेषणलग्नदीर्घकालतः सूत्रं नाशयन्ति । ततश्चतुर्लघु अर्थनाशेन चतुर्गुरु, तथा तेषु वसतिपालेषु साधुष्वभिशय्यादिषु गतेषु आदेशानां प्राघूर्णकानां समागतानामध्वपरिश्रान्तानामविश्रामणे या अनागाढा आगाढा वा परितापनोपजायते, तन्निषन्नमपि तेषामापद्यते प्रायश्चित्तं, । एकतरेति तेषु वसतिपालेष्वभिशय्यादिगतेषु यो मुक्त एकतरो वसतिपालः स एको द्वौ वा बहवो वा यद्यागच्छन्ति प्राघूर्णकास्ते सर्वेऽपि नियमतो विश्रमयितव्या इति जिनप्रवचनमनुस्मरन् बहून् प्राघूर्णकान् आगतान् विश्रामयन् यदनागाढमागाढं वा परितापनामाप्नोति तन्निमित्तकमपि समापतति तेषां प्रायश्चित्तं, साम्प्रतमस्या एव गाथायाः पश्चार्द्धं व्याख्यानयति ।

[भा.६२८] आदेसमविस्सामण परितावण ते सऽवच्छलत्तं च ।
गुरुकरणे वि य दोसा, हवंति परितावणादीया ॥

वृ- आदेशानां प्राघूर्णकानामविश्रामणे गाथायांमकारोऽलाक्षणिकः एवमन्यत्रापि द्रष्टव्यम् । दीर्घाध्वपरिश्रमतो यदनागाढमागाढं वा परितापनं तथा तेष्वादेशेषु समागतेषु अवच्छलत्वमवात्सल्य-करणं तन्निष्पन्नं तेषां प्रायश्चित्तं अन्यच्च वसतिपालेष्वभि शय्यादिगतेषु प्राघूर्णकानां समागतानामन्याभावे गुरुः स्वयं वात्सल्यं करोति । गुरुकरणेऽपि च दोषा भवन्ति परितापनादयस्तथाहि-गुरोः स्वयंकरणे सुकुमारतया अनागाढमागाढं वा परितापनं स्यात् । परितापनाद् रोगसमागमे च बहूनां स्वगच्छपरगच्छीयानां सूत्रार्थहानिः श्रावकादीनां धर्मदेशनाश्रवणव्याघातः लोके चावर्णवादो यथा दुर्विनीता एते शिष्या इति गतमादेश द्वारमधुना ग्लानद्वारमाह—

[भा.६२९] सयकरणमकरणे वा गिलाणपरितावणा य दुहतो वि ।
बालोवहीणदाहो तदट्ठमन्नोव आलित्ते ॥

वृ- वसतिपालेष्वभिशय्यादिगतेषु द्विधा तोपि द्वाभ्यामपि प्रकाराभ्यां ग्लानस्य परितापना । तद्यथा-स्वयं करणे अकरणे वा । तथा हि ग्लानो यदि स्वयमुद्वर्तनादिकं करोति तदापि तस्यानागाढादिपरिताप-संभवः । अथ न करोति तथापि परितापनासम्भवस्ततस्तं निमित्तं आपद्यते तेषां प्रायश्चित्तं, अन्यच्च यः पश्चान्मुक्तो वसतिपालः स यदा प्रभूतं ग्लानस्य ग्लानानां वा कर्तव्यं करोति तदा सोऽपि परितापनमनागाढमागाढं वा पद्यते । ततस्तद्धेतुकमपि तेषां प्रायश्चित्तम् । गतं ग्लानद्वारमधुनाऽऽध्मा-मणद्वारमाह-बालोवहीण इत्यादि तेषु सर्वेषु वसतिपालेषु बालं वसतिपालं मुक्त्वा अभिशय्यामभि-नैषेधिकी वा गतेषु अग्निकायेन प्रदीप्ते उपाश्रये बालानामुपधीनां च दाहो भवेत् । तत्र यद्येकोऽपि साधुर्म्रियते तदा चरमं पाराश्चितं प्रायश्चित्तम् । अथ न म्रियते किंतु दाहे आगाढमनागाढं वा परितापन-माप्नोति तदा तन्निष्पन्नं प्रायश्चित्तं, अथोपधिर्जघन्यो मध्यम उत्कृष्टो वा दह्यते ततस्त न्निष्पन्नं प्रायश्चित्तद्वट्ठमन्नोवत्ति तदर्थं बालनिस्तारणार्थं उपधिनिस्तरणार्थं वा अन्यः प्रविशेत् । तदा कदाचित्सोऽपि

बालो दह्येत् । अन्यश्च प्रविशन् ततस्तदुभयनिमित्तमापद्यते प्रायश्चित्तं, लोके च महानवर्णवादः गतमग्निदाहद्वारमधुना स्त्रीनपुंसकद्वारमाह—

[भा.६३०] इत्थी नपुंसगावि य उमत्तणतो तिहा भवे दोसा ।
अभिधाय पित्ततो वा मुच्छा अंतो व बाहिं व ।।

वृ- स्त्रियो नपुंसका वा अवमत्वेन हीनत्वेन स्तोकाः साधवो वसतौ तिष्ठन्ति परिणतव्रताश्चान्यत्र गता वर्तन्ते इति ज्ञात्वा समागच्छेयुस्तदागमने च त्रिधा आत्मपरोभयसमुत्थत्वेन दोषाः स्युः । तथा हि-यत्स्त्र्यादिकमुपलभ्य स्वयं क्षोभमुपयन्ति साधवः, एष आत्मसमुत्थो दोषः । यत्पुनः स्वयमक्षुभ्यतः साधून् बलात् स्त्र्यादिकं क्षोभयति, एष परसमुत्थः । यदा तु स्वयमपि क्षुभ्यन्ति स्त्र्यादिकमपि च क्षोभयति, तदा उभयसमुत्थ इति, मूर्च्छाद्वारमाह-अभिघातेत्यादि वसतेरन्तःस्थितस्य वसतिपालस्य कथमपि जराजीर्णत्यादिना पतन्त्यां वसतौ काष्ठादिभिः शरीरस्योपरि निपतद्भिः बहिर्वा वसतेः स्थितस्य कथमपि वातादिना पात्यमानेन तरुणा तरुशाखाया वा अभिघातेन मूर्च्छा भवेत् । उपलक्षणमेतत् । अनागाढा आगाढा वा परितापना स्यात् । यदि चावसतेरन्तर्बहिर्वा व्यवस्थितस्य पित्ततः पित्तप्रकोपतो मूर्च्छा भवेत् । तत एकाकिनः सततस्तस्य को मूर्च्छामुपशमयेत् । ततस्तन्निष्पन्नप्रायश्चित्तसंभवः प्रभूतश्च जनापवादः, तदेवं पश्चान्मुक्तानां वसतिपालानां दोषा अभिहिताः- सम्प्रति ये अभिशय्यादिगतास्तेषां दोषानभिधित्सुरिदमाह-

[भा.६३१] जत्थ वि य ते वयंती अभिसेज्जं वा निसीहियं या वि ।
तत्थ विय इमे दोसा होंति गयाणं मुणेयव्वा ।।

वृ- यत्रापि च विविक्ते प्रदेशे ते निष्कारणगामिनो भिशय्यामभिनैषेधिकी वा व्रजन्ति । तत्रापि तेषां गतानामिमे वक्ष्यमाणा दोषा भवन्ति ज्ञातव्याः । तानेवाभिधित्सुर्द्वारगाथामाह-

[भा.६३२] वीचार तेन आरक्खि तिरिक्खा इत्थीओ नपुंसा य ।
सविसेसतरा दोषा दप्पगयाणं हवंते ते ।।

वृ- कथमप्यकालगमने विचारे विचारभूमावप्रत्युपेक्षितायां तथा स्तेनाशङ्कायामारक्खित्ति आरक्षकशङ्कायां तथा तिरश्चां चतुष्पदादीनां संभवे तथा स्त्रियो वा दत्तसङ्केतास्तत्र तिष्ठन्ति । नपुंसका वा दत्तसङ्केतास्तत्र तिष्ठन्ति इत्याद्याशङ्कायां एते वक्ष्यमाणाः सविशेषतरा दोषा दर्पगतानां निःकारणगतानां भवन्ति । तदेव सविशेषतरत्वं दोषाणां प्रतिद्वारमभिधित्सुः प्रथमतो विचारद्वारमधिकृत्याह-

[भा.६३३] अप्पडिलेहियदोसा अविदिन्ने वा हवंति उभयंपि ।
वसही वाघाएण वि य एतमनंते य दोसा उ ।।

वृ- यदि नाम ते दर्पगताः कथमप्यचक्षुर्विषयवेलायां गता भवेयुः । ततः संस्तारकोच्चारप्रश्रवणादिषु भूमिष्वप्रत्युपेक्षितासु ये दोषा ओघनिर्युक्तौ सविस्तरमाख्यातास्ते सर्वेऽप्यत्रापि वक्तव्याः, तथा विकालवेलायां गमने यदि कथमपि शय्यातर उच्चारप्रश्रवणयोग्यमवकाशं न वितरेत् ततोऽवितीर्णेऽननुज्ञाते अवकाशे उभयस्मिन् उच्चारप्रश्रवणलक्षणे भवन्ति दोषाः । तथा हि-यदि अननुज्ञातेऽवकाशे उच्चारं प्रश्रवणं वा कुर्वन्ति तदा कदाचित् शय्यातरस्तेषामेव वसत्यादिव्यवच्छेदं कुर्यात् । यदि वा सामान्येन दर्शनस्योपरि विद्वेषतः सर्वेषामपि साधूनामिति अथवा कथमप्यलाक्षणिकतया वसतेरभिशय्यारूपाया व्याघातो भवेत् । ततो रात्रौ मूलवसतिमागच्छतां तेन श्वापदादिभिरात्मविराधना

अथ नायान्ति वसतिं तदा अभिशय्यायाः समीपे अप्रत्युपेक्षितस्थानाश्रयणतः संयमविराधना ।। गतं विचारद्वारम् अधुना स्तेनद्वारमारक्षकद्वारं च युगपदभिधित्सुराह–

**[भा.६३४]** सुणाई गेहाइ उवेंति तेना, आरक्खिया तानि य संचरंति ।
तेनोत्ति एसो पुररक्खितो वा, अन्नोन्नसंका इति वायएज्जा ।।

**वृ-** शून्यानि गृहाणि स्तेना विवक्षितगृहे प्रवेशनाय वेलां प्रतीक्षमाणा आरक्षकादिभयतो वा उपयन्ति तानि च शून्यानि गृहाणि आरक्षकाः पुररक्षका मा कश्चिदत्र प्रविष्टश्चोरो भूयादिति संचरन्ति प्रविशन्ति; एवमुभयेषां प्रवेशसंभवे अन्योन्याऽऽशङ्कया आरक्षका अभिशय्यायामग्रे प्रविष्टं साधुमुपलभ्य स्तेन एष व्यवतिष्ठते इति, स्तेना अग्रे प्रविष्टास्तत्र प्रविशन्तं साधुं दृष्ट्वा पुररक्षक एष प्रविशतीत्येवंरूपया स्तेना आरक्षका वा अतिपातयेयुः व्यापादयेयुः; । गते स्तेना रक्षकद्वारे । सम्प्रति तिर्यग् द्वारमाह-

**[भा.६३५]** दुगंच्छिया वा अदुगंच्छिया वा दित्ता अदित्ता तहिं व तिरिक्खा ।
चउप्पया वालसिरीसवा वा, एगो व दोतिणि व तत्थ दोसा ।।

**वृ-** तत्र अभिशय्यायामभिनैषेधिक्यां वा चतुष्पदास्तिर्यञ्चो द्विधा भवेयुस्तद्यथा- जुगुप्सिता नाम निन्दितास्ते च गर्दभीप्रभृतयः, तद्विपरीता अजुगुप्सिता गोमहिष्यादयः । एकैके द्विविधास्तद्यथा- दृप्ता अदृप्ताश्च । दृप्ता दर्पाध्मातास्तद्विपरीता अदृप्तान केवलमित्थं भूताश्चतुष्पदा भवेयुः, किन्तु व्याला भुजङ्गादयः सरीसृपा वा गृहगोधिकादयः । इत्थंभूतेषु च तिर्यक्षु चतुष्पदेषु व्यालसरीसृपेषु एको द्वौ त्रयो वा दोषा भवेयुः । तत्र एक आत्मविराधनादीनां अन्यतमः द्वौ साधुभेदेनात्मविराधना संयमविराधने; त्रय कस्याप्यात्मविराधना, कस्यापि संयमविराधना, कस्याप्युभयविराधनेति; । अत्र चतुर्भङ्गी कस्याप्यात्मविराधना न संयमविराधना १, कस्यापि संयमविराधना नात्मविराधना २ कस्याप्यात्मविराधनापि संयमविराधनापि ३, कस्यापि नोभयमपि ४ । उपलक्षणमेतत् । जुगुप्सित-तिर्यक्त्व-चतुष्पदसंभवे विरूपाशङ्कासंभवतः प्रवचनोड्डाहोऽपि स्यादिति । गतं तिर्यग्द्वारमधुना स्त्रीनपुंसकद्वारे युगपदभिधित्सुराह-

**[भा.६३६]** संगारदिन्ना व उवेंति तत्थ ओहा पडिच्छंति विलच्छमाणा ।
इत्थी नपुंसा च करेज्ज दोसे, तस्सेवणठाइ उवेंति जे उ ।।

**वृ-** सङ्गारः सङ्केतः स दत्तो यैस्ते सङ्गारदत्ताः । निष्ठांतस्य परनिपातः प्राकृतत्वात् । सुखादिदर्शनाद्वा दत्तसङ्केता इत्यर्थः । इत्थंभूताः सन्तस्तत्राभिशय्यादिषु उपयन्ति-गच्छन्ति, । एवं लोकानामाशङ्का भवेत् अथवा तत्र गतेषु जनानामेवमाशङ्का समुपजायेत । यथा स्त्रियो नपुंसका वा ओघा इति तन्मुखनिरीक्ष्यमाणाः प्रतीक्ष्यन्ते ततोऽमी गताः । यदि वा तासां स्त्रीणां नपुंसकानां वा सेवनार्थं ये तत्रोपयन्ति पुरुषास्ते अस्मत्स्त्र्यादिसेवनार्थमेते संयता समागता इति दोषात् अभिघाताऽवर्ण वादादीन् कुर्युः । तदेवं यस्मादकारणे निर्गतानामिमे दोषास्तस्मान्न निष्कारणे गन्तव्यम् । कारणे पुनर्गन्तव्यं तथा चाह–

**[भा.६३७]** कप्पई उ कारणेहिं अभिसेज्जं गंतुमभिनिसीहिं वा ।
लहुगाओ अ गमनम्मि तानि य कज्जाणिमाइं तु ।।

**वृ-** कल्पते पुनः कारणैरस्वाध्यायादिलक्षणैर्वक्ष्यमाणैरभिशय्यामभिनैषेधिकी वा प्रागुक्तशब्दार्थां गन्तुं यदि पुनर्न गच्छन्ति ततो लघुकाश्चत्वारो लघुमासाः प्रायश्चित्तं तानि पुनः कानि कारणानि इमानि

वक्ष्यमाणानि । तान्येव आह—

**[भा.६३८]** असज्झाइय पाहुणए संसत्ते वुट्ठिकायसुयरहस्से ।
पढमचरमे दुगं तु सेसेसु य होइ अभिसेज्जा ॥

**वृ-** वसतावस्वाध्यायः प्राघूर्णिका बहवः समागता वसतिश्च सङ्कटा, ततोऽस्वाध्याये प्राघूर्णिक प्राघूर्णकसमागमे तथा संसक्ते प्राणजातिभिरुपाश्रये तथा वृष्टिकाये निपतति गलन्त्यां वसतौ तथा श्रुतरहस्ये छेदश्रुतादौ व्याख्यातुमुपक्रान्ते अभिशय्या नैषधिकी वा गन्तव्या । तत्र पढमे चरमे दुगं तु इति प्रथमे सूत्रक्रमप्रामाण्यादस्वाध्याये चरमे श्रुतरहस्ये द्विकमभिशय्याभिनैषेधिकीलक्षणं यथायोगं गन्तव्यं । शेषेषु च प्राघूर्णकसंसक्तवृष्टिकायरूपेषु कारणेषु भवत्यभिशय्या गन्तव्या । तत्रास्त्यनानुपूर्व्यपि व्याख्याया इति न्यायख्यापनार्थं प्रथमतः श्रुतरहस्यमिति चरमद्वारं विवरीषुरिदमाह—

**[भा.६३९]** छेयसुयविज्जमंता पाहुडिअविगीयमहिस दिट्ठंतो ।
इइ दोसा चरमपए पढमपए पोरिसीभंगो ॥

**वृ-** छेद श्रुतानि प्रकल्पव्यवहारादीनि तानि वसतौ अपरिणामको अतिपरिणामको वा श्रृणुयात् । तथा विद्यामन्त्रांश्च वसतौ कस्यापि दीयमाना अविगीतो निर्द्धर्मा श्रृणुयात्, प्राभृतं वा योनिप्राभृतादिरूपं वसतौ व्याख्यायमानंअविगीतकथमपि श्रृणुयात् । तत् श्रवणे च महान् दोषस्तथा चात्र महिषदृष्टान्तः "कयाइ जोणिपाहुडे वक्खाणिज्जमाणे एगेण आयरिआइणा अदिस्समाणेण निद्धमेण सुयं जहा-'अमुगअमुगदव्वसंजोगे महिसो संमुच्छइ तं सोउं सो उप्पव्वइतो गतो अन्नंमि ठाणे । तत्थ महिसे दव्वसंजोगेण संमुच्छावित्ता सागारियहत्थेसु विक्किणइ । तं आयरिया कहमवि जाणित्ता तत्थ आगया उदंतो से पुच्छितो तेन सब्भावो कहितो, । आयरिया भणंति अणे सुंदरसुवणरयणजुत्तादिगेएह, तेन अब्भुवगयं, ततो आयरिएहिं भणियं - अमुगाणि दव्वाणियतिरिक्खसंजोएज्जासि ततो पभूयाणि सुवणरयणाणि भविस्संति । तेन तहा कयं, समुच्छितो दिट्ठीविसो सप्पो तेन खो मतो इति दोसा इत्यादि"। इत्येवमुक्तेन प्रकारेण चरमपदे श्रुतरहस्ये वसतौ व्याख्यायमाने दोषास्तस्मात् श्रुतरहस्य व्याख्यानाय नियमतो अभिशय्या अभिनैषेधिकी वा गन्तव्या । तथा प्रथमपदमस्वाध्यायलक्षणं तत्र दोषः पौरुषीभङ्गः । इयमत्र भावना-अस्वाध्याये वसतावुपजाते स्वाध्यायकरणार्थमवश्यमभिशय्यायामभिनैषेधिक्यां वा गन्तव्यम् । अन्यथा सूत्रपौरुष्या अर्थपौरुष्याश्च भङ्गः, तद्भङ्गे च तन्निष्पन्नप्रायश्चित्तापत्तिः । गतं चरमद्वारमस्वाध्यायद्वारं च । सम्प्रति प्राघूर्णकादिद्वारत्रितयमाह—

**[भा.६४०]** अभिसंघट्टे हत्थादि घट्टणं जग्गणं अजीन्नादी ।
दोसु य संजमदोसा जग्गण उल्लो वहीया वा ॥

**वृ-** कदाचिदन्ये तथाविधवसत्यलाभे साधवः सङ्कटायां वसतौ स्थिता भवेयुः प्राघूर्णकाश्च साधवो भूयांसः समागतास्तत्र दिवसे यथा तथा च तिष्ठन्ति । रात्रौ भूमिषु अपूर्यमाणासु यद्यभिशय्यां न व्रजन्ति, तदा तस्मिन्नुपाश्रयेऽतिशयेन संघट्टः परस्परं संघर्षः साधूनां यत्रातिसङ्कटतया सोऽतिसंघट्टः । तस्मिन्नेव स्थितानां परस्परं हस्तादीनां घट्टनं भवेत् । तद्भावे च कलहासमाध्यादिदोषसंभवः । अथैतद्दोषभयादुपविष्टा एव तिष्ठन्ति । ततो जागरणे रात्रौ जाग्रतामजीर्णादिदोषसंभवः, । अजीर्णमाहारस्याजरणं तद्भावे च रोगोत्पत्तिः, । रोगे च चिकित्साया अकरणे असमाधिः, क्रियमाणायां च चिकित्सायां षट्कायव्या-पत्तिरितिगतं प्राघूर्णकद्वारम् । अधुना संसक्तद्वारं वृष्टिकायद्वारंचाह- 'दोसु य संजमे' त्यादि

द्वयोः संसक्ते उपाश्रये वृष्टिकाये च निपतति असंयमदोषो संयविराधनारूपो दोषो । तथा हि-संसक्तत्वे दुप्रत्येक्षणीया वसतिरिति तत्रावस्थाने स्फुटा संयमविराधना, । तथा वृष्टिकायेऽपि निपतति केषुचित् प्रदेशेषु वसतिर्गलतीति तत्रापि संयमविराधना अपूकायसंयमविराधनासंभवात् । अन्यच्च वृष्टिकाये निपतति उपधिरप्कायेन स्तीम्पते स्तीभितेन चोपधिना शरीरलग्नेन रात्रौ निद्रा नायाति निद्राया अभावे च अजीर्णदोषः । तस्मात् संसक्तायां वसतौ वृष्टिकाये च निपतति निर्गलत्यपि गन्तव्या अभिशय्येति तदेवमुक्तं गन्तव्यकारणं । तथा चाह-

[भा.६४१]          दिट्ठं कारणगमनं जइ य गुरुव्वइए तओ गुरुगा ।
                    ओराल इत्थपेल्लण संका पच्चत्थिया दोसा ॥

वृ- दृष्ट उपलब्धं भगवदुपदेशतः पूर्वसूरिभिः कारणे अस्वाध्यायादिलक्षणे अभिशय्यायां गमनं । तत्र यद्येवं दृष्टे कारणगमने गुरुरभिशय्यामभिनैषेधिकी वा व्रजेत् । ततस्तस्य प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासाः, । को दोषो गुरुगमने इति चेदत आह-उरालेत्यादि आचार्यः प्राय उदारशरीरो भवेत् । सहाया अपिच कथमपि तस्य स्तोका अभवन् । ततः काश्चन स्त्रियः सहायादीनस्थापयित्वा हृदयादिना प्रेरयेयुः प्रेरणेनाचार्यमुपसर्गयेयुः । अन्यच्च शय्यातरादीनां शङ्का समुपजायते । तथा किं वसतावाचार्यो नोषितः नूनमगारीं प्रतिसेवितुं गत इति यदि वा प्रत्यर्थिकः प्रत्यनीकाः प्रतिवाद्यादयोऽल्पसहायमुपलभ्य विनाशयेयुस्तत एवमाचार्यगमने दोषास्तस्मात्तेन न गन्तव्यमिति, न केवलमाचार्येण न गन्तव्यं । किन्त्वेतैरपि न गन्तव्यम् । के ते एते इत्याह-

[भा.६४२]          गुरुकरणे पडियारी, भएणं बलवं करेज्ज जे रक्खं ।
                    कंदप्पविग्गही वा अचियत्तो ठाणदुट्ठो वा ॥

वृ- गुरोराचार्यादेः करणे करणविषये ये प्रतिचारिणः प्रतिचारकाः कायिकीमात्रकादिसमर्पका विश्रामकाश्च तैर्न गन्तव्यम् । तेषां गमने गुरोः सीदनात्तथा भयेन पश्चात् वसतावपान्तरालेऽभिशय्यायां वा तस्करादिसमुत्थेन भयेन सर्वैरपि साधुभिर्नगन्तव्यमात्मसंयमविराधनादोषप्रसङ्गात् । तथा यो बलवान् गुर्वादीनां तस्करादिभ्यो रक्षां करोति तेनापि न गन्तव्यम् । तद्गमने गुर्वादीनामपायसम्भवात् । तथा यः कन्दर्पः कन्दर्पशीलो यश्च विग्रही यद्या तथा वा राटिकरणशीलः यो वा यत्र गम्यते तत्र शय्यातरादीनां केश्चिदपि कारणैः पूर्ववैरादिभिरचियत्तोत्ति अप्रीतो यश्च स्थानदुष्टः पुरादिदुष्टः एतैरपि सर्वैर्न गन्तव्यं, प्रवचनोड्डाहात्मविराधनादिदोषप्रसङ्गात् । यदि कथमपि ते गच्छन्ति ततो बलादाचार्यादिभिर्वारयितव्याः इति । अथ कारणे समुत्पन्ने तेषां गच्छतां को नायकः प्रवर्तयितव्यः ? उच्यते--

[भा.६४३]          गंतव्वगणावच्छेदपवत्ति थेरे य गीयभिक्खू य ।
                    एएसिं असतीए अगीए मेरकहणं तु ॥

वृ- कारणेऽस्वाध्यायादिलक्षणे समुत्पन्ने सति शेषसाधुभिर्गन्तव्यमभिगन्तव्यमभिशय्यादि तेषां च गच्छतां नायकः प्रवर्त्तनीयो गणावच्छेदको वक्ष्यमाणस्वरूपः तदभावे प्रवर्त्ती, सोऽपि वक्ष्यमाणस्वरूपः तदभावे स्थविरस्तस्याप्यभावे गीतभिक्षुर्गीतार्थः सामान्यव्रती । एतेषामसति अभावेऽगीतार्थोऽपि माध्यस्थ्यादिगुणयुक्तः प्रवर्तनीयः । केवलं तस्मिन्न गीते अगीतार्थे 'मेरकहणं तु' इति मर्यादया समाचार्याः कथनं यथा साधूनामावश्यके आलोचनायां प्रायश्चित्तं दीयते । नमस्कारपौरुष्यादिकं च प्रत्याख्यानं यत् यस्मै दातव्यमित्येवमादि सर्वं कथ्यते इति भावः । अथ

किंस्वरूपः सोऽगीतार्थो नायकस्थापनीय इत्यत आह-

[भा.६४४] मज्झत्थोऽकंदप्पी जो दोसे लिहइ लेहओ चेव ।
केसु य ते सीएज्जा दोसेसु ते इमे सुणसु ।।

वृ- मध्यस्थो रागद्वेषरहितः अकन्दर्पी कंदर्पोद्दीनपनभाषितादिविकलः । एवंभूतो नायकः स्थापनीयः, । तेन च साधवोऽसमाचारीं समाचरन्तः शिक्षणीयाः । शिष्यमाणाश्च यदि कथमपि ब्रुवते यथा यदि वयमेवं कुर्मस्ततस्तव किं कस्त्वमित्यादि तदा स लेहओ चेवत्ति लेखक इव सयुक्त लेखक वत्तेषां सर्वेषां साधूनां दोषान् आलोचनानिमित्तं मनसि लिखति सम्यग् अवधारयतीत्यर्थः । अथ केषु दोषेषु ते साधवः सीदेयुर्यान् स स्वचेतसि धारयति सूरिराह-तान् दोषानिमान् वक्ष्यमाणान् श्रृणुत । तत्र यदुक्तं 'एएसिं असतीए' इत्यादि तद्व्याख्यानार्थमाह—

[भा.६४५] थेरपवत्ती गीयासतीए मेरं कहंत अगीयत्थे ।
भयगोरवं च जस्स उ करेंति सयमुज्जतो जो य ।।

वृ- स्थविरस्य प्रवर्तिन उपलक्षणमेतत् । गणावच्छेदस्य च तथा गीतस्य गीतार्थस्य भिक्षोरसति अभावे अगीतार्थोऽपि प्रेषणीयः । तस्मिंश्चागीतार्थे प्रेक्ष्यमाणे मेरत्ति मर्यादां सामाचारीं यथोक्तस्वरूपां कथयन्ति । किंविशिष्टः सोऽगीतार्थः प्रेष्य आह-भयगौरवमित्यादि यस्य भयं साधवः कुर्वन्ति यस्य चानुवर्तनागुणतोभवतो गौरवं यथोचितं कुर्वन्ति । यश्च स्वयमात्मना समुद्युक्तोऽप्रमादी सोऽगीतार्थो नायकः प्रवर्तनीयः । किं कारणमिति चेत् ? उच्यते-असमाचारीरूपदोषप्रतिषेधनार्थं । अथ के ते असमाचारीरूपा दोषाः अत आह-

[भा.६४६] पडिलेहणऽसज्झाए आवस्सगदण्डविनयरा इत्थी ।
तेरीच्छ वाणमंतर पेहा नहवीणि कंदप्पे ।।

वृ- प्रतिलेखनायामस्वाध्याये आवश्यके दण्डे, उपलक्षणमेतत्, दण्डकादौ विषये । तथा विनये वंदनकादौ तथा राज्ञि स्त्रियां तिर्यक्षु हस्त्यादिषु वानमन्तरे वानमन्तरप्रतिमायां विपणिषु स्थेन गच्छत्यां प्रेक्षायां कालग्रहणादौ नहवीणत्ति नखवीणिकायां कन्दर्पे वा समाचारीरूपा दोषाः । एतद्वारगाथासंक्षेपार्थः एतेन यदुक्तं प्रागुक्तानिमान् दोषान् श्रृणुतेति तद्व्याख्यानमुपक्रान्तमिति द्रष्टव्यं । तत्र प्रतिलेखनद्वारमस्वाध्यायद्वारं च विवरीषुराह-

[भा.६४७] पडिलेहण सज्झाए न करिति हीनाहियं च विवरीयं ।
सेज्जोवहिसंथारे दंडग उच्चारमादीसु ।।

वृ- प्रतिलेखना स्वाध्यायं वा मूलत एव न कुर्वन्ति, यदि वा हीनमधिकं विपरीतं वा विपर्यस्तक्रमं कुर्वन्ति । तत्र येषु स्थानेषु प्रतिलेखना संभवति तानि स्थानान्युपदर्शयति । शय्योपधिसंस्तारकदंडकोच्चारादिषु । इयमत्र भावना शय्या वसतिस्तस्याः प्रत्युपेक्षणंमूलत एव न कुर्वन्ति । यदि वा हीनमधिकं वा कुर्वन्ति । अथवा यः शय्यायाः प्रत्युपेक्षणाकालस्तस्मिन्न कुर्वन्ति, किन्तु कालातिक्रमेण, एवमुपधेः संस्तारकस्य दण्डकादेश्च भावनीयं । तथा उच्चारादिभूमीं न प्रत्युपेक्षन्ते हीनमधिकं वा यदि वा कालातिक्रमेण प्रत्युपेक्षन्त इति, स्वाध्यायमपि मूलतएव न कुर्वन्ति यदि वा अप्रस्थापिते कुर्वन्ति, अथवा हीनमधिकं वा कालिकं कालतः कुर्वन्ति यदि वा कालिकवेलायामुत्कालिकमुत्कालिकवेलायां कालिकमिति । संप्रत्यावश्यकादिद्वारत्रितयमाह-

[भा.६४८] न करेंती आयस्सं हीनाहियनिविट्ठपाउयनिसन्ना ।
दंडगहणादिविणयं राइणियादीण न करेंति ।।

वृ- आवश्यकं मूलत एव न कुर्वन्ति, यदि वा हीनं अधिकं वा कायोत्सर्गाणां हीनहीनकरणतोऽधिकं वाऽनुप्रेक्षार्थं कायोत्सर्गाणामेव चिरकालकरणतः कुर्वन्ति । यदि वा निषण्णा उपविष्टाः प्रावृताः शीतादिभयतः कल्पादिप्रावरणप्रावृता निषन्नास्त्वग्वर्तनेन निपतिताः प्रकुर्वन्ति । गतमावश्यकद्वारम्। दण्डगहणादित्ति दण्डग्रहादौ दण्डग्रहणं भाण्डमात्रकादीनामुपलक्षणं दण्डकादीनां ग्रहादौ ग्रहणे निक्षेपे च न प्रत्युपेक्षणं, नापि प्रमार्जनं दुःप्रत्युपेक्षितादि वा कुर्वन्ति । गतं दण्डद्वारम् । विनयद्वारमाह- विनयं रत्नाधिकादीनामाचार्यादीनां यथा रत्नाधिकं न कुर्वन्ति गतं विनयद्वारम् । राजादिद्वारकदम्बकमाह-

[भा.६४९] रायं इत्थिं तह अस्समादि वंतरहेय पेहेंति ।
तह नक्खवीणियादी कंदप्पादी व कुव्वंति ।।

वृ- राजानं निर्गच्छन्तं वा स्त्रियं सुरूपामिति विशिष्टाभरणालङ्कृतामागच्छन्तीं वा तथा तिस्विख इत्यस्य व्याख्यानम् अश्वादिकम् अश्वं वा हस्तिनं वा राजवाहनमतिप्रभूतगुणाकीर्णं, व्यंतर रथान्वा विभूत्याविपणिमार्गेषु गच्छतः प्रत्यागच्छतो वा प्रेक्षंते, । एतेन राजस्त्रीतिर्यग्यानमन्तरद्वाराणि व्याख्यातानि । तथेत्यनुक्तसमुच्चयार्थः । स चेदमुक्तं समुच्चिनोति कालप्रत्युपेक्षणं न कुर्वन्ति; न वा कालं प्रतिजागरति । गतं प्रेक्षाद्वारं । तथा नखवीणिकादिकं नखैर्वीणावादनं आदिशब्दात् नखानां परस्परं घर्षणमित्यादिपरिग्रहः । तथा कन्दर्पादिकं, कन्दर्पकौकुच्यकौतुकादि कुर्वन्ति ।।

[भा.६५०] एएसु वट्टमाणे अट्ठिय पडिसेहिए इमा मेरा ।
हियए करेइ दोसे गुरुएकहणं स देइ ते सोहिं ।।

वृ- एतेष्वनन्तरोदितेषु दोषेषु वर्तमानान् वारयतीति क्रियाध्याहारः कृतेऽपि वारणे यदि ते न तिष्ठन्ति प्रतिषेधन्ति, यदि वयमेवं कुर्मस्तत किं तव को वा त्वमित्यादि । ततोऽस्थिते प्रतिषेधिते वा नायकं इयमनन्तरमुच्यमाना मेरत्ति मर्यादा समाचारी तामेवाहः हृदये तान् दोषान् करोति, कृत्वा च गुरवे कथयति स च गुरुर्ददाति तेषां शोधिं प्रायश्चित्तमिति । संप्रति वक्ष्यमाणार्थसंग्रहाय द्वारगाथामाह-

[भा.६५१] अतिबहुयं पच्छित्तं, अदिने वाहेय रायकन्ना य ।
ठाणासति पाहुणए नउगमनं मासोक्ककरणे ।।

वृ- चोदकवचनं अतिबहुकं प्रायश्चित्तं गुरुमासादि न दातव्यं, तद्दाने व्रतपरिणामस्यापि हानिप्रसक्तेः ।अत्र गुरुवचनं "जो जत्तिएण सुज्झइ" इत्यादि वक्ष्यमाणं, यः पुनरालोचनाप्रदाने प्रायश्चित्तं शल्यं नोद्धरति, तस्मिन्नदत्ते अदत्तालोचने व्याधो दृष्टान्तः । यः पुनराचार्यः शिष्यस्य प्रायश्चित्तस्थानापत्तिं जानन्नपि न शोधिं ददाति, तस्मिन्नदत्ते अदत्तप्रायश्चित्ते गुरौ दृष्टान्तो राजकन्यापदैकदेशे राज-कन्यान्तःपुरपालकः । तथा ठाणा सति इत्यादि सङ्कटायां वसतौ प्राघूर्णकि समागते सति स्थानस्य योग्यभूमिप्रदेशस्य असति भावप्रधानोऽयं निर्देशो अविद्यमानत्वे उत्सर्गतो न तु नैव गमनं, किन्तु यतना वक्ष्यमाणा कार्या, तस्यां च यतनायां कर्तुमशक्यमाणायामभिशय्यादिषु प्रेक्ष्यमाणा यदि केचन कर्करायन्ते यथाऽस्मद्वधाय प्राघूर्णकाः समागता यत् गन्तव्यमस्माभिराभिशय्यादिषु कर्त्तव्यं वा रात्रौ जागरणमिति, । तदा तेषां कर्करणे प्रायश्चित्तं मासलघुदेयमिति द्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेव

गाथां विवरीषुः प्रथमतोऽतिबहुकं प्रायश्चित्तमिति व्याख्यानयति-

**[भा.६५२]** अतिबहुयं वेढिज्जइ भंते माहु कुरुकुडो भवेज्जाहि !
पच्छित्तेहिं अयंडे, निद्दयदिन्नेहिं भज्जेज्जा ।।

**वृ-** भदन्त परमकल्याणयोगिन् गुरो यदि प्रभूतं गुरुमासादि प्रायश्चित्तं पदे पदे दीयते, ततः स प्रायश्चित्तैः समन्ततोऽतिशयेन वेष्टयतेऽतिवेष्टितः सन् मा निषेधे हु निश्चितं कुरुकुटको भूयात् । दुःखेन तस्य प्रायश्चित्तेभ्यः उद्वेष्टनं स्यात् । अतिप्रभूतेषु हि गुरुषु प्रायश्चित्तेषु पदे पदे दीयमानेषु स कदात्मानमुद्वेष्टयिष्यतीति भावः । अपि च अकाण्डे यत्र तत्र वा पदे पदे निर्दयैः सद्भिर्युष्माभिर्दत्तैः प्रायश्चित्तैः स भज्येत भग्नपरिणामो भूयात् । तथा च सति महती हानिस्तस्मात् ।

**[भा.६५३]** तं दिज्जउ पच्छित्तं, जं तरती सा य कीरउ मेरा ।
जा तीरइ परिहरिउं मोसादि अपच्चउ इहरा ।।

**वृ-** तत् प्रायश्चित्तं दीयतां यत्तरति शक्नोति कर्तुं सा च क्रियतां च मेरा मर्यादा या परिहर्तुं शक्यते पाठान्तरं वा परिवहिउमिति तत्र या परिवोढुं शक्यते इति व्याख्येयम् । उभयत्राप्ययं भावार्थः । या परिपालयितुं शक्यते इति मोसादि अपच्चउ इहरा इति इतरथा प्रभूते प्रायश्चित्ते दत्ते मृषा दोष उभयोरपि समुपजायते । तत्र गुरोर्मात्राधिकप्रायश्चित्तदानात् । इतरस्य तु भग्नपरिणामतया तथा परिपालनायोगात्। अन्यच्चातिमात्रे प्रायश्चित्ते दत्ते युष्माभिरपि पूर्वमाशातनादोष उद्भावितः । अप्रत्ययश्च शिष्यस्योपजायते यथातिप्रभूतमाचार्याः प्रायश्चित्तं ददति । न चैवं रूपं प्रायश्चित्तं जिनाः प्ररूपितवन्तः, सकलजगज्जन्तुहितैषितया तेषां अतिकर्कशप्रायश्चित्तोपदेशदानायोगात् तस्मात्सर्वमिदं स्वमतिपरिकल्पितमसदिति । एवं चोदकेनोक्ते गुरुराह-

**[भा.६५४]** जो जत्तिएण सुज्झइ अवराहो तस्स तत्तियं देइ ।
पुव्वमियं परिकहियं घडपडगाइएहिं नाएहिं ।।

**वृ-** चोदक त्वया सर्वमिदमयुक्तमुच्यते यतो देशकालसंहननाद्यपेक्षया योऽपराधो यावन्मात्रेण प्रायश्चित्तेन शुद्धयति तस्यापराधस्य शोधनाय तावन्मात्रमेव सूरिः प्रायश्चित्तं ददाति, नाधिकं नापि हीनं। एतच्च पूर्वमेव घटपटादिभिर्ज्ञातैरुदाहरणैर्जलनिस्रवण कुडए इत्यादिना ग्रन्थेन परिकथितं । तस्मान्नदोषः। साम्प्रतमदत्तालोचने यो व्याधदृष्टान्त उपन्यस्तस्तं भावयति-

**[भा.६५५]** कंटकमादिपविट्ठे नोद्धरइ सयं न भोइए कहइ ।
कमढी भूयवणगए आगलणं खोभिया मरणं ।।

**वृ-** इह किल व्याधा वने संचरन्त उपानहौ पादेषु नोपनह्यन्ति । मा हस्तिन उपानहोः शब्दान् श्रौषुरिति। तत्रैकस्य व्याधस्यान्यदा वने उपानहौ विना परिभ्रमतो द्वयोरपि पादयोः कण्टकादयः प्रविष्टा आदिशब्दात् श्लक्ष्णकिलिञ्चादिपरिग्रहः । तान् प्रविष्टान् कण्टकादीन् स्वयं नोद्धरति । नापि भोजिकायै-निजभार्यायै व्याधः कथयति । ततः स तैः पादतलप्रविष्टैः कण्टकादिभिः पीडितः सन् वनगतो हस्तिना पृष्ठतो धावता प्रेर्यमाणो धावन् कमठीभूतः स्थले कमठ इव मन्दगतिरभूत् । ततः प्राप्तो हस्ती प्रत्यासन्नदेशमिति जानन् क्षुब्धः क्षमं गत्वा आगलणमिति वैकल्यं प्राप्तः । ततो मरणमेष गाथार्थः । भावार्थस्त्वयम्-एगो वाहो उवाहणो विना वने गतो । तस्स पायतला कंटगाईणं भरिया । ते य कंटगादीया नो सयमुद्धरिया नो विय वाहीए उद्धराविया । अन्नया वने संचरंतो हत्थिणा दिट्ठो । तो तस्स धावंतस्स कण्टगाइया दूरतरमंसं

पविट्ठा ताहे अति दुक्खेण अड्डितो महापायवो इव छिन्नमूलो हत्थिमएण अचेयणभूतो पडितो हत्थिना विनासितो ।।

[भा.६५६] बितिए सयमुद्धरती अनुड्डिए भोइयाए नीहरइ ।
परिमद्दणदंतमलादि पूरणं वनगयपलातो ।।

वृ- अन्यो द्वितीयो व्याध उपानहौ विना वने गतस्तस्य वने संचरन्तः कण्टकादयः पादतले प्रविध्यस्तान् स्वयमुद्धरति ये च स्वयमुद्धर्तुं न शक्तास्तान् अनुद्धृतान् भोजिकया निजभार्यया व्याध्या नीहारयति निष्काशयति । तदनन्तरं तेषां कण्टकादि वेधस्थानानामङ्गुष्ठादिना परिमर्दनं । तदनन्तरं दन्तमलादिना आदिशब्दात्कर्णमलादिपरिग्रहः पूरणं कण्टकादिवेधानां ततोऽन्यदा वनगतः सन् हस्तिना दृष्टोऽपि पलायितो जातो जीवितव्यसुखानामाभागी । एष दृष्टान्तः ।। साम्प्रतं दार्ष्टान्तिकयोजनामाह-

[भा.६५७] वाहत्थाणी साहू वाहिगुरू कंटकादिअवराहा ।
सोही य ओसहाइं पसत्था नाएण बणतो उ ।।

वृ- व्याधस्थानीयाः साधवः । व्याधीस्थानीयो गुरुः । कण्टकादिस्थानीया अपराधा औषधानि दन्तमलादीनि तत् स्थानीया शोधिः । अत्र द्वौ व्याधदृष्टान्तौ । प्रशस्तोऽप्रशस्तश्च । आद्योऽप्रशस्तो द्वितीयः प्रशस्तः । तत्र प्रशस्तेन ज्ञातेन दृष्टान्तेनोपनयः कर्तव्यः । आचार्योऽपि यदि तानुपेक्षते ततः कण्टकादीनामुपेक्षको व्याध इव सोऽपि दुस्तरमापदमाप्नोति । तथा चाह-

[भा.६५८] पडिसेवंत उवेक्खइ नयणं ओवालए अकुव्वंतो ।
संसारहत्थिहत्थं पावति विवरीयमियरो वि ।।

वृ- इतरोऽपि आचार्योऽपि । तुशब्दोऽपिशब्दार्थः । यः प्रतिसेवमानान् उपेक्षते न तु निषेधति, न वा कुर्वतोऽकुर्वाणान् प्रायश्चित्तमुत्पीडयति, न भूयः प्रायश्चित्तदाने दण्डेन ताडयन् कारयति, स विपरीतमाचार्यपदस्य हि यथोक्तनीत्या परिपालनफलमचिरात्मोक्षगमनं तद्विपरीतं संसार एव हस्तिहस्तं प्राप्नोति । दुस्तरं संसारमापततीति भावः । उपसंहारमाह-

[भा.६५९] आलोयमनालोयण गुणा य दोसा य वन्निया एए ।
अयमन्नो दिट्ठंतो सोहिमदिंते य दिंते य ।।

वृ- एते अनन्तरोदिता आलोचनायां गुणा अनालोचनायां दोषा वर्णिताः । सम्प्रति यः प्रायश्चित्तं ददाति तस्मिन् शोधिमददाने अनाददाने च अयं वक्ष्यमो राजकन्यान्तःपुरपालकरूपोऽन्यो दृष्टान्तस्तमेवाह-

[भा.६६०] निज्जूहादिपलोयणअवारेण पसंग अग्गदारादि ।
धुत्तपलायण निवकहण दंडणं अन्नठवणं च ।।

वृ- एगो कन्नंतेउरपालगो सो गोक्खलएण कन्नाओ पलोएंतीओ न वारेइ । ततो ताओ अग्गदारेण निप्पिंडिउमाढत्ता । ततो वि न वारेइ । ता ताहे ततो अनिवारिज्जमानीतो कयाइ धुत्तेहिं समं पलायातो । एवं सव्वमवारणादि केणइ रन्नो कहियं, । ततो रन्ना तस्स सव्वस्स हरणं कयं विणासितो य, अन्नो कन्नंते उरपालो ठवितो, । अक्षसामनिका निर्यूहो गवाक्षः । गोखलक इत्यर्थः । आदिशब्दात्तदन्यतथाविधप्रदेश परिग्रहः तेन निर्यूहादिना प्रलोकने अवारणं न वारणं कृतवान् । ततोऽग्रद्वारादिष्वपि प्रसङ्गः । अग्रद्वारेऽन्यत्र वा यथास्वेच्छं तासां कन्यानां प्रसङ्गः । ततोऽन्यदा धूर्तैः सह पलायनं, एतस्यापि वृत्तान्तस्य

नृपस्य पुरतः कथनं । ततो राजा तस्य कन्यान्तः पुरपालकस्य दण्डनं, अन्यस्य कन्यान्तः पुरपालकस्य स्थापनं चाकार्षीत् ।

**[भा.६६१]** निज्जूहगयं दट्ठुं बितिओ अन्नो उ वा हरितार्णं ।
विनयं करेइ तीसे सेसभयं पूयणा रन्ना ।।

**वृ-** अन्यो द्वितीयः कन्यान्तःपुरपालको निर्यूहगतां गवाक्षगतामेकां कन्यां दृष्ट्वा बाहरित्तार्णति व्याहृत्य आकार्य विनयं शिक्षां तस्याः करोति । ततः शेषाणां कन्यानामुदपादिभयं तेनैकाप्यग्रद्वारादिषु नाव-तिष्ठते । न च धूर्तैरपहरणं । ततः सम्यक् कन्यान्तः पुरपालनं कृतवानिति राज्ञा पूजा कृता । एष दृष्टान्तोऽयमर्थोपनयः ।

**[भा.६६२]** राया इव तित्थयरा महत्तरगुरू उ साहु कन्नातो ।
आलोयण अवगहा अपसत्थपसत्थगो वणतो ।।

**वृ-** राजा इव राजस्थानीया तीर्थकरा महत्तरः कन्यान्तःपुरपालकस्तत्स्थानीया गुरवः, साधवः कन्यास्थानीयाः, अवलोकनस्थानीया अपराधाः । अत्राप्रशस्तेन कन्यान्तःपुरपालकेन, प्रशस्तेन चोपनयः कर्तव्यः । तद्यथा-य आचार्यः प्रमादिनः शिष्यान् न वारयति, न च प्रायश्चित्तं ददाति स विनश्यति, । यथा प्रथमः कन्यान्तःपुरपालकः; यस्तु प्रमादिनः शिष्यान् वारयति प्रायश्चित्तं च यथापराधं प्रयच्छति । स इह लोके प्रशंसादिपूजां प्राप्नोति, परलोके च सम्यक् शिष्य निस्तरणतो निर्वाणमचिरादाप्नुयादिति । सम्प्रति यदुक्तं प्राघूर्णकसमागमे संसक्ते उपाश्रये वृष्टिकाये च निपतति अभिशय्यां गन्तव्येति तद्विषयमपवादं क्रमेणाभिदित्सुराह-

**[भा.६६३]** असज्झाइए असंते ठाणासति पाहुणागमे चेव ।
अन्नत्थ न गंतव्वं गमने गुरुगा उ पुव्वुत्ता ।।

**वृ-** अस्वाध्यायिके असति अविद्यमाने प्राघूर्णकानामागमे ठाणासत्ति स्थानस्य संस्तारकयोग्यभूमिलक्षणस्य असति अपि शब्दोऽत्र सामर्थ्यादवगम्यते । असत्यपि भावप्रधानोऽयं निर्देश इत्यभावेऽपि अन्यत्राभिशय्यादौ न गन्तव्यं । किन्तु यतना कर्तव्या । यदि पुनर्यतनाकरण-प्रमादितया अन्यत्र गमनं कुर्वन्ति । ततो गमने पूर्वोक्ता गुरुकाश्चत्वारो गुरुमासाः प्रायश्चित्तं ।।

का पुनर्यतनेति यतनामाह-

**[भा.६६४]** वत्थव्वा वारंवार एण जग्गं तु माय वच्चं तु ।
एमेव य पाहुणए जमाणगाढं अनुव्वाए ।।

**वृ-** वास्तव्या वारंवारकेन वारेण जाग्रतु इयमत्र भावना-वास्तव्यानां मध्ये यो यावन्मात्रमर्धयामादि जागरितुं शक्नोतिस तावन्मात्रं जागर्ति । तदनन्तरं जागरितुमशक्नुवत् अन्यं साधुमुत्थापयति । सोऽपि स्वजागरणवेलातिक्रमेऽन्यमेवं वारेण वारेण जाग्रतु । यदि पुनर्वास्तव्याः समस्तामपि रात्रिं वारेण वारेण जागरितुं न शक्नुवन्ति । ततो यदि गाढं न परिश्रान्ता प्राघूर्णकास्ततः प्राघूर्णकि गाढमनुव्वाए इति अपरिश्रान्ते एवमेव वारेण वारेण जागरणं समर्पणीयं मा पुनश्चशब्दः पुनः शब्दार्थे व्रजन्त्वभिशय्यां, यदि पुनर्वास्तव्याः प्राघूर्णकाश्च न वारेण वारेण जागरितुं शक्नुवन्ति तदा शय्या गन्तव्येति ।

**[भा.६६५]** एमेव संसत्ते देसे अगलंतए य संसव्वत्थ ।
अम्हवहा पाहुणगा उवेंति रित्ताउकक्करणा ।।

**वृ-** एवमेव अनेनैव प्रकारेण संसक्ते उपाश्रये यो देशः प्रदेशोऽसंसक्तः । तस्मिन् संसक्ते देशे तथा वृष्टिकाये निपतति यः प्रदेशो न गलति तस्मिन् प्रदेशे यतना कर्त्तव्या । तद्यथा-संसक्तायां वसतौ येष्ववकाशेषु संसक्तिस्तान् परिहृत्य शेषेष्ववकाशेषु संसक्तिरहितेषु पूर्वप्रकारेण जागरणायतना कर्त्तव्या, । तथा वृष्टिकायेऽपि निपतति येष्ववकाशेषु वसतिर्निलगति तानवकाशान् परिहृत्य शेषेष्व-गलत्स्ववकाशेषु यतना पूर्ववत्कर्त्तव्येति । सव्वत्थत्ति यदि पुनः सर्वत्र संसक्ता सर्वत्र वा गलति तदाभिशय्यायां गन्तव्येति । यदुक्तं -मासोउक्कक्करणे इति तत्र कक्करणं व्याख्यानयति । एते रिक्ताः प्राघूर्णका अस्मद्वधाय उपयन्ति समागच्छन्ति । एवमादिभाषणं कक्करणीति । संप्रति यदवादीत् आचार्येण न गन्तव्यमनापृच्छया वा (साधुभिः) गन्तव्यमिति तद्विषयमपवादमाह-

**[भा. ६६६]** बितिय पयं आयरिए निद्दो से दुरगमनानापुच्छा ।
पडिसेहे गमनंमि तो तं वसभा बलं नेंति ।।

**वृ-** द्वितीयपदमपवादमाचार्यविषये क्व सतीत्यत आह-निर्दोषे स्त्र्यादिदोषाणामभावे । यदि वा निर्गता दोषा यस्मात्तत् निर्दोषं क्षेत्रं, तस्मिन् तथा दूरे अभिशय्या ततस्तत्र दूरगमने अनापृच्छा तथा प्रतिषेधितस्य गमने द्वितीयपदमिदं तोत्ति तस्मादेव संज्ञादिस्थानात् परतो यदि वृषभा बलान्नयन्ति तदा सप्रतिषेधितः प्रतिश्रुत्यन्तरेणापि गच्छतीति । एष गाथा संक्षेपार्थः । साम्प्रतमेनामेव गाथां विवरीषुः प्रथमत 'आयरिए निद्दोसेइ' इति व्याख्यानयति-

**[भा. ६६७]** जत्थ गणी निय नज्जइ, भद्देसु य जत्थ नत्थि ते दोसा ।
तत्थ वयंतो सुद्धो इयरेवि वयंति जयणाए ।।

**वृ-** यत्र गणी आचार्यो न ज्ञायते, अपि शब्दान्न च तथाविधोदारशरीरो नापि केनचिदपि सह वादोऽभवत् । यत्र स्वभावत एव भद्रेष्वनुत्कटरागद्वेषेषु लोकेषु प्रागुक्ताः स्त्र्यादिसमुत्था दोषा न सन्ति तत्राभिशय्यामपगच्छन्नाचार्यः शुद्धः । इतरेऽपि ये अनापृच्छ्या गच्छन्ति । य एव प्रतिषेधितास्तेऽपि यतनया गच्छन्ति । का यतनेति चेदत आह-

**[भा. ६६८]** वसहीए असज्झाए सन्नादिगतो य पाहुणे दट्टुं ।
सोउं च असज्झाइं वसहिं उवेंते भणइ अणे ।।

**वृ-** वसतावस्वाध्यायो जातो गुरुवश्च संज्ञाभूम्यादिषु गतास्ततोऽस्वाध्याये यथा स्वयं संज्ञादिगतः संज्ञाभूमिमादिशब्दादन्यद्वा स्थानं प्रयोजनेन गतः सन् प्राघूर्णकान् समागच्छतो दृष्ट्वा नूनमस्माकं वसतिः सङ्कटा प्राघूर्णकाश्च बहवः समागतास्ततो न सर्वेषां संस्तारकयोग्या भूमिरवाप्स्यते इति विचिन्त्य तथा पूर्ववसतावस्वाध्यायो नाभूत् । संज्ञादिगतेन च तेन श्रुतं यथा जातो वसतावस्वाध्यायस्ततोऽस्वाध्यायं वा श्रुत्वा यावद्गुरूणां प्रष्टुं वसतावागच्छति, तावत् रात्रिः समापतति । दूरे च अभिशय्या रात्रौ च गच्छतामारक्षकादिभयं ततोऽनापृच्छ्यैव ततः स्थानादभिशय्यां गच्छति । केवलं येऽन्ये साधवो वसतिमुपयन्ति तान् भणति प्रतिपादयति संदिशतीत्यर्थः । किं तदित्याह-

**[भा. ६६९]** दीवेह गुरूण इमं दूरे वसही इमा वियालो य ।
संथारकालकाइय भूमीपेहह एमेव ।।

**वृ-** दीपयत प्रकाशयत कथयतेति यावत् गुरूणां यथा दूरे वसतिरभिशय्या अयं च प्रत्यक्षत उपलभ्यमानो विकालः समापतितः । तत एवमेवानापृच्छ्यैव युष्मान् संस्तारकभूमेः कालभूमीनां

काथिकी संज्ञा । उपलक्षणमेतत् । प्रश्रवणभूमीनां च प्रेक्षार्थमभिशय्यां गत इति । एवमनापृच्छायामपवाद उक्तः । सम्प्रति प्रतिषिद्धेऽपवादमाह-

[भा.६७०] एमेव य पडिसिद्धे सन्नादिगयस्स कंचि पडिपुच्छे ।
तंपिय होढा असमिक्खि [illegible] ॥

वृ- कस्यापिसाधोरभिशय्यादिगमने गुरुणा प्रतिषिद्धे संज्ञादिगतस्य काथिक्यादिभूमिगतस्य सत एवमेव अनन्तरोक्तेन प्रकारेण गुरून् प्रति सन्देशकथनं ज्ञातव्यम् । कथमित्याह-कं चि पडिपुच्छेति, कमपि वृषभं प्रतिपृच्छेत् यथा-'न मे किमपि गमनप्रतिषेधकारणमभूत्, केवलमेवमेव गुरुणा प्रतिषिद्धोऽथ च मया स्वाध्यायः कर्तव्यो वसतौ चा स्वाध्यायादिकमुपजातमतः किं करोमि यामि वसतिं, प्रतिपृच्छामि गुरून्' इति । एवमुक्ते ते वृषभादयोऽभिशय्यां गन्तुकामाः कालस्य स्तोकत्वात् यावत् वसतौ गत्वा गुरून् प्रतिपृच्छ्य समागच्छन्ति तावत् रात्रिः पततीति तं प्रत्येवमुदीरयंति । तं पि वेत्यादि तदपि गुरूणां प्रतिपृच्छनं । 'होढा' इति देशीपदमेतत् दत्तमेव कृतमेवेत्यर्थः । यस्मादसमीक्ष्यापर्यालोच्यानाभोगत एवमेवेत्यर्थः । त्वं प्रतिषेधितस्ततो यदत्र किमपि गुरवो वक्ष्यन्ते, तत्र वयं प्रत्यापिष्यामो यथैव न किमपि गमनप्रतिषेधकारणंकृतवान् प्रतिपृच्छार्थं वा गच्छन् अस्माभिर्वारितस्तावत् कालस्याप्राप्यमाणत्वात् । एवमुक्त्वा बलादपि तं वृषभा नयन्ति । सोऽपि च बलान्नीयमानश्चिन्तयति यथा 'नास्ति मम कश्चिद्दोषः किं न गच्छामीति स च तत्र गच्छन् वृषभाश्च येऽन्ये साधवो वसतिमुपयन्ति तेषां सन्देशं प्रयच्छन्ति । अथासमीक्ष्य स प्रतिषिद्ध इति वृषभाः कथं जानन्तीत्यत आह—

[भा.६७१] जाणंति व तं वसभा अहवा वसभाण तेन सब्भावो ।
कहितो न मेत्थि दोसो तोणं वसभा बला नेंति ॥

वृ- जानन्ति स्वयमेव तं वृषभा यथा निर्दोष एषोऽकारणे गुरुणा प्रतिषिद्धः, अस्मत्समक्षमेवास्य प्रायोऽवस्थानात् । अथवा तेन वृषभाणां सद्भावः कथितो यथा न मे कश्चन दोष इति । तत् एतत् ज्ञात्वा गुरुमनापृच्छ्यैव यथोक्तप्रकारेण वृषभा बलान्नयन्ति । योऽपि आचार्यस्य प्रतिचारीपूर्वं प्रतिषिद्धः सोऽपि तत्कर्तव्यं । यदि वृषभैः सम्पादितं भवति, ततो गच्छत्यभिशय्यामिति न कश्चिद्दोषः । सम्प्रत्यभिशय्याया नैषेधिक्याश्च भेदानाह—

[भा.६७२] अभिसेज्ज अभिनिसीहि य एक्केक्का दुविह होइ नायव्वा ।
एगवडाए अंतो, बहिया सम्बद्धऽसम्बद्धा ॥

वृ- या गन्तव्या अभिशय्या अभिनैषेधिकी वा सा एकैका द्विविधा भवति । तद्यथा-साधु वसतेः एगवडाए इति एकवृत्तिपरक्षेपायां अन्तर्बहिश्च । इयमत्र भावना-द्विविधाभिशय्या-एकवसतेरेकवृत्तिपरिक्षेपाया अन्तरपरा बहिरेवं नैषेधिक्यपि द्विविधा भावनीया । भूय एकैकाभिशय्या द्विविधा । तद्यथा-सम्बद्धा असम्बद्धा च । तत्र तस्या अभिशय्याया वसतेश्च एक एव पृष्टवंशः सा सम्बद्धा । यस्याः पुनः पृथक् पृष्टवंशः सा असम्बद्धाः । अथैकवृत्तिपरिक्षेपस्यान्तराभिशय्या द्विविधा अपि यथोक्तप्रकारा घटते । यात्वेकवृत्तिपरिक्षेपस्य बहिः सा नूनमसम्बद्धा स्यात्, तस्याः सुप्रतीतत्वात् । या पुनः सम्बद्धा सा पुनः कथमुपपद्यते ? उच्यते-यस्या अभिशय्याया वृत्तिपरिक्षेपस्य बहिर्भूता या वसतेश्च तत्प्राया एकः पृष्टवंशोऽपान्तराले वसतिः सा बहिर्भूतापि सम्बद्धा इति; । नैषेधिकी पुनरन्तर्बहिर्वा नियमात्सम्बद्धैव हस्तशतस्याभ्यन्तरतोऽस्वाध्यायिके समुत्पन्ने स्वाध्यायासंभवात् । तथा चाह-

**[भा.६७३]** जा साउ अभिनिसीहि य सा नियमा होइ उ असंबद्धा ।
संबद्धमसंबद्धा अभिसेज्जा होति नायव्वा ।।

**वृ-** अत्र यत्येव गतिः सेति यदुक्तं तद्दोषाभावोपक्रमप्रदर्शनार्थमित्यदुष्टं या सा अभिनैषेधिकी । सा नियमाद्भवत्यसम्बद्धा कारणमनन्तरमेवोक्तं या त्वभिशय्या सा सम्बद्धा असम्बद्धा च भवति ज्ञातव्या। अथ कस्यां वेलायां तत्र गन्तव्यं तत्र आह-

**[भा.६७४]** धरमाणच्चिय सूरे संथारुच्चारकालभूमीतो ।
पडिलेहियणुन्नविए वसहेहिं वयंतिमं वेलं ।।

**वृ-** योऽसावभिशय्यायाः शय्यातरस्तं वृषभा अनुज्ञापयन्ति, यथा स्वाध्यायनिमित्तं वयमत्र वत्स्याम इति । तत एवं वृषभैरनुज्ञापिते शय्यातरे धरमाण एव अनस्तमिते एव सूर्ये तस्याभिशय्यायां संस्तारकोच्चारकालभूमीः प्रत्युपेक्ष्य भूयो वसतावागत्य इमां वेलामिति कालाध्वनोर्व्याप्ताविति सप्तम्यर्थे द्वितीया । अस्यामनन्तरं वक्ष्यमाणायां वेलायां व्रजन्ति । कस्यां वेलायामित्यत आह-

**[भा.६७५]** आवस्सयं तु काउं निव्वाघाए होति गंतव्वं ।
वाघाएण उ भयणा देसं सव्वं अकाऊणं ।।

**वृ-** व्याघातस्य स्तेनादिप्रतिबन्धस्याभावो निर्व्याघातं तेन निर्व्याघातेन भवति गन्तव्यं । वसतेराचार्यैः सममावश्यकं कृत्वा व्याघातेन पुनर्हेतुभूतेन भजना विकल्पना का भजनेत्यत आह- देशं वा आवश्यकस्याकृत्वा सर्वं वावश्यकमकृत्वा । सम्प्रति यैः कारणैः प्रतिबन्धस्तान्युपदर्शयति-

**[भा.६७६]** तेना सावय वाला गुम्मिय आरक्खि ठवण पडिनीए ।
इत्थि नपुंसग संसत्त वासचिक्खल्ल कंटेय ।।

**वृ-** स्तेनाश्चौरास्ते सन्ध्यासमयेऽन्धकारकलुषिते संचरन्ति । स्वापदानि वा दुष्टानि भूयांसि तदा च दृप्तानि हिण्डन्ते । व्याला वा भुजङ्गमादयो वातादिपानाय भूयांसः संचरन्ति । तथा गुल्मेन समुदायेन संचरन्तीति गौल्मिका आरक्षकाणामप्युपरि स्थायिनो हिण्डिकाः आरक्षकाः पुररक्षकास्ते अकाले हिण्डमानान् गृह्णन्ति । तथा ठवणत्ति, क्वचिद्देशे एवंरूपा स्थापना क्रियते यथा- 'अस्तमिते सूर्ये रथ्यादिषु सर्वथा न संचरणीयम्' इति प्रत्यनीको वा कोऽप्यन्तरायातं विघातकरणार्थं तिष्ठन् वर्तते, स्त्रियो नपुंसका वा कामविह्वलास्तदा उपसर्गयेयुः । संसक्तो वा प्राणिजातिभिरपान्तराले मार्गः । ततोऽन्धकारेणैर्यापथिकी न शुद्धयति वर्षं वा पतत् संभाव्यते, वा चिक्खल्लोत्ति कर्दमो वा पथि भूयानस्ति । ततो रात्रौ पादलग्नः कर्दमः कथं क्रियते कंटत्ति कण्टका वा मार्गेऽतिबहवस्ते रात्रौ परिहर्तुं न शक्यंते । एतैर्व्याघातकारणैः समुपस्थितैर्देशतः सर्वतो वावश्यकमकृत्वा गच्छन्ति । तत्र देशतः कथमकृत्वेत्यत आह–

**[भा.६७७]** थुइमंगलकित्तिकम्मे उस्सग्गे य तिविहकितिकम्मे ।
तत्तो य पडिक्कमणं आलोयणए कितिकंमे ।।

**वृ-** स्तुतिमङ्गलमकृत्वा स्तुतिमङ्गलाकरणे चायं विधिः । आवश्यके समाप्ते द्विस्तुतीरुच्चार्य तृतीयां स्तुतिमकृत्वा अभिशय्यां गच्छन्ति । तत्र च गत्वा ऐर्यापथिकीं प्रतिक्रम्य तृतीयां स्तुतिं ददाति । अथवा आवश्यके समाप्ते एकां स्तुतिं कृत्वा द्वे स्तुती अभिशय्यां गत्वा पूर्वविधिनोच्चरन्ति । अथवा समाप्ते आवश्यके अभिशय्यां गत्वा तत्रतिस्रस्तुतीर्ददति । अथवा स्तुतिभ्यो यदर्वाक्तन, तत् कृतिकर्म तस्मिन्नकृतेऽभिशय्यां गत्वा तत्रैर्यापथिकीं प्रतिक्रम्य मुखवस्त्रिकां च प्रत्युपेक्ष्य कृतिकर्म कृत्वा

स्तुतीर्ददति, । काउस्सग्गे य तिविह' त्ति त्रिविधे कायोत्सर्गे क्रमेणाकृते तद्यथा - चरमं कायोत्सर्गमकृत्वा अभिशय्यां गत्वा चरमकायोत्सर्गादिकं कुर्वन्ति, । अथवा द्वौ कायोत्सर्गौ चरमावकृत्वा यदि वा त्रीनपि कायोत्सर्गान् अकृत्वा । अथवा कायोत्सर्गेभ्योऽर्वाक्तनं यत् कृतिकर्म तस्मिन्नकृते । उपलक्षणेतत् । ततोऽप्यर्वाक्तने क्षामणे यदि वा ततोप्यऽर्वाक्तने कृतिकर्म्मणि अकृते, अथवा ततोप्यर्वाक्तने प्रतिक्रमणे अकृते यदि वा ततोऽप्यर्वाक्तने आलोचने अकृते अथवा ततोऽप्यारात्तने कृतिकर्मणि अकृते अभिशय्यामुपगम्य तत्र तदाद्यावश्यकं कर्त्तव्यमिति ।।

एवमावश्यकस्य देशतोऽकरणमुक्तमिदानीं सर्वस्याकरणमाह-

**[भा. ६७८]** काउस्सग्गंअकाउं कितिकम्मालोयणं जहनेणं ।
गमनम्मी एस विही आगमनम्मी विहिं वोच्छं ।।

**वृ-** यो दैवसिकातिचारानुपेक्षार्थं प्रथमकायोत्सर्गसमस्तमप्यकृत्वा किमुक्तं भवति ? सर्वमावश्यकमकृत्वाभिशय्यां गच्छन्ति किमेवमेव गच्छन्ति उतास्ति कश्चन विधिरुच्यते । अस्तीति ब्रूमः । तथा चाह - कितिकम्मालोयणं जहनेणंति जघन्येन जघन्यपदे सर्वमावश्यकमकृत्वा सर्वे गुरुभ्यो वन्दनं कृत्वा यश्च सर्वोत्तमो ज्येष्ठः स आलोच्य तदनन्तरमभिशय्यां गत्वा सर्वमावश्यकमहीनं कुर्वन्ति । एषोऽभिशय्यायां गमने विधिरागमने अभिशय्यातः प्रत्यागमने पुनर्योविधिस्तमिदानीं वक्ष्ये ।। प्रतिज्ञातमेव निर्वाहयति-

**[भा. ६७९]** आवस्सगं अकाउं निव्वाघाएण होंति आगमनं ।
वाघायम्मि उ भयणा, देसं सव्वं च काऊणं ।।

**वृ-** यदि कश्चनापि व्याघातो न भवति, ततो निर्व्याघातेन व्याघाताभावेनावश्यकमकृत्वा अभिशय्यातो वसतावागमनं भवति । आगत्य च गुरुभिः सहावश्यकं कुर्वन्ति, व्याघाते तु भजना का पुनर्भजनेत्यत आह । देशमावश्यकस्य कृत्वा सर्वं वा आवश्यकं कृत्वा, तत्र देशत आवश्यकस्य करणमाह-

**[भा. ६८०]** काउस्सग्गं काउं कितिकम्मालोयणं पडिक्कमणं ।
किइकम्मं तिविहं वा काउस्सग्गं परिणाय ।।

**वृ-** कायोत्सर्गमाद्यं कृत्वा वसतावागत्य च गुरुभिः सह कुर्वन्ति । अथवा द्वौ कायोत्सर्गौ कृत्वा यदि वा त्रीन् कायोत्सर्गान् कृत्वा अथवा कायोत्सर्गत्रयानन्तरं यत्कृतिकर्म्मतत्कृत्वा, अथवा तदनन्तरमालोचनामपि कृत्वा, यदि वा तत्परं यत्प्रतिक्रमणं तदपि कृत्वा अथवा तदनन्तरं यत्कृतिकर्म द्विभेदं क्षामणादर्वाक्तनं परं चेत्यर्थः । तदपि कृत्वा पाठान्तरं तिविहं वेति मूलकृतिकर्मापेक्षया त्रिविधं वा कृतिकर्मकृत्वा, अथवा कायोत्सर्गं चरमं षण्मासिकं कृत्वा परिज्ञा प्रत्याख्यानंतामपि वा कृत्वा । अत्रायं विधिः । सर्वे साधवश्चरमं कायोत्सर्गं वसतावागत्य गुरुसमीपे वन्दनकं कृत्वा सर्वोत्तमश्च ज्येष्ठ आलोच्य सर्वे प्रत्याख्यानं गृह्णन्ति । अथवा सर्वमावश्यकं कृत्वा एकां च स्तुतिं दत्त्वा शेषे द्वे स्तुती कृत्वा शेषं, गुरु सकाशे कुर्वन्ति ।। तदेवमुक्तं देशत आवश्यकस्य करणमधुना सर्वतः करणमाह-

**[भा. ६८१]** थुतिमंगलं च काउं आगमनं होंति अभिनिसिज्जातो ।
वितियपदे भयणाऊ, गिलाणमादी सु कायव्वा ।।

**वृ-** अथवा प्रत्याख्यानं, तदनन्तरं स्तुतिं मङ्गलं च स्तुतित्रयाकर्षणरूपं तत्र गत्वा अभिशय्यात

आगमनं भवति । तत्रेयं सामाचारी गुरुसमीपे ज्येष्ठ एक आलोचयति । आलोच्य प्रत्याख्यानं गृह्णाति। शेषैः ज्येष्ठस्य पुरतः आलोचनाप्रत्याख्यानं च कृतं वन्दनकं च सर्वे ददति । क्षामणं च; द्वितीयपदे अपवादपदे ग्लानादिषुप्रयोजनेषु भजना कर्तव्या । किमुक्तं भवति ? ग्लानादिकं प्रयोजनमुद्दिश्य वसतौ नागच्छेयुरपीति ग्लानादीन्येव प्रयोजनान्याह-

[भा.६८२] गेलणवास महिया पदुठ अंतेउर निव अगनी ।
अहिगरण हत्थि संभम गेलण निवेयणा नवरि ।।

वृ- ग्लानत्वमेकस्य बहूनां साधूनां तत्राभवत् । ततः सर्वेऽपि साधव स्तत्रव्यापृतीभूता इति न वसतावागमनं । अथवा वर्षं पतितुमारब्धं, मिहिका वा पतितुं लग्ना. यद्वा पठति प्रद्विष्टः कोऽप्यन्तरा विरूपकरणाय तिष्ठति अन्तःपुरं वा तदानीं निर्गन्तुमारब्धं । तत्र च राज्ञा उद्घोषितं यथा-'परुषेण न केनापि रथ्यासु संचरितव्यम्' । राजा वा तदा निर्गच्छति तत्र हयगजपुरुषादीनां संमर्दः । अग्निकायो वाऽपान्तराले महान् उत्थितः । अधिकरणं वा गृहस्थेन समं कथमपि जातं । बृहद् वृषभास्तदुपशमयितुं लग्नाः, हस्तिसंभ्रमो वा जातः । किमुक्तं भवति ? हस्ती कमप्यालानस्तम्भं भङ्क्त्वा शून्यासनः स्वेच्छया तदा परिभ्रमति । एतेषु कारणेषु नागच्छेयुरपि वसतिं, नवरमेतेषु कारणेषु मध्ये ग्लानत्वे विशेषः । यदि ग्लानत्वमागाढमुपजातमेकस्य बहूनां वा तदा गुरूणां निवेदना कर्तव्या समाप्ता प्राक्तनस्यसूत्रस्य निरवशेषा व्याख्या । अथानन्तरमिदं सूत्रम्-

मू. (२०) *परिहार कप्पट्ठिते भिक्खू बहिया थेराणं वेयावडियाए गच्छेज्जा, थेराय से सरेज्जा, कप्पइ से एगराइयाए पडिमाए, जं णं जं णं दिसिं अन्ने साहम्मिया विहरंति, तं णं तं णं देसं उवलातुं नो से कप्पइ, तत्थ विहारवत्तियं वत्थए, कप्पइ से तत्थ कारणवत्तियं वत्थए, तंसि च णं कारणंसि निट्ठियंसि परोवएज्जा, वसाहि अज्जो एगरायं वा दुरायं वा एवं से कप्पइ एगरायं वा दुरायं वा वत्थए, नो से कप्पइ एगरायं वा दुरायं वा परं वत्थए जं तत्थ एगरायाओ वा दुरायाओ वा परं वसइ, से संतराए छेदे वा परिहारे वा ।।*

वृ- परिहारकप्पठिते भिक्खू इत्यादि । अथास्य सूत्रस्य कः सम्बन्धः ? उच्यते-

[भा.६८३] परिहारो खलु पगतो अविछिन्नं वावि पावपरिहारे ।
सविखित्तनिग्गमो वा भणिउ इमगंतुदूरेवि ।।

वृ- इह पूर्वपूर्वतरसूत्रेषु परिहार उक्तो न च क्वचिदप्यन्तराले परिहारप्रकरणं व्यवच्छिन्नं ततः प्रकृतः खलु परिहार इति तत्प्रकरणानुरोधादत्र परिहारमभिधीयते यदि वा अनन्तरसूत्रे इदमुक्तं स्थविरैरननुज्ञातामभिशय्यामभिनैषेधिकीं वा यदि गच्छति ततः प्राप्नोति परिहारमिति । अत्र तु स एव परिहारितमुपगतः प्रतिपाद्यते । अथवान्तरसूत्रे अभिशय्यादिगमनमुक्तं स प्रत्यासन् क्षेत्रनिर्गमः । इदं तु सूत्रं दूरे निगमनमभिधत्ते इत्यनेन सम्बन्धेनायातस्यास्य व्याख्या परिहारस्य कल्पः सामाचारी परिहारकल्पस्तत्रस्थितः परिहारकल्पस्थितः प्रायश्चित्ततपः प्रकारे व्यवस्थित इत्यर्थः भिक्षुर्व्रती बहिरन्यत्र नगरादौ स्थविराणामाचार्यादीनां वैयावृत्याय वैयावृत्यकरणाय गच्छेत् स्थविराश्च येषां समीपे तिष्ठन्ति ते स्मरेयुर्यथैष परिहारकल्पस्थितो वर्तते. स्मरद्भिः स्थविरैः स वक्तव्यो यावत्प्रत्यागच्छसि तावन्निक्षिप परिहारतपः । तत्र यदि सामर्थ्यमस्ति ततः परिहारतपः प्रपन्नो गच्छति, । अथवा नास्ति ततो निक्षिपति, निक्षिप्य च स तस्य कल्पते एकरात्रिक्या प्रतिमयाऽत्र प्रतिमाशब्दोऽभिग्रहवाची । एकरात्रिकेणाभिग्रहेण किमुक्तं भवति । यत्रापान्तराले वसामि तत्र गोकुलादौ प्रचुरगोरसादि

लाभेऽपि प्रतिबन्धमकुर्वता कारणमन्तरेण मयैकरात्रमेव वस्तव्यं नाधिकमित्येवं रूपेणाभिग्रहेण, जनं जनं दिसिमित्यादि । अत्र द्वितीया सप्तम्यर्थे । यस्यां यस्यांदिशि । नंशब्दो वाक्यालङ्कारे । अन्ये साधर्मिकाः प्रवचनसाधर्मिका वा संविग्नसंभोगिकादयो वक्ष्यमाणास्तिष्ठन्ति । तणं तणं दिशमिति तां तां दिशं णं शब्दो प्राग्वत् । उपलातुं ग्रहीतुमाश्रयितुमित्यर्थः । ला आदाने इति वचनात् । नो से कप्पइ इत्यादिनानेव से तस्य परिहारकल्पस्थितस्य निक्षिप्तपरिहारतपसो वा कल्पते । तत्रेति गच्छन् यत्र वसति भिक्षां वा करोति । तत्र सुन्दर आहारः, सुन्दर उपधिः, सुन्दरः शय्येति, समीचीनो विहार इति विहारप्रत्ययं वस्तुं कप्पइ सेत्यादि कल्पते, से तस्यानन्तरंदितस्य यत्र भिक्षां कृतवान् उषितवान् वा । तत्र कारणप्रत्ययं वक्ष्यमाणसूत्रार्थ प्रतिपृच्छादानादिकारणनिमित्तं वस्तुं, तस्सिंचणमित्यादि । येन कारणेनोषितस्तस्मिन् कारणे निष्ठिते परिसमाप्ते यदि ब्रूयात् । अहो आर्यवस एकरात्रं द्विरात्रं वा तत एवं तदुपरोधतः से तस्य कल्पते । एकरात्रं द्विरात्रं वा वस्तुं न पुनः से तस्य कल्पते एकरात्रात् द्विरात्रात् परं वस्तुं, यत्पुनस्तत्रैकरात्रात् द्विरात्राद्वा परं वसति निष्कारणं तस्मात्सान्तरात् स्वकृतादन्तरादपान्तराले निष्कारणवसनरूपात्से तस्य प्रायश्चित्तं च्छेदो वा परिहारतपो वेति एष सूत्रं संक्षेपार्थः । साम्प्रतमेतदेव सूत्रं विवरीषुः प्रथमतो भिक्षुशब्दविषये चालना प्रत्यवस्थाने आह-

[भा.६८४] परिहारिय गहणेणं भिक्खुगहणं तु होइ किं न गयं ।
किं च गिहिणवि भणित्ति गणि आयरियाणपडिसेहो ? ।।

वृ- अथवा पारिहारिकग्रहणेन परिहारकल्पस्थितग्रहणेन भिक्षुग्रहणं किं न भवतीति गतं गतार्थं भवत्येवेति भावः । परिहारकस्य भिक्षुत्वाव्यभिचारात् न खलु पारिहारिकत्वं गृहस्थस्यापि भवति । एतदेव का क्वा आह-किं च गिहीणवित्ति किं वा गृहिणामपि गृहस्थानामपि भवति पारिहारिकत्वं येन तद्व्यवच्छेदकरणतो भिक्षुग्रहणं सफलतामश्रुवीत् । नैव भवतीति भावः, । ततो निरर्थकं भिक्षुग्रहणं । अत्राह भण्यते उत्तरं दीयते, गण्याचार्ययोर्गणी गच्छाधिपतिराचार्योऽनुयोगाचार्यस्तयोः । उपलक्षणमेतत्, उपाध्यायस्य च प्रतिषेधो भिक्षुग्रहणेन आचार्योपाध्यायप्रतिषेधार्थं भिक्षुग्रहणमिति भावः । पुनरप्याक्षेपपरिहारावाह-

[भा.६८५] वेयावच्चुज्जमणे गणि आयरियाण किं नु पडिसेहो ।
भिक्खुपरिहारिउ चि हु करेइ किमु आयरियमादी ।।

वृ- वैयावृत्योद्यमेन वैयावृत्यविषयोद्यमकरणे किं नु खलु गण्याचार्ययोर्गच्छाधिपत्यनुयोगा-चार्योपाध्यायानां प्रतिषेधः नैवासौ युक्त इति भावः । यतो भिक्षुरपि शब्दो भिन्नक्रमत्वादन्यत्रोपात्तोऽप्यत्र सम्बध्यते परिहारकः करोति । सद्व वैयावृत्यं किमुताचार्यादि न करोति सुतरां तेन कर्तव्यं गुणोत्तमतया विशेषतस्तस्यैतत्करणादिकारत्वात् । अत्र सूरिराह-

[भा.६८६] जम्हा आयरियादी निक्खिवविऊणं करेइ परिहारं ।
तम्हा आयरियादी वि भिक्खुणो होंति नियमेण ।।

वृ- यस्मादाचार्यादिकः परिहारं परिहारतपः करोति । आचार्यादिपदं निक्षिप्य मुक्त्वा तस्मादाचार्यादयोऽपि भवन्ति नियमेन भिक्षव इति भिक्षुग्रहणेन तेऽपि तदवस्थोपगता गृहीता इति । अथ स्थविराणां वैयावृत्याय गच्छतीत्युक्तं तत्र किं वैयावृत्यं येन हेतुभूतेन स गच्छति तत आह-

[भा.६८७] परिहारिओ उ गच्छे सुत्तत्थ विसारओ सलद्धीओ ।

अन्नेसिं गच्छाणं इमाइं कज्जाइं जायाइं ।।

**वृ-** यस्मात्स पारिहारिकः सूत्रार्थविशारदः सम्यक् सूत्रार्थ तदुभयकुशलः तथा स लब्धिकोऽनेकलब्धिसम्पन्नस्ततः सूत्रार्थ प्रतिपृच्छाप्रदाननिमित्तं तदान्येषां गच्छादीनां षष्ठी सप्तम्यर्थे प्राकृतत्वादन्येषु गच्छेषु इमानि वक्ष्यमाणानि कार्याणि जातानि । ततः साधनार्थं च गच्छेत् । इदं तु महत् प्रवचनस्य वैयावृत्यं यत्सूत्रार्थप्रदानादि करोति । अथकान्यन्येषु गच्छेषु जातानि कार्याणि यदर्थं स व्रजेत् अत आह-

**[भा.६८८]**　　अकिरियजीए पिट्टण संजमबंधेय भत्तमलभंते ।
भत्तपरिणगिलाणे संजमतीए य वादी य ।।

**वृ-** अक्रियावादी नास्तिकवादी स राजसमक्षं वादं याचते । जीए त्ति जीविते साधूनां प्राणेषु वा राजा केनापि कारणेन प्रद्विष्टः । 'पिट्टण' त्ति पट्टियति वा लकुटादिभिः साधून् । 'संजम' त्ति संयमाद्वाच्यावयति उत्प्राजयतीति भावः । बंधति बध्नाति वा साधून् बन्धे च कृत साधवो राज्ञः सकाशाद्भक्तपानं लभन्ते वा न वा किमुक्तं भवति । बन्धयित्वा स्वयं ददाति वा अथवा वारयति एतेभ्यो हिण्डमानेभ्यः कोऽपि मा भिक्षां दद्यादिति भावभतित्ति दुर्भिक्षे वा समापतिते भक्तमतीव दुर्लभं जातमिति गत्वा स संपादयति, परिणत्ति भक्तप्रत्याख्यानं वा केनापि साधुना कृतं स च परिहारिकः शोभनो निर्यामकः, । गिलाणत्ति ग्लानो वा कोऽप्याचार्यादिकः प्रवचनाधारभूतो जातः स च पारिहारिकः सम्यग् वैद्यकलाकुशलः, । संजमतीतेति संयमातीता उत्प्रव्रजितास्ते राज्ञा कृताः कृत्वा च धृता वर्तन्ते इति तन्मोचनार्थं गच्छति, वादीत्ति नास्तिकवादिव्यतिरिक्तो दर्शनान्तरस्थः कोऽपि वादं याचते । एतेषां कारणानामन्यतरस्मिन्नपि कारणे जाते अन्यगच्छवर्त्तिभिः सङ्घाटकः प्रेषितः । तेन च सङ्घाटकेन आचार्यस्य निवेदितम् । तत आचार्यस्तस्य परिहारिकस्य माहात्म्यमवगच्छन्निदमाह-

**[भा.६८९]**　　न वि य समत्थो अन्नो अहियं गच्छामि निक्खिविय भूमिं ।
सरमाणेहिं वि भणियं, आयरिया जाणिया तुज्झे ।।

**वृ-** परिहारिकं मुक्त्वा नैव अपिशब्दोऽवधारणार्थः अन्यः कोऽपि तं वादिनं निवारयितुं अन्यद्वा प्रयोजनं साधयितुं समर्थः । यदि वा स एव परिहारिको ब्रूते । प्रचण्ड स वादी ना मां मुक्त्वा अन्यः कोऽपि निवारयितुं समर्थः । न वा राजानां पिट्टनादि कार्यंतं ततो यदि गुरवोऽनुजानन्ते ततोऽहं गच्छामि एवं स्वयं तन्माहात्म्ये ज्ञातेऽन्येन वा कथिते तैराचार्यैरथ परिहारतपोवहती तिस्मरद्भिस्तं प्रतिभणितं कर्त्तव्यं, एतत् ब्रूयात् तं प्रतीत्यर्थः । यथा-आर्य ! निक्षिप भूमिं आत्मीयां भूमिकां यावत्प्रत्यागममिह भवति तावत्मुच्यतां परिहारतप इति । एवमुक्ते यदि निक्षिपति ततो निक्षेपं कार्यते । अथ ब्रूते परिहारिको भगवन् शक्नोमि प्रायश्चित्तं वोढुं तदपि च प्रयोजनं कर्तुं तत आचार्यैर्वक्तव्यम् । आयरिणा जाणगा तुज्झमिति तव आचार्याज्ञकाः विमुक्तं भवति ? यत्र त्वं गच्छसि तत्र से आचार्यास्ते तत् ब्रुवंत तत् कुर्या इति अत्र यदुक्तं । न त्थि य समत्थो अन्नो अहियं गच्छामित्ति तद्विभावयिषुरिदमाह-

**[भा.६९०]**　　जाणंता माहप्पं, कहेंति सो वा सयं परिकहेइ ।
तत्थ सवादी हु मए, वादेसु पराजितो बहुसो ।।

**वृ-** तस्य परिहारिकस्य माहात्म्यमद्भुतां शक्तिं स्वयं जानाना इदं तस्मै कथयन्ति । यथा नान्यः कोऽपि समर्थस्त्वां मुक्त्वा अथवा स एव पारिहारिकः स्वयं गुरुभ्यः परिकथयति । यथा तत्र तस्मिन् गन्तव्ये स्थाने यो वादी वर्तते स मया हु निश्चितं बहुशो अनेकवारं वादेषु अक्रियावादादिषु पराजितः

प्रचण्डश्च स न मां मुक्त्वा अन्येन निवारयितुं शक्यते । नापि राजा पिट्टनादि कारयन्, ततो यदि गुरूणा-मनुज्ञा भवति ततोऽहं गच्छामीति शेषं पूर्वगाथागतमुत्तानमिति न व्याख्यातम् । अत्र चोदक आह-

[भा.६११] चोएइ कहं तुब्भे परिहारतवं गतं पवनं तु ।
निक्खिविउं पेसेहा चोयग सुण कारणमिणं तु ।।

वृ- चोदयति प्रश्नयति परो यथा-कथं यूयं तकं परिहारतपं प्रतिपन्नं परिहारतपो वहन्तं, नक्खिविउमिति परिहारतपो निक्षिप्य निक्षेपं परिहारतपसः कारयित्वा प्रेषयत स हि महातपस्वी दुष्करकारी ततो न युक्तमेतस्य तपो मोचयित्वा प्रेषणमिति । अत्राचार्य आह चोदक शृणु कारणमिदं येन कारणेन स तपो निक्षिप्य प्रक्षते तदेव कारणमाह-

[भा.६१२] तिक्खेसु तिक्खकज्जं सहमाणेसु य कमेण कायव्वं ।
न य नाम न कायव्वं वा उवादाय ।

वृ- तीक्ष्णं नाम यद्गुरुकमतिपाति च । तेषु तीक्ष्णेषु कार्येषु समुत्पन्नेषु य तीक्ष्णकार्यमित्रत्तरलोपो द्रष्टव्यः । तीक्ष्णतरं कार्यं तत्प्रथमं कर्तव्यं पश्चादितरत् । उक्तं च--

युगपत्समुपेतानां कार्याणां यदतिपाति तत्कार्यं, अतिपातिष्वपि फलं, फलदेष्वपि धर्मसंयुक्तं

'सहमानेसुय' त्ति सहमानं गुरुकमनतिपाति च तेषु सहमानेषु पुनः कार्येषु समुत्पन्नेषु । तद्यथा-देशकालाद्यौचित्येन युज्यते तत्तथाक्रमेण कर्तव्यं न य नाम न कायव्वंति । न च नाम तीक्ष्णतरं कार्यं कृत्वा पश्चात्सहमानकं न कर्तव्यं किन्तु कर्तव्यमेव कायव्वं वा उवादायेति यदि वा द्वयोरतिपातिनोः कार्ययोः समुत्पन्नयोर्गुरुलाधवचिन्तामुपादाय यत् गुरुकं प्रवचनोपकारिसकलसङ्घसाधारणं च तत्कर्तव्यमितरदतिपात्युपेक्षते । यत्र यदुक्तं तीक्ष्णतरं प्रथमतः कृत्वा पश्चात्सहमानकं कर्तव्यं । न च तन्नकर्तव्यमिति तत्र दृष्टान्तो व्रणक्रियाः । तामेवाह-

[भा.६१३] वण किरियाए जो होइ वावन्ना जरधनुग्गहादीया ।
काउमुवद्दवकिरियं समेंति तो तं वणं विज्जा ।।

वृ- व्रणक्रियायां प्रारब्धायामपान्तराले या भवति व्यापदुपद्रवः का व्यापदित्याह । ज्वरधनु-ग्रहादिका ज्वरो वा समुत्पन्नो धनुग्रहो वा वातविशेषः आदिशब्दात्तदन्येषां गुरुकव्याधि विशेषाणां जीवितान्तकारिणां परिग्रहः । तस्य व्यापल्लक्षणस्य उपद्रवस्य क्रियां कृत्वा ततः पश्चात्तं व्रणं वैद्याः शमयन्ति । एष दृष्टान्तोऽयमर्थोपनयः-

[भा.६१४] जह आरोग्गे पगयं एमेव इमंमि कम्मखवणेण ।
इहरा उ अवच्छल्लं ओहावण तित्थहानी य ।।

वृ- यथा वैद्यक्रियायामारोग्यप्रकृतं येनारोग्यं भवति, तत्प्रथमं क्रियते शेषं पश्चादित्यर्थः एवमेव अनेनैव प्रकारेण अस्मिन्नपि मोक्षानुष्ठाने कर्मक्षपणेन प्रकृतं येनानुष्ठाने कर्मक्षपणमचिराद्भवति, तत्प्रथमतः कर्तव्यमिति भावः । इयमत्र भावना-मोक्षार्थं क्रियमाणायां क्रियायामपान्तराले यदन्तरायमुपजायते, येनाक्रियमाणेन प्रायश्चित्तमुपजायते, तत् प्रथमतः कर्तव्यमितरत् पश्चात्तथा चात्रापि परिहारतपस्युह्यमाने अन्तरा सङ्घादिकार्यमुपस्थितम् । ततः परिहारतपो निक्षिप्य तत् क्रियते, अन्यथा प्रायश्चित्तापत्तितः कर्मक्षपणाऽसंभवस्तथा चाह-इतरा अधिकृतसङ्घादिप्रयोजनाकरणे अवात्सल्यं सङ्घावात्सल्यप्रत्ययं, अपभ्राजनाप्रत्ययं, तीर्थहानिश्च तीर्थहानिप्रत्ययं च प्रायश्चित्तमापद्यते

इति ।।

[भा.६९५] अप्परिहारी गच्छति तस्स असतीए जो उ परिहारी ।
उभयम्मि वि अविरुद्धं आयरहेउं तु तग्गहणं ।।

वृ- अत्रेयं सामाचारी यद्यपरिहारिकः सूत्रार्थसम्पन्नः सलब्धिकश्च तत्कार्यं साधयितुं समर्थः ततः स गच्छति । तस्य तथाभूतस्यापारिहारिकस्यासत्यविद्यमानत्वे यः परिहारी पारिहारिकः स गच्छति एवमुभयस्मिन्नपि अपारिहारिके पारिहारिके च गमने अविरुद्धे तत्सूत्रे तद्ग्रहणं तस्यैव पारिहारिकस्य ग्रहणं कृतं तदादरहेतोः सूत्रे द्वितीया पञ्चम्यर्थे आदरख्यापनार्थमित्यर्थः । किमुक्तं भवति ? यदि पारिहारिकोऽपि गच्छति ततः सुतरामपारिहारिकेण गन्तव्यमिति ख्यापनार्थं पारिहारिकग्रहणं न चोभयग्रहणमुपपत्तिमत् पारिहारिकग्रहणेनैवोक्तियुक्तिः उभयग्रहणस्य सिद्धत्वात् । यदि पुनरपारिहारिकग्रहणमेव केवलं स्यात्ततः पारिहारिको न यातीति प्रतिपत्तिः स्यात्र चैं तत्समीचीनमतो यथा न्यासः श्रेयानिति सम्प्रति तस्य संस्थितस्य सहायचिन्तां करोति-

[भा.६९६] संविग्गमणुनजुओ, असती अमणुनमीसपंथेणं ।
समणुणेसुं भिक्खं काउं वसए ऽमणुणेसु ।।

वृ- स पारिहारिक संविग्नमनोज्ञयुक्तो, असति मनोज्ञे संविग्नाऽमनोज्ञसहायो गच्छेत् । इयमत्र भावना-तस्य पारिहारिकस्य गन्तुं प्रस्थितस्य संविग्नो मनोज्ञश्च सहायो दातव्यः, मनोज्ञः सांभोगिकस्तदभावे संविग्नोऽसांभोगिकः । एवंभूतसहायस्य च यदि सामर्थ्यमस्ति । ततः उत्सर्गतः कल्पते निर्विशमानकस्य सतो गन्तुं, निर्विशमानको नाम परिहारकल्पस्थितः । अथ नास्ति सामर्थ्यं ततः परिहारतपो निक्षिप्य गोकुलादिषु प्रतिबन्धमकुर्वन् गच्छति, । तत्र यदुक्तं- 'जणं जणं दिसा साहम्मिया तणं तणं दिसं उवलित्तए' इति तद्व्याख्यानमाह-मीसपंथेण मिश्रेण साधर्मिका साधर्मिक युक्तेन पथा गन्तव्यम् । अस्यैव व्याख्यानमाह-समणुणेसु इत्यादि स परिहारिकः समनोज्ञेषु संभोगिकेषु भिक्षां कृत्वा मनोज्ञेषु संभोगिकेषु वसति । अत्र चत्वारो भङ्गास्तद्यथा मनोज्ञेषु भिक्षांकृत्वा मनोज्ञेषु वसति एष प्रथमो भङ्गः साक्षादुपात्तः । एतस्यासंभवे सांभोगिकेषु भिक्षां कृत्वा असांभोगिकेषु वसति २ । एतस्याप्यभावे तृतीयः असांभोगिकेषु भिक्षां कृत्वा सांभोगिकेषु वसति ३ । एतस्याप्यसंभवे चतुर्थः असांभोगिकेषु भिक्षां कृत्वा असांभोगिकेषु वसति । एवमेते संविज्ञ सांभोगिकेषु चत्वारो भङ्गा उक्ताः । एवं संविग्ना संविज्ञ सांभोगिकादिषु द्रष्टव्यास्तथा चाह-

[भा.६९७] एमेवय संविग्गे असंविग्गे चेव एत्थ संजोगा ।
पच्छाकड साभिग्गह सावगसंविग्ग पक्खीय ।।

वृ- यथा संविज्ञ सांभोगिकासांभोगिकेषु चतुर्भङ्ग्या भिक्षावसतय उक्ता, एवमेव अनेनैवप्रकारेण संविग्नऽसंविग्ने वा सांभोगिके भिक्षावसतिविचारे संयोगा वक्तव्याः । एवमेव असंविग्नाः सांभोगिकाः पश्चात्कृतसमिग्रहनिरभिग्रह श्रावकेषु, तेषामप्यसंभवे । संविज्ञपाक्षिकासंविज्ञपाक्षिक श्रावकेषु प्रत्येकं चत्वारः संयोगाः कर्तव्याः । सर्वत्र च पूर्वपूर्वचतुर्भङ्गी चतुर्थभङ्ग उत्तरोत्तर चतुर्भङ्ग्यां प्रथमो भङ्गः । तद्यथा-संविग्नासंविभोगिकेषु भिक्षां कृत्वा संविज्ञासंभोगिकेषु वसति १ । एतस्य भङ्गस्याभावे संविग्नासंभोगिकेषु भिक्षां कृत्वा असंविज्ञासांभोगिकेषु वसति २ । असंविज्ञासांभोगिकेषु भिक्षां कृत्वा संविज्ञासांभोगिकेषु वसति ३ । अस्यासंभवे असंविज्ञासांभोगिकेषु भिक्षां कृत्वा असंविग्नासांभोगिकेषु

वसति ४ । तदेवं संविग्नासांभोगिक चतुर्भङ्गी भाविता ।।

साम्प्रतमसंविग्रा सांभोगिकपश्चात्कृत साभिग्रहचतुर्भङ्गी भाव्यते, असंविज्ञा सांभोगिकेषु भिक्षां कृत्वा असंविज्ञा सांभोगिकेषु वसति । एष पूर्वचतुर्भङ्गयाश्चतुर्थो भङ्गः । एतस्याभावे असंविग्रा सांभोगिकेषु भिक्षां कृत्वा पश्चात्कृतसाभिग्रहश्रावकेषु वसति २ । पश्चात् कृतव्रतपर्यायो यैस्ते पश्चात् कृता मुक्तव्रतपर्यायाः पुराणा इत्यर्थः । एतस्यापिभङ्गस्याभावे पश्चात्कृतसाभिग्रहश्रावकेषु भिक्षां कृत्वा असंविज्ञा सांभोगिकेषु वसति ३ । एतदभावे पश्चात्कृतसाभिग्रहश्रावकेषु भिक्षां कृत्वा पश्चात्कृतसाभिग्रहश्रावकेषु वसति ४ । इदानीं पश्चात्कृतसाभिग्रहनिरभिग्रहश्रावकचतुर्भङ्गी भाव्यते- पश्चात्कृतसाभिग्रहश्रावकेषु भिक्षां कृत्वा पश्चात्कृतसाभिग्रह श्रावकेषु वसति १ । एष पूर्वचतुर्भङ्गयाश्चतुर्थोभङ्गः । एतस्याभावे पश्चात्कृतसाभिग्रहश्रावकेषु भिक्षां कृत्वा पश्चात्कृतनिरभिग्रहश्रावकेषु वसति २ । एतस्याभावे पश्चात्कृतनिरभिग्रहश्रावकेषु भिक्षां कृत्वा पश्चात्कृतसाभिग्रहश्रावकेषु वसति ३ । एतदभावे पश्चात्कृतनिरभिग्रहश्रावकेषु भिक्षां कृत्वा पश्चात्कृतनिरभिग्रहश्रावकेषु वसति ४ ।।

सम्प्रति पश्चात्कृतनिरभिग्रहसंविग्नपाक्षिकश्रावकेषु चतुर्भङ्गीभावना पश्चात्कृतनिरभिग्रहश्रावकेषु भिक्षां कृत्वा पश्चात्कृतनिरभिग्रहश्रावकेषु वसति । एष प्राक्तनचतुर्भङ्गयाश्चतुर्थभङ्गः १ । एतस्याभावे पश्चात्कृतनिरभिग्रहश्रावकेषु भिक्षां कृत्वा संविज्ञपाक्षिकश्रावकेषु वसति २ । एतस्यासंभवे संविज्ञपाक्षिकेषु श्रावकेषु भिक्षां कृत्वा पश्चात्कृतनिरभिग्रहश्रावकेषु वसति ३ । एतस्याप्यसंभवे संविग्नपाक्षिकश्रावकेषु भिक्षां कृत्वा संविग्नपाक्षिकश्रावकेषु वसति ४ । इदानीं संविज्ञपाक्षिकासंविज्ञपाक्षिकश्रावक चतुर्भङ्गी भाव्यते-संविज्ञपाक्षिकश्रावकेषु भिक्षां कृत्वा संविज्ञपाक्षिकश्रावकेषु वसति १ । एष पूर्वचतुर्भङ्गयाश्चतुर्थो भङ्गः । एतस्याभावे संविज्ञपाक्षिकेषु भिक्षां कृत्वा असंविज्ञपाक्षिकश्रावकेषु वसति २ । एतस्याभावे संविज्ञपाक्षिकश्रावकेषु भिक्षां कृत्वा संविज्ञपाक्षिकश्रावकेषु वसति ३ । अस्याप्यसंभवे संविज्ञपाक्षिकश्रावकेषु भिक्षां कृत्वा असंविज्ञपाक्षिकश्रावकेषु वसति ४ । सम्प्रति यदुक्तं 'नो से कप्पइ विहारवत्तियं वत्थए' इति तत्र विहारं व्याख्यानयन्नाह-

[भा.६९८] आहारोवहिज्झालो, सुंदर सेज्जा वि होइ हु विहारो ।
कारणातो उ वसेज्जा इमे उ ते कारणा होंति ।।

वृ- आहारः खल्वत्र शोभनो लभ्यते । यदि वा उपधिः स्वाध्यायो वा तत्र सुखेन निर्वहति । अथवा सुंदरा शोभना शय्या वसतिरित्येष आहारादि विहारहेतुत्वाद्भवति विहारः । तत्प्रत्ययं न कल्पते वस्तुं कारणतः पुनस्तुशब्दस्य पुनः शब्दार्थत्वात् वसेत् । एतेन कारणवित्तियं वत्थए इति व्याख्यानयति । तानि पुनः कारणानीमानि वक्ष्यमाणानि भवन्ति तान्येवाह-

[भा.६९९] उभतो गेलन्नं वा वास नदी सुत्त अत्थ पुच्छा वा ।
विज्जा निमित्तगहणं करेति आगाढ पन्नावा ।।

वृ- उभयतो द्वाभ्यां प्रकाराभ्यां ग्लान्यं ग्लानत्वं भवेत् । किमुक्तं भवति ? स एव पारिहारिको गच्छन् अपान्तराले ग्लानो जातः, । ततो वसेद्यदिवान्यः कोऽपि साधुरभवत् ग्लानस्तं दृष्ट्वा श्रुत्वा वा तत्परिचरणार्थं तिष्ठेत् । यदिवा वर्षं पतति नदी वा पूर्णा समागता, सुत्त अत्थ पुच्छ वा इति केचिदाचार्याः सूत्रमर्थं प्रतिपृच्छेयुः । ततः सूत्रार्थप्रतिपृच्छादाननिमित्तं वसेत्, विज्जेति पत्रवादिनो मुखबन्धकरणी

कस्यापि पार्श्वे विद्या समस्ति, यदि वा मायूरी नकुली इत्यादिकाः कस्यापि विद्याः सन्ति निमित्तं वाऽतिशायि कस्यचित् सकाशेऽस्ति । ततो यावद्विद्याग्रहणं निमित्तग्रहणं वा करोति तावदास्ते । तथा 'आगाढं' ति आगाढयोगप्रविष्टाः केचन साधवः तेषामाचार्या यदि वा यस्तान् निर्वाहयति वाचना पदानादिना स वा कालगतस्ततो यावत्तान् वाचयति, तावदवतिष्ठते । पाणत्ति ईदृशं किमपि शास्त्रमपान्तराले तेन लब्धं यस्मिन्नधीते गाढप्रज्ञावान् भवति । ततः प्रज्ञोऽहं भूयासमिति वसेत् । स मूलादारभ्य कथं व्रजतीत्यत आह-

**[भा.७००]** वहमाण अवहमाणो संघाडगेण वा असति एगो ।
असती मूलसहाए अन्नेवि सहायए देंति ।।

**वृ-** परिहारतपो वहन् यदि वाऽवहन् निक्षिप्तपरिहारतपाः, 'संघाडगेनेत्ति' संघाटकेन संघाटसाधुनैकेन सह व्रजेत् । तथा आचार्येण ग्लानादि प्रयोजन व्यापृततया तस्य संघाटसाधुः सहायो न दत्तस्ततोऽसतिसंघाटकसाधावेकाकी व्रजेत् । एकाकिनश्च गच्छतः सतोऽसति मूलसहायेऽविद्यमाने मूलादारभ्य संघाटकसाधवेऽन्येऽपि येषामाचार्याणां मध्येन गच्छति तेऽपि तस्य सहायान् ददति ।

**[भा.७०१]** मोत्तूण भिक्खवेलं जाणिय कज्जाइं पुव्व भणियाइं ।
अप्पडिबद्धो वच्चइ कालं थामं च आसज्ज ।।

**वृ-** मुक्त्वा भिक्षावेलां यानि च कार्याणि पूर्वभणितानि उभयो गेलन्ने वा इत्यादि रूपाणि तानि च मुक्त्वा अप्रतिबद्धो गोकुलादिषु प्रचुरगोरससपिरादिलाभेऽपि प्रतिबन्धमकुर्वन् कालं विहारोचितं स्थामं च प्राणमात्मीयं गमनविषयमासाद्य विहारक्रमकालमौचित्येन स्वशक्त्यौचित्येन चैत्यर्थो व्रजेत् ।।

**[भा.७०२]** गंतूण य सो तत्थ य, पुव्विं संगिण्हए ततो परिसं ।
संगिण्हित्ता परिसं करेइवादं समं तेनं ।।

**वृ-** यस्मिन् स्थाने प्रयोजनं तत्रसोऽधिकृतः परिहारकल्पस्थितो निक्षिप्तपरिहारतपो वा गत्वा पूर्वमेव संगृह्णाति आत्मीकरोति परिषदं, संगृह्य च परिषदं पटहेन घोषयति । यस्य वादं कर्तुं शक्तिरस्ति स तदभिकांक्षी सत्वरं समागच्छतु । एवं च घोषणायां कारितायां तेन समं वादं करोति कथमित्याह-

**[भा.७०३]** अबंभचारि एसो किंन्नाहिंति कोठ एस उवगरणं ।
वेसित्थीए पराजितो उन्निव्विसय परूवणासमए ।।

**वृ-** वादात्पूर्वमेव निमित्तमुपयुज्य तस्य स्वरूपमवगच्छति, । ततस्तस्मिन्नागते इदं ब्रूते-एष वाद्यब्रह्मणोऽपि दोषान्न जानाति । अतएषोऽब्रह्मचारी अब्रह्मप्रतिसेवीपशुवदब्रह्मणोऽपिदोषान्नजानन् किं कथमन्यत् ज्ञास्यति, एवमुक्ते सभ्याः प्रेक्षका ब्रूयुः कथमवसितमेषोऽब्रह्मचारीति ? स प्राह-गच्छत प्रेक्षध्वं यूयं यत्रासाववस्थितः तस्मिन् कोष्टके आश्रयविशेषेऽधिकरणं खट्वादि अमुकप्रदेशे संगोपितमस्तीति । तथा अमुकाया वेश्यया स्त्रिया सममेष अमुकदिवसे द्यूतेन रममाणः पराजितः तत एतस्य वस्त्रंग्रहणकंगृहीतमेवमादिभिः । चिह्नैरवगच्छत । यथैषोऽब्रह्मचारीति तेगताः सर्वसंवदितं कथितं राज्ञः, निव्विसय परूवणा इत्यादि पश्चात् व्याख्यास्यते । तदेवं निमित्ताभोगबलवतो यत्कर्तव्यं तदुक्तम् । साम्प्रतमतिशयविशेषमधिकृत्याह-

**[भा.७०४]** जो पुना अतिशयनाणी सो भणती एस भिन्नचित्तोत्ति ।
कोणेण समं वादो दट्ठुंपि न जुज्जए एस ।।

**वृ-** यः पुनरतिशयज्ञानी अवधिज्ञानादिकलितः स च बहुतरं तस्य दुःशीलत्वमवगम्य सर्वमुद्धेर्निःशङ्कितं भणति । यथैष भिन्नव्रत इति ततः कोऽनेन सममस्को वादो य एव द्रष्टुमपि न युज्यते इति । अथ केन समं युज्यते वादः ? उच्यते- आर्यत्वादिगुणोपेतेन तथा चोक्तम्-

अज्जेण भव्वेण वियाणएणा धम्मपत्तिणेण अलीय भीरुणा ।
सीलकुलायारसमत्तिएण तेनं समं वाय समायरेज्जा ॥

आर्य आर्यकर्मकारी अजुगुप्सितकर्मकारीत्यर्थः तेन, भव्योऽनेकगुणसंभावनीयः । विज्ञो वादाभिज्ञः धर्मप्रतिज्ञो धर्मकरणाभ्युपगमपरः, अलीकभीरुः सत्यवादी । तथा शीलाचारसमन्वितः शीलदोषरहित इति भावः । कुलाचारसमन्वितः कुलदोषरहितः तेन समं वादं समाचरेत् । तत ईदृशेन समं वादस्तीर्थकरैरनुज्ञातो नान्यादृशेनेति । अथ स शून्यवादी भवेत् न दर्शनी, ततः स्वशक्तिबलेन यं यं हेतुमुच्चरति स स प्रत्युच्चार्यासिद्धत्वविरुद्धत्वानैकान्तिकत्वदोषैर्दूषयितव्यः । प्रतिज्ञादिकमपि दूषयितव्यम् । अथ कदाचित्तेनासावेव सिद्धान्तो [illegible] जीवादीस्त्रयः राशी जगतीतिममप्रतिज्ञेति अत्र पूर्वगाथा खंडस्यावकाशः पराजितोऽनिविसयं परूवणासमए इति तेन पारिहारिकेन त्रीन् राशीन् प्रस्थापयित्वा वादे पराजेतव्यः । एतच्च निदर्शनमात्रं, अन्यथापि सिद्धान्तोत्तीर्णमुच्चैर्भाषित्वा पराजेतव्यः । पराजितश्च स यदि भवेत् राज्ञा च निर्विषय आदिष्टस्ततः पश्चात् सकलपर्षत्समक्षं स्वसमये स्वसमयविषया प्ररूपणा कर्तव्या कथमित्याह-

**[भा.७०५]**　　परिभूयमतिं एयस्स एयदुत्तं न एसणे समतो ।
समएण विनिग्गहिए गज्जइ वसभोव्व परिसाए ॥

**वृ-** यदुक्तंमया त्रयो राशयो जीवोऽजीवो नोजीव इत्यादि न एषोऽस्माकं समयः; किन्त्वेतस्य वादिनो मतिं परिभवितुमेतदुक्तं यदि पुनः स्वसमयेन परो विनिगृहीतः स्यात्ततस्तस्मिन्विनि गृहीते वृषभ इव प्रतिवृषभं निर्जित्य पर्षदि पर्षन्मध्ये गर्जति, गर्जनविशेषतः स्वसमयप्ररूपणां कुरुते । तदेवमक्रिया-वादीति गतम् । सम्प्रति जीव इति द्वारव्याख्यानार्थमाह-

**[भा.७०६]**　　अनुमानेउं रायं सणयग गिण्हमाणविज्जादी ।
पच्छाकडे चरित्ते जहा तहानेव सुद्धो उ ॥

**वृ-** यदि राजा ब्रूते मया सहवादो दीयतामिति, तदा राजानमनुमानयेत् अनुकूलवचसा प्रतिबोधयेत् यथा राजा पृथिवीपतिस्त्वच्छत्रच्छायाश्रिताः प्रजाः सर्वे च दर्शनिनस्ततः कथं राज्ञा सह विवादः । अत्रार्थे चेदमुक्तं पठेत् किं तदित्याह-

**[भा.७०७]**　　अत्थवतिणा निवतिणा पक्खवता बलवया पयंडेणं ।
गुरुणा नीएण तवस्सिणा च सह वज्जए वादं ॥

**वृ-** अर्थपतिना धनपतिना नृपतिना राज्ञा पक्षवता नृपवर्गीयपक्षसमन्वितेन तथा बलवता विद्यामन्त्रचूर्णादिबलोपेतेन प्रचण्डेन तीव्ररोषेण तथा गुरुणा विद्यादायिना धर्मप्रदायिना च तथा नीचेन नीचजातीयेन तथा तपस्विना विकृष्टतपःकारिणा च सह वर्जयेत् वादमिति, । एवमनुमानितोऽपि यदा न तिष्ठति तदा ये राज्ञः सज्ञातिकाः समानज्ञातिकाः स्वजना इत्यर्थः तैरनुमानयेत् । तैरपि प्रतिबोध्यमानो यदि न तिष्ठति, तदा विद्यादिना गृह्यते विद्यादिनावश्यं कुर्यात् । आदिशब्दात् मन्त्रेण चूर्णयोगैर्वावश्यं कुर्यादिति परिग्रहः । विद्यादिनाप्यगृह्यमाणे चारित्रे चारित्रविषये पश्चात् कृतो भूयात् स्वलिङ्गं परित्यज्य

गृहलिङ्गं च गृहीत्वा तथा कर्तव्यं यथा नैव स राजा भवति । एतदपि स कुर्वाणः शुद्ध एव प्रवचनरक्षार्थं तस्य प्रवृत्तः यथा च स राजा उत्पाटनीयस्तथा तद्विषयं मत्कोटकोच्छेदिचाणक्यप्रयुक्तनन्दसक्त-चौरसमूलघाति नलदामकुविन्ददृष्टान्तमुपदर्शयति ।

[भा.७०८] नंदे भोइय खन्ना अरक्खियघडण गेरु नलदामे ।
मुइंग गेह डहणा ठवणा भत्तेसुकत्तसिरा ।।

वृ- नन्दे चाणक्येनोत्पाटिते चन्द्रगुप्ते च राज्ये संस्थापिते नन्दसत्का ये भोजिकास्ते चाणक्येन 'खन्ना' इति देशीपदमेतत्, सर्वात्मना लूषितास्ततस्ते अजीवन्तश्चन्द्रगुप्तारक्षकैः सह घटनं कृतवन्तः । कृत्वा च क्षात्रखननादिना नगरमुपद्रवन्ति । येऽप्यन्ये आरक्षिकाः स्थाप्यन्ते तानपि ते सम्वलयित्वा तथैव नगरोपद्रवं कुरुते । ततश्चाणक्येन चिन्तयित्वा गेरुकवेषेण 'मुइंग' त्ति देशीपदं मत्कोटकवाचकं मत्कोटकगेह दहने प्रवृत्तं नलदामनामानं कुविंदं दृष्ट्वा तस्मिन्नारक्षकपदस्य स्थापना कृता तेन च नन्दसत्कभोजिकानां समस्तानामपि सपुत्राणां भक्ते- भक्त प्रदान वेलायां शिरांसि लूनानि । एष गाथा संक्षेपार्थो भावार्थः कथानकादवसेयं । तच्चेदम्- नंदे निच्छूढे रज्जे परिट्ठाविते चंदगुत्ते नंदस्स जे भोइया ते चाणक्केणं लूसिया । ताहे ते अजीवमाणा चंद्रगुत्तारक्खिएहिं समं संवलिता खत्त खननादीहिं नगरं उवद्दवंति, जेवि अन्ने आरक्खिया ठविज्जंति तेवि संवलंति ताहे चाणक्केण चिंतियं, को लभिज्जा चोरग्गहो जो न संवलिज्जा जो य स मूलं चोरे उप्पाडेइ ताहे चाणक्को परिव्वायगवेसं काऊण नगरबाहिरियाए हिंडति। हिंडमाणेण दिट्ठो नलदामकुविन्दो तंतुवाय सालाट्ठितो तस्सि वेलाए नलदाम कोलियस्स पुत्तो रममाणो मक्कोड एण खइतो रोइतो पिउसगासमोगो कहियं मक्कोडएण अहं खचितो, नलदामेन भणितो दंसेहिं जत्थोगासे खदितो सि, दंसितो सो उयासो ततो तेन नलदामेण जेबिलातो निग्गया दिट्ठा मक्कोडया ते मारिया । ततो बिलं खणिता जे विलस्संतो अंडयादिट्ठा तेसु तणाणि पक्खिवित्ता पलीवित्ता अंडया वि दड्ढा चाणक्केण सो पुच्छितो 'किं कारणं खणेत्ता अंतो विलस्स पलीवियं ? नलदामो भणति-एए अंडया निप्फन्ना खाइस्संति । ततो चाणक्केण चिंतियं । एस चोरग्गाहो कतो संतोसमत्थो मुइंगपरिदाहव्व चोरा उच्छेदइउं । ततो सो चोरग्गाहो ठवितो ताहे केइ नंदपक्खिया चोरा नलदामं उवेंति सुबहुं चोरभागं दाहामो मा रक्खेह । नलदामेण भणियं-एवं होउति इमं च भणियं । अन्नेवि एवमुपलभेह ते सव्वे पत्तेआवेत्ता-ममसकासमाणेहिं तेहिं तहत्ति कयं सव्वे समाणिया नलदामेण अन्नया तेन नलदामेण तेसिं चोराणं विपुलं भत्तं सज्जियं । जाहे सव्वे, सपुत्ता आगया, । ताहे सव्वेसिं सपुत्ताणं सिराणि छिन्नाणि; । तदेवं यथा चाणिक्येन नन्द उत्पादितो यथा नलदाम्ना मत्कोटकाश्चौराश्च समूला उच्छेदितास्तथा प्रवचनप्रद्विष्टं राजानं समूलमुत्पाटयेत् । तत्र उत्पाटयति, य च तस्य साहाय्यं कुर्वते, ये च तटस्थिता अनुमोदन्ते, ते सर्वे शुद्धाः प्रवचनोपघातरक्षणे प्रवृत्तत्वात् । न केवलं शुद्धमात्रं किन्त्वचिरान्मोक्षगमनं तथा चात्र दृष्टान्तः प्रवचनोपघातरक्षको विष्णुकुमार इति ।

[भा.७०९] समतीतंमिउ कज्जे परे वयं तंसि एगदुविहं वा ।
संवासो न निसिद्धो तेन परं च्छेयपरिहारो ।।

वृ- समतीते पुनः कार्ये यदि परो वदति, एकरात्रं द्विरात्रंवासंवासः क्रियतामिति एवं परे वदति एकरात्र द्विरात्रं त्रिरात्रं वासंवासो ननिषिद्धः । तथा संवासेऽपि न किमपि प्रायश्चित्तमिति भावः । ततो

द्विरात्रात्रिरात्राद्वा परं यदि वसति, ततस्तस्य प्रायश्चित्तं च्छेदः परिहारो वा; यदि पुनः सूत्रार्थ प्रतिपृच्छादानादिलक्षणं कारणं भवेत्, तर्हि ततः परमपि वसेत् यावत्प्रयोजनपरिसमाप्तिस्तथा चाह-

[भा.७१०] सुत्तत्थ पाडिपुच्छं, करेंति साहू उ तस्समीवंमि ।
आगाढंमिव जोगे, तेसिं गुरुहोज्ज कालगतो ।।

वृ- सूत्रार्थप्रतिपृच्छां कुर्वन्ति तस्य समीपे साधवः यदि वा आगाढे योगे व्यवस्थितानां तेषां साधूनां गुरुरुपलक्षणमेतत्, यो वा वाचनाप्रदानेन तेषां निस्तारकोभवति सोऽपि कालगतः ततः स तान् सूत्रार्थप्रदानादिना निर्वाहयति । ततो यावत्सूत्रार्थ प्रतिपृच्छा यावच्च तेषामागाढ योगानां परिसमाप्तिस्तावदवतिष्ठते । ततः परं तु नेति । अथ सूत्रे संसंतरा च्छेदे वा परिहारे वा इत्युक्तं तत्र परिहाराच्छेदो गरीयान् । प्रथमं च लघु वक्तव्यं, पश्चात् गुरु । ततः संसंतरापरिहारे वा च्छेदे वा इति वक्तव्ये किमर्थं प्रथमत श्छेदग्रहणं अत आह—

[भा.७११] बंधानु लोमयाए उक्कमकरणं तु होति सुत्तस्स ।
आगाढंमिय कज्जे दप्पेणवि तं भवेच्छेदो ।।

वृ- एवं रूपो हि पाठो ललितपदविन्यासतस्तो बन्धानुलोमतया, तथा अगाढे प्रयोजने समुपस्थिते यदि कथमपि दर्पेण स न गच्छति तस्मिन् दर्पेण स्थिते च्छेद एव प्रायश्चित्तं तस्य भवतिनपरिहारतप इति एतदर्थं च सूत्रस्याप्युत्क्रमकरणमिति । तत्र यदि प्रद्विष्टं राजानं नसमूलमुत्पाटयितुमीशः तर्हि स लब्धिकः समस्तं सङ्घं निस्तारयेत् । अथ नसमस्तं सङ्घं निस्तारयितुमीष्टेत्, तत इमान् पञ्च निस्तारयेत् । तानेवाह-

[भा.७१२] आयरिए अभिसेए भिक्खु खुड्डे तहेव थेरे य ।
गहणं तेसिं इणमो संजोगगमं च वोच्छामि ।।

वृ- आचार्यो गच्छाधिपतिः, अभिषेकः सूत्रार्थतदुभयोपेतः आचार्यपदस्थापनार्हः, भिक्षुः प्रतीतः, क्षुल्लको बालः, स्थविरो वृद्धः । एतेषां पञ्चानामपि ग्रहणमिदं वक्ष्यमाणं संयोगगमन. संयोगतो गमः प्रकारो यस्य तत्तथा वक्ष्यामि, प्रतिज्ञातमेव निर्वाहयति-

[भा.७१३] तरुणो निप्फन्ने परिवारे लद्धिजुत्ते तहेव अब्मासे ।
अभिसेयंमि य चउरो सेसाणं पंच चेव गमा ।।

वृ- यदि शक्तिरस्ति ततः पञ्चापि आचार्यादीन् युगपन्निस्तारयेत् । अथ न शक्तिस्ततः स्थविरजर्वान् चतुरस्तत्राप्यशक्तो क्षुल्लकस्थविरवर्जानूत्रीन् तत्राप्यसामर्थ्ये आचार्यमेकं । सोऽप्येकः स्थविरो यदि वर्तते अपरस्तरुणस्तर्हि तयोस्थविरस्तरुणयोर्मध्ये तरुणो निस्तारणीयः । द्वयोस्तरुणयोरतरुणयोर्वा मध्ये निष्पन्नः सम्यक् सूत्रार्थकुशलः, द्वयोरनिष्पन्नयोर्वा सपरिवारः, द्वयोः सपरिवारयोरपरिवारयोर्वा मध्येलब्धियुक्तः द्वयोर्लब्धियुक्तयोर लब्धियुक्तयोर्वा अभ्यासे समीपे स्थितः । अत्र सम्प्रदायः । द्वयोरभ्यासे स्थितयोर्वा नंष्टुमशक्तः स निस्तारणीयः । एते पञ्चगमा आचार्ये भवन्ति, अभिषेकस्तु नियमान्निष्पन्न एव भवति । अन्यथा तत्वत आचार्यपदस्थापनायोग्यत्वानुपपत्तेः ततस्तस्मिन्नभिषेके निष्पन्ना निष्पन्नगमाभावात्, शेषास्तु चत्वारो गमास्तद्यथा-स्थविरतरुणयोर्मध्ये तरुणाः, द्वयोस्तरुणयोरतरुणयोर्वा सपरिवारः द्वयोः सपरिवारयोरपरिवारयोर्वा लब्धियुक्तः द्वयोर्लब्धियुक्त-योरलब्धियुक्तयोर्वाभ्यासे स्थितः; इति शेषाणां भिक्षुक्षुल्लकस्थविराणां पञ्चैव गमा भवन्ति । ते च यथानन्तरमाचार्ये भाविताास्तथाभावनीयाः । तथा चैतदेव व्याचिख्यासुर्गाथाद्वयमाह-

[भा.७१४] तरुणे बहुपरिवारे स लद्धिजुले तहेव अब्भासे ।
एते व सहस्स गमा निप्फन्नो जेन सो नियमा ।।

[भा.७१५] तरुणे निप्फन्ने वा बहु परिवारे स लद्धि अब्भासे ।
भिक्खु खुड्डा थेराण होंति एए गमा पंच ।।

वृ- गाथाद्वयमपीदं व्याख्यातार्थं, नवरं वृषभोऽभिषेकः सपरिवारश्च वृषभादीनामाचार्यप्रदत्तः प्रव्रजितस्वजनवर्गो वा द्रष्टव्यः । तदेवं साधूनां निस्तारणविधिरुक्तः; । इदानीं साध्वीनां तमाह-

[भा.७१६] पवित्तिनिभिसेयपत्ता भिक्खुणि खुड्डा तहेव थेरी य ।
गहणं तासिं इणमो संजोगगमं तु वोच्छामि ।।

वृ- प्रवर्तिनीसमस्तसाध्वीनां नायिका आचार्यस्थानीया, अभिषेका प्रवर्तिनीपदयोग्या, भिक्षुकी क्षुल्लिका स्थविरा च प्रतीता । एतासां पञ्चानामपिग्रहणमिदं वक्ष्यमाणसंयोगगमं । संयोगतोऽनेकप्रकारं वक्ष्यामि प्रतिज्ञातमेव निर्वाहयति-

[भा.७१७] तरुणी निप्फन्नपरिवारा सलद्धिया जा य होति अब्भासे ।
अभिसेयाणं चउरो सेसाणं पंच चेव गमा ।।

वृ- यदि शक्तिरस्ति ततः पञ्चापि प्रवर्तिन्यादयो युगपन्निस्तारणीया अशक्तौ चतस्रः तत्राप्यशक्तौ तिस्रस्तदभावे द्वे प्रवर्तिन्यभिषेके । तत्राप्यशक्तौ प्रवर्तिन्येका । तत्रापि यद्येका प्रवर्तिनी स्थविरा भवति अपरा च तरुणी । ततस्तरुणी स्थविरयोर्मध्ये तरुणी निस्तारणीया । द्वयोस्तरुण्योः स्थविरयोर्वा मध्ये निष्पन्ना, द्वयोर्निष्पन्नयोरनिष्पन्नयोर्वा मध्ये सपरिवारा द्वयोः सपरिवारयोरपरिवारयोर्वा मध्ये लब्धियुक्ता द्वयोर्लब्धियुक्तयोरलब्धिकयोर्वा या भवत्यभ्यासे सा निस्तारणीया एते पंच गमाःप्रवर्त्तिन्यां, अभिषेकायां चत्वारो गमाः, तस्यानिष्पन्नतया निष्पन्नानिष्पन्नगमासंभवात् शेषाणां भिक्षुकी क्षुल्लिका स्थविराणां पंचगमा भवंति तेच पंचापि गमाः प्रवर्त्तिन्या इव भावनीयाः । तदेवं साधूनां साध्वीनां च प्रत्येकं निस्तारणविधिरुक्तः साम्प्रतमुभयेषां संयोगत आह-

[भा.७१८] आयरिय गणिणि वसभे, कमसो गहणं तहेव अभिसेया ।
सेसाण पुव्वमित्थी मीसगकरणे कमो एस ।।

वृ- यद्यस्ति शक्तिस्ततो द्वावपि वर्गौ युगपन्निस्तारयेत् । अथासमर्थस्तत एवं यतना आचार्यप्रवर्तिन्योर्मध्ये प्रथमत आचार्य निस्तारयेत् । ततः प्रवर्तिनी । प्रवर्तिनीवृषभयोर्मध्ये प्रवर्तिनीं प्रश्चात् वृषभं । वृषभोऽभिषेकः । वृषभाभिषेकयोर्मध्ये पूर्वमभिषेकं पश्चादभिषेकां । सेसाणपुव्व-मित्थीति-शेषेषु षष्ठी सप्तम्यर्थे प्राकृतत्वात् पूर्वं स्त्री निस्तारणीया अनुकम्प्यत्वात् पश्चात्पुरुषास्तद्यथा-भिक्षुभिक्षुक्योर्मध्ये भिक्षुकी पश्चाद्भिक्षुः । क्षुल्लिकाक्षुल्लिकयोर्मध्ये प्रथमतः क्षुल्लिका पश्चात्क्षुल्लकः । स्थविरास्थविरयोः पूर्वं स्थविरा पश्चात्स्थविरः । अत्रापि सुनिपुनेन भूत्वा अल्पबहुत्वचिन्ता कर्तव्या । कृत्वा च यद्बहुगुणं तत्समाचारणीयम् । उक्तं च- "बहुवित्थरमुस्सग्गं बहुतरमुववायवित्थरं नाउं । जह जह संजम वुड्डी जह जयसू निज्जरा जयह ।।" एष मिश्रकरणे युगपत्साधुसाध्वीवर्गनिस्तारणकरणे एषोऽनन्तरोदितः क्रमः गतं जीयत्ति द्वारमधुना पिडनद्वारमाह-

[भा.७१९] भिक्खू खुड्डग थेरे अभिसेगे चेव तहय आयरिए ।
गहणं तेसिं इणमो संजोगगमं तु वोच्छामि ।।

**वृ-** भिक्षुः क्षुल्लकः स्थविरोऽभिषेकः आचार्यस्तेषामेव क्रमेण व्यवस्थितानां पञ्चानामपि ग्रहणमिदं वक्ष्यमाणं संयोगगमं संयोगतोऽनेकप्रकारं वक्ष्यामि । प्रतिज्ञामेव निर्वाहयति–

**[भा.७२०]** तरुणे निप्फन्नपरिवारे सलद्धिए जेय होंति अब्भासे ।
अभिसेयंमि चउरो सेसाणं पंच चेव गमा ।।

**वृ-** यदि शक्तिस्ततः पञ्चापि युगपन्निस्तारयेत् । तदशक्तावेकैकहान्या यावदेकं भिक्षुं सोऽपि यदेकस्तरुणोऽपरश्च स्थविरः तदा तरुणो निस्तारणीयः । द्वयोस्तरुणयोरतरुणयोर्वा निष्पन्नो द्वयोर्निष्पन्नयोरनिष्पन्नयोर्वा सपरिवारः द्वयोः सपरिवारयोरपरिवारयोर्वा सलब्धिकः द्वयोः सलब्धिकयोरलब्धिकयोर्वा यो भवत्यभ्यासे समीपे स निस्तारणीयः । एते पञ्च गमा भिक्षौ भवन्ति अभिषेकगमाश्चत्वारो निष्पन्नतया तस्य निष्पन्नानिष्पन्नगमाभावात् । शेषाणां तु क्षुल्लकस्थविराचार्याणां च भिक्षोरिव पञ्चैव गमाः । तत्र भिक्षुकादिक्रमकरणे कारणमाह-

**[भा.७२१]** असहंते पच्चा तरणंमि, माहोज्ज सव्वपत्थारो ।
खुड्डो भीरु नुकंपो असहो घायस्स थेरो य ।।

**[भा.७२२]** गणि आयरियाउ सहू देहविओगेउ साहसविवज्जी ।
एमे व भंसणंमि वि उदिन्नवेदोत्ति णाणत्तं ।।

**वृ-** भिक्षवोऽहि यदि राज्ञा पिट्टयितुमारभ्यन्ते तदा ते किञ्चिदगीतार्थत्वेनासहमानाः प्रत्यास्तरयेयुः। प्रत्यास्तरणं नाम संमुखीभूय युद्धकरणं । ततोऽसहमाने जातावेकवचनं । षष्ठयर्थेच सप्तमी । असहमानानां प्रत्यास्तरणं प्रतिकूलमभिमुखीभूयस्तरत्वकरणं मा सर्वप्रस्तारः समस्तसङ्घोपद्रवो भूयात्। किमुक्तं भवति ? मा गाढतरं प्रद्विष्टः सन् राजा सर्वमपि सङ्घमुपद्रवेत् । अनेन कारणेन पिट्टनद्वारे भिक्षुः प्रथममुपात्तः, तदनन्तरं क्षुल्लकः स हि बालत्वाद्भीरुरनुकम्प्यश्च । ततः स द्वितीयस्थाने स्थापितः । तदनन्तरं स्थविरो यतः स्थविरत्वेनाङ्गप्रत्यङ्गानां श्लथीभूततया घातस्य पिट्टनस्यासहः गणि आयरियाउ सहू इत्यादि गणी गच्छाधिपतिराचार्य आचार्यपदार्ह एतौ द्वावपि सहौ समर्थौ घातस्येति सम्बध्यते । अपि च देहवियोगेऽपि देहभ्रंशे अपि तुशब्दोऽपिशब्दार्थे साध्वसविवर्जितौ अविमृश्य प्रवृत्तिः साध्वसं तद्विवर्जितौ संमुखीभूय युद्धप्रदानलक्षणसाध्वसरहिताविति भावः । ततः स्थविरानन्तरं तौ द्वावपि उपात्तौ तत्राप्यभिषेकादतिशयेन सहो गच्छाधिपतिरित्यभिषेकानन्तरं गणिन उपादानं एवमेवेत्यादि भ्रंशनसंयमच्यावनद्वारेऽप्येवमेव अनेनैवप्रकारेण भिक्षुकादिक्रमकरणे कारणमभिधानीयं, नवरं भिक्षुर्दीप्तवेदोऽपि संभवतीति नानात्वं । किमुक्तं भवति? यदि भिक्षोस्तरुणतया प्रचुरमोहनीयोदयतया उत्प्रवाजनमनुकूलं भवेत् । ततः स क्षिप्रमुत्प्रव्रजेदिति प्रथमं भिक्षुग्रहणं, तदनन्तरं क्षुल्लकादिक्रमकरणे प्रयोजनं प्रागुक्तमवसातव्यम् एतच्च लाघवाय प्रस्तावादुक्तं संप्रत्यधिकृत एव पिट्टनद्वारे साध्वीनां निस्तारण विधिमाहः-भिक्खुणी खुड्डीथेरी, अभिसेगाय पवत्तिनीचेव; करणं तासिं इणमो, संजोगगमं तु वोच्छामि; ।। भिक्षुकी क्षुल्लिका स्थविरा अभिषेकाप्रवर्त्तिनी च एतासामेवं क्रमोपन्यासे कारणं साधुविषयं पागुक्तमेवावसातव्यम् । तासां पञ्चानामपि करणं निस्तारणकरणमिदं वक्ष्यमाणं संयोगगमं वक्ष्यामि । प्रतिज्ञातमेव निर्वाहयति-

**[भा.७२३]** तरुणी उनिप्फन्ना परिवार सलद्धिया य अब्भासे ।
अभिसेयाए चउरो सेसाणं पंच चेव गमा ।।

**वृ-** अस्याः साधुगतगाथाया इव व्याख्या । सम्प्रति द्वयोरपि साधुसाध्वीवर्गयोः संयोगेन निस्तारणविधिमाह—

**[भा.७२४]** पंतावणमीसाणं दोण्हं वग्गाण होइ करणं तु ।
पुव्वं तु संजईणं पच्छा पुन संजयाण भवे ।।

**वृ-** पंतावणं नाम पिट्टनं । तत्र मिश्रयोर्द्वयोरपि वर्गयोः साधुसाध्वीरूपयोः करणं निस्तारणकरणं भवति । पूर्वं संयतीनां पश्चात् पुनर्भवति संयतानां । तद्यथा-भिक्षुभिक्षुक्योः पूर्वं भिक्षुकी पश्चाद्भिक्षुः एवं क्षुल्लकक्षुल्लिकयोः पूर्वं क्षुल्लिका स्थविरास्थविरयोः स्थविरा । अभिषेकाभिषेकयोरभिषेका । आचार्यप्रवर्तिन्योः प्रवर्तिनी पश्चादाचार्यः । गतं पिट्टनद्वारमधुना संयमच्यावनद्वारमाह-

**[भा.७२५]** भिक्खू खुड्डे थेरे अभिसेयायरिय संजमे पडुप्पन्ने ।
करणे तेसिं इणमो संजोगगमं तु वोच्छामि ।।

**वृ-** भिक्षु क्षुल्लकः स्थविरो अभिषेक आचार्यः । कथंभूत ? एकैकइत्याह-संयमे प्रत्युत्पन्नो वर्तमानः तेषां भिक्षुप्रभृतीनां पञ्चानां निस्तारणकरणमिदं वक्ष्यमाणं संयोगगमं संयोगतोऽनेकप्रकारं वक्ष्यामि । यथा प्रतिज्ञातमेव करोति-

**[भा.७२६]** तरुणे निप्फपन्नरिवारे सलद्धिए जे य होंति अब्भासे ।
अभिसेयंमि य चउरो संसाणं पंच चेव गमा ।।

**वृ-** अस्या व्याख्या प्राग्वत् । सम्प्रति यदुक्तं 'उदिन्नवेदो त्ति नाणत्तमिति' तद्व्याचिख्यासुराह-

**[भा.७२७]** अपरिणतो सो जम्हा अन्नभावं वएज्ज तो पुव्वं ।
अपरिणामो अहवा न निज्जइ किं चि काहीइ ।।

**वृ-** स भिक्षुर्यस्मादपरिणतो परिणामत्वाद्यान्यंभावमुत्प्रवाजनाभिप्रायं लक्षणं व्रजेत् । ततः स सत्वरमेवोत्प्रव्राजते । अन्यच्च अथवा न ज्ञायते सोऽपरिणामः सन् किंचीति किमपि संमुखीभूय युद्धं करिष्यति । येन सकलस्यापि सङ्घस्योपद्रवो भवेत् । तत एतद्दोषभयात् पूर्वं भिक्षुनिस्तारणीय इति पूर्वं तस्योपादानं, शेषाणां तु क्रमोपन्यासे प्रयोजनं पिट्टनद्वारवदवसंयमिति । अत्रैव साध्वीरधिकृत्य निस्तारणविधिमाह-

**[भा.७२८]** भिक्खुणि खुड्डी थेरी अभिसेगपवित्तिनि संजमे पडुप्पना ।
करणं तासिं इणमो संजोगगमं तु वोच्छामि ।।

**[भा.७२९]** तरुणी निप्फन्नपरिवारा सलद्धिया जा य होइ अब्भासे ।
अभिसेयाए चउरो संसाणं पंच चेव गमा ।।

**वृ-** इदं गाथाद्वयमपि प्राग्वत् । सम्प्रति बद्धे लभंते इति द्वार व्याख्यानार्थमाह-

**[भा.७३०]** खुड्डे थेरे भिक्खु अभिसेयायरियभत्तपानं तु ।
करणं तेसिं इणमो संजोगगमं तु वोच्छामि ।।

**वृ-** क्षुल्लकः, स्थविरो, भिक्षुरभिषेक आचार्यस्तेषां पञ्चानामप्येवं क्रमव्यवस्थितानां राज्ञा निरुद्धं भक्तपानमधिकृत्य करणं निस्तारकरणं संयोगगमं संयोगतोऽनेकप्रकारं वक्ष्यामि । यथा प्रतिज्ञातमेव करोति-

**[भा.७३१]** तरुणे निप्फन्नपरिवारे सलद्धीए जे य होइ अब्भासे ।

अभिसेयंमि य चउरो सेसाणं पंच चेव गमा ।।

वृ- शक्तौ सत्यां पञ्चापियुगपन्निस्तारयेत् । शक्त्यभावे एकैकहान्या यावत् पूर्वं क्षुल्लकं निस्तारयेत्, सोऽपि यदेकस्तरुणोऽपरोऽतरुणः । तरुणो नाम प्रथमकुमारत्वे वर्तमान इतरोऽतरुणस्तयो स्तरुणोनिस्तारणीयः तरुणयोरतरुणयोर्वानिष्पन्नः, बालस्य सूत्रार्थ निष्पन्नता वज्रस्वामिन इव भावनीया । द्वयोर्निष्पन्नयोर्वासपरिवारः द्वयोः सपरिवारयोरपरिवारयोर्वा सलब्धिकः । द्वयोः सलब्धिकयोरलब्धिकयोर्वा यो भवत्यभ्यासे स निस्तार्यः । एते पञ्च गमाः क्षुल्लकस्य । अभिषेके चत्वारः निष्पन्नतया तस्य निष्पन्नानिष्पन्नगमाभावात् शेषाणां स्थविरभिक्ष्वाचार्याणां पञ्च गमाः ।। सम्प्रति साध्वीरधिकृत्य निस्तारणमाह-

[भा.७३२] खुड्डिया थेरी भिक्खुणी अभिसेयपवित्ति भत्तपानं तु ।
करणं तासिं इणमो संजोगगमं तु वोच्छामि ।।

[भा.७३३] तरुणी निप्फन्नपरिवारा लद्धिया जा य होइ अब्भासे ।
अभिसेयाए चउरो सेसाणं पंच चेव गमा ।।

वृ- इदं गाथाद्वयं साधुगतगाथाद्वयमिव व्याख्यातव्यम् ।। अधुना क्षुल्लकादिक्रमकरणे प्रयोजनमाह-

[भा.७३४] अनुकंपा जनगरिहा तिक्खखुहो होइ खुड्डो पढमं ।
इइ भत्तपानरोहे दुल्लभभत्तेवि एमेव ।।

वृ- क्षुल्लकस्य यदा प्रथमतो भक्तपानविषये निस्तारणं क्रियते तदा तस्यानुकम्पा कृता भवति, । यदि पुनस्तस्य प्रथमं निस्तारो न क्रियते । किन्त्वाचार्यादीनां तदा जनगर्हा यथाधिगतान् मुण्डान् यद्बालं बुभुक्षाक्रान्तंमुक्त्वा आत्मानं चिंतितवन्त इति । अपि च बालत्वादेव स तीक्ष्णक्षुत्त्वाच्च स्तोककालेनापि भक्तपाननिरोधेन क्लममुपयाति, तेन कारणेन क्षुल्लकः प्रथमं निस्तार्यते तदन्तरं स्थविरः । सोऽपिहि बालतव् स्तोककालेनापि भक्तपाननिरोधेन क्लाम्यति । केवलं क्षुल्लकापेक्षया मनाक् सह इति तदनन्तरं तस्योपादानं स्थविरादपि भिक्षुश्चिरकाल सह इति तदनन्तरं तस्योपादानं । ततोऽप्यभिषेकः समर्थस्तस्मादाचार्य इति तदनन्तरं तस्योपादानं स्थविरादपि भिक्षुणोपात्ताविति इति प्रथम भक्तपाननिरोधक्षुल्लकादिक्रमकरणे प्रयोजनं गतं बंधलभंतमलभंत इति द्वारम् ।। अधुना दुर्लभभक्तद्वारमाह- दुल्लभभत्ते वि एमेव एवमेव अनेनैव प्रकारेण दुर्भिक्षत्वेन दुर्लभभक्ते निस्तारणविधिर्वक्तव्यः । तद्यथा-

[भा.७३५] खुड्डे थेरे भिक्खू अभिसेयायरिय दुल्लभं भत्तं ।
करणं तेसिं इणमो संजोगगमं तु वोच्छामि ।।

[भा.७३६] तरुणे निप्फन्न परिवारे सलद्धिए जे य होइ अब्भासे ।
अभिसेयंमि य चउरो सेसाणं पंच चेव गमा ।।

[भा.७३७] खुड्डिय थेरी भिक्खुणि, अभिसेयपवित्ति दुल्लभं भत्तं ।
करणं तासिं इणमो संजोगगमं तु वोच्छामि ।।

[भा.७३८] तरुणी निप्फन्नपरिवारा, सलद्धिया जा य होइ अब्भासे ।
अभिसेयाए चउरो सेसाणं पंच चेव गमा ।।

वृ- क्षुल्लकादिक्रमकरणप्रयोजनमपि तथैव वक्तव्यम् ।

गतं दुर्लभभक्तद्वारं भक्त परिज्ञाद्वारं ग्लानद्वारं च युगपदाह-

**[भा.७३९]** परिणाय गिलाणस्स य दोण्हवि कयरस्स होंति कायव्वं ।
असतीए गिलाणस्स य दोण्ह वि संते परिणाए ।।

**वृ-** परिज्ञातेति पदैकदेशे पदसमुदायोपचारात् भक्तपरिज्ञाशब्दः प्रत्याख्यानवाचीत्वात्तस्य च परनिपातः प्राकृतत्वात् सुखादिदर्शनाद्वा प्रत्याख्यातभक्तस्य ग्लानस्य च संभवे द्वयोर्मध्ये कतरस्य भवति कर्तव्यम् ? । उच्यते-शक्तौ सत्यां द्वयोरपि कर्तव्यम् । अथ न शक्तो द्वयोरपि कर्तुं ततो ग्लानस्य कर्तव्यम्, तस्य जीवितसापेक्षत्वात् । शक्तौ सत्यां द्वयोरपि वैयावृत्ये क्रियमाणे सति परिज्ञाते भक्ते प्रत्याख्यातभक्तस्येत्यर्थः । विशेषतरं कर्तव्यमिति वाक्यशेषः अथ शक्तावसत्यां ग्लानस्य कर्तव्यमित्युक्तम् किं कारणमत आह-

**[भा.७४०]** सावेक्खो उ गिलाणो निरवेक्खो जीवियंमि उ परिणी ।
इइ दोण्हवि कायव्वं उक्कमकरणं करेअसहू ।।

**वृ-** ग्लानो जीविते जीवने सापेक्षः, परिज्ञी भक्तपरिज्ञानवान् जीविते निरपेक्षस्ततोऽवश्यं ग्लानो जीवयितव्य इति, द्वयोरपि कर्तव्येऽसहोऽसत्यांऽतु क्रमेण भक्तपरिज्ञावन्तमुल्लंध्य ग्लानस्य करणं करणीयं वैयावृत्यं कुर्यात् । यदुक्तं शक्तौ सत्यां द्वयोरपि कर्तव्ये प्रत्याख्यातभक्तस्य विशेषतः कर्तव्यमिति । तत्र कारणमाह-

**[भा.७४१]** वसहे जोहे य तहा निज्जामगविरहिए जहा पोए ।
पावति विमासमेवं भत्तपरिणाए संमूढो ।।

**वृ-** यथा वृषभो बलीवर्दः सुसारथिरहितः, यथा वा योधाः सुस्वामिविरहितास्तथा निर्यामकविरहितः पोतः प्राप्नोति विनाशमेवं भक्तपरिज्ञायां सम्यक् निर्यामकाभावतः संमूढः सन् समाधिलक्षण-प्राणविनाशमाप्नोति । तत्र प्रथमं वृषभदृष्टान्तं भावयति-

**[भा.७४२]** नामेण वि गोएण वि पलायंतो वि सावितो संतो ।
अवि भीरू वि नियत्तइ वसहो अप्फालिओ पहुणा ।।

**वृ-** यथा वृषभः प्रथमं सारथिरहितः सन् प्रतिवृषभेण युद्धे पराजितो विपलायते न युद्धाभिमुखो भवति । विपलायमानश्च कथमपि प्रभुणा सारथिना दृष्टः सन् नाम्ना गोत्रेण च शापितः शब्दित आकारित इत्यर्थः । तथा प्रसादपुरस्सरमास्फालितश्च स्कन्धादिप्रदेशेषु हस्तेन तत एवं प्रोत्साहितसत्वः सन्, अपिसंभावने । भीरुरपि विपलायमानोऽपि पुनरपि प्रति वृषभेण सह युद्धदानाय प्रतिनिवर्तते । एवं कृत प्रत्याख्यानोऽपि सम्यग् निर्यामकाभावतो जातमन्दपरिणामोऽपि निर्यामकेन प्रोत्साहितः सन् प्रतिनिवर्तते । स परीषहचमूमभिभवितुमिति भावितो वृषभदृष्टान्तः । सम्प्रति योधदृष्टान्तभावनामाह-

**[भा.७४३]** अप्फालिया जह रणे जोहा भंजंति परबलाणीयं ।
गीयजुतोउ परिणी तह जिणइ परीसहानीयं ।।

**वृ-** प्रभुणा नाम्ना गोत्रेण गुणप्रशंसनं च आस्फालिता आ समन्तात् स्फारं प्रापिता यथा योधाः सुभटा रणे संग्रामे परबलानीकं परेषां वैरिणां बलं तच्च तत् अनीकं च परबलानीकं भञ्जन्ति । तथा परिज्ञी भक्तपरिज्ञावान् गीतयुतसम्यग् निर्यामकोपेतो जयति अभिभवति परिषहानीकमिति । उक्ता योधदृष्टान्तभावना । सम्प्रति पोतदृष्टान्तभावनामाह-

[भा.७४४] सुणिउणनिज्झामगविरहियस्स पोयस्स जह भवे नासो ।
गीयत्थविरहियस्स उ तहेव नासो परिण्णिस्स ।।

वृ- सुनिपुणः सम्यग् जलमार्गकुशलः तेन निर्यामकेन विरहितस्य पोतस्य यथा भवति विनाशस्तथैव गीतार्थविरहितस्य परिज्ञिनः कृतभक्तप्रत्याख्यानस्य भवति विनाशः प्रत्याख्यानफलस्य सुगति-लाभस्याभावात् ।

[भा.७४५] निउणमतिनिज्जामगपोतो जह इच्छियं वए भूमिं ।
गीयत्थेनुवेतो तहय परिन्नी लहइ सिद्धिं ।।

वृ- यथा पोतः प्रवहणं निपुनमतिनिर्यामकः कर्णधारो यस्य स तथा ईप्सितां भूमिं व्रजति । एवं गीतार्थेनोपेतो युक्तः सन् परिज्ञी लभते सिद्धिं मोक्षमिति उक्ता पोतदृष्टान्तभावना । अथ किं तस्य विशेषतरं करणीयमित्यत आह-

[भा.७४६] उव्वत्तणा य पालग धीरवणा चेव धम्मकहणा य ।
अंतो बहि नीहरणं तम्मि य काले नमोक्कारो ।।

वृ- तस्य कृतभक्तप्रत्याख्यानस्य स्वयमुद्वर्तनं कर्तुमशक्नुवत उद्वर्तना कर्तव्या । तस्यां च क्रियमाणायां महान् आश्वासो भवति समाधिं च परमां लभते, ततः साधयति परममुत्तमार्थं, तथा तृषापीडितस्य सतः पानकं पानं समर्पणीयं । धीरवणाचेवत्ति दुःखेन परिताप्यमानस्य धीरापना कर्तव्या । यथा धीरोभव धीरो भव अहं तवैतत् दुःखं विश्रामणादिना अपनेष्यामि अपि च पुण्यभागिन्! सहस्वैवत् दुःखं सम्यगत एव तत्सहनानन्तरमचिरात्सर्वदुःखप्रहीणो भविष्यसि इत्यादि । तथा धर्मकथानापूर्व-पूर्वपरमदुःखकारिमुनिचरितरूपा कथयितव्या । तथा मध्ये धर्ममसहमानस्य बहिर्निर्हरणं बहिर्नयनं बहिर्वातादिकमसहमानस्य अन्तर्निर्हरणं तथा तस्मिन् काले मरणसमये नमस्कारो दातव्यः ।

गतं परिज्ञाद्वारं ग्लानद्वारं च । सम्प्रति संयमातीतद्वारं वादिद्वारं चाह-

[भा.७४७] जोव्विय भंसिज्जंते गमतोसोचेव भंसियाणंपि ।
हेठा अकरियवादी भणितो इणमो किरियवादी ।।

वृ- य एव चारित्राद्भ्रश्यमाने संयमप्रत्युत्पन्नद्वारे गमक उक्तः स एव भ्रंशितानामुत्प्रव्रजितानामपि ध्रियमाणानां वेदितव्यः न पुनः किञ्चिदपि नानात्वं, । गतं संयमातीतद्वारमधुना वादिद्वारमाह- अकिरियवादी इत्यादि य एव प्राक्परवादिनि गम उक्तः स एवात्रापि द्रष्टव्यः । केवलं सोऽक्रियावादी भणितो । अयं तु क्रियावादीति विशेषः । यत्र स्थाने वादो दातव्यः तत्र गतस्य यत्कर्तव्यं तथा चाह-

[भा.७४८] वादे जेन समाही विज्जागहणं च वादिपडिवक्खो ।
सुत्तं न सरइ विक्खेवेणं निव्विसमाणो तहिं गच्छे ।।

वृ- वादे वादविषये येन तस्य समाधिरुपजायते तत्सर्वं क्रियते, तद्यथा- यदि भणति वाक्पाटवकारि ब्राह्म्याद्यौषधं दीयतामिति तद्दीयते शरीरजाड्यापहारि तदुपदिष्टं वैद्योपदिष्टं वा किञ्चिद्वस्तु यदि वा दुग्धादिविकृति प्रणीतभक्तं अथवा देशस्नानं सर्वस्नानं वस्त्रादिविभूषा वा विद्याग्रहणं च । 'वादिपडिवक्खो' त्ति विद्याग्रहणं वा वादिप्रतिपक्षः वादिविद्या-प्रतिपक्षभूतं कार्यते । किमुक्तं भवति? याः प्रतिवादी विद्या जानाति तासां प्रतिपन्थिन्यो या अन्या विद्या यथा- 'मोरीनउलिविराली' इत्यादि तासां ग्रहणं कार्यते । कस्मादेतत्सर्वं क्रियते इति चेदुच्यते गुणदर्शनात्तथाहि ब्राह्मया-

द्यौषधोपयोगतो वाक्पाटवं, शरीरजाड्यापहार्यौषधाभ्यवहारतः शरीरलघुता, दुग्धप्रणीताहाराऽभ्यवहारतो मेधाविशिष्टं च धारणाबलं, सर्पिः सन्मिश्रभोजन भुक्तित ऊर्जा घृतेन पाटवमिति वचनात् देशतः सर्वतो वा स्नानेन वस्त्रादिभूषायां च तेजस्विता प्रतिपक्षविद्याग्रहणतो महान्मानसिकोऽवष्टम्भः । एतत्सर्वं वादवेलायामुपयोगि । तथा चाह-

**[भा.७४९]** वायापुग्गललहुया मेहाउज्ञाय धारणाबलं च ।
तेजस्सिया सत्तं, वायाय इयंमि संगामे ।।

**वृ-** वाग् व्यक्ताक्षरा, पुद्गललघुता शरीरपुद्गलानां जाड्यापगमः, मेधा अपूर्वापूर्वऊहणोहात्मको ज्ञानविशेषः । ऊर्जा बलं प्रभूततरभाषणेऽपि प्रवर्धमानस्वबलः आन्तरं उत्साहविशेष इत्यर्थः । धारणाबलं प्रतिवादिनः शब्दतदर्थावधारणं बलं, तेजस्विता प्रतिवादिक्षोभापादिका शरीरस्य स्फूर्तिमती दीप्यमानता, सत्त्वं प्राणव्यपरोपणसमर्थविद्याप्रयोगेऽप्यचलितस्तन्मानोपमर्दहेतुरवष्टम्भः । एतत्सर्वं वाङ्मये संग्रामे उपयुज्यते ।

**मू. (२१)** *परिहारकप्पठिते भिक्खू बहिया थेराणं वेयावडियाएगच्छेज्जा । थेराय से नो सरेज्जा कप्पइ से निव्विसमाणस्स एगराइयाए पडिमाए''* ०

**वृ-** अत्र नो सरेज्जा इति विशेषः, शेषं समस्तमपि पूर्ववत् । नो सरेज्जा इत्यस्यायमर्थः-एष परिहारतपो वहन् तिष्ठतीति स्थविरा आचार्या न स्मरेयुः । कस्मान्न स्मरेयुरिति चेत् ? उच्यते-व्याक्षेपात् । तथा चाहन सरइ इत्यादि पूर्वगाथाश्चार्धं विद्यानां निमित्तानां प्रत्युत्तराणां च कथनतो बहुविधसन्देशकथनतो वा आचार्यो न स्मरति । ततस्तस्मिन्न स्मरणे सति निर्विशमानक एव गच्छेत् । गत्वा च यत्र गन्तव्यं तत्र यत्करोति तदाह-

**[भा.७५०]** तत्थ गतोविय संतो पुरिसं थामं च नाउतो ठवणं ।
साहीणमसाहीणे गुरुम्मि ठवणा असहणे उ ।।

**वृ-** गतोऽपि च सनपुरुषं प्रतिवादिलक्षणं प्रचण्डं वा स्थामप्राणमात्मनो ज्ञात्वा तदनन्तरं यदि समर्थमात्मानं संभाव्यादि तदा न निक्षिपति, अथाशक्तिः संभाव्यते ततः स्थापनानिक्षेपणं परिहारतपसः कर्त्तव्यम् । किमुक्तं भवति ? दुर्जयः खलु प्रतिवादी न यथाकथञ्चन जेतुं शक्यते अहं च क्षामतया बहुविधमुत्तरं दातुमशक्तो मतिमोहो वा तदानीं मम क्षामस्या भवेत् इति यदि संभावयति, तर्हि निक्षिपति, । अथ कथं स निक्षिपतीत्यत आह-साहीणेत्यादि स्वाधीने सन्निहिते, अस्वाधिने असन्निहिते गुराव सहस्य स्थापना परिहारतपसो निक्षेपणं भवति । इयमत्र भावना-यद्याचार्यः सन्निहितो भवति ततः स एव तं निक्षेपयति । अथ नास्ति सन्निहितः ततो न शक्तः क्षामत्वेन परिवादिनं जेतुमित्यालम्बनतः स्वयं निक्षिपति । अत्र पर आह-''ननु यदि स्वयं निक्षिपति ततः स आत्मच्छंदसा निक्षिपन् यदि उद्घातितं वहति ततो अनुद्घातितं प्राप्नोति, । अथानुद्घातितं ततः परतरं स्थानमाप्नोति'' इति । सूरिराह-

**[भा.७५१]** काम अप्पच्छंदो निक्खियमाणो उ दोसवं होइ ।
तं पुन जुज्जइ असढे तीरियकज्जे पुन वहेज्जा ।।

**वृ-** कामशब्दो मकरध्वजे अवधृतौ च । इहावधृते काममवधृते काममवधृतमेतत् आत्मच्छंदसा निक्षिपन् दोषवान् भवति परं निष्कारणे, यदि पुनरशठः सन् एवं चिन्तयति न शक्तः क्षामतया परवादिनं जेतुमिदानीं तीरितः कार्यः समाप्तकार्यः । पुनर्भूयो वहेयमिति ततस्तस्मिन् निक्षेपणं युज्यते एव अदुष्टमेव

पुष्टालम्बनत्वात् ।।

**मू. (२२)** *परिहारकप्पट्ठिए भिक्खुबहिया थेराणं वेयावडियाए गच्छेज्जा थेराय से सरिज्जा वा नो सरिज्जा वा नो कप्पइ ति ।। से निव्विसमाणस्स०*

**वृ-** एतदपि सूत्रं तथैव, नवरमेतावान् विशेषः । थेराय से सरिज्जा वा नो सरिज्जा नो कप्पइ से निव्विसमाणस्सेति । अस्यायमर्थः-स्थविरा से तस्य परिहारकल्पं स्मरेयुर्यदि वा व्याक्षेपात्र स्मरेयुः । वाशब्दादुभावपि न स्मरेयातां तथापि यदि निर्विशमानको गच्छति ततः स तस्य निर्विशमानकस्य एकरात्रिक्या प्रतिमया एकरात्रिकेण वा साभिग्रहेण कचिदपि प्रतिबन्धमन्तरेण गच्छत इत्यादि । तथा चाह-

**[भा.७५२]** सरमाणे जो उ गमो अस्सरमाणेवि होइ एमेव ।
एमेव मीसगंमि वि देसं सव्वं व आसज्ज ।।

**वृ-** इह त्रीणि सूत्राणि, तद्यथा-प्रथमं स्मरणसूत्रं, द्वितीयमस्मरणसूत्रं, तृतीयं मिश्रकसूत्रं स्मरणास्मरणसूत्रमित्यर्थः । तत्र य एव गमः स्मरणे स्मरणसूत्रे उक्तः एमेव अनेनैव प्रकारेण प्रथमसूत्रप्रकारेणेत्यर्थः । अस्मरणे अस्मरणसूत्रे भवति गमः । एवमेव अनेनैव प्रकारेण मिश्रकसूत्रेऽपि तत्र सूत्रत्रयेऽपि वहनं निक्षेपणं झोषो वा देशं सर्वं वा आसाद्य प्रतीत्य द्रष्टव्यः । तत्र द्वयोरपि विस्मरणं सूचितं । तत्र कारणमाह-

**[भा.७५३]** विज्ञानिमित्त उत्तर कहणे अप्पाहणाय कहियाओ ।
अतिसंभम तुरिय विणिग्गयाण दोण्हंपि विस्सरियं ।।

**वृ-** विद्यानां प्रति विद्या प्रतिपक्षभूतानां निमित्तानामनेकप्रकाराणामुत्तराणां प्रतिवादिविषयाणां यथा यदि स वादी एवं ब्रूयात् ततो भवानित्थं वदेदित्येवमादिरूपाणां कथने तथा अप्पाहणाय संदेशकाः बहुका कथिताः । तत आचार्यस्यातिसंभ्रमेण इतरस्यापि चातिसंभ्रमादेव त्वरितविनिर्गतस्य द्वयोरपि विस्मृतं, यथा परिहारतपो निक्षेपणीयमिति । तत्र यदि आचार्याः स्मरेयुः स वा स्मारयति तदा निक्षिप्य गच्छति । अथ द्वयोरपि विस्मृतं परिहारतपो निक्षेपणीयमिति । अथ द्वयोरपि विस्मृतं तदा निर्विशमानक एव याति । यदा तु पूर्वं स स्मृतवान् न पश्चात्तदा का वार्त्तेत्यत आह-

**[भा.७५४]** पुव्वं सो सरिऊण संपत्थिए विज्ञमादि कज्जेहिं ।
जस्स पुणो विस्सरियं निव्विसमाणे तहिंपि वए ।।

**वृ-** पूर्वं स परिहारिकः स्मृत्वा परिहारतपो निक्षिप्य मया गन्तव्यमिति विचिन्त्य संप्रस्थिते सम्प्रस्थानकाले विद्यादिकार्यैर्विद्याग्रहणादिकार्यैर्व्याकुलीभूततया यस्य पूर्वविस्मृतं यो विस्मृतं गतवान् तत्रापि पूर्वं स्मरणे पश्चाद स्मरणे निर्विशमानो व्रजेत् । सम्प्रति यदुक्तं देशं वा सर्वं वा आसाद्येति तद्व्याख्यानयति-

**[भा.७५५]** देसं वा वि वहेज्जा देसं च ठवेज्ज अहव झोसिज्जा ।
सव्वं वा वियहेज्जा सव्वं ठविज्ज सव्वं व झोसिज्जा ।।

**वृ-** त्रिष्वपि सूत्रेषु परस्परसमुच्चयार्थाः । तथा त्रिष्वपि सूत्रेषु देशं वा वाहयेदपि, देशं वा स्थापयेदपि, अथवा देशं झोषयेदपि, -सर्वं वाहयेदपि सर्वं वा स्थापयेदपि सर्वं वा झोषयेदपि । अत्र वाशब्दाद्देशं वेत्याद्यपेक्षया विकल्पार्थाः । अपि शब्दाः पूर्ववत् । अथ कथं देशस्य वहनादि ? उच्यते परिहारतपः

प्रायः सर्वं व्यूढं स्तोकं तिष्ठति । अत्रान्तरे च गमनकार्यमधिकृतं समुत्पन्नं ततः आचार्यैरुक्तम्-

**[भा. ७५६]** निक्खिव न निक्खिवामी पथिच्चिय देसमेव वोज्झामि ।
असहू पुन निक्खिवए झोसंति मेएज्ज तवसेसं ।।

**वृ-** निक्षिप मुञ्च अधिकृतं परिहारतपः । यत इदं गमनकार्यमिदानीं समुत्पन्नं, तत्र समर्थः सन् प्राह न निक्षिपामि मुञ्चामि यदेनं देशं पथ्येव मार्ग एव वोक्ष्यामि न पथि क्लमं गमिष्यामि शक्तत्वात्, असहोऽसमर्थः सन् पुनर्नूनमहं गमिष्यामीति विचिन्तयन् तं देशं निक्षिपति, । अथवा से तस्य यदवशेषं स्तोकमव्यूढमवतिष्ठति तत्तस्य संप्रस्थितस्य वाचार्याः प्रसादबुद्धया समस्तं झोषयंति मुञ्चन्ति । यथा महति प्रयोजने त्वं संप्रस्थितो वर्तसे इति मुक्तं प्रसादतस्तवैतत् तपः शेषमिति ! । तदेवं देशस्य वहननिक्षेपण झोषाभाविताः । सम्प्रति सर्वस्य तान् भावयति-

**[भा. ७५७]** एमेव य सव्वंपि व दूरद्धाणंमि तं भवे नियमा ।
एमेव सव्वदेसे वाहणझोसा पडिनियत्ते ।।

**वृ-** एवमेव अनेनैव प्रकारेण सर्वमपि बाह्यं निक्षेपणीयं झोषणीयं च भावनीयं, नवरं तद्भवति बाह्यादिकं नियमात् दूराध्वनि । तथाहि-कस्यापि परिहारतपो दत्तं वोढुं च स प्रवृत्तः । अत्रान्तरे च गमन प्रयोजनमुपजातं, तत आचार्या ब्रुवते- 'भद्र समुत्पन्नमिदं गमनप्रयोजनं तस्मान्निक्षिप परिहारतप' इति । समर्थः सन् प्राह- 'भगवन् गच्छन्नपि समर्थोऽहं वोढुं अध्वनो दूरत्वाच्च मार्गे एव समस्तं वोक्ष्यामि । तथा हि-सर्वजघन्यं परिहारतपो मासिकं, तदापन्नोऽसौ, गन्तव्यं चानन्दपुरात् मथुरायां । ततस्तत्तपो मार्ग एव समाप्तिमुपयातीति । असमर्थः पुनर्निक्षिपति यदि वा महत्प्रयोजनमुपस्थितं गरीयांश्चाध्वा एतस्य च प्रयोजनस्यायमेव गुणगरीयस्त्वात् कर्ता । ततः सम्यक् प्रवचनभक्तोऽयं परमदुष्करकारीति विचिंत्य सूरयः सर्वमपि तस्य प्रसादतो मुञ्चंति । एवं सर्वस्य वहननिक्षेपझोषा एमवेत्यादि, एवमेव अनेनैव प्रकारेण प्रतिनिवृत्तेः प्रत्यागतस्य देशस्य सर्वस्य वा वाहनाझोषौ वेदितव्यौ । तद्यथा-यदि गच्छता देशो निक्षिप्तस्ततः स देशः प्रत्यागतेनोह्यते । अथ समस्तं ततः सर्वमिति । यदिवा अहो दुष्करमिदं कार्यमनेन कृतमिति परितुष्टाः सूरयो निक्षिप्तं देशं सर्वं वा मुञ्चंति । एवं प्रत्यागतस्य देशसर्ववाहनझोषौ । अथ कथं देशस्य वा प्रसादतो झोषकरणं, न खलु प्रसादतः पापमुपयातीति तत आह-

**[भा. ७५८]** वेयावच्चकरणं होति अनुग्घातिए वि उग्घायं ।
सेसाण अनुग्घाया अप्पच्छंदो ववेताणं ।।

**वृ-** यथा अनुद्घातिते परिहारतपसि प्राप्ते वैयावृत्यकराणां सङ्घादिवैयावृत्यप्रवृत्तानामुद्घाति-परिहारतपो भवति । दानयोग्यवैयावृत्यालम्बनेन तेषामवलम्बितत्वात् । एवं कदाचित् देशकालाद्यपेक्षया देशस्य सर्वस्य वा झोषोऽपि क्रियते । तथा तीर्थकरानुज्ञाप्रवृत्तेः; । तथा चोक्तम्-तित्थगरेहिं भणियं वेयावच्चकराणं झोसो भवति, अनुदघातितं उग्घाइयं कज्जइ इति शेषाणां वैयावृत्यालम्बनरहिताना-मुद्घातिते प्राप्तेऽनुद्घातितमेव दीयते । तथायं वैयावृत्यालम्बनरहिता आत्मच्छंदसा निक्षिपन्तो यदि उद्घातितं वहन्त आसीरन् न तदानुद्घातितं दीयते अथ अनुद्घातितं निक्षिप्तवन्तस्तत उपरितनं तेषां प्रायश्चित्तमिति ।

**मू. (२३)** *जे भिक्खू गणाओ अवकम्म एकल्लविहारपडिमं उवसंपज्जित्ताणं विहरित्तए पुनो आलोएज्जा पुनो पडिक्कमेज्जा पुनो छेयपरिहारस्स उवट्ठावेज्जा ।।*

**मू.** *(२४) एवं गणावच्छेइए ।।*

**मू.** *(२५) एवं आयरिय उवज्झाए ।।*

**वृ-** सूत्रं 'भिक्खूयगणातो अवक्कम' इत्यादि । अथास्य सूत्रस्य पूर्वसूत्रेण सह कः सम्बन्धस्तत आह-

**[भा.७५९]** निग्गमनं तु अहिकियं, अनुवत्ततिवालवाधिकाराओ ।
तं पुनवि तिन्न गमनं, इमं तु सुत्तं उभयहा वि ।।

**वृ-** अनन्तरसूत्रे पारिहारिकनिर्गमनमधिकृतमुक्तमिहापि तदेव निर्गमनमुच्यते । अथवा अनन्तरसूत्रे तपसोऽधिकारोऽनुवर्तते । इहापि स एव तपोऽधिकारः । तत्पुनरनन्तरसूत्रं निर्गमनमभिहितं च वितीर्नमनुज्ञातमिदं तु सूत्रं निर्गमनमुभयथापि वितीर्णमवतीर्णं च भाषते । अनेन सम्बन्धेनायातस्यास्य सूत्रस्य व्याख्या-भिक्षुः प्रागुक्तशब्दार्थश्च पुनरर्थात् वाक्यभेदे स च वाक्यभेदः सुप्रतीतः, पूर्वसूत्रवाक्याद्वितीर्णगमनाभिधायिनोऽस्य सूत्रवाक्यस्य वितीर्णावितीर्णगमनाभिधायितया कथंचिद्भिन्नत्वात्, गणादवच्छादवक्रम्य विनिर्गत्यएकाकि विहारप्रतिमामेकाकिविहारयोग्यां मासिक्यादिकी प्रतिमामुपसम्पद्य विहरेत् । स च गणस्य स्मरति, संभाव्यते चैतत् । तथा हि यः सूत्रार्थतदुभयैरव्यक्तो यथाविधिना प्रतिमां च प्रतिपद्येत् स नियमाद्भङ्गमुपैति इति । ततः सगणं स्मरन् इच्छेत् द्वितीयमपि वारं, एकं वारं पूर्वमपि प्रव्रज्याप्रतिपत्तिकालमाश्रितवान् । इदानीं द्वितीयं वारमत उक्तं-द्वितीयमपि वारं, तमेवात्मीयपूर्वगुरुं गुणग्रहणपुरस्सरमुपसम्पद्य विहर्तुं, इहैव च गणमुपसम्पद्य पुनस्तमेकाकिविहारप्रतिमाभङ्गमालोचयेत् । गुरुसमीपे आलोच्य पुनः पुनरकारणतया तस्मात् स्थानात् प्रतिक्रमेत् प्रतिक्रम्य च यदापन्नः प्रायश्चित्तं च्छेदं परिहारं वा तस्य च्छेदस्य परिहारस्य वा करणाय पुनरुपतिष्ठेत् । इह प्रतिमाप्रतिपन्नेन यत्रैवाकृत्यं समासेवितं तत्रैवाह-दुष्टु कृतं मयेत्यादिचिन्तनत स्तदालोचितं प्रतिक्रान्तं च गुरुसमक्षं तु द्वितीयवारमिति पुनः शब्दोपपत्तिः ।

एष सूत्रसंक्षेपार्थः । विस्तरार्थं तु भाष्यकृदाह-

**[भा.७६०]** संथरमाणस्स विही, आयारदसासु वन्नितो पुव्विं ।
सो चेव य होइ इहं तस्स विभासा इमा होति ।।

**वृ-** संस्तरन् नाम स उच्यते-यः सूत्रोक्तविधिना प्रतिमाप्रतिपत्तियोग्यतामुपागतः मासिक्यादीनां च प्रतिमानां मध्ये यां प्रतिमां प्रतिपन्नस्तां सम्यक् परिपालयितुं क्षमस्तस्य संस्तरतो विधिसमाचारी आचारप्रधाना दशा आचारदशास्तासु दशाश्रुतस्कन्धेष्वित्यर्थः । भिक्षुप्रतिमाध्ययने पूर्वं वर्णितः स एव इहापि अस्मिन्नप्यधिकृतसूत्रव्याख्याप्रस्तावे परिपूर्णो भवति ज्ञातव्यः, तस्य प्रस्तावायातत्वात् । तथा हि-एकाकिविहारिप्रतिमामुपसम्पद्य विहरेदित्युक्तं, ततः साक्षादुपात्ता एकाकिविहारिप्रतिमेति भवति, तद्विधिप्ररूपणावसरः । केवलं स सकलभिक्षुप्रतिमाध्ययनप्रतिपाद्य इति तत एवावधारणीयः । इह पुनस्तस्यैकाकिविहारिप्रतिमाविधिर्विभाषा कर्तव्या । यथा ईदृशस्य एकाकिविहार प्रतिमाप्रतिपत्तिः कल्पते । अनेन च प्रकारेण प्रतिपद्यते । ईदृशश्च एकाकिविहारप्रतिमाया अयोग्य इति सा इयं वक्ष्यमाणा भवति । तामेवाभिधित्सुराह-

**[भा.७६१]** घर सउनिसीहपव्वइय सिक्खपरिकम्मकरण दो जोहा ।
थिरकरणे लगच्छखमदुग गच्छारामा ततो नीति ।।

**वृ-** परिकर्मकरणे द्वौ दृष्टान्तौ, तद्यथा-गृहेऽवस्थितः शकुनिर्गृहशकुनिस्तथा सिंहश्च वने व्यवस्थित

इति गम्यते । तथा 'पव्वइसिक्ख' त्ति प्रव्रजनं प्रव्रजितं प्रव्रज्या इत्यर्थः । शिक्षाग्रहणासेवनरूपं शिक्षाद्विकं । एते द्वे द्वारे वक्तव्ये, एतच्च शेषद्वाराणामर्थग्रहणादीनामुपलक्षणमतस्तान्यपि वक्तव्यानि । ततः परिकर्मकरणं वक्तव्यं, तदनन्तरं परिकर्मितः परीक्षायां द्वौ योधौ दृष्टान्तत्वेनोपन्यसनीयौ । ततः स्थिरीकरणनिमित्तं तस्योपसर्गव्यावर्णनायां सूत्रार्थकरणव्यवस्थितेऽकाकरूपं क्षपकद्विकज्ञातं वक्तव्यम् । तत एवं कृतपरिकर्मासन् गच्छारामात् सर्वर्तुकपुष्पफलोपगारामरूपात् गच्छाद्विनिर्गच्छति । एष द्वारगाथा संक्षेपार्थः । साम्प्रतमेनामेव विवरीषुः प्रथमतो गृहशकुनिदृष्टान्तं भावयति-

**[भा.७६२]** वासगगयं तु पोसति चंचूपूरेहिं सउणिया सावं ।
वारेइ तं उड्डंतं जाव समत्थं न जायं तु ॥

**वृ-** शकुनिका पक्षिणी आत्मीयं शावं, 'वासगगयं' ति प्राकृतत्वादाद्याकारस्य लोप आवासो नीडमावास एवावासकस्तद्गतं । तुरेवकारार्थः । आवासगगतमेव शावं चञ्चूपूरैश्चञ्चूभरणैः पुष्णाति पुष्टीकरोति । यदि कथमप्यसञ्जातपक्षोऽपि बालचापलेनावासाद्बहिर्जिगमिषुरुड्डीयते, ततस्तमुड्डीयमानं वारयति प्रतिषेधयति, । सा चैवं तावत्करोति यावत्समर्थो न जायते । गाथायां तु नपुंसकनिर्देशः प्राकृतत्वात् । समर्थस्तु जातः सन्न प्रतिषिध्यते । ततो निरुपद्रवं स्वेच्छया विहरति । भावितः शकुनि दृष्टान्तः । सम्प्रति सिंहदृष्टान्तं भावयति-

**[भा.७६३]** एमेव वणे सीही सा रक्खइ छावपोयगं गहने ।
खीरमिउ पिसिय चव्विय, जा खायइ अट्ठियाइं पि ॥

**वृ-** एवमेव शकुनिकागतेनैव प्रकारेण वने । किं विशिष्टे ? इत्याह-गहने अतिशयेन गुहिले स्थिता सती सिंही शावपोतकं शाव एवातिलघुत्वात् पोतः पोतकः शावपोतकस्तं रक्षयति व्याघ्रादिभ्यस्तथा क्षीरेण स्तन्येन मृदुचर्वितपिशितेन च तावदात्मीयं शावपोतकं पुष्णाति यावदस्थीन्यपि खादति ।

**[भा.७६४]** मारिय ममारिएहिं तं तीरावेति छावएहिं तु ।
वणमहिस हत्थिवग्घाण पच्चलो जाव सो जातो ॥

**वृ-** वनमहिषादीनां शावकैर्मारितैरमारितैर्वा तावत्तमात्मीयशावं तीरयति समर्थीकरोति यावत्तेषां वनमहिषहस्तिव्याघ्राणां स्वयमेव व्यापादने प्रत्यल समर्थो जातो भवति । कृता सिंहदृष्टान्तभावना ॥ साम्प्रतमनयोरेव निदर्शनयोरुपनयनार्थमिदमाह-

**[भा.७६५]** अकयपरिकम्ममसहं दुविहा सिक्खा अकोवियमवत्तं ।
पडिवक्खेण उवमिमो सउणिग सीहादिछावेहिं ॥

**वृ-** न कृतानि परिकर्माणि वक्ष्यमाणानि येन स तथा तमकृतपरिकर्माणमकृतपरिकर्मत्वादेवासहमेकाकिविहारप्रतिमां प्रतिपत्तुमसमर्थं, तथा द्विविधायां शिक्षायां ग्रहणासेवनरूपायामपि कोविदमनभिज्ञं तथा श्रुतेन वयसा चा प्राप्तयोग्यताकं पडिवक्खेणंति ये प्राक्शकुनिपोतसिंहशावकानां संजातपक्षत्वादयो गुणा उक्तास्तेषां प्रतिपक्षेण प्रतिकूल्येनासंजातपक्षत्वादिना विशिष्टाः शकुनिसिंहादिशावका आदिशब्दात् व्याघ्रादिपरिग्रहस्तैरुपमयामस्तथाहि-यथा शकुनिपोतोऽसंजातपक्षो यद्यावासाद्विनिर्गत्य स्वच्छंदसा परिभ्रमति, ततः स काकढंकादिभिर्विनाशमाविशति, । सिंहपोतकोऽपि यदि क्षीराहारो गुहातो विनिर्गत्य वने स्वेच्छया विहरति ततः सोऽपि वनमहिषव्याघ्रादिभिरुपहन्यते । एवं साधुरप्यकृतपरिकर्मा द्विविधशिक्षायामकोविदः श्रुतेन वयसा चाऽप्राप्तयोग्यताको यदि गच्छादेकाकिविहारप्रतिमाप्रतिपत्तये

विनिर्गच्छति, ततः स नियमादात्मविराधनां संयमविराधनां च प्राप्नोति । तदेवं घरसउनिसीहत्ति व्याख्यातम् । सम्प्रति प्रव्रजितशिक्षादीनि द्वाराणि वक्तव्यानि तत्संग्राहिका चेयं गाथा-

[भा.७६६] पव्वज्जासिक्खावयमत्थग्गहणं च अनियतो वासो ।
निप्फत्तीय विहारो, सामायारी ठिती चेव ।।

वृ- अस्या व्याख्यानं कल्पे सविस्तरमुक्तमत्र तु लेशतोऽर्थमात्रमभिधीयते । प्रथमतस्तावत्प्रव्रज्या भवति, सा च द्विधा धर्मश्रवणतोऽभिसमागमतश्च । तत्र या आचार्यादिभ्यो धर्मदेशनामाकर्ण्य संसाराद्विरज्य प्रतिपद्यते सा धर्मश्रवणतः । या पुनर्जातिस्मरणादिना सा अभिसमागमतः, प्रव्रजितस्य शिक्षापदं भवति । शिक्षा च द्विधा-ग्रहणशिक्षा, आसेवनाशिक्षा च । तत्र ग्रहणशिक्षा सूत्रावगाहन-लक्षणा । आसेवनाशिक्षा सामाचार्यभ्यसनं । शिक्षापदमनन्तरं चार्थग्रहणं भवति, अर्थग्रहणकरणानन्तरं चानियतो वासो नानादेशपरिभ्रमणं कर्तव्यम् । तदनन्तरेण नानादेशीयशब्दाकौशलेन नानादेशी-भाषात्मकस्य सूत्रस्य परिस्फुटरूपार्थनिर्णयकारित्वानुपपत्तेः, तदनन्तरं वाचनाप्रदानादिना गच्छस्य निष्पत्तिर्निष्पादनं कर्तव्यम् । तदनन्तरं विहारोऽभ्युद्यतो विहारो जिनकल्पादिप्रतिपत्तिलक्षणः करणीयः । तस्य च विहारस्य या सामाचारी सा वक्तव्या । तथा स्थितिर्जिनकल्पादीनां क्षेत्रकालादिना क्षेत्रकालादिद्वारेषु चिन्तनीया तत्र प्रव्रज्या शिक्षापदमर्थगआहणमनियतो वासः निष्पत्तिविहारः । सामाचारीति सप्त द्वाराणि प्रतिमायामुपयोगीनि तत्रापि प्रव्रज्या शिक्षापदमर्थग्रहणं चेति त्रीणि द्वाराणि प्रतिपत्तुकामस्य नियमतो भवन्ति, शेषाणां भजना । तथा चाह-

[भा.७६७] पव्वज्जा सिक्खापयमत्थगहणं च सेसए भयणा ।
सामायारीविसेसो नवरं वुत्तो उ पडिमाए ।।

वृ- प्रव्रज्या प्रव्रजनं, शिक्षापदं ग्रहणं सेवनारूपं शिक्षाद्विकं अर्थग्रहणमर्थपरिज्ञानमित्येतत् त्रयं प्रतिमां प्रतिपित्सोर्नियमेन भवति । शेषके अनियतवासनिष्पत्तिलक्षणद्वारद्विके भजना विकल्पनाय आचार्यपदार्हस्तस्य नियमादिदं द्वारद्वयमस्ति, शेषस्य तु नास्तीत्यर्थः । विहारः पुनः प्रतिमाप्रतिपत्तिलक्षणोऽस्त्येव सामाचार्या अपि जिनकल्पिकसामाचारीतो विशेषोऽस्ति नवरं सामाचारीविशेषः प्रतिमायां प्रतिमागतो दशाश्रुतस्कन्धे भिक्षुप्रतिमा ध्ययने उक्त प्रतिपादितः इति न पुनरुच्यते ।। सम्प्रति परिकर्मकरणं वक्तव्यम् । तत्र पर आह-ननु तत्परिकर्म किं गच्छ एव स्थितः करोति उत गच्छाद्विनिर्गत्येति सूरिराह-

[भा.७६८] गणहरगुणेहिं जुत्तो, जति अन्नो गणहरो गणे अत्थि ।
नीति गणातो इहरा कुणति गणे चेव परिकम्मं ।।

वृ- यदि नाम गणे गच्छे अन्योन्यगणधरो गणधरसमानो गणधरपदार्ह इत्यर्थः । गणधरगुणैर्युक्तो विद्यते न च प्रयोजनेनान्यत्र गतस्तर्हितं गणेस्थापयित्वा गणाद्विनिर्गच्छतिविनिर्गत्य च परिकर्म करोति इतरथा तथाविधान्यगणधरगुणयुक्तगणधरत्वार्हभावे गण एव स्थितः सन्परिकर्म करोति । अत्र पर आह-ननु तेन पूर्वं द्विविधांशिक्षां शिक्षमाणेनात्मा भावित एव तत किमिदानीं भारत्वाभावेगण एवस्थितःसन् भावनाभिः परिकर्मणयेत्यत आह-

[भा.७६९] जइ विहु दुविहा सिक्खा, आइल्ला होंति गच्छवासम्मि ।
तहवि य एगविहारे जा जोग्गा ताए भावेति ।।

वृ- यद्यपि द्विविधा शिक्षा आद्यासूत्रग्रहणसामाचार्यसेवनलक्षणा भवति गच्छवासे तथापि गच्छवासे योग्या नु पुनरेकाकिविहारयोग्या तत एकाकिविहारे या योग्या शिक्षा तद्योग्यसामाचार्यभ्यासरूपतया स आत्मानं भावयति । तद्गतसामाचार्यभ्यासश्च पञ्चभिर्भावनाभिर्भवति, ततस्ताभिर्विशेषत आत्मानं परिकर्मयति ।

[भा.७७०]                तवेण सत्तेण सुत्तेण एगत्तेण बलेण य ।
                              तुलणा पंचहा वुत्ता पडिमं पडिवज्जत्तो ।।

वृ- प्रतिमां प्रतिपद्यमानस्य प्रतिपत्तुकामस्य तुलना कर्मणा पञ्चधा पञ्च प्रकारा प्रोक्ता । तद्यथा- तपसा, सत्वेन, सूत्रेण, एकत्वेन बलेन च, तत्र तपोभावनाप्रतिपादनार्थमाह-

[भा.७७१]                चउभत्तेण जतिउं छठेहिं अट्ठमेहिं दसमेहिं ।
                              बारसचउदसमेहिं य । धीरो धीइमं तुले अप्पा ।।

वृ- प्रथमतश्चतुर्थेन यतते किमुक्तं भवति ? प्रथमतो नियमेन त्रीन् वारान् चतुर्थं करोति । तत्र यदि त्रिभिरपि कृते चतुर्थे क्लाम्यति ततस्तावदभ्यस्यति चतुर्थं यावच्चतुर्थं कुर्वन् मनागपि न क्लममुपयाति । एवं चतुर्थेन यतित्वा त्रीन् वारान् षष्ठं करोति, तत्रापि यदि वारत्रयं कृते षष्ठे क्लममुपैति ततश्च चतुर्थवत् षष्ठेऽप्यभ्यासं तावत्करोति यावत्तस्यापि करणे ग्लानिर्नोपपद्यते । एवं षष्ठैरात्मानं भावयित्वा अष्टमै र्भावयति, तदनन्तरं दशमैः । ततो द्वादशैरुपलक्षणमेतत् । ततो अनेन प्रकारेण षोडशादिभिश्च धीरो धृतिमान् आत्मानं तुलयति । परिकर्मयति, स च तावत्तुलयति, यावत्षण्मासान् सोपसर्गोऽपि न क्षुधाहानिं उपगच्छति । उक्तं च-

[भा.७७२]                जावणब्भत्थो पोरिसि माइ तवोउतंति गुणं ।
                              कुणइछुहा विजयठा गिरिनदीसिंहेण दिट्ठंतो ।।

[भा.७७३]                एक्केक्कं ताव तवं करेति जहा तेन कीरमाणेण ।
                              हानी न होइ जइयावि होज्ज छम्मास उवसग्गो ।।

वृ- तत्र यदुक्तं चतुर्थादिषु तावदभ्यासं करोति यावन्न क्लाम्यति । तत्र गिरिनदीसिंहदृष्टान्तस्तथाहि- यथा सिंहो गिरिनदीं तरन् परतटे चिह्नं करोति, यथा अमुकप्रदेशे वृक्षाद्युपलक्षिते मया गन्तव्यमिति संचरन् तीक्ष्णेनोदकवेगेनापह्रियते । ततः प्रत्यावृत्त्योत्तरति । एवं प्रमाणतस्तावत्करणं करोति यावदभग्नः सन् सकलामपि गिरिनदीं शीघ्रं तरति । एवं साधुरपि यदि चतुर्थं षष्ठमष्टमादि वा त्रीन् वारान् कृत्वा क्लामं याति । ततश्चतुर्थादिकं प्रत्येकं तावदभ्यस्यति यावन्न क्लाम्यतीति तथा चैनमेवसिंहदृष्टान्तयोजनामाह-

[भा.७७४]                जह सीहो तह साहू गिरिनदी सीहो तवोधनो साहू ।
                              वेयावच्चकिलंतो अभिन्नरोमो य आवासे ।।

वृ- यथा सामान्येन गुहायां वर्त्तमानः सिंहस्तथा गच्छे वर्त्तमानः साधुः यथा च गिरिनदीमुत्तरन् अभ्यासकरणे प्रवृत्तः सिंहस्तथा तपोधनस्तपः करणाभ्यासप्रवृत्तः साधुः एवं च चतुर्थ षष्ठाष्टमादितपः कुर्वन् आत्मवैयावृत्यकरो ज्ञातव्यः । कस्मादिति चेदुच्यते-यस्मात्स तपसा पूर्वसंचितकर्ममलं शोधयन्नात्मन एवोपकारे वर्तते । ततः स आत्मवैयावृत्यकरः । एवमात्मनो वैयावृत्ये अक्लान्तः सन् आवासेत्ति अवश्यकरणीयेषु योगेषु भिन्नरोमा भवति । रोममात्रमपि न क्लमं याति । गतं तपो भावनाद्वारमधुना सत्व भावनाद्वारमाह—

[भा.७७५] पढमाउवस्सयंमि बिइयाबाहिं तइया चउक्कंमि ।
सुन्नहरम्मि चउत्थी पंचमिया तह मसाणंमि ।।

वृ- प्रथमा सत्वभावना उपाश्रये । कथमिति चेत् ? उपाश्रयस्यान्तर्निशि प्रतिमायां प्रतिदिवसमवतिष्ठते । स च तथा च तिष्ठमानो मूषकमार्जारादिस्पर्शनदर्शनादि भयं तावज्जयति यावत्तत्स्पर्शनादि भावेपि रोमोद्भेदमात्रकमपि भयं नोपजायते । उक्तं च-

[भा.७७६] छक्कस्स चक्खइयस्स व मूसियमादीहिं वा निसिचरेहिं ।
जह नवि जायइ रोमुब्भेओ तहवायसंधीरा ।।

वृ- द्वितीया सत्वभावना उपाश्रयस्य बहिरपरिच्छन्ने । तत्र हि प्रतिमां प्रतिपन्नस्य बहुतरं मार्जारादि भयं संभवति । ततस्तज्जयार्थं द्वितीया सत्वभावना तृतीया सत्वभावना चतुष्के तत्रापि प्रभूततरं त्रिविधं तस्कराक्षकश्वापदादिभ्यो भयं । चतुर्थी शून्यगृहे, पञ्चमी श्मशाने । तत्र हि यथोत्तरं सविशेषा सविशेषतरा त्रिविधा बाधा । उक्तं च-

सविसेसतरा बाहिं तक्कर आरक्खि सावया दीया ।
सुन्नघरमसाणेसुय सविसेसतरा भवे तिविहा ।।

एताभिः पंचभिरपि च सत्वभावनाभिस्तावदात्मानं भावयति यावद्दिवारात्रौ वा देवैरपि भीमरूपैर्न चालयितुं शक्यते उक्तं च-

देवेहिं भेसिया अवि दिवाया रातो व भीमरूवेहिं ।
तो सत्तभावनाए वहति भरं निज्झतो सगलं ।।

गता सत्वभावना । सम्प्रति सूत्रभावनामाह-

[भा.७७७] उक्कसितो वत्तियातिं सुत्ताइं करेइ सोयव्वाइं ।
मुहुत्तद्धपोरिसीतो दिने य काले अहोरत्ते ।।

वृ- सोऽधिकृतो प्रतिमाप्रतिपत्तिनिमित्तं परिकर्मकारी साधुः सर्वाण्यपि सूत्राणि उत्कचिता-पत्कचितानि करोति । किमुक्तं भवति ? उपरितनादारभ्योत्क्रमेणऽधोऽवतरति मूलाद्वा समारभ्य क्रमेणोपर्युपर्यवगाहते । एकान्तरिता लापकग्रहणेन सर्वं मूलादारभ्य तावत्परावर्तयति यावत्पर्यन्तः । तत उपरितनभागादारभ्य गुणितं मुञ्चन् सर्वमगुणितं तावत्पश्चादनुपूर्व्या गुणयति यावन्मूलमित्यादि । ननु पूर्वमपि तस्य स्वाभिधानमिव सर्वमपि श्रुतं पूर्वादिरूपमतिपरिचितमेव ततः कस्मादेवमिदानी-मभ्यस्याति ? उच्यते-कालपरिमाणावबोधनिमित्तं । तथा हि-स तथा सूत्रमाचारनामकनवम-पूर्वगततृतीयवस्तूक्तप्रकारेण परावर्तयति । यथा उच्छ्वासपरिमाणं यथोक्तरूपमवधारयति । तत उच्छ्वासपरिमाणावधारणात् उच्छ्वासनिश्वासपरिमाणावधारणं तस्मात्स्तोकस्य स्तोकान्मुहूर्तस्य मुहूर्तैरर्धपौरुष्याभ्यां पौरुष्याः पौरुषीभिर्दिनानामुपलक्षणमेतत् । रात्रिणां च दिनरात्रीणां च । वाऽहोरात्राणामेवं दिनरात्रिभ्यां मुहूर्तार्द्धात् पौरुषी दिनानि अहोरात्रांश्च काले कालविषये जानाति । उक्तं च-

[भा.७७८] जइवियसेवन्नादी सनाममिव परिचियं सुयं तस्स ।
कालपरिमाणहेउं तहावि खलु तज्जयं कुणति ।।

[भा.७७९] उस्सासातो पाणूततोयथोवो ततो विमुहुत्तो ।

मुहुत्तेहिं पोरिसी तो जाणंति निसा य दिवसा य ॥

वृ- उक्ता सूत्रभावना । साम्प्रतमेकत्वभावनामाह-

[भा.७८०] अन्नो देहातो अहं, नाणत्तं जस्स एवमुवलद्धं ।
सो किंचि आहिरिक्कं न कुणति देहस्स भंगेवि ॥

वृ- अहं देहादन्य इत्येवमेकत्वभावनया यस्य साधोः परिकर्मणां कुर्वतः शरीरादात्मनि नानात्वमुपलब्धः सदिव्यादिषु उपसर्गविलायां देहस्य भङ्गेऽपि विनाशेऽपि न किञ्चिदपि अहिरिक्कमिति उत्रासं न करोति । गता एकत्वभावना । सम्प्रति बलभावनामाह-

[भा.७८१] एमेवय देहबलं अभिक्खमासेवणाई तं होइ ।
लंक्खक मल्ले उवमा, आसकिसोरे य जोग्गविए ॥

वृ- एवमेव अनेनैव प्रकारेण बलभावनयापि देहस्तथा भावयितव्यो, यथा देहस्य कर्णायेषु योगेषु बलं न हानिमुपगच्छति, ननु तपसा क्रियमाणेन नियमतोदेहबलमपगच्छति, ततः कथमुच्यते बलभावनया तथा देहांभावयितव्यो यथा देहबलं न हानिमुपयातीति सत्यमेतत् । किन्तु देहबलं धृतिबलसूचनार्थं ततोऽयं भावार्थो बलभावनया तथा यतेत यथा देहापचयेऽपि धृतिसमुत्साहवती समुत्साहवतितरा समुपजायते, । यथा प्रबलामपि परीषहचमूनतसोपसर्गामपि लीलया योधयति । तथा चोक्तम्-

कामं तु सरीरबलं हायति तव भावनाएत्तस्स ।
देहावचएवि सत्ती जहहोइ धिती तहा जयति ॥
कसिणा पीरसहचमू जइ उद्वेज्जाहि सोयसग्गावि ।
दुद्धरपहकरवेगा भयजननी अप्पसत्ताणं ॥
धितिधणियबद्धकच्छो जो होइ अनाइलो तमव्वहितो ।
बलभावनाए धीरो संपुन्नमणोरहो होइ ॥

अपिच सर्वा अपि भावना धृतिबलपुरस्सराः । ततो विशेषतो धृतिबलभावना भावयितव्या यथा प्रबलदिव्याद्युपसर्गोपनिपातेऽपि स्वकार्यं साधयति । न खलु धृतेः किंचिदसाध्यमस्ति । आह च-

[भा.७८२] धितिबलपुरस्सरतो हवंति सव्वावि भावनातोय ।
तंतु न विज्जइ सद्धं जं धिइमंतो न साहेइ ॥

वृ- लब्धतपोबलप्रभृतिकं तपः प्रभृतीनामभीक्ष्णे सेवनया भवति । अत्रोपमा दृष्टान्तो लंखकोमल्लश्च न केवलं लंखकोमल्लकश्च दृष्टान्तः । किन्त्वश्वकिशोरश्च । किं विशिष्ट इत्याह-योग्गापितः परिकर्मित इत्यर्थः । एषां च दृष्टान्तानामियं भावना-लङ्खकोऽभ्यासं कुर्वन्नभ्यासप्रकर्षवशतो रज्जावपि नृत्यं करोति । मल्लोऽपि करणानि पूर्वं दुःखेनाभ्यस्यन् कालेन कृताभ्यासः पश्चादयत्नेन प्रतिमल्लं जयति । अश्वकिशोरोऽपि हस्त्यादिभ्यो भयं गृह्णानः दुःखं तत्पार्श्वे प्रथमतः स्थाप्यमानोऽभ्यासप्रकर्षवशतो न मनागपि तद्भयं करोति । तथा च सति संग्रामे हस्त्यादिभिश्च भवने ऽपि न भङ्गमुपयाति । एषा दृष्टान्तभावना । दार्ष्टान्तिकयोजनात्वियम् । एवमभीक्ष्णासेवनया तपसा न क्लाम्यति । सत्त्वावष्टम्भतो देवादिभ्यो न बिभेति, सूत्रतः सूत्रार्थचिन्तनप्रमाणं कालं दिनरात्रिगतागतरूपं जानाति, । एकत्वभावनातो

यथोक्तस्वरूपो निस्सङ्गो भवति । बलभावनातो धृत्यवष्टम्भः प्राणात्ययेऽपि नात्मानं मुञ्चति । तदेवं परिकर्मकरणं व्याख्यातम् । सम्प्रति दो जोहा इत्येतत् व्याख्यातव्यं । तत्रपरिकर्मणिकृते आचार्येण स परीक्षणीयः । किमसौ कृतसम्यक् परिकर्मा किं वानेति । तत्र द्वयोर्योध निदर्शने त एवाह-

[भा.७८३] पज्जोयमवंतीवइखंडकण्णसाहस्सि मल्ल पारिच्छा ।
महकाल च्छगलसुरघड तालपिसाए करे मंसं ।।

वृ- अवन्तीपतिः प्रद्योतः, खण्डकर्मो नाम मन्त्री । अन्यदा राज्ञः पार्श्वे साहस्रिकः साहस्रिकयोधी मल्लः समागतः, । तस्य खण्डकर्णेनामात्येन महाकालश्मशाने च्छागेन सुराकुटेन च मदिराघटेन परीक्षा कृता, । तत्र तालप्रमाणः पिशाचस्तालपिशाचस्तस्य करे हस्ते मांसं दत्तवान् । द्वितीयो मल्ल आगतः । सोऽपि तथैव परीक्षितः । केवल स तालपिशाचादभयमगमत् । एष गाथासंक्षेपार्थः ।। भावार्थः- कथानकादवसेयस्तच्चेदम्, अवंतीजनवए पज्जोयस्स रन्नोमंती खंडकन्नो नाम । अन्नया सहस्संपि जो जुद्धे जिनति सो आगतो ओलग्गामिति रायाणं विन्नवेति । रन्ना भणियं-उलग्गाहि । ततो सो भणति- ममवित्ती जा सहस्सजोहाणं सा दायव्वा । ततो खंडकन्नो चिंतेति । परिक्खामि ताव एयस्स सत्तं जइसत्तमंतो होइ ततो सच्चं साहस्सजोही । ततो खंडकन्नेणं च्छगलओसुराघडओ य दातुं भणितो, । अज्ज कण्हचउद्दसीए रत्तिं महाकाले मसाणे भक्खेयव्वं । ततो सो महाकालं गंतुं च्छगलयं उद्दवित्ता पउलेउं मंसं खाइउं सुरं च पाउमाढत्तो । नवरं तालपिसाचो आगंतुं हत्थं पसारेति । ममवि देहित्ति । ततो सो सहस्सजोही अभीतो पिसायस्स वि देति । अप्पणा य खायति य, रन्नाय पच्चंतियपुरिसापडियारगा पेसिया ते जहावित्तं पसित्ता रन्नो खंडकन्नस्सयं कहेंति । सच्चं सहस्सजोही एसोत्ति वित्तीदिन्ना, । अन्नोवि आगंतुं विन्नवेति । उलग्गामित्ति सोवि तहेव परिक्खिउमाढत्तो । तालपिसातो आगतो भीतो, नट्ठोपरिचारगेहिं खंडकन्नस्स य जहावित्तं कहियं । न दिन्ना सहस्स जोहवित्ती । एवमाचार्योऽपि किमयं कृतसम्यक् परिकर्मा किं वा नेति तपःप्रभृतिभिः तं परीक्षेत कथमिति चेदत आह-

[भा.७८४] न किलम्मति दीहेणवि तवेण न वि तासितो वि बीहेति ।
छन्ने वि ह्रितो वेलं साहति पुट्ठो अवितहं तु ।।

[भा.७८५] पुरपच्छ संथुएहिं न सज्जइ दिट्ठिरागमाईहिं ।
दिट्ठी सुहवण्णेहिय अब्भत्थबलं समूहंति ।।

वृ- आचार्यस्तपःकारापणादिना प्रकारेण तं सम्यक् परीक्षते । तद्यथा-दीर्घेणापि तपसा न क्लाम्यति तदा स तपः परिकर्मितो ज्ञातव्यः । यदा तु नवित्रासितो मार्जारप्रभृतिश्वापदादिभिर्न बिभेति । तदा सत्त्वपरिकर्मितः । यदा तु मेघच्छन्ने नभसि वसति मध्ये वा स्थितः कियद्गतं दिवसस्य कियद्वा गतं रात्रेः कियद्वा शेषमिति दिवसस्य रात्रेर्वा वेलां पृष्टः सन्नवितथं साधयति कथयति, तदा ज्ञातव्यः स सूत्रभावना परिकर्मितः, तथा पूर्व संस्तुता मातापित्रादयः पश्चात्संस्तुता भार्या श्वश्रू श्वशुरादयः तेषु पूर्वसंस्तुतपश्चात् संस्तुतेषु वन्दनार्थमुपगतेषु गाथायां तृतीया सप्तम्यर्थे प्राकृतत्वात् । दृष्टिरागादिभिर्न स्निग्धदृष्ट्यादिभिः । आदिशब्दात् मुखविकाशादिपरिग्रहः न सज्जते न सङ्गमुपजाति, तदा स एकत्वभावना परिकर्मितो वेदितव्यः, । एतदेव व्याचष्टे- दृष्टिमुखवर्णाभ्यां स्निग्धया दृष्ट्या अवलोकनेन स्फारिकृतकान्तिमुखवर्णकरणेन च । उपलक्षणमेतत् संभाषणादिना च तस्याध्यात्मबलमेकाकित्व भावनाबलं समूहंति परिभावयन्ति सूरयः । बलभावनामाह-

[भा.७८६] उभयतो किसो किसदेहो दढोकिसोया वि दोहिवि दढो य ।
बीयचरमापसत्था धितिदेहं समप्पिया भंगा ।।

वृ- बलचिन्तायां चतुर्भङ्गी । तद्यथा-उभयतो धृति देहाभ्यां कृशः । किमुक्तं भवति ? शरीरेण कृशो धृत्या च दृढः एष द्वितीयः । दृढो किसोयाविति शरीरेण दृढो धृत्याकृशः, एष तृतीयः । द्वाभ्यामपि च शरीरेण धृत्या च दृढः । एष चतुर्थः । अत्र द्वितीयचतुर्थभङ्गौ धृतिदेहसमाश्रितौ । धृतिदेहविषयौ प्रशस्तावेकाकिविहारप्रतिमायोग्यौ । द्वितीयस्य दृढधृत्याश्रयत्वात् । चरमस्य दृढधृतिदेहाश्रयत्वात् । एवं च एकाकि विहारप्रतिपत्तये कृतपरिकर्मणः स्वयमेवात्मानं तुलितमतुलितं वा प्रायो जानन्ति । ज्ञात्वा च प्रतिमाप्रतिपत्तये आचार्यान् विज्ञपयन्ति । तथा चाह-

[भा.७८७] सुत्तत्थझरियसारा सुत्तेनकालं तु सुठु नाऊणं ।
परिचिय परिकम्मेण य सुठु तुलेऊण अप्पाणं ।।

[भा.७८८] तो विनवेंति धीरा आयरिए एगविहरणमती उ ।
परियागसुयसरीरे कयकरणा तिव्वसद्धागा ।।

वृ- सूत्रार्थयोर्झरणेन क्षरणेन सारः शोभनाः सूत्रार्थझरणसारा सूत्रेण सूत्रपरिकर्मणातः कालं दिवसरात्रिगतमभ्रच्छन्नगगनादावपि सुष्ठुज्ञात्वा परिचितेन स्वभ्यस्तेन परिकर्मणा तपः प्रभृति परिकर्मणा सुष्ठु आत्मानं तुलयित्वा धीरा महासत्वा एकाकिविहरणमतिका एकाकिविहाराभिप्रायाः पर्याये गृहस्थपर्याये प्रव्रज्यापर्याये च श्रुते पूर्वगते शरीरे च कृतकरणाः कृताभ्यासास्तीव्रश्रद्धाकाः प्रवर्द्धमानश्रद्धाकाः ततस्तुलनानन्तरमाचार्यान् विज्ञपयन्ति, अत्र योऽनाचार्यः स आचार्यं विज्ञपयति । यथा-'भगवन् कृतपरिकर्माहमिच्छामि युष्माभिरनुज्ञात एकाकिविहारप्रतिमां प्रतिपत्तुमिति, यः पुनराचार्यः स स्वगच्छाय कथयति । यथा परिकर्मितोऽहमतः प्रतिपद्ये एकाकिविहारप्रतिमामिति यदुक्तं-परियाग सुय सरीरे इति तद्व्याख्यानार्थमाह-

[भा.७८९] एगूण तीस वीसा, कोडी आयारवत्थु दसमं च ।
संघयणं पुन आदिल्लगाण तिण्हं तु अन्नयरं ।।

वृ- द्विविधः पर्यायो-गृहि पर्यायो व्रतपर्यायश्च । तत्र यो जन्मत आरभ्य पर्यायः सः गृहिपर्यायः । स च जघन्यत एकोनत्रिंशद्वर्षाणि कथमिति चेदुच्यते-इदं गर्भाष्टमवर्षं प्रव्रजितो विंशतिवर्षपर्यायस्य च दृष्टिवाद उद्दिष्टः, एकेनवर्षेण योगः समाप्तः । सर्वमीलनेन जातान्येकोनत्रिंशद्वर्षाणि, व्रतपर्याय-प्रव्रज्याप्रतिपत्तेः आरभ्य स च जघन्यतो विंशतिवर्षाणि तावत् प्रमाणपर्यायस्यैव दृष्टिवादोद्देश-भावात् । उत्कर्षतो जन्मतो पर्यायो व्रतपर्यायो वा देशोनापूर्वकोटी एतच्च पूर्वकोट्यायुष्के वेदितव्यं नान्यस्य । उक्तं च-

[भा.७९०] पडिमा पडिवनस्स उ गिहिपरियातो जहन्नऊणतीसा ।
जतिपरियातो वीसा दोण्हवि उक्कोसदेसूणा ।।

वृ- श्रुतं जघन्यतो नवमस्य पूर्वस्य तृतीयमाचारनामकं वस्तु यावत्तत्र कालज्ञानस्याभिधानात्, उत्कर्षतो यावद्दशमं पूर्वं, च शब्दस्यानुक्तार्थ संसूचनाद्देशोनमिति द्रष्टव्यम् । तथा चोक्तम्-

आयारवत्थुतइयं जहन्नगं होइ नवमपुव्वस्स ।
तहियं कालन्नाणं दस उक्कोसाणि भिन्नाणि ।।

संहननं पुनरादिमानां त्रयाणां संहननानां अन्यतमद्यदा तेनापृष्टं प्रतिपद्येऽहमिति तदा स स्थिरीकरणनिमित्तमिति वक्तव्यः ।

[भा.७९१] जइवि सि तीओवेओ आयपरं दुक्करं खु वेरग्गं ।
आपुच्छणं तु इहगपडिवज्जण गच्छ समवायं ॥

वृ- यद्यप्यसि भवसि त्वं तया परिकर्मणया उपेतो युक्तः तथाप्यात्मपरं आत्मपरविपयेपु आत्मसमुत्थेपु परसमुत्थितेपु उभयसमुत्थेपु चेत्यर्थः । परीपहेष्विति गम्यते दुष्करं वैराग्यं रागनिग्रहण-मुपलक्षणमेतद्वेपनिग्रहणं चेति ततो भूय आपृच्छना क्रियते । किं त्वया कृता सम्यक् परिकर्मणा किं वा नेति एवमापृच्छनायां कृतायां यदि सम्यक् परिकृतकर्मा ज्ञातो भवति ततस्तस्य विसर्जनमनुज्ञा तस्य क्रियते । अनुज्ञातश्च गच्छसमवायकृत्वा प्रशस्तेपु द्रव्यक्षेत्रकालभावेपु प्रतिपादनं प्रतिमायाः प्रतिपत्ति करोति । एप गाथासंक्षेपार्थः । साम्प्रतमेनामेव विवरीपुः पूर्वार्धं तावद्व्याख्यानयति-

[भा.७९२] परिकम्मितो वि वुच्चइ किमुय अपरिकम्ममंदपरिकम्मा ।
आयपरोभयदोसेसु, होइदुक्खंखुवेरग्गं ॥

वृ- परिकर्मितोऽपि सुष्ठु कृतपरिकर्मापि उच्यते आपृच्छ्यते इति तात्पर्यार्थः यथा त्वया कृता सत्परिकर्मणा किं वा न कृतेति, किमुत अकृतपरिकर्मामन्दपरिकर्मा वा स सुतरामाप्रच्छनीया इति भावः । कस्मादेवमाप्रच्छना क्रियते इति चेत् अत आह - यत आत्मपरोभयदोपेपु आत्मपरोभयसमुत्थेपु परीपहेषु समुत्थितेपु दुःखं खु भवति वैराग्यं रागोपशमलक्षणमुपलक्षणमेतत् द्वेपोपशमो वा ततो माभूत् प्रतिपत्तौ च कश्चिद्व्याघात इत्यापृच्छना क्रियते । अथ केते आत्मपरोभयसमुत्थाः परीपहा इति तान् प्रतिपादयति-

[भा.७९३] पढमबियाद लाभे रोगे पणादिगाय आयाए ।
सी उण्हादी उ परे निसीहियादी उ उभए वि ॥

वृ- प्रथमः परीपहः क्षुद्द्वितीयः पिपासा । आदि शब्दादरत्यरत्यादि परीपहपरिग्रहः । तथा लाभो लाभपरीपहः, रोगो रोगपरीपहः प्रज्ञादिकाः प्रज्ञादयः परीपहाः आदिशब्दादज्ञानादिपरिग्रहः । एते आत्मनि आत्मसमुत्थाः परीपहाः । तथा शीतोष्णादयः सीतोष्णदंशमशकादिपरीपहा परं परविषयाः परसमुत्था इत्यर्थः । नैपेधिक्यादयः नैपेधिकीचर्यादयः पुनः परीपहा उभयस्मिन् उभयसमुत्थाः ।

सम्प्रति झगेलगच्छगतिव्याख्यानार्थमुपक्रमते-

[भा.७९४] एए समुप्पन्नेसु, दुक्खं वेरग्ग भावना काउं ।
पुव्वं अभावितो खलु स होइ एलगच्छोउ ॥

वृ- यः खलु पूर्वमभावितो यथोक्तपरिकर्मणया अपरिकर्मितो भवति । यथा शैक्ष एडकाक्षस्तस्य एतेषु आत्मपरोभयसमुत्थेपु परीपहेषु दुःखं महत्कष्टं वैराग्यभावनारागनिग्रहभावनाऽपलक्षणमेतत् । द्वेषनिग्रहभावनाश्च कर्तुं न शक्यन्ते । एवं रागद्वेषनिग्रहभावना कर्तुमिति भावः । यस्तु सम्यक्कृतपरिकर्मा भवति । स करोत्ययत्नेन वैराग्यभावनां यथाक्षपकस्तथा चाह-

[भा.७९५] परिकम्मणाए खवगो सेह बलामोडिए नि तहठाति ।
पाभातिय उवसग्गे कयंमि पारेइ सो सेहो ॥

[भा.७९६] पारेहि तंपि भंते देव च अच्छी चवेड पाडणया ।
काउस्सग्गा कंपन एलगस्स पएसनिव्वत्ती ॥

वृ- परिकर्मणायामुदाहरणं क्षपकः । वत्ता मोदिकायां श्रुतापर्याप्तत्वेन परिकर्मणायामेव प्रतिपत्तावाहरणं शैक्षकः । सोऽपि शैक्षकस्तथा क्षपक इव तिष्ठति । कायोत्सर्गेणावतिष्ठते, ततो देवतया प्राभातिके उपसर्गे कृते स शैक्षकः पारयति पारयित्वा च क्षपकं ब्रूते । तथा भदन्त ! त्वमपि पारय जातं प्रभातमिति । ततो देवतया चपेटाप्रदानेन तस्याऽक्ष्णोः पातनमकारि, तदनन्तरं शैक्षकानुकम्पया देवताराधनार्थं कायोत्सर्गः कृतस्तेन देवताया आकम्पनमावर्जनमभूत्ततः सद्यो मारितस्य एडकस्य स प्रदेशयोरक्ष्णोसस्तत्र निवृत्ति निष्पत्तिः कृताः । एष गाथाद्वयसंक्षेपार्थः भावनार्थः कथानकादवसेयस्तच्चेवम्- एगो खवगो एगल्लविहारपडिम्माए परिकम्मं करेइ, । सो पडिमंठितो सुत्तत्थाणि झरति । अन्नो खवगो अप्पसुतो आयरियं विन्नवेति, अहंपि परिकम्मं करेमि, । आयरिएणं भणियं, तुमं सुएणं अपज्जत्तो न पाउणोसि, वारिज्जमाणो असुणित्ता तस्स जमलतो तहेव पडिमं ठितो देवया चिंतेति एस आणाभंगे वट्टतिति, । अड्डरत्ते पभायं दंसेति, । तं दट्ठुं इयरं तदणुकंपणट्ठा देवयाए आकंपननिमित्तं धणिउं काउस्सग्गेण ठितो, । ततो सा देवया आगता भणाति । खमगा संदिसह किं करेमि, खमगेण भणियं,-कीस ते सेहो दुक्खावितो देहि से अच्छीणि ताहे तीए देवयाए भणियं-अच्छीणि अप्पदेसी भूयाणि, खवगो भणाति-कहवि करेहि, ताहे सज्जमारियस्स एलगस्स सप्पएसाणि सेहखमगस्स लाइयाणि । साम्प्रतमेतस्य निदर्शनोपनयमाह-

[भा.७९७] भावियमभावियाणं गुणागुणणाइयसितो थेरा ।
वितरंति भावियाणं, दव्वादिसुभेयपडिवत्ती ॥

वृ- भावितानां कृतकर्मणां गुणा यथा क्षपकस्य अभावितानामकृतपरिकर्मणानामगुणा यथा शैक्षकक्षपकस्य इति । एवं भावितानां गुणा गुणज्ञाः स्थविरा आचार्यास्तत आपृच्छानन्तरं यान् भावितान् सम्यग्जानन्ति तेषां भावितानां प्रतिमाप्रतिपत्तिं वितरन्ति समनुजानन्ति, । एतेन आपुच्छणा विसज्जण इत्येतद्व्याख्यातमधुना पडिवज्जण इत्येतद्व्याख्यानार्थमाह- दव्वादिसुभेयपडिवत्ति द्रव्यादौ द्रव्यक्षेत्रकालभावेषु शुभेषु प्रशस्तेषु प्रतिमायाः प्रतिपत्तिर्भवति । कथमित्याह-

[भा.७९८] निरुवसग्गनिमित्तं उवसग्गं वंदिऊण आयरिए ।
आवस्सियं तु काउं निरवेक्खो वच्चए भयवं ॥

वृ- पूर्वसमस्तमपि स्वगच्छमागत्य यथार्हं क्षमयित्वा तदनन्तरमाचार्येण सकलस्वगच्छसमन्वितेन सकलसङ्घसमन्वितेन वा सह निरुपसर्गनिमित्तमुपसर्गाभावेन सकलमपि प्रतिमानुष्ठानं निर्वहत्विति्येतन्निमित्तं कायोत्सर्गं करोति । तद्यथा- निरुवसग्गवत्तिआए सद्धाए मेहाए इत्यादि कायोत्सर्गानन्तरं च सूत्रोक्तविधिना प्रतिमां प्रतिपद्य आचार्यान्वंदते, वन्दित्वा च आवश्यकीं कृत्वा सभाण्डमात्रोपकरणः सिंहइवगुफातो निरपेक्षं पूर्वापेक्षावरिहितो भगवान् व्रजति । आचार्याश्च सकलसङ्घसमन्विताः पृष्ठतोऽनुव्रजन्ति ते च तावद्गच्छन्ति यावद्ग्रामस्य नगरस्य वा आघाटस्ततो निरीक्षमाणास्तावदासते यावद् दृष्टिपथातीतो भवति ततः सर्वे विनिवर्तन्ते ।

सम्प्रति वक्ष्यमाणवक्तव्यता संसूचनाय द्वारगाथामाह-

[भा.७९९] परिचियकालामंतण खामण तव संजमे य संघयणा ।
भत्तोवहि निक्खेवे आवणो लाभगमने य ॥

वृ- परिचितश्रुतः सन् यावन्तं कालं परिकर्म करोति, तस्य तावत्कालो वक्तव्यः । तथा स्वगणामन्त्रणं

वक्तव्यम् । तथा क्षामण तपः संयमः संहननं तथा भक्तमलेपकृदादि उपधिर्यावत्संख्याको जघन्यत उत्कर्षतश्च तावत्संख्याको वक्तव्यः । तथा निक्षेपउपधेर्नकर्तव्योवसतेरन्यत्र गच्छतीति वाच्यम् । तथा मनसापि यत्प्रायश्चितमापन्नो भवति तत्तत्तद्दातव्यम् । तथा सचित्ताचित्तलाभो यथाकर्तव्यस्तथा भणनीयः । तथागमनंविहारस्तद्यस्यां पौरुष्यां कर्तव्यं । तथा कथयितव्यम् । एष द्वारगाथासंक्षेपार्थः ।

साम्प्रतमेनामेव व्याचिख्यासुः प्रथमतः परिचितकालद्वारमाह-

[भा.८००] परिचियसुओ उ मग्गसिरमादि जा जेठ कुणति परिकम्मं ।
एसो च्चिय सो कालो, पुनरेइ गणं उवग्गंमि ।।

वृ- परिचितमत्यन्तमभ्यस्तीकृतं श्रुतं येन स परिचितश्रुतः सन्मार्गशीर्षमासमादिं कृत्वा यावज्ज्येष्ठामासस्तावत्परिकर्म करोति । एष एव तावत्प्रमाणं एवं साधोः प्रतिमाप्रतिपित्सोर्जघन्यपदे उत्कर्षतः कालः परिकर्मणायाः । एतावत्प्रमाणात्कृष्टपरिकर्मणा कालानन्तरं च वक्ष्यमाणव्यवधानेन प्रतिमां प्रतिपित्सुस्तथापि अग्रस्यमुखस्य वर्षाकालसम्बन्धिनः समीपमुपाग्रमाषाढमास इत्यर्थः । तस्मिन् वर्षाकालयोग्यमुपधिं ग्रहीतुं पुनरभ्यागच्छति स्वगणमिति एवं तावन्मुकुलितमुक्तमिदानीमेतदेव सविशेषतरं विवृणोति-

[भा.८०१] जो जति मासे काहिति पडिमं सो तत्तिए जहन्नेन ।
कुणति मुनी परिकम्मं, उक्कोसं भावितो जाव ।।

वृ- योमुनिर्यातिमासान् प्रतिमांकरिष्यति, स तति मासान् जघन्येन परिकर्म करोति, तद्यथा-मासिकी प्रतिमां प्रतिपित्सुरेकं मासं द्वैमासिकी द्वौमासौ त्रैमासिकी त्रीन्मासान् एवं यावत् सप्तमासिकी सप्तमासान् एवं च मार्गशीर्षादारभ्य सप्तमासिक्या परिकर्मज्येष्टमासे समाप्तिमुपयाति, एतावानेव च जघन्यपदे उत्कृष्टकालः ततः परं प्रतिमानां मासैः परिमाणां संभवात् उत्कर्षमधिकृत्य पुनः परिकर्मणाकालो यावता कालेन परिपूर्णमागमोक्तेन प्रकारेण भावितो भवति, तावान् वेदितव्यः । तत्र जघन्यपदपरिकर्मणा-कालमधिकृत्य कासांचित्प्रतिमानां तस्मिन्नेव वर्षे प्रतिपत्तिं कासांचिद्वर्षान्तरेऽभिधित्सुराह—

[भा.८०२] तव्वरिसे कासिंची पडिवत्ती अन्नहिं उवरिमाणं ।
आइणपइणस्सउ इच्छाए भावना सेसे ।।

वृ- कासांचिदाद्यानां प्रतिमानां तद्वर्षे एव यस्मिन् वर्षे परिकर्मसमारब्धवान् तस्मिन्नेव वर्षे प्रतिपत्तिरुपरितनीनामन्यस्मिन् वर्षे । इयमत्र भावना-मासिक्या द्वैमासिक्यात्रैमासिक्याश्चतुर्मासिक्या वा यस्मिन्नेव वर्षे परिकर्म तस्मिन्नेव वर्षे प्रतिपत्तिः । कस्मादिति चेत् ? परिकर्मणाकालस्य प्रतिमा-कालस्य च आषाढमासपर्यन्तादर्वाक् लभ्यमानत्वात् पाञ्चमासिकीषाण्मासिकीसप्तमासिकी-नामन्यस्मिन् वर्षे परिकर्म अन्यस्मिन् वर्षे प्रतिपत्तिर्मार्गशीर्षमासादारभ्य परिकर्मकालस्य प्रतिमाकालस्य चाषाढमासपर्यन्तादर्वाग लभ्यमानत्वादिति । येन च या प्रतिमा पूर्वमाचीर्णा तस्याचीर्णप्रतिममस्य तां प्रतिमां प्रति परिकर्मणा इच्छया यदीच्छा भवति ततः करोति नोचेन्नेति । किमुक्तं भवति ? चिरकालकृततया यदि गताभ्यासो भवति ततः करोति परिकर्मणामन्यथा नेति शेषे येन या प्रतिमा पूर्वं नाचीर्णा तस्य तां प्रति नियमाद्भावना परिकर्मणा भवति साम्प्रतमामन्त्रणक्षामणतपः संयमद्वाराण्याह—

[भा.८०३] आमंतेऊण गणं स बालवुड्ढाउलं खमावेत्ता ।
उग्गतवभावियप्पा संजमपढमे व बितिए वा ।।

वृ- गणं गच्छं, सह बालाद्यैस्ते च ते वृद्धाश्च तैरकुलमामन्त्र्य समाहूय क्षमयति, यथा यदि कश्चित् प्रमादतो मया न सुष्ठु भवतां वर्तितं तदहं निःशल्यो निःकषायः क्षमयामीति, ये च पूर्वविरुद्धास्तानेवं स विशेषतः क्षमयति, । एवमुक्ते ये लघवस्ते आनन्दाश्रुप्रपातं कुर्वाणा भूमिगतशीर्षास्तं क्षमयन्ति । ये पुनः श्रुतपर्यायवृद्धाः तान् पादेषु पतित्वा स क्षमयति । उक्तं च–

जई किं चि पमाएणं न सुट्ठु भे वट्टियं मए पुव्विं ।
तं खामेमि अहं निस्सल्लो निक्कसाओय ।।

आनंदअंसुपायं कुणमाणा तेवि भूमीगयसीसा । तं खामेंति जहरिहं, जहरिहं खामिया तेन ।।

एवं क्षमयतस्तस्य के गुणा इति चेत् ? उच्यते-निःशल्यता विनयप्रतिपत्तिर्मार्गस्य प्रकाशनं, अपहृतभारस्येव भारवाहस्य लघुता, एकाकित्वप्रतिपत्त्यभ्युपगमः । क्वचिदप्यप्रतिबद्धता एते प्रतिमासु प्रतिपद्यमानासु क्षमयतो गुणाः । उक्तं चः-

खामेतस्स गुणा खलु निसल्लयविनयदीवनामग्गे ।
लाघवियंएगत्तं अप्पडिबद्धो य पडिमासु ।।

गतमामंत्रणद्वारं । स एवं च क्षामयित्वा भावितात्मा तपोभावनाभावितान्तःउग्रतपः करोति, गतं तपोद्वारं । स च तथा प्रतिमां प्रतिपन्नः संयमे प्रथमे वा सामायिकलक्षणे वर्तते, द्वितीये वा छेदोपस्थापने । तत्र प्रथमे संयमे मध्यमतीर्थकरतीर्थेषु विदेहतीर्थकरतीर्थेषु च द्वितीये भरतादि प्रथमपश्चिम-तीर्थकरतीर्थेषु, । एतच्च प्रतिपद्यमानकानधिकृत्मयोक्तं वेदितव्यम् । पूर्वप्रतिपन्नाः पुनः पञ्चानां संयमा-नामन्यतमस्मिन् संयमे भवेयुः । उक्तं च–

पढमे वा बिइए वा पडिवज्जइ संजमम्मि पडिमातो ।
पुव्वपडिवन्नतो पुन, अन्नयरे संजमे होज्जा ।।

गतं संयमद्वारमधुना भक्तद्वारमुपधिद्वारं चाह-

[भा.८०४]　पग्गहियमेवकडं भत्तजहन्नेण नवविहो उवही ।
पाउरणवज्जियस्स उ इयरस्स दसा वि जा बारा ।।

वृ- भक्तमुपलक्षणमेतत्, पानकं च अलेपकृत् कल्पतं । तथाप्रगृहीतं इहालेपकृद्भिक्षाया उपरितनानां तिसृणां भिक्षाणां मध्यमा मध्यमग्रहणे चाद्यंतयोरपि ग्रहणं । ततोऽयमर्थः-सप्तसु पिण्डैषणासु मध्ये उपरितनीनां चतसृणामन्यतमस्याः पिण्डैषणाया अभिग्रहः । आद्यानां तिसृणां पिण्डैषणानां प्रतिषेधः । एतच्च चूर्णिकारोपदेशात् विवृतं । तथा चाह चूर्णिकृत्–

[भा.८०५]　उपरिल्ला हिं चउहिं, पिंडेसणाहिं अन्नयरीए ।
अभिग्गहो सेसासु तिसु अग्गहो इति ।।

वृ- गतं भक्तद्वारमुपधिद्वारमाह-जघन्येनोपधिर्नवविधः पात्रपात्रबन्धपात्रस्थापना पात्रकेसरिका पटलरजस्त्राणगोच्छकमुखवस्त्रिकारजोहरणलक्षण एष च नवविधो जघन्यत उपधिर्वः प्रावरण-वर्जीकृतप्रावरणपरिहाराभिग्रहस्तस्य वेदितव्यः । इतरस्य कृतप्रावरणपरिग्रहस्य दशादिको विज्ञेयो यावत् द्वादशविधः । तत्रैकसौत्रिककल्पपरिग्रहे दशविधः सौत्रिककल्पद्वयपरिग्रहे एकादशविधः कल्पत्रयस्यापि परिग्रहे द्वादशविधः । गतमुपधिद्वारं सम्प्रति निक्षेपद्वारमाह-

[भा.८०६]　वसहीए निग्गमनं हिण्डतो सव्वभंडमादाय ।

नयनिक्खिवइ जलाइसु जत्थ से सूरो वयति अत्थं ।।

**वृ-** वसतेः सकाशाद्यदि निगमनं भवति ततो नयनैवावधारणेनैव भाण्डमुपकरणमात्मीयवसतौ क्षिपति किन्तु सर्व भाण्डमादाय हिण्डते । हिण्डमानश्च यत्रैव जलादिषु जले स्थले ग्रामे नगरे कानने वने वा तस्य सूर्यो व्रजत्यस्तं तत्रैव कायोत्सर्गेण अन्यथा वावतिष्ठते । न पुनः पदमात्रमुत्क्षिपति । गतंनिक्षेपद्वारमधुना आपन्नलाभगमनद्वाराण्याह—

**[भा.८०७]** मनसा वि अनुग्घाया सच्चित्ते चेव कुणति उवदेसं ।
अचित्तजोग्गगहणं भत्तं पंथो य तइयाए ।।

**वृ-** मनसा वि आस्तां वाचा कायेन चेत्यपि शब्दार्थः । यानि प्रायश्चित्तानि आपद्यते तानि सर्वाण्यपि तस्यानुद्घातानि गुरुणि भवन्ति । गतमापन्नद्वारम् । लाभद्वारमाह-सचित्ते चेत्यादि लाभो द्विविधः- सचित्तस्य अचत्तिस्य च तत्र सचित्तस्य प्रव्रजितुकामस्य मनुष्यस्य, अचित्तस्य भक्तपानादेः । तत्र यदा सचित्तस्य लाभ उपस्थितो ज्ञायते । यथा नूनमेष प्रव्रजिष्यति नतु स्थास्यति तदा तस्मिन् सचित्ते प्रव्रजितुमुपसम्पद्यमानतया संभाविते उपदेशमेव करोति । न तु तं प्रव्राजयति तस्य तामवस्थामुपगतस्य प्रव्रज्यादानानर्हत्वात् । एवकारो भिन्नक्रमः । स च यथास्थानं योजितः । अचित्तस्य पुनर्योग्यस्य भक्तस्य पानस्य वाग्रहणंकरोति । गतं लाभद्वारं । गमनद्वारमाह-भक्तं भिक्षाचार्या पन्थाः पथि विहारक्रमकरणाय गमनं, तृतीयस्यां पौरुष्यां नान्यदा तथा कल्पत्वात् । तदेवं भिक्षौ प्रतिमाप्रतिपत्तिविधिरुक्तः ।

सम्प्रति गणावच्छेद्यादिषु तामेवाह-

**[भा.८०८]** एमेव गणायरिए गणनिक्खिवणम्मि नवरनाणत्तं ।
पुव्वोवहिस्स निक्खिवणमपुव्वगहणं तु ।।

**वृ-** एवमेव अनेनैव भिक्षुगतेन प्रकारेण गणित्ति गणावच्छेदिनि, । आयरिए इति आचार्योपाध्याये वक्तव्यम् । किमुक्तं भवति । यथा भिक्षौ प्रतिमाप्रतिपत्तुं प्रतिपन्ने विधिरुक्तस्तथा गणावच्छेदिनि आचार्योपाध्याये च प्रतिपत्तव्यः । तथा च सूत्रकारोऽपि तत्सूत्रे अतिदिशत आह-एव गणावच्छेए एवं आयरिता वज्झाए एवं भिक्षुगतेन सूत्रप्रकारेण गणावच्छेद एवमेव आचार्याश्च उपाध्यायाश्च आचार्योपाध्यायं तस्मिन् सूत्रं वक्तव्यं । तद्यथा-

गणावच्छेए य वा गणातो अवक्कमएगल्लविहारपडिमं उवसंपज्जित्ताणं विहरेज्जा । सेइच्छेज्जा दोच्चंपि तमेव ठाणं उवसंपज्जित्ताणं विहरित्तए पुनो आलोएज्जा पुनो पडिक्कमेज्जा पुनो छेदस्स परिहारस्स वा उवट्ठावेज्जा । ततो आयरियातो वज्झाए य गणातो अवकम्म एगल्लविहारपडिमं उवसंपज्जित्ताणं विहरेज्जा' इत्यादि । व्याख्याप्यस्य सूत्रद्वयस्य तथैव । अथ किमविशेषेण भिक्षाविव प्रतिमाप्रतिपत्ति-विधिरनुसरणीयो यदि वास्ति कश्चिद्विशेषस्तत आह-गणनिक्खेवणम्मीत्यादि नवरं नानात्वं भेदो गणनिक्षेपणे । इयमत्र भावना-गणावच्छेदी गणावच्छेदित्वं मुक्त्वा प्रतिमां प्रतिपद्यते, आचार्योऽन्यं गणधरं स्थापयित्वेति शेषः । अथवा इदं भिक्षुगतविधेर्गणावच्छेद्याचार्ययोर्विधिः नानात्वं गणावच्छेदी आचार्यो वा पूर्वगृहीतं उपधिं निक्षिप्य अन्यमुपधिं प्रायोग्यमुत्पाद्य प्रतिमां प्रतिपद्यते ।

इत्युक्तः प्रतिमाप्रतिपत्तिविधिः । इदानीं समाप्तिविधिमाह-

**[भा.८०९]** तीरिय उब्भामणियोग दरिसणं साहु सन्नि वप्पाहे ।
दंडीय भोईय असती सावगसंघो व सक्कारं ।।

वृ- तीरितायां समाप्तायां प्रतिमायां उत्प्राबल्येन भ्रमन्त्युद्‌भ्रमाः भिक्षाचरास्तेषां नियोगो व्यापारो यत्र स उद्‌भ्रमकनियोगो ग्रामस्तत्रदर्शनमात्मनः प्रकटनं करोति । ततः साधुं संयतं संज्ञिनं वा सम्यग्दृष्टिं श्रावकं अप्पाहेत्ति संदेशयति । ततो दण्डिनो राज्ञो निवेदनं सत्कारं करोति, तदभावे भोजिकस्तस्याप्यभावे श्रावकवर्गस्तस्याप्यभावे सङ्घः साधुसाध्वीवर्गः । इयमत्र भावना- प्रतिमायां समाप्तायां यस्मिन् ग्रामे प्रत्यासन्ने बहवो भिक्षाचराः साधवश्च समागच्छन्ति । तत्रागत्यात्मानं दर्शयति । दर्शयंश्च स्वयं साधुं श्रावकं वा पश्यति, तस्य संदेशं कथयति यथा समापिता मया प्रतिमा, ततोऽहमागत इति तत्राचार्या राज्ञो निवेदयन्ति, यथा- अमुको महातपस्वी समाप्ततपः कर्माभूदिति स महता सत्कारेण गच्छे प्रवेशनीय इति । ततः स राजा तस्य सत्कारं कारयितव्यस्तदभावेऽधिकृतस्य ग्रामस्य नगरस्य वा नायकस्तदभावे समृद्धः श्रावकवर्ग स्तदभावे साधुसाध्वी प्रभृतिकः सङ्घो यथाशक्ति सत्कारं करोति, । सत्कारो मानस्तस्योपरि चन्द्रोदय धारणं नान्दी तूर्यास्फालनं सुगन्धवासप्रक्षेपणमित्यादि । एवं रूपेण सत्कारेण गच्छं प्रवेशयेत् । सत्कारेण प्रवेशनायामिमे गुणाः

**[भा.८१०]** उद्‌भावनापवयणे, सद्धाजननं तहेव बहुमानो ।
उड्डावणा कुतित्थे जीयं तह तित्थवड्डीय ।

वृ- प्रवेशसत्कारेणप्रवचनस्य उद्‌भ्राजना प्राबल्येन प्रकाशनं भवति, । तथा अन्येषा बहूनां साधूनां श्रद्धाजननं यथा वयमप्येवं कुर्मो येन महीती शासनस्य प्रभावना भवति, । तथा श्रावकश्राविकाणा-मन्येषां च बहुमानमुपजायते शासनस्योपरि यथा- अहो महाप्रतापि पारमेश्वरं शासनं, यत्रेद्दशा महातपस्विन इतिः । तथा कुतीर्थे जातावेक्कवचनं । कुतीर्थानामपभ्राजना हीलना तत्र ईद्दशां महासत्वानां तपस्विनामभावात् । तथा जीतमेतत्कल्प एष समाप्तप्रतिमानुष्ठानः सत्करणीय इति, तथा तीर्थवृद्धिश्च । एवं हि प्रवचनस्यातिशयमुदीक्षमाणा बहवः संसाराद्विरज्यन्ते विरक्ताश्च परित्यक्तसङ्गाः प्रव्रज्यां प्रतिपद्यन्ते, । ततो भवति तीर्थप्रवृद्धिरिति; । तदेवं परिकर्मणाभिधानं प्रतिमाप्रतिपत्तिः प्रवेशसत्कारश्च भणितः । साम्प्रतमधिकृतसूत्रं यत्र योगमर्हति तद्विवक्षुरिदमाह-

**[भा.८११]** एएण सुत न गयं सुत्तनिवातो इमो उ अव्वत्ते ।
उच्चारिय सरिसं पुन, परूवीयं पुव्वभणियंपि ।।

वृ- यदेतदनन्तरं परिकर्मणादिकमुक्तं, नैतेन सूत्रगतं व्याख्यातं, जातावेक्कवचनस्य भावात् । नैतेन त्रीणि सूत्राणि व्याख्यातानि, सूत्राणामन्यविषयत्वात् । तथा चाह- 'सुत्तनिवातो इमो उ अव्वत्ते' तु शब्दः पुनरर्थे स च पुनरर्थं प्रकाशयन् हेत्वर्थमपि प्रकाशयति, यतोऽयमधिकृतः सूत्रनिपातो-ऽव्यक्तोऽव्यक्तशब्दविषयः, । अव्यक्तो नाम श्रुतेन वयसा वा प्राप्तोऽपरिकर्मितश्च पूर्वभणितं च समस्तं व्यक्तविषयमतोऽव्यक्तविषयत्वं च प्रागुक्तमिति नैतेन प्रागुक्तेन सूत्रत्रयं गतमिति, । अत्राह- यदेतत् प्राग्व्याख्यातं न तेन यदि सूत्रत्रयं गतं तर्हि तदेतत् कुत आगतं सूत्रादयत्र भवति । सूत्रस्यान्य-विषयत्वात् । अन्यस्माच्चेत्तर्हि न वक्तव्यमसम्बद्धत्वादत आह- उच्चारिय सरिसमित्यादि परिकर्मणा-भिधानं यत्र पूर्वमाचारदशासु भिक्षुप्रतिमागतमुक्तं । यथा घरस उणो सीह इत्यादि तथा परिचियकाला-मन्तणेत्यादि परिकर्मणाभिधानं यत्र पूर्वमाचारदशासु भिक्षुप्रतिमागतमुक्तं । यथा घरसउणी सीह इत्यादि तथा परिचियकालामन्तणेत्यादि च प्रागभणितमपि प्ररूपितमुच्चारितस्य सद्दशमनुगतमिति कृत्वा किमुक्तं भवति ? एगल्लविहारपडिमं उवसंपज्जित्ताणं विहरित्तए इत्युक्तमेतच्च सूत्रत्रयं व्यक्ते अव्यक्ते च समानं

ततो यद्यपि सकलसूत्रोपनिपातोऽव्यक्तविषयस्तदपि यदेतत्सूत्रखण्डं तत् व्यक्तेऽपि समानमिति व्यक्त विषयं परिकर्मणादिमुक्तमित्यदोषः,। यदुक्तमयमधिकृतसूत्रोपनिपातो अव्यक्तविषय इति । तत्राव्यक्ते यथा प्रतिमाप्रतिपत्तिसंभवस्तथोपपादयति-

[भा.८१२] आगमने सक्कारं, कोयं दट्ठूण जावसंवेगो ।
आपुच्छणपडिसेहण देवी संगामतो नीति ।।

वृ- समाप्तिप्रतिमानुष्ठानस्य गच्छंप्रत्यागमने राजादिभिः क्रियमाणं सत्कारं कोऽपि भिक्षुर्गणावच्छेदी आचार्यो वा दृष्टो जातसंवेगः सन् स्वाचार्याणां पुरत आपृच्छनं करोति । यथा-भगवन्नहमप्येकाकि-विहारप्रतिमां प्रतिपद्ये इति ते ततस्ते आचार्या विशिष्टश्रुतविदो जानन्ति भूतं भाविनं चेति तस्या-योग्यतामुदीक्षमाणाः प्रतिषेधनम कृतवन्तः । यथा-त्वमद्यापि श्रुतेन वयसा वा प्राप्तत्वात् । न च परिकर्मणा तद्योग्या त्वयाकृतेति स एवं प्रतिषिध्यमानोऽपि यदा न तिष्ठति तदा सूरिभिर्वक्तव्यो यदि न स्थास्यति तर्हि विनंक्ष्यसि यथा सा देवी । का सा देवीति चेदत आह- देवी संगामतो ।

[भा.८१३] संगामे निव पडिमे देवी काऊण जुज्झति रणंमि ।
बितिय बलेण नरवति नाउं गहिया धरिसियाय ।।

वृ- सङ्ग्रामे देवी नृपप्रतिमां राज्ञ आकारं कृत्वा युध्यते । सा च तथा रणे सङ्ग्रामे युध्यमाना द्वितीयबले प्रतिपक्षबले यो नरपतिस्तेन कथमपि ज्ञात्वा अरे महेला युध्यते सन्नाहापेक्षं कृत्वा गृहीतच एडालैर्धर्षयित्वा मारिता च । एषो अक्षरार्थः । भावार्थः कथानकादवसेयस्तच्चेदम्- एगेन रना एगस्स रन्नो नगरं वेढियं । रया स अंतेउरी नगरब्भंतरे अग्गमहिसी भणति जुज्झामि वारिज्जंती वि रन्ना न ठाति । ततो सा संनहित्ता खंधावारेण समं निग्गंतुं परबलेन समं जुज्झइ महिलत्ति काउं गहिया चंडालेहिं धरिसावित्ता मारिया ।

[भा.८१४] दूरं ता पडिमातो गच्छ विहारे वि सो न निम्मातो ।
निग्गंतुं आसन्ना नियत्ते लहुतो गुरू दूरे ।।

वृ- दूरे तावत्प्रतिमाः । किमुक्तं भवति तद्विषयमिदं सूत्रत्रिकं तस्य प्रतिमाः प्रतिपत्तव्यास्तावत् दूरं विशिष्टश्रुतवयोभ्यामप्राप्ततयातत्समाचारीपरिज्ञानस्य परिकर्मणायाश्चाभावात् गच्छविहारे गच्छसमाचार्यामपि सोऽधिकृतसूत्रत्रयविषये निर्मातो न परिनिष्ठामुपगतः स आचार्येण वार्यते । स च वार्यमाणोऽपि यदा स्वगच्छान्निर्गत्य यदि कथमपि बुद्धिपरावर्तनेनासन्नाद्विनिवर्तते । ततस्तस्य प्रायश्चित्तं लघुको मासः दूरं दूराद्विनिवर्तते गुरुको मासः । अथ न निवर्तते तत आह-

[भा.८१५] सच्छंदो सो गच्छा निग्गंतूणं ठितो उ सुणघरे ।
सुतत्थ सुणहियओ संभरइ इमेसि मेगागी ।।

वृ- स्वमात्मीयच्छन्दोऽभिप्रायो यस्य स स्वच्छन्दः सन् गच्छाद्विनिर्गत्य शून्यगृहे उपलक्षणमेतत् श्मशाने वा वृक्षमूले वा देवकुलसमीपे वा कायोत्सर्गेण स्थितः । स च सूत्रमर्थं वा न किमपि जानाति यच्चिन्तयति । ततः सूत्रार्थशून्यहृदय एकाकी सन् एषां वक्ष्यमाणानामाचार्यादीनां स्मरति तानेवाह-

[भा.८१६] आयरियवसभसंघाड-एय कंदप्पमासियं लहुयं ।
एगानियत्तसुणघरे अत्थमिए पत्थरे गुरुगा ।।

वृ- आचार्यो गच्छाधिपतिस्तं वा यदि स्मरति यदि वा वृषभमथवा संघाटिकं, कंदप्पत्ति अत्र विभक्तिलोपो मत्वर्थीयलोपश्च प्राकृतत्वात् । यैर्यैर्वा साधुभिः समं गच्छे वसन् कन्दर्पं हासंचसूर्यादिरूपं

कृतवान् कन्दर्पिकान् स्मरति । तदा प्रायश्चित्ते मासिकं लघुकं तथा एगानियत्त एकाकी सन् शून्यगृहे उपलक्षणमेतत् श्मशानादौ वा दिवसे बिभेति तदा चत्वारो लघुमासाः, यदि पुनरस्तमिते सूर्ये भयं गृह्णन् प्रस्तरान् पाषाणान् च्छुहयति तदा चतुर्गुरुकाः ।

**[भा. ८१७]** पत्थरच्छुहेण रत्ता गमने गुरुलहुगदिवसतो होंति ।
आयसमुत्थाएए देवयकरणं तु वोच्छामि ॥

**वृ-** यदि रात्रौ मार्जारादि श्वापदादिभ्यो बिभ्यन् प्रस्तारान् शून्यगृहस्यान्तः छुहइत्ति प्रवेशयति यदि वा स्तेनादिभयेन रात्रौ गच्छमागच्छति तदा प्रायश्चित्तं चत्वारो गुरुकाः, यदि पुनर्दिवसे एव शून्यगृहादावतिष्ठमानो भयात् प्रस्तरान् प्रवेशयति । गच्छं वा भयमजीर्यन् समायाति तदा चत्वारो लघुमासाः, एते आत्मसमुत्था दोषा उक्ताः । इदानीं यद्देवता करोति तद्देवताकरणं वक्ष्यामि । साम्प्रतमेगाणियसुण्णघरे इत्यादि यदुक्तं तत् भिक्षुगणावच्छेद्याचार्यभेदेषु प्रत्येकं सविशेषतरं भावयति-

**[भा. ८१८]** पत्थरमनसंकप्पे, मग्गणदिठेव गहिय खित्तेय ।
पडिय परिताविय मए, पच्छित्तं होइ तिण्हंपि ॥

**[भा. ८१९]** मासो लहुतो गुरुतो, चउरो लहुगा य चउगुरुगा य ।
छम्मासा लहुगुरुगा, च्छेओमूलं तह दुगं च ॥

**वृ-** प्रस्तराणां ग्रहणाय मनः सङ्कल्पे मार्गणे तथा ग्रहणबुद्ध्या प्रस्तरे दृष्टे तथा गृहीते तथा क्षिप्ते यस्योपरि प्रक्षिप्तः प्रस्तरः तस्योपरिपतनेन चरमपरितापिते अनागाढं परितापिते तथा मृते च त्रयाणामपि भिक्षुगणावच्छेद्याचार्याणां प्रायश्चित्तं वक्ष्यमाणं यथा अग्रिमं भवति तदेवाह-मासो इत्यादि. मासो लघुको गुरुकाश्चत्वारो लघुकाश्चत्वारो गुरुकाः षण्मासा लघवः षण्मासा गुरुकाः । च्छेदो मूलं तथा द्विकमनवस्थाप्य पाराञ्चितरूपमिति गाथा द्वयसंक्षेपार्थः । भावार्थस्त्वयम्-यदि भिक्षुर्भयवशात्प्रस्तर-विषयं मनः संकल्पं करोति गृह्णामि प्रस्तरमिति, तदा तस्य प्रायश्चित्तं लघुमासः प्रस्तरस्य मार्गणे गुरुमासः प्रस्तरोग्राह्यो ऽयमिति बुद्ध्यावलोकिते चत्वारो लघुमासा गृहीते प्रस्तरे चत्वारो गुरुकाः क्षिप्ते मार्जारादिश्वापदादीनामुपरि प्रस्तरे षण्मासा लघवः, यस्योपरि क्षिप्तस्तस्योपरिपतिते तस्मिन्नपरितापिते षण्मासा गुरवः, गाढं परितापिते च्छेदः, मृते मूलं, तदेवं भिक्षोर्लघुमासादारब्धं मूलं निष्ठितं, गणावच्छेदिनः प्रस्तरमनः संकल्पे प्रायश्चित्तं गुरुको मासः, प्रस्तरमार्गणे चत्वारो लघुमासाः, प्रस्तरे ग्राह्यबुद्धया दृष्टे चत्वारो गुरुकाः, प्रस्तरे गृहीते षण्मासालघवः क्षिप्ते षण्मासा गुरवः, प्रस्तरे घातस्योपरिपतिते च्छेदः । घात्ये गाढं परितापिते मूलं, मृतेऽनवस्थाप्यं, तदेवं गणावच्छेदिनो गुरुमासादारभ्यमनवस्थाप्ये निष्ठितं, आचार्यस्य प्रस्तर मनः संकल्पे चत्वारो लघुमासाः०, प्रस्तरमार्गणे चत्वारो गुरुकाः प्रस्तरे ग्राह्यवबुद्ध्याद्दृष्टे षण्मासा लघवः, प्रस्तरे गृहीते गुरवः षण्मासाः, क्षिप्ते छेदः । सम्प्रति यदुक्तं देवयं करणं तु वोच्छामि इति तत् अन्यच्च विवक्षुर्द्वारगाथामाह-

**[भा. ८२०]** बहुपुत्तपुरिसमेहे उदयग्गी जइ सप्पे च उ लहुगा ।
अच्छण अवलोगनियट्टकंटग गेण्हण दिट्ठे य भावे य ॥

**वृ-** देवताया बहुपुत्रविकुर्वाणानन्तरं चोदिते तथा पुरुषमेधे पुरुषयज्ञे तथा उदके उदकप्रवाहे अग्नौ प्रदीपनकरूपे जड्डे हस्तिनि सर्पे च समागच्छति पलायमानादौ चत्वारो लघुका मासाः, । तथा देवताया विकुर्वित संयती रूपायाः पृष्ठतो लग्नायाः प्रतीक्षस्व यावत् कण्टकं पादलग्नमपनयामीत्येवं ब्रुवंत्याः

पादोत्क्षेपणे च तथा ६ॐ सागारिके मृगपर्दारूपं प्रतिसेवेइति परिणते भावे च शब्दात्प्रतिसेवाकरणे च यथायोगं प्रायश्चित्तमिति द्वारगाथासंक्षेपार्थः ।

साम्प्रतमेनामेव गाथां विवरीषुः प्रथमतो बहुपुत्रद्वारं विवृणोति-

[भा.८२१] बहुपुत्तत्थी आगमदोसु बलेसुं तु थालिविज्झवणा ।
अन्नोन्नं पडिचोयण वच्चगणं माच्छलेपंता ।।

वृ- बहुपुत्रा स्त्री देवतारूपं तस्या आगमो द्वयोरुपलयोरुपरितया स्थाली निवेशिता सा पतिता । जातमग्नेर्विध्यापनं ततः परस्परं प्रतिचोदना तदनन्तरं तया उक्तं च-व्रजगणं गच्छ मा प्रान्तदेवता त्वां च्छलयिष्यतीति । एष गाथाक्षरार्थो भावार्थ स्त्वयम्- सम्मद्दिट्ठी देवया इत्थीरूवं बहु य पुत्ते चेडरूवे विउव्वित्ता पडिमागयस्स साहुस्स समीवमल्लीणा चेडरूवाणि रोवमाणाणि भणंति 'भत्तं देहि' त्ति । सा भणति- 'खिप्पं रंधेमि जाव ताव मा रोयह' । ताहे सा दोन्नि पाहणे जमले ठवेउं तेसिं मज्झे अगिंग पज्ञालित्ता तेसिं उवरिप्पिहडं पाणियस्स भरित्ता मुक्कं, तं पिहडं तइय पत्थरेण विणा पडियं सो अग्गी विज्झवितो ततो पुनो वि अगिंग पज्ञालिऊण पिहडं पाणिय भरियं मुक्कं तहं व पडितं अग्गी विज्झवितो । एवं तइयंपि वारं विज्झवितो । ततो पडिमागतो साहू भणति- एत्तीएणं तिरामोगं नप्पं पत्तियाणि चेडरूवाणि निप्फाएसि । एवं भणमाणस्स तस्स पच्छित्तं चउलहुयं, । सा भणति- तुमं कहमेत्तिएण सुएण अप्पायोग्गो पडिमं पडिवन्नो सिग्घं जाहि गच्छं माते पंत देवया छलेहिति गतं बहुपुत्रद्वारम् ।। इदानीं पुरुषमेधद्वारमाह-

[भा.८२२] उवाइयं समिद्धं महापसुं देमो सज्जमज्झाए ।
एत्थेव ता निरिक्खह दिट्ठे वाडुं समणो वा ।।

वृ- स कदाचिदव्यक्त आर्यासमीपे कायोत्सर्गे स्थितस्तत्र च बहवो मनुष्या आर्यावन्दनार्थमागतास्ते च तस्य प्रतिमा स्थितस्य साधोस्समीपदेशे स्थिता ब्रुवते । यथा यदौपयाचितकमार्याया भट्टारिकायाः समीपे याचितं यथा यद्यमुकं प्रयोजनमस्माकं सेत्स्यति । ततो महापशुं प्रयच्छाम इति तद्दिनानीं समृद्धं निष्पन्नमित्यर्थः ततः सद्य इदानीं पशुं दद्यः महापशुर्नामपुरुषः । ततो गवेषयत अत्रैव कश्चित् मनुष्यं गता गवेषणाय मनुष्याः, दृष्टः स प्रतिमा प्रतिपन्नो दृष्ट्वा च कथितं मूलपुरुषाय यथेव श्रमणो दीयतामार्यायै इति एवमुक्ते यदि भयेन वाडुं करोति, देशीवचनमेतत् नशनं करोति नश्यतीत्यर्थः । यदि वा श्रमणोऽहमिति ब्रूते तदा प्रायश्चितं चतुर्लघु ।

[भा.८२३] उदगभएणा पलायइ पवइ रुक्खं दुरुहए सहसा ।
एमेव सेसएसु वि भएसु पडिकारमो कुणति ।।

वृ- सोऽव्यक्तः प्रतिमा प्रतिपन्नः कायोत्सर्गेण स्थित उदकप्रवाहे नद्यादिगते समागच्छति यद्युदकभयेन पलायते, यदि वा प्लवते तरति, अथवा सहसा वृक्षमारोहति, तदा तस्य-प्रायश्चितं चतुर्लघु, । एवमेव अनेनैव प्रकारेण शेषेष्वप्यग्न्यादि समुत्थेषु भयेषु समुत्थितेषु यदि प्रतिकारं करोति, तदा चतुर्लघु; । इयमत्र भावना - अग्नौ प्रसर्पति सर्पे वा समागच्छति यदि पलायते अन्यं वा प्रतीकारं करोति, तदा प्रायश्चितं प्रत्येकं चतुर्लघु, । एतानि च पुरुषमेधोदकाग्निहस्तिसर्परूपाणि देवताकृतान्यपि संभाव्यन्ते स्वाभाविकानि चात्र यदि देवताकृतानि स्वाभाविकानि सर्वेष्वप्येतेषु प्रत्येकं चतुर्लघुः । साम्प्रतमस्थाण आलोयणोत्यादि व्याचिख्यासुराह-

[भा.८२४] जेहुज्ज पडिच्छाहिए अहं तुब्भहिं समंयज्ञामि ।

इति सकलुणमालत्तो मुज्झति सेहो अथिरभावे ।।

वृ- अथवासा देवता संयतीवेषं कृत्वा कायोत्सर्गे समाप्ते विहारक्रमं प्रति प्रस्थितमव्यक्तं साधुप्रतिमां प्रतिपन्नं ब्रूयात्- 'अहो ज्येष्ठार्य अहमपि युष्माभिः समं व्रजामि, तत्प्रतीक्षस्व तावद्यावत् पादलग्नं कण्टकमपनयामि इति । एवं तया देवतया कृतसंयतीवेषया सकरुणामालसः स वराकः शैक्षः शैक्षत्वादेवास्थिरभावो मुह्यति मोहमुपगच्छति मुह्यं च यदि प्रतीक्षणादि करोति तथा प्रायश्चित्तं तदेवाह-

**[भा.८२५]** अच्छति अवलोएति य लहुगा पुन कंटउमेलगत्ति ।
गुरुगा नियत्तमाणे तह कंटगमग्गणे चेव ।।

वृ- सत्र यदि कण्टको मे लग्न इति वचः श्रुत्वा, अच्छतित्ति प्रतीक्षते तदा प्रायश्चित्तं लघुकाश्चत्वारो लघु मासाः । अथापि तत्संमुखमवलोकते तदापि चतुर्लघु यदिपुनरासन्नान्निवर्तते तदाचतुर्लघु एतच्च आसन्नातो लहुतो इति वक्ष्यमाणग्रन्थादवसितम् । अथ दूरात्तदा तस्मिन् दूरान्निवर्तमाने चत्वारो गुरुका गुरुमासास्तथा कण्टकमार्गणे चेयेत्ति यदि कण्टकमपनेष्यामीति तत्पादलग्नं कण्टकं मृगयते, तदापि प्रायश्चित्तं चतुर्गुरु ।

**[भा.८२६]** कंटकपायग्गहणे छल्लहु छग्गुरुग चलणमुक्खेवे ।
दिट्ठे मिच्छगुरुगा परिणयकरणेय सत्तट्ठा ।।

वृ- कण्टकं पादगतं यदि गृह्णाति तदा प्रायश्चित्तं षट्लघवो लघुमासाः अथ तस्याः संयत्याः पादं गृह्णाति कण्टकोद्धरणाय तदापि षट् लघु, यदि पुनश्चरणं पादमुत्क्षिपति उत्पाटयति कण्टकोद्धरणाय तथा षट् गुरु, पादे उत्पाटिते सति यदिसागारिकं पश्यति तदा तस्मिन्नपि दृष्टे षट् गुरु, सागारिकदर्शनानन्तरं यदि भावः परिणतो भवति यदाहं प्रतिसेवे इति तदाच्छेदः करणे प्रति सेवाकरणे मूलं एतत्प्रायश्चित्तविधानं भिक्षोरुक्तम् । गणावच्छेद्याचार्ययोः पुनरिदमाह-सत्तठत्ति, अत्र पूरण प्रत्ययांतस्य लोपः प्राकृतत्वात् । ततोऽयमर्थः गणावच्छेदिनः प्रायश्चित्तविधानं द्वितीयाच्चतुर्लघुकादारब्धं सप्तममनवस्थाप्यं प्रायश्चित्तं यावदवसेयमाचार्यस्य प्रथमाच्चतुर्गुरुकादारब्धमष्टमं पाराञ्चितं प्रायश्चित यावदेतदेवाह-

**[भा.८२७]** लहुया य दोसु दोसु य गुरुगा छम्मास लहु गुरुच्छेदो ।
भिक्खु गणायरियाणं मूल अणवट्ठ पारंची ।।

वृ- भिक्षुगणावच्छेद्याचार्याणां यथाक्रमं प्रायश्चित्तविधानमूलमनवस्थाप्यं पाराञ्चितं च, यावद्यथा भिक्षोर्द्वयोः प्रतीक्षणेऽवलोकते च चत्वारो मासा लघवः द्वयोर्निवर्तने कण्टकमार्गणे चत्वारो गुरुकाः, छम्मासलहुगुरुत्ति अत्र दोसु इति प्रत्येकमभिसम्बध्यते । द्वयोः कण्टकग्रहणे पादग्रहणे च षण्मासा लघवः द्वयोः पादोत्क्षेपे सागारिकदर्शने च षट् गुरु, प्रतिसेवाभिप्राये च्छेदः प्रतिसेवाकरणे मूलं, गणावच्छेदिनो यथाऽनवस्थाप्यं पर्यन्तं भवति तथा वक्तव्यं तत्रैवं गणावच्छेदिनः प्रतीक्षणे चत्वारो लघुकाः अवलोकने चत्वारो गुरवः निवर्तने चत्वारो गुरवः, कण्टकमार्गणे षट् लघु, कण्टकग्रहणे षट् लघु, संयतीपादग्रहणे षट् गुरु, पादोत्पाटने च्छेदः, सागारिकदर्शने च्छेदः । प्रतिसेवाभिप्राये मूलं, प्रतिसेवाकरणेऽनवस्थाप्यं, आचार्यस्य यथा पाराञ्चितमन्ते भवति तथा वक्तव्यम् । तत्रैवमाचार्यस्य प्रतीक्षणे चतुर्गुरु अवलोकने चतुर्गुरुनिवर्तने कण्टकमार्गणे च षट् लघु, कण्टकग्रहणे पादग्रहणे च षट् गुरु, पादोत्पाटने च्छेदः, सागारिकदर्शने मूलं, प्रतिसेवाभिप्रायेऽनवस्थाप्यं, प्रतिसेवाकरणे पाराञ्चितमिति ।

सम्प्रति यदुक्तं 'गुरुगानिवत्तमाणे' इति तत्र विशेषमाह-

[भा.८२८] आसन्नातो लहुया दूरनियत्तस्स गुरुतरो दंडो ।
चोयगसंगामदुगं निवड्ढखिसत अनुग्घाया ।।

वृ- संयत्या आसन्नात्प्रदेशान्निवृत्ते लघुको दण्डः चत्वारो लघुमासा दण्ड इत्यर्थः । दूरान्निवृत्तस्य गुरुतरश्चत्वारो गुरुमासाः, एवमाचार्येण प्ररूपिते चोदकः प्रश्नयति । तत्र चोदकाचार्यनिदर्शनं सङ्ग्रामद्विकं निदर्शनं, तं च भग्नप्रतिज्ञं निवृत्तं प्रत्यागतं सन्तं ये खिंसंतिति हीलयन्ति तेषामुद्घाता-श्चत्वारो गुरुका मासाः प्रायश्चित्तमित्युत्तरार्धं संक्षेपार्थः ।

इदानीमेतदेवोत्तरार्धं विवरीषुः प्रथम-तश्चोदकवचनं भावयति ।

[भा.८२९] दिट्ठं लोए आलोयभंगि वणिएय अवनिचनिवत्तो ।
अवराहे णाणत्तं न रोयए केन यं तुज्झं ।।

वृ- प्रागुक्ताचार्य प्ररूपणानन्तरं परः प्रश्नयति । ननु संयत्याः प्रत्यासन्नात्प्रदेशात्प्रतिनिवृत्तस्य गुरुतरेण दण्डेन भवितव्यम् । दूरात्प्रतिनिवृत्तस्य लघुतरेण, न चैतदनुपपन्नं यतो लोकेऽपि दृष्टं तथा लोकस्य राज्ञो नगरस्य परो राजा वेष्टयितुकामः समागच्छति । तं च समागच्छन्तं श्रुत्वा नगरस्वामी भटान् प्रेषयति । यथा यूयं तत्र गत्वा युध्यध्वमिति । तत्रैको भटः परबल मिति प्रभूतमालोक्य दर्शनमात्र एव भग्नः प्रत्यागतोऽन्यो युध्ध्वा चिरकालं संजातव्रणो भग्नः समागतः । अपरः परबलेन सहायुध्वा सञ्जातव्रण एव भग्नः प्रतिनिवृत्तः । तत्रैषां भटानां मध्ये यः आलोकभङ्गी दर्शनमात्रतो भग्नः प्रतिनिवृत्तस्तस्य बहुतरोऽपराधः । यः पुनः सञ्जातव्रणो यश्चाव्रणित एतौ द्वावपि भग्नौ सन्तौ प्रतिनिवृत्तावित्यपराधिनौ केवलमालोकभङ्ग्यपेक्षयाऽल्पतरापराधौ, दूरात्प्रतिनिवृत्तत्वाद्देवं लोके दूरासन्नभेदेनापराधे 'नानात्वमिदमुपलब्धम्' । तत एव दृष्टान्तबलेन यन्मयोक्तं संयत्याः प्रत्यासन्नात्प्रदेशात्प्रतिनिवृत्तस्य भूयान् दण्डो दूरात् प्रतिनिवृत्तस्याल्पतर इति ततः केन कारणेन युष्मभ्यं न रोचते । सूरिराह-

[भा.८३०] अक्खयदेह नियत्तं बहुदुक्खभयेण जं समाणेह ।
एयमहं न रोयति को ते विसेसो भवे एत्थ ।।

वृ- यद्बहु दुःखभयेन परबलेन सह युध्यमानस्य प्रभूतदुःखं मरणपर्यवसानं भविष्यतीति भयेनाक्षतदेहः सन् निवृत्तः प्रतिनिवृत्तोऽक्षतदेहनिवृत्तस्तं समानय एतन्मह्यं न रोचते विषमत्वात्तथाहि सर्वथा अत्राक्षतचारित्रः प्रतिनिवर्तते किन्तु क्षतचारित्रस्ततोऽप्यत्र स उपन्यसनीयो योऽधिकृत-दार्ष्टान्तिकेन सहसमानतामवलम्बते, न चासौ तथेति पर आह-यदेष दृष्टान्तस्तव न भासते ततः कोऽत्रास्मिन् विचारे तव विशेषो भवेत् विशिष्टो दृष्टान्तः स्यात्सूरिराह-

[भा.८३१] एसेव य दिट्ठंतो पुरोहे जत्थ वारियं रन्ना ।
माणीह तत्थ निंयंते दूरासन्ने य नाणत्ता ।।

वृ- एष एव भवदुपन्यस्तो दृष्टान्तः पुररोधे सति द्रष्टव्यो यत्र पुररोधे राज्ञा वारितं तथा मा कोऽपि पुरान्निर्यासीदिति तत्रैवं निवारिते तत्र निर्गच्छति । दूरासन्नाच्च प्रतिनिवृत्ते यथा नानात्वमपराधविषयं तदिहापि योजनीयम् । तद्यथा-परबलेन नगररोधे कृते राज्ञा पटहेन घोषितं यथा यो नगरान्निर्यास्यति स मयाऽनिग्राह्य इति । ततः कोऽपि निर्गत्य आसन्नात्प्रतिनिवृत्तोऽपरो दूरात्तत्र यथैतयोरासन्नात्प्रति-निवृत्तस्याल्पतरो राज्ञा दण्डो दूरात्प्रतिनिवृत्तस्य बहुतर एवं यो दूरात्संयत्याः प्रतिनिवृत्तस्तस्य गरीयान् भावदोष इति चतुर्गुरुकमासन्नात्प्रतिनिवृत्तस्य त्वल्पीयान् भावदोष इति चतुर्लघु ।

सम्प्रति 'पुनो आलोएज्ञा' इत्यादिसूत्रं व्याख्यानयति-

**[भा.८३२]** संसम्मि चरित्तस्या लोयणया पुनो पडिक्कमणं ।
छेदं परिहारं वा जं आवन्नो तं पावे ।।

**वृ-** यद्यपि प्रतिमाप्रतिपन्नस्य चारित्रविराधनासीत् तथापि न चारित्रं सर्वथापगतं किन्तु शेषोऽवतिष्ठते ।व्यवहारनयमतेन देशभङ्गेन सर्वभङ्गाभावात् ततः शेषेचारित्रस्य सति पुनरलोचना पुनः प्रतिक्रमणं नतु पुनः शब्दो द्वितीयवारापेक्षः । तथा च लोके वक्तारः कृतमिदमेकवारमिदानीं पुनः क्रियते इति । अत्र तु प्रथममेवालोचनं प्रथममेव च प्रतिक्रमणं ततः कथं पुनः शब्दोपपत्तिः ? उच्यते-यत्रैव स्थाने सोऽकृत्यं कृतवान् ।तत्रैव स इत्थमचिन्तयत् आलोचयामि प्रतिक्रमामि च तावदहमेतस्या कृत्यस्य पश्चाद्गुरुसमक्षं भूय आलोचयिष्यामि च एवं च चिन्तयित्वा तथैव आकार्षीत् ततो घटते पुनः शब्दोपादानमिति यदि वा यदेव तदानींहा दुष्ठुकृतं दुष्ठुकारितमित्यादि चिन्तनं तदेव च प्रतिक्रमणमिति भवति ।तदपेक्षया पुनः शब्दोपपत्तिः यदपि च छेदं परिहारं वा प्रायश्चित्तमापन्नस्तत्प्राप्नोति प्रतिपद्यते । सम्प्रति यदुक्तं । नियट्टखिंसंतगुणधाया इति तद्व्याख्यानयति-

**[भा.८३३]** एवं सुभपरिणामं पुनोवि गच्छंति तं पडिनियत्तं ।
जे हीलइ खिंसइ वा पावति गुरुए चउम्मासे ।।

**वृ-** एवं पुनरालोचना प्रतिपत्यादिप्रकारेण शुभपरिणामं शोभनाध्यवसायं पुनरपि गच्छे प्रतिनिवृत्तं सन्तं यो हीलयति खिंसयति वा, तत्र यदसूयया निन्दनं तत् हीलनं यथा समाप्तिं नीताऽनेन प्रतिमासांप्रतमागतो वर्तते ततः क्रियतामस्य पूजेति यत्पुनः प्रकटं निन्दनं सा खिंसा यथाधिक् तव भ्रष्टप्रतिज्ञस्येत्यादि स प्राप्नोति प्रायश्चित्तं गुरुकान् अनुद्घातान् चतुरो मासान्० ।

**मू. (२६)** *भिक्खू वा गणाओ अवक्कम्म पासत्थविहारं विहरेज्ञा संयइच्छेज्ञा दोच्चंपि तमेवगणं उवसंपज्जित्ताणं विहरित्तए अत्थिया इत्थ से पुणो आलोएज्ञा, पुनो पडिक्कमेज्ञा, पुणोछेद परिहारस्स उवट्ठाइज्ञा।*

**वृ-** भिक्खूय गणातो अवक्कम्मेत्यादि भिक्षुरुक्तशब्दार्थः वा वाक्यभेदे गणादपक्रम्य निःसृत्य पार्श्वस्थविहारं पार्श्वस्थचर्यां प्रतिपद्येत स भूयोऽपि भावपरावृत्त्या इच्छेद्द्वितीयमपि वारं गणमुपसम्पद्य विहर्तुं अत्थिया इत्थेत्ति अस्ति चात्र कश्चित् यः शेषे चारित्रस्य सति पुनरालोचयेत्, पुनः प्रतिक्रामेत् पुनश्छेदं परिहारं वा यः प्रायश्चित्तमापन्नस्तस्य च्छेदस्य परिहारस्य वा प्रतिपत्तयेऽभ्युत्तिष्ठेत् । यः पुनः सर्वथापगते चारित्रे पुनरालोचयेत् पुनः प्रतिक्रामेत् स मूलमापन्न इति मूलस्य प्रतिपत्तयेऽभ्युतिष्ठेत् । इदं सूत्रं पार्श्वस्थविषय एवमुक्तमेवं यथाच्छंदसि कुशीले अवसन्ने संसक्ते च वक्तव्यम् । तद्यथा-

**मू. (२७)** *भिक्खू य गणातो अवक्कम्म अहाच्छंदविहारं विहरेज्ञा । सो इच्छेज्ञा दोच्चंपि पुनो पडिक्कमेज्ञा पुनो छेयपरिहारस्सु उवट्ठाइज्ञा तहेवगणं उवसंपज्जित्ताणं विहरित्तए अत्थिया इच्छाइंसे पुनो आलोएज्ञा ।।*

**मू. (२८)** *एवं कुसील विहारं विहरेज्जा।*

**मू. (२९)** *एवं ओसन्न विहारंविहरेज्जा-*

**मू. (३०)** *एवं संसत्त विहारं विहरेज्जा-*

**वृ-** अथामीषां सूत्राणां पूर्वसूत्रत्रयेण सह कः सम्बन्ध इत्यत आह-

[भा.८३४] वृत्ता वितिणगमना इयाणिमवितिन्निमिग्गमे सुत्ता ।
पडिसिद्धिमवत्तस्स इमेसु सव्वेसु पडिसिद्धं ।।

वृ- पूर्वमुक्ता अभिशय्यादिषु वितीर्णगमनाः वितीर्णमनुज्ञातं गमनं येषां ते तथा इदानीं पुनः सूत्राणि अवितीर्णेऽननुज्ञाते निर्गमे यदिवा प्राक् एकाकिविहार प्रतिमाविषयेण सूत्रत्रयेणाव्यक्तस्य श्रुतेन वयसा परिकर्मणवा वा प्राप्तस्य निर्गमणं प्रतिषिद्धमेतेषु पुनः पञ्चसु सूत्रेषु सर्वेषां व्यक्तानामव्यक्तानां च निर्गमनं प्रतिषिद्धमित्येष सम्बन्धः । अधुना अमूनि पञ्चापि सूत्राणि यद्विषयाणि तानि क्रमेण विशेष-प्रतिपादनार्थमुपन्यस्यति-

[भा.८३५] पासत्थ अहाच्छंदो कुसील उसन्नमेव संसत्तो ।
एएसिं नाणत्तं वोच्छामि अहानुपुव्वीए ।।

वृ- ज्ञानादीनां पार्श्वे तिष्ठतीति पार्श्वस्थः, पाशस्थ इति संस्कारस्तत्रैवं व्युत्पत्तिः मिथ्यात्वादयो बन्धहेतवः पाशास्तेषु तिष्ठतीति पाशस्थः । अहाच्छंदो इति यथाच्छन्दोऽभिप्राय इच्छा तथैवागमनिरपेक्षं यो वर्तते स यथाच्छन्दः । कुत्सितं शीलमस्येति कुशीलः समाचार्यासेवने, अवसीदति स्मेत्यवसन्नः । तथा संसक्त इव संसक्तः पार्श्वस्थादिकं तपस्विनां चासाद्य सन्निहितदोषगुण इत्यर्थः । इदं तु व्युत्पत्तिमात्रं स्थानाशून्यार्थमुक्तं । यावता भाष्यकृदेव स्वयमग्रे व्युत्पत्तिममीषां शब्दानां करिष्यति । एएसिमित्यादि एतेषां पार्श्वस्थादीनामनुष्ठानभेदतो यन्नानात्वं तदहं यथानुपूर्व्या यथोक्तक्रमेण वक्ष्यामि ।

अथ कथं पार्श्वस्थादयो जायन्ते तत आह-

[भा.८३६] गच्छंमि केइ पुरिसा, सउणी जह पंजरंतरनिरुद्धा ।
सारणपंजरचइया पासत्थगयादि विहरंति ।।

वृ- यथा शकुनिः शकुनिकापञ्जरान्तरनिरुद्धा महता कष्टेन वर्तते, तथा केचित् गुरुकर्माणः पुरुषागच्छे स्मारणचोदनादि महत्कष्टमभिमन्यमानाः कष्टेन वर्तन्ते, । ततः स्मारणलक्षणपञ्जरत्याजिताः सन्तः पार्श्वस्थगतादयः आदिशब्दाद्यथाच्छन्दो गतादिपरिग्रहः विहरन्त्यवतिष्ठन्ते विहृत्य च केचिद्भूयः स्वगुणमुपसम्पद्यते । तेषां चोपसम्पद्यमानानां प्रायश्चित्तदेयमतस्तद्विवक्षुरिदमाह-

[भा.८३७] तेसिं पायच्छित्तं वोच्छं ओहेय पयविभागे य ।
ठप्पं तु पयविभागे ओहेण इमं तु वोच्छामि ।।

वृ- तेषां पार्श्वस्थादीनां स्वगुणमुपसम्पद्यमानानां प्रायश्चित्तं वक्ष्ये कथमित्याह- ओघेन सामान्येन पदविभागेन च कालादिविशेषेण, गाथायां सप्तमी तृतीयार्थे । तत्र यत्पदविभागेन प्रायश्चित्तं वक्तव्यं तत् स्थाप्यं स्थापनीयं पश्चाद्वक्ष्यते इत्यर्थः । ओघेन सामान्येन कालादिविशेषरहितत्वेनेति भावः । पुनरिदमनन्तरं वक्ष्यमाणतया प्रत्यक्षीभूतमिव वक्ष्यामि प्रतिज्ञातमेव निर्वाहयति-

[भा.८३८] ऊसववज्जकयाई, लहुओ- लहुया अभिक्खगहणंमि ।
ऊसविकयाइ लहुआ गुरुगा य अभिक्खगहणंमि ।।

वृ- उत्सववर्जमुत्सवाभावे यदि कदाचित् शय्यातरपिण्डादिकं गृहीतवान् । ततस्तस्य प्रायश्चित्तं लघुको मासः, तथाभीक्ष्णं गृहीतवान् तथा चत्वारो लघुमासाः, । अथोत्सवे कदाचित् शय्यातर-पिण्डमग्रहीत् ततश्चत्वारो लघुका मासाः । अथाभीक्ष्णमुत्सवेषु गृहीतवान् ततश्चत्वारो गुरुका इहानुत्स-वादुत्सवे गुरुकशोधिप्रदानकरणमग्रे स्वयमेव वक्ष्यतीति नाभिधीयते ।। अत्र कालविशेषो न कोऽपि

निर्दिष्ट इतीदमोघेन प्रायश्चित्ताभिधानमिदानीं कालं सामान्यत आह-

[भा.८३९] चउछम्मासे वरिसे कयाइ लहुगुरुय तहेव छग्गुरुगा ।
एएसु चेवभिक्खं चउ गुरु तह छग्गुरुचछेदो ॥

वृ- चतुरो मासान् यावत् कदाचित् अपि गृहीतवान् यदि शय्यातरपिण्डं ततश्चत्वारो लघुकाः षण्मासान् कदाचिद्ग्रहणे चत्वारो गुरुकाः, वर्षं यावत् कदाचिदभिगृहीते षण्मासा गुरवः, एतेष्वेव चतुर्मासाः षण्मासवर्षेषु अभीक्ष्णग्रहणे यथाक्रमं चतुर्गुरु, षट् गुरुचछेदश्च, किमुक्तं भवति । चतुरो मासान् यावदभीक्ष्णग्रहणे चत्वारो गुरुका मासाः, षण्मासानभीक्ष्याग्रहणे षण्मासाः गुरवः, वर्षं यावदभीक्ष्णग्रहणे चछेदः, । अत्रोत्सवानुत्सवविशेषरहिततया सामान्येनाभिधानं तथा चाह-

[भा.८४०] एसं उ होंति ओहे, एत्तो पयविभागतो पुनो वोच्छं, ।
चउत्थमासे वरिसे, उस्सववज्जं जइ कयाइ ॥

[भा.८४१] गेण्हइ लहुओ लहुया गुरुया इत्तो अभिक्खगहणंमि ।
चउरो लहुया गुरुया छग्गुरुगा [illegible] ॥

वृ- एषामनन्तरोक्तः प्रायश्चित्तविशेषः ओघेन सामान्येन भवति द्रष्टव्यः । अत ऊर्ध्वं पुनर्विभागतः पदविभागेन प्रायश्चित्तं वक्ष्ये । यथा प्रतिज्ञातं करोति, चतुरो मासान् यदि कदाचित् उत्सववर्ज-मगृहीतशय्यातरपिण्डं ततो मासलघु, षण्मासानुत्सववर्जमभिगृहीते चत्वारो लघुकाः, वर्षं यावदुत्सववर्जं कदाचिदभिग्रहणे चत्वारो गुरुकाः, । इतर ऊर्ध्वमेतेष्वेव चतुः षड्वर्षेऽभीक्ष्णग्रहणे वक्ष्ये चत्वारो लघुका गुरुकाः षट्गुरुका उत्सववर्जा यथाक्रमं ज्ञातव्याः, । किमुक्तं भवति ? चतुरो मासानुत्सववर्जशय्यातर-पिण्डमभीक्ष्णमगृहीत् ततः प्रायश्चित्तं चत्वारो मासाः लघुकाः, षण्मासानुत्सववर्जमभीक्ष्णग्रहणे चत्वारो गुरुकाः, वर्षं यावदुत्सववर्जमभीक्ष्णग्रहणे षट् गुरुकाः, उत्सववर्जे गतमिदानीमुत्सवे प्रतिपादयति-

[भा.८४२] चउरो लहुया गुरुगा छम्मासा उस्सवंमि उ कयाई ।
एवं अभिक्खगहणे छग्गुरु चउछग्गुरुच्छेदो ॥

वृ- चतुरो मासान् यदि कदाचिदुत्सवे गृहीतवान् ततश्चत्वारो मासा लघवः, षण्मासान् कदाचिदुत्सवे ग्रहणे चत्वारो गुरुकाः, वर्षं यावत्कदाचिद्गृहणतः षण्मासा गुरवः एतत्पुनर्वक्ष्यमाणमभीक्ष्णग्रहणे षट् गुरु इत्यादि, चतुरो मासानुत्सवेष्वभीक्ष्णग्रहणे षण्मासा गुरवः, षण्मासानुत्सवे ष्वभीक्ष्णग्रहणे चतुर्गुरुकश्छेदः वर्षं यावदभीक्ष्णमुत्सवेषु ग्रहणे षट्गुरुकच्छेदः अथ कस्मादुत्सवेषु कदाचिदभीक्ष्णं वा ग्रहणे अधिकतरप्रायश्चित्तदानमत आह-

[भा.८४३] उस्सववज्जे न गेण्हइ निब्बंधा उस्सवंमि गेण्हत्ति ।
अज्झोयरगादीया इति अहिगा उसवे सोही ॥

वृ- एष साधुरुत्सववर्जे उत्सवरहिते शेषे काले भिक्षां न गृह्णाति । उत्सवे पुनर्विपुलं भक्तपानं प्रासुकमुपलभ्य कथमपि निर्बन्धात् गाढादरकरणाद्गृह्णाति । ततोऽस्मै पर्याप्तं दातव्यमिति किञ्चित् न अध्यवपूरकादयो दोषाः सम्भवन्ति । आदिशब्दात् मिश्रकादिदोषपरिग्रहः इति अस्माद्धेतोरुत्सवे अधिकाबहुतरा शोधिः प्रायश्चित्तमिति ।

[भा.८४४] एवं उवट्ठियस्स पडितप्पिय साहूणो पदं हसति ।

21 18

चोइए रागदोसे दिठंतो पन्नगतिलेहिं ।।

**वृ-** एवमुपदर्शितेन प्रकारेण शय्यातरपिण्डादि प्रतिसेव्य पुनरकारणतयो पस्थितस्य ग्लानादिप्रयोजनेषु प्रतर्पिता भक्तपानप्रदानादिना सोपष्टम्भीकृताः साधवो येन प्रसर्पितसाधुस्तस्य पदं प्रतिसेवालक्षणं हसति एवमेवमुच्यते । अयमत्र सम्प्रदायो यदि ग ञगत्रिंदिवं दशरात्रिंदिवं यावद्भिन्नमास इत्यापन्नो भवति, ततः स एवमेवमुच्यते, तस्य साधुप्रतर्पणेनैव शुद्धिभावात्, अथ मासादिपक्रमापन्न-स्तदन्तिमं एवं हसति यद्यथा यदि द्वौ मासावापन्नस्तत एको मासो मुच्यते, एको दीयते, अथ त्रीन् मासान् तर्हि एको मुच्यते द्वौ मासौ दीयते इत्यादि । अत्र परो रागद्वेषौ चोदयति, यथा यूयं रागद्वेषवन्तः । तथाहि येन साधूनां प्रतर्पितं तस्यपदमनुरागतोहासयथ, येन पुनर्न प्रतितर्पितं तस्य द्वेषतः सकलमपि प्रायश्चित्तं परिपूर्णंप्रयच्छथ । सूरिराह- दिठंतो पन्नगतिलेहिं न वयं रागद्वेषवन्तस्तथा चात्र दृष्टान्त उपमा पन्नकतिलैः तथाहि पन्नकतिला नाम दुर्गन्धितिलाः ते स्थानद्वयेऽपि स्थापिताः । तत्रैके निम्बपुष्पैर्वासिताः, अपरं स्वाभाविका एव स्थितः । तत्र ये निम्बपुष्पैर्वासितास्तेषां दुरभिगन्धो बहुविधेनापक्रमेणापनेतुं शक्यते । इतरेषां स्तोकेन एवमिहापि ये स्वरूपतः पार्श्वस्था अपरं च साधुसामाचारीप्रद्वेषतो ग्लानादिप्रयोजनेषु साधूनामप्रतर्पिणोऽवर्णभाषिणश्च ते महता प्रायश्चित्तेन शुद्धिमासादयन्ति । ये तु पार्श्वस्था अपि कर्मलघुतया साधुसमाचारनुगताः साधून् ग्लानादिप्रयोजनेषु प्रतर्पयन्ति श्लाघाकारिणश्च ते स्तोकापराधेन एवमेव शुद्ध्यन्ति, । महापराधिनोऽन्तिमपदहासतः स्तोकेन प्रायश्चित्तेनेति पन्नकतिलाश्चोपलक्षणं तेन सर्वाश्यसर्वाशिरोगाभ्यां धौताधौतशारदपटाभ्यां पन्नकतिलेन चोपमाद्रष्टव्याः । तद्यथा सर्वमश्नातीत्येवं शीलः सर्वाशी बहुभक्षको ऽसर्वाशी अल्पभोजी, तत्र सर्वाशी रोगी कर्कशया क्रियया शुद्धिमासादयति । असर्वाशीस्तोकया क्रियया यथा वा द्वौ पटौ शारदौ तत्रैको वाते वाति प्रतिदिवसं तेन वातेन धून्यते अपरो न एवं तयोर्द्वयोरपि कालक्रमेण मलिनीभूतयोर्विधूतपटः स्तोकेनोपक्रमेण शुद्धिमासादयत्यविधूतपटो बहूनोपक्रमेण एवं यः पार्श्वस्थः साधूनामवर्णभाषी स महता प्रायश्चित्तेन शुद्धिं लभते । इति तस्मै परिपूर्णं प्रायश्चित्तं दीयते । इतरस्य तु साधूनां प्रतर्पणेन वर्णभाषणेन च शुद्धिः सम्भवत्येतदर्थं हास इति साम्प्रतमेतदेव विवरीषुः परः प्रश्नं भावयति-

**[भा.८४५]** जो तुज्झं पडितप्पइ तस्संगं ठाणगं तु हासेह ।
वड्ढेह अप्पडितप्पे इइ रागद्दोसिया तुब्भे ।।

**वृ-** योऽस्माकं प्रतितर्पयति उपकारं करोति, तस्य एकं स्थानकमन्तिमलक्षणं प्रागुक्तस्वरूपं ह्रासयथ, यः पुनर्न प्रतितर्पयति तस्मिन्नप्रतितर्पे तदेकस्थानकमन्तिमलक्षणं वर्धयथ । पूर्णं परिपूर्णं तस्मै प्रायश्चित्तं दत्थ इत्यर्थः । इत्येवममुना प्रकारेण यूयं रागद्वेषिका रागद्वेषवन्तः । सम्प्रति यदुक्तं पन्नकतिलैर्-दृष्टान्त इति तद्भावयति-

**[भा.८४६]** इहरहवि तावचोयग कटुयं तेल्लं तु पन्नगतिलाणं ।
किं पुन निम्बतिलेहिं भावियाणं भवेखज्जं ।।

**वृ-** इतरथा पि निम्बकुसुमादि वासनामन्तरेणापि तावत् हे चोदकपन्नकतिलानां दुर्गंधितिलानां तैलं कटुकमेव । तुरेवकारार्थो भिन्नक्रमश्च । न खाद्यं भवतीति भावः । किं पुनस्तेषां पन्नकतिलानां निंबतिलैः तिला इव सूक्ष्मत्वात् निंबतिलाः कुसुमानि स्वस्यतिलानि स्वतिलास्तैर्निम्बकुसुमैरित्यर्थः भावितानां वासितानां तैलं खाद्यं भवेन् नैव भवेदित्यर्थः । एष दृष्टान्तोऽयमुपनयः-

[भा.८४७] एवं सो पासत्थो अवण्णवादी पुणो य साहूणं ।
तस्स य महती सोही बहुदोसोसोत्थही चेव ।।

वृ- एवं सोऽधिकृतः साधुरेकं तावत्पार्श्वस्थसमाचारकारी पुनः साधूनामवर्णवादी साधुसमाचारप्रद्वेषात् । ततस्तस्य तथारूपस्य महती शुद्धिः प्रायश्चित्तं यत्सोऽत्र प्रायश्चित्तदानविधौ परिचिंत्यमानो बहुदोष एव भवति वर्तते । तदेवमप्रशस्ततिलैरुपनयः कृतः । सम्प्रति प्रशस्ततिलैस्तमभिधित्सुराह-

[भा.८४८] जह पुन ते चेव तिला उसिणोदग धोयखीरउव्वक्का ।
तेसिं जं तेल्लं तत्तं घयमङ्घं विसेसेइ ।।

वृ- यथा पुनस्त एव पन्नकतिला उष्णोदकेन पूर्वं धौतास्तदनन्तरं क्षीरेण तृप्तेन उद्वक्का क्षीरमध्ये प्रक्षिप्य कियत्कालं धृत्वा ततो निष्काशिताः तेषांय तैलं घृतमाडमपि विशेषयति । ततोऽप्यधिकतरं भवतीति भावः । एष दृष्टान्तोऽयमुपनयः-

[भा.८४९] कारण संविग्गाणं आहारादीहिं तप्पितो जोउ ।
नीयावत्तणुतप्पी तप्पक्खिय वन्नवादी य ।।

वृ- यः कारणेष्वशिवावमौदर्यादिपु संविग्नानां सुसंयतानामाहारादिभक्तपानौषधादिभिस्तर्पितःप्रतर्पणं कृतवान् । तथा यः संविग्नानां नीचैर्वृत्तिर्वर्तनं यस्य स तथा किमुक्तं भवति स तान् वन्दते न पुनर्वन्दापयति । तथा अकल्पं किमपि प्रतिसेव्य अनु पश्चात् हा दुष्टुकृतं हा दुष्ठु कारितमित्यादि रूपेण तपति सन्तापमनुभवतीत्येवं शीलोऽनुतापी तथा तेषां संविग्नानां पक्षस्तत्पक्षस्तत्र भवस्तत्पाक्षिकः संविग्नपाक्षिक इत्यर्थस्तथा वर्णवादी श्लाघाकारी सुविहितानां ततः किमित्याह-

[भा.८५०] पावस्स उवचियस्स वि पडिसाडणमोकरेति सो एवं ।
सव्वासि रोगि उवमा सरए य पडे अविधुयंमि ।।

वृ- एवममुना प्रकारेण संविग्नतर्पणादिनाद्यापि पार्श्वस्थेन सता उपचयं नीतं तथापि तस्योपचितस्यापि पापस्य परिशाटनभावं करोति । मो इति पादपूरणे तेन तस्यैकस्य पदस्य ह्रासः उक्तापन्नकतिलदृष्टान्तभावना; एवमवर्णवादिनः पार्श्वस्थस्य परिपूर्णप्रायश्चित्तदाने सर्वाशिरोगिणोपमया च शारदिके पटे वाते धूते सा च दृष्टान्तभावना भावयितव्या सह्रासं प्रतिपन्नस्तदृष्टान्त भावनामाह-

[भा.८५१] पन्नो यच्छंतो किमिणोय अनुपावयं वच्छितो य ।
उड्ढोय कणसेवा य पुत्तेणं बुभुलइयं मुणेऊणं ।।

वृ- तदेवमितरः पार्श्वस्थः साधूनामप्रतर्पयिता न च पापं कृत्वाऽनुतपति । यदपि च पापं कुरुते तदपि निर्दयः सन्, साधूनां वावर्णभाषी, ततः सोऽन्यथा न शुद्ध्यतीति तस्मै परिपूर्णं प्रायश्चित्तं दीयते । द्वितीयस्तु साधुप्रतर्पणादिना बहुपापं क्षपयितवान् न च निर्दयः सन्नकरोत्पापमिति तस्य पदह्रासेन भावयति-

[भा.८५२] थोवं भिन्नमासादिगा ओयराइंदियाइ जा पंच ।
सेसे उपचे ह्रसती परितप्पियएयरे सयलं ।।

वृ- यदि नामस्तोकं भिन्नमासादिकादारभ्य यावत्पञ्चरात्रिं दिवानि एतानि समुदितान्येकतरं वा प्रायश्चित्तमापन्नस्तदा स एवमेव मुच्यते । तस्य साधुप्रतर्पणादिना शुद्धीभूतत्वात् यदि पुनर्भिन्नमासस्योपरि प्रायश्चित्तमापन्नस्ततस्तस्मिन् शेषे प्रायश्चित्ते समापतिते सति पदमन्तिमं प्रतर्पितं साधौ ह्रसति । तस्य

चान्तिमपदद्वासस्य भावना प्रागेव कृता । इतरस्मिन् साधूनामप्रतर्पिण्यवर्णवादिनि च सकलं परिपूर्णं प्रायश्चित्तं तस्यान्यथा शुद्ध्यभावात् । ततो न वयं रागद्वेषवन्तः । सम्प्रति पार्श्वस्थान् व्याख्यानयति-

**[भा.८५३]** दुविहो खलु पासत्थो देसे सव्वे य होइ नायव्वो ।
सव्वे तिन्नि विकप्पा देसे सेज्जायर कुलादी ॥

**वृ-** द्विविधो द्विप्रकारः, खलु निश्चितं पार्श्वस्थः । तद्यथा-देशे देशतः, सर्वस्मिन् सर्वतः पार्श्वस्थः; शब्दः संस्कारमाश्रित्य त्रयो विकल्पास्त्रयः प्रकारास्तद्यथा-पार्श्वस्थः प्रास्वस्थः पाशस्थश्च । एते स्वयमेवाग्रे वक्ष्यन्ते । देशे देशतः पार्श्वस्थः, शय्यातरकुलादि प्रतिसेवमानः, । 'तिनि विगप्पा' इत्युक्तं तत्र प्रथमं प्रकारमाह-

**[भा.८५४]** दंसणनाणचरित्ते तवे य अत्ताहितोपवयणे य ।
तेसिं पासविहारी पासत्थं तं वियाणेहि ॥

**वृ-** दर्शनं सम्यक्त्वं, ज्ञानमाभिनिबोधिकादि, चारित्रमाश्रवनिरोधः, एतेषां समाहारो द्वन्द्वस्तस्मिन् । तथा तपसि बाह्याभ्यन्तररूपे द्वादशप्रकारे प्रवचने च द्वादशाङ्गलक्षणे यस्यात्मा हतोप्रयुक्तो न सम्यग् योगवानित्यर्थः । यदि वा अहितस्तेषां विराधकत्वात् । किन्तु तेषां ज्ञानादीनां पार्श्वे तटे विहरतीत्येवं शीलो विहारी । न तेषु ज्ञानादिष्वन्तर्गत इत्यर्थः । स पार्श्वस्थ इति विजानीहि, ज्ञानादीनां पार्श्वे तिष्ठतीति व्युत्पत्तेः । इह यद्यपि यो दुष्करमाश्रवं निरोधं करोति स परमार्थतस्तपोयुक्त एवेति वचनतश्चारित्रग्रहणेन तपो, ज्ञानग्रहणेन च प्रवचनं गतं, तथापि तयो रुपादानं मोक्षं प्रति प्रधानांगता ख्यापनार्थं; भवति च तपो मोक्षं प्रति प्रधानमङ्ग पूर्वसञ्चितकर्मक्षपणत्वात् प्रवचनं च विधेयाविधेयोपदेशदायित्वादिति उक्त एकः प्रकारः ॥ सम्प्रति द्वितीयप्रकारमाह-

**[भा.८५५]** दंसणनाणचरित्ते सत्तो अच्छति तहिं न उज्जमति ।
एएणं पासत्थो, एसो अन्नो वि पज्जाओ ॥

**वृ-** ज्ञानदर्शनचारित्रे यथोक्तरूपे यः स्वस्थोऽवतिष्ठते न पुनस्तत्र ज्ञानादौ यथा उद्यच्छति उद्यमं करोति । एतेन कारणेनैष पार्श्वस्थ उच्यते । प्रकर्षेणासमन्तात् ज्ञानादिषु निरुद्यमतया स्वस्थः प्रार्श्वस्थ इति व्युत्पत्तेः । एष खलु अन्यो द्वितीयोऽपि पर्यायः । अपिशब्दः खल्वर्थे भिन्नक्रमश्च । स च यथास्थानं योजितः । उक्तो द्वितीयः प्रकारः ॥ सम्प्रति तृतीयमाह-

**[भा.८५६]** पासोत्ति बंधणंति य एगट्ठं बंधहेयवो पासा ।
पासत्थिओ पासत्थो अन्नो वि य एस पज्जाओ ॥

**वृ-** पाश इति वा बन्धनमिति वा एकार्थम् । इह ये मिथ्यात्वादयो बन्धहेतवस्ते पाशाइव पाशास्तेषु स्थितः पाशस्थः । पाशेषु तिष्ठतीति पाशस्थ इति व्युत्पत्तेः । एषोऽन्यः खलु तृतीयः पर्यायः । उक्तास्त्रयोऽपि प्रकारास्तद्भणनाच्च भणितः सर्वतः पार्श्वस्थः ॥ इदानीं देशतः पार्श्वस्थं व्याचिख्यासुना यदुक्तं 'सेज्जायर कुलादी' इति तद्व्याख्यानयति-

**[भा.८५७]** सेज्जायर कुल निस्सिय ठवण कुल पलोयणा अभिहडे य ।
पुव्विं पच्छा संथव निइ अग्गपिंड भोइ पासत्थो ॥

**वृ-** यः शय्यातरपिण्डं भुङ्क्ते यानि च तस्य निश्रितान्याश्रितानि कुलानि तानि सततमुपजीवति । किमुक्तं भवति ? यानि कुलानि तस्याग्रे सम्यक्त्वं प्रतिपन्नानि येषु ग्रामेषु नगरेषु वा वसन्ति, तेषु गत्वा

तेभ्यः आहारादिकमुत्पादयति । 'ठवण' त्ति स्थापनाकुलानि निर्विशति । अथवा यानि लोके गर्हितानि कुलानि तानि स्थापितान्युच्यन्ते । तेषामपरिभोग्यतया जनैः स्थापितत्वात् तेभ्यः आहारादिकमुत्पादयति । पलोयण त्ति सङ्खड्याः सततमाहारलोल्यतः प्रलोकना येन क्रियते शरीरस्य वा शुभवर्णादि निरीक्षणार्थं प्रलोकना । तथा अभ्याहृतानि आचीर्णाननाचीर्णांश्चाहारान् यो गृह्णाति । यस्तु पूर्वसंसवस्तान् मातापित्रादीन् पश्चात्संस्तुतान् श्वश्रूप्रभृतीन् उपजीवति, यदि वा पूर्वपरिचितानप्याहारलोल्यतः पूर्वसंस्तुतान् पश्चात्संस्तुतान् वा करोति । तथा नित्यपिण्डमग्र पिण्डं च यो भुङ्क्ते स देशतः पार्श्वस्थः ।। साम्प्रतमभ्याहृतपिण्डं नियतपिण्डं च व्याख्यानयति-

[भा.८५८] आइणमनाइण्णं निसीह भिहडं च नो निसीहं च ।
साभावियं च नियमं निकायणा निमंतणे लहुओ ।।

वृ- अभ्याहृतं द्विविधमाचीर्णमनाचीर्णं च । तत्राचीर्णमुपयोगसंभवे गृहत्रयमध्ये, ततः परमनाचीर्णमुपयोगासम्भावात् । अनाचीर्णमपि द्विविधा-निशीथाभ्याहृतं नोनिसीथाभ्याहृतं च । तत्र यत्साधोरविदितमभ्याहृतं च तन्निशीथाभ्याहृतमितरत् साधोर्विदितमानीतं नो निशीथाभ्याहृतं । एतानि कारणे निष्कारणे वा कथंचित् यथाभिगृह्णानो देशतः पार्श्वस्थः, नियतं त्रिविधम् । तद्यथा-स्वाभाविकं, निकाचितं, निमन्त्रितं च । तत्र यन्नसंयतार्थमेव किन्तु य एव श्रमणोऽन्यो वा प्रथममागच्छति तस्मै यद्यं पिण्डादि दीयते, तत्स्वाभाविकम् । यत्पुनर्भूतिकर्मादिकरणतश्चतुर्मासादिकं कालं यावत् प्रतिदिवसं निकाचित् निबद्धीकृतं गृह्यते तन्निकाचितम् । यत्तु दायकेन निमन्त्रणापुरस्सरं प्रतिदिवसं नियतं दीयते तन्निमन्त्रितम् । एतान्यपि गृह्णानो देशतः पार्श्वस्थः, स्वाभाविकनियते निकाचने निमन्त्रणे च सर्वत्र प्रायश्चित्तं मासलघुः ।। अथ पार्श्वस्थो भूत्वा कथं संविग्नविहारमुपपद्यते येनोच्यते-'स इच्छेज्जा दोच्चं तमेव ठाणं उवसंपज्जित्ताणं विहरित्तए' इत्यादि, तत आह-

[भा.८५९] संविग्ग जनो जड्डो जह सुहितो सारणाए चइओउ ।
वच्चइ संभरमाणो तं चेव गणं पुनो एति ।।

वृ- इह संविग्नो जनो जड्ड इव हस्तीव वेदितव्यः । तथाहि-यथा हस्ती वनादानीतो घृतगुडादिभिः पुष्टिं नीतः स्मृत्वा वनं जगाम । तद्य वनमनावृष्टिभावतोऽवारीभूतं । ततस्तत्र दुःखमनुभवत् घृतगुडादिकं स्मरति, स्मृत्वा च भूयो नगरमायाति । एवं सोऽप्यधिकृतः संविग्नो जनः संविग्नानां मध्ये भगवत्प्रसादत उत्कृष्टैराहारैः पोषमुपागतस्ततः सुखितः सन् स्मारणामसहमानस्तया त्याजितः पार्श्वस्थविहारमुपपद्यते । तत्र च स्थितः पार्श्वस्थ इति कृत्वा श्राद्धादिभिर्नाद्रियते केवलं लोकत आक्रोशमवाप्नोति । यथा यं धिक् शिथिलो जात इति । ततः संविग्नानां पूजां सत्कारं च संस्मरन् तमेवात्मीयं गणं पुनरेति समागच्छति । समागतश्च सन्नालोचनाद्यर्थमभ्युत्तिष्ठति । तत इदमाह-

[भा.८६०] अत्थिय सेसावसेसं, जइ नत्थी मूलमत्थि तवच्छेवा; ।
थोवं जइ आवन्नो पडितप्पए साहुणा सुद्धो ।।

वृ- पूर्वमिदं परिभावनीयं से तस्य आलोचनाद्यर्थमभ्युद्यतस्य सावशेषं चारित्रमस्ति । चशब्दात् किं वा नास्ति । ततो मूलं दातव्यम् । मूलं नाम सर्वपर्यायोच्छेदः । अथास्ति चारित्रं ततस्तस्मै तपो वा दीयतां च्छेदो वा । तत्र यदि स्तोकमापन्नो भवति स्तोकं नाम रात्रिंदिवपञ्चकादारभ्य भिन्नमासं यावत्साधूनां च स प्रतितर्पितः । ततः स साधुतर्पणादेव शुद्ध इति प्रसादेन मुच्यते । मासाद्यापत्तौ

त्वन्तिमपदह्रास इति गतं पार्श्वस्थसूत्रमिदानीं यथाच्छन्दसूत्रं वक्तव्यम् । तच्च प्रागेवोपदर्शितम् ।

इदानीं यथाच्छन्दस्वरूपं वर्णयति-

**[भा.८६१]** उस्सुत्तमायरंतो उस्सूत्तं चेव पन्नविमाणो ।
एसो उ अहाछंदो इच्छाच्छंदो य एगठा ॥

**वृ-** सूत्रादुर्ध्वं उत्तीर्णं परिभ्रष्टमित्यर्थः । उत्सूत्रं तदाचरन् प्रतिसेवमानस्तदेव यः परेभ्यः प्रज्ञापयन् वर्तते एष यथाच्छन्दोऽभिधीयते । सम्प्रति च्छन्दः शब्दार्थं पर्यायेणव्याचष्टे । इच्छाच्छन्द इत्येकार्थः । किमुक्तं भवति ? च्छन्दो नाम इच्छेति व्युत्पत्तिश्च यथाच्छन्दशब्दस्य प्रागेवोपदर्शिता उत्सूत्रमित्युक्तमत उत्सूत्रं व्याख्यानयति-

**[भा.८६२]** उस्सुत्तमनुवदिठं सच्छंदविगप्पियं अननुवादी ।
परतत्तिय पवित्तेतिंतणे य एसो अहाच्छंदो ॥

**वृ-** उत्सूत्रं नाम यत्तीर्थङ्करादिभिरनुपदिष्टं तत्र या सूरिपरम्परागता समाचारी । यथा नागिला रजोहरणमूर्ध्वमुखं कृत्वा कायोत्सर्गं कुर्वन्ति । चारणानां वन्दनके कथमपीत्युच्यते इत्यादि साप्यङ्गोपाङ्गेषु नोपदिष्टेत्यनुपदिष्टं शङ्केत ततोऽनुपदिष्टमाह- सच्छन्देन स्वाभिप्रायेन विकल्पितं रचितं स्वेच्छाकल्पितमित्यर्थः । अतएवाननुपाति सिद्धान्तेन सहाघटमानकं न केवलमुत्सूत्रमाचरन् प्रज्ञापयंश्च यथाच्छन्दः किन्तु यः परतत्तिषु गृहस्थप्रयोजनेषु करणकरणानुमतिभिः प्रवृत्तः परतत्तिप्रवृत्तः । तथा तिंतिणो नाम यः स्वल्पेऽपि केनचित्साधुनापराद्धेऽनवरतं पुनः पुनस्तं रुपन्नास्तेऽयमेवं रूपो यथाच्छन्दः तथा-

**[भा.८६३]** सच्छंदमतिविगप्पिय किंची सुखसाय विगइ पडिबद्धो ।
तिहिं गारवेहिं मज्जति तं जाणाही अहाच्छंदं ॥

**वृ-** स्वच्छन्दमतिविकल्पितं किञ्चित्कृत्वा तल्लोकाय प्रज्ञापयति । ततः प्रज्ञापनगुणेन लोकाद्विकृतीर्लभते । ताश्च विकृतीः परिभुञ्जानः स्वसुखमासादयति, तेन च सुखासादनेन तत्रैव रतिमातिष्ठति तथा चाह- सुखस्वादने सुखास्वादे विकृतौ च प्रतिबद्धः । तथा तेन स्वच्छन्दः मतिविकल्पितप्रज्ञापनेन लोकपूज्यो भवति । अभिष्टरसांश्चाहारान् प्रतिलभते वसत्यादिकं च विशिष्टमतः स आत्मानमन्येभ्यो बहुमन्यते । तथा चाह- त्रिभिर्गौरवैर्ऋद्धिरससातलक्षणैर्माद्यति य एवंभूतस्तं यथाच्छन्दं संजानीहि । इह उत्सूत्रं प्ररूपयन् यथाच्छन्द उच्यते तत उत्सूत्रप्ररूपणामेव भेदतः प्ररूपयति-

**[भा.८६४]** अहच्छंदस्स परूवण उस्सुत्ता दुविह होइ नायव्वा ।
चरणेसु गईसु जा, तत्थ चरणे इमा होति ॥

**वृ-** यथाच्छन्दसः प्ररूपणा उत्सूत्रासूत्रादुत्तीर्णा द्विधा भवति ज्ञातव्या । तद्यथा- चरणेषु चरणविषया गतिषु गतिविषया, । तत्र या चरणे चरणविषया सा इयं वक्ष्यमाणा भवति तामेवाह-

**[भा.८६५]** पडिलेहण मुहपोत्ति य रयहरण निसेज्ज पाय मत्तए पट्टे ।
पडलाइं चोलउन्ना दसिया पडिलेहणा पोत्ते ॥

**वृ-** या मुखपोत्तिका मुखवस्त्रिका सैव प्रतिलेखनीया पात्रप्रत्युपेक्षया पात्रकेसरिकाः किं द्वयोः परिग्रहेण अतिरिक्तोपधिग्रहणेन संभवात् । तथा रयहरणनिसेज्जत्ति किं रजोहरणस्य द्वाभ्यां निषद्याभ्यां कर्तव्यमित्येका निषद्यास्तु, पायमत्तएत्ति यदेवपात्रं तदेवमात्रं क्रियताम् मात्रकं वा पात्रं किं द्वयोः

परिग्रहेण, तथापट्टति य एव चोलपट्टकः । स एव रात्रौ संस्तारकस्योत्तरपट्टः क्रियतां किं पृथगुत्तरपट्टपरिग्रहेण । तथा पडलाइं चोलत्ति पटलानि किमिति पृथक् ध्रियंते चोलपट्ट एव भिक्षार्थं हिण्डमानेन द्विगुणस्त्रिगुणो वा कृत्वा पटलकस्थाने निवेश्यताम् । उन्नादसियत्ति रजोहरणस्य दशा किमित्युर्णामय्यः क्रियन्ते क्षौमिकाः क्रियन्तां तदर्पूर्णामयीभ्यो मृदुतरा भवन्ति । तथा 'पडिलेहणा पोत्ती'त्ति प्रतिलेखनावेलायामकं पोतंप्रस्तार्य तस्योपरि समस्तवस्तुप्रेक्षणां कृत्वा तदनन्तरमुपाश्रयाद्बहिः प्रत्युपेक्षणीयमेवं महती जीवदया कृता इति ॥

[भा. ८६६] दन्तच्छन्नमलित्तं हरियठियमज्जणाय नितस्स ।
अनुवादि अननुवादी परूवणाचरणमाईसुं ॥

वृ- हस्तगताः पादगता नखाः प्रवृद्धा दन्तैश्छेत्तव्या । न नखरदनने, नखरदनं हि ध्रियमाणमधिकरणं भवति तथा अलित्तमिति पात्रमलिप्तं कर्तव्यम्, न पात्रं लेपनीयमिति भावः । पात्रलेपनेन बहुसंयमदोषसम्भवात् । 'हरिय ठिय'त्ति हरितप्रतिष्ठितं भक्तपानादिग्राह्यं तद्ग्रहणे हि तेषां हरितकायजीवानां भारापहारः कृतो भवति । 'पमज्जणा य नितस्से'त्ति यदि च्छन्ने जीवदयानिमित्तं प्रमार्जना क्रियते ततो बहिरप्यच्छन्ने क्रियतां जीवदयापरिपालनरूपस्य निमित्तस्योभयत्रापि संभवात् । अक्षरघटना त्वेवम्-'नितस्स निर्गच्छतः प्रमार्जना भवतु यथा वसतेरन्तरिति । एवं यथाच्छन्देन चरणेषु च प्ररूपणानुपातिनी अनुसारिणी अननुपातिनी च क्रियते । अथ किंस्वरूपानुपातिनीत्यनुपातिन्यनुनपातिन्योः स्वरूपमाह —

[भा. ८६७] अनुवाइत्ती नज्जइ जुत्तीपडियं खुभासए एसो ।
जं पुन सुत्तावेयं तं होति अननुवातित्ति ॥

वृ- यद्भाष्यमाणः स यथाच्छन्दो ज्ञायते यथा खलु निश्चितं युक्तिसङ्गमेष भाषते तदनुपाति प्ररूपणं यथा यैव मुखपोतिका सैव प्रतिलेखनिकास्त्वित्यादि यत्तु पुनर्भाष्यमाणं सूत्रापेतं सूत्रपरिभ्रष्टं प्रतिभासते तद्भवत्यननुपाति । यथा चोलपट्टः पटलानि क्रियतां षट्पदिकापतनसम्भवतो युक्त्यसङ्गततया प्रतिभासमानत्वात् तत्र चरणे प्ररूपणमनुपात्यननुपाति चोक्तमिदं चान्यत् द्रष्टव्यम् ॥ तदेवाह-

[भा. ८६८] सागारियादिपलियंक निसेज्जा सेवणा य गिहिमत्तो ।
निग्गंथ चिठणाई पडिसेहो मासकप्पस्स ॥

वृ- सागारिकः शय्यातरस्तद्विषयं ब्रूते तथा शय्यातरपिण्डे गृह्यमाणेनास्ति दोषः प्रत्युतगुणो वसतिदानतो भक्तपानादिदानतश्च प्रभूततरनिर्जरासम्भवात् । आदिशब्दात् स्थापनाकुलेष्वपि प्रविशतो नास्ति दोषः । पलियंकत्ति पर्यङ्कादिषु परिभुज्यमानेषु न कोऽपि दोषः केवलं भूमावुपविशमाने लाघवादयो बहुतरदोषाः । 'निसेज्जासेवण'त्ति गृहिनिषद्यायामासेव्यमानायां गृहेषु निषद्याग्रहणे इत्यर्थः । को नाम दोषोऽपि त्वतिप्रभूता गुणास्तेहि जन्तवो धर्मकथाश्रवणतः सम्बोधिमाप्नुवन्ति 'गिहिमित्ते'त्ति गृहिमात्रके भोजनं कस्मान्न क्रियते । एवं प्रवचनोपघातः परिहृतो भवति । तथा 'निग्गंथिचिठणादि'त्ति निर्ग्रन्थीनामुपाश्रये अवस्थानादौ को दोषः संक्लिष्टमनो निरोधेन ह्यसंक्लिष्टं मनः सम्प्रधारणीयमिति भागवत उपदेशः तच्चासंक्लिष्टमनःसम्प्रधारणं यत्र तत्र वा स्थितेन क्रियतामिति न कश्चिद्दोषोऽन्यथा हिं अन्यत्रापि स्थितो यद्यशुभं मनः सम्प्रधारयति तत्र किं न लिप्यते इति । तथा मासकल्पस्य प्रतिषेधस्तेन क्रियते । यथा यदि मासकल्पात्परतो दोषो न विद्यते ततस्तत्रैव तिष्ठन्ति तिष्ठन्तु मा विहारक्रमं कार्षुरिति

[भा.८६९]　　चारे वेरज्जे या पढमसमोसरण तहय नितिएसु ।
सुण्णे अकप्पिएया अनाउच्छेयसंभोए ॥

वृ- चारश्चरणं गमनमित्यर्थः । तद्विषये ब्रूते । तद्यथा-चतुर्षु मासेषु मध्ये यावद्वर्ष पतति तावन्मा विहारक्रममकार्षीत् । यदा तु नपतति वर्षं तदा को दोषो हिण्डमानस्येति तथा वैराज्येऽपि ब्रूते यथा वैराज्येऽपि साधवो विहारक्रमं कुर्वन्तु परित्यक्तं हि साधुभिः परमार्थतः शरीरं तद्यदि ते गृहीष्यन्ति । किं क्षुण्णं साधूनां, सोढव्याः खलु साधुभिरुपसर्गाः । ततो यदुक्तं-नो कप्पइ निग्गंथाणं वेरज्जविरुद्धरज्जंसि सज्जं गमणं सज्जं आगमणं ति, तदयुक्तमिति पढमसमोसरणंति प्रथमसमवसरणं नाम प्रथमवर्षाकालस्तत्र ब्रूते । यथा प्रथम समवसरणे उद्गमादिदोषपरिशुद्धं वस्त्रं पात्रं वा किं न कल्पते गृहीतुं द्वितीयसमवसरणेपि ह्युद्गमादिदोषपरिशुद्धमिति कृत्वा गृह्यते । सा च दोषशुद्धिरुभयत्राप्यविशिष्टेति तहय नीतिएसुत्ति तथा नित्येषु नित्यवासेषु प्ररूपयति । यथा नित्यवासेषु यद्युद्गमोत्पादनैषणा शुद्धं लभ्यते भक्तपानादि ततस्तत्र को दोषः प्रत्युत दीर्घकालमेकक्षेत्रे वसतां सूत्रार्थादयः प्रभूता भवन्ति, तथा 'सुन्नत्ति' यद्युपकरणं न केनापि ह्रियते ततः शून्यायां वसतौ क्रियमाणायां को दोषः । अथोत्सङ्घट्टनेनापहन्यते तत्र चित्तस्योपधिः क उपघातः । अथाकप्पियत्ति अकल्पिको नामागीतार्थः तद्विषये ब्रूते । यथा अकल्पिकेन प्रथमशैक्षकरूपेण शुद्धमज्ञातोञ्छं वस्त्रपात्राद्यानीतं किं न भुज्यते । तस्याज्ञातोञ्छतया विशेषतः परिभोगार्हत्वात् । संभोए इति तथा संभोगं ब्रूते । यथा सर्वे पञ्चमहाव्रतधारिणः साधवः संभोगिका एव एकता ना संभोगिका' इति ॥ सम्प्रत्यमकल्पिकोवेति विवृणोति-

[भा.८७०]　　किंवा अकप्पिएणं गहियं फासुयं तु होइउ अभोज्जं ।
अन्ना उच्छं को वा होइ गुणो कप्पिए गहिए ॥

वृ- किं वा केन वा कारणेन अकल्पिकेन अगीतार्थेन गृहीतं प्रासुकमज्ञातोञ्छमपि अभोज्यम-परिभोक्तव्यं भवति । को वा कल्पिकेन । अत्र गाथायां सप्तमी तृतीयार्थे गृहीतो गुणो भवति नैव कश्चित् उभयत्रापि शुद्धत्वाविशेषात् । अधुना संभोए इति व्याख्यानयति-

[भा.८७१]　　पञ्चमहव्वयधारी समणा सव्वेवि किं न भुंजंति ।
इयचरणवितहवादी, एत्तो वोच्छं गतीसुं तु ॥

वृ- पञ्चमहाव्रतधारिणः सर्वे श्रमणाः किं नैकत्र भुञ्जते किन्त्वविशेषेण सर्वे संभोगिका भवन्ति येनैके सांभोगिकाः क्रियन्ते के इति । इत्येवमुक्तेन प्रकारेण यथा अहाच्छन्दो अनालोचितगुणदोषश्चरणे चरणविषये वितथवादी अत ऊर्ध्वं तु गतिषु वितथवादिनं वक्ष्यामि ॥ यथा प्रतिज्ञातमेव करोति-

[भा.८७२]　　खेत्तं गतो य अडविं एक्को संचिक्खए तहिं चेव ।
तित्थगरोत्ति य पियरो, खेत्तं पुन भावतो सिद्धी ॥

वृ- स यथाच्छन्दो गतिषु विषये एवं प्ररूपणां करोति-एगो गाहवती, तस्स तिन्नि पुत्ता, ते सव्वे खेत्तकम्मोवजीविणो । पियरेण खित्तकम्मे नियोजिता । तत्थेगो खेत्तकम्मं जहानत्तं करेइ । एगो अडविं गतो देसं देसेणं हिंडइ इत्यर्थः । एगो जिमित्ता जिमित्ता देवकुलालादिसु अच्छति । कालांतरेण तेसिं पिया मतो । तेहिं दव्वं पितिसंतियं काउं सव्वं सम्मं विरिक्कं । एवं तेसिं ज एगेन उवज्जियं तं सव्वेसिं सामण्णं जायं । एवं अम्हं पिया तित्थयरो तस्स वयणोवदेसेणं सव्वे समणा कायकिलेसं कुव्वंति । अम्हे न करेमो । जं तुब्भेहिं कयं तं सामन्नं जहा तुब्भे देवलोगं सुकुलपच्चायातिं वा सिद्धिं वा गच्छह तहा अम्हे विगच्छि-

स्सामी। एष गाथा भावार्थः । अक्षरयोजनात्वियम्-एकपुत्रः क्षेत्रं गतः, एकोऽटवीं देशान्तरेषु परिभ्रम तीत्यर्थः । अपर एकस्तत्रैव संतिष्ठति पितरि च मृते धनं सर्वेषामपि समानं एवमत्रापि पिता पितृस्थानी-यतीर्थकरः क्षेत्रं क्षेत्रफलं धनं पुनर्भावतः परमार्थतः सिद्धिस्तां यूयमिव युष्मदुपार्जनेन वयमपि गमिष्यामः उक्ता। ...यथाछन्दस्य ... । सम्प्रति तेषां यथाछन्दानामेवं वदतां दोषमुपदर्शयति-

**[भा.८७३]** जिनवयणसव्वसारं मूलं संसारदुक्खमोक्खस्स ।
संमत्तं मइलेत्ता ते दोग्गइ वड्डगा होंति ॥

**वृ-** ते यथाच्छन्दाश्चरणेषु गतिषु चैवं ब्रुवाणाः सम्यक्त्वं सम्यग्दर्शनं कथं भूतमित्याह-जिनानां सर्वज्ञानां वचनं जिनवचनं द्वादशाङ्गं तस्य सारं प्रधानं प्रधानताचास्य तदन्तरेण श्रुतस्य पठितस्याप्य-श्रुतत्वात् । पुनः किंविशिष्टमित्याह मूलं प्रथमं कारणं संसारदुःखमोक्षस्य समस्तसांसारिकदुःखविमोक्षस्य तदेवं भूतं सम्यक्त्वं मलिनयित्वा आत्मनो दुर्गतिवर्धका भवन्ति । दुर्गतिस्तेषामेव वदतां फलमिति भावः। इह पूर्वमुत्सवेऽनुत्सवे वा गृह्णाणस्य पार्श्वस्थस्य प्रायश्चित्तमुक्तं । तत्र उत्सवप्ररूपणार्थमाह-

**[भा.८७४]** सक्कमहादीया पुन पासत्थे ऊसवा मुणेयव्वा ।
अहछंदे ऊसव्वो पुन, जीए परिसाए कहेइ ॥

**वृ-** पार्श्वस्थे पार्श्वस्थस्य उत्सवा ज्ञातव्याः शक्रमहादयः इन्द्रमहादयः । आदिशब्दात् स्कन्दरुद्रमहादिपरिग्रहः यथाच्छन्दस्य पुनरुत्सवोयस्याः पर्षदः पुरतो यथाच्छन्दः स्वच्छन्दविकल्पितं प्ररूपयति सा पर्षत् ज्ञातव्याः । तदपि च उत्सवभूतायां पर्षदि स्वकीयकुमतप्ररूपणं चतुर्मासषण्मासवर्षेषु कदाचिद्वा करोति । अभीक्ष्णं वा ततः एतेषु स्थानेषु वक्तव्यं तच्च पार्श्वस्थानमानुसारेण ज्ञेयमत आह-

**[भा.८७५]** "जउलहुउ तह लहुगा, चउगुरू तहिं ठाणे जेहिं; ।
ठाणे चउगुरुगा, छम्मासे तत्थ उज्झाने ॥

**[भा.८७६]** जेहिंयं पुन छम्मासा, तहिं च्छेयं ठाणए मूलं ।
पासत्थे जह भणियं, अहच्छंदे विवड्डियं जाणे ॥

**वृ-** यत्र पार्श्वस्थस्य मासलघु प्रायश्चित्तमुक्तं तत्र यथाच्छन्दसि चत्वारो लघुकाः यत्र स्थाने चत्वारो लघुकाः तत्र स्थाने चत्वारो गुरवः । यत्र चत्वारो गुरवः । यत्र चत्वारो गुरुकास्तत्र षण्मासान् गुरून् जानीहि यत्र पुनः षण्मासाः तत्र ज्ञातव्यः च्छेदः, च्छेदस्थाने च मूलं, । तद्यथा-यद्युत्सवाभावे कदाचित् कथयतितश्चत्वारो लघुका मासा अथाभीक्ष्णं कथयति । ततश्चत्वारो गुरुकाः, अथोत्सवे कदाचित् ब्रूते ततश्चत्वारो गुरुकाः, । अभीक्ष्णकथने षण्मासा गुरवः, चतुरोमासान् यावत्कदाचित् कथने चत्वारोगुरुकाः षण्मासान् यावत्कदाचित्कथने षण्मासा गुरवः वर्षयावत् कदाचित् कथनेच्छेद, चतुरोमासान् यावत् अभीक्ष्ण कथने षण्मासागुरवः षण्मासान् यावत् अभीक्ष्णकथने च्छेदः । वर्ष यावदभीक्ष्णकथने मूलं । अत्रोत्सवानुत्सवविशेषरहिततया सामान्यतोऽभिधानं उक्तमोघेन प्रायश्चित्तम्, अधुना विभागत उच्यते । चतुरो मासान् यावत्कदाचित् उत्सवाभावे प्ररूपणायां चत्वारो लघुमासाः, षण्मासान् यावत् चत्वारो गुरवः, वर्षं यावत् षण्मासा गुरवः । वर्षं यावदेवं प्ररूपणायां च्छेदः,। चतुरो मासान् यावदुत्सवेकदाचित्प्ररूपणायां चत्वारो मासा गुरवः । षण्मासान् यावदेवं प्ररूपणायां षण्मासा गुरवः, वर्षं यावत्तथा प्ररूपणायां च्छेदः । तथा चतुरो मासान् यावदुत्सवे अभीक्ष्णं प्ररूपणायां चतुर्गुरुकच्छेदः षण्मासान् यावदेवं प्ररूपणायां षड्गुरुकः । वर्षं यावदेवं प्ररूपणायां मूलमिति, एतदेव

सामान्यतः प्राह-पासत्थेत्यादि, पार्श्वस्थे यत्र स्थाने यद् भणितं प्रायश्चित्तं तस्मिन् स्थाने यथाच्छन्दे विवर्द्धितं विशेषेण वर्द्धितं जानीहि । तच्च तथैवानन्तरमुपदर्शितं, कस्माद्विवर्धितं जानीहीति चेत् उच्यते-प्रसिद्धसेवनात् कुप्ररूपणाया बहुदोषत्वादिहपार्श्वस्थत्वं त्रयाणामपि सम्भवति । तद्यथा भिक्षोर्गणावच्छेदिन आचार्यस्य च, यथाच्छन्दत्वं पुनर्भिक्षोरेव ततः पार्श्वस्थविषयं सूत्रं त्रिसूत्रात्मकं यथाच्छन्दविषयं त्वेकस्वरूपमिति ।। सम्प्रति कुशीलादीनां प्रायश्चित्तविधिमतिदेशत आह-

**[भा.८७७]** पासत्थे आरोवण ओहविभागेन वण्णिया पुव्वं ।
सा चेव निरवसेसा कुशीलमादीण नायव्वा ।।

**वृ-** यैव पूर्वं पार्श्वस्थे प्रायश्चित्तस्यौघेन विभागेन चारोपणाप्रदानमुपवर्णिता सैव निरवशेषा ओघेन विभागेन च ज्ञातव्या, यत्र तु विशेषः स तत्र वक्ष्यते, । गतं यथाच्छन्दः सूत्रमिदानीं कुशीलसूत्रं वक्तव्यं, तच्च प्राग्वद्भावनीयम् अधुना कुशील प्ररूपणामाह-

**[भा.८७८]** एत्तो तिविहकुसीलं तमहं वोच्छामि अहानुपुव्वीए ।
दंसणनाणचरित्ते तिविह कुसीलो मुनेयव्वो ।।

**वृ-** इतो यथाच्छन्दः प्ररूपणानन्तरं त्रिविधं कुशीलमहमानुपूर्व्या वक्ष्यामि । यथा प्रतिज्ञातमेव करोति, दंसणेत्यादि त्रिविधः कुशीलो ज्ञातव्यः । तद्यथा-दर्शने ज्ञाने चारित्रे च । एतदेव व्याचिख्यासुरिदमाह-

**[भा.८७९]** नाणे नाणायारं जो उ विराहेइ कालमादीयं ।
दंसणे दंसणायारं चरणकुसीलो इमो होइ ।।

**वृ-** यो ज्ञानाचारं कालादिकं कालेविनए इत्यादिरूपं विराधयति स ज्ञाने ज्ञानकुशील उच्यते । यस्तु दर्शनाचारं निःशङ्कितत्वादिकं विराधयति स दर्शने दर्शनकुशीलः । चरणकुशीलोऽयं वक्ष्यमाणस्वरूपो भवति तमेवाह-

**[भा.८८०]** कोउय भूतिकम्मे पसिणापसिणे निमित्तमाजीवी ।
कक्ककुरुयाय लक्खण मुवजीवति विज्जमंतादी ।।

**वृ-** कौतुकं नाम आश्चर्यं यथा मायाकारको मुखे गोलकान् प्रक्षिप्य कर्णेन निष्काशयति, । नाशिकया वा तथा मुखादग्निं निष्काशयतीत्यादि । अथवा परेषां सौभाग्यादिनिमित्तं यत् स्नपनादि क्रियते । एतत् कौतुकं । उक्तं च-'सोहग्गादिनिमित्तं परेसि ण्हवणादि कोउगं भणियमिति,' एवंभूतानि कौतुकानि तथा भूतिकर्मनाम यज्ज्वरितादीनामभिमन्त्रितेन क्षारेण रक्षाकरणं, 'जरियादिभूतिदाणं भूतीकम्म-विणिदिट्ठमिति' वचनात् प्रश्नाप्रश्नं नाम यत् स्वप्नविद्यादिभिः शिष्टस्यान्येभ्यः कथनम् । उक्तं च-

सुविणगविज्जा कहियं आयं खणि घंटियादि कहियं वा ।
जं सीसइ अन्नेसिं पसिणापसिणं हवइ एयं ।।

निमित्तमतीतादिभावकथनं । तथा आजीवो नाम आजीवि(व)कः । स च जात्यादिभेदतः सप्तप्रकारः तान्, तथा कल्को नाम प्रसूत्यादिषू रोगेषु क्षारपातनमथवात्मनः शरीरस्य देशतः सर्वतो वा लोध्रादिभिरुद्वर्तनं, तथा कुरु(र)का देशतः सर्वतो वा शरीरस्य प्रक्षालनं, लक्षणं पुरुषलक्षणादि, तथा ससाधना विद्या असाधनामन्त्रः । यदि वा यस्याधिष्ठात्री देवता सा विद्या यस्य पुरुषः समंत्रः आदिशब्दात् मूलकर्मचूर्णादिपरिग्रहः । तत्र मूल कर्म नाम पुरुषद्वेषिण्याः सत्त्या अपुरुषद्वेषिणीकरणमपुरुष द्वेषिण्याः

सत्याः पुरुषद्वेषिणीकरणं, गर्भोत्पाटनं गर्भपातनमित्यादि चूर्णयोगादयश्च प्रतीताः । एतानि य उपजीवति स चरणकुशीलः । सम्प्रत्याजीवं व्याख्यानयति-

[भा.८८१] जाति कुले गणे या कम्मे सिप्पे तवे सुए चेव ।
सत्तविहं आजीवं उवजीवति जो कुसीलो उ ॥

वृ- जातिर्मातृकी, कुलं पैतृकं, गणो मल्लगणादिः । कर्म अनाचार्यकमाचार्योपदेशजं शिल्पं, तपः श्रुतं प्रतीते । एवं सप्तविधमाजीवं य उपजीवति जीवनार्थमाश्रयति, तद्यथा-जातिं कुलं चात्मीयं लोकेभ्यः कथयति येन जातिपूज्यतया कुलपूज्यतया वा भक्तपानादिकं प्रभूतं लभेयमिति । अनयैव बुद्धयामल्लगणादिभ्यो गणेभ्यो वा गणविद्याकुशलत्वं कर्मशिल्पकुशलेभ्यः कर्मशिल्पकौशलं कथयति-तपसा उपजीवना तपः कृत्वा क्षपकोऽहमिति जनेभ्यः कथमति श्रुतोपजीवना, बहुश्रोतोऽहमिति स कुशील इति । साम्प्रतमेतेषु कौतुकादिषु प्रायश्चित्तमाह-

[भा.८८२] भूतीकम्मे लहुओ लहु गुरुनिमित्तसेसए इमं तु ।
लहुगाय सयंकरणे परकरणे होंत नुग्घाया ॥

वृ- भूतिकर्मकरणे प्रायश्चित्तं मासलघु अतीतनिमित्तकथन चत्वारो लघुमासाः । वर्तमान-निमित्तकथने चत्वारो गुरुमासाः, शेषके कौतुकादौ इदं प्रायश्चित्तं-स्वयं कौतुकादिकरणे चत्वारो लघुकाः। परैः कारणे भवन्ति चत्वारोऽनुद्घाता गुरवोमासा, मूलकर्मकरणे मूलमिति गतं कुशीलसूत्रमिदानीमव-सन्नसूत्रं वक्तव्यं । तच्च प्राग्वद्भावनीयम् । सम्प्रत्यवसन्नप्ररूपणामाह-

[भा.८८३] दुविहो खलु ओसन्नो देसे सव्वे य होइ नायव्वो ।
देसोसन्नो तहियं आवासाई इमो होइ ॥

वृ- अवसन्नः खलु भवति द्विविधो ज्ञातव्यस्तद्यथा-देशदेशतः, सर्वस्मिन् सर्वतस्तत्र देशावसन्न आवश्यकाद्यधिकृत्यायं वक्ष्यमाणो भवति । तमेवाह-

[भा.८८४] आवस्सगसज्झाए पडिलेहणज्झाणभिक्खभत्तठे ।
आगमने निग्गमने ठाणे य निसीयण तुयट्टे ॥

वृ- आवश्यकादिष्ववसीदन् देशतोऽवसन्न इत्योघतो गाथाक्षरयोजना, भावार्थस्त्वयम्-'आवश्यकमनियतकालं करोति, यदि वा हीनं हीनकायोत्सर्गादिकरणात् अतिरिक्तं वा अनुप्रेक्षार्थमधिकतरकायोत्सर्गकरणात् । अथवा यद्दैवसिके आवश्यके कर्तव्यं तत् रात्रिके करोति, रात्रिके कर्तव्यं दैवसिके । तथा स्वाध्यायं सूत्रपौरुषीलक्षणं अर्थपौरुषीलक्षणं वा कुरुध्वमिति गुरुणोक्ते गुरुसंमुखीभूय किञ्चिदनिष्ठं जल्पित्वा अविप्रियेण करोति न करोति वा, सर्वथा विपरीतं वा करोति, । कालिकमुत्कालिकवेलायामुत्कालिकं वा कालवेलायां, प्रतिलेखनामपि वस्त्रादीनामावर्तनादि-भिरूनामतिरिक्तां वा विपरीतां वा दोषैर्वा संसक्तां करोति । तथा ध्यानं धर्मध्यानं शुक्लध्यानं वा यथाकालं न ध्यायति तथा भिक्षां न हिण्डते, । गुरुणा वा भिक्षां नियुक्तो गुरुसम्मुखं किञ्चिदनिष्टं जल्पित्वा हिण्डते, तथा भक्तार्थं भक्तविषयं प्रयोजनं सम्यग् न करोति, किमुक्तं भवति न मण्डल्यां समुद्दिशति,। काकशृगालादिभक्षितं वा करोति, अन्ये तु व्याचक्षते, । अभत्तठत्ति अभक्तार्थग्रहणं सकलप्रत्या-ख्यानोपलक्षणं तत्रायमर्थः प्रत्याख्यानं न करोति । गुरुणा वा भणितो गुरुसम्मुखं किञ्चिदनिष्ट-मुक्त्वा करोति, । आगमने नैषेधिकी न करोति निर्गमने आवश्यकी, स्थाने ऊर्ध्वस्थाने निषदने उपवेशने

त्वग्वर्तने शयने एतेषु क्रियमाणेषु न प्रत्युपेक्षणं करोति, नापि प्रमार्जनं करोति वा प्रत्युपेक्षणप्रमार्जनं दोषदुष्टं वा करोति, साम्प्रतमावश्यकद्वारं व्याख्यानयति-

[भा.८८५] आवस्सयं अनिययंकरेइ हीनातिरित्तविवरीयं ।
गुरुवयणेणनियोगं. वलाइ ईणमो उ ओसन्नो ।।

वृ- आवश्यकमनियतमनियतकालं यदि वा हीनमथवातिरिक्तं विपरीतं वा करोति, गुरुराचार्यस्तस्य वचनं गुरुवचनं तेन नियोगो व्यापारणं तस्मिन् सति संमुखो वलति । किमुक्तं भवति ? गुरुणा भिक्षादिषु नियुक्तः सन् गुरुसम्मुखमेव किञ्चिदनिष्टं भाषमाणो वलते, न गुरुवचस्तथैवानुतिष्ठति । एष देशतोऽवपन्नः अत्र प्रायश्चित्तविधिः पार्श्वस्थस्येवानुसरणीयः ।

यदुक्तं 'गुरुसम्मुखो वलते' इति तत् सविशेषं विवृणोति ।

[भा.८८६] जह उ बइलो वलवं भंजति समिलं तु सोवि एमेव ।
गुरुवयणं अकरेंतो वलाइ कुणती च उस्सोढुं ।।

वृ- यथा वलवान् बलीवर्दः प्रेरितः सन् दुःशीलतया संमुखं व्यावर्तमानः समिलां भनक्ति । एवमेव अनेनैव प्रकारेण सोऽप्यवसन्नो गुरुवचनमकुर्वन् सम्मुखो वलते न पुनः करोति, ततः कार्यंकरो वा उत्साह्य उत्शब्दोऽत्रनिषेधार्थे असोढा इत्यर्थः । किमुक्तं भवति ? गुरुसंमुखं किञ्चिदनिष्टमुक्त्वा रुषन् करोतीति उक्तो देशतोऽवसन्नः । सर्वतोऽवसन्नमाह-

[भा.८८७] उउबद्धपीढफलगं ओसन्नं संजयं वियाणाहि ।
ठवयिगरइयगभोइ एमेया पडिवत्तितो ।।

वृ- यः पक्षस्याभ्यन्तरे पीढफलकादीनां बन्धनानि मुक्त्वा प्रत्युपेक्षणां न करोति यो वा नित्यावस्तृतसंस्तारकः सोऽबद्धपीठफलकः तं संयतं सर्वतोऽवसन्नं विजानीहि । तथा यः स्थापितकभोजी स्थापनादोषदुष्टप्राभृतिका भोजी रचितकं नाम कांश्यपात्रादिषुपटादिषु वा यदशनादिदेयबुद्धया वैविक्त्येन स्थापितं तद्भुङ्कइत्येवं शीलो रचितकभोजी, तमपि सर्वतोऽवसन्नं जानीहि । एवममुना प्रकारेण एताः सर्वतोऽवसन्नविषये प्रतिपत्तयो वेदितव्याः ।। अधुना प्रायश्चित्तविधिमाह-

[भा.८८८] सामायारिं वितहं ओसन्नो जं च पावए जत्थ ।
संसत्तो च अलंदो नडरूवी एलगो चेव ।।

वृ- सामाचारीं ज्ञानादिसामाचारीं 'काले विनए' इत्यादि रूपां यदि वा सूत्रमण्डल्यर्थ मण्डल्यादिगतां सामाचारीं वितथां कुर्वन् यथास्थानं यत् प्रायश्चित्तं प्राप्नोति, तत्र तस्य स्वस्थाननिष्पन्नं प्रायश्चित्तमिति गतमवसन्नसूत्रम् । सम्प्रति संसक्तसूत्रं वक्तव्यं, तच्च प्राग्वत्परिभावनीयम् । अधुना संसक्तप्ररूपणामाह- 'संसत्तोव' इत्यादि संसक्तोऽलिंद इव नट इव बहुरूपी नटरूपी एडक इव च ज्ञातव्य इति शेषः। एतदेव व्याचिख्यासुराह-

[भा.८८९] गोभत्ता लंदोविव बहुरूव नडोव्व एलगो चेव ।
संसत्तो सो दुविहो असंकिलिट्ठो व इयरो वा ।।

वृ- गोभक्तसंयुक्तोऽलिन्दो गोभक्तालिन्द इव । किमुक्तं भवति ? । यथा अलिन्दे गोभक्तं कुकुसा ओदनभिस्सटा अवश्रावणमित्यादि पूर्वमेकत्वमिलितं भवतीति संसक्त उच्यते । एवं यः पार्श्वस्थादिषु मिलितः पार्श्वस्थसदृशो भवति संविग्नेषु मिलितः संविग्नसदृशः स संसक्त इति । यथा वा

नटो रङ्गभूमौ प्रविष्टः कथानुसारतस्तत्तद्रूपं करोति एवं बहुरूपनट इव सोऽपि पार्श्वस्थादि मिलितः पार्श्वस्थादिरूपं भजते, संविग्नमिलितः संविग्नरूपमिति । यदि वा यथा एडको लाक्षारसे निमग्नः सन् लोहितवर्णो भवति, गुलिकाकुण्डे निमग्नः सन् नीलवर्ण इत्यादि एवं पार्श्वस्थादि संसर्गतः पार्श्वस्थादिः । स द्विधा, तद्यथा-असंक्लिष्ट इतरश्चसंक्लिष्टः । तत्रासंक्लिष्टमाह-

**[भा.८९०]** पासत्थ अहाच्छंदो कुसील उसन्नमेव संसत्तो ।
पियधम्मो पियधम्मे सु चेव इणमो उ संसत्तो ॥

**वृ-** पार्श्वस्थे मिलितः पार्श्वस्थः यथाच्छन्दे यथाच्छन्दः कुशीले कुशीलः अवसन्ने अवसन्नः संसक्ते संसक्तः । तथा प्रियधर्मसु मिलितः प्रियधर्मा एष संसक्तोऽसंक्लिष्टो ज्ञातव्यः, संक्लिष्टमाह-

**[भा.८९१]** पंचासवप्पवत्तो जो खलु तिहिं गारवेहिं पडिबद्धो ।
इत्थि गिहिसंकिलिट्ठो संसत्तो सो उ नायव्वो ॥

**वृ-** यः खलु पञ्चसु आश्रवेषु हिंसादिषु प्रवृत्तः । तथापि त्रिभिर्गौरवैर्ऋद्धिरससातलक्षणैः प्रतिबद्धः तथा स्त्रीषु गृहीषु च प्रतिबद्धः स संक्लिष्टः स संसक्तो ज्ञातव्यः । अस्य चासंक्लिष्टस्य प्रायश्चित्त-विधिर्देशतः पार्श्वस्थस्यैव वेदितव्यः ।

**मू. (३१)** *भिक्खू य गणाओ अवक्कम्म पर पासंडपडिमं उवसंपज्जित्ताणं विहरिज्जा, से य इच्छेज्जा दोच्चं पि तमेव उवसंपजित्ताणं विहरित्तए नत्थिणं तस्स तप्पइयं कइ छेदे वा परिहारे वा नन्नत्थ एगाए आलोयणाए'' ।*

**वृ-** भिक्खूय गणातो अवक्कमेत्यादि अथास्य सूत्रस्य कः सम्बन्ध इत्यत आह-

**[भा.८९२]** देसेन अवक्कंता सव्वेणं चेव भावलिंगाओ ।
इति समुदिता उसुत्ता इणमन्नं दव्वतो विगते ॥

**वृ-** द्रव्यलिङ्गमधिकृत्य देशेनापक्रान्ताभावलिङ्गतो भावलिङ्गमधिकृत्य सर्वेण सर्वात्मनापक्रान्ताः पार्श्वस्थाद्य इति । एवमथान्यनन्तरसूत्राणि समुदितानि सम्यक्प्रतिपादितानि, इदानीमधिकृत्यमन्यत्सूत्रं द्रव्यतो द्रव्यलिङ्गेन विगते वियुक्ते द्रव्यलिङ्गवियुक्तविषयमिति भावः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-भिक्षुः प्रागुक्तशब्दार्थश्चशब्दोऽनुक्तसमुच्चयार्थः । स चैतत् समुच्चिनोति रागद्वेषादिना कारणेन गणादपक्रम्य निर्गत्य परपाखण्डप्रतिमां परपाषण्डलिङ्गमुपसम्पद्य विहरेत् । विहृत्य च कारणे समाप्ते द्वितीयमपि वारं तमेव गणमुपसम्पद्य विहर्तुमिच्छेत् । तस्य तथोपसम्पद्यमानस्य नास्ति कश्चित् च्छेदो वा परिहारो वा उपलक्षणमेतत् । अन्यदपि प्रायश्चित्तं न किमप्यस्ति कारणतः परलिङ्गप्रतिपत्तेः प्रतिपत्तावपि सम्यग् यतनाकरणात् । किं सर्वथा न किमपि नेत्याह-नान्यत्र एकाया आलोचनिकायाः अन्यत्रशब्दः परिवर्जनार्थो यथा भीमार्जुनाभ्यामन्यत्र सर्वे योद्धार इत्यादि ततोऽयमर्थः । एकामालोचनां मुक्त्वा आलोचना पुनर्भवत्येवेतिभावः, एष सूत्र संक्षेपार्थः । अधुना निर्युक्तिभाष्यविस्तरः-

**[भा.८९३]** कंदप्पे परलिंगे, मूलं गुरुगा य गरुलपक्खम्मि ।
सुत्तं तु भिच्छुगादी कालक्खेवो व गमनं वा ॥

**वृ-** यदि कंदर्पेकन्दर्पतः आहारगृद्ध्यादि करणता लक्षणतः परलिङ्गं करोति । ततस्तस्मिन्परलिङ्गे कृते तस्य प्रायश्चित्तं मूलं अथ गुरुडपाक्षिकं गरुडादिरूपं परलिङ्गं करोति, । तदाश्चत्वारो गुरुकाः । चशब्दसंयतीप्रावरणापि चत्वारो गुरुका इत्यादि संसूचनार्थः अत्र पर आह-ननु सूत्रनिर्युक्त्योरनुपपत्तिः

तथा हि सूत्रेण परलिङ्गकरणमनुज्ञातं प्रायश्चित्तादानात् निर्युक्तिकृता तत् वारितं प्रायश्चित्तप्रदानात् । नैष दोषोऽभिप्राया परिज्ञानात् निर्युक्तिकृता हि कन्दर्पतः परलिङ्गकरणे प्रायश्चित्तमुक्तं, । सूत्रं पुनः कथमपि राज्ञि प्रद्विष्टे यावत्सार्थो लभ्यते, तावत्कालक्षेपः क्रियतामिति हेतोर्वा शब्दो न केवलं विकल्पार्थोऽनुक्तसमुच्चयार्थः स चैतत् समुच्चिनोति । न शक्यते सहसा विषयपरित्यागः कर्तुमिति यावत् प्रज्ञापना क्रियते गमणं वेति गमनं वाऽशिवादि कारणतो अनार्यदेशमध्येन समुपस्थितं तत एतैः कारणैर्यस्य राज्ञो ये पूज्या भिक्षुकादयः भिक्षुकाः । शौद्धोदनीयाः । आदिशब्दात्परिव्राजकपण्डरागादि-परिग्रहः । तल्लिङ्गं गृह्णीयादित्येतद्विपर्ययमतो न कश्चिद्दोषः । एनामेव गाथां भाष्यकृद् व्याख्यानयति-

[भा.८९४] खंधे दुवार संजइ गरुडद्ध सय पट्टलिंगदुवे ।
लहुओलहुओलहुया तिसु चउगुरु दोसु मूलं तु ॥

वृ- इह पूर्वार्धोत्तरार्धपदानां यथासंख्येन योजना । सा चैवं-यदि कन्दर्पतो वस्त्रं गृहस्थ इव स्कन्धे करोति तदा तस्य प्रायश्चित्तं लघुको मासः दुवारेत्ति गोपुच्छिकं करोति तदापि लघुको मासः, संयतीप्रावरणकरणे चत्वारो लघुमासाः । गरुडादिपरलिङ्गकरणे चत्वारो गुरुकाः, । अद्धंसेत्ति अर्धमंसे स्कन्धे दिगम्बर इव यदि वस्त्रस्य करोति तदापि चत्वारो गुरुकाः, । 'पट्टत्ति यदि गृहस्थ इव कटिपट्टकं बध्नाति तदापि चत्वारो गुरुकाः, । लिंगदुवे इति लिङ्गद्विकं गृहिलिङ्गं परपाषण्डलिङ्गं च तस्मिन् गृहि लिङ्गे पारपाखण्डलिङ्गे च कन्दर्पतः परिगृह्यमाणे प्रत्येकं प्रायश्चित्तं मूलम् । सम्प्रति कालक्खेवो गमनं वा इत्येतद्व्याख्यानार्थमाह-

[भा.८९५] असिवादिकारणेहिं रायदुट्ठेवि होज्ज परलिंगं ।
कालक्खेवनिमित्तं पणवणट्ठावगमणट्ठा ॥

वृ- अशिवं देवताकृत उपद्रवः, आदिशब्दादवमौदर्यादि परिग्रहस्तेषु अशिवादिषु कारणेषु गाथायां तृतीया सप्तम्यर्थे प्राकृतत्वात् तथाद्वेषणं द्विष्टं राज्ञिद्विष्टं राजद्विष्टं राज्ञःप्रद्वेष इत्यर्थः । तस्मिन् वा सति परलिङ्गं ग्राह्यं भवेत् । किमर्थमिति चेदत आह कालेत्यादि यावत्सार्थो लभ्यते तावत् खलु परलिङ्गग्रहणेन कालक्षेपः क्रियतामित्येवं कालक्षेपनिमित्तमथवा न शक्यः खलु सहसा विषयः परित्यक्तु मिति यावद्राज्ञः प्रज्ञापना क्रियते तावद्ग्राह्यं परलिङ्गमिति प्रज्ञापनार्थं यदि अशिवादिकारणेषु समुपस्थितेष्वनार्यदेशमध्ये गमनमुपजातं तच्चानार्यदेशमध्येन गमनं न परलिङ्गग्रहणमृते शक्यते कर्तुमिति गमनार्थं वा परलिङ्गग्रहणं अथ कस्य परलिङ्गंग्राह्यमित्याशङ्क्य भिक्खुगादी इत्येतद्व्याख्यानयति ।

[भा.८९६] जंजस्स अच्चियं तस्स पूयणिज्जं तमास्सिया लिंगं ।
खीरादिलद्धिजुता गमंति तं छन्नसामत्था ॥

वृ- यत् भिक्षुकादिगतं लिङ्गं यस्य राज्ञोऽर्चितं भावेक्तप्रत्ययो मान्य मित्यर्थः । तत्रार्चितमपि नावश्यं कस्याप्यनतिक्रमणीयं भवति ततोऽनतिक्रमणीयता प्रतिपादनार्थमाह-तस्य राज्ञो यत्पूजनीयं अनतिक्रमणीयं तल्लिङ्गमाश्रितास्तल्लिङ्गं प्रतिपन्नाः छन्नसामर्थ्याः परलिङ्गग्रहणेनाच्छादितस्वरूपाः तं राजानं गमयन्ति उपशमयंति । कीदृशा उपशमयन्तीत्यत आह- क्षीरादिलब्धियुक्ताः क्षीराश्रवलब्धि-सम्पन्नाः । आदिशब्दाद् विद्यामन्त्रयोगादि वशीकरणकुशला इति परिग्रहः ॥

[भा.८९७] कलासु सव्वासु सवित्थरासु आगाढपणहेसु य संथवेसु ।
जो जत्थ सत्तोतमनुपविस्से, अव्वाहतो तस्स स एव पंथा ॥

वृ- कलाद्वासप्ततिसंख्या लोकप्रसिद्धा तासु कलासु सर्वास्वपि सांवत्सरासु आगाढप्रश्नेषु चात्यन्तदुर्भेदप्रश्नेषु परिचयेषुमत्सु योराजा यत्र कलादिविशेषेसक्त आसक्तो भवति । किमुक्तं भवति? यस्य राज्ञो यस्मिन् कलादिविशेषे अत्यन्तमभिष्वङ्गो भवति तमनुप्रवेशयेयुरुक्तं सम्यक् ज्ञात्वा राज्ञः पुरतः प्रवेदयेयुः प्रवेदयन्तश्चराजानमुपशमयन्ति । यत एष तस्य राज्ञ उपशमने अव्याहतः स्वपरा विरोधीपन्थामार्गउपायः । तत्र यदीत्थमुपशान्तो भवति तदा समीचीनमथ नोपशान्तस्तत एव कलादिविशेषे तावत्प्ररूपयन्ति यावत्सार्थो लभ्यते, सार्थे च लब्धे निर्गच्छन्ति । तथा चाह-

[भा.८९८] अनुवसमंते निग्गम लिंगविवेगेन होइ आगाढे ।
देसंतरसंकमणं भिक्खुगादी कुलिंगेणं ।।

वृ- अनुपशमयति उपशममकुर्वति राज्ञि निर्गमो भवति, । कथमित्याह-लिङ्गविवेकेन लिङ्गपरित्यागेन गृहस्थलिङ्गेनेत्यर्थः । अथ तथापि न मुञ्चति गाढकोपावेशात्, तत आह आगाढे अत्यन्तप्रकोपतो गाढममोक्षणे भिक्षुकादिलिङ्गेन देशान्तर संक्रमणं कर्तव्यम् । अशिवादौ वा कारणे समुपस्थिते देशान्तरगमनं किल कर्तव्यम् । तत्र तत्र येन पथा गन्तव्यं स कीदृगित्याह-

[भा.८९९] आयरियसंकमणे परिहरंति दिट्ठंमि जाव पडिवत्ति ।
असतीए पविसणं थूभियंमि गहियंमि जा जयणा ।।

वृ- आर्येन देशेन संक्रमणं तस्मिन् स्वलिङ्गेन गन्तव्यमिति वाक्यशेषः । आर्यसंक्रमणग्रहणतो भङ्गचतुष्टयं सूचितं, । तद्यथा आर्यदेश आर्यदेशमध्येन गमनमित्येको भंगः, आर्यदेशे अनार्यदेश मध्येनेति द्वितीयः, अनार्यदेशे आर्यदेशमध्येनेति तृतीयः, अनार्यदेशे अनार्यदेश मध्येनेति चतुर्थः, तत्र प्रथम भंग अर्ध षड् विंशति जनपद मध्ये, द्वितीय भंगे आर्यदेशे मालव नामक म्लेच्छ देश मध्येन, तृतीय भंगे यथा-कुङ्कणविषये आर्यविषयमध्येन, चतुर्थभङ्गे पारसीकदेशे अनार्य देशमध्येन । इह प्रथमभङ्गेऽशिवादिकारणोपस्थितो स्वलिङ्गेन गन्तव्यम् । द्वितीय तृतीय चतुर्थभङ्गे तु परलिङ्गेन, तत्र राज्ञि प्रद्विष्टे अशिवादिकारणे वा भिक्षुकादिलिङ्गेन गच्छन् उद्गमादीन् दोषान् तेषां च लिङ्गिनामाश्रयस्थानानि परिहरति, । तथा गच्छन् यदि केनापि क्वापि ग्राम नगरादौ दृष्टो भवेत् तर्हि दृष्टे सति तेन या काचनाधिकृतलिङ्गानुशासनप्रतिपत्ति सामाचारी कर्तव्या । किमुक्तं भवति ? तत्सामाचार्यवर्तितव्यमिति । अथ तदाश्रयस्थानपरिहारेण समुदानं न लभ्यते ततो असति अविद्यमाने समुदाने प्रवेशनं तदाश्रयस्थानप्रवेशनं कर्तव्यम् । तत्र यदि तेषां प्रत्ययोत्पादनार्थं बुद्धप्रतिमा स्तूपानि वा वन्दनीयानि भवन्ति । तदा जिनप्रतिमां मनसि सम्प्रधार्य वन्दितव्यानि । भिक्षायां च स्वयं गन्तव्यम्। अथ भिक्षा न लभ्यते, ततो भिक्षुकैः सह भोक्तव्यम् । तत्र यदि पुद्गलं कन्दादिकं वा पतति तदा शरीरस्येदं ममामयकारकं वैद्येन निवारितमिति प्रतिषेधयेत् । अथ कथमपि अनाभोगतस्तद्दोषभयतो वा गृहीतं भवेत् तदा तस्मिन् गृहीते या यतना सा कर्तव्या । किमुक्तं भवति अल्पसागारिकंकथमप्यपसार्य विधिना परिष्ठापयेत् । एष गाथासंक्षेपार्थः । साम्प्रतमेनामेव गाथां विवृणोति-

[भा.९००] आयरिय देसा यरिय लिंगसंकमो एत्थ होइ चउभंगो ।
बितिय चरमेसु अन्नं असिवादि गतो करे अन्नं ।।

वृ- अशिवादिषु कारणेषु समुपस्थितेषु आर्यदेशे आर्यदेशमध्येन लिङ्गेन स्वलिंगेन संक्रमो भवति,। यन्मध्येन यत्र च गन्तव्यं तयोरुभयोरपि देशयोरार्यत्वात् अत्र च प्रागुक्तप्रकारेण चतुर्भङ्गी गाथायां

पुंस्त्वनिर्देशः प्राकृतत्वात्तत्र द्वितीयतृतीयचरमेषु भङ्गेषु अशिवादिगतः सन् अन्यत् गृहस्थलिङ्गं यदि वा यस्य देशस्य मध्येन यत्र वा देशे गन्तव्यं तत्र येऽतिप्रसिद्धाभिक्षुकादयस्तल्लिङ्गं करोति सम्प्रति परिहरतीति यदुक्तं तद्व्याख्यानयति-

**[भा.९०१]** परिहरइ उग्गमादी विहारठाणाय तेसि लिंगीणं ।
अपुव्वेसा गमितो आयरियत्तं तराइमंतु ।।

**वृ-** परिहरति उद्गमादीन् दोषान् । तथा तेषां लिङ्गिनां यानि विहारस्थानानि तानि च परिहरति । तत्र अपूर्वेषु स्थानेषु गतः सन् यदि बहिर्लिङ्गं गृहीतं तदागमेषु कुशलो भवति तदा मा केनापि लिङ्गविडम्बक इति ज्ञात्वा प्रग्रह्य इति आचार्यत्वमाचार्यकं तद्ग्रंथव्याख्यातृत्वं करोति, अथेतरस्तेषामागमेष्व कुशल स्ततः स इदं करोति, तदेवाह —

**[भा.९०२]** मोनेन गाध गाहेप, दुकुकुडे उभयओ पि अविरुद्धं ।
पच्चयहेउपणामो, जिन पडिमाउ मणे कुणति ।।

**वृ-** मौनेन वाक्संयमलक्षणेन क्रियां करोति, मौनव्रतित्वमलम्बते इत्यर्थः । यच्च विशिष्टसम्प्रदायाद्गृहीतं कुकुटविधादिना दंभ प्रयोगलक्षणं उभयतोऽपि उभयेषामपि साधुचर्याया स्तेषां च लिङ्गिनामविरुद्धं तत्करोति, । तथा समुदानासंभवे तेषामाश्रयेषु गतस्य सतस्तेषां प्रत्ययहेतोः प्रत्ययोत्पादनार्थं बुद्धप्रतिमानां स्तूपानां वा प्रमाणे करणीयतयोपस्थिते जिनप्रतिमा मनसि करोति । किमुक्तं भवति ? जिनप्रतिमा मनसि कृत्य तेषां प्रणामं करोति ।।

**[भा.९०३]** भावेति पिंडवातित्तनेन घेत्तुं च दव्वइ अपत्ते ।
कंदादि पुग्गलाण य आकारगं एयपडिसेहो ।।

**वृ-** तथा आत्मानं जनेभ्यः पिण्डपातित्वेन भावयति, ततो भिक्षा परिभ्रमणेन जीवति अथावमौदर्यदोषतः परिपूर्णो न भवति, ततो दानशालायां भिक्षुकादिभिः सह पङ्क्त्या समुपविशति । ततः परिपाट्या परिवेषणे जाते सति- अपत्ते इति अत्र प्राकृतत्वात् यकारलोपः । अयंपात्रे तद्गृहीत्वा अन्यत्र विविक्ते प्रदेशे समुद्दिशति । अथान्यत्र गत्वा समुद्देशकरणे तेषां काचित् शङ्का संभाव्यते । ततो भिक्षुकादिभिः एव सह पङ्क्त्योपविष्टः सन् समुद्दिशति । तत्र यदि सचित्तं कन्दादिपुद्गलं वा मांसापरपर्यायं परिवेषकः परिवेषयति । तदा ममेदमकारकं वैद्येन प्रतिषिद्धमिति वदता तेषां कन्दादीनां पुद्गलस्य च प्रतिषेधः कर्तव्यः । अत्रैव पुद्गल विषयेपवादमाह-

**[भा.९०४]** बितियपयं तु गिलाणो निक्खिव चंकमणादि कुणमाणो ।
लोयं या कुणमाणो कितिकम्मं वा सरीरादी ।।

**वृ-** द्वितीयपदमपवादपदं यदि भाण्डमात्रोपकरणानां निक्षेपमुपलक्षणमेतत् । आदानं प्रत्युपेक्षणादिकं च कुर्वन् तथा चङ्क्रमणादि दिशब्दादुत्थानादि परिग्रहः कुर्वन् यदि वा लोचं कुर्वन् अथवा कृतिकर्मशरीरादः कुर्वन् यदि ग्लानो भवति तदोपजीव्यं पुद्गलमिति । प्रस्तुतमनुसन्धानमाह-

**[भा.९०५]** अह पुन रुसेज्ज ही तो घेतु विगिंचए जहा विहिना ।
एवं तु तहिं जयणं कुज्जाही कारणागाढो ।।

**वृ-** अथ पुनः प्रागुक्तप्रकारेण कन्दादिपुद्गलानां प्रतिषेधे क्रियमाणे रुष्येयुरिति संभाव्यते, तर्हिगृह्णीयात् गृहीत्वा च यथाविधिना यथोक्तेन विधिना विरिंच्यात् तत् दृष्टिवंचनेनापसार्य

सूत्रोक्तविधिना परिठापयेत् उपसंहारमाह-

[भा.९०६] इति कारणेसु गहिते, परलिंगे तीरिए तहिं कज्जे ।
जयकारी सुज्झइ वियडणाए इयरो समावज्जे ।।

वृ- इति एवमुक्तेन प्रकारेण कारणेष्व शिवादिषु समुपस्थितेषु परलिङ्गेषु तीरिते च समाप्तिं नीते च कार्ये तत्र यो जयकारी यतनाकारी यथोक्तरूपां यतनां कृतवान् स विकटनया आलोचनामात्रेण शुद्धयति, यतनया सर्वदोषामपहतत्वात् । इतरो नाम येन यतना न कृता स यत् अयत्तनाप्रत्ययं प्रायश्चित्तमापद्यते तत्तस्मै दीयते ।

मू. (३२) *भिक्खूय गणाओ अवकम्म ओहावेज्जा से इच्छेज्जा दोच्चंपि तमेवगणं उवसंपज्जित्ताणं विहरित्तए नत्थिणंतस्स तप्पइयं केइच्छेदेवा परिहारेवा ननत्थएगाएसेहोवट्ठावणाए ।*

वृ- भिक्खूय गणाओ अवकम्म ओहावेज्जा से इच्छेज्जा इत्यादि अथास्य सूत्रस्य कः सम्बन्ध उच्यते-

[भा.९०७] एगयरलिंग विजढे, इइसुत्ताविणियाउ जे हेट्ठा ।
उभयजढे अपमत्तो आरंभो होइ सुत्तस्स ।।

वृ- यान्यधस्तनानि सूत्राणि पार्श्वस्थादिगतानि वर्णितानि तान्येकतरलिङ्ग विजढे एकतर-लिङ्गपरित्यागे तथाहि पार्श्वस्थादि सूत्राणि भावलिङ्गपरित्यागविषयाणि परपाषण्डप्रतिमासूत्रद्रव्य-लिङ्गपरित्यागविषयमितिशब्दो हेतौ यतोऽधस्तनानि सूत्राण्यपरलिङ्गविषयाणि ततोऽयमन्य आरंभःसूत्रस्य भवत्युभय जढे इति उभयलिङ्गपरित्यागविषयः प्रस्तावायातत्वात् । एवमनेन सम्बन्धेनायातस्यास्य व्याख्या-भिक्षुर्गणादपक्रम्य निर्गत्य अवधावेत व्रतपर्यायादवाङ्मुखी पराङ्मुखो भूत्वा गृहस्थपर्यायं प्रतिगच्छेत् ततो भावपरावृत्त्या सइच्छेत् द्वितीयमपि वारं तमेव गणमुपसम्पद्य विहर्तु नत्थिणमित्यादिनमिति खल्वर्थे निपातानामनेकार्थत्वात् नास्ति खलु तस्य कश्चिदपि च्छेदः परिहारो वा किं सर्वथा न किमपि नेत्याह- नान्यत्र एकस्याः शैक्षिकोपस्थापनायाः । किमुक्तं भवत्येका शैक्षिको-पस्थापनिका भवति मूलं भवतीत्यर्थः । एष सूत्रसंक्षेपार्थः साम्प्रतमेतदेव सूत्रं व्याचिख्यासुरपक्रम्येत्य-वधावेदिति भेदपर्यायैर्व्याख्यानयति-

[भा.९०८] निग्गमनमवक्कमणं निस्सरणपलायणं च एगट्ठा ।
लुटण लोट्टण पलोट्टण उठाणं चेव एगट्ठा ।।

वृ- निर्गमनमपक्रमणं निस्सरणं पलायनमित्येकार्थाः । लोटनं लुठनं प्रलोटनमवधावनमिति चैकार्थाः । तत्रप्रलोटनमिति लुटविलोटने इत्यस्यैव प्रपूर्वस्य पर्यायशब्दैरप्यधिकृत शब्दार्थप्रतीतिरुपजायते । तत्वभेदपर्यायैर्व्याख्येति वचनमप्यस्ति ततस्तदुपन्यास इति अथ कैः कारणैरवधावनं कुर्यादित्यवधानकारणान्याह-

[भा.९०९] विसओदएणं अहिगरणातो वयइतोव दुक्खसेज्जाए ।
इह लिंगस्स विवेगं करेज्ज पच्चक्ख परोक्खं ।।

वृ- विषयोदयेन अत्र विषयविषयो मोहः परिगृह्यते । विषयेन विषयिणो लक्षणात् । ततोऽयमर्थः विषयविषयमोहोदयेन यदि वा केनापि सह अधिकरणभावतः कलहभावतः अथवा दुःखशय्यया चतुर्विधया त्याजित इति हेतोर्लिङ्गस्य प्रव्रज्याचिह्नस्यरजोहरणस्य विवेकं परित्यागं कुर्यात्कथमित्याह ।

साधूनां प्रत्यक्षं परोक्षं वा कुत्र कुर्यादित्याह-

[भा.११०] अंतो उवस्सए छड्डणा उ बहिगामपासे वा ।
विइयं गिलाण लोए किच्चकम्मसरीरमादिसु ।।

वृ- उपाश्रयस्यान्तर्मध्ये लिंगस्स छड्डणा परित्यागः क्रियते यदि वा बहिरुपाश्रयात् । अथवा ग्राममध्ये यदि वा ग्रामस्य पार्श्वे आसन्नप्रदेशेऽथवा तत्रैवाचार्यस्य समीपे इदमवधावन-काले लिङ्गस्योज्झनं अपवादतो अवधावनाभावेऽपि भवति । तथा चाह-द्वितीयपदमपवादपदं लिङ्गस्योज्झने ग्लानलोके ग्लानजने शरीरादिषु आदिशब्दादुच्चारपरिष्ठापनापरिग्रहस्तेषु कृतकर्मणि व्यापारे तथा ग्लानस्य शरीरे विश्रामणादिकमुच्चारादि परिष्ठापनादिकं कुर्वन् खरण्टनादिभयाल्लिङ्गस्य विविक्ते प्रदेशे मोचनं भवतीति सम्प्रत्यवधावनेन लिङ्गस्योज्झने विधिविशेषमाह-

[भा.१११] उवसामिए परेण, सयं व समुट्ठिए उवठवणा ।
तक्खणा चिरकालेण व, दिठंतो अक्खभंगेण ।।

वृ- उपाश्रयान्तः प्रभृतिषु येषु स्थानेषु रजोहरणमुक्तं तेषु स्थानेषु तेभ्यः [illegible] स्मिन् स्थाने उपशामिते परेणोपशमं नीते स्वयं वा तथाविधानुकूलकर्मोदयतः उपशमं गते ततः पुनकरणतया तत्क्षणं लिङ्गोज्झनानन्तरं तत्कालं [illegible] वा दीर्घकालेन [illegible] समुत्थिते [illegible] उपस्थापना कर्तव्या नान्यथा प्रवेशनीयः । आह, यदि तेन न किञ्चिदपि प्रतिसेवितं ततः कस्मादुपस्थाप्यते । अत्र सूरिराह-दृष्टान्तोऽत्राक्षभङ्गेन यथा शकटस्याक्षे भग्ने नियमादन्योऽक्षः क्रियत एवं साधोरपि भावाक्षे भग्ने पुनरुत्थापनारूपो भावाक्ष आधीयते अक्षोधूः पुनरपि परः प्राह-

[भा.११२] मूलगुण उत्तरगुणे असेवमाणस्स तस्स अतियारं ।
तक्खण उवट्ठियस्स उ किं कारण दिज्जए मूलं ।।

वृ- मूलगुण मूलगुणविषये उत्तरगुणविषये किञ्चिदप्यतीचारं तस्याप्रतिसेवमानस्य कथम-प्रतिसेवनेत्यत आह-तत् क्षणं लिङ्गोज्झनानन्तरं तत्कालम पुनः करणतया समुत्थितस्य न भावाक्षो भग्न इति । किं कारणं तस्मै मूलं दीयते । उपस्थापना क्रियते सूरिराह-

[भा.११३] सेवउ मा व वयाणं, अइयारं तहवि देंति से मूलं ।
विगडासवा जलम्मि उ, कहं तु नावा न बोडेज्जा ।।

वृ- व्रतानां प्राणातिपातविनिवृत्यादीनामतीचारं सेवतां वा मा वा तथापि से तस्या प्रवचनोपनिषद्वेदिनो मूलं ददति । भावतोऽसंवृताश्रवद्वारतया चारित्रभङ्गात् तत्रैव प्रतिवस्तूपमया भावनामाह । वियडासवेत्यादि विकटानि अतिप्रकटानि स्थूराणीत्यर्थः । आश्रवाणि जलप्रवेशस्थानानि यस्याः सा तथारूपा सती नौः कथं तु जले प्रक्षिप्ता न निमज्जेदिति भावः । आश्रवद्वाराणामतिप्रकटानां भावादेवं साधुरपि भावतोऽनिवारिताश्रवः सन्नशुभकर्मजले निमज्जतीति भवति तस्योपस्थापनाहता ।

अत्रैव दृष्टान्तान्तरमाह-

[भा.११४] चोरिस्सामिति मतिं, जो खलु संधाइ फेडए मुद्दं ।
अहियंमि वि सो चोरो, एमेव इमं पि पासामो ।।

वृ- अहं चोरयिष्यामीति मतिं सन्धाय यः खलु मुद्रां स्फेटयति स यद्यपि तदानीमारक्षकैर्गृहीतत्वादिना कारणेन न किञ्चिदपहृतवान् तथापि तत्परिणामोपेतत्वादहृतेऽपि स चोरो भवति । एवमेव अनेनैव प्रकारेण

इममपि पश्यामः अचारित्रपरिणामोपेतत्वेना चारित्रादुपस्थापनायोग्यं पश्याम इत्यर्थः ॥

**मू. (३३)** *भिक्खू य अन्नयरं अकिच्चट्ठाणं सेवित्ता इच्छेज्जा आलोएत्तए जत्थेव अप्पणो आयरियउवज्झाए पासेज्जा, तस्संतियं आलोएज्जा पडिक्कमेज्जा निन्देज्जा गरहेज्जा विउट्टेज्जा विसोहेज्जा अकरणाए अब्भुट्ठेज्जा अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जेज्जा ।*

**मू. (३४)** *नो चेव अप्पणो आयरियउवज्झाए पासेज्जा, जत्थेव संभोइयं साहम्मियं पासेज्जा बहुस्सुयं बब्भागमं तस्संतियं आलोएज्जा जाव पडिवज्जेज्जा । नो चेव संभोइयं साहम्मियं, जत्थेव अन्नसंभोइयं साहम्मियं पासेज्जा बहुस्सुयं बब्भागमं, तस्संतियं आलोएज्जा जाव पडिवज्जेज्जा नो चेव अन्नसंभोइयं, जत्थेव सारूवियं पासेज्जा बहुस्सुयं बब्भागमं तस्संतियं आलोएज्जा जाव पडिवज्जेज्जा । नो चेव णं सारूवियं, जत्थेव सम्मंभावियाइं चेइआइं पासेज्जा, तेसंतिए आलोएज्जा जाव पडिवज्जेज्जा ।*

**मू. (३५)** *नो चेव सम्मं-भावियाइं, चेइआइं बहिया गामस्स वा नगरस्स वा निगमस्स वा रायहानीए वा खेडस्स वा कव्वडस्स वा मडंबस्स वा पट्टणस्स वा दोणमुहस्स वा आसमस्स वा संवाहस्स वा सन्निवेसस्स वा पाईणाभिमुहे वा उदीणाभिमुहे वा करयल-परिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वएज्जा :- 'एवइया मे अवराहा एवइ क्खुत्तो अहं अवरद्धो.' अरहंताणं सिद्धाणं अंतिए आलोएज्जा जाव पडिवज्जेज्जासि-त्ति बेमि ।*

**वृ.** जे भिक्खूय अन्नयरं अकिच्चट्ठाणं सेवित्ता इत्यादि । अथास्य सूत्रस्य कः सम्बन्ध उच्यते-

**[भा. ११५]** अइयारे खलु नियमेण विगडणा एस सुत्तसंबंधो ।
किंचि न तेना चिन्नं दोन्न वि लिंगा जढा जेन ॥

**वृ-** इह अनन्तरसूत्रेऽतीचार उक्तः । कोऽसावतीचार इति चेदत आह- किंचेत्यादि किंचा न तेनाचीर्णं येन द्वेपि द्रव्य भावरूपे लिङ्गे परित्यक्ते सर्वत एव तस्यातीचार इति भावः । अतीचारे च सति खलु नियमेन विकटना आलोचना भवति तदा दातव्या । तत आलोचनाप्रतिपादनार्थमिव सूत्रारंभ इति सूत्रसम्बन्धः प्रकारान्तरेण सूत्र सम्बन्धमाह-

**[भा. ११६]** अहवा हेट्ठाणंतरसुत्ते आलोयणा भवे नियमा ।
इहमवि जं निमित्तं उल्लट्टो तस्स कायव्वो ॥

**वृ-** अथवेति प्रकारान्तरे अधस्तनान्तरसूत्रे द्रव्यभावलिङ्गपरित्यागः कृतस्तन्निमित्ता नियमाद् भवत्यालोचना अन्यथा शैक्षिकोपस्थापनाया अयोगादिति प्रतिपादितं । इहापि यन्निमित्तमकृत्यं प्रतिसेवितं तस्यापवर्तः प्रत्यावर्त्तः कर्तव्यः । स चा लोचनामन्तरेण नेत्यालोचना प्रतिपाद्यते इत्यनेन सम्बन्धेनायातस्यास्य व्याख्या । भिक्षुरन्यतरत अकृत्यस्थानं सेवित्वा प्रतिसेव्य इच्छेत् आलोचयितुं स चा लोचयितुमिच्छुर्यत्रैवात्मन आचार्योपाध्यायान् पश्येत्तत्रैव गत्वा तेषामन्तिके समीपे आलोचयेदतीचारजातं वचसा प्रकटी कुर्यात् प्रतिक्रामेत् मिथ्यादुष्कृतं तद्विषयं दद्याद्यावत्कारणात् ''निन्दिज्जा गरिहिज्जा विउट्टेज्जा विसोहिज्जा अकरणयाए अब्भुट्टेज्जा । अहारिहं तवो कम्मं पायच्छित्तं पडिवज्जेज्जा' । इति परिग्रहः । तत्र निंद्यादात्मसाक्षिकं । जुगुप्सेत् गर्हेत् गुरुसाक्षिकम् । इह निन्दनगर्हणमपि तात्त्विकं तदा भवति यदा तत्करणतः प्रतिनिवर्त्तते । तत आह- विउट्टेज्जा इति तस्मादकृत्य प्रतिसेवनात् व्यावर्त्तेत निवृत्तेत, व्यावृत्तावपि कृतात्पापात्तदा मुच्यते, यदात्मनो विशोधिर्भवति, तत आह आत्मानं विशोधयेत्, पापमलस्फेटनतो निर्मली कुर्यात् । सा च विशुद्धिरपुनः करणतायामुपसंपद्यते । ततस्तामेवा

पुनः करणतामाह । अकरणतया पुनरभ्युत्तिष्ठेत् । पुनरकरणतया अभ्युत्थानेऽपि विशोधिप्रायश्चित्त-प्रतिपत्या भवति । तत आह -यथार्हं यथायोग्यं तपःकर्म तपोग्रहणमुपलक्षणं छेदादिकं प्रायश्चित्तं प्रतिपद्यते । यदि पुनरात्मीयेष्वाचार्योपाध्यायेषु सत्सु अन्येषामन्तिके आलोचयति । ततः प्रायश्चित्तं तस्य चतुर्गुरु यदि पुनरात्मन आचार्योपाध्यायान्न पश्येत् । अभावाद्दूरव्यवधानतो वा ततो यत्रैव सांभोगिकं साधर्मिकं विशिष्टसामाचारीनिष्पन्नं बहु श्रुतं छेदग्रन्थादिकुशलं उद्भामकमुद्यतविहारिणं पाठान्तरं वह्वागममर्थतः प्रभूतागमं पश्येत्तस्यान्तिके आलोचयेदत्रापि यावत्करणात् पडिक्कमेज्ञा इत्यादि पदकदम्बकपरिग्रहः । यदि पुनः तस्य भावे अन्यस्य सकासे आलोचयति तदा चतुर्लघु एवं सर्वत्रोत्क्रमकरणे वक्तव्यम् । सांभोगिकसाधर्मिकबहुश्रुताभावे असांभोगिक साधर्मिक बहुश्रुत संविग्नस्यान्तिके तस्याप्यभावे सारूपिकस्यबहुश्रुतस्यान्तिके समानं रूपं सरूपं तत्र भवः सारूपिको वक्ष्यमाणस्वरूपः । तस्याप्यभावे यत्रैव सम्यग् भावितानि जिनवचनवासितान्तः करणानि दैवतानि पश्यति । तत्र गत्वा तेषामन्तिके आलोचयेत् । तेषामप्यभावे बहिर्ग्रामस्य ग्रसति बुद्ध्यादीन गुणान् यदिवा गम्यः शास्त्रप्रसिद्धानामष्टादशानां कराणामिति ग्रामस्तस्य यावत्करणात् । ''नगरस्य वा निगमस्स वा रायहानीए वा खेडस्स वा कप्पडस्सवा पट्टणस्स वा दोणमुहस्स वा आसमस्स वा संवाहस्स वा सन्निवेसस्स वा इति परिग्रहः'' ।। तत्र न विद्यते करो यस्मिन् तत् नकरं तस्य, निगमः प्रभूतर वणिग्वर्गावासकस्तस्यवा राजाधिष्ठानं नगरं राजधानं तस्य वा पांशुप्राकार निबद्धं खेटं तस्य वा क्षुल्लकप्रकारवेष्टितं कर्बटं तस्य वा, अर्धतृतीयगव्यूतान्तर्ग्रामान्तररहितं मडम्बं तस्य वा, पत्तनं जलस्थलनिर्गमप्रवेशं यथा भृगुकच्छं । उक्तं च-

''पत्तनं शकटैर्गम्यं, घोटकैर्नौभिरेव' च ।
नौभिरेवयद्गम्यं, पट्टनं तत्प्रचक्षते ।।''

तस्य वा द्रोणमुखं जलनिर्गमप्रवेशं । यथा-'कोङ्कणदेशेस्थानकनामकं पुरं तस्य च, आकरो हिरण्याकरादिः आश्रमस्तापसावसथोपलक्षित आश्रयविशेषः तस्य वा संबाधो यात्रासमागतप्रभूत-जननिवेशस्तस्य वा, संनिवेशस्तथाविधप्राकृतलोकनिवासस्तस्य वा प्राचीनाभिमुखो वा उदीचीनाभिमुखो वा पूर्वदिगभिमुख उत्तरदिगभिमुखो वा इत्यर्थः, । इह चिरन्तनव्याकरणेषु दिश्यपिस्त्रियामभिधेयायामीनप्रत्ययः स्वार्थे भवति, तत एवं निर्देशः पूर्वोत्तरादिग्रहणमा-लोचनायामेतयोरेव दिशयोर्गर्हत्यात् करतलाभ्यां प्रकर्षेण गृहीतः करतलप्रगृहीतः तं तथा शिरस्यावर्तो यस्य स शिरस्यावर्त्तः कण्ठेकालवद लुक् समासः तं मस्तके अञ्जलिं कृत्वा एवं वक्ष्यमाणरीत्या वदेत् । तामेव रीतिं दर्शयति- एतावन्तो मे ममापराधा एतावत् कृत्वा एवावतो वारान् यावदहमपराद्ध एवमर्हतां तीर्थकृतां कथं भूतानामित्याह- सिद्धानामपगतमलकलङ्कानामन्ति के आलोचयेदित्यादि पूर्ववदेष सूत्रसंक्षेपार्थः । अधुना नियुक्तिभाष्यविस्तरः । तत्र यदुक्तमकृत्यं स्थानं सेवित्वेति तद्विषयमुपदर्शयति-

[भा.११७] अन्नयरं तु अकिच्चं मूलगुणे चेव उत्तरगुणे य ।
मूलं च सव्वदेसं एमेव य उत्तरगुणेसु ।।

वृ- अन्यतरदकृत्यं पुनः सूत्रोक्तं मूलगुणे मूलगुणविषयमुत्तरगुणे वा उत्तरगुणविषयं वा । तत्र मूलं मूलगुणविषयं सर्वं देशं वा । सर्वथा मूलगुणस्योच्छेदेन देशतो वा इत्यर्थः । एवमेवानेनैव प्रकारेण उत्तरगुणेष्वपि द्वैविध्यं भावनीयं । तद्यथा - उत्तरगुणस्यापि सर्वतो देशतो वा उच्छेदेनेति तत्रैव

व्याख्यानान्तरमाह-

**[भा.११८]** अहवा पनगादीयं मासादीयावि जाव छम्मासा ।
एवं तवारिहं खलु च्छेदादि चउण्हवेगयरं ।।

**वृ-** अथवेति अकृत्यस्थानस्य प्रकारान्तरतोपदर्शने पञ्चकादिकं रात्रिंदिवपञ्चक प्रभृति प्रायश्चित्त स्थानमकृत्यं स्थानं, यदि वा मासादि तच्च तावत् यावत् षण्मासाः । एतत्खलु अकृत्यस्थानं तपोऽर्ह तपोरूपप्रायश्चित्तार्हं यदि वा च्छेदादीनां चतुर्णां प्रायश्चित्तस्थानमकृत्यस्थानं तदेवमकृत्यस्थानं व्याख्याय सम्प्रति यथा स्वकीयाचार्योपाध्यायादीनामदर्शनं संभवति तथा प्रतिपादयति-

**[भा.११९]** आउय वाघायं वा दुल्लहगीयं च पत्तकालं तु ।
अपरक्कममासज्ज व सुत्तमिणं तू दिसा जाव ।।

**वृ-** स्वकीयानामाचार्योपाध्यायानामायुषो व्याघातोऽभवत् जीवितस्य बहुघातसंकुलत्वात् । यदि वा तस्यैवालोचकस्यायुर्यावदाचार्योपाध्यायादि समीपे गच्छति तावत् न प्रभवति स्तोकावशेषत्वात्, तत आयुषो व्याघातं वा समाश्रित्य तथा भविष्यति स कालो यत्र दुर्लभो गीतार्थः आलोचनार्हस्तत एष्यन्तं कालमधिकृत्य दुर्लभं गीतार्थं गीतार्थं वाश्रित्य तथा जङ्घाबल-परिहान्यारोगातंकेण वा जातोऽपराक्रम आलोचकस्ततस्तं वा प्रतीत्य सूत्रमिदमधिकृतं प्रवृत्तं यावद्दिशादि सूत्रम् । अत्र पर आह-ननु पूर्वमेकाकिविहारप्रतिमासूत्राणि व्याख्यातानि यथा एकाकिविहारे दोषाः, तदनन्तरं पार्श्वस्थादि विहारोऽपि प्रतिषिद्धः । ततो नियमाद्गच्छे वस्तव्यमिति नियमितं । एवं च नियमिते कथमेकाकी जातो येनोच्यते नैवात्मनमाचार्योपाध्यायान् पश्येत्तत्रैव गत्वा तेषामन्तिके आलोचयेदित्यत्र सूरिराह-

**[भा.१२०]** सुत्तमिणं कारणियं आयरियादीण जत्थ गच्छंमि ।
पंचण्हं ही असती एगो च तहिं न वसियव्वं ।।

**वृ-** सूत्रमिदमधिकृतं कारणिकं, कारणभवं कारणिकं कारणे सत्येकाकिविहारविषयमित्यर्थः । इयमत्र भावना-बहूनि खल्वशिवादीनि एकाकित्वकारणानि ततः कारणवशतो यो जात एकाकी तद्विषयमिदं सूत्रमिति न कश्चिद्दोषः अशिवादीनि तु कारणानि मुक्त्वा आचार्यादिविरहितस्य न वर्तते वस्तुं । तथा चाह-यत्र गच्छे पञ्चानामाचार्योपाध्यायगणावच्छेदि प्रवर्तिस्थविररूपाणामसद्भावो यदि वा यत्र पञ्चानामन्यतमोऽप्येको न विद्यते तत्र न वस्तव्यमनेकदोषसम्भवात् । तानेव दोषानाह-

**[भा.१२१]** एवं असुभगिलाणे परिण्णकुलकज्जमादिवग्गो उ ।
अनस्सतिससल्लस्सा जीवियघाते चरणघातो ।।

**वृ-** एवमुक्तेन प्रकारेण एकादिहीने गच्छे एकोऽशुभकार्ये मृतकस्थापनादौ अपरो ग्लान-प्रयोजनेष्वन्यः परिज्ञायां कृतभक्तप्रत्याख्यानस्य देशनादौ, अपरः कुलकार्यादौ व्यग्र इति, अन्यस्य पञ्चमस्याप्यन्त्यावस्थाप्राप्तस्य आलोचनाया असंभवेन सशल्यस्य सतो जीवितघाते जीवितनाशे चरणव्याघातश्चरणगात्रभ्रंशश्चरणभ्रंशे च शुभगतिविनाशः अत्र पर आह-

**[भा.१२२]** एवं होइ विरोहो, आलोयण परिणतो य सुद्धो उ ।
एगंतेन पमाणं परिणामो वि न खलु अम्हं ।।

**वृ-** नन्वेवं सति परस्परविरोधस्तथाहि भवद्भिरिदानीमेवमुच्यते सशल्यस्य सतो जीवितनाशे चरणभ्रंशः प्राक् चैव मुक्तमदत्तालोचनेऽप्यालोचनापरिणामपरिणतः शुद्धइति ततो भवति परस्पर

विरोधः, अत्र सूरिराह-एगंतेनेत्यादि, न खल्वस्माकं स्वशक्ति निगूहनेन यथाशक्तिप्रवृत्तिविरहितः केवलपरिणामः एकान्तेन प्रमाणं तस्य परिणामाभासत्वात्, किन्तु सूत्रं प्रमाणी कुर्वतो यथाशक्ति प्रवृत्तिसमन्वितः न चैकाद्यभावे गच्छे वसन् सूत्रमनुवर्तते । ततस्तस्य तात्विकपरिणाम एव नेति स शल्यस्य जीवितनाशे चरणनाशः । पुनरपि वक्तव्यानन्तरं विवक्षुः प्रश्नमुत्थापयति-

[भा.१२३] चोयग किं वा कारण पंचण्ह सती तहिं न वसियव्वं ।
दिट्ठंतो वाणियए पिंडिय अत्थे वसिउ कामो ।।

वृ- चोदक आह-यत्र पञ्चानां परिपूर्णानामसदभावस्तत्र न वस्तव्यमित्यत्र किं वा कारणं को नाम दोषः ? सूरिराह-अत्र अधिकृतार्थे वणिजा पिण्डितार्थेन वस्तुकामेन दृष्टान्तः उपमा, गाथायां सप्तमी तृतीयार्थे । इयमत्र भावना-कोऽपि वणिक् तेन प्रभूतोऽर्थः पिण्डितः । ततः सोऽचिन्तयत् । कुत्र मया वस्तव्यं यत्रैनमर्थं परिभुञ्जेह [य] मिति ततस्तेन परिचिन्त्येदं निश्चिक्ये;-

[भा.१२४] तत्थ न कप्पइ वासो आहारा जत्थ नत्थि पंच इमे ।
राया वेज्जो धणिमं नेवइया रूवजक्खाय ।।

वृ- तत्र मम न कल्पते वासो यत्रेमे वक्ष्यमाणाः पञ्च नाधाराः । केत इत्याह-राजा नृपतिर्वैद्यो भिषक्, अन्ये च धनवन्तो नैतिकका नीतिकारिणो रूपयक्षा धर्मपाठकाः । कस्मादिति चेदत आह-

[भा.१२५] दविणस्स जीवयस्स य वाधातो होज्ज जत्थ नत्थेते ।
वाधाए वेगतरस्स दव्वसंघाडणा अफला ।।

वृ- यत्र न सन्त्येते राजादयः परिपूर्णाः पञ्च तत्र नियमतो द्रविणस्य धनस्य जीवितस्य वा व्याघातो भवेत् । वैद्येन विना जीवितस्य, राजादिभिर्विना धनस्यव्याघातः चैकतरस्य धनस्य जीवितस्य वा द्रव्यसङ्घटना द्रव्योपार्जना विफला परिभोगस्या सम्भवादथवा-

[भा.१२६] राणा जुवराणा वा महयरय अमच्च तह कुमारेहिं ।
एएहिं परिग्गहियं, वसेज्ज रज्जं गुणविसाले ।।

वृ- राजा युवराजेन महत्तरकेनामात्येन तथा कुमारैरेतैः पञ्चभिः परिगृहीतं राज्यं गुणविशालं भवति। गुणविशालत्वाच्च तद्वसेत् । तत्र कीदृशो राजेति राजलक्षणमाह-

[भा.१२७] उभतो जोनीसुद्धो राया दसभागमेत्त संतुट्ठो ।
लोए वेदे समए कयागमो धम्मितो राया ।।

वृ- यो राजा उभययोनिशुद्धः मातृपितृपक्षपरिशुद्धः । तथा प्रजाभ्यो दश भागमात्रग्रहणसन्तुष्टः । तथा लोके लोकाचारे वेदे समस्तदर्शनिनां सिद्धान्ते समये नीतिशास्त्रे कृतागतः कृतपरिज्ञानो धार्मिको धर्मश्रद्धावान् स राजा, शेषस्तु राजाभासः, तथा-

[भा.१२८] पंचविहे कामगुणे साहीणे भुंजए निरुव्विग्गो ।
वावारविप्पमुक्को राया एयारिसो होइ ।।

वृ- पञ्चविधान् पञ्चप्रकारान् रूपरसगन्धस्पर्शशब्दलक्षणान् कामगुणान् स्वाधीनान् स्वभुजोपार्जितान् निरुद्विग्नः प्रत्यन्तराजकृतमनोदुःखासिकाया अभावात् व्यापारविप्रमुक्तो देशपरिपन्थनादिव्यापारविप्रमुक्तो युवराजादीनां तद्व्यापाराध्यारोपणा तो यः स एतादृशो राजा भवति, युवराजस्य स्वरूपमाह-

**[भा.१२९]** आवस्सयाइं काउं, सो पुव्वाइं तु निरवसेसाइं ।
अत्थाणी मज्झगतो, पेच्छइ कज्जाइं जुवराया ।।

**वृ-** यो नाम प्रातरुत्थाय पूर्वाणि प्रथमानि आवश्यकानि शरीरचिन्ता देवतार्चनादीनि निरवशेषाणि कृत्वा आस्थानिकामध्यगतः सन् कार्याणि प्रेक्षते चिन्तयति स युवराजः, महत्तरकलक्षणमाह-

**[भा.१३०]** गंभीरो मद्दवितो, कुसलो जाइ विनयसंपन्नो ।
जुवरण्णाए सहितो पेच्छइ कज्जाइं महत्तरओ ।।

**वृ-** यो गम्भीरो लब्धबुद्धिमध्यभागो मार्दवितो मार्दवोपेतः सञ्जातं मार्दवमस्येति तारकादिदर्शनादितप्रत्ययः । कुशलः सकलनीतिशास्त्रदक्षो जातिविनयसम्पन्नो युवराजेन सहितः सन् प्रेक्षते कार्याणि राज्यकार्याणि समहत्तरक इति, अमात्यलक्षणमाह-

**[भा.१३१]** सजनवयं पुरवरं चिंतंतो अत्थइ नरवतिं च ।
ववहारनीतिकुसलो, अमच्चो एयारिसो अहवा ।।

**वृ-** यो व्यवहारकुशलो नीतिकुशलश्च सन् सजनपदं पुरवरं नरपतिं च चिन्तयन्नवतिष्ठते स एतादृशो भवति अमात्यः । अथवा यो राज्ञोऽपि शिक्षां प्रयच्छति स अमात्यस्तथा चैतदेव सविस्तरं भावयिषुराह-

**[भा.१३२]** राया पुरोहितो वा संघिल्लालो नगरंमि दोवि जना ।
अंतेउरे धरिसिज्जा, अमच्चेणं खिंसिया दोवि ।।

**वृ-** राजा पुरोहितश्च [illegible] 'दोवि जनौ' द्वावपि जनौ, 'संघिल्लाउत्ति संघातवन्तौ परस्परं मद्दुकावित्यर्थः नगरे वर्तेते तौ च तथा वर्तमानावन्तःपुराभ्यां निजनिजकलत्रेण धर्षितौ अमात्येन च द्वावपि खिंसितौ, निन्दापुरस्सरं शिक्षितावित्यर्थः । एष गाथाक्षरार्थः ।। भावार्थः कथानकादवसेयस्तच्चेदम्-

'एगो राया । तस्स पुरोहितो । तेसिं दोण्हवि भज्जातो परोप्परं भगिणीतो । अन्नया तेसिं समुल्लावो जातो । रायभज्जा भणइ- 'मम वस्सो राया' । पुरोहितभज्जा भणइ- 'मम वस्सो बंभणो' तो पेच्छामो कयराए वस्सो पती, । ततो पुरोहितभज्जाए भत्तं उवसाहित्ता रन्नो भज्जा भगिनी निमंतिया । रत्तिं पुरोहियभज्जाए पुरोहितो भणितो- 'मए उवाइयं कयं जइ मम वरो अमुगो समिज्झिहि, ततो भगिणीए समं तव सिरे भायणं काउं जेमिमि सो य मे वरो संपणो, संपयं तव मूलातो पसायं मग्गामि' पुरोहितो भणति 'अनुग्गहो मे' ततो रायभज्जाए राउ भणितो- 'अज्जरत्तिं तव पिट्ठीए विलग्गिउं पुरोहियघरं वच्चामि, राया भणति 'अनुग्गहो मे' तहि सा रायं पलाणित्ता पिट्ठीए विलग्गित्ता पुरोहियघरं गंतुं पट्ठिता ऊ रुहित्ता वाहणेत्ति काउं खंभे बद्धो । ततो दोवि जनीतो पुरोहियस्स उवरि मत्थए भायणं काउं पुरोहिएण धरिज्जमाणे भायणे भुंजंति । राया खंभे बद्धो हयहेसियं करेति, भोत्तुं गया रायभज्जा । ततो रन्ना पुरोहिएणं धरिसिलोमित्ति तस्स सिरं मुंडावियं अमच्चेण तं सव्वं नायं पभाए राया पुरोहितो य खिंसितो अमुमेवार्थमाह-

**[भा.१३३]** छंदानुवत्तिं तुज्झं मज्झंवीमंसणानिवे खलिणं ।
निसिगमन मरुगथालं धरेति भुंजंति ता दोवि ।।

**वृ-** तव वा पतिर्मम वा पतिश्छन्दोनुवर्तीति न विमर्शव्यतिरेकेण ज्ञातुं शक्यते ततो मीमांसा परीक्षाकर्तुमारब्धा । तत्र राजभार्यया नृपे खलीनमारोपितं । ततो निशि रात्रौ पुरोहितगृहे गमनं, ततो मरुको ब्राह्मणः पुरोहितः शिरसास्थालं धरति । तत्र द्वावपि भुञ्जाते । एष गाथाक्षरयोजना । भावार्थोऽनन्तरमेव कथितः । अथ कथममात्यो द्वावपि तौ शिक्षितवान् तत आह-

**[भा.१३४]** पडिवेसिय रायाणो सोउमिणं परिभवंनहसिहिंति ।
थीनिज्जिनो पमत्तो वाविरज्जंपि पेल्लेज्जा ।।

**वृ-** प्रातिवेशिका नाम सीमान्तखर्तिनः प्रत्यर्थिनो राजान इदं श्रुत्वा परिभवेन परिभवोत्पादनबुद्धया हसिष्यन्ति । न केवलं हसिष्यन्ति किन्तु स्त्रीनिर्जितः प्रमत्त एष इति ज्ञात्वा राज्यमपि प्रेरयिष्यन्ति गृह्णीयुरित्यर्थः ।।

**[भा.१३५]** धितेसिं गामनगरान जेसिं इत्थी पनायगा ।
सेया वि धिक्कया पुरिसा जे इत्थीण वसंगया ।।

**वृ-** धिग् निन्दायां, तेषां ग्रामनगराणां येषां स्त्री प्रणायिका प्रकर्षेण स्वतन्त्रतया नायिका । अत्र धिग् योगे द्वितीया प्राप्तावपि षष्ठीप्राकृतत्वात् । तथा तेऽपि पुरुषा धिक्कृता धिक्कारं प्राप्तवन्तो ये स्त्रीणां वशमायत्ततां गताः । तथा -

**[भा.१३६]** 'इत्थीतो बलवंजत्थ गामेसु नगरेसु वा ।
सो गामं नगरं वापि, खिप्पमेव विनास्सइ ।।'

**वृ-** यत्र ग्रामेषुनगरेषु वा स्त्रियो बलवत्सः स ग्रामो नगरं वा क्षिप्रमेव विनश्यति । बहुवचनेनो-पक्रम्योपसंहारो जातो बहुवचनमेकवचनं च भवतीति ज्ञापनार्थः । एवमुक्ते राजा पुरोधा वा एवं मनसि सम्प्रधारयेत् यथा 'नास्माकं ग्रामेषु नगरेषु वा स्त्रियो बलवत्य' इति । तत आह-

**[भा.१३७]** इत्थीतो बलवंतत्थ गामेसुय नगरेसुय,
अनस्सा जत्थहेसंति, अपव्वंमिय मुंडणं ।।

**वृ-** तत्र तेषु ग्रामेषु नगरेषु वा स्त्रियो बलवत्यो यत्र अनश्वा हेषंति, अपर्वणिच शिरोमुंडनं, एतेन राज्ञो ह्य हेषितं प्रकटीकृतं पुरोधसश्चशिरो मुंडनं, अथ कथमेतदमात्येन ज्ञातमित्यत आह —

**[भा.१३८]** सूयग तहानु सूयग पडिसूयग सव्वसूयगा चेव ।
पुरिसा कयवित्तीया वसंति सामंतरज्जेसु ।।

**वृ-** तस्यामात्यस्य पुरुषाः कृतवृत्तयः कृतार्जीविका श्चतसृषु दिक्षु चारज्ञानार्थं सामन्तराज्येषु प्रातिवेशकराज्येषु वसन्ति । तद्यथा सूचका अनुसूचकाः प्रतिसूचकाः प्रतिसूचकाः सर्वसूचकाश्च । तत्र सूचकाः सामन्तराज्येषु गत्वा अन्तःपुरपालकैः सह मैत्रीं कृत्वा यत्तत्र रहस्यं तत्सर्वं जानन्ति । अनुसूचका नगराभ्यन्तरे चारमुपलभन्ते, प्रति सूचकानगरद्वारसमीपे अल्पव्यापारा अवतिष्ठंति, सर्वसूचकाःस्वनगरं पुनरागच्छन्ति पुनर्यान्ति तत्र येसूचकास्तैः श्रुतं दृष्टं वा सर्वमनुसूचकेभ्यः कथयन्ति अनुसूचकाः सूचक कथितंस्वयमुपलब्धं च प्रतिसूचकेभ्यः प्रतिसूचकाः अनुसूचककथितं स्वयमुपलब्धं च सर्वसूचकेभ्यः । सर्वसूचका अमात्याय कथयन्ति । यथा तस्यामात्यस्य चतुर्विधाः पुरुषाः सामन्तराज्येषु वसन्ति तथा महेला अपि । तथा चाह-

**[भा.१३९]** सूयग तहानुसूयग पडिसूयग सव्वसूयगा चेव ।
महिलाकयवित्तीया वसंति सामंतरज्जेसु ।।

**वृ-** अस्य व्याख्या प्राग्वत् । यथा च पुरुषाः स्त्रियश्च सामन्तराज्येषु समस्तेषु वसन्ति तथा सामन्तनगरेष्वपि राजधानीरूपेषु । तथा चाह-

**[भा.१४०]** सूयग तहानुसूयग पडिसूयग सव्वसूयगा चेव ।

पुरिसा कयवित्तिया वसंति सामंतनगरेसु ।।

[भा.१४१] सूयग तहानुसूयग पडिसूयग सव्वसूयगा चेव ।
महिला कयवित्तीया वसंति सामंतनगरेसु ।।

वृ- इदं गाथाद्वयमपि पूर्ववद्यथा च परराज्येषु परनगरेषु च पुरुषास्त्रियश्च वसन्ति तथा निजराज्ये निजनगरे अन्तःपुरे च ।। तथा चाह-

[भा.१४२] सूयग तहानुसूयग पडिसूयग सव्वसूयगा चेव ।
पुरिसा कय वित्तीया वसंति नियगंमि रज्जंमि ।।

[भा.१४३] सूयग तहानुसूयग, पडिसूयग सव्वसूयगा चेव;
महिला कय वित्तिया, वसंति नियगंमि रज्जंमि

[भा.१४४] सूयग तहानुसूयग पडिसूयग सव्वसूयगा चेव ।
पुरिसा कय वित्तीया वसंति नियगंमि नगरंभिम ।।

[भा.१४५] सूयग तहानुसूयग, पडिसूयग सव्वसूयगा चेव;
महिला कय वित्तीया, वसंति नियगंमि नगरंमि

[भा.१४६] सूयग तहानुसूयग पडिसूयग सव्वसूयगा चेव ।
पुरिसा कय वित्तीया वसंति अंतेउरे रन्नो ।।

[भा.१४७] सूयग तहानुसूयग सव्वसूयगा चेव ।
महिला कय वित्तीया वसंति अंतेउरे रन्नो ।।

वृ- गाथा षट्कस्यापि व्याख्या पूर्ववत् । तत एवं निजचारपुरुषमहिलाभ्यो राज्ञः पुरोधसश्च निशिवृत्तममात्यो ज्ञातवान् । तदेवं राज्ञोऽपि यः शिक्षाप्रदानेऽधिकारी सोऽमात्य इति उक्तममात्यस्य स्वरूपम् ।। अधुना कुमारस्याह-

[भा.१४८] पच्चंते खुब्भंते दुद्दंते सव्वतो दवेमाणो ।
संगामनीति कुसलो कुमार एयारिसो होइ ।।

वृ- प्रत्यन्तान् सीमासन्धिवर्तिनः क्षुभ्यतो अन्तर्भूतण्यर्थत्वात् समस्ता अपि सीमापर्यन्तवर्तिनीः प्रजाः क्षोभयतो दुर्दान्तान् दुः शिक्षितान् संग्रामनीति कुशलः सर्वतः सर्वासु दिक्षु यो दमयन् वर्तते ।। स एतादृशः कुमारो भवति । तदेवं राजयुवराजादि व्याख्यातं पञ्चकं सम्प्रति राजवैद्यादि पञ्चकं ।।

तत्र राजस्वरूपमुक्तमिदानीं वैद्यस्वरूपमाह-

[भा.१४९] अम्मापिई हि जाणियस्स आयंकपउरदोसेहिं ।
विज्जा देंति समोहिं, जहिं कया आगमा होंति ।।

वृ- मातापितृभ्यां जनितस्य तस्याधिकृतस्य वणिज आतङ्कात रोगात् ये समुत्थाः प्रचुरा दोषास्तैरुपेतस्येति गम्यते वैद्या ददति कुर्वन्ति समाधिं स्वास्थ्यं नीरोगतामित्यर्थः । यैः कृता अभ्यस्ता आगमा वैद्यकशास्त्रलक्षणा भवन्ति वर्तन्ते । उक्तं वैद्यस्वरूपम् ।। अधुना धनवतां स्वरूपमाह-

[भा.१५०] कोडिग्गसो हिरण्णं मणिमुत्तसिलप्पवालरयणाइं ।
अज्जयपिउपज्जागय एरिसया होंति धनावत्ता ।।

वृ- येषां आर्यः पितामहः, पिता प्रतीतः । प्रार्यः प्रपितामहः तेभ्य आगतं विद्यते कोट्यग्रशः,

कोटिसङ्ख्या हिरण्यं मणिमुक्ताशिलाप्रवालरत्नानि च मणयश्चंद्रकान्ताद्याः मुक्तामुक्तफलानि विद्रुमाणि रत्नानि कर्केतनादीनि ते ईदृशा भवन्ति धनवन्तः ॥

उक्तं धनवतां स्वरूपमिदानीं नैयतिकस्वरूपमाह-

[भा.९५१] सणसत्तरसादीणं धन्नाणं कुंभकोडिकोडीणं ।
जेसिंता भावणठा एरिसिया होंति नियइया ॥

वृ- सणः सप्तदशो येषां तानि सणसप्तदशानि तानि चामूनि तद्यथा-शालिः १ यवः २ कोद्रवाः ३ व्रीहि ४ रालकः ५ तिलाः ६ मुद्गाः ७ माषाः ८ चवलाः ९ चणकाः १० । तुवरी ११ मसुरकः १२ कुलत्थाः १३ गोधूमाः १४ निष्पावाः १५ अतसी १६ सणश्च १७ उक्तं च-

सालि जव कोद्दव व्रीहि रालगतिल मुग्ग मास चवल चणा ।
तुवरि मसूर कुलत्था गोहुमनिष्पाव अयसि सणा ॥

सणसप्तदशानि आदिर्येषां तानि सणसप्तदशानि, तेषां धान्यानां कुम्भकोटी कोट्यो येषां भोजनार्थं विश्राणनार्थं गृहेषु सन्ति ते एतादृशा भवन्ति नैयतिकाः, नियतिर्व्यवस्था तत्र नियुक्तास्तथा वा चरन्तीति [नै] नियतिकाः । उक्तं नियतिकस्वरूपम् ॥ अधुना रूपयक्षस्वरूपमाह-

[भा.९५२] भंभीय मासुरुक्खे माढरकोडिण दंडनीतिसु ।
अहंचपक्खगाही एरिसया रूवजक्खातो ॥

वृ- भम्भ्यायामासु[शुद ?]वृक्षे माढरे नीतिशास्त्रे कौण्डिन्यप्रणीतासु च दण्डनीतिषु ये कुशला इति गम्यते । तथा न कस्यापि लञ्चामुत्कोचं गृह्णन्ति । नाप्यात्मीयोऽयमिति कृत्वा पक्षं गृह्णन्ति ते एतादृशोऽलंचापक्षग्राहिणो रूपयक्षारूपेण मूर्त्या यक्षा इव रूपयक्षाः मूर्तिमन्तो धर्मैकनिष्ठा देवा इत्यर्थः। उक्तो वणिग् दृष्टान्तः ॥ साम्प्रतमुपनयनमाह-

[भा. ९५३] तत्थ न कप्पइ वासो गुणागरा जत्थ नत्थि पंच इमे ।
आयरिय उवज्झाए पवित्तथेरेय गीयत्थे ॥

वृ- वणिज इव राजाद्यभावे साधोरपि तत्र गच्छे वासो न कल्पते । यत्र इमे वक्ष्यमाणा गुणानामाकराः स्थानानि गुणाकराः पञ्च न सन्ति के ते इत्याह-आचार्य उपाध्यायः प्रवृत्तिः स्थविरो गीतार्थश्च । तत्र कीदृशः आचार्यस्तत्स्वरूपमाह-

[भा.९५४] सुत्तत्थ तदुभएहिं उवउत्ता नाणदंसणचरित्ते ।
गणतत्ति विप्पमुक्का एरिसया होंति आयरिया ॥

वृ- ये सूत्रार्थतदुभयरूपेता इति गम्यते । तथा सततं ज्ञानदर्शनचारित्रेसमाहारो द्वन्द्वः ज्ञानदर्शनचारित्रेषु उपयुक्ताः कृतोपयोगास्तथा गणस्य गच्छस्य या तप्तिः सारा तया विप्रमुक्ता गणावच्छेदप्रभृतीनां ततत्तेः समर्पितत्वात्, उपलक्षणमेतत्, शुभलक्षणोपेताश्च य एतादृशा भवन्त्याचार्याः । ते चार्थमेव केवलं भाषन्ते न तु सूत्रमपि वाचयन्ति तथा चोक्तम्-

सुत्तत्थविऊ लक्खणजुत्तो गच्छस्स मेंटि[ढि]भूतो य ।
गणतत्ति विप्पमुक्को अत्थं भासेइ आयरिओ ॥

अथ किं कारणमाचार्याः स्वयं सूत्रं न वाचयन्ति । तत आह-

[भा.९५५] एगग्गया य ज्झाणं वुड्ढी तित्थयर अनुगई गरुया ।

आणाथेज्जमितिगुरु, कयरिणमोक्खोन न वाएइ ।।

वृ- सूत्रवाचनाप्रदानपरिहारणार्थमेव केवलं व्याख्यानाय आचार्यस्य एकाग्रता एकाग्रमनस्कता ध्यानेऽर्थचिन्तनात्मके भवति । यदि पुनः सूत्रमपि वाचयेत्तदा बहुव्यग्रत्वादर्थचिन्तायामेकाग्रता न स्यात्, एकाग्रतयापि को गुण इत्यत आह- वृद्धिः एकाग्रस्य हि सतोऽर्थं चिन्तयतः सूत्रार्थस्य । तत्र सूक्ष्मार्थोन्मीलनात् वृद्धिरुपजायते तथा तीर्थकरानुकृतिरेवं कृता भवति । तथा हि तीर्थकृतो भगवन्तः किलार्थमेव केवलं भाषन्ते, न तु सूत्रं नापि गणतप्तिं कुर्वन्ति । एवमाचार्या अपि तथा वर्तमानास्तीर्थकरानुकारिणो भवन्ति । सूत्रवाचनां तु प्रयच्छतामाचार्याणां लाघवमप्युपजायते तद्वाचनायास्ततोऽधस्तनपदवर्तिभिरप्युपाध्यायादिभिः क्रियमाणत्वादेवं तस्य तथा वर्तमानस्य लोके राज्ञ इव महती गुरुता प्रादुर्भवति तद्गुरुतायां च प्रवचनप्रभावना तथा आज्ञायां स्थैर्यमाज्ञास्थैर्यं कृतं भवति तीर्थकृतामेवमाज्ञा पालिता भवतीत्यर्थः । इयं हि तीर्थकृतामाज्ञा यथोक्तप्रकारेणममानुकारिणा आचार्येण भवितव्यमिति । इत्यस्मात् हेतुकलापात्गुरुराचार्यः कृतः ऋणमोक्षो येन स कृतऋणमोक्षस्तेन हि सामाचार्यमनेके साधवः सूत्र मध्यापिताः कृत ऋणमोक्षः कृतत्वात्सूत्रं न वाचयति

उक्तमाचार्यस्वरूपमिदानीमुपाध्यायस्वरूपमाह-

[भा.१५६] सुत्तत्थतदुभयविऊ उज्जुत्ता नाणदंसणचरित्ते ।
निप्फायगसिस्साणं एरिसया होंति उवज्झाया ।।

वृ- ये सूत्रार्थ तदुभयविदो ज्ञानदर्शनचारित्रेषूद्युक्तास्तथा शिष्याणां सूत्रवाचनादिना निष्पादका एतादृशा भवन्ति उपाध्यायाः ।। उक्तं च-

संमत्तनाणसंजम, जुत्तोसुत्तत्थतदुभय विहिन्नू ।
आयरियठाणजोग्गो सुत्तं वाएइ उवज्झातो ।।

अथ कस्मात्सूत्रमुपाध्यायो वाचयति तदुच्यते-अनेकगुणसंभावत्तानेवाह-

[भा.१५७] सुत्तत्थेसु थिरत्तं, ऋणमोक्खो आयतीतं पडिबंधो ।
पाडिच्छेमोहजओ, तम्हा वाए उवज्झातो ।।

वृ- उपाध्यायः शिष्येभ्यः सूत्रवाचनां प्रयच्छन् स्वयमर्थमपि परिभावयति सूत्रेऽर्थे च तस्य स्थिरत्वमुपजायते । तथान्यस्य सूत्रवाचनाप्रदानेन सूत्रलक्षणस्य ऋणस्य मोक्षःकृतो भवति । तथा आयत्यामागामिनि काले आचार्यपदाध्यासे प्रतिबन्धोऽत्यन्ताभ्यस्ततया यथावस्थतया स्वरूपस्य सूत्रस्यानुवर्तनं भवति । तथा पाडिच्छेति येऽन्यतो गच्छान्तरादागत्य साधवस्तत्रोपसम्पदं गृह्णते ते प्रतीच्छका उच्यन्ते । ते च सूत्रवाचनाप्रदानेनानुगृहीता भवन्तीति वाक्यशेषः । तथा मोहजयः कृतो भवति । सूत्रवाचनादानव्यग्रस्य सतः प्रायश्चित्तविश्रोतसिकाया अभावात् । यत एवं गुणास्तस्मा-दुपाध्यायः सूत्रं वाचयेत् । पाठान्तरं 'तम्हा उ गणीउ वाएत्ति' अत्रापि स एवार्थो नवरं गणी उपाध्यायः ।

उक्तमुपाध्यायस्वरूपमधुना प्रवर्तिस्वरूपमाह-

[भा.१५८] तवनियमविनयगुणनिहि, पवत्तया नाण दंसणचरित्ते ।
संगहुवग्गहकुसला पवत्ति एयारिसा होंति ।।

वृ- तपो द्वादशप्रभेदं नियमा विचित्रा द्रव्याद्यभिग्रहाः । विनयो ज्ञानादिविनयः । तपोनियमविनया एव गुणास्तेषां निधय इव तपोनियमभिनयगुणनिधयस्तेषां प्रवर्तकाः । तथा ज्ञानदर्शनचारित्रेषु उद्युक्ताः

सततोपयोगवन्त इति वाक्यशेषः । तथा संग्रहः शिष्याणां सङ्ग्रहणमुपग्रहस्तेषामेव ज्ञानादिषु सीदतामुपष्टम्भकरणं तयोः सङ्ग्रहोपग्रहयोः कुशला एतादृशा एवंरूपाः प्रवर्त्तिनो भवन्ति । यथोचितं प्रशस्तयोगेषु साधून् प्रवर्त्तयंतीत्येव शीलाः प्रवर्त्तिनः इति व्युत्पत्तेस्तथाचाह-

**[भा.९५९]** संजम तव नियमेसुं जो जोगो तत्थतं पवत्तेति;
असहूय नियत्तंतो, गणतत्तील्लो पवत्तीओ ॥

**वृ-** तप संयमनियम योगेषु मध्ये यो यत्र योग्यस्तं तत्र प्रवर्तयन्ति असहांश्चासमर्थांश्च निवर्तयन्ति । एवं गणतप्तिप्रवृत्ताः प्रवर्तिनः उक्तं प्रवर्तिस्वरूपमधुना स्थविरस्वरूपमाह-

**[भा.९६०]** संविग्गो मद्दवितो पियधम्मो नाणदंसणचरित्ते ।
जे अट्ठेपरिहायति सारेंतो तो हवइ थेरो ॥

**वृ-** यः संविग्नो मोक्षाभिलाषी मार्दवितः संजातमार्दवः प्रियधर्मा एकान्तवल्लभः संयमानुष्ठाने यो ज्ञानदर्शनचारित्रेषु मध्ये यानर्थान् उपादेयान् अनुष्ठानविशेषान् परिहापयति हानिं नयति तान् संस्मारयन् भवति स्थिरः । सीदमानान् साधून् ऐहिकामुष्मिकापायप्रदर्शनतो मोक्षमार्गे स्थिरी करोतीति स्थविर इति व्युत्पत्तेस्तथा चाह-

**[भा.९६१]** थिरकरणा पुन थेरो, पवत्ति वावारिएसु अत्थेसु ।
जो जत्थ सीयइ जई, संतबलो तं पचोदेति ॥

**वृ-** प्रवर्तिव्यापारितेष्वर्थेषु यो यत्र यतिः सीदति सत् विद्यमानं बलं यस्य स सद्बलः तथाभूतः सन् प्रचोदयति प्रकर्षेण शिक्षयति, स स्थिरकरणात् स्थविर इति उक्तं स्थविरस्य स्वरूपम् ।

अधुना गीतार्थस्य स्वरूपमाह-

**[भा.९६२]** उद्धावणा पहावण खेत्तोवहिमग्गणासु अविसादी ।
सुत्तत्थ तदुभयविऊ गीयत्था एरिसा होंति ॥

**वृ-** उत्प्राबल्येन धावनमुद्धावनं प्राकृतत्वाच्च स्त्रीत्वनिर्देशः । किमुक्तं भवति ? तथाविधे गच्छे प्रयोजने समुत्पन्ने आचार्येण सन्दिष्टो असन्दिष्टो वा आचार्यान् विज्ञप्य यथैतत्कार्यमहं करिष्यामीति तस्य कार्यस्यात्मानुग्रहबुद्धयाकरणं उद्धवनं शीघ्रं तस्य कार्यस्य निष्पादनं प्रधावनं क्षेत्रमार्गणा क्षेत्रप्रत्युपेक्षणा उपधि[धे]रुत्पादनं एतासु येऽविषादिनो विषादं न गच्छंति, तथा सूत्रार्थतदुभयविदः अन्यथा हेयोपादेयपरिज्ञानायोगात् ते एतादृशा एवंविधा गीतार्था गणावच्छेदिन इत्यर्थः । एवमाचार्यादिपञ्चकसमेते गच्छे वस्तव्यं यदि पुनः कथञ्चिदपराधप्राप्तो भवति गच्छश्च पञ्चकपरिहीनस्तदायं दृष्टान्तः-

**[भा.९६३]** जह पंचकपरिहीनं रज्जं डमरभयचोर उव्विग्गं ।
उग्गहिय सगडपिडगं परंपरं वच्चए सामिं ॥

**वृ-** यथा राज्यं राजादिपञ्चकं परिहीनं सन्तं डमरः स्वदेशोत्थो विप्लवः, भयं परचक्रेण समुत्थं, तस्कराश्चौरास्तैरुद्विग्नमुपगतं परित्यज्य आत्मीयं च शकटपिटकमुद्गृह्य परम्परं स्वामिनं द्राग् व्रजति यत्र स्वास्थ्यं लभते;-

**[भा.९६४]** इय पञ्चक परिहीने गच्छे आवन्नकारणे साहू ।
आलोयणमलहंतो परंपरं वच्चए सिद्धे ॥

वृ- इति एवमनेन दृष्टान्तप्रकारेण पञ्चकपरिहीने आचार्यादिपञ्चकविरहिते गच्छेतत् प्रायश्चित्तस्थानमापन्नः साधुः कारणेन प्रागुक्ते आयुर्व्याघातादिरूपेण निजाचार्यादीनामन्तिके आलोचनामलभमानः सूत्रोक्त्या नीत्या परम्परमन्यसांभोगिकादिकं तावद्व्रजति यावत्सिद्धान् गच्छति एतदेव सविशेषमाह-

[भा.१६५] आयरिए आलोयण, पंचण्हं असति गच्छ बहिया जो ।
वच्चंइ चउलहुगा, गीयत्थे होति चउ गुरुगा ।।

वृ- आचार्ये आचार्यसमीपे आलोचना दातव्या, । गच्छे पञ्चानामाचार्यादीनामसतिगच्छा-द्वहिर्गन्तव्यम् । इयमत्र भावनाप्रायश्चित्तस्थानमापन्नेन साधुना नियमतः स्वकीयानामाचार्याणां समीपे आलोचयितव्यम् । तेषामभावे उपाध्यायस्य, तस्याप्यभावे प्रवर्तिनस्तस्याप्यभावे स्थविरस्य, तस्याप्यभावे गणावच्छेदिनः । अथ स्वगच्छे पञ्चानामप्यभावस्ततो बहिरन्यस्मिन् सांभोगिके गन्तव्यम् तत्राप्याचार्यादिक्रमेण आलोचयितव्यम् । सांभोगिकानामाचार्यादीनामभावे संविग्नानामसांभोगिकानां समीपे गन्तव्यम् । तत्रा प्याचार्यादिक्रमेणालोचना प्रदातव्या । यदा पुनरुक्तक्रमोल्लङ्घनेनालोचनां प्रयच्छति । तदा प्रायश्चित्तं चतुर्लघु । तथा चाह- वच्चंइ चउ लहुगा इति व्यत्यये विपर्यासे उक्तक्रमोल्लङ्घने इत्यर्थः । चत्वारो लघुका लघुमासाः यदि पुनरुक्तक्रममुल्लङ्घयन् अगीतार्थसमीपे आलोचयति । तदा प्रायश्चित्तं चतुर्गुरु एतदेवाह- गीयत्थे होंति चउगुरुगा । तदेवं संविग्नानां सांभोगिकान् यावत् विधिरुक्तः सम्प्रति शेषान् प्रतिविधिमाह-

[भा.१६६] संविग्गे गीयत्थे सरूवी पच्छाकडे य गीयत्थे ।
पडिक्कंते अब्भुट्ठिय असती अन्नत्थ तत्थेव ।।

वृ- संविग्ने अन्यसांभोगिकलक्षणे असति अविद्यमाने पार्श्वस्थस्य गीतार्थस्य समीपे आलोचयितव्यम् । तस्मिन्नपि गीतार्थे पार्श्वस्थे असति सारूपिकस्य वक्ष्यमाण स्वरूपस्य गीतार्थस्य समीपे तस्मिन्नपि सारूपिके असति पश्चात्कृते पश्चात्कृतस्य गीतार्थस्य समीपे आलोचयितव्यम् । एतेषां च मध्ये यस्य पुरत आलोचना दातुमिष्यते । तमभ्युत्थाप्य तदनन्तरंतस्य पुरत आलोचयितव्यम् । अभ्युत्थापनं नाम वन्दनक प्रतीच्छनादिकं प्रत्यभ्युपगमकारापणा । तथा चाह- पडिक्कंते अब्भुट्ठियत्ति अभ्युत्थिते वन्दना प्रतीच्छनादिकं प्रतिकृताभ्युपगमे प्रतिक्रान्तो भूयात् नान्यथा । अथ ते पार्श्वस्थादय आत्मानं हीनगुणं पश्यन्तो नाभ्युत्तिष्ठन्ति । तत आह । असतित्ति असति अविद्यमाने अभ्युत्थाने पार्श्वस्थादीनां निषद्यामारचय्य प्रणाममात्रं कृत्वालोचनीयमितरस्य तु पश्चात्कृतस्य इत्वरसामायिकारोपणं लिङ्गप्रदानं च कृत्वा यथाविधि तदन्तिके आलोचनीयम् । अन्नत्थ तत्थेवत्ति यदि पार्श्वस्थादिकोऽभ्यु-त्तिष्ठति तदा तेनान्यत्र गन्तव्यं येन प्रवचनलाघवं न भवति । तत्र च गत्वा समापन्नप्रायश्चित्तं शुद्धतपो वाहयति । मासादिमुत्कर्षतः षण्मासपर्यवसानं यदि वा प्रागुक्त स्वरूपं परिहारतपः अथ स नाभ्युत्तिष्ठति शुद्धं च तपः तेन प्रायश्चित्तं दत्तं ततस्तत्रैव तपो वहति । एतदेव सति इत्यादिकं व्याख्यानयति ।

[भा.१६७] असतीए लिंगकरणं सामाइय इत्तरं कितिकम्मं ।
तत्थेव य सुद्धतवो गवेसणा जाव सुह दुक्खे ।।

वृ- असति अविद्यमाने पश्चात्कृतस्याभ्युत्थाने गृहस्थत्वात् लिङ्गकरणं इत्वरकालं लिङ्गसमर्पणं तथा इत्वरमित्वरकालं सामायिकमारोपणीयं । ततस्तस्यापि निषद्यामारचय्य कृतिकर्मवन्दनं कृत्वा तत्पुरत

आलोचयितव्यं । तदेवमसतीति व्याख्यातमधुना तत्थवत्ति व्याख्या - यदि पार्श्वस्थादिको नाभ्युत्तिष्ठति शुद्धं च तपस्तेन प्रायश्चित्त तया दत्तं ततस्तत्रैव तत् शुद्धं तपो वहति यावत्तपो वहति तावत्तस्यालोचनाप्रदायिनः सुखदुःखे गवेषयति, सर्वमुदन्तं वहतीत्यर्थः पश्चात्कृतागतमेव विधिमाह-

**[भा.९६८]** लिंगकरणं निसेज्जा कितिकम्ममनिच्छतो पणामो च ।
एमेव देवयाए नवरं सामाइयं मोत्तुं ॥

**वृ-** पश्चात्कृतस्येत्वरकालसामायिकारोपण पुरस्सरमित्वरकालं लिङ्गकरणं रजोहरणसमर्पणं तदनन्तरं निषद्याकरणं । ततः कृतिकर्म वन्दनकं दातव्यम् । अथ स वन्दनकं नेच्छति ततस्तस्य कृतिकर्मा निच्छतः प्रणामो वाचा कायेन च प्रणाममात्रं कर्तव्यं पार्श्वस्थादेरपि कृतिकर्मानिच्छायां प्रणामः कर्तव्यः । एवमेव अनेनैव प्रकारेण देवताया अपि सम्यक्त्व भाविताया: पुरतः आलोचयति । नवरं सामायिकारोपणं लिङ्गसमर्पणं च न कर्तव्यमविरतत्वेन तस्यास्तद्योग्यताया अभावात् ।

यदुक्तं 'गवेषणा जाव सुहदुक्खे' इति तद्व्याख्यानयति-

**[भा.९६९]** आहार उवहि सेज्जा एसणमादीसु होइ जइयव्वं ।
अनुमोयण कारावण सिक्खत्ति पयम्मित्तो सुद्धो ॥

**वृ-** आहारः पिण्ड उपधिपात्रनिर्योगादिः शय्या वसतिरेषणाशब्दः प्रत्येकमभिसम्बध्यते । आहारैषणायामुपध्येषणायां शय्यैषणायामादिशब्दाद्विनयवैयावृत्यादिषु च भवति तेन यतितव्यम् । कथमित्याह- अनुमोदनेन कारापणेन च । किमुक्तं भवति ? यदि तस्यालोचनार्हस्य कश्चिदाहारादीन् उत्पादयति ततस्तस्यानुमोदनाकरणतः प्रोत्साहने यतते अथान्यः कश्चिन्नोत्पादयतिततः स्वयमालोचक आहारादीन् शुद्धानुत्पादयति । अथ शुद्धं नोत्पाद्यते ततः श्राद्धान् प्रोत्साह्याकल्पिकानप्याहारादीन् यतनया उत्पादयतीति । अथाकल्पिकानाहारादीनुत्पादयतः तस्य महती मलिनतोपजायते । अथ च स शुद्धिकरणार्थं तदन्तिकमागतस्ततः परस्पर विरोधः । अत्राह- सिक्खत्ति पयंमितो सुद्धो यद्यपि नाम तस्यालोचनार्हस्यार्थाया कल्पिकानप्याहारादीनुत्पादयति । तथाप्यासेवनाशिक्षा तस्यान्तिके क्रियते । बितियपदे अपवादपदे स तथा वर्तमानः शुद्ध एव तदेव भावयति-

**[भा.९७०]** चोइय से परिवारं अकरेमाणे भणइ या सड्ढे ।
अव्वोच्छित्ति उ सुयभत्तीए कुणहपूर्य ॥

**वृ-** प्रथमतः स तस्यालोचनार्हस्य परिवारं वैयावृत्यादिकमकुर्वन्तं चोदयति शिक्षयति । तथा ग्रहणा सेवना शिक्षा निष्णात एव तत एतस्य विनयवैयावृत्यादिकं क्रियमाणं महानिर्जराहेतुरिति । एवमपि शिक्षमाणो यदि न करोति ततस्तस्मिन्नकुर्वाणे स्वयमाहारादीनुत्पादयति । अथ स्वयं शुद्धं प्रायोग्यमाहारादिकं न लभते ततः श्राद्धान् भणति प्रज्ञापयति । प्रज्ञाप्य च तेभ्योऽकल्पिकमपि यतनया सम्पादयति । न च वाच्यं तस्यैवं कुर्वतः कथं न दोषो यत आह- अव्वोच्छित्तीत्यादि । अव्यच्छित्तिकस्य पार्श्वस्थादेः श्रुतभक्तिहेतुभूतया अकल्पिकस्याप्याहारादेः संपादनेन श्रुतभक्त्या पूजां कुरुत यूयं न च तत्र दोष एवमत्रापि । इयमत्र भावना- यथा कारणे पार्श्वस्थादीनां समीपे सूत्रमर्थं च गृह्णानोऽकल्पिकमप्याहारादिकं यतनया तदर्थं प्रतिसेवमानः शुद्धो ग्रहणशिक्षाया क्रियमाणत्वा-देवमालोचनार्हस्यापि निमित्तं प्रतिसेवमानः शुद्ध एव आसेवना शिक्षायाः तत्समीपे क्रियमाणत्वादिति एतदेव स्पष्टतरं भावयति-

[भा.१७१] दुविहा सती एतेसिं आहारादि करेइ सव्वेसिं ।
पणहानीए जयंती अलद्धाए वि एमेव ।।

वृ- इह परिवाराभावे तस्यालोचनार्हस्य कर्तव्यमिति सामाचारी च तस्य पार्श्वस्थर्दःना, दुविहा असती इति परिवाराभावो द्विविधः विद्यमानाभावोऽविद्यमानाभावश्च । विद्यमानः सन् अभावोऽसन् वैयावृत्यादेरकरणात् विद्यमानाभावः । अविद्यमानसन्नभावो विद्यमानाभावः । तत्र द्विविधेऽप्यभावे से तस्यालोचनार्हस्याहारादिकं सर्वं कल्पिकमकल्पिकं वा यतनया करोति उत्पादयति । यतनया कथमकल्पिकमुत्पादयति इति चेदत आह-पञ्चकहान्या यतमानः । किमुक्तं भवति ? अपरिपूर्णं मासिकप्रायश्चित्तस्थानप्रतिसेवनापत्तौ गुरुलाघवपर्यालोचनया पञ्चकादि पञ्चकहीनमासिक-प्रायश्चित्तस्थानप्रतिसेवनां करोति । तामपि यतनया पञ्चकग्रहणमुपलक्षणं तेन दशादिहान्यापि यतमान इति द्रष्टव्यम् । एवं सर्वत्र न केवलमालोचनार्हार्थमेवं यतते किन्तु कारणे समुत्पन्ने आत्मार्थमप्येवमेव पञ्चकहान्या यतत इति । यदुक्तं सम्यक्त्वभाविताया: पुरतः आलोचयितव्यमिति तदेतद्भावयति-

[भा.१७२] कोरंटगं जहा भावियद्धमं पुच्छिऊण वा अन्नं ।
असति अरिहंत सिद्धे जाणंतो सुद्धो जा चेव ।।

वृ- कोरण्टकं नाम भरुकच्छे उद्यानं, तत्र भगवान्मुनिसुव्रतस्वाम्यर्हन्नभीक्ष्णं समवसृतस्तत्र तीर्थकरेण गणधरैः च बहूनां बहूनि प्रायश्चित्तानि च दीयमानानि तत्रत्यता देवतया दृष्टानि ततः कोरण्टकं गत्वा तत्र च सम्यक्त्वभावितदेवताराधनार्थमष्टमं कृत्वा तत्र च सम्यक्कंपिताया देवतायाः पुरतो यथोचितप्रतिपत्तिपुरस्सरमालोचयति । सा च प्रयच्छति यथार्हं प्रायश्चित्तं, । अथ सा देवता कदाचित् च्युता भवेत् पश्चादन्या समुत्पन्ना तया च न दृष्टस्तीर्थकरस्ततः साष्टमेनाकंपिता ब्रूतेमहाविदेहे तीर्थकरमापृच्छ्य समागच्छामि । ततः सा तेनानुज्ञाता महाविदेहे गत्वा तीर्थकरं पृच्छति पृष्ट्वा च समागत्यसाधवे प्रायश्चित्तं कथयति यथा च कोरण्टकमुद्यानमुक्तमेवं गुणशिलादिकमपि द्रष्टव्यम् । तत्राप्यभीक्ष्णं वर्धमानसाम्यादीनां समवसरणात् तासामपि देवतानामभावेऽर्हत्प्रतिमानां पुरतः स्वप्रायश्चित्तदानपरिज्ञानकुशल आलोचयति । ततः स्वयमेव प्रतिपद्यते । प्रायश्चित्तं तासामप्यभावे प्राचीनादिगभिमुखोऽर्हतः सिद्धानभिसमीक्ष्य जानन् प्रायश्चित्तदानविधिं विद्वान् आलोचयति । आलोच्य च स्वयमेव प्रतिपद्यते प्रायश्चित्तं । स च तथाप्रतिपद्यमानः शुद्ध एव सूत्रोक्तविधिना प्रवृत्तः यदपि च विराधितं तत्रापि शुद्धः प्रायश्चित्तप्रतिपत्तेरिति । कोरण्टकं जहेत्यत्र यथाशब्दोपादानात् कोरण्टकसमुद्दिशितानान्यप्युद्यानानि सूचितानीति प्रकटयितुमाह-

[भा.१७३] सोहीकरणा दिट्ठा गुणसिलमादीसु जह य साहूणं ।
तो देंति विसोहीतो पच्चुप्पणाय पुच्छंति ।।

वृ- गुणसिलासूद्यानेषु याभिर्देवताभिः साधूनां तीर्थकरैर्गणधरैश्चानेकशो विधीयमानानि शोधिकरणानि दृष्टानि, ताः स्वयं ददति प्रयच्छन्ति विशोधीः प्रायश्चित्तानि याः पुनः प्रत्युत्पन्ना देवतास्तो महाविदेहेषु गत्वा तीर्थकरान् पृच्छन्ति पृष्ट्वा च साधुभ्यः कथयन्ति ।।

उद्देशकः -१- समाप्तः

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता व्यवहार सूत्रे (भद्रबाहुस्वामिरचिता निर्युक्ति युक्तं) संघदास गणि विरचितं भाष्यं एवं मलयगिरि आचार्येण विरचिता टीका परिसमाप्ता ।**

## उद्देशकः २

वृ- साम्प्रतं द्वितीयआरभ्यते । तस्य चेदमादिसूत्रम्

मू. (३६) *'दो साहम्मिया एगओविहरंति एगंतत्थ अन्नतरं अकिच्चट्ठाणं पडिसेवित्ता आलोएज्जा ठवणिज्जंठवइत्ता करणिज्जं वेयावडियं ।*

वृ. अथास्य सूत्रस्य सम्बन्ध उच्यते-

[भा. १७४] अब्भुट्ठियस्स पासंमि, वहंतो जइ कयाइ आवज्जे ।
अत्थेनेव उ जोगो पढमाओ होति बितियस्स ।।

वृ- गो... ...स्थानि... ...र्श्वे प्रायश्चित्ततपो वहन् यदि कदाचिद्भूयोऽपि तपोऽर्हं प्रायश्चित्तमापद्यते तदपि नियमादालोचयितव्यमिति तदालोचनानेन प्रतिपाद्यते । एषोऽर्थेनार्थमाश्रित्य प्रथमादुद्देशकादनन्तरस्यास्य द्वितीयस्योद्देशकस्य योगः सम्बन्धः ।।

अत्रैव प्रकारान्तरमाह-

[भा. १७५] अहवा एगस्स विहीउ त्तो नेगाण होइ अयमन्नो ।
आइण्णविगडिएवा पट्ठवणा एस संबंधो ।।

वृ- अथवेति सम्बन्धस्य प्रकारान्तरतोपप्रदर्शने पूर्वमेकस्य प्रायश्चित्तदानविधिरुक्तः । साम्प्रत-मयमनेकेषामन्यः प्रायश्चित्तदानविधिः । अथवा यदाचीर्णं प्रतिसेवितं तस्मिन् विकटिते आलोचिते प्रस्थापनाप्रायश्चित्तदानं भवति । ततः प्रायश्चित्तदानप्रस्तावादस्य सूत्रस्योपनिपात इत्येप सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-द्वौसाधर्मिकौ संविग्नसांभोगिकादिरूपावेकत एकस्मिन् स्थाने समुदितौ विहरतः । तत्रैकोऽन्यतरत् अकृत्यं स्थानं प्रतिसेव्य आलोचयेत् । तत्र यद्य गीतार्थः प्रतिसेवितवान् । ततस्तस्मै शुद्धतपो दातव्यमथ गीतार्थस्तर्हि यदि परिहारतपो योग्यमापन्नस्ततः परिहारतपो दद्यात् । तदनन्तरं स्थाप्यते विविक्तं कृत्वा प्ररूप्यते इति स्थापनीयं परिहारतपो-योग्यमनुष्ठानं, तत् स्थापयित्वा प्ररूप्य य आपन्नः स परिहारतपः प्रतिपद्यते । इतरः कल्पस्थितो भवति । स एव च तस्यानुपारिहारिकः ततस्तेन तस्य करणीयवैयावृत्यमित्येप सूत्रसंक्षेपार्थः । अधुना निर्युक्तिविस्तरः-

[भा. १७६] दो साहम्मिय छ बारसेव लिंगंमि होइ चउभंगो ।
चत्तारि विहारम्मि उ दुविहो भावम्मि भेदोउ ।।

वृ- द्विशब्दस्य साधर्मिक शब्दस्य च यथाक्रमं षट् द्वादश नामादयो निक्षेपाद्विशब्दस्य षट्कः साधर्मिकशब्दस्य द्वादशको निक्षेप इत्यर्थः लिङ्गे लिङ्गविषये चतुर्भङ्गी भवति । सूत्रे च पुंस्त्वनिर्देशः प्राकृतत्वात् । तथा विहारे चत्वारो नामादयो निक्षेपाः । तत्र भावे द्विविधो भेदः । एष द्वारगाथासंक्षेपार्थः । व्यासार्थं च प्रतिपदमभिधित्सुः प्रथमतो द्विशब्दस्य षट्क निक्षेपमाक्षिपन्नाह-

[भा. १७७] नामं ठवणा दविए खेत्ते काले य होइ बोधव्वो ।
भावेय दुगे एसो निक्खेवो छव्विहो होइ ।।

वृ- नामद्विकं स्थापनाद्विकं द्रव्ये द्रव्यविषयं द्विकं द्रव्यद्विकं, एवं क्षेत्रद्विकं कालद्विकं च भवति बोद्धव्यम् । तथा भावे च भावविषयं च द्विकमेव द्विकं द्विशब्दस्य षट्को भवति निक्षेपः । तत्र नामद्विकं द्वे नामनी अथवा यस्य द्विकमिति नामतत् नामद्विकं । स्थापनाद्विकं द्वे स्थापने, द्विकस्य स्थापना वा

स्थापना द्विकम् । सम्प्रति द्रव्यक्षेत्रकालद्विकप्रतिपादनार्थमाह-

[भा.१७८] चित्तमचित्तं एक्केक्कयस्य जे जत्तियाउ दुभेया ।
खेत्ते दुपएसादी दुसमयाती उ कालंमि ।।

वृ- द्रव्यद्विकं द्विविधमागमतो नोआगमतश्च । तत्रागमतो द्विकशब्दार्थज्ञाता तत्र चानुपयुक्तः; नोआगमतस्त्रिविधं.-ज्ञशरीर भव्यशरीरतद्व्यतिरिक्तभेदात् । तत्र ज्ञशरीरभव्यशरीरे प्राग्वत् तद्व्यतिरिक्तं सचित्तमचित्तं च एकैकस्य ये यावन्तो द्विकभेदाः सम्भवन्ति ते सर्वे वक्तव्याः । ये चेमे सचित्तं द्रव्यद्विकं द्विधा संसारस्थं निर्वृत्तं च, संसारस्थं द्विधा एकेन्द्रियमनेकेन्द्रियं च । तत्रैकेन्द्रियं पञ्च प्रकारं-पृथिव्यप्तेजोवायुवनस्पति भेदात् । एकैकमपि द्विधा-पर्याप्तमपर्याप्तं च । अनेकेन्द्रियं द्विधा-संख्यातवर्षायुष्कमसंख्यातवर्षायुष्कं च । एकैकं द्विधापर्याप्तमपर्याप्तं च । निर्वृ[वृ]त्तमपि द्विधा-अनन्तरसिद्धं परम्परसिद्धंच । अथवा सचित्तं त्रिविधं । तद्यथा-द्विपदं चतुष्पदमपदं च । तत्र द्विपदं द्वौ पुरुषावित्यादि, चतुष्पदं द्वौ बलीवर्दावित्यादि, अपदं द्वौ वृक्षावित्यादि । अचित्तं द्वौ परमाणू द्वौ द्विप्रदेशिकौ त्रिप्रदेशिकौ यावत् द्वौ संख्यातप्रदेशिकौ द्वावनन्तप्रदेशिकौ संख्यातस्य संख्याता भेदाः, असंख्यातस्य असंख्याता अनन्तस्य अनन्ताः । उक्तं द्रव्यद्विकमधुना क्षेत्रद्विकमाह-खेत्ते दुपदेसादी क्षेत्रे क्षेत्रविषयं द्विकं द्वौ प्रदेशादि द्वावाकाशप्रदेशावादिशब्दात् द्विप्रदेशावगाढं वा द्रव्यं क्षेत्रद्विकं क्षेत्रद्विके तस्यावस्थानात् । यदि वा द्वे भारते द्वे एरावते इत्यादि परिग्रहः । उक्तं क्षेत्रद्विकं, कालद्विकमाह द्विसमयादिकं द्वौ समयावादि शब्दात् द्वे आवलिके द्वौमुहूर्त्तावित्यादि परिग्रहः । अथवा द्विसमयस्थितिकं द्रव्यं कालद्विकेऽवस्थानात् कालद्विकमादिशब्दात् द्व्यावलिकास्थितिकादिपरिग्रहः ।

उक्तं कालद्विकमधुना भावद्विकमाह-

[भा.१७९] भावे पसत्थमियरं होइपसत्थं तु नाणिणोनाणे ।
केवलि छउमंनाणे नोनाणे दिठिचरणे य ।।

वृ- भावद्विकं द्विधा आगमतो नो आगमतश्च । तत्रागमतो द्विकशब्दार्थज्ञाता तत्र चोपयुक्तः, उपयोगो भावनिक्षेप इति वचनात्, नो आगमतो द्विधा तद्यथा प्रशस्तमितरच्च, इतरन्नामाऽप्रशस्तं । तच्चेदं रागो द्वेषश्च, प्रशस्तं द्विधा-ज्ञानं नोज्ञानं च । तत्र ज्ञाने ज्ञानविषयं द्विकमिदं तद्यथा कैवलिकं छाद्मस्थिकं च । नोज्ञाने नोज्ञानविषयं द्विकंदृष्टिश्चरणं च । दृष्टिः सम्यक्त्वं, चरणं चारित्रम् एतदेव सप्रभेदं प्ररूपयति-

[भा.१८०] एक्केक्कं पि य तिविहं, सठाणे नत्थि खइय अइयारो ।
उवसामिएसु दोसु; अइयारो होज्ज सेसेसु ।।

वृ- एकैकमपि दर्शनं चरणं च प्रत्येकमित्यर्थः । त्रिविधं त्रिप्रकारं । तद्यथा-क्षायिकं औपशमिकं क्षायोपशमिकं च । तत्र क्षायिकं सम्यक्त्वं क्षायिकसम्यग्दृष्टेः । औपशमिकमुपशमश्रेण्याम् । शेषकालं क्षायोपशमिकं, । चरणमपि क्षायिकं क्षपकनिर्ग्रन्थस्य, औपशमिकमुपशमश्रेण्यामन्यदा क्षायोपशमिकम् । तत्र क्षायिके ज्ञाने दर्शने चारित्रे च स्वस्थाने नास्त्यतीचारः, तथा हि केवलिनस्त्रिष्वपि ज्ञानदर्शनचारित्रेषु क्षायिकेषु वर्तमानस्य न तद्विषया काचिदपि विराधना, परस्थानेषु संभवेदपि, तथाहि श्रुतकेवल्यादेः क्षायिके दर्शने वर्तमानस्य दर्शने नास्ति विराधना ज्ञानचरणयोस्तु भजनेति । उवसामिए वि दोसु ति द्वयोर्दर्शनचरणयोरौपशमिके भावे वर्तमानयोः स्वस्थानेनास्त्यतीचारः । औपशमिकं हि दर्शनं

चारित्रं च नियमादुपशमश्रेण्यां भवति, तत्र कषायाणामुपशान्तत्वान्नास्ति कश्चिदतिचारसंभवः, ज्ञानविराधनात्[तु]सम्भवेदप्यनुपयोगतोऽन्यथा प्ररूपणाचिन्तनादिसम्भवात् । उपशमश्रेणितः पतेत्तुभवत्यतीचारः औदयिकभावे वर्तमानत्वात्, शेषेषु पुनः क्षायोपशमेषु ज्ञानदर्शनचारित्रेषु स्वस्थाने परस्थाने वातीचारो भवेत् क्षायोपशमिकत्वादेतदेवाह-

[भा.९८१] सट्ठाण परठाणे खउवसमिएसु तीसु वि भयणा ।
दंसण उवसमखतिए परठाणे होइ भयणाउ ॥

वृ- क्षायोपशमिके भावे वर्तमानेषु त्रिष्वपि ज्ञानादिषु स्वस्थाने वातीचारस्य भजना, कदाचिद्भवति कदाचिन्न भवतीत्यर्थः । दर्शने उपलक्षणमेतत्, चरणे च औपशमिके क्षायिके च स्वस्थानेऽतीचारो न भवति परस्थाने तु भजना । अत्र येन द्विकेनाधिकारस्तदभिधित्सुराह-

[भा.९८२] दव्वदुए दुपएणं सचित्तेणं च एत्थ अहियारो ।
मिस्सेणोदइएणं भावंमि वि हुंति तो तिन्नि ॥

वृ- अत्र द्रव्यद्विकेन भावद्विकेन चाधिकारः, । तत्र द्रव्यद्विकेन सचित्तेन तेनापि च द्विपदेन साधर्मिकद्वयस्य चिन्त्यमानत्वात् भावे मिश्रेण क्षायोपशमिकेन औदयिकेन चेति द्वाभ्यां भावाभ्यामधिकारः अनयोस्त्व द्वयोर्भावयोर्वर्तमानस्यातीचारसंभवात् । उक्तो द्विकस्य षट्कोनिक्षेपः ॥

सम्प्रति साधर्मिकस्य द्वादशकं निक्षेपमाह-

[भा.९८३] नाम ठवणा दविए खेत्ते कालेय पवयणे लिंगे ।
दंसण नाणं चरित्ते अभिग्गहे भावनाए य ॥

वृ- नामसाधर्मिकः, स्थापनासाधर्मिकः, द्रव्यसाधर्मिकः, क्षेत्रसाधर्मिकः, कालसाधर्मिकः, प्रवचनसाधर्मिकः, लिङ्गसाधर्मिकः, दर्शनसाधर्मिकः, ज्ञानसाधर्मिकः, चारित्रसाधर्मिकः, अभिग्रहसाधर्मिकः, भावनासाधर्मिकः, तत्र नामस्थापनाद्रव्यसाधर्मिक प्रतिपादनार्थमाह-

[भा.९८४] नामंमि सरिसनामो ठवणाए कट्ठकम्ममादीसु ।
दुव्वंमि जोउभविओ साहम्मि सरीरगं चेव ॥

वृ- नाम्नि नामविषये साधर्मिको यत्सदृशनामा यथादेवदत्तो देवदत्तस्य, स्थापना साधर्मिकः काष्टकर्मादिषु स्थाप्यमानो यथा वारकर्षिरादिशब्दात् पुस्तकर्माक्षवराटकादिपरिग्रहः, द्रव्ये द्रव्यरुपतया साधर्मिको यो भव्योभावी । स च त्रिप्रकारः । तद्यथा-एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च । अमीषां च भावना द्रव्यभिक्षुवद्भावनीया । यद्य साधर्मिकशरीरं व्यपगतजीवितं सिद्धशिलातलादिगतं तत् द्रव्यसाधर्मिकः । द्रव्यताचास्य भूतभावत्वात् क्षेत्रकालप्रवचनलिङ्गसाधर्मिकानाह-

[भा.९८५] खेत्तेसमाणदेसी कालम्मिउ एक्ककालसंभूतो ।
पवयणसंघेगयरो लिंगे रयहरणमुहपत्ती ॥

वृ- क्षेत्रे क्षेत्रतः साधर्मिकः समानदेशीय यथा सौराष्ट्रः सौराष्ट्रस्य, काले कालतः साधर्मिकः एककालसम्भूतो यथा वर्षाजातो वर्षाजातस्य, प्रवचनमिति प्रवचनतः साधर्मिकः सङ्घमध्ये एकतरः श्रमणः श्रमणी श्रावकः श्राविका चेति, लिङ्गे लिङ्गतः साधर्मिकः रजोहरणमुहपोत्तित्ति रजोहरणमुखपोति[त्ति]काद्युक्तः ॥ सम्प्रति दर्शनादिसाधर्मिकानाह-

[भा.९८६] दंसणनाणेचरणे तिगपणतिविह होइ उवरित्ते ।

दव्वादीओ अभिग्गह अह भावणमो अनिच्चाई ।।

वृ- दर्शनतः साधर्मिकः तिगत्ति त्रिविधस्तद्यथा-क्षायिकदर्शनी, औपशमिकदर्शनिनः औपशमिकदर्शनी, क्षायोपशमिकदर्शनिनः क्षायोपशमिकदर्शनी । अन्ये पुनराहुरेवं त्रिविधस्तद्यथा-सम्यग्दृष्टेः सम्यग्दृष्टिर्मिथ्यादृष्टेर्मिथ्यादृष्टिः मिश्रस्य मिश्रः, ज्ञानतः साधर्मिकः पञ्चविधः, तद्यथा-आभिनिबोधिकज्ञानी आभिनिबोधिकज्ञानिनः, एवं श्रुतावधिमनः पर्यायकेवलेष्वपि भावनीयम् । चरणतः साधर्मिकः पञ्चत्ति पंच प्रकारः-सामायिकचारित्रिणः सामायिकचारित्री । एवं छेदोपस्थापन-परिहारविशुद्धिसम्परायथाख्यातेष्वपि वाच्यम् । तिविहो होइ चरित्ते इति त्रिविधस्त्रिप्रकारो भवति चारित्रे, चारित्रतः साधर्मिकस्तद्यथा-क्षायिकचारित्री क्षायिकचारित्रिण इत्यादि । दव्वादीओ अभिग्गहत्ति-अभिग्रहतः साधर्मिको द्रव्यादौ वेदितव्यस्तद्यथा-द्रव्याभिग्रही द्रव्याभिग्रहिणः । एवं क्षेत्रकालभावेष्वपि वाच्यम् । तुशब्दोऽनुक्तसमुच्चयार्थः । तेन पठादिक्षपणाभिग्रही पठादिक्षपणाभि-ग्राहिणः इत्याद्यपि द्रष्टव्यम्, । भावनातः साधर्मिकोऽनित्यत्वादौ यथा एकोऽप्यनित्यत्वभावनां भावयत्यपरोऽप्यनित्यत्वभावनामित्यनित्यत्वभावना साधर्मिकः । एवं शेषास्वपि भावनासु द्रष्टव्यम्। तदेवमुक्तः साधर्मिकस्य द्वादशको निक्षेपः ।।

सम्प्रति यदुक्तं लिङ्गे भवन्ति भङ्गाश्चत्वार इति तदेतद्व्याचिख्यासुराह-

[भा.११७] साहम्मिएहिं कहिए लिंगाइ होइ चउभंगो ।
नामंठवणादविए भाव विहारेय चत्तारि ।।

वृ- साधर्मिकेषु कथितेषु सत्सु गाथायां तृतीया सप्तम्यर्थे प्राकृतत्वात् लिङ्गादौ प्रवचनादिभिः सह भवति प्रत्येकं चतुर्भङ्गी; गाथायां पुंस्त्वमार्षत्वात् । विहारे च ये चत्वारो भेदाः प्रागुक्तास्ते इमे तद्यथा-नामविहारः स्थापनाविहारो द्रव्यविहारो भावविहारश्च । तत्र लिङ्गादिषु प्रवचनादिभिः सह प्रत्येकं चतुर्भङ्गीमाविर्भावयिषुः प्रथमतो लिङ्गप्रवचनेन चतुर्भङ्गी सूचामाह-

[भा.११८] लिंगेन उ साहम्मी नोपवयणतो य निण्हगा सव्वे ।
पवयणसाहम्मी पुन न लिंगे दस होंतिससिहागा ।।

वृ- लिङ्गेन रजोहरणादिना साधर्मिको नोनैव प्रवचनत इत्येको भङ्गः, । के ते इत्याह सर्वे निन्हवास्तेषां सङ्घबाह्यत्वात् रजोहरणादिलिङ्गोपेतत्वाच्च, तथा प्रवचनतः साधर्मिको न पुनः लिङ्गे लिङ्गतः एष द्वितीयः के ते एवं भूता इत्याह-दश भवन्ति । सशिखाकाः अमुण्डितशिरस्काः श्रावका इति गम्यते । श्रावका हि दर्शन व्रतादि प्रतिमा भेदेन एकादशविधा भवन्ति । तत्र दश सकेशाः एकादश प्रतिमाःप्रतिपन्नस्तु लुञ्चितशिराः श्रमणभूतो भवति । ततस्तद्व्यवच्छेदाय सशिखाकग्रहणं, एते हि दश शिखाकाः श्रावकाः प्रवचनतः साधर्मिका भवन्ति । तेषां सङ्घान्तर्भूतत्वात् न तु लिङ्गतो रजोहरणादिलिङ्गरहितत्वात् । तृतीयचतुर्थौ तु भङ्गौ सुप्रतीतत्वान्नोक्तौ तौ चेमौ प्रवचनतोऽपि साधर्मिको लिङ्गतोऽपि साधुः एष तृतीयः प्रवचनतो नापि लिङ्गत इति चतुर्थः । एष शून्यो भङ्गः । तदेवं लिङ्गस्य प्रवचनेन सह चतुर्भङ्गिकोक्ता । सम्प्रति दर्शनादिभिः सह चतुर्भङ्गिकाप्रतिपादनार्थमाह-

[भा.११९] एमेव य लिंगेन उ दंसणमादी उ होंति भंगा उ ।
भइएसु उवरिमेसुं हेठिल्लपदं तु छड्डेज्जा ।।

वृ- एवमेव प्रवचनगतेन प्रकारेण लिङ्गेन सह दर्शनादिषु भङ्गा भवन्ति ज्ञातव्याः । उक्तेषु च

उपरितनेषु सर्वेष्वपि भावनापर्यन्तेषु अधस्तनं लिङ्गलक्षणपदं त्यजेत्त्यक्त्वा च तदनन्तरं द्वितीयपदं गृह्णीयात् । अभिगृह्य च तेनापि सह चतुर्भङ्गिकाः क्रमेण योजयेत् तत्राप्युपरितनेषु सर्वेषु भङ्गेषु तदधस्तनं पदं त्यजेत्ः अग्रेतनमनन्तरमाश्रयेत् । तत्राप्ययमेव क्रम एवं तावद्वाच्यं यावदन्तिमपदद्वयचतुर्भङ्गिका इह लिङ्गेन सह दर्शनादिषु भङ्गसूचाकृता । तत्र लिङ्गग्रहणमुपलक्षणं । ततः प्रवचनेनापि सह भङ्गा द्रष्टव्यास्ते चामी-प्रवचनसाधर्मिकोनदर्शनतः एष क्षायिके औपशमिके क्षायोपशमिके वा । उक्तं च-विसरिसदंसणजुत्ता पवयणसाहम्मिया न दंसणतो इति दर्शनतः साधर्मिकोन प्रवचनतस्तीर्थकरः प्रत्येकबुद्धश्च तेषां सङ्घानन्तवर्तित्वादाह च-तित्थयरापत्तेया नो पवयणदंसणसाहम्मी, प्रवचनतोऽपि साधर्मिको दर्शनतोऽपि समानदर्शनी सङ्घमध्यवर्तीति, न प्रवचनतो नापि दर्शनत इति चतुर्थः । एष शून्यः । उक्ता प्रवचनेन सह दर्शनस्य चतुर्भङ्गिकाः; । सम्प्रति ज्ञानस्योच्यते, न प्रवचनतः साधर्मिको न ज्ञानत एकोद्विज्ञानि एकस्त्रिज्ञानि चतुर्ज्ञानि केवलज्ञानी वा, ज्ञानतः साधर्मिको न प्रवचनतः तीर्थकरःप्रत्येकबुद्धो वा, प्रवचनतो ज्ञानतोऽपि तृतीयः, न प्रवचनतोऽपि नापि ज्ञानतः इति चतुर्थः । एषशून्यः । तथा प्रवचनतः साधर्मिको न चारित्रतः श्रावकः, चारित्रतो न प्रवचनतः तीर्थकरप्रत्येकबुद्धो वा प्रवचनतोऽपि चारित्रतोऽपि साधुः, न प्रवचनतो नापि चारित्रतः, एष शून्यः तथा प्रवचनतो नाभिग्रहतः श्रावको यतिर्वा उभयोरप्यन्यान्याभिग्रहयुक्तत्वात्, । अभिग्रहतो न प्रवचनतो निह्नवस्तीर्थकरः प्रत्येकबुद्धो वा उक्तं च,-साहम्मभिग्गहेण नो पवयणनिण्ह तित्थ पत्तेया इति प्रवचनोऽप्यभिग्रहतोऽपि श्रावको यतिर्वासमानाभिग्रहः न प्रवचनतो नाप्यभिग्रहत इति शून्यः । तथा प्रवचनतः साधर्मिको न भावनातो भिन्नभावनाकः । श्रावकोयतिर्वा, भावनातः साधर्मिको न प्रवचनतः समानभावनाकस्तीर्थकरः प्रत्येकबुद्धो निह्नवो वा, प्रवचनतोऽपि भावनातोऽपि समानभावनाकः श्रावकोयतिर्वा, न प्रवचनतोऽपि न भावनातः । एष शून्यः, । उक्ता प्रवचनेन सह दर्शनादिषु भङ्गा ।

सम्प्रति लिङ्गेन सहोच्यन्ते । लिङ्गतः साधर्मिको न दर्शनतः निह्नवः, दर्शनतः साधर्मिको न लिङ्गतः प्रत्येकबुद्धस्तीर्थकरोवा लिङ्गतोऽपि दर्शनतोऽपि समानदर्शनी साधुः नापि लिङ्गतो नापि दर्शनतः, एष शून्यः । तथालिङ्गतः साधर्मिको न ज्ञानतः । निह्नवो विभिन्नज्ञानी वा साधुः, ज्ञानतो न लिङ्गतः समान-ज्ञानी श्रावकः, प्रत्येकबुद्धस्तीर्थकरो वा लिङ्गतोऽपि ज्ञानतोपि समानज्ञानी साधुः, नलिङ्गतोऽपि नापि ज्ञानतः । एष शून्यः ।; तथा लिङ्गतो न चारित्रतो निह्नवो विषमचारित्री वा साधुः, चारित्रतो न लिङ्गतः प्रत्येकबुद्धस्तीर्थकरो वा, चारित्रतोऽपि लिङ्गतोऽपि समानचारित्री साधुः, न लिङ्गतो नापि चारित्रतः । एष शून्यः । तथा लिङ्गतो नाभिग्रहतः विचित्राभिग्राही साधु निह्नवो वा, अभिग्रहतो न लिङ्गतः, एष शून्यः, । तथा लिङ्गतः साधर्मिको न भावनातः विषमभावनाकः साधुः, न लिङ्गतोऽपि न भावनातः एष शून्यः । तदेवमुक्ता लिङ्गेन सह दर्शनादिषु भङ्गाः सम्प्रति लिङ्गपदं त्यक्त्वा दर्शनपदं गृह्यते । तेन सह ज्ञानादिषु उच्यन्ते-दर्शनतः साधर्मिको न ज्ञानतः क्षायिकदर्शनी एकः केवलज्ञानी एको द्विज्ञानीति, ज्ञानतः साधर्मिको न दर्शनतः समानज्ञानी विभिन्नदर्शनी, दशनतोऽपि ज्ञानतोऽपि समानदर्शनज्ञानी, नदर्शनतोनापिज्ञानतः शून्यो भङ्गः । तथा दर्शनतः समानज्ञानी विभिन्नदर्श, दशनतोऽपि ज्ञानतोऽपि समानदर्शनज्ञानी, नदर्शनतोनापिज्ञानतः शून्यो भङ्गः । तथा दर्शनतः साधर्मिको न चारित्रतः समानदर्शनी श्रावकः, चारित्रतो न दर्शनतः समानचारित्री विभिन्नदर्शनी साधुः, । चारित्रतोऽपि दर्शनतोऽपि समानदर्शनी चारित्री साधु, न चारित्रतोऽपि नापि दर्शनतः । एष शून्यः, । तथा दर्शनतो

न अभिग्रहतः समानदर्शनी विचित्राभिग्रहः श्रावकः साधुर्वा, अभिग्रहतोनदर्शनतः समानाभिग्रही विचित्रदर्शनतः श्रावकादि, दर्शनतोऽपि अभिग्रहतोऽपि समानदर्शनाभिग्रही श्रावकादि; नदर्शनतो नाप्यभिग्रहतः एष: शून्यः । तथा दर्शनतो न भावनातः समानदर्शनी विचित्रभावनाकः श्रावकादिः, भावनातोनदर्शनतः समानभावनाविचित्रदर्शनः श्रावकादिः, दर्शनतोऽपि भावनातोऽपि समानदर्शनभावनाकः श्रावकादि, न दर्शनतो नापि भावनातः एष शून्यः ।।

तदेवमुक्ता दर्शनेनापि सह ज्ञानादिषु भङ्गाः । अधुना दर्शनपदमपहायज्ञानपदमभिगृह्यते तेन सह चारित्रादिषु प्रदर्श्यन्ते ज्ञानतः साधर्मिको न चारित्रतः समानज्ञानी विचित्रचारित्रसाधुः; यदिवा श्रावकः, चारित्रतः साधर्मिको न ज्ञानतः, समानचारित्री एकः केवली एकश्छद्मस्थः, ज्ञानतोऽपि चारित्रतोऽपि समानः ज्ञानचारित्री साधुः, न ज्ञानतोऽपिन चारित्रतोऽपि शून्यः, । तथा ज्ञानतो नाभिग्रहतः समानज्ञानी विचित्राभिग्रहः श्रावकादिः, अभिग्रहतो न ज्ञानतः समानाभिग्रहतः एष शून्यः तथा ज्ञानतो नाभिग्रहतः समानज्ञानी विचित्राभिग्रहः श्रावकादिः, अभिग्रहतो न ज्ञानतः समानाभिग्रही विचित्रज्ञानी साधुस्तीर्थकरः प्रत्येकबुद्धो वा, ज्ञानतोऽप्यभिग्रहतोऽपि समानज्ञानाभिग्रही साध्वादिः, न ज्ञानतोऽप्यभिग्रहतः एष शून्यः तथा ज्ञानतो न भावनातः समानज्ञानी विचित्रभावनाकः श्रावकादिः, । भावनातो न ज्ञानतः समानभावनो विचित्रज्ञानी श्रावकादिः, ज्ञानतोपि भावनातोऽपि समानज्ञानभावनाकः श्रावकादिर्न ज्ञानतो नापि भावनातः एष शून्यः । उक्ता ज्ञानेन सह चारित्रादिषु भङ्गाः ।। सम्प्रति ज्ञानपदं विमुच्य चारित्रपदं गृहीत्वा तेन सहाभिग्रह भावनयोर्भङ्गा उच्यन्ते-चरणतः साधर्मिको नाभिग्रहतः समानचरणो विचित्राभिग्रहीसाधुः, अभिग्रहतः साधर्मिको न चरणतः श्रावकादिः,चरणतोऽपि अभिग्रहतोऽपि साधुः, न चरणतो नाप्यभिग्रहतः शून्यः । तथा चरणतो न भावनातः विचित्रभावनाकः साधुः, भावनातो न चरणतः श्रावकः समानभावनाकः साधुर्वा विसदृशचरणः, चरणतोऽपिभावनातोऽपि समानचरणभावनाकः साधुः न चरणतोनापिभावनातः शून्य एषः सम्प्रत्यभिग्रहेण सह भावनाया भङ्गाः-अभिगृहतः साधर्मिको न भावनातः, समानाभिग्रही विचित्र भावनाकः श्रावकादि, भावनातः साधर्मिको नाभिग्रहतः विचित्राभिग्रह श्रावकादिः, अभिग्रहतोऽपि भावनातोऽपि समानाभिग्रह भावनाकः श्रावकादिः, नाभिग्रहतो नापि भावनातः एष भङ्ग शून्यः । तदेवमुक्ता भङ्गाः ।। साम्प्रतममीषां भङ्गानां विषयविशेषप्रतिपादनार्थमाह-

**[भा.१९०]** पत्तेयबुद्धनिण्हग उवासए केवली य आसज्ज ।
खइयाइए य भावे पडुच्च भंगा उ जोएज्जा ।।

**वृ-** प्रत्येकबुद्धान् निह्नवान् उपासकान् केवलिनश्चाश्रित्य तथा क्षायिकादींश्च भावान् प्रतीत्य आश्रित्य भङ्गकान् अनन्तरोदितान् योजयेत् । तद्यथा-न प्रवचनतः साधर्मिको लिङ्गतः एष भङ्गः प्रत्येकबुद्धान् केवलिनश्च जिनानाश्रित्य योजनीयः । लिङ्गतो न प्रवचनत इत्ययं न्हिवान्, प्रवचनतो न लिङ्गत इत्येष श्रावकान् प्रवचनतो न दर्शनत इत्यादयस्तु क्षायोपशमिकदर्शनज्ञानचारित्रादीनाश्रित्य योजयितव्यास्ते च तथैव यथास्थानं योजिता एवेति सम्प्रति ये विहारे नामादयोऽपि भेदा उक्तास्तान् विपरीषुः पुनः कथयति-

**[भा.१९१]** नामं ठवणा दविए भावे य चउव्विहो विहारो होइ ।
विविह पगारेहिं रयं हरइ जम्हा विहारो उ ।।

वृ- नामविहार: स्थापनाविहारोद्रव्ये द्रव्यनिमित्तं द्रव्यभूतो विहारो द्रव्यविहार: भावे भावविहार: । एवमेष विहारश्चतुर्विधो भवति, इह च नो आगमतो भावविहारेण गीतार्थेनाधिकारो न शेषैस्ततस्तानधिकृत्य व्युत्पत्तिमाह-यस्माद्विविधैरनेकै: प्रकारै: रज: कर्म हरति तस्माद्विहार इत्युच्यते । विविधं ह्रियते रज: कर्मनिनेति विहारोऽकर्तरीति घञिति व्युत्पत्ते: । सम्प्रति नामादिभेदा व्याख्येयास्तत्र यस्य विहार इति नाम स नामविहार: स्थापनाविहारश्चित्तकर्मण्यन्यत्र वा आलिख्यमान: स्थापनाविहार: । द्रव्यविहारो द्विधा आगमतो नोआगमतश्च । तत्रागमतो विहारशब्दार्थज्ञाता तत्र चानुपयुक्त: । नोआगमतस्त्रिधा-ज्ञशरीर भव्यशरीरतद्व्यतिरिक्तभेदात् । तत्र ज्ञशरीर भव्यशरीरे प्राग्वत् । तद्व्यतिरिक्तमाह-

[भा. ११२] आहारदीणऽ जो उ विहरे अगीय पासत्थे ।
जोयावि अनुवउत्तो, विहरति दव्वविहारो उ ।।

वृ- यो नाम आहारादीनामाहारोपधिप्रभृतीनामर्थायोत्पादनाय अगीतानामगीतार्थानां पार्श्वस्थानां च गाथायां समाहारो द्वन्द्व: । षष्ठीसप्तम्योरर्थं प्रत्यभेदाच्च सप्तम्या निर्देश: । तथा योऽप्यनुपयुक्त: सन् विहरति एष सर्वोऽपि द्रव्ये विहार: आद्यो द्रव्यनिमित्तत्वात् द्रव्य विहार: द्वितीयोऽनुपयुक्तत्वादिति उक्तो द्रव्यविहार: । भावविहारो द्विधा- आगमतो नोआगमतश्च । तत्रागमतो विहारशब्दार्थज्ञाता तत्र चोपयुक्त: नो आगमतो भावविहारो द्विधा-गीतार्थो निश्रितश्च । तथा चाह –

[भा. ११३] गीयत्थो य विहारो बीय गीयत्थनिस्सितो होति ।
एत्तो ततिय विहारो नाणुन्नातो जिनवरेहिं ।।

वृ- विहार: प्रथमो भवति गीतार्थ: गीतार्थसाध्यात्मको द्वितीयो गीतार्थनिश्रित: गीतार्थस्य निश्रा संश्रयणं गीतार्थनिश्रा सा सञ्जातायस्येति पाठान्तरं गीतार्थमिश्रित इति तत्र गीतार्थसंयुक्त इति व्याख्येयं इति । आभ्यां गीतार्थगीतार्थ निश्रिताभ्यामन्यस्तृतीयो विहारो नानुज्ञातो जिनवरेन्द्रै: ।। तत्र गीतार्थ गीतार्थनिश्रितं च विहारमाह-

[भा. ११४] जिनकप्पितो उ गीयत्थो, परिहारविसुद्धितो विगीयत्थो ।
गीयत्थे इड्ढीदुगं सेसा गीयत्थनिस्साए ।।

वृ- गीतार्था द्विविधास्तद्यथा-गच्छगता गच्छनिर्गताश्च । तत्र गच्छनिर्गता इमे जिनकल्पिको गीतार्थ: परिहार विशुद्धिकोऽपि गीतार्थ: । अपि शब्दाद्यथालन्दकल्पिकप्रतिमापन्नोऽपि च गीतार्थ:, अमीषां विहारो गीतार्थ:, । गच्छवासे गीतार्थे गीतार्थविषये ऋद्धिद्विकं तद्यथा- आचार्य उपाध्यायश्च, । अथवा आचार्य: शेष चतुष्टयमुपाध्यायप्रवृत्तिस्थविरगणावच्छेदिरूपमेतच्च द्विकं स्थानानि निर्युक्तमिति । व्यवह्रियते स्वस्वव्यापारे तेषां निर्युक्तत्वात् शेषा: सर्वे अनियुक्ता: ते यदि गीतार्था यदि वा अगीतार्था: । सर्वे गीतार्थनिश्रया विहर्तव्यम् । अत्र पर आह-

[भा. ११५] चोएइ अगीयत्थे, किं कारण मो निसिज्झइ विहारो ।
सुणदिठंतं चोयग, सिद्धिकरं निद्धवे एसिं ।।

वृ- चोदयति प्रश्नं करोति अगीतार्थे अगीतार्थस्य किं कारणं किं निमित्तं मो इति पादपूरणे निषिध्यते विहार: सूरिराह- हे चोदक! त्रयाणामप्येतेषां गीतार्थागीतार्थनिश्रितागीतार्थानां सिद्धिकरं दृष्टान्तं शृणु । तमेवाह-

[भा. ११६] तिविहं संगिल्लंमि जानंतो निस्सिए अजानंते ।

पाणंधिच्छित्तकरणे अडवि जले सावए तेना ।।

वृ- संगिल्लो नाम गोसमुदायस्तस्मिन् रक्षणीये त्रिविधो रक्षके दृष्टान्तः । तद्यथा जानन् निश्रितोऽजानंश्च एषोऽक्षरार्थः । भावार्थस्त्वयम्-एगो रक्खगो नगरस्स गावीणं सो निजेहिं उगासेहिं गावीतो जंतीउ एतीउय खेत्ताईणं अवरोहं न करेति तेसिं उगासेहिं नेइ आनेइ य जत्थ य तेनाइ भयं नत्थि तत्थ चारेइ, अन्नया दो पुरिसा गाविउ रक्खामित्ति उवठिया । अम्हे भइयाए गावो रक्कामोत्ति नागरगा चिंतंति सो एगो न तरइ सव्वनगरस्स गाविउ रक्खिउं, । तम्हा एएवि निजुंजंतु त्ति भणिया रक्खइ । तत्थ एगो तस्स पुराणस्स संखेडिपालस्स निस्साए गावीतो नेइ आनेइय, अजानतोति काउं तस्स मएण चंकमइ, बितितो संखेडिपालतो चिंतेइ । अहमन्नस्स निस्साए न चारेमि सयमेव अहं रक्खिउं समत्थो सो वराती अजानतो इमानि ठाणाणि न याणइ पाणंधीति देशीपदमेतत् वर्तिनी वाचकं ततोऽयमर्थः । क्षेत्र क्षेत्रेषु च शाल्यादय उत्तास्तिष्ठन्ति । गावश्च गच्छन्त्य आगच्छन्त्यश्च रक्षमाणा अपि शाल्यादि चरन्ति, । ततः क्षेत्रस्वामिभिर्गा धृत्वा क्षेत्रोपद्रवमूलं याच्यते । एवं कुरुणेऽपि दोषा वाच्याः । कुरुणं नाम राजकीयमन्यदीयं वावीतं तथा अडवित्ति सो वराकोऽजानन् मा अटवीमपि प्रवेशयति । तत्र पुलिन्दादिभिर्गावो मार्यन्ते, तथा जलत्ति सोऽजानन् नद्यादिषु तत्र प्रदेशे गाः धाययति यत्र ग्राहादिभिर्जलचरैर्गाव आकृष्यन्ते । सावएइति समूढो वराकस्तत्र प्रदेशे नयति । यत्र व्याघ्रादयो दुष्टश्वापदास्तैश्च गाव उपद्रूयन्ते तिणंति तेषु च निकुञ्जादिषु नयति यत्र स्तेनानां प्रसरस्ततस्तेनास्ता अपहरन्ति । एवं सोऽजानन् गा विनाशयति इतरस्तु ज्ञाता एतानि सर्वाण्यपत्स्थानानि परिहरति, । योऽपि निश्रितस्तमपि परिहारयति । एष दृष्टान्तोऽयमर्थोपनयः-यो गीतार्थः सर्वानपि दोषान् स्वयं परिहरति । यस्तु निश्रितस्तं परिहारयति । यः पुनः स्वयमगीतार्थो यश्चागीतार्थनिश्रितस्तयोरात्मविराधना संयमविराधना च भवति । तानेवात्मविराधनादिदोषान् विवक्षुर्द्वार गाथामाह-

[भा. ११७] मग्गे सेहविहारे, मिच्छत्ते एसणादि विसमे य ।

सोही गिलाणमादी, तेना दुविहावि तिविहा वा ।।

वृ- मार्गे मार्गविषये तथा शैषे शेक्षक कुल विषये एवं विहारे मिथ्यात्वे एषणादौ विषमे शोधौ ग्लानादौ दोषास्तथास्तेना द्विविधास्त्रिविधा वा ये भवन्ति तेभ्योऽपि दोषा भवेयुः । एष द्वारगाथासंक्षेपार्थः साम्प्रतमेनामेव द्वारगाथां विवरीषु प्रथमतो मार्गद्वारं शैक्षद्वारं चाह-

[भा-११८] मग्गं सहव रीयइ पाउसउ मग्ग अजयणा एव ।

सेहकुलेसु य विहरति, ननु यत्तति न गाहेति ।।

वृ- मार्गं पन्थानं सेवते सोऽजानन् अगीतार्थः सन् द्रवचारितया रीयते गच्छति, तत्र च संयम विराधना कीटादिसत्वोपमर्दनात्, आत्मविराधना पादादिविस्खलनात् । तथा अज्ञतया पाउसत्ति प्रावृष्यपि काले गच्छति तत्रापि संयमविराधना आत्मविराधना च, तथा मार्गोन्मार्गानभिज्ञतया उन्मार्गेऽपि गच्छति । तत्र स्थाणु कंटकादिभिरात्मविराधना सचित्तपृथिव्याद्युपमर्दनात् संयमविराधना च, तथा ग्रहणशिक्षायामासेवनाशिक्षायां वाऽप्रवीणत्वात् । अयतनया वा गच्छेत् । अयतनया च संयमात्मविराधना । गतं मार्गद्वारं; शैक्षकद्वारमाह-सेहेत्यादि शैक्षकुलानि अभिनवप्रपन्नव्रतानि धर्माणि कुलानि तेष्वज्ञतया स विहरति । तेभ्योऽयतनया भक्तपानादिकमुत्पादयतीति भावः तथा न तानि अनुवर्तयति नुवर्त्तनागुणतः वर्धमानतरधर्मश्रद्धाकानि करोति । अनुवर्तनाया अपरिज्ञानात् । तथा न

ग्राहयति तानि ग्रहणशिक्षामासेवनाशिक्षां वा श्रावकधर्मोचितां उभयोरपि शिक्षयोस्तस्याकुशलत्वात्

गतं शैक्षद्वारमधुना विहारद्वारं मिथ्यात्वद्वारं चाह-

[भा.९९९] दसुदेसे पच्चंते, वइयादि विहारपाणबहुले य ।
अप्पाणं च परं वा न मुणति मिच्छत्तसंकंतं ।।

वृ- सोऽज्ञतया दस्युदेशे चौरदेशोविहारं करोति यदि वा प्रत्यंतबहुले म्लेच्छाकुले अथवा लुब्धतया व्रजिकादौ आदिशब्दात् स्वजातिकादिकुलपरिग्रहः यदि वा प्राणबहुले जीवसंसक्ते देशे एतेषु यथायोगमात्मविराधना संयमविराधना च भवतीति, गतं विहारद्वारम् अधुना मिथ्यात्वद्वारमाह-अप्पाणं चेत्यादि स वराको अजानन् आत्मानमपि कुप्ररुपणादिभि र्मिथ्यात्व शङ्कासंक्रान्तं न जानाति, नापि परं ततः आत्मनः परस्य च मिथ्यात्वं प्रवर्तयतीत्युभयेषामपि संसारप्रवर्धकः ।

गतं मिथ्यात्वद्वारमधुना एषणाद्वारमाह-

[भा.१०००] आहार उवहि सेज्जा, नु मम्म उप्पायणेसनकडिल्ले ।
लग्गइ अवियाणंतो, दोसे सेएसु सव्वेसु ।।

वृ- आहारो भक्तपानादिरुपः उपधिः कल्पादि लक्षणः शय्या वसतिः एतासांग्रहणे इति गम्यते । किं विशिष्टे इत्याह-उद्गमेन उद्गमदोषैः षोडशभिराधाकर्मप्रभृतिभिरुत्पादनया उत्पादनादो-षैर्धात्र्यादिभिः षोडशभिरेषणायागवेषणादिदोषैः शङ्कितम्रक्षितप्रभृतिभिः संयोजनाप्रमाणाङ्गारधूमैः काकशृगालादि भक्षितैश्च । कडिल्ले इति महागहने सति सोऽविजानन् एतेष्वनन्तरोदितेषु दोषेषु सर्वेषु लगति द्वारगाथायामेषणादाविति य आदिशब्दः ससमस्तोद्गमादिदोषपरिग्रहार्थः । तथा विसमे इति विषमे च पर्वतजलादौ या यतना तां स न जानाति अजानंश्चात्मविराधनां संयमविराधनां चाप्नोति।

सम्प्रति शोधिद्वारमाह-

[भा.१००१] मूलगुणे उत्तरगुणे आवन्नस्स य न याणई सोहिं ।
पडिसिद्धेत्ति न कुणति, गिलाणमादीन तेगिच्छं ।।

वृ- मूलगुणविषयं उत्तरगुणविषयं च प्रायश्चित्तमापन्नस्य यस्य यादृशी यस्मिन्नपराधे दातव्या शोधिस्तस्य तादृशी तस्मिन्नपराधे न जानाति, । अजानानश्चाप्रायश्चित्तेऽपि अतिप्रभूतं प्रायश्चित्तं दद्यादिति महदाशातनाभाक्, गतंशोधिद्वारमधुना ग्लानादि द्वारमाह-पडिसिद्धेत्यादि प्रतिषिद्धा खलु चिकित्सा षट् जीवनिकायविराधनाफलेरिति वचनमेकान्तेनाङ्गीकुर्वन् ग्लानादीनामादि शब्दः स्वगतानेकभेदसूचक आगाढाऽनागाढसहासहबालतरुणग्लानादीनां चिकित्सां न करोति, । न च तद्विषयां यतनां जानाति, ततश्चिकित्साया यतनायाश्च अकरणे भूयांसो दोषास्ते च प्रागेव प्रथमोद्देशकेऽभिहिताः । सम्प्रति तेना दुविहा वा इति व्याख्यानयति-

[भा.१००२] अप्पसुयत्ति य काउं वुग्गाहेउं हरंति खुड्डादी ।
ते नासपक्खइयरे, सलिंगि गिहि अन्नहा तिविहा ।।

वृ- स्तेना द्विविधाः सपक्षाः परपक्षाश्च, । ततः सपक्षाः द्विविधाः गीतार्थाः पार्श्वस्थादयश्च, तत्र गीतार्था इदं चिन्तयन्ति । अमी अल्पश्रुता अल्पश्रुतत्वाच्चागीतार्था न चागीतार्थानां क्षेत्रमस्ति । तत एवं चिन्तयित्वा तेषां सचित्तादिगीतार्था अपहरन्ति पार्श्वस्थादयः पुनः क्षुल्लकादीन् व्युद्ग्राहयन्ति यथा दुष्कराचर्यामीषां न च दुष्करचर्यायाः सम्प्रतिदेशकालौ तस्मादत्रागच्छतेति । एवं व्युद्ग्राह्य क्षुल्लकादीन्

आदिशब्दात्तरुणादि परिग्रहः अपहरन्ति परपक्षामिथ्यादृष्टयस्तेऽपि क्षुल्लकादीन् व्युद्ग्राह्य अपहरन्ति, अथवा त्रिविधास्तेनास्तद्यथा स्वलिंगाः पार्श्वस्थादयस्ते पूर्ववत्, गृहिणस्तस्करास्ते उपधि प्रभृतीन पहरंति, अन्येवा स्वलिंगगृहिभ्यो व्यतिरिक्तास्ते च भिक्षुकादयोऽपगंतव्यास्ते क्षुल्लकादीन् व्युद्ग्राह्यापहरंति.

**[भा.१००३]** एए चेव य ठाणे, गीयत्थो निस्सितो उवज्जेइ ।
भावविहारो एसो दुविहो उ समासतो भणिओ ।।

**वृ-** एतान्येवानन्तरोदितानि स्थानानि गीतार्थो गीतार्थनिश्रितश्च वर्जयति तत्र गीतार्थः स्वयं कुशलत्वात् गीतार्थनिश्रितस्तु गीतार्थोपदेशेन एष भावविहारो द्विविधो भणितः समासतः संक्षेपेण ।।

**[भा.१००४]** सो पुन होइ दुविहो, सम्मतकप्पो तहेव असमत्तो ।
तत्थसमत्तोइणमो, जहन्नमुक्कोसतो होइ ।।

**वृ-** स पुनर्भावविहारो द्विविधोऽपि भूयो द्विविधो भवति । तद्यथा-समाप्तकल्पस्तथैवासमाप्तोऽसमाप्तकल्पः । तत्रायंसमाप्तः समाप्तकल्पो द्विविधो भवति । तद्यथा-जघन्य उत्कृष्टश्च तनयोरेव प्रमाणमाह-

**[भा.१००५]** गीयत्थाणं तिण्हं, समत्तकप्पो जहन्नतो होति ।
बत्तीससहस्साइं हवंति उक्कोसओ एस ।।

**वृ-** गीतार्थानां त्रयाणां विहारः समाप्तकल्पो जघन्यो भवति । उत्कृष्टस्त्वेष समाप्तकल्पो द्वात्रिंशत्सहस्राणि भवन्ति ।

**[भा.१००६]** तिण्हसमत्तो कप्पो, जहनउ दोनि ऊजयाविहरे ।
गीयत्थाणवि लहुओ, अगीएगुरुगा इमे दोसा ।।

**वृ-** त्रयाणां किल समाप्तकल्पो जघन्यो भवति ततो यदा द्वौ विहरतस्तदा द्वयोर्गीतार्थयोर्विहरतोर्लघुका मासाः प्रायश्चित्तं, अगीतार्थयोश्चत्वारो गुरुका द्वयोश्च विहरतोरिमे वक्ष्यमाणा दोषास्तानेवाह-

**[भा.१००७]** दोण्हवि विहरंताण सलिंगगिहलिंग अन्नलिंगे य ।
होइ बहुदोस वसही गिलाणमरणे य सल्ले य ।।

**वृ-** द्वयोर्विहरतोः स्वलिङ्गान्यलिङ्गगृहलिङ्गानधिकृत्य भूयांसो दोषास्तद्यथा- एकोवसतिपाल एको भिक्षार्थं गतस्तत्र यो भिक्षार्थं गतस्तस्य स्वलिङ्गे संयत्या आलोपाधिकं पृच्छन्त्याः आत्मपरोभयसमुत्था दोषाः; । परलिङ्गे चरकादिकाया गृहि लिङ्गे स्त्रियाः प्रोषितभर्तृकादिकायाः । होइ बहुदोसवसहित्ति हिण्डमानाद्वसतिर्बहुदोषा भवतीति किमुक्तं भवति वसतिपालस्य हिण्डमानापेक्षया भूयांसो दोषाः। एकान्तमिति कृत्वा स्वलिङ्गिन्यादीनामुपपातसम्भवात् प्रदीपनके च लग्ने एकाकी स कथं करोति । अथैते दोषा मा भूवन्निति शून्यां वसतिं कृत्वा निर्गच्छतः । तदानीं वक्ष्यमाणा बहवो दोषास्तद्यथा- द्वयोर्विहरतोर्यद्येको ग्लानो भवति तदा तस्य ग्लानस्य एकाकिनो मोचने पिपासादिसम्भवतस्तथा मरणे मरणकाले शल्यं नोद्धृतमिति । शल्येन तथा च स्थिते सति गरीयांसो दोषाः तत्र द्वयोर्निर्गमने दोषानाह-

**[भा.१००८]** मिच्छत्तय बहुसुयचारण भंडिय मरणं तिरिक्खमनुयाणं ।
आएस वालनिक्कयणे य सुणे भवे दोसा ।।

**वृ-** उत्सर्गतस्तावदियं समाचारी शून्या वसतिर्न कर्तव्या । यदि पुनस्तौ शून्यां वसतिं कुरुतस्ततस्तयोः प्रत्येकं प्रायश्चित्तं चतुर्लघुतपसा कालेन चउ गुरु उक्तं च-सुन्नं जति वसहि करेंति चउ लहुया दोहिवि

गुरुगा इति, अन्ये च बहवो दोषास्तथा हि-तौ साधूसर्वमात्मीयं भाण्डमादाय शून्यां वसतिं कृत्वा गतौ शय्यातरेण च बहिरागतेन शून्यावसतिर्दृष्टा, ततः स पृच्छति क्व गतौ साधू इति गृहमानुषाणि भणन्ति । न जानीमो नूनं गतौ भविष्यतः, एतत् श्रुत्वा यदि स प्रत्यनीकं करोति यथा यदि गतौ, ततो गत्ताविति तदा तयोः प्रायश्चित्तं चतुर्लघु, तथाऽप्रीतिं करोति यथा अकृतज्ञास्ते निस्नेहास्ततोऽनापृच्छयागताः, । अथवा निर्दाक्षिण्यास्ते एतमप्युपचारं न जानन्ति । यथा आपृच्छय गन्तव्यमिति तदा चतुर्गुरुकास्तथा सोऽप्रीतिकोत्पत्तिवशात्तयोरन्येषां वा साधूनां तद् द्रव्यान्यद्रव्यविच्छेदं कुर्यात्, । ततो भूतैर्भाजने-शगतयोस्तयोः शय्यातरो न स्थानं दद्यात् कोपावेशात् यदि दिवा । निष्काशयति ततश्चतुर्लघु, तैश्च भूतैर्भाजनैरन्यां वसतिं याचमानयोर्या आगाढादिपरितापनात् एतन्निष्पन्नं चतुर्लघु लोके च गर्होपजायते कुत्सितमाभ्यां किमप्याचरितमन्यथा कथमकाण्ड एवाकृतभोजनौ निष्काशितौ इति । एवं चान्यत्रापि तौ वसतिं न लभतः [लभेते] । ततो वसतिमलभमानौ तावदन्यत्र गच्छतः ततो मासकल्पभेदस्तथा च सति या तत्र विराधना तन्निष्पन्नमपि तयोः प्रायश्चित्तमपि चान्ये साधवो विहारादिनिर्गतास्तत्रागता अन्या च वसति स्तत्र न विद्यते । स च शय्यातरः तत्कृता प्रीतिवशतस्तेषामपि वसतिं न ददाति, ततो यत्ते स्वापदस्तेनादिभिः प्राप्नुवन्ति तं निष्पन्नमपि तयोः प्रायश्चित्तं, एते तावद्दोषा भिक्षामटित्वा तत्क्षणमागतयोरुक्ता, यदि पुनर्बहिर्भुक्त्वा रात्रावागतौ वसतिं न लभेते । तदा चतुर्लघु,

- वसति विशेषतरश्चगर्हादयो दोषाः, विनाशः स्वापदादिभ्यः, अथवा सम्यग् दृष्टिभूतः सन् पश्चादनापृच्छय तौ गतावित्यप्रीतिकोत्पत्तिवशतो मिथ्यात्वं यावत् बडुयत्ति शून्यां वसतिं दृष्ट्वा बटुकैः शय्यातरो याचितो यथा वयमत्र तिष्ठामः शय्यातरः प्राह- श्रमणौ तिष्ठतस्तैरुक्तं गतौ तौ श्रमणौ शय्यातरो ब्रूते तिष्ठत यदि गतौ श्रमणौ, ते स्थिताः श्रमणावागतौ प्रवेष्टुं प्रवृत्तौ बटुकैर्निरुद्धौ, । ततोऽसंखडमभवत् बटुका ब्रुवते वसतिरियमस्माकं स्वामिना दत्ता । इतरावपि ब्रूतो अस्माकमपि स्वामिना दत्ता । एवं कलहायमानौ साधू शय्यातरसमीपं गतौ स वदति यूयमनापृच्छया शून्यां वसतिं कृत्वा गता मया ज्ञातं यथा यूयं गता येन शून्या कृता वसतिर्दृश्यते । ततो मया बटुकानां प्रदत्ता तस्मात्परस्परं सांमत्येनैकत्र तिष्ठत, न पुनरहमात्मानमलीकं करोमि । तत्र यदि परस्परं सांमत्येन तिष्ठन्ति ततः पठतां प्रतिलेखनां च कुर्वतां संयतभाषाश्च श्रुत्वा ताभिरुपहासं कुर्वन्ति, [क्रियते] । ततः कलहभावतोऽधिकरणदोषः । अथवा शय्यातरः संयतानां भद्रक भद्रक इतितान् बटुकान्निष्काशयेत्ततः संयतप्रयोगवशतोऽनेन दुष्टेन वयं निष्काशिता इति शय्यातरस्य संयतानां च विषयस्तेन प्रयोगतोऽग्निप्रक्षेपादिना वा यमुपद्रवं कुर्वन्ति । तन्निष्पन्नप्रायश्चित्तं तौ श्रमणौ प्राप्नुतः । चारणेति एवं चारणेऽपि दोषा वक्तव्याः । नवरमधिकतरा यतस्ते संयतान् प्रपञ्च्य याचित्वा वा यत्तद्गृह्णन्ति । ततस्तैः सह एकत्र सर्वथा न वस्तव्यमेते एव दोषा भटेऽपि यतस्तेपि बटुका इव प्रद्विष्टाः सन्तः शय्यातरस्य संयतानां वा स्तेनप्रयोगतोऽग्निप्रक्षे-पादिनावाप्रभूतमुपद्रवं कुर्वन्ति, । । मरणं तिरिक्खमनुयाणमिति शून्यां वसतिमभिसमीक्ष्य गवादिस्तिर्यङ् अनाथमनुष्यो वा प्रविश्य म्रियते तं यदि ग्रहस्थैस्संयतैः परिष्ठापयन्ति ततः षट् जीवनिकाय विराधना यदिस्वयं त्यजन्ति ततः प्रवचनस्योड्डाहः कोऽप्येवमाशङ्कयेत एतैरेवायं मारितो लोकेऽपि स्वयं तत्त्यजनं महती गर्हा अशुचय एते इति । अथैतद्दोषभयान्न स्वयं त्यजन्ति नापि गृहस्थैस्त्याजयन्ति ततो रुधिरगन्धेन तयोः श्रमणयोर्नाशार्शास्युपजायन्ते, । अथास्वाध्यायिकमिति कृत्वा सूत्रपौरुषीं न कुरुतस्ततो मासलघु अर्थ पौरुषीं न कुरुतो मासगुरु, सूत्र पौरुषीमकुर्वतोः सूत्रं चेन्नश्यति । ततश्चतुर्लघु ।

अथ पौरुषीमकुर्वतोरर्थनाशे चतुर्गुरु, अवर्णश्च लोके समुच्छलति । यथैते पिशाचमूर्तयः श्मशानेप्रियाः श्मशाने तिष्ठन्तीति, । अदिसत्ति आदेशा नाम प्राघूर्णकास्ते भिक्षागतयोः श्रमणयोः समागताः शय्यातरेण च शून्यां वसतिमुपलभ्य गतौ श्रमणाविति विचिन्त्य सा वसतिस्तेषां दत्ता । ततो यथा वटुकचारणभटेषु दोषा उक्ता स्तथात्रापि द्रष्टव्याः । वालत्तिव्यालो नाम सर्पः स शून्यं दृष्ट्वा वसतौ प्रविशेत् ततो यद्यागतौ तौ श्रमणौ निष्काशयतस्ततो [illegible] अन्यस्मिन् गृहे प्रविष्टस्तस्मान् मानुषाणि दशेत् स वा तैर्मार्येत । अथैतद्दोषभयान्ननिष्काशयतस्ततस्तेन भक्ष्यते । आत्मविराधना निकायणेत्ति शून्यां वसतिं दृष्ट्वा तिरश्ची अनाथमानुषी वा समागत्य प्रसूते । तत्र यदि तिरश्ची शुनी प्रसूतिका नवप्रसूता निष्काश्यते निष्काशनेन निराश्रया क्रियते तदा सद्यो जातपिल्लकमरणं शुनीभक्षणमात्मविराधना च । अथवा मानुषी प्रसूता तत इयमेतयोरितिति प्रवचनोड्डाहो निष्काशनेऽधिकरणं लोको ब्रूयान्निरनुकम्पा अमी चेडरूपं वा म्रियते । अथवा सा प्रसूता चेडरूपं त्यक्त्वा व्रजेत्तत्र तस्योज्झने निरनुकम्पा इति गर्हानुष्टम्भे उड्डाह एते शून्यवसतिकरणे दोषाः ॥

सम्प्रति ग्लानस्य एकाकिना मोचने मरणे च दोषानाह-

**[भा. १००९]** गेलन्न सुणकरणे खद्धाइयणे गिलाण अनुकंपा ।
साणाइतिनयन दुगंच्छा तस्सट्ठगुयंभि कालगए ॥

वृ- ग्लानार्थमात्मार्थं वा निर्गमे ग्लानः शून्यो भवेत् । तस्य च ग्लानस्य शून्यस्य करणे पिपासा तदनु बुभुक्षा वा यद्यति पिपासितो बुभुक्षितश्च महता शब्देन व्याहरेत् । व्याहारश्रवणाच्च गृहस्था आगच्छेयुस्ते च गृहस्थाः समागता यद्याचते ग्लानः पथ्यमपथ्यं वा तत्सर्वमनुकम्पया ददाति । तत्र पथ्यस्यापथ्यस्य वा खद्धस्य प्रचुरस्य अइयणे इति अदने भक्षणे वमनं भूयात्स च न किमपि कर्तुं समर्थो ग्लानत्वादिति वमनेन मुखहृदयादिकं सर्वं खरण्टयेत् । तं च तथा वमन्तं दृष्ट्वा श्वानः समागत्य तं वम्यमानं भक्षयंति । भक्षयन्तश्च मुखं हृदयादिकं च लिहन्ति । एवं शुनामतियणेत्ति अदने भक्षणे लोके निन्दा जुगुप्सा समुपजायते । यथा-धिगेतेषां धर्मरूपं वा यदित्थमिहलोकेऽपि फलमनुभवन्ति ते इति गतं ग्लानद्वारम् ॥ सम्प्रतिमरणद्वारमाह-तस्सठेत्यादि तस्य ग्लानस्यार्थं वैद्यौषधादि समानयनप्रयोजनाय ग्रामान्तरादौ गते यदि स ग्लानः कालगतो भवेत् तदा अमी दोषास्तानेवाह-

**[भा. १०१०]** गिहिगोणमल्लराउल निवेयणापान कड्ढणुड्डाहे
छक्कायाणविराधन ज्झामिय मुक्के वदा-वन्ने ।

वृ- यदि स ग्लानो मृतः सद् गृहस्थै निष्काश्येत यदि वा बलीवर्दैर्निष्काश्यते अथवा मल्लैः निष्काश्यते यदि वा केनापि राजकुले निवेदना क्रियते यथा एको व्रती अनाथो मृत इति ततो राज्ञा स निष्काश्येत । यदि वा केचित् पाणानां चाण्डालानां मूल्यं दत्वा ते निष्काशयेयुरित्थं तस्य ग्लानस्य कर्षणे निष्काशने प्रवचनस्य उड्डाहो मालिन्यं तथा गृहस्थादयोऽयतनया गच्छन्ति ततस्तै नीयमानेषण्णां जीवनिकायानां विराधना संघट्टन परितापन अपद्रावणारूपा तथा तथायत्रतस्याग्निसंस्कारः कर्तव्यः । तत्र स्थण्डिलमस्थण्डिलं वेति [न] परिभावयन्ति । ततस्तस्मिन्नस्थण्डिले ध्यामिते [दग्धे] ऽग्निना षट्जीवनीकायविराधना । अथ नाग्निसंस्कारं कुर्वन्ति किन्त्वेवमेव मुञ्चति तथाप्य स्थण्डिले मुक्ते षट्जीवनिकायविराधना । अन्यच्च यदि तस्य ग्लानस्य शरीरं क्वचित् प्रदेशेषु व्यापन्नं कुथितं भवेत् ततस्तस्मिन् व्यापन्ने अयतनया नीयमाने द्वीन्द्रियविराधना अत्रे व च प्रायश्चित्तविधिमाह-

[भा.१०११] गोणनिवेसणे सु य गुरुगा सेसेसु चउ लहुंति ।
उड्डाहलि य काउं निव वज्जेसुं भवे लहुगो ।।

वृ- यदि गृहस्थावलीवर्दाभ्यां निष्काशितवन्तो यदि वा राजा निष्काशितवान् श्वानो वा ग्लानावस्थायां वमनं मुखहृदयादिकं लिहन्ति तदा एतेषु स्थानेषु प्रायश्चित्तं प्रत्येकं चत्वारो गुरुका मासा । शेषेषु च सर्वेष्वपि स्थानेषु प्रत्येकं चत्वारो लघुमासा भवन्ति । अथवा राज्ञा निष्काशने चत्वारो गुरुकाः शेषेषु च सर्वेष्वपि स्थानेषु उड्डाहः संवृत्त इति चत्वारो लघुकाः यथाऽयतनया निष्काशने षण्णां जीवनिकायानां संघट्टनपरितापनाऽपद्रावणरूपा विराधना यच्चास्थण्डिले मोचनं अग्निसंस्कारकरणं वा यावत्कुथिते नीयमाने द्वीन्द्रियविराधना तन्निमित्तं च प्रायश्चित्तमिति ।

[भा.१०१२] बितिय मिच्छादिठी कत्तो धम्मोतवोवएसिंतु ।
इहलोए फलमेयं परलोए मंगुलतरागं ।।

वृ- ब्रुवते मिथ्यादृष्टयः कुतो धर्मस्तपो वा एतेषां नैव कुतश्चिदपीति भावः । तथाहि इहलोके तावत्फलमेतत् । यदित्थं निष्काशनं परलोके एतस्मादपि फलात् फलं मङ्गलतरमशुभतरमिति, तथा-

[भा.१०१३] जइ एरिसाणिपावेंति दिक्खिया किं खु अम्ह दिक्खाए ।
पव्वज्जाभिमुहाणं पुनरावत्ति भवे दुविहा ।।

वृ- यदि दीक्षिता अपि ईदृशानि विडम्बनानि प्राप्नुवन्ति ततः किमस्माकं खु-निश्चितं दीक्षया नैव तया किञ्चित्प्रयोजनमिति भावः, । एवं प्रव्रज्याभिमुखानां पुनरावृत्तिः पुनः पश्चाद्गलनं द्विविधा द्रव्यतो भावतश्च भवेत् ।। गतं मरणद्वारमधुना शल्यद्वारमाह-

[भा.१०१४] बालेन वि पम्हुट्ठे सल्लो वाघातो मरणभीयस्स ।
एवं दुग्गति भीए वाघातो सल्लमोक्खट्ठा ।।

वृ- एगो पुरिसो नगरं पत्थितो अन्नेहिं वारितो । मागच्छं पंथे सप्पो चिठति, सो धाविऊणं खाति, । सो भणाति अहंनस्सीहामि न मे सो सप्पो अम्माहिती । ततो सो चलितो पंथे वच्चतो सप्पेण दिठो । ततो पहावितो सप्पो, सो सिग्घयरं नासेउं पवत्तो । तस्स तहा नस्संतस्स पाए कंटको लग्गो । तेन वाघाएण सप्पेण समेउं खतितो मतो य, ततो यथा तस्य व्यालेन दुष्टेन सर्पेण प्रारब्धजीवितविप्रयोगाय प्रकर्षेण खादितुमारब्धस्य मरणभीतत्वादेन शीघ्रपलायमानस्य शल्यं व्याघाततो व्याहन्यते गमनमनेनेति व्याघातो गमनव्याघातकरणमभवत् । एवं दुर्गतिभीते षष्ठीसप्तम्योरर्थं प्रत्यभेदात् दुर्गतिभीतस्य मोक्षार्थं व्रजतः शल्यमपराधलक्षणं मोक्षगमनव्याघातकारि जातम् ततः किमित्याह-

[भा.१०१५] मरिउं ससल्लमरणं संसाराडवि महाकडिल्लंमि ।
सुचिरं भमंति जीवा अनोरपारंभि ओइन्ना ।।

वृ- उक्तप्रकारेण सशल्यं मरणं यथा भवति एवं मृत्वा संसाराटवी महागहने अनर्वाक्पारे अवतीर्णा जीवाः सुचिरमनन्तमपि कालं यावत् भ्रमन्ति अत्रोपसंहारमाह-

[भा.१०१६] जम्हा एते दोसा तम्हा दोण्हं न कप्पति विहारो ।
एयं सुत्तं विफलं इह सफलं निरत्थतो अत्थो ।।

वृ- यस्माद्द्वयोः विहारे एते अनन्तरोदिता दोषास्तस्मान्न कल्पते द्वयोर्विहारः । अत्र पर आह- नन्वेतत् सूत्रमफलं द्वयोर्विहार स्यैवासंभवात् । अथ सफलं तर्हि द्वयोर्विहारः सूत्रेणानुज्ञात इति योऽयमर्थतः

प्रतिषिद्धो भवद्भिर्विहारः सोऽर्थो निरर्थकः । सूत्रेणाबाधितत्वात् । आचार्य आह-

[भा.१०१७] मा वय सुत्तनिरत्थं न निरत्थगवाइणो जतो थेरा ।
कारणियं पुन सुत्तं इमे य ते कारणा होंति ।।

वृ- मा वद मा ब्रूहि त्वं चोदक यत् सूत्रं निरर्थकं यतः स्थविरा भगवन्तो निरर्थक वादिनो न भवन्ति तेषां श्रुतकेवलित्वात् । यद्येवमर्थतः प्रतिषिद्धो द्वयोर्विहारोऽथ च सूत्रे प्रतिपादित इति कथमत आह - सूत्रं पुनः कारणेषु भवं कारणैर्निवृत्तं वा कारणिकं कारणान्यधिकृत्य प्रवृत्तमिति भावः ।

तानि च कारणान्यमूनि वक्ष्यमाणलक्षणानि तान्येवाह-

[भा.१०१८] असिवं ओमोयरिए रायदुट्ठे संदेसणे जयंता वा ।
अज्जाणगुरुनियोगा पव्वज्जा नातिवग्गदुगे[वे] ।।

वृ- अशिवं क्षुद्रदेवता कृतउपद्रवः । तस्मिन् द्वयोर्विहारः, । तथा अवमौदर्यं दुर्भिक्षं तस्मिन् अथवा राजा प्रद्विष्टो भवेत् ततो द्वयोर्विहारः, । संदेसणत्ति आचार्यप्रेषणेन द्वौ विहरेयातां जयंता वा इति यतमाना नाम ज्ञाननिमित्तं दर्शननिमित्तं वा प्रयत्नवन्तः । इयमत्र भावना- विषमशास्त्राणि सम्प्रतिकालगृहितानि च यदि नाभ्यस्तानि क्रियन्ते ततो । विस्मृतिमुपयान्ति । गच्छे च सबालवृद्धाकुले भिक्षाचर्यादिना व्याघातस्तत आचार्यानापृच्छ्य तैर्विसृष्टौ द्वावन्यत्र गच्छेयातां, । एवं दर्शनप्रभावकशास्त्रनिमित्तमपि द्वयोर्विहारो भावनीयः, । आचार्याणां वा एकस्मात्क्षेत्रादन्यस्मिन् क्षेत्रे नयने सङ्घाटस्य गुरुनियोगात् द्वयोर्विहारो भवेत् । यदि वा प्रव्रज्याभिमुखः कोऽपि सञ्जातस्ततस्तस्य स्थिरीकरणार्थं सङ्घाटकप्रेषणं यदि वा ज्ञातिवर्गः स्वजनवर्गः कस्यापि साधोर्वन्दापनीयो जातः ततस्तद्वन्दनार्थं च द्वौ विहरेयातमिति

तत्र यतनामाह-

[भा.१०१९] समयं भिक्खगहणं निक्खमणपवेसणं अनुन्नवणं ।
एक्को कहमावन्नो एको य कहं न आवण्णो ।।

वृ- यो नाम प्रागुक्तकारणवशात् विहृतौ तौ द्वावपि समकं युगवत् भिक्षाग्रहणं कुरुतः, समकं भिक्षानिमित्तं हिण्डते इत्यर्थः । एवं समकमेव शेषप्रयोजननिमित्तमपि निष्क्रामतो व्रजतः समकमेव च प्रविशतः गत्वा प्रत्यागच्छतः तथा समकमेवानुज्ञापनं कुरुतः । किमुक्तं भवति ? समकमेव नैषेधिक्यादिकं शय्यातरादिकमनुज्ञापयतः तत एकाकिनः सतो ये प्रागुक्ता दोषास्ते प्रायो न सम्भवन्ति । पर आह-यद्येवं समकभिक्षाग्रहणादिकरणं कथमेकः प्रायश्चित्तस्थानमापन्न एको वा कथं नापन्न इति

सूरिराह-

[भा.१०२०] एगस्स खमणभाणस्स धोवणं व हिय इंदियत्थेहिं ।
एएहिं कारणेहिं आवन्नो वा अणावन्ने ।।

वृ- एकस्य क्षपणमभक्तार्थोऽभवत्; एकेन तु क्षपणं न कृतम् । तत्र यदि क्षपणकारी शक्नोति ततो द्वावपि समकं भिक्षानिमित्तं हिण्डेते । अथ क्षपणकृत् न शक्नोति तत एको भिक्षार्थं गच्छति । एकस्तूपाश्रय एव तिष्ठति । एवं द्वयोरप्येकाकित्वसंभव तथा भाणस्स धोवणंति अथ धावनार्थमुपाश्रयात् बहिर्विनिर्गत एकस्तूपाश्रयस्यैवांतस्तिष्ठति । एवमेकाकिनौ जातौ ततो यो भिक्षागतो यो वा भाजनप्रक्षालनार्थं बहिर्विनिर्गतो यो वा वसतावतिष्ठते स इन्द्रियार्थै रूपरसादिभिरिष्टानिष्टैः समापतितं रागं द्वेषं वा प्रयाति रागद्वेषगमनाच्च प्रायश्चित्तस्थानमापद्यते । तत एवमनन्तरोदितैः कारणैरेकः

प्रायश्चित्तस्थानमापन्नो भवत्येकस्त्वनापन्न इति । अथवा यद्यपि नाम भिक्षाग्रहणादिनिमित्तं समकं हिण्डेते यथाप्येक आपद्यते प्रायश्चित्तस्थानमपरो नैव । तथा चाह-

[भा.१०२१] तुल्ले व इंदियत्थे एगो सज्जइ विरज्जई एगो ।
अज्झत्थं तु पमाणं न इंदियत्था जिना बेंति ।।

वृ- तुल्येऽपि समानेऽपि इन्द्रियविषये रूपादौ रागहेतावेको रज्यते रागमुपगच्छति, द्वितीयो विरज्यते विषयपरिणामस्य च दारुणतां भावयन् विरक्तो भवति, । तस्मात्प्रायश्चित्तापत्त्यनापत्तिविषये अध्यात्मनान्तरपरिणामः सप्रमाणं न इन्द्रियार्थाः इति जिना भगवन्तः सर्वज्ञा ब्रूवते । ततः समकहिण्डनेऽप्येको घटते प्रायश्चित्तमापन्नोऽपरोनेति इतश्च विषया न प्रमाणं यत आह-

[भा.१०२२] मनसा उवेति विसए मनसाविय सान्नियत्तिए तेसु ।
इय विहु अज्झत्थसमो बंधो विसया न उ पमाणं ।।

वृ- इह विषयोपलब्धिव्यतिरेकेणापि मनसा अन्तःकरणेन विषयान् रूपादीन् उपैति अध्यवसतीति भावः, । मनसैव च तेभ्यो विषयेभ्यः सन्निवर्तते विरज्यते इत्यर्थः । इत्यपि एवमपि हु निश्चित-मध्यात्मसमोऽध्यात्मानुरूपः परिणामानुसारी इत्यर्थः बन्धः कर्मबन्धः न तु विषयाः प्रमाणं तेषु सत्स्वपि केषाञ्चिद्रागद्वेषासंभवात् । तदभावेऽपि च केषांचिन्मनसा तत्संभवादिति ।

[भा.१०२३] एवं खलु आवन्ने तक्खण आलोयणा उ गीयंमि ।
ठवणिज्जं ठवतित्ता वेयावडियं करे बितिओ ।।

वृ- एवमुक्तेन प्रकारेण खलु निश्चितमेकस्मिन् प्रायश्चित्तस्थानमापन्ने तेन तत्क्षणमेव तत्कालमेव गीते गीतार्थस्य पुरत आलोचना दातव्या । तत्र यदि द्वावपि गीतार्थौ विहरतस्ततः स्थापनीयम् प्रागुक्तस्वरूपं स्थापयित्वा यः प्रायश्चित्तस्थानमापन्नः स परिहारतपः प्रतिपद्यते । द्वितीयः कल्पस्थितो भवति स एव चानुपारिहारिक इति तस्य वैयावृत्यंकरोति ।

मू. (३७) *दोसाहम्मियाएगतो विहरंति, दोवितेे अन्नयरं अकिच्चट्ठाणं पडिसेवित्ता आलोएज्जा, एकं तत्थ कप्पागं ठावइत्ताएगेणिव्विसेज्जा, अहपच्छासेविनिव्विसेज्जा ।*

वृ- द्वौ साधर्मिकावेकत एकत्र स्थाने विहरतस्तौ च द्वावप्यन्यतरदकृत्यं स्थानं प्रतिसेव्य आलोचयेतां तत्र यदि द्वावपि गीतार्थौ ततस्तत्र तयोर्द्वयोर्मध्ये एकं कल्पस्थितं स्थापयित्वा एको निर्विशेत् परिहारतपः प्रतिपद्यते यश्च कल्पस्थितः स एव चानुपरिहारिको भवत्यन्यस्याभावात्ततः स तस्य वैयावृत्यं करोति अथ परिहारतपः समाप्त्यनन्तर स कल्पस्थितः पश्चान्निर्विशेत् परिहारतपः प्रतिपद्येत इतरस्तु कृतपरिहारतपःकर्मा कल्पस्थितोऽनुपारिहारिकश्च भवति । एष सूत्रार्थः एनमेव सूत्रार्थं भाष्यकृत् सविशेषमाह-

[भा.१०२४] बितिए निव्विसएगो निव्विठेतेन निव्विसे इयरो,
एगंतरं मियगीते दोसुयसगनेयरे सोही ।

वृ- द्वितीये सूत्रे द्वयोरपि गीतार्थयोरन्यतरत् अकृत्यस्थानमापन्नयोरेको निर्विशति परिहारतपः प्रतिपद्यते, द्वितीयः कल्पस्थितोऽनुपारिहारिकश्च भवतीति वाक्यशेषस्ततस्तेन निर्विशिष्टे परिहारतपसि कृते इतरो द्वितीयो निर्विशति कृतपरिहारतपः कर्मानुतस्य कल्पस्थितो अनुपारिहारिकश्चोपजायते । यदि पुनरेकतरो अगीतोऽगीतार्थो भवति ततः शोधिं शुद्धतपः प्रायश्चित्तदानं, । अथ द्वयोरप्यगीतार्थयोः

सती: प्रायश्चित्तस्थापनापत्तौ स्वगणे इतरस्मिन् परगणे वा गीतार्थानां मिलित्वा ताभ्यां शोधिं शुद्धतपः प्रतिपद्यते अगीतार्थत्वेन परिहारतपो योग्यताया अभावात् ।

**मू. (३८)** *बहवे साहम्मिया एगतो विहरंति एगे तत्थ अन्नयरं अकिच्चट्ठाणं पडिसेवित्ता आलोएज्जा, तत्थ ठवणिज्जं च ठवित्ता करणिज्जं वेयावडियं ।*

**वृ-** बहवः साधर्मिका एकत: एकत्र स्थाने विहरन्ति । तत्र तेषां मध्ये एको गीतार्थोऽन्यतरदकृत्यस्थानं प्रतिसेव्य आलोचयेत् । आलोचनानन्तरं परिहारतपोदाने स्थापनीयं प्रागुक्तस्वरूपं स्थापयित्वा अनुपारिहारिकेण तस्य करणीयं वैयावृत्यमित्येष सूत्रार्थः । एनमेव भाष्यकृत्सविशेषमाह-

**[भा. १०२५]** एमेव तइयसुत्ते जइ एगो बहुगमज्झे आवज्जे ।
आलोयणगीयत्थे सुद्धे परिहार जह पुव्विं ।।

**वृ-** एवमेव अनेनैव प्रागुक्तेन प्रकारेण यद्येको बहुषु मध्ये अवतिष्ठमानः प्रायश्चित्तस्थानमापद्येत । ततस्तेन तत्क्षणं गीतार्थे गीतार्थस्य पुरत आलोचना दातव्या । तत्र यदि सोऽगीतार्थो भवति तदा शुद्धं तपस्तस्मै दातव्यम् । अथ गीतार्थस्ततः परिहारतपस्तच्च यथा स्थापनीयं स्थापना पुरस्सरं पूर्वमुक्तं तथात्रापि वक्तव्यमिथमाह भावना-ते बहवः साधर्मिका गीतार्था वा भवेयुः । गीतार्थमिश्रा वा । तत्र गीतार्थमिश्रेषु जघन्येनैको गीतार्थो भवेत् उत्कर्षतो द्वित्रादिकास्तत्र यदि सर्वे गीतार्था यदि वा द्वित्रादिका गीतार्थाः प्राप्यन्ते तदा एकः कल्पस्थितः क्रियते । एकोऽनुपारिहारिकः । अथ सर्वे आचार्या-व्यतिरेकेणागीतार्थास्ततः शुद्धतपोदेयम् । अथाचार्य एव प्रायश्चित स्थानामापन्नस्ततः सोऽन्यत्र गच्छे गत्वा परिहारतपः प्रतिपद्यते । अथ समस्ता अप्याचार्य प्रभृतयोऽगीतार्थास्ततोऽन्यत्र गच्छान्तरे ते सर्वे गत्वा यः प्रायश्चित्तमापन्नः । स शुद्धं तपः प्रतिपद्यते ।

**मू. (३९)** *बहवे साहम्मिया एगओ विहरंति, सव्वेवि ते अन्नयरं अकिच्चट्ठाणं पडिसेवित्ता आलोएज्जा एगं तत्थ कप्पगं ठवइत्ता अवसेसा णिव्विसिज्जा अहपच्छा सेवि निव्विसेज्जा ।*

**वृ-** अथास्य सूत्रस्य कः संबंधः ? उच्यते-

**[भा. १०२६]** सरिसम्मि असरिसेसु व अवराहपएसु जइ गेलन्ने ।
बहुय कयम्मि वि दोसित्ति होइ सुत्तस्स संबंधो ।

**वृ-** सदृशमपराधपदं नाम यथा सर्वैरपि प्राणतिपातः कृत इति, असदृशान्यपराधपदानि मूलगुणानां प्राणातिपातनिवृत्यादीनां मध्ये किमपि केनाप्यपराद्धं तत्र यदि गणः सदृशेऽपराधे यदि वा असदृशेष्वपराधेषु लगेत् तथापि यथा लोके शतमदंड्यं सहस्त्रमवध्यं तथात्रापि प्रतिपत्तिर्माऽभूत् । किन्तु बहुकैरपि कृतेऽपराधे दोषः । किमुक्तं भवति बहवोऽप्यपराधकारिणो नियमतः प्रायश्चित्तमापद्यन्ते इत्यस्यार्थस्य ख्यापनार्थमिदं सूत्रमित्येष सूत्रस्य सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या । बहवः साधर्मिका एकतो विहरन्ति ते च तथा विहरन्तः सर्वेऽप्यन्यतरत् अकृत्यस्थानं प्रतिसेव्या-लोचयेयुरालोच्य च एकं तत्र कल्पस्थितं कृत्वा अवशेषाः सर्वेऽपि निर्विशन्ति परिहारतपः प्रतिपद्यन्ते इत्यर्थः, ततस्तेषां परिहारतपः समाप्त्यनन्तरं पश्चात्सकल्पस्थितो निर्विशेत् स परिहारतपः प्रतिपद्येतेति भावः । तस्यैकोऽनुपारिहारिको दीयते, एष सूत्रसंक्षेपार्थः । व्यासार्थं तु भाष्यकृदाह-

**[भा. १०२७]** सव्वे वा गीयत्था मीसा व जहन्न एगो गीयत्थो ।
परिहारिय आलवणा इय भत्तं देन्ताय गेण्हंता ।।

**[भा.१०२८]**　　　　लहु गुरुगा सुद्ध तवाणं च होई पन्नवणा ।
अह होंति अगीयत्था अन्नगणे सोहणं कुज्जा ।।

**वृ-** ते बहवः साधर्मिकाः कदाचित् सर्वेऽपि गीतार्था भवेयुः कदाचिद्गीतार्थमिश्राः तत्र यदि जघन्येनैको गीतार्थः । तत्राचार्यो गीतार्थः, शेषाः सर्वे अगीतार्था इति यः एको गीतार्थः प्रायश्चित्तस्थानमापन्नस्तस्य एवाचार्यः कल्पस्थितः स एव चानुपारिहरिकः यदि पुनर्बहवो गीतार्थाः प्राप्यन्ते, यदि वा सर्वे गीतार्थाः, तत एकं कल्पस्थितं कृत्वा बहवः पारिहारिका भवंति, तेषां च परिहारिकाणामनुपारिहारिका भवंति, तेषां च पारिहारिकाणामनुपारिहारिकाः कर्त्तव्याः पारिहारिकैश्च परिहार तपसिव्यूढेनुपारिहारिकाः परिहारतपःप्रतिपद्यन्ते कृतपरिहारतपः कर्माणस्तु तेषामनुपारिहारिका भवन्ति । कल्पस्थितोऽपि परिहारतपो वहति, तस्याप्यनुपारिहारिक एको दातव्यः, । यदि पुनराचार्यः परिहारतपो योग्यं प्रायश्चित्तस्थानमापन्नो भवति । शेषास्तु सर्वेऽप्यगीतार्थास्ततः सोऽन्यगणं गत्वा परिहारतपः प्रतिपद्यते, । परिहारिकस्य यदि शेषाः साधव आलापनादिकं कुर्वन्ति आदिशब्दात्सूत्रवाचनादिपरिग्रहः ततस्तेषां प्रायश्चित्तं लघवः; । अथ भक्तं ददति तदा चत्वारो गुरवः । तथा पारिहारिकाद्भक्तं गृह्णन्ति तदा चत्वारो लघवः; यदिपारिहारिक एवालापनादिकं करोति भक्तं वा ददाति गृह्णाति वा तदा सर्वत्र प्रत्येकं चत्वारो गुरवः । ये पुनरगीतार्थास्तेभ्यः शुद्धतपो दातव्यमगीतार्थतया तेषां परिहारतपो योग्यत्वाभावात् अथ कीदृशाः परिहारतपोऽर्हाः कीदृशाश्च शुद्धतपो योग्या इति शिष्यप्रश्नावकाशमाशङ्क्य शुद्धतपोयोग्यानां च शब्दात् परिहारतपो योग्यानां च प्रज्ञापनाप्ररूपणा कर्त्तव्या । अत्रापितत्प्ररूपणायाः स्थानत्वात् सा च प्रागेव कृतेति न भूयः क्रियते । अथ सर्वेऽप्यगीतार्था भवेयुस्ततस्ते अन्यस्मिन् गणे गत्वा शोधनं कुर्युरालोचनां दत्वा शुद्धतपः प्रतिपद्येरन्निति भावः

**मू. (४०)** *परिहारकप्पट्ठिते भिक्खुगिलायमाणे अन्नयरं अकिच्चट्ठाणं पडिसेवित्ता आलोएज्जा, सेय संथरेज्जा ठवणिज्जं ठवइत्ता करणिज्जं वेयावडियं । सेय नो संथरेज्जा अनुपारिहारिते करणिज्ज वेयावडियं, सेयसंतेबले अनुपारिहारिणं कीरमाणं वेयावडियं साइज्जेज्जा, सेयकसिणे तत्थेव आरुहेयव्वेसिया ।*

**वृ-** 'परिहारकप्पठिए भिक्खू गिलायमाणे' इत्यादि सूत्र परिहारकल्पस्थितो भिक्षुर्ग्लायन् ग्लानिमुपागच्छन् । अन्यतरदकृत्यस्थानं प्रतिसेव्य आलोचयेत् । स च तेनाकृत्य प्रतिसेवनेन संस्तरेत् परिहारतपोवहने समर्थो भवेत् ततः स्थापनीयं स्थापयित्वा अनुपारिहारिकस्तस्य स्थापयितव्यस्तेन तस्य करणीयं वैयावृत्त्यमिति 'सेय न संथरेज्जा' इत्यादि सोऽधिकृतः पारिहारिको ग्लानयन्नकृत्यप्रतिसेवनेनापि संस्तारयेत् । न परिहारतपो योग्यमनुष्ठानं विधातुमलं ततः तस्यानुपारिहारिकेण वैयावृत्यकरणीयं च थाकरणीयं तथा भाष्यकृद्दर्शयिष्यति । यदि पुनः सत्यपि बलेऽनुपारिहारिकेण क्रियमाणं वैयावृत्यं साइज्जेज्जति स्वादयेत् अनुमन्येत, तदपि प्रायश्चित्तं कृत्स्नं अत्रैव उह्यमाने परिहारतपसि अनुग्रहकृत्स्नेनारोपयितव्यं स्यादिति सूत्रसंक्षेपार्थः । व्यासार्थं तु भाष्यकृत्प्रतिपादयति-

**[भा.१०२९]**　　　　परिहारयाहिगारं अनुवंतंते अयंविसेसो उ ।
आवन्नदान संथरमसंथरे चेव नाणत्तं ।।

**वृ-** पारिहारिकप्रकृतेऽनुवर्तमाने अयं वक्ष्यमाणलक्षणो विशेषः पारिहारिकविधिगत आभ्यां सूत्राभ्यां अभिधीयते । को विशेषइत्यत आह-आवन्नदाणसंथरेत्ति परिहारतपः प्रायश्चित्तमापन्नस्य परिहारतपोदाने

कृते सति तद्वहतो ग्लानिमुपगतस्य अन्यतरदपुत्रत्स्थानं प्रतिसेव्यते न संस्तरतः प्रथमसूत्रेणविधि-गर्भिर्थावते । द्वितीयसूत्रेण पुनरतेनाप्यसंस्तरत इति सूत्रद्वयस्य परस्परं पूर्वानन्तरसूत्राद्य नानात्वं विशेष इति अत्र पर आह-

**[भा.१०३०]** उभयबले परियागं सुत्तत्था भिग्गहे य वण्णेत्ता ।
न हु जुज्जइ वोत्तुं जं जं तदवत्थो वि आवज्जे ॥

**वृ-** ननु तस्य पारिहारिकस्य पूर्वमुभयं धृतिसंहननलक्षणं बलं वर्णितं पर्यायश्च गृहिपर्यायतिपर्यायरूप उभयतो वर्णितः सूत्रार्थावपि तस्य यावत्प्रमाणौ भवतस्तावत् प्रमाणौ वर्णितावभिग्रहा अपि च तस्य क्षेत्रादिविषयाः पूर्वमभ्यस्ता व्यावर्णितास्तत उभयबलमुभयं पर्यायं सूत्रार्थावभिग्रहांश्च वर्णयित्वा न हु नैव युष्माकं युज्यते वक्तुं जं इति पादपूरणे यत्तदवस्थो पिपरिहारतपः प्रतिपन्नो ऽप्यापद्यते प्रायश्चित्तस्थानमिति उभयबलयुक्तस्य भूयः प्रायश्चित्तस्थापनापत्तिसम्भवाभावादत्र सूरिराह-

**[भा.१०३१]** दोहि वि गिलायमाणे पडिसेवंते मएण दिट्ठंतो ।
आलोयणा अफरुसे जोहे य सहे य दिट्ठंते ॥

**वृ-** द्वाभ्यामाद्याभ्यां परीषहाभ्यां क्षुत्पिपासा लक्षणाभ्यां ग्लायन् ग्लानिमुपगच्छन् गुरुलाघवचिन्तया अनेषणादिकमपि प्रतिसेवते तस्मिंश्च तथा प्रतिसेवमाने दृष्टान्तो मृगेण वेदितव्यः । स च तथा प्रतिसेव्यालोचयेत् । आलोचनायां च तेन दीयमानायां अपरुषं भाषणीयं । यदि पुनः परुषं भाषन्ते प्रायश्चित्तं चत्वारो गुरुका मासा आज्ञा अनवस्था मिथ्यात्वविराधनाश्च दोषाः । अत्रार्थे योधान् दृष्टान्तीकुर्याद्यदि वा वृषभेण दृष्टान्तः कर्तव्य इति । तत्र मृगदृष्टान्तो ऽयम्- एगो मिगो गिम्हकाले संपत्ते तन्हाए अभिभूतो पाणियत्थाणं गतो पासति । कोदंडके धण्हिहत्थं वाहं ततो मिगो इमं चिंतेइ । जइ न पियामि तो खिप्पं मरिहामि, पीतसुहेण मरिहा[जा]मि अवि य पीए कयाइ बलियत्तणगुणेण पलाइज्जावि एवं चिंतिऊण सो अन्नेण उगासेणं खिप्पं पानियं पाउं लग्गो । जाव सो वाहेतं उगासं पावति ताव कइवि पोंटे [घोंट्ट] करित्ता पलातो । एवं सो विपारिहारितो चिंतेइ 'जइ न पडिसेवामि तो मरामि; अवूढे च पायच्छित्तं अन्नमवि कम्मनिज्जरणं न काहामि पडिसेविए पुन पच्छित्तं च अवूढं च वहिस्सामि अन्नं च कम्मनिज्जरणं चिरं जीवंतो करिस्सामि । लवसत्तमदेवदिट्ठंतेनं कयाइ सिज्झहामि विज्जुलवेयंजतो भणियं-

**[भा.१०३२]** अप्पेण बहु मे सेज्जा एयं पंडियलक्खणं ।
सव्वासु पडिसेवासु एयं अठावयं विदू ॥

**वृ-** अत्रोत्तरार्धाक्षरगमनिका- सर्वासु प्रतिसेवनासु एतदनन्तरोदितमल्पेन बहुमेषणामर्थपदं सार्थकमपवादपं विदुर्जानन्ति पूर्वमहर्षयः एनमेव मृगदृष्टान्तं भावयति-

**[भा.१०३३]** गिम्हे समंक्खिएसु दट्ठं वाहम्मतो जलोयारे ।
चिंतेइ जइ न पाहं तोयं तो मे धुवं मरणं ॥

**[भा.१०३४]** पाउं मरिउं पि सुहं कयाइ वि सचिट्ठतो पलाएज्जा ।
इति चिंतेउं पाउं नोल्लेउं तो गतो वाहं ॥

**वृ-** ग्रीष्मे ग्रीष्मकाले स मृगो जलावतारे गतो व्याधं मोक्षितेषु मोक्षितो मोक्तुमिष्ट इषुर्वाणो येन स तथा तं दृष्ट्वा चिन्तयति । यदि न पास्यामि तोयं जलं ततो मे ध्रुवं मरणं, अपि च पानीयं पीत्वा मर्तुमपि मे

सुखं तथा कदाचित्पानीयपानेन सचेष्टाकः सन् पलायेयमपि इति चिन्तयित्वा इति पानीय-मन्यस्मिन्नवकाशे पीत्वा वेगबलेन व्याधं नुदित्वा प्रेर्य गतो मृगः स्वस्थानमुक्तो मृगदृष्टान्तः ।

सम्प्रति दार्ष्टान्तिक योजनामाह-

[भा.१०३५] मिग सामाणो साहू दगपानसमा अकप्पपडिसेवा ।
वाहोवमो य बंधो सेविय पीतं पणोल्लेइ ।।

वृ- मृगसमानो मृगसदृशः साधुरुदकपानसमा उदकाभ्यवहारसमा अकल्पप्रतिसेवा, व्याधोपमो व्याधस्थानीयो बन्धः कर्मबन्धः । तं कर्मबन्धमकल्पं प्रतिसेव्य मृग इव पानीयं पीत्वा व्याधं प्रनुदति प्रेरयति ।। सम्प्रति आलोचनाया अपरुषभाषणे यो योधदृष्टान्त उपन्यस्तः स भाव्यते एगो राया, सो परबलेणं अभिभूतो, तेन जोह संदिट्ठा जुज्झह । ते जुज्झंता परबलेन पहारेहिं परिताविया भग्गा । ततो आगया अप्पनिज्जगस्स रन्नो पायमूलं तेन वायासरेहिं तज्जिया तुब्भे ममवित्तिं खाइत्ता किं पहाराणं भीया पडिआ गता, ताहे ते जोहा परबलमभिभविउ मसमत्था इमं चिंतंति । जुज्झंताण आउहपहारेणं भग्गाणं पडिआ गयाणं वायासरपहारा बंधनमरणादीणि विसेसेंति कीस अप्पा न परिच्चत्तोत्ति चिंतेऊणं तेहिं जोधेहिं राया बंधिउं परबलरन्नो दिन्नो । एनमेवार्थमाह-

[भा.१०३६] परबलपहारचइया वायासरतो इया य ते पहुणा ।
परपच्चूहासत्ता तस्सेव हवंति घाताय ।।

वृ- योधाः परबलकृतैः प्रहारैस्त्याजिताः सङ्ग्रामाध्यवसायं मोचितास्तः प्रत्यागताः सन्तस्ते स्वकीयेन राज्ञा वाक् शरैस्तोदिताः अतिशयेन पीडिताः परप्रत्यूहाशक्ताः परबलप्रतिक्षेपं कर्तुमसमर्था स्तस्यैवात्मीयस्य राज्ञो व्याघाताय भवन्ति । अन्नो राया परबलेनाभिभूतो तहेव जोहे पेसेइ परबलपहारेहिं भग्गे पडिआगते प्रोत्साहयति कथमित्याह-

[भा.१०३७] नामेण य गोत्तेण य पसंसया चेव पुव्वकम्मेहिं ।
भग्गवन्निया वि जोहा जिणंति सत्तुं उदिन्नंपि ।।

वृ- ते योधाः प्रत्यागताः सन्तः तेन राज्ञा नाम्ना अभिधानेन गोत्रेणान्वयेन तथा पूर्वकर्मभिः पूर्वकृतिरनेकैः संविधानकैः प्रशंसिताः सम्यक्स्तुतास्ततस्यता प्रशंसया उत्कर्षं ग्राहिता सन्तो भग्नव्रणिताः सन्तो भग्नाभग्नव्रणिता राजदण्डादि दर्शनाद्भग्नशब्दस्य पूर्व निपातः । तथा भूता अपि उदीर्णमपि प्रबलमपि शत्रुं जयन्ति । उक्तो योधदृष्टान्तः । सम्प्रति दार्ष्टान्तिकयोजनामाह-

[भा.१०३८] इय आउर पडिसेवंत चोदितो अहव तं निकायंतो ।
लिंगारोवनाचागं करेज्ज घायं च कलहं वा ।।

वृ- इति एवं योधगतेन प्रकारेणतुरः प्रथम द्वितीयपरीसहेनाभिभूतत्वेनाकुलीभूतोऽनेपणादि प्रतिसेवमानः सन् चोदितोऽथवा प्रतिसेवितं निकाचयन् आलोचयन् चोदितो यथा हे निधर्मन् किमीदृशं त्वया कृतमित्यादि । स च तथा परुषभाषणेन रोषं ग्राहितः सन् तां प्रति चोदनामसहमानो लिङ्गस्य वा रजोहरणमुखवस्त्रिकारूपस्य आरोपणस्य वा प्रायश्चित्तस्य त्यागं कुर्यात् । यदिवा घातं चोदकस्य कुर्यात्, घातग्रहणमुपलक्षणं, पिट्टनं वा लकुटादिभिर्जीविताद्व्यपरोपणं वा कुर्यात् कलहं वा राटिरूपं विदध्यात् कोपावेशतः सर्वस्याप्यकृत्यसंभवात्; सम्प्रति वृषभदृष्टान्त उच्यते - केदारेसु सालीवाविता तेयकेयाराविती ए परिक्खित्ताकया तेसिं एक्कं वारं कयं । अन्नया तेन बारेण वसभो पविट्ठो, केयारेसु

साली चरइ केयारसामी आगतो । तं वसभं पविठं पासिऊणं तं बार ढिक्कयं । ततो सरमादीहिं तं वसभं परितावेति । ताहे तेनं परितावएणं इमं कयं ।

**[भा.१०३९]** जंपि न चिन्नं तेन चमढियं पेल्लियं वसहराए ।
केयारेक्कदुवारे पायालेणं निरुद्धेणं ॥

**वृ**- केदारसक्ते एकस्मिन् द्वारे सति तेन द्वारस्थगनतो निरुद्धेन पायालेन सांढवृषभेन यदपरेषु केदारेषु न चीर्णं तदपि शरादिभिः परिताप्यमानेन इतस्ततः परिभ्रमता चमढियंति विनाशितं पेल्लियं चेति पातितं शीघ्रं । एष दृष्टान्तोऽपि थोंपनयः-

**[भा.१०४०]** तनुयंमिपि अवराहे कयंमि अनुवाय चोइएणं तं ।
सेसचरणं पि मिलियं अपसत्थपसत्थ बिइयं तु ॥

**वृ**- एवं वृषभदृष्टान्तगतेन प्रकारेण स्तोकेऽप्यपराधे कृते अनुपायेन उपायाभावेन यश्चोदितस्तेनानुपायश्चोदितेनाधिकृतप्रतिसेवनातः शेषं यच्चारित्रमवतिष्ठते तदपि लिङ्गत्यागादिना मलिनं क्रियते । इदमप्रशस्तमुदाहरणम्, द्वितीयंतूदाहरणं प्रशस्तं, तच्चेदम्-अन्नो केयारसामी, वसमं पासिऊणं दुवारस्स एगपासेठिच्चासद्दं करेति । ततो सो वसभो भीतो तेन दुवारेण निप्फडति निप्फडंतो य लेदुमादीहिं आहतो । एवं तस्स खेतमलणादिया पुव्वुत्ता दोसा न जाया । एवं आयरिएण वि सो उववाएण चोएयव्वो जहा न रूसति । ततो पुव्वुत्तो एगो वि दोसो न संभवति । व्याख्यातं प्रथमं सूत्रमधुना द्वितीयं व्याचिख्यासुः प्रथमतः सूत्रेण सह सम्बन्धमाह-

**[भा.१०४१]** तेनं व सेविएणं असंथरंतो वि संथरो जातो ।
बितितो पुन सेवंतो अकप्पियं नेव संथरंति ॥

**वृ**- अनन्तरसूत्राभिहितोऽसंस्तरन्नपि तेनैव प्रागुक्तेनाकल्पिकेन सेवितेन प्रतिसेवितेन संस्तरो विवक्षिताऽनुष्ठानवहनसमर्थो जातः द्वितीयः पुनरधिकृतसूत्रोक्तो अकल्पिकमपि प्रतिसेवमानो नैवं संस्तरति । नैवाधिकृतानुष्ठानवहन समर्थ उपजायते । ततोऽसंस्तरतो विधि ख्यापनार्थमधिकृत सूत्रारम्भः।

**[भा.१०४२]** एमेव य बीयसुत्तेण नाणत्तं नवरं असंथरं तंमि ।
करणं अनुपरिहारी चोयगगोणीए दिठंतो ॥

**वृ**- यता प्रागुक्तसूत्रेऽभिहितमुभयबलं परियागमित्यादि एमेव अनेनैव प्रकारेणास्मिन्नप्यधिकृते द्वितीये सूत्रे वक्तव्यं । नवरमत्र नानात्वमिदमसंस्तरति अकल्पिकप्रतिसेवनेनापि संस्तरणमप्राप्नुवति करणमनुपरिहारिणः यन्न शक्नोति परिहारिकः कर्तुं तद्भणितः सन् करोत्यनुपरिहारिक इति भावः । चोयगगोणीए दिठंतो इति पश्चाद्व्याख्येयम् । सम्प्रति यदनुपरिहारिणा कर्तव्यं तदाह-

**[भा.१०४३]** पेहा भिक्खग्गहणे उट्ठंतनिवेसणे य भुवणेय ।
जं जं न तरइ काउं, तं तं से करेइ बितिओउ ॥

**वृ**- प्रेक्षाया भिक्षाग्रहणे उत्तिष्ठति उत्थानं कर्तुमारभमाणो निवेशने चानुपरिहारिणः करणं भवतीति शेषः । इयमत्र भावना-यदि परिहारिको भाण्डं प्रत्युपेक्षितुं न शक्नोति ततोऽनुपारिहारिकं ब्रूते प्रत्युपेक्षस्वेदं भाण्डकमिति, ।ततो अभिधत्ते भिक्षामट; ततो भिक्षामटित्वा ददाति, । एवमुत्थानं यदि कर्तुं न शक्तस्तत उत्थापयति । उपवेष्टुमशक्तमुपवेशयति लेपकृदादिना खरंटितं पात्रबन्धादि यदि प्रक्षालयितुमशक्त-

स्तदातदपि प्रक्षालयति, । अत्र चोयगगोणीए दिट्ठंतो इत्यस्यावकाशः । चोदकः प्राह यदि नाम तस्यानु परिहारिणा कर्तव्यं ततः किमुक्तमेव करोति सर्वं कस्मान्न कुरुते तथाहि यथा भिक्षाहिण्डनार्थ-मुत्थातुमशक्नुवता परिहारिकेणोक्ते मामुत्थापयेति तमनुपारिहारिक उत्थापयति । तथा भिक्षामटित्वा कस्माद्भक्तमानेतुं न ददाति यथा वा भणितः सन् भिक्षामटित्वा भिक्षामानेतुं तस्मै प्रयच्छति, तथा भाण्डप्रत्युपेक्षणादिकमप्यभणित एव कस्मान्न करोति । सूरिराह-गाण्यात्र दृष्टान्तः । यथाकस्यापि गौर्वातादिना भग्नशरीरा मुपविष्टामुत्थातुमशक्नुवन्तीं पुच्छे गृहीत्वा गोनायक उत्थापयति । सा चोत्थिता सती स्वयमेव चारिं चरितुं याति । यदि पुनरसमर्था चारिं चरणाय गंतु तदा चारिं पानीयं चानीय ददाति । एवं च तावत्करोति यावद्बलिष्टोपजायते । एवं च पारिहारिकोऽपि यत्कर्तुं न शक्नोति तत्तत् से तस्य द्वितीयोऽनुपारिहारिकः करोति । यत्पुनः कर्तुमलं तत्स्वयमेवानिगूहित बलवीर्यः करोति । एवं नाम तेनवीर्याचारोऽनुचीर्णो भवति ।

सम्प्रति यदुक्तमण्ड परिहारिणं कीरमाणं वेयावच्चं जं साएज्जति तत्र साइज्जणामाह-

**[भा.१०४४]** जंसे अनुपरिहारी करेइ तं जइ बलंमि संतंमि ।
नन्निसेहइ सा साइज्जणा उ तहियं तु सट्ठाणं ।।

**वृ-** यत् से तस्य परिहारिणोऽनुपरिहारी करोति तद्यदि तेन क्रियमाणं सत्यपि बलेऽपिशब्दोऽत्रानुक्तोऽपि सामर्थ्यादि्लभ्यते । न निषेधते न निवारयति, सा नामसाइज्जणा स्वादना तत्र च तस्यां च स्वादनायां क्रियमाणायां प्रायश्चित्तं स्वस्थानम् किमुक्तं भवति ? प्रथमोद्देशके येषु स्थानेष्वालपनादिषु लघव उक्तास्तेषु स्थानेष्वस्य गुरुकादातव्याः, अनुमननाऽध्यवसायस्याति प्रमादहेतुत्वात् ।

**मू. (४१)** *परिहारकल्पट्ठियं भिक्खुंगिलायमाणं नो कप्पइ तस्स गणावच्छेइयस्स णिज्जूहित्तए. अगिलाए तस्स करणिज्जं वेयावडियं० जाव ततो रोगाओ विप्पमुक्को ततो पच्छा तस्स अहालहुस्सय नामं ववहारे पट्ठवेयव्वेसिया ।।*

**वृ-** अथास्य सूत्रस्य पूर्वसूत्रेण सह कः संबंधः ? उच्यते-

**[भा.१०४५]** तव सोसियस्स वाऊ, खुभेज्ज पित्तं व दोवि समगं वा ।
सन्नग्गि पारणंमी, गेलन्नमयं तु संबंधो ।।

**वृ-** तपः शोषितस्य घोरपरिहारतपसा शोषमुपागतस्य वातः क्षुभ्यते । यदि वा पित्तं अथवा द्वयमपिवातपित्ते समकं क्षुभ्येयातां, ततो वातेन पित्तेन वा सन्ने विध्याते अग्नौ पारणे कृते सति ग्लानत्वमुपजायते, । ततो ग्लानस्य सतो विधिख्यापनार्थमेतत्सूत्रमुपागतमित्येष सूत्रस्य सम्बन्धः । अनेन सम्बन्धेन आयातस्यास्य व्याख्या-परिहारकल्पस्थितं भिक्षु ग्लायन्तं यस्य सकाशमागतस्तस्य गणावच्छेदिनो न कल्पते निर्यूहितुमपाकर्तुं वैयावृत्त्या करणादिना किन्त्वग्लान्या तस्य करणीयं वैयावृत्यं तावद्यावत्स रोगातङ्काद्विप्रमुक्तो भवति, । ततः पश्चात्तस्य परिहारिणो लहुस्सगत्ति स्तोको नामव्यवहारः प्रायश्चित्तं प्रस्थापयितव्यो दातव्यः स्यादिति सूत्रं संक्षेपार्थः व्यासार्थं तु भाष्यकृद्विवक्षुर्यैः कारणैः स ग्लायति तान्यभिधित्सुराह-

**[भा.१०४६]** पढमबिइएहिं न तरइ गेलन्नेणं तवो किलंतो वा ।
निज्जूहणा अकरणं ठाणं च न देइ वसहीए ।।

वृ- प्रथमद्वितीयाभ्यां क्षुत्पिपासालक्षणाभ्यां परीषहाभ्यामभिभूतः सन् परिहारी ग्लायति । यदि वा ग्लानत्वेन अथवा तपसा क्लान्तः सन् ग्लायति गिलायमाणमिति पदं व्याख्यातमधुना 'निज्जूहिज्जा' इति व्याचिख्यासुराह-निर्यूहना नाम वैयावृत्यस्याकरणं यदि वा वसतौ दोषाभावे यत्स्थानां न ददाति एषा निर्यूहना वैयावृत्याकरणादिना यत्तस्याऽपाकरणं सा निर्यूहनेति भावः । यदुक्तमगिलाए तस्स करणिज्जमिति । तत्र गिला प्रतिषेदनाऽगिला ज्ञायते इति गिलाव्याख्यानार्थमाह-

[भा.१०४७]　　निववेठिं च कुणंतो जो कुणइ एरिसा गिला होइ ।
पडिलेहुठ्ठवणाइ वेयावडियं तु पुव्वुत्तं ।।

वृ- यो नाम नृपवेष्टिं राजवेष्टिमिव कुर्वन् वैयावृत्यं करोति एतादृशी भवति गिला ग्लानिः गिलायाः प्रतिषेधोऽगिला तया करणीयं वैयावृत्यं किं तदित्याह-प्रतिलेखनोत्थापनादिकं भाण्डस्य प्रत्युपेक्षणमुपविष्टस्योत्थापनमादि शब्दात् भिक्षानयनादि परिग्रहः ।

एतत्पूर्वोक्तं वैयावृत्यं अत्र निर्युक्तिविस्तरः-

[भा.१०४८]　　परिहारिकारणंमि आगमे निज्जूहणंमि चउगुरुगा ।
आणाइया य दोसा जं सेवति तं च पावहिति ।।

वृ- परिहारिणः कारणं वक्ष्यमाणलक्षणे आगमे आगमने सति यदि निर्यूहना क्रियते तदा तस्य गणावच्छेदिनो निर्यूहितुः प्रायश्चित्तं चत्वारो गुरुका मासाः । तथा आज्ञादयश्च आज्ञा अनवस्था मिथ्यात्वविराधनारुपाश्च तस्य दोषाः । तथा यद्वैयावृत्या करणतः स्थानालाभेन वा प्रतिसेवते परिहारि, तद्य निमित्तमपि च प्रायश्चित्तं सप्राप्नोतीति, संप्रति यैः कारणैः परिहारिण आगमनं भवति, तान्यभिधित्सुराह ।

[भा.१०४९]　　कालगता से सहाओ, असिवे रायाव बोहिय भएवा ।
एएहिं कारणेहिं, एगागी होज्ज परिहारी ।।

वृ- से तस्य परिहारिणः सहाय एको अनेको वा कालगतः, यदि वा साधूनामशिवमुपस्थितम्, अथवा राजाप्रद्विष्टः, बोहिवत्ति म्लेच्छाः तद्भयं वा समुपजातं ततः साधूनां वृन्दस्फोट उपजायते एतैः कारणैः स परिहारि एकाकी भवेत् । एकाकिनश्च सतः परिहारतपो न निर्वहति, विशेषतो ग्लायतस्तस्य आगमनमिति ।।

[भा.१०५०]　　तम्हा कायव्वं से कप्पट्ठियमनु परिहारियं ठवेऊण ।
बितियपद असिवादी, अगहियगहियंमि आदेसे ।।

वृ- यस्मादेवं कारणे समागतस्तस्मात्से तस्य परिहारिणः प्रायश्चित्तपरिज्ञाननिमित्तं सकलगच्छसमक्षं कल्पस्थितमनुपहारिणं च स्थापयित्वा कर्तव्यं, यत्करणं द्वितीयपदे अशिवादिलक्षणेऽपवादेन निर्यूहनापि परिहारिणः स गणावच्छेदी अशिवादिभिश्च गृहीताऽगृहीतविषये आदेशः प्रकारश्चतुर्भङ्गया[गा]त्मकः तमेवप्रकारमेवाह-

[भा.१०५१]　　गहियागहिए भंगा, चउरो न उ वसति पढमबितिएसु ।
इच्छाए तइय भंगे सुद्धो उ चतुत्थओ भंगो ।।

वृ- गृहीतागृहीते गृहीतागृहितविषये भङ्गाश्चत्वारस्तद्यथा-अशिवेन गच्छो गृहीतो न परिहारीति प्रथमो भङ्गः, परिहारिगृहितो न गच्छ इति द्वितीयः, परिहार्यपि गृहीतो गच्छोऽपीति तृतीयः, न गच्छो न परिहारीति

चतुर्थः । तत्र प्रथमे द्वितीये वा भङ्गे न प्रविशति, प्रथमभंगे परिहारिणो द्वितीयभंगे वास्तव्यानामनर्थसंभवात् तृतीयभंगे पुनरिच्छया प्रवेशः, यदिसदृशेनाशिवेन गृहीताः परिहारीगच्छश्चततः प्रवेश्यते, अथ विसदृशेन, एकसोममुखीभिरपरः कालमुखीभीरक्तमुखीभिर्वातदा न प्रवेश्यते, अन्यतरस्यानर्थसंभवात्, यस्तु चतुर्थो भंगः सशुद्धः एव सम्प्रति प्रथमादिषु भङ्गेषु प्रतिषिद्धमपि प्रवेशनं कुर्वतः प्रायश्चित्तविधिमाह-

[भा.१०५२] अइगमने चउगुरुगा साहूसागारिगामबहि ठेंति ।
कप्पट्ठ सिद्ध सन्नी साहुगिहत्थं पवेसेति ।।

वृ- प्रथमादिषु प्रतिषेधमतिक्रम्य गमनं प्रवेशनमिति गमनं तस्मिन् प्रायश्चित्तं चतुर्गुरुका मासाः आज्ञाऽनवस्था मिथ्यात्वविराधनाश्च दोषास्तथा यदि प्रथमादिषु भङ्गेषु प्रतिषिद्धेऽपि प्रवेशने कृते साधुरेकोऽपि कालं करोति तदा चरमं पाराञ्चितं नाम प्रायश्चित्तं । अथ शैय्यातरस्य कालकरणं ततश्चत्वारो गुरुकाः । यत एवं प्रायश्चित्तमतः परिहारिकेण ग्रामस्य बहिः स्थित्वा यदि कल्पस्थकं पश्यति । यदि वा सिद्धत्ति सिद्धपुत्रं अथवा संज्ञितं श्रावकं साधुं वा विचारादिविनिर्गतं गृहस्थं वा, ततः सन्देशं कथयित्वा प्रेषयति यथा गत्वा साधूनामाचक्ष्य बहिः प्रव्रजितो युष्मान् द्रष्टुकामस्तिष्ठति । स तथा प्रेषितः साधुनामाख्याति ततः किमित्याह-

[भा.१०५३] गंतूण पुच्छिऊणं तस्स य वयणं करेंति न करेंति ।
एगा भोगणसव्वे बहिठाणं वारणं इयरे ।।

वृ- ग्रामाभ्यन्तरवर्तिनः साधवः परिहारिणः समीपं गत्वा पृच्छंति निराबाधं भवतो वर्तते । तत्र यदि ब्रूते ग्रहितोऽहमशिवेनेति । तदा तस्स य वयणं करिंति न करिंतित्ति तस्य परिहारकस्य वचनं प्रवेशलक्षणं तं कुर्वन्ति । यदि वा न कुर्वंति किमुक्तं भवति ? प्रथमे द्वितीये वा भङ्गे न कुर्वन्ति तृतीयभंगे चतुर्थे कुर्वन्ति, तृतीये यतनामाह-एगा भोगनेत्यादि, तृतीये भङ्गे यदि सदृशमशिवं तत एकस्मिन्नुपाश्रये तं कुर्वन्ति । अथ विसदृशः तर्हि नैकस्मिन्नुपाश्रये स्थापनीयोऽन्यतरस्यानर्थसंभवात् । किन्तु भिन्नेतस्मिन्नप्यसम्बन्धे अथ व्यवच्छिन्नं गृहं न किमपि लभ्यते, । ततः सम्बन्धेऽपि गृहे पृथग् द्वारे स्थापनीयः एगाभोगणसव्वेति । एकस्य साधोराभोगनं प्रतिजागरणं किमुक्तं भवति । एकः साधुस्तं ग्लायन्तं परिहारिणं प्रतिजागर्ति, शेषाः सर्वेऽपि साधवः तत्प्रायोग्यमौषधादिकं याचन्ते । बहिट्ठाणमिति यदि पुनः परिहारिणो वसतावानयने शय्यातरोऽप्रतिं करोति तदा ग्रामस्य बहिर्वसतेर्दूरे वा योऽन्यो वाटकादिस्तत्र परिहारिणः स्थानं कर्तव्यम् । वारणं इयरे इति, अथ सागारिको यस्तं प्रतिचरति यश्च तत्र गत्वा शरीरवार्त्तां पृच्छति तस्मिन् वारणं प्रतिषेधं करोति । यथा-यूयमशिवगृहीतस्य समीपं गच्छत आगच्छत एवं च तेन सह सम्पर्कं कुर्वाणा अस्माकमप्यशिवं संचारयिष्यतस्तस्मान्माकोऽपि युष्मन्मध्ये तत्र यासीत्, तदा यतना कर्तव्या सा चाग्रे स्वयमेव वक्ष्यते साम्प्रतमेगाभोय[ग]णे सव्वे इति व्याख्यानयन्नाह-

[भा.१०५४] वोच्छिन्न घरस्सासइ पिहदुवारे वसंति संति संबद्धे ।
एगो तं पडिजग्गति, जोग्गं सव्वेवि झोसेंति ।।

वृ- व्यवच्छिन्नग्रहस्य असम्बद्धस्योपाश्रयस्य असति अभावे सम्बद्धेऽप्युपाश्रये वसति । कथंभूते इत्याह- पृथग्द्वारे विभिन्नद्वारे तत एकोतमितितं परिहारिणं प्रतिजागर्ति प्रतिचरति, शेषाः सर्वेऽपि साधवो योग्यमौषधादिकं झोपयन्ति-मार्गयन्ति । आभोगनं मार्गणं झोपणमिति ह्येकार्थ उक्तं च- 'आभोगणंति

वा मणणंति वा भक्तोसणंति वा एगटमिति' सम्प्रति बहि ठाणमिति व्याख्यानयति-

[भा.१०५५] सागारिय अचियत्ते बाहिं पडियरण तहवि नेच्छंति ।
अदिठे कुणइ एगो, न पुणो बेंति दिठंमि ॥

वृ- सागारिकः शय्यातरस्तस्य अचि[वि]यत्ते अप्रीतौ ग्रामस्य बहिर्वसतेर्दूरे वा योऽन्यउपाश्रयस्तं याचित्वा तं परिहारिणं विमुच्य एकः साधुः प्रतिचरति । वारणंइयरे इत्यस्य व्याख्यानमाह- 'तहवि नेच्छंते' इत्यादि तथापि एवमपि शय्यातरो नेच्छति यथा किमिति यूयं गमनागमन कारणेनास्माकमप्यशिवं सञ्चारतस्तस्मान्मा कोऽपि तत्र गच्छेदिति । तदा एकः साधुः यथा शय्यातरो न पश्यति न जानाति वा तथा प्रतिचरति । यदि पुनः कथमपि शय्यातरेण स्वयं दृष्टो भवेत् ज्ञातो वा ततो वदेत् यथा यूयं वारिता अपि न तिष्ठथ तदा तद्दृष्टे उपलक्षणमेतत् ज्ञातं वारिते चैवं वक्तव्यं न भूयो गमिष्यामि क्षमस्वैकवारमिति । अथ सागारिकस्य गाढमप्रीतिकरणं ततः सर्वेऽप्यन्यवसतिं याचित्वा च तिष्ठन्ति ।

[भा.१०५६] बहु पाउग्गमुवस्सय असती वसहा दुवेऽहवातिण्णी ।
कइयव कलहेणणहिं उप्पायण बाहिं संच्छोभो ॥

वृ- बहुप्रायोग्योपाश्रयस्या सति अभावे, किमुक्तं भवति ? यत्र सर्वे साधवो मान्ति स उपाश्रयोऽन्यो न लभ्यते । ततो द्वौ वृषभावथवा त्रयः कैतवेन कलहं कृत्वा अन्यत्र वसत्यन्तरे गच्छंति । तत्र स्थिताः परिहारिणः परिचेष्टां कुर्वन्ति । अन्यतरकैरपि औषधादीनामुत्पादनं कृत्वा औषधादीनि याचित्वा बहिः संक्षोभः क्रियते । बहिः परिहारिणः समीपं प्राप्यते । येऽपि च कैतवकलहं कृत्वा न विनिर्गतास्तेऽप्यन्यतरकैः सह विविक्ते प्रदेशे मिलित्वा पारिहारिकयोग्यं गृह्णन्ति सम्प्रति तद्गतप्रतिचरणविधिमाह-

[भा.१०५७] ते तस्ससोहियस्स य उव्वत्तणसंथरंवधोवेज्जा ।
अच्छेकोवहिपेहे अच्छियलिंगेण जो पउणे ॥

वृ- तेऽभ्यन्तरकाः कलहव्याजेन विनिर्गतास्तस्य शोधितस्य प्रतिपन्नपरिहारस्तपः प्रायश्चित्तस्य उद्वर्तनमुपलक्षणमेतत् । परावर्तनमौषधादि प्रदानं च वस्त्रान्तरितेन हस्तेन कुर्वन्ति । वस्त्राणि च तस्य सत्कानि सान्तरमेकोनंतरितानि गृह्णन्ति सोऽन्यस्मै समर्पयति । सोऽन्यस्मावित्यन्तरितं धावयन्ति प्रक्षालयन्ति । उपधिमपि तस्य प्रत्युपेक्षन्ते । अच्छिक्का अस्पृष्टास्सन्तः बहुवचनप्रक्रमेऽप्येकवचनं गाथायां प्राकृतत्वात् वचनव्यत्ययोऽपिहि प्राकृते यथा लक्ष्यं भवतीति । एवं तावत् प्रतिजागरति यावत्स प्रगुणे भवति । गजप्रद्वेषे तु यत् यत्रार्थितं लिङ्गं तेन लिङ्गेन यावत् प्रगुणो भवति तावत्प्रतिजाग्रति । सम्प्रति तस्स अहालघुस्सगे नामं ववहारो पट्ठवेयव्वे सिया इति सूत्रं व्याख्यानयन् व्यवहारं यथा लघुकं प्रस्थापनं च पर्यायैर्व्याख्यानयति-

[भा.१०५८] ववहारो आलोयण सोही पच्छित्तमेव एगट्ठा ।
थोवो उ अहा लहुसो पट्ठवणा होइ दानं तु ॥

वृ- व्यवहार आलोचनाशोधिः प्रायश्चित्तमित्येकोऽर्थः । तथा यथा लघुको नाम स्तोकः तथा प्रस्थापयितव्यः इति प्रस्थापना दानं ततो दातव्यो यथा लहु मित्यर्थो वेदितव्यः । यथा लघुस्वको व्यवहारः प्रस्थापयितव्य इत्युक्तं ततो यथा लघुकादि व्यवहार प्ररूपणार्थमाह—

[भा.१०५९] गुरुओ गुरुतरागो अहा गुरुगो य होइ ववहारो ।

लहुओ लहुअतरागो अहा लहुगोय ववहारो ।।

[भा.१०६०] लहुसो लहुसतरागो अहा लहुसो य होइ ववहारो ।
एएसिं पच्छित्तं वोच्छामि अहानुपुव्वीए ।।

वृ- व्यवहारस्त्रिविधस्तद्यथा गुरुको लघुको लघुस्वकश्च तत्र यो गुरुकः स त्रिविधस्तद्यथा गुरुको गुरुतरको यथा गुरुस्वकश्च लघुकोपि त्रिविधस्तद्यथा लघुः लघुतरो यथा लघुस्वको, लघुस्वकोपि त्रिविधस्तद्यथा लघुस्वो लघुस्वतरको यथा लघुस्वकश्च; एतेषां व्यवहाराणां यथानुपूर्व्या यथोक्त परिपाट्या प्रायश्चित्तं वक्ष्यामि; । किमुक्तं भवत्येतेषु व्यवहारेषु समुपस्थितेषु यथा परिपाट्या प्रायश्चित्तपरिमाणं अभिधास्ये यथा प्रतिज्ञातमेव करोति ।

[भा.१०६१] गुरुगो य होइ मासो गुरुग तरागो भवे चउम्मासो ।
अह गुरुगो छम्मासो गुरुगयपक्खंमि पडिवत्ती ।।

वृ- गुरुको नाम व्यवहारो मासो मासपरिमाणः, गुरुके व्यवहारे समापतिते मास एकः प्रायश्चित्तं दातव्य इति भावः । एवं गुरुतरको भवति चतुर्मास चतुर्मास परिमाणः यथा गुरुकः षण्मासः षण्मासपरिमाणः । एषा गुरुकपक्षे गुरुकव्यवाहारे त्रिविधे यथाक्रमंप्रायश्चित्तप्रतिपत्तिः सम्प्रति लघुक लघुस्वकव्यवहारविषयं प्रायश्चित्तप्रमाणमाह—

[भा.१०६२] तीसा य पणवीसा, वीसा पनरसेव य ।
दसपंचयदिवसाइं, लहु सगपक्खंमि पडिवत्ती ।।

वृ- लघुको व्यवहारस्त्रिंशद्दिवसपरिमाणः । एवं लघुतरक पञ्चविंशति दिनमानः, । यथा लघुस्वको विंशति विंशति दिनमानः । एषा लघुकव्यवहारे त्रिविधे यथाक्रमंप्रायश्चित्तप्रतिपत्तिः । तथा लघुस्वको व्यवहारः पञ्चदश पञ्चदशदिवस प्रायश्चित्तपरिमाणः । एवं लघुस्वतरको दशदिवसमानो यथा लघुस्वकः पञ्चदिवसानि पञ्च दिवस प्रायश्चित्तानि परिमाणः । एषा लघुस्वव्यवहारपक्षे प्रायश्चित्तपरिमाणप्रतिपत्तिः । अथ कं व्यवहारं केन तपसा पूरयतीति प्रतिपादनार्थमाह—

[भा.१०६३] गुरुगं च अट्ठमं खलु गुरुगतरागं च होइ दसमं तु ।
अह गुरुग दुवारसमं गुरुगपक्खंमि पडिवत्ती ।।

वृ- गुरुकं व्यवहारं मासपरिमाणं अष्टमं कुर्वन् पूरयति । किमुक्तं भवति ? गुरुकं व्यवहारं मासपरिमाणमष्टमेन वहति । तथा गुरुतरकं चतुर्मासप्रमाणं व्यवहारं दशमं कुर्वन् पूरयति दशमेन वहतीत्यर्थः । यथा गुरुकं षण्मासप्रमाणं व्यवहारं द्वादशकं कुर्वन् द्वादशमेनेत्यर्थः पूरयति एषा गुरुकपक्षे गुरुकव्यवहारपूरणविषये ततः प्रतिपत्तिः ।।

[भा.१०६४] छट्ठं च चउत्थं वा आयंबिल एगट्ठाण पुरिमड्ढं ।
निव्वीयं दायव्वं अहा लहुसम्मि सुद्धो वा ।।

वृ- लघुकं व्यवहारं त्रिंशद्दिनपरिमाणं षष्टं कुर्वन् पूरयति । लघुतरकं पञ्चविंशद्दिवसपरिमाणव्यवहारं चतुर्थं कुर्वन् यथा लघुकव्यवहारं विंशति दिवसमानमाचाम्लं कुर्वन् एषा लघुकत्रिविधव्यवहार पूरणे तपः प्रतिपत्तिः । तथा लघुकस्वभावव्यवहारं पञ्चदशदिवस परिमाणमेकस्थानकं कुर्वन् पूरयति । लघुतरस्वकव्यवहारं दशदिवस परिमाणं पूर्वार्धं कुर्वन् यथा लघुस्वकव्यवहारं पञ्चदिनपरिमाणं निर्विकृतिकं कुर्वन् पूरयति । तत एतेषु गुरुकगुरुतरकादिषु व्यवहारेष्वनेनैव क्रमेण तपो दातव्यं । यदि वा यथा लघुस्वके

व्यवहारे प्रस्थापयितव्ये स प्रतिपन्नव्यवहारतपः प्रायश्चित्त एवमेवालोचनाप्रदानमात्रतः शुद्धः क्रियते कारणे यतनया प्रतिसेवनात् ।

**मू. (४२)** *अनवट्ठप्पं भिक्खुं गिलायमाणं नो कप्पइ तस्स गणावच्छेइयस्स निज्जूहित्तए, अगिलाए तस्स करणिज्जं वेयावडियं जाव तओ रोगायंकाओ विप्पमुक्को तओ पच्छा तस्स अहालहुसए नामं व्यवहारे पट्ठवियव्वे सिया ॥*

**वृ-** अथास्य सूत्रस्य कः सम्बन्ध उच्यते-

**[भा. १०६५]** पच्छित्तं खलु पगयं निज्जूहण ठाणुवत्तए जोगो ।
होति तवो च्छेदो वा गिलाण तुल्लाहिगारो वा

**वृ-** योगः सम्बन्धः पूर्वसूत्रेण सहास्य सूत्रस्यायं भवति-प्रायश्चित्तं खलु प्रकृतमधिकृतं, ततः प्रायश्चित्तप्रस्तावादधिकृतस्याप्यनवस्थाप्यसूत्रस्यावकाशः । अथवा प्राक्तनसूत्रेषु पारिहारिक उक्तः। पारिहारिकस्य गच्छसामाचार्या निर्यूहणं ततोऽनुवर्तते निर्यूहणमिति निर्यूहणं प्रस्तावादनवस्थाप्यस्यापि निर्यूहस्य विधिप्ररूपणा यदि वा तवोच्छेदो वेति प्राक्तपोर्हं प्रायश्चित्तं प्रतिपन्नस्य सूत्रमुक्तमिदानीं च्छेदार्ह-प्रतिपन्नस्य वक्तव्यम् । छेदश्च द्विधा-पर्याय व्यवच्छेदो मण्डलीव्यवच्छेदश्च । ततो मण्डल्याव्य-वच्छिन्नमनवस्थाप्यमपेक्ष्याधिकृतसूत्रस्योपनिपातः । अथवा पूर्वसूत्रे ग्लायतो विधिरुक्तोऽनेनापि ग्लायतो विधिरुच्यते इत्यनेन सम्बन्धेनायातस्यास्य व्याख्या- अनवस्थाप्यं नवमप्रायश्चित्तप्रतिपन्नभिक्षुं ग्लायन्तं न कल्पते । यस्य समीपगतस्य गणावच्छेदिनो निर्यूहितुं निराकर्तुं किन्तु तस्य अगिलया राजवेष्टिमिवाननु मन्यमानेन सर्वज्ञादेश इति बुद्ध्या कर्मनिर्जरणनिमित्तं तस्य करणीयम् वैयावृत्यं तावत् यावत् रोगातङ्कात् विप्रमुक्तो भवति, । ततः पश्चात्तस्य प्रगुणी भूतस्य सतो यथा लघुस्वको यथोदितस्वरूपो व्यवहारः प्रायश्चित्तं प्रस्थापयितव्यो दातव्यः स्यात् ॥

**मू. (४३)** *पारंचियंति भिक्खुं गिलायमाणं नो कप्पइ तस्स गणावच्छेदितस्स निज्जुहित्तए अगिलाए तस्स करणिज्जं वेयावडियं जाव रोगातंकातो विप्पमुक्के ततो पच्छा । तस्स आहालहुस्सगो ववहारो पठवियव्वे सिया ॥*

**वृ-** अथास्य सूत्रस्य पूर्वसूत्रेण सह कः सम्बन्ध उच्यते-

**[भा. १०६६]** सगणे गिलायमाणं कारणपरगच्छमागयं चावि ।
माहु न कुज्जा निज्जुहणोंतिइइ सुत्त संबंधो ॥

**वृ-** यथा अनवस्थाप्यस्य कर्तव्यं तथा प्रतिपन्नपारांचितप्रायश्चित्तस्यापि न पुनरेष निर्युहितो निष्काशित इति कृत्वा स्वगणे ग्लायन्तं रोगातङ्क वशतो ग्लानिमुपगच्छन्तं यदि वा प्रागुक्तैरशिवादिभिः कारणैः परगच्छमागतं मा हु निश्चित्तं वृत्यावृत्यविपर्यं न कुर्यात् न कार्यात् । किन्तु तस्यापि वैयावृत्यस्यावश्यमगिलया कर्तव्यं । तथा प्रतिपन्नपाराञ्चितप्रायश्चित्तस्यापि तत्र स्वगणे क्षेत्रबहिः स्थितस्याचार्यः स्वयमुदन्तं वहति । परगणेऽपि कारणवशादायातस्य तदीय आचार्यः करोति । यथा सूत्रं वैयावृत्यमित्येष पूर्वसूत्रेण सहास्य सूत्रस्य सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या कर्तव्या । सा च प्राग्वत् साम्प्रतमनवस्थाप्य पाराञ्चितयोः स्वरूपमतिदेशत आह-

**[भा. १०६७]** अनवट्ठप्पो पारंची, पुव्वं भणितो इमं तु नाणत्तं ।
कायव्व गिलाणस्स उ अकरणे गुरुगा य आणादी ॥

**वृ-** अनवस्थाऽनवस्थाप्य: पाराञ्ची पाराञ्चितः । पूर्वं कल्पाध्ययने भणितः । इदं तु वक्ष्यमाणं नानात्वं तत्र ग्लानस्य सतश्चिन्ता न कृता, अत्र तु क्रियते । कथमित्याह- ग्लानस्य सतो गणावच्छेदिना आचार्येण च यथासूत्रं वैयावृत्यं कर्त्तव्यं यदि पुनर्न कुरुते ततोऽकरणे चत्वारो गुरुकाः गुरुमासाः प्रायश्चित्तं तथा आज्ञादय आज्ञाऽनवस्था मिथ्यात्वविराधनादोषाः सम्प्रति पाराञ्चितं प्रत्याचार्यस्य वैयावृत्यकरणे शिक्षामाह-

**[भा.१०६८]** उलोयणं गवेसण आयरिओ कुणति सव्वकालंपि,
उप्पन्न कारणम्मी सव्वपयत्तेण कायव्वं ।

**वृ-** अवलोकनं निरीक्षणं क्षेत्रबहिः स्थितस्य पाराञ्चितस्य गवेषणं च तद्योग्यस्य भक्तपानादेराचार्यः सर्वकालमपि यावत्पाराञ्चितावस्थायाः कालस्तावत्तं सकलमपि यावत्करोति । उत्पन्ने कारणे ग्लानत्वादि लक्षणे पुनः सर्वप्रयत्नेन कर्तव्यमाचार्येण ।

**[भा.१०६९]** जोउ उवेहं कुज्जा आयरितो केणई पमादेणं ।
आरोवणाउ तस्सा कायव्वा पुव्वनिद्दिट्ठा ।।

**वृ-** [illegible] किमपि [illegible] उपेक्षां कुरुते, [illegible] आरोपणा प्रायश्चित्तारोपणा पूर्वनिर्दिष्टा कर्तव्या चत्वारो गुरुकास्तस्मै प्रायश्चित्तं दातव्यमिति भावः ।

***मू. (४४)** खित्तचित्तं भिक्खू गिलायमाणं नो कप्पइ तस्स गणाऽवच्छेइयस्स निज्जूहित्तए अगिलाए तस्सकरणिज्जं वेयावडियं जावरोगायंकाओ विप्पमुक्को तओपच्छा तस्स अहालहुयस्सए नामं ववहारे पट्ठवेसिया ।*

**वृ-** खित्तचित्तं गिलायमाणमित्यादिसूत्रं । अथास्य सूत्रस्य कः सम्बन्ध उच्यते-

**[भा.१०७०]** घोरम्मि तवे दिन्ने, भएण सहसा भवेज्ज खित्तोउ ।
गेलन्नं वा पगयं अगिलाए करणं च संबंधो ।।

**वृ-** घोरे रौद्रे पाराञ्चिकादिरूपे तपसि दत्ते भयेन सहसा भवेत् क्षिप्तः क्षिप्तचित्तः अपहृतचित्त इत्यर्थः । अथवा ग्लान्यं प्रकृतं क्षिप्तचित्तोऽपि च ग्लानकल्पस्ततस्तस्यापि अग्लानया यथोक्तस्वरूपया कर्तव्यमिति तत्प्रतिपादनार्थमेष सूत्रोपनिपात इत्ययं पूर्वसूत्रेण सहास्य सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या सा च प्राग्वत् ।। सम्प्रति क्षिप्तचित्तप्ररूपणार्थमाह-

**[भा.१०७१]** लोइय लोउत्तरिओ, दुविहो खित्तो समासतो होइ ।
कह पुन हवेज्ज खित्तो, इमेहिं सुण कारणेहिं तु ।।

**वृ-** समासतः सङ्क्षेपतो द्विविधो द्विप्रकारः क्षिप्तो भवति । तद्यथा- लौकिको लोकोत्तरिकश्च । तत्र लोके भवो लौकिकः, अध्यात्मादित्वादिकण् एवं लोकोत्तरे भवो लोकोत्तरिकः अथ कथं केन प्रकारेण पुनः क्षिप्तः क्षिप्तचित्तो भवेत् । सूरिराह- शृणु एभिर्वक्ष्यमाणैर्भवति तान्येव कारणान्याह –

**[भा.१०७२]** रागेण वा भयेण व अहवा अवमानितो नरिंदेण ।
एएहिं खित्तचित्तो वणियादि परूवणा लोए ।।

**वृ-** रागेण वा यदि वा भयेन अथवा नरेन्द्रेण प्रजापतिना उपलक्षणमेतत् । सामान्येन वा प्रभुणा अपमानितोऽपमानं ग्राहितः एतैः खलु कारणैः क्षिप्तचित्तो भवति । ते च लोके उदाहरणत्वेन प्ररूपिता वणिगादयः । तत्र रागेण क्षिप्तचित्तो यथा वणिग्भार्या । तथा हि- काचिद्वणिग् भार्या भर्तारं मृतं श्रुत्वा

क्षिप्तचित्ता जाता, भयेनापमानेन च क्षिप्तचित्तत्वे उदाहरणान्याह-

**[भा.१०७३]** भयतो सोमिलबडुतो, सहसोत्थरितो व संजुयादीसु ।
धन हरणेन पहूण व विमाणतो लोइया खित्तो ॥

**वृ-** भयतो भयेन क्षिप्तचित्तो यथा गजसुकुमालमारको जनार्दनभयेन सोमिलनामा बटुको ब्राह्मणः । अथवा संयुगं[सं]ग्रामस्तत्र आदिशब्दात् परबलधाटीसमापतनादि परिग्रहस्तेर्गाथायां सप्तमीतृतीयार्थे सहसा अतर्कितः समन्ततः परिगृहीतो भयेन क्षिप्तचित्तो भवति । स च प्रतीत एव भयेनोदाहरणमुक्तम् । संप्रत्यपमानत आह-प्रभुणा वा नरेन्द्रेण धनहरणेन समस्तद्रव्यापहरणो विमानितोऽपमानितः क्षिप्तो भवति । एवमादिकानि लौकिकान्युदाहरणानि क्षिप्तचित्तविषयाणि ॥

सम्प्रति लोकोत्तरि-कान्यभिधित्सुराह-

**[भा.१०७४]** रागम्मि रायखुड्डो जड्डादितिरिक्खचरयवायम्मि ।
रागेण जहा खित्तो तमहं वोच्छं समासेण ॥

**वृ-** रागे सप्तमी तृतीयार्थे । रागेण क्षिप्तचित्तो यथा राजक्षुल्लकः राजपुत्रः क्षुल्लकोराजक्षुल्लकः शाकपार्थिवादिदर्शनादिमध्यपदलोपीसमासः । भयेन, यथा जड्डादीन् हस्तिप्रभृतीन् तिरश्चो दृष्ट्वा । अपमानतो यथा चरकेण सह वादे पराजितः तत्र । रागेण यथा-राजक्षुल्लको यः क्षिप्तचित्तोऽभवत्तमहं तथा समासेन वक्ष्ये ॥ यथा प्रतिज्ञातं करोति-

**[भा.१०७५]** जियसत्तुनरवइस्सा पव्वज्जा सिक्खणा वि देसंमि ।
काऊण पोयणम्मी तेल्लाइ निव्वुतो भयवं ॥

**[भा.१०७६]** एक्को य तस्स भाया रज्जसिरिं पयहिऊण पव्वइतो ।
भाउग अनुरागेणं खित्तो जातो इमो उ विही ॥

**वृ-** जितशत्रुर्नामनरपतिस्तस्य प्रव्रज्या अभूत् । धर्म तथाविधानां स्थविराणामन्तिके श्रुत्वा प्रव्रज्यां स प्रतिपन्नवानित्यर्थः । प्रव्रज्यानन्तरं च तस्य शिक्षणाग्रहणशिक्षा आसेवनाशिक्षा च प्रवृत्ता, कालान्तरे च पोतनपुरे विदेशरूपे परतीर्थिभिः सह वाद उपस्थितः । ततस्तैः सह शोभनो वादः सद्भावस्तं दत्वा महतीं जिनशासनप्रभावनां कृत्वा स भगवान् निवृतो मुक्तिपदवीमधिरूढः । एक्को य इत्यादि, एकश्च तस्य भ्राता जितशत्रो राज्ञः प्रव्रजितस्यानुरागेण राज्यश्रियं प्रहाय परित्यज्य जितशत्रुप्रव्रज्या प्रतिपत्त्यनन्तरं कियता कालेन प्रव्रजितः प्रव्रज्यां प्रतिपन्नः । स च तं ज्येष्ठभ्रातरं विदेशे पोतनपुरे कालगतं श्रुत्वा भ्रात्रनुरागेणक्षिप्तोऽपहृतचित्तो जातस्तत्र चायं वक्ष्यमाणस्तत्प्रगुणीकरणाय विधिस्तमेवाह-

**[भा.१०७७]** तेलोक्कदेव महिया तित्थयरा नीरया गया सिद्धिं ।
थेरा वि गया केई चरणगुण पहावगा धीरा ॥

**वृ-** तस्य भ्रातादिमरणं श्रुत्वा क्षिप्तचित्ती भूतस्याश्वासनार्थमियं देशना कर्तव्या यथा मरणपर्यवसानो जीवलोकस्तथा हि ये तीर्थकरा भगवन्तस्त्रैलोक्यदेवैस्त्रिभुवननिवासिभिर्भवनपत्यादिभिर्देवैर्महितास्तेऽपि नीरजसो विगतसमस्तकर्मपरमाणवः सन्तो गताः सिद्धिं, तथा तथा स्थविरा अपि केचिन्महीयांसो गौतमस्वामिप्रभृतयश्चरणगुणप्रभावका धीरा महासत्त्वा देवदानवैरप्यक्षोभ्याः सिद्धिं गताः तद्यदि भगवतामपि तीर्थकृतां महतामपि महर्षीणामीदृशा गतिस्तत्र का कथा शेषजन्तूनां तस्मादेतादृशीं संसारस्थितिमनुविचिन्त्य न शोकः कर्तव्य इति । अन्यच्च-

[भा.१०७८] न हु होइ सोइयव्वो जो कालगतो दढो चरित्तंमि ।
सो होइ सोतियव्वो जो संजम दुब्बलो विहरे ।।

वृ- न हु निश्चितं स शोचयितव्यो भवति यश्चारित्रे दृढः सन् कालगतः, स खलु भवति शोचयितव्यो यः संयमे दुर्बलः सन् विहृतवान् । स कस्मात् शोचयितव्य इत्यत आह-

[भा.१०७९] जो जहव तहव लद्धं भंजइ आहार उवहिमाईयं ।
समनुगुण मुक्कजोगी संसारपवड्ढगो भणितो ।।

वृ- यो नाम यथा वा तथा वा दोषदुष्टतया न निर्दोषतया इत्यर्थः । लब्धं आहारोपध्यादिकं भुङ्क्ते उपभोगपरिभोग विषयी करोति । स श्रमणानां गुणा मूलगुणोत्तरगुणरूपाः श्रमणगुणास्तैर्मुक्ताः परित्यक्तास्तद्रहिता ये योगा मनोवाक्कायव्यापारास्ते श्रमणगुणमुक्तयोगास्ते यस्य सन्ति श्रमणगुणमुक्तयोगी संसारप्रवर्धको भणितस्तीर्थकर गणधरैस्ततोयः संयमदुर्बलो विहृतवान् स शोच्य एव भवदीयस्तु भ्राता यदि कालगतो दृढचारित्रे ततः स परलोकेऽपि सुगतिभागिति न करुणीयः शोकः सम्प्रति जड्डाइतिरिक्ख इत्यस्य व्याख्यानार्थमाह-

[भा.१०८०] जड्डाइतेरिच्छे सत्थं अगनीयमेहविज्जूय ।
ओमे पडिभेसणाया चरगं पुव्वं परूवेउं ।।

वृ- जड्डो हस्ती आदिशब्दात् सिंहादि परिग्रहः तान् तिरश्चो दृष्ट्वा विमुक्तं भवति । गजं वा मदोन्मत्तं सिंह वा गुञ्जन्तंव्याघ्रं वा तीक्ष्णखरनखरविकरालमुखं दृष्ट्वा कोऽपि भयतः क्षिप्तचित्तो भवति । कोऽपि पुनः शस्त्राणि खड्गादीन्यायुधानि दृष्ट्वा इयमत्र भावना-केनापि परिहासेनोद्गीर्णं खड्गं वा कुन्तं वा क्षुरिकादिकं वा दृष्ट्वा कोऽपि हा मारयति मामेष इति सहसाक्षिप्तचित्त उपजायते । तथा अग्रोप्रदीपनकंच लग्नं कोऽपि भयतः क्षिप्तो भवति । कोऽपि स्तनितं मेघगर्जितमाकर्ण्य कोऽपि विद्युत् [तं] दृष्ट्वा एवं क्षिप्तचित्तस्य जातस्य ओमे पडिभीसणया इति अवमो लघुतरस्तेन प्रतिभीषणंहस्त्यादेः कर्तव्यं । येन क्षिप्तचित्ततापगच्छति यदि पुनश्चरकेण वादे पराजितः इति क्षिप्तचित्तो भवेत् । ततश्चरकं पूर्वं प्ररूप्य प्रज्ञाप्य तदनन्तरं तेन स्वमुखोच्चारितेन वचसा तस्य क्षिप्तचित्ततोच्चारयितव्या । सम्प्रत्यपमानतः क्षिप्तचित्ततां भावयति-

[भा.१०८१] अवहीरितोवगणिणा अहवण सगणेण कम्हिएइ पमाए ।
वायंमि विचरगाई पराइतो तत्थिमा जयणा ।।

वृ- गणिना आचार्येण सोऽवधीरितः स्यादथवा णमिति वाक्यालङ्कारे स्वगणेन स्वगच्छेन गणावच्छेद्यादिना कस्मिंश्चित्प्रमादे वर्तमानः सन् गाढं शिक्षितो भवेत्, । ततोऽपमानेन क्षिप्तचित्तो जायते, यदि वा चरकादिना परतीर्थिकेन वादे पराजित इत्यपमानतः क्षिप्तचित्तः स्यात् । तत्र तस्मिन् क्षिप्तचित्ते इयं वक्ष्यमाणा यतना तत्र प्रथमतो भयेन क्षिप्तचित्ते यतनामाह-

[भा.१०८२] कन्नंमि एस सीहो गहितो अहिधाडितो य सो हत्थी ।
खुड्डलतरगेन तुमे ते विय गमिया पुरा पाला ।।

वृ- इह पदैकदेशे पदसमुदायोपचारात् पाला इत्युक्ते हस्तिपालाः सिंहपाला द्रष्टव्याः । तेऽपि पुरा पूर्वं गमिताः प्रतिबोधिताः कर्त्तव्याः । यथास्माकमेकः क्षुल्लको युष्मदीयं सिंहं हस्तिनं वा दृष्ट्वा क्षोभमुपागतः ततः स यथा क्षोभं मुञ्चति तथा कर्तव्यम् । एवं तेषु प्रतिबोधितेषु

सक्षिप्तचित्तीभूतस्तेषामन्तिकं नीयते । नीत्वा च तेषां मध्ये यः क्षुल्लकादपि लघुतरः तेन सिंहः कर्णे धार्यते । हस्ती वा तेन धाड्यते ततः स क्षिप्तचित्तः प्रोच्यते त्वत्तोऽपि स क्षुल्लको अतिशयेन लघुस्तेन एष सिंहः कर्णे गृहीतः । अथवा सहस्ती अनेन धाटितस्त्वं तु बिभेषि किंत्वमेतस्मादपि भीरुर्जातो धार्ष्ट्यमवलम्ब्यमिति-

**[भा.१०८३]** सत्थऽग्गिं थंभेउ पन्नोल्लणं तस्स एव सो हत्थी ।
थेरा चम्म विकड्ढण, अलाय चक्कं दोसुं च ।।

**वृ-** यदि शस्त्रं यदि वाग्निं दृष्ट्वा क्षिप्तोऽभवत् । ततः शस्त्रमग्निं च विद्यायास्तम्भित्वा तस्य पादाभ्यां प्रणोदनं कर्तव्यं भणितव्यं च तं प्रति एषोऽस्माभिरग्निः शस्त्रं च पादाभ्यां प्रणोद्यते । त्वं पुनरेताभ्यां बिभेषीति यदि वा पानीयं नार्द्रीकृत्य हस्तादिभिः सोऽग्निः स्पृश्यते भण्यते च । एतस्मादपि तव किं भयं तथा यतो हस्तिनः तस्य भयमभूत् । स हस्ती स्वयं पराङ्मुखो गच्छन् दर्श्यते । यथा यतस्त्वं बिभेषि सहस्ती नश्यति नश्यद्वर्तते ततः कथं त्वमेवं भीरोरपि भीरुर्जातः । तथा यो गर्जितं श्रुत्वा भयमग्रहीत् । तं प्रत्युच्यते स्थविरा नभसि शुष्कं चर्म विकर्षति आकर्षति । एवं चोक्त्वा शुष्क चर्मण आकर्षणे शब्दः व्यते ततो भयं जयति । तथा यद्यग्नेः स्तम्भनं न ज्ञायते, तदा द्वयोः अग्नौ च विद्युति च भयं प्रतिपन्नः सन् अलातचक्रं पुनरकस्मात्तस्य दर्श्यते, यावदुभयोरपि भयं जीर्णं भवति ।

सम्प्रति वादे पराजयादपमानतः क्षिप्तचित्ती भूतस्य यतनामाह–

**[भा.१०८४]** एएण जितोमि अहं तं पुन सहसा न लक्खियं नेन ।
धिक्कय कइयवं लज्जाविलोय पउणो तत्तो खुड्डो ।।

**वृ-** इहैकेन चरकेण वादे पराजितः स च ज्ञाप्यते यथोक्तं प्राक् ततः स आगत्य वदति । एतेनाहं वादे जितोऽस्मि तत्पुनः स्वयं जवनमनेन सहसा न लक्षितं ततो मेलोकतो जयप्रवादोऽभवत् । एवमुक्ते सचरकोधिक्कृतनाधिकारेण लज्जाप्यते लज्जां ग्राह्यते । लज्जां च ग्राहितः सन् सोपसार्यते ततः स क्षिप्रो भण्यते । किमिति त्वमपंथानं गृहीतवान् वादे नहि ननु त्वया पराजितः । तदा च त्वत्समक्षमेवैष धिक्कारं ग्राहित इति । एवं यतनायां क्रियमाणायां यदि स क्षुल्लकः प्रगुणी भवति ततः सुन्दरम् ।।

**[भा.१०८५]** तहवि य अठायमाणे संरक्खमरक्खणे य चउगुरुगा ।
आणाइणो य दोसा, जं सेवति जं च पाविहिती ।।

**वृ-** तथापि च एवं यतनायामपि च क्रियमाणायामपि तिष्ठति अनिवर्तमाने क्षिप्तचित्तत्वे संरक्षणं वक्ष्यमाणयतनया कर्तव्यं अरक्षणे प्रायश्चित्तं चत्वारो गुरुका गुरुमासाः । तथा आज्ञादय आज्ञाऽनवस्था मिथ्यात्वविराधनादोषाः । तथा असंरक्षमाणो यत्सेवते षट्जीवनिकायविराधनादिकं, यं च प्राप्स्यत्यनर्थं तन्निमित्तं च प्रायश्चित्तं । अथ किं सेवते किं वा प्राप्स्यतीति तन्निरूपणार्थमाह-

**[भा.१०८६]** छक्कायाण विराधन्ज्झामणतेनाति वायणं चेव ।
अग[व]डेविसमे च पडिए, तम्हा रक्खंति जयणाए ।।

**वृ-** षण्णां कायानां पृथिवीकायिकादीनां विराधना क्रियेत । ध्यापनं प्रदीपनकं तद्वा कुर्यात् । यदि वा स्तैन्यमथवातिपातनमात्मनः परस्य वा विधीयेत । अवटे कूपेऽथवाऽन्यत्रविषमे पतितो भवेत् तदेवमसंरक्षणे य त इमे दोषास्तस्मात् रक्षन्ति यतनया वक्ष्यमाणाया साम्प्रतमेनामेव गाथां व्याचिख्यासुराह–

[भा.१०८७] सस्सगिहादीन डहे तेने अवसो सयं वा हीरेज्जा ।
मारणपिट्टणमुभये तद्दोसा जं च सेसाणं ॥

वृ- सस्यं धान्यं तद्गृहं सस्यगृहं तदादीनि आदिशब्दात् शेषगृहापणादिपरिग्रहः दहेत क्षिप्तचित्ततया अग्निप्रदानेन भस्मसात्कुर्यात् । एतेन ध्मापन [ध्यामन] मिति व्याख्यातम् । यदिवा स्तेनयेत [चोरयेत] अथवा स स्वयं किमपि म्रियेत [केनापि ह्रियेत] अनेन स्तैन्यं व्याख्यातम् । मारणं पिट्टनमुभयस्मिन् स्यात् किमुक्तं भवति । स क्षिप्तचित्तत्वेन परवश इव स्वयमात्मानं मारयेत् पिट्टयेत्, वा परं मारयन् पिट्टयित्वा सपरेण मार्येत, पिट्येत वा इति तद्दोसा जं च सेसाणमिति तस्य क्षिप्तचित्तस्य दोषात् यच्च शेषाणां साधूनां मारणं पिट्टनं वा । तथा हि-स क्षिप्तचित्तः परान् यदा व्यापादयति पिट्टयति वा, तदापरे स्वरूपमजानानाः शेषसाधूनामपि घातप्रहारादिकं कुर्युस्तन्निमित्तमपि प्रायश्चित्तमरक्षणे द्रष्टव्यम् । शेषाणि तु स्थानानि सुगमानीति न व्याख्यानयति । यदुक्तं तस्माद्रक्ष्यन्ति यतनयेति । तत्र यतनामाह-

[भा.१०८८] महिड्ढीएउठनिवेसणा य आहारविगिंचणा वि उस्सग्गो ।
रक्खंताणय फिडिए अगवेसणे होंति चउगुरुगा ॥

वृ- महर्द्धिको नाम ग्रामस्य नगरस्य वा रक्षाकारी तस्य कथनीयम् । तथा उठनिवेसणा इति मृदुबन्धैस्तथा संयमनीयो यथा स्वयमुत्थानं निवेशनं च कर्तुमीशो भवति । तथा यदि वातादिना धातुक्षोभोऽस्याभूदिति ज्ञायते तदाऽपथ्याहारपरिहारेण स्निग्धमधुरमधुरादिरूप आहारः प्रदातव्यः । विगिंचणत्ति उच्चारादेस्तस्य परिष्ठापनं कर्तव्यं । यदिपुनर्देवताकृत एष उपद्रव इति ज्ञायते तदा प्रासुकैषणीयेन क्रिया कार्या तथा विउस्सग्गो इति किमयं वातादिना क्षोभ उत देवताकृत उपद्रव इति परिज्ञानाय देवताराधनार्थं कायोत्सर्गः करणीयः । ततस्तस्या आकंपितया कथिते सति तदनुरूपोयत्नो यथोक्तः स्वरूपः करणीयः । एवं रक्षतामपि यदि स कथञ्चित् स्फिटितः स्यात् । ततस्तस्य गवेषणं कर्तव्यं, अन्यथाऽगवेषणे प्रायश्चित्तं चत्वारो गुरुकाः । एष द्वारगाथासंक्षेपार्थः साम्प्रतमेनामेव गाथां विवरीषुः प्रथमतो महर्धिकद्वारं विवृणोति-

[भा.१०८९] अम्हं एत्थ पिसातो रक्खंताणंपि फिट्टइ कयाई ।
सहु परिरक्खेयव्वो महड्ढिए रक्खिए कहणा ॥

वृ- रक्षा अस्यास्तीति रक्षको रक्षायां नियुक्तो राक्षिको वा तस्मिन् रक्षके राक्षिके ग्रामस्य नगरस्य वा रक्षके कारणिके महर्द्धिके कथना कर्तव्या । तस्मै कथयितव्यमिति भावः । यथा अत्र तस्मिन्नुपाश्रये अस्माकं रक्षतामपि एष पिशाचो ग्रथिलः कदाचित् स्फिटति अपगच्छति स हु निश्चितं परिरक्षितव्यः प्रतिपन्नवत्सलत्वादिति व्याख्यातं महर्द्धिकद्वारमधुना 'उठनिवेसनाय' इति व्याख्यानयति-

[भा.१०९०] मिउ बंधेहि तहाणं जमेंति जह सो सयंतु उठेति ।
उव्वरगसत्थरहिते बाहि कुडंडे असुन्नं च ॥

वृ- मृदुबन्धैः कोमल बंधैस्तथा णमिति तं क्षिप्तचित्तं यमयन्ति बध्नन्ति यथा स्वयमुत्तिष्ठति । तु शब्दस्यानुक्तसमुच्चयार्थत्वान्निविशते च तथा स तस्मिन्नपवरके स्थाप्यते । यत्र न किमपि शस्त्रं भवति । अन्यथा स क्षिप्तचित्ततया युक्तमयुक्तं चाऽजानानः शस्त्रं दृष्ट्वा तेनात्मानं व्यापादयेत् । तस्य चापवरकस्य द्वारं बहिः कुदण्डेन वंशटोकरादिना बध्यते न येन निर्गत्यापगच्छति तथा अशून्यं यथा भवति । एवं स वारेण प्रति वारेण जाग्रियते । अन्यथा शून्यमात्मानमुपलभ्य बहुतरं क्षिप्तचित्तीभूयात् ।

[भा.१०९१] उव्वरयस्स य असती पुव्वखया सती य खंमए अगडे ।
तस्सोवरिं च चक्कं न फिडइ जइ उ फिडंतोवि ।।

वृ- अपवरकस्य असति अभावे पूर्वखनि [खा] तकूपे निर्जले स प्रक्षिप्यते तस्याप्यभावे अवटो नवः खन्यते, खनित्वा तत्र स प्रक्षिप्यते । प्रक्षिप्य च तस्याऽवटकस्योपरि चक्रं रथाङ्गं स्थगनाय दीयते, यथा स उस्फिटन्नपि उत्प्लवमानोऽपि नस्फिटति न बहिर्गच्छति ।।

साम्प्रतमाहारविगिञ्चणेत्यादि व्याख्यानयति-

[भा.१०९२] निद्धमहुरं च भत्तं करीस सेज्जा नो जहा वाऊ ।
दव्वियधातुक्खोभे नाउं उस्सग्गतो किरिया ।।

वृ- यदि वातादिना धातुक्षोभोऽस्य सञ्जात इति ज्ञायते तदा भक्तमपथ्यपरिहारेण स्निग्धं मधुरं च तस्मै दातव्यम् । शय्या च करी[illegible] कर्तव्या, [illegible] भवति । [illegible] । तथा किमयं दैविको देवेन भूतादिना कृत उपद्रव उत धातु क्षोभज इति ज्ञातुं देवताराधनाय उत्सर्गः क्रियते । तस्मिंश्च क्रियमाणे यदा कंपितया देवतया कथितं तदनुसारेण ततः क्रिया कर्तव्या । यदि दैविक इति; सम्प्रति 'रक्खंताण य फिटिए' इत्यादि व्याख्यानयति-

[भा.१०९३] अगडे पलायमग्गण अन्नगणावावि जेन सा रक्खो ।
गुरुगाय जं च जत्तो तेसिं च निवेयणा करणं ।।

वृ- अगडे इति सप्तमी पञ्चम्यर्थे । ततोऽयमर्थः, अवटात् कूपात् उपलक्षणमेतत् अपवरकाद्वा यदि पलायते, कथमपि ततस्तस्य मार्गणमन्वेषणं कर्तव्यम् । तथा ये तत्रान्यत्र वा आसन्ने दूरे वा अन्यगणा विद्यन्ते तेषां च निवेदनाकरणं तेषामपि निवेदनं कर्तव्यमिति भावः । यथास्मदीय एषः साधुः क्षिप्तचित्तो नष्टो वर्तते ततस्तैरपि गवेषणीयः दृष्टश्च संग्रहणीयः । यदि पुनर्न गवेषयन्ति स्वगणवर्तिनोऽन्यगणवर्तिनो वा तदा तेषां प्रायश्चित्तं चत्वारो गुरु मासाः, यच्च करिष्यति षट्जीवनिकायविराधनादिकं तन्निमित्तं तेषां प्रायश्चित्तमिति ।

[भा.१०९४] छम्मासे पडियरिउं अनिच्छमाणेसु भुंज्जंतगोवि ।
कुलगणसंघसमाए पुव्वगमेणं निवेएज्जा ।।

वृ- पूर्वोक्तेन प्रकारेण तावत्स प्रति चरणीयो यावत् षण्मासा भवन्ति, ततो यदि प्रगुणो जायते तर्हि सुन्दरमथ न प्रगुणीभूतस्ततो भूयस्तरकमपि तस्य प्रतिचरणं विधेयं । अथ ते साधवः परिश्रान्ता भूयस्तरकं प्रतिचरणं नेच्छंति, । ततस्तेष्वनिच्छत्सु कुलगणसङ्घसमवायं कृत्वा पूर्वगमेन कल्पोक्तप्रकारेण तस्मै निवेदनीयं । निवेद्य च तदाज्ञया वर्तितव्यमिति अथ स साधुः कदाचिद्राजादीनां स्वजनः स्यात् तत इयं यतना विधेया-

[भा.१०९५] रन्नोनिवेइयंमि तेसिं वयणे गवेसणा होति ।
ओसह वेज्जासंबंधुवस्सए तीसुवी जयणा ।।

वृ- यदि राज्ञोऽन्येषां वा स पुत्रादिको भवेत् ततो राज्ञ उपलक्षणमेतत् । अन्येषां वा स्वजनानां निवेदनं क्रियते, तथा युष्मदीय एष पुत्रादिकः क्षिप्तचित्तो जात इति एवं निवेदिते यदि ब्रुवते राजादयो मम पुत्रादिनां क्रिया स्वयमेव क्रियमाणा वर्तते । तत इहैव तमप्यानयतेति ततः स तेषां वचनेन तत्र नीयते । नीतस्य च तस्य तत्र गवेषणा भवति । अयमत्र भावार्थः । साधवोऽपि तत्र गत्वा औषध भेषजानि प्रयच्छन्ति

प्रतिदिवसं च शरीरस्योदन्तं वहन्ति । यदि पुनः सम्बन्धिनः स्वजना वदेयुर्वयमौषधानि वैद्यं वासं वा संप्रयच्छामः । परमस्माकमासन्ने प्रवेशे स्थित्वा यूयं प्रतिचरथ तत्र यदि शोभनो भावस्तदेवं क्रियते । अथ गृहस्थीकरणाय तेषां भावः । तदा न तत्र नयनं किन्तु स्वोपाश्रय एव ध्रियते तत्र च त्रिष्वपि आहारोपधिशय्यासु यतना कर्त्तव्या । एष द्वारगाथासंक्षेपार्थः साम्प्रतमेनामेव विवरीषुः प्रथमतो राज्ञो निवेइयंमीत्येतद्व्याख्यानयति-

[भा.१०९६] पुत्तादीनं किरियं सयमेव घरंमि कोइ कारेज्जा ।
अनुजाणंते य तहिं इमे च गंतुं पडियरंति ॥

वृ- यदि कोऽपि राजा अन्यो वा तस्य क्षिप्तचित्तस्य साधोः स्वजनो गृहे स्वयमेव साधुनिवेदनात् प्राक् आत्मनैव पुत्रादिनां क्रियां चिकित्सां कारयति तदा तस्मै निवेदिते युष्मदीयः क्षिप्तचित्तो जात इति कथिते यदि ते अनुजानते यथा तमत्र समान यतेति ततः स तत्र नीयते नीतं च सन्तमिमेऽपि गच्छवासिनः साधवो गत्वा प्रतिचरन्ति ॥

[भा.१०९७] ओसह वेज्जे देमो पडिजग्गहणं तहिं ठियं चेव ।
तेसिं विरूव भावंन देंति मानं गिही कुज्जा ॥

वृ- कदाचित्स्वजनाः ब्रूयुः यथा औषधानि वैद्यं च वयं दद्मः । केवलमिह अस्मिन्नस्माकमासन्ने प्रदेशे स्थितं णमित्येन प्रतिजाग्रत तत्र यदि तेषां भावो विरूपो गृहस्थी करणात्मकस्ततः तेषां तथारूपं भावमिङ्गिताकारकुशला ज्ञात्वा न ददति न प्रयच्छन्ति न तेषामासन्नप्रदेशे नयन्तीति भावः । कुत इत्याह- -मा एतं गृहस्थी कुर्युरितिहेतोः सम्प्रतितीसुवि जयणेत्येतद्व्याख्यानयति-

[भा.१०९८] आहार उवहि सेज्जा उग्गम उप्पायणा दिसु जयंता ।
वायादि खोभंमि वि जयंति पत्तेयमिस्सा वा ॥

वृ- आहारे उपधौ शय्यायां च विषये उद्गमोत्पादनादिषु आदिशब्दादेषणादि दोषपरिग्रहः यतन्ते प्रयत्नपरा भवन्ति । उद्गमोत्पादनादिदोषविशुद्धाहाराद्युत्पादनेन प्रतिचारका अन्येपि च यतमानास्तं प्रतिचरन्तीति भावः । एषा यतना दैविके क्षिप्तचित्तत्वे द्रष्टव्या एवं वातादिना धातुक्षोभेऽपि प्रत्येकंप्रत्येकं सांभोगिका मिश्रा वा असांभोगिकैः संमिश्रा वा पूर्वोक्तप्रकारेण यतन्ते ॥

[भा.१०९९] पुव्वुद्दिट्ठो उविही इह वि करेंताण होंति तह चेव ।
तेगिच्छंमि कयम्मी आदेसा तिन्निसुद्धो वा ॥

वृ- यः पूर्वं कल्पाध्ययने ग्लानसूत्र उद्दिष्टः प्रतिपादितो विधिः स एव इहापि क्षिप्तचित्तसूत्रेऽपि वैयावृत्यं कुर्वता तथैव भवति । चैकित्स्येच चिकित्सासाः कर्मणि च कृते प्रगुणीभूते च तस्मिन् त्रय आदेशा एके ब्रुवते । गुरुको व्यवहारः प्रस्थापयितव्योऽपरे ब्रुवते लघुकोऽन्ये आचक्षते लघुस्वकः । तत्र तृतीय आदेशः प्रमाणं सूत्रोपदिष्टत्वात् । अथवा स शुद्धो न प्रायश्चित्तभाक् परवशतया रागद्वेषाभावेन प्रतिसेवनादेतदेव विभावयिषरिदमाह-

[भा.११००] चउरो य हुंति भंगा तेसिं वयणंमि होंति पन्नवणा ।
परिसाए मज्झंमि पट्ठवणा होइ पच्छित्तं ॥

वृ- इह चारित्रविषये वृद्धिहान्यादिगताश्चत्वारो भवन्ति भङ्गास्ते चाग्रे च वक्ष्यन्ते । तेषां च भङ्गानां वचनेन गाथायां सप्तमी तृतीयार्थे भवति । पर्षदो मध्ये प्रज्ञापना प्ररूपणा तदनन्तरं यदि भवति

शुद्धिमात्रनिमित्तं प्रायश्चित्तं दातव्यं ततस्तस्य प्रायश्चित्तस्य लघुकस्वरूपस्य गाथायां सप्तमी षष्ठ्यर्थे भवति । प्रस्थापनादानमिति सम्प्रति चतुरो भङ्गान् कथयन् प्रायश्चित्तदाना भावं भावयति-

**[भा.११०१]** वड्डति हायति उभयं, अवट्ठियं च चरणं भवे चउहा ।
खइयं तहो वसमियं मीस अहखायखित्तं च ।।

वृ- कस्यापि चारित्रं वर्धते, कस्यापि हीयते कस्यापि वर्धते हीयते च, कस्याप्यवस्थितं वर्तते । एते चत्वारो भङ्गाश्चारित्रस्य । साम्प्रतममीषामेव चतुर्णां भङ्गानां यथासंख्येन विषयान् प्रदर्शयति । खइयमित्यादि क्षपकश्रेणिं प्रतिपन्ने क्षायिकं चरणं वर्तते, उपशमश्रेणीतः प्रतिपतनं औपशमिकं चरणहानिमुपगच्छति । क्षायोपशमिके तद्रागद्वेषोत्कर्षापकर्षवशतः क्षीयते परिवर्धते च, । यथाख्यातं क्षिप्तं च पदैकदेशे पदसमुदायोपचारात् क्षिप्तचित्तं चारित्रं चावस्थितं यथाख्यातचारित्रे सर्वथा रागद्वेषोदयाभावात् क्षिप्तचित्तचारित्रे परवशतया प्रवृत्तेस्ततो रागद्वेषाभावात्तदेवं । यतः क्षिप्तचित्ते चारित्रमवस्थितमतो ना सौ प्रायश्चित्तभागिति, पर आह ननु स क्षिप्तचित्त आश्रवद्वारेषु चिरकालं प्रवर्तितः बहुविधं वाऽसमंजसं तेन प्रलपितं लौकलोकोत्तरविरुद्धं च समाचरितं । ततः कथमयमप्रायश्चित्तभाक्, अत्र सूरिराह-

**[भा.११०२]** कामं आसवदारेसु वड्ढितो पलवियं बहुविहं च ।
लोगविरुद्धाय एया लोगोत्तरियाय आइण्णा ।।

वृ- काममित्यनुमतौ अनुमतमेतत् यथा स आश्रवद्वारेषु प्रवर्तितो बहुविधं च तेन प्रलपितं लोकविरुद्धानि लोकोत्तरिकानि च पदानि आचीर्णानि प्रतिसेवितानि-

**[भा.११०३]** नय बंधहेउ विगलित्तणेण कम्मस्स उवचओ होइ ।
लोकोवि एत्थ सक्खी जह एस परव्वसो कासी ।।

वृ- तथापि न च नैव तस्य च क्षिप्तचित्तस्य बन्धहेतुविकलत्वेन बन्धहेतवो रागद्वेषास्तद्विकलत्वेन तद्रहितत्वेन कर्मण उपचयो भवति- कर्मोपचयस्य रागद्वेषाधीनत्वात् तस्य च रागद्वेषविकलत्वात् न च तद्रागद्वेष विकलत्वं वचनमात्र सिद्धं, यतो लोकोऽप्यत्रास्मिन् विषये साक्षी यथा एष सर्वं परवशोऽकार्षीदिति । ततो रागद्वेषाभावान्नकर्मोपचयस्तस्य तदनुगत्वात् । तथा चाह-

**[भा.११०४]** रागदोसानुगया जीवा कम्मस्स बंधगा होंति ।
रागादि विसेसेणय वि बंध विसेसो वि अविगीतो ।

वृ- रागद्वेषाभ्यामनुगताः सन्तो जीवाः कर्मणो बन्धका भवन्ति । ततो रागद्वेषतारतम्येन बन्धविशेषो बन्धतरतम भावोऽविगीतो विप्रतिपन्नः । ततः क्षिप्तचित्तस्य रागद्वेषाभावतः कर्मोपचयाभावः । अमुमेवार्थं दृष्टान्तेन द्रढयति-

**[भा.११०५]** कुणमाणी वि य चिट्ठा परतंताण ट्टिया बहुविहाओ ।
किरियाफलेण जुज्जइ, न जहा एमेव एवं पि ।।

वृ- यथा नर्तकी यन्त्रकाष्टमयी परतन्त्रा परायत्ता परप्रयोगत इत्यर्थः । बहुविधा बहुप्रकारा अपि, तुशब्दोऽपि शब्दार्थः । चेष्टा कुर्वाणा क्रियाफलेन कर्मणा न युज्यते । एवमेव अनेनैव प्रकारेण एवमपि क्षिप्तचित्तमनेका अपि विरुद्धाः क्रियाः कुर्वाणाः न कर्मोपचयं पश्यति, अत्र परस्य मतमाशङ्कमानः आह-

[भा.११०६] जइ इच्छसि सा सेरी अचेयणा तेन से चओ नत्थि ।
जीव परिग्गहिया पुन वोंदी असमंजसं समया ।।

वृ- यदि त्वमेतदिच्छसि अनुमन्यते यथा सासेरीति देशीवचनमेतत् यन्त्रमयी नर्तकी अचेतना तेन कारणेन से तस्याश्च कर्मोपचयो नास्ति वोंदिस्तनुः पुनर्जीव परिगृहीता जीवेनाधिष्ठिता जीवपरिग्रहीतत्वाच्चावश्यं तद्विरुद्धचेष्टातः कर्मोपचय सम्भवस्ततो या सेरी दृष्टान्तेन समता आपदिता साऽसमञ्जसमयुज्यमानाऽचेतनाचेतनत्वे च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । अत्राचार्य आह-

[भा.११०७] चेयणमचेयणं वा परतंतेन दोवि तुल्लाइं ।
न तयावि संसयं एत्थ किंच भणती सुणविसेसं ।।

वृ- चेतनं वा स्यादचेतनं वा चेतनत्वाचेतनत्वविशेषस्यात्राप्रयोजकत्वात् । कथमप्रयोजकत्वमत आह-परतन्त्रत्वेन परायत्ततया । यतो द्वे अपि तुल्ये ततो न किञ्चिद्वैषम्यं । पर आह-न त्वया अत्र कर्मोपचयचिन्तायां कश्चिदपिमनागपि विशेषितं येन जीवपरिगृहीतत्वेऽप्येकत्र कर्मोपचयो भवत्येकत्र नेति प्रतिपाद्यमाह अत्राचार्यो भणति ब्रुते, शृणु भण्यमानं विशेषं । तमेवाह-

[भा.११०८] ननु सो चेव विसेसो जं एगमचेयणं स विन्नेयं ।
जह चेयणाविसेसो तह भणसु इमं निसामेह ।।

वृ- ननु स एवं यन्त्र नर्तकी स्वाभाविक नर्तकी दृष्टान्तसूचितो विशेष एवं शरीरं जीवपरिगृहितमपि परायत्ततया चेष्टामानमचेतनमेवं स्वायत्ततया प्रवृत्तेः सचित्तं सचेतनमिति । पर आह-यथैष चेतने विशेषो निस्संदिग्ध प्रतिपत्तिविषयो भवति । तथा भणत प्रतिपादयत आचार्यः प्राह-तत इदं वक्ष्यमाणं निशमय आकर्णय । तमेवाह-

[भा.११०९] जो पेल्लितो परेणं हेऊवसणस्स होइ कायाणं ।
तथ्य न दोसं दूच्छसि लोगेन समं तहा तं च ।।

वृ- यः परेण प्रेरितः स च कायादीनां पृथिव्यादीनां व्यसनस्य संघट्टनपरितापनादिरूपस्य हेतुः कारणं भवति । तत्र तस्मिन् परेण प्रेरित तया काय व्यसनहेतौ न त्वं दोषमिच्छसि अनात्मवशतया प्रवृत्तेः । कथं पुनर्दोषं नेच्छसीत्यत आह-लोकेन समं लोकेन सह लोके तथा दर्शनतः इत्यर्थः । तथा हि लोको यो यत्रानात्मवशतया प्रवर्तते तं तत्र निर्दोषमभिमन्यते ततो लोके तथा दर्शनतत्त्वमपि कायव्यसने हेतुं निर्दोषमभिमन्यताम् । यथा च तं निर्दोषमिच्छसि तथा तमपि च क्षिप्तचित्तं निर्दोषं पश्य, तस्यापि परायत्ततया तथारूपासु चेष्टासु प्रवृत्तेः । एतदेव सविशेषं भावयति-

[भा.१११०] पासंतो वि य काये अपच्चलो अप्पगं वि धारेउं ।
जह पेल्लितो अदोसो एमे वमिमंपि पासामो ।।

वृ- यथा परेण प्रेरित आत्मानं विधारयितुं संस्थापयितुमप्रत्यलोऽसमर्थः सन् पश्यन्नपि कायान् पृथिवीकायिकादीन् विराधयन् अग्निकापुत्राचार्य इवादोषो निर्दोषः । एवमेव अनेनैव प्रकारेणापरायत्ततया प्रवृत्तिलक्षणेन इममपि क्षिप्तचित्तमदोषं पश्यामः । इह पूर्वं प्रगुणीभूतस्य प्रायश्चित्तदानविषये त्रय आदेशा गुरुकादय उक्तास्ततस्तानेव गुरुकादीन् प्ररूपयति-

[भा.११११] गुरुगो गुरुतरागो अहागुरुगो य होई ववहारो ।
लहुओ लहुयतरागो अहालहुगो य ववहारो ।।

[भा.१११२] लहुसो लहुसतरागो अहा लहुसो य होइ ववहारो ।
एएसिं पच्छित्तं वोच्छामि अहानुपुव्वीए ।।

[भा.१११३] गुरुगो य होइ मासो गुरुय तरगो य होइ चउमासो ।
अह गुरुगोच्छम्मासो गुरुगपक्खंमि पडिवत्ती ।।

[भा.१११४] तीसा य पन्नवीसा वीसा पन्नरस सेवय ।
दस पंच य दिवसाइं लहु सगपक्खंमि पडिवत्ती ।।

[भा.१११५] गुरुगं च अठमं खलु गुरुगतरगं च होइ दसमं तु ।
आहा गुरुग दुवालसमं गुरुगपक्खंमि पडिवत्ती ।।

[भा.१११६] छठं च चउत्थं वा आयंबिल एगठाण पुरिमड्ढ ।
निव्विइगं दायव्वं अह लहुसगंमि सुद्धो वा ।।

वृ- [आसां षन्नामपि गाथानां व्याख्या पूर्ववत्]

मू. (४५) *'दित्तचित्तं भिक्खुं गिलायमाणं नो कप्पइ तस्स गणावच्छेदि यस्स निज्जूहित्तए अगिलाए तस्स करणिज्जं वेयावडियं जाव ततो रोगातंकाओ विप्पमुक्को । ततो पच्छा तस्स अहा लहुस्सगे नाम ववहारे पट्ठवियव्वे सिया' ।*

वृ- अस्य व्याख्या संक्षेपतः प्राग्वत् । सम्प्रति भाष्यकारो विस्तरमभिधित्सुराह-

[भा.१११७] एसेव गमो नियमा, दित्तादीनं पि होति नायव्वो ।
जो होइ दित्तचित्तो सो पवलति अनिच्छियव्वाइं ।।

वृ- एव एवानन्तरं क्षिप्तचित्तसूत्रगत एव गमः प्रकारो लौकिकलोकोत्तरिकभेदादिरूपो दीप्तानामपि दीप्तचित्तप्रभृतीनामपि नियमाद्वेदितव्यः । यदि पुनर्नानात्वं तदभिधातव्यं । तदेवाधिकृतसूत्रेऽभिधित्सुराह- 'जो होइ' इत्यादि यो भवति दीप्तचित्तः सोऽनीप्सितव्यानि बहूनी प्रलपति बहवनीप्सित प्रलपनं तस्य लक्षणं क्षिप्तचित्तस्त्वपहृतचित्ततया मौनेनाप्यवतिष्ठते इति परस्परं सूत्रयोर्विशेषं इति भावः । अथ कथमेष दीप्तचित्तो भवतीति तत्कारण प्रतिपादनार्थमाह-

[भा.१११८] इति एस असंमानाखित्तो संमानतो हवति दित्तो ।
अग्गीव इंधनेहिं दिप्पइ चित्तं इमेहिं तु ।।

वृ- इति प्रागुक्तेन प्रकारेण एष क्षिप्तः क्षिप्तचित्तोऽसम्मानतो अपमानतो भवति । दीप्तो दीप्तचित्तः पुनः सम्मानतो विशिष्ट सन्माना वाप्तितो भवति । दीप्तचित्तो नाम यस्य दीप्तचित्तं तच्च चित्तं दीप्यते अग्निरिवेन्धनैरेभिर्वक्ष्यमाणैर्लाभमदादिभिस्तानेवाह-

[भा.१११९] लाभमदेनव मत्तो अहवा जेऊण दुज्जए सत्तू ।
दित्तंभि सातवाहणो तमहं वोच्छं समासेणं ।।

वृ- लाभमदेन वा मत्तः सद् दिप्तचित्तो भवति । अथवा दुर्जयान् शत्रून् जित्वा उभयस्मिन्नपि दीप्ते दीप्तचित्ते लौकिको दृष्टान्तः शातवाहनो राजा, । तमहं सातवाहनदृष्टान्तं समासेन वक्ष्ये । यथा प्रतिज्ञातमेव करोति-

[भा.११२०] महुरा दंडेनती निग्गय सहस्सा अपुच्छिय्यं कयरं ।
तस्स य तिक्खा आणा दुहागया दोवि पाडेउं ।।

वृ- गोयावरीए नईए तडे पइठाणं नयरं । तत्थ साल(त)वाहणो राया । तत्थ सालवाहणो राया तस्स खरगओ अमच्चो । अन्नया सो सालवाहणो राया दंडनायगे आनवेइ । महुरं घेत्तूण सिग्घमागच्छ, सो य सहसा अपुच्छिऊण दंडेहिं सह निग्गतो । ततो चिंता जाया का महुरा घेतव्वा । दक्खिणमहुरा उत्तरमहुरा वा । तस्स आणातिक्खा पुणो पुच्छिउं न तीरति । ततो दंडा दुहा काऊण दोसुवि पेसिया गहिया तो दोवि महुराओ ततो वद्धावगो पेसिओ । तेन गंतूण राया वद्धावितो-देव दोवि महुरातो गहियातो । अन्नो आगतो देव ! पट्टदेवीए पुत्तो जातो, अन्नो आगतो देव ! अमुगत्थपदेसे विपुलो निहीपायडो जाओ । ततो उवरुवरि कल्लाणनिवेयणेण य हरिसवस विसप्पमाणहियओ परवसो जातो । तओ हरिसं धरिउमचायंतो सयणिज्जं कुट्टइ खंभे आहणइ, कुड्डे विद्दवइ बहूणि य असमंजसाणि पलवति, । ततो खरगेणाम श्चेणं तमुवाएणा पडिबोहिऊ कामेण खंभा कुड्डा बहुविहविया रना पुच्छियं केन विद्दवियं सो भणइ तुब्भेहिं । ततो मम संमुहमलीयमेवं भणतित्ति रुट्ठेण रन्ना खरगो पाएणा ताडितो, । ततो संकेइय पुरिसेहिं उप्पाडितो, अन्नत्थ संगोविओ य । ततो कम्हि पओयणे समावडिए रण्णा पुच्छिओ कत्थमे अमच्चो चिट्ठति । संकेतिय पुरिसेहिं कहियं देव तुम्हं अविनय कारित्ति सो मारितो । राया विसुरिउं पवत्तो, दुट्ठु कयं मए । तयाणिं न किंपि वेइयंति, ततो सभावत्थो जातो । ताहे संकेइय पुरिसेहिं विण्णवितो-देव गवेसामि जइवि कयाइं चंडालेहिं रक्खितो होज्जा । ततो गवेसिऊण आनीतो राया संतुट्ठो अमच्चेण सप्भावो कहितो । तुट्ठेणविउला भोगा दिना । साम्प्रतमक्षरार्थो विव्रियते-सातवाहनेन राज्ञा मथुराग्रहणाय दण्डस्य दलस्याज्ञप्तिः कृता ते दण्डाः सहसा कां मथुरां गृह्णीम इत्यपृष्ट्वा निर्गताः । तस्य च राज्ञ आज्ञा तीक्ष्णा । ततो भूयः प्रष्टुं न शक्नुवन्ति, । ततस्ते दण्डा द्विविधा गताः द्विधा विभज्य एके दक्षिण मथुरायामपरे उत्तरमथुरायां गता इत्यर्थः । द्वे अपि च मथुरे पातयित्वा ते समागताः ।

**[भा.११२१]**　　सुयजम्ममहुरपाडण निहिलंभ निवेयणा जुगवदित्तो ।
　　　　सयणिज्ज खंभकुड्डे कुट्टेइ इमाइं पलवंतो ॥

वृ- सुतस्य जन्म मथुरयोः पातनं निधेर्लाभस्य च युगपन्निवेदनायां स हर्षवशात् दिसोदित्तचित्तो-ऽभवत् । दीप्तचित्ततया इमानि वक्ष्यमाणानि प्रलपन्शयनीयंस्तम्भकुड्यानि कुट्टयति तत्रयानि प्रलपति तान्याह-

**[भा.११२२]**　　सच्चं भणगोयावरि पुव्वसमुद्देण साहिया संती ।
　　　　सालाहण कुलसरिसं जतिते कूले कुलं अत्थि ॥

वृ- हे गोदावरि पूर्वसमुद्रेण साधिकृता कृतमर्यादा सती सत्यं भण-ब्रूहि यदि तव कूले सातवाहनसदृशं कुलमस्ति ॥

**[भा.११२३]**　　उत्तरतो हिमवंतो, दाहिणतो सालवाहणो राया ।
　　　　समभारभरक्कंता तेन न पल्हत्थए पुढवी ॥

वृ- उत्तरत उत्तरस्यां दिशि हिमवान् गिरिर्दक्षिणतः सातवाहनो राजा तेन समभारभाराक्रान्ता सती पृथिवी न पर्यस्यति । अन्यथा यद्यहं दक्षिणतो न स्यां ततो हिमवद्गिरिभाराक्रान्ता नियमतः पर्यस्येत् ॥

**[भा.११२४]**　　एयाणि य अन्नाणि य पलवितो सो अभाणियव्वाइं ।
　　　　कुसलेण अमच्चेणं, खरगेणं सो उवाएणं ॥

वृ- एतान्यवन्तरोदितानि अन्यानि च सोऽभणितव्यानि बहूनि प्रलपितवान् । ततःकुशलेन

खरकनाम्ना अमात्येनोपायेन प्रतिबोधयितुकामेन किमित्याह-

[भा.११२५] विद्दवियं केणंति य तुज्झेहिं पायतालणाखरए ।
कत्थंत्ति मारितो सो दुठित्ति य दंसणे भोगा ।।

वृ- विद्रवितं विनाशितं समस्तं स्तम्भकुड्यादि राज्ञापृष्टं केनेदं विनाशितं । अमात्यः सम्मुखभूय सदोषं निष्ठुरं च वक्ति युष्माभिस्ततो राज्ञा कुपितेन तस्य पादेन ताडना कृता तदनन्तरं संङ्केतितपुरुषैः स उत्पाटितः संगोपितश्च । ततः समागते कस्मिंश्चित् प्रयोजने राज्ञापृष्टं 'कुत्रामात्यो वर्त्तते' ? संकेतितपुरुषैरुक्तं- ' देव युष्मत्पादानामविनयकारी मारितः ततो दुष्टं कृतं मयेति प्रभूतं विस्म(स्त)रितवान् स्वस्थीभूतेऽस्मिन् जाते संकेतितपुरुषैरमात्यस्य दर्शनं कारितं । सद्भावकथनानन्तरं राज्ञा तस्मै विपुला भोगाः प्रदत्ता इति उक्तो लौकिको दीप्तचित्तो लोकान्तरिकमाह-

[भा.११२६] महज्झयणभत्तखीरे कंबलगपडिग्गहे फलग सड्ढे ।
पासाए कप्पड्डे वायं काऊण वादितो ।।

वृ- महाध्ययनं पौण्डरीकादिकं दिवसेन पौरुष्यावासमागतम् । अथवा भक्तमुत्कृष्टं लब्ध्वा नास्मिन् क्षेत्रे भक्तमीदृशं केनापि लब्धपूर्वं, यदि वा क्षीरं चातुर्जातकसम्मिश्रमवाप्य नैतादृशमुत्कृष्टं क्षीरं केनापि लभ्यते । यदि वा कम्बलरत्नमतीवोत्कृष्टमथवा विशिष्टवर्णादिगुणोपेतं अपलक्षणहीनं पतद्ग्रहं फलगत्ति यद्वा फलकं चम्पकपट्टादिकमथवा श्राद्धमीश्वरमतिदातारमुपासकत्वेन प्रतिपन्नं लब्ध्वा यदि वा प्रासादे सर्वोत्कृष्टे उपाश्रयत्वेन लब्धे, कप्पड्डे वा इति ईश्वरपुत्रे रूपवति प्रज्ञानिधाने लब्धे प्रमोदते, प्रमोदनवशाच्च दीप्तचित्तो भवति । एतेन लाभमदेन वा मत्त इति लोकोत्तरे योजितमधुना दुर्जयान् शत्रून् जित्वेत्यंतद्योजयति, वायं काउणवत्ति वादं वा परप्रवादिना दुर्जयेन् सह कृत्वा तं पराजित्यातिहर्षवशतो दीप्तो दीप्तचित्तो भवति साम्प्रतमेनामेव गाथां विनेयजनानुग्रहाय विवरिषुराह-

[भा.११२७] पुंडरियमाइयं खलु अज्झयणं कड्ढिऊण दिवसेन ।
हरिसेनदित्तचित्तो एवं होज्जा हि कोइउ ।।

वृ- कश्चित्पौण्डरीकादिकमध्ययनं खलु दिवसेन उपलक्षणमेतत् पौरुष्यादिना वा कर्षित्वा पठित्वा हर्षेण दीप्तचित्तो भवेत् । एवमध्ययनलाभेन दीप्तचित्तता ।।

[भा.११२८] दुल्लहदव्वे देसे पडिसेविय तं अलद्धपुव्वं वा ।
आहारोवहि वसही अहुणाविवाहो व कप्पठो ।

वृ- दुर्लभद्रव्ये देशे तत् दुर्लभद्रव्यं केनाप्यलब्धपूर्वं । वाशब्दः समुच्चये प्रतिसेव्य लब्ध्वा दीप्तचित्तो भवति । एवमाहारे भक्तक्षीरादिके उपधौ कम्बलरत्नादिके वसतौ प्रासादादिरूपायां लब्धायां यदि वा कप्पट्ठेत्ति । ईश्वरपुत्रोऽधुना कृत्वीवाहः प्रज्ञानिधानं शिष्यत्वेन लब्ध इति हर्षेण दीप्तचित्तो भूयात् । तत्रैतेषु दीप्तचित्तेषु यतनामाह-

[भा.११२९] दिवसेन पोरिसीए व तुमए ठवियं इमेण सअद्धेणं ।
एयस्स नत्थिगव्वो, दुम्मेहतरस्स को तुज्झ ।।

वृ- दिवसेन पौरुष्या वा त्वया पौण्डरीकादिकमध्ययनं स्थापितं पठितं तदनेन दिवसस्य पौरुष्या वा अर्धेन तथाप्येतस्य नास्ति गर्वः । तव पुनर्दुर्मेधस्तरस्यको गर्वो नैव युक्त इति भावः । एतस्मादिति अपि तव हीनप्रज्ञत्वात् ।।

[भा.११३०] तद्द्व्वंसं दुगंच्छेण दिठंतो भावणो असरिसेणं ।
पगयंमि पनवेत्ता, विज्जादि विसोहि जा कम्मं ।।

वृ- यतो दुर्लभद्रव्यं भक्तक्षीरादि तेन लब्धं तस्य द्रव्यस्य जुगुप्सनं क्रियते यथा नेदमतिशोभनममुको वाऽस्य दोप इत्यादि । यदि वा दृष्टान्तोऽन्येनापीदृशमानीतमितिप्रदर्शनं क्रियते । तस्य दृष्टान्तस्य भावना असदृशेन तस्मात् शतमानेन सहस्त्रभागेन वा यो हीनस्तेन कर्तव्या । तथा पगयंमीत्यादि प्रकृते अवमतरस्य विशिष्टे प्रासादादिके सम्पाद्ये तथाविधं श्रावकमितरं वा प्राप्य तदभावे कस्यापि महर्द्धिकस्य विद्यादि । आदिशब्दात् मन्त्रचूर्णादिपरिग्रहः यावत् कर्मापि कार्मणमपि प्रयुज्य ततोऽवमतरस्य विशिष्टप्रासादादिसम्पादनेनेतरस्यापभ्राजना सम्पादनीया येन प्रगुणो भवति । ततः पश्चाद्वि-द्यादिप्रयोगजनितपापविशुद्धये विशोधिः प्रायश्चित्तं प्रतिपत्तव्यंति साम्प्रतमेतदेव विवरीषुराह-

[भा.११३१] उक्कोसवहुविहीयं आहारोवगरणफलगमादीयं ।
खुड्डेणोमतरेणं आनीतो भामि(यि)तो पडणो ।।

वृ- उत्कृष्टं बहुविधिकं बहुभेदमाहारं भक्तक्षीरादिकमुपकरणं कम्बलरत्नप्रभृति, फलकं चम्पकपट्ट तिनिसपट्टादिकमादिशब्दः स्वगतानेकभेदसूचकः तथाविधश्राद्धप्रज्ञापनेन विद्यादिप्रयोगेन वा सम्पाद्य क्षुद्रेण क्षुल्लकेन गुणतोऽवमतरेण शतभागसहस्त्रभागादिना हीनेन आनीतमुपदर्श्य आनीतमुपदर्श्य सोऽपभ्राजितः क्रियते । ततः प्रगुणो भवति प्रासादादि विषये यतनामाह-

[भा.११३२] अदिट्ठसड्ढकहणं आउट्टा अभिनवो य पासाओ ।
कयमेत्तेय विवाहे सिद्धादि सुया कइयवेणं ।।

वृ- यस्तेन श्राद्धो न दृष्टोऽदृष्टपूर्वस्तस्यादृष्टस्य श्राद्धस्य कथनं प्रज्ञापना उपलक्षणमेतत् । महर्द्धिकस्य विद्यादिप्रयोगतोऽभिमुखीकरणं वा ततस्ते आवृत्ताः सन्तस्तस्य लब्ध्यभिमानिनः समीपमागत्य ब्रुवते वयमेते क्षुल्लकेन प्रज्ञापितास्ततोऽभिनव एवकृतमात्र एव वावधारणेप्रासादो दत्तः तथा कैतवने कपटेन सिद्धादिसुतः सिद्धपुत्रादिसुताः कृतमात्रएवविवाहे उत्पादनीयाः इयमत्र भावना - सिद्धपुत्रादिकेषु प्रज्ञापनमितरस्य प्रज्ञापनं विद्यादि प्रयोगं वा कृत्वा तत्सुताः कृतमात्रवीवाहा एव व्रतार्थं तत्समक्षमुपस्थापनीया येन तस्यापभ्राजनोपजायते । तत पश्चात् शकुनादिवैगुण्यमुद्भाव्य ते मुच्यंते यदि न स्यात् तात्विकी व्रतश्रद्धेति वायं काऊण वेत्यत्र यतनामाह-

[भा.११३३] चरगादिपन्नवेउं पुव्वं तस्स पुरतो जिनवेंति ।
उमतरागेण ततो पगुणत्तिओ भामितो एवं ।।

वृ- चरकादिकं प्रचण्डं परवादिनमधःकृतसाधोर्वादिनासाध्यं पूर्वं प्रज्ञाप्य प्ररूपितस्याधिकृतस्य वादाभिमानिनः साधोः पुरतो अवमतरेण चरकादिकं जापयन्ति । चरवृषभास्ततः स एवमपभ्राजितः सन् प्रगुणायते प्रगुणी भवति ।

मू. (४६) *जक्खाविठं भिक्खुं गिलायमाणं नो कप्पइ, तस्सगणावच्छेदियस्स निज्जूहित्तए जाव रोगातंकातो विप्पमुक्को ततो पच्छा तस्स अहालहुस्सगं नामं ववहारे पट्ठवियव्वे सियाइति ।*

वृ- अथास्य सूत्रस्य पूर्वसूत्रेण सम्बन्ध उच्यते-

[भा.११३४] पोग्गलअसुभसमुदतो एसणागंतुको दुवेण्हंपि ।
जक्खावेसेणं पुन नियमा आगंतुगो होइ ।।

वृ- द्वयोः क्षिप्तचित्तदीप्तचित्तयोरेष पीडाहेतुत्वेनानन्तरमुद्दिष्टोऽशुभपुद्गलसमुदायोऽनागन्तुकः स्वशरीरसंभवी प्रतिपादितः यक्षावेशेन पुनः ग्लायति पीड़ा हेतुरशुभपुद्गलसमुदायो नियमादागन्तुको भवति । ततोऽनागन्तुका शुभपुद्गलसमुदयप्रतिपादनार्थमिपसूत्रारंभः प्रकारान्तरेण संबंधमाह-

[भा.११३५] अहवा भयसोगजुओ चिंतद्दितो अइहरिसितो वा;
आवस्सति जक्खेहिं, अयमन्नो होइ संबंधो ।

वृ- अथवेति प्रकारांतरोपप्रदर्शने भयशोकयुक्तो वा चिन्तार्दितो वा एतेन क्षिप्तचित्त उक्तः । अतिहर्षितो वानेन दीप्तचित्तोऽभिहितः यक्षैः परवशहृदयतया आविश्यते आलिह्यतेततः क्षिप्तदीप्तसूत्रानन्तरं यक्षाविष्टसूत्रमित्ययमन्यो भवति सम्बन्धः । अनेनैव सम्बन्धेनायातस्यास्य व्याख्या पूर्ववत् । सम्प्रति यतो यक्षाविष्टो भवति तत्प्रतिपादनार्थमाह –

[भा.११३६] पुव्वभवियवेरेणं अहवा रागेण रंगितो संतो ।
एएहि जक्खविट्ठो सेठी सण्भिलगवेसादी ।।

वृ- पौर्वभविकेन पूर्वभवभाविना वैरेण अथवा रागेण रञ्जितः सन् यक्षैराविश्यते । एताभ्यां रागद्वेषाभ्यां यक्षाविष्टो भवति यथा श्रेष्ठी द्वेष्यभार्यया भूतिकयासज्ञिणत्ति लघुभ्राताज्येष्टभ्रातृभार्यया द्वेष्यादिभिरित्यत्रादि शब्दात् भृतिका ज्येष्ट भार्यया परिग्रहः तत्र श्रेष्ठ्युदाहरणमाह--

[भा.११३७] सेट्ठिस्स दोन्नि महिला पियाय वेस्साय वंतरीजाया ।
सामन्नंमि पयत्तं चछलेंति तं पुव्ववेरेणं ।।

चू- एगो सेट्ठी, तस्स दो महिला । एगा पिया एगा वेस्सा । तउ जा वेसा सा अकामनिज्जाराए मरिऊणं वंतरी जाया, सिट्ठीवि तहारूवाणं थेराणमंतिए धम्मं सोच्चा पव्वइतो । सा य वंतरी पुव्ववेरेण छिद्दाणि मग्गति । अन्नयापमत्तं दट्ठूण च्छलियाइतो । अक्षरार्थस्त्वयं श्रेष्ठिनो द्वे महिले । तद्यथा-एका प्रिया अपरा द्वेष्या । तत्रैकामृत्वा व्यन्तरी जाता । सा श्रामण्ये स्थितं श्रेष्ठिनं प्रमत्तं दृष्ट्वा पूर्वभववैरेण छलितवती गाथायामतीतकालेऽपि वर्तमानता प्राकृतत्वात् सम्प्रति लघुभ्रातृदृष्टान्तमाह--

[भा.११३८] जेट्ठाभाउमहिला अज्झोवन्नाओ होइ खुड्डलिए ।
धरमाणंयाणिच्छेमी पडिसिहे वंतरी जाया ।।

वृ- एगंमि गामे दो भायरो । तस्य जेट्ठस्य भारिया खुड्डलगे अज्झोववणा सातं पत्थेइ खुड्डलगो निच्छइ भणइ-तुमं मम जेट्ठभाउज्जं धरमाणं न पाससि । तीए चिंतियं जीवइ ताव मे नत्थि एसो वेरोत्ति तओ च्छिद्दं लहिऊण विससंचारेण मारितो नियभत्ता । ततो भणियं जस्स भयं कासी सो मओ । इयाणिं पूरेहि मे मनोरहं । तेन चिंतियं नूनमेताए मारितो जेट्ठभाउगो धिरत्थु कामभोगानमिति संवेगगतो पव्वइतो । इयरो वि दुह संतत्ता अकामनिज्जराए मरिऊण वंतरी जाया । ओहिणा पुव्वभवं पासति दिट्ठो देवरो सामन्न ट्ठितो । ततो नाहमनेन इच्छियत्ति पुव्वभववेरमनुसरंतीए । पमत्तो च्छलितो, अक्षरयोजना त्वियम्-ज्येष्टभ्रातृमहिला क्षुल्लके लघुभ्रातरि अध्युपपन्ना जातानुरागा सा च तेन ज्येष्ठो भ्राता धरन्तं जीवन्तं न पश्यतीति प्रतिषिद्धा, मारित प्रव्रज्याप्रतिपत्तितः प्रतिषिद्धेति व्यन्तरी जाता । अत्र पूर्वरागः पश्चाद्वेषः, भृतिका दृष्टान्तमाह –

[भा.११३९] भतिया कुडुंबिएण, पडिसिद्धा वाणमंतरी जाया ।
पवत्तं सामणम्मि पमत्तं, छलेतितं पुव्ववेरेण ।।

वृ- एगो कुटुम्बिणो आलसरीरे एगाए भूइकम्मकारीणीए पत्थितो, सा तेन नेच्छिया ततो सा गाढमज्झुववन्ना । तेन सहसंपउगमलभमाणी दुक्खसागरमोगाढा अकामनिज्जराए मरिऊणं वंतरी जाया, । सो य कुटुम्बितो तहा रूवाणं थेराणं अंतिते पव्वइतो, सो तीए आभोगितो अन्नया पमत्तं दट्ठूण च्छलियाइतो ।। अक्षरार्थस्त्वयम्-भूतिकाकर्मकारी कौटुम्बिकेनप्रतिपिद्धा व्यन्तरी जाता । ततस्तं कौटुम्बिनं श्रामण्याश्रितं प्रमत्तं सन्तं पूर्ववैरेण च्छलितेति छलितवती ।। सम्प्रत्येवं छलितस्य यतनामाह-

[भा.११४०] तस्स उ भूयतिगिच्छा भूयरवावेसेणं सयं वावि ।
नीउत्तमंतु भावं, नाउं किरिया जहा पुव्विं ।।

वृ- तस्य रागेण द्वेषेण वा व्यन्तरादिना छलितस्य पुनः क्रिया कर्तव्येति योगः कथमित्याह-तस्य भूतस्य नीचमुत्तमं तु भावं ज्ञात्वा । कथं ज्ञात्वेत्यत आह-यथाभिहितं पूर्वं किमुक्तं भवति कायोत्सर्गेण देवतामाकम्प्य तद्वचनतः का क्रिया कर्तव्येत्यत आह-भूतचिकित्सा भूतोच्चाटिनी चिकित्सा भूतचिकित्सा; यक्षाविष्टः किलोन्मादं प्राप्नोति ततो यक्षाविष्टसूत्रानन्तरमुन्मादप्राप्तसूत्रमाह-

*मू. (४७) उम्मायपत्तं भिक्खुं गिलायमाणं नो कप्पए तस्स गणावच्छेयस्स निज्जूहित्तए अगिलाए करणियं वेयावडियं जाव ताओ रोगायंकाओ विप्पमुक्को ततो पच्छा तस्स अहालहुस्सगे नामं ववहारे पट्ठवियव्वे-सिया' इति ।।*

वृ- अस्य व्याख्या पूर्ववत् । साम्प्रतमुन्मादप्ररूपणार्थं भाष्यकारः प्राह-

[भा.११४१] उम्मातो खलु दुविहो जक्खावेसो य मोहनिज्जो य ।
जक्खावेसो उत्तो मोहेन इमो उ वोच्छामि ।।

वृ- उन्मादः खलु निश्चितं द्विविधो द्विप्रकारस्तद्यथा-यक्षावेशहेतुको यक्षावेशः कार्ये कारणोपचारात् । एवं मोहनीयकर्मोदयहेतुको मोहनीयः । च शब्दौ परस्परसमुच्चयार्थौ स्वगतानेकभेदसंसूचकौ वा तत्र यो यक्षावेशो यक्षावेशहेतुकः सोऽनन्तरसूत्रे उक्तो यश्च मोहेन मोहनीयोदयेन मोहनीयं स नाम येनात्मा मुह्यति । तच्च ज्ञानावरणंमोहनीयं यथा द्रष्टव्यं द्वाभ्यामप्यात्मनो विपर्यासोपादानात् तेनोत्तरत्रोच्यमानमाह च पित्तमुच्छाए इत्याद्युच्यमानं न विरोधभाक् । इमोत्ति अयमनन्तरं वक्ष्यमाणतया प्रत्यक्षीभूत इव । तमेवेदानीं वक्ष्यामि ।। प्रतिज्ञातमेव निर्वाहयति-

[भा.११४२] रूवंगि दट्ठूण उम्मदो अहव पित्तमुच्छाए ।
कह रूवं दट्ठूणं हवेज्ज उम्मायपत्तो य ।।

वृ- रूपेणातिशायिना युक्तमङ्गं शरीरं यस्याः सा रूपाङ्गी । तां दृष्ट्वा कस्याप्युन्मादो भवेत् । कोऽप्युन्मादभाग् भूयादिति भावः । अथवा पित्तमूर्च्छया पित्तोद्रेकेण उपलक्षणमेतत् । वातोद्रेकवशतो वा स्याद् उन्मादः, । पर आह-कथं रूपं दृष्ट्वा भवेदुन्मादप्राप्तः । सूरिराह-

[भा.११४३] दट्ठूण नदिं कोइ उत्तरवेउव्वियं मयणमत्तो ।
तेनेव य रूपेण उ उड्डंमि कयंमि निव्विण्णो ।।

वृ- कश्चिदल्पसत्त्वो नटीं दृष्ट्वा । किं विशिष्टामित्याह-उत्तरवैकुर्विकां उत्तरमुत्तरकालभाविनः स्वाभाविकमित्यर्थः । वैकुर्विकं विकुर्वणं विकुर्वस्तेन निवृत्तं वैकुर्विकं विशिष्टवस्त्रविशिष्टाभरण सुश्लिष्टतत्परिधानसमीचीनकुंकुमाद्युपलेपनजनितमतिमनोहारि रमणीयकं यस्याः सा तथा तां दृष्ट्वा मदनमत्त उन्माद प्राप्तो भवेत्तत्रेयं यतना उत्तरवैकुर्विकरूपापसारणेन तेनैव स्वाभाविकेन रूपेण

तस्यामुद्धर्यां कृतायां, गाथायां पुंस्त्वं प्राकृतत्वात् तस्य तद्रूपदर्शनेन तद्विषयकर्म निर्वेदो भवति, तद्विषयं विरागमुपपद्यते । तत एतत्कर्तव्यम्--

[भा.११४४] पणवियाओ विरूवा उम्मंडिज्जंती एतस्स पुरतो उ ।
रूववतीए उ भत्तं दिज्जइ जेणं तु छड्डेइ ॥

वृ- अन्यञ्च च यदि सा नटीस्वरूपतो विरूपा भवति ततः सा पूर्वं प्रज्ञाप्यते प्रज्ञापिता च सती तस्याधिकृतस्य तां दृष्ट्वा उन्मादप्राप्तस्य पुरत उन्मद्यते । यत्तस्या मण्डनं तत्सर्वमपनीयते । ततो विरूपरूपदर्शनतस्तस्य विरागो भवति । अथ सास्वभावतोऽपि रूपवती अतिशायिनोद्‌भटेन रूपेण युक्ता ततस्तस्यास्तद्‌भक्तं मदनफलमिश्रादिदीयते । येन तस्य पुरतश्छर्दयति उद्वमनं च कुर्वती सा किल जुगुप्सनीया भवति ततः सतां दृष्ट्वा विरज्यते इति ॥

[भा.११४५] गुज्झंगनम्मि य वियडं पज्जावेऊण खदियमाईणं ।
तद्दावणा विरागो होज्ज जहासाढभूतिस्स ॥

वृ- यदि पुनः कस्यापि गुह्याङ्गविषयउन्मादो भवति, । न रूपलावण्याद्यपेक्षितस्ततः क्षरकादिनां विकटं मद्यं पाययित्वा प्रसुप्तीकृतां तां प्रभूत मद्योद्गालिखरण्टितसर्वशरीरा(वयवा)नामत एव मक्षिकाभिर्भिणिभिणायमानानां तद्दावणत्ति तस्य गुह्याङ्गस्य मद्योद्गालनादिना बीभत्सीभूतस्य दर्शना क्रियते । ततो भवति दर्शनान्तरं कस्यापि महात्मनो विरागः । यथा आषाढभूतेः क्षुल्लकस्य, वातेनपित्तेन चोन्मादयतनामाह-

[भा.११४६] वाते अब्भंगसिनेह पज्जणादी तहा निवाए य ।
सक्करखीरादि हियपित्त गिच्छा उ कायव्वा ॥

वृ- वाते वातनिमित्ते उन्मादे तैलादिना शरीरस्याभ्यङ्गः क्रियते, स्नेहपायनं घृतपायनमा-दिशब्दात्तथाविधान्यचिकित्सा परिग्रहः तत्कार्यते । तथा निवाते स्थाप्यते, पित्तवशादुन्मत्तीभूतस्य शर्कराक्षीरादिभिस्तस्य चिकित्सा कर्तव्या-

**मू. (४८)** *उवसग्गपत्तं भिक्खुं गीलायमाणं नो कप्पइ तस्स गणावच्छेदितस्य निज्जूहित्तए अगिलाए करणिज्जं वेयावडियं जाव रोगातंकातो विप्पमुक्के । ततो पच्छा तस्स अहालहुसगं नामं ववहारे पट्ठवियव्वे सिया इति ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ?

[भा.११४७] मोहेन पित्ततो वा आया संचेयतो समक्खातो ।
एसो उ उवसग्गो इमो उ अनो परसमुत्थो ॥

वृ- मोहेन मोहनीयोदयेन वेदोदयेनेत्यर्थः पित्ततो वा पित्तोदयेनेत्यर्थः । उन्मत्तः स आत्मा संचेतकः आत्मनैवात्मनो दुःखोत्पादकः समाख्यातः यद्यात्मनैवात्मनो दुःखोत्पादनमेप आत्मसंचेतनीय उपसर्गः ततः पूर्वमात्मसंचेतनीय उपसर्ग उत्कृष्टत उपसर्गाधिकारादयमन्यः परसमुत्थ उपसर्गोऽनेन प्रतिपाद्यते इत्यनेन सम्बन्धेनायातस्यास्य व्याख्या सा च प्राग्वत् । तत्रोपसर्गप्रतिपादनार्थमाह-

[भा.११४८] तिविहो य उवसग्गो दिव्वो मानुस्सितो तिरिच्छो य ।
दिव्वो उ पुव्वभणितो मानुसतिरिए अतो वोच्छं ॥

वृ- त्रिविधः खलु परसमुत्थ उपसर्गः । तद्यथा-दैवो मानुषिकस्तैरश्चश्च । तत्र दैवो देवकृतः

पूर्वमनन्तरसूत्रस्याधस्ताद्वर्णितः । अतो मानुषं तैरश्चं च वक्ष्ये । प्रतिज्ञातमेव निर्वाहयति-

[भा.११४९] विज्जाए मंतेन व चुण्णेण व जोइतो अणप्पवसो ।
अनुसासना लिहावण खमए महुरा तिरिक्खादी ।।

वृ- विद्यया वा मन्त्रेण वा चूर्णेन वा योजितः सम्बन्धितः सन् कश्चिदनात्मवशो भूयात् । तत्रानुशासनेति यथारूपो लुब्धया विद्यादिप्रयोजितं तस्यानुशासना क्रियते । यथा तपस्वी एष न वर्तते तव तं प्रतीदृशं कर्तुं एवं करणे हि प्रभूतपापोपचयसंभव इत्यादि । अथैवमनुशासितापि न निवर्तते तर्हि तस्यास्तं प्रति प्रतिविद्यया विद्वेषणमुत्पाद्यते अथ सा नास्ति तादृशी प्रतिविद्या, तर्हि लिहावणत्ति शुन्याः सागारिकं विद्याप्रयोगतस्तस्य पुरत आलेखाप्यते येन स तत् दृष्ट्वा सागारिकमिदमति बीभत्समिति जानानो विरागमुपपद्यते । एवा मानुषिक उपसर्गः; । खमगे महुरा इति मधु(थु)रायां श्रमणीप्रभृतीनां मानुष उपसर्गोऽभूत् । तं क्षपको निवारितवान् । एषोपि मानुष उपसर्गः । तैरश्चमाह-तिरिक्खो य इति तिर्यञ्चो ग्रामेयका आरण्यका वा श्रमणादीनामुपसर्गान् कुर्वन्तिते यथाशक्ति निराकर्तव्याः ।

साम्प्रतमेनामेव गाथां विवरीषुराह—

[भा.११५०] विज्जामंते चुण्णे अभिजोइ बोहियादिगहिए वा ।
अनुसासना लिहावण महुराखमकादिव बलेन ।।

वृ- विद्यामन्त्रेण चूर्णे वा अभियोजितो बोधिकास्तेना, आदिशब्दात् म्लेच्छादिपरिग्रहस्तैर्वा गृहीते यया विद्यया योजितं तस्याः प्रागुक्तप्रकारेणानुशासना क्रियते । तथा प्रतितिष्ठन्त्यां प्रतिविद्या प्रयोगतस्तं प्रति विद्वेषणमुत्पाद्यते तस्याभावे पूर्वप्रकारेण लेखापनं कार्यत्ति, बोधिकादि गृहीते पुनः मथुराक्षपकादिनेव बलेन यथाशक्ति बोधिकादेर्निवारणं कर्तव्यं विद्याद्यभियोगमेव भेदतः संप्रति प्रतिपादयति —

[भा.११५१] विद्यादभियोगो पुन दुविहो मानुस्सितो य दिव्वो य ।
तं पुन जाणंति कहं जइ नामं गिण्हए तेसिं ।।

वृ- विद्यादिभिरभियोगोऽभियुज्यमानता पुनर्द्विविधो द्विप्रकारस्तद्यथा-मानुषिको दैवश्च । तत्र मनुष्येण कृतो मानुषिको देवस्यायं तेन कृतत्याद्दैवः । तत्र देवकृतो विद्यादिभिरभियोगः । एष एव यत्तस्मिन् दुरस्थितेऽपि तत्प्रभावात् स तथारूप उन्मत्तो जायते । अथ तं विद्याद्यभियोगं दैवं मानुषिकं वा कथं जानन्ति । सूरिराह तयोर्देवमनुष्ययोर्मध्ये यस्य नाम गृह्णाति तत्कृतः स विद्याद्यभियोगो ज्ञेयः साम्प्रतमनुसासना लिहावणेत्येतद्व्याख्यानयति—

[भा.११५२] अनुसासियंमि अठिए, विद्देसं देंति तहविय अठिंते ।
जक्खीए कोवीणं तस्स उ पुरओ लिहावेंति ।।

वृ- येन सामान्यतः स्त्रिया पुरुषेण वा विद्याद्यभियोजितं तस्यानुशासना क्रियते । अनुशासितेप्य तिष्ठति विद्याप्रयोगतस्तं विवक्षितं साधुं प्रति तस्य विद्याद्यभियोक्तु विद्वेषं ददत्युत्पादयन्ति वृषभाः तथापि च तस्मिन्नतिष्ठति यक्ष्याः शुन्याः कौपीनं तस्य पुरतो विद्याप्रयोगतो लिखापयन्ति । येन स तत् दृष्ट्वा तस्या इदं सागारिकमिति जानानो विरज्यते । सम्प्रति विद्याप्रयोगे दृष्टादरताख्यापनार्थमाह—

[भा.११५३] विसस्स विसमेवेह उसहं अग्गिमग्गिणो ।
मंतस्स पडिमंतो उ दुज्जनस्स विवज्जणा ।।

वृ- विषस्यौषधं विषमेव, अन्यथा विषानिवृत्तेः । एवमग्रे भूताद्युक्तास्यौषधमग्निः, मन्त्रस्य प्रति-

मन्त्रो दुर्जनस्यौषधं विवर्जना तद्ग्रामनगरपरित्यागेन परित्यागः । ततो विद्याद्यभियोगे साधुसाध्वीरक्षणार्थं प्रति विद्यादिप्रयोक्तव्यमिति ।

[भा. ११५४]      जति पुन होज्जगिलाणो निरुज्झमाणो ततो से तिगिच्छं ।
संवरियमसंवरिया उवालभंते निसिं वसभा ।

वृ- यदि पुनर्विद्याद्यभियोजितस्तदभिमुखं गच्छन् निरुध्यमानो ग्लानो भवति ततः स तस्य साधोः चिकित्सां संवृत्तां केनाप्य लक्ष्यमाणां कुर्वन्ति तथा असंवृत्ता यया विद्याद्यभियोजितं तस्या प्रत्यक्षीभूय निशि रात्रौ तामुपालभन्ते, भेषयन्ति पिट्टयंति च तावत् यावत् सा मुञ्चतीति; खमए महुरत्ति ।

अस्य व्याख्यानमाह—

[भा. ११५५]      थूभमहे सड्ढि समणी बोहियहरणं य निवसुय ताचे ।
नरवइसुए अक्कंदकए भि जुद्धेण मोएत्ति ।।

वृ- महुरानयरीए थूभो देवनिम्मित्तो । तस्स महिमा निमित्तं सड्ढीतो समणीहिं समं निग्गयातो रायपुत्तो य । तत्थ अदूरे आयावंतो चिट्ठइ । ततो सड्ढी समणीतो बोहिएहिं गहियातो । तेनं आनीयातो बाहिं तं साहुं दट्ठुं अक्कंदो कतो । ततो रायपुत्तेण साहुणा जुद्धं दाऊण मोइयातो । अक्षरगमनिका त्वियम् स्तूपस्य महे महोत्सवे श्राद्धिकाः श्रमणीभिः सह निर्गतास्तासां बोधिकैश्चौरैर्हरणम् । नृपसुतश्च तत्रादूरे आतापयति बोधिकैश्च तास्तस्य मध्येन नीयन्ते । ताभिश्च तं दृष्ट्वा आक्रन्दे कृते स युद्धेन स्तेनेभ्यश्चस्ता मोचयति ।

उक्तो मानुषिक उपसर्गः । सम्प्रति तैरश्चमाह—

[भा. ११५६]      गामेणारन्नेवा अभिभूयं संजयं तु तिरिएणं ।
थद्धं पकंपिया वा रक्खे अरक्खणे गरुगा ।।

वृ- गामेनारण्येन वा तिरश्चा अभिभूतमापादिताभिभवं संयतं च यदि वा स्तब्धं तद्भयात् स्तंभीभूतं प्रकम्पितं वा तद्भयतः प्रकम्पमानशरीरं रक्षेत् । यदि पुनर्नरक्षति सत्यपि बले ततोऽरक्षणे प्रायश्चित्तं गुरुकाश्चत्वारो गुरुका मासाः ।

मू. (४१) *साहिगरणं भिक्खुं गिलायमाणं नो कप्पइ तस्स गणावच्छेयस्स निज्जूहित्तए अगिलाए करणिज्जं वेयावडियं । जाव रोगायंकातो विप्पमुक्के ततो पच्छा अहालहुस्सगे नामं ववहारे पट्ठवियव्वे सिया इति ।*

वृ- अथास्य सूत्रस्य कः सम्बन्ध इति सम्बन्धप्रतिपादनार्थमाह-

[भा. ११५७]      अभिभवमाणो समणो परिग्गहो वा से वारितो कलहो ।
उवसामेयव्वो उ ततो अह कुज्जा दुविहभेयं तु ।

वृ- श्रमणं साधुमभिभवन् गृहस्थो यदि वा से तस्य गृहस्थस्य परिग्रहः परिजनश्च वारितः सन् कलहं कुर्यात् ततः स कलह उपशमयितव्यः । एतत्प्रदर्शनार्थमधिकृतसूत्रारम्भः अस्य व्याख्या प्राग्वत् । अथ सोऽनुपशान्तः सन् कुर्यात्द्विविधं द्विप्रकारं संयमभेदं जीवितभेदं चेत्यर्थ तत आह—

[भा. ११५८]      संयमजीवियभेदे सारक्खण साहुणो य कायव्वं ।
पडिवक्खनिराकरणं तस्स ससत्तीए कायव्वं ।।

वृ- संयमभेदे जीवितभेदे वा तेन क्रियमाणे संरक्षणं साधोः कर्तव्यम् । तथा तस्य साधोर्यः प्रतिपक्षस्तस्य निराकरणं स्व शक्त्या कर्तव्यं कथं कर्तव्यमित्यत आह-

[भा.११५९] अनुसासनभेसण या जा लद्धी तस्स तं न हावेज्जा ।
किं वा सति सत्तीए होइ सपक्खे उवेक्खाए ।।

वृ- तस्य प्रथमतः कोमलवचनैरनुशासनं कर्तव्यं तथाप्यतिष्ठति भीषणमुत्पादनीयं । तथाप्यतिष्ठति या यस्य लब्धिः स तां न हापयेत् प्रयुंजीतेत्यर्थः । एतदेव विपक्षे फलभावोपदर्शनेन द्रढयति किं वा सत्यां शक्तौ भवति स्वपक्षे स्वपक्षस्य उपेक्षा, उपेक्षया नैव किञ्चिदिति भावः केवलं स्वशक्तितः वैकल्यमुपेक्षानिमित्तं प्रायश्चित्तापत्तिश्च भवति । तस्मादवश्यं स्वशक्तिः परिस्फोरणीयेति ।।

**मू. (५०)** *सपायच्छित्तं भिक्खुं गिलायमाणं नो कप्पइ तस्स गणावच्छेदियस्स निज्जूहित्तए अगिलाए करणिज्जं वेयावडियं जाव रोगातङ्काओ विप्पमुक्को ततो पच्छा अहालहुस्सगे नामं ववहारे पट्ठवियव्वे सिया ।।*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? उच्यते --

[भा.११६०] अहिगरणंमि कयंमि खामिय समुवट्ठियस्स पच्छित्तं ।
तप्पढमयाभएणव, होज्जा किलंतोव वहमाणो ।।

वृ- अधिकरणे कृते क्षामिते च तस्मिन् समुपस्थितस्य प्रायश्चित्तं दीयते । ततः साधिकरणसूत्रानन्तरं सप्रायश्चित्तं सूत्रमुक्तमस्य व्याख्या प्राग्वत् । सप्रायश्चित्तं भिक्खुं गिलायमाणमित्युक्तं । तत्र यथा ग्लानिर्भवति तथा प्रतिपादयति । तप्पढमयाए इत्यादि तस्याधिकृतस्य साधोः तत्प्रथमतायां प्रायश्चित्त प्रथमतायां भवेत्कथमहमेतत् प्रायश्चित्तं वोक्ष्यामीत्येवं रूपेण यदि वा वहन् तपसा क्लान्तः सन् ग्लानो भवति । तत्रेयं यतना--

[भा.११६१] पायच्छित्ते दिन्ने भीयस्स, विसज्जणा किलंतस्स,
अनुसट्ठि यं वहंतस्स, उभयेनखित्तस्स तेगिच्छं ।।

वृ- प्रायश्चित्ते दत्ते भीतः सन् यदि ग्लायति ततस्तस्यसतः क्लान्तस्य विसर्जना क्रियते प्रायश्चित्तं मुत्कलं क्रियते इति भावः । अथ वहन् क्लाम्यति ततस्तस्य वहतोऽनुशिष्टिर्दीयते, यथा मा भैषीः बहुगतं स्तोकं तिष्ठति यदि वा वयं साहाय्यं करिष्याम इत्यादि अथैवमनुशिष्यमाणोऽपि भयेन क्षिप्तचित्तो भूयात् ततस्तस्य भयेन क्षिप्तस्य स्तस्यैकितस्यं चिकित्साकर्म कारयितव्यमिति ।।

**मू. (५१)** *भत्तपानपडियाइक्खियं भिक्खुं गिलायमाणं नो कप्पइ तस्स गणावच्छेययस्स निज्जूहित्तए अगिलाए करणिज्जं वियावडियं जाव रोगातंकातो विप्पमुक्को ततो पच्छा अहा लहुस्सगे नामं ववहारे पट्ठवियव्वे सिया ।।*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? उच्यते --

[भा.११६२] पच्छित्तं इत्तरितो होइ तवो वण्णितो उजो एस ।
आवकहियं पुन तवो होइ परिणा अनसनं तु ।।

वृ-- प्रायश्चित्तं प्रायश्चित्तरूपं यदेतत्तपोऽनन्तरसूत्रे वर्णितं तदेष इत्वरं भवति यत्पुनः परिज्ञारूपं तपोऽनशनं तत् यावत् कथिकं (तं) तत इत्वर तपः प्रतिपादनानन्तरं यावत्कथिकतपः प्रतिपादनार्थमधिकृतं सूत्रम् । अथवायं सम्बन्धः--

[भा.११६३] अट्ठं वा हेउं वा समणस्स उ विरहिए कहेमाणो ।
मुच्छाए विवडियस्स उ कप्पइ गहणं परिणाए ।।

**वृ-** अर्थं वा भाविप्रयोजनं हेतुं वा कस्यापि प्रयोजनस्य कारणं श्रमणस्याचार्यादेः शेषजनविरहिते प्रदेशे कथयन् मूर्च्छया विपतितस्यात्मनः प्रगुणं भवन्तमनुमन्यमानस्य कल्पते ग्रहणं परिज्ञायानशनप्रत्याख्यानस्य तत एतदर्थ प्रतिपादनार्थं सप्रायश्चित्तसूत्रानन्तरमिदं भक्तपान-प्रत्याख्यानसूत्रमनेन सम्बन्धेनायातस्यास्य व्याख्या । भक्तं च पानं च भक्तपाने ते प्रत्याख्याते येन स तथा क्तान्तस्य परनिपातः सुखादिदर्शनादिति भिक्षुं ग्लायन्तमित्यादि प्राग्वत् । अत्र वैयावृत्यमाह—

**[भा.११६४]** गीयत्थाण असती सव्वसती एव कारणपरिणा ।
पानगभत्तसमाही कहणा आलोगधीरवणा ।।

**वृ-** गीतार्थानामसति अभावे यदि वा सर्वस्यापि साधोरशिवादिकारणत एकस्यापि साधोरभावे कारणपरिणत्ति कारणवशात एकाकिना जातेन परिज्ञाप्रत्याख्यानं भक्तपानस्य कृतं ततस्तस्य कृतभक्तप्रत्याख्यानस्य गीतार्थानामभावे यदि वा कारणत एकस्यापि साधोरभावे सीदतो योग्यपानकप्रदानेन चरमेप्सितभक्तप्रदानेन च समाधिरुत्पादनीया । कथना धर्मकथना यथाशक्ति स्वशरीरानाबाधया कर्तव्या । तथा आलोकं आलोचनं सदापयितव्यः । यदि कथमपि चिरजीवनेन भयमुत्पद्यते यथा नाद्यापि म्रियते किमपि भविष्यतीति न जानीम इति तस्स धीरापना कर्तव्या ।

**[भा.११६५]** जइ वा न निव्वहेज्जा असमाही वा से तम्मि गच्छम्मि ।
करणिज्ज तत्थगते ववहारो एत्थ सुद्धो वा ।।

**वृ-** यदि वा प्रबलबुभुक्षावेदनीयोदयतया कृतभक्तप्रत्याख्यानतया न निर्वहेत् । न यावत्कथिकमनशनं प्रतिपालयितुं क्षम इति । यावदसमाधिर्वा तस्मिन् गच्छे तस्य वर्तते ततोऽन्यत्र गते तस्मिन् यत्कर्तव्यं तत्करणीयं अन्यत्र नीत्वा यद्यदुचितं तत्तस्य करणीयमित्यर्थः । पश्चादन-शनप्रत्याख्यानभङ्गविषयस्तस्य व्यवहारः प्रायश्चित्तं दातव्यम् । अथ स्वगच्छसमाधिमात्रेणान्यत्र गतस्ततः समिथ्यादुष्कृतप्रदानमात्रेण शुद्ध इति ।।

**मू. (५२)** *अट्ठ भिक्खुं गिलायमाणं नो कप्पइ तस्स गणावच्छेदियस्स निज्जूहित्तए अगिलाए करणिज्जं वेयावडियं जाव रोगातंकातो विप्पमुक्के । ततो पच्छा अहालहुस्सगे नामं ववहारे पट्ठवियव्वे सिया इति ।।*

**वृ-** अथास्य सूत्रस्य कः सम्बन्धः ? उच्यते--

**[भा.११६६]** वुत्तं हि उत्तमट्ठे पडियरणट्ठा व दुक्खरे दिक्खा ।
एतो य तस्समीवं जइ हीरइ अट्ठजायमंतो ।।

**वृ-** उक्तं हि यस्मात्पूर्वं कल्पाध्ययने उत्तमार्थे उत्तमार्थं प्रतिपत्तुकामस्य द्व्यक्षरे द्व्यक्षरस्य दासस्य दीक्षा दीयते । यदि वा प्रतिचरणाय एष दीक्षितो मां ग्लानं सन्तं प्रतिचरिष्यतीति निमित्तं । एतो य इत्यादि इतश्च दीक्षादानानन्तरं तस्समीपाद्यस्य समीपे दीक्षा गृहीता तस्य सकाशात् । गाथायां द्वितीया पञ्चम्यर्थे । यदि हृदये अतो अर्थजातं भवति । प्रयोजनजातमुत्पद्यते ततः सम्प्रत्यर्थे जातस्तत्रावकाशः । अनेन सम्बन्धेनायातस्यास्य व्याख्या । सा च प्राग्वत् । साम्प्रतमर्थजातं भिक्षुं ग्लायन्तमित्यत्र योऽर्थजातशब्दस्तद्व्युत्पत्तिप्रतिपादनार्थमाह—

**[भा.११६७]** अत्थेन जस्स कज्जं संजायं एस अट्ठजातो य ।
सो पुन संजमभावा चालिज्जंतो परिगिलाइ ।।

**वृ-** अर्थेन अर्थितया जातं कार्यं यस्य सम्बन्धः विवक्षायामत्र षष्ठी येनेत्यर्थः । सोऽर्थजातः गमकत्वादेवमपि समासः । उपलक्षणमेतत् । तेनैवमपि व्युत्पत्तिरवसातव्या अर्थःप्रयोजनं जातोऽस्येत्यर्थजातः; पक्षद्वयेऽपि स्वाद्वेयेऽपि ग्लानस्य परिग्रहात् सुखाविर्दर्शनात् स पुनः कथं ग्लायतीति चेदत आहः-स पुनः प्रथमतः प्रथमव्युत्पत्तिसूचितः संयमभावात् चाल्यमानः कंप्यमानः परिग्लायति । द्वितीयव्युत्पत्तिपक्षे प्रयोजनानिष्पत्त्याग्लायति, तस्योभयस्यापि अगिलया प्रागुक्त-स्वरूपया वक्ष्यमाणं वैयावृत्त्यं करणीयं यावत् रोगातङ्कात् संयमभावचलनात् प्रयोजनानिष्पादनाच्च विप्रमुक्तं स्यात् । ततः पश्चात्यत्किमप्याचरितं भीषणादि तद्विषयं यथा लघुस्वको व्यवहारः प्रस्थापितः स्यादिति सम्प्रति निर्युक्तिकृत् येषु स्थानेषु संयमस्थितस्याप्यर्थजातमुत्पाद्यते तान्यभिधित्सुराह-

**[भा.११६८]** सेवगपुरिसेओमे आवन्न अणत्तबोहिणे तेनं ।
एएहिं अट्ठजातं उप्पज्जइ संयमट्ठियस्स ॥

**वृ-** सेवकपुरुषे सेवकपुरुषविषये एवमेव ओमेदुर्भिक्षे तथा आपन्ने दासत्वं समापन्ने तथा विदेशान्तरगमने उत्तमर्णेनासे तथा बोधिकेरपहरणे स्तेनैरपहरणे च बोधिका अनार्यम्लेच्छाः स्तेना आर्यजनपदजाता अपि शरीरापहारिणः एतैः कारणैरर्थजातं प्रयोजनजातमुत्पद्यते । संयमस्थितस्यापीति एव निर्युक्तिगाथासंक्षेपार्थः । साम्प्रतमेतामेव विवरीतु कामः प्रथमतः सेवकपुरुषद्वारमाह-

**[भा.११६९]** अपरिग्गहगणियाए सेवगपुरिसो उ कोइ आलत्तो ।
सो तं अतिरागेणं पणयए अट्ठजायाय ॥

**[भा.११७०]** सा रूविणित्ति काउं, रणाणीया उ खंधवारेण ।
इयरो तीए विउत्तो, दुक्खत्तो तेय निक्खंतो ॥

**[भा.११७१]** पच्चागय तं सोउं, निक्खंतं बेइगंतूणं तहियं ।
बहुयं मे उवउत्तं, जइदिज्जइ तो विसज्जामि ॥

**वृ-** न विद्यतेपरिग्रहः कस्यापि यस्याः सा अपरिग्रहाः सा चासौ गणिका च अपरिग्रहगणिका तया कोऽपि राजादीनां सेवकः पुरुषः आलप्तः संभाषितः आलप्य च स्वगृहमानीतः, । ततः सा अर्थजाता सती तं पुरुषमतिरागेणातिरागवशात् प्रणयते प्रसादयति, अन्यदा सा गणिकारूपिणी अतिशयेन रूपवतीति कृत्वा राज्ञा स्कन्धावारेण कटकेन गच्छता आत्मना सहानीता, इतरोऽपि च सेवकपुरुषस्तया गणिकया वियुक्तो दुखार्तः प्रियाविप्रयोगपीडितो निष्क्रान्तस्तथा रूपाणांस्थविराणामन्तिकेप्रव्रज्यां प्रतिपन्नः, । सा च वेश्या राज्ञासह प्रत्यागता तं पुरुषं न पश्यति गवेषयितुमारब्धा । ततः कस्यापि पार्श्वे तं निष्क्रान्तं श्रुत्वा यत्र तत्र स तिष्ठति । तस्या वसतौ गत्वा तान् स्थविरान् ब्रूते । बहुकं प्रभूतं मम तु द्रव्यमनेनोपयुक्तमात्मोपयोगं नीतं भुक्तमित्यर्थः । तद्यदि दीयते ततो विसृजामि । एवमुक्ते यत्कर्तव्यं स्थविरै स्तदाह-

**[भा.११७२]** सरभेदवणभेयं अंतद्धाणं विरेयणं वावि ।
वरधनुमयवेस पुस्सभूती कुसलो सहुमेय झाणंमि ॥

**वृ-** गुटिकाप्रयोगतस्तस्य स्वरभेदं वर्णभेदं वा स्थविराः कुर्वन्ति । यथा सा तं न प्रत्यभिजानाति यदि वा ग्रामान्तरादि प्रेषणेन अन्तर्धानं व्यवधानं क्रियते, । अथवा तथा विधौषधप्रयोगतो विरेचनं कार्यते तेन स ग्लान इव लक्ष्यते, कृच्छ्रेणैष जीवतीति ज्ञात्वा सा तं मुञ्चति । अथवा शक्तौ सत्यां यथा

ब्रह्मदत्तहिण्ड्यां धनुःपुत्रेण वरधनुना मृतकवेषकः कृतस्तथा निश्चलो निरुच्छ्वासः सूक्ष्ममुच्छ्वसत् तिष्ठति येन मृत इति ज्ञात्वा तया विसृज्यते, यदि वा यथा पुष्पभूतिराचार्यः सूक्ष्मे ध्याने कुशलः सन् ध्यानवशात् निश्चलो निरुच्छ्वासोऽतिष्ठत्, तथा तेनापि सूक्ष्मध्यानकुशलेन तथा स्थातव्यं येन सा मृत इत्यवगम्य विमुञ्चति एषां प्रयोगाणामभावे–

[भा. ११७३] अनुसट्ठिं उग्गरती गमंति णं मित्तनायगादीहिं ।
एवंपि अट्ठायं ते कारेंति सुत्तं मि जं वृत्तं ।।

वृ- तस्या गणिकाया यानि मित्राणि ये च ज्ञातय आदिशब्दात्तदन्यस्तथाविधपरिग्रहः तैः स्थविरास्तां गमयन्ति बोधयन्ति । येनानुशिष्टिमुद्गिरतिमुत्कलनं करोतीति भावः एवमपि अतिष्ठन्त्यां तस्यां यदुक्तं सूत्रे तत्कुर्वन्ति । विमुक्तं भवतीति स मोक्तव्य इति सूत्रे मोचनस्याभिधानात् । तथा चोक्तं-ताहे सो मोक्खेयव्वो एवं सुत्ते भणियमिति गतं सेवकपुरुषद्वारमधुना अवमद्वारमाह–

[भा. ११७४] सकुटुंबो निक्खंतो अज्ज तं दारगं तु निक्खिविउं ।
मित्तस्स घरो सोऽवि य कालगतो तोवमं जायं ।

[भा. ११७५] तत्थ अनोदिज्जंतो ब्रस्स उपत्तेहिं सो ततो चेडो ।
धोलंतो आवणो दासत्तं तस्स आगमनं ।।

वृ- मथुरायां किल नगर्यां कोऽपि वणिक् अव्यक्तं बालं दारकं पुत्रं मित्रस्य गृहे निक्षिप्य सकुटुम्बो निष्क्रान्तः । सोऽपि च मित्रभूतः पुरुषः कालगतः, ततो तस्मात्तस्य कालगमनानन्तरमवमं दुर्भिक्षं तस्य मित्रस्य पुत्रैः स चेडो नाद्रियमाणोऽन्यत्रान्यत्र धोलति परिभ्रमति । स च तथा परिभ्रमन् कस्यापि गृहे दासत्वमापन्नस्तस्य च पितुर्यथा विहारक्रमं विहरतस्तस्यामेव मथुरायामागमनं जातम् । तेन च सर्वं तत् ज्ञातम् । सम्प्रति तन्मोचने विधिमभिधित्सुराह–

[भा. ११७६] अनुसासकहणठवियं भीसणववहारलिंग जं जत्थ ।
दूराभोगगवेसण पंथो जयणा जया जत्थ ।।

वृ- पूर्वमनुशासनं तस्य कर्तव्यं, ततो धर्मकथाप्रसङ्गेन कथनं स्थापत्या पुत्रादेः करणीयम् । एवमप्यतिष्ठति यन्निष्क्रामता स्थापितद्रव्यं तत् गृहीत्वा समर्पणीयं, तस्याभावे निजकानां तस्य वा भीषणमुत्पादनीयं यदि वा राजकुले गत्वा व्यवहारः कार्यः । एवमप्यतिष्ठति यत् यत्रलिङ्ग पूज्यं तत्तत्र परिगृह्य समोचनीयः । एतस्यापि प्रयोगस्याभावे दूरेणोच्छन्नस्वामिकतया दूरदेशे व्यवधानेन वा यन्निधानं तस्याभोगः कर्तव्यः । तदनन्तरं तस्य गवेषणा साक्षान्निरीक्षणं करणीयम् गवेषणया च गमने पथि मार्गे यतना यथौघनिर्युक्तावुक्ता तथा कर्तव्या । या च यत्र यतना सापि तत्र विधेया यथा सूत्रमिति द्वारगाथा संक्षेपार्थः । साम्प्रतमेनामेव विवरीषुः प्रथमतोऽनुशासनकथनद्वारमाह–

[भा. ११७७] निच्छिन्नो तुज्झ घरे रिसिपुत्तो मुंच होहिइ धम्मो ।
धम्मकह पसंगेणं कहणं थावच्च पुत्तस्स ।।

वृ- एष ऋषिपुत्रस्तव गृहेऽवमादिकं समस्तमपि निस्तीर्णोऽधुना व्रतग्रहणार्थमुद्यत इत्यमुं मुञ्च तव प्रभूतो धर्मो भविष्यति । एतावता गतमनुशासनं द्वारं । तदनन्तरं धर्मकथामारभते । धर्मकथाप्रसङ्गेन च कथनं स्थापत्या पुत्रस्य करणीयं यथा स स्थापत्या पुत्रो व्रतं जिघृक्षुर्वासुदेवेन महता निष्क्रामणमहिम्ना निष्काश्य पार्श्वस्थितेन व्रतग्रहणं कारित इति । एवं युष्माभिरपि कर्तव्यम् ।।

[भा.११७८] तहवि अठ्ठंते ठवियं विभीसणा ववहारनिक्खमं तेनं ।
तं घेत्तूणं निज्जइ तस्स सइए इमं कुज्जा ।।

वृ- तथापेच एवमपि वानुशासने कथने च कृते इत्यर्थः अतिष्ठति स्थापितं च देयं भीषणं वा करणीयं व्यवहारे वा समाकर्षणीयः । तत्र स्थापितं भावयति । तेन पित्रा निष्क्रामयता किमपि स्थापितं द्रव्यमस्ति तत् गृहीत्वा तस्मै दातव्यम् उपलक्षणमेतत्, तेनेदं द्रष्टव्यमभिनवः कोऽपि शैक्षक उपस्थितः । तस्य यत् किमप्यर्थजातं स्थापितमस्ति । यदि वा गच्छान्तरं यः कोऽपि शैक्षिक उपस्थितस्तस्य हस्ते यत् द्रव्यमवतिष्ठते तद्गृहीत्वा तस्मै दीयते । तस्य द्रव्यस्यासति अभावे इदं वक्ष्यमाणं कुर्यात् । तदेवाह--

[भा.११७९] नियल्लगाण तस्स व भीसणं राउले सयं वावि ।
अवरिक्किामो अम्हे कहं व लज्जा न तुज्झति ।।

[भा.११८०] ववहारेण अहयं भागं पिच्छामि बहुतरागं स ।
अच्चिय लिंगं व करे पन्नवणा दावणट्ठाए ।।

वृ- निजकानामात्मीयानां स्वजनानां भीषणं कर्तव्यं । यथा वयमविरिक्ता अविभक्तरिक्ता वर्तामहे । ततो मोचयत मदीयं पुत्रं, कथं वा कारणेन युष्माकं न लज्जा अभूत्ततो यदेवं मदीयपुत्रो दासत्वमापन्नोऽद्यापीह धृतो वर्तते, । अथैवमप्युक्ते ते द्रव्यं न प्रयच्छन्ति, । तत इदमपि वक्तव्यं राजकुलं गत्वा व्यवहारेणाप्यहं भागं बहुतरकं प्रभूततरकं ग्रहीष्यामि भवतां पार्श्वे तद्वरमिदानीं स्तोकं प्रयच्छथ, । एवं तेषां भीषणं कर्तव्यम् । यदि वा येन गृहितो वर्तते तस्य भीषणं विधेयं यदि मोचनीयं मर्हि मोचय । अन्यथा भवतस्तं शापं दास्यामि येन न त्वं नेदं वा तव कुटुम्बकमिति । एवं भीषणेऽपि कृते यदि न मुञ्चति यदि वा ते स्वजनाः किमपि न प्रयच्छन्ति तदा स्वयं राजकुले गत्वा निजकैः सह व्यवहारः करणीयः । व्यवहारं च कृत्वा भाग आत्मीयो गृहीत्वा तस्मै दातव्यः । यदि वा स एव राजकुले व्यवहारेणाकृष्यते तत्र च गत्वा वक्तव्यं यथाऽयमृषिपुत्रो व्रतं जिघृक्षुः । केनापि कपटेन धृतो वर्तते यूयं च धर्मव्यापारनिष्पन्नाः ततो यथायं धर्ममाचरति यथा चामीषामृषीणां समाधिरुपजायते तथा यतध्वमिति । अस्यापि प्रकारस्याभावे यत् यत्र लिङ्गमर्चितं तत्परिगृह्णाति । परिगृह्य दापनार्थं, विवक्षित बालक मोचनार्थमित्यर्थः । तल्लिङ्गधारिणां मध्ये ये महान्तस्तेषां प्रज्ञापना कर्तव्या । येन ते मोचयन्ति सम्प्रति दूराभोगेत्यादि व्याख्यानार्थमाह--

[भा.११८१] पुट्ठा वा अपुट्ठा वा चुयसामिनिहिं कहिंति तो दाही ।
घेत्तूण जाव दट्ठा पुनरवि सा रक्खणा जयणा ।।

वृ- यदि वा अवध्यादयो अवधिज्ञानेन आदिशब्दात् विशिष्ट श्रुत ज्ञानिपरिग्रहः पृष्टा वा अपृष्टा तथाविधं तस्य प्रयोजनं ज्ञात्वा च्युतस्वामिकं निधिमुत्स(च्छ)न्नस्वामिकं निधिं कथयन्ति । तदानीं यस्य तेषां तत्कथनकस्योपचितत्वात् ततो यावदर्थः यावता प्रयोजनं तद्गृहीत्वा पुनरपि तस्य निधेः संरक्षणं कर्तव्यं, प्रत्यागच्छता च यतना विधेया । सा चाग्रे स्वयमेव वक्ष्यते--

[भा.११८२] सोऊण अट्ठजायं अट्ठं पडिजग्गए आयरिओ ।
संघाडगं च देंति पडिजग्गइ णं गिलाणंपि ।।

वृ- निधिग्रहणाय मार्गे गच्छन्तमर्थजातं साधुं श्रुत्वा सांभोगिकोऽसांभोगिको वाचार्यो र्थं प्रतिजागर्ति उत्पादयति । यदि पुनस्तस्य द्वितीयः संघाटको न विद्यते ततः सङ्घाटकमपि ददाति । अथ कथमपि स

ग्लानो जायते ततो ग्लानमपि संतं प्रति जागर्ति न तूपेक्षते, जिनाज्ञाविराधनप्रसक्तेः, यदुक्तमनन्तरं यतना प्रत्यागच्छता कर्तव्या तामाह--

**[भा.११८३]** काउं निसीहियं अट्ठजाय भावेयणं गुरुहत्थे ।
दाउण पडिकमणं मापेहंता मिगा एस्थं ॥

**वृ-** यत्रान्यगणे स प्राघूर्णक आयाति, तत्रनैषेधिक कृत्वा नमः क्षमाश्रमणेभ्य इत्युदित्वा च मध्ये प्रविशति प्रविश्य च यदर्थजातं तद्गुरुभ्य आवेदयति कथयति । आवेद्य च तदर्थजातं गुरुहस्ते दत्वा प्रतिक्रामति कस्मात् गुरुहस्ते दत्वा प्रतिक्रामति । निरवपार्श्व एव स्थिते इति चेदूयत आह- माप्रेक्षमाणा मृगा इव मृगा अगीतार्था क्षुल्लकादयः पश्येयुर्गुरुहस्ते च स्थितं निरीक्षन्ते । अस्मद्गुरूणां समर्पितमिति विरूपसंकल्पेऽप्रवृत्तेः सम्प्रति जयणा य जाजत्थेति तद्व्याख्यानार्थमाह--

**[भा.११८४]** सन्नीवं सावको वा वारिए देज्ज अट्ठजातस्स ।
पच्चुप्पन्ननिहाणे कारणजाए गहणसोही ॥

**वृ-** यत्र संज्ञी सिद्धपुत्रः श्रावको वा वर्तते तत्रगत्वा तस्मै स्वरूपं निवेदनीयं प्रज्ञापना च कर्तव्या । ततो यत्तत्र तेन प्रत्युत्पन्नं नवं निधानं गृहीतं वर्तते । तस्यार्थजातस्य मध्यात्कतिपयान् भागान् दद्यात् स्वयं तदानीं प्रज्ञापितो वा गीतार्थ त्वात् अस्यप्रकारस्याभावे यन्निधानं दूरमवगाढं ततस्तेन उत्खन्य दीयमानमधिकृते कारणजाते गृह्णानोऽपि शुद्धः भगवदाज्ञया वर्तते, वर्तमानात् ।

गतमवमद्वारमिदानीमापन्नद्वारमाह--

**[भा.११८५]** थोवंपि धरेमाणो कत्थइ दासत्तमेअ दलंते ।
परदेसंमि वि लब्भति वाणियधम्मो ममेससि ॥

**वृ-** स्तोकमपि ऋणं शेषं धारयन् क्वचिद्देशे कोऽपि पुरुषस्ततः अदलंतेत्ति अददानः कालक्रमेण प्रवृद्ध्या दासत्वमेवं प्रतिपद्यते, तस्यैवं दासत्वमापन्नस्य स्वदेशे दीक्षा न दातव्या, । अथ कदाचित्परदेशे गतः सन्नविदितस्वरूपोऽशिवादिकारणतो वा दीक्षितो वा भवेत् । तत्र वणिजा परदेशे वाणिज्यार्थं गतेन दृष्टो भवेत् तत्रायं किल न्यायः परदेशमपि गता वणिज आत्मीयं लभन्ते । तत एव वणिग्धर्मे व्यवस्थिते स एवं ब्रूयात् मम एष दास इति न मुञ्चिष्ये (मुंचामि) अमुमिति तत्र आत्मीयं लभन्ते । तत एवं वणिग्धर्मे व्यवस्थिते स एवं ब्रूयात् मम एष दास इति न मुञ्चिष्ये (मुंचामि) अमुमिति तत्रयत्कर्तव्यं तत्प्रतिपादनार्थं द्वारगाथामाह--

**[भा.११८६]** नाहं विदेस आहरणमाइ विज्जायमंतजोगाय ।
नेमित्तरायधम्मो पासंडगणे धने चेव ॥

**वृ-** यस्तावद्दासत्वमापन्नो वर्तते, न सोऽहं किं त्वहमन्यस्मिन् विदेशे जातस्त्वं तु सादृश्यतया विप्रलब्धोऽसि । अथ स प्रभूतजनविदितो वर्तते तत एवं न वक्तव्यं किन्तु स्थापत्या पुत्राद्युदाहरणं कथनीयं । यद्यपि कदाचित्तत् श्रवणतः प्रतिबुद्धो मुत्कलयति. । आदिशब्दात् गुटिकाप्रयोगतः स्वरभेदादिकर्तव्यमिति परिग्रहः, । एतेषां प्रयोगणामभावे विद्यामन्त्रो योगा वा ते प्रयोक्तव्या यैः परिगृहीतः सन् मुत्कलयति, तेषामप्यभावे निमित्तेनातीतानागतविषयेण राजा उपलक्षणमेतदन्यो वा नगरप्रधान आवर्जनीयो येन तत्प्रभावत् स प्रेर्यते धर्मो वा कथनीयो राजादीनां येन ते आवृत्ताः सन्तस्यं

प्रेरयन्ति । एतस्यापि प्रयोगस्याभावे पाषाण्डान् सहायान् कुर्याद्यद्वा यो गण सारस्वतादिको बलीयान् तं सहायं कुर्यात् । तदभावे दूराभोगादिना प्रकारेण धनमुत्पाद्य तेन मोचयेत् । एष द्वारगाथासंक्षेपार्थः ।

साम्प्रतमेनामेव गाथां विवरीषुराह--

[भा.११८७] सारक्खएण जंपसि जातो अन्नत्थ ते वि आमंति ।
बहुजनविण्णायंमि उ थावच्चसुयादि आहरणं ।।

वृ- यदि प्रभूत जन विदितो न भवति यथायं तद्देशजात इति ततः एवं ब्रूयात् । अहमन्यत्र विदेशे जातस्त्वं तु साहक्ष्येण विप्रलब्ध एवमसमञ्जसं जल्पसि, । एवमुक्ते तेऽपि तत्रत्या आममेवमेतत् । यथायंवदतीति साक्षिणो जायन्ते, । अथ तद्देशजाततया प्रभूतजनविदितो वर्तते । ततस्तस्मिन् बहुजनविज्ञाते पूर्वोक्तं न वक्तव्यं किन्तु प्रबोधनाय स्थापत्यापुत्राद्याहरणं कथनीयम् ।

[भा.११८८] विज्जामंता जोगा अंतद्धाणं विरेयणं वावि ।
वरधनु य पुस्सभूती मुलिया सुहुमे य ज्झाणंमि ।।

वृ- विद्यादयो विद्यामन्त्रयोगाः प्रयोक्तव्या येन तैरभियोजितः सन् मुत्कलयति आहरणमादीत्यत्रादि शब्दव्याख्यानार्थमाह-गुटिकाप्रयोगतः स्वरभेदेन- उपलक्षणमेतत् । वर्णभेदं वा कारयेद्यदि वा अन्तर्धानं ग्रामान्तरप्रेषणेन व्यावधानं, विरेचनं वा ग्लानतोपदर्शनाय कारयितव्यो येन कृच्छ्रेणेष जीवतीति ज्ञात्वा । विसृज्यति यदि वा वरधनुरिव गुटिकाप्रयोगतः, पुष्पभूतिराचार्य इव सूक्ष्मध्यानवशतो निश्चलो निरुच्छ्वासस्तथा स्यात् येन मृत इति ज्ञात्वा परित्यज्यते ।

[भा.११८९] असतीए विनवेंती रायाणं सोव होज्ज अहाभिन्नो ।
तो से कहिज्जइ धम्मो अनिच्छमाणे इमं कुज्जा ।।

वृ- एतेषां प्रयोगाणाम सति-अभावे राजानं विज्ञापयन्ति यथा तपस्विनमिह परलोकनिस्पृहमेनं व्रताद्य च्यावयतीति । अथ सोऽपि राजा तेन भिन्नो व्युद्ग्राहितो वर्तते ततः से तस्य राज्ञः प्रतिबोधनाय धर्मः कथ्यते । अथ सधर्मं नेच्छति ततस्तस्मिन् धर्ममनिच्छति उपलक्षणमेतत् । निमित्तेन वातीतानागतरूपेण अनावार्य(द्रिय)माणे इदं वक्ष्यमाणं कुर्यात्तदेवाह—

[भा.११९०] पासंडे व सहाए गेण्हइ तुज्झंपि एरिसं होज्जा ।
होहामोहसहाया तुब्भवि जो वा गणो बलिओ ।।

वृ- पाषण्डान्वासहायान् गृह्णाति अथ ते सहाया न भवन्ति तत इदं तान् प्रतिवक्तव्यम् । युष्माकमपीदृशं प्रयोजनं भवेत् भविष्यति तदायुष्माकमपि वयं सहाया भविष्यामः, एवं तान् सहायान् कृत्वा तद्बलतः स प्रेरणीयो यदि वा यो गणो बलीयान् तं सहायं परिगृह्णीयात् ।।

[भा.११९१] एएसिं असतीए संतावि जया न होंति उ सहाया ।
ठवणा दूराभोगन लिंगेनवएसि उं देंति ।।

वृ- एतेषां पाषण्डानां गणानां वा असति अभावे ये सन्तः शिष्टास्ते सहायाः कर्तव्याः । यदा तु सन्तो वा सहाया न भवन्ति, तदा ठवणत्ति निष्क्रामता या द्रव्यस्य स्थापना कृता तद्दानतः स मोचयितव्यो यदि वा दूराभोगणेन प्रागुक्तप्रकारेणाथवा यद्यत्र लिङ्गमचिरतं तेन धनमेषित्वा उत्पाद्य ददति । तस्मै दरवृषभागतमापन्नद्वारमिदानीमृणार्त्त (अनार्त) द्वारमाह—

[भा.११९२] एमेव अनंतस्स वि तवतुलणा नवरि एत्थ नाणत्तं ।

जं जस्स होइ भंडं सो देति ममंतिगो धम्मो ॥

वृ- एवमेव अनेनैव दासत्वापन्नगतेन द्वारेण प्रकारेण ऋणार्त्तस्यापि प्रागुक्त शब्दार्थस्यामोक्षणे यतना द्रष्टव्या । नवरमत्र धनदानचिन्तायां नानात्वं किं तदित्याह-तपस्तुलना कर्तव्या सा चैवं । स भण्यते साधवस्तपोधना अहिरण्य सुवर्णालोकेऽपि यद्यस्य भाण्डं भवति स तत्तस्मै उत्तमर्णाय ददाति, । अस्माकं च पार्श्वे धर्मस्तस्मात्त्वमपि धर्मं गृहाण एवमुक्ते स प्राह—

[भा. ११९३] जोऽणेणकतो धम्मो तं देउ न एत्तियसमं तुलति ।
हानी जावेतहिं तावइयं विजथं भणइ ॥

वृ- योऽनेन कृतो धर्मः सर्वं मह्यं ददातु । एवमुक्ते साधुभिर्वक्तव्यं नैतावत् दद्मो यतो नैतावत्समं-तुलति स प्राह, एकेनसंवत्सरेण हीनं प्रयच्छत, तदपिप्रतिषेधनीयंद्वाभ्यां संवत्सराभ्यां दत्त इति एवतावत् वैभाषा कर्तव्या । यावदेकेन दिवसेन कृतो योऽनेन धर्मस्तं प्रयच्छत ततो वक्तव्यं नाभ्यधिकं दत्तः दद्मः । किन्तु यावत्तद्गृहीतं मुहूर्तादि कृतेन धर्मेण तोल्यमानं समं तुलति तावत्प्रयच्छामः । एवमुक्ते यदि तोलनाय ढोकते तदा विद्यादिभिस्तुला स्तंभनीया येन क्षणमात्रकृतेनापि धर्मेण सह न समं तोलयतीति धर्मतोलनं च धर्माधिकरणिकनीतिशास्त्रप्रसिद्धिमिति ततोऽवसातव्यम् ।

[भा. ११९४] जइ पुन निच्छेज्ज तवं वाणियधम्मेण ताहे सुद्धोउ ।
को पुन वाणियधम्मो सामुद्दे संभमे समे ॥

[भा. ११९५] वत्थाणाभरणाणि य सव्वं छड्डित्तु एगविंदणं ।
पोयंमि विवण्णंमि वाणियधम्मे हवेइ सुद्धो ॥

[भा. ११९६] एवं इमो वि साहू तुज्जं नियगं च सारमोत्तूणं ।
निक्खंतो तुज्झ घरे । करेउ इण्हं तु वाणिज्जं ॥

वृ- यदि पुनरुक्तप्रकारेण क्षणमात्रकृतस्यापि धर्मस्यालाभेन नेच्छे त्तपो गृहीतुं ततो वक्तव्यमेव वाणिग्धर्मेण वणिग् न्यायेन शुद्धः स प्राह-कः पुनर्वणिग् धर्मो येनैष शुद्धः क्रियते । साधवो वदन्ति-समुद्रे संभ्रमे गमनेऽयं वक्ष्यमाणः । तमेवाह -वत्थाणाभरणेत्यादि । यथा वणिक् ऋणं कृत्वा प्रवहणेन समुद्रसमागाढस्तत्रपोते प्रवहणे विपन्ने आत्मीयानि परकीयानि च प्रभूतानि वस्त्रान्याभरणानि च शब्दाच्छेषमपि च नानाविधं क्रियाणकं सर्वं छर्दयित्वा परित्यज्य एकवृन्देन भावप्रधानं एकशब्दः एकत्वं वृन्दं तेन एकाकी उत्तीर्णो वणिग् धर्मे वणिग्न्याये शुद्धो भवति । न ऋणं दाप्यते । एवमयमपि साधुस्तव सक्तमात्मीयं च सारं सर्वं तव गृहे मुक्त्वा निष्क्रान्तः संसारसमुद्रादुत्तीर्ण इति शुद्धो न धनिका ऋणमात्मीयं याचितुं लभन्ते, । तस्मात्र किञ्चिदत्रतवाभाव्यमस्तीति करोत्विदानीमेष स्वेच्छया पोतवाणिज्यं पोतवणिगिव निर्ऋणो वाणिज्यमिति गतमनाप्तद्वारम् । अधुना बोधिकस्तेन द्वारप्रतिपादनार्थमाह--

[भा. ११९७] बोहिय तेनेहिं हि एवि न मग्गणा साहुणो नियमसो य ।
अनुसासनमादीतो एसेव कमो निरवसेसो ॥

वृ- बोधिकाः स्तेनाश्च प्रागुक्त स्वरूपास्तैर्हृते साधौ नियमशो नियमेन साधोर्विमार्गणं कर्तव्यम् । तस्मिंश्च विमार्गणे कर्तव्ये अनुशासनादिको अनुशिष्टिप्रदानादिको धनप्रदानपर्यन्त एष एवानन्तरोदितक्रमो निरवशेषो वेदितव्यः । सम्प्रत्युपसंहार व्याजेन शिक्षामपवादं चाह—

[भा. ११९८] तम्हा अपारपत्ते दिक्खउज्जाणारिए य वज्जेज्जा ।

अद्धाण अनाभोगा विदेस असिवादितुं दोवि ।।

वृ- यस्मात्परायत्तदीक्षणे अनार्यदिशगमे चैते दोषा तस्मादपरायत्तान् दीक्षयेत् । अनार्यांश्च देशान् वर्जयेत् । अत्रैवापवादमाह- अद्धाणेति अध्वानं प्रतिपन्नस्य ममोपग्रहमेते करिष्यन्तीति हेतोः परायत्तानपि दीक्षयेत् । यदि वानाभोगतः प्रव्राजयेत् विदेशस्था वा स्वरूपमजानाना दीक्षयेयुरशिवादिषु पुनः कारणेषु दोवितित्ति द्वे अपि परायत्तदीक्षणानार्यदेशगमने अपि कुर्यात् । किमुक्तं भवति । अशिवादिषु कारणेषु समुपस्थितेषु परायत्तानपि गच्छोपग्रहनिमित्तं दीक्षयेत् अनार्यानपि देशान विहरेदिति ।

मू. (५३) *अणवट्ठप्पं भिक्खुं अगिहिभूयं नो कप्पइ तस्स गणावच्छेयस्स उवट्ठावेत्तए ।*

मू. (५४) *अणवट्ठप्पं भिक्खूं गिहिभूयं तस्स गणावच्छेदियस्स उवट्ठावित्तए इति ।*

वृ- अथास्य सूत्रस्य कः सम्बन्ध उच्यते—

[भा.११९९] अट्ठस्स कारणेणं साहम्मियतेणमादिज्जइ कुज्जा ।
इइ अणवट्ठे जोगो । नियमातोयावि दसमस्सा ।।

वृ- साधर्मिकः कारणेन प्रागुक्तेनोत्पादितो योऽर्थस्तस्य स्तैन्यमादिशब्दादन्यधार्मिकस्तैन्यादि परिग्रहः यदि कुर्यात्ततः सोऽनवस्थाप्यो भवति । तदर्थख्यापनार्थमर्थजातसूत्रानन्तरमनवस्थाप्यसूत्रं । इति एषोऽनवस्थाप्यसूत्रस्य योगसम्बन्ध : । पाराञ्चितसूत्रस्यापि सम्बन्धमाह- नवमात्प्रायश्चित्ता-दनवस्थाप्यादनन्तरं किल दशमं पाराञ्चितनामकं प्रायश्चित्तं भवति । ततो नवमान्नवम प्रायश्चित्त-सूत्रस्यारंभः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-अनवस्थाप्यं भिक्षुमगृहीभूतमगृहस्थीकृतं नो कल्पते यस्य समीपेऽवतिष्ठते तस्य गणावच्छेदिनो गणस्वामिन उपस्थापयितुं । तथाऽनवस्थाप्यं भिक्षुंगृहीभूतं कल्पते तस्यगणावच्छेदिन उपस्थापयितुं, सम्प्रति पाराञ्चितसूत्रमाह—

मू. (५५) *पारांचियंपि भिक्खुं अगिहिभूयं नो कप्पते तस्स गणावच्छेदियस्स उवट्ठावेत्तए ।*

मू. (५६) *पारांचियं भिक्खुं गिहिभूयं कप्पइ । तस्स गणावच्छेदियस्स उवट्ठावित्तए ।।*

वृ- अस्य सूत्र द्वयस्याक्षरगमनिका प्राग्वत् । सम्प्रति भाष्यविस्तर—

[भा.१२००] अनवट्ठो पारंचिय पुव्वं भणिया इमं तु नाणत्तं ।
गिहिभूयस्स य करणं, अकरणे गुरुगा य आणादी ।

वृ- अनवस्थाप्यः पाराञ्चित एतौ द्वावपि पूर्वं भणितौ । इदं त्वत्र नानात्वं गृहिभूतस्य गृहस्थरूपसदृशस्य करणं यदि पुनर्गृहिभूतम कृत्वा तमुपस्थापयति । तदा गृहिभूतस्याकरणे प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासाः । तथा आज्ञादय आज्ञानवस्था मिथ्यात्वविराधनादोषाः । अन्यच्च प्रमत्तं सन्तं देवताच्छलयेत् गृहिभूतस्य तु छलना न भवति । यस्माद्गृहीभूतं कृत्वा तमुपस्थापयेत् । गृहस्थरूपताकरणमेव भावयति--

[भा.१२०१] वसेवत्थं एगे ण्हाणादि विवज्जमवरे जुगलमेत्तं ।
परिसामज्झे धम्मं, सुणेज्जतो कहणादिक्खा ।।

वृ- एके आचार्या एवं ब्रुवते—स्नानविवर्जं वरं नेपथ्यं तस्य क्रियते, । अपरे दाक्षिणात्याः पुनरेवमाहुर्वस्त्रयुगलमात्रं परिधाप्यते, । तत्पर्षन्मध्ये आचार्यसमीपमुपगम्य ब्रुवते । भगवन् धर्मं श्रोतुमिच्छामि । ततः कहणत्ति आचार्यः धर्मं कथयति कथिते च सति सकलजनसमक्षं ब्रूते श्रद्दधामि सम्यग् धर्ममेनमिति मां प्रव्राजयत । एवमुक्ते तस्य दीक्षालिङ्ग समर्पणानन्तरं च तत्क्षणमेवोपस्थाप्यते

अत्र शिष्यः प्राह-कस्मादेष गृहस्थावस्थां प्राप्यते । सूरिराह—

[भा.१२०२] उड्डायितो न कुव्वइ पुणो वि सो तारिसं अतीचारं ।
होइ भयं सेसाणं गिहित्ते धम्मिया चेव ।

[भा.१२०३] किं वा तस्स न दिज्जति गिहिलिंग जेन भावतो लिंगं ।
अजढे वि दव्वलिंगे सलिंगपडिसेवणावि जढं ।

वृ- अपभ्राजितो म्लानिमापादितः सन् पुनरपि स ताद्दशमतीचारं न करोति । शेषाणामपि च साधूनां भयमुत्पादितं भवति येन तेऽप्येवं न कुर्वते तस्माद्गृहिरूपे गृहस्थतारूपस्य धर्मताधर्मादनपेता त्याज्या तस्यापाद्यमाना गृहस्थरूपतेति भावः । किंचेत्यादि किं वा केन वा केन वा कारणेन तस्य न दीयते गृहिलिङ्गं दातव्यमेव तस्य गृहिलिङ्गमित्यर्थः । येन कारणेनापरित्यक्तेऽपि द्रव्यलिङ्गे स्वलिङ्गे प्रतिसेवनात् । भावतो लिङ्ग विजढं परित्यक्तमिति सम्प्रति सूत्रकृदेवापवादमाह—

मू. (५७) *अणवट्ठप्पं भिक्खुं अगिहिभूयं वा गिहिभूयं वा कप्पइ तस्स गणावच्छेदितस्स उवट्ठावेत्तए जह । तस्स गणस्स पतियंसिया ।*

मू. (५८) *(एवं) पारंचिय भिक्खू अगिहिभूयं वा जाव पतियंसिया ।*

वृ- अनवस्थाप्यं भिक्षुं पारांचितं वा भिक्षुं गृहीभूतमगृहीभूतं वा कल्पते तस्स गणावच्छेदिन उपस्थापयितुं कथमित्याह- यथा तस्य गणस्य प्रीतीकं प्रीतिकरमुपस्थापनं स्यात् । तथा कल्पतेनान्यथा, इह यो गृहस्थीभूतः सन् । तावदुपस्थाप्यते । एवम स्यापवादविषयता यस्त्वगृहीभूतः सोऽपवादविषयस्तस्योत्सर्गतः प्रतिषिद्धत्वात् । तत्र यैः कारणैरगृहीभूतोऽप्युपस्थाप्यते तान्यभिधित्सुराह—

[भा.१२०४] अग्गिहिभूते कारइ रायनुवत्तिए पदुट्ठसमणो वा ।
पर मोयावण इच्छा दोण्ह गणाणं विवादो वा ।।

वृ- अगृहीभूतोऽगृहस्थीभूतः सन् उपस्थाप्यः क्रियते राजानुवृत्या यदि वा प्रदिष्टः स्वगणोऽथवा परैर्बलात्कारेण मोचापनं परमोचापने यद्वा इच्छा पूर्वलिङ्गयोर्गणयोर्विवाद एतैः कारणैरगृहीभूतोऽप्युपस्थाप्यते तत्र यथाराजानुवृत्त्या सोऽगृहस्थीभूतोऽप्युपस्थाप्यो भवति । तथा भाव्यते-इहानवस्थाप्यं पाराञ्चितं वा कोऽपि प्रतिपन्नस्तस्य चायं कल्पो यावदनवस्थाप्यं पाराञ्चितं वा वहति तावद्बहिः क्षेत्रादवतिष्ठते । स च बहिर्यावत्तिष्ठति तावन्नगृहस्थः क्रियते किं त्वागतः करिष्यति । बहिश्चावतिष्ठमानः स जिनकल्पिक इव भिक्षाचर्यामलेपकृद्भक्तादिग्रहणात्मिकां करोति । तस्य च तथा वहिस्तिष्ठतो यदाचार्यः करोति तथा प्रतिपादयति—

[भा.१२०५] उल्लोयणं गवेसण आयरिओ कुणति सव्वकालंपि ।
उप्पन्ने कारणंमि सव्वपयत्तेण कायव्वं ।।

वृ- यस्याचार्यस्य समीपेऽनवस्थाप्यं पाराञ्चितं वा प्रतिपन्नः स आचार्यः सर्वकालमपि यावन्तं कालं तत्प्रायश्चित्तं वहति तावन्तं सकलमपि कालं यावत्प्रतिदिवसमवलोकनं करोति । तत्समीपं गत्वा तद्दर्शनं करोतीत्यर्थः तदनन्तरं गवेषणं गतोऽल्पक्लाम(क्लान्त) तया तव दिवसो रात्रि र्वेति पृच्छां करोति उत्पन्ने पुनः कारणे ग्लानत्वलक्षणो सर्वप्रयत्नेन स्वयमाचार्येण कर्तव्यं भक्तपानाहरणादि ।

[भा.१२०६] जो उ उवेहं कुज्जा, आयरिओ केणई पमाएण ।

आरोवणाउ तस्स कायव्वा पुव्व निद्दिट्ठा ।।

वृ- यः पुनराचार्यः केनापि प्रमादेन जनव्याक्षेपादिना उपेक्षां कुरुते न तत्समीपंगत्वा तच्छरीरस्योदन्तं वहति । तस्य आरोपणा प्रायश्चित्तप्रदानं पूर्वनिर्दिष्टा कर्तव्या । चत्वारो गुरुकास्तस्य प्रायश्चित्तमारोपयितव्यमिति भावः । यदुक्तमुत्पन्ने कारणे सर्वप्रयत्नेन कर्तव्यं तद्भावयति–

[भा.१२०७] आहरति भत्तपानं उव्वत्तणमादियंति से कुणति ।
सयमेव गणाहिवती अगिलाणो सयं कुणति ।।

वृ- अथ सोऽनवस्थाप्यः पाराञ्चितो वा ग्लानोऽभवत् ततस्तस्य गणाधिपतिराचार्यः स्वयमेव भक्तं पानं वा हरति आनयति उद्वर्तनादिकमप्यादिशब्दात् परावर्तनोद्धरणोपदेशनादिपरिग्रहः स तस्य करोति । अथ जातो ग्लानो नीरोगस्ततः स आचार्य न किमपि कारयति किंतु सर्वं स्वयमेव कुरुते ।

अधुनी यदुक्तमुलोयणं गवेसणत्ति तद्व्याख्यानार्थमाह-

[भा.१२०८] उभयंपि दाऊण स पडिपुच्छं वोढुं सरीरस्स य वट्टमाणिं ।
आसासइत्ताण तवो किलंतं तमेव खेत्तं समुवेंति थेरा ।

वृ- स्थविराः आचार्याः शिष्याणां प्रतीच्छकानांच उभयमपि सूत्रमर्थं चेत्यर्थः । किंविशिष्टमित्याह-सप्रतिपृच्छं पृच्छा प्रश्नः तस्याः प्रतिवचनं प्रतिपृच्छा प्रत्युत्तरं प्रतिशब्दः सह प्रतिपृच्छा यस्य तत् सप्रतिपृच्छं सूत्रविपर्येवा यद्येन पृष्टं तत्र प्रतिवचनं चेत्यर्थः दत्वा तत्सकाशमुपगम्य तस्य शरीरस्य वर्तमानमुदन्तं वहति । अल्पक्लामतां पृच्छतीति भावः । सोऽपि चाचार्यं समागतं मस्तकेन वन्दे इति फेटावन्दनकेन वन्दते । शरीरस्य चोदन्त मूर्द्धा (ध्ध्वं) यदि तपसा क्लाम्यति तत आश्वासयति । आश्वास्य च तदेव क्षेत्रंयत्र गच्छोऽवतिष्ठते तत्रसमुपगच्छन्ति कदाचिन्नगच्छेयुरपितत्रेमानि कारणानि ।

[भा.१२०९] गेलन्ने वि पुट्ठो अभिनव मुक्को ततो वरोगातो ।
कालम्मि दुब्बले वा कप्पे अने व वाघातो ।।

वृ- इहैकस्यापि कदाचिदेकवचनं सर्वस्यापि वस्तुन एकानेकरूपताख्यापनार्थमित्यदुष्टं आचार्यो ग्लान्येन वा स्पृष्टः स्यात् ग्लानो भवेदिति भावः । अथवा तस्मात् रोगात् अभिनवमुक्तस्तत्कालमुक्तः स्यात् ततो न गच्छेत् यदि वा काले दुर्बले न विद्यते बलं गमनाय यस्मिन् गाढातपः संभवादिना दुर्बलो ज्येष्ठाषाडादिको दुरुशब्दोऽभाववाची तस्मिन् न गच्छेत् शरीर क्लेशसंभवात् । कज्जेअणे व वाघातो इति अत्र सप्तमी तृतीयार्थे प्राकृतत्वात्ततोऽयमर्थः । अन्येन वा कार्येण राज्ञा प्रद्वेषतो निर्विषयत्वाज्ञापनादिना व्याघातो भवेत् । ततो न गच्छेदिति अगमने चोपाध्यायः प्रेषणीयोऽन्योवा तथा चाह–

[भा.१२१०] पेसेइ उवज्झायं अन्नं गीयं च जो तहिं जोग्गो ।
पुट्ठो व अपुट्ठो वा तहाविदीवेति तं कज्जं ।।

वृ- पूर्वोक्तकारणवशतः स्वयमाचार्यस्स गमनाभावे उपाध्यायं तदभावेऽन्यो वा गीतार्थस्तत्रयोग्यस्तं प्रेषयति । स च तत्र गतः सन् तेन पाराञ्चितेन किमिति अद्य क्षमाश्रमणो नायात इति पृष्टो वा अथवा न पृष्टस्तथापि तत्कारणं कार्यं कारणं दीपयेत् तथा अमुकेन कारणेन नायात इति ।।

[भा.१२११] जाणंतामाहप्पं सयमेव भणंति एत्थ तं जोग्गो ।
अत्थि मम एव विसयो अजाणते सोव ते बेंति ।।

वृ- इह यदि ग्लानीभवनादिना कारणेन क्षमाश्रमणानाभनागमनं पृष्टेनापृष्टेन वा दीपितं तदा न

किमप्यन्यत्तेन वा पाराञ्चितादिना वक्तव्यम् । किं तु गुर्वादेश एवोभाभ्यां यथोदितः सम्पादनीयः । अथ राज्ञा प्रद्वेषतो निर्विषयत्वाज्ञापनादिना व्याघातो दीपितस्तत्र यदि ते उपाध्याया अन्ये वा गीतार्थास्तस्य शक्तिं स्वयमेवबुध्यन्ते । ततो जानन्तः स्वमेव तस्य माहात्म्यं तं ब्रुवते, यथा अस्मिन् प्रयोजने त्वं योग्य इति क्रियतामुद्यमः । अथ न जानते तस्य शक्तिं ततः स एव तान् अजानान् ब्रूते यथा अस्ति ममात्र विषय इति एतच्च स्वयमुपाध्यायादिभिर्वा भणितो वक्ति–

**[भा.१२१२]** अत्थ उ महानुभागो जहा सुहं गुणसयागरो संधो ।
गुरुगं पि इमं कज्जं मं पप्प भविस्सए लहुयं ।।

**वृ-** तिष्ठतु यथासुखं महान् अनुभागोऽधिकृतप्रयोजनानुकूला अचिन्त्या शक्तिर्यस्य स तथा गुणशतानामनेकेषां गुणानामाकरो निधानं गुणशताकरः सङ्घः यत इदं गुरुकमपि कार्यं मां प्राप्य लघुकं भविष्यति, समर्थोऽहमस्य प्रयोजनस्य लीलयापि साधने इति भावः । एवमुक्ते (क्तः) सोऽनुज्ञातः सन् यत्करोति तदेवाह-

**[भा.१२१३]** अभिहानहेतुकुसलो बहूसु नीराजितो विउसभासु ।
गंतूण रायभवणं भणति तं राय दारट्ठं ।।

**वृ-** अभिधानहेतुकुशल इति अभिधानेषु शब्देषु हेतुषु साध्यगमकेषु कुशलो दक्षोऽभिधान-हेतुकुशलः शब्दमार्गे तर्कमार्गे चातीव क्षुन्न इत्यर्थः अत एव बहुषु विद्वत्सभासु नीराजितो निर्वर्टितः इत्थं भूतः सन् राजभवनं गत्वा तं राजद्वारस्थं प्रतीहारं भणति किं भणतीत्यत आह-

**[भा.१२१४]** पडिहाररूवी भण रायरूविं, तमिच्छए संजयरुविदट्ठुं ।
निवेदयित्ता य स पत्थिवस्स, जहिं निवो तस्स तयं पवेसे ।।

**वृ-** हे प्रतीहार रुपिन् मध्ये गत्वा राजरूपिणं राजानुकारिणं भण ब्रूहि, यथा त्वां संयतरुपी द्रष्टुमिच्छति एवमुक्तः सन् प्रतीहारस्तथैवास्य निवेदयति । निवेद्य च राजानुमत्या यत्र नृपोऽवतिष्ठते तत्र तं साधुं प्रवेशयति-

**[भा.१२१५]** तं पूयइत्ताण सुहासणत्थं, पुच्छिंसु रायागयकोउहल्लो ।
पण्हे उरालं असुए कयाई, सव्वावि आइक्ख पत्थिवस्स ।।

**वृ-** तं साधु प्रविष्टं सन्तं राजा पूजयित्वा शुभासनस्थं शुभे आसने निषण्णमागतकुतूहलः समुत्पन्नकुतूहलोऽप्राक्षीत् । कानित्याह-प्रश्नान् उदारान् गंभीरार्थान् कदाचिदप्यश्रुतान् प्रतिहाररुपिन् इत्येवमादिकान् सचापिसाधुरेवंपृष्टः पार्थिवस्याचष्टे, किमाचष्टे इत्याह-

**[भा.१२१६]** जारिसया व आरक्खा सक्कादीणां न तारिसा,
तह रायदारपालो तं पि चक्कीणपडिरुवी ।।

**वृ-** याद्दशकाःखलु शक्रादीनामादिशब्दाच्च सुरादि परिग्रहः आत्मरक्षा न ताद्दशः एष तव राजन् । द्वारपालस्तत उक्तं हे प्रतिहाररुपिन् तथा त्वमपि याद्दशश्चक्री चक्रवर्त्तिः ताद्दशो न भवसि रत्नाद्यम-भावादन्तरे चक्रवर्तिसमृद्धिराख्यातव्या । किन्तु प्रतापशौर्यन्यायानुपालनादिना तत् प्रतिरुपोऽसि तत उक्तं राजरुपिणं ब्रूहिचक्रवर्तिप्रतिरुपमित्यर्थः । एवमुक्ते राजा प्राह-त्वं कथं श्रमणानां प्रतिरुपी तत आह–

**[भा.१२१७]** समणाणं पडिरुवी जं पुच्छसि राय तं कहमहंति ।

निरतिचारा य समणा न तदाहं तेन नाडहत्वं ।।

**वृ-** यत्त्वं राजन् पृच्छसि अथ कथं त्वं श्रमणानां प्रतिरूपी तदहं कथयामि । यथा श्रमणा भगवन्तो निरतिचारा न तथाहं ते श्रमणानां प्रतिरूपी न तु साक्षात् श्रमण इति प्रतिरूपित्वमेव भावयति ।।

**[भा.१२१८]** निव्वूढोमि नरेसर खेत्तेविजईण अत्थिउं न लभे ।
अतियारस्स विसोही पकरेमि पमायमूलस्स ।।

**वृ-** हे नरेश्वर पृथिवीपते! प्रमादमूलस्यातिचारस्य सम्प्रति विशोधिं करोमि, तां च कुर्वन् निर्यूढोऽस्मि निष्कासितोऽस्मि । सत आस्तामन्यत् क्षेत्रेऽपि यतीनामहं स्थातुं न लभे, ततः श्रमण प्रतिरूप्यमिति राजाप्राह-कस्त्वया कृतोतीचारः का वा तस्य विशोधिरेवं पृष्टे यत्कर्तव्यं तदाह-

**[भा.१२१९]** कहणा उट्टणा आगमन पुच्छणं दीवणाय कज्जस्स ।
वीसज्जियंति य मया हासुस्सितो भणति राया ।।

**वृ-** कथनं राज्ञा पृष्टस्य सर्वस्याप्यर्थस्य प्रसङ्गतोऽन्यस्यापि यथा प्रवचनप्रभावना भवति । तत आवर्तनमाकम्पनं राज्ञो भक्ती भवनमिति भावः । तदनन्तरमागमनप्रच्छन्नमागमनकारणस्य प्रश्नः । केन प्रयोजनेन यूयमत्रागताःस्थ, अत्रान्तरे येन कार्येण समागतस्तस्य दीपना प्रकाशना, ततो राजा हासोस्सितो त्ति हासेन उत्सृता हृष्टोद्भासो स्मितो हसितमुखप्रहृष्टश्च सन्नित्यर्थः । भणति यथा मया विसर्जितं मुत्कलितमिति । अथ किं तत्कार्यं यस्य राज्ञो मुत्कलनं कृमित्यत आह-

**[भा.१२२०]** वायपरायणकुवितो चेइयतद्दव्वसंजत्ती गहणो ।
पुव्वत्ताण चउण्हण्हवि कज्जाण हविज्ज अन्नयरं ।।

**वृ-** वादे पराजयेन कुपितः स्यात् अथवा चैत्यं जिनायतनं किमपि तेनावष्टब्धं स्यात् ततस्तन्मोचा कुन्द्राभवेत्, । यदि वा ततद्रव्यस्य ग्रहणेऽथवा संयत्याग्रहणे ततः पूर्वोक्तानां कल्पाध्ययनोक्तानां चतुर्णा निर्विषयित्वा ज्ञापनादीनां कार्याणामन्यतरत् कार्यं भवेत् ।।

**[भा.१२२१]** संघो न लहति कज्जं लद्धं कज्जं महानुभागेनं ।
तुज्झं तु विसज्जमी, सोविय संघोत्ति पूएइ ।।

**वृ-** निर्विपयित्वाऽज्ञापनमुत्कलनादिलक्षणंकार्यं सङ्घो न लभते । किन्तुतेनानवस्थाप्येन पाराञ्चितेन वा महानुभागेन लब्धं, न च स एवं कार्यलाभेऽपि गर्वमुद्वहति यत आह-तुज्झं तु इत्यादि राजा प्राह-युष्माकं तु निश्चितं प्रभावेनाहं पूर्वग्राहं विसृजामि नान्यथा सोऽपि ब्रूते-राजन् कोऽहं कियान्मात्रो वा गरीयान् सङ्घो भट्टारकस्तत्प्रभावादहं किञ्चिदज्ञ स्तस्मात्सङ्घमाहूय क्षमयित्वा च यूयमेवं ब्रूथ-मुत्कलितं मया युष्माकमिति सङ्घं पूजयति । ततः किमित्याह-

**[भा.१२२२]** अब्भत्थितो व रण्णा, सयं व संघो विसज्जयति तुट्ठो ।
आदिमज्झवसाने सव्वाविदोसो धुओ होति ।।

**वृ-** अभ्यर्थितो वा राज्ञा सङ्घो यदि वा स्वयमपि सन्तुष्टः सङ्घो विसर्जयति किमुक्तं भवति । यद्वपूढं शेषं सर्वं प्रसादेन मुक्त्वा सोऽगृहस्थीभूत एवोपस्थाप्यते इति एतदेवाह-सव्वापि दोषो धुतः प्रकम्पितः प्रसादेन स्फटित इत्यर्थः । आदौ मध्ये अवसाने वा भवति राजानुवृत्तिद्वारं गतम् ।

इदानीं प्रद्विष्ट स्वगणद्वारमाह-

**[भा.१२२३]** स गणो य पदुट्ठो से आवणो तं च कारणं नत्थि ।

एएहिं कारणेहिं य गिहिब्भूते उवट्ठवणा ।।

वृ- स तस्याचार्यस्य स्वगणः प्रसिद्धः सन् ब्रूते । यथा मुकेन कारणेनैष पाराञ्चितप्रतिपत्त्या गृहिभूतत्वमापन्न इति तच्च कारणं तस्याचार्यस्य नास्ति । एताभ्यां कारणाभ्यां स्वगणप्रद्वेष कारणाभाव-लक्षणाभ्यामगृहीभूते अगृहस्तीभूतस्य उपस्थापना क्रियते । एष गाथाक्षरार्थमाह । भावार्थस्त्वयम्-एगा तरुणी बहुसयणं घेतुं पव्वइया, अन्नया ताए संजतीए आयरितो उभासिओ आयरिएण नेच्छिया, ताहे सा पदोसमावन्ना आयरियस्स तेसिं सयणाणं पव्वइयाणं कहेइ मं एस आयरितो उवसग्गेइ, ताहे ते संजतीए नियल्लग पव्वइया आयरियस्स पउट्ठा भणंति एस आयरितो पारंचिए गिहिभूतो आ भवति, ततो आयरितो अन्नं गणं गंतुं सव्वं जहट्ठियं परिकहेइ, सोय जंगणं गतो, ते तं कज्जं परमत्थं जाणे त्ता तेसिं गमनं रोहेहिति, खेत्तस्सबाहिं काऊण तेवि खेत्तस्स बहि ट्ठिया, मा तेसिं अब्भक्खाणइ, त्तान मिच्छारुपा इच्छा सफला होइत्ति, अगिहिभूयं केयवेण उवट्ठावेंति, तदेवाह—

[भा.१२२४] उब्भा सणं पडिसिद्धा बहु सयणा देञ्ज त्थी भगवत्तिनी ।
तं चावणमन्नत्थ कुणह गिहियंति तेबेंति ।।

[भा.१२२५] ते नाऊण पउट्ठे माहोहिति तं मिगस्स तरउत्ति ।
मिच्छिच्छा मासफला होहित्ति, तोसितो अगिहिभूतो ।।

वृ- काचिद्व्रतिनी बहुस्वजना उवभासते यावते, प्रतिसिद्धा सतीच्छोभगमिति अभ्याख्यानं दद्यात् । कालत्रयेऽपि ससमीति दत्तवती तथाभ्याख्यानसम्पादितं प्रायश्चित्तमन्यत्र गणे स आचार्यो वहति, तेच संयती स्वजनाः प्रद्विष्टा ब्रुवते कुरुतैनमाचार्य गृहिकं गृहस्थीभूतमिति, । ते च गणान्तरस्थविरास्तान् प्रद्विष्टान् ज्ञात्वा मा तेषां गम्यतरः पश्चादभूदिति तेऽपि कैतवेन क्षेत्राद्बहिस्तत्समीपेस्थिताः तथा मा तेषां मिथ्या रुपा इच्छा सफला भवदिति । सोऽगृहीभूत एवोपस्थाप्यते, ।।

गतं स्वगणप्रद्विष्टद्वारमधुना परमोचापन द्वारमाह-

[भा.१२२६] सोउं गिहिलिंगकरणं अनुरागेणं भणंति गीयत्था ।
मागीयं कुणह गुरुं अह कुणह इमं निसामेह ।।

[भा.१२२७] विद्धंसामो अम्हे एवं ओहावणे जइ गुरुणं ।
एएहिं कारणेहिं अगिहिभूतेउवट्ठवणा ।।

वृ- एगो बहुसिस्सो आयरितो पडिसेवणाए गिहिभुतत्तमावण्णो सो अन्नं गणं गंतु अलोएइ । तेहिं गिहिभूतो कहिमाढत्तो ततो तस्स सीस्सा भणंति-मा अम्हं गुरुंगिहिभूयं कुणइ, जइ पुन अम्हं गुरुणमेवं उहावणा कीरइति तो अम्हे सव्वे उ निक्खमिस्सामो । ततो तेसिं अपत्तियं माहोहित्ति अगिहिभूतो चेव सोउवट्ठाविज्जत्ति ।। अक्षरगमनिका- आचार्यस्य गृहलिङ्ग करणं श्रुत्वा तस्य शिष्या अगीतार्था अनुरागेण भणन्ति । मा गृहिकमस्मदीयं गुरुं कुरुत, अथ करिष्यथ तत इदं निशमयत आकर्णयत । एवमपभ्राजना यदि गुरुणां ततो वयं विध्वंसामोति उन्निष्क्रमिष्यामः । एतेन खल्वनन्तरोदितेन कारणेन अगृहीभूतस्य तस्योपस्थापना गतं परमोचापनद्वारमिदानीमिच्छागणद्वयविवादे इति द्वारमाह—

[भा.१२२८] अन्नोन्नेसु गणेसुं वहंति तेसिं गुरवो अगीयाणं ।
ते बिंति अनमनं किह काहिह अम्ह थेरत्ति ।।

वृ- द्वौ गणौ तयोश्च द्वयोरपि गणयोः साधवोऽगीतार्थास्तेषां चतुरुपस्थापनार्हं प्रायश्चित्तस्थानमापन्नौ

नवरमेकोऽगृहिभूतोपस्थापनार्हमपरोगृही भूतोपस्थापनार्हतौ च परस्परं गणयोः प्रतिपद्येते तद्यथा-एकोऽपरस्मिन् गणे अपरोपि तस्मिन् एवमन्योन्यस्य गणयोस्तेषामगीतार्थानां गुरु प्रायश्चितं वहतस्ते गणाः परस्परं ब्रुवते-कथमस्माकं स्थविरान् करिष्यथ । किं-गृहीभूतान् अगृहीभूतान्वातत्र यो गृहिभूतो-पस्थापनार्हं प्राप्त स्तद्गुणं प्रत्यारे ब्रुवते गृहीभूतं करिष्यामः ।

**[भा.१२२९]** गिहिभूतेत्तिय उत्ते अम्हेवि करेमो तुज्झगिहीभूतं ।
अगिहिं दोन्निवि मए भणंति थेरा इमं दोवि ॥

**[भा.१२३०]** नविसुज्झेमो अम्हे अगिहिभूया तहाविनिच्छेसु ।
इच्छा संपूरिज्जइ गणपीतिकारोहिं तु ॥

**वृ-** गृहीभूतं करिष्याम इत्युक्ते इतरे वदन्ति वयमए तवाचार्यं गृहिभूतं करिष्यामः । तत्रैवं परस्परं विवादे तान् द्वयानपि मृगान् अगीतार्थान् भणन्ति । द्वावप्यगृहिभूतौ वयमुपस्थापयिष्यामः, । इतरौ च द्वावप्याचार्याविदं ब्रूतः न वयमगृहिभूताः शुद्ध्यामः तस्माद्गृहीभूता क्रियामहे इति । एवं यद्यप्य गृहीभूतोपस्थापनं तेनेच्छन्ति तथापि तेषु तथा अनिच्छत्स्वपि गणप्रीतिकारकैर्महद्भिः स्थविरैः सं ति तेषां द्वयानामपि गणसाधूनामिच्छा पूर्यते द्वावप्यप्रीति परिहारार्थमगृहस्थीभूतावुपस्थाप्यते इत्यर्थः ॥

**मू. (५१)** *दोसाहम्मिया एगतो विहरंति, तेहिं एगे तत्थ अन्नयरं अकिच्चट्ठाणं पडिसेवित्ता आलोइज्जा अहणं भंते ! अमुएणं साहुणा सद्धिं इमियम्मिकारणम्मि मेहुण पडिसेवी, पच्चयहेउं च सयं पडिसेविय भणति, तत्थपुच्छियव्वे किं पडिसेवी ? अपडिसेवी ? सेय वएज्जा पडिसेवी परिहारपत्ते; सेय वएज्जाणो पडिसेवी नो परिहारपत्ते जंसेपमाणं वदति सेय पमाणा उ घेतव्वे, सिया से किमाहु भंते ! सच्चपइणा ववहारा ।*

**वृ-** अथास्य सूत्रस्य पूर्वं सूत्रेण सहकः सम्बन्ध स्तत आह—

**[भा.१२३१]** पुव्वं वतेसु ठविए रायनियत्तं अविसहं कोइ ।
उभो भविस्सत्ति इमो उ च्छोभग सुत्तसंबंधो ॥

**वृ-** अनन्तरं अनवस्थाप्यसूत्रे द्वयोर्मध्ये कोऽपि पूर्वव्रते, स्थापितः स्यात् उपस्थापितः स्यात् इत्यर्थः । अपरंपश्चात् तत्र योऽसौ पूर्वमुपस्थापितः पश्चादुपस्थापितस्य रत्नाधिको भवति; स च पश्चादुपस्थापितः कोऽपि पूर्वं व्रतेषु स्थापितस्य रत्नाधिकत्वमविषहमानश्छिद्राणि प्रेक्षते, प्रेक्षमाणश्च कदाचिच्छिद्र-मुपलभ्यायमवमो लघुर्मम भविष्यतीति बुद्ध्या च्छोभकमयाख्यानं ददाति, तत एतदर्थप्रतिपादनार्थ-मवस्थाप्यपाराञ्चितसूत्रानन्तरमधिकृतमभ्याख्यानसूत्रं प्रवृत्तमित्येष स्थोभकः सूत्रसम्बन्धः, अथवान्यसंबंधः ।

**[भा.१२३२]** पीतिय पडिवक्खो वा अचियत्तणेण च्छोभगं देज्जा ।
पच्चयहेउं च परे सयं च पडिसेवियं भणइ ॥

**वृ-** अधस्तनानन्तर सूत्रेऽभिहितमिदं यथा तस्य गणस्य प्रीतिकं भवति, । तथोपस्थापनीयःतस्य च प्रीतिकस्य प्रतिपक्षो वा शब्दः सम्बन्धस्य प्रकारान्तरोपदर्शने अचियत्तमप्रीतिकमचियत्तंति वा अपियत्तन्ति वा एगट्ठमिति वचनात् । तेन प्रीतिकेन च्छोभकमभ्याख्यानं दद्यादिति पूर्व सूत्रानन्तर-मस्याभ्याख्यानसूत्रस्योपनिपातः । अनेन सम्बन्धेनायातस्यास्य व्याख्या द्वौ साधर्मिकौ सांभोगिका-वेकत एकेन संघाटकेन विहरतः । तत्र तयोर्द्वयोर्मध्ये एक इतरस्याभ्याख्यानप्रदाननिमित्तमन्य-

तदकृत्यस्थानं मैथुनादिकं प्रतिसेव्य प्रतिसेवितमभ्युपगतस्य गुरुणामन्तिके आलोचयेत् आलोचनाप्रकारमाह-अहणमिति वाक्यालङ्कारे भदन्त! अमुकेन साधुना सार्धमस्मिन् कारणे मैथुनादिके प्रतिसेवी । किमुक्तं भवति । तेनानेन मैथुनादिना कारणेन चारित्रप्रतिकूलक्रियासेवनाभाग् जात इति । अथ स कस्मादात्मानं प्रति सेवितवंतमभ्युपगच्छति न परस्यैव केवलस्याभ्याख्यानं ददाति तत आह-पच्चवहेउं चेत्यादि । परेषामाचार्याणामन्येषां च साधूनामेष सत्यं वदत्यन्यथा कथं आत्मानं प्रतिसेवितमभिमन्यत इति प्रत्ययो विश्वासः स्यादिति हेतोः स्वयमपि च प्रतिसेवितमिति भणति, । एव मुक्तेयस्याभ्याख्यानमदायि स प्रष्टव्यः । किं भवान् प्रतिसेवी न वा, तत्र यदि स वदेत् प्रतिसेवी ततः स परिहारप्राप्तः स्यात् परिहारतपोभाक् क्रियते, । उपलक्षणमेतत् च्छेदादिप्रायश्चित्तभागपि क्रियते इति द्रष्टव्यः । अथ स वदेत् नाहं प्रतिसेवी तर्हि न परिहारप्राप्तः स्यात्, न परिहारतपः प्रभृति प्रायश्चित्तभाक् क्रियते इति भावः । स च प्रतिसेवी वा यदभ्याख्यानदाता से तस्य प्रतिसेवनाया प्रमाणं चरिकादि वक्ति, । तस्मात्प्रमाणात् गृहीतव्यो निश्चेतव्यः स अथ किं कस्मात्कारणादेवमाहुर्भवन्तो हे भदन्त सूरिराह-सत्यप्रतिज्ञाव्यवहारास्तीर्थकरैः दर्शिताः । ततो यथा कथंचित्प्रतिसेवी अप्रतिसेवी वा क्रियते । एष सूत्राक्षरार्थः । अधुना निर्युक्ति भाष्यविस्तरः । तत्र भिक्षाचर्या विचारभूमिगमनविहारादिषु यो रत्नाधिकतरः कुतश्चिद्दोषादवमो जातः स तमवरमरत्नाधिकं यैः कैरभ्याख्यानेन दूषयति ।

तानि प्रतिपादयिषुराह-

[भा.१२३३] रायनियवायएणं खलियमिलितपेल्लणाए उदएणं ।
देउलमेहुणंमि य अब्भक्खाणं कुडंगंमि ।।

वृ- रत्नाधिकवातेन रत्नाधिकोऽहमिति गर्वेण अवमरत्नाधिकं दशविधचक्रवालसामाचार्यामस्खलितमपि कषायोदयेन तर्जयति । यथा हे दुष्ट शैक्षक! स्खलितोऽसीति तथा एर्यापथिकीं प्रतिक्रम्य प्रथममेव परावर्तयन्तं-यदि वा अग्रिमतपदं पदेन विच्छिन्नं सूत्रं उच्चारयंतं हा दुष्ट शैक्षकमिलितमुच्चारयसीति । तथा पेल्लणत्ति अन्यैः साधुभिर्वार्यमाणोऽपि कषायोदयतस्तं हस्तेन प्रेरयति तर्जयति । ततः सोवमरत्नाधिकः कषायितः सन् चिन्तयति एष रत्नाधिक वातेनेत्थं बहुजनसमक्षं तर्जयति । अथ चैषा सामाचारी रत्नाधिकस्य सर्वं क्षंतव्यमिति ततस्तथा करोमि । यथैष ममलघुको भवति । एवं चिन्तयित्वा तौ द्वावपि भिक्षाचर्यायै गतौ च तृषितौ बुभुक्षितौ चेत्येवं चिन्तयन्तौ चिन्तितवन्तौ अस्मिन्नायदेवकुले वृक्षविषमे वा प्रथमालिकां कृत्वा पानीयं पास्याम इति । एवं चिन्तयित्वा तौ तदभिमुखं प्रस्थितौ । अत्रान्तरे अवमरत्नाधिकः परिव्राजिकामेकां तदभिमुखं गच्छन्तीं दृष्ट्वा स्थितोपलब्ध एष इदानीमिति चिन्तयित्वा रत्नाधिकं वदति- अहो अज्ञ ज्येष्ठार्य कुरु त्वं प्रथमालिकां पानीयं वा पिब, अहं पुनः संज्ञां व्युत्सृक्ष्यामि । एवमुक्त्वा त्वरितं वसतावागत्य मैथुने अभ्याख्यानं ददत् आलोचयति तथा चाह-देउले इत्यादि देवकुले आयदेवगृहादौ कुडङ्गे वा वृक्षविषमे प्रदेशे मैथुने अभ्याख्यानं दातुं वसतावागत्य आलोचयति, यथा आलोचयति, तथा दर्शयति-

[भा.१२३४] जेट्ठज्जेण अकज्जं सज्जं अज्जा घरे कयं अज्जं ।
उवजीवितोत्थ भंते मए वि संसट्ठकप्पो य ।।

वृ- ज्येष्ठार्येणाद्य सद्य इदानीमार्यागृहे कृतमकार्यं मैथुनासेवालक्षणं ततो भदन्त तत्संसर्गतो मयापि संसृष्टकल्पो मैथुनप्रतिसेवा अत्रास्मिन् प्रस्तावे उपजीवितः-

[भा.१२३५] अहवा उच्चारगतो कुडंगमादी कडिल्लदेसम्मि ।
वेत्ती कयं अकज्जं जेट्ठज्जेणं सह मएवि ।।

वृ- अथवेत्यभ्याख्यानस्य प्रकारान्तरप्रदर्शने कुडङ्गादौ कडिल्लदेशे गहन प्रदेशे उच्चाराय गतस्तत्र ज्येष्ठार्येण सह मयापि कृतमकार्यमिति । तस्माद्व्रतानि मम साम्प्रतमारोपयत । एवमुक्ते सूरिभिः स एवं वक्तव्यः ।

[भा.१२३६] तम्मागतं वयाइं दाहामो दोंत वा तुरंतस्स ।
भूयत्थे पुन नाए अलियनिमित्तं न मूलं तु ।।

वृ- योऽसौ त्वया अभ्याख्यातः स यदा आगतो भविष्यति तदा तस्मिन्नागते व्रतानि ते दास्यामः । अथ स त्वरमाणो ब्रूते । भगवन् कुशाग्रस्थितवाताहतजलबिन्दुरिवातिव चलं जीवितमिति न शक्यते । क्षणमाणमप्यव्रतेन स्थातु मित्यधुनैव मह्यं दीयतां व्रतादीनीति तस्यैव त्वरमाणस्य ददति व्रतानि वा शब्दो विकल्पार्थः । अत्र पुनर्भूतार्थो गवेषणीयः किमयं सत्यं ब्रूते उतालिकं तत्र यथा भूतार्थो गवेषणीयस्तथानन्तरमेव वक्ष्यते । भूतार्थे च गते ज्ञाते यदि सत्यं सदा द्वयोरपि मूलं दीयते, । अथालीकं ततो योऽभ्याख्यातः स शद्धः इतरस्य त्वभ्याख्यातुर्मूलं न दीयते किन्त्वलीकनिमित्तं मृषावादप्रत्ययं चतुर्गुरुकं प्रायश्चित्तमिति सम्प्रति यथा भूतार्थो ज्ञायते तथा प्रतिपिपादयिषु द्वारगाथामाह-

[भा.१२३७] चरियपुच्छणपेसण कावालियतवो संघो जं भणंति ।
चउभंगो हि निरिक्खी देवयाव तहियं विही एसो ।।

वृ- तत्र भूतार्थे ज्ञातव्ये एष विधिश्चरिका परिव्राजिका तस्याः प्रच्छनाय वृषभाणां प्रेषणं साचेत् सत्यवादिनी न मन्यते । ततस्तौ द्वावपि पृथगुपाश्रये प्रेष्य तत्र वृषभास्तत्स्वपगवेषणाय कापालिकरूपेण प्रेष्यन्ते । कापालिकग्रहणमुपलक्षणं तेन स रजस्कादिरूपेणापीत्यपि द्रष्यव्यम् । एवमपि भूतार्थानिर्णये तवोत्ति तपस्वी कायोत्सर्गेण देवतामाकम्प्य पृच्छति । एतस्यापि प्रकारस्याभावे संघो मेलयित्वा प्रच्छनीयस्तेन च निरीक्षणो निरीक्षकानधिकृत्य चतुर्भङ्गी कश्चित् तथाभूतं तथाभावेन पश्यन्तीत्यादिरूपा वक्ष्यमाणा प्ररूप्यते । गाथानां पुंस्त्वं प्राकृतत्वात् । सा च चतुर्भङ्गी भद्रप्रान्तदेवता आश्रित्य संभवति । एष द्वारगाथासंक्षेपार्थः साम्प्रपमेनामेव गाथां विवरीषुराह—

[भा.१२३८] आलोइयंमि निउणे कज्जं स सीसए तयं तव्वं ।
पडिसिद्धिंमि य इयरो भणति बियं पिते नत्थि ।।

वृ- अभ्याख्यातः साधुरागतः सन् आलोचयति प्रथमालिकां यावन्न जानामि द्वितीयः सङ्घाटक क्वापि गत इति । केवलोऽहमागतोऽस्मि तत् आचार्या ब्रुवते । सम्यगालोचय ततः स स्मृत्वा आलोचयति यावत्तस्मिन्नपि तृतीये वारे तदालोचितं ततस्त्रिगुणे त्रिःकृत्वा आलोचिते यदि न प्रतिसेवितमित्यालोचयति । ततो येन कारणेन त्रीन् वारानालोचापितस्तत्कार्यं करणं सर्वं से तस्य कथ्यते, । शिष्यते यथा स एष तव सङ्घाटकस्त्वया सह किञ्चिन्मात्रं हिण्डित्वा समागतो ब्रूते-ज्येष्ठार्येण आर्यागृहे वृक्षविषमे वा क्वचित्प्रदेशे कृतमकार्यं तत्संसर्गतो मयापि संसृष्टकल्प उपजीवित इति ततोऽभ्याख्यातः साधुर्वदति न मया प्रतिसेवितमेवं तेन प्रतिषिद्धे प्रतिसेविते इतरोऽभ्याख्यानप्रदाता भणति- अहो ज्येष्ठार्य तव द्वितीयमपि व्रतं नास्ति । आस्तां चतुर्थमित्यपि शब्दार्थः ।।

[भा.१२३९] दोण्हंपि अनुमएणं चरियावसहे पुच्छियपमाणं ।

अन्नत्थवसहतुम्भे जा कुणिमो देव उस्सगं ।।

वृ- एवं तयोर्द्वयोरपि विदतोरेवमुच्यते- चरिका पृच्छ्यतां यत्सा वक्ष्यति तत्प्रमाणमिष्यते । एवमुक्ते यदि तौ द्वावप्यनुमन्येते- ततो द्वयोरनुमतेन सम्मत्या इत्यर्थः । वृषभाश्चरिकां प्रष्टुं प्रेक्षन्ते ते च तत्र गताः प्रथमतश्चरिकां प्रज्ञापयन्ति । प्रज्ञाप्य पृच्छन्ति । किमत्र सत्यमलीकं वा एवं वृषभैश्चरिका पृष्टा सती यत् ब्रूते तत्प्रमाणं कर्तव्यम् । तत्र चरिकयोक्तं भगवन् अभ्याख्यानं तेन द्वितीयेन तस्मै दत्तमिति । एतद्गीक्तं वृषभा वसतावागत्य गुरवे निवेदयन्ति । तैर्यथावस्थिते निवेदिते यद्यन्यतरो वदति गृह्णाति चरिका न सम्यक्कथयति । तदा गुरवो द्वावपि ब्रूते यूयमन्यत्र वसतिं याचयि(चि)त्वा तत्र वसथ यावदद्य रात्रौ देवताराधनार्थं कायोत्सर्गं कुर्मः ! किमुक्तं भवति कायोत्सर्गेण देवतामाकम्प्य पृच्छामः कोऽत्र सत्यवादी को वालीकवादी इति एवमुक्ते द्वावपि वसत्यन्तरे गतौ अत्रान्तरे कापालिकद्वारोपनिपात इति तदभिधित्सुराह-

[भा.१२४०] अट्ठिगमादी वसभा पुव्विं पच्छाव जंति निसिसुणणा ।
आवस्सग आउट्टण सब्भावे वा असब्भावे ।।

वृ- अस्थिकाः कापालिकाः आदिशब्दात् सरजस्कादि परिग्रहस्तद्र पाः सन्तः किमुक्तं भवति । कापालिकवेषं वा सरजस्कवेषं वा यदि वा मायास्तनवीयं वेषं कृत्वा यस्यां वसतौ द्वावपि जनौ तिष्ठतस्तत्र पूर्वं वृषभा गच्छन्ति यदि वा तयोर्गतयोः पश्चात्तत्र गत्वा रात्रौ मातृकस्थानेन सुप्ता इव तिष्ठन्तो द्वयोरपितयोः परस्परमुल्लापं शृण्वन्ति । तयोश्चावश्यकं कर्तुकामयोर्योऽसाववमरत्नाधिको-ऽभ्याख्यानदाता स इतरं प्रति मिथ्यादुष्कृतेनोपस्थितः एतद्वदति त्वं मया असत्याभ्याख्याने नाभ्याख्यातो मिथ्यादुष्कृतमिति ततो रत्नाधिको ब्रूते । किं नाम तवापकृतं मया येनासदाभ्याख्यानं मे दत्तमिति अवमरत्नाधिको भाषते त्वं नित्यमेव यत्र तत्र वा कार्ये सम्यक् प्रवर्त्तमानमपि हे दुष्ट शैक्षक ! इति तर्जयसि तेन मया त्वमसदभ्याख्यानेनाभ्याख्यात एवमावश्यके आवश्यकवेलायामावर्त्तने भावप्रत्यावर्त्तने अलीकाभ्याख्याने सद्भावो ज्ञायते । अथ न परस्परसंभाषणतः सद्भावो ज्ञायते, तदासद्भावपरिज्ञानाभावे तपस्वी प्रष्टव्य इति शेषः । तथा चाह-

[भा.१२४१] सेहोसि मं भाससि निच्चमेव बहूणमज्झत्तं किं कहेमि ।
अभासमाणाण परोप्परं वा दिव्वाणमुस्सग्गतवस्सी कुज्जा ।।

वृ- नित्यमेव सर्वकालमेव पदे पदे हा दुष्टशैक्षक इति मां भाषते तेनत्वमसताभ्याख्यानेनाभ्याख्यातः । अथ स रत्नाधिकस्तमवमरत्नाधिकं ब्रूयात् । यदि मया कयापि युवत्या सह कृतमकार्यं ततः किं त्वया बहूनां मध्ये अहमेवमाख्यातोऽनेन कृता प्रतिसेवनेति । किन्त्वहमेवैकान्ते वक्तव्यो भवामि यथा दुष्कृतमालोचय गुरुणामन्तिके इति मम रोषेण त्वयात्मीयमपि विगोपितम् । एवं सद्भावो ज्ञायते । एतावता आवस्सग आउट्टणसब्भावे वा इति व्याख्यातमिदानीमसद्भावे इति व्याख्यानयति । अभासमाणाण परोप्परं वा इति । अथ कदाचित्तौ रोषतः परस्परं न संलपतः तदा तयोः परस्परमभाषमाणयोर्भूतार्थ-परिज्ञानाभावे तपस्वी क्षपको देवताराधनार्थं कायोत्सर्गं कुर्यात् । कायोत्सर्गेण च देवतामाकम्प्य पृच्छति को तयोर्द्वयोर्मध्ये सम्यग्वादी को वा मिथ्यावादीति तत्र यद्देवता ब्रूते तत्प्रमाणमेतेन तप इति द्वारं व्याख्यातम् । अधुना सह्यद्वारं व्याचिख्यासुरिदमाह-

[भा.१२४२] किंचि तहा तह दीसइ चउभंगे पंतदेवया भद्दा ।

अन्नीकाइ मूलं इयरे सच्च प्पतिणाउ ।।

**वृ-** सर्वप्रकारेणा ज्ञायमाने भूतार्थे सङ्घसमवायं कृत्वा तस्मै आवेद्यते । रत्नाधिको वदति नाहं कृतवान् प्रतिसेवनामितरो ब्रूते द्वावपि प्रतिसेवितमपराधिनि, तत्र किं कर्तव्यमेति एवमावेदने कृते ये सङ्घमध्ये गीतार्थास्ते वदन्ति किञ्चित्तथाभावं तथा भावेनदृश्यते । किञ्चित्तथाभावमन्यथाभावेन दृश्यते, किंचिदन्यथाभावं तथा भावेन, किञ्चिदन्यथा भावमन्यथा भावेन एषा चतुर्भङ्गी । अस्यां चतुर्भङ्ग्यां प्रथमो भङ्गः प्रतीतः । द्वितीयभङ्गभावना त्वेवम्-कोऽपि क्वापि वनप्रदेशे परिक्रियासहवर्त्तते, तस्मिंश्चप्रदेशे केचिदारक्षका अपन्यायादक्षमा असि व्यग्रहस्ता वल्गन्ति । ततः काचिद्देवताभद्रिका मा विनश्यत्वेष पुरुष इति तौ दृष्टान्तरितौ दर्शयति । तृतीयभङ्गे भगवतो वर्द्धमानस्वामिनः सागारिकमकषायितं सङ्गमकः कषायितं दर्शयति । चतुर्भङ्गः कस्यांचिद्विपदिदासं राज्ञा कारितराजनेपथ्यं विनश्यंतं दृष्ट्वा काचिद्भद्रदेवता तदनुकम्पयास्त्रियं दर्शयति, । एवं प्रान्ता च भद्रा देवता अन्यथाभूतं सद्वस्तु अन्यथाकरोति । अन्यथाभूतं दर्शयति । ततो दृष्टमपि यावदप्रमाणमत्र न ज्ञायते किमपि दृष्टमवमरत्नाधिकेन । अथ च सत्यप्रतिज्ञा व्यवहारास्तीर्थकृद्भिरुपदिष्टास्तस्मात् यत् रत्नाधिको ब्रूते-न मया प्रतिसेवितमिति तत्प्रमाणतः शुद्धः एष न प्रायश्चित्त भागिति, यदिपचावमरत्नाधिको वक्तिमयाप्रतिसेवितमिति-तदपिप्रमाणमतस्तस्य मूलं प्रायश्चित्तमिति ।

**मू. (६०)** *भिक्खूय गणाओवक्कम्म ओहाणु पेहीवज्जेज्जा-से अहच्च अनोहाइत्तो सेय इच्छेज्जा दोच्चंपित्तमेवगणं उवसंपज्जित्ताणं विहरित्तए तत्थणं थेराणं इमेयारुवे विवाए समुपज्जित्ताइमं अज्जो जाणह किं पडिसेवी अपडिसेवी सेयपुच्छियव्वे किंपडिसेवी अपडिसेवि सेयवएज्जा पडिसेवी परिहार पत्ते सेयवएज्जा नोपडिसेवी नोपडिहारपत्ते जं से पमाणं ववति से पमाणे घेतव्य से किं एव माहु भंते । सच्च पइण्णाववहारा ।।*

**वृ-** अथास्य सूत्रस्य कः सम्बन्धस्तत आह-

[भा.१२४३] च्छोभगदिनो दाउं, व च्छोभगसेवियं च तदकिच्चं ।
सच्चाओव असच्चं ओहावणसुत्तसंबंधो ।।

**वृ-** च्छोभकमभ्याख्यानं दत्तं यस्मिन् स च्छोभकदत्तः क्तान्तस्य परनिपातः प्राकृतत्त्वात् सुखादिदर्शनाद्वासोवधावनप्रेक्षीभवेत् । इयमत्र भावना-यस्याभ्याख्यानमदायि स कथमहमेव-मसताभ्याख्यानेनाभ्याख्यातः कथं वा साम्प्रतमेवमलीककलंकाङ्कितो जनानां पुरत एवमात्मानं दर्शयामीत्यवधावनप्रेक्षी गच्छेत् । अथवा येनाभ्याख्यानं दत्तं स चिन्तयति । यथा असदभ्याख्यान-मेतस्मै दत्तमेवतच्च बहुभिर्जनैर्ज्ञातं यथानेनासदभ्याख्यानमस्मै दत्तमिति । ततः कथमहं तेषां पुरतः तिष्ठामीत्येवं च्छोभकमभ्याख्यानं दत्वा लज्जया अवधावनप्रेक्षी गच्छेत् । यदि वा तदकृत्यं मैथुनरूपं मोहोदयेन सेवित्वा ज्ञातोऽहं सर्वजनैरपीति लज्जया कोऽप्यवधावनप्रेक्षी यायात् । एतदर्थप्रतिपादनार्थं च्छोभकं सूत्रानन्तरमस्य सूत्रस्योपन्यासः । अथवा यं सम्बन्धः सच्चाओवअसच्चमिति सत्यसंयमः स पूर्वसूत्रेष्वभिहितः । सत्याद्यान्यदसत्यमसंयमोऽवधावमप्रेक्षी वाऽसंयमं याति । ततोऽसंयम-प्रतिपादनार्थमवधावनप्रेक्षी सूत्रमनेन सम्बन्धेनायातस्यास्य व्याख्या भिक्षुश्च गणात् गच्छादपक्रम्य अवधावनमसंयमगमनंतदनुप्रेक्षी व्रजेत । स चान्वधावित एव असंयममगत एव सन् इच्छेत् द्वितीयमपि वारं तमेव गणमुपसम्पद्य विहर्तुं तत्र स्थविराणामयं वक्ष्यमाण एतद्दुपानन्तरमेवोच्यमानस्वरूपो विवादः

समुत्पद्येत, इदं भो आर्या जानीत । किमयं प्रतिसेवी किं वा नेति तत्र स प्रष्टव्यः । किं प्रतिसेवी अप्रतिसेवी वा ? कृतप्रतिसेवनाकः तत्र यदि स वदेत् प्रतिसेवी ततः परिहारप्राप्तः प्रायश्चित्तप्राप्तः स्यादथ वदेत् न प्रतिसेवी तर्हि नो परिहारप्राप्तो भवति, । यत् स प्रमाणं वदति तस्मात् प्रमाणात् गृहीतव्यमिति सत्योऽसत्यो वा, अथ कस्मादेवमाहुः भदन्त ! सूरिराह-सत्यप्रतिज्ञाव्यवहारास्तीर्थकृद्भिर्देशिता इति कृत्वा एषा सूत्राक्षरगमनिका । सम्प्रति निर्युक्ति भाष्यविस्तरः—

[भा. १२४४] सो पुन लिंगेण समं ओहावेमो तु लिंगमहवावि ।
किं पुन लिंगेन समं, ओहावइ इमेहिं कज्जेहिं ।।

वृ- स पुनरवधावनानुप्रेक्षी कोऽपि लिङ्गेन सममवधावेत् । अथवा कोऽपि मुक्त्वा लिङ्गं तत्र शिष्यः प्राह-किं केन कारणेन पुनर्लिङ्गेन सममवधावति । सूरिराह-एतैर्वक्ष्यमाणैः कार्यैः कारणैः कज्जंति वा कारणंति वा एगट्ठमिति वचनात्तान्येव कारणान्यभिधित्सुराह—

[भा. १२४५] जति जीवेहिंति भज्जाइ जइवाविधणं धरइ जइ वोच्छंति ।
लिंगं मोच्छं संका पविठे तत्थेव उवहम्मे ।।

वृ- यदि भार्यादयो मे जीविष्यन्ति जीवतो द्रक्ष्यामीति भावः । यदि वा तन्मे पितृपितामहोपार्जितं स्वभुजोपार्जितं वा धनं धरति विद्यमानमवतिष्ठति, यदि वा वक्ष्यन्ति मुञ्च व्रतं भुङ्क्ष्व विपुलान् भोगानिति । तदा लिङ्गं मोक्ष्यामि नान्यथा, एव मा शङ्कया व्रजतस्तस्य सङ्घाटको दातव्यः । किं कारणमिति चेदुच्यते कदाचित्तेन संघाटकेनान्येन चानुशिष्यमाणः प्रतिनिवर्तेतापीति हेतोः तथा संघाटके प्रतिनिवृत्ते सति किमुत् प्रव्रजामि । किं वा नेति शङ्का प्रविष्टो रात्रौ व्युषितो यदि भवेत् तदेव कारणमभिधित्सुराह—

[भा. १२४६] गच्छंमि केइ पुरिसा, सीयंते विसयमोहियमईया ।
ओहावंताण गणा चउव्विहा तेसिमा सोही ।।

वृ- गच्छे केचित्पुरुषा विषयमोहितमतिका रूपादिकविषयविपर्यासितमतयो गणात् गच्छादवधावन्ति । तेषां तथा गणादवधावतां केनापि समनुशिष्टानामथवा न सुन्दरं वयं कुर्म इति स्वयमेव परिभाव्य विनिवृत्तानामियं वक्ष्यमाण चतुर्विधा चतुः प्रकारा शोधिः प्रायश्चित्तं भवति तामेवाह—

[भा. १२४७] दव्वे खेत्ते काले भावे सोही उ तत्थिमा दव्वे ।
रायाजुवेयमच्चे पुरोहियकुमार कुलपुत्ते ।।

वृ- द्रव्ये द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्र तासु चतसृषु शोधिषु मध्ये द्रव्ये द्रव्यविषया इयं वक्ष्यमाणा अन्ये पुनरिदं वदन्ति-द्विविधाः द्रव्यतः शोधिः सचित्तविषया अचित्तविषया च । तत्र सचित्तविषया छक्कायचउसुलहुगा इत्यादिका पूर्ववर्णिता, अचित्तविषया उद्गमोत्पादनादि दोषनिष्पन्ना यद्वाकल्पिकं यच्च कल्पनीयमपि सूत्रेण प्रतिषिद्धं तं तद्विषया सर्वापि शोधिर्द्रव्यत इति, भाष्यकारः स्वप्रतिज्ञातां शोधिमाह राया इत्यादि राजा प्रतीतः, तस्मिन् युवराज्ये अमात्ये पुरोहिते कुमारे कुलपुत्रे द्रव्यशोधिरिति वाक्यशेषः कथमेतद्विषया द्रव्य शोधिरत आह—

[भा. १२४८] एएसिं रिद्धिंतो दट्ठुं लोभाओ अन्नियत्तं तो ।
पणगादीया सोही बोधव्वा मास लहुअंता ।।

वृ- एतेषां राजादीनां ऋद्धीर्दृष्ट्वा अहो धर्मस्य फलं साक्षादुपलभ्यते । तस्मादहमपि करोमि धर्ममिति लोभात् भोगाभिष्वङ्ग रूपात् सन्निवर्तमाने षष्ठीसप्तम्योरर्थं प्रत्यभेदात् सम्यग् निवर्त्तमानस्य बोधव्या

शोधिः । पञ्चकादिका मासलघुपर्यन्ता, । तद्यथा - राजानं स्फीतिमन्तमुपलभ्याहो धर्मप्रभावतः कथमेष स्फीतिमान् तस्मादन्यजामि धर्ममिति प्रतिनिधिवर्तमानस्य पञ्चरात्रिं दिवानि शोधिः, युवराजं दृष्ट्वा निवर्तमानस्य दश रात्रिंदिवानि, अमात्यं दृष्ट्वा पञ्चदश, पुरोहितं विंशतिः, कुमारं पञ्चविंशतिः, कुलपुत्रं मासलघुकमिति ।

**[भा.१२४९]** चोएती कुलपुत्ते, गुरुगतरं रायाणीय लहुगतरं ।
पच्छित्तं किं कारण भणियं सुण चोयग इमं तु ।।

**वृ-** चोदयति परः किं कारणं केन कारणेन कुलपुत्रेऽल्पर्द्धिके दृष्टे निर्वर्तमानस्य गुरुकतरं प्रायश्चित्तं भणितं, । राज्ञो महर्द्धिकस्य दर्शनात् प्रतिनिवर्तमानस्य लघुकतरमत्र सूरिराह - चोदक येन कारणेनेत्थं प्रायश्चित्तं नानात्वं तत्कारणमिदं वक्ष्यमाणं शृणु । तदेवाह—

**[भा.१२५०]** दीसइ धम्मस्स फलं, पच्चक्खं तत्थ उज्जमं कुणिमो ।
इड्ढीसु पयणुतीसु विसज्जते होति नाणत्तं ।।

**वृ-** दृश्यते खलु धर्मस्य फलं प्रत्यक्षं साक्षात्तस्मात्तत्र धर्मे वयमुद्यमं कुर्मः । एवमृद्धिषु राजप्रभृतिसम्बन्धिषु प्रतन्वीसु यथाक्रमं हीयमानतरास्वपि सद्यते सङ्गमुपयाति । यथा यथा चाल्पाल्पतरास्वपि ऋद्धिषु सङ्गमुत्पद्यते तथा तथा लक्ष्यते तीव्रातीव्रतरा तस्य भोगाशक्तिरित्युप्रकारेण भवति प्रायश्चित्तनानात्वमिति । अपरे त्विदं भावविशोधिमिति प्रतिपन्नाः ।

सम्प्रति क्षेत्रतः शोधिमभिधित्सुराह—

**[भा.१२५१]** खेत्ते निवपहनगरेद्वारे उज्जाने परेण सीमतिक्कंते ।
पनगादी जो लहुओ, एएसु य संनियत्तंते ।।

**वृ-** क्षेत्रे क्षेत्रविषयाः एतेभ्यः सन्निवर्तमाने एएसुत्ति गाथायां सप्तमी पञ्चम्यर्थे केभ्यः स निवर्त्तमाने इत्यत आह - निवपहेत्यादि । अत्रापि सप्तमी पञ्चम्यर्थे ततोऽयमर्थः । तथा नृपपथात् नगरद्वारादुद्यानात् परतः सीम्नोऽर्वाक् तथा सीम्नः प्रतिसीमातिक्रमतः किंप्रमाणाशोधिरित आह - पञ्चकादिका यावल्लघुको मासः । इयमत्र भावना - राजपथान्निवर्तमानस्य पञ्चरात्रिं दिवानि, नगरद्वारान्निवर्तमानस्य दश, उद्यानात्पञ्चदश, उद्यानात्परतः सीम्नोऽर्वाक् निवर्तमानस्य विंशतिरहोत्राः, सीम्नी भिन्नमासः, सीमानमनतिक्रम्य मासलघु सम्प्रति कालतः शोधिमाह—

**[भा.१२५२]** पढमदिननियत्तंते, लहुओ दसहिं सपदं भवे ।
कालेसंज्जोगे पुन एलोदव्वं खेत्ते कालेय ।।

**वृ-** यदि प्रथमे दिवसे निवर्तते तस्तस्मिन् प्रथमदिवसे निवर्तमाने लघुको मासः लघुप्रायश्चित्तमेव यावत्दशभिर्दिवसैः स्वपदंदशमं प्रायश्चित्तं भवति । तद्यथा द्वितीये निवर्तमानस्य मासगुरु तृतीये दिवसे चतुर्मास लघु, चतुर्थे दिवसे चतुर्मास गुरु, पञ्चमे षट् लघु, षष्टे षड् गुरुः, सप्तमे च्छेदः, अष्टमे मूलं, नवमेऽनवस्थाप्यं, दशमे पाराञ्चित्तमिति, एषा काले कालविषये शोधिः भावतो वक्ष्यमाणा सम्प्रत्य ऊर्ध्वद्रव्ये क्षेत्रे काले च यः संयोगः तस्मिन् वक्ष्ये, प्रतिज्ञातमेव निर्वाहयति ।

**[भा.१२५३]** दव्वस्स य खेत्तस्स य, संजोगे होइमा पुन विसोही ।
रायाणं रायपहे दट्ठुं जा सीमतिक्कंते ।।

**[भा.१२५४]** पनगादी जा मासो जुवरायं निवपहादि दट्ठूणं ।

दसराइं दिवमाइं मासगुरुं होइ अंतंमि ।।

**वृ-** द्रव्यस्य च क्षेत्रस्य च संयोगे सम्बन्धे पुनरियं वक्ष्यमाणा भवति विशोधिस्तामेवाह-रायाणमित्यादि एषा हि राजादिकं द्रव्यं नृपपथादिकं, क्षेत्रमधिकृत्योच्यते, इतीयं द्रव्यक्षेत्रसंयोगजा विशोधिः । तत्र यदि राजानं राजपथे दृष्ट्वा निवृत्तस्ततः तस्य पञ्चकं पञ्चरात्रिंदिवं प्रायश्चित्तमेवं क्षेत्रं राजपथमादिं कृत्वाराज्ञ्येव द्रव्ये पञ्चकादि प्रायश्चित्तं यावन्मासस्तद्यथानगरद्वारे राजानं दृष्ट्वा निवर्तमानस्य दश रात्रिं दिवानि, उद्यानान्निवर्तमानस्य पञ्चदश, उद्यानस्य सीम्नश्चान्तरात् विंशतिकं, सीम्नो निवर्तमानस्य पञ्चविंशतिकं, सीमातिक्रान्त राजानं दृष्ट्वा निवर्तमानस्य मासलघु, युवराजं द्रव्यं नृपपथादि क्षेत्रे गतं दृष्ट्वा निवर्तमानस्य दशरात्रिंदिवादिकं प्रायश्चित्तं क्रमेण तावद्वक्तव्यं यावदन्ते भवति, । तद्यथा राजपथे युवराजं दृष्ट्वा निवर्तमानस्य दशरात्रिं दिवानि नगरद्वारे पञ्चदश उद्याने विंशतिरुद्यानसीम्नोरपान्तराले पञ्चविंशतिः, सीम्नि मासलघु, सीमातिक्रमे मासगुरु ।।

**[भा.१२५५]** सचिवे पन्नरसादी लघुगं तं वीसमादि उ पुरोहे ।
अंतंमि उ चउ गुरुगं कुमारभिन्नादि जा छेओ ।।

**वृ-** सचिवे राजपथादिषु क्रमेण पञ्चदशादि चतुर्लघुपर्यन्तं, तद्यथा राजपथे सचिवं दृष्ट्वा निवर्त्तमानस्य पञ्चदशरात्रिंदिवानि नगरद्वारे विंशतिरुद्याने पञ्चविंशति रुद्यानसीम्नोरन्तराले मासलघु सीम्नि मासगुरु सीमाऽतिक्रमे चतुर्मासलघु तथा पुरोधसि विंशत्यादि प्रायश्चित्तमन्ते चतुर्गुरुकम्, तद्यथा राजपथे पुरोधसं दृष्ट्वा निवर्त्तमानस्य विंशतिरहोरात्रं नगरद्वारे पंचविंशति रुद्याने मासलघु उद्यानसीम्नोरपान्तराले मासगुरु, सीम्नि चतुर्मासगुरु, कुमारे भिन्नमासादि यावत् षट् लघु तद्यथा राजपथे कुमारं दृष्ट्वा निवर्तमानस्य भिन्नोमासः पंचविंशति रहोरात्रा इत्यर्थः नगरद्वारे मासलघु उद्याने मासगुरु उद्यान सीम्नोरपान्तराले चतुर्मास लघु, सीम्नि चतुर्मासगुरु, सीमातिक्रमे षण्मासलघु ।।

**[भा.१२५६]** कुलपुत्ते मासादी छग्गुरुगं होइ अंतिमट्ठाणे ।
इत्तो य दव्वकाले संयोगमिमं तु वोच्छामि ।।

**वृ-** कुलपुत्रे मासादि मासलघ्वादि प्रायश्चित्तं क्रमेण तावत् द्रष्टव्यं यावदन्तिमं स्थानं षट्गुरुकं भवति । तद्यथा-राजपथे कुलपुत्रं दृष्ट्वा निवर्तमानस्य मासलघु, नगरद्वारे मासगुरु, उद्याने चतुर्लघु, उद्यानसीम्नोरपान्तराले चतुर्गुरु सीम्नि षण्मासलघु, सीमातिक्रमे षण्मासगुरु । तदेवं द्रव्य-क्षेत्रसंयोग उक्त इत ऊर्ध्वं द्रव्यकाले च संयोगमिमं वक्ष्यमाणं वक्ष्यामि यथा प्रतिज्ञातमेव निर्वाहयति-

**[भा.१२५७]** रायाणं तद्दिवसं दट्ठूण नियत्ते होति मासलहुं ।
दसहिं दिवसेहिं सपयं जुयरणादिं ततो वोच्छं ।।

**वृ-** राजानं दृष्ट्वा तस्मिन् दिवसे यदि प्रतिनिवर्तते, तेन तु अवधावनान्तरं तत्क्षणमेव तदा तस्य मासलघु प्रायश्चित्तं, । एवं क्रमेण तावद्वक्तव्यं यावद्दशभिर्दिवसैः स्वपदं दशमं प्रायश्चित्तं भवति, । यद्यथा-द्वितीये दिवसे राजानं दृष्ट्वा निवर्त्तमानस्य मासगुरु तृतीये दिवसे चतुर्मासलघु, चतुर्थदिवसे चतुर्मास गुरु, पञ्चमे षण्मास लघु, षष्टे षण्मास गुरु, सप्तमे च्छेदोऽष्टमे मूलं नवमेऽनवस्थाप्यं दशमे पाराञ्चितं साम्प्रतमत ऊर्ध्वं युवराजादिमधिकृत्य वक्ष्यामि । प्रतिज्ञातमेव करोति--

**[भा.१२५८]** मासगुरु चउ लहुया चउगुरु छल्लहुय छग्गुरुकमादी ।

नवहिं अट्ठहिं सत्तहि च्छहिं पंचहिं चेव चग्गपयं ।।

वृ- युवराजामात्यपुरोहितकुमारकुलपुत्रेपु यथाक्रमं प्रथमदिवसे मासगुरु चतुर्लघुक चतुर्गुरुक षट्लघु षट्गुरुकादि कृत्वा यथाक्रमं नवभिरष्टभिः सप्तभिः षड्भिः पञ्चभिश्च दिवसैश्चरमं पाराञ्चितं वक्तव्यम्, । तद्यथा-प्रथमे दिवसे युवराजं दृष्ट्वा निवर्तमानस्य मासगुरु, द्वितीये दिवसे चतुर्मासलघु, तृतीये दिवसे चतुर्मासगुरु, चतुर्थेदिवसे षण्मासलघु, पञ्चमे दिवसे षण्मासगुरुः, षष्टे च्छेदः, सप्तमे मूलमष्टमेऽनवस्थाप्यं, नवमे पाराञ्चितम् । तथा अमात्यं दृष्ट्वा प्रथमे दिवसे निवर्तमानस्य चतुर्मासलघु, द्वितीये दिवसे चतुर्मासगुरु, तृतीये षण्मासलघु, चतुर्थे षण्मासगुरु, पञ्चमे चछेदः, षष्ठे मूलं सप्तमेऽनवस्थाप्यं अष्टमे पाराञ्चितमिति, । तथा पुरोहितं दृष्ट्वा प्रथमे दिवसे निवर्तमानस्य चतुर्मासगुरु, द्वितीये षण्मासलघु, तृतीये षण्मासगुरु, चतुर्थेच्छेदः, पञ्चमे मूलं, षष्ठेऽनवस्थाप्यं सप्तमे पाराञ्चितम् । तथा कुमारं दृष्ट्वा प्रथमे दिवसे निवर्तमानस्य षण्मासलघु, द्वितीये दिवसे षण्मास गुरु, तृतीये च्छेदः, चतुर्थे मूलं, पञ्चमेऽनवस्थाप्यं, षष्टे पाराञ्चितम् । तथा कुलपुत्रकं प्रथमे दिवसे दृष्ट्वा निवर्त्तमानस्य षण्मासगुरु, द्वितीये च्छेदः, तृतीये मूलं, चतुर्थेऽनवस्थाप्यं, पञ्चमे पाराञ्चितमिति; उपसंहारमाह—

[भा.१२५९] इति दव्वखेत्तकाले भणिया सोहीउ भावइणमणा ।
दंडियभूणगे संकंत भोइया विवण भुंजणे दोसु ।।

वृ- इति एवमुक्तेन प्रकारेण प्रत्येकं संयोगतश्च द्रव्ये क्षेत्रे काले च भणिता शोधिरिदानीं भावत इत्यमन्या द्रव्यक्षेत्रकालव्यतिरिक्ता भण्यते इति वाक्यशेषः । प्रतिज्ञातमेव कुर्वन् द्वारसंग्रहमाह-दण्डिके राजाभूणके देशीपदमेतत् बालके पुत्रादावित्यर्थः । मृते इति वाक्यशेषः । तथा सङ्क्रान्ते परपुरुषं गते विपन्ने मृते कलत्रे इति गम्यते । तथा दोसुत्ति तृतीयार्थ सप्तमी । यथा । तिसु तेसु अलंकिया पुहवी इत्यत्र ततोऽयमर्थः । द्वाभ्यां पुरुषाभ्यां स्त्रीभ्यां वा वक्ष्यमाणस्वरूपाभ्यां भोजने भावतः शोधिर्भवति । तत्र यथोद्देशं निर्देश इति प्रथमतो दंडितादि द्वारत्रयमाह—

[भा.१२६०] दंडिय सोउ नियत्ते पुत्तादि मए व चउलहू होंति ।
संकंत मया एवा भोए ते चउगुरू होंति ।।

वृ- यत्र स संप्रस्थितस्तत्र तानि मनुष्याणि कस्मिंश्चिदपराधे राजा दण्डितानि यदि वा तेषां पुत्रादिकं किमपि मृतं अथवा द्वयमपीदं जातं ततो दंडितवान् यदि वा पुत्रादीन् मृतानथवा उभयमपि श्रुत्वा निवर्तते । ततो निवृत्ते निवृत्तस्य प्रायश्चित्तं चत्वारो लघुका लघुमासका भवन्ति, । तथा भोजिकानाम भार्या । सा अन्यपुरुषसङ्क्रान्ता, अथवा मृता श्रुताः ततोऽन्यपुरुषसङ्क्रान्तायां मृतायां वा भोजिकायां निवर्तमानस्य चत्वारो गुरुका गुरुमासा भवन्ति, सम्प्रति भोजणे दोसत्ति व्याख्यानयति ।

[भा.१२६१] अह पुन भुंजेजाही, दोहिं उवगेहिं सत्थ समयं तु ।
इत्थीहिं पुरिसेहिं, व तहिं य आरोवणा इणमा ।।

वृ- अथ पुनस्तत्र गतः सन् द्वाभ्यां वर्गाभ्यामेतदेव वक्तव्यमाचष्टे-स्त्रीभ्यां पुरुषाभ्यां वा समकं सार्धं तुशब्दो वक्ष्यमाणसमस्तविशेषसूचकः । भुञ्जीत तत्र इयमनन्तरमुच्यमाना आरोपणा प्रायश्चित्तं तामेवाह—

[भा.१२६२] लहुगाय दोसु दोसु य गुरुगा छम्मास लहुगुरुछेदो ।
निक्खिवणंसि य मूलं जं चन्नं सेवए दुविहं ।।

वृ- द्वयोः चत्वारो लघुका तत्र द्वयोश्चत्वारो गुरुकाः तथा षण्मासलघवः षण्मासा गुरवः । तथा च्छेदः निक्खेववणमिय इत्यादि यदा स्वयं लिङ्गं निक्षिपति परित्यजति तदा स्वयं लिङ्गस्य मूलं । अथवा बलात् लिङ्गं गिहत्थकेनापि मोच्यते तदा शुद्ध इति । तथा गच्छान्यन् संयते स्त्रीनपुंसकादिकं तन्निष्पन्नमपि प्रायश्चित्तं तस्य भवत्येष गाथासंक्षेपार्थः । साम्प्रतमेनमेव विवरीषुः प्रथमतो लहुगाय दोसु दोसु य गुरुगा इति व्याख्यानयति—

[भा. १२६३] पुरिसे य नालयद्धे अनुव्वतो वासएय चउ लहुगा ।
एयासुं चिय थीसुं अनालसंमेय चउगुरुगा ।।

वृ- अत्रापि सर्वत्र सप्तमी तृतीयार्थेषु पुरुषेण नालबद्धेन तु शब्दो विशेषणार्थः । स चैतद्विशिनष्टि मिथ्यादृष्टिना अथवा अनुव्रतोपासकेन नालबद्धेनैताभ्यां दाभ्यां पुरुषाभ्यां वा शब्दस्यानुक्त-समुच्चयार्थत्वाद्दर्शनमात्रश्रावकेण च सार्धं भुञ्जानस्य प्रायश्चित्तं चत्वारो लघुकाः व्याख्यातं लधुगा य दोसु इति पदमधुना दोसु य गुरुगा इति व्याख्यानयति । एयासुं चियथीसुमिति एताभ्यामेव स्त्रीभ्यां किमुक्तं भवति नालबद्धमिथ्यादृष्टिस्त्रिया नालबद्धाणुव्रतोपासकस्त्रिया वा सार्धं भुञ्जानस्य चतुर्गुरुका, अनालसम्मे य चउ गुरुगा इति अनालबद्धमिथ्यादृष्टिपुरुषेणानालबद्धाणुव्रतोपासकेन वा समं भुञ्जानस्य चतुर्गुरुकाः अधुना छम्मास लहुगुरु इति व्याख्यानार्थमाह—

[भा. १२६४] अनालदंसणत्थिसु दिट्ठाभट्ठपुरिसे य छल्लहुया ।
दिट्ठित्ति पुन अदिट्ठो, मेहुणीभोती ए छगुरुगाय ।।

वृ- अनालबद्धा दर्शनमात्रश्राविकायाश्च पूर्वं दृष्टः सन् तदानीमाभाषितपुरुषस्तेन च समं भुञ्जानस्य षट् लघुकाः, तथा दिट्ठित्ति पदैकदेशे पदसमुदायोपचारात् पूर्वं या दृष्टा तदानीमाभाषिता तया दृष्टा भाषितया तथा अदृष्टेन पुरुषेणाभाषितेन तथा मेहुणीत्ति मैथुनिक्या मैथुनाजीवया वेश्यया इत्यर्थः । तथा भोजिकया भार्यया एतैश्चतुर्भिः सह भुञ्जमा(जा)नस्य षण्मासा गुरवः ।

सम्प्रति च्छेदइति व्याख्यानार्थमाह—

[भा. १२६५] अदिट्ठा भट्ठासु त्थीसुं संभोइ संजईच्छेदो ।
असमणुन्नसंजतीए मूलं थीपाससंबंधे ।।

वृ- पूर्वमदृष्टाभिस्तदानीमाभाषिताभिः सह तथा सांभोगिकसंयत्यापि च समं भुञ्जानस्य च्छेदः, तथा असांभोगिकसंयत्या सह भोजने तथा स्त्रीस्पर्शसम्बन्धे च मूलं प्रायश्चित्तं । साम्प्रतमत्रैव व्याख्यानान्तरमाह—

[भा. १२६६] अहवावि पुव्वसंथुय पुरिसेहिं सद्धिं चउलहू होंति ।
पुरसंथूय इत्थीए पुरिसेयरदोसुवी गुरुया ।।

वृ- अथवेति प्रकारान्तरोपदर्शने पूर्वसंस्तुतपुरुषैः सह पूर्वसंस्तुतस्त्रिया च समं भुञ्जानस्य चत्वारो लघुका लघुमासा भवन्ति, । एतेन लहुगा य दोसु इति व्याख्यातम् । तथा पुरुषेतराभ्यां पुरुषस्त्रीभ्यां द्वाभ्यामपि च सह भुञ्जानस्य गुरुकाश्चत्वारो गुरुमासाः, अनेन दोसु य गुरुगा इति व्याख्यातम् ।।

[भा. १२६७] पच्छा संथूय इत्थीए छ लहु मेहुणीए छ गुरुगा ।
समणुन्नेयर संजति च्छेदो मूलं जहा कमसो ।।

वृ- पश्चात्संस्तुतया स्त्रिया सह भुञ्जानस्य षट् लघवः मैथुनिक्या मैथुनाजीवया पणाङ्गनया इत्यर्थः ।

सह भुञ्जानस्य षड्गुरुवः समनोज्ञया संयत्या सह भुञ्जानस्य च्छेदः । अमनोज्ञया संयत्या सह मूलं, पुनः प्रकारान्तरमाह—

[भा.१२६८] अहव पुरसंथुए तर पुरिसित्थीसाय सायवादीसु ।
समणुन्नेयरसंजइ अद्धोकंतीए मूलं तु ।।

वृ- अस्या व्याख्या कल्पनाध्ययन चूर्णितः कर्तव्या सम्प्रति यदुक्तं प्राक् जं चणं सेवते दुविहंति तद्व्याख्यार्थमाह—

[भा.१२६९] थीविग्गह किलिबंवा मेहुणकम्मं च चेयणमचेयं ।
मूलोत्तरकोडिदुगं परित्तणंतं च एमादी ।

वृ- स्त्रीविग्रहो नाम स्त्रीशरीरं । क्लीबो नपुंसकं एतद्द्विकं यत्सेवते । अहवा मेहुणत्ति मैथुनं कर्म्मेति हस्तकर्मा । अथवा सचित्तमचित्तं वा यत् प्रतिसेवते । यदि वा मूलगुणविषयं यदि वा उद्गमकोटि-विशुद्धिकोटि अथवा परित्तमित्ति प्रत्येकशरीरमनंतत्ति अनन्तकायमेवमादि द्विविधं द्रष्टव्यमादिशब्दात् तिर्यग्योनिकं मानुषिकं वा मैथुनमित्यादिद्विक परिग्रहः ।

[भा.१२७०] एएसिं तु पयाणं जंसेवइ पावई तमारुवणं ।
अन्नं च जमावज्जे पावंति तं तथ्थ तहियं तु ।।

वृ- एतेषामनन्तरोदितानां स्त्रीविग्रहक्लीबादीनां पदानां मध्ये यत्सेवते तमारोपणंतन्निष्पन्नं प्रायश्चित्तं प्राप्नोति । अन्यच्च पदापद्यते संयमविराधनाप्रत्ययं प्रायश्चित्तं तदपि तत्र प्राप्नोति ।।

[भा.१२७१] तत्तो य पडिनियत्तं सुहुमं परिनिव्ववंति आयरिया ।
भरियं महातलागं तलफलदिट्ठंतोचरणम्मि ।।

वृ- ततस्तस्मात् अवधावनात् प्रतिनिवृत्तात् सूक्ष्मं यथा ते जानन्ति सूरयोऽस्माकमुपरि तथैव सस्नेहा वर्तन्ते इत्येकमभि कोमलेनोपायेनाचार्याः परिनिर्वापयन्ति सुखापयन्ति येन ते सर्वमालोचयन्ति । तं चालोचनानन्तरमेवं वदेयुः । यथा चारित्रमस्माकं सर्वं गलितमस्मभ्यं व्रतानि दत्थ । एवमुक्ते सूरिभिश्चरणे चरणविषये भरितं महातडागमतिभरणदेव कस्मिंश्चित् प्रदेशे बालीभेदात् गलदुदकं तत्क्षणादेव पतितेन फलेन । तत्प्रदेशापूरणान्निरुद्धोदकं दृष्टान्तः करणीयः । इह सुहुमं परिनिव्ववन्तीत्युक्तं तच्च सूक्ष्मं परिनिर्वापणं द्विविधं । तद्यथा - लौकिकंलोकोत्तरिकंच । तत्र लौकिकं यथा रौहिणिक चौरस्याभयकुमारेण कृतम् । तच्चैवम्— रायगिहं नगरं, तत्थ रोहिणितो चोरो बाहिं दुग्गड्डितोसोसयलं नगरं मुसति । न कोई तं घेत्तुं सकति । अन्नया वद्धमाणसामी समोसढो । रोहिणितो भयवतो धम्मं कहेंतस्स नातिदूरेणं वोलेइ सोचलमाणो मा तित्थगरवयणं सोउं चोरियं न कहामित्ति कणे ठवेइ एइ तस्सेवं बोलमाणस्स कण्टकः पादे लग्गो तं जाव एगेणां हत्थेणं उद्धरइ ताव तित्थगरो इमं गाहत्थं पणवेइ—

[भा.१२७२] अमिलायमल्लदामा अनिमिसनयनाय नीरजसरीरा ।
चउरंगुलेण भूमिं नच्छिवंति सुरा जिनो कहइ ।।

वृ- सुरा देवाश्चतुर्निकायभाविनोऽपि अम्लानमाल्यदामानस्तथा न विद्यते निमिषो येषां ते अनिमिषा अनिमेषे नयने येषां ते अनिमिषनयनाः । तथा नीरजा निर्मलं शरीरं येषां ते नीरजाः शरीराः । चतुरङ्गुलेन चतुर्भिरङ्गुलैर्भूमिं न स्पृशन्ति इति जिनः सर्वज्ञः कथयति । अनेन सर्वतीर्थकृतामविसंवादिवचनता-मावेदयति । एवं सोउं कण्टगं उद्धरित्ता पुने कणे ठवेउ गतो अन्नया सो रोहिणितो रायगिहमतिगतो रत्तिं

चोरोत्ति गहितो न य निज्जइ रोहिणितो उयाहु अन्नो चोरो ततो पिट्टिउमाढत्तो भणइ य अक्खाहि सव्वं तुमं रोहिणितो नवत्ति । जइ रोहिणितो सियाता सुयामो । एवं सो नीतिस्तथ पविठाहिं अठारसहिं कारणेहिं एक्केक्कं काउं पुच्छिज्जइ सो न कहेइ जहा कहं रोहिणितो चोरोत्ति । ताहे अठारसमा सुहुमा कारणा करिउमाढत्ता मज्जं पाइतो मत्तो निव्वेयणो जातो । ताहे देवलोगभवणसरिसं भवणं काउं तत्थ महरिहे सयणिज्जे निवाविलो ततो पडिवोहवेलाए इत्थि नाडए निव्वत्तिज्जमाणे ताहिं भणइ- तुमं देवलोगे उववन्नो देवलोए य एसो अनुभावो जो पुच्छितो पुव्वभवं सम्मं अक्खाति तो चिरठिती देवत्ति अत्थति, जो न अक्खाति तो तक्खणं पडति, तो मा अम्हे अनाहा काहसि सव्वं अक्खाहि, । ततो रोहिणीएन तित्थयरवयणं संभरित्ता चिंतियं- अपूतिवयणा तित्थगरा सामिणा भणियं- अमिलाय इत्यादि इमं च सव्वं वितहं दीसइ । तओ कयगं एवंति भणाइ नाहं रोहिणितो । ततो मुक्को । रोहिणिएण चिंतियं- अहो एगस्स वि सामिणो वयणस्स केरिसं माहप्पं । अहं जीविय सुह आभागी जातो, जइ पुन निग्गंथाण वयणं सुणेमि तो इहलोए परलोए य सुहिओ भवामिति चिंतिऊण पव्वइतो ।

उक्तं सौक्ष्मं लौकिकं परिनिर्वापनं । तथा चाह—

[भा. १२७३] सुहुमाय कारणा खलु लोए एमादि उत्तरे इणमो ।
मिच्छदिठीहिं कया किं तुह भे तत्थ उवसग्गा ॥

वृ- सूक्ष्मा खलु कारणा यातना लोके एवमादिका एवं प्रभृतिका आदिशब्दात्प्रभूतान्ये-वंविधदृष्टान्तसूचकाः उत्तरे लोकोत्तरे इयं वक्ष्यमाणस्वरूपाकारणा, तामेवाह मिथ्यादृष्टिभिः किन्तु कृता भे भवतस्तत्र गतस्योपसर्गाः । किमुक्तं भवति न तव वत्स विरूपाचरणे किमपि चित्तं केवलं यदि मिथ्यादृष्टिभिर्बलात्कारेण किंपि कारितः स्यात् । तत्र किं प्रतिसेवितं किंवा न प्रतिसेवितमिति, एवमुक्ते स यत् करोति तदाह—

[भा. १२७४] अविसिंधरइ सिनेहो पोराणो आयओ निप्पिवासाए ।
इइगारव मारुहितो कहेइ सव्वंजहावित्तं ॥

वृ- अपीति संभावने । संभावयामीत्येतत् सिंति एतेषां पौराणो पुराणायामवस्थायां भवः पौराणः स्नेह आयातो अद्यापि निःपिपासया मदीयवैयावृत्त्यादि पिपासा व्यतिरेकेणादि धरति विद्यते । एवं गौरवत्वमारोपितः सन् किमेतेषां कुर्मो जीवितमपि मदीयमेतेषामेवेति मन्वानो यथावृत्तं समस्तमपि कथयति । एतदेव स्पष्टतरमाचष्टे ।

[भा. १२७५] एवं भणितो संतो उत्तुइओ सो रुहेइ सव्वं तु ।
जंणेण समनुभूयं जं वासे तं कयं तेहिं ॥

वृ- एवं पूर्वप्रदर्शितेन प्रकारेण भणितः सन् उत्तुइओत्ति देशीपदमेतत् गर्वे वर्तते ततोऽयमर्थः । अहमेव गुरूणां मान्यो नान्य इति गौरवमारोपितः सर्वमेव तुरवधारणे यदनेन स्वयं समनुभूतं यद्वा से तस्य मिथ्यादृष्टिभिः कृतं तत्समस्तमेव कथयति । तत्र यदि सोऽगीतार्थो भणाति तत इदं ब्रूते—

[भा. १२७६] ण्हाणादीनि कयाइं देहवए मज्झ बेइ तु अगीतो ।
पुव्वं च उवसग्गा किलिट्ठभावो अहो आसि ॥

वृ- मया स्नानादीनि स्नानाङ्गरागादीनि कृतानि, तथा पूर्वमुपसर्गात् उपसर्गेष्वनारब्धेष्वहं संक्लिष्ट परिणामोऽभवमुपसर्गप्रारंभसमकालमेव पुनर्विशुद्धपरिणामो जातस्तत एव तेन कारणेन मह्यं ददत यूयं

व्रतानि ममारोपयतेति भावः इति अगीतो अगीतार्थो ब्रूते, एवं तनोक्ते यदाऽऽचार्येण वक्तव्यं तदाह—

[भा.१२७७] वेसकरणं पमाणं न होइ नयमज्जणं नलंकारो ।
साइज्जिएण सेवी अननुमएणं असेवीउ ।।

वृ- वत्स न वेषकरणं न साधु वेषकरणं प्रमाणं न च मञ्जनं नालङ्कारः प्रमाणं यथाक्रममप्रतिसेवने प्रतिसेवने वा किन्तु साएज्जिएणंति यदिस्नानादि विषये अनुमननं कृतं तेन सेवी प्रतिसेवनाकारी भवति, अननुमतेन तु असेवी अप्रतिसेवी । अन्यच्च—

[भा.१२७८] जो सो विसुद्धभावो उप्पन्नो तेन ते चरित्ताया ।
धरितो निमज्जमाणो जलेण नावा कुविंदेण ।।

वृ- योऽसौ विशुद्धभावस्तत्रोपसर्गप्रारम्भसमये समुत्पन्नस्तेन तव चारित्रात्माधारितः । यथा कुविन्देन कोलिकेन जले निमज्जती नौरिति ।

[भा.१२७९] जहवा महा तलागं भरितं भिज्जंतमुवरि पालीयं ।
तज्जाएण निरुद्धं तक्खण पडिएण तालेन ।।

वृ- यथेति दृष्टान्तोपन्यासे वा इति दृष्टान्तान्तरसमुच्चयेन महा तडागं भरितमिति वर्षे (र्षा) पानीयेन परिपूर्णं भरितमिति भरणादेव चोपर्येकस्मिन् प्रदेशे भिद्यमानपालीकं भित्तुमारब्धपालीकं तज्जातेनेति प्राकृतत्वात्तृतीया पञ्चम्यर्थे ततोऽयमर्थः तस्यां पाल्यां जातस्तज्जातस्तस्मात् तालात् तालवृक्षात् यस्मिन् क्षणे उदकगलनेन पाली भेत्तुमारब्धा तत्क्षणे तस्मिन्नेव प्रदेशे पतितेन तालेन तालफलेनेति गम्यते उदकं गलत् तेन निरुद्धमेष दृष्टान्तोऽयमर्थोपनयः ।

[भा.१२८०] एवं चरणतलागं नावय उवसग्गवीचिवेगेहिं ।
भिज्जंतु तुमे धरियं धियबल वेरग्ग तालेणं ।।

वृ- एवं महत्तडागदृष्टान्तगतप्रकारेण चरणमेव तडागं ज्ञातयः स्वजनास्तैः कृता ये उपसर्गास्त एव वीचिवेगाः कल्लोल वेगास्तैर्ज्ञातिकृतोपसर्गवीचिवेगैर्भिद्यमाने त्वयाधृतिबलं च वैराग्यं च धृतिबलवैराग्यं च तदेवताल्लोऽवयवे समुदायोपचारात् तालफलं तेन धृतिबलवैराग्य तालेन धारितं केवलमवधावनतः प्रायश्चित्त भाग्जातः तीर्थकराज्ञा भङ्गात्तदेवाह- -

[भा.१२८१] पडिसेहियगमनं आवणा जेन तेनसो पुठो ।
संघाडगतिह वोच्छो उवहिग्गहणं ततो विवादो ।।

वृ- प्रतिषिद्धं खलु भगवता तीर्थकरेणावधावनानुप्रेक्षिगमनं तस्मिन् प्रतिषिद्धे गमने कृते तथा येन कारणेन स्त्रीसेवादित आपन्नं प्रायश्चित्तस्थानं तेन स स्पृष्टः कर्मबन्धेन ततस्तद्विशोधनाय तस्मै दीयते प्रायश्चित्तं । अथ योऽसौ द्वितीयः संघाटकः प्रेषितस्तेन कियच्चिरं स प्रतीक्षणीयः तत आह-संघाडगेत्यादि सङ्घाटकश्च त्र्यहं त्रीन् दिवसान् यावत् प्रतीक्ष्यत । इह त्र्यहग्रहणमध्यमतो भवितुमर्हति तत उपधिग्रहणं कर्तव्यं तदीय उपधिर्याचित्वा परिग्रहणीयः ततो विवादोत्ति । यत्र सो वधावितस्ततः प्रतिनिवृत्तस्य सहायैर्यदि विवादो वक्ष्यमाणस्वरूपः क्रियते । तदा स प्रमाणयितव्यः इति ।

सम्प्रत्येतदेवोत्तरार्धं व्याचिख्यासुराह—

[भा.१२८२] एगाह तिह पंचाहए य ते बिंति णं सहाययाणां ।
वच्चासु अनिच्छंते भणंति उवहिंपि सोदेहि ।।

वृ- जघन्यत एकाहे एकस्मिन्मध्ये दिवसे मध्यमतस्त्र्याह, उत्कर्षतः पञ्चाह प्रतीक्षित यदा स निवर्त्तितुं नेच्छति ततः सहायाणमिति तं ब्रुवते कियच्चिरमस्माभिरवस्थातव्यमेहि व्रजामः । एवमुक्ते यदि सोऽभिधत्ते नाहं व्रजामि । ततस्तस्मिन् प्रत्यागमनमनिच्छति भणंति यदि नागच्छसि तर्हि उपधि मपि तावद्देहि मा उपधेरप्युपघातो भूदिति ।।

[भा.१२८३] न वि देमित्ति य भणिए गएसु जइसो स संकितो सुवति ।
उवहम्मइ निसंकेनहम्मए अप्पडिवज्जंत ।।

वृ- यदि उपधेर्याचने कृते स ब्रूते नापि नैव ददाम्युपधिमहमिति तत एवं भणिते स सङ्घाटको गच्छति सङ्घाडगतिर्हेति व्याख्यातमधुना वुच्छो उवहिग्रहणं इति तद्व्याख्यानयति गएसु इत्यादि गतेषु तेषु सहायेषु यदि सशङ्कितः शङ्कनं शङ्कितं सहशङ्कितं सशङ्कितं यस्य येन वा स तथा का पुनः शङ्का ? उच्यते- किमुत व्रजामि किं वा नेति एव रूपशङ्कोपेतः स्वपिति, रात्रौ तदा स उपधिरुपहन्यते । अथ निःशङ्कितः सन् (न) स्वपिति यथा नियमान्मयोत्प्रव्रजितव्यमिति तदा नोपहन्यते । अथ निःशङ्कित उषित्वा यदि वा यस्मिन् दिने सहाया गतास्तद्दिवसमेवानुषित्वा यदि निवृत्य व्रजिकादिष्वप्रतिवध्यमान आगच्छति । न चान्तरा रात्रौ दिवसे वा स्वपिति तदा तस्मिन्नप्यप्रतिवध्यमानं नोपहन्यते । अथ स्वपिति तर्ह्युपहन्यते ।

[भा.१२८४] संवेग समावन्नो अनुवहयं घेत्तु एति तं चेव ।
अह होज्जाहि उवहतो सो विय जइ होज्ज गीयत्थो ।।

[भा.१२८५] तो अन्नं उप्पाए तं वोवहयं विगिंचिउ होइ ।
अपडिबज्झंतेतु सुचिरेण वि हू न उवहम्मं ।।

वृ- संवेगो मोक्षाभिलाषस्तं समापन्नस्तमेव गुरुप्रदत्तमुपधिमनुपहतं गृहीत्वा । एति समागच्छति । अथ भवेत् कथमप्युपहतः सोऽपि च साधुर्यदि स्यात् गीतार्थः ततस्तमुपहतमुपधिं विगिंचिउंति परिस्थाप्यान्यमुपधिमुत्पाद्य एति समायाति । अथ स्यादगीतार्थस्तर्हि तेनोपधिरन्यो नोत्पादनीयो अगीतार्थत्वेनान्योत्पादने योग्यताया अभावात् । किन्तु तेन वोपधिना गन्तव्यं । समागतस्य चान्यमुपधिमाचार्याः समर्पयन्ति । प्राक्तनं च साधुभिः परिस्थापयन्ति । सम्प्रति अप्पडिवज्झं तेउ इत्यादि अप्रतिवध्यमाने कर्मकर्तरियं प्रयोगः क्वचिदपि प्रतिबन्धमकुर्वति पुनः सुचिरेणापि प्रदीर्घेणापि कालेन हु निश्चितं नोपहन्यते उपधिः क्वचनापि प्रतिबन्धाकरणतः सततोद्यत्वात् ।

सम्प्रति विवाद इति व्याख्यानयति-

[भा.१२८६] गंतूण तेहिं कहियं, सयावि आगंतु तारिसं कहिए ।
तो तं होइ पमाणं विसरिसकहणे विवादो उ ।।

वृ- यौ सहायौ तस्य प्रेषितौ, ताभ्यां गत्वा गुरुसमीपं तस्य प्रतिसेवनमप्रतिसेवनं वा कथितं, स चापि कृतावधावनः साधुरागत्य तादृशं कथयति ततस्तद्भवति प्रमाणमुभयेषामप्यविसंवादात् । अथ विसदृशं कथयति ततो विवादः सहाया ब्रुवते एष प्रतिसेवीति । स प्राह नप्रतिसेवीति, तत्र सत्य प्रतिज्ञाः खलु व्यवहाराः इति, स एव प्रमाणीक्रियते, न सहायाः, । तदेवं प्रतिसेवनामधिकृत्य विवादो दर्शितः ।

सम्प्रति मज्जनादिकमाधिकृत्याह-

[भा.१२८७] अहवा बेंति अगीया मज्जनमादिएहिं एस गिहीभूतो ।
तं तु न होइ पमाणं सो चेव तहिं पमाणं तु ।।

वृ - अथवेति प्रकारान्तरोपप्रदर्शने अगीतार्था ब्रुवते । मज्जनादिभिर्मज्जनाङ्गरागधूपाधिवासादिभिरेष गृहिभूतो नीतः, स पुनरेवमाह-नाहं स्नानादिकं कृतवान् यदि वा बलादहं स्वजनैः स्नानादिकं कारितो न पुनस्तेषु स्नानादिष्वनुरागवान् जात इति । तत्रैवं भूते विवादे यत्ते सहाया ब्रुवते तत्र भवति प्रमाणं, किन्तु स एव तत्र प्रमाणमिति एतदेव प्रविकटयिषुराह–

[भा.१२८८] पडिसेवी अपडिसेवी एवं थेरगण होइ उ विवादो ।
तत्थ वि होइ पमाणं स एव पडिसेवणा न खलु ॥

वृ - स्थविरा आचक्षते एष प्रतिसेवी स प्राह-नाहं प्रतिसेवी एवं स्थविरैः सहगाथायां षष्ठी तृतीयार्थे विवादो भवति । अत्रापि प्रतिसेवना विषयेऽपि भवति स एव प्रमाणं न पुनः खलु सहायैरुच्यमाना प्रतिसेवना तेषां पुनरगीतार्थानां पुरतः सूत्र एतदभिदधति–

[भा.१२८९] मज्जन गंध परियारणादि जह नेच्छतो अदोसाय ।
अनुलोमा उवसग्गा एमेव इमंपि पासामो ॥

वृ - यथा अनिच्छतोऽनभिलषितोऽनुलोमा अनुकूला उपसर्गाः । के ते इत्याह-मज्जनं स्नानं गन्धः पटवासादिरूपः परिचारणास्त्रिया बलात्कारेणोपभोग आदिशब्दादेवं विधान्योपसर्गाः परिग्रहः एते यथा अदोषास्तद्विषयानुमननाभावात् । एवमिदमप्यधिकृतोऽवधावितसाधुविषयं मज्जनादि पश्यामस्तदनुरागाभावतो निर्दोषमिति भावः एतदेव भावयति–

[भा.१२९०] जह चेवय पडिलोमा अपदुस्संतस्स होंति दोसा य ।
एमेव य अनुलोमा होंति असायज्जणे अफला ॥

वृ - यथेति दृष्टान्तोपन्यासे, च शब्दो दृष्टान्तदार्ष्टान्तिकयोः साम्यावधारणार्थः । यथा चैवं प्रतिलोमाः प्रतिकुला उपसर्गाः प्रद्वेषतः प्रद्वेषमगच्छतो भवन्त्यदोषाय एवमेव अनेनैव प्रतिकुलोपसर्गगतेन प्रकारेण अनुलोमा अपि स्वजनैः क्रियमाणा मज्जनादय उपसर्गा असाइज्जमाणे अननुमनने भवन्त्यफलाः अन्यच्च-

[भा.१२९१] साहीणभोगचाई अविमहती निज्जरा उ एयस्स ।
सुहुमो वि कम्मबंधो न होइ उ नियत्तभावस्स ॥

वृ - अपीति गुणान्तरसमुच्चये । स्वजनक्रियमाणमज्जनाङ्गरागाद्यनास्वादनादेष स्वाधीन भोगत्यागी स्वाधीनभोगपरित्यागाच्चैतस्य महती निर्जरा पुराणकर्मनिर्जरणं प्रवृद्धप्रवृद्धतर शुभाशयसंभवात् न चाप्यभिनवकर्मसंगलनंयत आह-नतुनिवृत्तभावस्यावधावनात् प्रतिनिवृत्त परिणामस्य सतः सूक्ष्मोऽपि कर्मबन्धो भवति, कर्मोपचयहेतोर्दुष्टाध्यवसायस्याभावात् ।

**मू. (६१)** *एगपक्खियस्स भिक्खुयस्स कप्पति आयरिय उवज्झायाण इत्तरियं दिसं वा अनुदिसं वा उद्दिसित्तए वा धारित्तएवा जहा वा तस्स गणस्स पत्तियं सिया ॥*

वृ - एकः समानः पक्ष एकपक्षः । सोऽस्यास्तीति एकपक्षिकः प्रव्रज्यया श्रुतेन च स्ववर्गस्य भिक्षोः कल्पते । इत्वरां कियत्कालभाविनीमित्वरग्रहणमुपलक्षणं यावत्कथिकां च दिशमाचार्यत्वमुपाध्यायत्वं वा अनुदिशं वा आचार्योपाध्यायपदद्वितीयस्थानवर्तित्वं वा शब्दो विकल्पार्थः । उद्देष्टुं वा तस्य वा स्वयं धारयितुं यथा वा तस्य गणस्य प्रीतिकं स्यात् । य थावा दिशमनुदिशं वा उद्दिशेत । किमुक्तं भवति ? भिन्नपक्षिकमप्यपवादपदेन स्वगणप्रीत्याचार्यादिपदाध्यारोपितं कुर्यादिति संक्षेपार्थः ।

व्यासार्थं तु भाष्यकृद्विवक्षुः प्रथमतः पूर्वसूत्रेण सह सम्बन्धमाहः–

[भा.१२९२] निक्खित्तम्मि उ लिंगे मूलंसा तिज्ञन य ण्हाणादी ।
दिन्नंमु य होइ दिसा दुविहा वि वएसु संबंधो ॥

वृ- यदि लिंगं रजोहरणं निक्खित्तं परित्यक्तं भवति ततस्तस्मिन्निक्षिप्ते लिङ्गे यदि वा लिङ्ग परित्यागेऽपि स्नानादेः साइज्जणे अनुमनने मूलं नाम प्रायश्चित्तं भवति. तस्मिंश्च मूलप्रायश्चित्त दानेन समस्त-पर्यायच्छेदतः प्रदत्तेष्वतेषु द्विविधाप्याचार्यत्वमुपाध्यायत्वरूपादिकं दीयते । ततोऽवधावनसूत्रानन्तरं दिक् सूत्रोपन्यासः एष पूर्वसूत्रे सहास्य सूत्रस्य सम्बन्धः । साम्प्रतमेकपक्षिकत्वं व्याख्यानयति—

·[भा.१२९३] दुविहोय एगपक्खी पव्वज्ज सुए य होइ नायव्वो ।
सुत्तम्मि एगवायण पव्वज्जाए कुलिव्वादी ॥

वृ- द्विविधो द्वि प्रकार एकपाक्षिको भवति ज्ञातव्यः । तद्यथा-प्रव्रज्यायां श्रुते च तत्र सूत्रे सूत्रविषये एकपाक्षिकवाचनः । एका समाना परस्परं वाचनयेष्यः (यस्य) स तथा एकगुरुकुलाधीन इत्यर्थः । प्रव्रज्ययात्वेकपाक्षिक एककुलवर्ती आदिशब्दादेकगच्छवर्ति शिष्यसहाध्यायादिपरिग्रहः ।

एतदेव स्पष्टतरमाह-

[भा.१२९४] सकुलिव्वओ पव्वज्ञा पक्खित्तो एगवायण सुयंमि ।
अब्भुज्जय परिकम्मो मोहेरोगेव इत्तरितो ॥

वृ- प्रव्रज्या पाक्षिको नाम सकुलिव्वतोत्ति स्वकुलसंभवी उपलक्षणमेतत् तेन स्वशिष्य इत्याद्यपि द्रष्टव्यं श्रुते श्रुतपाक्षिकः पुनरेकवाचन इहसूत्रे इत्वरादिग्रहणात् कथिकव्यपि दिक् सूचितातामुभयीमपि व्याख्यानयति । अब्भुज्ञएत्यादि । आचार्यो अभ्युद्यत विहारपरिकर्म कर्तुकाम उपलक्षणमेतत् अभ्युद्यत मरणं वा प्रतिपत्तुकामेन यावत्कथिकाचार्योपाध्यायाविति शेषः मोहे चिकित्सां रोगे चिकित्सां वा कर्तुकाम इत्वरं, अक्षग्योजनात्त्रियं अभ्युद्यतकर्मणि अभ्युद्यतमरणेवा यावत्कथिकाचार्योपाध्यायाविति शेषः । मोहे रोगे चत्वारो बहुवचनं प्राकृतत्वात् । आचार्यस्य यावत्कथिकाचार्यस्थापने द्विविधः सापेक्षो निरपेक्षश्च तत्रयः तथा चात्र राजदृष्टान्तरतमेवाह—

[भा.१२९५] दिट्ठंतो जह राया सावेक्खो खलु तहेव निरवेक्खो ।
साविक्खो जुव नरिंदं ठवेइ इयगच्छुवज्झायं ॥

वृ- दृष्टान्तो यथा राजा । तथा हि-राजा द्विविधः सापेक्षो निरपेक्षश्च । तत्र यः सापेक्षः स जीवन्नेव युवराजं स्थापयति, । युवराजश्च संस्थापनीयो यस्मिन्ननुरक्ता परिषत्ततः कालगतेऽपि राज्ञि न वैराज्यमुपजायते । किन्तु तदवस्थमेव राज्यमनुवर्तते यस्तु निरपेक्षः सन् स्थापयति युवराजं तस्मिंश्च स्थापिते राज्ञि कालगते दायादानां परस्पर कलह, भावतो राज्यं विनाशमाविशति, एवमाचार्योपिद्विविधः सापेक्षोनिरपेक्षश्च, तत्र योगच्छसापेक्षः सजीवन्नेवगणधरंस्थापयति तस्मिंश्च स्थापिते कालगतेऽप्याचार्ये गच्छो न सीदति । तथा चाह-इत्येवं सापेक्षराज इव युवनरेन्द्र सापेक्ष आचार्यो जीवन्नेवेति वाक्यशेषो गच्छोपाध्यायं गच्छनायकं स्थापयति । यः पुनर्गच्छनिरपेक्षः सन् नाचार्य जीवन् स्थापयति तस्मिन्कालगतपरस्परकलहभावतोगच्छो विनाशमुपजायते, तस्माज्जीवत्येव गणधरे आचार्य उपाध्यायो वा स्थापनीयः । साम्प्रतमित्वराचार्योपाध्याय स्थापनाविषयमाह—

[भा.१२९६] गणहरपायोग्गा संति पमाय अठावि एव कालगते ।
थेरगणपगासंतो जावज्ञो न ठावितो तत्थ ॥

वृ- गणधरस्य गणधरपदस्य प्रावोग्यो गणधरप्रायोग्यः तस्यासत्यभावे अथवा प्रमादतो अस्थापित एवाचार्ये कालगते इत्वर आचार्य उपाध्यायो वा स्थाप्यते । स च यैः स्थाप्यते तेस्थविराणां गच्छबृहत्गणां प्रकाशयन्ति । यावतत्र मूलस्थार्य पदं या मूलंस्थापनाय्ये सउन्मोग स स्थापितो भवति । तावदेव युष्माकमचार्योपाध्यायो वा प्रवर्तक इति इह एक पाक्षिको द्विविध उक्तः प्रव्रज्यया श्रुतेन च अत्र च भंगचतुष्टयं तद्यथा प्रव्रज्यया एकपाक्षिकः श्रुतेन च, १ प्रव्रज्ययान श्रुतेन २ प्रव्रज्यया श्रुतेन न ३ नापिप्रव्रज्ययानापिश्रुतेन ४ एतदेवभंगचतुष्टनं कुलादिष्वपि योजनीयं । तथा चाह-

[भा.१२१७] पव्वज्जाए कुलस्स य गणस्स संघस्स चेव पत्तेयं ।
समयं सुएण भंगा, कुज्जा कमसो दिसाबंधे ॥

वृ- दिग्बन्धे आचार्यपदे उपाध्यायपदे वा स्थाप्यमाने इत्यर्थः । प्रव्रज्यायाः कुलस्य गणस्य सङ्घस्य च प्रत्येकं श्रुतेन सार्धं भङ्गान् कुर्यात् । भङ्गचतुष्यं प्रत्येकं योजयेदिति भावः । तत्र प्रव्रज्याया भङ्गचतुष्टयमुपदर्शितमिदानीं कुलस्योपदर्श्यते-कुलेनैकपाक्षिकः श्रुतेन च १, कुलेनैकपाक्षिको न श्रुतेन २, कुलेन नैकपाक्षिकः किन्तु श्रुतेन ३, न कुलेन नापि श्रुतेन ४ । एवं गणेन सङ्घेन च प्रत्येकं भंगचतुष्टयं भावनीयं तत्र प्रव्रज्यां कुलं गणं चाधिकृत्य यः प्रथमभङ्गवर्ती स इत्वरो यावत् कथिको वा स्थापनीयः । तदभावे तृतीयभङ्गवर्त्ती यदि पुनर्द्वितीयभङ्गवर्तिनं चतुर्थभङ्गवर्तिनं वा स्थापयति तदा तस्य स्थापयितुः प्रायश्चित्तं चत्वारो गुरुमासाः न केवलमेतत् प्रायश्चित्तं किं त्वाज्ञादयोऽप दोषास्तथा चाह–

[भा.१२१८] आणाइणो य दोसा, विराधनाहोइ इमेहिं ठाणेहि ।
संकिय अभिनवगहणं तस्सव दीहेन कालेन ॥

वृ- आज्ञादय आज्ञानवस्था मिथ्यात्वविराधनारूपाश्च शब्दोऽनुक्तप्रायश्चित्तसमुच्चये । तत्र प्रायश्चित्तं प्रागेवोपदर्शितं तथा विराधना गच्छस्य भेदो भवति । आभ्यां वक्ष्यमाणाभ्यां स्थानाभ्यां ते एव दर्शयति । शङ्किते अभिनवग्रहणे च साधूनां यदि ग्लानावस्था वा तस्य स्थापयितुर्दीर्धेन कालेन रोगचिकित्सां मोहचिकित्सां वा कृत्वा समागतस्य शङ्कते ।

एतदेव विभावयिपुः प्रथम इत्वरस्य यावत्कथिकस्य च स्थापने विषयमाह–

[भा.१२१९] परिकम्मं कुणमाणो मरणस्सब्भुज्जयस्स व विहारे ।
मोहे रोगचिकिस्सा उहावेंतय आयरिए ॥

वृ- अभ्युद्यतस्य मरणस्य पादपोपगमनलक्षणस्य परिकर्मद्वादशसांवत्सरिकसंलेखनारूपं कुर्वाणा यदि वाभ्युद्यतविहारस्य जिनकल्पादिप्रतिपत्तिलक्षणस्य परिकर्मतपोभावनादिलक्षणं कुर्वंति यावत्कथिक आचार्यः स्थापनीयः, । मोहे मोहचिकित्सायां रोगचिकित्सायां यदि वा अवधावदत्याचार्ये इत्वर आचार्यः स्थापयितव्यः । अत्र श्रुतानेकपाक्षिकेत्वराचार्यस्थापने दोषमाह–

[भा.१३००] दुविहतिगिच्छं काऊण आगओ संकियंमि ।
के पुच्छे पुच्छंतु व कंपियरे गणभेओ पुच्छणा होउं ॥

वृ- अत्रानेकपाक्षिकेत्वराचार्यस्थापने द्विविधचिकित्सा मोहचिकित्सां रोगचिकित्सां चेत्यर्थः । दीर्घकालं गत्वा समागतः सन् शङ्किते सूत्रे अर्थे च कं पृच्छेत् । नैव कंचनेतिभावः स्थापिताचार्यस्य-भिन्नवाचनाकत्वादितरे वा गच्छवासि आचार्यो मोहचिकित्सां रोगचिकित्सां वा कुर्वन्तिकं पृच्छंति, नैवकंचन पुर्वोक्तादेव हेतोस्ततस्ते वाचनाप्रदायकमलभमानागच्छान्तरमुपसंपद्येरन् । गच्छान्त-

शेषसम्पत्तौ न प्रश्नहेतोर्गणभेदः स्यात् । सम्प्रति श्रुतानेक पाक्षिकयावत्कथिकाचार्यस्थापने दोषमाह-

[भा.१३०१] न तरइ सो संधेउं अप्पाहारो वि पुच्छिय्यं देइ ।
अन्नत्थ व पुच्छंते सचित्तादीउ गिण्हंति ॥

वृ- स श्रुतानेकपाक्षिकस्थापितो यावत्कथिको आचार्यो भिन्नवाचकत्वात् न शक्नोति संधातुं विस्मृतमालापकं दातुमथवा श्रुतानेकपाक्षिकोऽल्पश्रुतोप्युच्यते । ततोऽल्पा धारः अन्यस्य सूत्रार्थस्य चाश्रय इति पृष्टः सन्नन्यं प्रष्टुमालापकं ददाति । अन्यत्र च गणान्तरे गत्वा पृच्छति ते गच्छान्तरवर्तिन आचार्यास्तेनोत्पादितंसचित्तादिकंगृह्णन्ति अगीतार्थानां न किञ्चिदाभाव्यमिति जिनवचनात्तस्य च तेषां समीपे पृच्छनात् । उपसंहारमाह-

[भा.१३०२] सुयतो अनेगपक्खं एए दोसा भवे ठवंतस्स ।
पव्वज्जणेगपक्खित, ठवयंते इमे भवे दोसा ॥

वृ- श्रुतानेकपक्षिणमित्वरं यावत्कथिकं वाचार्यं स्थापयत एते अनन्तरोक्तदोषा भवन्ति । प्रव्रज्यानेकपक्षिणं पुनरित्वरं यावत्कथिकं वा स्थापयत इमे वक्ष्यमाणा भवंति दोषाः ।

तानेव प्रतिपादयिपुराह-

[भा.१३०३] दोन्हवि बाहिरभावो सचित्तादीसु भंडणा नियमा ।
होइ स गणस्स भेदो सुचिरेण नए अम्हत्ति ॥

वृ- प्रव्रज्यानेकपाक्षिकेत्वरयावत्कथिकाचार्यस्थापने द्वयोरपि गच्छस्य वाचार्यस्येत्यर्थः । बहिर्भावो बहिर्भावोध्यवसायो भवत् तथाहि योऽसौ स्थापित आचार्यः स गच्छवर्तिनः साधुन् समस्तानपि परकीयान्मन्यते । साधवोऽपि च गच्छवर्तिनस्तं परमभिमन्यते । एवं परस्परं बहिभावाध्यवसाये सति स्थापितस्याचार्यस्य गचछवर्तिनां च साधुनामनिभाव्यानि सचित्तादीनि गृह्णतां नियमात् भण्डनं कलहो भवति, । तथा च सति प्रवचनोड्डाहः प्राक्कल्पव्यावर्णितप्रायश्चितप्रायश्चितापत्तिश्च अन्यच्च गच्छवर्तिनस्ते साधवो मन्यन्ते सुचिरेणापि प्रभूतेनापि कालेन गच्छता नास्माकमेष परकीयत्वात् । उपलक्षणमेतत् । सोऽप्यभिमन्यते सुचिरेणाप्येते परकीया इत्येवं परस्परमध्यवसायभावतो गणस्य गचछस्य भेदो भवन्ति । तस्मादित्वरो यावत्कथिको वा प्रथमभङ्गवर्ती स्थापयितव्यः, अत्रैवापवादमाह-

[भा.१३०४] अन्नयरनिगिच्छाए पढमासति तइय भंगमित्तरियं ।
तईय स्संवउसई बितितो तस्साणत्ति चउत्थो ॥

वृ- अन्यतरचिकित्सायां मोहचिकित्सायां वाचार्यमित्वरमुपलक्षणमेतत् । अभ्युद्यतमरणप्रतिपत्तौ अभ्युद्यतविहारपरिकर्मप्रतिपत्तौ वा यावत्कथिकमाचार्यमुत्सर्गतः प्रथमभङ्गवर्तिनं स्थापयेत्, प्रथमभङ्गवर्तिनोऽसति अभावे तृतीयं तृतीयभङ्गवर्तिनमित्वरमुपलक्षणमेतत् । यावत्कथिकं वा स्थापयेत्, तत सूत्रेऽर्थे च सशीघ्रं निष्पादयितव्यः । तृतीयस्यापि तृतीयभङ्गवर्तिन एव शब्दार्थः । असत्यभावे पुनर्द्वितीयो द्वितीयभङ्गवर्ती स्थाप्यस्तस्याप्यसति अभावे चतुर्थभंगवर्ती, । तत्र योऽसौ चतुर्भङ्गवर्ती स्थापयितव्यो भवति स एतादृशगुणः-

[भा.१३०५] पयतीए भिउसहावं पगतीए संमतं विनीतं वा ।
नाऊण गणस्स गुरुं ठविंति अनेगपक्खिपि ॥

वृ- अनेकपक्षिणमपि प्रव्रज्यापक्षरहितं श्रुतसमानपक्षरहितमपि प्रथमद्वितीय भङ्गवर्त्यसंभवे प्रकृत्या

स्वभावेन नतु कपटभावतो मृदुस्वभावमरोषण स्वभावं तथा प्रकृत्या स्वभावेन सम्मतमभिमतं समस्तस्यापि गच्छस्येति गम्यते स्वजनसम्बन्धभावतो वा निजकमात्मीयं ज्ञात्वा गणस्य गुरुः स्थापयितव्यः । तस्य चतुर्भङ्गवर्तिनः सचित्तादिषु य आभवन व्यवहारस्तमभिधित्सुराह—

[भा.१३०६]　　　साहारणं तु पढमे बिइए खेत्तंमि तइय सुहदुक्खे ।
　　　　　　　　अनहिज्जंते सीसे सेसे एक्कारस विभागा ।।

**वृ-** प्रथमे वर्षे साधारणं विमुक्तं भवतियो यावल्लभ्यते तस्य तद्द्वितीये वर्षे यत् क्षेत्रे तदीये लभ्यते तद्गच्छवर्तिनां साधूनां, शेषं गणधरस्य, तृतीये वर्षे समदुःखोपभोगालभन्ते । तत्तेषामेव गच्छवर्तिनामाबावचाति शेषं गणधरस्य, चतुर्थादिषु वर्षेषु सर्वगणधरस्य, एष आभवव्यवहारो-ऽनधीयानेशिष्ये । किमुक्तं भवति । ये स्थापिताचार्यस्य समीपे न पठन्ति तान् प्रतिद्रष्टव्यः, । ये पुनराचार्यस्य समीपे पठन्ति [illegible] विभागाः प्रकारा आभवव्यवहारस्य तानेव प्रतिपिपादयिषुराह—

[भा.१३०७]　　　पुव्वुद्दिट्ठं पडित्थं पच्छुद्दिट्ठं पवाद्यंतस्स ।
　　　　　　　　संवच्छरंमि पढमे पडिच्छइ एव सचित्तं ।।

**वृ-** प्रतीच्छके गच्छान्तरादध्ययनार्थमधिकृतच्छोपसम्पदं प्रपन्ने यत् आचार्यपदस्थापनातः पूर्वमुद्दिष्टं सचित्तं उपलक्षणमेतत् अचित्तं वस्त्रपात्रकंबलादि प्रथमे वर्षे भवति सम्पद्यते तत्सर्वं तस्य प्रतीचछकस्य एष प्रथमो विकल्पः । यत्पुनराचार्य पदस्थापनातः पश्चादुद्दिष्टं प्रथमे वर्षे सम्पद्यते । सचित्तादिकं तत्सर्वं प्रवाचयतोऽधिकृतस्थापनाचार्यस्याध्यापयितुः एष द्वितीयो विकल्पः ।

[भा.१३०८]　　　पुव्वं पच्छुद्दिट्ठं पडिच्छए जंतु होइ सचित्तं ।
　　　　　　　　संवच्छिरंमि बितिए तं सव्वं पवायवं तस्स ।।

**वृ-** आचार्यपदस्थापनातः पूर्वं उद्दिष्टं यत्सचित्तमुपलक्षणमेतत् अचित्तं वा द्वितीये संवत्सरे भवति सम्पद्यते केत्याह-प्रतीच्छके गच्छान्तरादागत्य सूत्रस्यार्थस्य वा प्रतीच्छनं प्रतीच्छा तया चरति प्रतीच्छिकस्तस्मिंस्तत् सर्वं प्रवादयतोऽध्यापयितुरधिकृतस्थापिताचार्यस्य वेदितव्यम् ।

एष तृतीयोऽपि विकल्पः ।।

[भा.१३०९]　　　पुव्वं पच्छुद्दिट्ठं सीसंमि उ जंतु होइ सचित्तं ।
　　　　　　　　संवच्छरंमि पढमे सव्वं गुरुस्स आभवति ।।

**वृ-** आचार्यपदस्थापनातः पूर्वं पश्चाद्वा उद्दिष्टं यत्सचित्तमुपलक्षणत्वादस्याचित्तं वस्त्रादिकं शिष्ये प्रथमे वर्षे भवति सम्पद्यते तत्सर्वं भवति । एष चतुर्थो विभागः ।।

[भा.१३१०]　　　पुव्वुद्दिट्ठं तस्स य पच्छुद्दिट्ठं पवाइयं तस्स ।
　　　　　　　　संवच्छरंमि बिइए सीसंमि उ जंतु सच्चित्तं ।।

**वृ-** यत्सचित्तमचित्तं वाचार्यपदस्थापनातः पूर्वमुद्दिष्टं सचित्तमचित्तं वा शिष्ये द्वितीये संवच्छरे भवति सम्पद्यते तत्सर्वं तस्य शिष्यस्या भवति एष पञ्चमो विभागः । यत्पुनराचार्यपदस्थापनातः पश्चादुद्दिष्टं सचित्तमचित्तं वा शिष्ये द्वितीये संवत्सरे भवति सम्पद्यते तत्सर्वं प्रवाचयतोऽधिकृतगुरोराभवति एष षष्ठो विभागः ।

[भा.१३११]　　　पुव्वं पच्छुद्दिट्ठं सीसंमि उ जंतु होइ सच्चित्तं ।

संवच्छरंमि तइए, तं सव्वं पव्वाइयंतस्स ॥

**वृ-** यः पूर्वपश्चाद्वाचार्य पदस्थापनातः उद्दिष्टं सचित मचित्तं वा शिष्यं तृतीये संवत्सरे भवति सम्पद्यते तत्सर्वं प्रवाचयतो ऽधिकृतगुरोराभवति, एष सप्तमो विभागः ॥

**[भा.१३१२]** पूव्वुद्दिट्ठं तस्स पच्छुद्दिट्ठं पवाययंतस्स ।
संवच्छरंमि पढमे तं सिस्सिणी ए उ सच्चित्तं ॥

**वृ-** आचार्यपदस्थापनातः पूर्वमुद्दिष्टं सचित्तमचित्तं वा प्रथमे संवत्सरे शिष्यिण्याः शिष्याया भवति संपद्यते, तत्सर्वं तस्याः शिष्याया आभवति, एषो अकष्टमो विभागः । यत्पुनराचार्यपदस्थापनातः पश्चादुद्दिष्टं सचित्तादिकं प्रथमे संवत्सरे शिष्यायाः सम्पद्यते । तत्सर्वं प्रवाचयतोऽधिकृतस्य गुरोराभाव्यम् एष नवमो विभागः ॥

**[भा.१३१३]** पुव्वं पच्छुद्दिट्ठं सिस्सीए उ जं तु सचित्तं ।
संवच्छरंमि बितिए एतं सव्वं पवाययंतस्स ॥

**वृ-** पूर्वं पश्चाद्वा यदुद्दिष्टं सचित्तमचित्तं वा द्वितीये संवत्सरे शिष्यायाः सम्पद्यते तत्सर्वं प्रवाचयतोऽधिकृतस्य गुरोः एष दशमो विभागः ॥

**[भा.१३१४]** पुव्वं पच्छुद्दिट्ठं पडिच्छयाए उ संति सच्चित्तं ।
संवच्छरंमि पढमे तं सव्वं पवाययंतस्स ॥

**वृ-** पूर्वं पश्चाद्वा यदुद्दिष्टं सचित्तमुपलक्षणमेतदचित्तं वा प्रथमे वर्षे प्रतीच्छिक्याः शिष्याः सम्पद्यते । तत्सर्वं प्रवाचयतोऽधिकृतस्य गुरोरेष एव न्यायो द्वितीयादिष्वपि संवत्सरेषूक्ताः एकादशापि विभागाः साम्प्रतमुपसंहारमाह—

**[भा.१३१५]** जम्हा एते दोसा दुविहे अपक्खिअए उ ठवियंमि ।
तम्हाउ ठवेयव्वो कमेणिमेणं तु आयरिओ ॥

**वृ-** द्विविधेप्यपाक्षिके श्रुतपक्षरहिते प्रव्रज्यापक्षरहिते चेत्यर्थः । स्थापिते चाचार्ये यस्मादेते अनन्तरोदिता दोषास्तस्मादनेनान्तरोदितेन पढमा सति तइयंभंगमित्यादि लक्षणेन क्रमेण स्थापयितव्य आचार्य इति । अथ प्रथमभङ्गवर्ती केन विधिना स्थापयितव्यः । उच्यते—

**[भा.१३१६]** एयस्सेग दुगाही निप्फण्णा तेसिं बंधइ दिसातो ।
संपुच्छणा उ लोयण दाने मिलिएण दिट्ठंतो ॥

**वृ-** एतस्य प्रथमभङ्गवर्तिनः स्थापिताचार्यस्य एकद्विकादयः एकद्वित्रिचतुरादयः शिष्याः निष्पन्नाः भवन्ति । ततस्तेषां दिश आचार्यत्वमुपाध्यायत्वं चेत्यर्थः बध्नाति तथा योऽसावाचार्यैः सन्दिष्टो यथैव सूत्रतो अर्थतश्च निर्माप्याचार्यपदे स्थापनीय स्तस्य स्थापितगणधरेणाचार्यपदे स्थापितस्य शिष्याणां विप्रतारणार्थं सम्प्रच्छनं परैरुदन्तवहनमवलोकनं साक्षात्समीपं गत्वा संयमयात्रा निर्वहन् प्रच्छनं दानं वस्त्रपात्रादेः एतेषां समाराहोद्वन्द्वः । तस्मिन्नपि कृते विपरिणामाभावे मिलितेन गोपालद्वयमिलनेन दृष्टान्तो वक्तव्यो द्वयोर्गोपालयोर्मिलितयोः प्रभूता धनवृद्धिरभूत्तथा युष्माकमस्माकं च मिलितानां विहरतां भूयान् ज्ञानादिलाभो भवतीति मिलितैर्विहर्तव्यमिति ॥ साम्प्रतमेनामेव गाथां विवरीपुरिदमाह-

**[भा.१३१७]** गीयमगीया बहवा गीयत्थ सलक्खणा उ जे तत्थ ।
तेसिं दिसाउ दाउं वियरंति सेसं जहरिहं तु ॥

वृ- गच्छे बहवः साधवो गीयमगीया इति गीतार्था अगीतार्थाश्च । तत्र ये गीतार्थास्तत्रापिस-लक्षणाचार्यलक्षणोपेता तेषां दिश आचार्यपदानि दत्वा शेषान् साधून् यथार्ह यथायोग्यतया केचिदनुरत्नाधिकत्वेन केचित्सामान्यतः शिष्यत्वेन वितरति प्रयच्छति । एतच्च तदा द्रष्टव्यं यदा प्रत्येकं बहवः शिष्याः प्रप्यन्ते । अन्यथा त्वेकएवाचार्यः स्थापनीयः शेषाः समस्ता अपि शिष्यत्वेन सम्बध्यन्ते । तत्रापि सलक्षणानां दिशो ज्ञायन्ते । एतदेव सुव्यक्तमभिधित्सुराह–

[भा.१३१८] मूलायरि गयनित्तो अनुसरिसो तस्स होउ वज्झातो ।
गयमगीया सेसा भज्झिलया होंति सीसाहा ।।

वृ- मूलाचार्यो नाम रात्निको रत्नाधिकः । तस्य मूलाचार्यस्याऽनुसदृशोऽनुरुपोपाध्यायः शेषास्तु ये गीतागीतार्थास्ते तस्य सब्भिलगा अनुरत्नाधिका अगीता अगीतार्था हकारो अलाक्षणिकः शिष्या भवन्ति ।।

[भा.१३१९] रायनियागीयत्था अलद्धिया धारयंति पुव्वदिसं ।
अपहुव्वं त सलक्खण केवलमेग दिसाबंधो ।।

वृ- ये पुनरात्निकाव्रतपर्यायेणाधिकाः गीतार्थाः श्रुतसम्पदुपेता व्रतश्रुतनिष्पन्नाश्च केवलं सङ्ग्रहे उपग्रहे वाऽलब्धिकाः ते पूर्वदिशं पूर्वाचार्यप्रदत्तं दिशमनुरत्नाधिकत्वलक्षणं धारयन्ति । न त्वाचार्य-पदमुपाध्यायपदं वा तेषामारोप्यते लब्धिहीनत्वात् । एष विधिः यावन्तः स्थापिता आचार्यास्तेषां प्रत्येकमनुगन्तव्यः । एतच्च तदा क्रियते यदा भूयांसः स्थाप्यन्ते । अपहुव्वंत इत्यादि अप्रभवति प्रत्येकमाचार्याणां साधुपरिवारे भूयस्यऽप्राप्यमाणे केवलमेकस्मिन् लक्षणे विशिष्टाचार्यलक्षणोपेते दिग्बन्ध आचार्यपदाध्यारोपः क्रियते । एतदेवाह–

[भा.१३२०] सीसे य पहुव्वंतं सव्वेसिं तेसिं होइ दायव्वा ।
अपहुव्वं तेसु पुन केवलमेगे दिसाबंधो ।।

वृ- शिष्ये शिष्यवर्गे प्रत्येकं भवति परिपूर्णतया भवति तेषामाचार्यलक्षणोपेतानां सर्वेषामपि दिशो दातव्याः । अप्रभवस्तु प्रत्येकं पूर्णतया साधुष्वप्राप्यमाणेषु केवलमेकस्मिन् सलक्षणेतरं दिग्बन्धः कर्तव्यः । शेषाणां तु सलक्षणानां दिशोऽनुज्ञाप्याः साम्प्रतं तेष्वाचार्यपदस्थापितेषु उपकरणदान-विधिमाह–

[भा.१३२१] अचित्तं च जहरिहं दिज्जइ तेसुं च बहुसुगीएसु ।
एसविही अक्खातो अगीएसुं इमो उ विही ।।

वृ- तेषु आचार्यपदस्थापितेषु बहुषु गीतार्थेषु अचित्तं वस्तुपात्रादि उपकरणं यथार्हं यो यावन्मात्रार्हस्तस्य तावन्मात्रं दीयते, एष विधिराख्यातो गीतार्थेषु सूत्रार्थनिष्पन्नेषु आचार्यलक्षणोपेतेषु; अगीतेष्वनधिगतसूत्रार्थेषु आचार्यलक्षणोपेतेष्वयं वक्ष्यमाणो विधिर्द्रष्टव्यस्तमेवाह–

[भा.१३२२] अरिहं व अनिम्माउं नाउं थेराहणंति जो ठवितो ।
एयं गीयं काउं दिज्जाहि दिसं अनुदिसं वा ।।

वृ- अर्हो नाम लक्षणोपेततयाचार्यपदयोग्यः परमद्यापि सूत्रे अर्थे च न विनिर्मातस्तमर्हमनिर्मातं ज्ञात्वा यो गणधरस्तत्काले स्थापतस्तं स्थावरवृद्धाचार्या भणन्ति यथा एतं साधुं गीतं गीतार्थं कृत्वा दद्यात् भवान् दिशमनुदिशं वा ।

**[भा.१३२३]** सो निम्माविय ठवितो अत्थति जइ तेण सिट्ठो नईं ।
अह नवि चिठति तहियं संघाडो तो सि दायव्वो ।।

**वृ-** यो सावाचार्येण सन्दिष्टो यथैतं साधुं निर्माप्य एतस्मै दिशमनुदिशं वा दद्यात् । स निर्मापितो निर्माप्य चाचार्यपदेस्थापितः । ततः स यदि निर्मापितस्थापितस्तेन सह तिष्ठति विहरति ततो लब्धं समीचीनं । अथ नेव अपि शब्द एवकारार्थो न तिष्ठति । तत्र तस्य समीपे तर्हि से तस्य सङ्घाटो दातव्यः यश्च पूर्वाचार्येण वैयावृत्तकारी दत्तः सोऽपि तेन सार्धं विहरति । तत्र ये स्थापितगणधरेणैको द्वौ त्रयो वा सहाया दत्ताः यश्च पूर्वाचार्यप्रदत्तो वैयावृत्यकरस्तान् पाठयति । ये वाभिनव शिष्यका उपस्थिताः प्रव्राजितास्तेऽप्यात्मनः शिष्यत्वेनसंबन्धनीयाः । एवं सञ्जातपुष्टविहारः सन्नन्यत्र विहारेण गतस्तस्य तथा विहरतः शिष्यान् स्थापितगणधरो विपरिणमयितुकामो यत्समाचरति तदुपदर्शयति--

**[भा.१३२४]** पेसेइ गंतुं व सयं व पुच्छे से बंधमाणो उवहिं व देतो ।
सज्झंतियासिं च समल्लियावि सचित्तमेवं न लभे करेंतो ।।

**वृ-** यत्र स निर्मापितस्थापित विहरति तत्रोदन्तवाहकान् साधून् तच्छिष्याणां प्रेषयति । अथवा स्वयमन्तरान्तरागत्या तान् पृच्छति, यथा संस्तरति यूयं सुखेन यद् भो भवतां नास्ति ततः कथयत, येनाहं ददामीति; तथा तान् शिष्यानात्मनः संबंधयन् उपधिं [illegible] ददाति । तथा ये स्वाध्यायान्तिकाः स्वाध्यायनिमित्तं समीपस्थायिनो अनुरत्नाधिका गीतार्था इत्यर्थः तान् तेषां निर्माप्य स्थापितानामाचार्याणां सक्तानात्मनः समालापयति संश्लेषयति लीङ् श्लेषणे इति वचनात् एवं तेन गीतार्थाः शिष्याश्च विपरिणम्यमाणा निर्मापितस्थापितस्य समीपं मुक्त्वा तं स्थापित गणधरमुपसंपद्यंते, सचैवं सचित्तं साधुवर्गलक्षणमात्मीकुर्वन् न लभते, व्यवहारतो न ते तस्या भवन्तीति भावः अथैवमपि ते विपरिणम्यमाना न विपरिणमन्ति नापि तस्य समीपमायान्ति ततोऽनेन दृष्टान्तेन तान् सम्बन्धयन्ति तमेव दृष्टान्तमाह-

**[भा.१३२५]** गोवालगदिट्ठंतं करेइ जह दोन्नि भाउगा गोवा ।
रक्खंती गोणीओ, पिहप्पिहा असहिया दोवि ।।

**[भा.१३२६]** गेलण्णे एगस्स उ, दिना गोणी उ ताहि अन्नस्स ।
इय नाऊणं ताहि सहिया जाया दुवग्गावि ।।

**वृ-** दोनि गोवाला सहोयरभाउगा भंडणं करेत्ता पत्तेयं पत्तेयं वेयणएण गावीतो रक्खंति । अन्नया तेसिं एगो रोगी जातो ततो तेन जाव न रक्खिया तो गावीतो परिहीणो जातो, अन्नया बितितो पडिलग्गो सो वितहेव परिणीणो ततो तेहिं एगागयिस्स न सोहमिति चिंतिऊण परोप्परंपीती कया, तो एको पडिलग्गो । तस्स वियातो गावीतो विइतो रक्खइ, एवं इयरस्सवि । एवं तेसिंदव्वपरिवड्ढी जाया । एवं अम्हंपि वीसुंवीसुं विहरंताणं परिहानी भवति तम्हा मिलिया विहरामो जेण विउला नाणादीणं वड्ढी हवइ । जं तुब्भं तं तुब्भं चेव नाहं तं हरामि । एवं समल्लियावेत्ता सीसे सज्झंतिए यदि परिणामेइ तहवि सो न लहइ । सम्प्रतक्षरयोजनागोपालकदृष्टान्तं करोति । यथा-द्वौ गोपौ भ्रातृकौ तौ द्वावप्यसहितौ पृथक् पृथक् वेतनेन गा रक्षतः अन्यदा एकस्य ग्लानत्वे गा अन्यस्य गोस्वामिना दत्ता स वेतनात्परिभ्रष्टः । एवमितरोऽपि ग्लानत्वे वेतन परिहीनो जातस्ततत इति पृथक् पृथक् असंहितस्थितस्य महती द्रव्यहानिरिति ज्ञात्वा जातौ द्वावपि सहिताविति उपसंहारमाह—

**[भा.१३२७]** एवं दोनिवि अम्हे पिहप्पिहा तह विहरिमो समयं ।
वाघातेण णोन्न सीसातो परं च न भयंति ॥

**वृ-** एवं द्वयोरपि वयं यद्यपि प्रथक् प्रथक् तिष्ठामः तथापि समकं सहिततया विहरामो येन व्याघाते ग्लानत्वादि लक्षणेऽन्योन्यज्ञानादिहानिर्नोप जायते शिष्या वा परं गच्छान्तरं न भजन्ते । एवमपि स कुर्वाणो न कुरुते शिष्यान् ।

**मू. (६२)** *बहवे परिहारिया बहवे अपरिहारिया इच्छेज्जा एगतो एगमासं दुमासं वा तिमासं वा चाउ मासं वा पंचमासं वा छम्मासं वा वत्थए ते अन्नमन्नं संभुंजति, अन्नमन्नं नो संभुंजइ मासंते तओ पच्छा सव्वेवि एगओ संभुंजति ।*

**वृ-** अथास्य सूत्रस्य कः सम्बन्ध इति संबन्धप्रतिपादनार्थमाह-

**[भा.१३२८]** असरिसपक्खे गओ तिए परिहारो एस सुत्तसंबंधो ।
काऊणवि तेगिच्छं साइज्जया गते सुत्तं ॥

**वृ-** असदृशपक्षिको नाम द्वितीयभङ्गवतो चतुर्थभङ्गवतो वा तस्मिन् स्थापिते किल चतुर्गुरु नामप्रायश्चित्तपरिहारप्रस्तावादधि कृत परिहारसूत्रस्योपनिक्षेपः । एष पूर्व सूत्रेण सहाधिकृत सूत्रस्य सम्बन्धः ॥ अत्रैव प्रकारान्तरमाह-काऊण वेत्यादि रोगचिकित्सां कुर्वता मनोज्ञमौषदं मनोज्ञं वा भोजनमनुरागेणास्वादितं तत्र च प्रायश्चित्तं परिहारतपस्ततो रोगचिकित्सां कृत्वा मनोज्ञं च भोजनादिकमास्वाद्य समागतस्य प्रायश्चित्तं परिहारतपो भवतीति ज्ञापनार्थमधिकृतं परिहारविषयं सूत्रम् । एष द्वितीयः सम्बन्धः प्रकारः । अधुना तृतीयमाह—

**[भा.१३२९]** अहवा गणस्स अपत्तियं तु ठावेंतो होइ परिहारो ।
एसो तिलएसोति ठवेज्जउ भंडणं सगणे ॥

**वृ-** यो गणधरः स्वाभिप्रेतं गणासंमतं गुणरहितमपि स्थापयितुकामोऽभिमान वशेनैष योग्यो न पुनरेष गणसम्मतो योग्य इत्येवं स्वगणे भंडनं कृत्वा स्थापयति तस्मिन् गणस्य गच्छस्य अप्रीतिकं यथा भवति । एवं स्वाभिप्रेममाचार्यं स्थापयति प्रायश्चित्तं भवति परिहारः परिहारतपः, । तत एतदर्थं प्रतिपादनार्थं दिग्बन्धसूत्रानन्तरं परिहारसूत्रमेष तृतीयः सम्बन्धः । सम्प्रति चतुर्थं पञ्चमं च सम्बन्ध प्रकारमाह—

**[भा.१३३०]** परिहारो वा भणितो न तु परिहारंमि वण्णिया मेरा ।
ववहारे वापगते अह ववहारो भवे तेसिं ॥

**वृ-** वा शब्दः प्रकारान्तरद्योतनार्थः । अधस्तात् परिहारउक्तो न तु तस्मिन् परिहार योढव्ये व्यावर्णिता मर्यादाविधिरित्यर्थः । ततः परिहार विधिप्ररूपणार्थमेष आरम्भः क्रियते । अयं च चतुर्थः सम्बन्धः प्रकारः । पञ्चममाह । वा शब्दोऽपि प्रकारान्तरद्योतनार्थः । व्यवहारार्थं किल व्यवहाराध्ययनं प्रकृतं । ततस्तस्मिन् कदाशंतोवदनवर्तमाने कृते व्यवहारे अह एष एतेषां परिहारिकाणामपरिहारिकाणां च व्यवहारो भण्यते । अनेन सम्बन्धपञ्चकेनायातस्यास्य व्याख्या-बहवः प्रभूताः परिहारिका बहवोऽपरिहारिकाः कारणवशतः तीर्थकरोपदेशेच्छया न स्वच्छन्देच्छया इच्छेयुरेकत एकत्रस्थाने एकमासं वा द्विमासं वा त्रिमासं वा चतुर्मासं वा पञ्चमासं वा षण्मासं वा वस्तु अन्योऽन्यं परस्परमपि परिहारिका इति शेषः । संभुञ्जते सर्वप्रकारैः भुञ्जते अन्नमन्नं न संभुञ्जतित्ति परिहारिका यावत्तपो वहन्ति तावत्ते परस्परमपरिहारिकैर्वा समं न संभुञ्जन्ति । यैः षण्मासाः सेविता तेषां यः षण्मासो परिवर्त्तीमासस्तं यावत्ते

परिहारिका: परस्परं परिहारिकैः सममुपलक्षणमेतत् । अपरिहारिकैर्वा सममेकत्र न संभुञ्जते । आलापनादीनि कुर्वन्ति तत उपरितनमास परिपूर्णो भवनानन्तरं पश्चात् सर्वेऽपि परिहारिका अपरिहारिकाश्च एकत्र एकत्रस्थाने सर्वप्रकारैर्भुञ्जते । एत सूत्र संक्षेपार्थः । अत्र पर आह-ननु बहवः परिहारिका अपरिहारिकाश्च कथमेकत्र संभवन्ति येनाधिकृतं सूत्रमुपपद्येत तत आह—

**[भा. १३३१]** कारणिगाते लीना बहुगा परिहारिका भवेज्जाहि ।
अपरिहारिभोगो परिहारि न भुञ्जए बहवो ।।

**वृ-** बहवः पारिहारिका एकत्र मिलिता भवेयुः कारणिकाः कारणवशेनेति भावः ततो नाधिकृत सूत्रानुपपत्तिः तत्रापरिहारिकाणामेकत्र परस्परं भोगो भवति । एतावता ते अनमनं संभुञ्जतीति व्याख्यातं यस्तु परिहारी स परिहारतपो वहन् परिहारिभिर्वा समं न भुङ्क्ते । एतेन अन्नमन्नेनो संभुञ्जतीति व्याख्यातम् । पारिहारिका नाम ये परिहारतपोरूपं प्रायश्चित्तं प्रपन्नाः । ये पुनः परिहारतपोरूपं प्रायश्चित्तं न प्रतिपन्नास्ते अपरिहारिकास्तत्र परिहारतपः प्रतिपादनविधिः परिहरणविधिश्च निशीथाध्ययने कल्पे च व्यावर्णितो यस्तु तत्र नोक्तस्तमिदानीं प्रतिपिपादयिषुराह—

**[भा. १३३२]** गिम्हाणं आवण्णो चउसुवि वासातु देंति आयरिया ।
पुनंमि मासवज्जण अपुने मासियं लहुयं ।।

**वृ-** इह ग्रीष्मग्रहणेन ऋतुबद्धकालग्रहणं तथाभृतुबद्धानां मासानां मध्ये एकमासं यावत् षण्मासं तावत् परिहारतप; समापन्न स्तद्वर्षारात्रे चतुर्षुमासेष्वपि दीयते अत्रार्थे च कारणं स्वयमेव वक्ष्यति यस्तु षण्मासं परिहारतपः प्रपन्नस्तस्य पूर्णे षण्मासे उपरि मासवर्जनं मासं यावदेकत्र भोजनवर्जनम् । एतेन मासादिके परिपूर्णो पञ्चरात्रिंदिवानि भोजनवर्जनमुपलक्षितं । तद्यानन्तरगाथायां स्वयमेव वक्ष्यति, । तत्र यावद्भोजनं प्रतिषिद्धं, तत्र तावत् परिपूर्णे भोजनं कुर्वतः प्रायश्चित्तं मासिकं लघु सम्प्रति पुनंमि मासवज्जणमित्येतद्व्याचिख्यासुराह—

**[भा. १३३३]** पनगं पनगं, वज्जेज्जइ मासो छण्हमासाणं ।
नयभद्द पंतदोसा, पुव्वुत्तगुणायतो वासो ।।

**वृ-**मासे मासे पञ्चकं पञ्चकं परिवर्धमानं तावत्पर्यन्ते यावत्षण्णां मासानामुपरिमासो वर्ज्यते, इयमत्र भावना-यो मासिकं परिहारतप आपन्नस्तस्य मासं वहतः पूर्वोक्तो विधिः आला(ल) पनवर्जनादिको वेदितव्यः । मासे तु व्यूढे उपरि पञ्चरात्रिंदिवानि यावदालापनादीनि सर्वाणि क्रियन्ते, नवरमेकं भोजनमेकत्र वर्ज्यते । एवं यो द्वौ मासावापन्नस्तस्य दशरात्रिंदिवानि, यस्त्रीन्मासान् तस्य पञ्चदश चश्चतुरो मासान् तस्य विंशतिः, यः पञ्चमासान् तस्य भिन्नमासं यावत् यस्तु षण्मासानापन्नस्तस्य षण्मासेषु व्यूढेषु उपरि मासं यावदेकत्रभोजनमेकं वर्ज्यते । शेषं त्वालापनादिकं सर्वं सर्वत्र दशरात्रिं दिवादी क्रियते, । अथ कस्माद्दतु बन्धेषु मासेष्वापन्नस्यापि वर्षारात्रैः तपो दीयते, । अत आह-नयभद्दपंत दोसा इत्यादि ऋतुबद्धे काले यदि परिहारतपो दीयते ततस्तस्मिन् दत्ते सति यदि मासकल्पे परिपूर्णे सति विहरन्ति तर्हि परिहारिकाणां परितापनादि दोषप्रादुर्भावः । अथ न विहरन्ति ततो भद्रकप्रान्तकृतदोषसम्भवः । भद्रकृता दोषा उद्गमादिकरणं, प्रान्तकृतदोषा अति चिरावस्थाने चमढनादिका, वर्षाकाले त्वेतेदोषाः प्रायो न संभवन्ति, । सर्वदर्शनिनां वर्षाकालस्य तपोऽनुष्ठानाश्रयतया सम्मतत्वेन कस्यचिदपि विशेषतः

विशेषतः प्रीतेर्द्वेषस्य वाऽसंभवात्तया पूर्वोक्तगुणाश्च कल्पाध्ययनप्रतिपादिता गुणाश्च वर्षाकाले अवाप्यन्ते, । ततो वर्षासु परिहारतपो दीयते अथ के ते पूर्वोक्ता गुणा इति विस्मरणशीलान् प्रति तान् भूय उपदर्शयति –

[भा.१३३४] वासासु बहुपाणा, बलिओकालोचिरं च ठायव्वं ।
सज्झायसंजमतवे धणियं अप्पा निजोतव्वो ।।

वृ- वर्षासु वर्षाकाले सर्वतः प्रायो बहवः प्राणास्ततो दीर्घा भिक्षाचर्या न भवति तथा स्निग्धतया स कालो बलिको बलियान् तपः कुर्वतः बलोपष्टंभं करोतीति भावार्थः । तथा चिरं च प्रभूतं कालं चैकत्र स्थातव्यमत एव स्वाध्याये संयमे तपसि च धणियमित्यर्थमात्मा नियोक्तव्यो भवति । तत एवं प्रभूत गुणो पदर्शनतो वर्षाकाले परिहारतपः प्रतिपत्तिः कार्या एतेन आवन्नो गिम्हाणं चउसुविवासासु देंति आयरिया इत्यत्र यदुक्तं कारणं स्वयमेव वक्ष्यतीति तत्समर्थितं । सम्प्रति षण्मासवाहनान्तरमुपरियन्मासो भोजनमधिकृत्य वर्ज्यते तत्र कारणमाक्षेपपुरः सरमभिधित्सुराह –

[भा.१३३५] मासस्स गुणानामं परिहरणा पुति निव्वलणमासो ।
ततो पमोयमासो भुंजणवज्जे न सेसेहिं ।।

वृ- अथ षणां मासानामुपरि मासस्य परिहरणं भोजनमधिकृत्य कस्मात्क्रियते । उच्यते निर्बलनार्थं प्रमोदार्थं वेति वाक्यशेषः, तथाहि [illegible] निर्वलितं न भवति, तावत्र तत्र क्षीरादिप्रक्षेप एवमेषोऽपिदुश्चरितदुरभिगन्धभावितो नियमादेतावताकालेन निर्वलितो भवति नान्यथा । तथा जिनवचनप्रवृत्तेः, तथा कश्चित्केनाप्यगम्यगामित्वेनालीकेनापि शपितो राजकुले च निवेदितः स ततगोलादिकं गृहीत्वा शुद्धः सन् मिथः संभाषणादिभिः प्रमोदं कृत्वा परस्परं स्वजनैः सह भुङ्क्ते, । एवमेषोऽपि पारिहारिकमात्मानमपराधेन मलिनं प्रायश्चित्तेन शोधयित्वा मासं यावन्मिथः संभाषणादिभिः प्रमोदमाधाय तैः सहैकत्र भुङ्क्ते, । तदेवमुक्तकारणवशतो अन्यैः सममसंभुञ्जमानो मासं यावदवतिष्ठते, तस्मादेतस्य मासस्य गौणं गुणनिष्पन्नं नाम द्विधा, तद्यथा-पूतिनिर्बलनमास इति प्रमोदमास इति पूतिर्दुरभिगन्धिस्तस्य निर्वलनं स्फेटनं तत्प्रधानो मासः पूति निर्वलनमासः तथा प्रमोदहेतुमासः प्रमोदमासः सचमासो भोजनेन वर्ज्यः परिहर्तव्यो न पुनः शेषैरालापादिभिः यथाभ्यां कारणाभ्यां मासवर्जनमेवं पंञ्चरात्रिं दिवादि परिवर्जनमपि भावनीयं किञ्चान्यदपि कारणमस्ति पञ्चरात्रिं दिवादि परिवर्जने ततस्तदभिधित्सुराह–

[भा.१३३६] दिज्जइ सुहं च वीसुं, तवसोसियस्स जं बल करंतु ।
पुनरवि य होइ जोगो अचिरादुविहस्स वि तवस्स ।।

वृ- इह यद्येकत्र भुङ्क्ते ततः सहैव स्वसंघाटकेनैषभुङ्क्ते, इत्यनादरबुद्ध्या यत्तपः शोषितस्य बलवर्धनकरं तस्य दानं न भवति, विष्वक्पृथक् प्रतिभोजने पुनस्तप शोषितगात्रोऽयमद्यापि न मंडल्यां भुङ्क्ते, इत्यादरबुद्धिभावतः तपसा शोषितस्य तद्बलवर्धनकरमशनादि तत्सुखेनैव सर्वैरपि साधुभिरपि दीयते । तस्यापि दाने को गुण इत्याह-बलवर्धनकराशनादिप्रदाने पुनरप्यचिरात् स्तोकेन कालेन द्विविधस्यापि तपसः परिहारतपसः शुद्धतपसश्चेत्यर्थः योग्योऽपि भवति ।

**मू. (६३)** *परिहार कप्पट्ठियस्स भिक्खुस्स नो कप्पइ, असनं वा पानं वा खाइमं वा साइमं वा दाउं वा अनुप्पदाउं वा थेरायणा वा देज्जा इमं तं अज्जो तुमं एतेसिं देहि वा अनुप्पदेहि वा, एवं से कप्पइ दाउं वा*

*अनुप्पदाउं वा कप्पइ से लेवं अनुजाणावित्तिए अनुजाणह भंते ! लेवाए, एवं से कप्पइ लेवं समासेवित्तए ।*

वृ- अथास्य सूत्रस्य कः सम्बन्ध उच्यते–

[भा.१३३७] एसा वूढे मेरा होइ अवूढे अयं पुन विसेसो ।
सुत्तेनेव निसिद्धो होइ अनुन्ना उ सुत्तेण ।।

वृ- एषा अनन्तरसूत्रप्रतिपादिता मर्यादा स्थितिर्भवति व्यूढे परिहारतपसि । अव्यूढे पुनः परिहारतपसि अयमधिकृतसूत्रेण प्रतिपाद्यमानो मर्यादाया विशेषः, एष पूर्वसूत्रेण सहाधिकृतसूत्रस्य सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-परिहारकल्पे स्थितः परिहारकल्पस्थितः, तस्य परिहारकल्पस्थितस्य भिक्षोर्न कल्पते अशनं पानं खादिमं स्वादिमं वा अन्यस्मै साक्षात्स्वहस्तेन दातुमनुप्रदातुं वा परम्परकेन प्रदातुमनुशब्दस्य परम्परकद्योतकत्वात् । अत्रैवानुज्ञातमाह । थेराणयमित्यादि यदि पुनः स्थविराणामिति वाक्यालङ्कृतौ वदेयुः इमं परिहारकल्पस्थितं भिक्षुं, अहो आर्य ! त्वमेतेभ्यो देहि परिभाजय अनुप्रदेहि वा, । एवं स्थविरैरनुज्ञाते सति से तस्य कल्पते दातुमनुप्रदातुं वा दाने अनुप्रदाने च तस्य हस्तो विकृतिद्रव्येण (प्रशेमि) खरण्टितो भवति [illegible] हस्तगतं अनुप्रज्ञापयितुं यथा भदन्त यूयमनुजानीथ, लेप खरंटित हस्तं लेवाए इति समासेवितुमेवमनुज्ञापने कृते सति से तस्य कल्पते लेपं विकृतिं हस्तगतां समासेवितुमुपलक्षणमेतदन्यदपि यदुद्धरितं तदप्यनुज्ञातं सत् कल्पते समासेवितुमिति सूत्रसंक्षेपार्थः, व्यासार्थं तु भाष्यकृत् विवक्षुः प्रथमतः सामान्यत आह सूत्रेण चेत्यादि सूत्रेणैव दाने अनुप्रदाने च प्रथमतो निषिद्धं तदनन्तरं तेनैव सूत्रेण दाने अनुप्रदाने च भवत्यनुज्ञा एवं संक्षेपतः सूत्रार्थे कथिते सत्याह–

[भा.१३३८] किह तस्स दाउ किज्जइ चोयगसुत्तं तु होइ कारणियं ।
सो दुब्बलो गिलायइ तस्स उवाएण देंते वा ।।

वृ- किह कथं केन प्रकारेण तस्य परिहारकल्पस्थितस्य भिक्षोर्दातुं क्रियते अशनादिकं तद्दानकरणस्य कल्पविरुद्धत्वात् । अत्र सूरिराह-हे चोदक ! सूत्रमिदं भवति कारणिकं कारणेन निवृत्तं कारणिकं कारणमधिकृत्य प्रवृत्तमित्यर्थः । तदेव कारणमाहसो दुब्बलो इत्यादि स परिहारकल्पस्थितो भिक्षुर्दुर्बलस्तपः शोषितशरीरत्वादत एव पदे ग्लायति । ततस्तस्यानुकम्पनार्थमेवमनेनोपायेन दानानुप्रदानकारापणलक्षणेन विकृतिं स्थविरा ददति प्रयच्छन्ति । तत एषापि परिहारकल्प समाचारीति न कश्चिद्दोषः सम्प्रति यथा तस्य दानमनुप्रदातुं वा करणीयं भवति येन च कारणेन स्थविरा अनुजानते तदेतदभिधित्सुराह–

[भा.१३३९] परिमिय असत्ति अनो सो विय परिभायणंमि कुसलो उ ।
उच्चूरपउरलंभे अगीय वामोहननिमित्तं ।।

[भा.१३४०] तवसोसीयमज्झो वा तज्य तब्भावितो भवे अहवा ।
थेरा नाऊणेवं वदंति भाएहि तं अज्जो ।।

वृ- इह यद्दानमनुप्रदानं वा परिभाजनमुच्यते तद्य यथा संभवति तथोपपद्यते साधुभिः सर्वैस्तपोविशेष प्रतिपन्नवर्जितैरेकत्र मण्डल्यां भोक्तव्यम् । किं कारणमिति चेदुच्यते-इह द्विविधा साधवो लब्धिमन्तो लब्धिरहिताश्च । तत्र ये लब्धिरहितास्ते बहिर्गतास्तथाविधं प्रायोग्यं न लभन्ते, । मण्डल्यां तूपविष्टानां लब्धिमत्साधुसङ्घाटकानीतपरिभाजनेन तेषामन्येषामपि च बालशैक्षवृद्धग्लानादीनां प्रायोग्यं भवतीति

तेषामनुग्रहणाय मण्डलीबन्धकरणं, मण्डलीबन्धे च कृते कस्यचिदजीर्णं भवति। जीर्णेऽपि च कोऽपि काश्चित् विकृतीर्भुङ्क्ते न सर्वाः सर्वास्ततः प्रचुरविकृतिलाभे सर्वजनानुग्रहाय परिभाजनं क्रियते। तत्र स परिहारकल्पस्थितोऽपि भिक्षुस्तपः शोषितशरीर इति तस्य विकृतिविषयं ध्युपपात्तश्रद्धा जाता। अथवा पूर्वं सदैव तस्यां विकृतौ भावित इति तद्भावनया तस्यामध्युपपत्ती जात स्वत एव तत्सथविरा ज्ञात्वा तदनुग्रहाय परिमिते विकृतिर्लाभे सति असन् अविद्यमानोऽन्यपरिभाजन कुशलो यः सर्वेषामौचित्येनापूरयति सोऽपि च परिहारकल्पस्थितः परिभाजनकुशल इति। सर्वसाधूनां वचनेन प्रकाश्यैवं वदति अहो आर्य! गाथायामोकारान्तता प्राकृतलक्षणवशात् त्वमेतेभ्यः साधुभ्यः परिभाजय, यदि पुनः उच्चूरं नानाविधं भवति। प्रचूरमतिप्रभूतं घृतादिलब्धं भवति तदा उच्चूरप्रच्चूरलाभे अगीतव्यामोहननिमित्तं अगीतार्था मा विपरिणमन्त्विति। यथा तद्वा कारणं वचसा प्रकाश्य तद्व्यामोहननिमित्तमेवं ब्रुवते आर्य त्वं साधुभ्यः परिभाजय।

[भा.१३४१] परिभाईय संसट्ठे, जो हत्थं संलिहावए परेण।
फुसइव कुड्डे चड्डे अननुण्णाए भवे लहुओ॥

वृ- आचार्योपदेशने परिभाजिते सति तस्य हस्तः संसृष्टो घृतादिना लिप्तो भवति तस्मिन् संसृष्टे यदि तथैव संसृष्टेन हस्तेनावतिष्ठते तर्हि प्रायश्चित्तं मास लघु, यथा हस्तं परेण संलेहापयति, तस्यापि प्रायश्चित्तं मास लघु। अथवा कुड्ये हस्तं स्पृशति तत्रापि मास लघु अथवा काष्टेन निघृष्य चर्दयति तत्रापि मासलघु,। अथाननुज्ञातः सन् स्वयं लेढिहस्तं तदापि।

[भा.१३४२] कप्पइ य दिन्नंमी चोयगवयणं च सेस सूपस्स।
एवं कप्पइ अप्पायणं च कप्पट्ठिती चेसा॥

वृ- वितीर्णे अनुज्ञाते सति कल्पति स्वयं स्वहस्तं परिलेढुं। इयमत्र भावना - यथाचार्यः समादिशति त्वं स्वहस्तं घृतादि विकृति खरंटितं स्वयमेव लेढि, ततः स लेढि। चशब्दादन्यदपि यत्परिभाजितशेषं तदप्याचार्येणानुज्ञातं भुङ्क्ते,। चोयग वयणं चेति अत्र चोदकवचनं यथा कथं परिहारिकस्य विकृतेरनुज्ञापनं युक्तमिति सूरिराह-सेस सूपस्स सूपकारकस्य यथा शेष माभाव्यं भवति तस्यापीति भावः। एतदुक्तं भवति यथा सूपकारः केनापि स्वामिना संदिष्ट एतावत्प्रमाणैस्तन्दुलमुद्गादिभिर्भक्तं निष्पाद्यैतावतः पुरुषान् भोजय, एवमादेशे लब्धे साधिते भक्ते भोजितेषु च पुरुषेषु यच्छेषमुद्धरति तत्सर्वं सूपकारस्याभाव्यम् एवमाचार्योपदेशतः परिहारिकेन परिभाजिते यच्छेषमुद्धरति तत्तस्य परिहारिकस्याभाव्यं, सूपकारदृष्टान्तं उपलक्षणं तेना पूपिकदृष्टान्तोऽपि वेदितव्यः। स यथैवं केनाप्यापूपिक आदिष्ट एतावता कणिक्कादिना द्रव्येण एतावत्प्रमाणं मण्डकादिकर्तव्यमेवमादेशे लब्धे तथैव मण्डकादिके निष्पादिते शेषं यदुद्धरति मण्डकादि तदा पूपिकस्या भवत्येवं परिहारिकस्यापि, तत एवं तपः शोषित शरीरस्याप्यायन निमित्तमाचार्यस्य कल्पते अनुज्ञापनमित्यदोषः, इतरस्त्वदोषः कल्पस्थितिरेषा यत ग्लायत आप्यायन निमित्तमेव मनुज्ञापनं कर्तव्यं, येन शेषं प्रायश्चित्ततपः सुखेन वहतीति सूपकारदृष्टान्तमेव सविस्तरं भावयति-

[भा.१३४३] एव इयाणं भत्तं करेहि दिनंमि सेस यं तस्स।
इय भाइय पज्जंते संसुव्वरियं च देंतस्स॥

वृ- एतावद्भिस्तन्दुलादिकैरेतावद्भक्तं कुर्विति समादेशे लब्धे निष्पादिते भक्ते दत्ते चोक्तप्रमाणेभ्यः

पुरुषेभ्यो भोजने यच्छेषं तत्तस्या भवति । इति एव अमुना प्रकारेणाचार्योपदेशतः पर्याप्तं भोजिते शेषमुद्धरितमस्य पारिहारिकस्य परिवेषकस्याचार्यो ददाति । सम्प्रति येन प्रमाणेनाचार्या उपदिशन्ति तत्प्रमाणमभिधित्सुराह—

**[भा. १३४४]** दव्वप्पमाणं तु विदितु पुव्वं, थेरा से दाएंति तयं पमाणं ।

जुत्ते विसेसं भवते जहा उ, उच्चूर लंभेतु पकामदानं ।।

**वृ-** इहाचार्यैः पूर्वं द्रव्यं प्रमाणयितव्यं यथेदं किंयुक्तप्रमाणमाहोश्चित्सपरिस्थापनमेवं पूर्वं द्रव्यप्रमाणं विदित्वा ज्ञात्वा स्थविरा आचार्याः से तस्य परिहारिकस्य तत्प्रमाणं दर्शयन्ति । यथा युक्तेऽपि युक्तप्रमाणेऽपि शेषं भवति । उच्चूरलाभे प्रचुरनानाविधघृतादिलाभे प्रकामदानं यावत् यस्मै रोचते तावत्तस्मै दीयतामित्येवं रूपमनुज्ञाप्यते ।।

**मू. (६४)** *परिहार कप्पट्ठिए भिक्खू सएणं पडिग्गहेणं बहिया अप्पाणं वेयावडियाए गच्छेज्जा, थेरा तं वएज्जा पडिग्गहेहि अज्जो ! अहंपि भोक्खामि वा पाहामि वा एवं नं से कप्पइ पडिग्गाहित्तए, तत्थ नो कप्पइ अपरिहारिएणं परिहारियस्स पड़िग्गहम्मि असनं वा पानं वा खाइमं वा साइमं वा भोत्तए वा, पायए वा, कप्पइ से सयंसि पडिग्गहंसि, सयंसि पलासगंसि वा कमढगंसि वा सयंसि वा खुवगंसि वा उद्धट्ठु भोत्तए वा पायए वा एस कप्पे अपरिहारियस्स पारिहारियओ ।।*

**वृ-** अस्य सूत्रस्य पूर्वसूत्रेण सह सम्बन्धेन प्रतिपादनार्थमाह—

**[भा. १३४५]** आयाणादिवसाने संपुडितो एस होइ उद्देसो ।

एगाहिगारियाणं वारेइ अतिप्पसंगं वा ।।

**वृ-** आदानमादिरवसानं पर्यन्तः तयोः साधर्मिकाधिकार प्रतिपादनादेष उद्देश सम्पुटितः तारकादि दर्शनादितः प्रत्ययः । इयमत्र भावना- अस्योद्देशकस्यादावन्ते च प्रत्येकं द्वे द्वे सूत्रे साधर्मिकाधिकार-प्रतिपादके । ततः एष उद्देशकः साधर्मिकारेणः सम्पुटितः सम्पुटितत्वाच्च सम्पुटनकरणमेवास्य सूत्रस्य सम्बन्धः । अथवा एकाधिकारिकानि यानि यान्यनन्तरमुद्दिष्टानि परिहारिकसूत्राणि तेषामेकाधि-कारिकारिकाणां पारिहारिकसूत्राणां यो भक्तदानैकत्र भोजनप्रतिषेधे अतिप्रसङ्गस्तं वारयत्यधिकृतेन सूत्रद्वयेनेत्येष पूर्वसूत्रेण सहास्य सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या- परिहारकल्पस्थितो भिक्षुः स्वकीयेन पतद्ग्रहणेन पतद्ग्रहणे वा वसतेर्बहिरात्मनः स्वशरीरस्य वैयावृत्याय भिक्षानयनायेत्यर्थः गच्छेत् स्थविराश्च तं गच्छन्तं दृष्ट्वा वदेयुरस्मद् योग्यमपि स्वपात्रके गृह्णीयात् । अहमपि भोक्ष्ये पास्यामि वा एकमुक्ते से तस्य कल्पते स्थविर योग्यं प्रतिगृहीतुं तत्र तस्मिन् आत्मयोग्य परिगृहीते सति नो कल्पते अपरिहारिकेण सता पारिहारिकस्य पतद्गृहे अशनं पानं खादिमं स्वादिमं भोक्तुं वा पातुं वा, किन्तु कल्पते से तस्याऽपारिहारिकस्य स्वकीये वा पतद्ग्रहे तुम्बादिमये स्वकीये वा पलाशके पलाशपात्रके स्थाले स्वकीये वा कमढके स्वकीये वा खुब्बए इति । पलाशादिपत्रमये दोणके उद्धट्ठु उद्धट्ठु इत्यवकृष्य अवकृष्य भोक्तुं वा पातुं वा उपलक्षणमेतत् । दुर्लभपानीयभावे कालाप्रापणे वा तत्पात्रे एव पारिहारिकेण समं कल्पते भोक्तुं पातुं वा । उपसंहारमाह- एष कल्पोऽपारिहारिकस्य पारिहारिकतपः पारिहारिकमधिकृत्य एष प्रथमसूत्र संक्षेपार्थः ।

**मू. (६५)** *परिहारकप्पट्ठिए भिक्खू थेराणं पडिग्गहेणं बहिया थेराणं वेयावडियाए गच्छेज्जा थेराय वदेज्जा पडिग्गहं हि अज्जो! अत्थ तुमं पि एत्थ भोयसि वा पाहसि वा एवं से कप्पइ पडिगाहित्तए, तत्थ नो कप्पइ पारिहारिएणं अपारिहारियस्स पडिग्गहंसि असनं वा पानं वा खाइमं वा साइमं वा भोयएवा पायएवा, कप्पइ से सयंसि पडिग्गहंसि सयंसि वा पलासगंसि वा सयंसि वा कमढगंसि सयंसि वा खुव्वगंसिवा पाणिसि उद्धट्टं उद्धट्टुं भोयए वा पायए वा एस कप्पे पारिहारियस्स अपारिहारियओत्तिबेमि ॥*

**वृ-** द्वितीयसूत्रसंक्षेपार्थस्त्वयम्-परिहारकल्पस्थितो भिक्षुः स्थविराणां पतद्भहेण वसतेर्बहिः स्थविराणां वैयावृत्याय भिक्षानयनायेत्यर्थः । गच्छेत् स्थविरश्च तं तथा गच्छन्तं दृष्ट्वा नूनं सर्वगृहेषु भिक्षाकालः समकं वर्तते ततोऽस्मद्योग्यमानीय पश्चादेष आत्मनो योग्यानयनाय प्रविष्टो न किमपि लप्स्यते । इति कारणवशतो वदेयुः प्रतिगृह्णियात् । त्वमप्यत्र भोक्ष्यसे पास्यसि वा । एवमुक्ते से तस्य कल्पते स्थविरस्य प्रतिगृहीतुं तत्र तस्मिन्नात्मयोग्यग्रहणे सति न कल्पते परिहारिकेणा पारिहारिकस्य पतद्ग्रहेऽशनं पानं स्वादिमं खादिमं वा भोक्तुं वा पातुं वा किंतु कल्पते तस्य स्वकीये वा पतद्ग्रहे स्वकीये वा पलाशके स्वकीये वा कमढे स्वकीयेखुव्वके भोक्तुं वा पातुं वा उपलक्षणं व्याख्यानमत्रापि द्रष्टव्यम् । एष कल्पपरिहारिकस्यापरिहारिकतोऽपरिहारिकमधिकृत्य इति ब्रवीमि तीर्थकरोपदेशतो न स्वमनीषिकयेति । सम्प्रति निर्युक्तिभाष्यविस्तरः—

**[भा. १३४६]**　　सपडिग्गहे परपडिग्गहे य बहि पुव्वपच्छतत्थेव ।
　　　　　　आयरिय सेहभिग्गह समसंडासे अहा कप्पो ॥

**वृ-** पूर्वं वसतेर्बहिर्भिक्षा नयनाय निष्क्रम्य स्वपतद्गृहे स्वयोग्यमानीय पश्चात्परपतद्ग्रहे आचार्ययोग्यमानयति । अथवा पूर्वं परपतद्ग्रहे आचार्ययोग्यमानीय पश्चात् स्वपतद्ग्रहे स्वयोग्यमानयति । अथवा कारणवशतस्तत्रैव एकस्मिन् पतद्ग्रहे उभययोग्यमानयति । आनीते स्थविरेण पूर्वं भुक्ते पश्चात्परिहारिकेण भोक्तव्यम् । अथ कालो न प्राप्यते ततं आचार्यः स्थविरः शैक्षाभिग्रहः परिहारकल्पौ द्वावपि समकमेकस्मिन् तपगद्ग्रहे भुञ्जते । तत्र च सण्डासोपलक्षितः शुनकमांसदृष्टान्तो वक्तव्यः । एष यथाकल्पो यथावस्थिता सामाचारी । साम्प्रतमेनामेव गाथां विवरीषुः प्रथमतः सपडिग्गहे य बहिंपुव्वपच्छ इति व्याख्यानयति:—

**[भा. १३४७]**　　कारणिय दोन्नि थेरो, सो व गुरु अहवकेणइ असहू ।
　　　　　　पुव्वं सयं व गेण्हइ पच्छा घेत्तुं व थेराणं ॥

**वृ-** अशिवादिकारणवशतो द्वौ आचार्य पारिहारिको कारणिकौ जातौ विमुक्तं भवति अशिवादिकारणवशतः शेषसाधून् देशान्तरं प्रेष्यतावेव केवलावेकत्र स्थानस्थितौ, तत्र योऽसौ गुरुः स स्थविर इति कृत्वा अथवा केनापि रोगेण ग्रस्त इति भिक्षामटितुमसहोऽसमर्थः यः पुनस्तस्य सहायः स परिहारतपः प्रतिपन्नो वर्तते । ततस्तत्रेयं सामाचारी पारिहारिकः पूर्वमात्मीयेन पतद्ग्रहेणात्मयोग्यमानीय मुक्त्वा आत्मीयं पतद्ग्रहं स्थापयित्वा पश्चात् स्थविरसत्कं पतद्ग्रहं गृहीत्वा स्थविराणां योग्यं गृहीतुमटति । अथवा पूर्वं स्थविरसत्कं कृत्वा स्थविरयोग्यमानीय स्थविराणां सम्पर्य पश्चादात्मीयेन पतद्ग्रहेण हिण्डत्वात्मना भुङ्क्ते । अत्र परस्यावकाशमाह:—

**[भा. १३४८]**　　जइ एस सामाचारी किमट्ठसुत्तं इमं तु आरद्धं ।

सपरिग्गहेतरेण व परिहारी वेयावच्चकरे ।।

**वृ-** यदि नाम एषा सामाचारी यथा पारिहारी पारिहारिकः स्वपतद्ग्रहेण इतरेण वा चार्यपतद्ग्रहेण यथाक्रमं स्वस्याचार्यस्य च वैयावृत्यकर इति तदिदं सूत्रद्वयं किमर्थमारब्धं सूत्रोक्तस्यार्थस्या संभवादाचार्यः प्राह-न सूत्रोक्तार्थासंभवः कारणतः सूत्रद्वयस्य पतितत्वादथ कानि कारणानि यद्वशादिदं सूत्रद्वयं पतितमत आह-

**[भा.१३४९]** दुल्लहदव्वं पडुच्च, व तव क्खेवियं समं वसतिकाले ।

दोसा कुव्वंति तयं, जं वुत्तमिहेव सुत्तंमि ।।

**वृ-** हे चोदक दुर्लभं द्रव्यं पानीयं प्रतीत्य यदि वा तपसा खेदितं पारिहारिकमथवा समकमेककालं सर्व गृहेषु सति भिक्षाकाले आचार्य परिहारिकौ न कुर्वतो यदुक्तमिहैव सूत्रे । यथाहि-परिहारिकतपसा खेदितः सन् स्थविरस्य चार्थाय द्वौ वारौ भिक्षामटितुमसमर्थः ।। ततस्तं पारिहारिकं स्वकीयेन पतद्ग्रहेणात्मनो अर्थाय हिण्डित्वा पश्चात् स्थविराणामर्थाय स्थविरपतद्ग्रहेण हिण्डिष्ये इति बुद्धया सम्प्रस्थितं स्थविरा असमर्थं ज्ञात्वा ब्रुवते । अस्माकमपि योग्यमात्मीयेन पतद्ग्रहणं प्रतिगृणीयास्तत उपरि एकस्मिन् वा पार्श्वे स्थविरयोग्यं गृहणाति । गृहीते च तथा तस्मिन् स्थविरस्ततः समाकृष्य समाकृष्य भुङ्क्ते, एषा स्थविरस्य सामाचारी; पारिहारिकस्य पुनरियं तं पारिहारिकः स्थविराणां पतद्ग्रहं गृहीत्वा स्थविरस्यार्थाय हिण्डित्वा पश्चाद्यात्मनो अर्थाय हिण्डिष्ये इति बुद्धया सम्प्रस्थितं दृष्ट्वा ग्रहादिकं वा परिमितं ज्ञात्वा स्थविरा भाषन्ते । आत्मनोप्यर्था यास्मदीय एव पात्रे प्रतिगृहणीया एवं सन्दिष्टः सन् स तथैव च गृहीत्वा समागतस्ततः स्थविरपतद्ग्रहादात्मीये पतद्ग्रहे पलाश भाजने कमढगे वा समाकृष्य समाकृष्य भुङ्क्ते । एषा परिहारिकस्य सामाचारी । एतावता तवखेवियमिति भावितं, सम्प्रति समं वसति काले इति भाव्यते-यत्र ग्रामे नगरे वा तौ स्थविरपरिहारिकौ व्यवस्थितौ तत्र सर्वगृहेषु समकालं भिक्षाकालोऽजनिष्ट, तं स्थविरा ज्ञात्वा द्वितीयं वारं प्रविष्टः सन् एष न लभतेति संप्रस्थितं भाषन्ते । एकत्रैवात्मनो मम च योग्यं गृहणीया इति तत्र चोभयोरपि मृग्यमाणं स्तोकं पानीयं लभ्यते, ततः स्थविरपतद्ग्रहस्य प्रक्षालनाय पानीयं न पूर्यते । तत् एतत् ज्ञात्वा स्थविरास्तं पारिहारिकं संदिश्यन्त्येकस्मिन्नेव पतद्गृहे द्वयोरपि योग्य गृह्णीयाः । एवं सन्दिष्टे पारिहारिकस्येयं सामाचारी तस्मिन् पतद्ग्रहे स्थविरयोग्यं भक्तं तत् विष्वग् गृहणाति द्वितीये पार्श्वे आत्मयोग्यमथवात्मयोग्यमधस्ताद् गृहणाति स्थविरयोग्यमुपरिष्टात् एवं गृहीत्वा वसतावागच्छति, । तत्राचार्यभोजनविधिः । तस्यैवैकस्य एकस्मिन् पार्श्वे उपरि वा यदाचार्ययोग्यं गृहीतुं तस्मिन्नाचार्यो भुङ्क्ते, पश्चात्पारिहारिको यदस्मिन् पार्श्वे अधस्ताद्वात्मयोग्यं गृहीतं तत् भुंङ्क्ते, । अथवा यत्स्थविरो भुंक्ते पश्चाद् भुङ्क्ते तावत्सूरो ऽस्तमुपयाति । ततो द्वावपि समकं भुञ्जाते । एतावता समति भावितं । एतदेव व्याचिख्यासुराह-

**[भा.१३५०]** पास उवरिं व गहियं कालस्स दव्वस्स वावि असतीए ।

पुव्वं भोत्तुं थेरा दलंति समयं च भुञ्जन्ति ।।

**वृ-** द्रव्यस्य पानीयस्यासति अभावे एकस्मिन् पार्श्वे उपरि वा यत् गृहीतमाचार्ययोग्यं तत्पूर्वं स्थविरा भुंक्त्वा पश्चाच्छेषं परिहारिकाय ददति । कालस्य द्वयोः क्रमेण भोजनकालस्यासति समकं वा एककालं तौ भुञ्जाते । सम्प्रति सण्डासोपलक्षितं शुनकमांसदृष्टान्तभावना क्रियते । यथा कोऽप्य ऽलर्केण शुना खादितः स यदि तस्यैव शुनकस्य मांसं खादति, ततः प्रगुणो भवति, अनेन कारणेन शुनकमांसं खाद्यते,

सचतं खादितुकामः कथमहं सर्वास्पृश्यं शुनकमांसं स्पृशामीति संदंशकेन मुखे क्षिपति, एवं पारिहारिकोऽपि कारणत एकस्मिन् पार्श्वे उपरिवा गृहीतं स्थविरसत्कं जुगुप्समान इव तत् परिहरन् आत्मीयं समुद्दिशति ।।

उद्देशकः - २ समाप्त

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता व्यवहारसूत्रे द्वितीयोद्देशकस्य [भद्रबाहुस्वामिरचिता निर्युक्तियुक्तं] संघदासगणि विरचितं भाष्यं एवं मलयगिरि आचार्येण विरचिता टीका परिसमाप्ता ।**

**उद्देशकः ३**

**वृ-** उक्तो द्वितीयोद्देशकः । सम्प्रति तृतीयमारभ्यते । तत्र चेदमादि सूत्रम् ।

**सू. (६६)** *भिक्खू इच्छेज्जा गणं धारित्तए, भगवं च से अपलिच्छिन्ने एवं से नो कप्पइ गणं धारित्तए, भगवं च से पलिच्छिन्ने एवं से कप्पइ गणं धारित्तए ।*

**वृ-** अथास्य सूत्रस्य कः सम्बन्ध ? तत आह-

**[भा.१३५१]** तेसिं चिय दोन्नंपि सीसायरियाण पविहरंताणं ।
इच्छेज्ज गणं वोढुं जइ सीसो एस संबंधो ।।

**वृ-** तयोरेव शिष्याचार्ययोः कारणवशतो द्वयोरपि केवलयोः प्रविहरतो यदि शिष्यो गणं वोढुं धारयितुमिच्छेत् तस्य विधिर्वक्तव्यः तद्विधिप्रतिपादनार्थमिदं सूत्रमित्येष पूर्वसूत्रेण सहास्य सूत्रस्य सम्बन्धः । प्रकारान्तरेण सम्बन्धमेवाह-

**[भा.१३५२]** तेसिंच कारणियाणं अन्नं देसं गयाय जे सीसा ।
तेसिं गतुं कोई गणं धरेज्जाह वा जोगो ।।

**वृ-** अथवेति प्रकारान्ते । तयोराचार्यपारिहारिकयोः कारणिकयोः कारणवशतः तथा स्थितयोर्ये अन्यं देशं गताः शिष्यास्तेषां मध्यात्कोऽपि भिक्षुः योग्यः समागत्य गणं धारयेत्, ततस्तद्विधिप्रतिपादनार्थमधिकृतसूत्रारम्भः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-भिक्षुश्चशब्द आचार्यपदयोग्यानेकगुणसमुच्चयार्थ इच्छेत् गणं धारयितुं भगवांश्च से तस्य भिक्षोरपरिच्छदः परिच्छदरहितः । परिच्छदश्च द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यतः परिच्छदः शिष्यादिपरिवारः । भावतः सूत्रादिकं । तत्र भगवानाचार्योऽपरिच्छदो द्रव्यतो भावतः पुनर्नियमात् सपरिच्छदो अन्यथाचार्यत्वायोगाच्चशब्दात भिक्षुश्च द्रव्यतोऽपरिच्छदो भावतः सपरिच्छदः । परिगृह्यते । एवं से इत्यादि एवममुना प्रकारेण से तस्य न कल्पते गणं धारयितुमेवं शब्दो विशेषद्योतनार्थः, । स चामुं विशेषं द्योतयति आचार्ये द्रव्यतोऽपरिच्छदे भिक्षोः सपरिच्छदस्य वा न कल्पते गणं धारयितुमिति, । भगवांश्च से तस्य द्रव्यतोऽपि परिच्छन्नः परिच्छदोपेतश्चशब्दात्सोऽपि च द्रव्यतोऽपि परिच्छन्नस्तत एवं से तस्य कल्पते गणं धारयितुमिति, विशेषद्योतनार्थः भाष्यकारो व्याख्यानयति ।

**[भा.१३५३]** थेरे अपलिच्छन्ने सयंपि च गहणा तत्थ ।
छन्नोथेरो पुन वा, इअरो सीसो भवेदोहिं ।।

**वृ-** स्थविरो नाम आचार्यः, । असावेव पूजावचनेन भगवान् शब्देनोच्यते । भगवानिति महात्मनः

संज्ञा । स स्थविरो अपरिच्छन्नः परिच्छदरहितः । चग्रहणात् चशब्दोपादानात् भिक्षुरपि स्वयमपरिच्छन्नः । तत्र स्थविरो अपरिच्छन्नो द्रव्यतः परिवाररहितो द्रष्टव्यः, । भावतः पुनर्नियमात्सपरिच्छदः । इतरः शिष्यः पुनर्द्वाभ्यामपि द्रव्यभावाभ्यामपरिच्छन्नो भवति, । तत्र भावतोऽपरिच्छन्नो नियमादयोग्य एव । इतरस्तु द्रव्यतोऽपरिच्छदो भावतः सपरिच्छदो योग्यः, । अत्राचार्ये द्रव्यतोऽपरिच्छदे किं सर्वथा भिक्षोर्गणं धारयितुं न कल्पते, उतास्ति कश्चित्कल्पनाप्रकारः ? अस्तीति ब्रूमस्तथा चाह--

**[भा. १३५४]**　　नोकारो खलु देसं, पडिसेहयती कयाइ कप्पेज्जा ।
उस्सन्नंमि उ थेरो, सो चेव परिच्छओ तस्स ॥

**वृ-** एवं से नो कप्पइ इत्यत्र नोशब्दो देशवचनत्वात् देशं प्रतिषेधयति । तेन कदाचित्कल्पेतापि, कदा कल्पते इति चेदत आह-अवसन्ने आचार्ये, । इयमत्र भावना-यद्याचार्यो भावतः सूत्राद्युपेतस्तपः संयमोद्यतस्तस्मिन् द्रव्यतोऽपरिच्छदे न कल्पते । अथ चेदवसन्नस्तर्हि तस्मिन् द्रव्यतोऽपरिच्छदे स परिच्छदे वा कल्पते । खलुशब्दो विशेषणार्थः । स चैतद्विशिनष्टि, यो भावतः सपरिच्छदस्तस्य कल्पते न शेषस्य, सपरिच्छदे चावसन्ने आचार्ये गणं धारयति शिष्यो य आचार्यस्य परिच्छदः परिवारः स एव तस्य शिष्यस्य भवति । व्यवहारतस्तस्याभवनार्तं । इतरस्य तु न किमप्याभवति । शिथिलत्वादिह परिच्छदविषया चतुर्भङ्गिका । तद्यथा-द्रव्यतोऽपरिच्छन्नो भावतश्चापरिछन्नः १, द्रव्यतोऽपरिच्छन्नो भावतः परिच्छन्नः २, द्रव्यतः परिच्छदो भावतोऽपरिच्छन्नः ३, द्रव्यतः सपरिच्छदो भावतश्च सपरिच्छदः ४ । तत्र चतुर्भङ्गवर्ती शुद्धः शेषास्त्वशुद्धाः । एष सूत्रार्थः अधुना निर्युक्तिविस्तरः ।

**[भा. १३५५]**　　भिक्खू इच्छा गण धारए अपव्वाविते गणो नत्थि ।
इच्छातिगस्सं अट्ठा महातलागेण ओवम्मं ॥

**वृ-** भिक्षोरिच्छा गणं धारयितुं । स च गणः स्वयमप्रव्राजिते नास्ति तस्मात् स्वयं साधवः प्रव्राजनीयाः । अथवा यद्यपि स्वयमप्रव्राजने गणो नास्ति । तथा यद्यपि यदावसन्न आचार्यो जातो भवति, तदा योऽसावाचार्यस्य गणाः स एव तस्य भवति । इच्छा च गणं धारयितिं त्रिकस्य ज्ञानादि-रत्नत्रयस्यार्थाय । न तु पूजासत्कारनिमित्तमत्रार्थे चौपम्यमुपमा महातडागेन । किमुक्तं भवति ? पद्म-सरसा महातडागेन गणपरिवर्धस्योपमा कर्तव्या । सा चाग्रे भावयिष्यते । एष निर्युक्तिगाथासंक्षेपार्थः । व्यासार्थं तु भाष्यकृद्विवक्षुः प्रथमत इच्छानिक्षेपमाह—

**[भा. १३५६]**　　जो जं इच्छइ अत्थं, नामादी तस्स सा हवइ इच्छा ।
नामंमि जं तु नामं इच्छति नामं व जस्सिच्छा ॥

**वृ-** यो नाम यमर्थं नामादिलक्षणमिच्छति, तस्य सा भवति इच्छा यो नामेच्छति तस्य नामेच्छा, स्थापनामिच्छतः स्थापनेच्छा । एवं द्रव्येच्छादिकमपि भावनीयं, । इच्छायाश्च निक्षेपः षोढातद्यथा-नामेच्छा, स्थापनेच्छा, द्रव्येच्छा, क्षेत्रेच्छा, कालेच्छा, भावेच्छा, । तत्र नामेच्छामभिधित्सुराह-नामंमीत्यादिना नाम्नस्तु नामविषया इच्छा । इयं यन्नाम यद्देवदत्तादिकमात्मन इच्छति देवदत्तादिकस्य नाम्नि (म्नः) इच्छानामेच्छेति भावः, । अथवा यस्येच्छेति नाम स नामनामवतोरभेदोपचारात् नाम चासौ इच्छा च नामेच्छा । स्थापनेच्छामाह—

**[भा. १३५७]**　　एमेव होइ ठवणा, निक्खिप्पइ इच्छ एव जं ठवणं ।
सामित्ताई जह संभवं तु दव्वादिसु भणसु ॥

वृ- एवमेवानेनैव नामगतेन प्रकारेण भवति स्थापना स्थापनेच्छा अतिदेशोक्तमेव यदिच्छति निक्षिप्यते सा स्थापना चासाविच्छा च स्थापनेच्छेति व्युत्पत्तेः स्थापनेच्छा । यतः स्थापनामिच्छति सा स्थापनेच्छा स्थापनाया इच्छा स्थापनेच्छेति व्युत्पत्तेः, द्रव्येच्छा द्विधा । आगमतो नो आगमतश्च । तत्र आगमत इच्छापदार्थज्ञाता तत्र चानुपयुक्तो नोआगमतस्त्रिधा-ज्ञशरीर भव्यशरीर तद्व्यतिरिक्तभेदात् । तत्र ज्ञशरीरभव्यशरीरे प्राग्वत् । तदव्यतिरिक्ता यत् द्रव्यमिच्छति सा च त्रिधा-सचित्तद्रव्येच्छा, अचित्तद्रव्येच्छा, मिश्रद्रव्येच्छा । तत्र सचित्तद्रव्येच्छा त्रिधा-द्विपदचतुष्पदापदभेदात् । तत्र द्विपदसचित्तद्रव्येच्छा-यत्र स्त्रियमिच्छति पुरुषमिच्छति इत्येवमादि । चतुष्पदसचित्तद्रव्येच्छा-यदश्वमिच्छति गामिच्छतीत्यादि । अपदसचित्तद्रव्येच्छा आम्रस्येच्छा मातुलिङ्गस्येच्छेत्यादि । अचित्तद्रव्येच्छा-सुवर्णेच्छा हिरण्येच्छेत्यादि । मिश्रद्रव्येच्छा-सुवर्णाद्यलङ्कारविभूषितस्य द्विपदादेरिच्छा । अथवा द्रव्यादिषु द्रव्यक्षेत्रकालेषु यथासंभवं स्वामित्वादि स्वामित्वकरणाधिकरणादिककरणानि भणतः स्वामित्वादिभिः प्रकारैर्द्रव्यक्षेत्रकालेच्छा वक्तव्या इति भावः । तत्र स्वामित्वेन द्रव्येच्छा यथा आत्मनः पुत्रमिच्छति इत्यादि, करणेन यथा मद्येनाऽभ्यवहृतेन स्तैन्येच्छा कामेच्छा वा जायते । अधिकरणेन यथा सुप्रस्तारितायां शय्यायां स्थितस्य कामेच्छा समुत्पद्यते । क्षेत्रकालावचेतनौ ततो न तयोः स्वयं स्वामित्वेन इच्छा भवति, ततः करणाधिकरणाभ्यां तत्र योजना । तत्र क्षेत्रेणा-यथा सुन्दरेण क्षेत्रेण लब्धेन क्रीडनेच्छा वपनेच्छा वा जायते, अधिकरणेन यथा-गृहे स्थितस्य भोगेच्छा कामेच्छा वा, सद्गुरुकुलवासे सम्यगनुष्ठानेच्छा वा समुपजायते इत्यादि, । कालेकरणेन यथा-यौवनकालेन धनेच्छा कामेच्छा वा जायते इत्यादि, । अधिकरणे यथा-हेमन्ते रात्रौ शीतेन पीडितः सूरोद्गमकालमिच्छति, । भावत इच्छा द्विधा-आगमतो नोआगमतश्च । तत्रागमत इच्छेति पदार्थज्ञाता, तत्र चोपयुक्त उपयोगो भावनिक्षेप इति वचनात् । नोआगमत आह–

[भा. १३५८] भावे पसत्थमपसत्थियाय अपसत्थियं न इच्छामो ।
इच्छामो य पसत्थं नाणाइयं तिविहमिच्छं ।।

वृ- नोआगमतो भावत इच्छा द्विधा-प्रशस्ता अप्रशस्ता च । मकारोऽलाक्षणिकः । तत्राज्ञानादिविषया इच्छा अप्रशस्ता, प्रशस्ता ज्ञानादिविषया । तां त्रिविधामिच्छामिच्छामः ।। सम्प्रति गणस्य निक्षेपमभिधित्सुराह–

[भा. १३५९] नामाइगणो चउहा दव्वगणो खलु पुणो भवे तिविहो ।
लोइयकुप्पावयणिओ लोउत्तरियो य बोधव्वो ।।

वृ- नामादिरूपो गणश्चतुर्धा । चतुष्प्रकारस्तद्यथा-नामगणः, स्थापनागणो, द्रव्यगणो भावगणश्च । तत्र यस्य गण इति नाम स नामगणः, गणस्य स्थापनाऽक्षवराटकादिषु स्थापनागणः । द्रव्यगणो द्विधा-आगमतो नोआगमतश्च, । तत्रागमतो गणशब्दार्थज्ञाता तत्र चानुपयुक्तो, नोआगमतस्त्रिधा-ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात् । तत्र ज्ञशरीरभव्यशरीरे प्राग्वत् । तद्व्यतिरिक्तस्त्रिधा । तद्यथा-लौकिकः कुप्रावचनिको लोकोत्तरिकश्च । एतेषां त्रयाणामपि प्रतिपादनार्थमाह-

[भा. १३६०] सचित्तादिवसमूहो लोगंमि गणो उ मल्लपोरादि ।
चरकादिकुप्पवयणो लोगोत्तरओसन्नगीयाणं ।।

वृ- सचित्तादिसमुहः सचित्तसमूहो अचित्तसमूहो मिश्रसमूहश्च द्रव्यगणः । तत्र सचित्तसमूहो यथा-

मल्लगणः । तथा पुरे भवः पौरस्तस्य गणः पौरगणः । अचित्तसमुहो यथा शस्त्रगणः मिश्रसमूहो यथा सुवर्णालङ्कारभूषितो मल्लगणः पौरगणो वा । कुप्रावचने द्रव्यगणो यथा चरकादि-चरकादिगणः, चरकः परिव्राजकः आदिशब्दात् पाण्डुरागादिपरिग्रहः । लोकोत्तरिको द्रव्यगणः अवसन्ना गीतार्थानां समूहः । किमुक्तं भवति ? पार्श्वस्थादिगणो यदि वा प्रवचनविडम्बकलुमतप्ररुपगणो अथवा अगीतार्थगणो लोकोत्तरिको द्रव्यगण इति, । भावगणो द्विधा-आगमतो नोआगमतश्च । तत्रागमतो ज्ञाता तत्र चोपयुक्तो नोआगमत आह–

**[भा.१३६१]** गीयत्थ उज्जूयाणं गीयपुरोगामिणं च अगीयाणं ।
एसो खलु भावगणो नाणादितिगं च जत्थत्थि ॥

**वृ-** गीतार्थानामुद्युक्तानां शक्त्यनुपगूहनेन संयमे प्रवर्तमानानामथवा अगीतानामपि अगीतार्थानामपि । अपिशब्दो लुप्तोऽत्र द्रष्टव्यो, गीतपुरोगामिनां पुरोगामि गीतार्थनिश्रितानां समूहो नोआगमतो भावगणः । एष अनन्तरोदितो भावगणो नोआगमतो भावगणः । अथवा किं बहूनोक्तेन। यत्र ज्ञानादित्रिकमस्ति स नोआगमतो भावगणः ।

**[भा.१३६२]** भावगणेणहिगारो सो उ अपव्वाविए न संभवति ।
इच्छातीयगहणं पुन नियमणहेतुं तओ कुणइ ॥

**वृ-** भावगणेन नोआगमतो भावगणेनाधिकारः प्रयोजनं, । स च भावगणो यथोक्तरुपः स्वयमप्रव्राजिते नास्ति तस्मात् स्वयं साधवः प्रव्राजनीयाः, । तैः परिवारस्तया कर्तव्याः । अथवा प्रमाध्यत्याचार्ये यः परिवारः । यथा स को निर्युक्तिकारो द्वारगाथायामिच्छात्रिकग्रहणं नियमेन हेतुं करोतित्युक्तं, । तव किं नियमयति ? सूरिराह-

**[भा.१३६३]** नियमेइ निज्जरनिमित्तमेव न उ पूयमाई अट्ठाए ।
धारेइ गणं जइ पहु महातलागेन सामाणो ॥

**वृ-** निर्जरा निमित्तमेव गणं धारयति, न तु पूजादीनां निमित्तं स च गणं धारयन् यतिप्रभुर्महातडागेन समानो भवति । महातडागेन समानतामेव भावयति-

**[भा.१३६४]** तिमिमगरेहिं न खुब्भति जहंबुनाहो वियंभमाणेहिं ।
सो च्चिय महातलागो पफुल्लपउमं च जं अन्नं ॥

**वृ-** यथाम्बुनाथस्तिमिमकरैर्विजृम्भमाणैर्न क्षुभ्यति, न स्वस्थानाच्चलति, स एवचाम्बुनाथ इह महातडागस्तथा विवक्षणात् । अथवा समुद्रात् यदन्यत्प्रफुल्लपद्मं महासरस्तन्महातडागं, उपनयमाह-

**[भा.१३६५]** परवादीहिं न खुब्भति संगिण्हंतो गणं च न गिलाइ ।
होती य सयाभिगमो सत्ताण सरोव्व पउमड्डो ॥

**वृ-** तिमिमकरैरम्बुनाथ इव परवादिभिराक्षिप्यमाणो न क्षुभ्यते, । न च गणं संगृह्णन् यथोचित्येनानुवर्तमानो ग्लायति यथा वा सरः पद्माढ्यं सत्वानां सदाभिगमं भवत्येवं सदा सत्वानामभिगमः साधुः प्रभुर्भवति ॥

**[भा.१३६६]** एयगुणसंपउत्तो, ठाविज्जो गणहरो उ गच्छंमि ।
पडिवोहादीएहिं य, जइ होइ गुणेहिं संजुत्तो ॥

**वृ-** एतेन समुद्रतुल्यतारुपेण पद्माढ्यसरः समानमत्वेन गुणेन वा संप्रयुक्तो गच्छे गणधरः स्थाप्यते, ।

स चैतद्गुणसम्प्रयुक्तस्तदा भवति यदि प्रतिबोधादिभिर्वक्ष्यमाणगुणैर्युक्तो भवति, प्रतिबोधादयो गुणाः प्रतिबोधकादिदृष्टान्तेभ्यो भावनीया इति, तानेव प्रतिबोधकादीन् दृष्टान्तानुल्लिङ्गयति ।।

[भा.१३६७] पडिबोहग देसिय सिरिधरे य निज्जामगे य बोधव्वे ।
तत्तो य महा गोवो एमेया पडिवत्तिओ पंच ।।

वृ- प्रतिबोधकः सुप्तोत्थापकः, देशको मार्गदर्शी, श्रीगृहिको भाण्डागारनियुक्तो निर्यामकः समुद्रे प्रवहणनेता तथा महागोपोऽतीवगोरक्षणकुशल एवमेता अनन्तरोदिताः पञ्च प्रतिपत्तयोऽधिकृतार्थे आभिरिति प्रतिपत्तयः उपमा । तत्र प्रतिबोधकोपमां भावयति-

[भा.१३६८] जह आलित्ते गेहे, कोइ पसुत्तं नरं तु बोहेज्जा ।
जरमरणादिमयत्ते संसारघरंमि तह उजिए ।।

वृ- यथा आ समन्ततो दीप्ते गृहे कोऽपि परमबन्धुः प्रसुप्तं नरं प्रबोधयेत्तथा संसारगृहे जरामरणप्रदीप्ते जीवान् अविबुद्धान् भावसुप्तान् प्रबोधयति । स स्थापनीयो गणधरो देशितस्तीर्थकरैः । उक्तः प्रतिबोधक दृष्टान्तः । सम्प्रति देशकादिदृष्टान्तमाह-

[भा.१३६९] बोहेइ अपडिबुद्धे देसियमाईवि जोएज्जा ।
एयगुणविप्पहीणे अपलिच्छन्ने य न धरेज्जा ।।

वृ- बोहेइ अपडिबुद्धे इति पूर्वगाथाव्याख्यायां व्याख्यातमेव देशकादीनपि दृष्टान्तान् योजयेत् । तांश्चैवं-यो ग्रामादीनां पन्थानमृजुकं क्षेमेण प्रापयति स देशक इष्यते । एवं ज्ञानादीनामविराधनां कुर्वन् यो गच्छं परिवर्धयति स गणधरः स्थापनीयो न शेषः, । श्रीगृहकदृष्टान्तभावना-यथा यो रत्नानि सुनिरीक्षितानि करोति स श्रीगृहे नियुज्यते, । एवं यो ज्ञानादीनामात्मसंयमयोश्चाविराधनया गणं परिवर्धयति स तादृशो गणस्य नेता कर्तव्यः, । निर्यामकदृष्टान्तभावना-यथा-निर्यामकस्तथा कथं-च नापि प्रवहणं वाहयति यथा क्षिप्रमविघ्नेन समुद्रस्य पारमुपगच्छति एष एव च तत्वतो निर्यामक उच्यते, शेषो नाम धारकः, एवं य आचार्यस्तथा कथंचनापि गच्छं परिवर्धयति । यथा क्षिप्रमविघ्नेनात्मानं गच्छं च संसारसमुद्रस्य पारं नयति । स तत्वतो गणधरः शेषो वै नाममात्रपरितुष्टः । महागोपदृष्टान्तभावना-यो गोपो गाः स्वापदेषु विषमेषु वा प्रदेशेष्वटव्यां वा पततीर्वारयित्वा च क्षेमेण स्वस्थानमानयति स महागोप उच्यते, । एवमाचार्योऽपि यो गणमस्थानेषु प्रत्यन्तदेशादिषु विहारिणं धारयति पूर्वाभ्यासप्रवृत्तानि च प्रमादस्खलितान्यपनयति स तादृशो गणपरिवर्धकः करणीयो न शेषः, । अथवा प्रतिबोधको नाम गृहचिन्तक उच्यते यो गृहं चिन्तयन् यो यत्र योग्यस्तं तत्र व्यापारयति । तत्र व्याप्रियमाणं च प्रमादतः स्खलन्तं निवारयति स गृहचिन्तक उच्यते । एवं यः स्थापितो यो यत्र योग्यस्तं तत्र नियुङ्क्ते । नियुङ्क्तांश्च प्रमादतः स्खलतः शिक्षयति स स्थापनीयो गणधरपदे नेतर इति यश्चैतद्गुणविप्रहीणः प्रतिबोधादिगुणविकल्पो यश्च द्रव्यतो भावतश्चेत्यर्थः छन्नः परिच्छदहीनः स गणं न धारयेत् । न स गणधरपदे स्थापनीय इति भावः ।।

[भा.१३७०] दोहिं वि अपलिच्छन्ने, एक्केक्केणं च अपलिच्छन्ने य ।
आहरणा होंति इमे, भिक्खुंमि गणं धरंतमि ।।

वृ- द्रव्यतोऽपरिच्छन्नो भावतश्चापरिच्छन्न इत्यादिचतुर्भङ्गी प्रागेवोपदर्शिता । तत्र भिक्षौ गणं धारयति द्वाभ्यामपि द्रव्यतो भावतश्च नेतव्यः । अपरिच्छन्ने परिच्छदरहिते प्रथमभङ्ग उपात्तः । एकैकेन वा

अपरिच्छिन्ने द्वितीयभङ्गवर्तिनि द्रव्यतोऽपरिच्छिन्ने तृतीयभङ्गवर्तिनि वक्ष्यमाणानि उदाहरणानि भवन्ति। तान्येवाह—

[भा.१३७१] भिक्खूकुमारविरए झामणपंती सियालरायाणो।
विलत्थजुद्ध असती दमग भयग दामगाईय॥

वृ- भिक्षौ द्रव्यभावाभ्यामपरिच्छिन्नेगणं धारयति कुमारदृष्टान्तः विरयो-लघुश्रोतोरूपो झामण वनदव द्वितीयो दृष्टान्तः, तृतीयः पङ्क्तिदृष्टान्तः, चतुर्थः शृगाल राजदृष्टान्तः, । पञ्चमो वित्रस्तेन सिंहेन सह युद्धस्याभावो दृष्टान्तः, । एते पञ्च दृष्टान्ता अप्रशस्ताः । प्रथमभङ्गवर्तिनि, प्रशस्ताश्चतुर्भङ्गे द्वितीये द्रमकदृष्टान्तस्तृतीयभङ्गवर्तिनि भृतकस्य सतो दामकादिपरिग्रहो दृष्टान्तः । अत्रादिशब्दात् मयूराङ्गचूलिकादिपरिग्रहः । तत्र कुमारदृष्टान्तभावनार्थमाह—

[भा.१३७२] बुद्धीबलपरिहीणो कुमारपच्चंतडमरकरणं तु।
अप्पेणेव बलेणं गेण्हावणमासणा रन्ना॥

वृ- एको राजकुमारः बुद्धिबलपरिहीनो हस्त्यादिबलपरिहीनश्चेति भावः एतेन द्रव्यभावपरिच्छदरहितत्वमस्याख्यातं स प्रत्यन्तदेशे स्थितोडमरं देशविप्लवं करोति । ततोदायादेन राज्ञा तं बुद्धिबलपरिहीनं ज्ञात्वा अल्पेनैव बलेनैव बलेन दण्डप्रेषणेन गृहापणं तस्य राज्ञा कृतं, ग्रहणानन्तरं च शासनाकृता, ग्राहयित्वा स विनाशित इति भावः । अत्रैवोपनयमाह—

[भा.१३७३] सुलत्थ अनुववेतो, अगीयपरिवारगमणपच्चंतं।
परतित्थिक उज्झवणा, सावगसेहऽवण्णो॥

वृ- एवं सूत्रेण अर्थेन चानुपपेतोऽसम्पन्नोऽनेन भावतोऽपरिच्छन्नतामेवाह- अगीतापरिवारो अकीतार्थपरिवृतोऽनेन द्रव्यतोऽपरिच्छन्नत्वमुक्तं संप्रत्यन्तं देशं प्रति गमनं विधाय आचार्यत्वं करोति । स च तथा आचार्यत्वं विडम्बयन् परतीर्थिकैः परिमीय निःपृष्टव्याकरणः क्रियते । तदनन्तरं श्रावकाणामपभ्राजना यथा विडम्बिता यूयं, न भवदीयो धर्मः शोभनः । तथा च भवदाचवार्यः पृष्टः सन् न किमप्युत्तरं ददाति किं त्वसमंजसं प्रलपतीति तथा शिष्या अपि तैर्विपरिणम्यन्ते, । एवं च जायते महानवर्णः शासनस्य, तदेवं यत इमे दोषास्तद्रव्यभावपरिच्छदरहितेन भिक्षुणा न गणो धारयितव्यः । गतं कुमारद्वारमधुना वियरयदृष्टान्तमाह-

[भा.१३७४] वणदवसत्तसमागम विरए सिंहस्स पुंच्छडे वणया।
तं दिस्स जंबूएण- विविरए चम्मूढामिगाईया॥

वृ- वियरयो नाम लघु श्रोतो रुपो जलाशयः स च षोडशहस्तविस्तारो नद्यां महागर्तायां वा तस्याकुञ्चः त्रिहस्तविस्तारस्तस्य प्रदेशो मध्योवेंटः । अन्नया अडवीए वणदवो जातो, सो सव्वतो समन्तात् दहन्तो वच्चइ । ताहे मिगादयो सत्ता तस्स वणदवस्स भीया परिधावं वेंटं पविट्ठा । तत्थवि सो वणदवो डहन्तो आगच्छति । तत्थ य सीहो पविट्ठो आसि । ते य मिगादीभीया चिन्तंति वेंटे एस वणदवो पविसइत्ति उज्झियव्वंति । ततो ते सीहपायवडिया विनवेंति । तुम्हे अम्हं । मिगरायातो । नित्थारेहि । सीहेणं भणंति पुंच्छे मम धणियं लग्गह । ते लग्गा । ततो सीहेण प्लुतं कयं । सोलसहत्थे विक्कंतो सह मिगाईहिंडिणं, । अन्नया पुणो वनदवो जाते । तहेव मिगादयो तत्थ पविट्ठा । ततो एक्को सियालो सीहेण उत्तरियपुव्वो चिंतेति अहंपि सीहो चेव उत्तारेहामित्ति मिगादयो भणंति, । ममपुच्छे धणियं लग्गेह, । ते लग्गा । तेम

सियालेण प्लुतं कयं । वियरए सह मिगाइएहिं पडिओ सव्वे विणठा । ते अद्धाणाती आवती सुय गीयत्थेणं बीयपए जयणाए निसेवणाए गच्छं नित्थारियं पासित्ता अगीयत्थो चिंतेइ सव्वत्थवि एवमायरियव्वंति मन्नंतो निक्कारणे बितियदेण गच्छेण्ण समं विहरइ । सो तहा विहरंतो नरगाइ भववियरए अप्पाणं गच्छं च पाडेइ एष भावार्थः । अधुनाक्षरार्थो विव्रियते-वनदेव जाते सत्वानां मृगादीनां वियरयपरिवृते येण्टे समागतः तेषां सिंहस्य पुच्छे लग्नानां सिंहेन सह व्यपर जसो लघुश्रोतो रुपस्य जलाशयस्य डेपनं लङ्घनं, ततो दृष्ट्वा जम्बुकेनाप्यन्यदा तत्कर्तुमशक्नुवता मृगाद्यस्तस्तिन् व्यपरजसि च्छूद्रा क्षिताः । एष दृष्टान्तः।

सम्प्रति दार्ष्टान्तिकयोजनामाह–

**[भा. १३७५]** अद्धाणादिसु एवं दट्ठुं सव्वत्थ एव मन्नंतो ।
भवविरयं अगीतो, पाडे अन्नेवि पवडंतो ॥

**वृ-** अध्वादिष्वापत्स्वेव द्वितीयपदेन यतना निषेवनतो गच्छं निस्तारयन्तं दृष्ट्वा अगीतोऽगीतार्थः सर्वत्रैवमाचरितव्यमिति मन्यमानो निष्कारणयतनया द्वितीयपदेन गच्छं परिपालयन् भवे वियरयमिति द्वितीय प्राकृतत्वात् सप्तम्यर्थे नरकादिभवरूपे व्यपरजसि प्रपतन् अन्यानपि स्वगच्छवासिनः पातयति, । गतं व्यपरजो द्वारमधुना पङ्क्तिद्वारमाह-

**[भा. १३७६]** जंबुककूवे चंदे, सीहेनुत्तारणाय पंतीए ।
जंबुकसपंतिपडणं एमेव अगीयगीयाणं ॥

**वृ-** एगया जेट्ठा मूलमासे सियाला तिसिया अड्ढरत्ते कूवतडेट्ठिया कूवं पलोयंति । तत्थ ते जोण्हाए उदए चंदबिंबं पासंति, चिंतेंति य चंदो कूवे पडितो । तत्थ य सिंहो आगतो चिट्ठति । ततो तेहिं सियालेहिं सीहो विन्नवितो तुमं मिगाहिवती ए सवि गहाहिवती कूवे पडितो । एयस्स गुणेणं अम्हे दिवसभूयाए रत्तीए सुहं निरुव्वसग्गा वियरामो । ततो जुज्जसि तुमं गाहाहिवतिमुत्तारेउं सीहो भणति, पंतीए समं पुच्छे लग्गित्ता वियरह । अंतिल्लस्स चंदो लग्गहिति ताहे सव्वे प्लुतेनोत्तारेहामित्ति । ततो ते पंतीए सीहपुच्छे लग्गा कुवमज्झे ओतिण्हा सीहेण प्लुतं काउं सव्वे उत्तारिया । उवरिगगणे चंदं पासंति कूवतले य आलोलिए उदए चंदं अपासमाणा उत्तारियत्ति मन्नंति । अन्नया तहेव चंदं पासंत्ता सीहेण उत्तारियपुव्वो सियालो एवं चिंतेति । अहमवि सीहो इव उत्तारेमि एवं चिंतित्ता सो सियालो भणति । पंतीए ममं पुच्छे लग्गित्ता उयरह ते उत्तिणा । सीयालेण उत्तारेहामिति प्लुतं कयं । ततो असमत्थोत्ति तह पुच्छे लग्गिता सह कूवे पडिता । तत्थेवमतो एवमद्धाणादीसु आवईसु गीयत्थेणं बितियपदे जयणा निसेवणाए इत्यादि उपनयः पूर्ववदेष भावार्थोऽधुनाक्षरार्थः-एकदा जम्बूकाः कूपतटे मिलितास्तैः कूपे कूपमध्ये चन्द्रो दृष्टः । तस्मिन् दृष्टे तदुद्धरणाय सिंहपुच्छे विलग्नानां पङ्क्त्या प्रविष्टानां शृगालानां सिंहेनोत्तारणा कृता । तद्दृष्ट्वान्यदा एकेन जम्बुकेन सिंहोत्तारित पूर्वेण तथा कर्तुमारब्धं । ततस्तस्य जम्बुकस्य एवं स पङ्क्तिकस्य कूपे पतनमेव मनेनैव दृष्टान्तद्वयोक्तेन प्रकारेणागीतगीतयोर्भवकूपे गच्छेन सह पतनं तत उत्तारणं च गच्छस्य परिभावनीयमिति गतं पङ्क्तिद्वारमिदानीं शृगालराजद्वारमाह-

**[भा. १३७७]** नीलीराग खसद्दुम हत्थीसरभा सियाल कच्छाओ ।
बहुपरिवारअगीते विद्दूयणोहावणपरेहिं ॥

**वृ-** एक्को सियालो रत्तिं धरं पविट्ठो घरमाणुसेहिं चिंतितो निच्छिभिउमाढत्तो सो सुनगाईहिं पारद्धो । नीलीरागरंजणे पडितो किहवि ततो उत्तिन्नो नीलवन्नो जातो, तं अन्ने (हत्थी) सरभ तरक्ख सीयालादी

पासिउं भणंति। को तुमं एरिसो। सो भणति। अहं सव्वाहिं मिगजातीहिं खसद्दुमो नाम मिगराया कतो, ततोहं एत्थमागतो पासामि ताव को मं न नमति। ते जाणंति अपुव्वो एयस्स वणो अवस्सं एस देवेहिं अनुग्गहिओ। तओ भणंति- अम्हे तव किंकरा, संदिसह किं करेमो। खसद्दुमो भणति- हत्थिं वाहणं देह दिन्न, विलग्गो वियरति। अन्नया सीयालेण उन्नइयं ताहे खसुद्दमेण तं सीयालसभावमसहमाणेण उन्नइयं। ततो हत्थिणा सीयालोत्ति नाउं सोंडाए घेत्तुं मारितो। एवं कोइ अगीयत्थो अगीयत्थपरिवारं लभित्ता पच्चंतं देसं गंतुं अहं आयरिओत्ति पकासेइ। सो कहिंचि विउसेहिं पयालितो जाव न किंचि जाणति, एवं तेन अप्पा ऊणमितो। एष भावार्थोऽधुनाक्षरार्थः। नील्याः सम्बन्धी रागो यस्य स नीलीरागः शृगालः खसद्दुमो नाम मृगराजो जातः। तस्य हस्तिनः सरभाः शृगालोपक्षणमेतत् तरक्षादयश्च परिवारः सोऽन्यदा कस्यापि शृगालस्योन्नदनमाकर्ण्य शृगालोन्नदितकमभूदीते उन्नदितवान् ततः शृगालोऽयमिति ज्ञात्वा हस्तिना मारति इति शेषः। एवमगीतार्थबहुपरिवारे अगीते अगीतार्थे विहरति बहुश्रुतोऽहमचार्य इति बहुजनविश्रुतं ब्रुवाणे प्रष्टव्याकरणासमर्थतया परेभ्यः स्वपक्षवर्तिभ्यश्चापभ्राजना भवति।

अथवा अयमन्य उपनयः-

**[भा. १३७८]** सेहादीकज्जेसु व कुलादि समितीसु जंपउ अयं तु।
गीएहिं विस्सुयं तो निहोडणपमच्चतो सेहं ।।

**वृ-** वा शब्द उपनयान्तरसूचकः। शैक्षकादिकार्येषु कुलादिसमितिषु कुलगणसंघसमवायेषु श्रावकाः सिद्धपुत्राश्च ब्रुवते। अयमेव तुरेवकारार्थः। बहुश्रुतो जल्पतु व्यवहारनिर्णयं करोतु। यथा कस्या भवतीति ततस्तेनाव्यवहारमुक्तं। तच्च गीतैर्गीतार्थैर्विश्रुतं ततस्तैर्निहोडणमिति निहेद्धितं। तथा अगीतार्थ एव न जानाति व्यवहारमिति शेषः। ततः शैक्षेप्राकृतत्वात् षष्ठ्यर्थे सप्तमी एकवचने बहुवचनं शैक्षकाणामुपलक्षणमेतत्। श्रावकाणां सिद्धपुत्राणां च तद्वचस्य प्रत्ययो जातः। चिन्तयंति च एष एतावन्तं कालमस्माभिः गीतार्थः संभावित इति, गतं शृगालराजद्वारम्।

सम्प्रति वितत्थजुद्धअसतित्तिद्वारं व्याचिख्यासुराह—

**[भा. १३७९]** एक्केक्क एगजाती पत्तिदिनसममेव कूवपडिबिंबं।
सिंहे पुच्छकएन्नण कूवंमि य डेव उत्तरणं ।।

**[भा. १३८०]** एमेव जंबुगो वा कूवे पडिबिम्बमप्पणो दिस्स।
डेवणय तत्थ मरणं समायारो गीयअगीयाणं ।।

**वृ-** एगो सिंहो सो हरिणजातीणं लुद्धो दिवसे दिवसे हरिणं मारेऊण खाई, । तओ हरिणेहिं विनवितो किमंगरायं तुमं हरिणजातीण कयाण परिनिव्विट्ठो। ता पसायं करेहि, । सव्वमिगजातीणं वारएणं पइदिवसमेक्केक्कं मिगं खाहि। सिंहेण चिंतियं जुत्तमेस भणइ। ततो सव्वे मिगा मेलित्ता सिंहेण भणिया तुम्भे कुलजुत्तीए (जुत्तत्ताए) आत्मकुलोचित्येनेत्यर्थः। सव्वमिगजातिणं वारएणं पइ दिवसं मम सद्वाणट्ठियस्स एगं पसिज्जाह। तेहिं अभ्भुवगयं ततो तेवि मिगा तहेव पेसंति। अन्नया ससगजातीए वारए ससगा संपसारेंति मन्त्रयन्तीत्यर्थः। को वच्चउ अज्ज सीहसगासे ! तत्थ एगो वुड्ढससगो भणति। अहं वच्चामि जो सव्वेसिं मिगाणं संति काउं एमित्ति सो चलिओ। अंतराले मारुयकूवसरिसे कूवं दट्ठुं उस्सूरे सीहसगासमागतो ताहे सिंहेण भणियं। किं रे तुमं उस्सूरे आगतोसि। ससगो भणति- अहं पाए आगच्छंतो संतो अन्नेण सिंहेण रुद्धो जहा कहिं य वच्चसि। ततो मए सब्भावो कहितो ताहे सो भणति। अन्नो न होइ

सो मिगराया । ततो मए भणियं जइ अहं तस्स मिगरायस्स सगासं न जामि, ततो सो रुट्ठो सव्वे ससगा उच्छादेहित्ति । तम्हा जामि तस्स सगासं कहेमि ततो जो तुमं वलितो होहित्ति तस्स अम्हे आणं काहामो । तहि अहं तेन भणितो वच्च, कहेहि भण आगच्छ मम सगासं जति ते सत्ती अत्थि । ततो सीहो भणति । दंसेहि ममं तं सिंह ततो ससओ सीहेण समागम्म दूरं अमडं दूरत्थो चेव दंसेति । भणति य-एत्थ पविट्ठो चिट्ठति । जइ न पत्तियसि तो तुमं उग्गज्जय सोवि उग्गज्जेइ । ततो तेन उग्गज्जियं उग्गज्ज पडिसद्दो उट्ठितो ततो मुहुत्तं अत्थइ, । जाव न पुणो कोवि उग्गज्जइ ताहे सीहो चिंतइ मम भएण चित्तत्थो तो नमज्जइ निप्फिडइवा । तं एत्थेव कूपे पविसित्ता मारेमित्ति पडितो अपेक्खमाणो चिंतेति-नूनं निलुक्को ताहे सीहो गज्जइ सक्किइय । ततो चिंतेइ न जुज्झिउकामो मए समं । एवं जुद्धासत्तीए सीहो प्लुतं काउं उत्तिणो, । एवं गीयत्थस्सवि जइवि च्छलणा भवति तहावि सो जाणगत्तणेण अप्पाणं विसोहेइ, । तहा एगो जम्बुगो सो भमंतो कहवि कूवतडे समागतो कूवे पाणियं पलोइयं दिट्ठं अत्तणो पडिविंबं । ततो उक्कयह ताहे उच्छलितो पडिसद्दो । तं सोउं मे समे हक्कार इत्ति रामसियाए पडितो तं पमाणं प्लुतं काउमसमत्थोत्ति तत्थेवमतो एवमगीयत्थो च्छलितो न सक्केइ अप्पाणं पच्चुद्धरिउयमिति तस्स गणो न दायव्वो । एष भावार्थः । अधुनाक्षरार्थविवरणं । सर्वा मृगजातयो मिलित्वा प्रतिदिवसमेकैकमेकस्या जातेः सिंहस्य स्थानस्थितस्य समर्पयन्ति । अन्यदा शशकस्य वारको जातः । सोऽपान्तराले ऽपकूपे प्रतिबिम्बं मत्कूपसदृशमतीचोण्ड कूपं दृष्टेत्यर्थः । चिरात् सिंहसकाशमागतः । ततः सिंहे सिंहस्य पृच्छा कस्माच्चिरादागतः तस्यान्यसिंहकथनं तत एञणति सिंहस्य कूप समीप मागमनं तदनन्तरं पूर्वप्रकारेण कूपे ऽम आत्मनः प्रतिक्षेपः । ततः प्लुतेनोत्तरणं एवमेवेत्यादि एवमेव यथा प्रवृत्त्यैवेत्यर्थः । जम्बुकोऽपि कूपे प्रतिबिम्बमात्मनो दृष्ट्वा ऽपनकं प्रतिक्षेपणमात्मनः कृतवान् । तत्र तस्य मरणमेवं समवतार उपनयो यथा क्रमं गीतागीतार्थयोः कर्तव्यः । स च प्रागेव कृत इति ।

साम्प्रतमेतान्युदाहरणानि यं भंगमाश्रित्योपदर्शितानि तत्र योजयति-

[भा.१३८१]		एएउ उदाहरणा दव्वे भावे अपलिच्छन्नंमि ।
		दव्वेण अपलिच्छन्ने, होंति इमे तइयभंगंमि ।।

वृ- एतान्यनन्तरोदितानि पञ्चाप्युदाहरणानि अप्रशस्तानि द्रव्ये भावे च सप्तमी प्राकृतत्वात्तृतीयार्थे द्रव्येन भावेन वाऽपरिच्छिन्ने प्रथमभङ्गवर्तिनि वेदितव्यानि । प्रशस्तानि चतुर्थभङ्ग द्रव्यतो भावतश्च परिच्छिन्ने इति वाक्यशेषः, । द्रव्येणापरिच्छन्नेऽनेन द्रव्यतो अपरिच्छन्नः भावतः परिच्छन्न इति द्वितीयभङ्गः सूचितः । तत्र तथाभावे सप्तमी तृतीयार्थे भावेनापरिच्छन्नेऽ द्रव्यतःपरिच्छन्नो भावतोऽपरिच्छन्न इति तृतीयभङ्ग उपात्तस्तत्र भावत इमे वक्ष्यमाणे उदाहरणे ।

तत्र प्रथमतो द्वितीयभङ्ग उपात्तः ।

[भा.१३८२]		दमगेवइया वीर घडि घट्टचिंताय कुकुडिप्पसवो ।
		धनपिंडण समाणेरिं ऊसीसग भिंदन घडीए ।।

वृ- एगो दमगो गोउलं गतो । तत्थ गोउलिर्हि दुद्धं पाइतो, । अन्नया से दुद्धस्स भरिया घडिया दत्ता । तं सो घेत्तूण घरं गतो । खट्टाए ऊसीसमूले ठविउं निव्वि(व्व)न्नो चिंतिउमाढत्तो, । एयाए दहियघडियाए कल्ले कुक्कुडीतो किणिस्सामि । ताहे पसवो होहित्ति तं पसवं विक्केहामि, । ततो तं मूलं वड्ढीए पउंजेहामि । एवं सुबहुं धनं पिंडित्ता कुलीनं समाणेतर कुलप्पसूयं कन्नं परिणित्ता आणेहामि । ताहे सा कुलमदेन

उस्सीसएणं सेज्जं चडिहिति, । ततो हं किं उस्सीसएणं सेज्जं चिडिहित्ति पन्हीए आहनिस्सामिति पादो उच्छूढो तेन सा घडि भग्गा अक्षरयोजना त्वियम्-द्रमको रंकः स व्रजिकायां गोकुले गतः । तेन दुग्धपानानन्तरं क्षीरभृता घटिका लब्धा सा गृह गतेन खट्वाया उच्छीर्षकमूले स्थापिता । ततश्चिन्ताऽभूत् । किंविषयेत्यत आह-कुक्कुट्य क्रेतव्याः । तदनन्तरं तासां प्रबन्धेन प्रसवः । पुनस्तस्य मूल्येन विक्रयस्ततो वृद्धिप्रयोगेन धनपिण्डनं कृत्वा समाणेतरमिति समानां समानकुलप्रसुता मितरामसमानकुलपसूतां कन्यां परिणीय तां कुलमदेनोच्छीर्षक चटन्ती पदेनाहनिष्यामीति दुग्धघटिकायाः भिन्दनमकार्षीत् ।। अत्रोपनयमाह–

[भा. १३८३] पव्वावइत्ताण बहुओ सिस्से, पच्छा करिस्सामि गणाहिवच्चं ।

इच्छा विगप्पेहिं विस्सरमाणो, सज्झायमेवं न करेइ मंदो ।।

वृ- बहून् शिष्यान् परिव्राज्य पश्चात्करिष्यामि गणाधिपत्यं, एवमिच्छाविकल्पैः स मन्दो नित्य कालं विस्तरयन् सूत्रार्थपौरुषी न करोतित्यर्थः । ताश्चाकुर्वाणः पूर्वगृहीतान् सूत्रार्थान् नाशयति यथा स द्रमको दुग्धघटिकां नाशितवान् ।। सम्प्रति तृतीयभङ्गे उदाहरणमाह–

[भा. १३८४] गावीतो रक्खंतो, घेत्तुं च भत्तीए पट्टिया तत्तो ।

वोहंतो गोवग्गो होतिय वच्छिगा तत्थ ।।

[भा. १३८५] तेसिं तु दामगाइं करेमि मोरंगचूलियाओ य ।

एवं तु तइय भंगे, वत्थाई पिंडणमगीओ ।।

वृ- एगो गोवो । सो गावीओ रक्खंतो चिंतेइ, अहं गोरक्खणमोल्लेण पट्टियातो गहिस्सामि । ततो से पवड्डमाणो गोवग्गो भविस्सति । तम्मि य पवड्डमाणे गोवग्गे वच्छगाओ बहुयाओ होहिंति ततो करेमि तासिं जोगाउ मोरंगचूलियाओय । एवं चिंतिता सो तहा पकरेति । एवमगीयत्थो वि भावेणा पलिच्छन्नो तइयभंगिल्लो बहुगे परिवारे चिंतेति इति वत्थादीणि पिंडेति । अक्षरयोजना त्वियम्-गो-रक्षन् प्रवर्धमान गोवर्गे वत्सिका भविष्यन्ति । ततो तस्तासां योग्यानि दामकानि करोमि मयूराङ्गचूलिकाश्च मयूराङ्गचूलिका आभरणविशेषरुपा । एवं चिन्तयित्वा स तथा प्रकृतवान् । तत्रोपनयमाह-एवं तु एवमेव तुरेवकारार्थस्तृतीयभङ्गवर्तमानस्य अगीतेऽगीतार्थस्य वस्त्रादिपिण्डनमवगन्तव्यम् । अस्य यद्यपि परिवारो नास्ति तथा वस्त्रादिषु लब्धिरस्तीति द्रव्यतः परिच्छन्नत्वमङ्गीकृत्य तृतीयभङ्गे इत्युक्तम् ।।

[भा. १३८६] ताइं बहूहिं पडिलेहियंतो अद्धाणमाईसु य संवहंतो ।।

एमेव वा सम्मतिरत्तिगं से, वातादि खोभय एव हानी ।।

वृ- तानि वस्त्राणि बहूनि प्रतिदिवसमुभयकालं प्रतिलेखयन् अप्रतिलेखन् प्रायश्चित्तापत्तेरद्धादिषु अध्वनि मार्गे आदिशब्दाद्वसत्यन्तरसंक्रमणादौ च संवहन् श्राम्यति । श्रमाच्च ग्लानत्वं ग्लानत्वेव संयमविराधना सूत्रहानिश्च । एवमेव अनेनैव प्रकारेण वर्षास्वपि दोषा वाच्याः केवलं से तस्य उभयकालं तानि प्रतिलेखयतोऽतिरिक्तकर्म अतिरेकेण वातक्षोभो भवति । तथा वसति सुदीर्घं श्रुते सूत्रस्य च शब्दार्थस्य च परिहानिः ।। अत्र परस्यावकाशमाह–

[भा. १३८७] चोदेति न पिंडेति य कज्जे गिण्हति य जो स लद्धीओ ।

तस्स न दिज्जइ किं गणो । भावेण जो उ संच्छन्नो ।।

वृ- चोदयति परो यथा-यः स लब्धिको भावेन चयो ऽसंच्छन्नपरिच्छदरहितो न पूर्वमेव वस्त्रादीनि पिण्डयति । किन्तु कार्ये समुत्पन्ने गृह्णाति । तस्य किं कस्मात्कारणात् गणो न दीयते प्रागुक्त दोषा संभवात्, अत्र सूरि राह—

[भा.१३८८] चोयग अप्पडभूय असतीपूया, पडिसेह निज्जरतलाए ।
स तं से अनुजाणसि, पव्वाविए-तिनिच्छा से ।।

वृ- चोदक ! मध्यावतोऽपरिच्छन्नोऽप्रभृद्धिनोऽस्मात्तस्मै गणो न दीयते. एतौ तृतीय भंगवर्तिन्याक्षेप परिहारौ असतित्ति यस्य गणो नास्ति तस्य तृतीयभङ्गवर्तिन आक्षेपपरिहाराविभिधातव्याविति वाक्यशेषः । तथा पूयत्ति पूजार्थ गणो ध्रियते इति कस्यापि वचनं तस्य प्रतिषेधो वक्तव्यः । किन्तु निर्जरार्थ गणो धारणीय इति वाच्यं, निर्जरार्थं व्यवसिताः केचित् पूजामपीच्छन्ति । तत्र निर्जरार्थं गणं धारयतः पूजामपि प्रतीच्छत आचार्यस्य यथा न दोषः तथा तडागं दृष्टान्तत्वेन दृष्टव्यं, । तथा यो भावतः परिच्छिन्नशिष्यो लब्धिमांश्च शतं परिवारं से तस्यात्मीयस्याचार्यस्यानुजानाति । कियंतमित्याह, जघन्यत स्त्रीन्प्रव्राजितान् किमुक्तं भवति ? जघन्यतस्त्रयः प्रव्रजिता अवश्यं दातव्याः इच्छा सेति इच्छा वा से तस्य आचार्यस्येयमत्र भावना । आचार्य आत्मनो यथेच्छया त्रीन् वा बहुतरान्वा सर्वान् वा प्रव्राजितान् गृह्णाति । एष गाथासंक्षेपार्थो व्यासार्थ तु भाष्यकृत् विवक्षुः प्रथमतः चोयग अप्पभुत्तिपदं व्याख्यानयति—

[भा.१३८९] भणइ अविगीयस्स हु उवगरणादीहिं जइ वि संपत्ती ।
तहवि न सो पज्जत्तो वोढव्वे करीलकाउव्व ।।

वृ- चोदकेनाक्षेपे प्रागुक्ते कृते सति प्रतिवचनं भण्यते- अविगीतस्य विशिष्टगीतार्थत्वरहितस्य हु निश्चितं यद्यपि उपकरणादीनामुपकरणशिष्यादीनां गाथायां तृतीया षष्ठ्यर्थे प्राकृतत्वात् सम्पत्तिस्तथापि न स पर्याप्तः समर्थो वोढव्ये उत्क्षिप्ते गणभारे किमिवेत्यत आह-करीलकाउव्व करीलो नाम वंशजाति विशेषो दुर्बलस्तन्मयी कापोतीव कस्माद्गणभारवहने न समर्थ इति अत आह—

[भा.१३९०] न य जाणइ वेणइयं कारावेउं न यावी कुव्वति ।
तइयस्स परिभवेणं सुत्तत्थेणं अपडिबद्धा ।।

वृ- वा यस्मादर्थे यस्मान्न जानाति विनय एव वैनयिकं । किं विनयादिभ्य इति स्वार्थे इकणप्रत्ययः अति वर्तन्ते । स्वार्थे क प्रत्ययः प्रकृत(ति) लिङ्ग वचनानीति वचनात् विनयशब्दस्य पुंस्त्वेऽपि प्रत्यये समानीते नपुंसकलिङ्गता । तत् न शिष्यान् कारयितुमगीतत्वात् । न च तस्य गणपार्श्वे सूत्रमर्थो वा भावतोऽसंच्छन्नत्वात् । ततः सूत्रार्थाभ्यां गाथायां सप्तमी तृतीयार्थे प्राकृतत्वात् । अप्रतिबद्धाः सन्तः शिष्याः परिभवमेव केवलं मन्यन्ते, जन्मनो निष्फलीभवनात् तेन च परिभवेन तस्य तृतीयस्य तृतीयभङ्गवर्तिनो वैनयिकं कारयितुं जानतोऽपि न चापि न चैवं ते शिष्या विनयं कुर्वन्ति । तस्मान्न तृतीयभङ्गवर्ती गणधारणयोग्यः । साम्प्रतमसतित्ति पदं व्याख्यानयन् द्वितीयभङ्गगतावाक्षेपपरिहारावाह-

[भा.१३९१] बियभंगे पडिसेहो जं पुच्छसि तत्थ कारणं सुणसु ।
जइ से होज्ज धरेज्जा तदभावे किं न धारेउ ।।

[भा.१३९२] तं पि यहु दव्वसंगह परिहीणं परिहरंति सेहादी ।
संगहरिए य सयलं गणधारी तं कहं होइ ।।

वृ- यत् पृच्छसि त्वं यथा द्वितीयभङ्गे द्वितीयभङ्गवर्तिना गणधरेण कस्मात्प्रतिषेधः कृतः? तत्रकारणमिदं श्रृणु। तदेवाह-यदि से तस्य गणो भवेत् ततो धारयेत्। तदभावे गणाभावे किंनु धारयेत्? नैव किञ्चिदिति भावस्ततो गणाभावादेतस्य गणधारणप्रतिषेधः अपि च तं बहु इत्यादि तमपि च भावयेत्। सच्छन्नमपि च बहुनिश्चितमलब्धिकतया द्रव्यसङ्ग्रहपरिहीनं वस्त्रपात्राद्युपकरणसङ्ग्रहरहितं शैक्षादयः शैक्षक आदिशब्दात् मुनिवृषभादि परिग्रहः परिहरन्ति। वस्त्राद्यभावात्, तेषां सीदनात्। ततः संग्रहभृते विना सकलं परिपूर्णं गणधारित्वं कथं भवति नैव भवतीति भावस्तदभावाच्च तस्य तत्प्रतिषेध इदमलब्धिकमधिकृत्योक्तम्। यदि पुनर्द्वितीयभङ्गवर्त्यपि वक्ष्यमाणगुणैरुपेतो भवति, ततोऽनुज्ञाप्यतापि, गणधारी दोषाभावाच्च तथा चाह-

**[भा.१३९३]** आहारवत्थादिसु लद्धि जुत्तं आदेज्ज वक्कं च अहीनदेहं।
सक्कारभज्जं मइमंमि लोए, पूयंति सेहावपि हु जना य॥

वृ- आहारवस्त्रादिलब्धियुक्तमादेयवाक्यमहीनदेहं परिपूर्णदेहावयवं तथा मतिमंमिलोकं सत्कारभाजं विद्वज्जनपूज्यमित्यर्थः। शैक्षकाः पूजयन्ति पाठान्तरं 'सक्कारहज्जंमि इमंमि लोए' तत्रायमर्थः सत्कारेण ह्रियते आक्षिप्यते इति सत्कारहार्योऽयं यतो लोकस्तत एवं भूतेऽस्मिन् लोके आहारवस्त्रादिषु लब्धियुक्तमित्यादिगुणैः शैक्षकाः पूजयन्ति पृथग्जनश्च बहु मन्यते। ततः स तादृशो गणधारी कर्तव्यः। सम्प्रति पूयापडिसेहे इति पदे व्याख्यानयन्नाह—

**[भा.१३९४]** पूयत्थं नाम गणो धारिज्जति एवं न वसितो सुणतो।
आहारोवहिपूया कारण न गणो धरेयव्वो॥

वृ- पूजां प्राप्नुयामित्येवमर्थं नामगुणो ध्रियते। इत्येवं कश्चित् व्यवसितोऽभ्युपगतवान्, । एतावता पूया इत्यंशो व्याख्यातः। अत्राचार्यः प्राह-श्रृणुत यदर्थं गणोध्रियते, तत्र परोक्तप्रतिषेधमाह-आहारोपधिपूजाकरणेन उत्कृष्टः आहारः शोभन उपधिर्महती पूजा स्यादिति कारणतोऽत्र विभक्तिलोपः प्राकृत्वात् न गणो धारयितव्यः। एतावता प्रतिषेध इति विधृतं, । किमर्थं तर्हि गणो धारयितव्य इत्यत आह—

**[भा.१३९५]** कम्माणनिज्जरट्ठा एवं खु गणो भवे धरेयव्वो।
निज्जरहेतुववसिया पूयंपि च केइ इच्छंति॥

वृ- एवमनेन कारणेन खु निश्चितं भवति गणो धारयितव्यो यदुत कर्मणां ज्ञानावरणीयादीनां निर्जरार्थं मोक्षायैव तत्ववेदिनां प्रवृत्तेराहादीनां चैहिकत्वात्। केवलं केचित् स्थविरकल्पिका निर्जराहेतोः गणधारणं व्यवसिताः पूजामपि वक्ष्यमाण लक्षणामिच्छन्ति। किमुक्तं भवति? यद्यपि नाम तत्वतः कर्मनिर्जरणनिमित्तं गणो ध्रियते तथापि पूजामेष प्राप्नुयादिति पूजानिमित्तमपि तस्य गणधारणमनुज्ञाप्यते। पूजामेवाह—

**[भा.१३९६]** गणधारिस्साहारो उक्करणं संथवो य उक्कोसो।
सक्कारो सीसपडिच्छएहिं गिहि अन्नतित्थीहिं॥

वृ- गणधारिणः सत उत्कृष्ट आहार उत्कृष्टमुपकारणुत्कृष्टं संस्तवः सतां गुणानां प्रख्यानं तथा शिष्यैः प्रतीच्छकैः गृहिभिरन्यतीर्थिकैश्चोत्कृष्टः सत्कार उपाध्यायादिभिः पूजनं क्रियते। ततः पूजानिमित्तमपि तस्य गणधारणमनुज्ञापनं, संस्तवं व्याख्यानयति-

[भा.१३९७] सुत्तेण अत्थेण य उत्तमो उ आगाढपण्णेसु य भावियप्पा ।
जच्चन्निओ या वि विसुद्धभावो, संते गुणेवं विकत्थयंति ।।

वृ- सूत्रेणार्थेन च एष उत्तमः प्रधानः परिपूर्णः सूत्रस्यार्थस्य चावदातस्यास्य संभवात् । तथा आगाढप्रज्ञा येषु व्याप्रियते न या कावन तान्यागाढप्रज्ञानि शास्त्राणि तेषु भावितात्मा तात्पर्यग्रहितया तत्रावीत निष्पन्नमतिरिति भावः । तथा जात्या सकल जनप्रशस्ययान्वितो युक्तो जात्यन्वितस्तथा विशुद्धः स्वपरसंसारनिस्तोरणैकतानतया अवदातो भावोऽभिप्रायो यस्य स विशुद्धभावः । एवं सतो गुणान् गणधारिणः शिष्या अपरे च प्रकर्षतो हर्षातिरेकलक्षणतो विकत्थयन्तो - श्लाघ्यन्ते । एवं च पूज्यमाने आचार्ये पूजकानां यो गुणस्तमुपदर्शयति-

[भा.१३९८] आगमा एवं च बहुमानितोहु, आनथिरत्तं च अभावितेसु ।
थिनिज्जरविणिपयाय निच्चं, मानस्स भंगोवि य दुज्जयं ते ।।

वृ- पूज्यमाने आचार्ये पूजकैरागमो बहुमानितो बहुमानविषयीकृतो भवति । आगमस्य तत्रस्थत्वात्तथा भगवतामर्हतामाज्ञा परिपालिता भवति । भगवतां हि तीर्थ कृता मियमाज्ञा युदत गुरोः सदा पूजा कर्तव्या । तथा चोक्तम्-

जहाहि अग्गिजलणं नमंसे, नाणो हुती मंतपयाभिसित्तं ।
एवायरियं उवचिट्ठएज्जा अनंतनाणोवगतो विसंतो ।।

तथा गुरुविनयकरणेन येनाद्यापि भावितातेष्वभावितेषु क्रियमाणपूजादर्शनतः स्थिरत्वमुपजायते । तथा वैनयिकैर्विनयनिमित्ता विनिर्जरा कर्म निर्जरणं सदा सततं भवति । गुरुविनयस्य सदा कर्तव्यत्वात् । तथा मानस्याहंकारस्य भङ्गोऽपि च कृतो भवति । एते पूजकानां गुणाः । सम्प्रति निर्जनार्थमेव गणधारणं व्यवसितस्य पूजामपीच्छतः आचार्यस्य दोषाभावे यस्तडागदृष्टान्तस्तं भावयति ।

[भा.१३९९] लोइयधम्म निमित्तं, तडागखाणावियम्मि पउमादि ।
नवि गरिहियाणुभेत्तुं, एमेव इमंपि पासामो ।।

वृ- केनापि लौकिकी श्रुतिमाकर्ण्य धर्मनिमित्तं तडागं खानितं । तस्मिंश्च तडागे पद्मादीनि जातानि । वर्षारात्रे चापगते यत्र यत्र पानीयं शुष्यति तत्र तत्र धान्यं वापयति । तत्र यथा पद्मादीन्यनुभवितुं भोक्तुं गृह्यमाणान्यपि न तस्य गर्हितानि भवन्ति लोके तथा संमतत्वादेवमेवमनेनैव प्रकारेण इदमपि गणधारणं पश्यामः । निर्जरार्थमाचार्यमाणं गणधारणमप्युक्तप्रकारेण पूजानिमित्तमप्यदोषायेति भावः ।

सम्प्रति सन्तेसेत्यादि पश्चार्धं व्याख्यानयति -

[भा.१४००] संतंमि उ केवईओ, सिस्सगणोदिज्जतीति ता तस्स ।
पव्वाविते समाणे तिन्निजहन्नेन दिज्जंति ।।

वृ- भावपरिच्छन्नस्य शिष्यस्य सति विद्यमाने परिवारे तेन तस्याचार्यस्य ततो गणधारणानुज्ञापनानन्तरं कियान् शिष्यगणो दीयताम्, । अत्रोत्तरं प्रव्राजिते शिष्यगणो सति तत्रो त्रयो जघन्येन दीयन्ते, उत्कर्षणो बहुतरकाः सर्वे वा इति वाक्यशेषः ।

अथ किं कारणं जघन्यतस्त्रयोऽवश्यं दातव्या इत्यत आह-

[भा.१४०१] एगो चिट्ठति पासे सन्ना आलित्तमादिकज्जट्ठा ।

भिक्खादि वियारदुवे, पच्चयहेउं च दो हेउं ।।

वृ- एकः पार्श्वे समीपे संज्ञापुरीषोत्सर्गे आलसमालपनं कस्याप्याचार्यः कारयेदित्यादिकार्यार्थं तिष्ठति । द्वौ च भिक्षायामादिशब्दादौषधानयनादौ विचारे बहिर्भूमौ गच्छतः यदि वा सत्रार्थः संवादप्रत्ययहेतोर्द्वौ भावेतां, सम्प्रति प्रागुक्तायामेव चतुर्भङ्ग्यां विशेषं वक्तुकाम आह—

[भा. १४०२]　　दव्वे भावे पलिच्छद दव्वे तिविहो उ होइ चित्तादी ।
लोइय लोउत्तरितो दुविहो वावारजुत्तियरो ।।

वृ- परिच्छदो द्विविधो द्विप्रकारो-द्रव्ये भावे च । तत्र द्रव्ये द्रव्यपरिच्छदस्त्रिविधो भवति चित्तादि सचित्तो अचित्तो मिश्रश्च । एष त्रिविधोऽपि द्रव्यपरिच्छदो भूयो द्विधा-लौकिको लोकोत्तरिकश्च । तत्र लौकिकः सचित्तः त्रिविधो द्विपद चतुष्पदापदभेदात् । अचित्ते हिरण्यादि मिश्रसचित्ताचित्तसमवायेन, लोकोत्तरिकः सचित्तो द्रव्यपरिच्छदः शिष्यादिः । अचित्त उपधि मिश्रः सचित्ताचित्तसमवायतः, । तत्र लौकिके लोकोत्तरिके च द्रव्यपरिच्छेदे द्विधा, यथा-व्यापारयुक्त इतरो व्यापारायुक्तः तत्र लौकिके व्यापारयुक्ते च निदर्शनमाह—

[भा. १४०३]　　दो भाउया विरिक्का, एक्को पुन तत्थ उज्जतो कम्मे ।
उचितभत्तिप्पदानं अकालहीनं च परिवड्ढी ।।

वृ- द्वौ भ्रातरौ । तौ परस्परं विरक्तौ धनं विरिच्य पृथक्पृथक् जातावित्यर्थः । तत्र तयोर्द्वयोर्मध्ये पुनरेकः कृषिं कुर्वन् कर्मणि उद्युक्तः । किमुक्तं भवति ? स्वयं कर्म करोति भृतिकांश्च कारयति, भृतिकानां वा कालपरिहीनं उचितां परिपूर्णां भृतिं मूल्यं ददाति । अकालपरिहीनं च परिपूर्णं भक्तं । एवं च तस्य व्याप्रियमाणस्य कृषेः परिवृद्धिरजायत साधुवादश्च ।।

[भा. १४०४]　　कयमकयं न जाणइ न य उज्जमए सयं न वावारो ।
भतिभत्तकालहीने दुग्गहियकिसीए परिहानी ।।

वृ- द्वितीयो व्यापारायुक्तो भृतिकैः किं कर्मकृतं किं वा न कृतमिति नैव जानाति स्वयम-परिभावनादन्यतश्चाप्रच्छनात् न च स्वयं कर्मकरणायोद्यच्छति न वा मध्ये स्थित्वा भृतकान् व्यापारयति भृतिभक्ते च भृतिभृतकानां कालहीने ददाति । किमुक्तं भवति ? भृतिमपरिपूर्णां ददाति कालहीनां च एवं भक्तमपि, तत एवं दुर्गृहीतायाः कृषेस्तस्य परिहानिरभूदसाधुवादश्च सम्प्रति लोकोत्तरिकं द्रव्यपरिच्छदं व्यापारयुक्तमाह—

[भा. १४०५]　　जो जाए लद्धीए उववेओ तत्थ तं निजोइंति ।
उवकरणसुए अत्थे, वादे कहणे गिलाणे य ।।

वृ- यो यया लब्ध्या उपपेतो युक्तो वर्तते, तत्र तं नियोजयन्ति सूरयस्तद्यथा उपकरणे इति उपकरणोत्पादने सुते इति सूत्रपाठलब्ध्युपेतं सूत्रपाठे अर्थग्रहण सलब्धिसमन्वितं परवादिमथने धर्मकथनलब्धिपरिकलितं धर्मकथने, ग्लानप्रतिचरणं पटीयसं ग्लानप्रतिजागरणे ।

[भा. १४०६]　　जह जह वावारयते जहा य वावारिया न हीयंति ।
तह तह गणपरिवड्ढी निज्जरवड्ढीवि एमेव ।।

वृ- यथा यथा तत्तल्लब्ध्युपेतान् तत्कर्मणि व्यापारयन्ति यथा यथा च व्यापारा न हीयन्ते देशकाल स्वभावौचित्येन व्यापारणात् तथा तथा गणस्य गच्छस्य परिवृद्धिर्भवति, । निर्जरावृद्धिरप्येवमेव निर्जरापि

तथा तथा परिवर्धते इति भावः । तद्व्यतिरिक्तो व्यापारायुक्तस्तस्य गच्छेपरिहानिर्भवति न च निर्जरेति सम्प्रति भावपरिच्छदमाह-

[भा.१४०७] दंसणनाणचरित्ते तवे य विणए य होइ भावंमि ।
संजोगे चउभंगो विईएनायं वइरभूतं ।।

वृ- दर्शनं क्षायोपशमिकादिभेदभिन्नं सम्यक्त्वं, ज्ञानं मतिज्ञानादि, चारित्रं सामायिकादि, तपोऽनशनादि एव भावे भावतः परिच्छदः । अन्ययोश्च द्रव्यभावपरिच्छदयोः संयोगे चतुर्भङ्गी । यद्यथा- द्रव्यतोऽपरिच्छन्नो भावतः परिच्छन्न इत्येवं रूपे द्वितीये भङ्गे ज्ञातमुदाहरणं च वज्रभूतिस्तदेवाह-

[भा.१४०८] भरुयच्छे नहवाहणा देवी पउमावती य वरभूती ।
रोहकव्वगोष्ठ कौतुकनिव पुच्छणे निगमो ।।

[भा.१४०९] कत्थत्ति निवाएसो सयमासण एस चेव चेडिकहा ।
परिणाममदानं विरूवपडिचार रहिए य ।।

वृ- भरुकच्छे नयरे नहवाहणो नाम राया । तस्स पउमावती देवी । तत्थ नयरे वइरभूती आयरिओ महाकई अपरिवारो रूवेण य मंदरूवो । अतीव किसो तस्स कव्वं अंतेउरे गिज्जंति । सा य पउमावती देवी तेन कव्वेण हयहियया कया चिंतेइ जस्सेयं कव्वं कहमहं तं पेच्छिज्जा । ततो रायं अनुन्नवित्ता दासी संपरिवुडा महरिहपणागारं औचित्येन ढौकनीयं घेत्तुं वइरभूतिस्स वसहिं गता तं वारट्ठियं पासित्ता वइरभूती सयमेव भिसियं घेत्तुं निग्गतो । पउमावईए कहियं कहं वइरभूती आयरितो । वइरभूतिणा आयरिएण भणितं बाहिंगतो दासीए सन्नियं एस चेव वइरभूती ताहे विरागं गया चिंतेइ य दिट्ठासि कसेरुमती पीयंते पाणियं यं वरं तुहनाम न दंसणयं । अत्र कसेरु नाम नदी तस्याः प्रसिद्धिस्तीव नवरं न प्रसिद्ध्यनुरूपं तस्याः पानीयमिति क्षेपः । ताहे तं पणागारदिणं ठवियं एतं आयरियस्स दिज्जासित्ति गया । सम्प्रत्यक्षरघटना- भरुकच्छे नभोवाहनो नाम राजा । तस्य पद्मावती देवी । तत्र वज्रभूतिराचार्यः अवरोधे अन्तः पुरेतत्काव्यगानं कौतुकेन नृपं पृष्ट्वा देव्यास्तद्वसतौ गमस्तदनन्तरं पृच्छा । कुत्र वज्रभूतिराचार्यः । तस्य प्रत्युत्तरं बहिर्निर्गतः स चाचार्यः सपरिवाराभावात् स्वयमासनं गृहीत्वा मध्याद्बहिरागतः । वजया दास्याः कथाकथनमेप एव वज्रभतिस्ततो विपरिणामो विपरिणामाच्च साक्षाददानं विरूपे परिवाररहिते च तस्मिन्नाचार्ये एतेनैतदावेदितं यः परिवारवानपि रूपेण विरूपः । सोऽपि द्रव्यपरिच्छदेन अपरिच्छन्नः । ततो यद्यपि तस्य परिवारोऽस्ति तथापि योऽधस्तात् द्रव्यपरिच्छदो वर्णितस्तस्य मूलमाकृतिस्तदभावे तस्याभावात्तथा चाह-

[भा.१४१०] मूलं खलु दव्वपतिच्छयस्स सुंदरिमोरसबलं च ।
आकितिमतो हि नियमा सेसा वि हवंति लद्धीतो ।।

वृ- समस्तस्यापि प्रागुक्तस्य द्रव्यपरिच्छदस्य मूलं खलु सोदर्यमौरसं च बलं हृदयबलिष्टता सर्वव्यापारेषु दाक्ष्यमिति भावः । कुत इति चेदत आह- हि यस्मादाकृयिमतः सतो नियमाच्छेषा अपि लब्ध्यो वस्त्रादिविषया भवन्ति, न त्वाकृतिविरहितस्य प्रत्यक्षत एव दर्शनात् तत आकृतिरहितोऽपि द्रव्यपरिच्छदरहित इति न तस्यापि गणधारणानुज्ञा । सम्प्रति वक्ष्यमाणग्रन्थसम्बन्धनार्थमाह-

[भा.१४११] जो सो उ पुव्वभणितो अपभूसो उ अविसेसिओ तहियं ।
सो चेव विसेसिज्जइ इहइं सुत्ते य अत्थे य ।।

**वृ-** योऽसौ चोयग अप्पभु इत्यादिना ग्रन्थेन अप्रभुः पूर्वं भणितः स तत्रापि विशेषतः एवोक्तः । इह अस्मिन् प्रस्तावे प्रभुः सूत्रेऽर्थे च विशेष्यते । सूत्रतोऽर्थतश्च तस्याप्रभुत्वं चिन्त्यते इति भावस्तदेवाह-

**[भा.१४१२]** अबहुस्सुए अगीयत्थे, दिठंता सप्पसीसवेज्जसुए ।
अत्थविहूणो धरंते, मासा चत्तारि भारीया ॥

**वृ-** अबहुश्रुता गीतार्थपदाभ्यां भङ्ग चतुष्टयं । तद्यथा-अबहुश्रुतो अगीतार्थ इति प्रथमो भङ्गः १, अबहुश्रुतो गीतार्थः २, बहुश्रुतोऽगीतार्थः ३ बहुश्रुतो गीतार्थः ४ । तत्र यस्य निशीथादिकं सूत्रतोऽर्थतो वा न गतं प्रथमभङ्गः । यस्य पुनर्निशीथादिगतौ सूत्रार्थौ विस्मृतौ स द्वितीयभङ्गः, । पुनरेकादशाङ्गधारी अश्रुतार्थः स तृतीयभङ्गः ३ सकलकालो चित सूत्रार्थोपितश्चतुर्थः । अत्र बहुश्रुते अगीतार्थे वा एतेनाद्य भङ्गत्रयमुपात्तं तस्मिन् गणं धारयति । दृष्टान्तौ सर्पशीर्षकं वैद्यसुतश्च । इयमत्र भावना- आद्यानां त्रयाणां भङ्गानामन्यतरो यदि गणं धारयति ततः स सहगणेन विनश्यति यथा सर्पशीर्षकं वैद्यसुतो वा एतत् दृष्टान्तद्वयं यथा कल्पाध्ययने तथा भावनीयम् । अत्थविहूणेत्यादि अर्थविहीने अगीतार्थ इत्यर्थः । अर्थग्रहणमुपलक्षणं ते इत्यपि द्रष्टव्यं तस्मिन् अर्थविहीने सूत्रविहीने वा गणं धारयति उपलक्षणमेतत् निसृजति वा प्रायश्चित्तं चत्वारो भारिया इति गुरुका मासाः ॥

**[भा.१४१३]** अबहुस्सुते अगीयत्थे निसिरए वा विधारए वा गणं ।
तद्दिवसियं तस्स उ मासा चत्तारि भारिया ॥

**वृ-** अबहुश्रुतोऽगीतार्थो वा यदि गणं निसृजति धारयति वा स्वयं किमुक्तं भवति । आद्यानां त्रयाणां भङ्गानामन्यतरो यदि गणं गीतार्थस्य वा निसृजति स्वयं चाद्यानां त्रयाणां भङ्गानामेकतरः सन् यदि गणं धारयति । एकं द्वौ वा दिवसावुत्कर्षतः सप्तरात्रिं दिवानि ततस्तद्दैवसिकस्तेषां सप्तानां दिवसानां निमित्तत्वतस्तस्य गणं निसृष्टुर्धारयति स प्रायश्चित्तं चत्वारो मासा गुरुका : ॥

**[भा.१४१४]** सत्तरत्तं तवो होही ततोच्छेदोपधावती ।
च्छेदेन छिन्नपरियाए ततो मूलं ततो दुगं ॥

**वृ-** अन्यदन्यतः सप्तरात्रिं यावद्गणस्य निसर्जने धारणे वा प्रायश्चित्तं तपो भवति । तपः प्रायश्चित्तपरिसमाप्त्यनन्तरं तपः क्रमेण च्छेदः प्रधावति च्छेदेन चेत्र च्छिन्नः पर्यायो भवति । ततोऽच्छिन्नपर्याये तस्मिन् मूलं दीयते, । ततोऽप्यतिक्रमे अन्तिमं द्विकमनवस्थाप्य पाराञ्चितलक्षणं । इयमत्र भावना-प्रथमसप्तदिवसानान्तरमन्यानि चेत् सप्तदिनानि गणं निसृजति धारयति वा स्वयं ततः प्रायश्चित्तं षट् लघु । ततोऽप्यन्यानि सप्तदिनानि ततः षट्गुरु, तदनन्तरमप्यन्यानि चेत् सप्तदिनानि । ततश्चतुर्गुरुकाः च्छेदः । ततोऽप्यन्यसप्तदिनानि ततश्चतुर्गुरुकाः च्छेदः । ततोऽप्यन्यसप्तदिवसातिक्रमे षट्लघुकः च्छेदः । तदनन्तरमप्यन्यसप्त दिवसातिवाहने षट्गुरुकच्छेदः । एतावता कालेन यदि पर्यायो नच्छिनत्ति । अतस्त्रिंचत्वारिंशत्तमे दिवसे गणं धारयतो निसृष्टुर्वा प्रायश्चित्तं मूलं, चतुश्चत्वारिंशत्तमे दिवसे अनवस्थाप्यं पञ्चचत्वारिंशत्तमे पाराञ्चितं तदेवं यत इत्थं प्रायश्चित्तं ततोनिवर्तते आद्यानां त्रयाणां भङ्गानामेकतरः स्थापयितुं, कः पुनर्गणधरः स्थापयितव्यः इति चेदुच्यते शुद्धः ।

अथ कोऽसौ शुद्ध इति शुद्धलक्षणमाह-

**[भा.१४१५]** जो सो चउत्थभंगो दव्वे भावे य होइ संच्छन्नो ।
गणधारणंमि अरिहो सो सुद्धो होइ नायव्वो ।

वृ- योऽसौ चतुर्थभंगवर्ती । कोऽसावित्याह-द्रव्ये भावे च यो भवति संच्छन्नद्रव्यः परिच्छदविशेषैश्च परिकलित इति भावः । तथा आचार्यलक्षणोपेततया यो गणधरणे योग्यः स शुद्धो भवति ज्ञातव्यः ।

स च परीक्षया ज्ञातुं शक्यते इति तत्परीक्षामाह—

[भा.१४१६] सुद्धस्स य पारिच्छा खुड्डय थेरे य तरुणवग्गूडे ।
दोमादि मंडलीए सुद्धमसुद्धे ततो पुच्छ ।।

वृ- शुद्धस्य परीक्षा कर्तव्या । कस्मिन् विषये इत्यत आह- क्षुल्लके स्थविरे तरुणे खग्गूडः स्वभावाद्वक्राचारः । तस्मिंस्तथा द्वयोरादिमण्डल्योः एताभिः परीक्षाभिर्यदि निर्वटितस्ततः शुद्ध इतरस्त्वशुद्धः शुद्धस्य च गणधरपदानुज्ञा कर्तव्या । नाशुद्धस्य ततः शुद्धाशुद्धप्रतिपादनानन्तरं चोदकपृच्छा उपलक्षणमेतदाचार्यस्य प्रतिवचनं वक्तव्यं । एष द्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेव गाथां विवरीषुः प्रथमतः क्षुल्लकविषयां परीक्षाविधिमाह—

[भा.१४१७] उच्चफलो अह खुड्डो सउणिच्छावोपयासिउं दुक्खं ।
पुट्ठो विहोहिति न वा पलिमंथो सारवंतस्स ।।

वृ- तस्य द्रव्यभावपरिच्छदोपेतस्य [illegible] परीक्षणाय प्रथमतः क्षुल्लको दीयते । एनं द्विविधामपि शिक्षां त्वं ग्राहय, ततः स एव मुक्तः सन् यदि चिन्तयति यथा अहत्ति एषक्षुल्लकः उच्च चिरकालभाविफलं यस्मात्स उच्चफलचिरकालेनोपकारी तावता कालेन किमपि भविष्यतीति को वेद, ततः क एनं शिक्षां ग्राहयिष्यति । यदि वा शकुनिशावशिवावत् पोषयितु दुःखं महता कष्टेनैष पोष्यते । पुनः पुनर्बुभुक्षाभावादिति भावः । अपि च पुष्टोऽपि सन्नेष मम भविष्यति न वा को जानाति अन्यच्चामुं धारयतः सागमस्य कुर्वतो मम सूत्रस्य च महान् पलिमन्थो व्याघातस्ततो नैतस्य मे शिक्षयायोजनमेवं चिन्तयन् यो न ग्राहयति सोऽनर्हस्तद्विपरीतोऽर्हस्ततो यः स्थविर एष प्रवचनोपग्रहकरो भविष्यति दृढदेहो वा यथा आर्यरक्षितपितेति कारणतो दीक्षितस्तिष्ठति । शैक्षस्तस्य समर्प्यते । एवं द्विविधामपि शिक्षां ग्राहयति तस्मिंस्तत्समर्पिते यदि स इदं चिन्तयति ।

[भा.१४१८] पुट्ठो वा समरिसतिदुरणुवुत्तो न वेत्थ पडियारो ।
सुत्तत्थे परिहाणी थेरे बहुयं निरत्थं तु ।।

वृ- एष प्रथमालिकादिदापनतः शिक्षाग्रहणतश्च पुष्टीकृतोऽप्यासु शीघ्रं मरिष्यति । वा शब्दश्चिन्तान्तर समुच्चये । यदि वा वृद्धः स्वभावात् दुरनुवर्त्यं दुःखेनानुवर्त्यते न वा अत्र वृद्धशिक्षापनेकश्चित्प्रतीकारः । किमुक्तं भवति ? नास्मात् वृद्धात् कश्चित्प्रत्युपकारः । अथवा वृद्धो वृद्धत्वादेव जडप्रज्ञश्च ततोऽस्य शिक्षणे मम सूत्रार्थपरिहाणिस्तदेवं स्थविरशिक्षां ग्राह्यमाणे बहुकं निरर्थकमिति य एवं चिन्तयित्वा यो न शिक्षां ग्राहयति सोऽनर्हः तद्विपरीतोऽर्ह इति । तदनन्तरं योऽसौ तरुणो मेधावी तं समर्प्य भण्यते यथा एष मण्डलिपरिपाट्या आलापके दीयमाने सीदति । ततस्त्वमेवमप्याक्षेपेण पाठ्य, ततः स इदं चिन्तयति-

[भा.१४१९] अहियं पुच्छति गिण्हए बहुं किं गुणो ममेएण ।
होहिति य विवड्ढंतो एसो ममं पडिसवत्ती ।।

वृ- एष मेधावित्वादधिकं प्रच्छत्यवगृह्णाति वा वधारयति बहु प्रभूतं तत इत्थमस्यैव सूत्रस्यार्थस्य चरकेण प्रदानत आक्षपिक्योः को गुणो मम निरर्थकं कश्चिदित्यर्थः । केवलं दोषो निजसूत्रार्थ-परिगलनादन्यच्च एष हु निश्चितं विवर्धमानः । सूत्रतोऽर्थतश्च वृद्धिं गच्छन् मम प्रति सपत्नी च

प्रतिपन्थी भविष्यति । ततो न कोऽप्येनं पाठयिष्यतीति न शिक्षयति, सोऽनर्हस्तद्विपरीतोऽर्हस्ततः खग्गूडं दत्वा स भण्यते- अमुं तथा ग्राह्य यथा ऋजुः सामाचारी कुशलश्च भवति । ततो यदि-

[भा.१४२०]　　कोही निरुवगारी फरुसो सव्वस्स वामवट्टोय ।
अविनीतोत्ति य काउं हंतुं सत्तुं च निच्छुभती ।।

वृ- क्रोधी यदि वा निरुपकारी अथवा परुषः परुषभाषी तथा सर्वस्य साधुवर्गस्य वामावर्तः प्रतिकूलतया वर्तते यदि वा अविनीत इति कृत्वा शिक्षां ग्राहयति, अथवा अकुशलं सानुशिष्य वा हत्वा निःकाशयति तर्हि सोऽनर्हस्तद्विपरीतोऽर्हः ।

सम्प्रति चतुर्ष्वपि योजनेषु तद्विपरीततया यथार्हो भवति तथा भावयति—

[भा.१४२१]　　वच्छाहारादीहिय संगिण्ह अलुवत्तए य जो जुगलं ।
गाहेई अपरितंतो, गाहण सिक्खावए तरुणं ।।

[भा.१४२२]　　खरमउएए अनुयत्तति खग्गूडं जेण पडति पासेणं ।
गाढमविहार विजढो तत्थोङ्गण अप्पणे कुणति ।।

वृ- यो नाम युगलं क्षुल्लकवृद्धलक्षणं वस्त्राहारादिभिः संगृह्णाति आत्मवशीकरोत्यनुवर्तयति च तरुणमपरिश्रान्तः परिश्रममगणयन् ग्राहयति ग्राहणं ग्राह्यते । शिष्य एतदिति बाहुलकात्कर्मण्यनट् ग्राहणमाचारादिसूत्रं आसेवना शिक्षया च शिक्षयति । तथा खग्गूडं खरमृदुभिर्वाक्यैस्तथानुवर्तयति येन स पाशेन पतति अन्यथा गतिं न लभते इति मन्यमानस्तद्वशी भवति, । तथा यः स्थानाविचलनादपि सन् खग्गूडतया विहारविजढो भवति विहारं न करोतीति भावस्तत्र उङ्गणमङ्गीकारमात्मना करोति । यथैनमहं खरेण मृदुना चोपायेन विहारक्रमं चोपायेन विहारक्रमं कारयिष्यामीति एष एवंभूतो योग्यः ।

[भा.१४२३]　　इय सुद्धसुत्त मंडलि दाविज्जइ अत्थ मंडली चेव ।
दोहिंपि असीयंते, देइ गणं चोइए पुच्छा ।।

वृ- इति एवमुपदर्शितेन प्रकारेण चतुर्ष्वपि जनेषु सूत्रोपदेशतः परीक्षितः सन् शुद्धो भवति न मनागपि दोषः ततस्तस्य सूत्रमण्डली दाप्यते, अर्थमण्डली च एतयोश्च द्वयोरपि मण्डल्योर्यदि न विषीदति । किन्त्वपरिश्रान्ततया गच्छवर्तिनां प्रतीच्छकानां च ज्ञानाद्यभिलाषिणां चित्तग्राहको वर्त्तते, ततस्तस्मिन् मूलाचार्यो गणं ददाति । एवमुक्ते चोदके चोदकस्य पृच्छा केत्यत आह—

[भा.१४२४]　　चोएइ भणिऊणं उभयच्छन्नस्स दिज्जइ गणोत्ति ।
सुत्ते य अनुन्नायं भयवं धरणं पडिच्छन्ने ।।

[भा.१४२५]　　अपरिहाणरिहपरिच्छिद अत्थेण जं पुणो परुवेह ।
एवं होइ विरोहो सुत्तत्थेणं दुवेण्हंपि ।।

वृ- चोदयति प्रश्नयति परो यथा-पूर्वमिदमुक्तं उभयच्छिन्नस्य द्रव्यभावपरिच्छदविशेषात् साकल्यपरिकलितस्य गणो दीयते । युक्तं चैतत् यतः सूत्रेऽपि च शब्दोऽपि शब्दार्थे भगवन् धारणं गण-धारणमनुज्ञातं परिच्छन्ने द्रव्यभावपरिच्छेदोपेतमात्रे, तत एवमुक्त्वा यदर्हानर्हपरीक्षामर्थेनार्थमर्थमाश्रित्य प्ररूपयथ नन्वेवं सति द्वयोरपि सूत्रयोर्भवति विरोधः ।

उक्तस्वरूपस्यार्थस्याधिकृतसूत्रेणासूचनात् अत्र सूरिराह—

[भा.१४२६]　　संतिहि आयरिय वियरुजगाणि सत्थाणि चोयगसुणाहि ।

सुत्तानुन्नातो विहु होइ कयाई अनरिहोउ ।।

[भा.१४२७] तेन पराच्छा कीरइ सुवणगस्सेव ताव निहसादी ।
तत्थ इमो दिढ्ठंतो रायकुमारेहिं कायव्वो ।।

वृ- चोदक श्रृणु मदीयं वचः । सन्ति हि स्फुटं तानि शास्त्राणि यान्याचार्यद्वितीयकानि किमुक्तं भवत्याचार्यपरम्परायातसम्प्रदाय विशेष परिकलितानि ततो यद्यप्यर्हानर्हपरीक्षालक्षणार्थः । सूत्रे साक्षान्नोपनिबद्धस्तथापि सूचनात्सूत्रमिति सोपसूत्रेण सूचित इति सम्प्रदायादवगम्यते इति न कश्चिद्दोषः, । तथा च सूत्रानुज्ञाऽपि हु निश्चितं कदाचित्नर्हो भवति । न च सूत्रमन्यथा सर्वज्ञप्रणीतत्वात् तेन परीक्षापि सूचितेति तापनिकषादिभिः सुवर्णस्येव सूत्रानुज्ञातस्यापि क्षुल्लकादिभिः परीक्षा क्रियते, । तत्रायं वक्ष्यमाण लक्षणो दृष्टान्तो राजकुमारैः कर्तव्यः । तमेवाह—

[भा.१४२८] सूरे वीरे सत्तिए ववसायथिरे चियाय धितिमंते ।
बुद्धी विनयकरणं सीसे वि तहा परिच्छाए ।।

[भा.१४२९] निब्भय उरस्सबली अविसायि पुणो करेति संठाणं ।
न विसम्मति देति अनस्सितो चउहा नुविलीय ।।

वृ- इत्याद्यगाथापदानां द्वितीयगाथापदैर्व्याख्यानं तद्यथा-शूरो नाम निर्भयः । स च कुतश्चिदपि न भयमुपगच्छति । वीर उरसबलवान् तेनाक्लेशेन परिबलं जयति । सात्त्विको नाम यो महत्यप्युदवे गर्वं नोपयाति । न च गरिष्टेऽपि समापतिते व्यसने विषादं, । तथा चाह-अविषादी उपलक्षणमेतत् । अगवी वा व्यवसायी अनलस उद्योगवानित्यर्थः । तथा चाह-पुनः करोति संस्थानं किमुक्तं भवति प्रमादतः कथंचिद्व्यवसायविकलोऽपि भूत्वा पुनः करोति संस्थानं कर्तुमुपगच्छति स्वोचितं व्यवसायमिति भावः, । स्थिरो नाम उद्योगं कुर्वन्नपि न परिताम्यति । तथा चाह-विश्राम्यतीति चियायत्ति दानरुचिय-थौचित्यमाश्रितेभ्योऽन्येभ्यश्च ददातीत्यर्थः । धृतिमान् राज्यकार्याणि कुर्वन् परनिश्रामऽनिक्षेपमाणः तथा चाह-अनिस्सिते इति, बुद्धिरिति औत्पत्तिक्यादिबुद्धि चतुष्टयोपेतः, विनीतो गुर्वादिषु विनयकारी यथौचित्यं गुर्वादीनामनुवर्तक इत्यर्थः, करणे इति यद्राज्ञः कर्तव्यं तत्करणे कुशलः । एतेषु परीक्षा क्रियते । किमेते गुणाः सन्ति न वा तत्र यः एतैर्गुणैरुपेतो भवति स राज्ञो राज्येऽभिषिच्यते । दानशीलोऽत्र यः स्थिरः सोऽपरिश्रान्तः सन् कर्तव्यं करोति । कृत्वापि पश्चादननुपतापी त्यागवान् नाम दानशीलः स च स्तोकादपि स्तोकं ददानो गणस्य बहुमानभाग् भवति ।।

[भा.१४३०] परवादी उवसग्गे उप्पन्ने सूरयाइतंतरवि ।
अद्धाने तेणमादी उरस्सबलेण संतरति ।।

[भा.१४३१] अब्भुदए वसणे वा अखुब्भमाणो उ सत्ति होति ।
आवत्ति कुलादि कज्जेसु चेव ववसायवं तरति ।।

[भा.१४३२] कायव्वमपरितंतो दातुं वि थिरो अनानुभाविउ ।
थोवा तो विदलंतो चियाग वंदन सीलोउ ।।

[भा.१४३३] उवसग्गे सोढव्वे झाएकिच्चेसु यावि (साइ) धीमंतो ।
बुद्धिच उक्कविनीतो अहवा गुरुमादि विनीतो उ ।।

वृ- धृतिमान् उपसर्गान् सोढव्यान् ध्यायति, कृत्येष्वपि कार्येष्वविषादं प्रवर्त्तते, बुद्धिविनीत इत्यत्र

इदमपि व्याख्यातं बुद्धि चतुष्टयं नीतं प्रतिपादयति येन स बुद्धिविनीतः बुद्ध्यादिदर्शनात्क्लान्तस्य (चतुष्कस्य) पाक्षिकः परिनिपातः । अथवा बुद्धित्ति बुद्धिचतुष्कोपेतो विनीतो गुर्वादिषु विनीतः ।

**[भा.१४३४]** दव्वाई जं जत्थओजम्मि वि किच्चं तु जस्स वा जं तु ।
किच्चइ अहीन कालं जियकरणविनीयए गच्छ ॥

**वृ-** यद्यत्र द्रव्याद्युपयोगि यस्य वा यत्र यत् कृत्यं तत्सर्वमहीनकालं जितकरणः करोति कारयति जितकरणो विनीत इति द्वावप्येकार्थौ तत्पर्यं विश्रान्त्या शब्दार्थस्तु परस्परं भिन्नो जितकरणो नाम करणदक्ष उच्यते । विनीत इति विनयकरणशीलः ॥

**[भा.१४३५]** एवं जुत्तपरिच्छा जुत्तो वे तेहिमेहिउ अजोग्गो ।
आहारादि धरंतो तिंतिणिमाईहिं दोसेहिं ॥

**वृ-** एवमेतैरनन्तरोदितैः शूरत्वादिभिर्गुणैर्युक्ता उचिता या परीक्षा तथा युक्तोऽपि निश्चित एभिर्वक्ष्यमाणदोषैः अयोग्यस्तानेवाह-आहारादि आहारोपधि पूजानिमित्तं गुणं धारयन् तिन्तिणादिभिश्च दोषैरयोग्यः । तिन्तिणी नाम यत्र तत्र वा स्तोकेऽपि कारणे करकरायणं । आदि शब्दाच्चलचित्तता-दिपरिग्रहः । एतदेव व्याख्यानयति --

**[भा.१४३६]** बहुसुते गीयत्थे, धरेइ आहारपूयणठाई ।
तिंतिणि चल अनवट्ठिय, दुब्बलचरणा अजोग्गाउ ॥

**वृ-** बहुकालोचित्तं सूत्रं आचारादिकं यस्य स बहुसूत्रो गीतार्थो विदितसूत्रार्थः । एतेन युक्तः परीक्षायुक्तोऽपीत्येतद्व्याख्यानयति । एवंभूतोऽपि यो गणं धारयति आहारपूयणठाई उत्कृष्टो मे आहारो भविष्यति, पूजनं वा स्वपक्षतः चेत्येवमर्थं आदिशब्दादुपधिरन्यद्वोपकरणमुत्कृष्टं मे भविष्यतीत्येवमर्थ परिग्रहः । सोऽयोग्यस्तथा यो तिंतिणः स्वल्पेऽपि प्रयोजने करकरायमानः चलश्चलचित्तोऽनवस्थितः स्वप्रतिपन्नार्थाऽनिर्वाही दुर्बलश्चरणचारित्रविषये दुर्बलः । एतेऽप्ययोग्याः ।

**[भा.१४३७]** एवं परिक्खियगंमी पत्ते दिज्जति अपत्ते पडिसेहो ।
दुपरिक्खियपत्ते पुणधारिय हावेति मा मेरा ॥

**वृ-** एवमनन्तरोदितेषु गुणेषु च यदि परीक्षया निर्वटितो भवति, गुणैरुपेतो दोषैश्च विप्रयुक्त इत्यर्थः, । तदा स पात्रमिति कृत्वा तस्मिन् परीक्षिते पात्रे गणो दीयते । यस्तु प्रागुक्तैर्दोषैरुपेतो गुणैश्च विप्रमुक्तः सोऽपात्रमिति तस्मिन्नपात्रे गणदानस्य प्रतिषेधः । तस्मै गणो न दातव्य इति भावः । दुपरिक्खिय इत्यादि । अथ कदाचित्सुदुःपरीक्षितः कृतो भवेत् गणश्च तस्मै दत्तः । स च गणः सीदति । तं दृष्ट्वा अन्येऽपि गच्छवर्तिनः केचित् सामाचारी शिथिला भवितुं प्रवृत्तास्ततः परीक्षिते प्राप्ते पात्रे गणे प्रदत्ते सति गणे च सीदति ये तत्र गच्छे अन्य तीव्रधर्मका न सीदन्ति, तैरुपायेन प्रतिबोध्य वारयितव्यः । तत्र यदि वारणानन्तरमावृत्योद्यच्छति ततः समीचीनमथ वारितोऽपि किञ्चित्कालमुद्यम्य पुनः सामचारीं हापयति तत इयं मर्यादा कर्तव्या । अयं विधिः प्रयोक्तव्य इत्यर्थः । तमेवाह--

**[भा.१४३८]** दिठोवसमोसरणे अहवा थेरा तहिं तु वच्चंति ।
परिसाय घट्टमट्ठा चंदण खोडि खरंटणाय ॥

**वृ-** यत्र समवसरणे ज्ञायते, आचार्योऽत्र प्रवेक्ष्यति, तत्र गच्छोऽनुलोमवचसा प्रवेशनीयः । प्रवेश्य तत्र गत्वाचार्यस्य कथयति । त्वं सीदन् तिष्ठसि नैव च तद्युक्तं, तस्मादभ्युद्गत्यावर्तस्व । अथवा कुलानि

हिण्डमानाः स्थविरास्तत्र गच्छे व्रजन्ति तत्र दृष्टान्तैः पर्षद्साधुपरिवाररूपा घृष्टा पादघर्षणात्, मृष्टा शरीरस्य केशादीनां च समारचनात् ततस्तां तथारूपां पर्षदमवलोक्य चन्दनखोडिदृष्टान्तेन खरण्टना कर्तव्या। सा चैवं--आवरियादिट्ठंतमेगं सुणंति। एगो इंगालदाहओ इंगालकठाईणं आघणठाए नदीकूलं गतो, तत्थ पासइ। तडेण वुज्झमाणं गोसीसचंदणखोडिं सो तं घेत्तूण पारं ट्ठितो, तमंतरा वणिओ पासइ जाणइ। एसा गोसीसचंदनखोडी। ततो तेन सो भणितो किं एएण कट्ठेण तं करिस्सइ। इंगालदाहगो भणइ-दहिऊण इंगाले घेच्छामि। वणिओ चिंतेति जइ इत्ताहे चेव मग्गीहामो तो बहुं सुंकं मोल्लं काहिति, तो जाहे डहिओमाझवेहिति ताहे किणीहामि,। एवं चिंतित्ता जाव वणिओ मुल्लस्स कएण घरं गंतुं एति ताव तेन दड्ढा गोसीसचंदनखोडी। वणिएण आगंतुं पुच्छितो कहिं ते कट्ठं। सो भणइ-दड्ढत्ति। एवं भणिएण खिंसितो महाभाग फिडितो सिरईसरियत्तणस्स एवं जहा सो इंगालदाहओ सोय वाणियओ ईसरियत्तणस्स चुक्को एवं तुमंपि नाणादी दहंतो निव्वाणस्स चुक्किहिसि। एतदेवाह—

[भा.१४३९] इंगालदाह खोडी पवेसे दिठाउ वाणिएणं तु।
जा मुल्लं आनयए इंगालट्ठाए ता दड्ढा॥

[भा.१४४०] इय चंदनरयणनिभा पमायतिक्खेण फरसुणा भेत्तुं।
दुविहं पडिसेवि सिहिणा तिरयिणखोडी तुमे दड्ढा॥

वृ- अङ्गारान् दहतीति अङ्गारदाहस्तस्य पार्श्वे गोशीर्षचन्दनखोडी प्रवेशे ग्रामप्रवेशे च वणिजा दृष्टा। स च यावन्मूल्यमानयति तावत्तेनाङ्गारदाहकेनाङ्गारार्थं सा खोडिर्दग्धा। इत्यक्षरार्थो भावार्थस्तु प्रागेवोक्तः॥ साम्प्रतमुपनयमाह-इय चंदणेत्यादि। इत्येवममुना प्रकारेण चन्दनरत्ननिभा गोशीर्षचन्दनमूल्या त्रिरत्नरत्नत्रयरूपा खोडिः। प्रमादरूपेण तीक्ष्णपरशुना भित्त्वा द्विविधा या प्रतिसेवा मूलगुणप्रतिसेवा उत्तरगुणप्रतिसेवा चेत्यर्थः। सैव शिखी वैश्वानरस्तेन त्वया दग्धा। एवं वारितः सन् यदि निवर्तते ततः प्रायश्चित्तं दत्वा तस्य वर्त्तापकाः स्थविरा दातव्याः। अथ न निवर्त्तये तस्य गणोऽपहरणीयः न केवलमेतेऽनर्हाः किं चान्येऽपि तथा चाह—

[भा.१४४१] एएण अनरिहिहिं अन्ने इय सूइया अनरिहातो।
के पुन ते इणमो ते दीनादिया मुणेयव्वा॥

वृ- एतैरनन्तरोदितैरनार्हैरन्येऽपि खलु सूचितानर्हाः के पुनस्ते। सूरिराह- इमे ते वक्ष्यमाणादीनादयो ज्ञातव्यास्तानेवाह—

[भा.१४४२] दीना जुंगिय चउरो जातीकम्मे य सिप्पसरीरे।
पाणा डोंबा किणिया सोवागा चेव जातीए॥

वृ- दीनार्हाः कस्मादिति चेदुच्यते-तेषां नन्दनाभावादुक्तं च-

दीनाभासं दीनगविं दीणजंपिउं पुरिसं।
कं पेच्छसि नंदंतं दीणं दीणाए दिठीए॥

तत्थ जुंगिका हीनाश्चत्वारोऽनर्हाः। तद्यथा-जातौ कर्मणि शिल्पे शरीरे च तत्र जातौ जुंगिकाश्चत्वारस्तद्यथा-पाणा डोंबाः किणिकाः श्वपचाश्च। तत्र पाणा नाम ये ग्रामस्य नगरस्य च बहिराकाशे वसन्ति तेषां गृहाणामभावात्, डोम्बा येषां गृहाणि सन्ति गीतं च गायन्ति, किणिका ये वादित्राणि परिणह्यन्ति। वध्यानां च नगरमध्ये नीयमानानां पुरतो वादयन्ति। श्वपचाश्चण्डाला ये शुनः पचन्ति।

तन्त्रीश्चविक्रीणन्तीति एते जातौ जुङ्गिका उपलक्षणमेतत् । तेनाय (यि) कल्पिका ये च हरिकेशजातयो मेया ये च वरुडादयस्तेऽपि जातौ जुङ्गिका द्रष्टव्याः सम्प्रति कर्मणि शिल्पे च तानभिधित्सुराह—

**[भा. १४४३]** पोसगसंवर नड लंख वाह मच्छंध रयरा वच्छुरिया ।
पडगारा य परीसह सिप्पे सरीरे य वुच्छामि ॥

**वृ-** पोषका ये स्त्रीकुक्कुटमयूरान् पोषयन्ति, । संवराः स्नानिकाः शोधकाः । नटाः प्रतीता ये नाटकानि नर्तयन्ति । लङ्का ये वंशादेरुपरि वृत्तं दर्शयन्ति । व्याधा लुब्धका । मत्स्यबन्धाः कैवर्ता रजका वस्त्रप्रक्षालका वागुरिका मृगजालिकाजीविनः । एते कर्मणि जुङ्गिकाः, पटकाराः कुश्चिकादयश्चर्मकारा इत्यरेपरीषहा नापिता एते शिल्पे जुङ्गिकाः । सम्प्रति शरीरे तान् वक्ष्यामि । प्रतिज्ञातं निर्वाहयति—

**[भा. १४४४]** हत्थे पाए कण्णे नासा उट्ठेहिं वज्जियं जाण ।
वामणग मडभ कोढिय काणा तह पंगुला चेव ॥

**वृ-** शरीरे जुङ्गिका जानीहि । हस्ते सप्तमी प्राकृतत्वात् तृतीयार्थे । एवं सर्वत्र, ततोऽयमर्थः हस्तेन उपलक्षणमेतत् । हस्ताभ्यां [illegible] र्जितं, । एवं [illegible] पादाभ्यां [illegible] कर्णा[illegible] नासया ओष्ठेन वा वामनका हीनहस्तपादाद्यवयवा, मडभाः कुब्जाः कुष्ठव्याध्युपहताः, काणा एकाक्षाः, पङ्गुलाः पादगमनशक्तिविकलाः एतानपि शरीरजुङ्गिकान् जानीहि ।

**[भा. १४४५]** दिक्खेउं पि न कप्पंति, जुंगिया कारणेवि दोसा वा ।
अनादिक्खिएवा नाउं न करेंति आयरिए ॥

**वृ-** एते अनन्तरोदिताश्चत्वारोऽपि जुङ्गिका दीक्षितुमपि न कल्पन्ते । पुनराचार्यपदे स्थापयितुमित्यपि शब्दार्थः कारणे तथाविधे समुत्पन्नेऽदोषाका निर्दोषा वा दीक्षितुमपि सम्बध्यन्ते । अज्ञाताश्चेत्कथमपि जुङ्गिका दीक्षिता भवेयुस्ततस्तान ज्ञात दीक्षितान् ज्ञात्वा कुर्वन्त्याचार्यगुणोपेतान् अप्याचार्यान् प्रवचनहीलनाप्रसक्तेः ॥

**[भा. १४४६]** पच्छावि होंति विकला आयरियत्तं न कप्पई तेसिं ।
सीसो ठावेयव्वो कानगमहिसोव निन्नम्मि ॥

**वृ-** पश्चादपि श्रामण्यस्थिताक्षिगलनादिना विकला भवन्ति, तेषामप्याचार्यगुणैर्युक्तानामप्याचार्यत्वं न कल्पते, येऽप्याचार्यपदोपविष्टाः सन्तः पश्चाद्विकला जायन्ते तेषामपि न कल्पते धारयितुमाचार्यत्वं, किन्तु तैस्तथा विकलैः सद्भिरात्मनः पदे शिष्यः स्थापयितव्यः । आत्मा त्वप्रकाशे स्थापयितव्यः । कइवेत्यत आह-काणकमहिष इव निम्ने । इयमत्र भावनाकाणको नाम चोरितमहिषो मा कोप्येनमद्राक्षीदिति हेतोः ग्रामस्य नगरस्य वा बहिर्गर्त्ता रूपे निम्ने प्रदेशे उपलक्षणमेतदिति गुपिले वा वनगहने स्थाप्यते । एवमेषोऽप्यन्यथा प्रवचनहीलना प्रसक्ते राज्ञादिदोषप्रसङ्गश्च । अथवा सो बात्मीयः शिष्यः पश्चाद्विकलैराचार्यः स्थाप्यते स कीदृश इत्यत आह—

**[भा. १४४७]** गणि अगणी वा गीतो जोवि अगीतोवि आगईमंतो ।
लोगे स पगासिज्जइ तहा बेंति न किच्चमियरस्स ॥

**वृ-** गणोऽस्यास्तीति गणी साधु परिवारवान् यो वर्तते तदभावेऽगणी वा यो गीतो गीतार्थः कालोचितसूत्रार्थपरिनिष्ठितः तस्याप्यभावे यो चाप्यगीतार्थोऽपि आकृतिमान् रूपेण मकरध्वज-तुल्यः स गणधरपदे निवेश्यते, । यथायमस्माकमाचार्यो नेतर इति केवलमितरस्यापि जुङ्गिका-

चार्यस्य यत् कृत्यं तत्स्थविरा अन्येऽपि च न हापयन्ति। सर्वमपि कृत्यं कुर्वन्तीति भावः।

सम्प्रत्यनर्हान् प्रतिपिपादयिषुरिदमाह—

[भा.१४४८] एयदोसविमुक्का वि अनरिहा होंति से उ अन्ने वि।
अव्वाबाधादीया तेसिं विभागो उ कायव्वो ॥

वृ- एतैरनन्तरोदितैर्दोषैर्विमुक्ता अपि भवन्त्यन्ये इमे अनर्हाः। के ते इत्याह-इत्यबाधादयस्तेत-स्तेषामत्याबाधादीनां विभाग पार्थक्येन स्वस्वरूपवर्णनं कर्तव्यं। प्रतिज्ञातमेव निर्वाहयति—

[भा.१४४९] अव्वाबाध अवायंते नेच्छई अप्पचेतए।
एगपुरिसे कहं निंदूकगवञ्झा कहं भवे ॥

वृ- इत्याबाधा आवाहंतोत्ति अशक्नुवत् नेच्छतित्ति नेच्छति अनिच्छन् तथा आत्मचिन्तकः एते चत्वारोऽपि पुरुषा अनर्हाः। न केवलमेतेऽनर्हाः किन्त्वेकपुरुषादयोऽपि तत्र शिष्यः प्राह-कथमेकपुरुषो भवति ?, कथं वा निंदूः ? कथं वा काकी कथं वा वन्ध्येति ? । एवं शिष्येण प्रश्ने कृते सूरिः क्रमेणावनेयजनानुग्रहप्रवृत्तः सर्वानत्याबाधादीन् व्याख्यानयति—

[भा.१४५०] अव्वाबाधे वाहेइ न मन्नइ बितिए धरेउ मसमत्थो।
तइओ न चेव इच्छइ तिन्नि एए अनरिहातो ॥

वृ- अतिशयेन आबाधा यस्य सोऽत्याबाधः। स गच्छस्य द्विविधेप्युपग्रहे वस्त्रपात्रादिज्ञाना-द्युपष्टम्भरूपे कर्तव्ये बाधां मन्यते,। द्वितीयोऽशक्तत्वद्गणं धारयितुमसमर्थः द्विविधमप्युपग्रहं गच्छस्य कर्तुमशक्तः इत्यर्थः,। तृतीयोऽनिच्छन् समर्थोऽप्यालस्येन गणं धारयितु नेच्छति,। एते त्रयोऽप्यनर्हाः। आत्मचिन्तकमाह—

[भा.१४५१] अब्भुज्जयमेगयरं पडिवज्जिस्संति अत्तचिंतो उ।
जो वा गणे वसंतो न वहति तत्तीतो अन्नेसिं ॥

वृ- य आत्मानमेव केवलं चिन्तयन् मन्यते, यथाहमभ्युद्यतं जिनकल्प यथालन्दकल्पानामेकतरं विहारं प्रतिपत्स्ये इति आत्मचिन्तकः योऽपि गणोऽपि गच्छेऽपि वसन् तिष्ठन् न वहति न करोति तप्तिमन्येषां साधूनां सोप्यात्मचिन्तकः। एतौ द्वावप्यात्मचिन्तकावनर्हौ।

[भा.१४५२] एवं मग्गति सिस्सं पणत्थट्ठे मरंति विद्धसंते वा।
अन्नमयस वि य एवं, नवरं पुन ठायए एगो ॥

वृ- पणत्ति पञ्चम एक पुरुष एकं शिष्यं मृगयते सह्येवं चिन्तयति किमप्येकमात्मनः सहायं मृगयामि येन सुखं तिष्ठामीति, तथा कष्टे निन्दूतुल्ये शिष्या म्रियन्ते, विध्वंसन्ते वा प्रतिभज्यन्ते चेति भावार्थः,। इयमत्र भावना-यथा निन्दू महेला यद्यदपत्यं प्रसूते तन्म्रियते। एवं योऽपि यं यं प्रव्राजयति, स स म्रियते, अपगच्छति वा। ततः स निन्दूरिव निन्दू स्तमस्यापि काकी तुल्यस्य एवमेव द्रष्टव्यं। नवरं पुनरेक तिष्ठति किमुक्तं भवति ? यस्यापि यः शिष्यः स म्रियते विध्वंसते वा केवलमेकस्तिष्ठति उपलक्षणमेतत्। तेनैतदपि द्रष्टव्यम्। यस्यैकस्मिन् प्रव्राजिते सति द्वितीयविषये लब्धिरेव नास्ति स काकीव काकी काक्यपि हि किलैकं वारं प्रसूते इति प्रसिद्धिः। वंध्या तुल्यः सुप्रतीत इति न व्याख्यातस्तदेवेदं व्याख्यातं वन्ध्या किलाप्रसवधर्मा। एवं यस्य नैकोऽपि शिष्य उपतिष्ठते स वन्ध्येव वन्धयेति।

पुनरन्यानर्हान् प्रतिपिपादयिषुरिदमाह—

**[भा. १४५३]** अहवा इमे अनारिहा देसाणं दरिसणं करेंतेन ।
जे पव्वाविय तेनं थेरादि पयच्छति गुरूणं ।।

वृ- अथवेति अनर्हाणामेव प्रकारान्तरोपदर्शने इमे वक्ष्यमाणा अनर्हास्तानेवाह-देशानां दर्शनं कुर्वता तेन ये प्रव्राजिकाः स्थविरादयस्तान् प्रयच्छति गुरूणां, न तरुणादीन् पूर्वं वहुवचनमनेकव्यक्त्यपेक्षयेत्यदोषः । स्थविरादीनेमाह–

**[भा. १४५४]** थेरे अनरिहे सीसे खग्गूडे एवलंभिए ।
उक्खेवगचत्ति रिह पंथे कालगते इय ।।

वृ- यः स्थविरान् प्रयच्छति शिष्यान् यो वा नर्हान् यो वा खग्गूडान् यदि वा च एकलम्भिकान् अथवा य एकं प्रधानं शिष्यमात्मना लभते गृह्णाति शेषास्त्वाचार्यस्य समर्पयति । स एकलाभेन चरतीति एकलाभिकः । यो वा शिष्याणामुत्क्षेपको यश्चाचार्याणामित्वरिकान् शिष्यान् करोति यो वा गुरुसम्बन्धिनः शिष्यान् पथि कालगतान् च शब्दात् प्रतिभग्नान् कथयति एते सर्वेऽप्यनर्हास्तत्र स्थविरादिन् व्याख्यानयति –

**[भा. १४५५]** थेरा उ अतिमहल्ला अणरिहा काण कुंटमादीया ।
खग्गूडा [illegible] एगलंभी [illegible] ।।

**[भा. १४५६]** तं एगं न विवंती अविसेसे देइ जे गुरूणां तु ।
अहवावि एग दव्वं लभंति जे ते देइ गुरूणं ।।

वृ- स्थविरा नाम अतिमहान्तो वयसातिगरिष्ठा इत्यर्थः, । अनर्हाः कारणकुटादयः, खग्गूडा अवश्याः । अयमत्र भावार्थः । योऽसौ पूर्वपरीक्षितः स देशदर्शनं कार्यते, तेन च देशदर्शनं कुर्वता यदि से स्थविराः प्रव्राजिता ये च जुङ्गिका ये च खग्गूडा वा ते आचार्यस्य समर्प्यन्ते । तरुणा नव्याङ्गा विनीताश्चात्मनस्तदा सोऽनर्ह इति, एकलाभी नाम यः प्रधानः शिष्यः तमेकं यो न ददाति । अवशेषांस्तु सर्वानपि प्रव्राजितान् गुरुणां प्रयच्छति । अथवा येषामेक एव लाभो यथा यदि भक्तं लभन्ते ततो वस्त्रादीनि न, । अथ वस्त्रादीनि लभन्ते तर्हि न भक्तमपि, एकमेव लभन्ते इत्येवं शीला एकलाभिनस्तथाचाह-अथवा ये एकं द्रव्यं तान् शिष्यान् गुरुणां यः प्रयच्छति, उभयलब्धिकानात्मनः सम्बन्धयति सोऽप्यनर्हः ।

**[भा. १४५७]** उक्खेवेणं दो तिन्नि वावि उवनेति सेसमप्पणो गेण्हे ।
आयरियाणित्तरियं वंधइ दिसमप्पणोव कहिं ।।

वृ- इयं किल सामाचारि यावन्तः किल देशदर्शनं कुर्वता प्रव्राजिताः तावन्तः सर्वे गुरूणां समर्पणीयाः, । यस्तु प्रव्राजितान् द्विधा कृत्वा उत्क्षेपेण हस्तोत्पाटनेन द्वौत्रीन् वा शिष्यान् गुरुणामुपनयति, शेषान् सर्वानप्यात्मना गृह्णाति । एषोत्क्षेपकोऽनर्हः तथा ये केचन देशदर्शनं कुर्वता प्रव्राज्यन्ते ते सर्वेऽप्यात्मन इत्वरिका बन्धनीयाः यथा आचार्य समीपं गता यूयं सर्वेऽप्याचार्यस्य यत्पुनराचार्याणां दिशमित्वरिकां बन्धाति । आत्मनस्तु यावत्कथिकं यथा यावत् यूयमाचार्यसमीपे तिष्ठत तावदाचार्यसक्ताः शेषकालं ममेत्येवमित्वरिकान् कतिशिष्यान् सोऽप्यनर्हः ।।

**[भा. १४५८]** पंथंमि य कालगया पडिभग्गा यावि तुज्झ जे सीसा ।
एए सव्वे अनरिहा तप्पडिवक्खा भवे अरिहा ।।

**वृ-** यो [illegible] कृत्वा समागतः सनूं [illegible] साधनः परि [illegible] ते सर्वे युष्माकं शिष्याः पथि कालगताः प्रतिभग्ना वा, इमे पुनः सर्वे मम शिष्या एते स्थविरादयोऽनर्हास्तेषां पुनरनर्हाणामाचार्य-समीपगतानां ये तैः प्रव्राजिताः शिष्यास्तानाचार्य इच्छापयति वा न वा गुरुणामत्रेच्छा प्रमाणं ।।

**[भा.१४५९]** एसा गीते मेरा इमाउ अपरिग्गहाउ अगीयाणं ।
गीयत्थपमादी णव अपरिग्गह संजतीणं च ।।

**वृ-** एषा अनन्तरोदिता मर्यादा योग्यस्य गीतार्थता आचार्यस्तस्मिन् गीते गीतार्थे द्रष्टव्या, इयं पुनरपरिग्रहाणामगीतानां तथा गीतार्थप्रमादिनामपरिग्रहसंयतीनां च; इयमत्र भावना-येषामाचार्योऽप्यगीतार्थस्ते अपरिग्रहा यद्यपि नाम तेषामाचार्यपरिग्राहकस्तथापि सोऽगीतार्थ इति तत्त्वतः सूत्रनीत्या ते अपरिग्रहा एव, तेषां मध्यात्कोऽप्येकोऽन्यं संविग्नं गच्छमुपसम्पन्न एष एकः अन्यो अवपन्ना गीतार्थानां गच्छस्तेषां मध्यादेकः कश्चिदन्यं संविग्नं गच्छमाश्रितवान् एष द्वितीयः । तथा अन्याः काश्चन संयत्यस्तासामाचार्यो नास्ति, कालकरालपिशाचेन कवलितत्वात् केवलं ताभिरेकः क्षुल्लकः परिव्राजित आसीत् । (सो?) कोऽन्यं संविग्नं गच्छमुपसम्पन्नः एते त्रयोऽपि पूर्वगता कालिकगते वा श्रुते सूत्रार्थतदुभयैः परिपूर्णा जातास्तेषामागतानां यावदा भवति, तावद्वक्तव्यमिति । एतदेवाह—

**[भा.१४६०]** गीयत्थमगीयत्थे, अज्जाणं खुड्डए य अन्नेसिं ।
आयरियाण सगासे, अमुयत्तेणं तु निम्माया ।।

**वृ-** गीतार्थो योऽवसन्नगीतार्थः गच्छाद्विनिर्गतोऽगीतार्थो योऽपरिग्रहगीतार्थगच्छान्निर्गतः आर्यिकाभिः प्रव्राजितः आर्यिकाणां क्षुल्लक एते त्रयोऽप्यन्येषामाचार्याणां सकाशे अमायित्वेन कदाचनापि आचार्यसमीपममुञ्चतो निर्माताः । सूत्रार्थतदुभयज्ञा जाताः । एतदेव स्पष्टतरमाह—

**[भा.१४६१]** सीस पडिच्छो होउं, पुव्वगए कालिए य निम्मातो ।
तस्सागयस्स स गणं किं आभव्वं इमं सुणसु ।।

**वृ-** गीतार्थोऽगीतार्थ आर्यिका क्षुल्लको चान्येषामाचार्याणां समीपे प्रतीच्छक रूपकः शिष्यो भूत्वा पूर्वगते कालिके वा श्रुते निर्मातस्तस्य स्वगणस्य गतस्य किमाभाव्यं सूरिराह-इदं च वक्ष्यमाणं शृणु तदेवाह—

**[भा.१४६२]** सीसो सीसो सीसो, चउत्थंपि पुरिसंतरं लहइ ।
हेट्ठावि लभति तिण्णि, पुरिस जुगं सत्तहा होइ ।।

**वृ-** शिष्यः स्वदीक्षितः तस्यापि शिष्यो यः पौत्रकल्पस्तस्यापि शिष्यः प्रपौत्रकल्प रूपं एवं सन्तानत्रयात्मकं चतुर्थमपि पुरुषान्तरः पुरुषयुगं लभते, । चतुर्थग्रहणादन्येऽपि त्रयः सूचितास्तानेवाह-हेट्ठावि लहइ तिण्णी इत्यधस्तात्त्रीणि पुरुषयुगानि लभते । अपि शब्दादुपर्यपि त्रीणि । इयमत्र भावना-आत्मीयमाचार्यं वर्जयित्वा यस्तस्य परिवारस्तं सर्वं लभते इदमेकं पुरुषयुगं ? पितामहं वर्जयित्वा पितामह परिवारं सर्वं लभते इति द्वितीयं पुरुषयुगं प्रपितामहपरिवारं सर्वं लभते इति तृतीयपुरुषयुगं ३ । एतानि त्रीण्युपरितनानि । साम्प्रतमधस्तनानि त्रीणि भाव्यन्ते । गुरुभ्रातृप्रव्राजितं समस्तं परिवारं लभते इत्येवं पुरुषयुगं, भ्रातृव्य प्रव्राजितमपि सर्वं लभते परिवारमिति द्वितीयं पुरुषयुगं, भ्रातृप्रव्राजितैरपि प्रव्राजितान् समस्तान् लभते इति तृतीयं पुरुषयुगं । तदेवमधस्तनानि त्रीणि पुरुषयुगानि त्रीण्युपरितनानीति मिलितानि षट् जातानि । तथा आत्मना ये प्रव्राजिताः पुत्रस्थानीया ये च तैः प्रव्राजिताः पौत्रस्थानीया

ये च तैरपि प्रव्राजिता प्रपौत्रकल्पाः । एष सर्वोऽपि समुदाय एकं पुरुषयुगं । इदं च षट्सु मेलितमिति पुरुषयुगं सप्तधा भवति । तथा चाह-पुरिसजुगं सत्तहा होइ । तदेव स्पष्टयति—

[भा. १४६३] मूलायरिए वज्जितु उवरि सगणो उ हेट्ठिमे तिन्नि ।
अप्पा य सत्तत्तमो खलु पुरिसजुगं सत्तहा होइ ॥

वृ- मूलाचार्यान् पितृपितामहलक्षणान् वर्जयित्वाऽन्य उपरितनः समस्तोऽपि स्वगणस्तस्या भवति । एतेन त्रीणि पुरुषयुगान्युपात्तानि । अधस्तनान्यपि च प्रागुक्तस्वरूपाणि त्रीणि पुरुषयुगानि लभते । आत्मा च आत्मीयश्च पुत्रपौत्रप्रपौत्रलक्षणः परिवारः सप्तम इति पुरुषयुगं सप्तधा भवति । भावना प्रागेवोक्ता । अत्रैव प्रकारान्तरमाह—

[भा. १४६४] अहवा न लभति उवरि हेट्ठिल्लिय लब्भइतिनि तिन्नेव ।
तिण्ण लाभंति त्रेधवासस्थरतायं ॥

वृ- अथवेति आभवनस्य प्रकारान्तरसूचने यान्युपरि त्रीणि पुरुषयुगानि प्रागुक्तानि, तानि नैव लभते गरीयस्तया एकगुरुदीक्षितत्वेन समानतया च तेषां सदायत्त्वायोगात् । हेट्ठिल्लियलब्भइतिण्णित्ति यानि पूर्वं त्रीणि पुरुषयुगान्यधस्तनानि प्रदर्शितानि तेषां ग्रहणार्थं प्रथमं त्रीणीत्युक्त्वा तिन्नेवत्ति तेषां पूर्वभणितानामधस्तनानां त्रयाणां पुरुषयुगानामन्यान्यप्यधस्तनानि यानि त्रीणि पुरुषयुगानि परलाभत्रयः पुत्रपौत्रलक्षणा आत्मलाभ इदमेकं पुरुषयुगं सर्वमीलने सप्तपुरुषयुगानि तस्या भाव्यानि तेषां चाभवने ज्ञातमुदाहरणं-दासेन मे खरो कीतो दासो वि मे खरो वि मे ॥

मू. (६७) *भिक्खू य इच्छेज्जा गणं धारेत्तए नो कप्पइ से थेरा अणापुच्छित्ता गणं धारित्तए, थेराय से वितरेज्जा एवं कप्पइ गणं धारेत्तए, थेराय सो न वियरेज्जा एवं से नो कप्पइ गणं धारित्तए, जन्नं थेरेहिं अविइण्णं गणं धारेज्जा से संतराछेओ वा परिहारो वा ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धस्तत आह-

[भा. १४६५] दुहतोवि पलिच्छन्ने अप्पडिसेहोत्ति अतिप्पसंगा ।
धारेज्ज अनापुच्छा गणमेसो सुत्तसंबंधो ॥

वृ- द्विधातोऽपि द्रव्यतो भावतश्च परिच्छन्ने परिच्छदोपेत आचार्यश्रयमपि च द्विधातः परिच्छन्ने गणधारणस्य न प्रतिषेध इति कृत्वा किमनुज्ञया स्थविराणां कार्यमिति बुद्धा माति प्रसङ्गतः स्थविराणामनापृच्छया गणं धारयेदतस्तत्प्रतिषेधार्थमिदं सूत्रमारभ्यते । एषोऽधिकृतसूत्रस्य सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या- भिक्षुरिच्छेद्गणं धारयितुं तत्र से तस्य न कल्पते स्थविरान् गच्छगतान् पुरुषान् अनापृच्छ्य गणं धारयितुं; कल्पते से तस्य स्थविरान् आपृच्छ्य गणं धारयितुं, स्थविराश्च से तस्य वितरेयुरनुजानीयुर्गणधारणं पूर्वोक्तैः कारणैरर्हत्वात् तत एवं सति से तस्य कल्पते गणं धारयितुं, स्थविराश्च से तस्य न वितरेयुर्गणधारणानर्हत्वादेवं सति न कल्पते गणं धारयितुं, यः पुनः स्थविरैरवितीर्णमननुज्ञातगणं धारयेत् ततः से तस्य कृतादन्तरादपन्यायात् प्रायश्चित्तं छेदो वा परिहारो वा वाशब्दादन्यद्वा तपः । एष सूत्राक्षरार्थः । भावार्थं भाष्यकृदाह—

[भा. १४६६] काउं देसदरिसणं, आगतउवट्ठियम्मि उवरया ।
थेरा असिवादि कारणेहिं, व न ठावितो साइस्ससती ॥

[भा.१४६७] सो कालागतम्मि उ गतो, विदेसं व तत्थ व अपुच्छा ।
थेरे धारेयमणं भावनिसिठं अनुग्घाया ।।

वृ- देशदर्शननिमित्तं गतेन ये प्रव्राजितास्तान् यद्यात्मनो यावत् कथिकान् शिष्यतया बद्धाति ततस्तस्य प्रायश्चित्तं चतुर्गुरुकं । तथा देशदर्शनं कृत्वा तस्मिन्नागते अप्रस्थापिते च तस्मिन्ना चार्यपदे स्थविरा यस्याचार्या उपरताः कालगता यदि वा स प्रत्यागतोऽप्यशिवादिभिः कारणैर्यदि वा साधकस्य असतित्ति अभावेनाचार्यपदे स्थापितेऽत्रान्तरे वाचार्यः तस्मिन् कालगते यदि वागतो विदेशं तत्रैव विदेशे गणं धारयितुमिच्छेत् । एतेषु सर्वेष्वपि कारणेषु समुत्पन्नेषु यदि स्थविरान् गच्छमहतो अपृष्ट्वा यद्यपि तस्याचार्येण भावतो गणो निसृष्टोऽनुज्ञातस्तथापि स्थविरा आपृच्छनीयास्तत आह-भावनिसृष्टमाप गणं धारयति तर्हि तस्य स्थविरानापृच्छाप्रत्ययं प्रायश्चित्तं अनुद्घाता गुरुकाश्चत्वारो मासा उपलक्षणमेतत् आज्ञानवस्थामिथ्यात्वविराधनारूपाश्च तस्य दोषाः ।

[भा.१४६८] सयमेव दिसाबंधं अननुन्नाते करे अनापुच्छा ।
थेरेहिंय पडिसिद्धो सुद्धालग्गा उवेहंता ।।

वृ- यो नाम स्वयमेव आत्मच्छंदसा को मम निजमाचार्यं मुक्त्वान्य आपृच्छनीयः समस्तीत्यध्यवसायतः पूर्वाचार्येणाननुज्ञात आचार्यपदे तस्य स्थापनात् स्थविरान् गच्छमहत्तररूपान् अनापृच्छ्य दिग्बन्धं करोति स्थविरैः प्रतिषेधनीयः । यथा न वर्तते आर्य ! तव तीर्थकराणामाज्ञां लोपयितुं एवं प्रतिचोदितो यदि न प्रतिनिवर्तते तर्हि स्थविराः शुद्धाः स चतुर्गुरुके प्रायश्चित्ते लग्नः । अथ स्थविरा उपेक्षन्ते तर्हि ते उपेक्षाप्रत्ययं चतुर्गुरुके लग्ना यत एवमुपेक्षायामनापृच्छायां च तीर्थकराभिहितं प्रायश्चित्तमाज्ञादयश्च दोषास्तस्मात्स्थविरैरुपेक्षा न कर्तव्या । तेन च स्थविरा आपृच्छनीयाः ।।

[भा.१४६९] सगणे थेराणसती तिग थेरे वा वाति गंतु ।
बद्धातिसेवा सति इत्तरियं धारेइ न मेलितो जाव ।।

वृ- अथ स्वगच्छे स्थविरा न सन्ति तर्हि गणे स्वकीये गच्छे स्थविराणामसति अभावे ये त्रिककुलगणसंघरूपे स्थविरांस्तान् त्रिकं स्थविराणां त्रिकं वा समस्तं समस्तं कुलं वा सङ्घं वा गणं वा इत्यर्थः । उपतिष्ठेत् यथा यूयमनुजानीत मह्यं दिशमिति अथ अशिवादिभिः कारणैर्न पश्येत् कुलस्थविरादीनामसत्यभावे इत्वरिकां दिशं गणस्य धारयति यावत् कुलादिभिः सह गणेन मिलितो भवति ।।

[भा.१४७०] जेउ अहाकप्पेणं अनुनायंमि तत्थ साहम्मी ।
विहरंति तमद्धाए न तेसिं छेओ न परिहारो ।।

वृ- ये तु साधर्मिकाः स्वगच्छवर्तिनः परगच्छवर्तिनो वा यथाकल्पेन श्रुतोपदेशेन तेषां सूत्राद्यर्थं तत्रोपस्थापनात् विषये तदर्थाय सूत्राणामर्थाय आसेवना शिक्षार्थैवेत्यर्थः । अनुज्ञाते गणाधारणा तत्र गच्छे विहरन्ति । ऋतुबद्धे काले मासकल्पेन वर्षासु वर्षाकल्पे तेषां तत्प्रत्ययो यदेषोऽनुज्ञातो गणं धारयतीति तन्निमित्तमित्यर्थः । प्रायश्चित्तं न च्छेदो न परिहार उपलक्षणमेतन्नान्यद्वा । तपः, श्रुतोपदेशेन तेषां सूत्राद्यर्थं तत्रोपस्थापनात्, विषय लोलता हि तस्या समीपमुपतिष्ठमानानां दोषा, न सूत्राद्यर्थमिति, ।।

मू. (६८) *तिवासपरियाए समणे निग्गंथे आयारकुसले संजमकुसले पवयणकुसले पन्नतिकुसले*

*संगहकुसले उवग्गहकुसले अक्खयायारे अभिन्नायारे असबलायारे असंकिलिट्ठायारचित्ते बहुस्सुए बब्भागमे जहन्नेणं आयारपकप्पधरे कप्पइ उवज्झायत्ताए उद्दिसित्तए ।।*

**मू. (६९)** *सच्चेवणंसे तिवासपरियाए समणे निग्गन्थे नो आयारकुसले जाव नो उवग्गहकुसले खयायारे भिन्नायारे सबलायारे संकिलिट्ठायारचित्ते अप्पसुए अप्पागमे नो कप्पइ उवज्झाव ताए उद्दिसित्तए ।*

**मू. (७०)** *पंचवासपरियाए समणे निग्गंथे (जहा ६८) जहन्नेणं दसकप्प ववहारधरे कप्पइ आयरिय उवज्झायत्ताए उद्दिसित्तए ।*

**मू. (७१)** *सच्चेवणंसे पंचवासपरियाए समणे निग्गंथे (जहा ६९) नो कप्पइ आयरिय उवज्झायत्ताए उद्दिसित्तए ।*

**मू. (७२)** *अट्ठवासपरियाए समणे निग्गंथे (जहा ६८) जहन्नेणं ठाणसमवायधरे कप्पइ आयरियत्ताए जाव गणावच्छेइत्यत्ताए उद्दिसित्तए ।*

**मू. (७३)** *सच्चेवणं से अट्ठवासपरियाए समणे निग्गंथे (जहा ६९) नो कप्पइ आयरियत्ता जाव गणावच्छेइयत्ताए उद्दिसित्तए ।।*

**वृ-** 'तिवासपरियाए समणे' इत्यादि सूत्रषट्कम् । अथास्य पूर्वसूत्रेण सह कः सम्बन्धस्तत आह-

**[भा. १४७१]** भावपलिच्छयस्स उ परिणामठाए हो इमं सुत्तं ।
सुयचरणे उपमानं सेसाउ हवंति जा लद्धी ।।

**वृ-** द्रव्यभावपरिच्छदोपेतः स्थविरैरनुज्ञातो गणं धारयति तद्विपरीतो न धारयतीति उक्तं । तत्रेदं सूत्रषट्कम् । भावपरिच्छेदस्य परिमाणार्थं परिमाणप्रतिपादनार्थं भवति वर्तते यथा चानेन सूत्रषट्केन श्रुतेन चरणे च प्रमाणमभिधीयते, । शेषाश्च या लब्धय आचार्याणामुपाध्यायादीनां योग्या याभिः समन्विताः आचार्यतया उपाध्यायादितया वा उद्दिश्यन्ते । ता अपि प्रतिपाद्यन्ते, । तत्र श्रुतपरिमाणं जहन्नेण आयारपकप्पधरे इत्यादिना चारित्रपरिमाणं ति वासपरियाए इत्यादिना र्थायः । श्राम्यति, तपस्यतीति श्रमणः । स च शाक्यादिरपि भवति ततस्तद्व्यवच्छेदार्थमाह निर्ग्रंथः निर्गतोर्ग्रन्यात् द्रव्यतः सुवर्णादिरुपात्, भावतो मिथ्यात्वादिलक्षणादिति निर्ग्रन्थः आचारकुशलः ज्ञानादिपञ्चविधाचारकुशलः । तत्र कुशल इति द्विधा-द्रव्यतो भावतश्च । तत्र यः कुशं दर्भं दात्रेण तथा लुनाति न क्वचिदपि दात्रेण विच्छिद्यते स द्रव्य कुशलः । यः पुनः पञ्चविधेनाचारेण दात्रकल्पेन कर्मकुशं लुनाति स भावकुशलः । तत्र एवमत्र, समासः आचारेण ज्ञानाद्याचारेण कर्मकुशलः कर्मच्छेदकः आचारकुशलः । आचारविषये सम्यक्परिज्ञानवान् इति तात्पर्यार्थः । अन्यथा तेन कर्मकुशच्छेदकत्वानुपत्तेः । एवं सर्वत्र भावनीयं, संयमं सप्तदशविधं यो जानात्याचरति च स संयमकुशलः । समासभावना सर्वत्र तथैव । अथवा यः कुशं लुनन् क्वचिद्दात्रेणाच्छिद्यते स लोके तत्वतः कुशलो न न्यु स्य स्तेन कुशलशब्दस्य प्रवृत्तिनिमित्तं दक्षत्वं । तच्च यत्रास्ति तत्र कुशलशब्दोऽपि प्रवर्तते इति दक्षवाची कुशलः शब्दस्तत एवं समास आचारे ज्ञातव्ये प्रयोक्तव्ये प्रयोक्तव्ये वा कुशलो दक्ष आचारकुशलः एव संयमकुशलः प्रवचने ज्ञातव्ये कुशलः प्रवचनकुशलः प्रज्ञप्तिर्नाम स्वसमयपरसमयप्ररुपणा । तत्र कुशलः, संग्रहणं संग्रहः ।

स द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यत आहारोपध्यादीनां भावतः सूत्रार्थौ, तयोर्द्विविधेऽपि सङ्ग्रहे कुशलः । उप सामीप्येन ग्रहणमुपग्रहः । सोऽपि द्विधा-द्रव्यतो भावतश्च । तत्र येषामाचार्य उपाध्यायो वा न विद्यते तान् आत्मसमीपे समानीय तेषामित्वरां दिशं बध्वा तावद्धारयति यावन्निष्पाद्यन्ते । एष

द्रव्यत उपसङ्ग्रहः । ग्रही उपादाने इति वचनात्, यः पुनरविशेषेण सर्वेषामुपकारे वर्तते स भावत उपग्रहः । अक्षताचारता परिपूर्णाचारता च चारित्रे सति भवति । चारित्रवता नियमतः शेषाश्चत्वारोऽप्याचाराः सेव्याश्चारित्रवतश्चारित्रं स्याद्धानतेसि वचनात् । ततश्चारित्रवानित्युक्तं द्रष्टव्यम् । न त्वेषोऽप्यर्थ आचारकुशल इत्यनेनोपात्त इति किमर्थस्याप्यादानमुच्यते । चारित्रं खलु प्रधानं मोक्षाङ्गं तदपि कण्ठतो नोक्तमिति तदा शङ्काव्युदासार्थमित्यदोषः । तथा अशबलो यस्य सितासितवर्णोपेतबलीवर्द इव कर्बुर आचारो विनयाशिक्षा भाषा गोचरादिको यस्यासावशबलाचारः । तथा अभिन्नेन केनचिदप्यती-चारविशेषेण (अ) खण्डित आचारो ज्ञानाचारादिको यस्यासावभिन्नाचारः । तथा असंक्लिष्ट इह परलोकाशंसारुपसंक्लेशविप्रमुक्त आचारो यस्य सोऽसंक्लिष्टाचारः । तथा बहुश्रुतं सूत्रं यस्यासौ बहुश्रुतः । तथा बहुरागमोऽर्थरुपो यस्य स बह्वागमः जघन्येनाचारप्रकल्पधरो निशीथाध्ययनसूत्रार्थधर इत्यर्थः । जघन्यत आचारप्रकल्पग्रहणादुत्कर्षतो द्वादशाङ्गविदिति द्रष्टव्यं, स कल्पते यो भवत्युपाध्याय-तयोद्देष्टुमिति प्रथमसूत्रार्थः सद्भवणं से ति वासेत्यादि से शब्दोऽथशब्दार्थः । अथ स एव त्रिवर्षपर्यायः श्रमणो निर्ग्रन्थो नो आचारकुशल इत्यादि पूर्वव्याख्यानतः सुप्रतीतः । एवं द्वे सूत्रे पञ्चवर्षपर्यायस्या-चार्योपाध्यायत्वोद्देशविषये भावनीये । नवरं तत्र जघन्येन दशाकल्पव्यवहारध इति वक्तव्यम् (४) एवमेवाष्टवर्षपर्यायस्याप्याचार्योपाध्यायगणावच्छेदित्वोद्देशविषये द्वे सूत्रे व्याख्येये । केवलं तत्र जघन्येन स्थानसामाचार्या गण इति वाच्यं । शेषं तथैव ।। एष सूत्रषट्कस्य संक्षेपार्थः अधुना निर्युक्तिविस्तरः । तत्र तावत्सर्वेषामेव सूत्रपदानां सामान्येन व्याख्यां चिकीर्षुरिदमाह-भाष्यकृत्

**[भा.१४७२]**　　　एक्कारसंग सुत्तत्थ. धारया नवमपुव्वकडजोगी ।
बहुसुय बहु आगमिया, सुत्तत्थ विसारया धीरा ।।

**[भा.१४७३]**　　　एय गुणोववेया सुयनिघस नायगा महा(ज)नस्स ।
आयरिय उवज्झाय पवत्ति थेरा अनुन्नाया ।।

**वृ-** एकादशानामङ्गानां सूत्रार्थमवधारयन्तीत्येकादशाङ्गसूत्रार्थधारकाः । नवमपुव्वत्ति अत्रापि सूत्रधारका इति सम्बध्यते, नवमपूर्वग्रहणं च शेषपूर्वाणामुपलक्षणं । ततोऽयमर्थः । समस्त-पूर्वसूत्रधारकाः तथा सूत्रोपदेशेन मोक्षाविराधीकृतो न्यस्तो योगो मनोवाक्कायव्यापारात्मकः स कृतयोगः स येषामस्ति ते कृतयोगिनः बहुश्रुताः प्रकीर्णकानामपि सूत्रार्थधारणात् । इह पूर्वधरा अपि तुल्येपि च सूत्रे मतिवैचित्र्यतोऽर्थागममपेक्ष्य षट्स्थानपतितास्ततः प्रभूतावगमप्रतिपादनार्थमाह-बह्वागमाः बहुप्रभूतः आगमोऽवगमो येषां ते तथा एतदेवाह-सूत्रार्थविशारदाः तत्कालपेक्षया सूत्रेऽर्थे च विशारदाः तथाधिया औत्पत्तिक्यादिरुपया चतुर्विधया बुद्धया राजन्ते इति धीराः । एतद्गुण इत्यादि । ये अनन्तरगाथायामुक्ता गुणैरुपेता एतद्गुणोपेताः श्रुतं निघर्षयन्तीति श्रुतनिघर्षाः । किमुक्तं भवति ? यथा सुवर्णाकारस्तापनिघर्षच्छेदैः सुवर्णं परीक्षते किं सुन्दरमथवामङ्गलमिति । एवं स्वसमयपरसमयान् परीक्ष्यन्ते ते श्रुतनिघर्षा इति । यथा नायकाः स्वामिनो महाजनस्य स्वगच्छवर्तिनां साधूनामिति भावः । अथवा नायका ज्ञानादीनां प्रापकास्तदुपदेशनात्, महाजनस्य समस्तस्य सङ्घस्य इत्थंभूता आचार्या उपाध्यायाः प्रवर्तिनः स्थविरा उपलक्षणमेतत् । गणावच्छेदिनश्चानुज्ञाताः । तदेवं सामान्यतः सर्वसूत्रपदानामर्थो व्याख्यातः । सम्प्रत्येकैकस्य सूत्रपदस्यार्थो वक्तव्यस्तत्र येषां पदानां वक्तव्यस्तान्युपरिक्षिपन्नाह—

[भा.१४७४] आयारकुसलसंजमपवयणपण्णत्तिसंगहोवग्गहे ।
अक्खुया असबलभिन्न संकिलिट्ठायारसंपन्ने ।।

वृ- अत्र कुशलशब्दः पूर्वार्द्धे प्रत्येकं सम्बध्यते । ततोऽयमर्थः आचारकुशलशब्दस्य प्रवचनकुशलशब्दस्य प्रज्ञप्तिकुशलशब्दस्य संग्रहकुशलशब्दस्य उपग्रहकुशलशब्दस्य च । अक्खुए इत्यादि । अत्राचारशब्दसम्पन्नः प्रत्येकमभिसम्बन्धनीयः । अक्षताचारसम्पन्नस्य अक्षताचारस्येत्यर्थः, एवं शबलाचारसम्पन्नस्य अभिन्नाचार सम्पन्नस्य असंक्लिष्टाचारसम्पन्नस्य च व्याख्या कर्तव्या । तत्राचारकुशलशब्दस्य व्याख्यानार्थमाह-

[भा.१४७५] अब्भुट्ठाणे आसनकिंकर अब्भासकरणमविभत्ती ।
पडिरूवजोगजुंजण निजोगपूजा जहाकमसो ।।

[भा.१४७६] अफरुस अणवल अचवलमकुकुयमडंभगो म (अ)सीभरगा ।
सहितसमाही उवहि गुणनिहि आयारकुसलो ।।

वृ- आचारकुशलो नाम यो गुर्वादीनामागच्छतामभ्युत्थानं करोति, । आसनत्ति आसनप्रदानं च तेषामेव गुर्वादीनां विधत्ते, समागतानां पीठकाद्युपनयतीति भावः, तथा प्रातरुत्थाय आचार्यान् वदति संदिशत किं करोमीति स किङ्करः । तथा अब्भासकरणमिति य अभ्यासादभ्युपेतास्तेषामात्मसमीपवर्तित्वकरणमभ्यासकरणं, अविभक्तिर्विभागाभावः शिष्यप्रतीच्छिकानां विशेषाकरणमिति भावः, । पडिरुवजोगजुंजणत्ति प्रतिरुपः खलु विनयः कायिकादिभेदतश्चतुर्धाऽधस्तात् पीठिकायामभिहितस्तदनुगता योगा मनोवाक्कायास्तेषां योजनं व्यापारणवश्यकरणं, अविभक्तविभागायोजनं, नियोगत्ति यो यत्र वस्त्राद्युत्पादने नियोक्तव्यः तस्य तत्र नियोगं करोति, । पूजा जहाकमसोत्ति गुर्वादीनां यथानुरुपं क्रमशो येन पूजा क्रियते । अपरुषमनिष्ठुरं मनः प्रह्लादकृदित्यर्थः । तद्भाषते, अणवलत्ति तत्र प्राकृतत्वात् यकारलोपः तेन अवलया इति द्रष्टव्यं । तस्याबावोऽवलया अकुटिलत्वम् इत्यर्थः । अचपलः स्थिरस्वभावः अकुकुचो हस्तपादमुखादिविरूपचेष्टारहितः । अदम्भको वञ्चनानुगतवचनविरहितः सीभरोनामय उल्लपन्परं लालया सिञ्चति । तत्प्रतिषेधादसीभरः, प्राकृतत्वात् । स्वार्थिकप्रत्ययविधानेन असीभरकः । एष सर्वोऽपि किल विनय इतिवीर्याचारः प्रतिपादितो द्रष्टव्यः । सम्प्रति शेषाणां ज्ञानाद्याचाराणां प्ररुपणानिमित्तं पश्चार्धमाह-सहितो नाम सो यस्य ज्ञानादेरुचितः कालस्तेनोपेतः । किमुक्तं भवति ? काले स्वाध्यायं करोति । काले प्रतिलेखनादिकं काले च स्वोचितं तप इति सम्यक् आदितो यत् यस्योपधाने तत्करणे वा स्वाभिप्रायः समाहितः उपशमी ज्ञानादीनां हितः स्थित उत्पत्तिके ज्ञानाद्यधिकं निर्मलतरं आत्मनो वांछन् सदैव गुरुषु बहुमानपर इति भावः । एवं ज्ञानाद्याचारसमन्वितो गुणनिधिर्भवति । तत आह-गुणनिधिर्गुणानामाकारः एष आचारकुशलः ।

साम्प्रतमेतदेव गाथाद्वयं विनेयजनानुग्रहाय भाष्यकृद्वयाख्यानयति-

[भा.१४७७] अब्भुठाणं गुरुमादियाण आसनदानं च होइ तस्सेव ।
गोसेवय आयरिए संदिसह किं करोमित्ति ।।

वृ- अत्र गोसे इति प्रातरेवेत्यर्थः ।

[भा.१४७८] अब्भासकरणधम्मम्भुयाण अविभत्ति सीसपाडिच्छे ।
पडिरुवजोगी जह पीढियाए जुंजण करेमि धुवं ।।

वृ- अत्र प्रतिरुपयोगो यथा पीठिकायां प्राक् प्रतिरुप विनयाधिकारेऽभिहितस्तथा प्रतिपत्तव्यः । जुंजण इत्यस्य व्याख्यानं वद् ध्रुवमकालहीनं प्रतिरुपयोगात् करोति व्यापारयतीति भावः ।

[भा.१४७९] पूयं जहानुरुवं गुरुमादीणं करेह कमसो उ ।
ल्हादी जनन मफरुसं अणवलया होइ कुडिलत्तं ।।

वृ- अत्र ल्हादिजननमिति मनः प्रल्हत्ति (ल्हाद) जनकं ।

[भा.१४८०] अचवलथिरस्स भावो अप्फंदणया य होइ अकुयत्तं ।
उल्लावलालससीभर सहितोकालेननाणादी ।।

वृ- अवस्पन्दनता भण्डोचितहस्तपादादिचेष्टाविकलता ।

[भा.१४८१] सम्मं अहियभावो समाहितो समीवम्मि ।
नाणादीणं तुट्ठितो गुणनिहिओ आगरो गुणाणं ।।

वृ- गाथापञ्चकमपि गतार्थं । उपसंहारमाह-

[भा.१४८२] आयारकुसलो एसो संजमकुसलं अतो वोच्छामि ।
पुढवादि संजमं मी सत्तर से जो भवे कुसलो ।।

वृ- एषोऽनन्तरमुक्तः आचारकुशलः अत ऊर्ध्वं संजमकुशलं वक्ष्यामि । प्रतिज्ञातमेव निर्वाहयति । पृथिव्यादिसंयमे-

[भा.१४८३] पुढवि दगअगणिमारुय वणस्स वितिचउ पणिंदि अज्जीवो ।
पेहुप्पेह पमज्जण परिठवणमणोवईकाए ।।

इत्येवंरुपे सप्तदशे सप्तदशप्रकारे यो भवति कुशलः संयमं प्रकारान्तरेण संयमकुशलमाह-

[भा.१४८४] अहवा गहणे निसिरण एसणा सज्ज निसेज्ज उवही य ।
आहारेवि य सतिमं पसत्थजोगे य जुंजणया ।।

[भा.१४८५] इंदियकसायनिग्गह पिहियासवजोगज्झाणमल्लीणो ।
संजयकुसलगुणनिहि तिविहकरणभावस विसुद्धो ।।

वृ- अथवेति संयमस्यैव प्रकारान्तरोपदर्शने ग्रहणे आदाने निसिरणे एषणायां गवेषणादिभेदभिन्नायां शय्यानिषद्योपध्याहारविषयानां च निषद्यायां सम्यगुपयुक्तसंयमकुशलः । किमुक्तं भवति ? य उपकरणमारमाददानो निक्षिपन्वा प्रतिलेख्य प्रमार्ज्य च गृह्णाति निक्षिपति वा एतेन प्रेक्षासंयमः प्रमार्जनासंयमश्चोक्तः, । एतद्ग्रहणात्तज्जातीयाः शेषा अप्युपेक्षादि संयमा गृहीता द्रष्टव्याः । तथा यः शय्यामुपधिमाहारं च उद्गमोत्पादनैषणाशुद्धं गृह्णाति । संयोजनादिदोषरहितं च भुङ्क्ते स्थानाद्यपि कुर्वाणः प्रत्युपेक्ष्य प्रमार्ज्य च करोति स संयमकुशलः, । अत्र निषद्याग्रहणेन स्थानादि गृहीतं, तथा य एतेषु सर्वेष्वपि संयमेषु योजना व्यापारणं, किमुक्तं भवत्य प्रशस्तानां मनोवाक्काययोगानामपवर्जनं, प्रशस्तानां मनोवाक्काययोगानामभियोजनं संयमकुशलः । तथा इन्द्रियाणि श्रोत्रादीनि कषायाश्च क्रोधादीन् यो निगृह्णाति । तथा श्रोत्रादीनि न स्वविषये व्यापारयति श्रोत्रादिविषयप्राप्तेषु शुभाशुभेषु शब्दादिष्वर्थेषु रागद्वेषौ न विधत्ते । क्रोधादीनप्युदयितुः प्रवृत्तान् निरुणद्धि । उदयप्राप्तांश्च विफलीकरोति । तथाश्रवाणि प्राणातिपातादिलक्षणानि पिदधाति, । योगं च मनोवाक्कायलक्षणमप्रशस्तं ध्यानं चार्तरौद्रं तत्परिहारेण प्रशस्तधर्मं शुक्लं च आलीन आश्रितो निगूहितबलवीर्यतया तत्र प्रवृत्त

इत्यर्थः । एष संयमकुशलः, कथंभूतः सन्नित्याह-गुणनिधिः संयमानुगता ये गुणास्तेषां निधिरिव तैः परिपूर्ण इति भावः गुणनिधिः ।, तथा त्रिविधेन प्रकारेण मनोवाक्कायलक्षणेन सुविशुद्धो मनसाप्यसंयमानभिलाषान् भावेन च परिणामेन विशुद्ध इह लोकाद्याशंसादिप्रमुक्तत्वात् त्रिकरणभावविशुद्धः । अस्यैव गाथाद्वयस्य व्याख्यानार्थमाह–

[भा.१४८६] गिण्हइ पडिलेहेउं, पमज्जियं तह य निसिरएयावि ।
उवउत्तो एसणाए सेज्जनिसज्जोवहाहारे ।।

[भा.१४८७] [illegible] सो सतिमं ।
जुंजइ पसत्थमेव उ मणभासाकायजोगं तु ।।

[भा.१४८८] सोइंदियाइयाणं निग्गहणं चेव तह कसायाणं ।
पाणातिवाइयाणं संवरणं आसवाणं च ।।

[भा.१४८९] झाणे अपसत्थ एव पसत्थज्झाणे य जोगमल्लीणो ।
संजमकुसलो एसो, विसुद्धो तिविहकरणेण ।।

वृ- गाथाचतुष्टयमपि गतार्थम् । नवरं उवउत्तो एसणाए इत्यादि उपयुक्त एषणायां किं विषयाया-मित्याह-शय्यानिषद्योपध्याहारे शय्या उपाश्रयः निषद्या पीठफलकादिरूपा, स्थानादिरूपनिषद्या व्याख्यानं तु प्रागेवोक्तं । उपधिः पात्रनिर्योगादिराहारोऽशनादिरूपः । एषां समाहारो द्वन्द्वस्तस्मिन् तद्विषयायामित्यर्थः । ज्झाणे अपसत्थेत्यादिध्यानं द्विधा-अप्रशस्तं प्रशस्तं च, । अप्रशस्तमार्त्तं रौद्रं च, । प्रशस्तं धर्म शुक्लं च । तत्र प्रशस्ते ध्याने धर्मशुक्ले रुपे च शब्दो भिन्नक्रमः प्रशस्तं योगमालीनः सुविशुद्धो तिविहकरणेणंति उपलक्षणमेतत् । भावेनापि सविशुद्धः शेषं सुगमं उक्तः संयमकुशलः । प्रवचनकुशलमाह–

[भा.१४९०] सुत्तत्थहेउकारण वागरणसमिद्धचित्तसुयधारी ।
पोराण दुद्धरधरं सुयरयणनिहाणमिव पुणो ।।

[भा.१४९१] धारियगुणियसमीहिय निज्जवणा विउलवायणसमिद्धो ।
पवयणकुसलनिही पवयणहियनिग्गहसमत्थो ।।

वृ- सूत्रार्थात्मकत्वात् यदि वा सूत्र युक्तोऽर्थोऽस्मिन्निति सूत्रार्थः, । नत्वक्षराधानारूढार्थमिति भावः । हेतुरन्वयव्यतिरेकात्मककारणमुपपत्तिमात्रं हेतुकारणे व्याक्रियते प्रतिपाद्यते अनेनेति हेतुकारणव्याकरणं, समृद्धं अनेकातिशयात्मकत्वात् चित्रमाश्चर्यभूतं अनन्तगमपर्यायात्मकत्वात् । एवं रुपं श्रुतं धारयतीत्येवं शीलः सूत्रार्थहेतुकारणव्याकरणसमृद्धचित्रश्रुतधारी, तथा पोराणमिव पौराणां यादृशमतीताद्धायामासील् तादृशमिदानीमप्यतिबहुलत्वेनेति भावः, दुर्द्धरं नयभङ्गाकुलतया प्राकृतजनैर्धारयितुमशक्यं धरतेऽर्थान् प्रवचनमिति पौराणदुर्द्धरः । तथा श्रुतरत्नस्य निदानमिव पूर्णः प्रतिपूर्णोऽर्थनिर्णयप्रदानादिना, तथा धारितं सम्यग् धारणाविषयीकृतं न विनष्टमिति भावः, । गुणितं च बहुशः परावर्तितं तथा सम्यक् ईहितं पूर्वापरसम्बन्धेन पूर्वापराव्याहतत्वेनेत्यर्थः, । मीमांसितं समीहितं एतानि प्रवचन विशेषणानि इत्थंभूतेन प्रवचनेन तथा तस्यैव प्रवचनस्य निर्यापणा मीमांसिततया निर्दोषत्वेन निश्चयतया निर्दोषत्वेन निश्चयनं तया विपुलविशोधनार्थं बहूनामाचार्याणां सकाशे ग्रहणात् वाचना विपुलावाचना तया च समृद्धो धारितगुणितसमीहितनिर्यापणाविपुलवाचनासमृद्धः । तथा प्रवचनपरिज्ञानुगतानां गुणानां निधिरिव

गुणनिधिः । किमुक्तं भवति ? । प्रवचनमधीत्यात्मनो हितं चरत्यन्येषां च हितमुपदिशतीति तथा प्रवचनस्याहिता अवर्णभाषिणस्तन्निग्रहे समर्थः प्रवचनाहितनिग्रहसमर्थः पाठान्तरं-पवयणहियनिग्गम समत्थो प्रवचनाय हितः स्वशक्त्यनिगूहनेन प्रभावक इत्यर्थः । निर्गमे आत्मनः परस्य च संसारान्निस्तारणे समर्थः । अत्रैव कतिपयपदव्याख्यानार्थमाह–

[भा.१४९२] नयभंगाउलयाए दुद्धर इव सद्दोत्ति उवमे ।
धारियमविघणट्ठं गुणियं परियत्तियं बहुसो ।।

[भा.१४९३] पुव्वावरखंधेणं समीहियं वाइयं तु निज्जवियं ।
बहुविय वायणकुसलो पवयणअहियए निगिणहो ।।

वृ- गाथाद्वयमपि गतार्थं । नवरंवाचितमापेक्षपरिहारपूर्वकतया सम्यक् गुरुपादान्तिके निर्णीतार्थीकृतं निर्यापितं विपुलवाचनासमृद्ध इत्यस्या व्याख्यानं बहुविधया वाचनया कुसलो दक्षो बहुविधवाचना-कुशलः, उक्तः प्रवचनकुशलः । सम्प्रति प्रज्ञप्तिकुशलमाह–

[भा.१४९४] लोगेवेएसमए तिवण्णसुत्तत्थ गहियपयालो ।
धम्मत्थ काममीसग किहासु कहवित्थरसमत्थो ।।

[भा.१४९५] जीवाजीवं बंधं मोक्खं गतिरागति सुहं दुक्खं ।
पन्नत्तीकुसलविऊ परिवादकुदंसणे महणो ।।

वृ- लोके वेदे समये वाल्मीये प्रवचने यानि शास्त्राणि तेषु सूत्रार्थयो गृहीतं पेयालं परिमाणं येन स सूत्रार्थगृहीतपेयालः सम्यग् विनिश्चितसूत्रार्थ इति तात्पर्यार्थः । तथा धर्मकथासु अर्थकथासु कामकथासु मिश्रकथासु च द्विन्निसंयोगतो धर्मार्थकामकथासु कथयितव्यासु, कहवित्थरत्ति विस्तरेण कथने समर्थः धर्मार्थकाममिश्रकथासु विस्तरकथाकथनसमर्थः, तथा जीवमजीवं बंधमोक्षं गतिमागति सुखं दुःखमधिगत्य प्रज्ञप्तौ कुशलः । कुत इत्याह-यतो विदू विद्वान् । एतदुक्तं भवति-यतो लोकवेदसमया-चाराणां सम्यग्वेत्ता ततो जीवानां नारकादिभेदभिन्नानामजीवानां धर्मास्तिकायादीनां बन्धस्य मिथ्यात्वाविरतप्रमादकषाययोगप्रत्ययकस्य मोक्षस्य सकलकर्मांशापगमरूपस्य ज्ञानदर्शनचारित्र-हेतुकस्य तथा येन येन कर्मणा कृतेन नरकतिर्यग्देवभवेषूत्पत्तिर्भवति । तद्रूपयोगतो येन च कर्मणा कृतेन मनुष्यभवे समुत्पत्तिस्तद्रूपाया आगतेस्तथा सुखं यथा प्राणिनामुपजायते तथा भूतस्य, यथा दुःखं तथा दुःखस्य प्ररूपणायां कुशलः तथा परवादिनो यत्कुदर्शनं तस्मिन् मथनः किमुक्तं भवति । परवादिनः प्रथमं भाषन्ते यथा युष्माभिः कुदर्शनमग्राहितत्वस्ते न सहमाना विप्रतिपद्यन्ते तांश्च विप्रतिपद्यमानान् युक्तिभिस्तथा मथ्नाति यथा स्वदर्शनपरित्यागं कुर्वन्तीति । एष इत्थंभूतः प्रज्ञप्तिकुशलः ।

साम्प्रत-मत्रवदृष्टान्तमाह-

[भा.१४९६] पनत्ती कुसलो खलु जए खुड्डगणी मुरुंडरायस्स ।।
पुठो कहं नवि देवा, गयंपि कालं न याणंति ।।

[भा.१४९७] तो उठितो गणधरो, । रायाविय उठितो ससंभंतो ।
अह खीरासवलद्धी कहति सो खुड्डगणीतो ।।

[भा.१४९८] जाहे य पहरमेत्तं कहियं न य मुणइ कालमह राया ।
तो बेति खुड्डगणी रायाए एव जाणाहि ।।

[भा.१४९९] जह उठिएण वि तु मे नविनाओ एत्तिओ इमो कालो ।
तूयगीयवादियविमोहिया न देवा न याणंति ।।

[भा.१५००] अब्भुवगयं च रण्णा कहणाए एसो भवं कुसलो ।
ससमयपरूवणाए महेति सो कुसमए चेव ।।

वृ- प्रज्ञप्तिकुशलो यथा कुश (ल)क्षुल्लकगणी क्षुल्लकाचार्यो मुरुण्डराजस्य तथा चान्यदा तेन राज्ञा पृष्टः क्षुल्लकगणी कथं तु देवा गतमपि कालं न जानन्ति, । तत एवं पृष्टः सन् स गणधरः सहसा आसनादुत्थितः, । तमुत्थितं दृष्ट्वा राजापि ससंभ्रान्तः समुत्थितः ततो थानंतरं स क्षुल्लकगणी क्षीरमिवाश्रति कथयन् यस्या लब्धेः साक्षीराश्रवा सा लब्धिर्यस्यासौ क्षीराश्रवलब्धिः स इत्थंभूतः स्वसमयानुगतं किमपि कथयति । जाहे ये इत्यादि यथा च प्रहरमात्र कालं यावत्कथिकमथ च तावन्तं कालं राजा गतमपि न जानाति ततो राजानं ब्रूते क्षुल्लकगणी, एवमनेन प्रकारेण वक्ष्यमाणमपि जानीहि । तदेवाह-जह उठिएण वेत्यादि । यथा उत्थितेनापि त्वया न विज्ञातोऽयमेतावान् कालो गतः । कथारसप्रवृत्तेनेति एवमनेन प्रकारेण गीतवादित्रविमोहिता देवाः प्रभूतमपि गतं कालं न जानन्ति, एतच्च राज्ञा तथैवाभ्युपगतं जाता महती प्रतिपत्तिरीदृशः खलु कथनायाः प्रज्ञप्तेः कुशलः । स च तथाभूतः स्वसमयप्ररूपणानियमतः कुसमनाय् मथ्नात्येव उक्तः प्रज्ञप्तिकुशलः ।।

सम्प्रति संग्रहकुशलो व्याख्येयस्ततः सङ्ग्रहप्ररूपणार्थमाह—

[भा.१५०१] दव्वे भावे संगहो दव्वेऊ उक्ख हारमादीउ ।
साहिज्जादी भावे परूवणा तस्सिमा होइ ।।

वृ- संग्रहो द्विधा-द्रव्ये भावे च । तत्र द्रव्ये उक्षादिक आहारादिकश्च । उक्षा बलीवर्दः । भावे भावविषयः साहाय्यादिकस्य भावसंग्रहस्य । इयं वक्ष्यमाणा भवति प्ररूपणा तामेवाह—

[भा.१५०२] साहिज्जवयणवायण अनुभासणदेसकालसंवरण ।
अनुकंपनमनुसासण पूयणामब्भंतरं करणं ।।

[भा.१५०३] संभुंजण संभोगे भत्तोवहि अन्नमन्नसंवासो ।
संगहकुसलगुणानिही अनुकरणकारावणनिसग्गो ।।

वृ- साहिज्जं सहायकृत्यकरणं वचनमाभाषितस्य इच्छाकारभणनं, अथवा अभिग्रहस्य ग्रहीतमौनव्रतस्य वचनविषयेन केनाप्याभाषणं कृते तस्योत्तरभणनं वचनं, । वायणत्ति वाचनया क्लान्ते गुरौ साधूनां ददाति वाचनं, । अनुभाषणं नाम आचार्येण भाषिते पश्चाद्भाषणं न पुनः प्रधानीभूयाचार्या-भाषणादग्रे एव भाषते । देशकालसंस्मरणं नाम अस्मिन् देशे अस्मिन् काले च कर्तव्यमिदं ग्लानादीनामिति विज्ञाय यद्देशे काले स्मारयत्याचार्याणां ग्लानादीनां अनुकम्पनं दुःखार्तस्यानुकम्पाकरणं बालवृद्धासहान् यथादेशकालमनुकम्पते इति भावः, । अनुशासनं भज्यमाने वा दृष्टे वा किमुक्तं भवति । सामाचारीतः प्रतिभज्यमानान् कथंचित् रुष्टान् वा यदनुशास्ति तदनुशासनं, । यदि वा यो यथोक्तकार्येऽपि सन् कथंचिन्न कुरुते तत्कस्यचिच्छिक्षणमेतत्तदकृत्यमिति खग्गूडान्वानुशास्ति एतदनुशासनं, पूजनं नाम यथाक्रमं गुर्वादीनामाहारादिसम्पादनविनयकरणं, यदि वा ज्ञानाचारादिषु पञ्चस्वाचारादिषु यथायोगमुद्यच्छतामुपबृंहणं । अभ्यन्तरकरणं नाम द्वयोः साध्वोर्गच्छभेदीभूतयोरभ्यन्तरे कुलादि-कार्यनिमित्तं परस्परमुल्लपतो स्तृतीयस्योपशुश्रूषो बहिःकरणं । अथवा यदिष्टः सन्नभ्यन्तरे गत्वा तत् गच्छादिप्रयोजनं ब्रूते एतदभ्यन्तरकरणं । यदि वा तेन सह ये बाह्यभावं मन्यन्ते तानपि तथानुवर्तयति यथा तं तेजस्विनमभिमन्यन्ते एतदभ्यन्तरकरणं । संभोजनं नाम यत्सांभोगिकैः सह भोजनसंयोगो भवते . वहतीति । यदि भक्तमुपधिं वा संभोगयति किमुक्तं भवति ? यद्यस्य कारकं भक्तमुपधिर्वा यत्स्वमुत्पाद्य

तस्मै ददाति ततो गृह्णाति वा । तथा अन्नमन्नं संवासे इति सांभोगिकैः परस्परमेकत्र वसनं एतानि कुर्वाणः संग्रहशुकलः । पुनः कथंभूत इत्याह-संग्राहानुगता ये गुणा तेषां निधिरिव गुणनिधिस्तथा अनुकरणं नाम यत्सीवनलेपादि कुर्वन्तं दृष्ट्वा ब्रूते-इच्छाकारेण तवेदमहं करिष्यामि कुरुते च, कारापणं वा न यत्स्वयं करणे अकुशलानन्यानपीच्छाकारेण कारापयति तस्मिन् निसर्गः स्वभावो यस्य सोऽनुकरणकारापण निसर्गः इत्थंभूतस्तस्य स्वभावो यदि अनभ्यर्थित एव करोति कारयति चेति भावः ।

सम्प्रति कतिपयपदव्याख्यानार्थमाह--

[भा.१५०४] वयणे तु अभिग्गहियस्स केणती तस्स उत्तरं कुणति ।
जा जयणाह किण्हं ते उ गुरुम्मी वयणं देइ ।।

वृ- वचने वचनविषये अभिग्गहिकस्य गृहीताभिग्रहप्रतिपत्तमौनव्रतस्येत्यर्थः । केनापि पश्ने कृते सति तस्योत्तरं यद्भणत्येष वचनसंग्रहकुशलः । पश्चार्धं सुगमम् ।

[भा.१५०५] साहूणं अनुभासइ आयरिएणं तु भासिए संते ।
सारेयायरियाणं देसे काले गिलाणादी ।।

वृ- अत्र साधूनामिति पदं पश्चात् गाथायां सम्बध्यते । शेषं प्रागेव व्याख्यानार्थमाह-

[भा.१५०६] दुक्खत्ते अनुकंपा अनुसासन भज्ञमाणक्खो वा ।
जो वा जहुत्तकारी अनुसासण किच्चमेयं ।।

वृ- इयमपि व्याख्यानार्था ।

[भा.१५०७] पूयणमहागुरुणं अब्भंतरदोण्हमुव्वत्ताणं ।
तईयं कुणती वहिया वेई गुरूणं च तं इट्ठो ।।

वृ- पूजनं यथाक्रमं गुरूणामन्यतरकरणं यदभ्यंतरे द्वयोरुद्वर्तनास्तृतीयमुपशुश्रूषं बहिः करोति । यदि वा तद्गच्छादिप्रयोजनं पृष्टः सन्नभ्यन्तरं गत्वा गुरूणां ब्रूते कथयति-

[भा.१५०८] संभुज्जणं संभोगेण भुज्जए जस्स कारगं भत्तं ।
तं घेत्तुमप्पणासे देइ एमेव उवहिं पि ।।

वृ- संभोजनं नाम यत्संभोगेन योजयति सांभोगिकैः सहैकत्र भुङ्क्ते इति, तथा यद्यस्य कारकमुपकारकं भक्त तदात्मना गृहीत्वा तस्मै ददाति, । एवमेवोपधिमपि उपधिरपि यो यस्योपकारकस्तं स्वयमुत्पाद्य तस्मै ददाति । एतेन संभोगे भत्तोवहीति व्याख्यातं परस्परमेकत्र संवासः सुप्रतीतत्वान्न व्याख्यातः ।

[भा.१५०९] अनुकरणं सिव्वणलेवणादी अनुभासणा उ दुम्मेहो ।
एरिसो तस्स निसणा, जं भणियं एरिस सहावो ।।

वृ- अनुकरणं नाम सीवनलेपनादि स्वयं किञ्चित्कुर्वन्तं दृष्ट्वा इच्छाकारेणानुज्ञाप्य करोति । तथा दुर्मेधसि स्वयं सीवनलेपनादिकर्तुमनुजानाति स्वयं तावत् करोत्येव । किन्त्वन्यानपि भाषते । यथा कुरुतैतस्य महानुभागस्येत्येतत्करणे ईदृशस्तस्यानुकरणे कारापणे च निसर्गः निसर्गः स्वभावः जं भणियंति किमुक्तं भवतीत्यर्थः । ईदृशः स्वभावः उक्तः संग्रहकुशलः । उपग्रहकुशलमाह--

[भा.१५१०] वालासहुवुड्ढेसुं संततवकिलंत वेयणातंके ।
सेज्ञनिसेज्ञो वहिपाणमसणभेसज्जु वग्गहिए ।।

[भा.१५११] दान दवावण कारावणे य तहा कयमनुनाए ।
उवहितमणुवहित विही जाणाति उवग्गहं एयं ।।

वृ- वालासहवृद्धेषु तथा प्रभूतमार्गगमनतः पवनो (ष्टो) वा श्रान्तेषु तपःक्लान्तेषु तथा वेदनायां

सामान्यतः शरीरपीडायां जातायामातंके च सद्योजाते सति रोगे समुत्पन्ने शय्यावसतिर्निषद्यापीठ-फलकादिरूपा: उपधिकल्पादिः पानं द्रवं अशनमोदनादि भेषजमौषधमौपग्रहिकं दण्डप्रोञ्छनाद्युपकरणं । एतेषां समाहारो द्वन्द्वस्तस्मिन् सप्तमी षष्ठ्यर्थे । ततोऽयमर्थः - एतेषां स्वयं दाने अन्यैर्दापने तथा वैयावृत्यादेः कारापणे करणे च तथा कयमणुन्नाए इति परैः कृतस्यानुज्ञायां यत्प्रवर्त्तनं तथा उपहितविधिर्य-श्चानुपहितविधिस्तत्रोपहितविधिर्नाम यत् आचार्यैर्वितीर्णं तदाचार्यमनुज्ञाप्यान्येषां साधूनां तदन्तरेण विस्तरयतां ददाति । अनुपहितविधिर्यदनुत्पन्नमुत्पाद्य ददाति । अन्ये तु व्याचक्षते-यद्यस्य गुरुभिर्दत्तं तत्तस्योपनयतीत्येव उपहितविधिः यत्पुनस्तस्य गुरुभिर्दत्तं ततोऽन्यस्य गुरुन् अनुज्ञाप्य ददाति । एषोऽनुपहितविधिः एवं सर्वमुपग्रहं जानाति एतदेव लेशतो व्याख्यानयति—

[भा.१५१२] बालादीनं तेसिं सेज्जनिसेज्जो वहिप्पयाणेहिं ।
भत्तन्नपान भेसज्ज मादीहिं उवग्गहं कुणइ ।।

[भा.१५१३] देइसयं दावेइ य करेय कारावए य अनुजाणे ।
उवहियजं जस्स गुरुहिं दिन्नं तं तस्स उवनेति ।।

[भा.१५१४] अनुवहियं जं तस्स उ विन्नं तं देइ सो उ अन्नस्स ।
खमसमणेहिं दिन्नं तुब्भंति उवग्गहो एसो ।।

वृ- एतेषामनन्तरगाथाभिहितानां बालादीनां बालासमर्थवृद्धमार्गगमनादिश्रान्ततपः क्लान्तवेदनार्त्तजातातङ्कानां शय्या-निषद्योपधिप्रदानैस्तथा भक्त मोदकाशोकवत्यादि अन्नमोदनादि पानभैषजे प्रागुक्तस्वरूपे आदिशब्दादौपग्रहिकोपकरणादिपरिग्रह एतैरुपग्रहमुपष्टम्भं करोति कथमित्याह-स्वयं शय्यादिकं ददाति अन्यैर्वा दापयति तथा स्वयं वैयावृत्यादि करोति अन्यैः कारयति । कुर्वन्तं वा अन्यमनुजानीते । उवहियत्ति पदैकदेशे पदसमुदायोपचारादुपहितविधिरिति द्रष्टव्यं यद्यस्य गुरुभिर्दत्तं तत्तस्योपनयतीत्येष उपहितविधिर्यत्पुनस्तस्य दत्तं सोऽन्यस्मै गुरुन् अनुज्ञाप्य ददाति क्षमाश्रमणैः - तुभ्यमिदं दत्तमित्येषोऽनुपहितविधिः । एष सर्वोऽप्युपग्रहः । उक्त उपग्रहकुशलः ।

साम्प्रतमक्षता-चारादिपदानां सामान्येन व्याख्यानमाह—

[भा.१५१५] आहाकम्मुद्देसिय ठविय रइयकीयकारियच्छेज्जं ।
उब्भिणाहडमाले वणीमगा जीवणनिकाए ।।

[भा.१५१६] परिहरति असनपानं सेज्जोवहि पूति संकियं मीसं ।
अक्खुयमसबलमभिन्नमसंकिलिठमावासए जुत्तो ।।

वृ- आधाकर्मिकं यन्मूलत एव साधूनां कृते कृतं, औद्देशिक मुद्दिष्टादिभेदभिन्नं, स्थापितं यत्संयतार्थं स्वस्थाने परस्थाने वा स्थापितं, रचितं नाम संयतनिमित्तं कांस्यपात्रादौ मध्ये भक्तं निवेश्य पार्श्वेषु व्यञ्जनानि बहुविधानि स्थाप्यन्ते; । तथा क्रीतेन कारितमुत्पादितं क्रीतकारितं आच्छेद्यं यत् भृतकादिलभ्यमाच्छिद्य दीयते उद्भिन्नं यत्कुतपादिमुखं स्थगितमप्युद्भिद्य ददाति । आहृतं स्वग्रामाद्याहृतादि ।मालत्ति मालापहृतं, वनीपकीभूय पिण्ड उत्पाद्यते स पिण्डोऽपि वनीपकः । आजीवनं यदाहारशय्यादिकं जात्याद्याजीवनेनोत्पादितं, । निकाएत्ति मम एतावद्दातव्यमिति निकाचितं । एतानि योऽशनपानानि शय्योपधीश्च परिहरति तथा पूतिशङ्कितं मिश्रमुपलक्षणमेतत् । अध्यवपूरकादिकं च यश्चावश्यके युक्तः सोऽक्षताचारः अभिन्नाचारः असंक्लिष्टाचारः । तत्र स्थापितादिपरिहारी अक्षताचारः अभ्याहृतादिपरिहारी अशबलाचारः । जात्योपजीवनादि परिहरन् अभिन्नाचारः । दोषपरिहारी असंक्लिष्टः । सम्प्रति लाघवाय द्वितीयसूत्रगतानि क्षताचारादीनि पदानि व्याख्यानयति-

[भा.१५१७] आसन्नखुयायारो बलायारो य होइ पासत्थो ।

भिन्नायारकुसीलो संसत्तो संकिलिट्ठो उ ।।

वृ- अवसन्न आवश्यकादिष्वनुद्यमः क्षताचारस्तथा पार्श्वस्थोऽन्योद्गमादिभोजी सबलाचारः, कुशीलो जात्याजीवनादिपरो भिन्नाचारः, संसक्तः संसर्गवशात् स्थापितादिभोजी, संक्लिष्टः संक्लिष्टाचारः । सम्प्रत्याचारः प्रकल्पधर इति पदं व्याख्यानयति-

[भा.१५१८] तिविहो य पकप्पधरो, सुत्ते अत्थे य तदुभए चेव ।
सुत्तधर वज्जियाणं तिगदुगपरिवड्डणा गच्छे ।।

वृ- त्रिविधः खलु प्रकल्पधरस्तथा सूत्रे सूत्रतः अर्थतः तदुभयतश्च । इयमत्र भावना-आचारप्रकल्पधारिणो चत्वारो भङ्गास्तद्यथा- सूत्रधरोऽर्थधरः, नोसूत्रधरोऽर्थधरः, सूत्रधरोप्यर्थ-धरोऽपि । नो सूत्रधरोनाप्यर्थधरः ४ । अत्र चतुर्थो भङ्गः शून्य उभयविकलतया आचारप्रकल्प-धारित्वविशेषणासंभवात् । आद्यानां तु त्रयाणां भङ्गानां मध्ये तृतीयो भङ्गवर्ती स उपाध्याय उद्दिश्यते । यतः स उभयधारितया गच्छस्य सम्यक् परिवर्धको भवति, । तदभावे द्वितीयभङ्गवर्त्यपि तस्याप्यर्थ-धारितया सम्यक् परिवर्धकत्वात्तत्वाद्यवर्ती तथा चाह-सूत्रधरवर्जितानामाचारप्रकल्पिकानां गच्छे गच्छस्य परिवर्धना त्रिके तृती यभङ्गे च ततस्त एवोपाध्यायाः स्थाप्या न प्रथमभङ्गवर्तिनः । एवं दशाकल्पव्यवहारधरादिपदानामपि व्याख्या कर्तव्या । अत्र पर आह–

[भा.१५१९] पुव्वं वण्णेऊणं दीर्न परियाय संघयणसद्धं ।
दसपुव्वीए धीरे मज्जारपडियपरुवणया ।।

वृ- ननु पूर्वमाचार्यपदयोग्यस्य दीर्घः पर्यायो वर्णितः, संहननं चाति विशिष्टं श्रद्धा च प्रवचनविषयाऽत्युत्तमा आगमतश्चाचार्यपदेयोग्या जघन्यतोऽपि दशपूर्विकास्तथा धीरा बुद्धिचतुष्टयेन विराजमानाः ततः एवं पूर्व वर्णयित्वा यदेवमिदानीं प्ररुपयथ, यथा त्रिवर्षपर्याय आचारप्रकल्पधर उपाध्यायः स्थाप्यते । पञ्चवर्षपर्यायोदशाकल्पव्यवहारधर इत्यादि सैषा प्ररुपणा मार्जारदिनकल्पा । यथा हि मार्जारः पूर्वं महताशब्देनारटति पश्चादेवं शनैः शनैरारटति । यथा स्वयमपि श्रोतुं न शक्नोत्येवं त्वमपि पूर्वमुच्चैः शब्दितवान् पश्चाच्छनैरिति; सूरिराह-सत्यमेतत् । केवलंयत्पूर्वोक्तं तद्यथोक्तं न्यायमङ्गीकृत्य, सम्प्रति पुनः कालानुरुपं प्रज्ञाप्यत इत्यदोषस्तथा चात्र पुष्करिण्यादयो दृष्टान्तास्तानेवाह-

[भा.१५२०] पुक्खरिणी आयारे, आणायणा तेनगा यगीयत्थे ।
आयारंमि उ एए, आहरणा होंति नायव्वा ।।

वृ- पुष्करिणी वापी आचारे आचारप्रकल्पस्य आनयनं स्तेनकाश्चौरा गीतार्था एतानि चत्वार्याहरणानि दृष्टान्ता भवन्त्याचार्ये ज्ञातव्यानि इमानि च -

[भा.१५२१] सत्थपरिण्णाच्छक्काय अहिगम पिंडउत्तरज्झाए ।
रुक्खे य वसभगावो गोहा सोही य पुक्खरिणी ।।

वृ- शस्त्रपरिज्ञा षट्कायाधिगमः, षट्जीवनिका इदमेकमुदाहरणं १ पिंड २ उत्तराध्ययन उत्तराध्ययनानि ३ वृक्षाः कल्पद्रुमादयः ४ वृषभाः बलीवर्दाः ५ गावः ६ गोधाः ७ शोधिः ८ । अत्रैव दृष्टान्तः पुष्करिणी च ९ । एवं सर्वसंख्यया त्रयोदश आहरणानि । एतानि व्याचिख्यासुः प्रथमतः पुष्करिण्याहरणं भावयति-

[भा.१५२२] पुक्खरिणीतो पुव्वं जारिसया तुण्हा तारिसया इण्हिं ।
तहवियता पुक्खरिणीतो हवंति कज्जाइं कीरंति ।।

वृ- पूर्वं सुखमसुखमाकाले यादृश्यः पुष्करिण्यो जम्बूद्वीपप्रज्ञप्तौ वण्यन्ते । इदानीं न तादृश्यः तथापि च ता अपि पुष्करिण्यो भवन्ति कार्याणि च ताभिः क्रियन्ते । आचारप्रकल्पानयनाहरणमाह–

**[भा.१५२३]** आयारपकप्पो ऊ नवमे पुव्वंमि आसि सोधी य ।
ततो च्चिय निज्जूढो इहाहि तो किं न सुद्धि भवे ॥

**वृ-** आचारप्रकल्पः पूर्वं नवमे पूर्वे आसीत् शोधिश्च ततोऽभवत् । इदानीं पुनरिहाचाराङ्गे तत एव नवमात्पूर्वान्निर्यूह्यानीतः ततः किमेष आचारप्रकल्पो न भवति किं वा ततः शोधिर्नोपजायेत । एषोऽप्याचारकल्पः शोधिश्चास्मादवशिष्टा भवतीति भावः । अधुना स्तेनकदृष्टान्तबावनार्थमाह-

**[भा.१५२४]** तालुग्घाडिणिओसोवणाहि विज्जाहि तेणगा आसि ।
इण्हिं ते उ न संती तहवि किं तेनगा न खलु ॥

**वृ-** पूर्वं स्तेनकाश्चोरा विजयप्रभवादयस्तालोद्घाटिन्यवस्वापिन्यादिभिरुपेता आसीरन् । ताश्च विद्या इदानीं न सन्ति । तथापि किं खलु स्तेनका न भवन्ति भवन्त्येव । तैरपि परद्रव्यापहरणादिति भावः । अधुना गीतार्थदृष्टान्तं भावयति ।

**[भा.१५२५]** पुव्वं चउदसपुव्वी इण्हं जहन्नोपकप्पधारी उ ।
मज्झिमग पकप्पधारी किं सो उ न होइ गीयत्थो ॥

**वृ-** पूर्वं गीतार्थश्चतुर्दशपूर्वी अभवत् । इदानीं स किं गीतार्थो जघन्यः प्रकल्पधारी न भवति भवत्येवेति भावः । शस्त्रपरिज्ञादृष्टान्तमाह-

**[भा.१५२६]** पुव्व सत्थपरिणा अधीयपढियाइ होउ उवट्ठवणा ।
इण्हिं च्छज्जीवणया किं सा उ न होउ उवट्ठवणा ॥

**वृ-** पूर्वं शस्त्रपरिज्ञायामाचाराङ्गान्तर्गतायामर्थतो ज्ञातायां पठितायां सूत्रत उपस्थापना अभूदिदानीं पुनः सा उपस्थापना किं षट्जीवनिकायां दशवैकालिकान्तर्गतायामधीतायां पठितायां च न भवति भवत्येवेत्यर्थः । पिण्डदृष्टान्तभावनार्थमाह-

**[भा.१५२७]** बितितंमि बंभचेरे पंचमउद्देस आमगंधम्मि ।
सुत्तंमि पिंडकप्पी इह पुन पिंडेसणाएओ ॥

**वृ-** पूर्वमाचाराङ्गान्तर्गते लोकविजनाम्नि द्वितीयेऽध्ययने यो ब्रह्मचर्याख्यः पञ्च उद्देशकस्तस्मिन् यदामगन्धिसूत्रं सव्वामगंधं परिन्नय इति तस्मिन् सूत्रतोऽर्थतश्चाधीते पिण्डकल्पी आसीत्, । इह इदानीं पुनर्दशवैकालिकान्तर्गतायां पिण्डैषणायामपि सूत्रतोऽर्थतश्चाधीतायां पिण्डकल्पिकः क्रियते सोऽपि च भवति तादृश इति, उत्तराध्ययने दृष्टान्तं भावयति ।

**[भा.१५२८]** आयारस्स उ उवरिं उत्तरज्झयणाउ आसि पुव्वं तु ।
दसवेयालिय उवरिं इयाणिं किं ते न होंति उ ॥

**वृ-** पूर्वमुत्तराध्ययनानि आचारस्याप्याचाराङ्गस्योपर्यासिरन् इदानीं दशवैकालिकस्योपरि पठितव्यानि । किं तानि तथारूपाणि न भवन्ति भवन्त्येवेति भावः वृक्षदृष्टान्तभावनामाह-

**[भा.१५२९]** मत्तंगादीतरुवर न संति इण्हिं न होंति किं रुक्खा ।
महजूहाहिव दप्पिय पुव्विं वसभाण पुन इण्हं ॥

**वृ-** पूर्वं सुखमसुखमादिकाले मत्ताङ्गादयोदशविधास्तरुवराः कल्पद्रुमा आसीरन् । इदानीं तेन सन्ति । किन्त्वन्ये चूतादयस्ततः । किं ते वृक्षा न भवन्ति तेऽपि वृक्षा भवन्तीति इदानीं ते तथाभूता न संति-किन्तु पञ्चदशादिगोसंख्यातास्ततः किं ते यूथा न भवन्ति किंतु भवन्त्येवेति भावः । अधुना गोदृष्टान्तमाह-

**[भा.१५३०]** पुव्विं कोडीबद्धा जूहाओ नंदगोवमाइणं ।
इण्हं न संति ताइं किं जूहाइं न होंतिउ ॥

**वृ-** पूर्वं नन्दगोपादीनां गवां यूथाः कोडीबद्धाः कोटीसंख्याका आसीरन् । इदानीं ते तथाभूता न

सन्ति किन्तु पञ्चदशादि गोसंख्याकास्तत्किं ते वृथा न भवन्ति किन्तु भवन्त्येवेति ।

अधुना योधदृष्टान्तभावनामाह—

[भा.१५३१] साहस्सी मल्ला खलु महपाणा पुव्व आसि जोहाओ ।
ते तुल्ल नत्थि एण्हिं किं ते जोहा न होंतीतु ।।

वृ- पूर्वं योधा महाप्राणाः सहस्रमल्ला आसीरन् । इदानीं तेषां तुल्या न सन्ति किन्त्वभागहीनाः ततः किं ते योधा न भवन्ति भवन्त्येव कालोचित्येन तेषामपि योधकार्यकरणादिति भावः एवं शोधिदृष्टांतमाह-

[भा.१५३२] पुव्विं छम्मासेहिं परिहारेण च आसिसोधीतु ।
सुद्धयत्तवेण निव्वतियादि एहिं विसोधीतु ।।

वृ- पूर्वं षड्भिर्मासैः परिहारेण वा परिहारतपसा वा शोधिरासीत् । इदानीं निर्विकृतिकादिभिरपि च शोधिः पञ्चकल्याणकदशकल्याणकादिमात्रप्रायश्चित्तदानव्यवहारात् शोधिविषय एव पुष्करिणीदृष्टान्तमाह-

[भा.१५३३] किं च पुन एव सोही जह पुव्विल्लासु पच्छिमासुं च ।
पुक्खरिणीसुं वत्थाइयाणि सुज्झंति तह सोही ।।

वृ- किं केन प्रकारेण पुनरत्राधुना एवं निर्विकृतिकादिमात्रेण शोधिर्भवति । सूरिराह यथा पूर्वासु कालभाविनीषु पुष्करिणीष्वतिप्रभूतजलपूर्णासु वस्त्राणि शुद्धयन्ति स्म एव पश्चिमास्वप्यधुनातन कालभाविनीषु शुद्ध्यन्ति तथा शोधिरपि पूर्वमिवेदानीमपि भवतीति ।

एवं दृष्टान्तानभिधाय दार्ष्टान्तिकयोजनामाह—

[भा.१५३४] आयरियादी चोद्दस पुव्वादि आसि पुव्विं तु ।
एवं जुगाणुरूवा आयरिया हुंति नायव्वा ।।

वृ- एवमनन्तरोदितदृष्टान्तकदम्बकप्रकारेण यद्यपि पूर्वमाचार्यादयश्चतुर्दश पूर्वधरादय आसीरन् तथापीदानीमाचार्या उपलक्षणमेतत् उपाध्यायादयश्च युगानुरुपा दशाकल्पव्यवहारधरादयस्तपो नियमस्वाध्यायादिषूद्युक्ता द्रव्यक्षेत्रकालभावोचितयतनापरायणा भवन्ति ज्ञातव्याः । सम्प्रति यावत्पर्यायस्य यावन्ति स्थानानि सूत्रेणानुज्ञातानि तस्य तावन्त्यसंमोहार्थमुपदिदर्शयिषुराह-

[भा.१५३५] ति वरिसे एगं ठाणं दोन्नि य ठाणाउ पंचवरिसस्स ।
सव्वाणि विकिट्ठो पुन वोढुं वा इति ठाणाइं ।।

वृ- त्रिवर्षे त्रिवर्षपर्यायस्य एकमेवोपाध्यायलक्षणं स्थानमनुज्ञातं, न द्वितीयमाचार्यत्वलक्षणमपि तस्याल्पपर्यायतया प्रभूतखेदसहिष्णुत्वाभावेनाचार्यपदे योग्यताया अभावात् पञ्चवर्षस्य पञ्चवर्षपर्यायस्य द्वे स्थाने ऽनुज्ञाते तद्यथा-उपाध्यायत्वमाचार्यत्वं च बहुवर्षतरवर्षपर्यायतया खेदसहतरत्वात् विकृष्टोऽष्टवर्षपर्यायः । पुनः सर्वाण्यपि स्थानानि वोढुं शक्नोति बहुतमवर्षपर्यायत्वात् ततस्तस्य सूत्रेणोपाध्यायत्वमाचार्यत्वं गणित्वं प्रवर्तित्वं स्थविरत्वं गणावच्छेदित्वं चानुज्ञातं । अथ कथं सर्वाणि यथोक्तानि स्थानानि शक्नोति । तत आह-

[भा.१५३६] नोइंदिइंदियाण य कालेण जयाणि तस्स दीहेण ।
कायव्वेसु बहुसुय अप्पा खलु भावितो तेनं ।।

वृ- तस्य अष्टवर्षपर्यायस्य दीर्घेणाष्टवर्षप्रमाणेन इन्द्रियनोइन्द्रियाणि जितानि भवन्ति । कर्तव्येषु च बहुश्रुतात्मा खलु तेन भावितो भवति । ततो योग्यत्वात् सर्वाण्यपि स्थानानि तस्यानुज्ञातानि ।

**मू. (७४)** *निरुद्धपरियाए समणे निग्गन्थे कप्पइ तद्दिवसं कप्पइ आयरियउवज्झायत्ताए उद्दिसित्तए से किमाहु भंते अत्थिणं थेराणं तहारुवाणि कुलाणि कडाणि पतियाणि थेज्जाणि वेसासियाणि संमयाणि*

*सम्मुइकराणि अनुमयाणि बहुमयाणि भवंति. तेहिं पत्तिएहिं थेज्जेहिं तेहिं वेसासिएहिं तेहिं संमएहिं तेहि संमुइकरेहिं निरुद्धपरियाए समणे निग्गन्थे कप्पइ आयरिय उवज्झायत्ताए उद्दिसित्तए तद्दिवसं सूत्रं ।।*

**वृ-** अथास्य सूत्रस्य कः संबंध उच्यते ।।

**[भा.१५३७]** उस्सग्गस्स ववादो होति विवक्खो उ तेणिमं सुत्तं ।
नियमेन विगिठो पुन तस्सासी पुव्वपरियातो ।।

**वृ-** इहोत्सर्गस्य विपक्षप्रतिपक्षी भवत्यपवादस्तेन कारणेन तिवरिसपरियाए समणे निग्गंथे इत्यादिरूपस्योत्सर्गस्येदमपवादभूतं सूत्रमुच्यते, । अनेन सम्बन्धेनायातस्यास्यव्याख्या, निरुद्धो विनाशितः पर्यायो यस्य स निरुद्धपर्यायः श्रमणो निर्ग्रन्थः कल्पते युज्यते तद्दिवसं यस्मिन् दिवसे प्रव्रज्यार्थं प्रतिपन्नावान् तस्मिन्नेव दिवसे पूर्वपर्यायः पुनस्तस्य प्रभूततर आसीत् । तथा चाह· नियमेनेत्यादि नियमेन पुनस्तस्य पूर्वपर्यायो विकृष्टो विंशतिवर्षाण्यासीत् ततस्तद्दिवसं कल्पते । आचार्योपाध्यायतया उद्देष्टुं । अत्र शिष्यः प्राह-से किमाहु भंते सि शब्दोऽथ शब्दार्थः । अथ किं कस्मात्कारणात् भदन्त परमकल्याणयोगिन् भगवन्त एवमाहुर्यथा तद्दिवसमेव कल्पते आचार्यउपाध्याययोरुद्देष्टुं न खलु प्रव्रजितमात्रस्याचार्यत्वादीनारोप्यमाणानि युक्तान्यगीतार्थत्वात् । अत्र सूरिराह-अत्थिणमित्यादि । अस्तीति निपातो निपातत्वाच्च बहुवचनेऽप्यविरुद्ध स्ततोऽयमर्थः । सन्ति विद्यन्ते नमिति वाक्यालङ्कारे स्थविराणामाचार्याणां तथारूपाणि आचार्यादिप्रायोग्यानि कुलानि तेन कृतानि गच्छप्रायोग्यतया निर्वर्तितानीत्यर्थः । येन यत्तथाकालं तेभ्य आचार्यादिप्रायोग्यं भक्तमुपधिश्चोपजायते । उपलक्षणमेतत् । तेन केवलं तथारुपाणि कुलानि कृतानि किन्त्वाचार्यबालवृद्धग्लानादयोऽपि अनेकधा संग्रहोपग्रहविषयीकृता इति द्रष्टव्यं । न केवलं कुलानि तथारुपमात्राणि कृतानि किन्तु पत्तियाणित्ति प्रीतिकराणि वैनयिकानि कृतानि थेज्जाणित्ति थेज्यानि प्रीतिकरतया गच्छचिन्तायां प्रमाणभूतानि । अथवा स्थेयानीति किमुक्त भवति ? नैकं द्वौ वा वारौ प्रीतिकेराण कृतानि किन्त्वनेकश इति । वेसासियाणित्ति आत्मानं अन्येषां गच्छवासिनां मायारहितीकृततया विश्वासस्थानानि कृतानि । विश्वासे भवानि योग्यानि विश्वासकानीति व्युत्पत्तेः । अत्र एव सम्मतानि तेषु तेषु प्रयोजनेष्विष्टानि संमुदिकराणि अविषमत्वेन प्रयोजनकारीणि । सोऽपि च बहुशो विग्रहेषु समुत्पन्नेषु गणस्य संमुदितमाकार्षीत् । संमुदिकृतया इष्टेषु च प्रयोजनेषु आनुकूल्येन मतान्यनुमतानि, तथा बहूनां खग्गुडवर्जानां सर्वेषामित्यर्थः मतानि बहुमतानि भवंति, तिष्ठंति शप्रं तस्य स्यादिदंरुपं, ततोयद्यस्मात्-तेषु कुलेषु तथारुपेषु कुलेषु प्रीतिकरेषु तेषु स्थेयेषु तेषु वैश्वासिकेषु तेषु संमुदिकरेष्वित्यपि भावनीयं, स श्रमणो निर्ग्रन्थो निरुद्धपर्यायोऽभवत् तेन कारणेन स कल्पते आचार्यतया उपाध्यायतया वा उद्देष्टुं तद्दिवसमिति एष सूत्रसंक्षेपार्थः । व्यासार्थं तु भाष्यकृद्विवक्षुः प्रथमतः से किमाहु भंते इत्यादि एतत् पदं व्याख्यानयति-

**[भा.१५३८]** चाएइ तिवासादि पुव्वं वज्जेउ दीहपरियागं ।
तद्दिवसमेव इण्हिं आयरियादीण किं देह ।।

**वृ-** चोदयति प्रश्नयति परो यथा पूर्वं त्रिवर्षादिकं दीर्घं पर्यायं वर्णयित्वा किमिदानीं तद्दिवसमेव आचार्यादीनि भावप्रधानोऽयं निर्देश आचार्यत्वादीनि दत्थ । अत्र सूरिराह-

**[भा.१५३९]** भणति तेहिं कयाइं वेणइयाणं तु उवहिभत्ताई ।
गुरुबालासहुमादी अनेगकारे उवग्गहिया ।।

**वृ-** भण्यते अत्रोत्तरं दीयते तैराचार्यादिपदयोग्यैर्वैनयिकानां विनयमर्हन्तीति वैनयिका आचार्यादयस्तेषां कृतानि उत्पादितानि उपधिभक्तानि । किमुक्तं भवति ? तथारुपाणि स्थविराणां

तैर्वैनयिकानि कुलानि कृतानि येन तेभ्यो यथाकालमुपधिभक्त चोपजायते । इति एतेन अत्थिणं थेराणं तथारूपाणि कुलाणीति व्याख्यातम् । न केवलं तैस्तथारूपाणि कुलानि कृतानि किन्तु गुरुबालासहाद्य आदिशब्दात् वृद्धग्लानादिपरिग्रहः अनेकप्रकारैरुपगृहीताः सङ्ग्रहोपग्रहाभ्यामुपष्टम्भं नीताः पत्तियानीति सुप्रतीतत्वान्न व्याख्यातं, तत्थेत्यत्र द्वितीयं व्याख्यानमाह–

[भा.१५४०] ताइं पीतिकराइं असईपुव्वत्ति होंति थेज्जानि ।
वेसिय अणवेक्खाए जिम्हजढा ईति विस्संभो ।।

वृ- अथवेति प्रतीतप्रथमव्याख्यानापेक्षया व्याख्यानान्तरोपदर्शने स्थेयानीति किन्त्वसकृदिति तथा वैश्वासिकानीति कोऽर्थः अनपेक्षया स्वपरविशेषाकरणेन प्रभूततराणां सश्रिता (संवर्तिना) क्रमेत्यर्थः वैष्याणि विशेषतः एषणीयान्यभिलषनीयानि कृतानि यतस्तानि जिम्हजढानि जिम्हं मायारहितानि कृतानीति तेषु, विश्रम्भो विश्वासो विश्रंभस्थानत्वासाधव्यर्पणीति संमुईकराणीति व्याख्यानार्थमाह-

[भा.१५४१] सव्वत्थ अविसमत्तेण कारगो होइ संमुदीनियमा ।
बहुसो य विग्गहेसुं अकासिगणसम्मुदिंसो उ ।।

वृ- सर्वत्र सर्वेषु प्रयोजनेषु यो नियमादविषमत्वेनाकुटिलतया कारको भवति संमदित्तिपदैकदेशे पदसमुदायोपचारात् सम्मुदिकरः तान्यपि कुलानि तेन तथारूपाणि कृतानि न केवलं तेन कुलानि संमुदिकराणि कृतानि किन्तु सोऽपि तु शब्दोऽपि शब्दार्थः बहुशो बहुभिः प्रकारैर्विग्रहेषु समुत्पन्नेषु तदुपशमनतो गणस्य गच्छस्य सम्मुदिमकार्षीत् । शेषाणि तु पदानि सुप्रतीतत्वान्न व्याख्यातानि ।

[भा.१५४२] थिरपरिच्चिय पुव्वसुतो सरीरथामावहारविजढो उ ।
पुव्विं विनीयकरणो करेइ सुत्तं सफलमेयं ।।

वृ- स्थिरो नाम अचपलः परिचितं पूर्वस्मिन् पर्याये श्रुतं यस्य स परिचितपूर्वश्रुतः यदि वा प्रत्यागतस्यापि स्वाभिधानमिव परिचितं पूर्वपठितं यस्य स तथा ततः पूर्वपदेन विशेषणसमासः । तथा शरीरस्य स्थामप्राणस्तस्यापहारोऽपलपनं तेन विजढो रहितः शरीरस्थानापहाररहितः । किमुक्तं भवति ? पूर्वं तेन शारीरं बलं वैयावृत्यवाचनादिषु परिहारापितमिति तथा पूर्वं पूर्वपर्याये विनीतानि विशेषतः संयमयोगेषु नीतानि करणानि मनोवाक्कायलक्षणानि येन स विनीतकरणः संयमयोगादिकं सर्वं तेन पूर्वमपरिहीनं कृतमिति भावः । य ईदृशः पूर्वमासीत् । स एतत्सूत्रं सफलं करोति । ईदृशस्य तद्दिवसमाचार्यत्वमुपाध्यायत्वं वा उद्दिश्यते न शेष्य ततो न कश्चित्पूर्वापरविरोध इति भाव ।।

[भा.१५४३] किह पुन तस्स निरुद्धो परियातो होज्ज तद्दिवसतो उ ।
पच्छाकडसावेक्खो सणईहिं बलानीतो ।।

वृ- कथं केन प्रकारेण तस्य पूर्वः पर्यायो निरुद्धः कथं तावद्दैवसिकस्तद्दिवसभावीपर्यायोऽभवत् । अत्रोत्तरमाह- पच्छाकडेत्यादि स्वज्ञातिभिः स्वकीयैः स्वजनैः सापेक्षो गच्छसापेक्षः सन् बलानीतः सोऽभूदतः सर्वं सर्वपूत्नमभूत् । एतदेव प्रपञ्चयन्नाह–

[भा.१५४४] पव्वज्जअप्पंचम कुमारगुरुमादि उवहिते नयनं ।
निज्जंतरस निकायण पव्वइते ते तद्दिवसपुच्छा ।।

वृ- राजा कोप्यमात्यपुरोहितसेनापतिश्रेष्ठिसहितो राज्यमनुशास्ति । ए (ते) षामेकैकः पुत्रस्तत्र राजपुत्रो राज्ञा राजा भविष्यतीति संभावितः अमात्यपुत्रो अमात्येनामात्यत्वे पुरोहितेन पुरोहितत्वे सेनापतिपुत्रः सेनापतिना सेनापतित्वे श्रेष्ठिपुत्रोऽपि श्रेष्ठिना श्रेष्ठित्वे । ते पञ्चापि सह क्रीडन्ति । अन्यदा कुमारो राजपुत्र आत्मपञ्चमो अमात्यपुरोहितसेनापतिश्रेष्ठिपुत्रैः सहेत्यर्थः प्रव्रज्यामग्रहीत् । सर्वे च ते अतीव बहुश्रुता जाता ग्रहणशिक्षां आसेवनाशिक्षां चातिशिक्षितवन्तः । कुलानि च प्रीतिकरादिरूपाणि

कृतानि [illegible] च ते पुरुषाद्यः संभविता [illegible] राजपुत्र आचार्यपदे, अमात्यपुत्र उपाध्यायत्वे, पुरोहितपुत्रः स्थविरत्वे, श्रेष्ठिपुत्रो गणवच्छेदित्वे संभावितः । राजादीनां चान्ये पुत्रा न विद्यन्ते ततस्ते सूरिसमीपमागत्य विज्ञपयन्ति । यथा नयाम एतान् स्वस्थानं पश्चादेतैरेव सह समागत्य वयं प्रव्रजिष्यामः । एवमुपधिना मातृस्थानेन विज्ञप्य तेषां तं नयनमुपकरणं कुर्वन्ति । तस्य च राजकुमारस्यात्मपञ्चमस्य नीयमानस्याचार्यो निकाचनं करोति । यथा सम्यक्त्वेन नियमतोऽप्रमत्तेन भाव्यं । अत्र शिष्यस्य पृच्छा भूयः प्रव्रजिते सति राजकुमारादौ किमिति तद्दिवसं यस्मिन् दिवसे प्रव्रज्या प्रतिपन्ना, तस्मिन्नेव दिने आचार्यादिपदस्थापनमत्रोत्तरं वक्तव्यमिति भावार्थः । इति उपधिना तेषां नयनमुक्तं ।

सम्प्रति प्रकारान्तरेणापहरणमाह—

**[भा. १५४५]** पियतो व तावसादी पव्वति उ मना उते फुरावेंति ।
ठविता रायादीसु ठाणेसु ते जहा कमसो ॥

**वृ-** पितरो वा तेषां तापसादयः तापसादिरूपतया प्रव्रजितुमनसः तान् राजपुत्रादीन् फुरावितित्ति देशीपदमेतत् अपहारयन्ति इत्थं च नीताः सन्तस्ते स्वपितृभिर्यथाक्रमं राजादिषु स्थानेषु स्थापिताः ।

**[भा. १५४६]** नीयावि फासु भोजी, पोसहसुलाए पोरिसिकरणं ।
धुवलोयं च करेंती लक्खणपाठे पुच्छंती ॥

**[भा. १५४७]** जो तत्थ अमूढलक्खारिउ काले तीए एक्कमेक्कं तु ।
उप्पाएऊण सुयं अविय ताहे पुनो एंती ॥

**वृ-** नीता अपि ते राजकुमारादयः प्रासुकभोजिनः पौषधशालायां प्रतिदिवसं सूत्रपौरुष्या अर्थपौरुष्याश्च करणं ध्रुवमवश्यं लोचं च ते कुर्वन्ति, ब्रह्मचर्यं च परिपालयन्ति । नवरं लक्षणपाठकान् दिने पृच्छन्ति कस्या महेलाया ऋतुकाले गर्भो लगतीति, । एवं पृष्ट्वा यासां महेलानां लक्षणपाठका भवन्ति यथैताद्दशामृतुकाले नियमात् गर्भो लगीष्यतीति । ततो या ऋतुकाले अमूढलक्षा ऋतुकालस्य ज्ञात्री तस्यामात्मीयायामात्मीयायामेकैकं वारं गत्वा बीजं निक्षिपन्ति । एवं चात्मीयमात्मीयं पुत्रमुत्पाद्य यदा यो राज्यसमर्थो जायते तदा तदा तं स्वस्थाने स्थापयित्वा पुनरागच्छन्तीति ।

**[भा. १५४८]** अब्भुज्जयमेगयरं पडिवज्जिउकामथेरअसति अन्ने ।
तद्दिवसमागतेसुं ठाणेसु ठवेंति तस्सेव ॥

**वृ-** यस्मिन् दिवसे ते प्रत्यागतास्तस्मिन्नेव दिवसे स्थविरा आचार्या अभ्युद्यतमेकतरं विहारं जिनकल्पिकं यथालन्दकल्पविहारं वा प्रतिपत्तुकामाः स्थविरत्वात् अन्यश्च गणधारणे असमर्थस्ताद्दशो न विद्यते ततस्तद्दिवसमागतान् राजकुमारादीन् तेष्वाचार्यत्वादिषु स्थानेषु स्थापयन्ति ।

पुव्ववेतदिवसपुच्छे यदुक्तं तामेव पृच्छां भावयति—

**[भा. १५४९]** कहदिज्जइ तस्स गणो तद्दिवसं चेव पव्वइगस्स ।
भणइ तम्मं ठविए होंति सुबहूगुणा उ इमे ॥

**वृ-** कथं तस्य राजकुमारस्य प्रव्रजितस्य तद्दिवसमेव यस्मिन् दिने प्रव्रज्या प्रतिपन्नास्तस्मिन्नेव दिने गणो दीयते । अत्र सूरिराह-भण्यते । तस्मिन् स्थापेन सुष्ठु अतिशयेन बहवो गुणा इमे वक्ष्यमाणा भवन्ति ।

तानेवाह-

**[भा. १५५०]** साहू विसीयमाणो अज्जा गेलणभिक्खउवगरणा ।
ववहारइच्छियाए वाएय अकिंचनकरे य ॥

**[भा. १५५१]** एते गुणा हवंति तज्जायाणं कुटुंबपरिवड्ढी ।

उवहाणंपि य तेसिं अनुलोमुवसग्ग तुल्लं तु ॥

वृ- साधुर्विषीदन् तान् तथाभूतान् दृष्ट्वा स्थिरो भवति । आर्यिका अपि तेषु स्वचेतसि स्थिरा उपजायन्ते, । गिलणत्ति ग्लानत्वे साधूनामौषधं सुलभं भवति । वैद्योऽपि तेषां प्रभावतोऽनुकूलां क्रियां करोति, । यथा एते राजादिपुत्राः, तेषां चामी शिष्या इति । तथा भिक्षा उपकरणमपि साधूनामतिसुलभं । ववहारो इत्थिया एते स्त्रिया अपहृतायास्तेषां भयतो व्यवहारो लभते, । इयमत्र, भावना-काचित् रूपवती कुमारश्रमणी केनापि राज्ञा गृहीता स्यात् ततस्तेषां गतानां भयेन सा मुच्यते इति वादे च तद्गौरवात्साधवोऽपरिभूता भवन्ति । अकिंचनकरेयत्ति योपि कश्चित्साधूनां प्रत्यनीकः सोऽपि तेषां राजादिकुमारप्रव्रजितानां भयतो न किंचित् करोति । अथवा अकिंचनानां साधूनां यदि कथमपि केनाप्यर्थजातं प्रयोजनमुपजायते तर्हि तत् सर्वं लोकः प्रायोऽप्रार्थित एव करोति । तदेवमेते अनन्तरोदिता गुणास्तज्ज्ञातानां राजादिजातीनां यतोऽतस्ते निरुद्धपर्यायाः प्रत्यागताः प्रव्राजिताः तद्दिवस एवाचार्यादिपदेषु स्थाप्यन्ते, । अयं च गुणः कुटुम्बपरिवृद्धिर्गच्छपरिवृद्धिस्तथाहि यदि नामेते तथाभूतं राज्यादिकमपहाय धर्मं समाचरन्ति । किं वयमपि तुच्छेषु भोगोपभोगेषु सजामः (इति) निष्क्रामन्ति ततो भवति गच्छस्य महती वृद्धिः । एतेषामवधावनमुत्प्रव्राजनं तदप्यनुलोमोपसर्गतुल्यं । किमुक्तं भवति ? यथा कस्यापि साधोः कश्चिदनुलोमान् उपसर्गान् प्रकृतवान् स चैवं चिन्तयति-यदि परमनेनोपायेनाहं मुच्ये, नान्यथा । तत एवं विचिन्त्याशठभावः परिसेवते स च तथाकृतपरिसेवनोऽप्यशठभाव इत्यखण्डचारित्र इति व्यवह्रियते । एवमेतेऽप्यखण्डचारित्रा एव तत्वतो मन्तव्याः ।

एतदेव लेशतो व्याख्यानयन्नाह—

[भा.१५५२] साहूणं अज्जाणय विसीयमाणाण होति थिरकरणं ।
जइ एरिसावि धम्मं करेंति अम्हं किमंग पुन ॥

वृ- साधूनामार्यिकाणां च विषीदतां स्थिरकरणं भवति । तथाहि-केचित्साधवो भोगेषु विषीदन्तस्तान् दृष्ट्वा एवं चिन्तयन्ति-यदि तावदीदृशा अपि विपुलराज्यादिका अमी देवकुमारिका प्रख्याभिरपि निजमहेलाभिरुपसर्ग्यमाणा धर्मं कुर्वन्ते न पुनर्निजं ब्रह्मचर्यं भ्रंशितवन्तो अत्र एव ते तद्दिवस एवाचार्यपदेषु स्थापिताः किमङ्गपुनरस्माभिः सुतरां धर्मे समाचरणीयं विभवादिपरिभ्रष्टत्वादिति । आर्यिका अपि चिन्तयंति-यदि तावदीदृशाः खल्वस्माकं बान्धवाः सम्पन्नाः कथममंदपुन्नएतेषवा । सुखमपि निरीक्ष्यन्ते न सीदन्ति । खल्वेतादृशधीरपुरुषगृहीता आर्यिकाः केवलमपरिभूताः सदा वर्तन्ते ।

[भा.१५५३] किं च भयं गोरव्वं बहुमाणं चेव तत्थ कुव्वंति ।
गेलण्णोसहिमाई सुलभं उवकरण भत्तादी ।

वृ- किं च तत्र तेषु राजा कुमारादिष्वाचार्यादिपदेषु स्थापितेषु लोको भयं गौरवं बहुमानं च कुर्वते । ग्लानत्वे च भवत्यौषधादिकं सुलभमुपकरणं भक्तादि च ।

[भा.१५५४] संजतिमादीगहणे ववहारे होइ दुप्पधंसोउ ।
तग्गोरव्वा वादे हवंति अपराजिया एव ॥

वृ- संयत्यादीनामादिशब्दात् तथाविधक्षुल्लकादिपरिग्रहः ग्रहणे अपहारे भवत्यसौ राजकुमारादिर्दुःप्रधृष्यः तथा तद्गौरवात् वादे भवन्ति साधवोऽपराजिता एव ।

[भा.१५५५] पडिनीय अकिंचकरा होंति अवतव्वो अट्ठ जाएय ।
तज्जायदिक्खिएणं होइ विवड्ढीविय गणस्स ॥

वृ- प्रत्यनीकाः अकिञ्चित्करा भवन्ति । अर्थजाते च समुत्पन्ने कश्चिदपि वक्तव्यो न भवति । किन्तु सर्वेण प्रार्थित एव यथौचित्यं करोति तथा तेन तज्ज्ञातेन राजादिजातेन तद्दिवस एवाचार्यादि पदस्थापितेन

गणस्य गच्छस्य वृद्धिर्भवति । शेषं सुप्रतीतत्वान्न व्याख्यातम् ।

**मू. (७५)** *निरुद्धवासपरियाए समणे निग्गंथे कप्पइ आयरिय उवज्झयत्ताए उद्दिसित्तए समुच्छेयकप्पंसि तस्सणं आयारपकप्पस्स देसे अवट्ठिए सेय अहिज्जिस्सामि, त्ति अहिज्जेज्जा, एवं से कप्पइ आयरिय उवज्झायत्ताए उद्दिसित्तए सेय अहिज्जिस्सामि त्ति नो अहिज्जेज्जा एवं से नो कप्पइ आयरिय उवज्झायत्ताए उद्दिसित्तए तद्दिवसं ।।*

**वृ-** अस्य सम्बन्धमाह-

**[भा.१५५६]** अपवदितं तु निरुद्धं आयरियत्तं तु पुव्वपरियाए ।
इमं तो पुन अववातो, असमत्तसुयस्स तरुणस्स ।।

**वृ-** निरुद्धे विनाशिते पूर्वपर्याये सत्याचार्यत्वमपवदितुं प्रव्रज्यादिवस एवाचार्यत्वमनुज्ञातमनन्तरसूत्रेऽयमनेन सूत्रेणाभिधास्यमानः पुनरपवादोऽसमाप्तश्रुतस्य तरुणस्य किमुक्तं भवत्यल्पविषयपर्यायस्यासमाप्तश्रुतस्यापि चापवादतो गणधरत्वमनुज्ञाप्यते । ततोऽनेनाप्ययपवादाभिधानतो भवति पूर्वसूत्रेणास्य सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-निरुद्धो विनाशितो वर्षपर्यायो यस्य स निरुद्धवर्षपर्यायः । एतदुक्तं भवति-त्रिषु वर्षेषु परिपूर्णेषु यस्य निरुद्धः पूर्वपर्यायो यदि वा पूर्णेषु समाप्तश्रुतस्य निरुद्धवर्षपर्याय इति श्रमणो निर्ग्रन्थः कल्पते आचार्योपाध्यायतया आचार्यतया उपाध्यायतया वा उद्देष्टुं कृत्याह-समुच्छेदकल्पे आचार्ये कालगते अन्यस्मिंश्च बहुश्रुते लक्षणसम्पूर्णे सति तस्य च आचार्यतया उपाध्यायतया वोद्देष्टुमपि तस्य आचारप्रकल्पस्य निशीथाध्ययनस्य देशोऽधीतो भवति । सूत्रमधीतमर्थाद्यापि नाधीतो यदि वाचार्यो न परिपूर्णोऽद्याप्यधीत इत्यर्थः । सेय इत्यादि स च देशमधीतवान् पाश्चात्यं स्थितं देशमध्येऽधीयते । तत एवं सति कल्पते आचार्योपाध्यायतया उद्देष्टुं, यदि पुनः सोऽध्येष्ये इति चिन्तयन्नपि नाधीयतेति संभाव्यते । तत एवं सति न कल्पते आचार्योपाध्यायतया उद्देष्टुं । एष सूत्रार्थसंक्षेपार्थः । तत्राल्पवर्षपर्यायस्यासमाप्तश्रुतस्यापवादतो गणधरपदानुज्ञानार्थमिदं सूत्रमित्युक्तमतोऽल्पवर्षपर्यायत्वं समाप्तकृतत्वं च भाष्यकृद्भावयति-

**[भा.१५५७]** तिन्नी जस्स अ पुना वासा पुने हि वा तिहिउ तंतु ।
वासेहिं निरुद्धेहिं, लक्खणजुत्तं पसंसंति ।।

**वृ-** यस्य त्रीणि वर्षाणि व्रतपर्यायतयाऽद्याप्यपरिपूर्णानि एतस्यामवस्थायां यदि वा त्रिषु वर्षेषु परिपूर्णेषु तस्य तन्निरुद्धवर्षपर्यायत्वमभवत् । स त्रिषु वर्षेषु पूर्णेषु वा अपूर्णेषु वा वर्षेषु निरुद्धेषु आचार्ये कालगते अन्यो बहुश्रुतोऽपि लक्षणसम्पूर्णो न विद्यते । स चासमाप्तश्रुतोऽपि लक्षणयुक्तो ग्रहणधारणसमर्थश्चेति स्थाप्यते, बहुश्रुतोऽप्यन्यो न स्थाप्यते किन्तु सोऽसमाप्तश्रुतोऽपि लक्षणयुक्तः । किंकारणमत आह-लक्षणेत्यादि लोके वेदे समये च विशारदा नायकत्वपदाध्यारोपे प्रशंसन्ति लक्षणयुक्त नेतरं बहुश्रुतमपि, ततः स एव स्थाप्यते । अत्र पर आह-

**[भा.१५५८]** किं अम्ह लक्खणेहिं तवसंजमसुट्ठियाण समणाणं ।
गच्छविवढिनिमित्तं इच्छिज्जइ सो जहा कुमरो ।।

**वृ-** किमस्माकं श्रमणानां तपःसंयमसुस्थितानां लक्षणैः केवलं लक्षणहीनोऽपि बहुश्रुतः स्थाप्यतां येनास्माकं स्वाध्यायवृद्धिर्भवति । आचार्य आह-सोऽल्पश्रुतोऽपि लक्षणयुक्ततया गणधरपदस्थापनायामिष्यते गच्छविवृद्धिनिमित्तं यथा राज्यविवृद्धिनिमित्तं राज्ये कुमारः । एतदेव भावयति-

**[भा.१५५९]** बहुपुत्तो नरवई सामुद्दं भणति किं ठवेमि निवं ।
दोसगुणएगनेगे सोविय तेसिं परिकहेइ ।।

वृ- कोऽपि बहुपुत्रको नरपतिः सामुद्रिकं सामुद्रलक्षणवेत्तारं भणति यथा कमहं कुमारं नृपं स्थापयामि एवमुक्तः सोऽपि तेषां कुमाराणां यस्य दोषो गुणो वा एके नैके च विद्यन्ते तत्सर्वं परिकथयति ।

तत्र दोषा इमे-

[भा.१५६०] निध्धूमगं च डमरं मारीदुब्भिक्खचोरपउराइं ।
धणधन्नकोसहानी बलवति पच्चंतरायाणो ।।

वृ- निर्धूमकं नाम अपलक्षणं यत्प्रभावतो राज्यमनुशासति रन्धनीयमेव न भवति । डमरं यद्वशाद्राज्यं डमरबहुलं भवति प्रभूतस्वदेशोत्थविप्लवा एवोपजायन्ते इत्यर्थः । मारिर्यद्वशान्मारिदोषोपहतं प्रचुरं दुर्भिक्षमुपयाति । चोरप्रचुरं यद्वशाद्बहवश्चौरा उच्छलन्ति । धनहानिर्यतः सर्वत्र धनक्षयः संभवति धान्यहानिर्यत्प्रभावात् वृष्टेऽपि मेघे सस्यनिष्पत्तिस्तादृशी नोपजायते । कोशहानिर्यतः कोशक्षयः । बलवत् प्रत्यन्तराजकं यदो बलवतः प्रत्यंतराजनः सर्वे भवन्ति । एते कस्याप्येकः कस्याप्यनेके कस्यापि सर्वदोषाः । अधुना गुणमाह-

[भा.१५६१] खेमं सिवं सुभिक्खं निरुवसग्गं गुणेहिं उववेयं ।
अभिसिंचंति कुमारं गच्छेवि तयानुरूवं तु ।।

वृ- क्षेमं नाम सुलक्षणं यद्वशात्सर्वत्र राज्ये नीरोगता, शिवं यतः कल्याणं सुभिक्षं यतः सर्वत्र सुभिक्षसंभवः, निरुपसर्गं यतः सकलेऽपि देशे मारिडमराद्युपसर्गासंभवः । एतेऽपि गुणाः कस्याप्येकः कस्याप्यनेके कस्यापि सर्वे । तत्र यथा दोषापेतमधिकृतैश्च गुणैः सर्वैरप्युपेतं कुमारं राजामात्यादयो राज्येऽभिषिञ्चन्ति । तथा गच्छेऽपि तदनुरूपं राजा कुमारानुरूपं सर्वथा दोषविनिर्मुक्तमेकान्ततो गुणैरुपेतमाचार्यपदे सिञ्चन्ति । एतदेव स्पष्टयति-

[भा.१५६२] जह ते रायकुमारा सुलक्खणा जे सुहा जनवयाणं ।
संतमवि सुयसमिद्धं न ठावेंतिगुणे गुणविहूणं ।।

वृ- यथा ते राजकुमाराः सलक्षणा ये स्थापिताः सन्ता जनपदानां शुभाः कल्याणकारिणः त एव स्थाप्यन्ते । न शेषास्तथा सुरयोऽपि गच्छवृद्धिमपेक्षमाणाः सन्तमपि श्रुतसमृद्धं गुणविहिनं न गणे स्थापयन्ति ।

[भा.१५६३] लक्खणजुत्तो जइवि हु न समिद्धसुत्तेण तहवि तं ठवए ।
तस्स पुन होति असमत्तो पकप्पनामस्स ।।

वृ- लक्षणयुक्तो यद्यपि हु निश्चितं न समृद्धः श्रुतेन तथापि तं स्थापयेत् तस्य पुनर्देशो भवत्यसमासः प्रकल्पनाम्नो निशीथाध्ययनस्य कथं पुनर्देशोऽसमास इत्याह-

[भा.१५६४] देसो सुत्तमधीतं न तु अत्थो अत्थतो व असमत्ती ।
सगणे अणरिहगीता सत्तीए गिण्हेज्ज मेत्थेहिंतो ।।

वृ- प्रकल्पस्य द्विधा शरीरं सूत्रमर्थश्च । तत्र देशः सूत्रमधीतं न त्वर्थः । अथवा अर्थोऽपि किंयानधिगतः केवलमर्थतः समासिर्नाभूत् । ततो ये स्वगणे आचार्यलक्षणविहीनतया गीतार्था अपि सन्तोऽनर्हाः आचार्यपदायोग्यास्तेभ्यः आचार्यपदोपविष्टः सन्नथ गृह्णीयात् । अथ स्वगणे गीतार्था न विद्यन्ते तेषामसत्यभावे एभ्यो वक्ष्यमाणेभ्यो गृह्णीयात्तानेवाह-

[भा.१५६५] संविग्गमसंविग्गे सारुवियसिद्धपुत्तपच्छन्ने ।
पडिक्कंतअब्भुट्ठिए असती अन्नत्थ तत्थेव ।।

वृ- स्वगणे गीतार्थानामभावे अन्येषां सांभोगिकानां समसुखदुःखानां गीतार्थानामंतिके गत्वा धीते, तेषामप्यभावे न्यसांभोगिकानां गच्छे प्रविश्य पठंति, तेषामप्य भावे पार्श्वस्थादीनां संविग्न-

पाक्षिकाणामन्तिके केवलं तान् संयमयोगेष्वभ्युत्थाप्य एतावता संविग्नेति व्याख्यातं । अधुना असंविग्नेत्यादि व्याख्यायते असंविग्नात् सारुपिकान् संयतरुपधारिणः सिद्धपुत्र प्रच्छन्नान् सिद्धपुत्रान् पश्चात्कृतांश्चाश्रयेत् । कथंभूतानित्याह-प्रतिक्रान्ताभ्युत्थिताल् असंयमव्यापारान् प्रतिक्रान्तान् संयमं प्रत्यभ्युत्थितान् तेषामप्यसति अभावे अन्यत्र यत्र तेन ज्ञायन्ते तत्र गत्वा तेषामन्तिके अधीते न अन्यत्र, तेषामगमने तत्रैव पठेत् । यत्र ते स्वव्यापारेण स्थिता वर्तन्ते । इयमत्र भावना-पार्श्वस्थादीनां संविग्नपाक्षिकाणामभावे ये पूर्वं संविग्ना गीतार्था असीरन् तेषां पश्चात्कृतानां पुनः प्रतिक्रान्ताभ्युत्थितानामन्तिके गृह्णीयात् तेषामप्यभावे संयमयोगं प्रत्यभ्युत्थितानां सिद्धपुत्राणामंतिके एषामप्यभावेऽन्यत्र तान् संयरुपकान् कृत्वा तेषामंतिके अन्यत्रागमने तत्रैव तान् तथारुपान् कृत्वा सागारिकाणामभावे तेषामन्तिकेऽधीते । एतदेवाह–

**[भा. १५६६]** सगणे परगणे वा मनुन अन्नेसि वा वि असतीए ।
संविग्ग पक्खिएसु सरुविसिद्देसु पढमं तु ॥

**वृ-** स्वगणे गणधरपदार्हगीतार्थानामन्तिके परगणे वा मनोज्ञे सांभोगिके तदभावे अन्येषां वा असांभोगिकानामन्तिके तेषामप्यसत्य भावे संविज्ञपाक्षिकेषु पार्श्वस्थादिषु प्रथममेव प्रतिक्रान्ताभ्युत्थितेषु तेषामप्यभावे सरुपिषु प्रतिक्रान्ताभ्युत्थितेषु पश्चात् कृतेषु तेषामप्यभावे प्रथममेव स्वरुपिषु सिद्धेषु सिद्धपुत्रेषु एतत्प्रतिक्रान्ताभ्युत्थितानधिकृत्योक्त, तदभावेऽन्यत्र विधिमाह-

**[भा. १५६७]** मुंडं व धरेमाणे सिहं च फेडंत अनिच्छसिहेवि ।
लिंगेन ससागारिए वंदनगादीण हावेंति ॥

**वृ-** ते पश्चात्कृतादयो यदि न प्रतिक्रान्ताभ्युत्थिताः किन्तु लिङ्गतो गृहस्था वर्तन्ते अन्यत्र गत्वा तान् मुण्डं वा धरमाणान् धारयतः कारयति, यदि पुनः सशिखाकाः सन्ति, ततः शिखां स्फेटयति । अथ शिखास्फेटनं ते नेच्छन्ति ततः सशिखाकानपि स्थापयित्वा इत्वरं श्रमणलिङ्गं तेषां समर्पयन्ति व्याख्यानवेलायां च चोलपट्टकं मुखपोतिकां च ग्राहयन्ति । तेनापि तेषां तथाभूतानां पार्श्वे पठता यथा प्रतिरुपश्रुतविनयः प्रयोक्तव्यः । तेषु न वारणीयः । अथ ते अन्यत्र गमनं नेच्छन्ति तर्हि तत्रैवा सागारिके सागारिकसम्पातरहिते प्रदेशविशेषे लिङ्गेन रजोहरणमुखपोतिकादिना श्रमणरुपधारिणः कारयित्वा पठनीयम् । ते च तत्रापि तथा पठन्तो न वन्दनादीनि हापयन्ति ॥

**[भा. १५६८]** आहार उवहि सेज्जा एसणमादीसु होइ जइयव्वं ।
अनुमोयणकारावण सिक्खत्ति पदंमि तो सुद्धो ॥

**वृ-** तेन तेषां समीपे पठता आहारोपधि शय्यानामेषणादिषु भवति यतितव्यं तदानुमोदनकारापणे च न च करणकारापणानुमोदनदोषैः स परिगृह्यते, । यतः शिक्षा मयाऽस्य समीपे गृह्यते इति द्वितीये पदे वर्तते । ततः स शुद्ध इति । इयमत्र भावना यदि स पार्श्वस्थः पश्चात्कृतादिः पाठयन्नात्मनः आहारोपध्यादिकमात्मनैवोत्पादयति ततः सुन्दरमथात्मना नोत्पादयति तत आह–

**[भा. १५६९]** नोयइ से परिवारं अकरेमाणं भणाति वा सड्ढे ।
अव्वोच्छित्तिकरस्स हु सुयभत्तीए कुणह पुयं ॥

**वृ-** से तस्य परिवारं विनयमकुर्वन्तं नोदयति प्रज्ञापयति । यथा महदिदं ज्ञानपात्रमतः क्रियतामस्योत्कृष्टाहारसम्पादनेन विनय इति परिवारस्याभावे श्राद्धान्वा सिद्धपुत्रपुराणे तररुपान् भणति-यथा अव्यवच्छित्तिकरस्यास्य श्रुतभक्त्या कुरुत पूजामिति एतेनानुमोदनकारापणे व्याख्याते ।

सम्प्रति स्वयमुत्पादनमाहारादीनां भावयति-

**[भा. १५७०]** दुविहा सती एतेसिं आहारादी करेति से सव्वं ।

पणहानीए जयंतो अत्तठाए वि एमेव ।।

**वृ-** द्विविधस्य प्रति परिवारकस्य सिद्धपुत्रादेश्चेत्यर्थः असत्यभावे तेषां पार्श्वस्थपश्चात्कृतादीनामाहारादिकं स सर्वात्मना करोति । तत्रापि स प्रथमतः तदलाभे पञ्चकपरिहान्या यतमानोऽशुद्धमानमपि पञ्चकपरिहानियतना नाम स शुद्धालाभे पञ्चकप्रायश्चित्तस्थान-प्रतिसेवनादुत्पादयति। तदसंभवे दशकप्रायश्चित्तस्थानप्रतिसेवनात एवं तावत् यावच्चतुर्गुरुकमसंप्राप्तः । तथापि से तस्योत्पादयति । एवमेवात्मार्थं पञ्चकपरिहान्या यतते । किमुक्तं भवति ? उद्गमादिदोप-त्रयशुद्धमलभमानः पञ्चकादियतनया त्रिभिरपि दोषैरशुद्धं गृह्णाति । स तथा कुर्वन्नपि ज्ञाननिमित्तं प्रवृत्तत्वात् कृतयतनाविषयपुरुषकारत्वात् रागद्वेषविरहितत्वाच्च शुद्ध इति ।

**मू. (७६)** *निग्गंथस्सणं नवडहरतरुणस्स आयरियउवज्झाए विसंभेज्जा नो से कप्पइ अनायरिय उवज्झाइयाए होत्तए कप्पइ से पुव्वं आयरियं उद्दिसावेत्ता तओ पच्छा उवज्झायं से किमाहु भंते ? दुसंगहिए समणे निग्गंथे तं जहा आयरिएणं उवज्झाएणय ।।*

**वृ-** अथास्य सूत्रस्य कः संबंधः आह

**[भा.१५७१]** आयरियाणं सीसो परियाओ वावि अहिकतो एस ।
सीसाण केरिसाणय ठाविज्जइ सो उ आयरिओ ।।

**वृ-** पूर्वसूत्रे आचार्यस्थापनीय उक्तः आचार्याणां च शिष्यो भवतीति तद्वक्तव्यतार्थमिदं सूत्रमथवा पूर्वसूत्रेषु पर्यायोऽधिकृतोऽस्मिन्नपि च सूत्रे एव एव पर्यायस्तथा च नवडहरतरुणग्रहणं यदि वानन्तरसूत्रे य आचार्यः स्थापनीय उक्तः । स कीदृशानां शिष्याणां स्थाप्यते इतीदमनेन सूत्रेणोच्यते । अनेन सम्बन्धेनायातस्यास्य व्याख्या निर्ग्रन्थस्य नमिति वाक्यालङ्कारे नवडहरतरुणस्य नवस्यडहरस्य तरुणस्य वा आचार्यसहित उपाध्याय आचार्यउपाध्याय आचार्योपाध्यायश्चेत्यर्थः । विष्वंभो यावत् म्रियते ततः से तस्य नवडहरतरुणस्या नाचार्योपाध्यायस्य सतो भवितुं वर्तितुं न कल्पते किन्तु पूर्वमाचार्यमुद्देशाप्य स्थापयित्वा ततः पश्चादुपाध्यायमुद्देशाप्यैवमाचार्योपाध्यायस्य सतो भवितुं कल्पते । से किमाहु भंते इति से शब्दोऽथशब्दार्थः । अथ भदन्त किं कस्मात्कारणात् भगवन्त एवमाहुः -सूरिराह-द्वाभ्यामाचार्योपाध्यायाभ्यां संगृहीतो द्विसंगृहीतः श्रमणो निर्ग्रन्थः सदा भवति । तद्यथा-आचार्येणोपाध्यायेन च एष सूत्रसंक्षेपार्थः । व्यासार्थं तु भाष्यकृद्विवक्षुः नवादिशब्दार्थानामर्थमाह —

**[भा.१५७२]** ते वरिसो होइ नवो आसोलसगं तु डहरगं बेंति ।
तरुणो चत्ता सत्तरुणमज्झिमो थेरओ सीसो ।।

**वृ-** प्रव्रज्यापर्यायेण यस्य त्रीणि वर्षाणि नाधिकमित्येष त्रिवर्षो भवेत नवः । जन्मपर्यायेण चत्वारि वर्षाणि आरभ्य यावदाषोडशकं वर्षमत्राङमर्यादायां यथा आ पाटलिपुत्राद्वृष्टो देवः किमुक्तं भवति ? पाटलीपुत्रं मर्यादीकृत्यारतो वृष्टो देवः इत्यत्र ततोऽयमर्थः यावत् परिपूर्णानि पञ्चदशवर्षाणि षोडशाद्वर्षादर्वाक् वा तड्डहरकं ब्रुवन्ते समयविदः । ततो जन्मपर्यायेण षोडशवर्षाण्यारभ्य यावच्चत्वारिंशद्वर्षाणि तावत्तरुणः । ततः परं यावत्सप्ततिरेकेन वर्षेणोना तावन्मध्यमः । ततः परं सप्ततेरारभ्य स्थविरः शेषः ।

**[भा.१५७३]** अनवस्सवि डहरग तरुणगस्य नियमेन संगहं बिंति ।
एमेव तरुणमज्झे थेरम्मिय संगहोनवए ।।

**वृ-** यः प्रव्रज्यापर्यायेण त्रिवर्षोत्तीर्णः सोऽनवक उच्यते । तस्यानवकस्यापि आस्तां नवकस्येत्यपि शब्दार्थः । डहरकः सन् तरुणको डहरकतरुणकस्तस्य द्वादशवर्षाण्यारतो यावत् पञ्चदशवर्षाणि तावदित्यर्थः । नियमेन संग्रहमभिस्थापितो आचार्योपाध्यायानां संग्रहणं ब्रुवते अभिनवस्थापिता-

चार्योपाध्यायसंगृहीतेन तेनावश्यं वर्तितव्यमिति भावः । तथा यः प्रव्रज्यापर्यायेण त्रीणि वर्षाणि नाद्याप्युत्तीर्णः सन् नवकस्मिन्नवके तरुणेन मध्यमे स्थिरे तरुणे मध्ये स्थविरे चशब्दाडुहरं च एवं पूर्वोक्तेनैव प्रकारेण संग्रहं ब्रुवते । किमुक्तं भवति ? नवकस्य डहरस्य तरुणस्य वा मध्यमस्य वा स्थविरस्य वा नवकत्वादेव नियमादभिनवाचार्योपाध्यायसंग्रहो वेदितव्य इति ।

**[भा.१५७४]**　　वा खलु मज्झिमथेरसीयमगीयंति होइ नायव्वं ।
　　उद्दिसिणाउ अगीए पुव्वायरिए उ गीयत्थो ॥

**वृ-** वाशब्दो विभाषायां । खलु निश्चितं त्रिवर्षपर्यायोत्तीर्णत्वेनानवके मध्यमे स्थविरे च प्रत्येकं गीते अगीते च विभाषणं नानात्वं ज्ञातव्यं तदेवाह उद्दिसणाउ अगीते अगीतार्थे उद्देशना । इयमत्र भावना-ये मध्यमा स्थविरा वा त्रिवर्षपर्यायोत्तीर्णा अप्यगीतार्थास्ते नियमात् यः स्थापितो गणधरस्तस्य शिष्या बध्यंते इति गीतार्थे पुनः स्थविरे मध्यमे च पूर्वाचार्यः पूर्वाचार्यसंग्रहः ये मध्यमाः स्थविरा गीतार्थाः पूर्वाचार्यदिशं धारयन्तीति ।

**[भा.१५७५]**　　नवडहरतरुणगस्सा विहीए विसुंभियंमि आयरिए ।
　　पच्छन्ने अभिसेतो नियमा पुन संगहेठाइ ॥

**वृ-** नवश्च डहरकश्च तरुणश्च समाहारो द्वन्द्वः । तस्य पुनः सङ्ग्रहार्थमाचार्ये विष्कंभिते मृते विधिना नियमेनान्यस्य गणधरस्याभिषेकः कर्तव्यः अविधिना अभिषेककरणे प्रायश्चित्तं चत्वारो गुरुका मासाः । कोऽत्र विधिरिति चेदुच्यते आचार्यः कालगतो न प्रकाश्यते यावदन्यो गणधरो न स्थापितस्तथा चाह-पच्छन्नेति आचार्ये कालगते प्रच्छन्ने प्रदेशेऽभिषेकः करणीयः । एतदेवाह-

**[भा.१५७६]**　　आयरिए कालगए न पगासए अट्ठविए गणहरम्मि ।
　　रन्नेव अणभिसित्ते रज्जेक्खोभो तहा गच्छे ॥

**वृ-** अस्थापितेऽन्यस्मिन् गणधरे आचार्यः कालगतो न प्रकाश्यते । अत्र दृष्टान्तो राजा । तथाहि-यथा राजा कालगतस्तावन्न प्रकाश्यते यावदन्यो नाभिषिच्यते । अन्यथा अनभिषिक्ते राज्ञि राज्यक्षोभो भवति दायादैः परस्परविरोधतः सर्वं राज्यं विलुप्यते इत्यर्थः । तथा गच्छेऽप्यन्यस्मिन्नस्थापिते गणधरे यद्याचार्यः कालगतः प्रकाश्यते तदा गच्छक्षोभो भवति तमेवाह-

**[भा.१५७७]**　　अनाहोहावणसच्छंद खित्तेतेना स पक्खपरपक्खे ।
　　लयकंपणाय तरुणे सारणमाणावमाणे य ॥

**वृ-** केषांचिदनाथा वयं जाता इत्यवधावनं भवेत् । केषांचित् सच्छंदत्ति स्वच्छन्दचारिता । अपरे केचित् चिक्षा क्षिप्तचित्ता भवेयुः । तथा स्तेनाः स्वपक्षे परपक्षे चोत्तिष्ठन्ति । लताया इव साधूनां कम्पनं । तथा तरुणानामाचार्यपिपासयान्यत्र गमनं तथाऽसारणासंयमयोगेषु सीदतां पुनः संयमाध्वन्यप्रवर्तमामा तथा मानापमानं च । साम्प्रतमेतानेव दोषान् व्याचिख्यासुः प्रथमतोऽनाथावधावनस्वच्छन्दचारिता क्षिप्तचित्तानि व्याख्यानयति-

**[भा.१५७८]**　　जायामो अनाहोत्ति अनहि गच्छंति केइतो हावे ।
　　सच्छंदावभमंती केइखित्ताव होज्जाहि ॥

**वृ-** बाला वृद्धास्तरुणा वा केचिदगीतार्था आचार्याणां विप्रयोगे जाता वयमनाथा इति विचिन्त्य केचिदन्यत्र गच्छान्तरं गच्छन्ति, केचिदवधावेयुः, तथा केचिन्मन्दधर्मश्रद्धाका गणादपक्रम्य स्वच्छन्दा भ्रमन्ति । अपरे केचिदाचार्यविप्रयोगतः क्षिप्ताः क्षिप्तचित्ता अपगतचित्ता भवेयुः ।

स्वपक्षे परपक्षे स्तेनान् लताकम्पनं चाह-

**[भा.१५७९]**　　पासत्थ गिहित्थादी उन्निखावेज्ज खुड्डगादीए ।

लयावकंपमाणाउ केई तरुणाउ अच्छंति ॥

वृ- स्वपक्षे पार्श्वस्थादयः परपक्षे गृहस्थादयः । अत्रापिशब्दात् परतीर्थिकग्रहणं क्षुल्लकादीन् उन्निष्क्रामयेयुः । किमुक्तं भवति ? पार्श्वस्थादयः क्षुल्लकादीन् विपरिणमय्य पार्श्वस्थादीन् कुर्युः । पुनरन्यतीर्थिकान् स्वज्ञातयो गृहस्थानिति लतेव वातेन कम्पमाना संयमे परिपहैः केचित् तरुणास्तिष्ठन्ति । इयमत्र भावना-यथा पद्मलताऽन्यस्मिन्ननवष्टब्धा सती वातेन कम्प्यमाना तिष्ठति, एवं केचित्तरुणा गच्छेऽपि वर्तमानाः संयमे परीषहैः कम्प्यमाना तिष्ठन्ति तेऽप्यन्यत्र गच्छेयुः अपि चाह—

[भा.१५८०] आयरियपिवासाए कालगयं तु सोउ तेवि गच्छेज्जा ।
गच्छेज्ज धम्मसद्धावि केइ सारंतगस्स असती ॥

वृ- केचित्तरुणा आचार्यपिपासया नाचार्यमन्तरेण ज्ञानदर्शनचारित्रलाभोऽनुत्तरो भवति, तस्मादवश्यमाचार्यसमीपे वर्तितव्यमित्याचार्यवाञ्छया कालगतं श्रुत्वा तेऽप्यन्यत्र गच्छेयुः । तथा धर्मश्रद्धा अपि केचित्सारयितुरभावे गच्छान्तरं गच्छेयुः । मानापमानदोषमाह—

[भा.१५८१] मानिया वा गुरूणं तु थेरादी तत्थ केचिउ नत्थि ।
मानं तु तओ अन्नो अवमानभयाउ गच्छेज्जा ॥

वृ- तत्र केचित्स्थविरादय एवं चिन्तयेयुः यथा सर्वकालं मानिता वयं गुरुभिः अत्र गाथायां षष्ठी तृतीयार्थे प्राकृतत्वात् नास्ति साम्प्रतमन्योऽस्मान्मानयन् एवं चिन्तयित्वा तेऽपमानभयात् गच्छेयुः । उपसंहारमाह—

[भा.१५८२] तम्हा न पगासिज्जा कालगयं एवदोसरक्खट्ठा ।
अनम्मिव ताए पगासेज्ज कालगयं ॥

वृ- यस्मादेते दोषा तस्मादेतद्दोषरक्षार्थमाचार्यं कालगतं न प्रकाशयेत् यदा पुनरन्यो गणधरो व्यवस्थापितो भवति तदान्यस्मिन् व्यवस्थापिते कालगतं प्रकाशयेत्, ॥

मू. (७७) *निग्गंथीएणं नवडहर तरुणीए आयरिय उवज्झाए वीसंभेज्जा नो से कप्पइ अनायरिय उवज्झाइयाए होत्तए कप्पइ से पुव्वं आयरियं उद्दिसावेत्ता तओ उवज्झायं तओ पच्छा पवत्तिणिं से किमाहु भंते ? तिसंगहिया समणी निग्गन्थी तं जहा आयरिएणं उवज्झाएणं पवत्तिनीएय ।*

वृ- निग्गंथीएणमिति पूर्ववत् नवडहरतरुणाया नवाया डहरायास्तरुण्या वा इत्यर्थः । आचार्योपाध्यायः समासोऽत्र पूर्ववत् आचार्योपाध्यायमेतत् प्रवर्त्तिनी च विष्वंभी यावत् क्रियते । ततः से तस्या अनाचार्योपाध्यायाया उपलक्षणमेतत् प्रवर्तिनीरहितायाश्च नो कल्पते भवितुं वर्तितुं किन्तु पूर्वमाचार्यमुद्दिशाप्य ततः पश्चादुपाध्यायं ततः पश्चात्प्रवर्तिनीं कथा (कृत्वा) ? भवितुं कल्पते । से किमाहु इत्यादि । अथ भदन्त किं कस्मात्कारणात् भगवन्त एवमाहुः । सुरिराह-त्रिभिः संगृहीता त्रिसंगृहीता श्रमणा निर्ग्रन्थी सदा भवति तद्यथा-आचार्येणोपाध्यायेन प्रवर्तिन्या च । एष सूत्रसंक्षेपार्थः । अत्राक्षेपपरिहारौ वक्तव्यौ । तत्रायमाक्षेपः-किं कारणं ननु यत् त्रिभिः संगृहीता निर्ग्रन्थी भवति । तत्राचार्योपाध्यायसंग्रहे गुणानुपदर्शयति—

[भा.१५८३] दूरत्थम्मि विकीरइ पुरिसे गारवभयं सबहुमाणं ।
छंदेय अवट्टंती चोएउं जे सुहं होइ ॥

वृ- दूरस्थेऽपि पुरुषे स्वपक्षेण परपक्षेण च क्रियते गौरवं भयं सबहुमानं चेत्यर्थः । इयमत्र भावना-यद्यपि नाम आचार्य उपाध्यायो वा संयतीनां दूरे वर्तते तथापि दूरस्थस्यापिपौरुषस्य गौरवेण भयेन वा कोऽपि संयतीनामपन्यायं न करोति किन्तु स्वपक्षे परपक्षं च सुबहुमानो जायते. । तथा संयती प्रवर्तिन्याः छन्दे अवर्तमानाश्चोदयितुं शिक्षयितुं जे इति पादपूरणे इति वचनात् सुखं भवति, । किमुक्तं भवति ?

आचार्योपाध्यायभयतो न काचिदपि संयती आचारक्षतिमाचरति, यापि काचिदाचरति सापि प्रवर्तिन्या सावष्टंभं शिक्ष्यते । अथ शिक्ष्यमाणापि न प्रतिपद्यते । तत प्रवर्तिनी ब्रूतेआचार्यस्योपाध्यायस्य वाहं कथयिष्यामि ततः सा भीता प्रवर्तिन्या उपपाते तिष्ठति । एते आचार्योपाध्यायसंग्रहे गुणाः ।

सम्प्रति प्रवर्तिनीसंग्रहे गुणानाह—

[भा. १५८४] मिहो कहाज्झड्डरवड्डेहिं कंदप्पकिड्डा बउसत्तणेहिं ।
पुव्वावरे संसु य निच्चकालं गिण्हतेनं गणिणी साहीणा ।।

वृ- मिथः कथा परस्परं भक्तादिविकथाकरणं झड्डर विड्ड नाम तेषु गृहस्थप्रयोजनेषु कुण्टलविंटलादिषु वा प्रवर्तनं एताभ्यां कन्दर्पः क्रीडाकन्दर्पोद्रिकजननी कायवाक्चेष्टा । बकुशत्वं शरीरोपकरणविभूषाकरणं एताभ्यां च तथा पूर्वरात्रे अपररात्रे च गणिन्या प्रवर्तिन्या स्वाधीना सती संगृह्यते । तथा तत्प्रवर्तिनीसंग्रहोऽपि साध्व्याः श्रेयान् एतदेव विभावयिषुर्लोकेष्वपि स्त्रियास्त्रिविधं संग्रहमाह—

[भा. १५८५] जाया पिति व्वसा नारी दत्ता नारी पतिव्वसा ।
विहवा पुत्तवसा नारी नत्थि नारी सयं वसा ।।

वृ- जाता सती नारी पितुर्वशा पितुरायत्ता भवति, । दत्ता परिणीता सती नारी पतिवशा भर्तुरायत्ता । विधवा मृतभर्तृका नारी पुत्रवशास्ति । एवं च सती नारी नास्ति कदाचनापि स्वयं वशा,

अमुमेवार्थं प्रकारान्तरेणाह—

[भा. १५८६] जायं पिय रक्खंती मातापितिसासुदेवरादिन्नं ।
पितिभायपुत्तविहवं गुरुगणिगणिणीय अज्जंपि ।।

वृ- जातामपि नारीं रक्षतां मातापितरौ । दत्तां परिणीतां रक्षन्ति मातृपितृस्वस्त्र(श्वश्रू)देवरभर्त्रादयः । देवरग्रहणं स्वसुर (श्वशुर) भर्त्रादिरुपलक्षणं । विधवा पुनः पिता भ्राता पुत्रो वा । यदि जीवन्ति पित्रादयस्तर्हि सर्वेऽपि रक्षन्ति । एवमार्यिकामपि गुरुराचार्यो गणी उपाध्यायः गणिनी प्रवर्तिनी रक्षन्ति ।

[भा. १५८७] एगाणिया अपुरिसा सकवाडं परघरं तु नो पविसे ।
सगणे व परगणे वा पव्वतिया वीतिसंगहिया ।।

[भा. १५८८] आयरियउवज्झाया सययं साहुस्स संगहो दुविहो ।
आयरियउवज्झाया अज्जाण पवत्तिणी तइया ।।

वृ- संगृह्णातीति संग्रहः संग्राहक इत्यर्थः साधोः सततं सर्वकालं संग्रहः संग्राहको द्विविधः आचार्योपाध्यायौ । आर्यिकाणां त्रिविधस्तद्यथा द्वावाचार्योपाध्यायौ तृतीया प्रवर्तिनी ।

अत्रैवापवादमाह—

[भा. १५८९] बितियपदे सा थेरी जुणा गीयाय जइ खलु भवेज्जा ।
आयरियादी तिण्हवि असतीए न उद्दिसाविज्जति ।।

वृ- द्वितीयपदे अपवादपदे सा प्रव्रजिता स्थविरा वयसा वृद्धा जीर्णा चिरकालप्रव्रजिता गीता उत्सर्गापवादसामाचारीकुशलतया गीतार्था यदि खलु भवेत् तत आचार्यादीनामाचार्योपाध्याय-प्रवर्तिनीनां तिसृणामप्यभावे न संग्राहकमाचार्यमुपाध्यायं प्रवर्तिनीं वा उद्देशापयेत् दोषासंभवात्—

**मू. (७८)** *भिक्खू य गणाओ अवक्कम्म मेहुणं पडिसेवेज्जा, तिन्नि संवच्छराणि तस्स तप्पत्तियं नो कप्पइ आयरियत्तं वा जाव गणावच्छेइयत्तं वा उद्दिसित्तए वा धारेत्तए वा, तिहिं संवच्छरेहिं वीइक्कंतेहिं चउत्थगंसि संवच्छरंसि पट्ठियंसि ठियस्स उवसन्तस्स उवरयस्स पडिविरयस्स एवं से कप्पइ आयरियत्तं वा जाव गणावच्छेइयत्तं वा उद्दिसित्तए वा धारेत्तए वा ।*

वृ- अथास्य सूत्रस्य कः सम्बन्धस्तत आह—

[भा.१५९०] नवतरुणे मेहुण्हं कोई सेवेज्ज एस संबंधो ।
अब्बंभरक्खणादिव्व संगहो एत्थ विसए वा ।।

[भा.१५९१] अपज्जिएवि गणो, दिज्जइवुत्तंति मा अतिपसंगा ।
सेवियमपुनपज्जय दाहिंति गणं अतो सुत्तं ।।

वृ- पूर्वसूत्रे नवतरुणादिकः साधुरुक्तस्तत्र कोऽपि नवतरुणो मोहोदयवशात् मैथुनं सेवेत कृतमैथुनसेवाकस्य च यथाचार्यत्वादिकमुद्देष्टव्यं तथानेन सूत्रेण प्रतिपाद्यते इत्येष सूत्रसम्बन्धः अब्रह्मणादेर्हेतोरब्रह्मरक्षणादेर्हेतोरब्रह्मरक्षणादिनिमित्तं संग्रह आचार्यादिकोऽनन्तरसूत्रेऽभिहितः । अत्रापि सूत्रे स एव संग्रहोऽभिधीयत इति । अथवा पूर्वतरेषु सूत्रेषु अपर्यायेऽपि गणो दीयते इत्युक्तं तद्दिवसाचार्यादिपदानुज्ञानात्तत् एतत् श्रुत्वा मा अतिप्रसंगान्मैथुनं सेवित्वा अपूर्णे पर्याये गणं दास्यंतीति तत एतन्निवारणार्थमिदं सूत्रम् । अनेन सम्बन्धेनायातस्यास्य व्याख्या-भिक्षुर्गणात् अपक्रम्य मैथुनं प्रतिसेवते तत्तस्य त्रीणि संवत्सराणि यावत्तत्प्रत्ययं मैथुनसेवाप्रत्ययं न कल्पते आचार्यत्वमुपाध्यायत्वं यावत्करणात्प्रवर्तित्वं स्थविरत्वमिति परिग्रहः, गणावच्छेदित्वं वा उद्देष्टुमनुज्ञातुं नापि तस्य कल्पते स्वयं धारयितुं, किन्तु त्रिषु संवत्सरेषु व्यतिक्रान्तेषु चतुर्थे संवत्सरे प्रस्थिते प्रवर्तितुमारब्धवति तच्च प्रस्थितत्वमाभिमुखी भवनामात्रेऽपि भवति तत आह-अस्थि ते प्रवर्त्तमाने स्थितस्य वर्तमानस्य किंविशिष्टस्य सत इत्याह-उपशान्तस्य उपशान्तवेदोदयस्य तच्चोपशान्तत्वं प्रवृत्तिनिषेधादवसीयते तत आह उपरतस्य मैथुनप्रवृत्तेः प्रतिनिवृत्तस्य तच्च प्रतिनिवृत्तत्वं दाक्षिण्यवशादिमात्रतोऽपि भवति तत आह-मैथुनेच्छा प्रातिकूल्येन विरतः प्रतिविरतः तस्य तदपि च प्रतिविरतत्वं विकारादर्शनतो लक्ष्यते । तत आह-निर्विकारलेशतोऽपि मैथुनाभिलाषहेतुकाररहितस्य कल्पते आचार्यत्वं यावद्गणावच्छेदित्वं वा उद्देष्टुं वा धारयितुं वा एष सूत्रसंक्षेपार्थः । व्यासार्थं तु भावतो भाष्यकृदाह-

[भा.१५९२] दुविहो साविक्खियरो निरवेक्खो उदिने जाइणा पुच्छा ।
जोगं च अकाऊणं जाव सदेसादि सेवेज्जा ।।

वृ- द्विविधो द्विप्रकारः खलु मैथुनसेवकः । तद्यथा-सापेक्ष इतरश्च । इतरो निरपेक्षः । तत्र निरपेक्षो य उदीर्णवेदे याति अपगच्छत्यनापृच्छ्या यो वाऽयाति योगं यतनया योगमकृत्वा यदि वा स वेश्यादिकां सेवेत । एष त्रिविधोऽपि निरपेक्षः गुरुतीर्थकरापेक्षारहित्वात् ।

[भा.१५९३] सावेक्खो उ उदिणो आपुच्छे गुरुं तु सो जति उवेहे ।
ता गुरुगा भवतिती सो य अनापुच्छए गच्छे ।।

वृ- यदि पुनरुदीर्णोदयप्राप्ते मोहे उदिते वेदेत्यर्थः । गुरुमापृच्छति स सापेक्षः । सह अपेक्षा गुर्वपेक्षा यस्यास्ति स सापेक्ष इति व्युत्पत्तेः । तत्रापृच्छायां यदि स गुरुरुपेक्षां कुरुते ततस्तस्य प्रायश्चित्तं चतुर्गुरुका भवन्ति, । स च साधुरनापृच्छ्य गुरुं याति तर्हि तस्यापि प्रायश्चित्तं चतुर्गुरुकाः । सा च पृच्छा त्रीन् वारान् कर्तव्या, । तथा चाह-

[भा.१५९४] अहवा सइदोवावी आयरिए पुच्छ अकडजोगी वा ।
गुरुगा तिन्नि उ वारे तम्हा पुच्छेज्ज आयरिए ।।

वृ- अथवा सकृदेकं वारं यद्याचार्यान् पृच्छति तथापि प्रायश्चित्तं गुरुकाः । अथ द्वौ वारौ पृच्छति न तृतीयमपि वारं तदापि चतुर्गुरुकाः । अथवा वारत्रयपृच्छायामपि कृतायां यदि अकृतयोगी यतनायोगमकृत्वा गच्छति । तदानीमपि चतुर्गुरुकः यत एवमेकं द्वौ वा वारावपृच्छायां प्रायश्चित्तं तस्मात् त्रीन् वारान् आचार्यान् पृच्छेत् लोकेऽपि तथा दर्शनात्तथा चाह-

[भा.१५९५] बंधे य घाते य पमारणे य दंडेसु अन्नेसु य दारुणेसु य ।

पमत्तमत्ते पुनवितहेउं लोएवि पुच्छंति उ तिनि वारे ।।

**वृ-** राज्ञाबंधे आदिष्टे यदि वा घाते प्रहारे अथवा प्रमारणे कुमरणमारणे अन्येषु च दण्डेषु हस्तपादच्छेदादिषु वारत्रयाद्यादिष्टेषु लोके त्रीन् वारान् राजा पृच्छ्यते । किमर्थमित्यत आह- पमत्तमत्ते पुनवि तहउमिति प्रमत्तेन व्याक्षिप्तेन यदि वा मद्यपानेनमत्तेनादिष्टं भवेत् प्रशान्तस्य पुनश्चित्तमुपजायते, यथा मा मार्यतामिति, वारत्रयमनापृच्छायां स रुष्येत किमिति स मारित इति एवं यथा राजा केनापि त्रीन् वारान् पृच्छ्यते तथाचार्योऽपि ।

**[भा.१५९६]** आलोइयंमि गुरुणा तस्स चिकिस्सा विहीए कायव्वा ।
निव्विंत्तिगमादीया नायव्वाकमेणिमेणं तु ।।

**वृ-** आलोचिते वारत्रयमापृच्छायां कृतायां गुरुणा आचार्येण तस्योदितवेदस्य साधोर्विधिना चिकित्सा कर्तव्या । सा चिकित्सा निर्विकृतिकादिका क्रमेणानेन वक्ष्यमाणेन ज्ञातव्या । तमेव क्रममाह—

**[भा.१५९७]** निव्वीयउम तवेवेए वेयावच्चे तहेव ठाणेय ।
आहिंडणे य मंडलि चोयगवयणं च कप्पठी ।।

**वृ-** प्रथमतो निर्विकृतिकं कारयितव्यः । ततो यदि निर्विकृतिकं तपः कुर्वतो नोपशाम्यति वेदस्तर्हि निर्विकृतिकेनावमौदर्यं कारयितव्यम् तथाप्यनुपशाम्यति ततश्चतुर्थादिकं कार्यते, तस्याप्यतिष्ठति वैयावृत्त्यंकारणीयः वैयावृत्त्येनाप्यतिष्ठति स्थाने नोर्ध्वस्थानेन तिष्ठति, तथाप्यनुपशाम्यति आहिंडनं कार्यते देशकाहिण्डकानां सहायो दीयतेइत्यर्थः । तत्र यदि पथपरिश्रमेणोपशान्तो भवति वेदस्ततः सुन्दरमथनोपशाम्यति ततो यदि सबहुश्रुतस्तर्हि स सूत्रमण्डली अर्थमंडली च दाप्यते । अत्रार्थे चोदकवचनं यथा किमर्थं स मण्डलीं दाप्यते । सूरिराह-दृष्टान्तोऽत्र कप्पट्ठीति कुलवधूः । एगो सेठी तस्स पुत्तो धनो वज्जणा निमित्तं देसंतरं गतो । भारिया सेठीसमीवे मुक्का । सा य सुहभोयण-तंबोलविलेवणमंडणपसाहणग्या घरवावारकुणंती अन्नया उम्मत्तिया जाया, । दासचेडिं भणइ-पुरिसं मग्गेह । तीए सेट्ठिणो कहियं । तेन चिंतियं जावअवि न विनस्सति ताव चिंतेमि उवायं, । सेट्ठिणी भणिया-कलहं काऊणं तुमं गच्छ जेण सा धरवावारे छुब्भत्ति । अन्नहा विणिस्सिहिति । एवं सा मत्थे ऊणत्रया सेठी घरस्सागओ आभोक्खं मग्गइ । सा न देइ । तो सेठिणा महतो कलहं कतो । सा पेट्टिऊण निस्सारिया । सा य वहू य कलहसद्दं सोऊण तत्थागया सेठिणा भणिया-पुत्तिवहूए तुमं घरसामिणी काएसा, ता तुमे अज्जप्पभिती सव्वो वावारो कायव्वो । सा तहेव करिउमारद्धा । तओ तीए वावारवाउलाए भोयणमवि वियालवेलाए कुतो मंडणपसाहणं । दासाचेडीए भणियं- मग्गितो चिट्ठति पुरिसो, कया मेलिज्जइ । तीए भणियं-मरणस्सवि मे अवसरो नत्थि कत्तो पुरिसस्स ।' एवं यथा तस्या गृहव्यापारव्यापृततया वेदोपशान्तिरभूत् । तथास्यापि सूत्रमण्डल्यादिव्यापारव्यापृततया कदाचिद्वेदोपशान्तिः संभाव्यते ततः सूत्रमण्डलीं अर्थमण्डलीं च दाप्यत इति ।

**[भा.१५९८]** एवंपि अठायंते अठाणादेकमेक्कतिगवारा ।
वज्जेज्ज सचित्ते पुन इमेउ ठाणे पयत्तेणं ।।

**वृ-** एवमपि सूत्रमण्डल्यादिदापनतोऽपि अतिष्ठति वेदोदये अस्थाने वैश्यापाटके स्थविरैः सह वसतिं गृह्णाति । तत्रालिङ्गनचुम्बनादि दृष्ट्वा यदि शुक्रपुद्गलविनिर्गमे वेद उपशाम्यति ततः सुन्दरं । एवं त्रीन् वारान् तथाप्यतिष्ठति यत्र शब्दाः श्रूयन्ते तत्र शब्दप्रतिपिद्धायां वसतौ स्थविरैः समवतिष्ठते । तत्र यदि परिचारणाशब्दमाकर्ण्य निबिडाध्यवसायभावतः शुक्रपुद्गलक्षरणे उपशाम्यतिततः सुन्दरम् । एवमत्रापि त्रीन् वारान् तथाप्यनुपशान्तौ दूष्यपलाशपत्रान्तरितमेकं द्वौ त्रीन् वारान् हस्तकर्म करोति । तथाप्यनुपशान्तौ मनुष्ययौनावचित्तायां तथाप्यतिष्ठति सचित्ते वक्ष्यमाणं विधिना संचरन्ति । तत्रसचित्ते

पुनरिमानि वक्ष्यमाणानि स्थानानि प्रयत्नतो वर्जयेत् । तान्येवाह—

[भा.१५९९] सदेससिस्सिणी सज्जंतिया सिस्सणी कुलगणेया ।
संघेय कुलकन्नगा य विहवा बहुगा य तहा सलिंगणं ।।

वृ- सदेशा समानदेशजातिशिष्यिनी स्वहस्तदीक्षिता सज्जंतिया भगिन्यादिका तथा शिष्यिनी कुले संघे च । किमुक्तं भवति ? समानकुलवर्तिनी समानगुणवर्तिनी समानसंघवर्तिनी च कुलकन्यका विधवा च प्रतीता वधूका लघुकुलवधूर्वा एता परिहरेत् । अपरिहरतः प्रायश्चित्तं । तथा स्वलिङ्गेन सेवनान्यथा तत्रापि प्रायश्चित्त ।

[भा.१६००] लिंगंमि उ चउभंगो पढमे भंगंमि होइ चरमपयं ।
मूलं चउत्थभंगे बितिए ततिए य भयणाउ ।।

वृ- लिङ्गे लिङ्गविषये चतुर्भङ्गी तद्यथा-स्वलिंगेन स्वलिंगे वर्तमानां सेवते १, स्वलिङ्गेनान्यलिङ्गे २ अन्यलिङ्गेन स्वलिङ्गे ३, अन्यलिङ्गेनान्यलिङ्गे ४ तत्र प्रथमे भंगे सेवमानस्य भवति प्रायश्चित्तं चरमपदं पाराञ्चितलक्षणं चतुर्थे भङ्गे अन्यलिङ्गेनान्यलिङ्गे इत्येवरूपे सेवमानस्य मूलं नाम प्रायश्चित्तं । द्वितीये तृतीये भङ्गे भावनीयं भजना । क्वचित् प्रायश्चित्तं तामेव विविक्षुः प्रथमभङ्गगतामपि भावनामाह —

[भा.१६०१] सलिंगेन सलिंगे सेवंते चरमं तु होइ बोधव्वं ।
सलिंग अन्नलिंगे देवी कुलकन्नगा चरिमं ।।

वृ- स्वलिङ्गेन स्वलिङ्गे वर्त्तमानायां यदि सेवते तदा तस्य भवति बोद्धव्यं प्रायश्चित्तं चरमं पाराञ्चितरूपं । स्वलिङ्गेनान्य लिङ्गे इत्येवंरूपे द्वितीये भङ्गे यदि सेवते देवीं राजाग्रमहिषीमुपलक्षणमेतत् । अन्या वा राजस्त्रियः कुल कन्यकां वा गाथायां विभक्तिलोपः प्राकृतत्वात् तदा प्रायश्चित्तं चरमं पाराञ्चितं ।

[भा.१६०२] नवमं तु अमच्चीए विहवीए कुलच्चियाए मूलं तु ।
परलिंगे पासलिंगे सेवंते होइ भयणाउ ।।

वृ- स्वलिङ्गेनामात्याया अमात्यभार्यायाः सेवनं प्रायश्चित्तं नवममनवस्थाप्यं विधवाया कुलच्चियाए इति कुलवध्वा उपलक्षणमेतत् अन्यस्याश्चाविशेषितायाः प्राकृतस्त्रियाः सेवने मूलं पुनर्व्रतारोपणं प्रायश्चित्तमुक्त्वा द्वितीयभङ्गे भजना तृतीये विव क्षुरिदमाह-परलिङ्गे स्वलिङ्गे वर्त्तमानाया सेवना भवति । इयं वक्ष्यमाणा भजना तामेवाह—

[भा.१६०३] सदेससिस्सणीए सज्जंति कुलच्चियाए चरमं तु ।
नवमं गणच्चियाए संघच्चियाए मूलं तु ।।

वृ- सदेशायाः समानदेशोद्भवायाः तथा शिष्यिन्याः स्वहस्तदीक्षितायाः सज्जंती भगिनी तस्याः कुलच्चियाए इति समानकुलवर्तिन्यासेवने चरमं पाराञ्चितं । समानगणवर्तिन्याः सेवनेन नवममनवस्थाप्यं समानसङ्घवर्तिन्या मूलं । सम्प्रति चतुर्थभङ्गभावनामाह—

[भा.१६०४] परलिंगेन परंमि उ मूलं अहवावि होइ भयणाउ ।
एएसिं भंगाणं जयणं वुच्छामि सेवाए ।।

वृ- परलिङ्गेन परलिंगेन वर्त्तमानायां यदि सेवते तदा मूलं अथवा भवत्येतेषां भङ्गानां भजना विकल्पना क्वचिद्भङ्गे द्वितीयपदेन सेवा कर्त्तव्या क्वचिन्नेत्यर्थः । तत्र यस्मिन् भङ्गे सेवा कर्त्तव्या तत्र सेवायां यतनां वक्ष्यामि । तामेवाह—

[भा.१६०५] तत्थ विगिच्छाए विहिं निव्वितियमादियं अइक्कंते ।
उवभुत्तथेरसहितो अड्डाणादीसु तो पच्छा ।।

वृ- तत्र चिकित्सायां विधिं निर्विकृतिकादिकमतिक्रान्तो ततः पश्चात् य उपभुक्ता उपभुक्तभोगाः स्थविरास्तैः सहितः समेतोऽस्थानादिषु वेश्यापाटकादिरूपेषु वसतिं गृह्णाति । तत्र च विधिः प्रागेवोक्तः ।

तथाप्यनुपशान्तौ –

[भा.१६०६] अट्ठाण सहहत्थे अचित्ततिरिक्ख भंगदोच्चेणं ।
एगदुगतिनिदारा समुद्धस्स उवठिए गुरुगा ।।

वृ- अस्थाने वेश्यापाटके यत्र परिचारणा शब्दाः श्रूयन्ते तत्र शब्दापूर्णे उपभुक्तभोगस्थविरैः सह तिष्ठति तत्रायं विधि स एव प्रागुक्तः । तथाप्यतिष्ठति कृत्रिमाया तिर्यग्योनावचित्तायां मैथुनकर्म एक द्वौ त्रीन् वारान् करोति । तथाप्यनुपशान्तौ कृत्रिमायां मनुष्ययोनौ तथाप्यतिष्ठति भंगदोच्चेणंति द्वितीयेन भङ्गेन स्वलिङ्गे परलिङ्गे इत्येवंरूपेण स्वगण एव स्थितेन शून्यगृहे शून्यदेवकुलिकायां वा निरपायेनापवादपदतः प्राकृतायाः स्त्रिया वृत्तिप्रदानतः । तत्र प्रशान्तायां एकं द्वौ त्रीन् वारान् मैथुनमाचरति । ततः शुद्धस्योपशान्तवेदस्याकरणाय उपस्थितस्याभ्युतस्य गाथायां सप्तमी षष्ठ्यर्थे प्रायश्चित्तं चत्वारो गुरुकाः ।

मू. (७९) *गणावच्छेइए गणावच्छेइयत्तं अनिक्खिवित्ता मेहुणधम्मं पडिसेवेज्जा, जावज्जीवाए तस्स तप्पत्तियं नो कप्पइ, आयरियत्तं वा जाव गणावच्छेइयत्तं उद्दिसित्तए वा धारेत्तए वा ।।*

वृ- गणावच्छेदको गणावच्छेदकत्वमनिक्षिप्य मैथुनप्रकारं प्रतिसेवते । तस्य यावज्जीवं यावत्प्राणधारणं करोति तावत्प्रत्ययं गणावच्छेदिकत्वमनिक्षिप्य यन्मैथुनधर्मप्रतिसेवनं तत्करणं न कल्पते, । आचार्यत्वं वा प्रवर्तित्वं वा स्थविरत्वं वा उद्देष्टुमनुज्ञातुं स्वयं वा धारयितुं, इदमेकं सूत्रं, द्वितीयमाह ।।

मू. (८०) *गणावच्छेइए गणावच्छेइयत्तं निक्खिवित्ता मेहुणधम्मं पडिसेवेज्जा, तिन्नि संवच्छराणि जाव धारेत्तए वा ।।*

वृ- गणावच्छेदको गणावच्छेदकत्वं निक्षिप्य गुरुसमक्षं मुक्त्वा मैथुनधर्मं प्रतिसेवतस्तस्य त्रीणि संवत्सराणि यावत्प्रत्ययं न कल्पते । आचार्यत्वं वा यावद्गणावच्छेदकत्वं वा उद्देष्टुं वा अनुज्ञातुं स्वयं वा धारयितुं त्रिषु संवत्सरेषु व्यतिक्रान्तेषु चतुर्थसंवत्सरे प्रस्थिते स्थितस्य, वर्तमानस्य उपशान्तस्य उपरतस्य प्रतिविरतस्य निर्विकारस्य एवं से तस्य कल्पते आचार्यत्वं वा गणावच्छेदिकत्वं उद्देष्टुं वा धारयितुं वा, । अत्र पदानामर्थभावना भिक्षुसूत्रे इव निरवशेषा द्रष्टव्याः । तथा च द्वे सूत्रे गणावच्छेदके उक्ते तथा आचार्योपाध्येऽपि तथा एवं आयरियउवज्झाएवि एवं गणावच्छेदके इवाचार्योपाध्यायेऽपि द्वे सूत्रे ते चैवं ।

मू. (८१) *आयरियउवज्झाए आयरिय उवज्झायत्तं निक्खिवेत्ता मेहुणधम्मं पडिसेवेज्जा जावज्जीवाए तस्स तप्पतियां नो कप्पइ आयरियत्तं वा जाव गणावच्छिदियत्तं वा उद्दिसित्तए वा धारित्तए वा।*

मू. (८२) *आयरियउवज्झाए आयरियउवज्झायत्तं निक्खिवेत्ता मेहुणधम्मं पडिसेवेज्ज तिन्नि संवच्छराणि तस्स तपत्तियं नो कप्पइ । आयरियत्तं वा जाव गणावछेदियत्तं वा उद्दिसितए वा धारित्तए वा तिहिं संवच्छरेहिं वइक्कंतेहिं चउत्थगं संवच्छरंसि पट्ठियंसि उठियंसि ठियस्स उवसंतस्स उवरयस्स पडिविरयस्स । एवं से कप्पइ आयरियत्तं वा जावं गणावच्छेदियत्तं वा उद्दिसित्तए वा धारेत्तए वा ।।*

वृ- अस्य सूत्रद्वयस्याप्यर्थो गणावच्छेदकसूत्रद्वयवद्भावनीयः । अत्र भाष्यकारः प्राह-

[भा.१६०७] एमेव गणायरिए निक्खिविणा नवरि तत्थ नाणत्तं ।
अयपालगसिरिधरिए जावज्जीवं अणरिहाउ ।।

वृ- एवमेव अनेनैव प्रकारेण भिक्षुसूत्रमिवेत्यर्थः । गणेगणावच्छेदके आचार्ये आचार्योपाध्याये

प्रत्येकं सूत्रद्विकमनिक्षेपणनिक्षेपणविषयं भावनीयं । नवरं सर्वेषु चतुर्षु सूत्रेषु मध्ये अनिक्षेपणनिक्षेपणाविषये गणावच्छेदकसम्बन्धिन्याचार्योपाध्यायसम्बन्धिनि च सूत्रे नानात्वमिदं तदेवाह- अजापालकेन श्रीगृहिकेन च दृष्टान्तेन गणावच्छेदकाचार्योपाध्याया यावज्जीवमाचार्यपदानामनर्हा तत्राजापालकदृष्टान्तमाह—

[भा.१६०८] अइयालो रक्खंतो अइवालो दिठतित्थजत्ताउ ।
कहि वच्चह तित्थानि वेंति अहगंपि वच्चामि ॥

[भा.१६०९] छड्डेऊण गयंमी सावज्जाईहिं खइयरिय नट्ठा ।
पच्चागतोवविज्जइ न लभति य भत्तिं न वियत्ताओ ॥

[भा.१६१०] कोई भईए अजाओ रक्खति तेन अडवीए ।
आयाउ चारयंतेन च रक्खंतेन कप्पडियादीदिट्ठा ॥

वृ- गंगं संपाट्ठिया तेन पुच्छियं, कहिं वच्चह । ते भणंति गा जत्ता, सो ततो अजाओ छड्डिता तेहिं समं गंगं गतो, । ताओ अजाओ सुणातो काउवि ताव सावज्जेहिं खइया लोकातो तेनेहि हरिया लोकातो विनट्ठा उ । सोय गंगाए ण्हाएत्ता पडिआगतो । पुनो रक्खामिति अजातो मडगति ताहे सो बंधित्ता लोगेण अयाणं मोल्लं दवावितो भत्ती न लद्धी न य पुनो लभतिमग्गंतोवि अयालो रक्खिउं । अक्षरयोजना त्वेवं-अजापालो अजारक्षन् तीर्थयात्रिकान् कार्पटिकादीन् दृष्ट्वाऽप्राक्षीत् क्व व्रजथ यूयं । तेऽवोचन् तीर्थानि । स ब्रूते अहमपि व्रजामि । एवमुक्त्वा तस्मिन् अजास्त्यक्त्वा गते श्वापदादिभिः खादितहृतनष्टाः काश्चिदजाः श्वापदैः खादिताः काश्चित् स्तेनैरपहृता अपरा नष्टा नंष्ट्वा स्वगृहमागताः । स च गङ्गायां स्नात्वा अरयागतः सन् अजामूल्यं दाप्यते न च लभते भृतिं नापि पुनरजा रक्षितुमिति ।

[भा.१६११] एवं सिरिधरीए वी एवं तु गणादिको य अनिक्खित्ते ।
जावज्जीवं त प्पत्तीयं गणं सोउ ॥

वृ- एवमजापालकइव श्रीगृहिकोऽपि द्रष्टव्यः । सो चैवं । कोइ सिरिधरिओ भईए सिरिधरं पालेह । अन्नया तेन केइ गंगं संपट्ठिता दिट्ठा पुच्छिया कहिं वच्चह । तेहिं कहियं गंगाए । ततो सो अनापुच्छिता तेहिं समं गंगं गतो । पच्छा सिरिधरं सुन्नं लोगेण विलुत्तं । सो गंगाए ण्हाएत्ता पडियागतो पुनो रक्खामिति सिरिधरमेति, ताहे सो रिरिधरसामिणा बंधित्ता जं सिरिधरे पणट्ठं तं दवावितो न य पुनो लभति रक्खिउं मग्गंतोवि । एष दृष्टान्तः ॥ अत्रोपनयमाह-एवं तुइत्यादि । एवमेव तु स्वधारणे गणादिकस्य अनिक्षिप्ते । अनिक्षिप्ते कृते भावे क्तप्रत्ययविधानात्तत् प्रत्ययं गणाद्यनिक्षेपेण मैथुनसमाचरणप्रत्ययं सगणावच्छेदिकादियावज्जीवं न लभते गणमिति । तदेवमनिक्षेपविषये सूत्रद्विकं दृष्टान्तद्विकमुक्तमेतदेव दृष्टान्तद्विकं निक्षेपविषयेऽपि सूत्रद्विकं योजनीयं । तच्चैवं-अन्नो अजापालगो अजातो रक्खतिक तेन कप्पडियादी अन्नया गंगं संपट्ठिया दिट्ठा । तेन पुच्छिया-कहिं वच्चह । तेहिं कहियं गंगाए वच्चामो । ततो तेन गंगं गन्तुकामेण अजातो अजासामियाणं निक्खित्ता अन्नो वा अप्पणो ट्ठाणे अजापालगो कतो काउं गंगं गतो । गंगाए ण्हाएत्ता पडियागतो तेन पुनो रक्खामिति अजा मग्गिया लद्धा । तहा कोइ सिरिधरितो सिरिधरं पालति । अन्नया तेन गंगं संपट्ठिया । केइ दिट्ठा आपुच्छिया कहि गंगाए वच्चामो सो गंगं गंतुकामो सिरिधरं सामिस्स कहेत्ता अप्पणो वा ट्ठाणे अन्नं पच्चइयसिरिधरियं ठवित्ता ततो गंगाए ण्हाएत्ता पडिआगतो । पुनो लद्धं सिरिधरमेवं यो गणावच्छेदक आचार्योपाध्यायो वा गणावच्छेदकत्वादिकं निक्षिप्य मैथुनधर्मं प्रतिसेवते । स संवत्सरत्रयातिक्रमे लभते पुनराचार्यादिकमिति, सूत्रम्-

*मू. (८३) भिक्खूय गणाओ अवक्कम्म ओहायइ तिन्नि संवच्छराणि तस्स पतियं नो कप्पइ आयरियत्तं वा जाव गणावच्छेद इयत्तं वा उद्दिसित्तए वा धारेत्तए वा, तिहिसंवच्छरेहिं वीइक्कंतेहिं चउत्थगंसि*

*संवच्छरंसि उद्वियं सिट्ठियस्स उवसंतस्स पडिवीरियस्स निवारियस्स एवं से कप्पइ ति आयरियत्तं वा जाव गणावच्छेदियत्तं वा उद्दिसित्तए वा धारेतए वा ।*

**वृ-** अथास्य सूत्रस्य कः सम्बन्धस्तत आह—

**[भा.१६१२]** जो तिन्नि अट्ठावते सावेक्खो वच्चए3 परदेसं ।
तं चेव य ओहावण जं उज्झति दिव्वलिंगं तु ।।

**वृ-** यावत्त्रीन् वारानपवादतो द्वितीयभङ्गे स्त्रीसेवायामपि कृतायां न तिष्ठति वेदोदये पुनरेष्यापि मावज्ञास्येहमिति निक्षिप्य प्रच्छन्नमवधावामीति स्वापेक्षास्ति स सापेक्षः स्वदेशपरिहरणार्थं परदेशं व्रजति । तत्र सुखं लिङ्गविवेकेन प्रतिसेविष्यामीति बुद्ध्या एतदेव चावधावनं यतिलिङ्ग विवेकबुद्ध्यागमनं तथा चाह-तं चेव य इत्यादि तदेव अवधावनं यद् द्रव्यलिङ्गं रजोहरणादिकमुज्झति मा प्रवचनस्योड्डाहो भूदिति कृत्वा ततः पूर्वं सूत्रपञ्चकानन्तरमिदमवधावनसूत्रपञ्चकं । तद्यथा-प्रथमं भिक्षुसूत्रं तदनन्तरं गणावच्छेदकसम्बन्धिना क्रमेणानिक्षेपणनिक्षेपणविषये द्वे सूत्रे —

**मू. (८४)** *गणावच्छेइए गणावच्छेइयत्तं अनिक्खिवित्ता ओहाएज्जा जाव धारेतए ।।*

**मू. (८५)** *गणावच्छेइए गणावच्छइयत्तं निक्खिवित्ता ओहाएज्जा तिन्नि संवच्छराणि तस्य ताप्पत्तिय नो कप्पइ आयरियत्तं जाव गणावच्छेइयत्तं वा जीव धारेतए वा ।*

**वृ-** अक्षरसूत्रगमनिका सूत्रपञ्चकस्यापि तथैव अनिक्षेपणसूत्रद्विके गणावच्छेदकादयः पुर्ववदजापालकश्रीगृहिकदृष्टान्ताभ्यां यावज्जीवमाचार्यपदानामनर्हाः निक्षेपणासूत्रद्विके—

**मू. (८६)** *आयरिय उवज्झाए आयरिय उवज्झायत्त अनिक्खिवित्ता ओहाएज्जा* जाव *धारेतएवा ।*

**मू. (८७)** *आयरिय उवज्झाए आयरिय उवज्झायत्व निक्खिवित्ता ओहाएज्जा जाव धारेत्तएवा ।*

**वृ-** ताभ्यामेव दृष्टान्ताभ्यां प्रागुक्तप्रकारेण संवत्सरत्रयातिक्रमेऽर्हाः । सम्प्रति भिक्षुसूत्रस्या-निक्षेपणसूत्रद्विकस्य च मैथुनसूत्रादापृच्छनविधौ यतनायां च यो विशेषस्तमभिधित्सुराह-

**[भा.१६१३]** एमेव बितियसुत्ते बिय भंग निसेवयम्मि3 अठंते ।
ताहे पुनरवि जयती निव्वीतियमादिणा विहिणा ।।

**वृ-** एवमेव अनेनैव प्रकारेण भिक्षुमैथुनसूत्रे इवेत्यर्थः । द्वितीयसूत्रे भिक्षुरवधावनसूत्रे उपलक्षणमेतत् निक्षेपणसूत्रद्विके च द्वितीयभङ्गे प्रागुक्तस्वरुपेण निषेवितेऽपि मैथुने अतिष्ठति वेदोदये ततः पुनरपि निर्विकृतिकादिना विधिना यतते-

**[भा.१६१४]** जइ तह वि म उवसामइ ताहे जयति च3त्थभंगेण ।
पुव्वत्तेणं विहिणा, निग्गमने नवरि नाणत्तं ।।

**वृ-** यदि तथापि पुनरपि निर्विकृतिकादिना-परलिङ्गेन परलिङ्गे इत्येवरुपेण यतते । नवरं द्वितीयभङ्गाच्चतुर्थभङ्गे निर्गमने नानात्वं विशेषस्तथाहि-पूर्वोक्तेन विधिना द्वितीयवारमपि स्त्रीसेवानन्तरं भूयो निर्विकृतिकादिके विधौ कृते यदि नोपशाम्यति वेदस्तत्र परदेशं गन्तव्यं । तत्र च गमने इयं यतना-

**[भा.१६१५]** उम्मत्तो वपलवते गतोव आणेच्छु बज्झइ सिढिलं ।
भाविते वसभामाणं बंधइ नासेज्ज मा दूरं ।।

**वृ-** स परदेशं गन्तुमना उन्मत्तकवेषं करोति । उन्मत्तकवद्वसम्बद्धं प्रलपति उन्मत्तक इवेतश्च गच्छति ततोऽपि च वृषभैः आनीय शिथिलं बध्यते, । एवं चोन्मत्तकरुपतया प्रलपन् पलायमानो वा तथा बालशैक्षकादीन् साधूनन्यान् भावयति यथा ते जानते सत्यमयमुन्मत्तक एव एवं भाविते साधुजने तान् वृषभा ब्रूवते (न) गाढमेवं बन्धीथ मा बन्धनस्योद्वेगतो नष्टः सन् दूरं नंक्ष्यति । पश्चाद् मार्गयद्भिरपि न

लप्स्यते ।

[भा.१६१६] गुरुआ पुच्छपलायणपासुत्तमिगेसु अमुगदेसंमि ।
मग्गणवसभादिट्ठे भणंति मुत्तामो सेसस्स ।।

वृ- रात्रौ मृगेष्वगीतार्थेषु बालशैक्ष्यकादिषु प्रसुप्तेषु गुरुमाचार्यमापृच्छ्य अमुकं देशं गच्छामीति पलायते । प्रभाते च वृषभा ब्रुवते नष्टः स पिशाचो न दृश्यते इति मार्गयित्वा तस्मिन्नदृष्टे वसतावागत्य भणन्ति । नष्टः पिशाचो च क्वापि दृष्ट इति मुक्ताः स्म च्छुप्ता वयं शेषस्य तद्वेपणाद्यायासस्य; तेन च परदेशं गच्छता यानि स्थानानि परिहर्तव्यानि, तान्यभिधित्सुराह-

[भा.१६१७] विहरण वायण खमण वेयावच्चे गिहत्थ धम्मकहा ।
वज्जेज्ज समोसरणं पडिवयमाणो हियट्ठिओ ।।

वृ- हितार्थिकः प्रवचनविराधनाया आत्मन उड्डाहस्य च संरक्षणपरायणो यत्र विहरणेति साधुत्वेन विहृतवान् यत्र वाचना दत्ता, यत्र च क्षपकत्वमकार्षीदातापना वा कृता येषु च गच्छेषु वैयावृत्यं कृतं ते यत्र विहरन्ति यत्र च गृहस्थत्वेन । स्थितवान् यत्र वा धर्मकथाप्रबन्धेनानेकशः कृत यत्र वा रथयात्रा-दिनिमित्तमनेकेषामाचार्याणां समवसरणं मेलक एतानि स्थानानि प्रतिपन्न प्रतिसेवितुकामो वर्जयेत् ।

[भा.१६१८] गंतूण अन्नदेसं वज्जित्ता पुव्व वण्णिए देसे ।
लिंगविवेकं काउं स सड्ढि किड्डी पणवित्ताणं ।।

वृ- गत्वा अन्यदेशं परदेशं वर्जयित्वा पूर्ववर्णितान् अनन्तरगाथोपात्तान् देशान् लिङ्गविवेकं कृत्वा आत्मीयमाचारभाण्डं समस्तमपि क्वचिन्निक्षिप्यान्यलिङ्गं गृहलिङ्गं वा गृहीत्वा [illegible] अविरत-सम्यग्दृष्टिका यथा भद्रिका वा प्रज्ञाप्य संभोगोचितरीत्या बोधयित्वा किड्डीति कृष्यते संभोगाय: प्रतिरिक्ते स्थाने नीयते । तदभावे विध्यन्तरमाह-

[भा.१६१९] पणपनगादि पदिसु किंचि अदेंतो उ अहव अदसादी ।
अपया एत्थ गुरुगा बाहिं तु चउगुरुनिसेगो ।।

[भा.१६२०] सपया अंतामूलं छेदो पुन होइ बाहिरनिसेगे ।
अनुपुव्विं पडिसेवइ वज्जंतो सदेसमादीनि ।।

वृ- पञ्च कपर्दादयः पण्यं यस्या एकवारप्रतिसेवने सा पञ्चपण्यिका । आदिशब्दात् दशपण्य-कादिपरिग्रहस्तासु कृष्टासु प्रतिरिक्त स्थानं नीतासु प्रतिसेवनां वा करोति । कथंभूतः सन्नित्याह- किञ्चित् अददान एतच्चाविरतसम्यग्दृष्टिकाया यथा भद्रिकाया वा विषये द्रष्टव्यम् । सा हि लज्जातो न किञ्चिदपि याचते । अथ पञ्चकपण्यिकादिभाटीं विना नेच्छति प्रतिसेवनां तत आह- अथवा भाटीं विना निच्छायां अदसादीनि वस्त्राणि प्रयच्छति प्रथमतोऽदशानि ददाति तान्यनिच्छन्त्या योग्यान्यपि तस्या दीयन्ते । सा च प्रतिसेवितुमिष्यमाणा द्विधा संभवति- अप्रजा सप्रजा च । अनपत्या सापत्या चेत्यर्थः । तत्राप्रजाया ग्रामस्यान्तर्यदि शुक्रनिषेकं करोति ततः प्रत्यागतस्य प्रायश्चित्तं षट् गुरु । अथ बहिस्तर्हि ततश्चतुर्गुरु । अथ सप्रजाया ग्रामस्यान्तः करोति ततो मूलमथ बहिस्तर्हि च्छेदः । तथानुपूर्व्या क्रमेण प्रथमतो भाटीं विना तदभावे भाट्यपीत्यर्थः । अथवा प्रथमतो बहिस्तदसंभवेऽन्तरपि प्रतिसेवने वर्जयन् सदेशादिकाः समानदेशशिष्यिण्यादिका ।

[भा.१६२१] फासुपिंडोयारेणं न य अभिक्खनिसेवि जाव छम्मासा ।
चउगुरु छम्मासाणं परतो मूलं मुणेयव्वं ।।

वृ- स च तत्र तथा तिष्ठन् प्रासुकप्रत्ययवतारेण तिष्ठति यथाशक्ति अशनादिकं स्नानादिकं च(चा) प्रासुकं वर्जयतीत्यर्थः । न च अभीक्ष्णनिषेवणमभीक्ष्णप्रतिसेवनं करोति । स च तथा प्रतिसेवमानो

यावत् षण्मासास्तावद्यदि तिष्ठति । ततः प्रत्यागतस्य षण्मासेभ्य आरतो वा प्रतिनिवृत्तस्य प्रायश्चित्तं चतुर्गुरु षण्णां मासानां परतः प्रतिनिवृत्तस्य मूलं ज्ञातव्यम् ।

**[भा.१६२२]** आगंतुं अन्नगणे सोहिं काऊण तत्थ ववहरिता ।
सगणागणमुब्भाये दरिसीती ताहे अप्पाणं ।।

वृ- एवं मोहचिकित्सां कृत्वा तत्पूर्वनिक्षिप्तमाचारभाण्डमादाय अन्यगणे आगत्य प्रविश्य शोधिं कृत्वा आलोचनां प्रदाय यत्प्रायश्चित्तं लभते तत्रैव वहति । ततो व्यूढप्रायश्चित्तः सन् उद्भ्रामकभिक्षाचरप्रचुरग्रामे ये आचार्यसम्बन्धिनः साधवो भिक्षाचर्यामागतास्तेषामात्मानमुपदर्शयति तं दृष्ट्वा यः प्ररुपयति, तस्य प्रायश्चित्तं चतुर्गुरुकाः, । किन्तु तैः गत्वा सूरिभ्यः कथनीयं, दृष्टोऽस्माभिः स पूर्वनष्ट इति । यच्च तेनोक्त तदपि कथनीयं । किं तु तेनोक्तमित्यत आह-

**[भा.१६२३]** बेंतिय लज्जाए-अहं न तरामि गंतु गुरुसमीवं तु ।
न य तत्थजं कयं, मे निग्गमनं चेव सुमरामि ।।

वृ- आत्मनि साधुनामुपदर्शिते स तान् साधून् प्रति ब्रूते-लज्जया अहं गुरुसमीपं गंतुं न शक्नोमि न च तत्र वसतौ चन्मया कृतं तत्स्मरामि केवलं निर्गमनमेव स्मरामि ।

**[भा.१६२४]** तेहिं निवेइए गुरुणो गीया गंतूण आनयंति तयं ।
मिगपुरतो उ खरंटण वसभनिवारंति मा भूओ ।।

वृ- एवं तैः साधुभिर्गुरौ निवेदिते गुर्वादेशेन गीता गीतार्था वृषभा इत्यर्थः । गत्वा तकं साधुमानयन्ति आनीतस्य च तस्य तेषां मृगाणां बालशैक्षिकाणां पुरतः कैतवेन गुरुणा खरण्टणा कर्तव्या । यथा क्रियायां क्रियमाणायां किमर्थं नष्टो यदि कथमप्यनर्थे अपतिष्यत् ततः कुगतावगमिष्यदिति । एवं गुरुणा कैतवेन खरण्टनायां कृतायां वृषभास्तं निवारयन्ति । वत्स मा भूय एवं कार्षीरिति । पृच्छन्ति च मृगपुरतः तां वार्तां कथमित्याह-

**[भा.१६२५]** कत्थगतो अनपुच्छा साहू किलिट्ठा तुमं वि मग्गंतो ।
मानं अज्जो वंदह तिन्नि उ वरिसाणि दंडो से ।।

वृ- त्वमनापृच्छ्य कुत्र गतः क्लिष्टाः खलु त्वां विमार्गयन्तः साधवः स प्राह-न स्मरामि भगवन् कथमहं नष्टः कुत्र वागतः केवलं कर्मोपशमेन स्वस्थीभूतो जानाति स्म यथाऽहं विनिर्गत इति । ततो युष्मत्पादान्तिकमागतः । तत आचार्यैः साधवो वक्तव्याः मा आर्या अमुं साधुं त्रीन् संवत्सरान् वन्दध्वमेषोऽस्य साधोर्दंडः ।

**[भा.१६२६]** तिण्हं समानपुरतो होयरिहो पुनो निव्वियारो उ ।
जावज्जीवमनरिहा इयमन्ने जे उ गणादीणं ।।

वृ- तिसृणां समानां संवत्सराणां पुरतः पुनर्यदि निर्विकारस्ततो भवत्यर्हो गणादीनां गणावच्छेदकत्वादीनां पदानां शेषास्तु सूत्रोक्ता अनिक्षिप्तगणादयो नर्हाइमे अन्ये गणादीनां गणावच्छेदकत्वादिपदानां यावज्जीवमनर्हा तानेवाह-

**[भा.१६२७]** पढमो निक्खित्तगणो बितितो पुन होइ अकडजोगित्ति ।
ततितो जम्मसदेसो चउत्थो उ विहारभूमीओ ।।

**[भा.१६२८]** पंचमो निक्खित्तगणो कडजोगी जो भवे सदेसंमि ।
जइ सेवंती अकरणं पंचण्हवी बाहिरा हुंति ।।

वृ- प्रथमोऽनिक्षिप्तगणो द्वितीयः पुनर्भवत्यकृतयोगी यतनायोगमकृतवान् । तृतीयो जन्माधिकृत्य

स्वदेशेऽकृत्यसेवी चतुर्थो विहारभूमौ स्वविहारभूमावकार्यसेवी पंचमो निक्षिप्तगणः कृतयोगी कृतयत्नायोगोऽपि सन् स्वदेशे भवत्यकार्यसेवी । तथाचाह-जइ सेवंतीत्यादि । पञ्चाप्यकरणमकरणीयं मैथुनमित्यर्थः सेवन्ते पञ्चापि पञ्चानामपि आचार्यादिपदानां बाह्या भवंति एतदेवाह--

**[भा.१६२९]** आयरियमाइआणं, पंचण्हं जज्जिय अनरिहाऊ ।
चउगुरुसत्तरतादि, जाव आरोवणा धरेंते ।।

**वृ-** पंचापि पदानां- यावज्जीवमनर्हाः चउगुरुय इत्यादि । यदि पुनस्तेषामनर्हाणामपि योगणं निसृजति तेषामन्यतमो वा यो धारयति तदा तस्योभयस्यापि सप्तरात्रं तस्मिन् गणं धारयति आरोपणं प्रायश्चित्तं चत्वारो गुरुकाः, । आदिशब्दादन्यसप्तदिनातिक्रमे षट्गुरु । सप्तरात्रियाः य आरोपणधरेते आचार्यादीनां पञ्चानामपि पदानां यावञ्चावलघुकस्ततोऽन्यसप्तदिवसातिक्रमे षट्गुरुकच्छेद एतावता कालेन यदि पर्यायो न च्छिन्नस्ततस्त्रिचत्वारिंशत्तमे गणं निसृष्टुर्द्धारयतश्च प्रायश्चित्तं चतुश्चत्वारिंशत्तमे दिवसेऽनवस्थाप्यं पञ्चचत्वारिंशत्तमे पाराञ्चितमेव तदारोपणमिति ।

**[भा.१६३०]** अहव अक्खित्तगणाइएसु चउसुंपि सोलसउ भंगो ।
चरमे सुत्तानिवातो जावज्जिय अनरिहा सेसा ।।

**वृ-** अथवेति प्रकारान्तरे अनिक्षिप्तगणोऽकृतयोगी जन्मतः स्वदेशेऽकृतसेवी विहारभूमावकृत्यकारीत्येवंरूपेषु चतुर्षु पदेषु षोडशभङ्गस्ते च प्रस्तारलोऽमी अमीषां षोडशानां भङ्गानां मध्ये यश्चरमो भङ्ग स्तत्र सूत्रनिपातः । भिक्षुसूत्रस्य निक्षिप्तसूत्रद्वयस्य चावकाशः शेषाः पुनः पञ्चदशस्वपि भङ्गेषु वर्तमाना यावज्जीवमनर्हाः ।

**मू. (८८)** *भिक्खू बहुस्सुए बब्भागमे बहुस्सो बहु आगाढागाढेसु कारणेसु माई मुसावाई असुइ पावजीवी जावज्जीवाए- (जाव) धारेत्तएवा ।*

**मू. (८९)** *गणावच्छेइए (जाव) धारेत्तए वा।*

**मू. (९०)** *आयरिय उवज्जाए जाव धारेत्तए वा।*

**मू. (९१)** *बहवे भिक्खुणो बहुस्सुया बब्भागमा बहुसो (जाव) नवरं तेसिं तस्स धारेत्तए।*

**मू. (९२)** *बहवे गणावच्छेइया (जाव) धारेत्तए वा।*

**मू. (९३)** *बहवे आयरिय उवज्झाया (जाव) धारेत्त वा।*

**मू. (९४)** *बहवे भिक्खुणो बहवे गणावच्छेइया बहवे आयरिय उवज्झाया (जाव) धारेत्तए वा ।*

**वृ-** सूत्रसप्तकं अथास्य सूत्रस्य पूर्वसूत्रैः सह सम्बन्धमाह —

**[भा.१६३१]** वय अतियारे पगते अयमवि अन्नो उ तस्स अइयारो ।
इतिरियमत्तं वा वृत्तं इदमावकहियं तु ।।

**वृ-** पूर्वसूत्रेषु व्रतस्य । मैथुनविरत्यादेरतिचारः प्रकृतोऽधिकृतोऽयमपि चान्यस्तस्य व्रतस्यातिचारः इति तत्प्रतिपादनार्थमिदं सूत्रसप्तकं अथवा पूर्वसूत्रेषु त्रीणि संवत्सराणि यावदाचार्यत्वादीनि न कल्पन्ते इति वचनादित्वरमपात्रमुक्तमिदं पुनः सूत्रसप्तकेनाभिधीयमानमपात्रं यावत्कथितं बहुशो यावज्जीवमाचार्यत्वादीनि कल्पन्त इति वक्ष्यमाणात् ।

**[भा.१६३२]** अहवा एगहिगारो उद्देसो तइओ उ ववहारो ।
केरिसित्तो आयरिओ ठविज्जइ केरिसो नेति ।।

**वृ-** अथवेति सम्बन्धस्य प्रकारान्तरोपदर्शने व्यवहारे तृतीयोद्देशकाधिकारे यथा कीदृशः आचार्यः स्थाप्यते, । कीदृशो न तत्र यादृशः स्थाप्यो यादृशश्च न स्थाप्यः तादृश उक्तो मयन्यो न स्थाप्यत इति प्रतिपादनार्थमेष सूत्रसप्तकारंभः ।

**[भा. १६३३]** अहवादीवगमेयं जह पडिसिद्धो अभिक्खमाइओ ।
सागारिसेवि एवं अभिक्खओहावणकरीय ॥

**वृ-** अथवेति पूर्ववत् दीपकमेतत् सप्तसूत्रकं पूर्वसूत्रेष्वधिकार्योद्दीपनार्थमिदं सूत्रसप्तकमधिकमेवार्थमुपदर्शयति । यथानेन सूत्रसप्तकेन अभीक्ष्णं मायी बहुशो मायावी यावज्जीवमाचार्यत्वादिषु, पदेषु प्रतिषिद्धस्तथा मैथुनसूत्रपञ्चकमध्ये यो भिक्षुसूत्रे निक्षेपणसूत्रद्वये च सागारिकसेवी मैथुनप्रतिसेवी संवत्सरत्रयातिक्रमे योग्य उक्तः सोऽप्यभीक्ष्णं सागारिकसेवी सन् यावज्जीवं प्रतिषिद्धो द्रष्टव्यः । तस्यापि यावज्जीवमाचार्यत्वादीनि न कल्पन्ते इति भावस्तथा अवधावनसूत्रेयो भिक्षुसूत्रे निक्षेपणसूत्रद्वये वर्षत्रयातिक्रमेण योग्य उक्तः सोऽपि यदि अभीक्ष्णमवधावनकारी भवति ततस्तस्यापि यावज्जीवमाचार्यत्वादिपदप्रतिषेधः । अनेन सम्बन्धेनायातस्यास्य व्याख्या- भिक्षुर्बहुश्रुतं सूत्रं यस्यासौ बहुश्रुतस्तथा बहुरागमोऽर्थपरिज्ञानं यस्य स बह्वागमः । तथा कुलप्राप्तं गणप्राप्तं संघप्राप्तं यत्सचित्तादिकं व्यवहारेण च्छेत्तव्यं कार्यं तथा आगाढागाढं कारणं तेषु आगाढागाढेषु कारणेषु बहुप्रभूतेषु बहुशोऽनेकप्रकारं मायी मायावान् मृषावादी अशुचिराहारधर्मव्यवहारी पापजीवी कौष्टलाद्याजीवी तस्य यावज्जीवं तत्प्रत्ययं मायित्वमृषावादित्वादिप्रत्ययं न कल्पते । आचार्यत्वं वा यावत् गणावच्छेदित्वं वा उद्देष्टुं वाऽनुज्ञातुं स्वयं वा धारयितुं एवं प्रथमसूत्रसंक्षेपार्थः । एवं गणावच्छेदसूत्रं आचार्योपाध्यायसूत्रं च भावनीयं । पाठोऽपि सुप्रतीतः । यथा च त्रीणि सूत्राणि एकत्वेनोक्तानि इत्येवं त्रीणि सूत्राणि बहुत्वे वक्तव्यानि सप्तमं बहुभिक्षुबहुगणावच्छेदि बह्वाचार्यविषयं तदपि तथैव । अत्र भाष्यकृदाह-

**[भा. १६३४]** एगत्त बहुत्ताणं सव्वेसिं तेसिमेगजातीणं ।
सुत्ताणं पिंडेणं वोच्छं अत्थं समासेणं ॥

**वृ-** एकत्वबहुत्वादि सम्बन्धिनां सर्वेषामेतेषां सूत्राणामेकजातीयानामेकप्रकाराणां पिण्डेनाप्युक्तौ वैविक्त्येन प्रतीतः । तत्र प्रथमत एकत्वबहुत्वविषया वाक्षेपपरिहारावाह-

**[भा. १६३५]** एगत्तियसुत्ते संभणिएसुं किं पुणो बहुग्गहणं ।
चोयग सुणसू इणमो जं कारणमो बहुग्गहणं ॥

**वृ-** एकत्वेनैकवचनेन निवृत्तान्यैकत्विकानि तेष्वेकत्विकेषु किं पुनर्बहुग्रहणं । बहुत्वविशिष्टसूत्रचतुष्टयोपादानं सूरिराह- यत्कारणं येन कारणेन मो इति पादपूरणे बहुग्रहणं बहुष्वपि विशिष्टसूत्रोपादानं तत्कारणमिदं हे चोदक शृणु । तदेवाह-

**[भा. १६३६]** लोगंमि सयमवज्झं होइ अदंडं सहस्समा एवं ।
होहिंति उत्तरम्मि वि उत्ताउकया बहुकएवि ॥

**वृ-** लोके बहुभिरकृत्ये सेवितेऽयं न्यायः शतमवध्यं सहस्त्रमदण्ड्यं ततएवमौत्तरिकेऽपि लोकोत्तरिकेऽपि व्यवहारे प्रसङ्गोमा भूत् इति तत्प्रतिषेधार्थं चत्वारि सूत्राणि बहुकेऽपि बहुवचने कृतानि । साम्प्रतमागाढागाढकारणादिनि पदानि व्यचिख्यासुराह-

**[भा. १६३७]** कुलगणसंधपत्तं सचित्तादीउ कारणागाढं ।
छिद्दाणि निरिक्खंता मायी तेनेव असुती ओ ॥

**वृ-** सचित्तनिमित्तो अचित्तनिमित्तो वा यो व्यवहारः कुले क्षिप्तो यथेदं सचित्तादिकं विवादास्पदीभूतं कुलेन च्छेत्तव्यमिति तत्कुलप्राप्तमेवं गणप्राप्तं सङ्घप्राप्तं भावनीयं । यत्र यत्सचित्तादिकं विवादास्पदीभूतं व्यवहारेण च्छेद्यं तथा कुलप्राप्तं वा गणप्राप्तं वा तत्कारणागाढं कारणं तथा कथमहमेनं व्यवहारमाहारादुपग्रहे वर्तमानं तोज्झितं च्छिद्यामिति । बुद्ध्या परेषां छिद्राणि निरीक्ष्यमाणो मायी तेनैव मायित्वेनैव सोऽशुचिः तमेवाशुचिं द्रव्यभावभेदतः प्ररूपयति-

**[भा.१६३८]** दव्वे भावे असुती भावे आहारवंदनादीहिं ।
कप्पं कुणइ अकप्पं विविहेहिं य रागदोसेहिं ।।

**वृ-** अशुचिर्द्विधा द्रव्यतो भावतश्च । तत्र योऽशुचिना लिप्तगात्रो यो वा पुरीषमुत्सृज्य पुतौ न निर्लेपयति सद्रव्यतोऽशुचिः, भावे भावतः पुनरशुचिराहारवंदनादिभिर्विविधैर्वा रागद्वेषैः कल्प्यमकल्प्यं करोति । किमुक्तं भवति ? आहारोपधिशय्यादिनिमित्तं वन्दननीचैर्वृत्यादिना वा तोषितो यदि वा एष मम स्वगच्छसम्बन्धी स्वकुलसम्बन्धी स्वगणसम्बन्धी तैरागतोऽथवा न मामेष वन्दते विरूपं वा भाषितवानित्यादि द्वेषतोऽयं श्रुतोपदेशेनाभाव्यमनाभाव्यं करोति, । अनभाव्यमप्यभाव्यं सोऽव्यवहारी भावतोऽशुचिः । एतदेव सुव्यक्तमाह—

**[भा.१६३९]** दव्वे भावे असुती दव्वंमि विट्ठमादिलित्तो उ ।
पाणतिवायादीहिओ भावम्मि उ होइ असुईओ ।।

**वृ-** अशुचिर्द्विधा द्रव्ये भावे च । तत्र द्रव्ये विष्टादिना लिप्त आदिशब्दान्मूत्रश्लेष्मादिपरिग्रहः । भावे प्राणतिपातादिर्भवत्यशुचिः ।

**[भा.१६४०]** तप्पत्तियमेतेसिं आयरियादी न देंति जाजीवं ।
के पुन भिक्खु इमे अबहुस्सुयमादिनो हुंति ।।

**वृ-** तत्प्रत्ययं मायाविवादिप्रत्ययं येषां भिक्षुप्रभृतीनां यावज्जीवमाचार्यादीनि भावप्रधानोऽयं निर्देशः । आचार्यत्वादीनि न ददाति के पुनस्ते आह भिक्षव उपलक्षणमेतत् गणावच्छेदकाचार्योपाध्यायश्च सूत्रोक्ता न केवलमेते किन्त्विमे च बहुश्रुतादयो भवन्त्याचार्यादिपदानामनर्हास्तानेव निर्युक्ति कृदाह—

**[भा.१६४१]** अबहुस्सुते य ओमे पडिसेवते अयते अप्पचिंते य ।
निरवेक्खपमत्ते माई अनरिहे जुंगिए चेव ।।

**वृ-** अबहुश्रुतोऽवमः प्रतिसेवको ऽयतः आत्मचिन्तकः निरपेक्षः प्रमत्तो मायी अनर्हो जुङ्गिकश्च । एते सूरित्वादिपदानामनर्हाः । साम्प्रतमेनामेव व्याचिख्यासुराह—

**[भा.१६४२]** अबहुस्सुतो पकप्पो अणहीओ मो तिवरिसारेणं ।
निक्कारणोवि भिक्खु कारण पडिसेविते जतो उ ।।

**[भा.१६४३]** अब्भुज्जयनिच्छओ अप्पवि नो निरवेक्खो बालमादीसु ।
अन्नयर पमायजुत्तो असच्चरुची होइमाईओ ।।

**[भा.१६४४]** अवलक्खणा अणरिहा अच्चाबाहादि य जे वुत्ता ।
चउरो य जुंगिया खलु अरहंति य भिक्खुणो एते ।।

**वृ-** अबहुश्रुतो नाम येनाचारप्रकल्पो निशीथाध्ययननामकः सूत्रतो अर्थतश्च नाधीतः । अवमो नाम आरात्त्रिवर्षास्तो यस्य प्रव्रज्यापर्यायेण त्रीणि वर्षाणि नाद्यापि परिपूर्णानि भवन्तीत्यर्थः, । प्रतिसेवको नाम यो भिक्षुः निक्कारणे कारणाभावेऽपि पञ्चकादीनि प्रायश्चित्तस्थानानि प्रतिसेवते, आत्मचिन्तको योऽभ्युद्यतमरणं वा प्रतिपत्तुं निश्चितो निश्चितवान्, निरपेक्षो बालादिषु चिन्तारहितः, प्रमत्तः पञ्चानां प्रमादानामन्यतरेण प्रमादेन युक्तः, । असत्ये मृषाभाषणे असंयमे वा रुचिर्यस्यासावसत्यरुचिर्भवति मायी । किमुक्तं भवत्यभीक्ष्णं मायाप्रतिसेवनशीलो मायीति, अपलक्षणा येषामाचार्यलक्षणानि न विद्यन्ते ये च पूर्वमुक्ता अत्याबाधादय एते सर्वाऽनर्हाः जुङ्गिका जातिकर्मशिल्पशरीरभेदतश्चतुर्धा । एतेऽपि प्रागुक्ता एते सर्वेऽपि भिक्षवो अत्यन्तमाचार्यत्वादिपदानामनर्हाः यदि पुनर्बहुश्रुतो भवेत् । अवमोऽपि त्रिवर्षपर्यायोत्तीर्णः प्रतिसेवकोऽप्यप्रतिसेवको यतोऽप्ययतनातः प्रतिविरतो निरपेक्षः सापेक्षीभूतः प्रमत्तोऽप्यप्रमत्ततामुपगतस्तदा भवन्त्येतेऽप्याचार्यत्वादिपदानां योग्याः ।

सम्प्रति सप्तानामपि सूत्राणां संभवविषयमाह—

[भा.१६४५] अहवा जो आगाढं वंदनआहारमादिसंगाहितो ।
कप्पं कुणइ अकप्पं विविहेहिं य रागदोसेहिं ।।

[भा.१६४६] माई कुणइ अकज्जं को माई जो भवे मुसावाई ।
को पुन मुसावाई असुई पावसुयजीवी ।।

वृ- अथवेति सूत्रव्याख्याप्रकारान्तरोपदर्शने यो वन्दनादिभिः । वन्दनवैयावृत्यादिना आहारादिभिराहारोपधिशय्यादिभिरागाढमत्यर्थं संगृहीतः सन् विविधैश्च रागद्वेषैः प्रागुक्तस्वरूपैः कल्प्यमप्याभाव्यमप्यकल्प्यमनाभाव्यं करोति । सप्तानामपि सूत्राणां विषयः माई कुणइ इत्यादिकः । पुनरेवमकार्यं कल्प्यमप्यनाभाव्यमप्याभाव्यमित्यर्थः करोति । एवं शिष्यस्य प्रश्नमाशङ्क्य सूत्रकृदाह-मायी मायावान् को मायी तत आह-यो भवेत्मृषावादी कः पुनर्मृषावादी तत आह-अशुचिः कोऽशुचिः । सूत्रकृदाह-पापजीवी एतस्य व्याख्यानं पापश्रुतोपजीवी इत्यर्थः । कोण्टलादिशास्त्रोपजीवीत्यर्थः ।

[भा.१६४७] किह पुन कज्जमकज्जं करेज्ज आहारमादिसंगहितो ।
जह कम्मिवि नगरम्मी उप्पण्णं संघकज्जं तु ।।

वृ- कथं पुनराहारादिसंगृहीतः सन् कार्यमकार्यमुपलक्षणमेतत् अकार्यमपि कार्यं करोति । अत्र सूरि निदर्शनमाह-यथा कस्मिन्नगरे किमपि सङ्घकार्यमुत्पन्नं सचित्तादिनिमित्तं वास्तव्यसङ्घस्य व्यवहारो जात इत्यर्थः । स च वास्तव्यसंघेन छेत्तुं न शक्यते ।

[भा.१६४८] बहुसुयपरिवारो य आगतो तत्थ कोइ आयरितो ।
तेहिं य नागरगेहिं सोऽउ नियत्तो उ ववहारे ।।

वृ- अन्यदा कोऽप्याचार्यो बहुश्रुतो बहुपरिवारस्तत्र नगरे समागतः । स च तैर्नागरकैर्नगरवास्तव्येन सङ्घेनेत्यर्थः । नियुक्तो व्यवहारे बहुश्रुतस्त्वमत एतं व्यवहारं छिन्द्धि ।

[भा.१६४९] नाएण छिन्ने ववहारे कुलगणसंघेण कीरइ पमाणं ।
तो सेविउं पवत्ता आहारादीहिं कज्जिया ।।

वृ- एवमुक्ते तेन न्यायेन श्रुतोपदेशेन व्यवहारश्छिन्नस्ततः कुलगणसङ्घेन सप्रमाणं क्रियते । एष बहुश्रुतो न च श्रुतोत्तीर्णं किमपि वदति, तस्माद्यदेष भाषते तत्प्रमाणमिति । एवं च प्रमाणीकृते तस्मिन् श्रावकसिद्धपुत्रादयः कार्यिकादयस्तत्कार्यार्थिनः सन्तस्तमाहारादिभिः सेवितुंप्रवृत्ताः सेवनान्याहारादीनि दीयमानानि गृह्णाति ।

[भा.१६५०] सो छिंदिउं पवत्तो निस्साए तत्थ सो उ ववहारं ।
पच्चत्थीहिं नायं जहिं छिंदइ एस निस्साए ।।

वृ- ततः आहारादिग्रहणानन्तरं स तत्र नगरे व्यवहारं निश्रया पक्षपातेन छेत्तुं प्रवृत्तः । ततो ये आहारादिकं न दत्तवन्तस्ते तस्य प्रत्यर्थिनस्तैः प्रत्यर्थिभिर्ज्ञातं यथा एष व्यवहारं निश्रया छिनत्ति ।

[भा.१६५१] कोन्नु हु हवेज्ज अन्नो जो नाएणं नएज्ज ववहारं ।
अह अन्नय समवाओ घुठो वा आगो य तत्थ विदू ।।

वृ- ततस्ते प्रत्यर्थिनश्चिन्तयन्ति को नु हु निश्चितं भवेदन्यो गीतार्थो यो न्यायेन व्यवहारं नयेत् । अथान्यदा सचित्तादिव्यवहारच्छेदार्थं सङ्घसमवायो घुष्टो घोषितः सङ्घसमवायघोषणं श्रुत्वा तथा सङ्घसमवायविदः (दू) विद्वान् सूत्रार्थतदुभयकुशलोऽन्यः प्राघूर्णकः कोऽपि समागतः । इह समवायघोषणामाकर्ण्य धूलीधूसरैरपि पादैरवश्यमागन्तव्यमन्यथा प्रायश्चित्तमित्येतदधुना प्रतिपादयति—

[भा.१६५२] घुट्ठंमि संघकज्जे धूलीजंघो वि ज्जो न एज्जाहि ।
कुलगणसंघसमवाए लगति गुरुगो चउम्मासे ।।

[भा.१६५३] न कहिंति अकज्जं तं पावइ सइ बाले आगच्छंतो ।
अन्नाई ताव तो हानमादि जं कुज्ज तं पावे ।।

वृ- घुष्टे घोषिते सङ्घकार्ये संघसमवाये धूलीजंघोऽपि आस्तामन्य इत्यपि शब्दार्थः । धूल्या धूसरे जङ्घे यस्य स धूलीजंघः शाकपार्थिवादिदर्शनात्मध्यपदलोपी समासः । संघसमवायघोषणामाकर्ण्य प्राघूर्णकेनापि पादलग्नायामपि धूलावप्रमत्ततया त्वरितमवश्यमागन्तव्यमिति ज्ञापनार्थं धूलीजंघोऽपीत्युपादानं सति बले यो न आगच्छेत् कुलसमवाये गणसमवाए सङ्घसमवाए वा गुरुके चतुर्मासे लगति तस्य गुरुकाश्चत्वारो मासाः प्रायश्चित्तमिति भावः, । न केवलमेतत् किन्त्वन्यदपि । तथा चाह-जं कार्हित्यादि सति बले आगच्छन् व्यवहारोच्छेदकार्यकरणतो वान्यैरन्यथाच्छिन्ने व्यवहारे यदकार्यं ते व्यवहारार्थिनः करिष्यन्ति तत् प्राप्नोति तन्निमित्तमपि प्रायश्चित्तं तस्यापद्यते इत्यर्थः । अन्यदपि चापमानवशतो यदवधावनादि कुर्यात्तदपि प्राप्नोति ।

[भा.१६५४] तम्हाउ संघसद्दे घुट्ठे गंतव्व धूलि जंघेण ।
धूलीजंघनिमित्तं ववहारो उट्ठितो सम्मं ।।

वृ- यत एवमनागमने दोषास्तस्मात् सङ्घशब्दे घुष्टे घोषिते धूलीजंघेनाप्यवश्यं सति बले गन्तव्यं । यतः कदाचित् धूलीजंघनिमित्तं व्यवहारः सम्यगुत्थितो भवेत् । यथा प्राघूर्णको गीतार्थो धूलीजङ्घः समागतः सन् यदि भणिष्यति तत्प्रमाणमिति ।

[भा.१६५५] तेन य सुयं जहेसो तेन घयादीहिं संगहीतो उ ।
कज्जाइ नेइवितहंमाई पावोवजीवो (वी) उ ।।

वृ- तेन च धूलीजङ्घेनागच्छतैव कथकस्यापि पार्श्वे श्रुतं यथैष वास्तव्यो व्यवहारच्छेत्ता तैलघृतादिभिः संगृहीतः सन् मायी अभीक्ष्णं मायाप्रतिसेवी पापोपजीवी कोण्टलाद्युपजीवी वितथमुत्सूत्रं कार्याणि नयति ।

[भा.१६५६] सो आगतो उ संतो वितहं दट्ठूण तत्थ ववहारं ।
समएण निवारेई कीस इमं कीरइ अकज्जं ।।

वृ- एवं श्रुत्वा समागतः, सन् तूष्णीकस्तावदास्ते यावत्सूत्रेण निर्दिश्यमानं व्यवहारं पश्यति तं च तथाभूतं वितथं व्यवहारं दृष्ट्वा समयेन सिद्धान्तेन निवारयति, । यदकस्मादिदमकार्यं क्रियते, न केवलमेवं निवारयति किन्त्वेतदपि वक्ति, ।

[भा.१६५७] निद्धमहुरं निवायं, वीणियमवि जाणएसु जंपंतो ।
सचित्तखेत्तमीसे अठधर निहोडणा (णं) विहिणा ।।

वृ- सचित्तनिमित्तव्यवहारे स्वेत्तत्ति क्षेत्रनिमित्ते व्यवहारे य दुर्व्यवहारिणस्तेषां प्रतिदिवसनिमित्तं अविजाणएसुत्ति येऽपि च साधवो न जानन्ति । यथा घृतादि अनुवृत्ता वितथमेते व्यवहरन्ति तेष्वविजानत्सु विज्ञाननिमित्तमेवं जल्पति । अहो स्निग्धो व्यवहारः । किमुक्तं भवति ? तैलघृतादिसंगृहीत एवमेते अन्यथा व्यवहरन्तीति । अथ गुडशर्करादिभिः गृहीता वितथव्यवहारिणः ततो जल्पति अहो मधुरो व्यवहारः, । यदि पुनरुपाश्रयो निर्वातो लब्धः शीतप्रावरणानि वेति वितथं व्यवहरन्ति, । तत आह निर्वातो व्यवहारः । अथ कृतिकर्मविनयादिभिः संगृहीतास्ततो ब्रूते । अहो विनीतो व्यवहारः । एवं स्निग्धं मधुरं निवातं व्यवहारं जल्पन् सोऽर्थधरस्तेषां दुर्व्यवहारिणां विधिना सूत्रोपदेशन निहोडणं निवारणं करोति ।

**[भा.१६५८]** एवं चेव य सुत्तं उग्घाएउं दिसं अवहरंति ।
पायच्छित्त आउट्टे दाउं इयरे उ जा जीवं ।।

**वृ-** एवं निर्लोडणं कृत्वा एतदेवाधिकृतं सूत्रं सूत्रमूत्रात्मकमुद्घार्य दिशमाचार्यत्वादिकमपहरन्ति उद्दालयन्ति, अथ सोऽल्पापराधः प्रत्यावृत्तश्च तदा प्रायश्चित्तं तस्य दिक् पुनर्दीयते । इयरे उ इति सप्तमी षष्ठ्यर्थे इतरस्य त्वनावृत्तस्य आवृत्तस्य वा बहुदोषस्य यावज्जीवमाचार्यत्वादिकं न दीयते ।

**[भा.१६५९]** एवं ताव बहूसु मज्झत्थेसु तु होउ ववहरंति ।
अह होज्ज बलो इयरो, ठावेइ उ नत्थिमं वयणं ।।

**वृ-** एवमनन्तरोदितेन प्रकारेण तावद्बहुषु मध्यस्थेषु सत्सु सोऽर्थधरो व्यवहरति । अथ भवेयुरितरे दुर्व्यवहारिणो बहुत्वेन बलीयांसः । ततस्तत्रान्यथा व्यवहारच्छेदे क्रियमाणे इदं वक्ष्यमाणं ब्रूते तदेवाह -

**[भा.१६६०]** रागेण व दोसेण व पक्खग्गहणेण एक्कमेक्कस्स ।
कज्जंमि कीरमाणे, किं अत्थति संघमज्झत्था ।।

**वृ-** रागेण वा एकस्य पक्षस्य ग्रहणेन द्वेषेण एकस्य पक्षाग्रहणेन द्वेषेणा वा कार्ये क्रियमाणे वितथे व्यवहारे च्छिद्यमाने किं संघो मध्यस्थस्तिष्ठति ।

**[भा.१६६१]** रागेण व दोसेण व पक्खग्गहणेण एक्कमेक्कस्स,
कज्जंमि कीरमाणे अण्णो वि भणउ ता किंचि ।।

**वृ-** रागेण च एकस्य पक्षग्रहणेन द्वेषेण वा एकस्य पक्षाग्रहणेन कार्ये क्रियमाणे ततस्तस्मात् किञ्चिदन्योऽपि भणतु ।

**[भा.१६६२]** बलवंतो सव्वं वा भणाति, अण्णोवि लभति को एत्थ ।
वोत्तुं जुत्तमजुत्तं उताहु नवि लब्भते अण्णस्स ।।

**वृ-** बलवत्सु सर्वेषु वा दुर्व्यवहारिष्वेवं वक्ष्यमाणरीत्या भणति तामेवाह, - अत्र अस्मिन् सङ्घसमवाये युक्तमयुक्तं वा वक्तुमन्योऽपि कश्चिल्लभते उताहोऽन्यस्य वक्तुं न लभ्यते अन्यो न लभते इत्यर्थः ।

**[भा.१६६३]** जति बेंति लब्भते ऊवि हेतुमं जंतु जाणसी जुत्तं ।
तो अनुमाणेऊणं बिंति तहिं नायतो सो उ ।।

**वृ-** यदि ब्रुवते लभ्यतेऽन्येनापि वक्तुमतस्त्वमपि यज्जानासि वक्तुं तद्ब्रूहि । तत एवमुक्ते तां पर्षदमनुमान्य सम्यक् क्षमयित्वा तत्र न्यायतः स ब्रूते कथमनुमान्येत्यनुमानप्रकारमाह—

**[भा.१६६४]** संघो महानुभागो अहं च वेदेसिओ इह भयवं ।
संघसमितिं न जाणे तं भे सव्वं खमावेमि ।।

**वृ-** सङ्घो महानुभागोऽचिन्त्यशक्तिरस्येति महानुभावः अहं च वैदेशिको विदेशवर्ती इह अस्मिन् स्थाने भगवतीं सङ्घसमितिं सङ्घमर्यादां न जाने ततो युक्तमयुक्तं वा वक्तुं सर्वं भे भवतः क्षमयामि । यतः—

**[भा.१६६५]** देसे देसे ठवणा अनन्ना अनन्न होइ समितीणं ।
गीयत्थो होइण अदेसिओ तं न जाणामि ।।

**वृ-** समितीनां सङ्घमर्यादानां स्थापना गीतार्थैराचीर्णा अत्र जगति देशे देशेऽन्यान्या भवन्ति । ततोऽहमदेशिक इहत्यां सङ्घमर्यादां स्थापनां न जानामि, ततः क्षमयतः श्रुतोपदेशेनाहमपि किञ्चिद्वक्ष्ये -

**[भा.१६६६]** - अनुमाने उ संघं परिसग्गहणं करेइ तो पच्छा ।
किह पुन गेण्हइ पुरिसं इमेण वाएण सो कुसलो ।।

**वृ-** एवं सङ्घमनुमान्य सम्यक् क्षमयित्वा ततः पश्चात्पर्षद्ग्रहणं करोति, । शिष्यः प्राह कथं पुनः

पर्षदं गृह्णाति । सुग्गिह- कुशला दक्षो ऽनेनोपायेन गृह्णाति समीचीनासमीचीनां वा जानाति तमेवोपायमाह—

[भा.१६६७] परिसाववहारिया मज्झत्था रागदोसनीहूया (रा) ।
जह होंति दोविपक्खा ववहरिउं तो सुहं होइ ।।

वृ- पर्षन्नाम व्यवहार्यौ द्वावपि पक्षौ तौ ब्रूते-यदि द्वावपि पक्षौ मध्यस्थौ भवतो मध्यस्थता रागद्वेषाकरणतो भवति । तत आह-निभृतौ निर्व्यापारौ रागद्वेषौ ययोस्तौ रागद्वेषनिभृतौ क्लान्तस्य पाक्षिकः परनिपातः सुखादिदर्शनात् । ततः सुखं व्यवहरितुं व्यवहरणं भवति । एवं पर्षद्ग्रहणं कृत्वा ये दुर्व्यवहारिणस्तान्निक्षिपन्निदमाह—

[भा.१६६८] उसन्नचरणकरणे सच्चव्ववहारया दुसद्दहिया ।
चरणकरणं जहंतो सच्चववहारयं जहइ ।।

वृ- अवसन्ने शिथिलतां गते चरणकरणे व्रतश्रमणधर्मादिपिण्डविशोधिसमित्यादिरूपे यस्य सोऽवसन्नचरणकरणः तस्मिन् सत्यव्यवहारता यथावस्थितव्यवहारकारिता दुःश्रद्धेया यतश्चरणकरणं जहन् त्यजन् सत्यव्यवहारतामपि जहाति—

[भा.१६६९] जइया णेणं चत्तं अप्पाणतो नाणदंसणचरित्तं ।
तइया तस्स परेसुं अनुकंपा नत्थि जीवेसु ।।

वृ- यदानेनात्मनः सम्बन्धिज्ञानदर्शनचारित्रं त्यक्तं तदा तस्य परेषु जीवेष्वनुकम्पा नास्ति यस्य ह्यात्मनो दुर्गतौ प्रपततो नानुकम्पा तस्य कथं परेष्वनुकम्पा भवेदिति भावः ।

[भा.१६७०] भवसयसहस्सलद्धं जिनवयणं भावतो जहंतस्स ।
जस्स न जायं दुक्खं न तस्स दुक्खं परे दुहिते ।।

वृ- यस्य भवशतसहस्रैः कथमपि लब्धं जिनवचनं भावतः परमार्थतो जहतस्त्यजतो दुःखं न जातं न तस्य परे दुःखिते दुःखं यस्य ह्यात्मन्यपि दुःखिते न पीडा तस्य परे दुःखिते कथं स्यादिति भावः ।

[भा.१६७१] आयारे वट्टंतो, आयारपरूवणा असंकिउं ।
आयारपरिभट्ठो सुद्धचरणदेसणे भइतो ।।

वृ- आचारे वर्तमानः खल्वाचारः प्ररूपणा अशक्यो ऽशङ्कनीयो भवति, यः पुनराचारपरिभ्रष्टः सशुद्धचरणदेशने यथावस्थितचरणप्ररूपणा सभक्तो विकल्पितः शुद्धचरणप्ररूपणाकारीति वा न वेत्यर्थः । एवं दुर्व्यवहारिणामाक्षेपे कृते ते ब्रूयुर्वयमप्रमाणीकृता युष्माभिः । ततः स गीतार्थः प्राह-

[भा.१६७२] तित्थयरे भगवंते, जगजीववियाणए तिलोगगुरु ।
जो न करेइ पमाणं, न सो पमाणं सुयहराणं ।।

वृ- तीर्थकरान् भगवतो जगज्जीवविज्ञापकान् सर्वज्ञानित्यर्थः । त्रिलोकगुरून् यो न करोति प्रमाणं न स प्रमाणं श्रुतधराणां ।।

[भा.१६७३] तित्थयरे भगवंते जगजीववियाणए तिलोकगुरु ।
जो उ करेइ पमाणं, सो उ पमाणं सुयहराणं ।।

वृ- तीर्थकरान् भगवतो जगज्जीवविज्ञायकान् त्रिलोकगुरून् सर्वज्ञानित्यर्थः यस्तु करोति प्रमाणं, स प्रमाणं श्रुतधराणां । एवं धूर्ता जङ्गन दुर्व्यवहारिष्वपाकृतेषु ते ब्रूयुरेवं सङ्घमप्रमाणीकुरुथ यूयमिति । ततः प्राह-

[भा.१६७४] संघो गुणसंघातो संघायविमोयगो य कम्माणं ।
रागद्दोसविमुक्को होइ समो सव्वजीवाणं ।।

वृ- संघो मयो गुणानां मूलगुणानामुत्तरगुणानां च सङ्घातः सङ्घातात्मकः गुणसंघातात्मकत्वादेव च कर्मणांज्ञानावरणीयादीनां संघाताद्विमोचयति प्राणि न इति संघातविमोचकः रागद्वेषविमुक्त आहारादिकं ददत्सु रागाकारी तद्विपरीतेषु द्वेषाकारीत्यर्थः । अत एव भवति समः सर्वजीवानां स इत्थंभूतो नाप्रमाणीकर्तुं शक्यते श्रुतोपदेशेन व्यवहरणात् किं चान्यत् ।।

[भा.१६७५] परिणामिय बुद्धीए उववेतो होइ समणसंघाओ ।
कज्जे निच्छयकारी सुपरिच्छियकारगो संघो ।।

वृ- पारिणामिकी चासौ बुद्धीश्च पारिणामिकबुद्धिस्तया उपेतो युक्तो भवति श्रमणसंघः । तथा कार्ये दुर्गेऽपि समापतिते यत् श्रुतोपदेशबलेन सम्यग्निश्चितं तत्करणशीलः कार्ये निश्चितकारी तथा सुष्टु देशकालपुरुषौचित्येन श्रुतबलेन च परीक्षितं सुपरीक्षितं तस्य कारकः संघोल यथा कथञ्चनकारी ।

[भा.१६७६] किह सुपरिच्छियकारी एक्कसि दो तिन्नि वावि पेसविए ।
नवि उक्खिवयए सहसा को जाणाइ नागतो केन ।।

वृ- कथं केन प्रकारेण सुपरीक्षितकारी ? उच्यते इहार्थिना सङ्घप्रधानस्य समीपे सङ्घसमवायोचितस्तेन वा ज्ञातः सङ्घमेलापककारी सङ्घस्त्वया मेलनीयः, । तत्र च प्रत्यर्थी कुतश्चित्कारणान्नागच्छति ततो मानुषं प्रेषणीयं सङ्घस्त्वां शब्दयति, । स नागतस्ततो द्वितीयमपि वारं मानुषं प्रेषयति, तथापि नागच्छति । तत्रापरिणामिका ब्रुवते-उद्घाट्यतामेष गीतार्थास्त्वाहुः । पुनः प्रेष्यतां गीतार्थं मानुषं केन कारणेन नागच्छति ? । किं परिभवेन उत भयेन । तत्र यदि भयेन नागच्छति ततो वक्तव्यं मा भैस्त्वं परित्राणकारी खलु भगवान् श्रमणसङ्घ इति, । अथ परिभवेन तत उद्घाट्यते, । एवं सुपरीक्षितकारी तथा चाहएवं द्वौ त्रीन् वारान् मानुषे प्रेषितेऽपि तमनागच्छन्तं सहसा सङ्घो न क्षिपति न सङ्घबाह्यं करोति यत एवं पर्यालोचयति को जानाति न ज्ञायते इत्यर्थः । केन कारणेन नागत इति ।।

[भा.१६७७] नाऊण परिभवेण, नागच्छंते ततो उ निज्जुहणा ।
आउट्टे ववहारो एवं सुविणिच्छयकारीओ ।।

वृ- परिभवेन नागच्छतीति ज्ञात्वा तस्मिन्नागच्छति ततः सङ्घान्निर्यूहणा निष्काशनं कर्त्तव्यम् । अथ शठतामपि कृत्वा स प्रत्यावर्त्तते प्रत्यावृत्तश्च संघं प्रसादयति ततस्तस्मिन्नावृत्ते व्यवहारो दातव्यः । एवं सुविनिश्चितकारी सङ्घः । यस्तु भीतो नागच्छति तं प्रतीदं वक्तव्यम् -

[भा.१६७८] आसासो वीसासो सीयधरसमो य होइ मा भाहि ।
अम्मापिति सम्माणो संघो सरणं तु सव्वेसिं ।।

वृ- आश्वासयतीति आश्वासो भीतानामाश्वासनकारी भगवान् श्रमणसङ्घः विश्वासयतीति विश्वासो व्यवहारे वञ्चनाया अकर्ता सर्वत्र समतया शीतगृहेण समः शीतगृहसमः । तथा मातापितृभ्यां समानो मातापितृसमानः पुत्रेषु मातापितराविव व्यवहारार्थि(दि)ष्वविषमदर्शी, । तथा सर्वेषां प्राणिजो शरणं भगवान् सङ्घस्तस्मान्मा भैस्त्वमिति इदं च परिभावयन् संघोऽव्यवहारं न करोति ।

[भा.१६७९] सीसो पडिच्छओ वा आयरियो वा न सोग्गइनेति ।
से सच्च करण योगा ते संसारा विमोएंति ।।

वृ- शिष्यः स्वदीक्षितः प्रतीच्छकः परगणवर्त्ती सूत्रार्थ तदुभयग्राहकः आचार्यो वाचनाचार्यादिको न सुगतिं नयति किंतु ये सत्यकरणयोगाः संयमानुगत व्यापारास्ते संसाराद् विमोचयंति ।

[भा.१६८०] सीसो पडिच्छओ वा आयरिओ वा विएते इहलोए ।
जे सच्चकरणजोगा ते संसारा विमोएंति ।।

वृ- शिष्यः प्रतीच्छको वा आचार्यो वा एते सर्वेऽपि इहलोके, परलोके पुनः सत्यकरण योगास्ते

संसाराद्विमोचयन्ति ।।

[भा.१६८१] सीसो पडिच्छओ वा कुलगणसंघो न सोग्गतिं नेति ।
जे सच्चकरण जोगा ते संसारा विमोएंति ।।

वृ- शिष्यः प्रतीच्छको वा कुलं वा गणो वा सङ्घो वा न सुगतिं नयति, किन्तु ये सत्यकरणयोगास्ते संसाराद्विमोचयन्ति ।।

[भा.१६८२] सीसो पडिच्छओ वा कुलगणसंघो न एते इह लोगे ।
जे सच्चकरणजोगा ते संसारा विमोएंति ।।

वृ- सुगमाः शीतगृहसमः सङ्घ इत्युक्त । तत्र शीतगृहसमतां व्याख्यानयति-

[भा.१६८३] सीसे कुलव्विए वा गणव्विय संघव्विए य समदरिसी ।
ववहारसंथवेसु य सो सीयधरोवमो संघो ।।

वृ- शिष्ये स्वदीक्षिते कुलव्विएत्ति स्वकुलसम्बन्धिनि गणसम्बन्धिनो सङ्घसम्बन्धिनि च जाते समदर्शी । किमुक्तं भवति ? शिष्याणां कुलगणसङ्घसम्बन्धिनां च परस्परं व्यवहारे जाते समदर्शी तथा संस्तवेषु पूर्वसंस्तुतेषु पश्चात्संस्तुतेषु चान्यैः समं व्यवहारे जाते समदर्शी अतः स सङ्घः शीतगृहोपमः । यथा शीतगृहमाश्रितानां स्वपरविशेषाकरणतः परितापहारी तथा व्यवहारार्थमागतानां सङ्घोऽपि स्वपरविशेषाकरणतः परितापहारीति भावः । सम्प्रति सङ्घशब्दस्य व्युत्पत्तिमाह-

[भा.१६८४] गिहिसंघायं जहिउं संजमसंघायगं उवगएणं ।
नाणचरणसंघायं संघाय ततो हवइ संघो ।।

वृ- गृहिणां संसारिणां मातापित्रादीनांसङ्घातं हित्वा परित्यज्य संयमसङ्घातमुपगतः सन् नमिति वाक्यालङ्कारे । यो ज्ञान चरण सङ्घातं सङ्घातयति आत्मनि स्थितं करोति । स ज्ञानचरणे सङ्घातयन्- भवति सङ्घः । सङ्घातयतीति सङ्घ इति व्युत्पत्ते विंपरीतस्तु सङ्घो न भवति ।

[भा.१६८५] नाणचरणसंघायं रागद्दोसेहिं जो वि संघाए ।
अबुहो गिहि संघायंमि अप्पाणं मेलितो न सो संघो ।।

वृ- यो ज्ञानचरणसंघातं रागद्वेषैः अनेकैर्व्यक्त्यपेक्षया बहुवचनं विसंघातयति विघटयति । सोऽबुधो मूर्खो गृहिसङ्घाते आत्मानं संघातयति मेलयति स परमार्थतो न सङ्घः, । ज्ञानचरणसङ्घातनलक्षण- प्रवृत्तिनिमित्ताभावात् । तस्यापायरूपं फलमाह—

[भा.१६८६] नाणचरणसंघायं रागद्दोसेहिं जो विसंघाए ।
सो भमिहि संसारं चउरंगं तं अणवदग्गं ।।

वृ- यो ज्ञानचरणसङ्घातं रागद्वेषैर्विसंघातयति विघटयति संसारे चतुर्षु अङ्गेषु नारकतिर्यङ्नरामरगतिरूपेष्वन्तः पर्यन्तो यस्य स चतुरङ्गांतः । तं अणवदग्गं कालतोऽपरिमाणं भविष्यति, तस्य च संसारं परिभ्रमतो वितथव्यवहारकारित्वोन्मार्गदेशनया तीर्थकराशातनया च बोधिरपि भवान्तरे दुर्लभा । तथा चाह—

[भा.१६८७] दुक्खेन लहइ बोहिं, बोद्धोविय न लभते चरित्तं तु ।
उम्मग्गदेसणाए तित्थकरासायणाए य ।।

वृ- वितथं हि व्यहारं कुर्वता तेनोन्मार्गोदेशितः तीर्थकरश्चाशातितस्तत उन्मार्गदेशनया तीर्थकराशातनया च संसारं परिभ्रमन् दुःखेन लभते बोधिं, बुद्धोऽपि च न लभते चारित्रं, ।

कस्मान्न लभते इत्याह-

[भा.१६८८] उम्मग्गदेसणाए संतस्स य च्छायणाए मग्गस्स ।

बंधति कम्मरयमलं जरमरणमणंतकं घोरं ॥

वृ- उन्मार्गदेशनया सन्तो मार्गस्याच्छादनया स्थगनेन वध्नाति कर्म किं विशिष्ट मित्याह-रज इव रजः संक्रमणोद्वर्तनापवर्तनादि योग्यं मल इव मलो निधत्तनिकाचितावस्थां तथा जरमरणान्यनन्तानि यस्मात्तत् जरामरणानन्तकं प्राकृतत्वाद्विशेषणस्य परनिपातो मकारोऽलाक्षणिकः । अत एव घोररौद्रमतो न लभते बोधिं नापि चारित्रमिति, कीदृशेन पुनर्व्यवहारच्छेत्तव्यस्तत आह-

[भा.१६८९] पंचविहं उवसंपय नाऊणं खेत्तकालपव्वज्जं ।
तो संघमज्झगारे ववहरियव्वं अनिस्साए ॥

वृ- यत एवं वितथव्यवहारकरणे दोषास्ततस्तस्मात्पञ्चविधां ज्ञानदर्शनचारित्रतपोवैयावृत्यभेदतः पञ्चप्रकारामुपसम्पदं क्षेत्रं कालं प्रव्रज्यां च ज्ञात्वा संघमध्ये व्यवहर्तव्यम् । किमुक्तं भवति ? यः पञ्चविधायामुपसम्पदि आभवन्तमनाभवन्तं जानाति, यश्च क्षेत्रमक्षेत्रं वा बुध्यते, । क्षेत्रेऽपि च क्षेत्रिकस्य यदा न भवति तत् जानाति, । तथा क्षेत्रे यावन्तं कालमवग्रहो नु व्र (घ) जति, तावन्तं कालमवबुध्यते, तथा प्रव्राजयितुं यो जानाति प्रव्राजितोऽपि केनापि तस्य यत् आभवति यच्च ना भवति, तत् जानाति, तेन सङ्घमध्ये अनिश्रया आहारप्रदायिषु स्वकुलसम्बन्ध्यादिषु रागाकरणत इतरेषामद्वेषाकरणतो व्यवहर्तव्यं, । अत्र परस्याशङ्कामाह-

[भा.१६९०] उस्सुत्तं ववहरंतो उ वारितो नेव होइ ववहारो ।
बेतिजइ बहुसुएहिं, कत्तोत्तितो भणइ इणमो ॥

वृ- उत्सूत्रं सूत्रोत्तीर्णं व्यवहरतो बहुश्रुतस्य बहुश्रुतैः कृत इति व्यवहारो नैवान्यैर्वारितस्ततः सप्रमाणमिति यदिब्रूते तत इदं भण्यते,-द्विविधाः खलु व्यवहारच्छेदकास्तद्यथा-प्रशंसनीया अप्रशंसनीयाश्च । तथा चोभयानेव सनिदर्शनमभिधित्सुराह-

[भा.१६९१] तगराए नयरीए एगारियस्स पासे निप्फणा ।
सोलस सीसा तेसिं, अव्ववहारीउ अट्ठ इमे ॥

वृ- नगर्यां तगरायामेकस्याचार्यस्य पार्श्वे षोडशशिष्या निषणास्तेषां च मध्येऽष्टौ व्यवहारिणोऽष्टौ चाव्यवहारिस्तत्र व्यवहारिणोऽष्टाविमे । तानेवाह-

[भा.१६९२] मा कित्ते कंकटुकं, कुणिमं पक्खुत्तरं व वद्याइं ।
बहिरं च गुंठसमणं, अंबिलसमणं च निधम्मं ॥

वृ- मा कीर्त्तय प्रशंसय, व्यवहारिणं कं कमित्याह-कंकटुकं ? कुणपंकुनपनखं २ पक्कं ३ उत्तरं ४ चार्वाकं ५ बधिरं ६ गुण्ठसमानं लाटमायाविसमानं, अम्लसमानं च निधर्माणं ८ ।

तत्र कंकटुकं कुणपश्च प्रतिपादयति-

[भा.१६९३] कंकडुओ विवमासो, सिद्धिं न उवेइ जस्स ववहारो ।
कुणिम नहो वन सुज्झइ दुच्छेज्जो जस्स ववहारो ॥

वृ- यस्य व्यवहारः कांकटुक माष इव न सिद्धिमुपयाति स कांकटुकव्यवहारयोगात् कांकटुकः यस्य पुनर्व्यवहारो दुच्छेज्जो(द्यो)भवति, न च च्छिन्नोऽपि सर्वथा निरवशेषः शुद्ध्यति, यत्तथा कुणपे मांसे सूक्ष्मो नखो नकावयवः । स कुणप नखावयवः । स कुणप नखावयवतुल्यः व्यवहारकरणयोगात्, कुणपं पक्वमुत्तरं चाह-

[भा.१६९४] फलमिव पक्कं पडए पक्कसह वा न गच्छए पारं ।
ववहारो तज्जोगा ससिगुत्तसिरिव्व ,सन्नासे ॥

[भा.१६९५] पक्खद्धोव्व भया वा कज्जंपि न सेसया उदीरेंति ।

पाएण अहातोत्ति व उत्तरिसो बाहणेणंति ।।

वृ- पक्कस्य व्यवहार: फलमिव पक्के पतति न पुन: स्थिरोऽवतिष्ठति, अथवा तद्योगात् व्यवहार: पाकं न गच्छति, । यथा चाणाक्यस्य सन्यासे शशीगुप्तश्रीचन्द्रगुप्तस्य लक्ष्मी: । अत एव एतेन पाको गमनेन वा पक्कफलसदृशव्यवहार करणात् स पक्क इति व्यवह्रियते, । अथवा यस्य पक्ककोल्लापभयात् कार्यमपि न शेषका उद्दीरयन्ति ब्रुवते स पक्क: । किमुक्त भवति ? पक्कपकानि तादृशानि संभाषते यै: भाषिता: सन्तो अन्ये सद्धादिनस्तूष्णीका आसते, तत: पक्कोल्लापयोगात्सपक्क इति पादेन सोपानहा आहत इत्युत्तरसदृशोत्तरकारी उत्तर: । इयमत्र भावना - केनापि क्वचित्सोपानहा पादेनोपहत: तेन च गत्वा राजकुले निवेदिते कारिणिकैश्च स आकारित: । किं त्वयैष आहत: सप्राह नमयैस आहत, किन्तु सोपानहा पादेन एवं सोऽपि दुर्व्यवहारं कुर्वन गीतार्थेन सुत्रोपदेशत: उपालब्ध: सन्नेतादृशै: छलवचनैरुत्तरं ददाति । तत: कदुत्तरकरणात् स उत्तर इति । सम्प्रति चार्वाकिबधिरं चाह-

[भा. १६९६] रोमंथयते कज्जं वधागी नीरसं च विसनंति ।
कहिते कहिते कज्जे भणाति बहिरोव न सुयंमे ।।

वृ- यथा वृषनेत्रंवृषसागारिकं नीरसमपरो वृषभश्चर्वयति एवं य: कार्य रोमन्थायमाणो निष्फलं स्थयन् तिष्ठन् चर्वणशील: चार्वाकिक:, । तथा य: कथिते कार्ये बधिर इव ब्रूते, न सुष्ठु मया श्रुतमिति स बधिर इव बधिर:; गुण्ठ समानमम्लसमानं चाह—

[भा. १६९७] मरहट्ठलाडपुच्छा केरिसिया लाडगुंठसाहिंसु ।
पावारभंडिसुभणं दसिया गणणे पुनो दानं ।।

[भा. १६९८] गुंठाहिं एवमादीहिं, हरति मोहित्तु तं तु ववहारं ।
अंबफरिसेहिं अंबो, न तेहिं सिद्धिं तु ववहारं ।।

वृ- एको लाटो गन्त्वा किमपि नगरं व्रजति अपान्तराले च पथि महाराष्ट्रिको मिलितस्तेन लाटस्य पृच्छा कृता कीदृशा: खलु लाटा गुण्ठामायाविनो भवन्ति । स प्राह-पश्चात्साधयिष्यामि, । मार्गे च गच्छतां शीतवेलाऽपगता ततो नष्टे शीते महाराष्ट्रिकेण प्रावारो गन्त्र्यां क्षिप्त:, । तस्य च प्रावारस्य दशका लाटेन गणितास्ततो नगरप्राप्तौ महाराष्ट्रिकेण प्रावारो ग्रहीतुमारब्ध: । लाटो ब्रूते - किं मदीयं प्रावारं गृह्णासि ? । एवं तयो: परस्परं विवादो जातो महाराष्ट्रिकेण लाटो राजकुले कर्षितो विवादे लाटोऽवादीत् । पृच्छत महाराष्ट्रिक यदि तव प्रावार: तर्हि कथय, कति दशास्य सन्ति । महाराष्ट्रिकेण न कथितास्तेन च लाटेन कर्षिता इति महाराष्ट्रिको जितस्ततो राजकुलादपसृत्य लाटेन महाराष्ट्रकमाकार्य प्रावारं च तस्मै दत्वा ब्रूते, -वर मित्र यत्त्वया पृष्टं कीदृशा लाटगुण्ठा भवन्तीति तत्रेदृशालाटगुण्ठा भवन्तीति । एवमादिभिर्गुण्ठाभिर्मायाभिर्यो मोहयित्वा तं प्रस्तुतं व्यवहारं हरति अपनयति स गुण्ठसमान: । तथा येषु वचनेषूक्तेषु परस्य शरीरं विडविडायते तानि अम्लानि अम्लै: पुरुषश्च वचनैर्व्यवहारं न सिद्धिं नयति, । सोऽम्लवचनयोगादम्ल इति उपसंहारमाह—

[भा. १६९९] एए अकज्जकारी तगराए आसिं तंमि उ जुगंमि ।
जेहिं कया ववहारा खोडिज्जंत अणकज्जेसु ।।

वृ- एते अनन्तरोक्तस्वरुपा अष्टौ कार्यकारिणो दुर्व्यवहारिणस्तस्मिन् गुणे तस्मिन् विवक्षिते काले तगरायामासीरन् । यै: कृता व्यवहारा अन्येषु राज्येषु खोध्यन्ते, दुर्व्यवहारिणामिह परलोके च फलमाह-

[भा. १७००] इह लोए य अकित्ती, परलोए दुग्गती धुवा तेसिं ।
अणाणाए जिणंदाणं जे ववहारं ववहरंति ।।

वृ- ये जिनेन्द्राणामनाज्ञया व्यवहारं व्यवहरन्ति, तेषामिह लोकेऽकीर्ति: परलोके ध्रुवा दुर्गति: ।

**[भा.१७०१]** तेन न बहुस्सुतो वी होइ पमाणं अनायकारिओ ।
नाएण ववहरंतो, होई पमाणं जहाउ इमे ॥

**वृ-** यत एवं दुर्व्यवहारिण इह लोकेऽपकीर्तिः परलोके दुर्गतिस्तेन कारणेन बहुश्रुतोऽप्यन्यायकारी न भवति प्रमाणं, न्यायेन पुनर्व्यवहरन् भवति प्रमाणं यथा इमे वक्ष्यमाणाः तगरायां तस्यैवाचार्यस्याष्टौ शिष्यास्तानेवाह–

**[भा.१७०२]** कित्तेहि पूसमित्तं वीरं सिवकोट्ठगस्स अज्जासं ।
अरहन्नग धम्मणगखंदिल गोविन्ददत्तं य ॥

**वृ-** कीर्तय प्रशंसय, सुव्यवहारकारितया पुष्पमित्रं १ वीरं २ शिवकोष्टकं ३ आर्यासं ४ अर्हतकं ५ धर्मान्वगं ६ स्कन्दिलं ७ गोपिन्ददत्तं च ८ ॥

**[भा.१७०३]** एते उ कज्जकारी तगराए आसि तंमि जुगम्मि ।
जेहिं कया ववहारा अक्खोभा अन्नरज्जेसु ॥

**वृ-** एते अनन्तरोदितास्तस्मिन् युगे तस्मिन् काले कार्यकारिणः सुव्यवहारिणः तगरायामासीरन् । यैः कृता व्यवहारा अक्षोभ्याऽचाल्यान्यराज्येषु; सुव्यवहारिणामिह परलोके च फलमाह-

**[भा.१७०४]** इह लोगंमि य कित्ती परलोगे सोगती धुवा तेसिं ।
आणाए जिणिंदाणं जे ववहारं ववहरंति ॥

**वृ-** ये जिनेन्द्राणामाज्ञया व्यवहारं व्यवहरन्ति तेषामिह लोके कीर्तिः परलोके सुगतिः ध्रुवा ।

**[भा.१७०५]** केरिसतो ववहारी आयरियस्स जुगप्पहाणस्स ।
जेणसकासेग्गहियं, परिवाडीहि तिहिं असेसं ॥

**वृ-** कीदृशो ननु व्यवहारी भवति, एवं शिष्येण प्रश्ने कृते सूरिराह-येन युगप्रधानस्याचार्यस्य सकाशे समीपे तिसृभिः परिपाटीभिरशेषं श्रुतं व्यवहारादिकमवगृहीतं । ता एव परिपाटीराह-

**[भा.१७०६]** सूयपारायणं पढमं, बिइए पदुब्भेदितं ।
तइयं च निरवसेसं-जति सुज्झाति गाहगे ॥

**वृ-** प्रथमं सूचकपारायणं अर्थपरिसमाप्त्या पदच्छेदेन सूत्रोच्चारणं, संहितेति भावार्थः । द्वितीयं पदोद्भेदकं पारायणं पदविभागः पदार्थमात्रकथनपदं विग्रहफला द्वितीया परिपाटीति भावः । तृतीयं पारायणं निरवशेषं चालना प्रत्यवस्थानात्मिका तृतीया परिपाटीत्यर्थः, । एवं श्रुते यदि शङ्का भवति तर्हि ग्राहक आचार्यः शोधयति परीक्षते इत्यर्थः । कथमिति चेदुच्यते-तिसृभिः परिपाटीभिः श्रुतेऽपि व्यवहारादिके ग्रन्थे सूरिणा स विचारणीयः किं सम्यकगृहीतं न वा, गृहीतेऽपि पुनः परीक्षणीयः किं व्यवहारी अव्यवहारी वा, तत्र यदि व्यवहारी तर्हि योग्यः । अथाव्यवहारी अयोग्यः, । अथवा ग्राहको नाम शिष्यः, स यदि तिसृभिः परिपाटीभिः शुद्ध्यति भावतो निःशेषसूत्रार्थपारगो भवति, ततः स व्यवहारी क्रियते, । एतदेवव्याख्यानद्वयं विवदिषुराह-

**[भा.१७०७]** गाहगो आयरिओ ऊ, पुच्छइ सो जाणि विसमठाणाणि ।
जइनिव्वहतीतहियं, तस्सहिययं तु तो सुज्झे ॥

**वृ-** ग्राहक आचार्यः ग्राहयतीति ग्राहक इति व्युत्पत्तेः, स यानि विषमाणि स्थानानि पृच्छति । तत्र यदि निर्वहति । किमुक्तं भवति ? तस्य हृदयं सम्यगभिप्रायं जानाति ततः शुध्यति व्यवहर्तुं व्यवहारकरणयोग्यः । द्वितीयं व्याख्यानमाह-

**[भा.१७०८]** अहवा गाहगो सीसो, तिहिं परिवाडीहिं जेन निस्सेसं ।
गहियं गुणियं अवधारियं च सो होइ ववहारी ॥

**वृ-** अथवा ग्राहको नाम शिष्यः गृह्णातीति ग्राहकः इति व्युत्पत्तेर्येन तिसृभिः परिपाटीभिः निर्विशेषं व्यवहारविकं गृहीतं परिचितः प्रथमतः पश्चाद्गुणितं ततः कथारमभ्यस्सी कृतमवधारितं तात्पर्यग्रहतो हृदयं विश्रामितं स भवति व्यवहारी ॥

**[भा.१७०९]** पारायणे सम्मत्ते, थिरपरिवाडी पुनो उ संविग्गे ।
जो निग्गओ वितिओ गुरुहिं सो होइ ववहारी ॥

**वृ-** पारायणे सूचकादि लक्षणे त्रिविधे समातेऽपि पुनर्यः संविग्ने संविग्नसमीपे स्थिरपरिपाटीरभूद्यश्च गुरुभिर्वितीर्णोऽनुज्ञातः सन् निर्गतो विहारक्रमेण स भवति व्यवहारी, न शेषस्तथा चाह-

**[भा.१७१०]** पडिनीयमंदधम्मो. जो निग्गतो अप्पणो सकम्मेहिं ।
न हु सो होइ पमाणं, असंभतो देस निग्गमने ॥

**वृ-** आत्मनः परेषां च प्रतिकूलः प्रत्यनीको धर्मे मन्दो मन्दधर्मः राजदन्तादि दर्शनात् धर्मशब्दस्य परनिपातः, संयमे शिथिल इत्यर्थः । तथा य आत्मनः स्वकर्मभिः स्वव्यापारैर्निर्गतो विहारक्रमेण न तु गुरुभिरनुज्ञातः सन् हु नैव भवति प्रमाणमसमासश्च भवति देशनिर्गमनेन देशेषु विहारक्रमकरणे ॥

**[भा.१७११]** आयरियादेसा धारिएण अत्थेण गुणियक्खरिएण ।
तो संघमज्झयारे ववहरियव्वं अनिस्साए ॥

**वृ-** यत एवं विपक्षे दोषास्तस्मात्सङ्घमध्यकारे कारशब्दोऽत्र स्वरुपमात्रे सङ्घमध्ये व्यवहर्तव्यमर्थेन किं विशिष्टेनेत्याहाचार्यदेशात् आचार्यकथनादवधारितेन एतेन सम्प्रदायागतत्वमावेदितं, । तथा गुणितेन अनेकशः परावर्तित्वेन अक्षरितेन कस्मल क्षणतः स्थिरतयावस्थितसारेण । एवं भूतेनाप्यर्थेन व्यवहर्तव्यमनिश्रया रागद्वेषा करणे नान्यथा अर्थस्य तत्वतोऽक्षरितत्वानुपपत्तेः ।

**[भा.१७१२]** आयरिय आणादेसा धारिएण सच्छंदबुद्धिरइएण ।
सचित्तखेत्तमीसे जो ववहरति न सो धनो ॥

**वृ-** यः सचित्त व्यवहारे क्षेत्रव्यवहारे मिश्रव्यवहारे च प्रागुक्तस्वरुपोऽर्थे न व्यवहरति आचार्यानादेशात् धारितेन आचार्योपदेशमृते धारितेन कथमित्याह-स्वच्छन्दबुद्धिरचितेन स्वेच्छया निजबुद्ध्या निजबुद्धिकलितेन न स धन्यः श्रेयान् इति । यतः-

**[भा.१७१३]** सोभिमुहेइ लुद्धो संसारकडिल्लंमि अप्पाणं ।
उम्मग्गदेसणाए तित्थयरासायणाए य ॥

**वृ-** स उन्मार्गदेशनया तीर्थकराणामाशातनया चात्मानं संसारगहनेऽभिमुखयत्यभिमुखं करोति पातयतीत्यर्थस्तस्मान्न स धन्यः । अधुनास्यैव प्रायश्चित्तमाह-

**[भा.१७१४]** उम्मग देसणाए संतस्स छायणाए मग्गस्स,
ववहरिओमवायंते, मासा चत्तारि भारिया ॥

**वृ-** उन्मार्गदेशनया सतो मार्गस्याच्छादनया च व्यवहरन् गीतार्थैः प्रतिषिध्यते प्रतिषेधितश्च व्यवहर्तुमशक्नुवति प्रायश्चित्तं चत्वारो गुरुका मासाः ।

**[भा.१७१५]** गारवरहिएण तहिं ववहरियव्वं तु संघमज्झंमि ।
को पुन गारवइणमो परियारादी मुणेयव्वो ॥

**वृ-** तत्रापि गौरवरहितेन संघमध्ये व्यवहर्तव्यं । किंपुनर्गौरवमिति चेत् सूरिराह-इदं वक्ष्यमाणं परिवारादिकं परिवारादिविषयं ज्ञातव्यम् । तदेवाह-

**[भा.१७१६]** परिवार इड्डीधम्मकह वादि खमगा तहेव नेमित्ती ।
विज्ञा रायनियाए गारवो इति अठहा होइ ॥

वृ- परिवारगौरवं १ ऋद्धिगौरवं २ धर्मकथी अहमिति गौरवं ३ वाद्यहमिति गौरवं ४ क्षपकोऽहमिति गौरवं ५ नैमित्तिकोऽहमिति गौरवं ६ विद्यागौरवं ७ रत्नाधिकतागौरव ८ मित्येवममुना प्रकारेणाष्टधा प्रकारं गौरवं भवति ।

[भा. १७१७]	बहु परिवारमहिड्डी निक्खंतो वावि धम्मकहवादी ।
जइ गारवेण जंपिज्जइ अगीतो भणइ इणमो ।।

वृ- बहुपरिवारो १ महर्द्धिको वा निष्क्रान्तो २ धर्मकथी ३ वादी ४ उपलक्षणमेतत् क्षपको नैमित्तिको विद्यावान् रत्निको वा यदि गौरवेणा गीतार्थः सन् जल्पेत यूयमस्मानेव प्रमाणीकुरुथेति, तर्हि स इदं वक्ष्यमाणं भण्यते । तदेवाह–

[भा. १७१८]	जत्थ उ परिवारेणं पयोयणं तत्थ भणिहह तुज्झे ।
इड्ढीमंतेसु तहा धम्मकहा वायकज्जे वा ।।

[भा. १७१९]	पवयणकज्जे खमगो नेमित्ती चेव विज्जसिद्धे य ।
राइनिए वंदनायं जहिं दायव्वं तहिं भणेज्जा ।।

वृ- परिवारगौरवानिदं भण्यते-यत्र सङ्घस्य प्रेषणादिके कार्ये समुत्पन्ने परिवारेण प्रयोजनं भविष्यति, तत्र यूयं भणिष्यथ, । तत्र प्रमाणी करिष्यध्वे यूयं नात्र प्रस्तुते व्यवहारे इति भावः, । तथा ऋद्धिमत्सु वक्तव्यं धर्मकथा प्रयोजने वादी वादकार्ये । इयमत्र भावना-ऋद्धिगौरवोपेतो महार्द्धिक एवमुच्यते । यदि लोकेन कृत्यं भविष्यति, तदा त्वं प्रमाणीकृत्य तत्पाश्चात् लोकोऽनुवर्तिष्यते, धर्मकथी भण्यते । यदि राजादीनां धर्मः कथयितव्यो भविष्यति, तदा युष्मान्वयमभ्यर्थयिष्यामो, यथा कथय कथानकं सम्प्रति राजादीनामिति, वादी भण्यते यदा परवादी कश्चनाप्युत्थास्यति तदा तवोपरोधः करिष्यते यथा निगृह्णीथ कथमप्येनं वादिनमिति । तथा क्षपको नैमित्तिको विद्यासिद्धो वा प्रवचनकार्ये उपालम्भनीयो यथा क्षपकः यदा संघस्य कृत्ये देवतया प्रयोजनं भविष्यति, तदा त्वं कायोत्सर्गं कारयित्वा सा आकम्पयिष्यते, । नैमित्तिको भण्यते यदि सङ्घस्य निमित्तेन प्रयोजनं भविष्यति, तदात्वमभ्यर्थयिष्यसे, । विद्यासिद्धो भण्यते,-यदा संघस्य कार्यं विद्यया साधनीयं भविष्यति, तदा त्वत्पार्श्वात्साधयिष्यते, । रत्निके रत्नाधिके पुनरेवं भण्यते-यत्र पाक्षिकादिवन्दनकं दातव्यं भविष्यति तत्र यूयं भणिष्यत । किमिदानीमायासं कुरुतेति । एतच्च स तान् प्रतिमाह- -

[भा. १७२०]	न हु गारवेण सक्का ववहरिउं संघमज्झयारंमि,
नासेइ अगीयत्थो, अप्पाणं चेव कज्जं तु ।।

वृ- बहुनैव संघमध्ये गौरवेण शक्यं व्यवहर्त्तव्यमन्यैर्जिनाराधकैर्गीतार्थैर्निवारणात्केवलं सोऽगीतार्थस्तथा दुर्व्यवहारं कुर्वन् आत्मीयमेव कार्यं नाशयति । उत्सूत्रप्ररूपणातो-ऽबोधिफलनिविडकर्मबन्धनात्तथा चाह–

[भा. १७२१]	नासेइ अगीयत्थो, चउरंगं सव्वलोए सारंगं ।
नट्ठंमि उ चउरंगे, न हु सुलभं होइ चउरंगं ।।

वृ- अगीतार्थो गौरवेन यो व्यवहरन् अबोधिफलकर्म बन्धनाच्चतुर्णामङ्गानां समाहारश्चतुरङ्गं मानुषत्वं श्रुतिः । श्रद्धासंयमे च वीर्यमित्येवं रूपं कथंभूतमित्याह-सर्वस्मिन्नपि लोके सारमङ्गं स्वरूपं यस्य तत्सर्वलोकसारांगं नाशयति । नष्टे च तस्मिन् चतुरंगेन बहुनैव भूयो भवति । सुलभं चतुरंगं

लिविडकर्मणाऽनर्वाक् पारे संसारे क्षिप्तत्वात् ।

**[भा. १७२२]** थिरपरिवाडीएहिं संविग्गेहिं अनिस्सिवकरेहिं ।
कज्जेसु जंपियव्वं अनुओगियं गंधहत्थीहिं ॥

**वृ-** स्थिरा: सूत्रार्थपरिपाट्यो येषां ते स्थिरपरिपाटीकास्तैः संविग्नैः मोक्षाभिलाषिभिरनिश्रितकरैः रागद्वेषपरिहारतो यथावस्थित व्यवहारकारिभिः आनुयोगिक गन्धहस्तिभिरनुयोगधरप्रकाण्डैः कार्येषु जल्पितव्यं, नशेषैरिति । एतदेव भावयति—

**[भा. १७१५]** एयगुणसंपउत्ती ववहरई संघमज्झयारंमि ।
एयगुणविप्पमुक्के आसायण सुमहती होति ॥

**वृ-** एतैरनन्तरगाथयोक्तैः स्थिरपरिपाटीकत्वादिभिर्गुणैः सम्प्रयुक्तः सङ्घमध्ये व्यवहरति । एतद्गुणविमुक्ते पुनर्व्यवहरति सुमहती आशातना भवति, । न केवलमाशातना व्रतलोपश्च तथा चाह—

**[भा. १७१६]** आगाढमुसावादी वितियतईए य लोवति वएऊ ।
माईय पावजीवी असुईकब्बं कणगदंडे ॥

**वृ-** आगाढे कुलकार्ये गणकार्ये सङ्घकार्ये वा अनाभाव्यस्या भावस्या वा नाभाव्यस्य ज्ञानतया रागद्वेषाज्ञानस्य वा भणनात् मृषा वदतीत्येवं शील आगाढे मृषावादी द्वितीयतृतीयमृषावादा-दत्तादानविरतिरूपे व्रते लोपयति, । तत्र द्वितीयव्रतलोपो मृषावादभणनात् तृतीयव्रतलोपो ना भाव्यं ग्राहयतोऽनुमतिदोषभावात् तु शुद्धात् शेषाण्यपि व्रतानि लोपयति । एकव्रतलोपे सर्वव्रतलोप इति वचनात् । मायी सूत्रमुत्सृज्य कपटैर्व्यवहारकरणात् पापजीवी कुर्वन्नाहारादिकरणात्सकर्ष्यपराहाराद्युप जीवनात् अत एवाशुचिर्मृषावादित्वादिदोषदुष्टत्वात् । अशुचित्वादेव यथा कनकदण्डः संज्ञालिप्तः स्प्रष्टुं न कल्पते । एवमेषोऽपि न कल्पते । यावज्जीवमाचार्यत्वादि पदेषु स्थापयितव्यमिति ।

उद्देशक- ३ : समाप्त

मुनि दीपरत्नसागरेण संशोधिता सम्पादिता व्यवहारसूत्रे तृतीयोद्देशकस्य
संघदासगणि विरचितं भाष्यं एवं मलयगिरि आचार्येण विरचिता टीका परिसमाप्ता ।

| ३६/१ | तृतीयं छेदसूत्रं "व्यवहारं" समाप्तम् |
|---|---|

नमो नमो निम्मल दंसणस्स
पञ्चम गणधर श्री सुधर्मा स्वामिने नमः

# ३६/ व्यवहार-छेदसूत्रं-२-

(सटीकं)

## तृतीयं-छेदसूत्रं

[मूलम् + [स्वोपज्ञनिर्युक्तियुक्तं] सङ्घदासगणि विरचितं भाष्यं
+ मलयगिरि आचार्य विरचिता टीका]

### उद्देशकः - ४ -

उक्तः तृतीयोद्देशकः । सम्प्रति चतुर्थ आरभ्यते । तत्रेदमादिसूत्राष्टकम्-

**मू. (९५)** *नो कप्पइ आयरियउवज्झायस्स एगानियस्स हेमंतगिम्हासु चरिए ।।*

**मू. (९६)** *कप्पइ आयरियउवज्झायस्स अप्पबिइयस्स हेमंतगिम्हासु चरिए ।।*

**मू. (९७)** *नो कप्पइ गणावच्छेइयस्स अप्पबिइयस्स हेमंतगिम्हासु चरिए ।।*

**मू. (९८)** *कप्पइ गणावच्छेइयस्स अप्पतइयस्स हेमंतगिम्हासु चरिए ।।*

**मू. (९९)** *नो कप्पइ आयरियउवज्झायस्स अप्पबिइयस्स वासावासं वत्थए ।।*

**मू. (१००)** *कप्पइ आयरियउवज्झायस्स अप्पतइयस्स वासावासं वत्थए ।।*

**मू. (१०१)** *नो कप्पइ गणावच्छेइयस्स अप्पतइयस्स वासावासं वत्थए ।।*

**मू. (१०२)** *कप्पइ गणावच्छेइयस्स अप्पचउत्थस्स वासावासं वत्थए ।।*

अथास्य सूत्राष्टकस्य कः सम्बन्ध इति सम्बन्धप्रतिपादनार्थमाह-

**[भा.१७२५]** एयद्दोसविमुक्को होइ गणी भावतो पलिच्छन्नो ।
दव्वपलिच्छागस्स उ परिमाणट्ठा इमं सुत्तं ।।

**वृ-** एतेऽनन्तरंस तृतीयोद्देशके ये दोषा उक्तास्तैस्तैर्दोषैर्विमुक्त एतद्दोषविमुक्तो भवति गणी आचार्य उपाध्यायो गणावच्छेदको वा भवति । स च नियमाद् भावतः परिच्छन्नः सूत्रार्थतदुभयोपेतः, द्रव्य-परिच्छदः परिवारो वस्त्रादिकं लक्षणसम्पन्नता च, तत्र परिवारस्य द्रव्यपरिच्छदस्य परिमाणार्थमिदमादिमं सूत्रं सूत्राष्टकम् ।। पुनः प्रकारान्तरेण सम्बन्धकथनार्थमाह-

**[भा.१७२६]** आदिमसुत्ते दोन्नि वि भणिया तइयस्स, इह पुनं तेसिं ।
कालविभागविसेसो, कत्थ ऽवे कत्थ वा तिन्नि ।।

**वृ-** तृतीयस्योद्देशकस्यादिमे सूत्रे द्वावपि साधर्मिकौ विहरन्तावुक्तौ । तथा चादिसूत्रपाठः-''दो साहम्मिया एगतो विहरंति'' इत्यादि । इह पुनस्तयोर्द्वयोः कालविभागविशेषो भण्येत । यथा कुत्र कस्मिन् कालविशेषे द्वौ कल्पेते कुत्र वा त्रय इति कालविशेषविभागतो द्वित्र्यादिसाधुविहारकल्पाकल्प-विधिप्रतिपादनार्थमिदं सूत्राष्टकम्, इह कालेऽपि वाच्ये सामान्यतः सप्तम्यर्थमात्रविवक्षायां त्रप्रत्ययो

न विरुद्ध इति कुत्रेत्युक्तम् ।। अथवान्येन प्रकारेण सूत्रसम्बन्धः, तमेवाह-

[भा.१७२७] पारायणे समत्ते व निग्गतो, अत्थओ भवे जोगो ।
बहुकायव्वे गच्छे एगेन समं बहिं ठाति ।।

वृ- पारायणं नाम सूत्रार्थतदुभयानां पारगमनं तस्मिन् पारायणे समाप्ते वाशब्दः सम्बन्धस्य प्रकारोपदर्शनार्थः । निर्गत आत्मद्वितीय इति वाक्यशेषः । कस्मान्निर्गत इति चेदत आह-बहुकायव्वे इत्यादि, गच्छःसबालवृद्धाकुलस्ततस्तस्मिन् बहुवैयावृत्यं कर्तव्यमतो गच्छे बहुकर्तव्ये तिष्ठतो मा सूत्रार्थतदुभयानां स्मरणे विध्नो भूयादित्येकेन समं गच्छाद्बहिः पृथक् तिष्ठति, यदि पुनरेकाकी स्थातुमिच्छति तदा न कल्पते । एतदर्थप्रतिपादनार्थमादिसूत्रद्विकं, तत्प्रसङ्गतः शेषाण्यपि सूत्राणीत्येषोऽर्थतो योगसम्बन्धः ।। अनेन सम्बन्धे नायातस्यास्य व्याख्या, न कल्पते आचार्यश्चोपाध्यायश्च समाहारो द्वन्द्वः आचार्योपाध्यायं तस्य आचार्योपाध्यायस्य चेत्यर्थः, एकाकिनो हेमन्तग्रीष्मयोः शीतकाले उष्णकाले चेत्यर्थः, चरितुं विहर्तुं कल्पते आचार्योपाध्यायस्यात्मद्वितीयस्य हेमन्तग्रीष्मयोश्चरितुम् । एवं द्वे सूत्रे गणावच्छेदकस्य भावनीये. नवरमत्राद्यसूत्रे आत्मद्वितीयस्य प्रतिषेधो द्वितीयसूत्रेत्वात्मतृतीयस्यानुज्ञा । एवममूनी चत्वारि सूत्राणि वर्षाविषयाण्यपि वेदितव्यानि, नवरमत्र प्रथमसूत्रे आचार्यस्योपाध्यायस्य चात्मद्वितीयस्य प्रतिषेधो द्वितीयसूत्रेत्वात्मतृतीयस्यानुज्ञा, तृतीयसूत्रे गणावच्छेदकस्यात्मतृतीयस्य प्रतिषेधश्चतुर्थसूत्रे त्वात्मचतुर्थस्यानुज्ञेति । इहोत्सर्गतो द्वयोस्त्रयाणां वा जघन्यतोऽपि विहारो न कल्पते यत इदं जघन्यादिभेदतो विहारपरिमाणम् ।।

[भा.१७२८] पनगो व सत्तगो वा कालदुवे खलु जहन्नतो गच्छो ।
बत्तीसईसहस्सो उक्कोसो, सेसओ मज्झो ।।

वृ- कालद्विके ऋतुबद्धे काले वर्षाकाले च जघन्यतः खलु यथाक्रमं गच्छो भवति पञ्चकः सप्तकश्च, पञ्च परिमाणमस्य पञ्चकः, एवं सप्तकः, वाशब्दः समुच्चये, किमुक्तं भवति, ऋतुबद्धे काले पञ्चको वर्षाकाले सप्तकः, कथमिति चेदुच्यते, ऋतुबद्धे काले आचार्य आत्मद्वितीयो, गणावच्छेदकस्त्वात्म-तृतीयः एवं पञ्चकः । वर्षाकाले जघन्यतः आचार्यआत्मतृतीयो, गणावच्छेदक आत्मचतुर्थ एवं सप्तक इति, उत्कर्षतः कालद्विकेऽपि द्वात्रिंशत्सहस्राणि, तथा च भगवत ऋषभस्वामिनो ज्येष्ठस्य गणधरस्य पुण्डरीकनाम्नो द्वात्रिंशत्सहस्रो गच्छोऽभूत्, शेषकः शेषपरिमाणो गच्छो मध्यमः ।। सम्प्रति जघन्यतः पञ्चकसप्तकाभ्यां हीनतायां प्रायश्चित्तमाह—

[भा.१७२९] उउ वासे लहु लहुगा एए गीते, अगीते गुरु गुरुगा ।
अकयसुयाण बहूण वि लहुओ लहुया वसंताणं ।।

वृ- उउत्ति ऋतुकाले पञ्चकाद्हीनानां गीतार्थानां विहरतां प्रायश्चित्तं लघुको मासः, वासेत्ति वर्षाकाले सप्तद् हीनानां गीतार्थानां विहरतां चत्वारो लघुमासाः, एते लघु लघुका गीते गीतार्थविषया द्रष्टव्याः, अगीते अगीतार्थविषयाः पुनर्गुरु गुरुकाः, किमुक्तं भवति- ऋतुकाले पञ्चकाद् हीनानामगीतार्थानां वसतां प्रायश्चित्तं गुरुको मासः, वर्षाकाले सप्तकाद् हीनामगीतार्थानां चत्वारो गुरुका मासाः । अकृत-श्रुतानामगृहीतोचितसूत्रार्थतदुभयानां बहूनामपि पञ्चकसप्तकादीनामपि वसतां यथाक्रममृतुकाले प्रायश्चित्तं लघुको मासः । वर्षाकाले चत्वारो लघुकाः ।। अत्र चोदक आह—

[भा.१७३०] एवं सुत्त विरोहो अत्थे वा उभयतो भवे दोसो ।

कारणियं पुन सुत्तं, इमे य तहिं कारणा हुंति ।।

वृ- यदि नामैतत् जघन्यादिभेदेन गच्छपरिमाणं, तत एवं सति सूत्रतोऽर्थतः तदुभयतश्च विरोधी दोषो भवेत् । सूत्रेऽन्यथाविहाराज्ञानात् । अत्र आचार्यः प्राह-कारणिकं कारणैर्निर्वृत्तं पुनरिदं सूत्रमतो न दोषः तानि च कारणानि पुनरिमानि वक्ष्यमाणानि तत्राधिकृतसूत्रप्रवर्तने भवन्ति ।। तान्येवाह-

[भा. १७३१] संघयणे, वाउलणा, नवमे पुव्वम्मि, गमनमसिवादी ।
सागरे, जाते जयणा, उउबद्धे, लोयणा, भणिया ।।

वृ- इयं कारणविकथा शेषवक्तव्यविषया च गाथा, ततोऽयं संक्षेपार्थः । संहननं यद्युत्तमं भवति, व्याकुलता वा व्याकुलीभवनं वा गच्छे, नवमे वा पूर्वे उपलक्षणमेतत् दशमे वा सूत्रमभिनवगृहीतं सम्यक् स्मर्तव्यमस्ति, गमनं वा अशिवादिभिरसिवावमौदर्यादिभिः सम्पन्नं, सागरत्ति स्वयंभूरमण-सदृशमतिप्रभूतमनेकातिशयसम्पन्नं नवमं पूर्व परावर्तनीयमस्ति, तत एतैः कारणैर्द्वावपि विहरेयातां, तथा जातत्ति जातादिकल्पो वक्तव्यस्तत्रापि भङ्गचतुष्टये प्रथमवर्जेषु शेषेषु त्रिषु यतना वक्तव्यता, यथा ऋतुबद्धे काले आगच्छद्भच्छादिभिरविरहितं तत्स्थानं कर्तव्यम्, गणिनाप्यवलोकना स्वयं करणीया कारणीया च, एतानि कारणान्यधिकृतसूत्रप्रवृत्तौ भणितानि ।। साम्प्रतमेतामेव गाथां व्याचिख्यासुः प्रथमतः संहननमिति पदं व्याख्यानयति-

[भा. १७३२] आयरिय उवज्झाया संघयणा धितिए जे उ उववेया ।
सुत्तं अत्थो य बहुं गहितो, गच्छे य वाघातो ।।

वृ- आचार्या या उपाध्याया वा ये संहननेन प्रथमेन वज्रऋषभनाराचलक्षणेन धृत्या च वज्रकुड्य-समानया उपेता युक्ताः सूत्रमर्थो वा बहुः प्रभूतो गृहीतो गच्छे च सूत्रार्थस्मरणव्याघातः ।। कुतो व्याघात इति चेत्, उच्यते- व्याकुलनातः । तामेव व्याकुलनामाह-

[भा. १७३३] धम्मकहि महिड्ढीए आवासनिसीहिया य आलोए ।
पडिपुच्छण वादिगहण, रोगी तह दुल्लभं भिक्खं ।।

[भा. १७३४] वाउलणे सा भणिया जह उद्देसम्मि पंचमे कप्पे ।
नवमे दसमाउ पुव्वा अभिनवगहिया उ नासेज्जा ।।

वृ- स हि धर्मकथी लब्धिसम्पन्नस्ततो भूयान् जनः श्रोतुमागच्छतीति धर्मकथया व्याकुलना । तथा महर्द्धिको राजादिः धर्मश्रवणाय तस्य समीपमुपागच्छति ततस्तस्य विशेषतः कथनीयं, तदावर्जने भूयसामावर्जनादन्यथा व्याकुलनातः सम्यग्धर्मग्रहणाभावे तस्य रोषः स्यात्, तस्मिंश्च रुष्टे भूयांसो दोषाः, अथवा अन्यः कश्चनापि महर्द्धिकाय कथयति तदानीमपि उष्णीकैर्भवितव्यं मा भूत् कोलाहलतस्तस्य सम्यग्धर्माप्रतिपत्तिरिति कृत्वा । तथा महति गच्छे बहव आवश्यकी निर्गच्छन्तः कुर्वन्ति, बहवः प्रविशन्तो नैषेधिकी, ते सम्यग् निरीक्षणीयाः, अन्यथा तयोरकरणे, उपलक्षणमेतदन्यस्या अपि च सामाचार्याः प्रत्युपेक्षणादेः सम्यगकरणे यदि स्मारणं न करोति तत उपेक्षाप्रत्ययप्रायश्चित्तसंभवः, ततः आवश्यकादिनिरीक्षणायां व्याघातः । तथा भिक्षामटित्वा समागतस्य तस्य संघाटस्यालोचयतो यदि पठ्यते तदा विकटनायामग्रेतनस्य पश्चात्तनस्य च संमोहः, संमोहाच्च सम्यगनालोचना तदभावाच्चरणव्याघात इति तदालोचनायां न पठनीयम् । तथा गच्छे वसतो बहवः प्रतिपृच्छानिमित्त-मागच्छन्ति ततस्तेषामपि प्रत्युत्तरदाने व्याघातः । तथा तं बहुश्रुतं तत्र स्थितं श्रुत्वा वादिनः समागच्छन्ति,

ततस्तेऽपि निग्रहीतव्याः, अन्यथा प्रवचनोपघातस्ततस्तन्निग्रहणेऽपि व्याकुलना; तथा महति गणे बहवः प्राघूर्णकाः समागच्छन्ति, ततस्तेषां विश्रामणया पर्युपासनया च व्याघातः । तथा बहवः खलु महति गणे ग्लानास्तेषां यावदालोचना श्रूयते, तदा व्याकुलना । तथा महति गणे भूयसां प्राघूर्णकादीनां प्रायोग्यं भैक्षं दुर्लभमिति साधवः केऽपि कुत्राप्यन्यत्र प्रेषणीया इति व्याघातः, वाउलणेसा इत्यादि एषा व्याकुलना यथा कल्पे कल्पाध्ययने पञ्चमे उद्देशे सविस्तरं भणिता तथात्रापि द्रष्टव्या, । । नवमे पुव्वम्मीति व्याख्यानयति नवमे दशमे पूर्वेऽभिनवे गृहीते यदि सततं ततो नश्येतामतोऽर्थ द्वयोर्विहारः । ।

[भा.१७३५] असिवादि कारणेहिं उम्मुगनायं ति होज्ज जा दोन्नि ।
सागरसरिसं नवमं अतिसयनयभंगगहणत्ता । ।

वृ- अशिवं नाम मारिः, सा उपस्थिता, तत्र च ज्ञातमुल्मुकं यथा उल्मुकानि बहून्येकत्राहतानि ज्वलन्ति एकं द्वौ वा न ज्वलतः, एवं त्रिप्रभृतिषु बहुषु मारिः प्रभवति, नैकस्मिन् द्वयोर्वा, तत एवमशिवकारणेनादशब्दादवमौदर्येण राजप्रद्वेषतो वा गणभेदस्तावद्भवति यावत् पृथक् पृथग् द्वावपि भवेतामतो नानुपपन्नो द्वयोर्विहारः । । सागरेति व्याख्यानयति-सागरसदृशं स्वयंभूरमणजलधितुल्यं नवममुपलक्षणमेतत् दशमं च पूर्व, कस्मादित्याह-अतिशयनयभङ्गादनेकैरतिशयैरनेकैर्नयैरनेकैर्भङ्गैश्च गुपिलत्वात् । ततोऽगीतार्थानामतिशयाकर्णनं मा भूत् । नयबहुलत?आ भङ्गबहुलतया वा बहूनां मध्ये परावर्तनं दुष्करमिति द्वयोर्विहारः । अन्यच्च-

[भा.१७३६] पाहुड, विज्जातिसया, निमित्तमादी, सुहं च पइरिक्के ।
छेदसुयंमि व गुणणा अगीयबहुलंमि गच्छंमि । ।

वृ- प्राभृतं योनिप्राभृतं गुणयितव्यम् । विद्यातिशया नाम विद्याविशेषा यैराकाशगमनादीनि भवन्ति ते वा परावर्तनीया वर्तन्ते । निमित्तमतीतादिभावप्ररुपकम् आदिशब्दात् योगा मन्त्राश्च परिगृह्यन्ते । एते सर्वेऽपि सुखं सुखेन प्रतिरिक्त विविक्ते प्रदेशेऽभ्यस्यन्ते, न अगीतबहुले अगीतार्थसंकुले गच्छे छेदश्रुतस्य व्यवहारादेः, गाथायां सप्तमी षष्ठ्यर्थे, गुणना परावर्तनां(नं) कर्तुं शक्यम्, तेषामगीतार्थानां कर्णाभ्यटनतः श्रुत्वा विपरिणामतो गच्छान्निर्गमनं मा भूदिति, सूरेरुपाध्यायस्य वात्मद्वितीयस्यान्यत्र गमनम् । । सम्प्रति यादृशे द्वयोरन्यत्र गमनमुचितं तादृशमाह-

[भा.१७३७] कयकरणिज्जा थेरा सुत्तत्थविसारया सुयरहस्सा ।
जे य समत्था वोढुं कालगयाणं उवहिं देहं । ।

वृ- कृतकरणा नाम गीतार्थतया परिणामकतया चान्यदापि अन्यैः सहानेकश ईदृशानि कार्याणि कृतवन्तः, यद्यपि च कदाचिद् द्वितीयः सहायो न कृतवान् तथापि योग्यतया स कृतकरणीय इव द्रष्टव्यः, स्थविरः श्रुतेन पर्यायेण च, तथा सूत्रार्थयोर्विशारदाः सूत्रार्थविशारदाः, तथा श्रुतानि रहस्यानि अनेकान्यनेकशो यैस्ते श्रुतरहस्या इति सहायं प्रति विशेषणम् । सूरेरुपाध्यायस्य वा पूर्वगत-सूत्रार्थधारिणोऽधिगतच्छेदश्रुतस्य च श्रुतरहस्यत्वाव्यभिचारात् । तथा द्वयोरेकतरस्मिन् काले गतेऽपरेण शरीरपारिस्थापनिकां कर्तुं गच्छता द्वयोरप्युपाधिः शून्यायां वसतौ न मोक्तव्यो, मा दस्यवस्तमपहार्षुरिति कृत्वा द्वयोरप्युपधिर्मृतकशरीरं चान्येरण वोढव्यम् । ततो ये कालगतानां देहं द्वयोरुपधिं च वोढुं समर्थास्ते अधिकृतसूत्रविषयाः । । तथा चाह-

[भा.१७३८] एयगुणसंपउत्ता, कारणजाएण ते दुयगावि ।

उउबद्धम्मि विहारो, एरिसयाणं अनुन्नातो ।।

**वृ-** एतैरनन्तरगाथोक्तैर्गुणैः सम्प्रयुक्ता एतद्गुणसम्प्रयुक्ताः कारणजातेनानन्तरोदितेन केनचित्कारणविशेषेण तावाचार्यादिकावुपाध्यायादिको वा ऋतुबद्धे काले विहरतो न कश्चिद्दोषोऽधिकृतसूत्रेणानुज्ञानात् तथा चाह ईदृशयोर्ऋतुबद्धे काले अधिकृतसूत्रेण विहारोऽनुज्ञातो दोषाभावात् कारणविशेषस्य च गरीयस्त्वात् ।। जातेति चत्वारः कल्पाः सूचिताः, तानेवाह-

**[भा. १७३९]** जातो य अजातो वा दुविहो कप्पो उ होति नायव्वो ।
एक्केक्को वि य दुविहो, सम्मत्तकप्पो य असमत्तो ।।

**वृ-** द्विविधः खलु कल्पो भवति ज्ञातव्यस्तद्यथा जातोऽजातश्च । एकैकोऽपि च द्विधा-समाप्तकल्पः असमाप्तकल्पश्च । एतानेव चतुरो व्याख्यानयति-

**[भा. १७४०]** गीयत्थो जायकप्पो ऽगीतो खलु भवे अजातो तु ।
पनगं समत्तकप्पो, तदूनगो होति असमत्तो ।।

**वृ-** जातकल्पो नाम यो गीतार्थः सूत्रार्थतदुभयकुशलो, ऽगीतोऽगीतार्थः खलु भवेदजातो-ऽजातकल्पः, समाप्तकल्पो नाम परिपूर्णसहायः, स च जघन्येन पञ्चकं पञ्चकपरिमाण ऋतुबद्धे काले, वर्षाकाले सप्तपरिमाणः, तदूनकस्तस्मात् पञ्चकात्सप्तकाद्वा हीनतरः कल्पो भवत्यसमाप्तो अपरिपूर्णसहायत्वात् ।। अत्र भंगचतुष्टयं, तदेवाह--

**[भा. १७४१]** अहवा जातो समत्तो, जातो चेव य तहेव असमत्तो ।
असमत्तो जातो य, असमत्तो चेव उ अजातो ।।

**वृ-** अथवेति प्रकारान्ते पूर्वं कल्पचतुष्टयं सामान्यतः प्ररुपितमिदानीं संयोगतः प्ररुप्यते, जातकल्पोऽपि समाप्तकल्पोऽपीत्येको भङ्गः, जातकल्पोऽसमाप्तकल्प इति द्वितीयः, अजातकल्पः समाप्तकल्प इति तृतीयः, अजातकल्पोऽसमाप्तकल्प इति चतुर्थः । अत्र प्रथमभङ्गः शुद्धः शेषेषु त्रिषु भङ्गेषु यतना कर्तव्या ।। तेसिं जयणेति सूत्रगाथोक्तं पदं व्याख्यानयन् प्राह-

**[भा. १७४२]** तेसिं जयणा इणमो, भिक्खग्गह निक्खमणप्पवेसे य ।
अनुन्नवणं पि य, समगं बेंति य गिहि दिज्ज ओहाणं ।।

**वृ-** तेषामाद्यवर्जानां त्रयाणां भङ्गानामियं यतना, समकमेककालं भिक्षाग्रहाय, उपलक्षणमेतत् विचाराय च, निष्क्रमः समकमेव चावग्रहस्यानुज्ञापनम् । इयमत्र भावना-भिक्षाग्रहणाय विचाराय वा सर्वमुपकरणमादाय समकमेव निष्क्रामतः समकमेव च प्रविशतः । तथा वसतिं प्रथमं याचमानौ समकमेव शय्यातरमनुज्ञापयतः तथा निर्गच्छन्तौ समकमेव शय्यातरसमीपमुपगम्य ब्रुवाते, यथा गृहे गृहस्य प्रतिश्रयस्य उपधानं स्थगनं दद्यादिति ।। उउबद्धेति पदव्याख्यानार्थमाह-

**[भा. १७४३]** उउबद्धे अविरहियं, एतं जं तेहिं होइ साहूहिं ।
कारेइ कुणइ व सयं, गणीवि ओलोयणमभिक्खं ।

**वृ-** ऋतुबद्धे काले तयोः कारणवशतस्तथास्थितयोस्तत्स्थनमागच्छद्भिश्च भिक्षार्थं ग्रामं प्रविशद्भिर्विचारार्थाय यथा वा निर्गत्य मिलनार्थमायद्भिर्गच्छद्भिश्च पुनः स्वस्थानं प्रतिचलद्भिः साधुभिरविरहितं भवति ।। आलोयणत्ति पदं व्याख्यानयति-यो-ऽसौ गणी आचार्यः सोऽपि तयोर्द्वयोर्जनयोः अवलोकनां गवेषणामभीक्ष्णं द्वितीयेतृतीये वा दिने स्वयं करोति, अन्यैर्वा कारयति ।

[भा.१७४४] एएहिं कारणेहिं हेमंते धिंसु अप्पबीयाणं ।
धिइदेहमकंपाणं, कप्पति वासो दुवेण्हंति ।।

वृ- एतैनन्तरोदितैर्व्याकुलनादिभिः कारणैर्हेमन्ते शीतकाले ग्रीष्मे धर्मकाले द्वयोरप्यात्म-द्वितिययोराचार्योपाध्याययोर्धृत्या देहेन चाकम्पयोरचाल्ययोर्धृतेर्वज्रकुड्यसमानत्वात् देहस्य च प्रथमसंहननात्मकत्वात् कल्पते वासः । तदेवमृतुबद्धकालविषयाणि भाष्यकृता प्रपञ्चितानि ।। सम्प्रति वर्षाकालविषयाणि प्रपञ्चयति-

[भा.१७४५] नियमा होइ असुन्ना वसही, नयने य वन्निया दोसा ।
दुस्संचर बहुपाणा वासावासेवि उच्छेदो ।।

वृ- वर्षावासे वर्षाकाले नियमाद्वसतिरशून्या कर्तव्या, किं कारणमिति चेत्, उच्यते, वर्षासूपकरणं सह न नीयते, अथ भिक्षादि गच्छन्नयति तर्हि वर्षाप्रपातेन तिम्यते, तथा चाह-उपकरणस्य सहनयने पूर्व कल्पाध्ययने तेमनादयो दोषा वर्णिताः ।। अन्यच्च शून्यायां वसतौ कृतायां गवादिभिर्भञ्जनं भटादिभिर्वा रोधनं भवेत् । तथा च सत्यन्यस्यां वसतौ गन्तव्यं । तस्या अलाभे अन्यद् ग्रामान्तरं गमनीय, यत्र च दुस्संचरा मार्गाः सलिलहरितादिभिः [illegible] तथा बहुप्राणा [illegible] द्वित्रिचतुःपञ्चेन्द्रियाणामनेकजातीयानां सम्मूर्च्छनात् । तथा शय्यातरेण शून्यां वसतिमालोक्यादाक्षिण्या एते काप्यनापृच्छ्य गता इति प्रद्वेषतस्तेषां सर्वेषां वा तत् द्रव्यस्यान्यद्रव्यस्य वा व्युच्छेदः क्रियते । यत इमे दोषास्तस्यात् शून्या वसतिः कदा न कर्तव्येति जघन्यतोऽप्याचार्यस्योपाध्यायस्य चात्मतृतीयस्य वर्षाकाले विहारः, अन्यथा प्रायश्चित्तम् ।। तथा चाह-

[भा.१७४६] वासाण दोण्ह लहुया आणादिविराधनावसहिमादी ।
संथारग उवगरणे गेलन्ने सल्लमरणे य ।।

वृ- यदि पुनर्द्वौ जनौ वर्षाकाले वसतः तदा प्रायश्चित्तं चत्वारो लघुकाः आज्ञादयश्च दोषाः । तथा विराधना वसत्यादेरादिशब्दादात्मसंयमप्रवचनपरिग्रहः । तथा संस्तारकविषये उपकरणविषये च भूयांसो दोषाः तथा द्वयोर्जनयोर्विहरतोरेकः कथंचनापि ग्लानो जायेत ततो ग्लानं वसतौ मुक्त्वा परस्मिन् भिक्षादिनिमित्तं बहिर्गते (तो) यः पश्चात् ग्लानस्य दोषः द्वितीयोद्देशकेऽभिहितः । यच्च सशल्यस्य सतो मरणं तदेतत्सर्वमत्रापि द्रष्टव्यम् । एवं द्वारगाथासंक्षेपार्थः ।। साम्प्रतमेनामेव विवरीपुराह-

[भा.१७४७] सुन्नं मोत्तुं वसहिं भिक्खादिकारणाओ जइ दोवि ।
वच्चंतितत्तो दोसा गोणाईया हवंति इमे ।।

वृ- यदि द्वावपि शून्यां वसतिं मुक्त्वा भिक्षादिकारणवशतो व्रजतस्तत इमे वक्ष्यमाणा दोषा गवादिका गवादिनिमित्ता भवन्ति ।। तानेवाह-

[भा.१७४८] गोणे साणे छगले सूयरमहिसे, तहेव परिकम्मे ।
मिच्छत्तबडुगमादी अच्छंते सलिंगमादीणि ।।

वृ- गौः श्वा छगलः शूकरो महिषो वा शून्यां वसतिमवबुध्य प्रविशेत् तथा परिकर्म गृहस्थः कुर्यात् । यदिवा मिथ्यात्वोपहता बटुकादयः प्रविशेयुः अथैको गच्छत्येकः पश्चात्तिष्ठति ततः एकस्मिन् पश्चात्तिष्ठति स्वलिङ्गादीनि स्वलिङ्गप्रतिसेवनादय आत्मपरोभयसमुत्था बहवो दोषाः । एषापि द्वारगाथा ।। तत्र गवादिद्वारव्याख्यानार्थमाह-

[भा.१७४९] गोणादीए पविट्ठे घाडंतमघाडणे भवे लहुया ।
अहिगरण वसहिभंगा तह पवयण संजमे दोसा ।।

वृ- गवादिके गोश्वच्छगलशुकरादिके प्रविष्टे यदि तान् गवादीन् घाटयति ततस्तत्प्राऽयोगोलकल्पास्तिर्यश्च इति तद्घाटने भवति प्रायश्चित्तं चत्वारो लघुकाः, तथा ते गवादयो निर्द्धाटिताः संतो हरितादीनी खादेयुस्ततोऽधिकरणदोषसंभवः । अघाडणत्ति अथ न निर्धाटयति तर्हि वसतिभंगस्तथा प्रवचने संयमे च दोषाः प्रवचनविराधना, उपलक्षणमेतत् आत्मविराधना चेत्यर्थः । तथा हि यदि श्वादयो बालमृतकलेवरादि भक्षयन्तस्तिष्ठन्ति तदा महती प्रवचनस्य कुत्सेति प्रवचनविराधना, शूकरप्रभृतयश्च निष्काश्यमानाः कदाचित्संमुखा अपि चलेरन् तत आत्मविराधना । श्वादयश्च तिष्ठन्तो मार्जारमूषिकादिमुपहन्युरिति संयमविराधना । तदेवं गोणे साणेत्यादि व्याख्यातम् ।।

[भा.१७५०] दुक्खं ठिएसु वसहीपरिकम्मं कीरइत्ति इति नाउं ।
भिक्खाइ निग्गएसुं सअट्ठमीसं विमं कुज्ञा ।।

वृ- ते गृहस्थाः परिभावयन्ति-स्थितेषु साधुषु दुःखं महता कष्टेन वसतेः परिकर्म क्रियते स्वाध्यायभङ्गादिदोषभावात्, गतेषु तु न कश्चिद् दोष इति ज्ञात्वा परिभाव्य भिक्षादिनिमित्तं निर्गतेषु साधुषु सअट्ठत्ति स्वार्थं स्ववसतिबलिष्ठताकरणार्थं मिश्रं वा संयता अपि सुखेन स्वाध्यायादिकं च कुर्युरिति स्वार्थं संयमनिमित्तं च इदं वक्ष्यमाणं परिकर्म कुर्युः । तदेवाह-

[भा.१७५१] उच्छेव बिलच्छगणे भूमीकम्मे यपुञ्जणामज्जे ।
कुड्डाण लिंपणं दूमणं च एयं तु परिकम्मं ।।

वृ- उच्छेवो नाम यत्र पतितुमारब्धं तत्रान्यस्येष्टकादेः संस्थापनम् । बिलस्थगनं कोलादिकृताबिलेष्विष्टकाशकलादिप्रक्षिप्योपरि गोमयमृत्तिकादिना पिधानम् । भूमिकर्म नाम विषमाणि भूमिस्थानानि भंक्त्वा समार्जन्या संमार्जनम् आमर्जनं मृद्गोमयादिना लिम्पन् ।। तथा कुड्यानामेव च दूमणंति धवलनं एतत्परिकर्म कुर्युः ।। अत्रैव प्रायश्चित्तविधिमाह-

[भा.१७५२] जइ ढक्कंतोच्छेवा तति मास बिलेसु गुरुग सुद्धेसु ।
पंचेंदियउद्दाते, एगदुगतिगे उ मूलादी ।।

वृ- यति यावन्त उच्छेवा ढकिताः समारचितास्तति तावन्तो लघुमासाः प्रायश्चित्तं, बिलेषु शुद्धेषु पञ्चेन्द्रियजीवरहितेषु स्थगितेषु गुरुगत्ति चत्वारो गुरुमासाः अथ पञ्चेन्द्रियव्याघातो बिलस्थगने अभूत् तत एकद्वित्रिषु व्याहतेषु यथाक्रमं मूलादि एकस्मिन् पञ्चेन्द्रियेऽपद्राविते मूलं द्वयोरनवस्थाप्यं त्रिषु त्रिप्रभृतिषु पारांचितमिति ।।

[भा.१७५३] भूमीकम्मादीसु फासुग, देसे उ होइ मासलहुं ।
सव्वंमि लहुगा अफासुएण देसंमि सव्वे वा ।।

वृ- भूमिकर्मादिषु-भूमिकर्मसंमार्जनामर्जनकुड्यलेपनधवलनेषु । देशतः प्रासुकेषु कृतेषु प्रत्येकं प्रायश्चित्तं भवति मास लघु, सर्वस्मिन् उपाश्रयेषु प्रासुकेषु कृतेषु प्रत्येकं चत्वारो लघुकाः । अप्रासुकेनापि जलादिना देशतः सर्वतो वा भूमिकर्मादिषु कृतेषु प्रत्येकं चत्वारो लघुकाः ।।

[भा.१७५४] सोच्चा गयत्ति लहुगा अप्पत्तिय गुरुगा जं च वोच्छेदो ।
बहुदोसतरणभडमरणे पाहुणनिक्कयणा सुत्ते ।।

**वृ-** शय्यातरो यदि शून्यां वसतिमालोक्य कस्यापि पार्श्वे दृष्ट्वा श्रुत्वा च तद्वच एतज्जानाति यथा गताः साधव इति न चाप्रीतिरुत्पन्ना तदा प्रायश्चित्तं चत्वारो लघुकाः । अथाप्रीतिकं करोति यथा अदाक्षिण्या एते अनापृच्छ्य गता इति तर्हि गुरुगत्ति चत्वारो गुरुका मासाः । अथैकानेकभेदेन तद्द्रव्यान्यद्रव्यव्यवच्छेदस्तदा तन्निमित्तमपि चतुर्गुरुकप्रायश्चित्तम् । अधुना मिच्छत्तबहुगमादीति व्याख्यानयति-बदुचारणेत्यादि, बटुका द्विजातयः चारणा वैतालिकविशेषाः भटाः प्रतीतास्ते गताः क्वापि साधव इति विज्ञाय तस्मिन् शून्ये उपाश्रये आवासयेयुः, तत्र च कलहादिप्रसङ्गः, तथा शून्यां वसतिमालोक्य कश्चित्तिरश्चो मनुष्यो वा समागत्य म्रियते तत्र च राजग्रहादिदोषसंभवः तथा केचित् शय्यातरस्य प्राधूर्णकाः शून्येयं वसतिरिति कृत्वा शय्यातरानुज्ञया तत्र तिष्ठेयुर्न च ते निष्काशयितुं शक्यन्ते, निष्कासने वा प्रद्वेषादिप्रवृत्तिः, तथा तिरश्ची मानुषी वा प्रसवितुकामा शून्यां दृष्ट्वा तत्रागत्य प्रसवते (प्रसुवीत), तस्या निष्काशने आश्रयत्याजने संयमविराधनायो दोषा यथोक्ताः प्राक्, एते शून्य उपाश्रये क्रियमाणे दोषाः ।। सम्प्रति अच्छेति सलिङ्गमादीणि इति व्याख्यानयति-

[भा.१७५५] अह चिट्ठति तत्थेगो एगो हिंडइ उभयहा दोसा ।
सलिंगसेवणादी आउत्थ परे उभयतो य ।।

**वृ-** अह तत्रैकस्तिष्ठति एको हिण्डते तत उभयथा उभयेन प्रकारेण यस्तिष्ठति तद्गता यश्च हिण्डते तद्गताश्चेत्यर्थः, स्वलिङ्गसेवनादयो दोषाः स्वलिङ्गसेवना संयतीप्रतिसेवना आदिशब्दात्परलिङ्गसेवना गृहिलिङ्गसेवना च परिगृह्यते । कथंभूता इत्याहआत्मोत्था आत्मनैव संयत्यादिकं कदाचित्प्रार्थयतेइत्यर्थः, तथा परे परतः संयत्यादिकृतक्षोभनात्, उभयतः स्वतः परतश्च समुत्थाः ।। यदुक्तं प्राक् वसोज्ञा गयत्ति लहुगा' इत्यादि गाथापूर्वार्धं तद्व्याख्यानार्थमाह-

[भा.१७५६] सुन्ने सागरि दट्ठुं संथारे पुच्छे कत्थ समणाओ ।
सोउं गयत्ति लहुगा अप्पत्ति अच्छेदे चउ गुरुगा ।।

**वृ-** संस्तरन्ति साधवोऽस्मिन्निति संस्तार उपाश्रयः सागारिकः शय्यातरः, सप्तमी प्राकृतत्वाद् द्वितीयार्थे, ततोऽयमर्थः शून्यं संस्तारमुपाश्रयं सागारिको दृष्ट्वा पृच्छेत् कुत्र गताः श्रमणा इति तत्र प्रतिवचः श्रुत्वा गता इति ज्ञाते अप्रीत्यकरणे प्रायश्चित्तं चत्वारो लघुकाः अप्रीतिके समुत्पन्ने च्छेदे च तद्द्रव्यान्यद्रव्यव्यवच्छेदे चत्वारो गुरुकाः । तदेवं विराधना वसत्यादेरिति व्याख्यातम् ।।

सम्प्रति 'संथारग उवगरणे' इति व्याख्यानयति-

[भा.१७५७] कप्पट्ठग संथारे खेलण लहुगो तुवट्टे गुरुगो उ ।
नयने दहने चउ लहु, एत्तो उ महल्लए वुच्छं ।।

**वृ-** संस्तारे उपाश्रये यदि कप्पट्ठगत्ति बालकः खेलति क्रीडति ततः खेलने प्रायश्चित्तं लघुको मासः । अथ त्वग्वर्तनं कुर्यात्तर्हि त्वग्वर्तनकृतो गुरुको मासः । अथ स बालकस्तत्र स्थितः स्तेनेन नीयते प्रदीपनकेन वा लग्नेन दह्यते, तदा चतुर्लघु । अत ऊर्ध्वं महति त्वग्वर्तनादि कुर्वति प्रायश्चित्तं वक्ष्ये ।।

[भा.१७५८] तुयट्ट नयन दहने, गुरुगा हवंतनायारे ।
अह उवहम्मति उवहित्ति घेत्तुं न हिंड मासलहुं ।।

[भा.१७५९] उल्लेलहुग, गिलाणादिगा य सुन्नेठवेंति चउ लहुगा ।
अनरक्खितोवहम्मतिहिं पावेंति जं जत्थ ।।

वृ- महान् पुरुषः शून्यमुपाश्रयं दृष्ट्वा तत्र त्वग्वर्तनं करोति, यदि वा उपकरणं नयति दहति वा, तदा त्वग्वर्तने नयने दहने वा, प्रत्येकं प्रायश्चित्तं चत्वारो लघुकाः ;अथानाचारं करोति, तत्रापि चत्वारो गुरुकाः ।। अधुना उपकरणेति व्याख्यानार्थनीतं वर्षेणार्द्रीक्रियते तदा चत्वारो लघुकाः । अथ तस्मिन्नुपाश्रये शून्ये सति ग्लानादिकान्, आदिशब्दात् प्राघूर्णकादिपरिग्रहः, गृहस्थाः स्थापयन्ति तत्रापि चत्वारो लघुकाः । अथोपधिं सह न नयति तदा सोऽपि तो. सन् उपहन्यते तस्यैव परिष्ठापनं, तदपहारे च जधन्यमध्यमोत्कृष्टापहारनिमित्तं प्रायश्चित्तं, हृते च तस्मिन्नुपकरणे यद् अनेषणादिकं यत्रोपकरणविषये तौ सेवाते तन्निमित्तमपि प्रायश्चित्तं तौ प्राप्नुतः ।। सम्प्रति 'गेलन्ने सल्लमरणे य' इति द्वारद्वयमाह-

[भा. १७६०] गेलन्न मरणसल्ला बितिउद्देसंति वन्निया पुव्विं ।
ते चेव निरवसेसा नवरं इह इं तु बितियपयं ।।

वृ- ग्लान्यं मरणसल्लेत्ति सशल्यमरणमेते द्वे अपि पूर्व द्वितीयोदेशके प्रथमसूत्रे ये दोषतया सविस्तरं वर्णिते ते एव निरवशेषे अत्रापि वक्तव्ये, नवरं तत्र द्वितीयपदमपवादपदं नोक्तमिह तु, इकारः पादपूरणे, तदुच्यते ।। तदेवाह-

[भा. १७६१] असिवादिकारणेहिं अहवा फिडिया उ खेत्तसंकमणे ।
तत्तियमेत्ता व भवे दोण्हं वासासु जयण इमा ।।

वृ- अशिवादिभिः कारणैर्द्वावपि वर्षासु विहरतः । अथवा एकस्मात् क्षेत्रादन्यस्मिन् क्षेत्रे सङ्क्रमणे कथमपि मार्गतः स्फिटितौ परिभ्रष्टावेकत्र वर्षासु विहरत उपलक्षणमेतत् तेनैतदपि द्रष्टव्यम्-अशिवादिकारणतो गणस्फोटं कृत्वेकाकिनो जाताः सङ्केतवशाच्च कचिद्वर्षासु द्वौ मिलितविति । तत्तियमेत्ता व भवे इति अथवा शेषाः प्रतिभग्ना मृता वा अवशिष्टौ तावन्मात्रावेव द्वावेव भवतस्तिष्ठतः । एवं द्वौ वर्षासु भवतः । ततस्तयोश्च द्वयोर्वर्षासु इयं वक्ष्यमाणा यतना ।। तामेवाह-

[भा. १७६२] एगो रक्खति वसहिं भिक्खवियारादि बितियतो याति ।
संथरमाणे असंथरे निद्दोसुवरिं ठवित्तुवहिं ।।

वृ- एको वसतिं रक्षति । द्वितीयो भिक्षाविचारादौ भिक्षायां विचारे बहिर्भूमावादिशब्दादन्यस्मिन् वा प्रयोजने याति । एवं यतना तदा भवति तदा तौ संस्तरतः । असंथरेत्ति अथैकाकिनो भिक्षाया अलाभादन्यतो वा कुतश्चित्कारणान्न संस्तरतस्तदासंस्तरे द्वावपि सह हिण्डाते तत्रेयं यतना, यदि वसतौ निर्दोस्यं(ष्यं) निर्भयं तदा उपधिमुपरि वसतेः स्थापयतो बध्नीतो यथा न कोऽपि पश्यतीति । एवंभूतां च यतनां कुर्वन्तौ तावप्रायश्चित्तविषयौ । अथ न कुरुतस्तदा यद् आपद्यते प्रायश्चित्तं तत्प्राप्नुत इति ।।

[भा. १७६३] सुत्तेणेवुद्धारो कारणियं तं तु होति सुत्तंति ।
कप्पोत्ति अनुन्नातो वासाणं केरिसे खेत्ते ।।

वृ- यत एवं दोषास्ततो द्वयोर्विहारो वर्षासु साक्षात्पंचमेन सूत्रेण प्रतिषिद्धस्त्रयाणां तु विहारस्योद्धारो-ऽनुज्ञातःसूत्रेणैव षष्ठेन कृतः सोऽप्युत्सर्गतो न कल्पते ततस्तत्सूत्रं कारणिकमशिवादिकारणनिष्पन्नं भवति वेदितव्यम् ।। अथ कीदृशे क्षेत्रे वर्षासु, गाथायां षष्ठी सप्तम्यर्थे प्राकृतत्वात्, त्रयाणां विहारः कल्प इति कल्पते इत्यनेन पादेनानुज्ञातः । सूरिराह-

[भा. १७६४] महती वियारभूमी विहारभूमी य सुलभवित्ती य ।
सुलभा वसही य जहिं जहन्नयं वासखेत्तं तु ।।

वृ- यत्र महती विचारभूमिः पुरीषोत्सर्गभूमिः, यत्र च महती विहारभूमिर्भिक्षानिमित्तं परिभ्रमणभूमिः, यत्र च वृत्तिर्भिक्षावृत्तिः सुलभा, वसतिश्च यत्र सुलभा, तत् जघन्यं वर्षायोग्यं क्षेत्रं उत्कृष्टं त्रयोदशगुणोपेतम् ।। तानेवाह-

[भा.१७६५] चिक्खल्ल पाण थंडिल वसही गोरस जनाउलो वेज्जो ।
ओसह निचयाहिवती पासंडा भिक्ख सज्झाए ।।

वृ- यत्र चिक्खल्लः कर्दमो भूयान्न भवति, प्राणाश्च द्वीन्द्रियादयो भूयांसो न संमूर्च्छन्ति, यत्र च भूयांसि स्थण्डिलानि, वसतयश्च द्वित्र्यादयो यत्र प्राप्यन्ते, गोरसं च प्रभूतं, प्रत्येकभूयोजनसमाकुलः कुलवर्गः, वैद्यश्च यत्र विद्यते, औषधानि च सुप्रतीतानि, निचयाश्च धान्यानामतिप्रभूताः, अधिपतिः प्रजानामतीव सुरक्षी वर्तते, पाषण्डाश्च स्तोका विद्यन्ते, भिक्षा च सुलभा, स्वाध्यायश्च निर्व्याघातः । एतदुत्कृष्टं वर्षासु योग्यं क्षेत्रम् ।। साम्प्रतमेतद्गुणाभावे वर्षासु वसतां प्रायश्चित्तमाह-

[भा.१७६६] पाणा थंडिल वसही अहिवति पासंड भिक्ख सज्झाए ।
लहुया, सेसे लहुओ, केसिंची सव्वहिं लहुगा ।।

वृ- यदि यत्र प्राणा अतिबहवो, यदि वा न विद्यन्ते स्थण्डिलानि, वसतयो वा द्वित्र्यादिका न विद्यन्ते, अधिपतिर्वा नास्ति, पाषण्डा वा बहवः, भिक्षा च न सुप्रापा, स्वाध्यायो वा न निर्वहति, तत्र वर्षाकालं करोति तदैतेषु दोषेषु प्रत्येकं प्रायश्चित्तं चत्वारो लघुकाः । शेषे चिक्खल्लादिके दोषे प्रत्येकं लघुको मासः । केषांचिदाचार्याणां मतेन पुनः सर्वत्र सर्वेष्वपि दोषेषु प्रत्येकं चत्वारो लघुकाः ।।

[भा.१७६७] नीसरण कुच्छणा गार कंटका सिग्ग आयभेदो य ।
संजमतो पाणादी आगाह निमज्जणादीया ।।

वृ- निस्सरणं नाम फेल्हसणं । कुत्सना अङ्गुल्यन्तराणां कोतः गाराः कर्करकाः । कण्टकाश्च स्थूलशूलादयः । सिग्गत्ति देशीपदमेतत् परिश्रम इत्यर्थः । एष आत्मभेद एते आत्मविराधनायै दोषा इत्यर्थः । संयमतः संयमे पुनरयं दोषः प्राणाद्वीन्द्रियादय आदिशब्दात् पृथिवीकायादिपरिग्रहः, ते विद्यन्ते, तथा यदि सुखेनात्र गच्छामीति विचिन्त्य सोदके कर्दमे गच्छति तथा कचिदगाधे निमज्जति, आदिशब्दात् पादजङ्घादिक्षोभिताः सकर्दमजलविप्रुष उत्थापयति, ताभिश्च प्राणादिविघातः, सन्मुखागच्छत्-पुरुषादिखरण्टनं निजशरीरोपकरणखरण्टनं चेति परिग्रहः ।

[भा.१७६८] धुवणे वि होंति दोसा उप्पीलणादी य बाउसत्तं च ।
सेहादीनमवन्ना अधोवने चीरनासो वा ।।

वृ- कर्दमाकुले मार्गे गमनतः कर्दम उपकरणे लगति, तथा चोपकरणस्य धोवनेऽपि, आस्तामधोवने इत्यपि शब्दार्थः, दोषाः । के ते इत्याह-उत्पीडनादय उत्पीडनं प्राणादीनां प्लावनमादिशब्दात् शरीरायासस्वाध्यायविधातादिपरिग्रहः । अपि च वस्त्राणि शरीरं च प्रक्षालयतो बाकुशिकत्वमुपजायते, शरीरोपकरणबकुशीकारणात्, अथ न प्रक्षालयति, तर्ह्यधोवने शैक्षकादीनामवज्ञासंभवश्चीवरनाशश्च कर्दमेन शटनात् । वाशब्दः समुच्चये ।। सम्प्रति प्राणसंभवे दोषानाह-

[भा.१७६९] मुइंगविच्छुगादिसु दो दोसा संजमे य सेसेसु ।
नियमा दोस दुगुंछिय अथंडिल निसग्ग धरणे य ।।

वृ- मुइंगा ना पिपीलिका वृश्चिकादिषु शेषेषु च प्राणेषु बाहुल्येन संभवत्सु द्वौ दोषौ तद्यथा संयमे,

चशब्दादात्मनि च, आत्मविराधना संयमविराधना चेत्यर्थः, तत्र वृश्चिकादिभिर्दशादात्मविराधना, कीटिकादिसत्त्वव्याघाताच्च संयमविराधना ।। स्थण्डिलाभावे दोषानाह-नियमत्यादिस्थण्डिलाभावे अस्थण्डिले जुगुप्सिते वा स्थण्डिले निसर्गे पुरीषप्रश्रवणोत्सर्गे नियमाद् दोषाः संयमविराधनादयः । तत्रास्थण्डिले हरितकायादिव्यापादनात् संयमविराधना, पादादिलूहसनादात्मविराधना, जुगुप्सिते स्थण्डिले प्रवचनविराधना । अथैतद्दोषभयान्न व्युत्सृजति किन्तु धारयति । तत आह, धारेण च दोषा आत्मविघातादयः तथा च "पुरीषादिधारणे जीवितनाशादिः" "मुतनिरोह चक्खुं वच्चनिरोहे य जीवियं चयति" इत्यादिवचनात् । ग्लानत्वे च चिकित्साकरणतः संयमव्याघातः; ।। यत्र सङ्कटा वसतिर्यत्र द्वित्र्यादयो वसतयो न लभ्यन्ते तत्र दोषानाह-

[भा.१७७०] संकडीए संथारए विरल्ल अविरल्लणे भवे दोसा ।
वाघातेन य अन्नाऽसतीए दोसा उ वच्चंते ।।

वृ- वसतौ सङ्कटायां सत्यामुपधेः विरल्लेति विस्तारणे वा दोषा भवन्ति के ते इति चेदुच्यते;-यदि उपधिस्तीमितो विस्तार्यते ततः सङ्कटत्वादन्यमप्यतीमितमुपधिं तीमयति । अथ न विस्तार्यते तर्हि स कोथमुपयाति, तत्संसर्गतः शरीरस्य च मान्द्यमुपजायते । एकस्यश्च वसतेः कथमपि व्याघाते अन्यस्याश्च अभावे ग्रामान्तरं व्रजनीयं, तत्र च व्रजति संयमात्मप्रवचनविराधना । तथा हि-मार्गे जल-हरितकायादिव्यापादनात् संयमविराधना अगाधे सलिले प्रविशत आत्मविराधना, वसत्यलाभतो वर्षाकालेऽपि वर्षप्रपातेनावरुध्यमानान् पथगिच्छतस्तान् दृष्ट्वा लोकः प्रवचनं कुत्सयते, ईदृशा एवैते वर्षास्वपि नाश्रमं क्वचिदपि लभन्ते इति प्रवचनविराधना ।। गोरसाभावे दोषानाह-

[भा.१७७१] अतरंतबालवुड्ढा अभाविता चेव गोरसस्स असती ।
जं पाविहित्ति दोसं आहारमएसु पाणेसु ।।

वृ- अतरन्तो नाम असहास्तथा बाला वृद्धाश्च तथा येऽभाविता येषां गोरसव्यतिरेकेण नान्यत्किमपि प्रतिभासते, ते गोरसस्य असति अबावे आहारमये, प्राणेषु सत्सु यद्गाढानागाढपरितापनादिकं दोषं प्राप्स्यन्ति, तन्निमित्तं सर्वमपि प्रायश्चित्तमाचार्यो लप्स्यते, तस्माद्यत्र तदभावस्तत्र न वस्तव्यम् ।

[भा.१७७२] ननु भणितो रसच्चाओ, पणीयरसभोयणे य दोसा उ ।
किं गोरसेन भंते, भन्नइ सुण चोयग इमं तु ।।

वृ- ननु सूत्रे रसानां क्षीरादीनां त्यागो भणितः, "अनशनमूनोदरता, वृत्तेः संक्षेपणं, रसत्यागः" इत्यादिबाह्यतपोव्यावर्णनात् । प्रणीतरसभोजने च दोषाः कामोद्रेकादयः शरीरोपचयादिभावात्, ततः किं भदन्त गोरसेन कर्तव्यम् । सूरिराह-श्रृणु चोदक ! इदं वक्ष्यमाणम् ।। तदेवाह-

[भा.१७७३] कामं तु रसच्चागो, चतुत्थमंगं तु बाहिरतवस्स ।
सो पुन सहूण जुज्जति असहुण य सज्ज वावत्ति ।।

वृ- काममनुमतमेतत् । रसत्यागश्चतुर्थमङ्गं चतुर्थो भेदो बाह्यतपसः षड्भेदात्मकस्य । केवलं, पुनःशब्दः केवलार्थः, स रसत्यागः सहानां युज्यते संगच्छते । असहानामसमर्थानां रसाभावे सद्यस्तत्कालं व्यापत्तिर्मृत्युः ।। अन्यच्च-

[भा.१७७४] अगिलाए तवोकम्मं परक्कमे संजलोति इति वुत्तं ।
तम्हा उ रसच्चाओ न नियमतो होति सव्वरसा ।।

वृ- संयतस्तपःकर्म प्रति अग्लान्या पराक्रमेदित्युक्त भगवता तस्मान्न नियमतः सर्वस्य रसत्यागो भवति।

[भा.१७७५] जस्स उ सरीरजवणा, रसे पणीयं न होइ साहुस्स।
सो विय हु भिन्नपिंडं भुंजउ अहवा जहसमाही॥

वृ- यस्य साधोः शरीरयापना न प्रणीतं प्रणीतरसभृते भवति, सोऽपि च आसतां पूर्वोक्ता असहा इत्यपिशब्दार्थः। हु निश्चितं भिन्नपिण्डं धृतादिना मिश्रितं गलितापिण्डं भुञ्जीत। अथवा यथासमाधि क्षीरादि भुड्क्ते केवलं मा गृद्धिर्भूयादिति संपृष्ट(संमृष्ट) पानकादिना मीलयित्वा क्षीरमापिबेत्॥

[भा.१७७६] चउभंगो अजनाउलकुलाउले चेव ततियभंगो उ।
भोइयमादि जनाउल कुलाउल मडंबमादीसु॥

वृ- जनाकुल-कुलाकुलयोश्चतुर्भङ्गिका जनाकुलमपि कुलाकुलमपीति थमो भङ्गः, जनाकुलं न कुलाकुलमिति द्वितीयः, न जनाकुलं कुलाकुलमिति तृतीयः; न जनाकुलं नापि कुलाकुलमिति चतुर्थः, प्रथमभङ्गे बहूनि कुलानि बहूनि मानुषाणि। द्वितीयभङ्गे कुलानि स्तोकानि जनास्त्वतिबहवः, कुले कुले भोजिकादिजनानां सहस्रसंख्याया भावात्। तृतीयभङ्गे बहूनि कुलानि जनाः स्तोकाः, गृहे गृहे एकस्य द्वयोर्वा मानुषयोर्भावात्। चतुर्थभङ्गे न बहूनि कुलानि नापि बहवो जनाः; कतिपयकुलानां प्रतिकुलं च स्तोकमानुषाणां भावात्॥ अत्र यौ भङ्गौ ग्राह्यौ तावाह-अजनाकुलेत्यादिना न जनाकुलं कुलाकुलमिति तृतीयो ग्राह्यः एतदनुज्ञानात् प्रथमः सुतरामनुज्ञातो द्रष्टव्यस्तस्योभयगुणोपेतत्वात्। आह च चर्णिकृत्- "जइ ताव तइओ भंगो। अनुन्नाओ प्रगेव पढमो भंगो अनुन्नातो" इति, शेषौ तु द्वौ भंगौ नानुज्ञातौ कुलानामल्पत्वात्॥ सम्प्रति जनाकुलतां कुलाकुलतां च व्याख्यानयति-भोइय इत्यादि प्रथमभङ्गे द्वितीयभङ्गे च जनाकुलं भोजिकादिभिरतिप्रभूतैर्जनैराकीर्णत्वात् कुलाकुलं मडम्बादिषु स्थानेषु। तथा हि-मडम्बे अष्टादशकुलसहस्राणि, आदिशब्दात्पत्तनादिपरिग्रहः। व्याख्यातं जनकुलद्वारम्॥

[भा.१७७७] वेज्जस्स ओसहस्स य, असतीए गिलाणउ जं पावे।
वेज्जसगासं नेंते आनंते चेव जे दोसा॥

वृ- यदि नाम कोऽपिग्लानो जायते, तदावैद्यस्य औषधस्य चासत्यभावे यत् ग्लानो अनागाढागाढपरितापनादि प्राप्नोति तन्निमित्तं सर्व प्रायश्चित्तमाचार्यः प्राप्नोति। अन्यच्च तादृशे क्षेत्रेऽवतिष्ठमानो वैद्योऽत्र नास्तीति ग्लानेऽन्यस्मिन् ग्रामे वैद्यस्य सकाशं नीयमाने आनीयमाने वा ये दोषा अनागाढमनागाढं वा परितापनं स्तेनैरुपकरणाद्यपहरणं व्याघ्रादिश्वापदैर्भणमित्यादि तद्धेतुकमपि प्राप्नोति। एवमौषधस्याप्यानयसाधुषु ग्रामान्तरे प्रेष्यमाणेषु दोषा वाच्याः॥

[भा.१७७८] नेचइया पुन धन्नं दलंति असारअंचितादीसु।
अहिवंमि होइ रक्खा, निरंकुसेसुं बहू दोसा॥

वृ- निचयेन संचयेनार्थाद् धान्यानां ये व्यवहरन्ति ते नैचयिकास्ते असारा दरिद्रा अञ्चिताः पूज्या राजमान्याः पितृपितृव्यादयो वा आदिशब्दादनञ्चितादिपरिग्रहस्तेषु क्रयेणान्यथा वा धान्यं ददति। ततः सर्वत्र भिक्षा सुलभोपजायते॥ तथा अधिपेऽधिपतौ विद्यमाने रक्षा भवति। निरङ्कुशेषु लोकेषु मध्ये पुनर्वसतो बहवो दोषा उपकरणापहारापमानादिलक्षणाः॥ पाषण्डद्वारमाह-

[भा.१७७९] पासंडभाविएसुं, लंभति ओमानमो अतिबहूसु।

अवि य विससुवलद्धी हवंति कज्जेसु उ साहाया ॥

**वृ-** यदि स्तोकाः पाषण्डास्ततोऽशनादीनि वस्त्राणि भैषजानि चातिसुलभानि भवन्ति अतिबहुषु पुनः पाषण्डेसु सत्सु पाषण्डभावितेभ्यो जनेभ्यो, गाथायां सप्तमी पञ्चम्यर्थे, अपमानं लभन्ते । अपीति संभावने । चः पुनरर्थे । संभाव्यते पुनरियं विशेषोपलब्धिरन्यपाषण्डेभ्योऽतिशयोपलब्धिर्यथा यदन्यत् पाषण्डिनां कल्पते तत्साधूनां न कल्पते । तत एवं लोको भावितः सन् साधूनां कल्पिकं ददाति । तथा कार्येषु च बहुप्रकारेषु शृङ्गनादि(तादि)लक्षणेषु वयमपि पाषण्डा एतेऽपि च पाषण्डा धर्मस्थिता इति कृत्वा सहाया भवन्ति ॥ सम्प्रति भिक्षाद्वारमाह-

**[भा.१७८०]** नाणतवाण विवड्ढी गच्छस्स य संपया सुलमभिक्खे ।
न य एसणातो घातो नेव य ठवणाए भंगो उ ॥

**वृ-** सुलभा भिक्षा यत्र तस्मिन् सुलभभिक्षे ग्रामादौ वसतां ज्ञानस्य श्रुतज्ञानस्य तपसश्चा-नशनादेर्विशिष्टा वृद्धिर्भवत्याहारोपष्टम्भतः स्वाध्यायस्य तपश्च कर्तुं शक्यत्वात्तथा गच्छस्य सम्पत् स्फीतताऽतिविशिष्टा भवति । शिष्याणां प्रातीच्छिकानां चाऽनेकेशामागमात् न च एषणाया घातः प्रेरणा, नापि स्थापनाया मासकल्पवर्षाकल्परूपाया अथवा स्थापनाकुलानां भङ्गः प्रेरणा ॥

**[भा.१७८१]** वायंतस्स नु पनगं पनगं पडिच्छतो भवे सुत्तं ।
एगग्गं बहुमानो कित्ती य गुणा य सज्झाए ॥

**वृ-** यत्र स्वाध्यायश्चतुःकालं निर्वहति तत्र वर्षावासः कर्तव्यो यतः स्वाध्यायेऽमी गुणाः सुत्रमाचारादिकं सूत्रतोऽर्थतस्तदुभयतश्च वाचयतः पञ्चकं वक्ष्यमाणं सङ्ग्रहादिकं भवति । यथा च वाचयतः पञ्चकं तथा प्रतीच्छतः श्रोतुरपि पञ्चकं तस्यापि संग्रहादिनिमित्तं श्रुतश्रवणाय प्रवृत्तेः । तथा वाचयतः प्रतीच्छतश्चैकाग्र्यं श्रुतेकरतोपजायते, सा च विस्रोतसिकारिका भवति । तथा बहुमानो भक्तिः श्रुतस्य तीर्थकरस्य च कृतो भवति । कीर्तिश्च अवदाता सकलधरामण्डलव्यापिनी यथा भगवतः आर्यवैरस्येति ॥ अधुना पञ्चकं व्याख्यानयति-

**[भा.१७८२]** संगहुवग्गह निज्जर सुयपज्जवजायमव्ववच्छित्ती ।
पनगमिणं पुव्वुत्तं जे चायहितोपलंभादी ॥

**वृ-** यत्पञ्चकं पूर्वमुक्त तदिदं तद्यथा-सङ्ग्रह उपग्रहो निर्जरा श्रुतपर्यवजातमव्यवच्छित्तिश्च । तत्र संग्रहः शिष्यादेस्तथा च श्रुते शिष्यादयः संगृह्यन्ते । उपग्रह उपष्टम्भः स च श्रुतज्ञानादिप्रदानतः । निर्जरा ज्ञानावरणादिकर्मविनिर्जरणं । श्रुतपर्यवजातं प्रभूता प्रभूततरा श्रुतज्ञानपर्यायवृद्धिः । अव्यव-च्छित्तिस्तीर्थस्य । ये चात्महितोपलंभादय आत्महितोपलंभः परहितोपलंभः उभयहितोपलंभः एकाग्र्यं बहुमानं चेति तद्वा पञ्चकं प्रतिपत्तव्यम् ॥

**[भा.१७८३]** एवं ठियाण पालो आयरिओ सेस मासियं लहुयं ।
कप्पट्ठिनीलकेसी आयसमुत्था परे उभए ॥

**वृ-** एवं त्रयोदशदोषविमुक्ते त्रयोदशभिर्गुणैरुपेते क्षेत्रे कारणवसतः त्रयाणां वर्षासु स्थितानां द्वयोर्भिक्षार्थं विनिर्गमे तृतीयः पश्चात्पालो वसतिपालः आचार्यः स्थापनीयः । अथान्यं स्थापयति तत आह-शेषे आचार्यव्यतिरिक्ते वसतिपाले स्थाप्यमाने प्रायश्चित्तं मासिकं लघु । तथा यदि तरुणं श्रमणं वसतिपालं पश्चात् स्थापयति, तत इमे स्वलिङ्गासेवनादिका दोषास्तद्यथा-आत्मसमुत्थाः परे परसमुत्था

उभयस्मिन् उभयसमुत्थाः । कस्या इवेत्याह-कप्पट्ठिनलिकेसीति कल्पस्थिता बालिका नीलकेशी कृष्णकेशी तरुणीत्यर्थः, ततो विशेषणसमासः, तस्या इव, विभक्तिलोप इवलोपश्च प्राकृतत्वात् । इय[illegible] तरुणी [illegible] तरुणानां [illegible] प्रार्थनीया भवति । एवं तरुणोऽपि तरुणीनां महतीनां च प्रार्थनीयस्ततस्तस्मिन् पश्चात्स्थाप्यमाने स्वलिङ्गपरलिङ्गगृहिलिङ्गासेवनविषया आत्मसमुत्थाः परसमुत्थाः उभयसमुत्थाश्च मैथुनदोषाः संभवन्ति । एतदेवाह-

**[भा.१७८४]** तरुणे वसहीपाले कप्पठिसलिंगमादि आउभया ।
दोसा उ पसज्जंती अकप्पिए दोसिसे अन्ने ।।

**वृ-** तरुणं वसतिपाले सति कप्पट्ठित्ति तरुण्याः बालिकाया इव स्वलिङ्गादिकाः स्वलिङ्गासेवन-गृहिलिङ्गासेवनरूपा आ उभयाइति आत्मसमुत्था उभयसमुत्था उपलक्षणमेतत् परसमुत्थाश्च दोषास्तस्य प्रसजन्ति अकल्पिके च बालादाविमे दोषास्तानेवाह-

**[भा.१७८५]** बलि धम्मकहा किड्डा पमज्जणा वरिसणा य पाहुडिया ।
खंधार अगनि, भंगे मालतवेना, य नातीय ।।

**वृ-** साधवः कदाचित्कारणवशतः सप्रावृत्तिकायां वसतौ स्थिता भवेयुः, तत्र यदि बालादिर्वसतिपालः क्रियते तदा बलिदोषः । तथा हि-तत्र बलिकारकाः स्वभावेन वा गच्छेयुः कैतवेन वा, तत्रापि ये कैतवेन ते प्रथमत एवोपकरणहरणबुद्ध्या, ये तु स्वभावतस्ते नोपकरणहरणनिमित्तमागच्छन्ति । किन्त्वागतानां बलिं कुर्वतां बालमेकाकिनं दृष्ट्वा हरणबुद्धिरुपजायते । ततोऽपहरन्ति । अथवा बलौ विक्षिप्यमाणे उपकरणं कूरेण खरण्टयते । ततो बालो जल्पति बहिरुपकरणं निष्काशयामि । एवमुक्त्वा सकलमप्युपकरणादाय बहिर्निर्गतस्तावदभ्यन्तरे ते उपधिमपहरन्ति । ये तु कैतवेन समागच्छन्ति ते उपधिमपहर्तुकामा ब्रुवते-क्षुल्लक ! बलिरेष समागच्छति ततस्त्वं बहिर्निर्गच्छ । एवं तं बालं बहिर्निष्काश्योपधिमपहरन्ति । अथवा ब्रूयुरिदं वयं बलिं करिष्यामस्ततस्त्वं बहिस्तिष्ठान्यथा कूरेण खरण्टना भविष्यति । एवमुक्ते बहिर्निर्गते बाले उपधिमपहरन्ति । अथवेदमाचक्षेत, उपधिमभ्यन्तराद् बहिरपनय यावद्बलिं वयं विदध्महे । स च बालस्तत्कार्यमजानानः समस्तमुपकरणमेकवारं ग्रहीतुमशक्नुवन् स्तोकं गृहीत्वा बहिः संस्थाप्य यावदन्यस्य ग्रहणाय मध्ये प्रविशति तावत्ते धूर्ता अपहरन्ति ।। धम्मकहत्ति धर्मकथाश्रवणाय केचित्स्वभावत आगच्छेयुरपरे कैतवेन समागत्य येद् ब्रुवते-कतय क्षुल्लकास्माकं धर्मकथां, स च तत्त्वमजानानः कथामारभते । ततः कथाप्रमत्ते केचित्तथैवोपविष्टाः श्रृण्वंत्यपरे तूपधिमपहरन्ति ।। किड्डत्ति क्रीडानिमित्तमपि केचित् स्वबावतः समागच्छन्त्यपरे कैतवेन । तेषु च समागतेषु स बालकः स एव प्रमार्जने आवर्षणे च वेदितव्यः ।।

पाहुडिया इति प्राभृतिकाभिक्षा अर्च्चनिका च । तत्र केचित् कैतवेन स्वभावेन वा वदन्ति, क्षुल्लक ! गृहाण भिक्षाम्, अथवा बहिर्निर्याहि यावद्वयमर्चनिकां कुर्मस्ततो यावद्भिक्षार्थं याति बहिर्वा निर्गच्छति तावदपहरन्ति ।। खन्धारत्ति अपरे कैतवेन स्वभावेन वा वदेयुर्यथा एष राजा सह स्कन्धावारः समागच्छति । तत्रि यदि स्वभावेन ततो नश्यति, स नश्यन् बालस्तैरपह्रियते । कैतवेन समागच्छंतो ब्रुवते, क्षुल्लक! पलायस्व, स्कन्धावारः समागच्छति, ततः स नश्यति । इते अपहरन्ति ।। अगणित्ति, प्रदीपनं लग्नं परतः स्वभावेन श्रुत्वा स्वयं वावलोक्य स बालक उपधिलोभाद्वा स्वयं वसतेर्बहिर्न निर्गच्छति नापि किञ्चिदुपकरणं निष्काशयति । ततस्तस्य बालकस्योपकरणस्य च विनाशः, यदि उपकरणनिष्काशनाय

मध्ये प्रविष्टो, गुप्तः सन्, स बालको दह्येत कैतवेन वा केचित् ब्रूयुर्मन्दभाग्य ! नश्य प्रदीपनकं लग्नं वर्तते । एवमुक्ते स उपकरणं बहिर्निष्काशयितुमारभते ततोऽपहरन्ति ।।

भङ्गे मालवस्तेनाति मालवा म्लेच्छविशेषाः शरीरापहारिणः, स्तेना उपकरणापहारिणस्तैर्भङ्गे स बालको भयतो जनेन सार्धं नश्यति, न च सारमुपधिं गृह्णाति । यदि वा उपधिप्रतिबद्धः सन् स वसतावेव तिष्ठेत्, ततः स मालवैरपह्रियते स्तेनैर्वा उपकरणमिति । अथवा केचित् कैतवेन ब्रूयुर्मालवाः स्तेना वा क्षुल्लक ! समापतितास्तस्मात् पलायस्व जनेन सार्धमिति, एवमुक्ते स बालकस्तत्त्वमजानानो नश्यति, इतरे उपकरणमपहरन्ति ।। नातित्ति ज्ञातयः स्वजनास्ते समागतास्तैरेकाकी दृष्टस्ततो नीयते, अन्ये वोपधिमपहरन्ति । अथवाऽन्येन केनचित् आगच्छन्ति दृष्टाः तेन कथितं क्षुल्लक ! तव ज्ञातयः समागच्छन्ति । ततः स पलायते इतरश्चोपकरणमपहरति । अथवा कोऽपि धूर्तः कैतवेन ब्रूयात्, क्षुल्लक ! क्व ते निजकाः, क्षुल्लकः प्राह-अमुके ग्रामे नगरे वा, सोऽन्यस्मै कथयति, ततस्तेषां सजातीनां नामचिन्हान्यवगम्य तस्य क्षुल्लकस्य समीपमागत्य भणति- अमुकस्य त्वं निजकः । क्षुल्लकः प्राह- कथं त्वं जानासि ! ततः स तन्मातापित्रादीनां नामवर्णादि कथयति । ततः क्षुल्लकस्य प्रत्यय उपजायते, ततो वक्ति सत्यमहं तेषां निजकः । ततो धूर्तो ब्रूते- आगतास्तव निमित्तं, मया अमुकप्रदेशे दृष्टा इति, ततः स पलायते, इतरे हरन्त्युपकरणम् । एवं यथा बालेऽकल्पिके दोषास्तथा अव्यक्तो निष्प्रमत्ते कथाप्रमत्ते वा कल्पिके वेदितव्याः ।

**[भा. १७८६]** तम्हा पालेइ गुरु पुव्वं काउं सरीरचिंतं तु ।
इहरा आउवहीणं विराहधना धरंतमधरंते ।।

**वृ-** यतस्तरुणे बालकादौ वाऽकल्पिके वसतिपाले स्थितेऽनन्तरोक्त दोषा आचार्ये तु न भवन्ति, तस्माद्गुरुराचार्यो वसतिं पालयति, कथमिति चेदत आह- पूर्वं शरीरचिन्तां कृत्वा संज्ञाभूमिं गत्वा इत्यर्थः, अथ शरीचिन्तां न करोति ततः प्रायश्चित्तं मासलघु, इमे च दोषाः । 'इहराउ' इत्यादि, इतरथा शरीरचिन्ताया अकरणे यदि संज्ञां धारयति तत आत्मविराधना मरणस्यग्लानत्वस्य चावश्यं तन्निरोधे भावात् । अथ न धारयति किन्तु मात्रके व्युत्सृजति ततः श्राद्धादीनामागतानां गन्धागमन उड्डाहः । अथ बहिर्याति च तत्रोपधेर्विराधना तस्करापहाररूपये चैकाकिनो दोषास्ते च भवन्ति ।। एष संस्तरणे विधिरुक्तोऽसंस्तरणे पुनराचार्यो वसतिं प्रलोकमानस्तस्मिन्नेव पाटके प्रत्यासन्नेषु गृहेषु भिक्षार्थं हिण्डते । तथा चाह-

**[भा. १७८७]** जइ संघाडो तिण्ह विपज्जत्तानेइ तो गुरु न नीति ।
अह नवि आणे ताहे वसहिआलोगहिंडणया ।।

**वृ-** यदि सङ्घाटकः साधुयुग्मं त्रयाणामपिआत्मद्विकस्य गुरोश्चेत्यर्थः पर्याप्तं परिपूर्णमानयति ततो गुरुर्भिक्षार्थं न न्येति निर्गच्छति । अथ नैव त्रयाणां पर्याप्तमानयत्यलाभादशक्तेर्वा, तदा वसतेरालोको यथा भवत्येवमाचार्यस्य प्रत्सन्नेषु गृहेषु हिण्डनम् ।। कियत्पुनस्तत्र गृह्णातीति चेदत आह-

**[भा. १७८८]** आसन्नेसुं गेण्हइ जत्तियमेत्तेण होइ पज्जत्तं ।
जायइए य ऊणं इयराणीयं तु तं गेण्हे ।।

**वृ-** तस्मिन्नेव पाटके प्रत्यासन्नेषु गृहेषु गृह्णाति तावन्मात्रं यावन्मात्रेण पर्याप्तं परिपूर्णं भवति । अथ तावन्न लभ्यते तर्हि यावता ऊनं तत् तावत् इतराभ्यामानीतं गृह्णाति । न च त्रयोऽपि परिपूर्णं भुञ्जते किं

त्वल्पं, तथा चाह–

[भा.१७८९] सव्वे वप्पाहारा भवंति गेलन्नमादिदोसभाय ।
एवं जयंति तहियं वासावासे वसंता उ ।।

वृ- ग्लान्यादिदोषभयात्सर्वेऽपि तेऽल्पाहारा भवन्ति । एवं तत्र वर्षावासे वर्षायोग्ये क्षेत्रे वसन्तो यतन्ते ।।

**मू. (१०३)** *से गामंसि वा जाव संनिवेसंसि वा बहूणं आयरियउवज्झायाणं अप्पबिइयाणं बहूण गणावच्छेइयाणं अप्पतइयाणं कप्पइ हेमंतगिम्हासु चरिए अन्नमन्नं निस्साए ।।*

**मू. (१०४)** *से गामंसि वा जाव संनिवेसंसि वा बहूणं आयरियउवज्झायाणं अप्पतइयाणं बहूण गणावच्छेइयाणं अप्पचउत्थाणं कप्पइ वासावासं वत्थए अन्नमन्नं निस्साए ।।*

वृ- अस्य सूत्रसंबंधमभिधित्सुराह–

[भा.१७९०] इति पत्तेया सुत्ता डिगसुत्ता इमे पुन गुरूणं ।
दुप्पभिई तप्पभिई बहुत्तमिह मग्गणा खेत्ते ।।

वृ- इत्येवमुपदर्शितेन प्रकारेणाष्टौ प्रत्येकानि प्रत्येकभावीने सूत्राण्युक्तानि, प्रत्येकानन्तरं च समुदाय इतीमे पुनर्द्वे वक्ष्यमाणे पिण्डकसूत्रे, केषां पिण्डक इत्याह-गुरुणामाचार्यादीनां, आचार्यादिसमुदायविषये इत्यर्थः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-सेशब्दोऽथशब्दार्थः, अथ ग्रामे वा यावत्करणात् 'नगरंसि वा पट्टणंसि वा मडंबंसि वा' इत्यादिपरिग्रहः, सन्निवेशे वा बहूनां द्वित्रिप्रभृतीनामाचार्योपाध्यायानामात्मद्वितीयानां बहूनां द्वित्रिप्रभृतीनां गणावच्छेदकानामात्मतृतीयानां हेमन्तग्रीष्मयोश्चरितुं कल्पते, अन्योन्यनिश्रया परस्परोपसम्पदा । अथ ग्रामे वा यावत् सन्निवेशे वा बहूनामाचार्योपाध्यायानामात्मतृतीयानां बहूनां गणावच्छेदकानामात्मचतुर्थानां च वर्षावासं वस्तुं कल्पते, अन्योन्यनिश्रयेत्येष सूत्रसंक्षेपार्थः ।। अत्र बहुत्वव्याख्यानार्थमाह-'दुप्पभिइ' इत्यादि द्विप्रभृति त्रिप्रभृति वा, अत्र बहुत्वमवगन्तव्यम् । किमर्थमिदं सूत्रमिति चेदुच्यते-इह मार्गणा क्षेत्रे कर्तव्येत्येतदर्थं एकस्मिन् क्षेत्रे च स्थितानां कस्य क्षेत्रमाभवति कस्य नेति चिन्तायां ये परस्परनिश्रया समाप्तकल्पा वर्तन्ते, तेषामाभवत्यन्येषां नेत्येवमर्थमित्यर्थः ।। एतदेवाक्षेपपुरस्सरमाह-

[भा.१७९१] हेट्ठा दोण्ह विहारो, भणितो किं पुन इदानि बहुयाणं ।
एगखित्तठियाणं तु, मग्गणा खेत्त अक्खेत्ते ।।

वृ- ऋतुबद्धे काले द्वयोर्विहारोऽधस्तात्पूर्वं द्वितीयसूत्रे, उपलक्षणमेतत्, वर्षासु षष्ठसूत्रेण त्रयाणां, ततस्तेनैवेदं गतार्थं, किमर्थं पुनरिदानीं बहुकानामाचार्यादीनां सूत्रम् ? । सूरिराह-एकक्षेत्रस्थितानां मार्गणा कर्तव्या कस्य क्षेत्रं भवति, कस्याक्षेत्रं कस्य नाभवति क्षेत्रमित्यर्थः तत्र परस्परोपसम्पदा समाप्तकल्पभूतानां भवत्यन्येषां न भवत्येवमर्थम् । तथा चैतदेव निर्युक्तिकृत्सविस्तरमाह-

[भा.१७९२] उउबद्धे समत्ताणं उग्गहो एगदुगपिंडियाणं पि ।
साहारणपत्तेगे संकमति पडिच्छए पुच्छा ।।

वृ- पञ्च जनाः समाप्तकल्पाः, ऊना असमाप्तकल्पाः; ऋतुबद्धे काले बहूनामाचार्याणां परस्परोपसम्पदा समाप्तकल्पानामेकद्विकपिण्डितानामपि । पञ्चाप्येककाः सन्तः पिण्डिता एकपिण्डिताः, अथवा द्विकेन वर्गद्वयेन, एक एकाकी एकश्चतुर्वर्गः, अथवा एको द्विवर्गोऽपरस्त्रिवर्ग इत्येवंरूपेण पिण्डिता

द्विकपिण्डिताः तेषामेकद्विकपिण्डितानामापिशब्दात्त्रिवर्गपिण्डितानां चतुर्वर्गपिण्डितानामपि । तत्र त्रिवर्गपिण्डिता द्वावेकाकिनावेकस्त्रिवर्गः, चतुर्वर्गपिण्डितास्त्र एकाकिन एको द्विवर्गः, अन्यग्रह आभवति न शेषाणामसमाप्तकल्पस्थितानाम् । यदि पुनर्द्वौ गच्छौ समाप्तकल्पावेकत्र क्षेत्रे समकं स्थितौ स्याताम्, तदा तत्क्षेत्रमाभवतिद्वयोरपि द्वयोः साधारणम् । तच्च साधारणं क्षेत्रं तेषां समाप्तकल्पतया प्रत्येकं स्थितानां मध्ये ये सूत्रार्थनिमित्तं यानुपसम्पद्यंते तत उत्तीर्य तेषामुपसम्पद्विषयाणामाभाव्यतया संक्रामति, तथा चाह-साधारणं क्षेत्रं प्रत्येकं व्यवस्थितमपि प्रतीच्छके प्रतीच्छकादुत्तीर्य तेषां संक्रामति । ते हि प्रतीच्छकास्तन्निश्रामुपपन्नास्ततस्तेषां क्षेत्रमितरेषां सङ्क्रामति । अथ प्रतीच्छका नोपसम्पद्यन्ते, केवलं 'पुच्छन्ति' पृच्छामात्रं सूत्रार्थविषयः क्रियते । तदा 'पुच्छाहिति' इत्यादिना मार्गणा कर्तव्या ।।

अत्रैव विशेषमाह-

**[भा.१७१३]** अप्पबितियप्पतईय द्विवाण खेत्तेसु दोसु दोण्हं तु ।
उउबद्धे होइ खेत्तं, गमनागमनं जतो अत्थि ।।

**वृ-** एकस्मिन् क्षेत्रे एक आचार्य उपाध्यायो वा आत्मद्वितीयः स्थितोऽपरस्मिन् क्षेत्रेऽपर आचार्य उपाध्यायो गणावच्छेदको वा (वात्म) तृतीयस्थितः, केवलं परस्परमुपसंपदा, ततस्तयोर्द्वयोः क्षेत्रयोरात्मद्वितीयात्मतृतीयस्थितयोऋतुबद्धे काले तदुभयमपि क्षेत्रमाभाव्यं भवति कुत इत्याह- गमनागमनं यतःपरस्परमस्ति परस्परोपसम्पन्नत्वादतः समाप्तकल्पतया भवत्याभाव्यमिति ।।

सम्प्रति यैः कारणैरुपसम्पद्यते तान्याह-

**[भा.१७१४]** खेत्तनिमित्तं सुहदुक्खतो व सुत्तत्थकारमे वावि ।
असमत्ते उवसंपय संमत्ते सुहदुक्खयं मोत्तुं ।।

**वृ-** असमाप्तस्यासमाप्तकल्पस्योपसम्पद्भवति क्षेत्रनिमित्तं सुखदुःखहेतोर्वा सूत्रार्थकारणाद्वा । किमुक्तं भवति । अन्यत् तादृशं क्षेत्रं न विद्यते, यदि वा असमाप्तकल्पतया विहरतां दुःखं, समाप्तकल्पस्य पुनरुपसंपदि, सुखदुःखतां मुक्त्वा, शेषाणि कारणानि द्रष्टव्यानि, समाप्तकल्पा अन्यक्षेत्रं तादृशं नास्तीति क्षेत्रनिमित्तं सूत्रनिमित्तं तदुभयनिमित्तं वान्यत् गच्छान्तरमुपसंपद्यंते, न सुखदुःखहेतोः, समाप्तकल्पतया तेषां विहरणे दुःखाभावादिति भावः ।। अथ ते कथमेकाकिनोऽसमाप्ता वा जाता इत्यत आह-

**[भा.१७१५]** पडिभग्गेसु मएसु व असिवादीकारणेसु फिडिया वा ।
एएण तु एगामी असमत्ता वा भवे थेरा ।।

**वृ-** शेषेषु साधुषु व्रतात्प्रतिभग्नेषु मृतेषु वा, अथवा, अशिवादिभिः कारणैः स्फिटिताः परस्परं विश्रुटिताः, एतेन स्थविरा एकाकिनोऽसमाप्ता वा भवेयुः ।।

साम्प्रतमेगदुगपिंडियाणं पि, इत्यस्य व्याख्यानार्थमाह-

**[भा.१७१६]** एगदुगपिंडिया वि हु लभंति अन्नोन्ननिस्सिया खेत्तं ।
असमत्ता बहुया वि हु न लभंति अनिस्सिया खेत्तं ।।

**वृ-** एकका: पिण्डिता एकपिण्डिताः, द्विकेन वर्गद्वयेन पिण्डिताः, अपिशब्दात्रिकपिण्डिताश्चतुष्क पिण्डिताश्च । अमीषां भावना प्रागेवोक्ता, हु निश्चितम्, अन्योन्यनिश्रिताः परस्परमुपसम्पन्ना लभन्ते क्षेत्रं, ये पुनः असमाप्ताः परस्परोपसम्पद्ग्रहणाभावतोऽसमाप्तकल्पास्तिष्ठन्ति, ते परस्परमनिश्रिताः, निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शनमिति न्यायादत्र हेतौ प्रथमा । ततोऽयमर्थः ।

परस्परमनिश्रितत्वात् बहुका अपि सन्तो हु निश्चितं न लभन्ते क्षेत्रं, समासकल्पानामेव क्षेत्रस्याभावना, तथापूर्वाचार्यकृतस्थितिः ।।

**[भा.१७९७]**　　जइ पुन समत्तकप्पो दुहा ठितो तत्थ होज्ज चउरन्ते ।
चउरो वि अप्पभूते लभंति, दो ते इतरनिस्सा ।।

**वृ-** यदि पुनः समासकल्पः पञ्चजनात्मको वसतेः सङ्कटतादोषेणैकस्मिन् क्षेत्रे द्विधा स्थितः, एकस्यां वसतौ द्वौ जनावपरस्यां त्रयस्तथास्मिन् क्षेत्रेऽन्यस्यां वसतावन्ये चत्वारो जनाः स्थिता भवेयुः, तथापि चत्वारोऽपि तस्य क्षेत्रस्याप्रभवो, न तेषां तत् क्षेत्रमाभाव्यं भवति । यौ पुनर्द्वौतौ तत्क्षेत्रं लभेते ।। कुत इत्याह-इतरनिश्रौ, अत्रापि हेतौ प्रथमा, यतस्तावितरत्रयनिश्रावंतः समासकल्पत्वाल्लभंते ।।

अथ कस्मादसमासकल्पानामेकाकिनां चाभाव्यं क्षेत्रं न भवति, तत आह-

**[भा.१७९८]**　　एगागिस्स उ दोसा असमत्ताणं च तेन थेरेहिं ।
एस ठविया उ मेरा इति वि हु मा होज्ज एगागी ।।

**वृ-** यत एकाकिनः सतोऽसमातानां चासमासकल्पानां च दोषा भूयांसस्तेन कारणेन स्थविरैषा मर्यादा स्थापिता इत्यापि खलु कारणात् क्षेत्रानाभवनलक्षणात् एकानिऽसमासकल्पा वा मा भूवन्निति ।

सम्प्रति साहरणपतेगे इत्यादि व्याख्यानयति-

**[भा.१७९९]**　　दोमादि ठिया साहारणम्मि सुत्तत्थकारणा एक्के ।
जति तं उवसंपन्ने, पुव्वठिया वि संकंतं ।।

**वृ-** द्वयादयो द्विप्रभृतयो गच्छाः समासकल्पाः समकमेकस्मिन् क्षेत्रे स्थितास्तेषां तत् क्षेत्रमाभाव्यतया साधारणम्, तस्मिन् साधारणे क्षेत्रे स्थिताः सन्तो यदि तमेकं गच्छमन्ये सूत्रार्थकारणादुपसम्पद्यंते, अथवा ये पूर्वं समासकल्पतया स्थितास्तेषामाभवति तत्क्षेत्रं, न पश्चादागतानां समासकल्पानामपि, परं ते पूर्वस्थिता अपि यदि पश्चादागतं गच्छं सूत्रार्थकारणादुपसम्पद्यन्ते, तर्हि यस्य समीपमुपसम्पद्यन्ते तस्य तत्क्षेत्रं संक्रान्तं तस्य तदा भवति, नान्येषामिति भावः । ते हि तस्य प्रतीच्छकीभूताः, तेनं तेषां क्षेत्रमितरस्य संक्रामतीति ।।

अथ नोपसम्पद्यंते किन्तु सूत्रमर्थं या पृच्छन्ति, तत्राह-

**[भा.१८००]**　　पुच्छाहि तीहि दिवसं, सत्तहि पुच्छाहि मासियं हरति ।
अक्खेत्तुवस्सए पुच्छमाणे दूरावलिय मासो ।।

**वृ-**तिसृभिः पृच्छाभिः कृताभिः पृच्छ्यमानः परिपूर्णं दिवसं यावत्क्षेत्रगतं सचित्तादि हरति गृह्णाति, त्रिपृच्छादानतस्तस्य क्षेत्रस्यैकं दिवसं यावत्तदाभवनात्, सप्तभिः पृच्छाभिर्मासिकं हरति, किमुक्तं भवति ? सप्तपृच्छासु कृतासु पृच्छ्यमानः परिपूर्णमासं यावत्तत् क्षेत्रगणं सचितादि लभते मासं यावत्तस्य क्षेत्रस्य तदाभवनादिति । 'अवखेत्तुवस्सए' इति अक्षेत्रे स्थितानामुपाश्रये उपाश्रयविशेषा मार्गणा कर्तव्या, सा चाग्रे करिष्यते । तथा यदि पृच्छ्यमान आत्मीयमुपाश्रयं, दुरमुपलक्षणमेतत् आसन्नं वा, आवलिकाप्रविष्टमुपलक्षणमेतत्, मण्डलिकं वा पुष्पावकीर्णं वा कथयति, तदातस्मिन् प्रायश्चित्तं मासो लघुकस्तं च पृच्छन्तं न लभंत एष संक्षेपार्थो व्यासार्थोऽग्रे कथयिष्यते ।।

अक्षेत्रे उपाश्रयस्य मार्गणा कर्तव्येत्युक्तं तत्र तावदक्षेत्रमाह-

**[भा.१८०१]**　　ण्हाणानुजाण अद्धाणसीसए कुलगणे चउक्के य ।

गामाइवानमंतरमहे य उज्जानमादीसु ।।

[भा.१८०२] इंदक्कील मनोग्गाही जत्थ राया जहिं व पंच इमे ।
अमच्च पुरोहित सेठी सेनावइ सत्थवाहो य ।।

वृ- स्नानमर्हतः प्रतिमानां तन्निमित्तमेकत्रमिलितानां, अनुयानं रथयात्रा तन्निमित्तं मिलितानां, अथवा अध्वशीर्षकं यतः परं समुदायेन सार्थेन सहगन्तव्यं सम्यग् मार्गावहनात् तत्र मिलितानां, कुलत्ति कुलसमवायमिलितानां, गणत्ति गणसमवायमिलितानां चतुष्कं सङ्घः तत्समवायमिलितानां, गामाइ इत्यादि ग्राममहे वा, आदिशब्दान्नगरादिमहे वा, वानमन्तरमहे वा उद्यानमहे वा आदिशब्दात्तडागादिमहेषु वा, इन्द्रकीलकमहे वा, यत्र च सकलजनमनोग्राही राजा, यत्र वा इमे अमात्यपुरोहितश्रेष्ठि - सेनापतिसार्थवाहाः पञ्च गता वर्तन्ते । तत्र कथमपि गताः समकं स्थिताः तर्हि साधारणवसतिः, । अथ विषमं स्थितास्तर्हि ये पूर्वं स्थितास्तेषां वसतिराभवति नेतरेषां पश्चादागतानां । तस्यां च वसतौ यः शिष्यः शिष्यतया उपतिष्ठति तं वसतिस्वामिनो लभन्ते नेतरे ।।

'पुच्छमाणे दूरावलिय मासो' इत्यस्य व्याख्यानार्थमाह-

[भा.१८०३] पुप्फावकिन्न मंडलियावलिय उवस्सया भवे तिविहा ।
जो अब्भासे तस्स उ दूरे कहंतो न लभे मासो ।।

वृ- क्वचिद् ग्रामे नगरे वा साधवः पृथग् उपाश्रये स्थिताः ते चोपाश्रयाः त्रिविधा भवेयुः - पुष्पावकीर्णकाः, मण्डलिकाबद्धा आवलिकास्थिता वा स्थापना एतेषामुपाश्रयाणां मध्ये कुतश्चिदेकतरस्मादुपाश्रयाद्विचारादिनिमित्तं कोऽपि निर्गतस्तं दृष्ट्वा कोऽपि प्रव्रजिषुः पृच्छेत् । यथा कुत्र साधूनां वसतिरिति । स ब्रूते-किं कारणं त्वं पृच्छसि ? । शिष्यः प्राह-प्रव्रजिष्यामीति । तत्र यदि स एवं पृष्टः सन् 'दूरे कहन्तो न लभे मासो' इति आत्मयिमुपाश्रयं दूरमासन्नं या कथयति तर्हि तस्य प्रायश्चित्तं लघुको मासो, न च तं शिष्यं लभते, कस्य पुनः स आभवतीति चेत् तत आह-योऽभ्यासे तस्य, किमुक्तं भवति तस्मादवकाशात् यस्य प्रत्यासन्नतर उपाश्रयस्तस्याभवति ।।

[भा.१८०४] किह पुन साहेयव्वा उद्दिसियव्वा जहक्कमं सव्वे ।
अह पुच्छइ संविग्गे तत्थ व सव्वे व अद्धा वा ।।

वृ- कथं पुनः कथयितव्या उपाश्रयाः । सूरिराह-उद्देष्टव्या यथाक्रमं सर्वे यथा अमुकस्यामुकप्रदेशे । एवं कथिते यत्र व्रजति तस्य स आभवति । अथ स पृच्छति संविग्नान् बहुश्रुततरान् तपस्वितरांश्चेत्यर्थः । तत्र यथाभावमाख्यातव्यं, वितथाख्याने मासलघु, न च स तं लभते । किन्तु ये तपस्वितरा बहुश्रुततराश्च तेषां स आभवति । अथ सर्वे अर्धा वा संविग्नास्ततस्तथैवाख्याने यत्र स व्रजति तस्य स आभवति, न शेषस्येति । एतदेव सविशेषमाह-

[भा.१८०५] मुत्तूण असंविग्गे जे जहियं ते साहंती सव्वे ।
सिट्ठम्मि जेसि पासं, गच्छति तेसिं न अन्नेसिं ।।

वृ- इह ये पार्श्वस्थादयोऽसंविग्नास्ते यदि पृच्छ्यन्ते, तदा तेन कथनीयास्तान् मुक्त्वा शेषेषु पृष्टेषु ये यत्र विद्यन्ते तान् तत्र सर्वान् कथयति । शिष्टे च कथिते च सति येषां पार्श्वं गच्छति तेषामाभवति नान्येषाम् ।।

[भा.१८०६] नियल्लगाणं य भया हिरिवत्ति यसंजमाहिगारे वा ।

एमेव देसरज्जे गामेसु च पुच्छकहणं तु ।।

**वृ-** इह कोऽपि तस्मिन् ग्रामे नगरे देशे राज्ये वा न प्रव्रजति, किं कारणमिति चेदुच्यते, निजकानां स्वज्ञातीयानां भयात्, मा निजका उत्प्रव्राजयेयुः, प्रव्रजन्तं वा मा रुन्ध्युरिति । यदि वा तेषां निजकानां समक्षं लज्जते, ततो हीनो, वाऽथवाऽसंयमाधिकारः असंयमाधिकारणं तद् ग्रामादि अप्कायादि-प्रचुरत्वात् । ततोऽन्यद् ग्रामादिकं गन्तुमनास्तथैव विचारादिगतं पृच्छेत्, यथा कस्मिन् ग्रामे नगरे देशे राज्ये वा साधव एवमन्यस्मिन् देशे राज्ये ग्रामेषु वा पृच्छायामेवं पूर्वोक्तेनैव प्रकारेण यथाभावं कथनं कर्तव्यं । किमुक्तं भवति-यथा त्रिविधेषूपाश्रयेषु आसन्नदूरतपस्विबहुश्रुतानां पृच्छायां व्याकरणमनाभाव्यमाभाव्यं च वर्णितं तथात्रापि द्रष्टव्यम् । तद्यथा यद्यथा ग्रामादिकं पृष्टं ततया कथनीयं वितथाख्याने तस्य प्रायश्चित्तंमासलघु । तत्र च गतो येषां समीपमुपगच्छति स तेषामाभवति ।।

**[भा.१८०७]** अहवा वि अन्नदेसं संपट्ठियगं तगं मुणेऊण ।
माया-नियडि-पहाणो, विप्परिणामो इमेहिं तु ।।

**वृ-** अथेति प्रकारान्तरे । तच्च प्रकारान्तरं विपरिणामविषमं वक्ष्यमाणरीत्या द्रष्टव्यं विचारादिविनिर्गतं साधुं दृष्ट्वा कोऽपि परेण आदरेण वन्दते, तं च तथा वन्दमानं पृच्छति कुतस्त्वं ? कुत्र वा सम्प्रस्थित इति स प्राह-अमुकं देशं सम्प्रस्थितस्तत्र गत्वा प्रव्राजिष्यामि । तत एवमन्यदेशं सम्प्रस्थितं तं ज्ञात्वा, माया परवञ्चनाभिप्रायो निकृतिराकारवचनाच्छादनं यथा कूटाख्यातृत्वेन नंक्ष्यते, मायानिकृती प्रधाने यस्य स तथा, एभिर्वक्ष्यमाणैश्चैत्यादिभिर्विपरिणामयति ।। तान्येव विपरिणामस्थानानि चैत्यादीनि दर्शयति-

**[भा.१८०८]** चेइय साहू वसही, वेज्जा व न संति तम्मि देसम्मि ।
पडिनीय सन्निसाणी, वियारखेत्ता अहिगमग्गो ।।

**वृ-** यत्र त्वया गन्तव्यं तस्मिन् देशे चैत्यानि, यदि वा साधवो, ऽथवा वसतयो, यदा वैद्या । न सन्ति; तथा बहवस्तत्र प्रत्यनीकाः, न च दानादिप्रधानानि संज्ञिकुलानि, श्वानः प्रभूता, न च तत्र विचारभूमिः, सर्वत्र पानीयाकुलत्वात्, नापि तत्र विहारयोग्यानि क्षेत्राणि, अधिकश्च भूयान्मार्गः पन्था, एतैः प्रकारैर्विपरिणामयति ।। तत्र प्रथमतश्चैत्यमधिकृत्याह-

**[भा.१८०९]** वंदन पुच्छाकहणं अमुगं देसं वयामि पव्वइउं ।
नत्थि तहिं चेइयाइं दंसणसोही जतो होइ ।।

**वृ-** परया भक्त्या विचारादिनिर्गतस्य साधोर्वन्दनं ततः पृच्छा कुत्र गन्तव्यम् । तदनन्तरं तस्य कथनममुकं देशं व्रजामि प्रव्रजितुमिति । एवमुक्ते स प्राह-न सन्ति तत्र चैत्यानि । यतो येभ्यो दर्शनशोधिः सम्यग्दर्शननिर्मलता भवति ।। कथं तेभ्यो दर्शनशोधिरित्यत आह-

**[भा.१८१०]** पूयाउ दट्ठुं जगबंधवाणं साहू विचित्ता समुवेंति तत्थ ।
चागं च दट्ठुण उवासगाणं, सेहस्स वि थिरइ धम्मसद्धा ।

**वृ-** जगद्बान्धवानां पूजां द्रष्टुं तत्र तेषु चैत्येषु साधवो विचित्रा भव्या भव्यतराः समुपयन्ति, मूर्तिं दृष्ट्वा देशनां वा समाकर्ण्य तथा उपासकानां स्नानविलेपनादिषु त्यागं च वित्तत्यागं दृष्ट्वा आस्तामन्येषां शुभपरिणामोल्लासः शैक्षस्यापि धर्मश्रद्धा स्थिरति स्थिरीभवतीत्यर्थः । चैत्यानि तु तत्र न विद्यन्ते ततः ततः किं तत्र गत्वा त्वया कार्यमिति ।। साधुद्वारमाह-

**[भा.१८११]** न संति साहू तहियं विवित्ता, उसन्नकिन्नो खलु सो कुदेसो ।

संसग्गिहज्जंमि इमंमि लोए, सा भावना तुज्झ वि मा हवेज्जा ।।

वृ- न सन्ति तत्र साधवो विविक्ता एकान्तसंविग्नाः, किन्तु अवसन्नकीर्णोऽवसन्नव्याप्तः खलु स कुदेशः, अयं च लोकः संसर्गिहार्यः संसर्गेणाह्रियते, संसर्ग्यनुयायी भवति तथा स्वाभाव्यात् । ततः संसर्गिहार्येऽस्मिन् लोके वर्तमानस्य तवापि सा अवसन्नभावना मा भूदिति तत्र न गन्तव्यम् शय्याद्वारमाह-

[भा.१८१२] सेज्जा न संति अहवेसणिज्जा, इत्थी पसुंपंडगमादिकिन्ना ।

आउत्थमादीसु य तासु निच्चं, ठायंतयाणं चरणं न सुज्झे ।।

तत्र शय्या न सन्ति, अथवा एषणीया न विद्यन्ते, यदि परमात्मकृताः स्युर्यदि वा स्त्रीपशुपंडकाद्याकीर्णाः सन्ति, तासु चात्मोत्यादिषु आत्मकृतादिषु नित्यं सर्वकालं तिष्ठतां चरणं न शुध्यति चारित्रशुद्धिर्नोपजायते ।। वैद्यादिद्वारचतुष्टयमाह-

[भा.१८१३] वेज्जा तहिं नत्थि तहोसहाइं, लोगो य पाएण सपच्चणीओ ।

दानाइ सन्नी य तहिं न संति, साणेहिं किन्नो सह लूसएहिं ।।

वृ- तत्र वैद्यास्तथा औषधानि च न सन्ति लोकश्च प्रायेण तत्र सप्रत्यनीकः दानादिप्रधानाश्च संज्ञिनः श्रावकास्तत्र न सन्ति तथा श्वभिः स लूषकैश्चौरैः कीर्णो व्याप्तः ।

विहारक्षेत्रद्वारे आह-

[भा.१८१४] अनूवेसंमि वियारभूमी विहारखेत्ताणि य तत्थ नत्थी ।

साहूसु आसन्नठिएसु तुज्झं, को दूरमग्गेण मडप्फरो ते ।।

वृ- यत्र त्वया गन्तव्यम् तस्मिन् अनूपदेशे सजले देशे विचारभूमिर्नास्ति, नापि तत्र सन्ति विहारयोग्यानि क्षेत्राणि, अन्यच्च साधुष्वासन्नस्थितेषु तव को दूरमार्गेण मडप्फरो गमनोत्साहः ।। तदेवमृतुबद्धकालविषयं सूत्रं भावितम् । अधुना वर्षावासविषयं भावयति-

[भा.१८१५] वासासुं अमणुन्ना असमत्ता जे ठिया भवे वीसुं ।

तेसिं न होइ खेत्तं अह पुन समनुन्नय करेंति ।।

[भा.१८१६] तो तेसि होति खेत्तं, को उ पभू तेसि जो उ रायणिओ ।

लाभो पुन जो तत्था सो सव्वेसिं तु सामन्नो ।।

वृ- वर्षासु वर्षाकाले ये अमनोज्ञाः परस्परोपसम्पद्विकला असमाप्ता आभाव्यमसमाप्तकल्पत्वात् । अथ पुनः सुखदुःखादिनिमित्तं समनोज्ञतां परस्परोपसम्पदं कुर्वन्ति, ततो भवति तेषामाभाव्यं क्षेत्रं परस्परोपसम्पदा समाप्तकल्पीभूतत्वात् । अथ तेषां कः प्रभुः ? उच्यते, यो रात्निको रत्नाधिको यस्य पर्यायाधिकतया वन्दनादीनि क्रियन्ते स तेषां प्रभुः, लाभः पुनर्यस्तत्र भवति स सर्वेषां सामान्यः साधारणः सर्वेषामप्याचार्यत्वादुपाध्यायत्वाद्वा ।।

[भा.१८१७] अहव जइ वीसु वीसं ठियासु असमत्तकप्पिया हुज्जा ।

अन्नो समत्तकप्पी एज्जाही तस्स तं खेत्तं ।।

वृ- अथवा असमाप्तकल्पिका यदि विष्वक् विष्वक् स्थिता भवेयुः, अन्यः समाप्तकल्पी समाप्तकल्पोपेतः पश्चादागच्छेत् तस्य तदा भवति क्षेत्रम्, नेतरेषां पूर्वस्थितानामपि असमाप्तकल्पत्वात् ।।

[भा.१८१८] अहवा दोन्नि व तिन्नि व समगं पत्ता समत्तकप्पीओ ।

सव्वेसिं तु तेसिं तं खेत्तं होइ साहरणं ।।

वृ- अथवा द्वौ वा त्रयो वा गच्छाः सासकल्पिनः पृथक् पृथक् कल्पोपेताः समकं प्राप्ताः ततस्तेषां सर्वेषामपि तत्क्षेत्रमाभाव्यतया साधारणं भवति ।।

[भा.१८१९] अपुन्नकप्पो व दुवे तओ वा, जं काल कुज्जा समणुन्नयं तु ।
तक्कालपत्तो य समत्तकप्पो, साहारणं तं पि हु तेसि खेत्तं ।।

वृ- असमाप्तकल्पा अपूर्णकल्पा पूर्वम् द्वौ त्रयोवा गच्छाः स्थिता न च परस्परमुपसम्पद् गृहीताः । पश्चात् द्य सूत्रार्थादिनिमित्तमुपसम्पद् गृहीतुमारब्धाः । ते च यत्कालं यस्मिन् काले समनोज्ञतां परस्परमुपसम्पदं कुर्युः कुर्वन्ति तत्कालप्राप्तस्तस्मिन् काले प्राप्तोऽन्यः समाप्तकल्पस्तेषामपि तत् क्षेत्रं भवति साधारणम्, परस्परोपसम्पद्ग्रहणवेलायामेव समाप्तकल्पस्यापि प्राप्तत्वात् ।। संप्रति परस्परोपसम्पन्नानां साधारणावग्रहावस्थितानां सूत्रमर्थं वाधिकृत्य य आभवनविशेषस्तमभिधित्सुराह-

[भा.१८२०] साहारणट्ठियाणं जो भासति तस्स तं हवति खेत्तं ।
वारगतद्दिन पोरिसि मुहुत्त भासेउ जो ताहे ।।

वृ- साधारण्यस्थितानां साधारणावग्रहावस्थितानां मध्ये यः सूत्रमर्थं वा भाषते तस्य तद्भवति क्षेत्रं न शेषाणाम् । अथ ते वारवारेण भाषन्ते ततः आह-यो यदा वारकेण दिनं पौरुषीं मुहूर्तं वा भाषते, तस्य तावन्तं कालमाभाव्यम्, न शेषकालम् । इयमत्र भावना-यो यति दिवसान् भाषते, तस्य तति दिवसानाभाव्यम्, अथवा प्रतिदिवसं यो यति पौरुषीर्भाषते तस्य तति पौरुषीरवग्रहो, यदि वा यो यति मुहूर्तान् भाषते, तस्य तावत्कालमवग्रहो न शेषकालमपीति ।।

[भा.१८२१] आवलिया मंडलिया, घोडगकंडूइयए व भासेज्जा ।
सुत्तं भासति सामाइयादि जा अट्ठसीतिं तु ।।

वृ- इह सूत्रस्यार्थस्य वा भाषणे त्रयः प्रकाराः, तद्यथा-आवलिकया मण्डल्या घोटककण्डूयितेन च, तत्र या विच्छिन्ना एकान्ते भवति मण्डली सा आवलिका, या पुनः स्वस्थान एव सा मण्डली, घोटककण्डूयितं नाम यद्वारंवारेण परस्परं प्रच्छनं तत् घोटकयोः परस्परं कण्डूयितमिव घोटककण्डूयितम्, ततः सूत्रमर्थं वा भाषते । आवलिकया मण्डलीकया घोटककण्डूयितेन वा । तत्र सूत्रं भाषते सामायिकादि तावत् यावत् दृष्टिवादगतानि अष्टाशीति सूत्राणि । पूर्वेषु तु विशेषो वक्तव्य इति तदनुपादानम् । सम्प्रति यथोक्तप्रमाणमावश्यकमधीते, आवश्यकवाचनाचार्यः पुनरावश्यकप्रतिप्रच्छकस्य समीपे दशवैकालिकमधीते दशवैकालिकवाचनार्यस्याभवति क्षेत्रम्, तथा एकस्य पार्श्वे दशवैकालिकमधीते दशवैकालिकवाचनाचार्यः पुनर्दशवैकालिकप्रतिप्रच्छकस्य पार्श्वे उत्तराध्ययनान्यधीते, उत्तराध्ययनवाचनाचार्यस्याभाव्यं क्षेत्रम् । एवं यथोत्तरं तावद्भावनीयं यावदष्टाशीति सूत्राणि ।।

[भा.१८२२] सुत्ते जुहत्तरं खलु, बलिया जा होति दिट्ठिवातोत्ति ।
अत्थे वि होइ एवं छेअसुअत्थं नवरि मुत्तुं ।।

वृ- यथा सूत्रे यथोत्तरं बलिष्ठतोक्ता, एवमर्थेऽपि भावनीया, तद्यथा-एक एकस्य पार्श्वे आवश्यकार्थमधीते, आवश्यकार्थवाचनाचार्यः पुनरावश्यकार्थप्रतिप्रच्छकस्य समीपे दशवैकालिकार्थमधीते दशवैकालिकार्थवाचनाचार्य स्यामाभाव्यं तत् क्षेत्रम्, एवं तावद्वाच्यं यावदष्टाशीतिसूत्रार्थः । नवरं च्छेदसूत्रार्थ मुक्त्वा । अर्थाचार्याणामुपरिच्छेदसूत्रार्थाचार्यो वक्तव्यः । तद्यथा एक एकस्य पार्श्वे दृष्टि-

वादगतानामष्टाशीति सूत्राणामर्थमधीते, अष्टाशीतिसूत्रार्थवाचनाचार्यः पुनरष्टाशीतिसूत्रार्थ-प्रतिप्रच्छकस्य समीपे च्छेदसूत्रार्थमधीते च्छेदसूत्रार्थवाचनाचार्यस्याभाव्यं तत् क्षेत्रम् ।

**[भा.१८२३]** एमेव मीसगंमि वि, सुत्तत्तो बलवगो पगासो उ ।
पुव्वगयं खलु बलियं, हेट्ठिलत्था किमु सुयातो ।।

**वृ-** एवमेवानेनैव प्रकारेण मिश्रकेऽपि सूत्रार्थरूपोभयस्मिन्नपि वक्तव्यम्, सर्वत्र सूत्राद् बलवान् प्रकाशोऽर्थस्य प्रकाशकः । तद्यथा-एक एकस्य पार्श्वे आवश्यकसूत्रमधीते, तस्य समीपे पुनः सूत्रवाचनाचार्य आवश्यकस्यार्थमधीते, आवश्यकार्थवाचनाचार्यस्याभवति तत्क्षेत्रम्, एवं तावद्भावनीयं यावदष्टाशीतिसूत्रार्थवाचनाचार्यः । सर्वत्राधस्तात्सूत्रादर्थाद्वा पूर्वगतं बलीयस्तथा चाह-पुव्वगयमित्यादि, यदि पूर्वगतं सूत्रं खलु अधस्तनादर्थाद्भवति बलवत् किमङ्गसूत्रात्, सुतरामधस्तनात्सूत्राद्बलीय इत्यर्थः । तद्यथा-एक एकस्य पार्श्वे आवश्यकस्य सूत्रमर्थं तदुभयं वाधीते, तस्य समीपे पुनरावश्यकसूत्रार्थतदुभयवाचनाचार्यः पूर्वगतं सूत्रमधीते आवश्यकसूत्रादि-प्रतीच्छकस्याभवति । एवं तावद्वाच्यं यावदष्टाशीति सूत्राणि पूर्वगतसूत्राच्च पूर्वगतार्थो बलीवान्, तत एक एकस्य पार्श्वे पूर्वगतसूत्रमधीते तस्य समीपे पूर्वगतसूत्रवाचनाचार्यः पूर्वगतमर्थं पूर्वगतसूत्र-प्रतीच्छकस्याभवति ।। अथ किं कारणं शेषात् सूत्रादर्थात्पूर्वगतं सूत्रं बलीयस्तत आह-

**[भा.१८२४]** परिकम्मेहि य अत्था सुत्तेहि य जे य सूईया तेसिं ।
होइ विभासा उवरिं पुव्वगयं तेन बलियं तु ।।

**वृ-** दृष्टिवादः पञ्चप्रस्थानः, तद्यथा-परिकर्माणि सूत्राणि पूर्वगतमनुयोगश्चूलिकाश्च । तत्र ये परिकर्मभिः सिद्धश्रेणिकाप्रभृतिभिः सूत्रैश्चाष्टाशीतिसंख्यैरर्थाः सूचितास्तेषां सर्वेषामप्यन्येषां च उपरि पूर्वेषु विभाषा भवति, अनेकप्रकारं ते तत्र भाष्यन्ते इत्यर्थः । तेन कारणेन पूर्वगतसूत्रं बलिकम् ।। सम्प्रति येन कारणेन सूत्रादर्थो बलीयान्, तदभिधित्सुराह-

**[भा.१८२५]** तित्थगरत्थाणं खलु अत्थो, सुत्तं तु गणहरत्थाणं ।
अत्थेन य वंजिज्जइ सुत्तं तम्हाउ सो बलवं ।।

**वृ-** अर्थः खलु तीर्थकरस्थानं तस्य तेनाभिहितत्वात्, सूत्रं तु गणधरस्थानं तस्य तैर्दृब्धत्वात्, अर्थेन च यस्मात्सूत्रं व्यज्यते प्रकटीक्रियते, तस्मात्सोऽर्थः सूत्राद् बलवान् ।।

अथ कस्मात् शेषार्थेभ्यः च्छेदसूत्रार्थो बलीयानित्यत आह-

**[भा.१८२६]** जम्हा उ होइ सोही, च्छेयसुयत्थेण खलियचरणस्स ।
तम्हा च्छेयसुयत्थो बलवं मोत्तूण पुव्वगयं ।।

**वृ-** यस्मात् स्खलितचरणस्य स्खलितचारित्रस्य च्छेदश्रुतार्थेन शोधिर्भवति, तस्मात्पूर्वगतमर्थं मुक्त्वा शेषात्सर्वस्मादप्यर्थात् च्छेदश्रुतार्थो बलवान् ।।

तदेवमावलिकामधिकृत्योक्तम् अधुना मण्डलीमधिकृत्याह-

**[भा.१८२७]** एमेव मंडलीए वि पुव्वाहियनट्ठ धम्मकहि वादि ।
अहवा पइन्नग सुए, अहिज्जमाणे बहुसुते वि ।।

**वृ-** यथा अधस्तादावलिकायामुक्तम्, एवमेव मण्डल्यामपि द्रष्टव्यम् । सा मण्डली क्व भवतीति चेदुच्यते-पूर्वाधीते नष्टे उज्ज्वाल्यमाने, धर्मकथायां धर्मकथाशास्त्रेषु, वादे वादशास्त्रेषु

उज्ज्वाल्यमानेष्वधीयमानेषु वा, अथवा प्रकीर्णकश्रुते अधीयमाने बहुश्रुतेऽपि बहुश्रुतविषयेऽपि मण्डली भवति । तत्राप्याभाव्यमावलिकायामिव; अथ कथमावलिकायामिव मण्डल्यामपि द्रष्टव्यमिति चेत् । उच्यते,-एकएकस्य पार्श्वे पूर्वाधीतं नष्टमावश्यकमुज्वालयति, आवश्यकवाचनाचार्यः पुनस्तस्य समीपे दशवैकालिकम्, दशवैकालिकवाचनाचार्यस्याभवति इत्यादि सर्वं तथैव, तथा एकएकस्य पार्श्वे आवश्यकं नष्टमुज्वालयति, एषोऽप्यावश्यकवाचनाचार्योऽन्यस्य समीपे दशवैकालिकं, दशवैकालिकवाचनाचार्योऽप्यपरस्य दृष्टिवादमुज्वालयति, दृष्टिवादवाचनाचार्यस्याभवति, न शेषाणामाभवनस्योत्तरोत्तरं संक्रान्त्याऽन्तिमेऽवस्थानादेतद्यावलिकायामपि द्रष्टव्यम् । तथा यस्य पार्श्वे धर्मकथाशास्त्राणि यो (यो) ज्वालयत्यधीते वा तस्य पाठकस्याभवति न पाठ्यमानस्य, तथा बहुश्रुततरोऽपि यद्यन्यस्य समीपे प्रकीर्णकश्रुतमधीते तदा तस्य प्रकीर्णकश्रुतवाचनाचार्यस्याभवति न बहुश्रुततरस्य, किं बहुना, यो यस्य समीपे पठत्युज्वालयति वा तस्य सत्कमाभाव्यमितरो वाचनाचार्यो हरतीति ।। अथावलिकाया मण्डल्याश्च कः प्रतिविशेष इत्यत आह-

[भा.१८२८] छिन्नाछिन्नविसेसो, आवलियाए उ अंतए ठाति ।
मंडलीए सट्टाणं, सचित्तादीसु संकमति ।।

वृ-आवलिकामण्डल्योः परस्परं छिन्नाछिन्नरूपो विशेषः, आवलिका छिन्नाविविक्ता एकान्ते भवति । मण्डलिका त्वच्छिन्ना, "आवलिय तत्थ छिन्ना मंडलिया होइ अछिन्ना उ" इति वचनात् । एतदेव सुव्यक्तमाह-आवलिकायामुपाध्यायको(ध्यायो)ऽन्तर्मध्ये विविक्ते प्रदेशे तिष्ठति, मण्डल्यां पुनः स्वस्थानमाभवनं च पाठयितरि संक्रामति सचित्तादिषु तत्क्षेत्रगतसचित्ताविविषयम् ।।

अधुना घोटककण्डूयितमधिकृत्याह—

[भा.१८२९] दोण्हं तु संजयाणं, घोडगकंडूइयं करेंताणं ।
जो जाहे जं पुच्छइ सो ताहे पडिच्छतो तस्स ।।

वृ- द्वयोः संयतयोर्घोटककण्डूयितमिव घोटकं कण्डूयितं परस्परं प्रच्छनमित्यर्थः तत् कुर्वतां यो यदा यं पृच्छति स तदा तस्य प्रतीच्छकः इतरः प्रतीच्छ्यः यावच्च यः प्रतीच्छ्यस्तावत्तस्याभवति, न शेषकालमिति ।। उपसंहारमाह-

[भा.१८३०] एवं तो असमत्ते कप्पे भणितो विहिं उ जो एस ।
एत्तो समत्तकप्पे वुच्छामि विहिं समासेण ।।

वृ- एवं तावदसमाप्ते कल्पे यो विधिर्भवति, स एष भणितः । अत ऊर्ध्वं समासेन समाप्तकल्पे विधिं वक्ष्यामि ।। प्रतिज्ञातमेव निर्वाहयति-

[भा.१८३१] गणिआयरियाणंतोखेत्तंमि ठियाण दोसु गामेसु ।
वासासु होति खेत्तं निस्संचारेण बाहिरतो ।।

वृ- गणोऽस्यास्तीति गणी गणावच्छेदक आचार्यः प्रतीतस्तयोर्ग्रामयोः पृथक् पृथक् स्थितयोर्वर्षास्वाभवति क्षेत्रं ग्रामद्वयलक्षणम्, अन्तः-क्षेत्रं स्थितयोः क्षेत्रमध्यव्यवस्थितयोः न पुनः परस्परं गमनागमनतः, कुतःइत्याह बहिर्निःसंचारेण स्वस्वग्रामाद्बहिः पानीयहरिताद्याकुलतया संचाराभावतः ।।

[भा.१८३२] वासासु समत्ताणं, उग्गहो एगदुगपिंडियाणं पि ।

साहारणं तु केसिं वोच्छं दुविहं च पच्छकडं ।।

**वृ-** वर्षासु बहूनामाचार्याणां परस्परोपसम्पदा समाप्तकल्पानां, वर्षासु समाप्तकल्प ऊना असमाप्तकल्पाः, एगदुगपिंडियाणंति संप्राप्त्याप्येककाः सन्तः पिण्डिता एकपिण्डिताः अथवा द्विकेन वर्गद्वयेन एक एकाकि एकः षड्वर्गो, यदि वा एको द्विवर्ग एकः पञ्चवर्ग इत्यादिरूपेण पिण्डिता द्विकपिण्डितास्तेषामेकद्विकपिण्डितानाम्, अपिशब्दा त्रिकचतुष्कादिपिण्डितानां चावग्रह आभवति, न शेषाणामसमाप्तकल्पस्थितानां, तथा साधारणं शैक्षं वक्ष्यं । साधारणः (णे) शैक्षो यस्याभवति तस्य तं वक्ष्ये । तथा द्विविधं च गृहस्थसारुपिकभेदतो द्विप्रकारं च पश्चात्कृतमुपरि गणावच्छेदकपृथक्त्वसूत्रे वक्ष्यामि ।। तत्र साधारणं शैक्षं वक्तुमाह-

**[भा. १८३३]** अक्खेत्ते जम्मुवट्ठितो, खेत्ते वा समट्ठियाण साहारे ।
वायंतिय ववहारे, कयंमि जो जस्सुवट्ठाइ ।।

**वृ-** अक्षेत्रे स्नानादिप्रयोजनतः क्वाप्येकत्र मिलितानां यो यस्योपतिष्ठति शैक्षः, स तस्याभवति । अथवा समकमेककालं ये स्थिताः पृथक् पृथक् समाप्तकल्पास्तेषां समकस्थितानां तत्क्षेत्रं साधारणं, तस्मिन् साधारेण क्षेत्रे समकस्थितानाम्, अथवा पश्चादागता अप्येवं व्यवस्थां कृत्वा प्रविष्टा यद् यस्योपतिष्ठति तत् तस्याभवतीति तत एवं वाचन्तिके व्यवाहारे व्यवहारे कृते, यो यस्योपतिष्ठति, स तस्याभवति ।।

**[भा. १८३४]** साहारणट्ठियाणं सेहे पुच्छंतु वसए जो उ ।
दुरत्थं पि हु नियर्य, साहति उ तस्स मासगुरु ।।

**वृ-** विचारादिविनिर्गं साधुं दृष्ट्वा कोऽपि शैक्षकः पृच्छति कुत्र साधूनां वसतय इति, एवं साधारणस्थितानां साधारणक्षेत्रावस्थितानामुपाश्रयान् पृच्छति शैक्षे यो निजकमात्मीयमुपाश्रयं दूरस्थम्, अपिशब्दात् प्रत्यासन्नं वा साधयति कथयति, तस्य हु निश्चितं प्रायश्चितं मासगुरुः ।।

कथं पुनः कथनीयमित्याह-

**[भा. १८३५]** सव्वे उद्दिसियव्वा, अह पुच्छइ कयरो एत्थ आयरितो ।
बहुस्सुय तवस्सि पव्वायगो य तत्थ वि तहेव ।।

**वृ-** सर्वे यथाक्रममुपाश्रया उद्देष्टव्या यथा अमुकस्याचार्यस्योपाश्रयोऽमुकप्रदेशे, अमुकस्यामुके इति, एवं कथिते यत्र याति तेषामाभवति । अथ स पृच्छेत् कतरोऽत्राचार्यो बहुश्रुतो वा तपस्वी वा प्रव्राजको वा, तत्रापि तस्यामपि पृच्छायां तथैव कथनीयमन्यथा कथने मासगुरुः ।।

**[भा. १८३६]** सव्वे सुयत्था य बहुस्सुया वा, पव्वावगा आयरिया पहाणा ।
एवं तु वुत्ते समुवेति जस्स, सिट्ठे विसेसे चउरो य किण्हा ।।

**वृ-** अथ सर्वे श्रुतार्थाः, सर्वे बहुश्रुताः, सर्वे च प्रव्राजकाः, सर्वे चाचार्याः प्रधानाः ततस्तथैव यथाभावं कथनीयाः । एवं तूक्ते यस्य समीपे समुपैति, तस्याभवति; अथात्मीयानां बहुतरगुणोत्कीर्तनतोऽन्येषां बहुतरनिन्दनेन रागद्वेषाकुलतया विशेषं कथयति, ततः शिष्टे विशेषे तस्य विशेषकथकस्य प्रायश्चित्तं चत्वारो मासाः कृत्स्नाः परिपूर्णका गुरुका इत्यर्थः । अथ सर्वेषां मिलितानां स शैक्षः समागत एवं ब्रूयात्-

**[भा. १८३७]** धम्मंमिच्छामि सोउं जे पव्वइस्सामि रोइए ।
कहणा लद्धितोऽहीणो जो पढमं सो उ साहति ।।

**वृ-** धर्मं श्रोतुमिच्छामि युष्माकं पार्श्वे । जे इति पादपूरणे । श्रुते धर्मे रुचिते प्रतिभासिते सति प्रव्रजिष्यामि । एवमुक्ते कथना धर्मस्य भवति, कः कथयतीति चेदत आह-यो लब्धितः कथनलब्धेरहीनः स प्रथमं साधयति कथयति । अथान्येऽपि द्वित्रिप्रभृतयो लब्धितः समानास्तर्हि यो रत्नाधिकस्तेन कथयितव्यम् ।।

**[भा.१८३८]** पुनोवि कहमिच्छंते, तत्तुल्लं भासते परो ।
एवं तु कहिए जस्स, उवट्ठायति तस्स सो ।।

**वृ-** अहं पुनरपि धर्मकथां श्रोतुमिच्छामि ततः पुनरपि कथां धर्मकथां श्रोतुमिच्छामीति ब्रवीति, ततः पुनरपि कथां श्रोतुमिच्छति परोऽन्यो भाषते तत्तुल्यं तावन्मात्रमेवममपरवेलायामन्य । उक्तं च 'जारिसं पढमेण कहियं, तारिसं सेसेहिं वि कहियव्वमिति', एवं प्रदीपकथनसदृशतया सर्वैः कथिते यस्योपतिष्ठति तस्य स आभवति । अथान्ये विशेषेण विशेषतरेण कथयन्ति तर्हि ते तं न लभन्ते किन्तु यो रत्नाधिकस्तेषां, तस्य स आभवति ।।

**[भा.१८३९]** अनुवसंते च सव्वेसिं सलद्धि कहणा पुन ।
रायनियादि उवसंतो तस्स सो मा य नासउ ।।

**वृ-** अथ यादृशं प्रथमेन कथितं तादृशेऽन्यैरपि कथिते स नोपशाम्यति, न प्रव्रज्याभिमुखीभूतो भवति, ततस्तस्मिन्ननुपशान्ते पुनः कथना धर्मस्य सर्वेषां रत्नाधिकप्रभृतीनां स्वलब्ध्या यथास्वशक्तितुलनया, एवं च कथने यस्य समीपे स उपशान्तस्तस्याभवति, कस्मादेवं कथनेति चेदत आह-मा सोऽनुपशान्तः सन् नश्यतु संसारे परिभ्रमत्विति कृत्वा ।। अथ सर्वे आचार्या एकत्र मिलितास्तिष्ठन्ति, स च शैक्षक एवं कंचन पृच्छति, कोऽत्राचार्यः ? तत एवं कथनीयम्, सर्वे बहुश्रुताः सर्वे चाचार्याः सर्वे प्रधाना इति एवमुक्ते, यदि शैक्षिको ब्रूते-यं जानीथ यूयमाचार्यं तं मम दर्शयत, तत्राह-

**[भा.१८४०]** जं जाणह आयरियं तं देह ममंति एव भणियंमि ।
जइ बहुया ते सीसा दलंति सव्वेसिमेक्केक्कं ।।

**वृ-** यं जानीथ यूयमाचार्यं तं मम देहति दर्शयतेत्येवं भणिते यदि ते शिष्याः शिष्यत्वेनोपस्थिता बहवो भवन्ति, ततः सर्वेषामेकैकं शिष्यं ते एकत्र मिलिताः परस्परसम्मत्या ददति प्रयच्छन्ति ।।

अथ एक एव शिष्यस्तत्र विधिमाह-

**[भा.१८४१]** रायनिया थेरासति कुलगणसंघे दुगादिनो भेदो ।
एमेव वत्थपाए, तालायरसेवगा भणिया ।।

**वृ-** यद्येक एव शिष्यस्तदा यस्तेषां सर्वेषामपि रात्निको रत्नाधिकस्तस्य तं समर्पयन्ति, अथ सर्वे समरत्नाधिकास्ततो यस्तेषां वृद्धतरस्तस्य, अथ सर्वे वृद्धास्तर्हि यस्य शिष्या न सन्ति तस्य । अथ सर्वेषामपि शिष्या न विद्यन्ते तत इयं सामाचारी । सर्वेषां शिष्याणामसत्यभावे कुलत्ति यदि ते सर्वे समानकुलास्ततः कुलस्थविरस्य तं ददति, अथान्यकुलसत्का अपि तत्र वर्तन्ते, तत आह-गणत्ति गणस्थविरस्य समर्पयन्ति, अथान्यगणसत्का अप तत्र विद्यन्ते, तत आह-संघे इति सङ्घस्थविराय ददति, अथवा स एकः शिष्यः साधारणस्तावत् क्रियते यावदन्ये उपतिष्ठन्ते, उपस्थितेषु च तेषु यदा सर्वेषां परिपूर्णा भवन्ति तदा विभज्यन्ते । एवं द्विकादयोऽपि भेदा वाच्याः । द्विप्रभृतीनामपि शिष्याणामुपस्थितानामेवं विभाषा कर्तव्या । एवमेव अनेनैव च प्रकारेण वस्त्रपात्रादिलाभेऽपि द्रष्टव्यम् ।

तच्च वस्त्रपात्रादिकं तालाचरा वा दद्युः सेवका वा वणिजो वा एतेषां प्रायो वर्षासु दानसंभवात् ।। एतामेव गाथां व्याचिख्यासुः प्रथमतो रायनिया थेरासति इति व्याख्यानयति-

[भा.१८४२] रायनियस्स उ एगं दलंति तुल्लेसु थेरगतरस्स ।
तुल्लेसु जस्स असती, तहावि तुल्ले इमा मेरा ।।

वृ- एकं शिष्यमुपस्थितं रात्निकस्य रत्नाधिकस्य ददति । अथ सर्वे समरत्नाधिकास्ततस्तुल्येषु रत्नाधिकेषु यः स्थविरतरस्तस्य । अथ सर्वे स्थविरतरास्तर्हि तुल्येषु स्थविरतरेषु यस्य शिष्याणाम-भावस्तस्य । अथ शिष्याभावेनापि सर्वे तुल्यास्तत इयं मर्यादा ।। तामेवाह-

[भा.१८४३] साकुलगा कुलथेरे, गणथेरे गणिव्वए यरा संघे ।
रायनियथेरे असति कुलादिथेराण वि तहेव ।।

वृ- यदि ते सर्वे सकुलकाः समानकुलकाः ततः कुलस्थविरस्य ददति, अथान्यकुलका अपि विद्यन्ते तदा 'सङ्घे' सङ्घस्थविरस्य । अथैषां मध्ये तत्कालमेकस्याप्यभावस्तत आह- 'रायनिए' इत्यादि रत्नाधिकस्थविरस्याभावे कुलादिस्थविराणामपि च तथैव अभावे सति ।।

[भा.१८४४] साहारणं व काउं, दोण्हि वि सारेंति जाव अन्नो उ ।
उप्पज्जइ सेहो एमेव य वत्थपत्तेसु ।।

वृ- साधारणं वा तं शिष्यं कृत्वा द्वावपि तं तावत्सारयतो यावदन्यशिष्यस्तयोरुत्पद्यते, ततो विभजनमिति, अत्र द्विग्रहणं त्रिप्रभृतीनामुपलक्षणम्, तेन बहूनामप्ययं न्यायो द्रष्टव्यः, एवमेव वस्त्रपात्रेष्वपि साधारणतया सम्पन्नेषु विधिर्द्रष्टव्यः ।। अत्र पर आह-

[भा.१८४५] चोएइ वत्थपाया, कप्पंते वासवासि घेत्तुं जे ।
जह कारणंमि सेहो, तह तालचरादिसु वत्था ।।

वृ- चोदयति शिष्यः वर्षावासे वस्त्रपात्राणि गृहीतुं कल्पन्ते काक्वा पाठ इति प्रश्नावगमः सूरिराह-यथा कारणे पूर्वोपस्थित इत्येवं लक्षणे अव्यवच्छित्तिकारको भविष्यतीत्येवंरूपे वा अपवादतः शैक्षः कल्पते, तथापवादतस्तालाचरादिषु वस्त्राणि उपलक्षणमेतत् पात्राणि च कल्पन्ते ।।

[भा.१८४६] साहारणो अभिहितो, इदानि पच्छाकडस्स अवयारो ।
सो उ गणावच्छेइयपिंडगसुत्तंमि भन्निहिती ।।

वृ- यदुक्तं प्राक् साधारणं शक्ष्यं वक्ष्ये द्विविधं च पश्चात्कृतमिति तत्र साधारणः शैक्षोऽभिहितः, इदानीं पश्चात्कृतस्यावतारः प्रस्तावः, स तु गणावच्छेदकपिण्डकसूत्रे गणावच्छेदकबहुत्वसूत्रे भणिष्यते ।। तदेवमाचार्योपाध्यायगतान्यप्येकत्वबहुत्वसूत्राणि विभावयिषुराह-

[भा.१८४७] एमेव गणावच्छेयएगत्त-पुहुत्त दुविहकालम्मि ।
जं इत्थं नाणत्तं, तमहं वुच्छं समासेनं ।।

वृ- एवमेवाचार्योपाध्यायसूत्रगतेन प्रकारेण द्विविधे काले ऋतुबद्धे काले वर्षाकाले च गणावच्छेदकैकत्वपृथक्त्वसूत्राणि भावयितव्यानि, किमुक्तं भवति । यथा आचार्योपाध्याया-नामेकत्वपृथक्त्वसूत्राणि द्विविधकालगतानि व्याख्यातानि या वाभवत्यनाभवति च सामाचारी तथा गणावच्छेदकस्यापि एकत्वपृथक्त्वसूत्राणि द्विविधकालगतानि भावयितव्यानि । सैव च सामाचारी आभवत्यनाभवतीति, नवरमत्र यन्नानात्वं तदहं समासेन वक्ष्ये ।। तत्र ऋतुबद्धे तावद् भण्यते यदि

गणावच्छेदक आत्मद्वितीयो वसति तदा तस्य प्रायश्चित्तं मासलघु, इमे च दोषाः-

**[भा.१८४८]** जह होति पत्थणिज्जा कण्णट्ठी नीलकेसी सव्वस्स ।
तह चेव गणावच्छो किं कारण, जेन तरुणो उ ।।

**वृ-** यथा कण्णट्ठीति बालिका, नीलकेशी कृष्णकेशी तरुणीत्यर्थः । सर्वस्य तरुणस्य महतो वा प्रार्थनीया भवति, तथा गणावच्छेदकोऽपि, कि कारणम्, सूरिराह-येन कारणेन स गणावच्छेदकस्तरुण-स्तरुणतया तरुण्या महत्या वा प्रार्थनीयो जायते ।।

**[भा.१८४९]** दोण्हं चउकन्नरहस्सं, हवेज्ज छक्कं न मो न संभवति ।
सिद्धं लोके तेन उ, परपच्चयकारणा तिन्नि ।।

**वृ-** लोके इदं सिद्धं प्रतीतं यद् द्वयोश्चतुःकर्णं रहस्यं भवति, षट्कर्णं मो इति पादपूरणे, त्रयाणां रहस्यं न सम्भवति, तेन कारणेन परप्रत्ययकारणात् परेषां प्रत्ययोत्पादनार्थं त्रयो विहरन्ति । इतस्थासमर्थः स आत्मनिग्रहं कर्तुम्, त्रयोऽपि चोत्सर्गतो न कल्पन्ते, तत इदमपि सूत्रं कारणिकमवगन्तव्यम् । कारणतश्च तेषां त्रयाणां तिष्ठतामियं यतना-

**[भा.१८५०]** जयणा तत्थुउबद्धे समभिक्खाणुन्ननिक्खमपवेसा ।
वासासु दोण्हि चिट्ठे दो हिंडे असंथरे इयरे ।।

**वृ-** तत्र ऋतुबद्धे काले इयं यतना, समकं भिक्षा, समकं शय्यातरस्य समीपे वसतेरनुज्ञा, समकं विचारार्थं निष्क्रमः, समकं वसतौ प्रवेशः । वर्षासु पुनरियं, द्वौ पश्चात्तिष्ठतो द्वौ हिण्डेते एतच्च संस्तरणे, इतरौ द्वौ गणावच्छेदकतदन्यलक्षणौ वसतेः प्रत्यासन्नेषु गृहेषु वसतिं प्रलोकमानौ हिण्डेते यावता च न पूर्यते तावदितरानीतं गृह्णीतः । इदमपि वर्षाविषयं कारणिकम्, अकारणे चतुर्णां तिष्ठतां प्रायश्चित्तं चतुर्लघु । सम्प्रति बहुत्वविषये गणावच्छेदकसूत्रे भावयति-

**[भा.१८५१]** एमेव बहुणं पी, जहेव भणिया उ आयरियसुत्ते ।
जाव य सुयोवसंपय, नवरिं इमं तत्थ नाणत्तं ।।

**वृ-** एवमेव अनेनैव प्रकारेण । किमुक्तं भवति । यथा एकत्वे ऋतुबद्धे वर्षासु च पूर्वसूत्रमुक्तमेवं बहूनामपि ऋतुबद्धे वर्षासु च वक्तव्यम् । भावनापि च यथा बहुत्वविषये आचार्यसूत्रे भणिता तथैवात्रापि भणनीया, सा च तावत्, यावत् श्रुतोपसम्पत् । तथाहि, तैरपि समात्तकल्पीकरणार्थमन्योन्यनिश्रया, तया परस्परोपसम्पदा इत्यर्थः । सा च निश्रा द्विविधा-गीतार्थनिश्रा श्रुतनिश्रा च, तत्र च यद्गीतार्थस्य समीपे उपसम्पदनं सा गीतार्थनिश्रा, तया परस्परोपसम्पन्नत्वेन समात्तकल्पीभूतयोर्द्वयोस्त्रयाणां वा वर्गाणा समकमागतेन (मागमनेन) साधारणक्षेत्रम् । तया श्रुतार्थं निश्रा श्रुतानिश्रा, सापि च यथा प्राक् आचार्यसूत्रेऽभिहिता, तथात्रापि भावितव्या । नवरमिदं तत्र निश्रायां नानात्वम्, तदेवाह-

**[भा.१८५२]** साधारणठिया उ, सुत्तत्थाइं परोप्परं गिह्ने ।
वारंवारेण तहिं जह आसा कंडूयंते उ ।।

**वृ-** ते सर्वे द्विवर्गास्त्रिवर्गा वा समात्तकल्पाः समकमेकस्मिन् क्षेत्रे यदि स्थितास्ततः साधारणं तत् क्षेत्रम्, तस्मिन् साधारणे क्षेत्रे स्थिता, यदि यथा वारंवारेणाश्वाः परस्परं कण्डूयन्ति । एवं वारेण वारेण परस्परं सूत्रमर्थं वा गृह्णन्ति । यथाहमद्य तव पार्श्वे गृह्णामि । कल्ये त्वं (प्रतिस्त्वं) मम पार्श्वे गृहीष्यसि । अथवा पौरुषीप्रमाणेन मुहूर्तैर्वा वारकं कुर्वन्ति तदा यो यदा यस्य पार्श्वे गृह्णाति तस्य तावन्तं

कालमाभाव्यमितरः सूत्रस्यार्थस्य वा प्रदाताऽपहरति ।।

**[भा.१८५३]** अह पुव्वट्ठिए पच्छा अन्नो एज्जाहि बहुसुतो खेत्ते ।
सो खेत्तुवसम्पन्नो पुरिमट्ठो खेत्तिओ तत्थ ।।

**वृ-** अथ पूर्वस्थिते क्षेत्रस्वामिनि गणावच्छेदके आचार्ये वा पश्चादन्यो बहुश्रुतस्तस्मिन् क्षेत्रे आगच्छति, तर्हि स तदनुमत्या तत्क्षेत्रमुपसम्पन्न इति तत्क्षेत्रे क्षैत्रिकः क्षेत्रस्वामी पूर्व एव, न पश्चात्तनः ।

**[भा.१८५४]** खेत्तितो जइ इच्छेज्जा सुत्तादि किंचि गिण्हिउं ।
सीसं जइ मेहावि पेसे, खेत्तं तु तस्सेव ।।

**वृ-** क्षैत्रिकः क्षेत्रस्वामी यदि पश्चादागतस्य समीपे किंचित् सूत्रादि गृहीतुमिच्छति, तत्र यदि शिष्यं मेधाविनं प्रेषयति, तर्हि क्षेत्रं तस्यैव पूर्वस्थितस्य, न पश्चादागतस्य ।।

**[भा.१८५५]** असती तव्विहसीसे अनिक्खित्ते गणे व वायए निसंकमति ।
अह वा अगीयत्थे निक्खिवई गुरुगा न य खेत्तं ।।

**वृ-** अथ तथाविधो मेधावी शिष्यो नास्ति, ततस्तद्विधे शिष्ये असति अविद्यमाने अनिक्षिप्ते स्वशिष्यस्य गीतार्थस्य गणे यदि सूत्रादि पश्चादागतस्य समीपे वाचयति, तर्हि तत्क्षेत्रं पश्चादागते वाचयति संक्रामति । अथागीतार्थे स्वशिष्ये गणं निक्षिपति, निक्षिप्य च पश्चात्सूत्रादि वाचयति तर्हि अगीतार्थे गणंनिक्षिपतस्तस्य प्रायश्चित्तं चत्वारो गुरुकाः । न च तस्य क्षेत्रं किन्तु सूत्रादिवाचयितुः पश्चादागतस्य ।।

**[भा.१८५६]** अह निखियती गीते, होइ खेत्तं तु तो गणस्सेव ।
तस्स पुन अत्तलाभो, वायंते न निग्गतो जाव ।।

**वृ-** अथ गीते गीतार्थे शिष्ये गणं निक्षिपति निक्षिप्य च पश्चादागतस्य समीपे सूत्रादि गृह्णाति, 'तोत्ति' ततः क्षेत्रं गणस्यैवाभवति न पाठयितुः पश्चादागतस्याचार्यस्य । अथ यदा गणमनिक्षिप्यागीतार्थे वा निक्षिप्य सूत्रादि गृह्णाति, तदा कियन्तं कालमाभाव्यं तत्क्षेत्रं पाठयितुरत आह । 'तस्सेत्यादि' तस्य पुनः, पाठयितुः पुनः, तस्मिन् क्षैत्रिके वाचयति आत्मलाभः आत्मीयत्वेन क्षेत्रस्य लंभनं तावत्, यावत् स ततो गच्छान्न निर्गतो भवति । किमुक्तं भवति यावत्तस्य समीपे अध्ययनार्थमवतिष्ठते तावत्तस्याध्यापयितुः पश्चादागतस्याभवति तत् क्षेत्रम्, यदपि च शिष्यादिकं तस्य सूत्रादि गृहीतुमुपातिष्ठति तदपि तस्याभवति । निर्गते च ततो गच्छत्तस्मिन् भूयस्तस्यैव पूर्वस्थितस्य क्षेत्रं संक्रामतीति ।

**[भा.१८५७]** आगंतुगो वि एवं, ठवेंतो खेत्तोवसंपयं लभति ।
साहारणे य दोण्हं, एसेव गमो य नायव्वो ।।

**वृ-** आगंतुकोऽपि एवं पूर्वोक्तेन प्रकारेण गच्छे स्थापयन् क्षेत्रोपसम्पदं लभते । इयमत्र भावना-आगन्तुकोऽपि यदि पूर्वस्थिते सूत्रादि गृह्णाति अन्यस्यागन्तुकस्य समीपे सूत्रादि जिघृक्षुः मेधाविनं शिष्यं प्रेषयति । यदि वा गीतार्थे गणं निक्षिप्य स्वयं वाचयति तदा तत् क्षेत्रं तस्यैव मूलागन्तुकस्य, अथ गणमनिक्षिप्यागीतार्थे वा गणं निक्षिप्य सूत्रादि गृह्णाति तदा ग्राहयितुः क्षेत्रम्, अगीतार्थस्य च गणं साधारणे क्षेत्रे एको यद्यपरस्य समीपे सूत्रादिकं गृहीतुकामः प्राज्ञं विनीतं शिष्यं प्रेषयति, गणं वा गीतार्थे निक्षिप्य स्वयं गृह्णाति, तदोभयोरपि साधारणम्, अथ गणमनिक्षिप्यागीतार्थे वा निक्षिप्य वाचयति तदाध्यापयितुः क्षेत्रं नेतरस्य, तदपि च तावद्यावत् स ततो गच्छान्न निर्गच्छति । निर्गते उभयोः साधारणम्, अगीतार्थस्य गणाध्यारोपे प्रायश्चित्तं चतुर्गुरुकम् ।।

[भा.१८५८] साहारणो उ भणितो इदानि पच्छाकडं तु वुच्छामि ।
सो दुविहो बोधव्वो, गिहत्थ सारुविओ चेव ।।

वृ- साधारणोऽभिहितः, इदानीं पश्चात्कृते वक्ष्यामि । स च पश्चात्कृतो द्विविधस्तद्यथा-गृहस्थः सारुपिकश्च । गृहे गृहलिङ्गे तिष्ठतीति गृहस्थः । समानं रुपं सरुपं तेन चरतीति सारुपिकः ।।

अनयोरेव स्वरुपमभिधित्सुराह-

[भा.१८५९] असिहो ससिह गिहत्थो रयहरवज्जो उ होइ सारुवी ।
धारेइ निसिज्जं तु एगं ओलंबगं चेव ।।

वृ- गृहस्थः पश्चात्कृतो द्विविधोऽशिख सशिखश्च । तत्र यः केशान् धारयति स सशिखाकः । यस्तु मुण्डनेन तिष्ठति स चाशिखाको भवति रजोहरवर्जः रजोहरणवर्जः, रजोहरणग्रहणं दण्डक-पात्रादीनामुपलक्षणम्, ततोऽयमर्थः-यः केवलं शिरसो मुण्डनमात्रं कारयति न च रजोहरण-दण्डकपात्रादिकं धरते सोऽशिखाक इति । यस्तु सारुपी सारुपिकः स एकां निषद्यामेकनिषद्यामितं रजोहरणं अवलम्बकं दण्डकम्, उपलक्षणमेतत् पात्रादिकं च, धारयति शिरश्च मुण्डयति,

अत्राभवन(विधि)माह-

[भा.१८६०] गिहिलिंगं पडिवज्जइ, जो उ तद्दिवसमेव जो तं तु ।
उवसामेती अन्नो, तस्सेव ततो पुरा आसी ।।

वृ- यो व्रतं मुक्त्वा गृहिलिङ्गं प्रतिपन्नं योऽन्यः, उपलक्षणमेतत् मूलाचार्यो वा, तद्दिवसमेव उपशमयति पुनरपि व्रतग्रहणायाभिमुखीकरोति, येनैवोपशमितिस्तस्यैवाभवति, न मूलाचार्यस्यैव । उक्तं च- ''पच्छाकडो गिहत्थीभूतो जइ तद्दिवसं चेव पव्वइ उ मिच्छइ जस्स सगासे इच्छइ तस्सेव सो'' इति । एष विधिः पुरा आसीत्, सम्प्रति पुनर्लिङ्ग परित्यक्तेऽपि त्रिषु वर्षेषु गतेषु तदाभवनपर्यायः परिपूर्णो भवति, नारतः ।। किं कारणं केन चाचार्येणेयं मर्यादा स्थापितेति चेदत आह-

[भा.१८६१] इन्हिं पुन जीवाणं उक्कडकलुसत्तणं वियाणित्ता ।
तो भद्दबाहुणा उ तेवरिसा ठाविया ठवणा ।।

वृ- इदानीं पुनर्जीवानामुत्कटं कलुषत्वं विज्ञाय ततो भद्रबाहुना त्रैवर्षिका त्रिवर्षप्रमाणा स्थापना मर्यादा स्थापिता, चारित्रतटाके संयमोदकपरिवहनरक्षणार्थं त्रैवार्षिकी मर्यादापाली कृतेति भावः ।। सम्प्रति त्रैवार्षिकामेव स्थापनायां विशेषमभिधित्सुरिदमाह-

[भा.१८६२] परलिंग निण्हवे वा सम्मदंसण जढे तु संकंते ।
तद्दिवसमेव इच्छा, सम्मत्तमुत्ते समा तिन्नि ।।

वृ- परलिङ्गं द्विधा-गृहिलिङ्गं परतीर्थिकालिङ्गं च । तत्रेह परतीर्थिकलिङ्गं गृह्यते तस्मिन् परतीर्थिकलिङ्गे निह्नवे वा त्यक्तसम्यग्दर्शने संक्रान्ते यस्य समीपे तद्दिवसमपीच्छा तस्य स आभवति । अयमत्र भावः स भग्नचारित्रपरिणामः सम्यग्दर्शनमपि परित्यज्य परिव्राजकादीनां निवानां मध्ये गतो यदि तद्दिवसमेव यस्य समीपे प्रव्राजितुमिच्छति ततः स तस्यैवाभवति न मूलाचार्यस्य । अथ सम्यक्त्वसहितः परलिङ्गादिषु गतस्ततस्तस्मिन् सम्यक्त्वयुते परलिङ्गादिगते मूलाचार्यमर्यादा तिस्रः समास्त्रीणि वर्षाणि, त्रिषु वर्षेषु पूर्णेषु पूर्वपर्यायस्तुट्यति ।।

[भा.१८६३] एमेव देसियम्मि वि, सभासिएणं तु समनुसिठंमि ।

उसन्नेसुवि एवं, अद्याइन्ने न पुन एण्हि ॥

वृ- एवमेव अनेनैव प्रकारेण देशिकेऽपि सभाषिकेण समानभाषाव्यवहारिणा समनुशिष्टे ज्ञातव्यम् । किमुक्तं भवति ? द्रमिलान्ध्रादिदेशोद्भवो म्लेच्छप्राय आर्यभाषामजानानो यो विपरिणतः सन् त्यक्तसम्यक्त्वो गृहस्थीभूतः परिव्राजकादिषु लिङ्गेषु वा स्थितो यदि देशिकेऽपि सभाषिकेण समनुशिष्टः सन् प्रत्यावर्तते तर्हि तस्य समनुशासकस्याभवति, नान्यस्य । अथ ससम्यक्त्वः परलिङ्गादिषु गतस्तर्हि मूलाचार्यपर्यायपरिमाणं तिस्रः समाः, अवसन्नेषु अपि एवं पूर्वमासीत् । यथा अवसन्नीभूतं तद्दिवसमपि य उपशमयति स तस्याभवति इदानीं पुनः कषायैरत्याकीर्णे नेयं व्यवस्था किन्तु त्रीणि वर्षाणि ॥ उक्तो गृहस्थः पश्चात्कृतः, सम्प्रति सारुपिकमधिकृत्याह-

**[भा. १८६४]** सारुवी जावज्जीवं पुव्वायरियस्स जे य पव्वावे ।
अपव्वाविए सच्छंदो, इच्छाए जस्स सो देइ ॥

वृ- सारुपिको रजोहरणादिधारी स यावज्जीवं पूर्वाचार्यस्याभवति, न तु त्रिवर्षप्रमाणा तस्य मर्यादा, यानि च स सारुपिकः प्रव्राजयति मुण्डितानि करोति तान्यपि पूर्वाचार्यस्याभवन्ति, तेन मुण्डितत्वात्, यानि पुनस्तेन न मुण्डितानि किन्त्वद्यापि सशिखाकानि वर्तन्ते, तदायत्तानि च तान्यप्रव्राजितान्यधिकृत्य तस्य स्वच्छन्द आत्मेच्छा । तथा चाह- यस्येच्छया स ददाति तस्याभवन्ति नान्यस्येति ॥

एतच्चापुत्रादिषु द्रष्टव्यं पुत्रादीनि पुनः पूर्वाचार्यस्याभवन्ति ॥

**[भा. १८६५]** जो पुन गिहत्थमुंडो अहवा मुंडो उ तिण्ह वरिसाणं ।
आरेणं पव्वावे, सयं च पुव्वायरिए सव्वं ॥

वृ- यः पुनर्गृहस्थ इव मुण्डो गृहस्तमुण्डः, क्षुरेण मुण्ड इत्यर्थः, अथवा मुण्डो लोचने मुण्डः । एष द्विविधोऽपि मुण्डो गृहस्थत्वं करोति, न तु रजोहरणदण्डपात्रादि धारयति तेन सारुपिकाद्भिन्नः स त्रयाणां वर्षाणामारतोऽर्वाक् यानि प्रव्राजयति मुण्डितानि करोति तानि स्वयं च यावत्त्रीणि वर्षाणि न पूर्यन्ते तावत्सर्वं पूर्वाचार्यस्याभवति ॥

**[भा. १८६६]** अपव्वाविए सच्छंदा तिण्हं उवरिं तु जाणियव्वा वे ।
अपव्वावियाणि जाणि य सोवि अ जसिच्छाए तस्स ॥

वृ- यानि पुनस्त्रयाणां वर्षाणामारतो न प्रव्राजितानि न मुण्डितानि कृतानि किन्तु सशिखाकानि वर्तन्ते तानि स्वच्छन्दात् यस्मै प्रयच्छति तस्याभवन्ति, त्रयाणां वर्षाणामुपरि पुनर्यानि प्रव्राजयति मुण्डितानि करोति यानि वा प्रव्राजितानि सशिखाकानि तिष्ठन्ति सोऽपि च स्वयमात्मना यस्य सकाशे इच्छति प्रतिभासते तस्य समीपे प्रव्राजयति ॥ प्रव्रजति च त्रिवर्षमर्यादाः परिपूर्णीभूतत्वात् ॥

**[भा. १८६७]** गंतूणं जइ बेती अहयं तुज्झं इमानि अन्नस्स ।
एयानि तुज्झ नाहं दोवी तुज्झं दुवेऽन्नस्स ॥

वृ- त्रिवर्षप्रमाणायां मर्यादायामतिक्रान्तायां पूर्वाचार्यस्य समीपं गत्वा यदि ब्रूते अहं युष्माकमन्तिके प्रव्रजिष्यामि यानि पुनरिमानी मम समीपे उपस्थितानि तान्यन्यस्यामुकस्य पार्श्वे प्रव्रजिष्यन्ति, अथवा एतानि युष्माकमहमन्यस्य, अथवा द्वावपि एतान्यहं च युष्माकं, यदि वा द्वावपि एतान्यहं चान्यस्य, तदा यदिच्छति तत्प्रमाणम् ॥ तदेवाह–

[भा.१८६८] छिन्नंमि उ परियाए उवठियंते हु पुच्छिउं विहिना ।
तस्सेव अणुमएणं पुव्वं दिसा पच्छिमा वावि (दी) ॥

वृ- छिन्ने पर्याये वर्षत्रयमर्यादायामतिक्रान्तायामित्यर्थः, तस्मिन् स्वयमुपतिष्ठति अन्यांश्चोपस्थापयति विधिना तं पृष्ट्वा तस्यैवोपतिष्ठतो अनुमतेनेच्छया पूर्वा दिक् पश्चिमा वा दीयते, किमुक्तं भवति यदि पूर्वाचार्यमिच्छति ततः पूर्वाचार्यस्याभवति, अथान्यं तर्ह्यन्यस्य, शेषतदुपस्थापितविषयेऽपि च तस्येच्छा प्रमाणम्, सा च प्रागेवोपदर्शिता, स यदि सम्यगुपशान्तः सन् स्वकमाचार्यमाश्रयते तर्हि स प्रव्राजनेन संगृहीतव्यः, यदि पुनर्न संगृह्णाति ततः प्रायश्चित्तं मासलघु, अन्यच्च तेनासंग्रहणे यदि तस्य श्रद्धाभंगो भवति । यदपि चान्यस्य समीपे दूरं गच्छन् पथि स्तेनश्वापदादिभ्योऽनर्थं प्राप्नोति, तन्निमित्तमपि तस्य प्रायश्चित्तम्, तस्मादवश्यं संगृहीतव्यः ॥

[भा.१८६९] संविग्गमुद्दिसंते पडिसेहं तस्स संथरे गुरुगा ।
किं अम्हं तु परेणं अहिकरणं जं तु तं तेसिं ॥

वृ- अथान्यस्य समीपे प्रव्रजन् स पूर्वाचार्यमात्मीयं संविग्नमुद्दिशति प्रकाशयति । तस्मिन् संविग्नमुद्दिशति यस्य समीपे प्रव्रजितुमिच्छति स यदि प्रतिषेधति यथा किमस्माकं परेण परकीयेन यत् येषामधिकरणं तत्तेषां भवत्विति, तस्य एवं प्रतिषेधतः प्रायश्चित्तं चत्वारो गुरुकाः, एतच्च संस्तरणे सति द्रष्टव्यम्, अथासंस्तरन् प्रतिषेधति, ततः शुद्धः । अथ स पूर्वाचार्यस्यैव पार्श्वे कस्मान्लिङ्गं न प्रतिपद्यते । उच्यते - (पुरुषा वा ते) आचार्या यदि वा यत्र यत्र ते पूर्वाचार्या विहरन्ति तत्र तत्र तस्य सागारिकं किमपि, अतिदूरे वा ते उपलभ्यन्ते, ग्लानो वा पूर्वाचार्यो जात इति ॥

[भा.१८७०] एवं खलु संविग्गे असंविग्गे वारणा न उद्दिसणा ।
अब्भूवगतो जं भणती पच्छ भणंते न से इच्छा ॥

वृ-एवमुक्तेन प्रकारेण संविग्ने पूर्वाचार्ये उद्दिश्यमाने खलु विधिरुक्तोऽथ स पूर्वाचार्यमात्मीयमसंविग्नमुद्दिशति तर्हि तेना सविग्ने पूर्वाचार्ये उद्दिश्यमाने तस्य वारणा प्रतिषेधः कर्तव्यो न दातव्या तस्य प्रव्रज्या गुरुनिन्दकत्वादिति भावः, न च स तं पूर्वाचार्यमसंविग्नमुद्देशयितव्यः एष भगवतां परमगुरूणामुपदेशः, । 'न उद्दिसणा' इत्यादि । अथ स ब्रूते नाहं संविग्नमसंविग्नं वा पूर्वाचार्यमुद्दिशामि किन्तु त्वमेव ममाचार्य इति तर्हि, यदि पूर्वाचार्यस्य नोद्देशना यं चाभ्युपगतस्तं प्रत्येवं भणति, ततः स प्रव्राजनीयः । अथ स प्रवाजितः सन् पश्चाद्वदेत् यथा पूर्वाचार्यस्याहं न युष्माकमिति तत आह-पश्चादेवं भणति तस्मिन् न 'से' तस्य इच्छा किन्तु यमभ्युपगतस्तस्यैव सः ॥ एतदेव स्पष्टतरमाह-

[भा.१८७१) एमेव निच्छिऊण, उठंतो पच्छ तेसिमाउट्टो ।
इयरेहिं व रोसवितो, सच्छंद दिसं पुनो न लभे ॥

वृ- उपतिष्ठन् प्रव्रज्यां जिघृक्षुरेवमेव मे त्वमाचार्य इति निश्चित्य प्रव्रजितः सन् यः पश्चात्तेषां पूर्वाचार्याणां आत्मीयानामावृत्तो जायते, इतरैर्वा येषां समीपे प्रव्रजितस्तैर्वा रोषितः सन् अहं पूर्वाचार्यस्यैव न युष्माकमिति स एवं ब्रुवाणः पुनः स्वच्छन्ददिशं स्वेच्छया दिशं न लभते, किन्तु यमभ्युपगतस्तस्यैव स इति । यस्तु पश्चात्कृतत्वे न ज्ञातो, यस्य तु ज्ञातस्यापि पूर्वदिक्संग्रहणे भावो न ज्ञायते, तस्य लिङ्गदाने विधिमाह-

[भा.१८७२] अन्नातो परियाए पुव्वे न कहेज्ज जो समुट्ठंतो ।

लज्जाए मा व भेच्छति मा व दिक्खिज्ज मे भयणा ।।

वृ- अज्ञातः सन् यः पर्याये पूर्णेऽपि समुपतिष्ठन् आत्मानं न कथयति यथाऽहममुकस्य पश्चात्कृत इति, कस्मान्न कथयति इति चेदत आह-लज्जया, यदि वा मा तत्पाक्षिकेण केनाप्यहं ग्रहीष्ये, अथवा मां पश्चात्कृतं ज्ञात्वा न दीक्षयेयुरिति भजनात् विकल्पान्ना कथययि ।।

[भा.१८७३] नाते व जस्स भावो न नज्जए तस्स दिज्जए लिंगं ।
दिन्नंमि दिसिं नाहिति कालेन व सो सुणंतो वा ।।

वृ- ज्ञाते वा पश्चात्कृततया तस्मिन् प्रव्रज्यार्थमुपस्थि यस्य भावो न ज्ञायते केनापि कारणेन पूर्वाचार्यसमीपं न गत इति, तस्य ज्ञातस्याज्ञातस्य वा लिङ्गं दीयते । दत्ते च लिङ्गे स आत्मीयां दिशं कालेन पूर्वाचार्यलक्षणां ज्ञास्यति, स वा पूर्वाचार्यः कालेन परम्परया शृण्वन् तं ज्ञास्यति, ततो यस्य समीपे तस्य प्रतिभासते, तस्य समीपमुपगच्छतु ।। साम्प्रतमन्यं व्यवहारमुपदर्शयति-

[भा.१८७४] अहवा अन्नन्नकुला पडिभज्जिउकाम समणो समणी य ।
अनुसठायरि न ठिया करेंति वायंतिववहारं ।।

वृ- अथवेति व्यवहारस्य प्रकारान्तरोपदर्शने, श्रमणः श्रमणी चेति द्वावप्यन्यान्यकुलौ अन्यकुलः श्रमणोऽन्यकुला श्रमणी, प्रतिभङ्क्तुकामौ प्रतिपतितुकामौ स्वस्वाचार्येण च तौ प्रभूतमनुशिष्टौ परं न स्थितौ, तौ स्वस्वकुलममत्वेन वागन्तिकव्यवहारं वागेवान्तः परिसमाप्तिर्वागन्तस्तत्र भवो वागन्तिकः, स चासौ व्यवहारश्च तं कुरुतः तद्यथा-यान्यस्माकमपत्यानि जनिष्यन्ति तेषां मध्ये ये पुरुषास्ते सर्वे मम याः स्त्रियस्ताः सर्वाः तव, अथवा श्रमणीभूते ये पुरुषास्ते सर्वे मम, स्त्रियः सर्वास्तव, यदि चेदं भणति-सर्वाण्यपत्यानि तव, अथवा सर्वाण्यपत्यानि ममेति, तयोः संसारे स्थित्वा पुनः प्रव्रज्यां प्रत्युपस्थितयोर्यदेव वागन्तिकेन व्यवहारेण निश्चितं तदेव तयोराभवति ।।

[भा.१८७५] अह न कतो तो पच्छा तेसिं अब्भुट्ठियाण ववहारो ।
गोणी आसू भासिस कुटुंबि खरएय खरिया य ।

वृ- अथ न कृतः पूर्व वागन्तिको व्यवहारः पश्चात्तयोः प्रव्रज्यायामभ्युत्थितयोः स्वस्वकुलममत्वेन व्यवहारो भण्डनमभूत, तत्र संयतिकुलसत्का गोदृष्टान्तम् उद्भामिकादृष्टान्तं खरखरिकादृष्टान्तं चान्तरान्तरोपन्यस्यन्ति ।संयतकुलसत्का अश्वदृष्टान्तं कौटुम्बिकदृष्टान्तं च ।।

अथवेयमन्या दृष्टान्तपरिपाटी ।।

[भा.१८७६] गोणीणं संगिल्लं उब्भामइला य नीय परदेसं ।
तत्तो खेत्ते देवी रन्नो अभिसेयने चेव ।।

वृ- संयतीसमानकुलका गवां संगिल्लं समुदायं दृष्टान्ती कुर्वन्ति, तदनन्तरं संयतसकुलका या उद्भ्रामिका परदेशं नीता तां दृष्टान्ति कुर्वन्ति, ततः पुनरपि संयतीसकुलकाः क्षेत्रे बीजं, ततः संयतकुलका देवीं राज्ञोऽभिषेचनं चेवेति ।। तत्र भण्डने जाते यथा संयतीसकुलका गोदृष्टान्तं कुर्वन्ति तथा प्रतिपादयति-

[भा.१८७७] संजइइत्त भणंती संडेणन्नस्स जं तु गोणीए ।
जायति तं गोणिवइस्स होति एवम्ह एयाइं ।।

वृ- 'संजइइत्ता' संयतीसत्काः समानकुलका ब्रुवते अन्यस्य सत्केन षण्डेन यत् गोर्जायतेऽपत्यं

तत्सर्व गोपतेर्गोस्वामिनो भवति, न षण्डस्वामिनः, एवमनेनैव दृष्टान्तेनास्माकमप्येतान्य-पत्यान्याभवन्ति, न युष्माकमिति।। एवमुक्ते-

[भा.१८७८] बेंतियरे अम्हं तू जह वडवाए उ अन्नआसेण ।
जं जायति मोल्लंमि अदिने तं आसियस्सेव ।।

वृ- इतरे संयतसमानकुलका ब्रुवते-अस्माकमेतान्यपत्यान्याभवन्ति, यथा मूल्ये अदत्ते यदन्येनान्यसत्केनाश्वेन वडवायां जायतेऽपत्यं तदश्विकस्यैव अश्वस्वामिन एव, कारणिकैरेवमेव व्यवहारनिश्चयादेवमेतान्यप्यस्माकमिति।। एवमुक्ते-

[भा.१८७९] जस्स महिला य जायति उब्भामइलाय तस्स तं होइ ।
संजइइत्त भणंती, इयरे बेंती इमं सुणसु ।।

वृ- यस्य महेलाया भार्याया उद्भ्रामिलायाः स्वैरिण्या जायते सुतः (स्वतः)परतश्च तस्य तत्सर्वमाभवति, एवमस्माकमपि इति 'संजइइत्ता' संयतीसमानकुलका भणन्ति।।

इतरे ब्रुवाते इदं वक्ष्यमाणं उद्भ्रामककौटुम्बिककृतं तत् शृणुत

[भा.१८८०] तेनं कुटुंबिएण उब्भामइलेण दोण्हवी दंडो ।
दिन्नो सावि य तस्सा जाया एवम्ह एयाइं ।।

वृ- येन स्वैरण्या अपत्यानि जनितानि तेन कुटुम्बिकेन उद्भामिलेन राजकुले गत्वा कथितम्-यथाहं देव ! तस्याः सर्व भोगभरं वहामि सा सोपि च तत् पतिर्मदीयेन भोगभरेण निर्व्यूढवान्, तस्मात्प्रसादं कृत्वा मदीयान्यपत्यानि दापयतेति, तत एवुक्ते राजा कुपितः, तथा भोगभरसंवाददर्शनत एवमिमावपन्याय-कारिणाविति द्वावपि सर्वस्योपहरणतो दण्डितवान् । तथा चाह । द्वयोरपि दण्डो दत्तो दापित इत्यर्थः, सा चापत्यापहरणतोऽनन्यगतिका सती तस्य जाता एवमस्माकमेतान्यपीति ।।

[भा.१८८१] पुनरवि य संजइत्ता बेंति खरियाए अन्नखरएण ।
जं जायति खरियाहिवतिस्स होंति एवम्ह एयाइं ।।

वृ- पुनरपि संयतीसत्का ब्रुवते, खरिकायां गर्दभ्यां अन्यखरकेण अन्यसत्केन गर्दभेन यत् जायते तत्सर्वं खरिकाधियतेर्भवति, एवमस्माकप्येतानीति।। तदेवं प्रथमा दृष्टान्तपरिपाटी भाविता ।।सम्प्रति द्वितीयायां विभावयिषुः प्रथमतो गोवर्गदृष्टान्तं भावयति-

[भा.१८८२] गोणीणं संगेल्लं नट्ठं अडवीए अन्नगोणेणं ।
जायाइं वत्थगाइं, गोणाहिवती ओ गेण्हंति ।।

वृ- गवां स्त्रीगवानां 'संगिल्लं' समुदायो नष्टोऽटव्यां पतितस्तत्र च तस्यान्यगवेन अन्यसत्केन पुंगवेन जातानि वत्सकानि वत्सकरूपाणि तानि गवेषणतः कथमपि गवां लाभे गवाधिपतयः स्त्रीगवीस्वामिनो गृह्णन्ति न पुंगवस्वामिनः ।एमेतान्यप्यस्माकमिति।।

एवमुक्ते संयतसत्का उद्भ्रामिकादृष्टान्तं पूर्वोक्तमुपन्यस्यन्ति ।तथा चाह-

[भा.१८८३] उब्भामिय पुव्वुत्ता अहवा नीया नु जा परविदेसं ।
तस्सेव नु सा भवती एवं अम्हं तु आभवती ।।

वृ- उद्भ्रामिका पुर्वमुक्ता यथा सापत्या तस्य जाता अथवा या परविदेशं नीता सा तस्यैवाभवति पश्चादपि नान्यस्य, एवमेतान्यपत्यान्येषा चास्माकमाभवतीति ।। एवमुक्ते-

**[भा.१८८४]** इयरे भणंति बीयं तुब्भं तं नीयमन्नखेत्तं तु ।
तं होइ खेत्तियस्स एवं अम्हं तु एयाहं ।।

**वृ-** इतरे संयतीसत्का भणन्ति बीजं शुक्रबीजं नतु किल क्षेत्रशब्दवाच्यतिष्ठलक्षणः कथमपि वापकैरन्यत् क्षेत्रं नीतं अन्यत्र क्षेत्रे उप्तमित्यर्थः । तत् लोके क्षेत्रिकस्य भवति । एवमेतान्यपत्यान्यस्माकमिति ।। संयतसत्का अत्र प्रत्युत्तरमाहुः-

**[भा.१८८५]** रन्नो धूयातो खलु न माउच्छंदाउ ताउ दिज्जंति ।
नवि पुत्तो अभिसिच्चइ तासिं च्छंदेन एवम्हं ।।

**वृ-** न खलु या राज्ञो दुहितरस्ता मातृच्छन्दतो मातृणामभिप्रायेण दीयन्ते, नापि पुत्रोऽभिषिच्यते तासां मातृणां छंदेनाभिप्रायेण किन्तु राज्ञः स्वाभिप्रायेण ततो यथा राजा प्रधानमिति सर्वं राज्ञ आयत्तमेवमत्रापि पुरुषः प्रधानमिति सर्वं पुरुषस्यायत्तमतः सर्वमस्माकमाभवति ।। एवं व्यवहारे वर्तमाने श्रुतधर आचार्यो व्यवहारं छेत्तुकाम इदमाह-

**[भा.१८८६]** एमादि उत्तरोत्तर दिट्ठंता बहुविहा न उ पमाणं ।
पुरिसोत्तरिओ धम्मो होइ पमाणं पवयणंमि ।।

**वृ-** एवमादय उत्तरोत्तरदृष्टान्ता बहुविधा अभिदीयमाना न प्रमाणम्, किन्तु प्रवचने पुरुषोत्तरिको धर्म इति पुरुषः प्रमाणम्, अतः सर्वं पुरुषसत्का लभन्ते नेतरे इति

**मू. (१०५)** *गामानुगामं दुइज्जमाणे भिक्खू जं पुरतो कट्टु विहरइ, से आहच्च विसंभेज्जा, अत्थि याइ त्थ अन्ने केइ उवसंपज्जणारिहे, (कप्पइ) से उवसंपज्जियव्वे; सिया नत्थि याइं थ अन्ने केइ उवसंपज्जणारिहे, (तस्स) अप्पणो कप्पाए असम्मत्ते कप्पइ से एगराइयाए पडिमाए जन्नं जन्नं दिसं अन्ने साहम्मिया विहरंति तन्नं तन्नं दिसं उवलित्तए । नो से कप्पइ तत्थ विहारवत्तियं वत्थए, कप्पइ से तत्थ कारणवत्तियं वत्थए । तंसि च नं कारणंसि निट्ठियंसि परो वएज्जा- 'वसाहि अज्जो, एगरायं वा दुरायं वा !' एवं से कप्पइ एगरायं वा दुरायं वा वत्थए, नो से कप्पइ परं एगरायाओ वा दुरायाओ वा वत्थए । जं तत्थ परं एगरायाओ वा दुरायाओ वा वसइ, से संतरा छेए वा परिहारे वा ।।*

**वृ-** अथास्य सूत्रस्य कः सम्बधस्तत आह-

**[भा.१८८७]** आयरियउवज्झाएव (यंमि) अहिकिए अहिकिए य कालम्मि ।
निस्सोवसंपयत्ति य एगट्ठमयं तु संबंधो ।।

**वृ-** अधस्तनेष्वनन्तरसूत्रेष्वाचार्य उपाध्यायो वाधिकृतः कालो वा ऋतुबद्धो वर्षाकालश्चाधिकृतस्तस्मिन्नधिकृते इदं सूत्रमापतितमत्राचार्यस्योपाध्यायस्य वा ऋतुबद्धे काले मरणस्याभिधानात् । अथवान्तरसूत्रे निश्राभिहिता, निश्रोपसम्पच्चेत्येकार्थमत्र चोपसम्पद्वक्ष्यते, ततोऽनन्तरमिदं सूत्रमुक्तमयं पूर्वसूत्रैः सह सम्बन्धः । पुनः प्रकारान्तरेण सम्बन्धमाह-

**[भा.१८८८]** अहवा एगयरम्मि नु आयरियगणिंमि वावि ।
आहच्च वीसुंभूते गच्छंति फड्डगं फड्डगा व गणं ।।

**वृ-** अथवेति प्रकारान्तरेति एकतरस्मिन्नाचार्ये गणिनि वा उपाध्याये आहच्च कदाचित् विष्वग्भूते कालं गते गच्छसत्काः स्पर्द्धकं गच्छन्ति स्पर्द्धका वा गणं, ततो भिक्षुगमनप्रतिपादनार्थमिदं सूत्रम् ।। अनेन सम्बन्धेनापतितस्यास्य व्याख्या-ग्रामानुग्रामं ग्रामंग्राम ग्रामेण 'दूइज्जमाणे' गच्छन्, एतावता

ऋतुबद्धः कालो दर्शितो यं पुरतः कृत्वा प्रभुं कृत्वा इत्यर्थः । स नियमादाचार्य उपाध्यायो वाद्रष्टव्यो विहरति स आहच्च कदचित् 'वीसुंभेज्जा' शरीराद्विष्वग् भवेत् कालगतो भवेत् । 'अत्थिया इत्थ' इत्यादि, अस्ति चात्र समुदायोऽन्यः कश्चित् आचार्यादुपाध्यायाद्वा व्यतिरिक्तो गणी प्रवर्तकः स्थविरो वृषभो वा उपसम्पदनार्हस्तत उपसम्पत्तव्यः । अथान्यो नास्ति कश्चिदत्रोपसम्पदनार्हस्तर्हि स आत्मनः कल्पनासामात इति से तस्य कल्पते । एकरात्रिक्या प्रतिमया यत्र वसति तत्रैकरात्राभिग्रहेण 'जत्रं जत्रं' इत्यादि, यस्यां यस्यां दिशि अन्ये साधर्मिका विहरन्ति, तां तां दिशमुपलातुं, न पुनः 'स' तस्य कल्पते तत्रापान्तराले विहारप्रत्ययं वस्तुं, कल्पते 'स' तस्य कारणप्रत्ययं संघातादिकारणनिमित्तं वस्तुं, तस्मिंश्च कारणे निष्ठते यदि परो वदेत् वस आर्य ! ऐककात्रं द्विरात्रं वा एवं 'से' तस्य कल्पते एकरात्रं वा द्विरात्रं वा वाशब्दात् त्रिरात्रं वा वस्तुं, न 'स' तस्य कल्पते एकरात्रादिरात्राद्वा परं वस्तुं, यः (यं) तत्र एकरात्रात् द्विरात्राद्वा परं वसति तत्र 'स' तस्य स्वकृतादन्तरात् च्छेदः परिहारो वेति । अधुना निर्युक्तिविस्तरः । अत्रोपसम्पदनार्ह इत्युक्तम् । सा चोपसम्पद्द्विविधा -लौकिकी लोकोत्तरिकी वा । तथा चाह-

[भा.१८८९] लोगे य उत्तरंमी य, उवसंपय लोगिगी उ रायाई ।
राया वि होई दुविहो, सावेक्खो चेव निरवेक्खो ।।

वृ- उपसम्पद्द्विधा-लोके, उत्तरे च लोकोत्तरे । तत्र लौकिकी राजादौ । आदिशब्दात् युवराजादिपरिग्रहः । तथा च यदा राजा मृतो भवति, तदा युवराजमुपसम्पद्यन्ते, तं राजानं स्थापयन्तीत्यर्थः युवराजोऽन्यः स्थाप्यते । स च राजा भवति द्विविधः सापेक्षो निरपेक्षश्च सहापेक्षया सापेक्षः, तद्विपरीतो निरपेक्षः । तथा च प्रजाराज्याद्यपेक्षः सन् जीवन्नेव युवराजं स्थापयति निरपेक्षस्तु नैव ।।

अथ किं जीवन्नेव युवराजं स्थापयति । तत आह-

[भा.१८९०] जुवरायंमि उ ठविए, पयाउ बंधंति आयतिं तत्थ ।
नेव य कालगयंमी, खुब्भंति पडिवेसिय नरिंदा ।।

वृ- युवराजे राज्ञा साक्षाद्विद्यमानेन स्थापिते प्रजास्तत्र आयतिमागामिकालविषयां महतीमास्थां महतीमास्थां बध्नन्ति, नैव च सहसा कालगते राज्ञि प्रातिवेशिकनरेन्द्राः सीमातटवर्तिनः प्रत्यन्तराजानः क्षुभ्यन्ति । राज्यविलोडनाय संचलन्ति ।। उक्तः सापेक्षः संप्रति निरपेक्षमाह-

[भा.१८९१] पच्छन्नराय तेने आय परो दुविह होइ निक्खेवो ।
लोइय लोगुत्तरितो, लोगुत्तर थप्पियरे वोच्छं ।।

वृ- निरपेक्षो नाम यः प्रजानां राज्यस्य चायतिं नापेक्षते, तस्मिन् कालगते स राजा मृतः प्रच्छन्नो ध्रियते । यथा अतीव राजा शरीरबाधितो वर्तते स च तावत् ध्रियते यावदन्यो निवेश्यते, स च कदाचित् स्तेनोऽपि । यथा निक्षेपणं निक्षेपः स द्विविधो द्विप्रकारस्तद्यथा-आत्मनः परतश्च । पुनरेकैको द्विधा-लौकिको लोकोत्तरिकश्च । तत्र लोकोत्तरिकः स्थाप्यः पश्चाद्वक्ष्ये इत्यर्थः इतरं लौकिकं प्रथम-गाथापादोपक्षिप्तं वक्ष्ये ।। प्रतिज्ञातमेव निर्वाहयति-

[भा.१८९२] निरवेक्खे कालगते, भिन्नरहस्सा तिगिच्छमंधो य ।
अहि वास आसहिंडन, वज्झोति य मूलदेवो उ ।।

वृ- एको राजा निरपेक्षस्तस्य राज्ये मूलदेवश्चौरिकां करोति स कदाचिदारक्षकैः प्राप्तो राज्ञः पार्श्वे नीतो राज्ञा य स्तेन इति कृत्वा वध्य आज्ञप्तः । ततो राजा तत्क्षणमेव निजमावासस्थानमुपगतः क्षणमात्रेण च

सहसा कालगतः, तस्मिन्निरपेक्षे कालगते द्वौ भिन्नरहस्यौ राजा मृत इति रहस्यं द्वौ जाणितस्तद्यथा-चिकित्सको वैद्योऽमात्यश्च, राजा चानपत्यस्ततोऽश्वस्याधिवासना कृता सर्वत्र त्रिकचतुष्कचत्वारादिषु हिण्डाप्यते। कथं नाम राजलक्षणयुक्तं पुरुषं लभेमहि यं राजानं स्थापयाम इति। मूलदेवश्च यो बध्य आज्ञप्तः स तेनावकाशेन नीयमानो वर्तते॥

**[भा.१८९३]** आसस्स पट्ठिदानं आनयनं हत्थचालणं रन्नो।
अभिसेग भोइय परिभव तण जक्ख निवायणं आणा॥

**वृ-** ततो अश्वेन तस्य मूलदेवस्य वध्यतया नीयमानस्य पृष्ट दत्तं, गाथायां स्त्रीत्वं प्राकृत्वात् प्राकृते हि लिंगं व्यभिचारि। ततो मूलदेवो यत्र राजा प्रच्छन्नो जवनिकान्तरितो ऽवतिष्ठते तत्रानीतस्ततो वैद्यकुमारामात्याभ्यां जवनिकाभ्यन्तरस्थिताभ्यां राज्ञो हस्त उपरिमुखो नीत्वा चालितः। एतत् राज्ञो हस्तवालनं। ततो वैद्यकुमारामात्याभ्यामुक्तं-कृता राज्ञानुज्ञा यथा मूलदेवं राजानमभिषिञ्चत, न शक्नोति वाचा वक्तुमिति। ततोऽभिषिक्तो मूलदेवो राज्ये नवरसमसदृश इति कृत्वा केचिद्भोजिकाः परिभवमुत्पादयन्ति। न पुनः कुर्वन्ति विनयं। ततश्चिन्तयति मूलदवो, ममैते मूर्खतया परिभवं कुर्वते; परं किमिदानीमेते मूर्खतयैव कदाचित्स्वयमेवालमण्डलं जल्पिष्यन्ति तदानीं शासयिष्यामि। ततोऽन्यदिवसे आत्मनः शिरसि तृणशूकजातं कृत्वा आस्थानमण्डलिकायामुपविष्टः। ते च भोजिका मूर्खतया शनैः परस्परमुल्लपन्ति-अद्यापि नन्वेष चौरत्वं न मुञ्चति, अन्यथा कथमेतादृशस्य तृणशूकजातस्येदृशे भवने संभवो, नूनं तृणगृहादिषु चौरिकानिमित्तमतिगतस्ततः तृणशूकजातं शिरसि लग्नमिति। एतच्चाकर्ण्य मूलदेवो रोषमुपागमत् ब्रूते य अस्ति कोपि नाम मच्चिन्ताकारी य एतान् शास्तीति, तत एवमुक्ते तत्पुण्यप्रभावतो राज्यदेवताधिष्टितैर्निशितासिलताकैश्चित्रकर्मप्रतिहारैः केषांचित् शिरांसि लूनानि, शेषाः कृत प्राञ्जलयः आज्ञामभ्युपगमतवन्तः। तथा चाह 'भोइयपरिभवेगइ' त्यादि, भोजिकाः परिभवं कृतवन्तोऽन्यदामूलदेवस्तणात्ति तृणानि शीर्षे कृतवान्। ततस्तत्कोपावेशं दृष्ट्वा यक्षैरतिपातनं विनाशनं कृतम् शेषैराज्ञा प्रतीच्छिता॥ एतदेव सविशेषमाह-

**[भा.१८९४]** जक्खतिवातियसेसा सरणगया जेहिं तोसितो पुव्वं(व्वि)।
ते कुव्वंती रन्नो अत्ताण परे य निक्खेवं॥

**वृ-** यक्षातिपातितशेषाः शरणगता मूलदेवस्य शरणं प्रतिपन्नाः यैश्च पूर्व मूलदेवस्तोषितस्ते राज्ञ आत्मनः परस्य च निक्षेपमद्यप्रभृति युष्मदीया वयमेतेचेति समर्पणंकुर्वन्ति॥ उक्तोऽनिरपेक्षो निरपेक्षश्च लोकोत्तरिको वक्तव्यस्तत्र प्रथमं सापेक्षमाह-

**[भा.१८९५]** पुव्वं आयतिबंधं, करेइ सावेक्खो गणहरे ठविए।
अठविए पुव्वुत्ता, दोसा उ अनाहमादीया॥

**वृ-** यो नामाचार्यः सापेक्षः स पूर्वमेव गणधरे स्थापिते साधूनामायतिबन्धं करोति यथायं युष्माकमाचार्य इत्यतेदाज्ञया वर्तितव्यमिति अथ न पूर्वं गणधरं स्थापयति ततस्तस्मिन्नस्थापिते दोषाः पूर्वोक्ता अनाथादयो 'अनाहमो जाया' इत्यादिनाभिहिताः क्षिप्तादयो दोषा भवेयुः॥

उक्तो लोकोत्तरिकः सापेक्षः, सम्प्रति निरपेक्षमाह-

**[भा.१८९६]** आसुक्कारोवरए अट्ठविते गणहरे इमा मेरा।
चिलिमिलि हत्थाणुन्ना परिभव सुत्तत्थहावणया॥

वृ- आशुकारेण शूलादिनोपरतः कालगत आशुकारोपरतस्तस्मिन सत्याचार्ये अस्थापितेऽन्यस्मिन गणधरे इयं वक्ष्यमाणा मर्यादा। तामेवाह- 'चिलिमिली' त्यादि आशुकारोपरत आचार्यो जवनिकान्तरितः प्रच्छन्नो कार्यो चाचार्याणामतीवाशुभं शरीरं वाचापि वक्तुं न शकुवंतीति, ततो यो गणधरपदार्हस्तं जवनिकाबहिः स्थापयित्वा सूरयो भण्यन्ते को गणधरः स्थाप्यतामेवं चोक्ता जवनिकाभ्यन्तरस्था गीतार्था आचार्यहस्तं उपुर्यन्मुखं कृत्वा स्थाप्यमानगणधराभिमुखं दर्शयन्ति, वदान्ति च गणधरत्वमेतस्यानुज्ञातं परं वाचा वक्तुं न शक्नुवन्ति, एषा हस्तानुज्ञाः तत एतस्योपरि वासा निक्षिप्यन्ते स्थापित एष गणधर इति, पश्चात कालगता आचार्या इति प्रकाश्यन्ते। 'परिभव सुत्तत्थहावयणा' इति ते येऽभिनवस्थापितस्याचार्यास्य परिभवोत्पादनबुद्धया आचार्योचितं विनयं न कुर्वन्ति, तेषां सूत्रमर्थं वा स हापयति न ददातीत्यर्थः ।। 'संप्रति आय परो दुविहो होई निक्खेवो, लोइय लोगुत्तरितो' इति व्याख्यानार्थमाह-

[भा.१८९७]　　दंडेन उ अनुसट्ठा, लोए लोगुत्तरे य अप्पाणं।
　　उवनिक्खिवंति सो पुन, लोइय लोगुत्तरे दुविहे ।।

वृ- लोके लोकोत्तरे च यथार्हं विनयमकुर्वतो दण्डेनानुशिष्टा आत्मानमुपनिक्षिपन्ति। तत्र लौकिको दण्डः पूर्वमुक्तो मूलदेवेन भोजिकानां केषांचित कृतो, लोकोत्तरिकः सूत्रार्थापहरणं, इह नवे राज्ञीव नवे गणधरे स्थापिते निक्षेपरसो लोकस्य जायते। ततस्तत्फलाद्युपवर्ण्यते। निक्षेपस्य फलं लोके परिपालन. लोकोत्तरे ज्ञानादीनामभिवृद्धिः, स चोपनिक्षेपो द्विधो- लौकिको लोकोत्तरिकश्च। पुनरेकैको द्विधा- आत्मोपनिक्षेपः परोपरनिक्षेपश्च। तत्र लौकिक आत्मनिक्षेपो ये प्रगल्भास्ते आत्मनैवात्मानं राज्ञ उपनिक्षिपन्ति तिष्ठन्ति च चरणोपपातकारकाः प्रपन्नशरणाः, ये पुनरप्रगल्भास्ते ये राज्ञो वल्लभास्तैरात्मानमुपनिक्षेपयन्ति, एष परोपनिक्षेपः ।। लोकोत्तरिक आत्मनिक्षेपो गच्छवर्तिनां साधुनाम। तथा हि-ये गच्छेएव वर्तन्ते साधवस्ते आत्मानमात्मनैवाभिनवाचार्यस्योपनिक्षिपन्तिः परनिक्षेपः फड्डकगतानां, ते हि समागताः स्पर्द्धकपतिना निक्षिप्यन्ते यथा- एत अहं च युष्माकमिति ।। इह 'अत्थि याइं थ अन्ने केई उपसंपज्जणारिहे' इत्याद्युक्तं, तत्र यद्यपि स गीतार्थस्तरुणः समर्थश्चेन्द्रियनोइन्द्रियाणां निग्रहं कर्तुं तथापि तेनान्यो गणो निश्रयितव्यो निश्रयस्य च परप्रत्ययनिमित्तं तत्रोपनिक्षेपः कर्तव्यः अत्र लौकिको दृष्टान्तस्तमेवाह-

[भा.१८९८]　　जह कोई वणिको ऊ धूयं सेट्ठिस्स हत्थे निक्खिविउं।
　　दिसिजत्ताए गतोत्ति कालगतो सो य सेट्ठीओ ।।

वृ- एको वणिक तस्य गृहे मारिरुत्थिता सर्वं गृहमुपच्छादितं। एका दुहिता तिष्ठति। परं स श्रेष्ठी निर्धन इति तां दुहितरं न परिणाययितुं समर्थस्ततो दिगयात्रां कर्तुमिच्छति। जानाति। चैतस्याः कन्यकायाः स्वभावं यथा समर्थात्मानमेषा संरक्षितुं, केवलमेका कन्यका महती गृहे तिष्ठन्ती दुष्टशीला लोकेन संभाव्येतेति मित्रश्रेष्ठिनो हस्ते तां निक्षिप्य मुक्त्वा वाणिज्येन दिगयात्रां गतः, तस्यापि च मित्रश्रेष्ठिनो गृहे मारिर्भूत, ततः सोऽपि सकुटुम्बो विनाशमुपागमत। तथा चाह-स च श्रेष्ठी कालगतः। केवलमेका कन्यका स्थिता सा च मूलश्रेष्ठिदुहितुः सखी सा च ससखीकाप्यात्मानं संरक्षितुं क्षमा केवलं यज्ञाप्रत्ययनिमित्तं राज्ञः समीपमुपस्थिता। तथा चाह-

[भा.१८९९]　　सेट्ठिस्स तस्स धूया वणियसुयं घेत्तु रन्नो समुवगया।
　　अह यं एस सही मे पालेयव्वा उ तुब्भेहिं ।।

**वृ-** तस्य मूलभूतस्य श्रेष्ठिनो दुहिता वणिकसुतां पितृमित्रवणिगदुहितरं गृहीत्वा राज्ञः 'समुपगता' समीपमुपगतापादेषु निपत्य विज्ञपयति। यथा-देव, युष्माभिर्निजदुहितारो रक्ष्यन्ते तथाहमेषा च मे सखी युष्माभिः पालयितव्या, आवयोरपि युष्मत्कन्यकात्वात।।

**[भा.१९००]** इय होउत्ति य भणिउं कन्ना अंतेउरंमि तुट्ठेण।
रन्ना पक्खित्ताओ, भणिया वाहरिउ पाला उ।।

**वृ-** इति एवं भवत्विति भणित्वा तुष्टेन राज्ञा ते द्वे अपि कन्ये चान्तःपुरे प्रक्षिप्ता, भणिता च व्याहृत्य आकार्य पालापालका महत्तरिका।। किं भणितेत्यत आह-

**[भा.१९०१]** जह रक्खह मज्झ सुता तहेव एयातो देवि पालेह।
तीएवि ते ऊ पाले विन्नवियं विनीतकरणाए।।

**वृ-** यथा रक्षथ मम सुता कन्यकास्तथैव एते अपि द्वे मत्कन्यका प्रख्ये पालयथ। एवमुक्ते तयापि महत्तरिकया विनीतकरणया विज्ञसम देव। एते अतिपालयामि। एवमुक्त्वा ते कन्येऽन्तःपुरं नीते। तत्र च मूलश्रेष्ठिदुहिता महत्तरिकां विज्ञपयित-

**[भा.१९०२]** जह कन्ना एयातो रक्खह एमेव रक्खह ममंपि।
जह चेव ममं रक्खह तह रक्खहिमं सहिं मज्झ।।

यथा एताः कन्या यूयं रक्षथ, एवमेव मामपि रक्षथ। यथा च मां रक्षथ, तथेमां मम सखीमपि रक्षथ।।

**[भा.१९०३]** इय होउ अब्भुवगए अह तासिं तत्थ संवसंतीणं।
कालगया महत्तरिया जा कुणती रक्खणं तासिं।।

इत्येवं भवत्विति अभ्युपगते, तासां तत्र संवसन्तीनामथ कियत्कालातिक्रमेण या रक्षणं तासां करोति सा महत्तरिका कालगता।।

**[भा.१९०४]** सविकारातो दट्ठुं सेट्ठिसुया विन्नवेइ रायाणं।
मयहरिय दान निग्गह वणियागम रायविन्नवणं।।

**वृ-** महत्तरिकाकालगमनान्तरं ताः कन्यका सविकारा अभूवन। ततस्ताः सविकाराः श्रेष्ठिसुतया दृष्टा राजानं विज्ञपयति-अन्यमहत्तरिकां प्रयच्छत। दत्ता राज्ञा। तया च महत्तरिकया 'निग्गहत्ति' कन्याः सविकारा उपलभ्य खरण्टिता। एवं तासां तिष्ठन्तीनां 'वणियागमत्ति' स देशान्तरगतो वणिक समागतः 'विन्नवणं' इति राज्ञो विज्ञपनमकार्षीत, यथा देव, नयामि निजपुत्रिकामिति।।

**[भा.१९०५]** पूएऊण विसज्जण, सरिसकुलदान दोण्हवी भोगो।
एमेव उत्तरंमि वि अवत्तराइंदिए हुवमा।।

**वृ-** ततः श्रेष्ठिकृतविज्ञप्तिकानन्तरं ते द्वे अपि पूजयित्वा राज्ञा विसृष्टे सदृशकुले दानं विवाहिते इत्यर्थः, ततस्तयोर्द्वयोरपि विपुला भोगा दत्ताः। एवमेव अनेनैव प्रकारेण उत्तरेऽपि लोकोत्तरेऽपि अव्यक्तस्य रात्रिंदिवैरुपमा। इयमत्र भावना- यदि तावल्लौकिका अपि यशः- संरक्षणनिमित्तमात्मानमन्यत्रोपनिक्षिपन्ति, ततः सुतरां लोकोत्तरिकैः साधुभिः संयमयशःसंरक्षणनिमित्तमात्माऽन्यगणे निक्षेप्तव्यः। स चाव्यक्तो वयसा, ततो यावदि्भरहोरात्रैर्वयसा व्यक्तो भवति तावन्तं कालं तत्रान्यगणनिश्रायां तिष्ठति।। कथं पुनः आत्मानं गणं चोपनिक्षिपति तत आह-

**[भा.१९०६]** एते अहं च तुब्भं, वत्तीभूतो सयं तु धारेइ।

जसपव्वया उराला, मोक्खसुहं चेव उत्तरिए ।।

**वृ-** एते मदीयाः साधवोऽहं युष्माकम्, एवं चोपनिक्षेप्य तावत्तत्र तिठति यावत् व्यक्तो जायते, ततो व्यक्तीभूतः सन् तस्मान्निर्गत्य स्वयमेव गणं धारयति। एवं च कुर्वतस्य फलं, इह लोके उदारा यशःप्रत्ययाः, अवदातं यशोऽवदाताश्च लोके प्रत्ययाः संयमनैर्मविषयाः, परलोके फलं मोक्षसुखमौत्तरिके लोकोत्तरिके उपनिक्षेपे।। अथवा लौकिकस्य लोकोत्तरिकस्य च साक्षेपस्य पदस्थापनायोग्य विषयेवं परीक्षा-

**[भा.११०७]** सावेक्खो पुन पुव्वं, परिक्खइ जए धनो उ सुण्हाओ।
अनियय सहाव परिहाविय भुत्ता तम्मिया वुङ्ढा।।

**वृ-** सापेक्षः पुनः पूर्वं परीक्षते साधुन्, यथा धनश्रेष्ठी स्नुषा अनियतस्वभावा। परीक्षितवान्। कथमिति चेदुच्यते- रायगिहे नगरे धनो नाम सेट्ठी। तस्स चत्तारि सुण्हातो। अन्नया सो चिंतेइ का मम सुण्हा घरं वुड्ढिं नोहिति ? ततो अन्नया तासिं परिक्खणनिमित्तं सयणवग्गो निंतितो। भत्तोत्तरं सयलसयणसमक्खं सुण्हातो सद्दावेऊण पत्तेयं पत्तेयं पंचसालिकणा समप्पिया ए एसुरक्खिए करेह, यदा मग्गेहमि तया दायव्वा। ततो पढमाए "वुड्ढो एस न लज्जितो सयणसमक्खं पंचकणे समप्पेंतो, न किंचि जाणइ जया मग्गिहिती तया अन्ने दायव्वा"ः इति छुड्डिया। विइयाए 'वुड्ढसेसत्ति' भुक्ता। तइया ए आभरण करंडियाए सुरक्खीकया। चउत्थीए भाउयखेत्तेसु आरोविऊण वुड्ढिनीया जाया वरिसपणगेणमूडसहस्सा। पुनो वि सेट्ठिना वरिसपनगानंतरं सयणवग्गं निमंतेऊण भुत्तुत्तरं सयणसमक्खं तातो सद्दाविया- तो ते मे पंच सालिकणे समप्पेह। ततो पढमाए अन्नातो ठाणातो आणेऊण समप्पिया, सेठिया सवहसाविता भणिया ते चेव इमे पंच सालिकणा किं वा अन्ने, तीए कहियं ते मए तया चेव छुड्डिया, पुन अन्ने आणीया'। एवं विइयाए वि, नवरं तीए भुत्ता कहिया। तइयाए ते चेव आनीया, भणियं 'आभरणकरंडियाए मए सुरक्खीकया'। चउत्थीए भणियं 'ताय सगडाणि समपिज्जंतु जेन तेपंच सालिकणा आनिज्जंते, ततो सेठिना विम्हिएण पुच्छियं, तीए कहियं जहावत्तं जाव जाया मुडसहस्सा। तओ परितुट्ठेण सेट्ठिणा भणियं- एतीज मज्झ पंच सालिकणा अतीव वुड्ढिं नोहितित्ति ह सा मम घरस्स सामिणी। तइया भंडारविखया जीए भुत्ता सा महारसनायवारे निजोइया, पढमा घरबाहिकम्मे। तथा चाह-प्रथमया परिहापिता, द्वितीयया भुक्तास्तृतीयया तावन्मात्रा वृताश्चतुर्थ्या 'वुड्ढत्ति' वर्धिताः एष दृष्टान्तः।।

सम्प्रति दार्ष्टान्तिक-योजनामाह-

**[भा.११०८]** उमेसिवमतरंते य उज्झितं आगतो न खलु जोग्गो।
कितिकम्मभारभिक्खादिएसु भुत्ता य भुत्तीए।।

**वृ-** एवमाचार्येणापि परीक्षानिमित्तं साधून् समर्प्य देशदेशने शिष्या नियोक्तव्यास्तत्र योऽवमे दुर्भिक्षेऽशिवे वा साधून् त्यक्त्वाऽथवा येऽतरन्तोऽसहायास्ताननवा त्यक्त्वा समागतः, स खलु न योग्यः। येनापि कृतकर्मसुपात्रलेपनादिव्यापारेषु, भारे उपध्युपकरणवाहनेन, भिक्षादिषु चात्मभुक्तया भुक्त्वा उपयोगं नीताः साधवो, न च सम्यक् पालिताः सोऽपि न योग्यः।।

**[भा.११०९]** न य छुड्डिया न भुत्ता नेव य परिहाविया न परिवूढा।
तलिएणं ते चेव उ समीव पच्छाणिया गुरुणो।।

**वृ-** तृतीयेन ये समर्पिताः साधवो गुरुणा, तेन छुड्डिया न दुर्भिक्षाशिवादिषु परित्यक्ताः, नापि भुक्ताः

केवलमात्मोपयोगं नीताः, नापि परुषशिक्षाप्रदानादिना परिहापिताः परिहानिं नीताः नाप्यन्यान्यपरिव्राजनेन परिवर्धिताः । किन्त्वे (वं) तावन्तो गुरुसमीपं प्रत्यानीताः ।। चतुर्थमाह-

[भा.१९१०] उवसंपाविय पव्वाविया य अन्ने ये तेसि संगहिया ।
एरिसए देइ गणं कामं तइयंपि पूएमो ।।

वृ- येन बहव उपसम्पादिता उपसम्पदं ग्राहिता बहवः परिव्राजिताश्च, अन्ये च तेषामुपसम्पादितानां परिव्राजितानां च सम्बन्धिनः संगृहीतास्तेऽपिउपसम्पदं ग्राहयिष्यन्ते परिव्राजयिष्यन्ते चेत्यर्थः, ईद्दशे चतुर्थे ददाति गणमाचार्य एकान्तयोग्यत्वात । न केवलमेतास्मिन, किन्तु काममतिशयेन तृतीयमपि पूजयामश्चतुर्थालाभे तमपि योग्यं प्रशंसाम इत्यर्थः ।। तत्रात्मपरोपनिक्षेपयोजनामाह-

[भा.१९११] तम्मि गणे अभिसित्ते सेसगभिक्खूगणअप्प निक्खेवो ।
जे पुन फड्डगवतिया आयपरे तेसि निक्खेवो ।।

वृ- तस्मिन चतुर्थे तदभावे तृतीय वा गणे पदे अभिषिक्ते शेषकभिक्षूणां तद्गणान्तर्वर्तिनामात्म-निक्षेपो भवति । ये पुनः स्पर्धकपतयस्तेषामात्मतः परतश्च निक्षेपः, स्पर्धकपतीनामात्मतस्तदाश्रितानां परतः स्पर्धकपतिद्वारेण तेषामुपनिक्षेपभावात ।।

एवमात्मपरोपनिक्षेपो निरपेक्षेऽपि कालगते [illegible] तथा चाह -

[भा.१९१२] एवं कालगते ठविह सेसाणआय निक्खेवो ।
फड्डगवईयाणं पुनआयपरो होति निक्खेवो ।।

वृ- एवं निरपेक्षे सहसा कालगते पूर्वप्रकारेणान्यस्मिन स्थापिते शेषाणां गणान्तर्वर्तिनात्मनिक्षेपो भवति । स्पर्धकपतिकानां त्वात्मपरोपनिक्षेपः, स्पर्धकपतीनामात्मतस्तदाश्रितानां परतो निक्षेप इत्यर्थः ।।

[भा.१९१३] उवसंपज्जणअरिहे अविज्जमाणंमि होई गंतव्वं ।
गमनंमि सुद्धसुद्धे चअभंगो होति नायव्वो ।।

वृ- उपसम्पदनार्हे अविद्यमाने भवत्यन्यत्र गन्तव्यं । तत्र च गमने (शुद्धा) शुद्धपदे संयोगतश्चतुर्भङ्गी भवति ज्ञातव्याः तद्यथा-निर्गमने शुद्धो गमेन च शुद्ध इति प्रथमः, निर्गमने शुद्धो गमनेऽशुद्ध इति द्वितीयः, निर्गमनेऽशुद्धो गमने शुद्ध इति तृतीयः, निर्गमनेऽशुद्धो गमने चाशुद्ध इति चतुर्थः । गाथायां चउभङ्गो इति पुंस्त्वनिर्देशः प्राकृतत्वात ।। तत्र प्रथमभङ्गव्याख्यानार्थमाह-

[भा.१९१४] असतीए वायगस्स, जं वा तत्थत्थि तंमि गहियंमि ।
संघाडोएगो वा दायव्वो असती एगागी ।।

वृ- यः कालिकमुत्कालिकं दृष्टिवादं वा वाचयति स नास्ति, ततस्तस्य वाचकस्याऽसत्यभावे, अथवायत्तत्रास्ति श्रुतं तत्सर्व गृहीतं ततस्तस्मिन्गृहीतेऽन्यसूत्राद्यर्थम, अन्यत्र व्रजति, तस्य च व्रजत एकः संघाटो दातव्यः । असति संघाटकाभावे एकाकी व्रजते ।।

[भा.१९१५] अह सव्वेसिं तेसिं नत्थि अ अवसंपयारिहो अन्नो ।
सव्वे घेत्तुं गमनं जतियमेत्ता व इच्छंति ।।

वृ- अथ तेषां गच्छवर्तिनां साधूनां सर्वेषामान्य उपसम्पदार्हो नास्ति, ततः सर्वान गृहीत्वा गमनं कर्तव्यम । अथ सर्वे गन्तुं नेच्छांति, तर्हि यावन्मात्रा इच्छन्ति तावन्मात्रैः सह गन्तव्यम । एष निर्गमशुद्ध उच्यते ।।

[भा.१९१६] एवं सुद्धे निग्गमे। वइयाइअप्पडिबज्झंतो।
संविग्गमणोन्नाहिं तेहिं वि दायव्वो संघाडो।।

वृ- एवं शुद्धे निर्गमे व्रजिकादिषु गोकुलादिष्वप्रतिबध्यमानः प्रतिबन्धमकुर्वन गच्छेत। तत्र यद्यपान्तराले संविग्नमनोज्ञाः सन्ति। ततस्तैः सह मिलित्वा गन्तव्यं, तैरपि च निर्गमनशुद्धत्वात ज्ञानाद्युपसम्पन्निमित्तं च चलितत्वादवश्यं संघाटो दातव्यः।। अथ यदा एकं द्वौ वा दिवसौ संघाटो न भवति व्याकुलत्वात, तदा किं कर्तव्यमत आह-

[भा.१९१७] एगंव दो य दिवसे, संघाडत्थं एसो पडिच्छिज्ञा।
असती एगा (गी) उ जयणा उवही न उवहम्मे।।

वृ- एकं द्वौ दिवसौ स सङ्घाटार्थं प्रतीक्षेत। असत्यभावे संघाटस्य एकाकी व्रजेत, तत्र च यतना कर्तव्या। सा च प्राक्कल्पाध्ययनेऽभिहिता। ततो उपधिर्नोपहन्यते, यतनया प्रवृत्तत्वात।। उपसंहारमाह-

[भा.१९१८] एसो पढमो भंगो एवं सेसा कमेण जोएज्ञा।
आसन्नुज्जयठाणं गच्छे दारा य तत्थ इमे।।

वृ- एषोऽनन्तरोदितः प्रथमो भङ्गः। एवमुपदर्शितेन प्रकारेण शेषा अपि भङ्गका क्रमेण योक्तव्यास्तद्यथा- निर्गमनशुद्धः प्राग्वत, गमनाशुद्धो व्रजिकादिषु प्रतिबन्धकारणात। निर्गमनाशुद्धो दोषाकीर्णतया निर्गमनात, गमनशुद्धो व्रजिकादिष्वप्रतिबन्धात निर्गमनाशुद्धो गमनाशुद्धश्च प्राग्वत। अथ प्रथमभङ्गवर्ती प्रशस्यः, कारणतो द्वितीयभङ्गवर्त्यपि। एवं च गच्छता तेन ये आसन्ना उद्यता उद्यतविहारिणस्तेषां स्थानं गच्छेत, तत्र च गतस्य परीक्षादिनिमित्तमिमानि द्वाराणि भवन्ति।। तान्येवाह-

[भा.१९१९] परिच्छहानि असती आगमनं निग्गमो असंविग्गे।
निवेयणजयणमि सठं दीहअद्धं पडिच्छंति।।

वृ- परीक्षा 'हानीति' हानिवृद्धिविषया कर्तव्या, यत्र ज्ञानादीनां हानिस्तत्र न वस्तव्यमन्यत्रवस्तव्यमिति भावः। 'असतित्ति' यस्य समीपं गच्छोपसम्पन्नस्तस्मिन सापेक्षे निरपेक्षेवा कालगतत्वेनासति, योऽन्यः स्थापितस्तस्य सकाशे स्थाव्यम। तस्मिन्नपि सीदति यावत्कुलादिस्थविराणामागमनं तावत्प्रतीक्षणीयं, तैरपि प्रतिचोदने कृते सीदति निर्गमो विधेयः, गच्छता च संविग्नाभावे बहिर्वस्तव्यमसंविग्ने निवेदना कर्तव्या बहिर्वसत्यभावे तेष्वसंविग्नेषु नवरं यतना विधेया। तथाऽसंविग्नेषु वासं वसनं निसृष्टमनुज्ञातमेकरात्रमुत्कर्षतस्त्रीणि दिनानि, वर्षादिकारणतः पुनर्यतनया दीहखद्धमपि प्रचुरमपि दीर्घकालं प्रतीक्ष्यते। एष द्वारगाथासंक्षेपार्थः।।

साम्प्रतमेनामेव विवरीषुः प्रथमतः परच्छहानिति द्वारमाह-

[भा.१९२०] पासत्थादिविरहितो, काहियमाईहि वा वि दोसेहिं।
संविग्गमपरितंतो साहम्मियवच्छलो जाउ।

वृ- अपान्तराले पार्श्वस्थादिविरहितः पार्श्वस्थादिसंसर्गविप्रमुक्तः काथिकादिभिर्वा भावप्रधानोऽयं निर्देशः। काथिकत्वादिभिर्वा दोषैर्विप्रमुक्तस्तथा संविग्नोऽपरिश्रान्तोऽपरिश्रान्तः सामाचार्यामिति गम्यते। तथा यः साधर्मिकवत्सलः प्रवचनलिङ्गसाधर्मिकवात्सल्यपरायणः सः।

[भा.१९२१] अब्भुज्जए सुठाणं, परिच्छिउं हीयमानए मोत्तुं।
केसु पदेसुं हानी, वुड्ढी वा तं निसामेहि।।

वृ- अभ्युद्यतानामुद्यतविहारिणां स्थानं परीक्ष्य, गाथायां सप्तमी षष्ठ्यर्थे, हीयमानकान् मुक्त्वा तिष्ठेत्। अथ केषु पदेषु हानिर्वृद्धिर्वा सूरिराह-तदेतत्कथ्यमानं निशामय।। तदेवाह-

[भा.१९२२] तवनियमसंजमाणं जहियं हानी न कप्पते तत्थ।
तिगवुड्ढी तिगसोही पंचविसुद्धी सुसिक्खा य।।

वृ- यत्र तपो नियमसंयमानां हानिस्तत्र न कल्पते वस्तुं, यत्र पुनस्त्रिकवृद्धिर्ज्ञानदर्शनचारित्रवृद्धिर्यत्र च त्रिकस्याहारोपधिशय्यारूपस्य शोधिर्यत्र च पञ्चानां पार्श्वस्थादिस्थानानां विशुद्धिः [illegible] यत्र च सुशिक्षाग्रहणे आसेवने च तत्र वस्तव्यम्।। साम्प्रतमेनामेव गाथां विवृणोति-

[भा.१९२३] बारसविहे तवे ऊ इंदियनोइंदिए य नियमे उ।
संजमसत्तरसविहे हानी जहियं तहिं न वसे।।

यत्र द्वादशविधे तपसि इन्द्रियविषये च नियमे, संयमे सप्तदशविधे हानिस्तत्र न वसेत्।।

[भा.१९२४] तवनियमसंजमाणं एएसिं चेव तिण्ह तिगवुड्ढी।
नाणादीन व तिण्हं तिगसुद्धी उग्गमादीणं।।

वृ- एतेषामेव त्रयाणां तपो-नियम-संयमानां वृद्धिस्त्रिकवृद्धिः, अथवा ज्ञानादीनां त्रयाणां वृद्धिस्त्रिकवृद्धिः। त्रयाणामुद्गमादीनामुपलक्षणमेदाहारादीनां वा त्रयाणां शुद्धिस्त्रिकशुद्धिः।।

[भा.१९२५] पासत्थे उसन्ने कुसील संसत्त तह अहाच्छंदे।
एएहिं जो विरहितो पंचविसुद्धो हवई सो उ।।

वृ- पार्श्वस्थो अवसन्नः कुशीलः संसक्तो यथाच्छन्द एते पञ्चापि प्राक् सप्रपञ्चप्ररूपिता एतैः स्थानैर्यो विरहितः स पञ्चविशुद्धो भवति। पञ्चविशुद्धावेव प्रकारान्तरमाह-

[भा.१९२६] पंच य महव्वयाइं अहवा वी नाण-दंसण-चरित्तं।
तव विनओ वि य पंच उ पंचविहुवसंपया वावि।।

वृ- वाशब्दः प्रकारान्तरोपप्रदर्शने पञ्चमहाव्रतानि। अथवा ज्ञानं दर्शनं चारित्रं तपो विनय इति पञ्च, यदि वा पञ्चविधा ज्ञानदर्शनचारित्रतपोवैयावृत्यभेदतः पञ्चप्रकारा उपसम्पत् पञ्च तैः पञ्चभिर्विशुद्धः पञ्चविशुद्धः सुशिक्षमाह-

[भा.१९२७] सोमनसिक्खसुसिक्खा सा पुन आसेवने य गहणे य।
दुविहाए वि न हानी जत्थ य तहियं निवासो उ।।

वृ- शोभना शिक्षा सुशिक्षा। सा द्विविधा, तद्यथा-आसेवने ग्रहणे च। आसेवने प्रत्युपेक्षणादेः सामाचार्या ग्रहणमागमस्य एतस्यां द्विविधायामपि यत्र न हानिस्तत्र निवासः कल्पते कर्तुम्।।

[भा.१९२८] एएसु ठाणेसुं, सीयंते चोदन्ति आयरिया।
हावेंति उदासीना, न तं पसंसंति आयरिया।।

वृ- एतेषु स्थानेषु तपःप्रभृतिषु स्वयमाचार्या हीयमाना न दृश्यन्ते, शिष्यास्तु केचित्सीदन्ति तान् सीदतो यत्राचार्याश्चोदयन्ति तं गच्छं निवासयोग्यतया आचार्याः प्रशंसन्ति। यत्र पुनराचार्या उदासीना मध्यस्थाः सामाचारं हापयति उपेक्षन्ते न तं प्रशंसन्त्याचार्याः नासौ गच्छ उपसम्पदनीय इत्यर्थः। किं कारणमत आह-

[भा.१९२९] आयरिय उवज्झाया नाणुन्नाया जिनेहिं सिप्पट्ठा।

नाणे चरणे जोगा वहाउ ते अनुन्नाया ।।

वृ- आचार्या उपाध्यायाश्च जिनैस्तीर्थकृद्भिर्न शिल्यार्थाः शिल्पशिक्षणनिमित्तमनुज्ञाताः के कारणेः पुनरनुज्ञातास्तत आह- ज्ञाने चरणे च ये योगास्तेषाथावहाः प्रापका यतो भविष्यन्ति ततस्ते अनुज्ञाता ज्ञानचरणस्फातिनिमित्तमनुज्ञाता इत्यर्थः । अपि चेदृशा आचार्या उपाध्याया अनुज्ञाताः -

[भा.१९३०] नाण चरणे निउत्ता जा पुव्व पुरूविया चरणसेढी ।
सुहसीलट्ठाणविजढे, निद्यं सिक्खावणा कुसला ।।

वृ- ज्ञाने एकग्रहणात्तज्जातीयस्य ग्रहणमिति न्यायाद्दर्शने चारित्रे च नियुक्ताः सततोद्युक्तास्तथा । सुखशीलाः पार्श्वस्थादयः तेषां स्थानं श्रियते सेवन्तेतद्विजढे तद्रहिते, या पूर्वं कल्पाध्ययने कृतिकर्मसूत्रे चरणश्रेणिः प्ररूपिता तस्यां स्थिताः तथा नित्यं सदा शिक्षापनायां ग्रहणशिक्षायामासेवनाशिक्षायां च ग्राहयितव्यायां कुशलाः समर्थाः ईदृशां समीपमुपगम्योपसम्पत्तव्यम् । ।गतं परिच्छिहाणित्ति द्वारमिदानीमसतित्ति द्वारमाह-

[भा.१९३१] जेए वि पडिच्छित्त सो, कालगतो सो वि होइ आहच्च ।
सो विय सावेक्खो वा निरवेक्खो वा गुरू आसि ।।

वृ- येनापि स प्रतीच्छितो यस्य समीपे सशिष्यपरिवार उपसम्पन्नः सोऽपि आहच्च कदाचित् कालगतो भवेत् सोऽपि च गुरूः कालगतः सापेक्षो वा आसीन्निरपेक्षो वा, तत्र यः सापेक्षः सोऽमुं विधिं करोति ।।

[भा.१९३२] सावेक्खो सीसगणं, संगहकारेइ आनुपुव्वीए ।
पडिच्छागय वेत्ति, एस वि वाणे अह महल्लो ।।

वृ- सापेक्षः शिष्यगणं स्वदीक्षितशिष्यसमूहमभिनवस्थापितस्य संग्रहमानुपूर्व्यानुपूर्वीकथनेन कारयति । यथा पूर्वं सुधर्मस्वामी गणधर आसीत् । ततस्तच्छिष्यो जम्बूस्वामी गणधर आसीत् । तस्यापि शिष्यः प्रभवः । एवं तावद्यावत् सम्प्रति वयमहमपि च । सम्प्रति महान् वृद्धीभूतस्ततो मयाऽमुको गणधरः स्थापितो वर्तते तस्याज्ञां कुर्यात् वैनयिकादिकं च, तथा ज्ञानदर्शनादि प्रतीच्छादिनिमित्तमागता स्तानपि ब्रूते- एष मम स्थाने विज्ञायेत, ममैवैतस्य सम्प्रति वैनयिकादिकं कर्तव्यमित्यर्थः । अत्रैवार्थे दृष्टान्तमाह-

[भा.१९३३] जह राया व कुमारं, रज्जे ठावेउमिच्छए जं तु ।
भड जोहे वेति तंग, सेवए तुब्भे कुमारंति ।।

[भा.१९३४] अहयं अतीमहल्लो, तेसिं वित्ती उ तेन दावे इ ।
सो पुन परिच्छिउणं, इमेण विहिणा उ ठावेइ ।।

वृ- यथा राजा यं कुमारं राज्ये स्थापयितुमिच्छति, तं प्रति भटान् योधांश्च ब्रूते । साम्प्रतमहमतीव महान् ततो यूयं सेवध्वममुकं कुमारमिति । एवं तानुक्त्वा तेषां वृत्तीस्तेन कुमारेण दापयति येन त तदनुरक्ता जायन्ते, । स पुनः कुमारोऽनेन वक्ष्यमाणेन विधिना परीक्ष्य राज्ये स्थाप्यते । तमेव विधिमाह-

[भा.१९३५] परमन्न भुंज सुणगा छड्डुण दंडेन वारणं बितिए ।
भुंजइ देइय तइओ गस्स उ दानं न इयरेसिं ।।

वृ- राजा बहूनां कुमाराणां मध्ये कतरं कुमारं युवराज स्थापयामीति विचिन्तयन् परीक्षानिमित्तं तान् सर्वान् कुमारान् शब्दापयित्वा तेषां पृथक् पृथक् स्थाले परमान्नं पायसं परिवेषयति । परिवेष्य श्रृङ्खलाबद्धान् शुनकान् व्याघ्रकल्पान् कुमारान् प्रति मोचयति, । ते च शुनका वेगेन कुमारसमीप-

मागतास्तत्रैको राजपुत्रः शुनकभयेन पायसं परित्यज्य पलायितः। द्वितीयो राजपुत्रो दण्डेन तेषां शुनकानां वारणं करोति भुंक्ते च न च किमपि तेभ्यो ददाति,। तृतीयः पुनः स्वयं भुंक्ते शुनकेभ्योऽपि च स्वस्थालात् परस्थालाश्च ददाति। तस्य तृतीयस्य राजपुत्रस्य राजदानं, नेतरयोर्द्वयोः। किं कारणमिति चेदत आह-

[भा.१९३६] परबलपेल्लिउ नासति, बितिउ दानं न देइ उ भडाणं।
न वि जुज्झंते तेऊ एए दोवी अनरिहाओ।।

वृ- प्रथमो यदा परबलमागच्छति तदानेन परबलेन प्रेरितः सन् राज्यमपहाय नश्यति। द्वितीयो न भटानां सुभटानां किमपि ददाति न च ते भटा अदत्ते परबले समागते युध्यन्ते। अत उभावपि परबलेन प्रेरणमत एतौ द्वावप्यनर्हौ राज्यस्य।।

[भा.१९३७] तइओ रक्खइ कोसं देइ य भिच्चाण ते य जुज्झंति।
पालेयव्वे अरिहो रज्जं तो तस्स तो दिन्नं।।

वृ- तृतीयः पुनः कुमारः कोशं भाण्डागारं रक्षति। भृत्यानां सुभटानां ददाति ततस्ते भृत्याः परबले समागते युध्यन्ते ततः परा(रं) भग्नं परबलमपगच्छति। तदपगतौ च स्वराज्यसौख्यमतः स पालयितव्यो राज्येऽर्ह इति तत् राज्यं राज्ञा तस्य दत्तम्। यथा भो लोका एष युवराजो युष्माभिरेव आसेवनीयः।।

[भा.१९३८] अभिसित्तो सट्ठाणं अनुजाणे भडादि अहियदानं च।
वीसुंभिय आयरिए गच्छेवि तयानुरूवं तु।।

वृ- एवं तस्मिन् युवराजे स्थापिते यदा राजा कालगतो भवति, तदा ते भटप्रभृतयस्तं युवराजं राजानमभिसिञ्चन्ति। अभिषिक्ते सति तस्मिन् सेवका उपस्थाप्य स्वं स्वमायोगस्थानं निवेदयन्ति। ततः सो अभिषिक्तो नवको राजा यत् पूर्वमायोगस्थानं तत्तस्मै अनुजानाति। अधिकं च तेषां भटादीनां दानं द्विपदादिदानं सुवर्णादिदानं ददाति,। एष दृष्टान्तोऽयमर्थोपनयः। विष्वग्भूते शरीरं पृथग्भूते मृते इत्यर्थः आचार्ये गच्छेऽपि तदनुरूपं तृतीयराज्यार्हकुमारानुरूपं आचार्यं स्थापयन्ति। इयमत्र भावना- आचार्येण द्रव्यापदादिषु शिष्याः परीक्षणीयाः। तत्र योऽशक्तिको भीरुः स राजप्रद्वेषादिषु समुत्पन्नेषु गणमपमहाय नश्यतीति प्रथमकुमार इव गुरुपदस्यार्हः। यः पुनरदाता सोऽदायकत्वेन संग्रहोपग्रहौ न करिष्यतीत्ययोग्यः। यस्त्वभीरुतया शुनकस्थानीयान् प्रत्यनीकान्वारयति दायकत्वेन च सङ्ग्रहोग्रहौ करोति, स योग्य इति गणधरपदे स्थापयितव्यः। तस्मिंश्च स्थापिते कालेन विष्वग्भूते आचार्ये साधवः कृतप्राञ्जलयस्तमुपतिष्ठन्ते। उपस्थाय च यो यस्य पूर्वं नियोग आसीत् स तं तस्मै नवकाचार्याय कथयति। एतदेवाह-

[भा.१९३९] दुविहेण संगहेण, गच्छं संगिण्हए महाभागो।
तो विन्नवेंति तेवी तं चेव ठाणयं अम्हं।।

वृ- सोऽभिनवस्थापितो महाभागो गच्छं द्विविधेन संग्रहेण द्रव्यसंग्रहेण भावसंग्रहेण वस्त्रपात्रादिना भावसंग्रहेण ज्ञानादिना संगृह्णाति। एवं सगृह्णाति तस्मिन् ततस्तेऽपि साधवः कृतप्राञ्जलयः तं विज्ञपयन्ति। तथा तदेव स्वं स्वं स्थानमस्माकं प्रयच्छतेति।।

अथ किं किं तेषां स्थानमिति तत्स्थान- निरूपणार्थमाह-

[भा.१९४०] उवगरण वालवुड्ढा, खमग गिलाणे य धम्मकहि वादी।
गुरुचिंत वायणा पेसणासु कितिकम्मकरणाय।।

वृ- एको ब्रूते-अहमुपकरणत्ति उपकरणोत्पादक आसं, अन्योऽहं बालवृद्धानां वैयावृत्त्यकरो, ऽपर क्षपकवैयावृत्त्यकरो, ऽन्यो ग्लानं इति ग्लानैयादृतकरः अपरो धर्मकथा धर्मकथाव्यापारनियुक्तः, अन्यो वादी परवादिमथने नियुक्तः, गुरुचिंतत्ति अपरो ब्रूते-अहं गुरोर्यत्कर्त्तव्यं तत्र नियुक्तः, वायणत्ति अपरो हं वाचनाचार्यत्वे नियुक्त, अन्योऽहं प्रेषणे नियुक्तः, अपरो ब्रूतेऽहं कृतिकर्मकरणे विश्रामणे ।।

[भा.१९४१] एएसुं ठाणेसुं, जो आसि समुज्जओ अठविओवि ।
ठविओवि न विसीयइ, सठाविउमलं खलु परेसिं ।।

वृ- एते खलु उपकरणादिषु कृतकर्मपर्यवसानेषु स्थानेषु यः पूर्वस्थापितोऽपि गणधरपदे समुद्यत आसीत् । सगणधरपदे स्थापितोऽप्येतषु स्थानेषु न विषीदति कृतकरणत्वात् । स इत्थंभूत एतेषु स्थानेषु परान्, गाथायां षष्ठी द्वितीयार्थे प्राकृतत्वात् सम्बन्धे वा, यथा भाषाणामश्रीयादित्यत्र स्थापयितुमलम् ।।

[भा.१९४२] एवं ठिओ ठवेइ अप्पाण परस्स गोवि सो गावो ।
अट्ठितो न ठवेइ, परं न य तं ठवियं चिरं होई ।।

वृ- एवं पूर्वं गणधरपदे अस्थापित एतेपूपकरणादिस्थानेषु स्थितः सन् आत्मनः परस्य चैतेषु स्थानेषु स्थापयति, स्थापयिता भवति । गोवृष इव गाः स्वस्थाने, यः पुनः पूर्वमेतेषु स्थानेषु स्थितः सपरसमुपलक्षणमेतत् । आत्मानं च न स्थापयति स्वयं तत्राव्यापृतत्वात् । न च तत्स्थापितं चिरं भवति, । कस्मादिति चेदुच्यते-स यदान्यान् उपकरणादिष्वनुद्यच्छतः शिक्षयति, । यथा सति बले किं यूयं स्वशक्त्या नोद्यच्छथानुद्यच्छंतो हि वैयावृत्त्यफलात् भ्रश्यथ, तदा ते चिन्तयेयुः य यदि वैयावृत्त्यफलमभविष्यत्तत स्वयमप्येतेषु स्थानेषूद्यस्तथा इति । अथवा वैयावृत्त्यफलं श्रद्दधाना अपि खग्गुडत्वेनैवं मन्यरेन् एवं जानन्तो यूयं किं पूर्वं नायर्तिर्ध्वामति ।।

सम्प्रति गो वृष इव गा इति दृष्टान्तं भावयति-

[भा.१९४३] पउरतणपाणियाइं, वणाइं रहियाइं खुड्डजंतूहिं ।
नेइ वि सो गोणीओ, जाणइ य उवट्ठकालं च ।।

वृ- वृषो बलीवर्दो गोधनानि प्रचुरतृणपानीयानि तथा क्षुद्रजन्तुभिः क्षुद्रप्राणिभीरहितानिनयति जानाति च, उपस्थानकालमभ्यागमवेलां ज्ञात्वा च स्वास्थानमानयति, । एवमभिनवस्थापित आचार्यो गच्छं स्वस्वव्यापारे नियोजयन् परिपालयति । अत्रैव दृष्टान्तान्तरमाह-

[भा.१९४४] जह गयकुलसंभूतो, गिरिकंदर-विसमकडयदुग्गेसु ।
परिवहति अपरितंतो, नियसरीरुग्गते दंते ।।

वृ- यथा गजकुलसंभूतोऽनेन जात्यतामाह-गिरिकन्दरेषु गिरिगुहासु विषमकटकेषु विषमेषु गिरिपादेषु उग्रेषु वा परिश्रान्तोऽश्रान्तः सन् निजशरीरोद्गतान् दंतान् परिवहति-

[भा.१९४५] इय पवयणभत्तिगतो, साहम्मियवच्छलो असढभावो ।
परिवहइ साहुवग्गं खेत्तविसमकालदुग्गेसु ।।

वृ- इति अनेन गजदृष्टान्तप्रकारेण । प्रवचनेभक्तिगतो गच्छव्याहकत्वं प्रवचनभक्तिं मन्यमानः साधर्मिकवत्सलो लिङ्गप्रवचनाभ्यां ये साधर्मिकास्तद्वात्सल्यपरायणोऽशठभावोऽमायावी विषमेसु क्षेत्रेषु विषमेषु च कालेषु दुर्भिक्षमार्याद्युपद्रवव्रातसंकुलेषु दुर्गेषु च साधुवर्गं परिवहति तस्य समीपे स्थातव्यं ।।

गतमसतीति द्वारमिदानीमागमनद्वारमाह-

[भा.११४६] जत्थ पविट्ठो जइ तेसु, उज्जया हो उ पच्छ हावेंति।
सीसा आयरिओ वा, परिहानी तत्थिमा होइ।।

वृ- यत्र गच्छे सशिष्यपरिवारः प्रविष्टः सन् सूत्रार्थनामागमनं करोति तत्र यदि ते साधवः पूर्वं सुष्ठु उद्यता भूत्वा पश्चात्सामाचारीं हापयन्ति, आचार्यो वा पश्चात् परिहापयति तत्र हानिरियं वक्ष्यमाणा भवति ज्ञातव्या। तामेवाह-

[भा.११४७] पडिलेह दिय तुयट्टण निक्खिव आयाण विनय सज्झाए।
आलोग ठवण मंडलि भासो गिहमत्त सेज्जतरे।।

वृ- पडिलेहित्ति उपकरणं न प्रत्युपेक्षन्ते तथ अग्लाना मार्गपरिश्रमरहिताश्च दिवा त्वग्वर्तनं कुर्वन्ति शेरते इत्यर्थः। निक्खिवत्ति दण्डादिकं निक्षिपन्तो न प्रत्युपेक्षन्ते न परिमार्जन्ति दोषैर्वा दुष्टं प्रत्युपेक्षणं परिमार्जनं वा कुर्वते, आयाणत्ति दण्डादिकमाददाना न प्रत्युपेक्षन्ते न प्रमार्जयन्ति दुःप्रत्युपेक्षणं दुःप्रमार्जनं वा कुर्वन्ति। विनयं कृतकर्मलक्षणं वाचनादिषु न कुर्वन्ति। सज्झाएत्ति स्वाध्यायो वा न क्रियते, मण्डली सामाचारीं वा न कुर्वन्ति,। आलोगत्ति संखडीं शरीरं वा प्रलोकन्ते, यदि वा आलोचना न क्रियते, अनालोचितं भुञ्जते इत्यर्थः। ठवणत्ति स्थापनाकुलानि विशन्तिस्थापितं वा गृह्णन्ति। मंडलित्ति भोजनमण्डली समाचारीं हापयन्ति। भासत्ति भाषायामसमिति भाषन्ति(न्ते) एकग्रहणे जालीयग्रहणमिति न्यायात् शेषास्वपि समितिष्वसमिताः। गिहमत्तत्ति गृहिमात्रकेषु प(व)टलिकादिष्वानातं गृह्णन्ति। सेज्जायरोत्ति शय्यातरपिण्डं भुञ्जते।।

[भा.११४८] एमाई सीयंते, वसभा चोयंति चिट्ठति ट्ठियंमि।
असती थेरा गमनं, अच्छति ताहे पडिच्छंतो।।

वृ- एवमादिष्वादिशब्दाद्बुदिपरिग्रहः सीदतः साधून् गुरुं वा वृषभाश्चोदयन्ति शिक्षयन्ति। तत्र यदि चोदितः साधुवर्गो गुरुर्वा तिष्ठति ततस्तस्मिन् स्थिते सोऽपि सशिष्यपरिवार आगन्तुकस्तिष्ठति। असती इत्यादि असत् शिक्षायाः पुनः प्रत्यावर्तनस्य वा अभावो यदि ततो यावत् पाक्षिके चातुर्मासिके संवत्सरे वा कुलस्थविराणां सङ्घस्थविराणां वा गमनं भवति तावत्तत्प्रतीक्षमाणआस्तेतेषु कुलादिस्थविरेषु समागतेषु निवेदयति तथाप्यतिष्ठत्सु ततो निर्गमनम्। एतदेव व्याचिख्यासुः प्रथमतो वृषभचोदनं 'सप्रायश्चित्तमाह' -

[भा.११४९] गुरु वसभ गीयगीते, अचोदेंति गुरूगमादि जा लहुओ।
सारेइ सारवेई, खरमउएहिं जहा वत्थुं।।

वृ- वृषभः प्रतिपन्नगच्छाभारः स्वयं सारयति शिक्षयति। अथवा यो येनोपशाम्यति तं तेन सारयति शिक्षापयति,। कथमित्याह- आचार्योपाध्यायवृषभस्थविरभिक्षुकाणां मध्ये यथा वस्तुस्त्वनतिक्रमेण खरमृदुभिर्वचनैः सारयति सारापयति वा। किमुक्तं भवति- यः खरेणसाध्यस्तं खरेण खरण्टयति,। मृदुसाध्यं मृदुभिर्वचनैः सारयति,। अन्यथा प्रायश्चित्तं तदेव पूर्वार्धेन दर्शयति,- गुरु इत्यादि यदि वृषभो गुरुमाचार्यमुपाध्यायं वा न प्रतिचोदयति, तदा चतुर्गुरुकं वृषभो वृषभं न प्रतिचोदयति चतुर्लघु, वृषभो गीतार्थं न प्रतिचोदयति मासलघु,। अक्षरयोजना त्वेवम्- गुरुवृषभगीतागीतान् चोदयति,। गुर्वादि चतुर्गुरु प्रभृति यावदन्ते लघुको मासः। अत्र पुनः सीदत्सु चत्वारो भङ्गास्तानेवाह-

[भा.१९५०] गच्छो गणीय सीयइ बिई न गणीउ तइए न वि गच्छो।
जत्थ गणी अवि सीयइ, सो पावतरो न उन गच्छो।।

वृ- गच्छः सीदति गणी चेति प्रथमः, गच्छःसीदति न गणीति द्वितीयः, न गच्छः सीदति किन्तु गणीति तृतीयः, न गच्छो नापि गणीति चतुर्थः, । तथा चाह- द्वितीये भङ्गे गणी न सीदति, तृतीय न गच्छः, चतुर्थः चोदनमधिकृत्य शून्य इति नोपात्तः, । तत्राद्येषु त्रिषु भङ्गेषु मध्ये यत्र प्रथमतृतीये वा गणी स पापतरो यत्र पुनर्गच्छः सीदति । न गणी नासौ द्वितीयः पापतरः । किं कारणमिति चेदत आह-

[भा.१९५१] आयरिए जयमाणे, चोएउं जे सुहं हवइ गच्छो।
तंमि उ विसीयमाणे, चोयणमियरे कहं गेण्हो (ण्हे)।।

आचार्ये यतमाने गच्छः सुखेन चोदयितुं शक्यमानो भवति, । आचार्यस्य प्रतिभयात् तस्मिन्नाचार्ये विषदिति चोदना शिक्षामितरे साधवः कथं गृह्णीयुः, नैव गृह्णीयुरिति भावः, आचार्यस्य प्रतिभयाभावादतः प्रथमतृतीयौ भङ्गौ पापतरौ, न द्वितीय इति।।

[भा.१९५२] आसन्नट्ठिएसु उज्जएसु जहति सहसा न तं गच्छं।
मा दूसेज्ज अइठे, दूरतरे वा पनासेज्जा।।

वृ- यद्यपिनाम आसन्ने प्रदेशे उद्यतविहारिणः स्थिता विद्यन्ते, तथा तेष्वासन्नस्थितेषूद्यतेषुसहसा न तं गच्छं जहाति परित्यजति । किं कारणमिति चेदत आह, - तस्मा अद्युत्थान् दूषयेत् गच्छः । किमुक्तं भवति? न विषीदन्ति तेऽपि सीदत्सार्धं संगतो मा विषीदेयुरिति येऽपि सीदन्ति तेऽतिदूरतरं प्रणश्येयुर्विषीदेयुः । तदेवं वृषभचोदनं भावितमिदानीं स्थविरागमनं भावयति-

[भा.१९५३] कुलथेरादी आगम चोदना जेसु विप्पमायंति।
चोदयति तेसु ठाणं, अठिएसु उ निग्गमो भणितो।।

वृ- वृषभशिक्षायाः प्रत्यावर्तनस्य वा अभावे पाक्षिके चातुर्मासिके सांवत्सरिके वा यावत् कुलस्थविराणां गणस्थविराणां सङ्घस्थविराणां वा आगमस्तावत् प्रतीक्षते, । कुलस्थविरादीनां चागमे तेषां निवेदना क्रियते, ततस्ते स्थविरा येषु स्थानेषु ये विप्रमाद्यन्ति, तेषु स्थानेषु तान् प्रतिचोदयन्ति । ते प्रतिचोदिता यदि स्थितास्ततस्तेषु स्थितेषु सत्सु स शिष्यपरिवारस्तत्रैव स्थानं करोति । स्थितेन च तेन द्विविधापि शिक्षा शिक्षणीया । अथ ते चोदिताः सन्तो न स्थितास्ततस्तेष्वस्थितेषु ततो गच्छान्निर्गमो भणितस्तीर्थकरगणधरैः ।। गतमागमद्वारम्, पतिते निर्गमद्वारमतस्तदेव भावयति-

[भा.१९५४] कप्पमत्ते विहरइ, असमत्ते जत्थ हुंति आसन्ना।
साहिम्मि तहिं गच्छे, असतीए ताहिं दूरंपि।।

वृ- यदि आचारप्रकल्पः सुत्रतोऽर्थतश्च समाप्तो भवति । ततस्तस्मिन् कल्पे आचारप्रकल्पे समाप्ते स्वयंतथा विहारक्रमं विहरति । अथ नाद्यापि समाप्त आचारप्रकल्पस्तर्हि तस्मिन्नसमाप्ते यत्र यस्यां दिशि आसन्ना अनन्तरक्षेत्रवर्तिनः साधर्मिकाः संविग्नाः सांभोगिकास्तत्र गच्छेत् । अथासन्ना न विद्यन्ते तत आसन्नानामसत्यभावे दूरमपि गच्छेत् ।। कथं गच्छेदत आह-

[भा.१९५५] वइयादीए दोसे असंविग्गे या वि सो परिहरंतो।
के असंविग्गा खलु नियया दीया मुनेयव्वा।।

वृ- व्रजिकादीन् दोषान् व्रजिका गोकुलं आदिशब्दात् स्वमातापितृपूर्वपरिचितपश्चात्-

परिचितकुलपरिग्गहस्तान् दोषान् इह व्रजिकादयः प्रतिबन्धदोषहेतुत्वात् । दोषा इत्युक्तास्तथा-ऽसंविग्नांश्चापि स परिहरन् गच्छेत् । अथ के खल्वसंविग्नाः सूरिराह- नित्यादयो नित्यवास्यादयस्ते ज्ञातव्याः । तेषामपि हरणे प्रवेशादौ प्रायश्चित्तविधिमाह-

[भा.१९५६] णितियादीए अहच्छंदे वज्जिए पविसदाण गहणे य ।
भुंजण भुंजण गुरुगा संघाडे मासो जं च न्नं ।।

वृ- दूरमार्गगच्छता अपान्तराले संविग्नसुमनोज्ञानां वसतौ वस्तव्यम् । तदभावे नैत्यिकादीनां संविग्ने च अमनोज्ञानां निवेद्यान्यस्यां वसतौ स्थातव्यम् । यदि पुनर्नैत्यिको नित्यवासी आदिशब्दात्पार्श्व-स्थादिपरिग्रहस्तस्मिन् नैत्यादिके यथाच्छन्दवर्जिते प्रविशति यदि वा तेभ्यः किमपि भक्तादिकं ददाति, अथवा तेभ्यो गह्णाति तदा प्रवेशेन ग्रहणे दाने च प्रत्येक चत्वारो लघुका । भुंजणे गुरुगा इति । अथ तैः सह भुङ्क्ते तदा भोजने चत्वारो गुरुकाः । अथ नैत्यकादिसंघाटं याचित्वा तेन सह हिण्डते । ततः संघाटे हिण्डने लघुको मासः, जं चण्णमिति यच्च तेन संघाटकेन हिण्डमानोऽकल्पिकग्रहणतः तदास्वादनेन लाम्पट्यतः सेविष्यते । तदपि च प्रायश्चित्तं प्राप्नोति तदेवं यथाच्छंदवर्जिते नैत्यकादौ प्रवेशादिषु प्रायश्चित्तमुक्तम् ।। अधुना यथाच्छन्दे तदाह-

[भा.१९५७] एए चेव य गुरुगा पच्छित्ता होंति उ अहाच्छंदे ।
अमणुन्नेसुं मासो संभुजणे होंति चउगुरुगा ।।

वृ- अथामनोज्ञेषु संविग्नेषु प्रविशति, तदा प्रवेशे दाने ग्रहणे च प्रत्येकं लघुको मासः । अथ तैः सह भुङ्क्तेतदा चत्वारो गुरुकाः संघाटके लघुको मासः । यत एवमसंविग्नेषु प्रायश्चित्तानि तस्मादेतान् परिहरेत् । अथमार्गे संविग्ना न सन्ति ततः कारणवशतोऽसंविग्नेष्वपि गन्तव्यम् । (गतं) पतितमिदानीम-संविग्नद्वारं तेषु च गत्वा यत्कर्तव्यं तदाह- एतान्येव प्रायश्चित्तानि यथाच्छन्दे गुरुकानि भवन्ति तद्यथा-प्रवेशेदाने ग्रहणे भोजने च चत्वारो गुरुकाः । संघाटे गुरुको मासः ।

[भा.१९५८] संविग्गेगंतरिया, पडिच्छ संघाडए असति एगो ।
साहम्मिएसु जयणा तिन्नि दिनपडिच्छ सज्झाए ।।

वृ- संविग्नेन संविग्नगुणेनैकेनान्तरिता व्यवहिताः संविग्नैकान्तरिता असंविग्नास्तेषु कारणवशतो गन्तव्यम् । तत्र च भिक्षा निवसनं च कुर्वता यथा प्रथमोद्देशके परिहारिकस्य यतनोक्तातस्यापि द्रष्टव्या तैरपि असंविग्नैर्यदि स एकाकी तत एकाकिनः सतस्तस्य संघाटको दातव्यः । अथ योऽसौ द्वितीयको योग्यो दातव्यः, सोऽन्यत्र प्रेषणेन गतो वर्तते ततस्ते ब्रूयुरार्य! एकरात्रं द्विरात्रं त्रिरात्रं वा प्रतीक्षणीयम् । तत एतेन कारणेनोत्कर्षतः त्रिरात्रमपि प्रतीक्षते, असति संघाटके एक एकाकी व्रजेत् । तस्य च तथा व्रजतोऽपान्तराले यदि साधर्मिका भवन्ति । ततस्तन्मध्ये गत्वा वस्तव्यं कारणं च निवेदनीयं, निवेदिते कारणे तैः संघाटको दातव्यस्तदभावे ततो व्रजनीयमथ प्रतिपृच्छानिमित्तमेकं द्वि त्रीणि वा दिनानि यावत् यावत् प्रतीक्षापयेत्तत आह, स्वाध्याये स्वाध्यायनिमित्तं प्रतिपृच्छानिमित्तमित्यर्थः उत्कर्षतस्त्रीणि दिनानि प्रतीक्षेत एषा साधर्मिकेषु यतना । तदेवमसंविग्नद्वारमुक्तमिदानीं निवेदनाद्वारमाह—

[भा.१९५९] बहिगाम धरे सन्नी, सो वा सागारियं उवहिं अंतो ।
ठाण निसेज्ज तुयट्टण गहियागहिएण जागरणा ।।

वृ- संविग्नसमनोज्ञानामभावे ग्रामस्य बहिर्नैत्यिकादीनां निवेद्य तिष्ठति, ग्रामस्य बहिः प्रत्यपायसंभवे

ग्रामस्यान्तः शून्यगृहे तत्रापि निवेदना कर्तव्या, शून्यगृहस्याभावे संज्ञीश्रावकस्तस्य गृहे वस्तव्यम् ।। स वा संज्ञी श्रावकः सागारिको ऽगारीको ऽगारीसहितः स्यात्तर्हि तस्य गृहस्य बहिस्तवर्या या कुटी तत्र वस्तव्यम् ।। तस्य अप्यभावे अमनोज्ञेषु संविज्ञेषु वस्तव्यं, अमनोज्ञासंविग्नेषु वस्तव्यं, तेषामप्यभावे नित्यकादिष्वसंविग्नेषु वसति, तत्रेयं यतना स्थानमूर्ध्वस्थानं निषद्या उपवेशनं त्वग्वर्तनं दीर्घकायप्रसारणं तेषु गृहीतेनागृहीतेन वा उपकरणेन जागरणं कर्तव्यम् । एष द्वारगाथासंक्षेपार्थः व्यासार्थं त्वभिधित्सुः प्रथमतो बहिर्ग्रामिति व्याख्यानयति--

[भा.१९६०] वसही समणुन्नाइ, मागवहिं अह जो निवेदेइ ।
अनिवेदियंमि लहुओ, आणाइ विराधना चेव ।।

वृ- समनोज्ञानां संविज्ञानां वसतेस्तत्यभावे ग्रामाद्बहिस्तिष्ठति, न पुनर्नैत्यिकादिष्वसंविग्नेषु प्रवेष्टव्यं, प्रागुक्तप्रायश्चित्तभावात्, स च बहिस्तिष्ठति । तेषां नैत्यिकादीनां वा संविग्नानां वा अमनोज्ञानां निवेद्य कथयित्वा, यदि पुनर्न निवेदयति ततोऽनिवेदिते प्रायश्चित्तं लघुको मासः, आज्ञादिविराधना, आदिग्रहणात् आत्मविराधना संयमविराधना च परिगृह्यते । तथा हि-इयं भगवदाज्ञा तेषां निवेद्य बहिर्वस्तव्यमनिवेदनायामाज्ञालोपः आत्मविराधनां संयमविराधनां चाह--

[भा.१९६१] गेलन्ने न काहिंती कोहेणं जं च पाविहिती तत्थ ।
तम्हा नु निवेएज्जा, जयणा एतेसि माएउ ।।

वृ- अनिवेदने सति स कदाचित् ग्लानो जायते ग्लान्ये सति नास्माकं किमपि तेन निवेदितमिति क्रोधेन न किमपि ग्लानकृत्यं करिष्यति । गृहस्थाश्च तं तथाभूतं ग्लानं दृष्ट्वा तेषां नैत्यिकादीनां निवेदयेयुर्यथा युष्मदीयो ग्लानोऽसंग्रहको वर्तते । ततस्ते ब्रूयुर्मन्येरन् वा एषोऽस्मदीयो न भवति । यदि भवेत्तदास्माकमुपाश्रये तिष्ठेत्, निवेदयेद्वा । एवं यत्र गलानत्वेन वा आरक्षकादिग्रहणं । तत्र यदनर्थं प्राप्स्यति संयमविराधनात्मकमात्मविराधनात्मकं वा तत्सर्वमनिवेदनानिमित्तं तस्मात्तेषामनया वक्ष्यमाणया यतनया निवेदयेत् । तामेव यतनामाह--

[भा.१९६२] तुब्भं अहेसि दारं उस्सूरोत्ति जुताए एवं तु ।
न य नज्जइ सत्थो वी, चलिहिइ किं केतियं वेलं ।।

वृ- यदाहमागतस्तदा युष्माकमुपाश्रयद्वारमुषितमासीत् । तत एवं मया विकल्पितमुत्सूरं वर्तते इति युतायां पृथग्भूतायां वसतावुषितः अपि च न ज्ञायते सार्थोऽपि किं कियतीं वेलां, सप्तम्यर्थे व्यासौ द्वितीया, कस्यां वेलायां चलिष्यति, ततः पृथगुपाश्रये स्थितः । अथ स वेलायामागतस्तत इदं वदेत्--

[भा.१९६३] साहु समासे वसिउं अतिप्पियं मज्झ किं करेमित्ति ।
सत्थवसोहं भंते, गोसे मे वहेज्जह उदंतं ।।

वृ- साधुसकाशे साधुसमीपे च वस्तुं ममातिप्रियं परं भदन्त सार्थवशो ऽहं ततः किं करोमि तस्मात् गोसे प्रभाते मे उदन्तं वार्ता वहत ।

[भा.१९६४] एवं न उ दुरुस्से अह वाहिं होज्ज पच्चवायाउ ।
ताहे सुन्नह घरादिसु वसति निवेदितु तह चेव ।।

वृ- एवमनया यतनया निवेद्य न तु नैव ग्रामाद्दूरवर्ती वसेत् किन्तु ग्रामस्य समीपे वसेदथ बहिः स्तेनादिकृताः प्रत्यवाया अनर्था भवेयुस्ततस्तथैव पूर्वोक्तप्रकारेणैव निवेद्य शून्यगृहादिषु वसति,

आदिशब्दात् श्रावकग्रहादिपरिग्रहः ।। एतदेव भावयति—

**[भा.१९६५]** अहुणुव्वासि य सकवाड निव्विले निच्चले वसति सुन्ने ।
तस्सा सइ सन्निघरे इत्थीरहिते वसेज्जा वा ।।

**वृ-** अधुना साम्प्रतमुद्वासितमधुनोद्वासितं सकपाटं कपाटसहितमन्यथा स्तेनादिप्रवेशसंभवात् निर्बिलं बिलरहितमन्यथा सर्पादिसंभवात् । निश्चलं न जराजीर्णतया पतितुं प्रवृत्तं अमीषां च चतुर्णां पदानां षोडशभङ्गः । तत्र प्रथमो भङ्गः शुद्धः शेषा अशुद्धास्तत आह-इत्थंभूते शून्ये शून्यगृहे वसति तस्य शून्यगृहस्यासत्यभावे संज्ञिगृहे श्रावकगृहे सोऽपि श्रावको द्विधा संभवति सस्त्रीकःस्त्रीरहितो वा । तत्र स्त्रीरहिते वसेत् ।

**[भा.१९६६]** सहिए वा अंतो बहि अंतो वीसु घरकुडीए वा ।
तस्सा सति निइयादिसु वसेज्जउ इमाए जयणाए ।।

**वृ-** स्त्रीरहितस्य श्रावकगृहस्याभावे सहिते वा स्त्रीसहिते वा श्रावकगृहे तस्य गृहस्यान्तर्बहिर्वा विविक्ते प्रदेशे वसेत् । अन्यथा प्रायश्चित्तं चतुर्गुरु । तस्याप्यभावे तस्य श्रावकगृहस्य बहिः पुरतः पृष्ठतः पार्श्वतो वा यदि वान्तर्गृहस्य कुटी समस्ति तस्यां वसेत् । तस्यापि कुटीकस्यासत्यभावे नैत्यिकादिष्वपि आदिशब्दात् पार्श्वस्थादिपरिग्रहोऽनया वक्ष्यमाणया यतनया वसेत् ।। एतावता मूलद्वारगाथोपन्यस्तं निवेदद्वारमगमत् । यतनाद्वारमापतितमिदानीं तामेव यतनामाह--

**[भा.१९६७]** निइयादि उवहि भत्ते, सेज्जा सुद्धाय उत्तरे मूले ।
संजइरहिए काले अकाल सज्झाए अभिक्खं च ।।

**वृ-** ये नैत्यिकादय उपधौ भक्ते शय्यायां च उत्तरगुणैर्मूलगुणैर्वा शुद्धाः । किमुक्तं भवति ? ये उत्तरगुणैर्मूलगुणैर्वा शुद्धां शय्यां गवेषयन्ति शुद्धं भक्तं शुद्धमुपधिं तेषु वसेत्, तत्रापि संयतीरहिते तदभावे संयतीसहितेऽपि । ताश्च संयत्यो द्विधा कालचारिण्योऽकालचारिणश्च तत्र याः पाक्षिकादिष्वागच्छन्ति ताः कालचारिण्यस्तद्व्यतिरेकेणागच्छन्त्योऽकालचारिण्यः स्वाध्यायनिमित्तम-भीक्ष्णं चशब्दात् भक्तपानं दातुं गृहीतुं वा कन्दर्पार्थं वा तत्राकालचारिणीषु बहवो दोषाः कालचारिणीष्वल्पतरा इति संयतीरहिताभावे कालचारिणीभिः संयतीभिः सहिते वस्तव्यम् ।। एतदेव सप्रपञ्चमभिधातुकाम आह—

**[भा.१९६८]** सिज्जुवहि भत्तसुद्धे, संजइ रहिए य भंग सोलसओ ।
संजइ अकालचारिणी सहिए बहुदोसला वसही ।।

**वृ-** शय्याशुद्ध उपधिशुद्धो भक्तशुद्धः संयतीरहित इति चतुर्षु पदेषु सप्रतिपक्षेषु भङ्गाः षोडश । तद्यथा-शय्याशुद्धः उपधिशुद्धः भक्तशुद्धः संयतीरहित इति प्रथमः । शय्याशुद्ध उपधिशुद्धो भक्तशुद्धः संयतीसहित इति द्वितीयः । इत्यादिप्रस्तारश्च कार्यः, एतेषु च षोडशसु भङ्गेषु मध्ये यत्र यत्र संयत्यस्तत्र तत्र कालचारिणीभिः सहिते वस्तव्यम् । नाकालचारिणीभिर्यत आहसंयतिभिरकाल-चारिणीभिः सहिते 'बहुदोषला' बहुदोषा वसतिरिति आह-पूर्वमुपधिभक्तशय्यां शुद्धा इत्युक्तमिदानीं भङ्गचिन्तायां प्रथमतः शय्योक्ता । तत्र किं कारणमत आह-

**[भा.१९६९]** सागारितेनाहिम वासदोसा, दुसोहिया तत्थ उ होइ सेज्जा ।
वत्थन्न पाणाणिव तत्थ ठिच्चा, गिण्हंति जोगानुवभुंजते वा ।।

**वृ-** शय्यां विना मण्डल्यामुपविष्टायां सागरिकाः समं पतन्ति उपधिग्रहणाय स्तेना वा निपतन्ति हिमप्रपाते वर्षप्रपाते वा संयमात्मविराधनादोषाः । तथा तत्र तेषु शय्योपधिभक्तेषु मध्ये शय्या दुःखोधिता भवति । आहारोपधयः शुद्धाः सुखेन लभ्यन्ते । महता कष्टेन पुनः शुद्धा वसतिरिति भावः तथा तत्र शय्यायां स्थित्वा योग्यानि कल्पनीयानि वस्त्रान्नपानानि गृह्णन्त्युपभुञ्जते च । एतैः कारणैर्भङ्गचिन्तायां प्रथमतः शय्या कृता ॥ तथा-

**[भा.११७०]** आहारोवहि सेज्जा, उत्तरमूले असुद्धसुद्धे य ।
अप्पतरदोसपुव्विं असतीए महतदोसे वि ॥

**वृ-** आहारोपधिशय्याभिः उत्तरगणविषये वा मूलगुणविषये अशुद्धः शुद्ध इति भङ्गचिन्तायां ये षोडशभङ्गाः प्रागुक्तास्तेषु मध्ये पूर्वमल्पतरदोषे वस्तव्यम् । तस्यासति अभावे महादोषेऽपि ॥

अथ तस्मिन् भङ्गे अल्पतरा दोषा इति, अत आह-

**[भा.११७१]** पढमासति बिइयंमिति, तहियं पुन गइ कालचारीसु ।
एमेव सेसएसु वि, उक्कमकरणंपि पूएमो ॥

**वृ-** सर्वेषां भङ्गानां मध्ये प्रथमभङ्गे सर्वाल्पतरा ये दोषा इति तत्र वस्तव्यम्, प्रथमस्यासति 'अभावे द्वितीयेऽपि, तत्र पुनस्तिष्ठति कालचारिणीषु संयतीषु, एवं शेषेष्वपि भङ्गेषु वसति । किमुक्तं भवति? येष्वप्यन्येषु भङ्गेषु संयतिसहितपदं तेष्वपि कालचारिणीभिः सहितेषु वस्तव्यं, नाकालचारिणीभिरिति । तथा (उत्) क्रमकरणमपि अकालचारिणीभिः सहितत्वमपि पूजयाम उपादेयतया प्रशंसामः, सर्वेषां भङ्गानां मध्ये कथमिति चेदुच्यते, यस्मिन् भङ्गे शय्याभक्तोपधयः समुदिया भङ्गत एकद्विका वा शुद्धास्तत्र यद्यकालचारिण्यो भक्तं पानं वा दत्वा गृहीत्वा तत्क्षणमेव व्रजन्ति न पुनरागच्छन्ति । स्वाध्यायं वा कृत्वा सकाले गच्छन्ति तत्र स्थातव्यं प्रायो दोषाभावादिति ॥ एतदेव स्पष्टतरमाह-

**[भा.११७२]** सेज्जं सोहे उवहिं, भत्तं सोहेइ संजती रहिते ।
पढमो, बितिउ संजइ सहिउ ता पुन कालचारीतो ॥

**वृ-** शय्यां शोधयति, उपधिं शोधयति, भक्तं शोधयति संयतीरहितः चेति प्रथमो भङ्गः, द्वितीयः संयतीसहितस्ताः पुनः संयत्यः कालचारिण्यो यदि स्युस्तदा वस्तव्यं, एवं शेषेष्वपि संयतीसहितेषु भङ्गेषु भावनीयम् । यथाकालचारिण्यः कथं स्युरित्यत आह-

**[भा.११७३]** आयाण कंदप्पे वियाल उरालियं वसंतीणं ।
नियंयादीच्छक्कसहा संजोएमो तहाच्छंदे ॥

**वृ-** भक्तपानादीनामादाने, उपलक्षणमेतत् दाने च, तथा कन्दर्पेकन्दर्पनिमित्तं, कन्दर्पग्रहणमुपलक्षणं स्वाध्यायनिमित्तं च, उरालिकं अतिशयेन स्फारप्रभूवेलामिति यावत्, वसन्तीनामकालचारिणीत्वं द्रष्टव्यम् । एवं नैत्यिकादीनां यः षड्दशधा षोडशप्रकारः संयोगः तत्र वस्तव्यम् किं सर्वत्र, नेत्याह- मुक्त्वा यथाच्छन्दानि । किमुक्तं भवति? तेषु सत्सु यथाच्छन्देषु न वस्तव्यं, तदभावे तत्रापि वसेत् ॥ सम्प्रत्येतेषु नैत्यिकादिषु संवासमधिकृत्य यतनामाह-

**[भा.११७४]** ठिय, निसिय तुयट्टे वा गहियागहिए य जग्ग सुवणं वा ।
पासत्थादीनेवं, नियए मोत्तुं अपरिभुत्तो ॥

**वृ-** पार्श्वस्थानामुपाश्रयेषु गहियत्ति गृहीतोपकरणः स्थित ऊर्ध्वस्थितो वसेत्, यद्येवं स्थातुं न शक्नोति

ततो गृहीतोपकरणः एव निष्क्रोपगतो जागत्तिष्ठेत्, तथाप्यशक्नुवन् गृहीतोपकरणः स्वगृवृतो जाग्रदवतिष्ठेत्, अथ त्रिष्वप्येतेषु यदि कथमपि प्रचलया आशङ्का, तदा मा पात्रादिभङ्गः स्यादित्युपकरणं पार्श्वे निक्षिप्यागृहीतोपकरणो यथा समाधिस्थितो निषन्नस्त्वगृवृतो वा जाग्रत्तिष्ठेत् । अथ जागरणं कर्तुं न शक्नोति तत आह-स्वपन् वा गृहीतोपकरणो ऽगृहीतोपकरणो वा यथासमाधिः कुर्यात् । एवं यतना पार्श्वस्थादीनां उपाश्रयेषु द्रष्टव्या । नैत्यिके नित्यवास्युपाश्रये नित्यवासीपरिभुक्तान् प्रदेशान् मुक्त्वा अपरिभुक्ते प्रदेशे उपकरणं निक्षिप्य यथासमाधि जाग्रत स्वपन् वा वसेत् ।।

**[भा.११७५]** एमेव अहाच्छंदे, पडिहणणाज्झाण अज्झयणं कन्ना ।
ठाणठितो विनिसामे, सुण आहरणं च गहिएणं ।।

**वृ-** एवमेव पार्श्वस्थादिगतेनैवप्रकारेण यथाच्छन्देऽपि यतना कर्तव्या । नवरं यदि वा शक्तिरस्ति तर्हि प्रतिहननं कर्तव्यं यदा स स्वग्राहं मुञ्चति । अथ न विद्यते तादृशी शक्तिस्तर्हि ध्यानं तथा ध्यायति, यथा तद्वचो न शृणोति । यदि वा 'अज्झयणत्ति' यथाच्छन्दप्रज्ञापनाप्रवणं अध्ययनं परावर्तयति, यथा स ब्रूते-मा मां नाशयेति 'कन्न' त्ति तस्य यथा स्वच्छन्दं देशनां कुर्वतः कर्णौ निजौ स्थगयति येन देशनां न शृणोति दूरतरं वा तिष्ठति अथ दूरतरस्थानस्थितोऽपि तद्देशनां निशमयति न च निद्रां समागच्छति, ततः स यथाच्छन्दो वक्तव्यो यथा शृणु किमपि आहरणं ततो यत्तस्यापूर्वं तदाहरणं कथनीयम् । 'गहिएण' त्ति गृहितेनात्मीयोपकरणेन ।। एतदेव चुक्त्या द्रढयति-

**[भा.११७६]** जह कारणे निगमणं दिट्ठं एमेव सेसगा चउरो ।
ओमे असंथरंते आयरि वइयामादीहिं ।।

**वृ-** यथा कारणे कारणवशतो निगमनं निर्गतं दृष्टं, एवमेव तथाकारणवशतः शेषाणि अपि चत्वारि द्वाराण्यसंविग्ने निवेदना यतना इत्येवमादीनि यथा च आचारे आचारप्रकल्पेऽवमे दुर्भिक्षे व्रजिकादिभिरपि । आदिशब्दात्स्वज्ञात्यमनोज्ञासंविग्नपरिग्रहो व्रजेदित्युक्तमतः सोपपत्तिकेयं यतनेति सम्यक् श्रद्धेया । गतं यतनाद्वारम्, अधुना निसृष्टद्वारमाह-

**[भा.११७७]** समणुन्नेसु वि वासो, एगनिसिं किमुत अन्नमोसन्ने ।
असढो पुन जयणाए अच्छेज्ज चिरंपि उ इमेहिं ।।

**वृ-** समनोज्ञेष्वपि अपान्तराले वा उत्सर्गत एकां निशां एकां रात्रिं कल्पते । किं पुनरन्येषु असांभोगिकेषु अवसन्नेषु । उपलक्षणमेतत् पार्श्वस्थादिषु वा, तत्र सुतरामेकरात्र्यधिकं न कल्पते । कारणवशतः पुनरुत्कर्षतस्त्रीणि दिनानि वसेत् ।। गतं निसृष्टद्वारमिदानीं दीहरद्धं पडिच्छन्तीत्येतद्व्याख्यानार्थमाह-'असढो' इत्यादि अशठः पुनः न केवलमुत्कर्षतस्त्रीणि दिनानि किन्तु चिरमपि प्रभूतकालमप्येभिः वक्ष्यमाणैः कारणैः यतनया तिष्ठेत् ।। तान्येव कारणान्याह-

**[भा.११७८]** वासं, खंधार, नदी, तेना सावय वसेण सत्थस्स ।
एएहिं कारणेहिं अजयण जयणा नायव्वा ।।

**वृ-** वर्षं पतति, स्कन्धावारः कटकं तद्वा चलति, नदी गिरिनदी पूर्णा वर्तते, स्तेना अपान्तराले द्विविधाः शरीरापहारिण उपकरणापहारिणश्च, श्वापदाः सिंहादयः, सार्थस्य वा वशेन गच्छति सार्थश्च चिरमपि तिष्ठन् वर्तते । एतैः कारणैः चिरमप्यपान्तराले तिष्ठति, तत्र अयतना यतना च ज्ञातव्याः तत्र यदि यतना कृता तदा न प्रायश्चित्तविषयः अथायतनामाचरितवान् तदा प्रायश्चित्ते लगति, उक्तः शुद्धस्याशुद्धगमनमिति

द्वितीयो भङ्गः, सम्प्रति तृतीयचतुर्थभंगावाह ।।

[भा.१९७९] दोसा उ ततियभंगे, गाणं गणिया य गच्छभेदोय ।
सुयहानी कायवहो दोन्निवि दोसा भवे चरिमे ।।

वृ- दोषौ द्वौ तृतीयभङ्गे, अशुद्धस्य शुद्धगमनमित्येवलक्षणं, तद्यथा- 'गाणं' गणिकता गणे गणे प्रविशतीत्येवं प्रवादलक्षणा [१] तथा गच्छभेदतश्च [२] तथाहि-तस्मिन् निर्गच्छत्यन्येऽप्येवमेव निर्गच्छन्ति ततो जायते गणविनाशः ।। चरमेऽप्यशुद्धस्याशुद्धगमनमित्येवंरूपे भङ्गे द्वौ दोषौ [अपिशब्दो भिन्नक्रमः स च यथास्थानं योजितः] श्रुतहानिः [१] कायवधश्च [२] निष्कारणं दोषबहुलतया निर्गमने ह्यन्यत्रापि नावकाश इति श्रुतहानिः [१] मार्गे च गमनतो गलानत्यादिभावतो वा कायवधः [२] ।।

तदेवं भावितमृतुबद्धविषयं सूत्रं, सम्प्रति वर्षावासविषयसूत्रमाह--

मू. (१०६) *वासावासं पज्जोसविओ भिक्खू य जं पुरओ कट्टु विहरइ आहच्च वीसम्भेज्जा, अत्थियाइं थ अन्ने केइ उवसंपज्जणारिहे, से उवसंपज्जियव्वे; नत्थि याइं थ अन्ने केइ उवसंपज्जणारिहे, तस्स अप्पणो कप्पाए असमत्ते कप्पइ से एगराइयाए पडिमाए जन्नं जन्नं दिसं अन्ने साहम्मिया विहरन्ति तन्नं तन्नं दिसं उवलित्तए । नो से कप्पइ तत्थ विहारवत्तियं वत्थए कप्पइ से तत्थ कारणवत्तियं वत्थए । तंसि च नं कारणंसि निट्ठियंसि परोवएज्जा 'वसाहि अज्जो, एगरायं वा दुरायं वा ! एवं से कप्पइ एगरायं वा दुरायं वा वत्थए; नो से कप्पइ परं एगरायाओ वा वत्थए । जं तत्थ परं एगरायाओ वा दुरायाओ वसइ, से संतरा छेए वा परिहारे वा ।।*

वृ- वर्षावासे पर्युषितभिक्षुर्यं पुरतः कृत्वा विहरति आस्ते स कदाचित् विष्वग् भवेत् शरीरात्पृथग् भवेत् म्रियते इत्यर्थः, अस्ति चान्यः कश्चिदुपसम्पदनार्हः, स उपसम्पत्तव्यः; नास्ति वा तत्रान्यः कश्चिदुपसम्पदनार्हः तर्हि स आत्मनः कल्पे मा समाप्त इति से तस्य कल्पते एकरात्रिकया प्रतिमया यत्र वसति तत्र एकरात्राभिग्रहेण । 'जन्नं जन्नं' इत्यादि यस्यां यस्यां दिशि सर्वे साधर्मिका विहरन्ति तां तां दिशमुपलातुं न पुनः से तस्य कल्पते, तत्रापान्तराले विहारप्रत्ययं वस्तुं, कल्पते से तस्य तत्र कारणप्रत्ययं संघाटादिकारणनिमित्तं वस्तुम्, तस्मिंश्च कारणे निष्ठिते यदि परो वदेत् वस आर्य एकरात्रं द्विरात्रं वा, वाशब्दात्त्रिरात्रं वा एवं से तस्य कल्पते एकरात्रं द्विरात्रं वा वाशब्दात्त्रिरात्रं वा वस्तुं, नो से तस्य कल्पते एकरात्राद् द्विरात्राद्वा परं वस्तुं । यत्तत्र एकरात्राद् द्विरात्राद्वा परं वसति, तत्र से तस्य स्वकृतादन्तरात् च्छेदः परिहारो वा । अत्र भाष्यप्रपञ्चः—

[भा.१९८०] एमेव य वासासु, भिक्खे वसहीए संकन्नाणत्तं ।
एगाह चउत्थादी, असती अन्नत्थ तत्थेव ।।

वृ- एवमेव ऋतुबद्धविषयसूत्रगतेनैव प्रकारेण वर्षासु सूत्रं भावनीयम् । नवरं भिक्षायां वसतौ शङ्कायां च नानात्वं तत्रान्यत्र गन्तव्यं एकाहेन चतुर्थेन वा आदिशब्दात् षष्टेनाष्टमेन वा असति अन्यत्रगमने तत्रैव वर्षारात्रः कर्तव्यः एष द्वारगाथा संक्षेपार्थः ।।

साम्प्रतमेनामेव विवरीषुः प्रथमत एवंशब्दं व्याख्यानयति—

[भा.१९८१] अपरिणामे पिहब्भावे, एगत्ते, अवधारणे ।
एवं सद्दो उ एएसिं, एगत्ते उ इहं भवे ।।

वृ- एवंशब्दोऽपरीमाणे पृथग्भावे एकत्वे अवधारणे तत्रापरीमाणे यथा एवमन्येऽपीत्यादौ;

पृथग्भावे यथा घटात् पटः पृथक्, एवमाकाशास्तिकायाद्धर्मास्तिकायोऽपीति; एकत्वे यथायमेतद्गुण एवमेषोऽपि अत्र ह्येवं शब्दस्तयोरेकरूपतामभिद्योतयति, अवधारणं यथा केनापि पृष्टमिदमित्थं भवति । इतरः प्राह-एवं इत्थमेवेति भावः एवमेवं शब्द एतेष्वर्थेषु वर्तते । पुनरेकत्वे भवति वर्तते । एकत्ववृत्तिमेव भावयति—

**[भा.१९८२]** एगत्तं उउबद्धे जहेव गमनं तु भंगचउरो य ।
तह चेव य वासासुं नवरिं इमं तत्थ नाणत्तं ॥

**वृ-** एकत्वं तथा एवंशब्द प्रकाश्यमित्थं यथा ऋतुबद्धेऽन्यत्र गच्छान्तरे गमनं यथा च तत्र भङ्गाश्चत्वारः । शुद्धस्य शुद्धगमनमित्येवमादयः तथा च तेनैव प्रकारेण गमनं भङ्गचतुष्टयं च ज्ञातव्यं । नवरं केवलमिदं तत्र वर्षासु, भिक्षायां वसतौ शंकायां च नानात्वम् ॥ तत्र भिक्षामधिकृत्याह--

**[भा.१९८३]** पउरन्न पानगमनं इहरा परिताव एसणाघातो ।
खेत्तस य संकमणे गुरुगा लहुगा य आरुवणा ॥

**वृ-** यो गच्छः प्रचुरान्नपाने स्थितः तत्र गन्तव्यं, इतरथा यदि पुनरप्रचुरान्नपाने गच्छे प्रविशति ततस्ते 'असंस्तरंतं' क्षुधा परिताप्यन्ते, । परितापनां वाऽसहमानैः एषणाघातः क्रियते, अनेषणीयमपि गृह्णीयुरित्यर्थः, अथासंस्तरन्तः क्षेत्रसंक्रमणं कुर्वन्ति, तदा प्रावृषि क्षेत्रस्य संक्रमणे आरोपणा प्रायश्चित्तं चत्वारो गुरुकाः, । वर्षारात्रे भाद्रपदाश्वयुग्मासद्वयलक्षणे चत्वारो लघुकाः ॥

गतं भिक्षाद्वारमधुना वसतिद्वारमाह--

**[भा.१९८४]** वारग जग्गण दोसा सागारादी हवंति अन्नासु ।
तेनादिसंक लोए भाविणमत्थं पवासंति य पासंति ॥

**वृ-** यस्मिन् गच्छे वसतिः सङ्कटा तत्र नोपसंपत्तव्यं, यदि पुनरुपसम्पद्यते तत इमे दोषाः संकटायां हि वसतावमान्तास्ते वारकेण क्रमेण जागरणं कुर्युरेके जाग्रत्यन्ये स्वपन्ति, तदनन्तरं ते जाग्रत्यन्ये स्वपन्ति । एवं क्रमेण जागरणेऽजीर्णत्वादयो दोषाः अथ अन्यासु वसतिषु केचित्स्वपनाय व्रजन्ति तर्हि ये प्राक् अभिशय्यायां सागरिकादयो दोषाः ते अत्रापि भवन्ति ॥ गतं वसतिद्वारमिदानीं शङ्काद्वारमाहभिक्षाया अभावतो वसतिसङ्कटत्वदोषतो वा ते क्षेत्रसंक्रमणं कुर्युस्तांश्च गच्छतो दृष्ट्वा लोकस्य स्तेनादिशंका उपजायते, यथा न कल्पते साधूनां गमनं तन्नूनमेते हेरिकाः स्तेना वा साधुवेषेणाहिण्डन्ते । अथवा भाविणमत्थं च पासंतित्ति एते भाविनमर्थं उत्पातरूपं, यदि वा न निष्पत्स्यते सस्यमित्येवंलक्षणं, ततोऽनागते नश्यति । तस्माद्वयमपि यत्नं कुर्मः । तदेव प्रचुरान्नपाने सङ्कटवसतिस्थिते च गच्छे प्रवेशे इमे दोषाः तस्माद्ये प्रचुरान्नपानग्रामे स्थिता ये च सावकाशायां वसतौ तत्रोपसम्पत्तव्यम् । तत्र चानया यतनया गन्तव्यं तामेवाह—

**[भा.१९८५]** आसन्नखेत्त भाविय खेत्तादपरोप्परं मिलंतेसु ।
जा अट्ठमं अभाविय मानं अडंतं बहूपासे ॥

**वृ-** ये आसन्ने अनन्तरे क्षेत्रे स्थिता गच्छास्तत्र गन्तव्यं ॥ असत्यनन्तरक्षेत्रे ये परक्षेत्रे स्थिता यैर्भिक्षादिनिमित्तमागच्छद्भिश्च परस्परं मिलद्भिः, गाथायां सप्तमी तृतीयार्थेऽपान्तराले पथि भाविता ग्रामास्तत्र गन्तव्यम् तेषामप्यभावे दूरेऽपि गम्यते ॥ तत्र पुनर्भिक्षामहिण्डमानो गच्छति । किं कारणमत आह-'मानं अडंतं बहूपासे,' माणमिति वाक्यालङ्कारे, भिक्षामन्टतं बहुलोकोऽभावितः तु

पश्यति । कृत्वा ततोऽभक्तार्थेन यावत् प्राप्यते षष्ठेन वा अष्टमेन वा तत्र गन्तव्यम् । आह-यद्यपि चतुर्थादिना गच्छति तथापि लोकः पश्यति, तत आह—

**[भा. ११८६]** पायं न 'रीयइ' जनो, वासे पडिवत्तिकोविदो जाय ।
असतोयबद्धे दूरे य अत्थए जा पभायंति ।।

**वृ-** प्रायः कर्षजनः क्षेत्राणां जलकर्दमाकुलतया शेषजनो मार्गस्थजलाविलत्वादिना दुर्गमतया वर्षे वर्षाकाले 'न' रीयते, न गच्छति, यश्चात्र प्रत्तिपत्तिकोविदः परप्रतिपादनकुशलस्तेन एवमादिषु विषयेऽनेकान्युत्तराणि जल्पितव्यानि । एतावता 'एगाह चउत्थादी' इत्यादि व्याख्यातम् इदानीं, 'मसती अन्नत्थ तत्थेव' इति व्याख्यानार्थमाह, 'असतोवबद्धे' इत्यादि पूर्वोक्तो विधिः सान्तरे वर्षेऽभिहितो यदि पुनरसकृत् अवबद्धं वा सततं वर्षं पतति यदि वा अतिदूरं गन्तव्यम् । नाष्टमेन प्राप्यते ततोऽसकृत् अवबद्धे वा वर्षे पतति दूरं गन्तव्ये तत्रैव वर्षारात्रं कृत्वा प्रभाते मेघकृतान्धकारापगमतः प्रभातकल्पे संवत्सरे याति । सूत्रम्–

**मू. (१०७)** *आयरियउवज्झाए गिलायमाणे अन्नयरं वएज्जा 'अज्जो, मामंसि नं कालगयंसि समागयंसि अयं समुक्कसियव्वे । से य समुक्कसणारिहे, समुक्कसियव्वे; से य नो समुक्कसणारिहे, नो समुक्कसियव्वे अत्थि याइं थ अन्ने केइ समुक्कसणारिहे, से समुक्कसियव्वे; नत्थि याइं थ अन्ने केइ समुक्कसणारिहे, से चेव समुक्कसियव्वे । तंसि च नं समुक्किट्ठंसि परो वएज्जा 'दुस्समुक्किट्ठं ते, अज्जो; निक्खिवाहि !' तस्स णं निक्खिवमाणस्स नत्थि केइ छेए वा परिहारे वा । जे साहम्मिया अहाकप्पेणं नो अब्भुट्ठा विहरंति, सव्वेसिं तेसिं तप्पत्तियं छेए वा परिहारे वा ।*

**वृ-** अथास्य सूत्रस्य कः सम्बन्ध इत्याह—

**[भा. ११८७]** आयरियत्ते पगते 'अनुयत्तं' ते य 'कालकरणंमि ।
अत्थे सावेक्खो वा' वुत्तो इमतो वि सावेक्खो ।।

**वृ-** आचार्यत्वं पूर्वसूत्रेषु प्रकृतं अनुवर्तमानं च कालकरणं तत आचार्यत्वे प्रकृतेऽनुवर्तमानमेवाकालकरणे, इदमपि सूत्रमापतितमत्राप्याचार्यत्वस्य कालकरणस्य चाभिधास्यमानत्वात्, यदि वा पूर्वमर्थतः सापेक्ष 'उक्तोऽयमपि' चाधिकृतसूत्रेणाभिधीयमानः सापेक्ष इति सापेक्षत्वप्रकरणादनन्तरसूत्रादनन्तरमस्य सूत्रस्योपनिपातः ।अनेन सम्बन्धेनायातस्यास्य व्याख्या-आचार्य उपाध्यायो वा धातुक्षोभादिना ग्लायनन्यतरमुपाध्यायप्रवर्तिगणावच्छेदकगीतार्थ-भिक्षूणामन्यतमं सापेक्षः सन् वदेत्, आर्य मयि कालगते सति अयं समुत्कर्षयितव्य आचार्यपदं स्थापयितव्यः । स चेत्परीक्षया समुत्कर्षणार्हो भवति ततः समुत्कर्षयितव्यः । नो चेत्समुत्कर्षणार्हस्तर्हि नो समुत्कर्षयितव्यः । अथ योऽसौ पूर्वमाचार्येण समीक्षितः सोऽभ्युद्यतविहारमभ्युद्यतमरणं वा व्यवसितस्तत्राह-अस्ति चात्र गच्छेऽन्यः कश्चित्समुत्कर्षणार्हः स समुत्कर्षयितव्यः । अथ नास्ति कश्चिदन्यः समुत्कर्षणार्हस्तर्हि स एवाभ्यर्थ्य समुत्कर्षयितव्यः । तस्मिंश्च समुत्कर्षिते परो गच्छो वदेत् समुत्कृष्टं ते तव हे आर्य तस्मान्निक्षिप, एवं तस्य निक्षिपतो नास्ति कश्चित् च्छेदः । परिहारो वा, उपलक्षणमेतदन्यत्तपो वा सप्तरात्रादिकं, ये पुनः साधर्मिकगच्छसाधवो यथाकल्पेन आवश्यकादिषु यथोक्तविनयकरणलक्षणेन नोत्थाय विहरन्ति । तेषां प्रत्येकंसर्वेषा तत्प्रत्ययं यथाकल्पानभ्युत्थानप्रत्ययच्छेदः परिहारः सप्तरात्रं वा तपः प्रायश्चित्तमिति सूत्रसंक्षेपार्थः । एतमेव भाष्यकृत् प्रपञ्चयन् प्रथमतो गिलायमाणे

इत्यस्यार्थं भावयति–

[भा.१९८८] अतिसंयेन रिठ्ठो या धातुक्खोभेन वा धुवं मरणं ।
नाउं सावेक्खगणी, भणंति सुत्तंमि जं वृत्तं ।।

वृ- अतिशयेन श्रुतज्ञानातिशयादिना अरिष्टो वा अरिष्टदर्शनतो वा धातुक्षोभेण वा ध्रुवं मरणं ज्ञात्वा सापेक्षा गच्छापेक्षोपेता गणिनो यत्सूत्रे उक्तमज्जो कालगयंमीत्यादि तद्भणन्ति । साम्प्रतमन्यतरं 'वएज्जा' इत्यस्यार्थमाह–

[भा.१९८९] अन्नयर उवज्झायादिगा उ गीयत्थपंचमा पुरिसा ।
उक्कसण मानन तिय' एगट्ठ ठावणा चेव ।।

वृ- उपाध्यायादिका उपाध्यायाः प्रवर्ती गणावच्छेदको गणी गीतार्थश्च भिक्षुरित्येवं रूपा गीतार्थपञ्चमाः पुरुषास्तेषामन्यतमोऽन्यतरः, समुत्कर्षशब्दार्थमाह-उत्कर्षणं मानन्नं स्थापना-आचार्यत्वस्थापनमित्यर्थः ।

[भा.१९९०] पुव्वं ठावेति गणे 'जीवंतो गणहरं जहा राया ।
कुमरे उ परिच्छेत्ता' रज्जरिहं ठावए रज्जे ।।

वृ- पूर्वमेव जीवन्नाचार्यो यः शक्तिमानस्तं गणधरं गणे स्थापयति, यथा राजा कुमारान् परीक्ष्य यः शक्तिमत्तया राज्यार्हस्तं राज्ये स्थापयति, कथं परीक्ष्येत्यतः परीक्षाविधिमाह–

[भा.१९९१] दहिकुड अमच्च आनत्ती कुमारा अतिनने तहिं एको ।
पासे निरिक्खिऊणं असमंति पवेसणे रज्जं ।।

वृ- एगो राया बहुपुत्तो । सो चिंतेइ जो सत्तिमंतो तं रज्जे ठवेहामि । ततो कुमारे परिच्छिउमाढत्तो । आणत्ता पुरिसा दहिघडगे एगत्थ ओगासे ठवेह तिहिं ठवित्ता रन्नो निवेदियं । अमच्चो भणितो । वच्छ तुमं दहिघडाणं पासे अत्थाहि गतो अमच्चो । रन्ना ते कुमारा सद्दावित्ता भणिया वच्चह दहिघडमेक्केक्कं आनेह । ते गया अन्नं वहंतयं न पासंति । ततो ते अप्पासेंता सयं चेव दहिघडमेक्केक्कं घेत्तुंसंपट्ठिया । एक्को कुमारो पासाणि निरिक्खेत्ता अन्नं वहंतयमपासंतो अमच्चं भणति गिह्न दहिघडं । अमच्चो नेच्छइ । कुमारेण असिं उग्गिरिऊण भन्नइ 'जइ नेच्छसि सीसं ते पाडेमि' । अमच्चेण गहितो दहिघडो । कुमारो तं घेत्तुं गतो रायसमीवं । रन्नाह स सत्तिमंतोत्ति परिक्खिचा रज्जे ठविते ।। अक्षरयोजना त्वियम् दधिकुटा एकत्र राजपुरुषैः स्थापितास्तदनन्तरममात्यस्याज्ञप्तिः प्रदत्ता यथा घटानां पार्श्वे तिष्ठ । ततः कुमारा दधिघटानामानयने निरोपितास्तत्रैकः कुमारः पार्श्वान् निरीक्ष्यान्यमपश्यन् अमात्यस्योपरि असिरुद्गीरितस्ततो मन्त्रिणा दधिघटो गृहीतस्तेन दधिघटस्य प्रवेशने कुमारेण कारिते दृष्टे तस्य कुमारस्य राज्यं दत्तवान् । अत्रोपनयमाह–

[भा.१९९२] दसविहवेयावच्चे नियोग कुसलुज्जयाणमेवं तु ।
ठावेति सत्तिमंतं असत्तिमंते बहू दोसा ।।

वृ- एवमाचार्योऽपि दशविधवैयावृत्ये उद्यतानामुद्यतमतीनां साधूनां मध्ये कुसलत्ति यो यत्र कुशलस्तस्य तत्र नियोगं करोति तं तत्रनियोजयति यस्तं शक्तिमन्तं गणधरं स्थापयति । अशक्तिमति तु स्थाप्यमाने बहवो दोषाः के ते इति चेदुच्यते-सोऽशक्तिमत्वेन न शक्नोति साधून् यथायोगं नियोक्तुं । तत आहारोपधिपरिहानिर्निर्जरातश्च ते परिभ्रश्यन्ति । अथाशुकारिण मरणतः पूर्वं न स्थापितः

स्यात्ततोऽस्थापिते गणधरे स कालगतो न प्रकाशयितव्य इत्यादि पूर्वोक्तमवसातव्यम् ।

अथैव विधिशेषमाह—

[भा.१९९३]　　दोमादी गीयत्थे, पुव्वुत्तगमेण सति गणं विभए ।
मीसे व अनरिहे वा, अगीयत्थे वा भएज्जाहि ।।

वृ- आचार्येण शिष्या निर्मापितास्ते द्वयौ त्रयश्चत्वारो वा भवेयुस्तेषु द्वयादिषु गीतार्थेषु सति प्रभवति परिवारे पूर्वोक्तेन गमेन तृतीयो द्देशकोक्तेन प्रकारेण गणं विभजेत् । तेषु सर्वेष्वपि विभज्य पृथक्पृथग्गणो दातव्य इत्यर्थः । तथा मिश्राणामेतेषामाचार्यशिष्यानां मध्ये केचित् गीतार्थाः केचिदगीतार्थास्तानपि विभजेत् । किमुक्तं भवति । ये गीतार्थास्तान् गणधरपदस्थाप्यतया पृथक्कुर्यादितरांस्त्व-गीतार्थाननर्हतया अथवा यैरर्थो देशतो गृहीतो देशतो न गृहीतस्ते मिश्रास्तान्विभजेत् । एते मिश्रा अपि योग्या एते त्वयोग्या इति विभागेन स्थापयेत् । तथा ये शरीरेण जुङ्गिकतया सर्वथा गणधरपदानर्हास्तानपि विभजेत् । वाशब्दोऽपिशब्दार्थ एकान्तेनायोग्यतया पृथक् स्थापयेत् । अगीतार्थान् वा भजेत् । इयमत्र भावना-येऽगीतार्थानाचार्यलक्षणोपेतास्ताननर्हतया स्थापयति । ये पुनरगीतार्था अपि संभाव्य श्रुतसम्पद आचार्यलक्षणोपेतान् तान् योग्यतया पृथक् स्थापयति । सम्प्रति मिश्रपदव्याख्यानार्थमाह—

[भा.१९९४]　　गायागीय मिस्सा अहवा अत्थस्स देसो गाहितो न ।
तत्थ अगीयअनरिहा आयरिया तस्स होंती उ ।।

वृ- केचित् गीता गीतार्थाः केचिदगीतार्था एते मिश्रा अथवा अर्थस्य देशो यैर्गृहीतस्ते मिश्रास्तत्र ये अगीता आचार्या लक्षणपरिभ्रष्टाश्च ते आचार्यत्वस्यानर्हा भवन्ति ।। सम्प्रति 'से य समुक्कसणारिहे स समुक्कसियव्वो, नो समुक्कसिणारिहे नो समुक्कसियव्वे' इत्यस्य भावार्थमभिधित्सुः प्रथमतः पूर्वपक्षमुत्थापयति—

[भा.१९९५]　　कहमरिहोवि अनरिहो किंतु हु असमिक्खकारिणो थेरा ।
ठावेंति जं अनरिहं चोयग सुण कारणमिणं तु ।।

वृ- परो ब्रूते-कथं पूर्वमाचार्यो विद्यमानवेलायामर्होऽपि सन् पश्चादनर्हो जातो येनोच्यते स चेत्समुत्कर्षणार्हस्तर्हि समुत्कर्षयितव्यः । किन्तु वितर्के वितर्कयामि हु निश्चितमसमीक्षितकारिस्थविरा आसीरन् यदनर्हं स्थापयन्ति यथायं समुत्कर्षयितव्य इति । अत्र सूरिः प्राहचोदक ! शृणु कारणमिदं येन पूर्वमर्होऽपि पश्चादनर्हो जातः । तदेवकारणमभिधित्सुः द्वारगाथमाह—

[भा.१९९६]　　उप्पियण भीतसंदिसण, देसिए चेव फरुस संगहिए ।
वायगनिप्फायग, अन्नसीस इच्छा अहाकप्पो ।।

वृ- उप्पियणं मुहुः श्वसनं तत् द्वारं, भीतसन्देशनद्वारं, अदेशिकद्वारं, परुषद्वारं, एतानि चत्वार्यपि प्रस्तुतार्थविषयाणि, सङ्ग्रहद्वारं, वाचकनिष्पादकद्वारं, अन्यशिष्यद्वारं, इच्छाद्वारं, यथाकल्पद्वारं, इत्येतानि सङ्ग्रहादीनि द्वाराणि । अत्थियाइं व अन्ने समुक्कसणारिहे इत्यादिसूत्रविषयाणि इति द्वारगाथासंक्षेपार्थः । सम्प्रति उप्पियणद्वारं विभावयिषुराह—

[भा.१९९७]　　सन्निसेज्जागयं दिस्सा सिस्सेहि परिवारियं ।
कोमुदीजोगजुत्तं व तारापरिवुडं ससिं ।।

[भा.१९९८]　　गिहत्थ परतित्थाहिं संसयत्थीहिं निच्चसो ।

सेविज्जंतं विहंगेहिं सरं वा कमलोज्जलं ।।

[भा.१९९९] खमूढे अनुसासंतं [illegible] समुज्जए ।

गणस्स गिला कुव्वंतं संगहं विसए सए ।।

[भा.२०००] इंगियागारदक्खेहिं सया छंदानुवत्तिहिं ।

अविकड्डियनिद्देसं रायाणं व अनायगं ।।

वृ- सती नाम शोभना स्वकीया वा निषद्या या तस्यां गतमुपविष्टं शिष्यैः परिवारितमित्थं भूतमुपमयति । कौमुदी कार्तिकीपौर्णमासी तद्योगयुक्तं तारापरिवृतं शशिनमिव । तथा गृहस्थैः परतीर्थिभिः संशयार्थिभिश्च साधुभिर्नित्यशः सर्वकालं सेव्यमानं । किमिवेत्यत आह- कमलोज्जलं कमलपरिमण्डितं सर इव विहंगैः पक्षिभिः । तथा खमूढान् कुस्वभावात् अनुशासन्तं सम्यग् उद्यताः समुद्यतास्तान् श्रद्धापर्यन्तं तेषां महतीं श्रद्धामुत्पादयन्तं तथा गणस्य गच्छस्य अगिलया निर्जरार्थमात्मोत्साहेन स्वके विषये आत्मीयया शक्त्या इत्यर्थः संग्रहं कुर्वन्तम् । तथा इङ्गिताकारदक्षैश्छन्दोनुवर्तिभिः सदा सर्वकालमविकर्टितनिर्देशमखण्डिताज्ञं राजानमिव अनायकमविद्यतेनायको यस्य स तथा तं चक्रवर्तिनमित्यर्थः । दृष्ट्वा कश्चिदगीतार्थ उत्पन्नगौरवो भवति -

[भा.२००१] उत्पन्न-गारवे एवं, गणित्ति परिकंखिओ ।

उप्पियंतं गणिंदिस्स अगीतो भासेइ इमं ।।

वृ- उत्पन्नमभिलषणीयतया जातं गौरवं यस्य स तथा एवमहमपि गणी भवामि गणिपदमवाप्य परिपालयामि । ततः शोभनं भवतीत्येवं परिकाङ्क्षितः परिकांक्षावान् गणिनमाचार्यमुप्पियन्तं मुहुर्मुहुः श्वसन्तं मर्तुकामलिङ्गं दृष्ट्वा कश्चिदगीतार्थः । कथमहं गणधरो भविष्यामीति विचिन्त्य यथा गच्छवर्तिनः साधवः शृण्वन्ति तथा मातृस्थानतः इदं वक्ष्यमाणं भाषते । तदेवाह—

[भा.२००२] अलमज्झ गणेणंति, तुब्भे जीवह मे चिरं ।

किमेयं तेहि पुट्ठो उदिव्वए मे गणो किल ।।

वृ- अलं पर्याप्तं मम गणेन यूयं मम पुण्योदयेन चिरं प्रभूतं कालं जीवथ । ततस्ते गच्छवर्तिनः साधवस्तस्यागीतार्थवचनमाकर्ण्य तमगीतार्थं ब्रुवते ।। किमेतत्त्वं ब्रूषे, यथालं मम गणेन एवं तैः पृष्टः सन्ः सोऽगीतार्थो वक्ति । क्षमाश्रमणैः किल मे गणो दीयते । तत एवमुक्तं मयेति ।

अथवा उप्पियणद्वारस्यायमर्थः ।

[भा.२००३] अट्ठाविए य पुव्वंतु, गीयत्था उप्पियंतए ।

आमदाहामो एयस्स, संमतो एस अम्हवि, ।।

[भा.२००४] गीयत्थो य वयत्थो य, संपुन्नसहलक्खणे ।

सम्मतो एस सव्वेसि साहू ते ट्ठावितो गणे ।।

वृ- वाशब्दः प्रकरान्तरद्योतेन । पूर्वमस्थापिते गणधरे म्रियमाण आचार्यः किल उप्पियतित्ति मुहुर्मुहुः श्वसिति । तं च तथाभूतं दृष्ट्वा गीतार्थश्चिन्तयति आचार्यस्य सा वाग् नास्ति यया ब्रूते यता अमुकं साधुं गणधरं स्थापयथ । मा भूत्सा वाणी वयमेव गच्छवर्तिनः साधुन् भणामः यथाचार्यैरमुको गणधर पदे सन्दिष्ट इति तथा चोपायं करिष्यामो यथा गच्छ साधूनाम कम्पनीयो भवति । एवं चिन्तयित्वा गच्छ साधवः शृण्वन्ति तथा ब्रूते- आमदाहामो एयस्सात्ति इच्छामः क्षमाश्रमणाश्च त्सायमुकस्य दास्यामो

गणधरपदमस्माकमप्येष सम्मतो यत एष गीतार्थो, वयस्थः, सम्पूर्णानि शुभानि लक्षणानि यस्यासौ ससम्पूर्णशुभलक्षकः तथा एष सर्वेषां साधूनां सम्मतस्ततस्ते त्वया गणे स्थापितः । एवमेतौ द्वौ प्रकारावुप्पियणद्वारे व्याख्यातौ । एतौ द्वावपि जनौ यदि पूर्वमाचार्येण समीक्षितौ यथानर्हाविति तदा न कश्चिदाचार्याणामसमीक्षितदोषः ।। गतमुप्पियणद्वारमधुना भीतसन्देशद्वारमाह-

[भा.२००५] असमाहिय मरणं ते, करेमि जइ मे गणं न देसि ।
इति गीते उ गीते, संदिसए गुरु तओ भीओ ।।

वृ- कश्चिदगीतार्थः पापीयान् प्रत्यासन्नमरणमाचार्यमवगम्य ब्रूते-यदि मे मह्यं गणं न ददासि, ततस्तेऽसमाहितमरणं तथा करोमि वर्तमानसामीप्ये वर्तमानवद्वेति वचनात् प्राकृतत्वाद्भविष्यति वर्तमानात् ततोऽयमर्थः करिष्यामि यथा दीर्घकालं संसारं भ्रमसि । तत एवमुक्ते तस्य भीत आचार्यो गीतो गीतार्थो देशकालपुरुषौचित्यवेदनात् गीतार्थान् संदिशति यथा एतस्मै मया गणो दत्त इति गीतार्थाश्च विदितकारणा ब्रुवते-

[भा.२००६] आमं ति वोत्तुं गीयत्था जाणंता तं च कारणं ।
कयत्थे तं तु निग्गहे अतिसेसीव संवसे ।।

वृ- आमं इच्छाम इति उक्त्वा गीतार्थास्तत्कारणं जानन्तः कृतार्थे निर्यापिते आचार्ये तं दुष्टाभिप्रायं निर्गृह्णन्ति निष्काशयन्ति । एवमेषोऽनर्हो भवति । अथातिशेषेऽतिशयज्ञानी जानाति । यथा साम्प्रतमेष निर्दोषीभूतः । स वा तस्मात् स्थानात् गुरुजनसमक्षं प्रतिक्रान्तस्ततः संवास्यते ।। गतं भीतविदेशद्वारम् । इदानीमदेशिकद्वारमाह-

[भा.२००७] अरिहो व अनरिहो होइ, जो उ तेसिमदेसितो ।
तुल्लदेसीव फरुसो महुरो व असंगहो ।।

वृ- एक आचार्यस्तस्य पर्षत् कुडुक्का । तस्या मध्ये एक आचार्येण गणधरपदे समीहितोऽन्ये चाचार्यस्य शिष्याः सिन्धुदेशादिषु विहरन्ति । ते सिन्ध्वादिषु विहृत्याचार्यसमीपमागता एकं कुडुक्कमाचार्यसमीहितं मुक्त्वा अन्ये सर्वे कुडुकाः केचित्कालगताः केचित् प्रतिभग्नाः एवं स कुडुक्कदेशोद्भवः तेषां सैंधवादीनामनर्हो जातो, येन ते तस्य भिन्नदेशिकत्वादुल्लापं न परिपृच्छन्ति । अक्षरयोजना त्वेमर्होऽप्यनर्हो भवति यस्तेषां तत्कालभाविनां साधूनामदेशिको यथा सैंधवादीनां कुडुक्क इति ।। गतमदेशिकद्वारमधुना परुषद्वारमाह-तुल्लदेसीव फरुसो तुल्य देशीयः पूर्वं समीहितो गणधरपदे स पश्चात् परुषभावो जातः परुषत्वाश्च प्रतिचोद्यमान आक्रोशति । आक्रोशांश्चासहमानाना-मुत्संखडादिकं कुर्वन् गच्छभेदं करोति । एवमेष पश्चादनर्हः ।। सम्प्रति अत्थियाइं अन्ने समुक्कसिणारिहे इत्यस्यार्थं विभावयिषुः संग्रहद्वारमाह-महुरो व असंगहो । यः पूर्वं समीहितः स सत्यपि मधुरत्वे असंग्रहो न संग्रहशीलः । अन्यस्तु संग्रहशीलो मधुरश्च ततो यः संग्रहशीलः समुत्कर्षते नेतर इति ।। साम्प्रतमस्मिन्नेवार्थे वाचकनिष्पादकद्वारमाह-

[भा.२००८] वायंतगनिप्फायग चउरो भंगाउ पढमगो गज्झो ।
तइउ उ होइ सुन्नो, अन्नेण व सो वा वाएइ ।।

वृ- वाचको निष्पादक इति पदद्वयसंयोगतश्चत्वारो भङ्गास्तद्यथा-वाचयत्यपि निष्पादयत्यपीति प्रथमः । वाचयति न निष्पादयति द्वितीयः । न वाचयति निष्पादयति तृतीयः । न निष्पादयति चतुर्थः ।

अत्र सत्यपि पूर्वसमीहिते यः प्रथम भङ्गवर्ती स स्थाप्यते, नेतरो द्वितीयादिभङ्गवर्ती । तथा चाह-प्रथमको ग्राह्यः, द्वितीयभंगको न स्थाप्योऽनिष्पादकत्वात्, तृतीयस्तु शून्यो वाचनाया अभावे निष्पादकत्वायोगात् । यदि वा आत्मना न वाचयति अन्येन वाचयति तदा सोपि योग्यः । चतुर्थभङ्गिकस्तु सर्वथानर्ह एव ।। सांप्रतमधिकृत एवार्थेऽन्यशिष्यद्वारमाह-

[भा.२००९] असतीव अन्नसीस ठावेंति गणंमि जाव निम्मातो ।
एसो चेव अनरिहो, अहवावि इमो ससिस्सो वि ।।

वृ- आचार्या कालकर्तुकामा आत्मीयाः शिष्याः सर्वेऽप्यनिर्माता इति तेषां मध्ये गणधरपदयोग्ये एकस्मिन्नप्यसति अन्यस्य शिष्यं प्रातीच्छिकं गणे स्थापयन्ति, भणन्ति च यावन्मय शिष्यो निर्मातो निषन्नो भवति तावत्त्वं गणधरो निर्माते सति त्वया गणधरपदं निक्षेप्तव्यं यदि न निक्षिपति तत्श्छेदः परिहारः सप्तरात्रं वा तपः प्रायश्चित्तं । एष समीक्षितोऽप्यनर्हो जातः । अथवायं स्वशिष्योऽप्यनर्हस्तमेवाह-

[भा.२०१०] जो अनुमतो बहूणं गणाहर अवियत्तो दुस्समुक्कठो ।
दोसा अनिक्खिवंते सेसा दोसं च पावेंति ।।

वृ- आचार्यैः कालं कुर्वद्भिर्ज्ञातो य एष मम शिष्यः सूत्रतोऽर्थतश्च निर्मात एतस्मादयं बहुभिर्भागैर्गणधरगुणैरभ्यधिको भविष्यति । केवलमिदानीमनिर्मातः ततो योऽसौ निर्मातः स आचार्यैरुच्यते यावदेतत्त्वं गणधर एतस्मिंस्तु निर्मापिते त्वया गणधरपदं निक्षेप्तव्यम् । यत एष तव पार्श्वाद्बहुभिर्भागैर्गच्छस्य प्रवचनस्य चोपग्रहकारी भविष्यति । तेन तथा प्रतिपन्नमाचार्याः कालगताः स च तेन निर्मापितो जातः समस्तस्यापि सङ्घस्य प्रीतिकरः । ततो यस्तेन निर्मापितो जातोऽनुमतो बहूनां स गणधरः स्थापनीयो, यस्त्ववियत्तोऽप्रीतिकरः पूर्वस्थापितः स दुस्समुक्कृष्ट इति वक्तव्यो निक्षिपगणधरपदमेवमुक्तो यदि न निक्षिपति ततस्तस्मिन्ननिक्षिपति दोषाश्छेदं परिहारं सप्तरात्रं वा तपः प्राप्नोतीति भावः येऽपि च शेषास्तं भजन्ते, तेऽपि दोषं प्राप्नुवन्ति, च्छेदं परिहारं सप्तरात्रं वा तेऽपि प्राप्नुन्तीत्यर्थः । यदेतद्भणितमेतत्प्रसङ्गागतमयं पुनः स्फुटसूत्रेण निपातः

[भा.२०११] अब्भुज्जयमेगयरं व वसिय कामंपि होइ सुत्तं तु ।
ते बेंति कुणसु एक्कं, गीयं पच्छा जहिच्छंते ।।

वृ- आचार्येण कोऽपि स्वशिष्यः समीहितो यथायमाचार्यपदयोग्य इति, ततो गीतार्थाः संदिष्टा एष समुत्कर्षयितव्यः । स च कालगते आचार्ये ब्रूते-अहमभ्युद्यतविहारं जिनकल्पादिकमभ्युद्यतमरणं वा प्रतिपत्स्ये । तस्मिन्नभ्युद्यतमेकतरं विहारं मरणं वा व्यवसातुमनसि भवतिनिपततिसूत्रम्-"अत्थिया इत्थ अन्ने केह समुक्कसणारिहे से समुक्कसियव्वे नत्थि याइ च केइ अन्ने समुक्कसणारिहे सो चेव समुक्कसियव्वे" तस्मिन्नभ्युद्यतस्यैकतरं व्यवसातुकामे अस्ति चेदत्र गच्छेऽन्यः कश्चित्समुत्कर्षणा र्हस्तर्हि समुत्कर्षयित्वो नास्ति चेदत्र कश्चिदन्यः समुत्कर्षणा र्हस्ततः स एवमुत्कर्षयितव्यः । कथमिति चेदुच्यते-कीतार्था अभ्यर्थनापुरःसरं तं ब्रुवते यूयं गणधरपदं परिपालयन्त एकमस्माकं कंचन गीतं गीतार्थं कुरुत निर्मापयत । ततः पश्चात्स्मन्निर्मापिते ते भवतां यदिष्टं यत् प्रतिभासते तत्कुरुतेति भावःष । अत्रेच्छाद्वारावसरः एवमुक्ते तेन गणधपदं प्रतिपद्य कश्चनाप्येको निर्मापितः पश्चात्तस्य चित्तमजायत यथा अभ्युद्यतविहारात् गच्छपरिपालनं विपुलतरं निर्जराद्वारं तस्मात्परिपालयाम्यहमेव गच्छमिति

तथा चाह—

[भा.२०१२] निम्माउण्णेगं इमंपि मे निज्जरए दारं तु ।
निक्खिवन निक्खेवामी इत्थं इतरे उ खुब्भंति ।।

वृ- स गणधरपदेस्थापितं एकं कंचनापि निर्माप्येदं चित्तमकार्षीत् । इदमपि गच्छपरिपालनं महत् निर्जराया द्वारं एवं व्यवसिते । तस्मिन् गच्छे गीतार्था ब्रुवते निक्षिप गणधरपदं स प्राह न निक्षिपामि, किं त्विच्छामि गच्छं परिपालयितुमेवमुक्ते इतरे गच्छगीतार्थाः क्षुभ्यन्ति ते च क्षुभ्यन्तो यद् ब्रुवते तदाह-

[भा.२०१३] दुस्समुक्कट्ठं निक्खिव एवं ते गुरुगा अनुट्ठिहिंतेय ।
एमेव अन्नसीसे निक्खिवणा गाहितं नवरं ।।

वृ- पूर्वं तव नेच्छितं गणधरणं पश्चादिदानीं यद्यपि रुचितं, तथापि न त्वस्माकं रोचसे दुःसमुत्कृष्टं खलु तव गणधरपदं तस्मान्निक्षिपेति । एवं भणति गच्छसाधुवर्गे प्रायश्चित्तं चत्वारो गुरुकाः । अनुट्ठिहिंते य एमेवेत्यादि योऽसौ प्रातीच्छिकः स्थापितः स चेत् यावदद्यापि न निर्मापयति कथमपि शिष्यं तावद्यदि गच्छसाधवो भाषन्ते । निक्षिप त्वं गणधरपदमिति तदा तेषां तथा भाष्यमाणानां प्रायश्चित्तं चत्वारो गुरुकाः । अथ तस्मिन्नन्यशिष्ये निर्मापयितुमिष्यमाणे अनुतिष्ठति । अनिर्मापिते गणधरपदनिक्षेपणं करोति तदा तस्मिन्नन्यशिष्ये अनुतिष्ठति गणधरत्वं निक्षिपतः प्रतीच्छिकस्य प्रायश्चित्तमेव चत्वारो गुरुका इत्यर्थः, यथा गीतार्थत्वेन गच्छसाधवः सेविष्यन्ते तन्निमित्तमपि तस्य प्रायश्चित्तं, नवरं केवलं तस्मिन्नन्यशिष्ये ग्राहिते निर्मापिते गणधरपदनिक्षेपणा कर्त्तव्या । न च तत्र तां कुर्वतस्तस्य छेदः परिहारः सप्तरात्रं वा तपः । गतमिच्छाद्वारम् सम्प्रति यथाकल्पद्वारावसरस्तत्र ये गच्छसाधवस्तं स्वगच्छसाधुं प्रतीच्छिकं च पूर्वस्थापितं यथाकल्पेन नाभ्युत्तिष्ठति । यथाकल्पानभ्युत्थानमेवाह-

[भा.२०१४] आवस्सग सुत्तत्थे भत्ते आलोयणा उवठाणे; ।
पडिलेहा कितिकम्मं मत्तग संथारगतिगं च ।।

वृ- आवश्यके क्रियमाणे यो विनयस्तस्य आचार्यस्य कर्तव्यस्तं च न कुर्वन्ति । सूत्रमर्थं वा तस्य समीपे न गृह्णन्ते न भत्तति आचार्यप्रायोग्यं तस्य भक्तं न प्रयच्छन्ति । आलोयणत्ति तस्य पुरतो नालोचयन्ति । उवट्ठाणत्ति आचार्यवस्त्रकम्बलपात्रादिप्रत्युपेक्षणाय नोपतिष्ठन्ति । नापि कृतिकर्मवन्दनकमन्यद्वा कुर्वन्ति । नापि मात्रकत्रिकं तस्य ढौकयन्ति तिस्रः संस्तारकभूयस्ता अपि न प्रयच्छन्ति तेषामपि यथाकल्पमनभ्युत्तिष्ठतां प्रायश्चित्तं च्छेदः परिहारः सप्तरात्रं वा तप इति ।।

**मू. (१०८)** *आयरिय उवज्झाए उहायमाए अन्नयरं वएज्जा, जाव सव्वेसिं तप्पत्तियं छेए वा परिहारे वा ।।*

वृ- अत्र सम्बन्धमाह-

[भा.२०१५] गेलन्नंमि अहिगए अट्ठायमाणे सियाउ उहाणं ।
भवजीविय मरणा वा संजमजीया इमं होति ।।

वृ- पूर्वमनन्तरसूत्रे ग्लानत्वमधिकृतं तस्मिंश्च ग्लानत्वे अतिष्ठति अनिवर्तमाने स्यात्कस्यचित् पीडामसहिष्णोरेव धावनमतोऽवधानप्रतिपादनामधिकृतसूत्रमथवा पूर्वसूत्रे भवजीवितमरणं मर्मसिणं कालगयंसीत्यनेनोक्तं भवजीवितमरणा चावश्यं संयमजीवितमरणमपि भवति । संयमस्य

जीवितावधिकत्वात् ततो भवजीवितमरणात्प्राक्तनसूत्राभिहितात्तदनन्तरमिदं संयमजीवितान्मरणं प्रतिपाद्यते भवतीति तदर्थमिदं सूत्रमनेनसम्बन्धेनायातस्यास्य व्याख्या-आचार्य उपाध्यायो वा मोहेन रोगेण वा अवधावन् उपाध्यायादिकानां गीतार्थपंचमानां पुरुषाणामन्यतमं वदेत् यावत्करणादेवं परिपूर्णपाठो द्रष्टव्यः ।। अज्जो ममंसि नं ओहावियंसि अयं समुक्कसियव्वो सेय समुक्कसणारिहे समुक्कसियव्वे सिया । से य नो समुक्कसिणारिहे नो समुक्कसियव्वे सिया, अत्थिथ इत्थ अन्ने केइ समुक्कसणारिहे सेसमुक्कसियव्वे, नत्थि या इत्थ अन्ने केइ समुक्कसणारिहे से चेव समुक्कसियव्वे तेसिं च णं सेसमुक्किट्ठंसि परो वएज्जा दुस्समुक्किट्ठं ते अज्जो निक्खिवाहि तस्स नं निक्खिवमाणस्स नत्थि केइ च्छेदं परिहारे वा ।। अस्य व्याख्या प्राग्वत् ।

अधुना निर्युक्तिविस्तरः केन पुनः कारणेनासवावधावतीति चेदत आह-

[भा.२०१६] मोहेन्न वा रोगेन व ववहाणां भेसयां पक्तेणं ।
धम्मकहाए निमित्ते अनाहसाला गवेसणाव ।।

वृ- अवधावनं मोहेन वा कामोद्रेकरूपेण रोगेण वा । तत्र मोहविषया यतना प्राक् तृतीयोद्देशकेऽभिहिता, यदि रोगेण ततो नावधातव्यम् । किन्तु प्रयत्नेन भेषजं दातव्यम् । तच्च धर्मकथानिमित्तेन चोत्पादनीयं तथाप्यलाभे अनाथशालातो गवेषणा भेषजस्य कर्तव्येति निर्युक्तिगाथायाः संक्षेपार्थः । एनामेव सम्प्रति भाष्यकृद्विवरीषरिदमाह—

[भा.२०१७] मोहेन पुव्वभणियं रोगेन करेंतिमाए जयणाए ।
आयरियकुलगणे वा संघेव कमेण पुव्वुत्तं ।।

वृ- यदि मोहेनावधावनं कर्तुमीहते तदा यत्पूर्वं तृतीयोद्देशके मोहचिकित्साविषयं भणितं, तत्कर्तव्यमथ रोगेण तदानया वक्ष्यमाणया प्रथमतः प्रासुकेन तदलाबेनाप्रासुकेनापीत्येवंरूपया यतनया पूर्वोक्तं भेषजं प्रयत्नेन सम्पादनीयमित्यादिरूपं कुर्वन्ति । के ते कुर्वन्ति इति अत आचार्यः कुलं गणः सङ्घो वा कथमित्याह-क्रमेण परिपाट्या । तामेव परिपाटीं कालनियमनपूर्विकामाह-

[भा.२०१८] छम्मासे आयरिओ, कुलं तु संवच्छराणि तिन्नि भवे ।
संवच्छरं गणो खलु, जावज्जीवं भवे संघो ।।

वृ- प्रथमत आचार्यः षण्मासान् यावत् चिकित्सां कारयति, तथाप्यप्रगुणीभूतं तं कुलस्य समर्पयति, ततः कुलं त्रीन् संवत्सरान् यावच्चिकित्सकं भवति, तथाप्यप्रगुणीभवने गणस्य-तदनन्तरं संवत्सरं यावत् गणः खलु चिकित्सां कारयति, तथाप्यनिवर्तितरोगे तं गणः सङ्घस्य समर्पयति, ततः सङ्घो यावज्जीवं प्रासुकप्रत्यावतारेण तदभावे चाप्रासुकेनापि यावज्जीवं चिकित्सको भवति । एतच्चोक्तं भक्तविवेकं कर्तुमशक्नुवतः, यः पुनर्भक्तविवेकं कर्तुं शक्नोति, तेन प्रथमतोऽष्टादशमासान् चिकित्सा कारयितव्या, विरतिसहितस्य जीवितस्य पुनः संसारे दुःप्रापकत्वात्तदनन्तरं चेत्प्रगुणीभवति ततः सुन्दरमथ न भवति तर्हि भक्तविवेकः कर्तव्यः । अत्रैवादेशान्तरमाह-

[भा.२०१९] अहवा बिइयादेसा गुरुवसभे भिक्खुमादि तेगच्छं ।
जत्थिय वारसवासा, तिच्छक्कमासा असुद्धेण ।।

वृ- अथवा द्वितीय आदेशो गुरुवसभौ च ते भिक्ष्वादी च यथाक्रमं चिकित्सां कारयन्ति यावज्जीवं

द्वादशवर्षाणि त्रिषट्कमष्टादशमासान् कथमित्याह- अशुद्धेन अपिशब्दोऽत्र लुप्तो द्रष्टव्यः । प्रथमतः शुद्धेन तदभावे चाशुद्धेनापि तदनन्तरं मिथ्यादिना भक्तविवेकः कर्तव्यः । गुरुस्तु गच्छप्रवर्तक इति तस्य यावज्जीवं चिकित्सा, तत्र प्रथमादेशेन च भक्त विवेके कर्तुं शक्नुवन्तं प्रत्यष्टादशमासान् ।

कश्चिकित्साविधिस्तमभिधित्सुराह-

[भा.२०२०] पयत्तेण ओसहं से करिंति सुद्धेण उग्गमादीहिं ।
पणहानीए अलंभे, धम्मकहाहिं निमित्तेहिं ।।

वृ- प्रथमतः प्रयत्नेनोद्गमादिभिः शुद्धेन वस्तुजातेन से तस्यौषधं कुर्वन्ति, तदलाभे पञ्चपरिहान्यां यावच्चतुर्गुरुकेनाप्यशुद्धेनापि तथाप्यलाभे धर्मकथाभिस्तदौषधमुत्पादयन्ति, तथाप्यलाभे निमित्तैरपि ।।

[भा.२०२१] तहवि न लाभे असुद्धं बहि ठिय सालाहिवानुसट्ठादी ।
नच्छंते बहिदानं सलिंग विसणेन उड्डाहो ।।

वृ- तथापिनिमित्तैरपि चेदशुद्धं न लभंते, ततोऽनाथशालाया आरोग्यशाला तस्या मध्ये न प्रविशन्ति, किन्तु बहिः स्थितास्त आरोग्यशालात औषधं गवेषयित्वा समानयन्ति । अथ ते शालानिवासिनो न प्रयच्छन्ति । अथ स्वलिङ्गेनापि तत्र कस्मान्न प्रविशन्ति तत आह स्वलिङ्गविसनेन स्वलिङ्गप्रवेशेन प्रवचनस्योड्डाहः नामी किमपि जानते । न चामीषां धर्मः श्रेयानतः कचिदपि किंचिदप्यलभमाना अनाथा इवात्र समागता इति प्रवचनस्योपघात एतदेव 'पणहाणीए अलंभे' इत्यादिकं विवरीषुरिद-माह-

[भा.२०२२] पनगादी जा गुरुगा, अलब्भमाणे बहिं तु पायोग्गे ।
बहिट्ठिय सालगवेसण तत्थ पभुस्सानुसट्ठादी ।।

वृ- पञ्चकादि परिहान्या पञ्चकादिप्रायश्चित्तमौषधोत्पादनाय तावदासेवनीयं यावच्चत्वारो गुरुकास्तथापि बहिः प्रायोग्ये औषधे अलभ्यमाने आरोग्यशालाया बहिः स्थिता औषधस्य गवेषणं कुर्वन्ते, तत्र तद्दास्तव्यानामदाने यः प्रभुरारोग्यशालाया अधिपतिस्तस्यानुशास्तिमादिशब्दाद्धर्मकथां निमित्तं च प्रयुज्यते ।

[भा.२०२३] असई अच्चियलिंगी पविसण पतिभाणवंत वसभाओ ।
जइ पडिवत्तियकुसला भासन्ति नियल्लगत्तं से ।।

वृ- निमित्तैरप्यलाभे अर्चितलिङ्गेन यत्तस्य पूजितं लिङ्गं, तेन लिङ्गेन रक्तपटादिरूपेण प्रवेशनं कुर्वन्ति । तेषु प्रविष्टेषु ये प्रतिभानवन्तः प्रतिवचनदानसमर्था वृषभास्ते स्वलिङ्गेन गत्वा प्रभुं भाषन्ते यथा-को युष्माकं सिद्धान्त एवमाभाष्य तत्र सिद्धान्तविषये प्रभुणा गृहीतलिङ्गैश्च सह परस्परमुल्लापं तथा कुर्वन्ति यथा उत्तरवादिनो वृषभा भवन्ति, अथवा यदि प्रतिपत्तिकुशलाः परप्रतिपादनदक्षा वृषभास्ततस्ते गत्वा स तस्य प्रभोर्निजकत्वात्मीयत्वं भावयन्ति । तत्रापि सिद्धान्तविषये तैः गृहीतलिङ्गैः सह परस्परमुल्लापं तथा कुर्वन्ति यथा स आवर्ज्यत इति ।

[भा.२०२४] अहव पडिवत्तिकुसला तो तेन समं करेंति उल्लावं ।
पभवंतो वि य सो वी वसभेऊ उत्तरीकुणती ।।

वृ- अथवा ये प्रतिपत्तिकुशलाः परप्रतिवचनदानसमर्थास्ततस्ते गत्वा तेन प्रभुणा सह

परस्परमुल्लापं तथा कुर्वन्ति गृहीतलिङ्गाश्च तथा तं भावयन्ति, तथा सोऽपि आसतां गृहीतलिङ्गा इत्यापिशब्दार्थः । प्रभवन्नपि वृषभाननुत्तरीकरोति उत्तरवादिनः करोति, ततः स निरुत्तरीकृतः सन् यत् ब्रूते तदाह-

**[भा.२०२५]** तो भणइ कलहमित्ता तुब्भे मे वहेअह उदंतंति ।
ते वि य पडिसुणंती एवं एगाए छम्मासा ।।

**वृ-** ततः सिद्धान्तोल्लापे पराजितः सन् भणति यूयं मम कलहमित्राणि कलहानन्तरं यानि जातानि मित्राणि तानि कलहमित्राणि । ततो मे ममोदन्तं वहत । एवमुक्ते तेऽपि वृषभाः प्रतिशृण्वन्ति अभ्युपगच्छन्ति । तत एवं गत्यागतिभिस्तमतीवावर्ज्य षण्मासान् यावत् तत्र चिकित्सां कारयंति । एवमेकस्यामनाथशालायां षण्मासा एवं द्वितीयस्यां तृतीयस्यामपि च । तथा चाह

**[भा.२०२६]** छम्मासा छम्मासा बिइय तइयाए एव सालाए ।।
[illegible] विवेगो 'उ' ।।

**वृ-** एवमुक्तप्रकारेण द्वितीयस्यामनाथशालायां षण्मासा एवं तृतीयस्यामपीति सर्वसंकलनया अष्टादशमासान् चिकित्सां कारयित्वा प्रगुणीकरोति । अथ प्रगुणो न भवति ततस्तस्य भक्तविवेकः कर्तुमुचितः । सम्प्रति प्रागुक्तं द्वितीयमादेशं स्पष्टयति,

**[भा.२०२७]** अहवा गुरुणो जावज्जीवं फासुय अप्फासुएण तेगिच्छं ।
वसभे बारसा वासा अठारस भिक्खुणो मासा ।।

**वृ-** गुरोराचार्यस्य यावज्जीवं चिकित्सां प्राशुकेनाप्राशुकेन वा कुर्वन्ति, सर्वस्यापि गच्छस्य तदधीनत्वात्, यथाशक्ति निरन्तरं सूत्रार्थनिर्णयप्रवृत्तेश्च ।। वृषभे द्वादशवर्षाणि चिकित्सा ततः परं शक्तौ भक्तविवेकः; एतावता कालेनान्यस्यापि समस्तगच्छभारोद्वहनसमर्थस्य वृषभस्योत्थानात् । अष्टादशमासा भिक्षोश्चिकित्सायां ततः परमसाध्यतया शक्तौ सत्यां भक्तविवेकस्यैव कुर्तुमुचितत्वात् ।।

*मू. (१०९) आयरिय उवज्झाए संरमाणे परं चउराय पंचरायाओ कप्पागं भिक्खुं नो उवट्ठावेइ कप्पाए अत्थि याइं से केइ माननिज्जे कप्पागे, नत्थि याइं से केइ छेए वा परिहारे वा; नत्थि याइं से केइ माननिज्जे कप्पाए से संतरा छेए वा परिहारे वा ।।*

**वृ-** अस्य सूत्रस्य सम्बन्धमाह-

**[भा.२०२८]** उहाविय भग्गवते होइ उवट्ठा पुनो उवट्ठंते ।
उक्कसणा वा पगया इमा वि अन्ना समुक्कसणा ।।

**वृ-** पूर्वमवधावित उक्तः स चेदवधावितो भग्नव्रतो जायेत । भग्नव्रतश्च भूत्वा पुनरुपतिष्ठति । ततस्तस्मिन्नवधावितभग्नव्रते पुनरुपतिष्ठति भवत्युपस्थापना कर्तव्या, तत उपस्थापनाप्रतिपादनार्थमधिकृतं सूत्रं । अथवा पूर्वसूत्रे समुत्कर्षणा प्रकृता । इयमप्यधिकृतसूत्रेणाभिधीयमानान्या समुत्कर्षणा स्थापनेत्यधिकृतसूत्रसम्बन्धः । अनेन सम्बन्धेनायातस्य स्य व्याख्या-आचार्य उपाध्यायो वा स्मरन् अयमुपस्थापनार्ह इति जानानः परं चतू रात्रात् पञ्चरात्राद्वा कल्पाकं सूत्रतोऽर्थतश्च प्राप्तं भिक्षुं नोपस्थापयति । तत्र यदि तस्मिन् कल्पाके सत्यस्ति से तस्य कल्पाकस्य कश्चित् माननीयः पिता भ्राता वा ज्येष्ठः स्वामी वा कल्पाको भावी पञ्चरात्रेण दशरात्रेण पञ्चदशरात्रेण वा ततो नास्ति से तस्य कश्चित् छेदः परिहारो वा, उपलक्षणमेतदन्यदपि ततः प्रायश्चित्तं माननीयेऽनुत्थापिते तस्योत्थापनाया

अयोगात् । अथ नास्ति से तस्य कश्चित् माननीयः कल्पाको भावी । ततः से तस्याचार्यस्योपाध्यायस्य वा स्वकृतादन्तारात् च्छेदः परिहारो वा इयमत्र भावना अत्रादेशद्वयमेके प्राहुश्चतूरात्रान्परं यदि अन्यानि चत्वारि दिनानि नोपस्थापयति तत आचार्योपाध्यायस्य च प्रत्येकं प्रत्येकं प्रायश्चित्तं चतुर्गुरुकं चतुर्गुरुकम्, अथ ततोप्यन्यानि चत्वारि दिनानि लंघयति, ततः षट्लघुकं ततोऽप्यन्यानि चत्वारि दिनानी ततः षट्गुरुकं ततोऽप्यन्यानि यदि चत्वारि दिनानि ततश्चतुर्गुरुकच्छेदः ततः परमन्यानि चत्वारि दिनानी यदि तर्हि षट् लघुकः षट् लघुकच्छेदः ततोऽपि चेदन्यानि चत्वारि ततः षड् गुरुकः षड् गुरुकच्छेदः । ततः परमेकैकदिवसातिक्रमे मूलानवस्थाप्य पाराश्चितानि, द्वितीयादेशवादिनः प्राहुः पञ्चरात्रात् परं यदि नोपस्थापयति ततश्चतुर्गुरुकं प्रायश्चित्तं, ततोऽपि परं यदि पञ्चदिनानि लङ्घयति ततः षड् लघुकं, ततः परमपि पञ्चरात्रातिक्रमे षड्गुरुकं, ततोऽपि परं यदि पञ्च दिनानि वाहयति ततश्चतुर्गुरुकश्चतुर्गुरुच्छेदस्ततः परमन्यानि चेद्दिनानि पञ्च ततः षड् लघुकः षड्लघुकच्छेदः । ततोऽपि पञ्चरात्रातिवाहनेन षट्गुरुकः षट्गुरुकच्छेदः । ततः परमेकैकदिवसातिवाहने मूलानवस्थाप्य पाराश्चितानि । एष सूत्रसंक्षेपार्थः ।

अधुना भाष्यनिर्युक्तिविस्तरः । तत्र भाष्यकारः प्राह-

[भा.२०२९] संभरण उवट्ठावण तिन्नि उ पणगा हवंति उक्कोसा ।
माननिज्जे पितादी तु, तेसु सती च्छेद परिहारो ॥

वृ- संस्मरणमुपस्थापनाविषये यथा एष उपस्थापयितव्यो वर्तते इति । तत्र माननीये पित्रादौ सति कल्पाकस्यातिवाहने त्रयः पञ्चका भवन्त्युत्कर्षतः । किमुक्तं भवति, विवक्षिते भिक्षौ कल्पाके जाते सति यदि तस्य माननीयः पित्रादिरुपस्थाप्योऽस्ति परमद्यापि कल्पाको नोपजायते तर्हि स जघन्यतः पञ्चरात्रंप्रतीक्षाप्यते, मध्यमतो दशरात्रमुत्कर्षः पञ्चदशरात्रं, तथापि चेन्माननीयः कल्पाको नोपजायते, तर्हि स कल्पाको भिक्षुरुपस्थापनीयो नो चेदुत्थापयति तर्हि च्छेदः परिहारो वा प्रायश्चित्तं । अथ तस्य माननीयाः पित्रादयो न सन्ति, ततस्तेषामसत्यभावे यदि तं चतूरात्रमध्ये पञ्चरात्रमध्ये वा नोपस्थापयति तथापि तस्य प्रायश्चित्तं च्छेदः परिहारो वा च्छेदपरिहारग्रहणं सूचामात्रं तेनादेशद्वयेन प्रागुक्तः प्रायश्चित्तविधि द्रष्टव्यः ॥

[भा.२०३०] चिट्ठउ ता उठवणा, पुव्विं पव्वायणादिवत्तव्वा ।
अडयालपुच्छसुद्धे, भन्नति दुक्खं खु सामन्नं ॥

वृ- तिष्ठतु तावदुपस्थापना, पूर्वं प्रव्राजनादिवक्तव्यता वक्तव्या । तत्र यथा पञ्चकल्पे निशीथे वाष्टचत्वारिंशत्पृच्छा शुद्धोऽभिहितस्तथा अष्टचत्वारिंशत् पृच्छा शुद्धे कृते तत्संमुखमिदं भण्यते । दुक्खं खु श्रामण्यं परिपालयितुम् । तथाहि -

[भा.२०३१] गोयर अचित्तभोयण, सज्झायमण्हाण भूमिसेज्जादी ।
अब्भुवगयंमि दिक्खा, दव्वादीसुं पसत्थेसुं ॥

वृ- यावज्जीवं गोचरचर्यया भिक्षामटित्वा अचित्तस्यैषणादिशुद्धस्य भोजनं कर्तव्यं, तदपि बालवृद्धशैक्षिकादिसंविभागेन, तथा चतुःकालं स्वाध्यायो विधातव्यः यावज्जीवं देशतः सर्वतश्चास्नानं । ऋतुबद्धे काले भूमौ शय्या आदिशद्वाद्वर्षारात्रे फलकादिषु शयनं, दिवसे न स्वप्तव्यं, रात्रौ तृतीये यामे निद्रामोक्षः । एवमुक्ते यद्यभ्युपगच्छति तत एतस्मिन्नभ्युपगते तस्य दीक्षाप्रवेशस्तेषु द्रव्यादिषु प्रशस्ते द्रव्ये शाल्यादिसंचयादौ प्रशस्ते क्षेत्रे गंभीरसानुनादादौ प्रशस्ते भावे प्रवर्धमानपरिणामादौ दातव्या ।

**[भा.२०३२]** लग्गादिं च तुरंते अनुकूले दिज्जिए उ अहजायं ।
सयमेव तु थिरहत्थो गुरु जहन्नेन तिन्नट्ठा ।।

**वृ-** इहोत्सर्गतो लोचे कृते यताजाते च रजोहरणादिके समर्पिते पश्चात्त्रिःकृत्व सामायिकमुच्चार्यते, इत्येष विधिर्यदि पुनर्लग्नादिकं त्वरमाणं स्यात्ततोऽनुकूले लग्नादौ चादिशब्दात् मुहूर्त्तादिपरिग्रहः त्वरमाणेः शीघ्रं समापतति यथाजातं सनिषद्यं रजोहरणमुखवस्त्रिकाग्रपूरूपं दीयते । उक्तं च । अहाजायं नाम सनिसेज्जं रयहरणं मुहपोत्तिया बालपजेय इति, ततो यदि गुरुः स्थिरहस्तो न कम्पते अड्डगृह्णानस्य हस्तः तर्हि स स्वयमेव जघन्येन तिस्रोऽड्डअव्यवच्छिन्त्वा गृह्णाति समर्थः सर्वं वा लोचं करोति-

**[भा.२०३३]** अन्नो वा थिरहत्थो सामाइयतिगुणमठगहणं च ।
तिगुणं पादक्खिणं नित्थारग गुरुगुणविवड्डी ।।

**वृ-** आचार्यस्य स्थिरहस्तत्वाभावे अन्यो वा स्थिरहस्तः प्रव्राजयति समस्तं लोचं करोतीति भावः । तदनन्तरं गुरुः शोभने लग्नादौ प्राप्ते त्रिगुणं त्रीन् वारान् सामायिकमुच्चारयति । इयमत्र भावना-प्रथमतः प्रव्राजनीयमात्मनो वामपार्श्वे स्थापयित्वा चैत्यानि तेन सह वन्दन्ते ततः चतुर्विंशतिस्तवं चिन्तयित्वा नमस्कारेण पारयित्वा चतुर्विंशतिस्तवमाकृष्य त्रिकृत्वः सामायिकमुच्चारयति तदनन्तरमर्थग्रहणं स कारयितव्यः । सामायिकार्थस्तस्य व्याख्यायते इति भावः । ततः सूत्रतोऽर्थतश्च गृहीतं सामायिकमिति तदनुज्ञानिमित्तं विधिना त्रिगुणं प्रादक्षिण्यं कार्यते । तत्र तृतीयस्यां प्रदक्षिणायामनुज्ञा क्रियते, यथा निस्तारको भव, गुरुगुणैर्विवृद्धिर्भवतु, वर्धस्वेत्यर्थः । एवं प्रव्राजनायां कृतायां यत्कर्तव्यं तदाह-

**[भा.२०३४]** फासुय आहारो से अनहिंडंतो य गाहए सिक्खं ।
तोहे उ उवठावण छज्जीवनियं तु पत्तस्स ।।

**वृ-** प्रव्रज्याप्रदानान्तरं से तस्य प्रासुक आहारो दीयते । स च भिक्षां न हिण्डाप्यते किं त्वहिण्डमान एव शिक्षां ग्रहणशिक्षामासेवनाशिक्षां च ग्राह्यते । ततः षड् जीवनिकां प्राप्तस्याधिगृहीतषट्-जीवनिकाध्ययनस्य उपस्थापना क्रियते । विपक्षे प्रायश्चित्तविधिमाह-

**[भा.२०३५]** अप्पत्ते अकहेत्ते अनहिगय अपरिच्छ अतिक्कमे पा से ।
एक्केको चउगुरुगा, चोयग सुत्तं तु कारणियं ।।

**वृ-** अप्राप्ते षड्जीवनिकां पर्यायं वा जघन्यतः षण्मासानुत्कर्षतो द्वादशसंवत्सराणि तथा अकथयित्वा जीवाजीवादीन् तथा अनधिगते जीवाजीवादौ तथा अपरीक्षायां परीक्षाया अभावे तथा से तस्य उपस्थापयितोऽतिक्रमे एकैकस्य व्रतस्य वारत्रयमनुच्चारणे एतेषु सर्वेषु प्रत्येकमेकैकस्मिन् प्रायश्चित्तं चत्वारो गुरुकाः । अथ सूत्रे पर्यायादिकं नोपात्तमिति तत्कथने कथं न सूत्रविरोधस्तत्राह-हे चोदक सूत्रमिदं कारणिकं पुरुषविशेषपात्रापेक्षमतः पर्यायाद्यनभिधानेऽपि न दोषः एनामेव गाथां यै तथा भाष्यकृद्विवृणोति ।

**[भा.२०३६]** अपत्ते सुएणं परियागमुवठावेंते चउ गुरुगा ।
आणादिणो य दोसा विराधना छण्हकायाणं ।।

**वृ-** श्रुतेन षड्जीवनिकापर्यन्तेनाप्राप्ते पर्यायं वा जघन्यादि भेदभिन्नमप्राप्ते उपस्थाप्यमाने उपस्थापयितुः प्रायश्चित्तं चत्वारो गुरुकाः, तपसा कालेन च गुरुवो, न केवलमेतत् । किन्त्वाज्ञा-अनवस्थामिथ्यात्वविराधनादोषास्तथा स उपस्थापितो भिक्षादौ किल कल्पिको भवति । ततस्तस्य

भिक्षाविशेषणे षण्णां कायानां विराधना अपरिज्ञानात् तथा-

[भा.२०३७] सुत्तत्थं कहइत्ता जीवाजीवेय बंधमोक्खं च ।
उवठावणे चउगुरुगा विराहणा जा भणिय पुव्वं ।।

वृ- सुत्रार्थं षड्जीवनिकायपर्यन्तं अकथयित्वा तथा जीवाजीवान् बन्धं मोक्षं चाकथयित्वा एवमेवोपस्थापने क्रियमाणे उपस्थापितुश्चत्वारो गुरुकास्तपो गुरवः प्रायश्चित्तं तथा या विराधना पूर्वम-प्रातद्वारे षण्णां जीवनिकायानामुक्ता साऽत्रापि द्रष्टव्या । ततस्तन्निष्पन्नमपि तस्य प्रायश्चित्त-मुपढौकते ।

[भा.२०३८] अनहिगयपुन्नपावं उवठावंतस्स चउ गुरु होंति ।
आणादिणो य दोसा मालाए होति दिट्ठंतो ।।

वृ- अनधिगतपुण्यपापं सूत्रार्थकथनेऽप्यविज्ञातपुण्यपापमुपस्थापयतः प्रायश्चित्तं चत्वारो गुरवः कालगुरुका मासा भवन्ति, । आज्ञादयश्चानन्तरमिहिता दोषाः । अत्र मालाया दृष्टान्तो यथा स्थाणौ शूलाप्रक्षेपं वर्णसुगन्धपुष्पमालामारोपयतो वचनीयतादयो दोषाएवमत्राप्यनधिगतपुण्यपापे व्रतान्यारोपयत आज्ञादय इति ।

[भा.२०३९] उदउल्लादि परिच्छा अहिगय नाऊण तो य दन्ते ।
एक्केक्कं तिगुत्तो, जो न कुणइ तस्स चउ गुरुगा ।।

वृ- गोचरादि गतेन उदकार्द्रादिना परीक्षा कर्तव्या । वृषभेण तत्परीक्षानिमित्तं तेन सह गोचरगतेन उदकार्द्रेण हस्तेन मात्रकेण वा भिक्षा ग्राह्या । तत्र यदि स वारयति निषिद्धमेतत्कथं यूयमेव भिक्षाम-गृह्णीथ । ततो ज्ञायते एष परिणतसूत्रार्थोऽधिगतपुण्यपापे एवं शेषपरीक्षास्वपि भावनीयम् । तत उदकार्द्रादिपरीक्षाभिरधिगतपुण्यपापं ज्ञात्वा ततोऽनन्तरं व्रतानि गुरवो ददति । कथमित्याह-एकैकं व्रतं त्रिःकृत्वस्त्रीन वारान् । एवं यो न करोतितस्य चत्वारो गुरुका द्वाभ्यां लघवस्तपसा कालेन च प्रायश्चित्तं । अथ परीक्षामेव वैतन्येनाह-

[भा.२०४०] उच्चारादि अथंडिल वोसिर ठाणाइ वावि पुढवीए ।
नदिमादिदगसमीवे सागनि निक्खित्त तेउंमि ।।

[भा.२०४१] वियणभिधारण वाए हरिए जह पुढवीए तसेसु च ।
एमेव गोयरगए होइ परिच्छा उ काएहिं ।।

वृ- उच्चारादिरादिशब्दात्प्रश्रवणादिपरिग्रहः अस्थण्डिले सचित्तपृथिवीकायात्मिके व्युत्सर्जनं यदि वा स्थानादि स्थानमुर्ध्वस्थानमादिशब्दान्निषदनादिपरिग्रहस्तत् पृथिव्यां पृथिवीकायस्योपरि कुरुते । तथाऽप्कायविषये नद्यामुदकसमीपेऽत्रादिशब्दात्तडागादिपरिग्रहः । तथा तेजसि तेजस्कायविषये सनिक्षिप्ताग्नौ प्रदेशे गाथायां तु निक्षिप्तशब्दस्यान्यथापाठः प्राकृतत्वात् । उच्चारादेर्व्युत्सर्जनमिति सर्वत्र सम्बध्यते तथा वाते वातविषये व्यञ्जनस्य तालवृन्तस्याभिधारणं वातोदीरणाया अभिमुख्येन धारणं करोति । हरिते यता पृथिव्यां तथा वक्तव्यं हरितकायस्योपरि स्थानादि करोति यदिवोच्चारादि व्युत्सर्जनमिति । त्रसेष्वपि च पृथिव्यामिव वक्तव्यं । कीटिकानगराद्यतिप्रत्यासन्नमुच्चारादि स्थानादि वा करोतीति भावः । तत्र यदि वारयति तदा ज्ञायते सम्यक् परिणतोऽस्य धर्म इति योग्य उपस्थापनायाः एवमेव गोचरगतेऽपि, तस्मिन् कायैः पृथिव्यादिभिर्भवति परीक्षा कर्तव्या तद्यथा-सरजस्केनोदकार्द्रेण

वा हस्तक मात्रकेण वा भिक्षा ग्राह्यते इत्यादि परीक्षितस्य व्रतारोपणं कर्तव्यम् । तथा चाह–

**[भा.२०४२]** दव्वादि पसत्थ वया एक्केक्क तिगंति उवरिमं हेठा ।
दुविहा तिविहा य दिसा आयंबिल निव्विगइया वा ।।

**वृ-** द्रव्यादौ प्रशस्ते व्रतान्यारोपणीयानि । एकैकं व्रतं त्रिकं त्रिकृत्व उच्चारयेत्कथमित्याह-उवरिमं हेठा अधस्तान्मूलादारभ्य यावदुपरितनं पर्यन्तवर्ति सूत्रम् । इदमेकमुच्चारणमेवं त्रिन्वारान् दिग् निबध्यते । द्विविधा त्रिविधा वा तत्र साधोर्द्विविधा तद्यथा आचार्यस्योपाध्यायस्य च व्रतिन्यास्त्रिविधा । तद्यथा-आचार्यस्योपाध्यायस्य प्रवर्तिन्याश्च तथा उपस्थानानन्तरं तपः कार्यते । तद्य अभक्तार्थमाचाम्लं निर्विकृतिकमित्यादि । उक्तं च- जद्दिवसं उवठाविनो तद्दिवसं केसिं चि अभत्तट्ठो भवइ । केसिं चिं आयंबिलं केसिंचि निव्विगइयं इत्यादि । सम्प्रति माननीयपित्रादिविषये विधिशेषमाह–

**[भा.२०४३]** पियपुत्तखुड्डथेरे खुड्डगथेरे अपावमाणंमि ।।
सिक्खावणपन्नवणा दिठंतो दंडिमाईहिं ।।

**वृ-** द्वौ पितापुत्रौ प्रव्रजितौ । तौ यदि द्वावपि युग्पत् प्राप्तौ तर्हि युगपदुपस्थाप्येते । अथ खुड्डुत्ति क्षुल्लकः पुत्रः सूत्रादिभिरप्राप्तः । थेरत्ति स्थविरः सूत्रादिभिः प्राप्तस्तर्हि स्थविरस्योपस्थापना विधेया । खुड्डुत्ति यदि पुनः क्षुल्लकः सूत्रादिभिः प्राप्तः स्थविरो नाद्यापि प्राप्तो भवति, तर्हि तस्मिन् स्थविरे सूत्रादिकमप्राप्नुवति यावदुपस्थापनादिवसः शुद्ध समागच्छति तावत्स्थविरस्य प्रयत्नेन शिक्षापना क्रियते आदरेण शिष्यत इत्यर्थः । तत्र यदि उपस्थापनादिवसः मर्यादया प्राप्तो भवति ततो द्वावपि युगपदुपस्थाप्येते । अथादरेण शिक्षमाणोऽपि न प्राप्तस्तदा स्थविरेणानुज्ञाते सति क्षुल्लक उपस्थाप्यते । अथ स्थविरो न मन्यते तदा प्रज्ञापना कर्तव्या । तस्यां च प्रज्ञापनायां क्रियमाणायां दृष्टान्तो दण्डिको ऽभिधातव्यः । दण्डिको राजा आदिशब्दादमात्यादिपरिग्रहः । स चेवम्-एगो राया रज्जपरिब्भठो सपुत्तोऽन्नरायाणमोलग्गिउमाढत्तो । सो राया पुत्तस्स तुठो तं से पुत्तं रज्जे ठविउमिच्छइ । किंसो पिया नानुजाणइ । एवं तव जइ पुत्तो महव्वयरज्जं पावित्ति किं न मन्नसि । एतदेव सविशेषमाह–

**[भा.२०४४]** थेरेण अनुन्नाए उवठनिच्छेवंठति पंचाहं ।
तिपणमनिच्छे उवरिं वत्थुसहावेन जाहीयं ।।

**वृ-** स्थविरेणानुज्ञाते उपस्थापना क्षुल्लकस्य कर्तव्या । अथ स दण्डिकादिभिर्दृष्टान्तैः प्रज्ञाप्यमानोपि नेच्छति, । तथा पञ्चाहं पञ्चदिवसान् यावत् तिष्ठति । ततः पुनरपि प्रज्ञायते तथाप्यनिच्छतां पुनरपि पञ्चाहं तिष्ठन्ति । पुनः प्रज्ञाप्यते तथाप्यनिष्टौ भूयः पञ्चाहमवतिष्ठन्ते । एवं यदि त्रिपञ्चाहकालेन स्थविरः प्राप्तो भवति, तथा युगपदुपस्थापनातः परं स्थविरऽनिच्छत्यपि क्षुल्लक उपस्थाप्यते, । वत्थुसहावेण जाहीयमिति वस्तुनः स्वभावो वस्तुस्वभावः अहंकारी सन् अहं पुत्रस्यावमतरः करिष्येऽहमिति विचिन्त्य कदाचित् उन्निष्क्रामेत् गुरोः क्षुल्लकस्य चोपरि द्वेषं गच्छेत् । एवं स्वरूपे वस्तुस्वभावे ज्ञाते त्रयाणां पञ्चाहानामुपर्यपि स क्षुल्लकः प्रतीक्षाप्यते यावत्तेनाधीतमिति । अथ द्वेऽपि पिता पुत्रयुगलं तदायं विधिः

**[भा.२०४५]** दो थेरखुड्डथेरे खुड्डग वोच्चत्थ मग्गणा होइ ।
रन्नो अमच्चमाई संजइ मज्झे महादेवी ।।

**वृ-** द्वौ स्थविरौ सपुत्रौ समं प्रव्रजितौ तत्र यदि द्वौ स्थविरौ प्राप्तौ न क्षुल्लकौ ततः स्थविरावुपस्थाप्येते । 'खुड्डुत्ति' अथ द्वावपि क्षुल्लकौ प्राप्तौ न स्थविरौ तदा पूर्ववत् प्रज्ञापनोत्कर्षतः पञ्चदशदिवसान्या-

वक्तव्या। तथाप्यनिच्छायामुपेक्षा वस्तुस्वभावं ज्ञात्वा प्रतीक्षापणं थेरे 'खुड्डुत्ति' द्वौ स्थविरावेकश्च क्षुल्लकः सूत्रादिभिः प्राप्तोऽत्रोपस्थापना 'वोच्चत्थे' इत्यादि स्थविरक्षुल्लकस्य च विपर्ययस्ततो भवति मार्गणा कर्तव्या । सा चैवम्-द्वौ क्षुल्लकौ प्राप्तावेकश्च स्थविरः प्राप्त एको न प्राप्तस्तत्र यो न प्राप्तः स आचार्येण वृषभैर्वा प्रज्ञाप्यते । प्रज्ञापितः सन् यद्यनुजानाति तदा तत् क्षुल्लक उपस्थाप्यते तथाप्यनिच्छायां राजदृष्टान्तेन तथैव प्रज्ञापना। अयं चात्रविशेषः । सोऽप्राप्तस्थविरो भण्यते-एष तव पुत्रः परममेधावी सूत्रादिभिः प्राप्त इत्युपस्थाप्यतां, यदि पुनस्त्वं न मुत्कलयसि तदेतौ द्वावपि पितापुत्रौ रत्नाधिकौ भविष्यतस्तस्माद्विसर्जय एनमात्मीयं पुत्रमेषोऽपि तावद्भवतु रत्नाधिक इति । अतोऽपि परमनिच्छायामुपेक्षावस्तुस्वभावं ज्ञात्वा वा तत् क्षुल्लकस्य प्रतीक्षापणमिति । रन्नो य अमच्चाई इत्यादि पश्चार्धं राजा अमात्यश्च समकं प्रव्रजितौ समकमेव सूत्रादिभिः प्राप्तौ ततो युगपत्तौ द्वावप्युपस्थाप्येते । अथ राजा सूत्रादिभिः प्राप्तो नामात्यो राज्ञ उपस्थापना । अथामात्यः सूत्रादिभिः प्राप्तो न राजा ततो यावदुपस्थापनादिनमागच्छति तावदादरेण राजा शिक्ष्यते, ततो यदि प्राप्तो युगपदुपस्थापना । अथ तत्रापि राजा न प्राप्तस्तदा तेनानुज्ञाते अमात्य उपस्थाप्यते । अथ नेच्छति तदा पूर्ववत् दण्डिकदृष्टान्तेन राज्ञः प्रज्ञापना, तथापि चेन्नेच्छति ततः पञ्च दिवसान्यावदमात्यस्य प्रतीक्षापणं तथापि चेन्न प्राप्तो भूयः प्रज्ञापना । तत्राप्यनिच्छायां पुनः पञ्चदशाहमपि तथाप्यनिच्छायामुपेक्षा वस्तुस्वभावं वा ज्ञात्वामात्यस्य प्रतीक्षापणं । यदि वा वक्ष्यमाणोऽत्र विशेषो यथा वामात्यस्य राज्ञा सहोक्तमेवमादिग्रहणसूचितयोः श्रेष्ठिसार्थवाहयोरपि वक्तव्यमिति, 'संजइमज्झे महादेवीति' द्वयोर्मातादुहित्रोर्द्वयोर्मातादुहितृयुगलयो-र्महादेव्यमात्यत्योश्च सर्वमेव निरवशेषं वक्तव्यम् । सम्प्रति यदुक्तं 'वोच्चत्थमग्गणा होइ' इति तद् व्याख्यानार्थमाह—

**[भा.२०४६]** दो पत्त पियापुत्ता एगस्स पुत्त पत्त न उ थेरा ।
गहितोव सयं राइनितो होउ एस वि य ।।

**वृ-** द्वौ पितापुत्रा प्राप्तावेकस्य तु पितापुत्रयुगलस्य पुत्रः प्राप्तो न तु स्थविरः । स आचार्येण वृषभेण वा प्रज्ञापनां ग्राहितः स्वयं वितरत्यनुजानाति । तदा तत् क्षुल्लक उपस्थाप्यते । अथ नेच्छति तदा पूर्ववद्राजद्रष्टान्तेन प्रज्ञापना । अन्यच्चैतौ पितापुत्रौ रत्नाधिकौ भविष्यत एषोऽपि च तव पुत्रो यदि रात्निको रत्नाधिको भवति । भवतु नाम तव लाभ एव इति तथाप्यनिच्छायां पूर्ववदुपेक्षादि ।

**[भा.२०४७]** राया रायाणो वा दोन्नि वि समपत्त दोसु पासेसु ।
ईसरसेट्ठि अमच्चे निगमघडाकुल दुए खुड्डे ।।

**वृ-** एको राजा द्वितीयो राजराजानस्तौ समकं प्रव्रजितौ । अत्रापि यथा पितापुत्रयोर्वा प्रागुक्तं तथापि निरवशेषं वक्तव्यं केवलमवमेऽमात्यादिके सूत्रादिभिः प्राप्ते उपस्थाप्यमाने यदि राजादिरप्रीतिं करोति दारुणस्वभावतया ब्रूते वा किमपि परुषं तदा सोऽप्राप्तोऽपीतरैरमात्यादिभिः सममुपस्थाप्यते । अथवा 'रायत्ति' अत्र एको राजा तत्र सोऽमात्यादीनां सर्वेषां रत्नाधिकः कर्तव्यः 'रायाणोत्ति' यत्र पुनर्द्विप्रभृतयो राजानः समकं प्रव्रजिताः समकं च सूत्रादिभिः प्राप्तास्ते समरत्नाधिकाः कर्तव्या इत्युपस्थाप्यमाना द्वयोः पार्श्वयोः स्थाप्यन्ते ।। अत्रैवार्थे विशेषमाह—

**[भा.२०४८]** समगं तु अनेगेसु पत्तेसुं अनभिजोगमावलिया ।
एगतो दुहतो ठविया समराइनिया जहासन्नं ।।

वृ- पूर्वं पितापुत्रादिसम्बन्धेनासम्बन्धेष्वनेकेषु राजसु समकं सूत्रादिभिः प्राप्तेष्वत एवैककालमुपस्था[illegible]षु, 'अनभिग्गो [illegible]' गुरुणा [illegible] न कर्तव्यो यथा इतस्तिष्ठ इतस्तिष्ठथेति । किन्त्वेकतः पार्श्वे द्विधातो वा द्वयोर्वा पार्श्वयोर्यथैव स्थिताः स्वस्वभावेन तेषामावलिका तथैव तिष्ठतु । तत्र यो यथा गुरोः प्रत्यासन्नः स तथा ज्येष्ठो ये तूभयोः समश्रेण्या स्थितास्ते समरत्नाधिकाः । इदानीं पूर्वगाथापश्चार्धव्याख्या-'ईसर इत्यादि' यथा द्विप्रभृतयो राजान उक्ता एवं द्विप्रभृतयः श्रेष्ठिनो द्विप्रभृतयोऽमात्या द्विप्रभृतयो निगमा वणिजः 'घडत्ति' गोष्ठी द्विप्रभृतयो गोष्ठ्यो यदि वा द्विप्रभृतयो गोष्ठिका 'कुलत्ति' यदि वा द्विप्रभृतयो महाकुला, द्विकग्रहणमुपलक्षणं तेन त्रिप्रभृतय इति द्रष्टव्यं । तथैव च व्याख्यातम् 'खुदुत्ति' क्षुल्लकाः समकं प्रव्राजिता इत्यर्थः । समकं सूत्रादिभिः प्राप्ताः समकं रत्नाधिकाः कर्तव्या । एतेषामेव मध्ये यः पूर्वं प्राप्तः स पूर्वमुपस्थाप्यते इति वृद्धसम्प्रदायः ।।

[भा.२०४९] ईसिं अन्नो अंतो वामे पासम्मि होइ आवलिया ।
अभिसरणंमि य वड्डीओ सरणे सो व अन्नो वा ।।

वृ- तेषामुपस्थाप्यमानानामावलिका गुरोर्वामपार्श्वे गजदन्तवत् ईषदवनतस्य अवनतीभूय स्थितास्तत्र यदि से गुरुसमीपमग्रतोऽभिसरन्ति तदा गच्छस्य वृद्धिर्ज्ञातव्या । यथान्येऽपि बहवः प्रव्रजिष्यन्तीति । अथ पश्चात् बहिरपसरन्ति तदा स उपस्थाप्यमानोऽन्यो वा उन्निःक्रमिष्यति अपद्रविष्यति वेदितव्यं ज्ञातव्यमेवेति निमित्तकथनम् ।।

**मू. (११०)** *आयरिय उवज्झाए असरणमाणे परं चउराय पंचरायातो कप्पागं भिक्खुं नो उवट्ठावेइ तं चेव भणियव्वं ।।*

वृ- अस्य व्याख्या प्राग्वत् । नवरं 'तं चेव भणियव्वं' इति वचनादेवं परिपूर्णः पाठो द्रष्टव्यः 'कप्पाए अत्थि याइं से केइ माननिज्जे कप्पागे, नत्थि याइं से केइ छेए वा परिहारे वा, नत्थि याइं से केइ माननिज्जे कप्पाए, से संतरा छेदे वा परिहारे वा ।। अस्यापि व्याख्या प्राग्वत् । तत्र यैः कारणैर्न स्मरति तान्युपदर्शयन्नाह--

[भा.२०५०] दप्पेण पमाएण व वक्खेवेण व गिलानतो वावि ।
एएहिं असरमाणे चउव्विहं होइ पच्छित्तं ।।

वृ- दर्पो निष्कारणोऽनादरस्तेन [१] प्रमादो विकथादीनां पञ्चानां प्रमादानामन्यतमस्तेन [२] व्याक्षेपेण सीवनादिना [३] ग्लान्यतः वा [४] एतैः कारणैरस्मरति प्रायश्चित्तमस्मरणनिमित्तं चतुर्विधमस्मरणकारणस्य दर्पादिश्चतुःप्रकारत्वात्तदेवमभिधित्सुः प्रथमतो दर्पतः प्रमादेन चाह--

[भा.२०५१] वायामवग्गनादिसु दप्पेण अनुव्वेंति चउ गुरुगा ।
विकहादि पमाएण व चउ लहुगा होंति बोधव्वा ।।

वृ- व्यायामवल्गनादिषु व्यापृततया यो निःकारणेऽनादर उपस्थापनायाः स दर्प उच्यते । तेन दर्पेणानुपस्थापयति प्रायश्चित्तं चत्वारो गुरुकाः, विकथादिना अन्यतमेन प्रमादेनानुपस्थापयति चत्वारो लघुका भवन्ति बोद्धव्याः ।

[भा.२०५२] सिव्वणतुन्नणसज्झायज्झाणलेवादिदानकज्जेसु ।
वेक्खेवे होइ गुरुगो गेलन्नेणं तु मासलहु ।।

**वृ-** सीवनतूर्णनस्वध्यायध्यानपात्रलेपादिदानकार्यैर्गाथायां सप्तमी तृतीयार्थे यो व्याक्षेपस्तस्मिन् व्याक्षेपेऽनुपस्थापयति प्रायश्चित्तं भवति गुरुको मासो, ग्लान्येन त्वनुपस्थापयति मासलघु ।। सम्प्रति यैः कारणैः स्मरतोऽस्मरतश्चानुस्थापयतः प्रायश्चित्तं न भवति । तान्यभिधित्सुराह—

**[भा.२०५३]** धम्मकहा इड्डिमंतो वादे अच्चुक्कडे व गेलन्ने ।
बिइयं चरमपएसुं दोसुं पुरिमेसु तं नत्थि ।।

**वृ-** ऋद्धिमतो राज्ञो युवराजस्यामात्यादेर्वा प्रतिदिवसमागच्छतो धर्मकथा कथ्यते परप्रवादी वा कश्चनाप्युपस्थितः । स वादे निग्रहीतव्यः इति तन्निग्रहणाय विशेषतः शास्त्राभ्यासे तेन सह वादे वा दीयमाने यदि वा आचार्यस्यान्यस्य वा साधोर्वा उपस्थाप्यस्तस्य वा अत्युत्कटे ग्लानत्वे जाते व्याकुलीभूतः स्मरन्नस्मरन् वा यद्यपि नोपस्थापयति तथापि न तस्य प्रायश्चित्तं कारणतो व्याकुलीभवनात् । एतच्च प्रायश्चित्ताभावलक्षणं । द्वितीयपदमपवादपदं चरमपदयोर्द्वयोर्व्याक्षेपग्लानत्वलक्षण-योरवगन्तव्यम् । यथाहि-धर्मकथावादाभ्यां व्याक्षेप उक्तो ग्लानत्वपदेन च ग्लानत्वमिति पूर्वयोस्तु द्वयोः पदयोस्तत् अपवादपदं नास्ति एतच्चतुर्विधं प्रायश्चित्तमस्मरन् निमित्तमुक्तं स्मरणतस्तु चतू रात्रपञ्चरात्र्याद्यतिक्रमे यत् प्रायश्चित्तं तत् पूर्वसूत्रे इवात्रापि निरवशेषं द्रष्टव्यम् ।।

**मू. (१९१)** *आयरिय उवज्झाए सरमाणे वा असरमाणे वा परं दसरायकप्पातो कप्पागं भिक्खुं नो उवट्ठावेति, कप्पाए अत्थि याइं से केइ माननिज्जे कप्पाए, नत्थि याइं से केइ छेदे वा परिहारे वा; नत्थि याइं से केइ माणणिज्जे कप्पाए, संवच्छरं तस्स तप्पतियं नो कप्पइ आयरियत्तं वा जाव गणावच्छेइयत्त वा उद्दिसित्तए वा ।।*

**वृ-** आचार्य उपाध्यायो वा स्मरन् अस्मरन् वा यदा स्मरति तदा न साधकं नक्षत्रादिकं यदा तु साधकं नक्षत्रादिकं, तदा बहु व्याक्षेपतो न स्मरति तत उक्तं स्मरन्वा अस्मरन्वा परं दशरात्रकल्पात् दशरात्रात्कालात्कल्पाकंभिक्षुं नोपस्थापयति । तत्र यदि तस्मिन् कल्पाके सति अस्ति से तस्य कल्पाकस्य कश्चिन्माननीयः पित्रादिर्भावीकल्पाकस्ततो नोपस्थापयति तर्हि नास्ति से तस्यानुपस्थापयतः कश्चित् छेदः परिहारो वा, अथ नास्ति से तस्य कल्पाकस्य कश्चिन्माननीयः पित्रादिर्भावीकल्पाकस्तर्हि-तस्यानुपस्थापयतः छेदः परिहारो वा, प्रथमादेशत इति वाक्यशेषो द्वितीयादेशेन पुनश्छेदेन परिहारतपसा वा अदम्यमानस्य तत्प्रत्ययमनुस्थापनाप्रत्ययं तस्य संवत्सरं यावन्न कल्पते आचार्यत्वमुपदेष्टु मनुज्ञातुं संवत्सरं यावत् गणो ह्रियते इति भावः । एष सूत्रसंक्षेपार्थः । व्यासार्थं तु भाष्यकृदभिधित्सुः प्रथमतो दशरात्रनिबन्धनमाह—

**[भा.२०५४]** सरमाणे पंच दिना असरणमाणेवि तत्तिया चेव ।
कालोत्ति य समओत्ति व अद्धा कप्पोत्ति एगट्ठं ।।

**वृ-** स्मरत्यपि चउराय पंचरायातो इत्यनेन पञ्चदिनान्युक्तानि अस्मरत्यपि तावन्ति चैव पञ्च दिनानि चैवोक्तानि । इदं च स्मरणास्मरणमिश्रकसूत्रमतो दशरात्रात्कल्पादित्युक्तमत्रैव कल्पशब्दस्तद् व्याख्यानमाह । काल इति वा समय इति वा अद्धा इति वा कल्प इति वा एकार्थं, ततो दशरात्रकल्पादिति दशरात्रकालादिति द्रष्टव्यम् ।। सम्प्रति स्मरणास्मरणं भावयति—

**[भा.२०५५]** जाहे सुमरइ ताहे, असाहगं रिक्खलग्गदिनमादी ।
बहुविक्खेवंमि य गणे, सरियंपि पुणो वि विस्सरति ।।

**वृ-** यदा स्मरति तदा असाधकमप्रयोजकमृक्षलग्नदिनादि आदिशब्दात् मुहूर्तादिपरिग्रहः । बहुव्याक्षेपे च गणे गच्छे स्मृतमपि पुनरपि विस्मरति । तत एवं स्मरणास्मरणसंभवः ।।

अत्रैव प्रायश्चित्तविधिं सविशेषमाह—

**[भा.२०५६]** दसदिवसे चउगुरुगा दसेव छल्लहु छग्गुरू चेव ।
ततो च्छेदो मूलं अनवठ्ठप्पो य पारंची ।।

**वृ-** तस्मिन्नधिकृते कल्पाके जाते सति यदि स्मरणास्मणतो दशदिवसानतिक्रामति । ततस्तस्यानुपस्थाप्यतः प्रायश्चित्तं चत्वारो गुरुकास्ततः परमन्यानि दशैव चेत् दिनान्यतिवाहयति ततः षड् लघुकं, ततः परतोऽपि दिनदशकातिक्रमे षड् गुरुकं । ततो च्छेदोत्ति ततः परमेवं च्छेदस्त्रिधा वक्तव्यः । स चैवं । ततोऽपि परतो यद्यन्यानि दश दिनानि लङ्घयति तर्हि चतुर्गुरुकच्छेदः । ततोऽपि परतो दिनदशकातिक्रमे षड् लघुकच्छेदः, ततोऽन्यदशदिवसातिक्रमे षट् गुरुकच्छेदः । मूलं अनवठ्ठोयं पारंचीति तत एकदिवसातिक्रमे मूलं ततोऽपि परमेकादिनातिक्रमे अनवस्थाप्यो भवति । ततोऽपि परमेकस्य दिवसस्यातिवाहने पाराञ्चिको जायते—

**[भा.२०५७]** एसादेसो पढमो बितिए तवसा अदम्ममानम्मि ।
उभयबलदुब्बले वा संवच्छरमादि साहरणं ।।

**वृ-** एष ऽनन्तरोदित आदेशः प्रथमो द्वितीये आदेशे पुनस्तपसा उपलक्षणमेतत् । च्छेदेन वा अदम्यमाने यदि वा उभयबलेन धृतिबलेन कायबलेन च उपलक्षणमेतदन्यतरेणबलेन वा तपसः च्छेदस्य वा दातुमशक्यतया संवत्सरं यावत् दिशं आचार्यत्वस्य हरणम्—

**[भा.२०५८]** एते दो आदेसा, मीसगसुत्ते हवंति नायव्वा ।
पढमबिइएसु पुन, सुत्ते इमं तु नाणत्तं ।।

**वृ-** एतावनन्तरोदितौ द्वावप्यादेशौ मिश्रकसूत्रे भवतो ज्ञातव्यौ । प्रथमद्वितीययोः पुनः सूत्रयोरिदमादेशविषयं प्रत्येकं नानात्वं । तदेवाह—

**[भा.२०५९]** चऊो पंच दिवसा चउगुरु एव होंति च्छेदोवि ।
ततो मूलं नवमं, चरमंपि य एगसरगं तु ।।

**वृ-** प्रथमे द्वितीये च सूत्रे प्रत्येकमिमावादेशौ प्रथम आदेशस्तस्मिन् विवक्षिते कल्पाके जाते सति यदि चतुरो दिवसानतिवाहयति, तदा चतुर्गुरुततो भूयो भूयश्चतुश्चतुर्दिनातिक्रमे षड् लघु षड् गुरुकं । एवं च्छेदोऽपि त्रिधा वक्तव्यः । तदनन्तरं मूलं नवममनवस्थाप्यम् । चरमं पाराञ्चितमेकसरकमेकैकदिनातिक्रमे वक्तव्यम् । द्वितीय आदेशः पञ्चदिवसातिक्रमे चतुर्गुरु । एवं पञ्च पञ्चातिक्रमे षड् लघु षड् गुरुकं । एवं च्छेदोऽपि पञ्च पञ्चदिनातिक्रमेण त्रिधा वक्तव्यस्ततो मूलं नवमं, चरमं च एकसरकमेकैकदिनातिक्रमेण भावार्थः प्रागेव सप्रपञ्चं भावितः । एतद्योदेशद्वयं प्रथमसूत्रे द्वितीयसूत्रे च स्वस्थानेऽपि नोक्तं लाघवात् ।

**मू. (११२)** *भिक्खू य गणाओ अवक्कम्म अन्नं गणं उवसंपज्जित्ताणं विहरेज्जा, तं च केइ साहम्मिए पासित्ता वएज्जा, 'कं अज्जो उवसंपज्जित्ताणं विहरसि ?' जे तत्थ सव्वराइणीए तं वएज्जा । 'अह भंते ! कस्स कप्पाए ?' जे तत्थ बहुसुए तं वएज्जा । 'जं वा से भगवं वक्खति, तस्स आणाउववायवयणनिद्देसे चिट्ठिस्सामि' ।।*

वृ- अस्य सूत्रस्य सम्बन्धमाह—

[भा.२०६०] कीस गणो मे गुरुणो हितोत्ति इय भिक्खु अन्नहि गच्छे ।

गणहरणेण कलुसितो स एव भिक्खू व एव अन्नं ।।

वृ- पूर्वसूत्रे गणापहरणमुक्तं ततः 'कीस' किमिति गणो मे मम गुरोर्हत इति विचिन्त्य इति अस्मादेव गुर्वपमानलक्षणात्कारणाद् भिक्षुरन्यत्र गणान्तरे गच्छेत् । यदि वा यस्य गणोऽपहृतः स एव गणहरणेन कलुषितः सन् अन्यं गणं व्रजेत्ततोऽन्यगणोपसम्पत् प्रतिपादनार्थमधिकृतं सूत्रमिति सूत्रसम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या- -भिक्षुर्गणादपक्रम्य विशिष्टसूत्रार्थनिमित्तमन्यगणमुपसम्पद्य विहरेत् । तं चोद्भ्रामकभिक्षाचरप्रचुरे ग्रामे भिक्षार्थमटन्तं दृष्ट्वा कश्चित्साधर्मिको वदेत्-कमाचार्यमुपसम्पद्य त्वं विहरसि । एवं पृष्टः सन् यस्तत्र सर्वरत्नाधिको गीतार्थ आचार्यस्तं वदेत् तस्मिन्नुक्ते स परिकल्पयति । यमेष व्यपदिशति सोऽगीतार्थो, न चायमगीतार्थनिश्रया विहरति । ततो भूयः पृच्छति, अथ भदन्त कस्य कल्पेन, सूत्रे स्त्रीत्वं प्राकृतत्वात्, कस्य निश्रया त्वं विहरसि, एवमुक्ते यस्तत्र सर्वबहुश्रुतस्तं वदेत् तथा तस्य सर्वरत्नाधिकस्याचार्यस्यागीतार्थस्य यः शिष्यो गीतार्थः सूत्रार्थनिष्णातः समस्तस्यापि गच्छस्य तृप्तिकारी तन्निश्रयाहं विहरामीति वदेत् यं वा स भगवानाख्याति यथैतस्याज्ञा त्वया कर्तव्या । तस्याज्ञायामुपपाते समीपे वचननिर्देशे च आदेशप्रतीच्छायां स्थास्यामीति सूत्रसंक्षेपार्थः ।

अधुना भाष्यकृत्सूत्रव्याख्यातुकामः प्रथमतः सूत्रविषयमुपदर्शयति—

[भा.२०६१] पव्वावितो अगीतेहिं अन्नेहिं गंतूण उभयनिम्मत्तो ।

आगम्म सेस साहण ततो य साहू गओ न्नत्थ ।।

वृ- कश्चिदगीतैरगीतार्थैराचार्यैः प्रव्राजितः, सोऽन्यत्र गणं गत्वा उभयतः सूत्रतोऽर्थतश्च निर्मातोऽभवत् । ततः स स्वगणे आगम्य शेषाणां गीतार्थानां साधूनां साधनं करोति सर्वानपि गीतार्थान् सूत्रार्थनिमित्तमितस्ततो विप्रसृतानाचार्यस्य समीपमानयति । समानीय च तेषां सूत्रार्थान् पूरयति । अन्यदा ततो गच्छात्कोऽपि साधुरन्यत्र गणान्तरे केनापि कार्येण गतः ।

[भा.२०६२] तत्थवि य अन्नसाहुं अटेति अहिज्जमाण साहूणं ।

बिंती मा पढ एवं, किं तिय अत्थो न हो एवं ।।

वृ- तत्रापि च गणान्तरेऽन्यं साधुमाचाराङ्गे 'अट्टे लोए परिजुन्ने' इति सूत्रे 'अटे' इति अधीयानं पठन्तं श्रुत्वा ब्रूते-मा पढ एवं । स प्राह-किमिति । इतरो ब्रूते-अर्थो न भवति विसंवदत्येवं यथा त्वं पठसि तस्मात् अट्टे इति द्विटकारको निर्देशोऽध्येतव्यः ।।

[भा.२०६३] अत्थो वि अत्थि एवं, आमं नमोक्कारमादिसव्वस्स ।

केरिस पुन अत्थोती बेति सुण सुत्तमट्टत्ति ।।

वृ- अधीयानः पृच्छति अर्थोऽपि ननु सूत्रस्यास्ति । इतरः प्राह-आममेवं न केवलमस्य सूत्रस्यार्थोऽस्ति किन्तु सर्वस्यापि नमस्कारादिकस्य सूत्रस्यास्ति । एवमुक्तोऽध्येता पृच्छति । कीदृशः पुनरस्य सूत्रस्यार्थ इति । इतरो ब्रूते शृणु प्रथमतो यथावस्थितं सूत्रं ततः पठति अट्टे इति । अट्टे लोए परिजुन्ने इति, एवं पठित्वास्य व्याख्यानमाह—

[भा.२०६४] अट्टे चउव्विहे खलु, दव्वे नदिमादि जत्थ तणकट्ठा ।

आवत्तंते पडिया, अहव सुवन्नादियावट्टे ।।

वृ- आर्तः खलु चतुर्विधस्तद्यथा-नामार्तः, स्थापनार्तः, द्रव्यार्तो, भावार्तश्च । तत्र नामस्थापने सुप्रतीते द्रव्यार्तोऽपि नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तो यत्र नद्यादेः प्रदेशे तृणकाष्ठानि पतितानि आवर्तन्ते [illegible] सुवर्णादिक[illegible] स [illegible], आ[illegible] परिभ्रमणेन [illegible]गतानि यत्र यो या स आर्त इति व्युत्पत्तेः ।।

[भा.२०६५] अहवा अत्तीभूतो सचित्तादीहिं होइ दव्वंमि ।
भावे कोहादीहिं अभिभूतो होति अट्टो उ ।

वृ- अथवा सचित्तादिभिर्द्रव्यैरसंप्राप्तैः प्राप्तवियुक्तैर्वा य आर्त स द्रव्यार्तः द्रव्यैरार्तो द्रव्यार्त इति व्युत्पत्तेः ।क्रोधादिभिराभिभूतो नोआगमतो भावार्तः, ।तदेवमार्तशब्दार्थ उक्तः ।

सम्प्रति परिजीर्णशब्दार्थमाह–

[भा.२०६६] परिजुन्नो उ दरिद्दो दव्वे धनरयणसारपरिहीनो ।
भावे नाणादीहिं परिजुन्नो सव्वलोगो उ ।।

वृ- परिजीर्णोऽपि चतुर्विधस्तद्यथा-नामपरिजीर्णः, स्थापनापरिजीर्णो, द्रव्यपरिजीर्णो, भावपरिजीर्णश्च । तत्र नामस्थापने प्रतीते, द्रव्ये द्रव्यतः परिजीर्णो नोआगमतो ज्ञशरीरभव्यशरीरव्य-तिरिक्तो धनरत्नसारपरिहीनो दरिद्रो, भावे भावतः परिजीर्णो ज्ञानादिभिः परिहीन एव समस्तोऽपि लोकः ।

[भा.२०६७] एवं सिद्धे अट्ठे सो बेती, कत्थ भे अहीयंति ।।
अमुग सन्निसगासे-अहंपी तत्थ वच्चामि ।।

वृ- एवमाचाराङ्गगतसूत्रस्यार्थे स्पष्टे कथिते स ब्रूते- कुत्र भे भवता त्वयाधीतमिति स प्राह- अमुकस्य सकाशे समीपे ततः सोऽध्येता चिन्तयति-अहमपि तत्र व्रजामि । एवं चिन्तयित्वा–

[भा.२०६८] सो तत्थ गतो ऽधिज्जति मिल्लिो सिज्झंतिएहिं उब्भामे ।
पुट्ठो सुत्तत्था ते सरंति निस्साए कं विहरे ।।

वृ- स तत्र गतो गत्वाऽध्येति, एतद्विषयमधिकृतं सूत्रमधुना सूत्रव्याख्यामाह ।।सोऽधीयानोऽन्यदा उद्भ्रामे उद्भ्रामकभिक्षानिमित्तं गतस्तत्र केचित्साधर्मिकाः केचिदन्यगच्छवर्तिनः साधवः सहाध्यायिनो मिलितास्तैः 'सज्झंति एहिं' ति सहाध्यायिभिः पृष्टस्ते तत्र सूत्रार्थाः सरन्ति निर्वहन्ति ।तथा कं निश्राय आश्रित्य भवान् विहरति–

[भा.२०६९] अमुगं निसा अगीतो, विहरइ कप्पेण गीयसिस्सस्स ।
अहमवि य तस्स कप्पा, जं वा भयवं उवदिसंति ।।

वृ- एवं पृष्टः सन् यस्तत्र सर्वरत्नाधिकोऽगीतोऽगीतार्थ आचार्यस्तं कथयति । यथा अमुकं निश्रयाहं विहरामि ।एतावता 'जे तत्थ सव्वराइणिओ तं वएज्जा' इति व्याख्यातं, एवमुक्ते ते चिन्तयन्ति, यमेष प्राह सोऽगीतोऽगीतार्थस्ततो भूयः पृच्छंति, कस्य कल्पेन कस्य गीतार्थस्य निश्रया भवान् विहरति, एतेन 'अहं भंते कस्स कप्पाए' इति व्याख्यातं, स प्राह-यस्तत्र-बहुश्रुततया गीतार्थस्तस्य शिष्यस्य कल्पेन समस्तोगणो विश्यति, ।अहमपि च तस्य कल्पात् विहरामि, यं भमवन्त उपदिशन्ति यथास्याज्ञा कर्तव्या तस्याज्ञोपपातवचननिर्देशेषु स्थास्यामि ।एतेन 'जं च से भयवं अक्खाति' इत्यादि व्याख्यातं, इदमेव स्पष्टं भावयति-

[भा.२०७०] रायनियस्स उ गणो, गीयत्थोमस्स विहरइ निस्सा ।

जो जेन होति महितो-तस्साणादी न हावेमि ।।

**वृ-** रात्निकस्य रत्नाधिकस्य गणो अवमस्य गीतार्थस्य निश्रया विहरति, अहमपि तन्निश्रया विहरामि । अपि च तस्मिन् गणे यो येन गुणेन तपःप्रभृतिना महितस्तस्याज्ञादि आज्ञासमीपभवनं वचननिर्देशं च न हापयामि सम्यक्करोमीति भावः ।

**मू. (११२)** *बहवे साहम्मिया इच्छेज्जा एगयओ अभिनिचारियं चारए; कप्पइ नो ण्हं कप्पइ थेरे अनापुच्छित्ता एगयतो अभिनिचारियं चारए, जावण्हं कप्पइ ण्हं थेरे आपुच्छित्ता एगयतो अभिनिचारियं चारए । थेरा य से वियरेज्जा एव ण्हं कप्पइ एगयओ अभिनिचारियं चारए; थेरा य से नो वियरेज्जा एव ण्हं नो कप्पइ एगयओ अभिनिचारियं चारए । जं तत्थ थेरेहिं अविइन्ने एगयओ अभिनिचारियं चरन्ति से अंतरा छेए वा परिहारे वा ।।*

**वृ-** अथास्य सूत्रस्य सम्बन्धमाह-

**[भा.२०७१]** इति खलु आणा बलिया आणासारो य गच्छवासो उ ।
मोत्तु आनपाणुं सा कज्जा सव्वेहिं जोगे ।।

**वृ-** अनन्तरसूत्रे इदमुक्तम्, 'आणाउववायवयणनिद्देसे चिट्ठिस्सामोति' तत इति एवमुक्तेन प्रकारेण खल्वाज्ञा गुरूणां बलिका बलवती आज्ञासारश्च गुर्वाज्ञाकारणप्रतिपत्तिसारश्च गच्छवास इत्यावेदितं । तत आनप्राणौ प्राणानौ मुक्त्वा सा गुर्वाज्ञा सर्वत्र योगे व्यापारे कर्तव्येति । एतदर्थप्रतिप्रादनार्थं चाधिकृतं सूत्रमिति सूत्रसम्बन्धप्रकारान्तरेण सम्बन्धमाह-

**[भा.२०७२]** अहवा तदुभयहेउं, आईन्नो सो बहुस्सुय गणो उ ।
ओस्सूर भिक्खखेत्ते चेइयाणं चारिया जोगो ।।

**वृ-** अथवेति प्रकारान्तरोपदर्शने स बहुश्रुतस्य गणस्तदुभयहेतोः सूत्रार्थतदुभयनिमित्तं बहुभिः प्रातीच्छिकैराकीर्णः समाकुलस्तथा तस्मिन् क्षेत्रे उत्सूरे भिक्षावेला चिरं च परिभ्रम्यते लभ्यते च रुक्षं भैक्षं ततः केचित् रुक्षेण दुर्बलीभूताः क्षपका वा दुर्बला अभवन् ग्लानोत्थिता वा सीदंति । एवं तेन क्षेत्रेण त्याजितानां केषांचित् चरिकायोगो भवति, ततश्चरिकायोगप्रतिपादनार्थमधिकृतं सूत्रमेवमनेन सम्बन्धेनायातस्यास्य व्याख्या । बहवस्त्रिप्रभृतिकाः सांभोगिका इच्छेयुरेकतः सहिता इत्यर्थः । अभिनिचरिका अभिमुख्येन नियता चरिका सूत्रोपदेशेन बहिर्व्रजिकादिषु दुर्बलानामाप्यायननिमित्तं पूर्वाह्णे काले समुत्कृष्टं समुदानं लब्धुं गमनं अभिनिचरिका तां चरितुं समाचरितुं कर्तमित्यार्थः एवमेतेषामिच्छतां कल्पते, नो ण्हमिति वाक्यालङ्कारे, स्थविरानाचार्याननापृच्छ्य एकतः संहितानामभिनिचारिकां चरितुं यदि पुनः स्थविरान् अनापृच्छ्य व्रजन्ति ततः पायश्चित्तं मासलघु स्वच्छन्दचारित्वात् यावद् ग्रहणादेवं परिपूर्णःपाठो द्रष्टव्यः ।। "कप्पतिण्हं थेरे आपुच्छित्ता एगयतो अभिनिचारियं चारए । थेरा य से वियरेज्जा एव ण्हं कप्पेइ एगयतो अभिनिचारियं चारए; थेरा य से नो वियरेज्जा एव ण्हं नो कप्पइ एगयतो अभिनिचारियं चारए । जे तत्थ थेरेहिं अवितिन्ने एगयतो अभिनिचारियं चरंति से अंतरा च्छेदे वा परिहारे वा ।।" अस्य व्याख्या-यत एवं स्वच्छन्दनचारितायां मासलघु तस्मान् कल्पते ण्हमिति पूर्ववत् स्थविरानापृच्छ्य एकतो अभिनिचारिकां चरितुं, आपृच्छायामपि कृतायां यदि स्थविरा वितरेयुरनुजानीयुरेन ण्हमिति प्राग्वत् कल्पते । अभिनिचारिकां चरितुं स्थविराश्च नवितरेयुर्नानुजानीयुः प्रत्यपायं पश्यन्तः प्रयोजनाभावतो वा ततो न कल्पते । एकतो

अभिनिचारिकां चरितुं यत्पुनस्तत्र स्थविरैरवितीर्णेऽननुज्ञाते एकतोऽभिनिचारिकां चरन्ति । तन्निमित्तं से तेषां प्रत्येकमन्तरातं अन्तरा नाम तस्मात्स्यानादप्रतिक्रमणं च्छेदः परिहारो वा उपलक्षणमेतदन्यद्वा तपः - प्रायश्चित्तमिति—

**मू. (११४)** *चरियापविट्ठे भिक्खू० जाव चउरायपंचरायातो थेरा पासेज्जा सच्चेव आलोयणा, सच्चेव पडिक्कमणा सच्चेव ओग्गहस्स पुव्वाणुन्नवणा चिट्ठति अहालंदमवि उग्गहे ।।*

**वृ.-** चरिकानिमित्तं ये व्रजिकादिषु प्रविष्टास्तेषामेकतरं परिगृह्येदमुच्यते-चरिकाप्रविष्टो भिक्षुर्यावत् परिमाणावधारणे ततोऽयमर्थः । एकरात्रं द्विरात्रं चतुरात्रं पञ्चरात्रं यावत् व्याखानतो विशेषप्रति-पत्तिरिति द्वितीयं तृतीयमपि पञ्चाहं यावदिति द्रष्टव्यम् । स्थविरान् पश्येत् कुत्र पश्येदिति चेत् उच्यते-अभिनिचारिकां गन्तुमुत्कलापितेनाचार्येण यत्र सन्देशको दत्तस्तत्र स्थविरैः सह मिलितानां सैवालोचना तिष्ठति, या अन्यस्मात् गणादागतेनोपसम्पद्यमानेनवितीर्णा तदेव च प्रतिक्रमणं यदवसन्नादागत्य तस्मिन् गच्छे उपसम्पद्यमानं तस्मात् स्थानान् प्रतिक्रान्तं सैव चावग्रहस्य सैव पुर्वानुज्ञापना तिष्ठति । या अन्यस्मात् गणादागतेनोपसम्पद्यमानेन साधर्मिकावग्रहस्यानुज्ञापना कृता यथालन्दमपि यताकालमपि अपिशब्दोऽत्र संभावने न केवलं यथाकालं किन्तु चिरमपि-यथाकालं यावत्ततो गच्छात्तस्य भावो न विपरिणामति तावदवग्रहे अवग्रहस्य सैव पूर्वा अनुज्ञापना तिष्ठति । एतच्चान्तर्दीपकमतो यथालन्दमप्यालोचना प्रतिक्रमणं च द्रष्टव्यम् ।।

**मू. (११५)** *चरियापविट्ठे भिक्खू परं चउरायपञ्चरायाओ थेरे पासेज्जा पुनो आलोएज्जा पुनो पडिक्कमेज्जा पुनो चेयपरिहारस्स उवट्ठाएज्जा । भिक्खुभायस्स अट्ठाए दोच्चंपि ओग्गहे अनुन्नवेयव्वे सिया कप्पति से एवं वदित्तए अनुजाणह । भंते ! मिओग्गहं अहालंदं धुवं नितियं निच्छइयं, वेउट्टियं, तओ पच्छा कायसंफासं ।।*

**वृ.-** चरिकाप्रविष्टो भिक्षुः परं चतूरात्राद्वा अत्रापि व्याख्यानतो विशेष प्रतिपत्तिस्त इदं द्रष्टव्यं यदि तस्य भावो विपरिणातो यथा कोऽत्र स्थास्यतीति ततश्चतू रात्रात् पञ्चरात्राद्वा आरतः परतो वा स्थविरान्पश्येत्पुनरपि च तस्य भावो जातो यथा तिष्ठाम्यत्र न चैवोपसम्पदा तथा प्रथमोपसम्पदीव पुनरालोचयत् । पुनः प्रतिक्रामेत् पुनः च्छेदस्य पहिस्य वा उपतिष्ठेत् । किमुक्तं भवति ? विपरिणते अविपरिणते वा भावे यत् किञ्चिदापन्नः प्रायश्चितस्थानं तस्मिन् आलोचते य आचार्येण च्छेदः परिहारो वा निर्दिष्टस्तं सम्यक् श्रद्धाय तस्य करणार्थं अभ्युत्तिष्ठेत् ।। भिक्षुरुपपातस्य आज्ञाया अर्थाय पाठान्तरं भिक्षुभावस्य । भिक्षुत्वस्यार्थाय । मे यथावस्थितं भिक्षुत्वं भूयादित्येवमर्थः द्वितीयमपि वारम-वग्रहोऽनुज्ञातव्यः स्यात् । कथमित्याह-अनुजानीत । भदन्त परमकल्याणयोगिन् मितमेवमवग्रहग्रहणं गमनादीनामुपलक्षणंमितं गमनं । मितमवस्थानं मितस्थाननिषीदनत्वग्वर्तनादि अनुजानीत । यथालन्दं यथाकालध्रुवं यदवश्यं कर्तव्यं नियतं यावन्नावधावाभि तावदवश्यमहापनीयं । नित्यं यावत्सहायान्न लभे तावदवश्यमनुष्ठेयं । तथा व्यावृत्तं किमुक्तं भवति ? व्यावृत्य यद्बहुधा उपपातप्रतीच्छनं तत् अनुजानीत ततो गुरुणा अभ्युपगते कायस्य क्रमयुगललक्षणस्य शिरसा संस्पर्श करोति । अथवा कृतिकर्मादिष्वागमने निर्गमने चयः कायसंस्पर्शस्तमप्यनुजानीत । एवं नियट्टेवि दो गमा इति । एवममुना प्रकारेण यथा चरिकाप्रविष्टौ द्वौ गमावृक्तौ द्वे सूत्रेऽभिहिते । तथा चरिकानिर्वर्तेपि द्वौ गमौ वक्तव्यौ । तौ चैवम्-

**मू. (११६)** *चरिया निवट्टे भिक्खू जाव चउराय पंचरायातो थेरे पासेज्जा सच्चेव आलोयणा सच्चेव पडिक्कमणा । सच्चेव उग्गहस्स पुव्वाणुन्नवणा चिट्ठति । अहालंदमवि उग्गहे ।*

**मू. (११७)** *चरिया निवट्टे भिक्खू परं चउराय पंचरायातो थेरे पासेज्जा । पुनो आलोएज्जा पुनो पडिक्कमेज्जा पुनो च्छेयस्स परिहारस्य वा उवठाएज्ज भिक्खुभावस्स अठाए । दोच्चंपि उग्गहे अनुन्नवेयव्वे सिया । अनुजाणह भंते मितोग्गहं अहालंदं धुवं नियतं निच्छइयं वेउट्टियं ततो पच्छा कायसंफासं ।*

**वृ-** अस्य च सूत्रद्वयस्याप्यर्थः स एव यश्चरिकाप्रविष्टसूत्रद्वयस्य यद्येवं किमर्थमनयोरुपादानं चरिकाप्रविष्टसूत्राभ्यामेव गतार्थत्वात्तथा हि-यैव चरिकाप्रविष्टानां समाचारी सैव चरिकातो निवृत्तानामपीति, सत्यमेतत्, केवलमनुच्चारिते निवृत्तसूत्रद्वये यैव चरिकाप्रविष्टानां सामाचारी सैव चरिकातो निवृत्तानामपीति न लभ्यते । सूत्रेऽनुपात्तत्वात् किन्त्वन्यत् किमपि कल्पेत ततः कल्पनान्तरं माभूदिति निवृत्तसूत्रद्वयमिति, सूत्रचतुष्कसंक्षेपार्थः । सम्प्रति भाष्यकृद्विषमपदविवरणं चिकीर्षुः प्रथमतो यच्चरिकाप्रविष्टाद्यसूत्रेऽभिहितं जाव चउराय पंचरायातो थेरे पासेज्जा इति तद्व्याख्यानार्थमाह-

**[भा.२०७३]** पंचाहग्गहणं पुन बलकरणं होइ पंचहिं दिनेहिं ।
एगदुगतितिपनगा आसज्ज बलं विभासाए ।।

**वृ-** सूत्रे जाव चउराय पंचरायाउ इत्यत्र यत् पंचाहग्रहणं पुनर्विशेषतः कृतमाचार्येण पुनःशब्दो विशेषे तत् पञ्चभिर्दिनैः बलकरणं भवतीति ज्ञापनार्थं । उक्तं च-एगपणगद्धमासं सठी पुन मनुयगोण-हत्थीणमिति । अथ पञ्चभिर्दिनैः कथमपि बलं न भवतीति ततो द्वितीयमपि पञ्चाहं यावत्तथा चाह-एक द्वित्रिपञ्चका दिवसानां बलमाश्रित्य विभाषया विकल्पेन एकं वा द्वौ वा त्रीन्वा यावदित्येवंरूपेण सूत्रे चेकं पञ्चरात्रग्रहणमुपलक्षणं व्याख्यानतो विशेषप्रतिपत्तिरतो न भाष्यसूत्रयोर्विरोधः ।

सम्प्रति सच्चेव आलोयणेत्यादि पदव्याख्यानार्थमाह-

**[भा.२०७४]** उपसंपज्जमाणेण जा दत्ता लोयणा पुरा ।
अवसन्ने हि आगम्म, पडिक्कंतो उ भावतो ।।

**[भा.२०७५]** जा याणुन्नवणा पुव्वं, कया साहम्मि उग्गहे ।
संभावणाए सालंदं जा भावो अनुवत्तती ।।

**वृ-**या अन्यस्माद्गणादागतेनोपसम्पद्यमानेनालोचना पुरा दत्ता सैव तिष्ठति । यश्च पूर्वमवसन्नेभ्य आगम्य भावतः प्रतिक्रान्तस्तदेव प्रतिक्रमणं तिष्ठति । यावश्च पूर्वमन्यस्माद्गणादागतेन साधर्मिकावग्रहस्यानुज्ञापना कृता, सैव तिष्ठति । अहालन्दमवीत्यत्र योऽपिशब्दस्तस्यार्थः । सा न एषा च केवलं यावत् काल उक्तस्तावन्तं किन्तु चिरमपि कालं यावद्भावोऽधिकृतगच्छस्थापायिलया-ऽनुवर्तते तावत्सैवावग्रहस्याज्ञापना तिष्ठति, यथालन्दमपि इत्यन्तर्दीपकं ततो यथालन्दमपि सैवालोचना तदेव च प्रतिक्रमणमपि द्रष्टव्यम् । अधुना द्वितीये चरिकाप्रविष्टसूत्रे यदुक्तं परं चउराय पंचरायातो इत्यादि तद्व्याख्यानार्थमाह-

**[भा.२०७६]** परंति परिणते भावे परब्भूतो उ सो पुनो ।
नवांवसंपयाए व तत्था लोए पडिक्कमे ।।

**वृ-** परं चउराय पंचरायातो । इत्यत्र परमिति व्याख्यानतो विशेषप्रतिपत्तिस्ततोऽयमर्थः । परिणते गच्छान्मया निष्क्रमितव्यमित्येवं परिणते भावे अत एव गच्छात्परिभूतः सन् चतुरात्रात्पञ्चरात्राद्वा

परत आरतो वा स्थविरान् पश्येत् । भावश्च पुनर्गच्छावस्थायितया यदि प्रत्यावृत्तोऽजायत ततः स पुनर्भूयो नवोपसम्पदीव तत्प्रथमतयोपसम्पदीव तत्र तेषु स्थविरेषु पार्श्वे आलोचयेत् प्रतिक्रामेद्य ।।

[भा.२०७७] जइ पुन किंचावन्नो तत्थ उ आलोइउं उवठाति ।
विप्परिणयम्मि भाव. एमेव अविप्परिणयम्मि ।।

**वृ-** विपरिणते भावे यदि किञ्चित् प्रायश्चित्तस्थानमापन्नस्तत्र प्रथमत आलोचयितुमालोचनां दातुमाचार्याणामुपतिष्ठति । एवमेव अविपरिणतेऽपि द्रष्टव्यं । किमुक्तं भवति अविपरिणतेपि भावे यदि किञ्चिदापन्नः प्रायश्चित्तस्थानं, ततस्तत्राप्यालोचयितुमालोचनां दातुमाचार्याणामुपतिष्ठति, एवं ततो विपरिणते अविपरिणते वा भावे प्रायश्चित्तस्थानापतातावालोचिताकयामाचार्याय च्छेदं परिहारं वा प्रयच्छन्ति तस्य श्रद्धापूर्वकं करणायाभ्युपतिष्ठति । भिक्खुभावस्स अट्ठाए इत्यत्र पाठान्तरं भिक्खु उववायस्स अट्ठाए इति तत्रोपपातशब्दव्याख्यानार्थमाह -

[भा.२०७८] उववाओ निद्देसो आणा विनओ य होंति एगट्ठा ।
तस्स ठाए पुनरवि मितोग्गहो वासगाणुन्ना ।।

**वृ-** उपपातो निर्देश आज्ञा विनय इत्येतानि भवन्त्येकार्थानि । ततोऽयमर्थो भिक्षुरुपपातस्य आज्ञाया अर्थाय करणाय द्वितीयमपि वारं मितावग्रहानुज्ञा किमुक्तं भवति । मित्रा वा सानुज्ञा एतेन मितावग्गहपदव्याख्यानं कृतं मितावग्रहणं सूत्रे मितगमनादीनामुपलक्षणमतस्तदुपदर्शयति ।

[भा.२०७९] मितगमन चेट्ठणतो मियभावमियं च भोयणं भंते ।
मज्झ ध्रुवं अनुजाणह जाय धुवा गच्छमज्जाया ।।

**वृ-** मितं गमनं प्रयोजनवशतस्तस्य करणात् मितं चिठणति अवस्थानं से तस्य यदि प्रवृत्ततया विश्रामनिमित्तं तस्य कियत्कालं भावात्, मितं भाषितं कार्ये समापतिते । तस्यावसरभावात् । मितं भोजनमेककुक्षिपूरणमात्रस्य भगवतानुज्ञातात् भदन्त परमकल्याण योगिन् ! मम ध्रुवमनुजानीत, या ध्रुवा गच्छमर्यादा तामप्यनुजानीत । इह ध्रुवं नियतं नैत्यिकमिति ते त्रयोऽप्येकार्थास्तथाप्यर्थभेदोऽस्ति । तत्र या ध्रुवा गच्छमर्यादित्यनेन ध्रुवशब्दार्थो व्याख्यातो ध्रुवमवश्यकरणीयमिति ।

सम्प्रति नियतनैश्चयिकशब्दव्याख्यानार्थमाह—

[भा.२०८०] निययं च तहावस्सं, अहमवि ओहायमादि जा मेरा ।
निच्चं जाव सहाए, न लभामि इहा वसे ताव ।।

**वृ-** यावदवधावनिका मर्यादा तावदहमपि नियतं न हापयिष्याम्यवश्यकरणीयं । किमुक्तं भवति । नियतमवधावनमर्यादातोवश्य महापनीयमिति तथा नित्यमिति कोऽर्थः यावत्सहायान्न लभे, तावदिहावसामीति सहायलाभमर्यादाकमावसनं यावदवश्यमनुष्ठेयं नित्यमित्यर्थः ।

अधुना वेउट्टियमित्यस्य भावार्थं कथयति—

[भा.२०८१] दिवसे दिवसे वेउट्टिया उ पक्खे य वंदनादीसु ।
पट्ठवणमादिएसु उववाय पडिच्छणा वहुहा ।।

**वृ-** दिवसे दिवसे प्रतिदिनमित्यर्थः । पक्षे पाक्षिकदिने । चशब्दाच्चातुर्मासिकदिने संवत्सरदिने च वन्दनादिषु आदिशब्दात् क्षामणादिपरिग्रहस्तथा प्रस्थापनादिषु स्वाध्यायप्रस्थापनादिष्वत्रा-

दिशब्दादुद्देशसमुद्देशादिपरिग्रहः । यद्वहुधा अनेकप्रकारमुपपातप्रतिच्छन्नं तदनुजानीत ।

सम्प्रति कायसंफासमिति व्याख्यानार्थमाह-

[भा.२०८२] अब्भुवगए उ गुरुणा सिरेण संफुसति तस्स कमजुयलं ।
किितिकम्ममादिएसु य निंतमनिंते य जे फासा ॥

वृ- अनुज्ञापनायां कृतायां गुरुणाभ्युपगते हृष्टः सन् तस्य गुरोः क्रमयुगलमात्मीयेन शिरसा संस्पृशति प्रणमतीत्यर्थः । तदेवं ततः पश्चात्कायसंस्पर्शं कुरुते इति व्याख्यातमथवायमर्थस्ततः पश्चात् कायस्पर्शमनुज्ञापयति, तथा चाह-कृतिकर्मादिषु कृतिकर्मवन्दनकं विश्रामणादिकं वा आदि शब्दात् क्षामणादिपरिग्रहस्तेषु कर्तव्येष्वागच्छति गच्छति वा ये स्पर्शाः कायस्पर्शास्तान् अनुजानीतेति वाक्यशेषः । सम्प्रति यत्पाठान्तरं भिक्षुभावस्येति तद्व्याख्यानार्थमाह-

[भा.२०८३] भिक्खूभावो सारण वारण पडिचोयणा जहा पुर्व्विं ।
तह चेव इयाणिं पी, निज्जुत्ती सुत्तफासे सा ॥

वृ- भिक्षुभावो नाम स्मारणा वारणा प्रतिचोदना । अत्र प्रतिचोदनाग्रहणं चोदनाया उपलक्षणं । तत्र विस्मृतेऽर्थे स्मारणाऽनाचारस्य प्रतिषेधनं वारणा स्खलितस्य पुनः शिक्षणं चोदना पुनः पुनः स्खलितस्य निष्ठुरं शिक्षापणं प्रतिचोदना, एताभिर्यथावस्थितो भिक्षुभाव उपजायते । ततः कारणे कार्योपचारात् एष एव भिक्षुभाव इत्युक्तं तदर्थायेति किमुक्तं भवति । यथा पूर्वमताः स्मारणादय आसीरन् तथा इदानीमपि स्युरित्येवमर्थं तदेवं कृता विषमपदव्याख्या भाष्यकृता । साम्प्रतमेषा वक्ष्यमाणा सूत्रस्पर्शा सूत्रस्पर्शिका निर्युक्ति तामेव प्रथम साधर्मिकसूत्रविषयामाह-

[भा.२०८४] आकिन्नो सो गच्छो सुहदुक्ख पडिच्छएहिं सीसेहिं ।
दुब्बल खमगगिलाणे निग्गमसंदेसकरणे य ॥

वृ- बहवः साधर्मिका इच्छेयुरेकतो अभिनिचारिकां चरितुमित्युक्तं । तत्र पर आह केन कारणेन तेषां निर्गमिच्छा निर्युक्तिकृदाह-सुख-दुःखप्रतीच्छिकैः सुखदुःखार्थमुपसम्पन्नैः प्रतीच्छिकैः शिष्यैश्च स गच्छ आकीर्णः समाकुलः आकीर्णत्वेन च स नगरे स्थितोऽन्यत्र स्थितानामेषणीयभक्तपानासंभवात् । तत्र च तृतीयस्यां पौरुष्यां भिक्षावेला चिरं च हिण्डितव्यम् । धान्याम्लकूरादिकं च तत्र भैक्षं तत्र केचित्साधवो दुर्बला जाताः क्षपका अपि पारणके प्रायोग्यालभतो दुर्बला अभवन् ग्लाना अप्यधुनोत्थिताः सीदन्ति । एतैः कारणैः निर्गच्छन्तुमिच्छन्ति दृष्ट्वा चाचार्यं पृच्छन्ति । तेना चाचार्येण तान् दुर्बलान् ज्ञात्वा ते मुत्कलनीया ये पुनः निष्कारणं गन्तुकामा आपृच्छन्ति ते न मुत्कलनीयाः । ये चानुज्ञाता व्रजतेति तेषामाचार्यः सन्देशं कथयति । कथमित्याह-

[भा.२०८५] अहमवि एहामो त्ता अन्नत्थ इहेव मं मिलिज्जाह ।
अतिदुब्बले य नाउं विसज्जणा नत्थि इतरेसिं ॥

वृ- यत्र यूयं गमिष्यथ अहमपि इतः स्थानात् तत्र एष्यामि आगमिष्यामि, अथवा अन्यत्र मम सकाशे आगन्तव्यं । यदि वात्रैव मम यूयं मिलेयुर्यथा वा यैः सन्दिश्येत तथा तैः कर्तव्यम् । आचार्येणाप्यतिदुर्बलान् तान् ज्ञात्वा तेषां विसर्जना मुत्कलनं कर्तव्यम् । इतरेषां निष्कारणं गन्तुमनसां विसर्जना नास्ति । एतेन वितरणमवितरणं च सूत्रोपात्तं व्याख्यातम् ।

[भा.२०८६] तं चेव पुव्वभणियं, आपुच्छणमास दोव्वणा पुच्छा ।

उवओग बहिं सुणणा साहू सन्नी गिहत्थेसु ॥

**वृ-** यदि निर्गन्तुमनसोऽनापृच्छया व्रजन्ति, तदा प्रायश्चित्तं मासलघु । पृच्छायामपि कृतायां यदेव भणितं तदेवाधिकृत्य गमनकाले द्वितीयं वारमापृच्छा कर्तव्या । यदि पुनर्द्वितीयं वारं नापृच्छन्ति, तदापि प्रायश्चित्तं मासलघु । किं कारणं द्वितीयवारमापृच्छा कर्तव्येति चेदत आह-उवओगेत्यादि यदा पूर्वमापृष्टं तदाचार्योऽनुपयुक्त आसीत् पश्चादुपयुक्तो जात उपयुक्तेन च तत्राशिवादयो दोषा ज्ञाताः । अथ बहिं सुणणेत्ति पश्चादाचार्येण विचारादिनिमित्तं बहिर्निर्गतेन श्रुतम् । यथा तत्र बहवो दोषा इति । यदि वा साधुना केनापि संज्ञिना श्रावकेण गृहस्थेन वाभिमुख्यागतेन कथितमाचार्याणां यथा तत्र बहवो दोषा इति तस्मात् द्वितीयवारमवश्यं प्रष्टव्यम् । पृच्छायां चकृतायां यद्यपि तत्र न केनापि दोषा आचार्येण निर्ज्ञातास्तथापि तत्र क्षेत्रप्रत्युपेक्षकाः पूर्वं प्रेषणीयास्तथा चाह—

**[भा.२०८७]** नाऊण य निग्गमनं पडिलेहण सुलभदुल्लभं भिक्खं ।
जे य गुणा आपुच्छा, जे वि य दोसा अनापुच्छा ॥

**वृ-** तेषां साधूनां निर्गमनं ज्ञात्वाचार्येण साधुभिस्तस्य क्षेत्रस्य प्रतिलेखनं कारयितव्यम् । येन सुलभं दुर्लभं वा भैक्षं ज्ञायते । किं च ये गुणा द्वितीयवारमापृच्छायां भवन्ति, ते प्रतिलेखनेऽपि द्रष्टव्याः । येऽपि च दोषा द्वितीयवारमनापृच्छायां ते दोषा अप्रत्युपेक्षणेऽपि के ते इत्याह—

**[भा.२०८८]** पच्चंत सावयाई तेना दुब्भिक्ख तावसीतो य ।
नियग पदुट्ठुद्दाणा फेडणा हरियपन्नी य ॥

**वृ-** प्रत्यन्ताः सीमावर्तिनो म्लेच्छा लोकानामुपप्लवोत्पादनायोत्थिता वर्तन्ते स्वापदानि वा दुष्टानि व्याघ्रादीन्यपान्तराले । सम्प्रति स्तेना वा शरीरापहारिण उपध्यपहारिणो वा समंतत उत्थिताः, दुर्भिक्षं वा तत्र जातं, तापस्यो वा प्रचुरमोहास्तत्र भूयस्यो ब्रह्मचर्योपद्रवाय प्रभवन्ति, निजका वा अभिनवप्रव्राजितं साधुमुत्प्राव्राजयेयुः । प्रद्विषो वा तत्र कश्चिदुपस्थितः । उद्धाणत्ति उद्वसितो वा स कदाचित् देशो भवेत् । फेडणत्ति, तत्र या वसतिः मागासीत् सा केनचिदपनीता स्यात् । हरितपन्नीति तत्र दुर्भिक्षप्रायमतः शाकादि हरितं बाहुल्येन भक्ष्यते तच्च साधूनामकारकमथवा हरितपन्नीति नाम तत्र देशे केषुचित् गृहेषु राज्ञो दण्डं दत्वा देवतायै बल्यर्थं पुरुषो मार्यते । स च प्रव्रजितादिर्भिक्षाप्रविष्टः सन् तस्य गृहस्योपरि आर्द्रवृक्षशाखचिह्नं क्रियते । तत्रागृहीतसङ्केतो विनश्यतीति । सम्प्रति चरिकाप्रविष्टादि सूत्राणां चतुर्णामपि सामान्यतो निर्युक्तिमाह—

**[भा.२०८९]** अन्नत्थ तत्थ विपरिणते य गेलन्ने होइ चउभंगे ।
फिडिया गयागतेसु यं अपुन्न पुन्नेसु वा दोन्नं ॥

**वृ-** अन्यत्र चरिकाप्रवेशे तत्र चरिकातो निवृत्तौ विपरिणते विपरिणामे जाते यदाभवति यच्च नाभवति तेषां तद्वक्तव्यमिति शेषः, । तथा ग्लान्ये ग्लानत्वे सति भवति चतुर्भङ्गी । तस्यां च चतुर्भङ्ग्यामगवेषणादौ यदाभवति प्रायश्चित्तं तद्वाच्यमित्युपस्कारः । तथा स्फिटिता विपरिणतास्तेषां गतागतेषु आचार्यस्तेषां समीपं गतस्ते वा आचार्यस्य समीपमागता इत्येवं रूपेषु यावत्तं कालमधिकृतः तस्मिन् पूर्णे अपूर्णे वा यदि द्वितीयमपि वारमवग्रहमनुज्ञापयति । ततो यद्विपरिणतैर्लब्धं तदाचार्यो न लभते किन्तु यदा तेषां तथारूपं चित्तमजायत यथा द्वितीयमपि वारमवग्रहमनुज्ञापयामस्ततः प्रभृति यल्लब्धं तदाचार्यस्याभवति एष गाथार्थः ॥ साम्प्रतमन्यत्र तत्र वा विपरिणते यत् आभाव्यं तदुपदर्शयति—

[भा.२०१०] अवरो परस्स निस्सं जइ खलु दुक्खिया करेज्जाहि ।
उवब्भंतरा सेहं लभन्ति गुरू पुत्रे न लभइ य ।।

वृ- यदि चरिकाप्रविष्टा यदि चरिकातो निवृत्ता विपरिणामे किमस्माकमाचार्येण वयमेव परस्परं सुखदुःखनिश्रां कुर्म इत्येवं रूपे जाते अपरः परस्य परस्परं सुखदुःखिताः खलु निश्रां कुर्युः । तदा यावानवधिकृतस्तस्याभ्यन्तरे तस्मिन्नपूर्णे पूर्णे वा यत् शैक्षग्रहणमुपलक्षणं शैक्षप्रभृतिकं सचित्तादिकमुत्पादयन्ति । तत्तेषामेव भवति, गुरुराचार्यः पुनर्न लभते चशब्दसूचितमर्थं हठेणेत्यादिना व्याख्यास्ये इति तदेवं तत्रान्यत्र विपरिणते इति भावितमिदानीं गेलन्ने होइ चउभंगो इति भावयति-

[भा.२०११] गेलन्ने चउभंगो तेसिं अहवावि होज्ज आयरिए ।
दोण्हंपी होज्जाही अहव न होज्जाहि दोण्हंपि ।।

वृ- ग्लान्ये ग्लानत्वे चतुर्भङ्गी भवति । तद्यथा तेषां विपरिणतानां ग्लानो नाचार्यस्य इति प्रथमो भङ्गः । अथवा आचार्ये आचार्यस्य भवति ग्लानो न तेषामिति द्वितीयः । दोण्हंपि होज्जाहीति द्वयानां विपरिणतानामाचार्यस्य भवति ग्लान इति तृतीयः । अथवा द्वयानामपि न भवति ग्लान इति चतुर्थः । अत्र प्रायश्चित्तविधिमाह-

[भा.२०१२] आयरिए अपेसंते लहुओ अकरंते चउ गुरू होंति ।
परितावणादि दोसा तेसिं अप्पेसणे एवं ।।

वृ- प्रथमभङ्गे तेषां ग्लानो नाचार्यस्येत्येवंरूपे यद्याचार्यो गवेषणाय न कमपि साधुसंघाटं प्रेषयति तदा तस्मिन्नप्रेषयति प्रायश्चित्तं लघुको मासः, । अथ प्रेषणे कृते तैर्वा कथिते यदि ग्लानकृत्यं न किमपि करोति तदा तस्मिन्न कुर्वति चत्वारो गुरुका भवन्ति, । येऽपि चानागाढगाढपरितापनादयो दोषास्तन्निमित्तमपि चर्तुगुरुलघ्वादि चरमपर्यन्तं तस्य प्रायश्चित्तमापद्यते । द्वितीये भङ्गे आचार्यस्य ग्लानो न तेषामित्येवं रूपे तैरपि ग्लानस्य गवेषणाय साधुप्रेषणादि कर्तव्यम् । यदि पुनर्न कुर्वन्ति तदा तेषामप्यप्रेषणे उपलक्षणमेतदकरणे च एवमुक्तप्रकारेण प्रायश्चित्तमवसातव्यं, । तथा हि-यदि ते गवेषणाय साधुसंघाटं न प्रेषयन्ति तदा मासलघु । अथ कृतेऽपि प्रेषणे आचार्येण वा ज्ञापिते यदि ग्लानकृत्यं न कुर्वन्ति तदा चत्वारो गुरुकाः प्रायश्चित्तम्-

[भा.२०१३] अहवा दोण्हवि हुज्जा असंथरमाणे हि तहवि गवेसणया ।
तं चेव य पच्छित्तं असंथरंता भवे सुद्धा ।।

वृ- अथवा द्वयानामपि आचार्यस्य तेषां च प्रत्येकं ग्लानो भवेत् तथापि यदि संस्तरति ततः संस्तरद्भिः परस्परं ग्लानस्य गवेषणां कर्तव्या अथ न कुर्वन्ति तदा तदेव प्रायश्चित्तं तदनन्तरमुक्तं, । तथाहि-परस्परमप्रेषणा मासलघु ग्लानकृत्याकरणे चतुर्गुरुकं । अथ द्वयेऽपि प्रत्येकं न संस्तरति, द्वयानामपि च प्रत्येकं ग्लानस्तत आह-असंस्तरन्तो गवेषणाद्यकुर्वन्तोऽपि भवन्ति शुद्धा न प्रायश्चित्तविषयः । सम्प्रति गुरुपुत्रे न लभते येत्यत्र चशब्दसूचितमर्थमुपदर्शयति-

[भा.२०१४] हठेणं न गविठा अतरंत न तेय विप्परिणयाओ ।
तत्थवि न लहइ सेहे नु लभइ य कज्जे परिणया वी ।।

वृ- सुखदुःखोपसम्पन्नकाश्चरिकां गता अतरन्तो यदि कथमप्याचार्येण न गवेषिता अतरंतो न च ते विपरिणता यथा वयमतंरतो वर्तामहे तथाप्याचार्येण न गवेषितास्ततः किमस्माकमाचार्येणेति । तत्रापि

हृष्टेनागवेषणेऽपि आस्तां परस्परनिश्रायमित्यपिशब्दार्थः न लभते गुरुः शैक्षान् किमुक्तं भवति ते तथा विपरिणताः सन्तो यत्सचित्तादिकमुत्पादयन्तितदाचार्यो न लभते । अथ कार्ये कस्मिन्नपि व्याकुलीभवनत आचार्येण तेऽतरन्तो न गवेषितास्तर्हि यद्यपि ते विपरिणता अपि यत्ते सचित्तादिकमुत्पादयन्ति । ततो न लभन्ते किन्तु लभते आचार्यः ।

**[भा.२०९५]** लध्धुं अविप्परिणते कहिंति भावंमि विप्परिणयम्मि ।
इति मायाए गुरु तु सचित्तादेसगुरुग्गा वा ।।

**वृ-** यदि अविपरिणते भावे सचित्तादि लब्ध्वा विपरिणम्य कथयन्ति । इदं विपरिणते भावेऽस्माभिर्लब्धमिति, तदा मायया ते [illegible] मायानिष्पन्नं प्रायश्चित्तं गुरुको मासः, अचित्ते समुत्पादिते तत्प्रत्ययमुपधिनिष्पन्नं प्रायश्चित्तं, सचित्ते समुत्पादिने तत्प्रत्ययं चतुर्गुरु-कमादेशान्तरेण प्रायश्चित्तमनवस्थाप्यम् । तत आचार्यो निष्कारणं यदि तान्न गवेषयति तदा तस्य प्रायश्चित्तं मासलघु—

**[भा.२०९६]** सुहदुक्खिया गविट्ठा सो चेव य उग्गहो य सीसा य ।
विप्परिणमंतु मा वा अगविठेसुं तु सो लभते ।।

**वृ-** ते सुखदुःखिताः सुखदुःखोपसम्पन्नका आचार्येण गवेषिताः । स एव चावग्रहो वर्ततेऽद्यापि विपरिणामाकथनात् ते शिष्या यदि विपरिणमन्ति यदि वा मा विपरिणमन्तु तथापि यत्तैरुत्पादितं सचित्तादि तदाचार्यो लभते, न पुनस्तत्तेषामिति । अथ न गवेषिता आचार्येण विपरिणताश्च ते ज्ञातास्ततस्तैरगवेषितैर्विपरिणतैश्च यल्लब्धं सचित्तादि तत्स आचार्यो न लभते किन्तु तत्तेषामेव ।।

**[भा.२०९७]** विप्परिणयंमि भावे, लद्धं अम्हेहिं बेंति जइ पुट्ठा ।
पच्छा पुनो वि जातो लभंति दोच्चं अनुन्नवणा ।।

**वृ-** यदि पुनस्ते पृष्टाः सन्तो ब्रुवते एतद्विपरिणते भावेऽस्माभिर्लब्धं तत्तेषामेव नाचार्यस्य । अथ पश्चात् पुनरपि भावो जातो द्वितीयमपि वारमवग्रहस्यानुज्ञापना कर्तव्या, । तदा तथारूपाद्भावात् जातादारतो यत्ते लभन्ते तदाचार्यस्य भवति न तेषामिति ।।

**[भा.२०९८]** आगयमनागयाणं उउबद्धे सो विही उ जो भणितो ।
अद्धाण सीसगामेवि एस विहीए ठिए विदेसं ।।

**वृ-** य एष अनन्तरमुक्तो विधिःस ऋतुबद्धे काले आगतानां चरिकातो निवृत्तानामनागतानां चरिकाप्रविष्टानामवसेयः एव पुनर्वक्ष्यमाणो विधिर्विदिशं प्रस्थिते उपलक्षणमेतत् स्वदेशेऽपि दूरं गन्तुकामे अध्वशीर्षकग्रामे स्थिते वेदितव्यस्तमेवाह—

**[भा.२०९९]** सत्थेणं सालंबे गयागयाण इह मग्गणा होइ ।
तत्थ नत्थ गिलाणे लहु गुरु लहुगा चरिम जाव ।।

**वृ-** सार्थेन सह विदेशं स्वदेशमपि वा दूरं गन्तुकामाः सालम्बं गता यथा यदि अध्वशीर्षकग्रामे परतो गमनाय सार्थं लप्स्यामहे ततो यास्यामः । अथ न लप्स्यामहे तर्हि प्रत्येष्याम उदन्तं च परस्परं वक्ष्यामः एवं ये सार्थेन सहाध्वशीर्षके ग्रामे गताः, ये च न गतास्तेषामिह आभवत्यनाभवति सचित्तादौ विषये मार्गणा वक्ष्यमाणा भवति, तथा तत्रान्यत्र च ग्लाने चतुर्भङ्गी भवति । तद्यथा-अन्यत्राध्वशीर्षके ग्रामस्थितानां ग्लानो न तत्राचार्यपार्श्वे इति प्रथमः, । आचार्यपार्श्वे न तेषामिति द्वितीयः, द्वयानामपि

पार्श्वे ग्लान इति तृतीयो, न द्वयानामपीति चतुर्थः । तत्र यद्याचार्यस्तेषां गवेषणं न करोति मासलघु, । अथ ज्ञातेऽपि ग्लाने तस्य कृत्यकरणाय न यत्नमाधत्ते, ततश्चतुर्गुरुकं, । यद्यानागाढपरितापनादिनिमित्तं चतुर्लघ्वादि यावच्चरमं पाराञ्चितं तदपि प्राप्नोति, । तदेवं प्रथमभङ्गे प्रागभिहितमपि प्रायश्चित्तं विनेयजनानुग्रहाय भूय उक्तमेवं द्वितीये तृतीयेऽपि भङ्गे वाच्यम् ।। सम्प्रत्याभवत्यनाभवति च सचित्तादौ विषये मार्गणां चिकीर्षुराह–

[भा.२१००] पुन्नेव अपुन्ने वा विपरिणएसु जाहे अनुन्नवणा ।
गुरुणावि हु कायव्वासंका लद्धे विपरिणते उ ।।

वृ- ये ते विदेशे स्वदेशेऽपि वा दूरंगन्तुकामाः सङ्केतं कृतवन्तो यदि वयमेतावद्भिर्दिवसैर्न प्रत्यागच्छामस्तदा ज्ञातव्यं गता इति । अन्यथा वेति तस्मिन्नवधौ पूर्णे अपूर्णे वा यदि ते विपरिणता जातास्ततः पुनरपि तैरवग्रहस्य द्वितीयं वारमनुज्ञापना कर्तव्या, । गुरुणापि या तेषु तथाविध-परिणतेष्वनुज्ञापना भवति, सा च प्रतिपत्तव्या यदि पुनरपूर्णेऽवधौ तेषां शैक्षः प्रत्युत्पन्नस्ततो जाताशङ्का यद्यपूर्णेऽवधावेष समुत्पन्न इति कथयिष्यते, तत आचार्यस्य भविष्यति; । तस्मादाचार्यस्य मा भूदिति प्रत्यागतास्ते आलोचयन्ति । पूर्णसङ्केतकाले लब्धोऽयमस्माभिः शैक्ष इति तदा तेषां प्रायश्चित्तं मासगुरु, तस्मात्सत्यभूतेन भावेनालोचयितव्यम् ।। तथा पूर्णेऽवधौ शैक्षे लब्धे प्रत्यागत्य तथैवालोचयति गुरुणापि शङ्का न कर्तव्या । यथा अपरिपूर्णेऽप्यवधौ लब्धे शैक्षे शैक्ष लोभेन विपरिणत इति सत्यभावेना-लोचनात्तच्च परभावोपलक्षकैरक्लेशेन ज्ञातव्यमिति, तदेवमुपसम्पन्नानां यद्वक्तव्यं तदुक्तमिदानी-मुपसंपद्यमानानधिकृत्याह –

[भा.२१०१] परिच्छनिमित्तं वा सब्भावेणं च बेति उ पडिच्छे ।
उवसंपज्जितुकामे, मज्झं तु अकारकं इहइं ।।

[भा.२१०२] अन्नं गवेसह खेत्तं, पाउग्गं जं च होइ सव्वेसिं ।
बालगिलानादीनं सुहसंथरणं महागणस्स ।।

वृ- परीक्षानिमित्तं वा सद्भावेन वा प्रतीच्छिकानुपसम्पत्तुकामान् गुरुर्ब्रूते आर्या इहास्मिन् क्षेत्रे मम अकारकं भक्तपानादि तस्मादन्यत् क्षेत्रं मम प्रायोग्यं यत्र भवति सर्वेषां वा ग्लानादीनां प्रायोग्यं यत्र महतो गणस्य सुखसंस्तरणं सुखेन निस्तारहेतुस्तत् गवेषयथ प्रतिलेखयथ ।।

[भा.२१०३] कयसज्झाया एते पुव्वं गहियंपि नासते अम्हं ।
खेत्तस्स अप्पडिलेहा अकारगा तो विसज्जेइ ।।

वृ- एवं सन्दिष्टाः सन्तो यदि तेषां भाषन्ते एते युष्माकं शिष्याः कृतस्वाध्यायास्तस्मादेतान् प्रेषयथ, अस्माकं पुनः क्षेत्रप्रत्युपेक्षणार्थं गतानां पूर्वगृहीतमपि नश्यति । एवमुक्त्वा यदि ते क्षेत्रस्याप्रत्युपेक्षका विनयवैयावृत्यादेरकारकाश्च ततस्तान् विसर्जयति ।

[भा.२१०४] सव्वं करिस्सामो ससत्तिजुत्तं, इन्नेवमिच्छंते पडिच्छिऊणं ।
निव्वेस बुद्धिए नयावि भुंजे, तं वा गिला पूरति तेसि इच्छं ।।

वृ- ये पुनः सन्दिष्टाः सन्तः एवं ब्रुवते यथा सर्वस्वशक्तियुक्तं स्वशक्त्युचितं करिष्यामस्तान्-एवमिच्छितः प्रतीच्छेत् । प्रतीष्य च तान् न चापि नैव निर्देशबुद्ध्या कर्म मया पुराकृतमेवं वेदयितव्यमिति बुद्ध्या भुङ्क्ते परिभोगं नयति किन्तु स्वपरयोर्निर्जरा बुद्ध्या यया चेच्छया ते उपसम्पद्यन्ते तां चेच्छां

तेषामगिलया निर्जराबुद्‌ध्या पूरयति न परोपरोधावित्तनिरोधेन । अथ तेषां प्रतीच्छिकानां कियन्तं कालं प्रतीच्छको भवति । तत्राह--

**[भा.२१०५]** निठिय महल्ल भिक्खे, कारण उवसग्गागारियपडिबंधो ।
पढमचरिमाइं मोत्तुं, निग्गम सेसेसु ववहारो ।।

**वृ-** निष्ठितं नाम येन कारणेनोपसंपन्नस्तत्सुत्रार्थलक्षणं कारणं निष्ठितं समाप्तं ततो निर्गच्छति, । महल्लत्ति महती सूत्रमण्डली भक्तमण्डली वा तत्र सूत्रमण्डल्यां चिरेणालापक आगच्छति भक्तमण्डल्यां महत्यां भागागतं तत्र यथान्ये साधवोऽध्यासते तथा तेनाप्यध्यासितव्यमनध्यासीतश्च निर्गच्छति, । तथा दुर्लभं तत्र क्षेत्रे भैक्षं तत्र यथान्ये साधवो यापयन्ति, तथा तेनापि प्रतीच्छितेन यापनीयम् यापनं चासहमानः कोऽपि निर्गच्छति । कारणमशिवादिकं तस्मिन् समुत्पन्ने सर्वैर्निर्गन्तव्यम् । उपसर्गा द्विविधा दंशमशकादयः स्वजनादयश्च, तत्र दंशमशकादिषूपसर्गेषु सर्वैर्निर्गन्तव्यं स्वजनादिकृतेषु तूपसर्गेषु गच्छसाधवो निर्गच्छन्ति वा न वा, प्रतीच्छितेन पुनरवश्यं निर्गन्तव्यम् । आगारीप्रतिबन्धो नाम यत्रागार्या विषये । आत्मपरोभयसमुत्था दोषास्तत्रावश्यं तेन निर्गन्तव्यम् । अत्र प्रथमं चरमं कारणं मुक्त्वा शेषेषु कारणेषु निर्गमे आभवद् व्यवहारः प्रायश्चित्तव्यवहारश्च स यथा भवति तथा वक्ष्ये, ।

एतदेव व्याचिख्यासुराह--

**[भा.२१०६]** संमत्तंमि निग्गमो, तस्स होति इच्छाए ।
मंडलि महल्ल भिक्खे, जह अन्ने तह जावए ।।

**वृ-** यस्य श्रुतस्यार्थेनोपसम्पन्नस्तस्मिन् समाप्ते श्रुते तस्य निर्गम इच्छया भवति, यदि प्रतिभासते तर्हि तिष्ठति, नो चेन्निर्गच्छति; तथा महत्यां भक्तमण्डल्यां दुर्लभे च भैक्षे यथान्ये साधवो यापयन्ति, तथा सोऽपि यापयेत् । यापनां चासहमानः कोऽपि गच्छेत् सूत्रमण्डल्यामपि चिरेणालापमागच्छन्तम-वेक्ष्यमाणस्त्वरया कोऽपि निर्गच्छति --

**[भा.२१०७]** कारणे असिवादिम्मि सव्वेसिं होइ निग्गमो ।
दंसमादी उवसग्गे सव्वेसिं एवमेव उ ।।

**वृ-** अशिवादौ कारणे समुत्थिते सर्वेषां भवति निर्गमः । एवमेव अनेनैव प्रकारेण दंशादिके दंशमशकादिके उपसर्गे समुपस्थिते एवमेव सर्वेषां भवति निर्गमः ।।

**[भा.२१०८]** नीयल्लएहि उवसग्गो, जइ गच्छंति नेतरे ।
निग्गच्छति ततो एगो, पडिबंधो वावि भावतो ।।

**वृ-** निजकैरपि स्वजनैरप्युपसर्गे क्रियमाणे यदि इतरे गच्छसाधवो न गच्छन्ति ततः स एक एकाकी प्रातीच्छिको निर्गच्छति । यदि वा भावतः स्वजनेषु महान् प्रतिबन्धस्ततो निर्गच्छति ।।

**[भा.२१०९]** आयपरोभयदोसेहिं जत्थं गारीए होज्ज पडिबंधो ।
तत्थ न संचिट्ठेज्जा, नियमेन उ निग्गमो तत्थ ।।

**वृ-** यत्रात्मपरोभयदोषैरगार्या उपरि भवेत् प्रतिबन्धस्तत्र न संतिष्ठेत् । किन्तु नियमतस्तत्थेति प्राकृतत्वात् तस्मादित्यर्थे तस्मात्स्थानान्निर्गमः ।

**[भा.२११०]** पढमचरिमेसु तुन्ना, निग्गम सेसेसु होइ ववहारो ।
पढम चरिमाण निग्गम, इमा इ जयणा तहिं होइ ।।

वृ- प्रथमे चरमे च कारणे नियमेन निर्गमे अनुज्ञा भवति, । शेषेषु कारणेष्वनाभोगतो निर्गमे भवत्याभवद्व्यवहारस्थ तत्र प्रथमचरमानां प्रथमचरमकारणोपेतानां निर्गमे इयं वक्ष्यमाणा तत्र यतना भवति । तामेवाह–

[भा.२१११] सरमाणे उभए वी काउस्सग्गं तु काउ वच्चेज्जा ।
पण्हुट्ठे दोण्हवि ऊ आसन्नातो नियट्टेज्जा ।।

वृ- प्रथमे चरमे च कारणे समुपजाते उभयस्मिन्नप्याचार्ये प्रतीच्छके च विधिस्मरति च्छिन्नोप-संपदिति ज्ञापनार्थं कायोत्सर्गं कृत्वा स प्रातीच्छको व्रजेत् अथ प्रातीच्छिकस्य विस्मृतं ततः आचार्येण स्मारयितव्यं यथा कुरु च्छिन्नोपसंपन्निमित्तं कायोत्सर्गमिति अथानाभोगतो द्वयोरपि पण्हुट्ठमिति एकान्तेन विस्मृतं, ततो द्वयोरप्येकान्तेन विस्मृतावकृते कायोत्सर्गे सम्प्रस्थितो यदासन्ने प्रदेशे स्मरति, तदासन्नात् निवर्तेत, निवृत्त्य च कायोत्सर्गो विधेयः ।।

[भा.२११२] दूरगएणं उ सरिए साहम्मि दट्ठु तस्सगासम्मि ।
काउस्सग्गं काउं जं लद्धं तं च पेसेइ ।।

वृ- अथ दूरं गत्वा स्मृतवान् ततो दूरगतेन स्मृतेन साधर्मिकं दृष्ट्वा तस्य सकाशे समीपे कायोत्सर्गः करणीयः, सन्देशश्च प्रेषणीयः, आचार्यस्य यथा तदानीं युष्मत् समीपे कायोत्सर्गकरणं विस्मृत-मिदानीममुकस्य साधर्मिकस्य समीपे कृतः कायोत्सर्ग इति कायोत्सर्गं च कृत्वा यदकृते कायोत्सर्गे सचित्तादिकमुत्पन्नं तत्प्रेषयति–

[भा.२११३] पढमचरमाण एसो निग्गमनविही समासतो भणितो ।
एतो मज्झिल्लाणं ववहारविहिं तु वुच्छामि ।।

वृ- प्रथमचरमानां प्रथमचरमकारणोपेतानां एव निर्गमविधिः समासतो भणितः । इत ऊर्ध्वं मध्यमानां मध्यमकारणोपेतानां व्यवहारविधिनाभवद्यवहारविधिं प्रायश्चित्तव्यवहारविधिं च वक्ष्यामि । प्रतिज्ञातमेव निर्वाहयति–

[भा.२११४] सज्झायभूमि वोलंते जोए छम्मास पाहुडे ।
सज्झाय भूमिदुविहा आगाढा चेव नागाढा ।।

वृ- स्वाध्यायभूमिं प्रतिपन्नः सन् तामनिक्षिप्य यो व्यतिक्रामति तस्मिन् आभवद्व्यवहार उच्यते । अथ स्वाध्यायभूमिरिति किमभिधीयते । उच्यते-प्राभृतं नाम यदिष्टः श्रुतस्कन्धस्तस्मिन् यो योगः स स्वाध्यायभूमिः स चामाढयोगमधिकृत्योत्सर्गतः षण्मासाः । एतदेव वैतन्येनाह-स्वाध्यायभूमिर्द्विविधा योगो द्विविध इत्यर्थः । आगाढा अनागाढा च–

[भा.२११५] जहन्नेन तिन्नि दिवसा अन्नागाढुक्कोस होइ बारस उ ।
एसा दिठिवाए महकप्पसुयम्मि बारसमा ।।

वृ- अनागाढा स्वाध्यायभूमिर्जघन्येन त्रयो दिवसा यथा नन्द्यादिकस्याध्ययनस्य उत्कर्षतो भवति द्वादशवर्षाणि । एषा द्वादशवर्षप्रमाणा उत्कृष्टा स्वाध्यायभूमिर्दृष्टिवादे सापि दुर्मेधसः प्रतिपत्तव्या, प्राज्ञस्य तु वर्षं, उक्तं च–

अनागाढो जहन्नेणं, तिन्नि दिवसा उक्कोसेण वरिसं ।
जहा दिठिवायस्स बारस वरिसाणि दुम्मेहस्सात्ति ।।

महाकल्पश्रुते द्वादशवर्षाण्युत्कृष्टा स्वाध्यायभूमिः । अत्राभवद्व्यवहारमाह—

[भा.२११६] संकंतो य वहंतो काउस्सग्गं तु छिन्न उवसंपा ।
अकयम्मी उस्सग्गो जा पढती तं सुयक्खंधं ।।

वृ- योगं वहन् गणान्तरमन्यत्र संक्रामन् छिन्ना उपसम्पदिश्रानीमिति प्रतिपत्त्यर्थं कायोत्सर्गं कृत्वा व्रजेत् । अथ कथमपि तस्य विस्मृतं भवति तत आचार्येण स्मरयितव्यो यथा कुरु कायोत्सर्गमथ द्वयोरपि विस्मरणतः सोऽकृते कायोत्सर्गे याति, तर्हि यावत्सोऽन्यत्र गतोपि तं श्रुतस्कन्धं पठति ।।

[भा.२११७] ता लाभो उद्दिसणायरियस्स जइ वहइ वट्टमाणि से ।
अवहंतंमि उ लहुगा, एस विही होइ अनागाढे ।।

वृ- तावत् यत्किमपि स लभते सचित्तादिकं समस्तोऽपि लाभउद्देशनाचार्यस्य येनोद्दिष्टः स श्रुतस्कन्धस्तस्य पूर्वाचार्यस्याभवति, । केवलं यदि स पूर्वतन उद्देशनाचार्यः से तस्यान्यत्र गतस्य सतो वर्तमानां सारां वहति, अथ स तस्याकृतकायोत्सर्गस्य सतोऽन्यत्र गतस्य सारां न वहति । ततस्तस्मिन् सारामवहत्युद्देशनाचार्ये प्रायश्चित्तं चत्वारो लघुकाः । यद्य सचित्तादिकं स प्रातीच्छिको लभते तदपि न तस्या भवति, एषोऽनन्तरोदितो विधिर्भवत्यनागाढे योगे । सम्प्रत्यागाढे मिधित्सुरिदमाह—

[भा.२११८] आगाढो वि जहन्नो कप्पिगकप्पादि तिन्नहोरत्ता ।
उक्कोसो छम्मासे विवाहपन्नत्ति आगाढे ।।

वृ- आगाढोऽपि योगो जघन्यस्त्रयोऽहोरात्रा तथा कल्पिका कल्पिकादेरुत्कर्षत आगाढयोगे षण्मासान् यथा व्याख्याप्रज्ञप्तेः पञ्चमाङ्गस्य अत्राभवद्व्यवहारमाह—

[भा.२११९] तत्थवि काउस्सग्गं आयरियविसज्जियम्मि छिन्ना उ ।
संसरमसंसरं वा अकए लभंतो भूमीए ।।

वृ- अत्राप्यागाढयोगे पूर्णेऽपूर्णे वा आचार्येण यस्य सकाशे योगं प्रतिपन्नस्तेन सूरिणा विसर्जिता विसर्जने कृते छिन्ना उपसम्पदिति ज्ञापनार्थं संस्मरन् कायोत्सर्गं कुर्यात् । असंस्मरन् वा आचार्येण स्मरयितव्यः । तत्र भूमौ स्वाध्यायभूमावागाढे योगेऽपरिपूर्ण आचार्येण विसर्जितः । कृते कायोत्सर्गे यदि व्रजति तर्हि स व्रजन् यत्किमपि लभते सचित्तादिकं तत्तस्यैवाभवति, नोद्देशनाचार्यस्य, अथाकृते कायोत्सर्गे व्रजति । तर्हि यावदन्यत्र गतोऽपि तं श्रुतस्कन्धं पठति, सारां चोद्देशनाचार्यस्तस्य करोति, तावद्यत् किमपि स सचित्तादिकमुत्पादयति, तत्सर्वमुद्देशनाचार्यो लभते न पुनरितरः—

[भा.२१२०] तीरिय अकए उ गते जा अन्नं न पठए उ ता पुरिसे ।
आसन्नाओ नियत्तइ दूरगतो वावि अप्पाहे ।।

वृ- तीरि ते समाप्तिं नीते आगाढे योगे श्रुतस्कन्धे च भक्तिपुरस्सरमाचार्यादिक्षमणया तोषिते यदि कथमपि गमनवेलायामनाभोगतोऽकृते कायोत्सर्गे याति, तर्हि स गतः सन् यावदन्यं पठति पठितुमारभते, तावद्यत्किमपि लभते, तत्पूर्वस्याचार्यस्याभवति न तस्य, तस्य चास्मरणतोऽकृते कायोत्सर्गे गतस्येयं सामाचारी, यदि आसन्ने प्रदेशे गत्वा स्मृतं तत आसन्नान्निवर्तते । अथ दूरंगतेन स्मृतं तर्हि तत्र यं साधर्मिक पश्यति, तस्य समीपे कायोत्सर्गं तु कृत्वा अप्पाहेति संन्देशं कथयति, । यथा मया कृतोऽमुकस्य समीपे कायोत्सर्ग इति ।।

[भा.२१२१] अचितोसचिते पाहुडे निंते च्छेदो पडिच्छे चउगुरुया ।

जोवि य तस्स उ लाभो तंपि य न लभे पडिच्छंतो ।।

**वृ-** प्राभृते श्रुतस्कन्धे अतोषिते समाप्त्यनन्तरं भक्तिबहुमानादिपुरस्सरमाचार्यादिक्षमणया तोषमनीते यदि निर्गच्छति तर्हि तस्मिन् प्रायश्चित्तच्छेदः, यश्च तं पाठयितुं प्रतीच्छति तस्मिन् प्रतीच्छके प्रायश्चित्तं चत्वारो गुरुकाः । योऽपि च तस्य निर्गतस्यान्यत्र प्रविष्टस्य लाभस्तमपि न लभते प्रतीच्छकः किमुक्तं भवति, । स तथा निर्गतो यत्किमप्युत्पादयति सचित्तादिकं तत्पूर्वतनस्याचार्यस्याभवति, न तु तस्य, नापि यस्तं पाठयति तस्य प्रतीच्छकस्येति तदेवं गच्छनिर्गतानां विधिरुक्तः ।।

सम्प्रत्यनिर्गतानां तमभिधित्सुराह-

**[भा.२१२२]** तत्थवि य अच्छमाणे गुरुलहुया सव्वभंगे जोगस्स ।
आगाढमनागाढे देसं भंगे उ गुरुलहुओ ।।

**वृ-** तत्रापि गच्छे तिष्ठन् यदि योगं वक्ष्यमाणप्रकारेण भनक्ति देशतः सर्वतो वा तदा तस्मिन् योगस्यागाढस्य सर्वतो भङ्गे प्रायश्चित्तं चत्वारो गुरुकाः । अनागाढस्य सर्वतो भङ्गे चत्वारो गुरुका : वा लघुकाः, तथा आगाढे आगाढस्य देशतो भङ्गे गुरुको मासोऽनागाढस्य देशतो भङ्गे लघुकः ।

अथ कथं देशतः सर्वतो वा योगस्य भङ्गस्तत आह-

**[भा.२१२३]** आयंबिल न कुव्वइ भुंजति विगतीउ सव्वभंगो उ ।
चत्तारि पगारा पुन होंति इमे देसभंगंमि ।।

**वृ-** आयामाम्लं परिपाट्या समापतितं न करोति विकृतीर्वा । भुक्ते एष योगस्य सर्वभङ्ग देशभङ्गे पुनरिमे वक्ष्यमाणाश्चत्वारः प्रकारास्तानेवाह-

**[भा.२१२४]** न करेति भुंजिऊणं करेइ काउं सयं च भुंजति ।
वीसज्जेह ममं तिय गुरुलहुमासो विसिठो उ ।।

**वृ-** आचार्येण संदिष्टो विकृतिग्रहणाय कार्योत्सर्गं कृत्वा विकृतीर्भुङ्क्ष्व । तत्रैकोऽकृते कार्योत्सर्गे विकृतीर्भुङ्क्ते न च भुंक्त्वापि करोति कायोत्सर्गं तस्य प्रायश्चित्तं मासलघु तपसा कालेन च गुरुकं । तत्र तपसाऽष्टमादिना, कालेन ग्रीष्मादिना । अन्यस्तथा सन्दिष्टः सन् विकृतीर्भुक्त्वा विकृतिग्रहणाय कायोत्सर्गं करोति तस्य प्रायश्चित्तं मासलघु तपसा गुरुकं कालतो लघु; काउं सयं च भुञ्जति । तृतीयस्तथा सन्दिष्टः सन् स्वयं कायोत्सर्गं कृत्वा विकृतीर्भुक्ते तस्य प्रायश्चित्तं मासलघु तच्च तपसा लघु चतुर्थादि भुञ्जेरहमिति तस्य मासलघु तपः कालाभ्यां लघु । तथा चाह चतुर्ष्वपि लघुमासो गुरु पुनर्यथायोगं तपः कालाभ्यां विशिष्टः सन् एवमनागाढे योगे देशभङ्गः । आगाढे पुनर्नास्त्यपरिपूर्णेऽनुज्ञा विसर्जनस्य न केवलमेतेषु चतुर्षु प्रकारेषु यथोक्तं प्रायश्चित्तं किं त्वाज्ञादयोऽपि दोषास्तथा चाह-

**[भा.२१२५]** एक्केक्क आणादी विराधना होइ संजमायाए ।
अहवा कज्जे उ इमे दट्ठुं जोगं विसज्जेज्जा ।।

**वृ-** एकैकस्मिन् प्रकारे आज्ञादय आज्ञानवस्थामिथ्यात्वविराधनारूपा दोषास्तथा ग्लानत्वभवतो देवताच्छलनतो वा संयमस्यात्मनः च विराधना भवति । अथवा इमानि वक्ष्यमाणानि ग्लानत्वादीनि कार्याणि दृष्ट्वा योगं विसर्जयेत् । नास्ति तत्र देशतः सर्वतो वा भङ्गः तान्येव कारणान्याह-

**[भा.२१२६]** दट्ठु विसज्जण जोगे गेलन्नवयमहामहाणे ।
आगाढे नवगवज्जण निक्कारण कारणे विगती ।।

**वृ-** दृष्ट्वा ग्लानमतरन्तं वयत्ति ब्राजिकायां विकृतिलाभं तथा महामहानिन्द्रमहादीत् अध्वानंविच्छन्नाध्वानमुपलक्षणमेतत् । अवमौदर्य राजप्रद्विष्टं च दृष्ट्वा योगो योगस्य विसर्जनं कर्तव्यं, तथा आगाढेविकृतिनवकस्य वर्जनंदशमायाः पक्वस्याया भजना तथा निष्कारणेयोगं निक्षिप्य विकृतयो न कल्पन्ते । कारणे तु कल्पन्ते एष द्वारगाथासंक्षेपार्थः । सम्प्रत्येषा विवरीतव्या, तत्र प्रथमं ग्लानपदमधिकृत्याह-

**[भा.२१२७]** जोगे गेलन्नमि य आगाढियरे य होंति चउ भंगो ।
पढमो उभयागाढो बितिओ तइओ य एक्केणं ।।

**वृ-** योगे ग्लानत्वे च प्रत्येकमागाढेनागाढे भवति चतुर्भङ्गी गाथायं पुंस्त्वनिर्देशः प्राकृतत्वात् । सा चैवमागाढो योग आगाढं ग्लानत्वं १ आगाढो योगोऽनागाढं ग्लानत्वं २, अनागाढो योग आगाढं ३, अनागाढो योगोऽनागाढं ग्लानत्वं ४ । तथा चाह प्रथमे भङ्गे उभयागाढं यस्मिन् स, तथा द्वितीय आगाढ आगाढयोगेन, तृतीय आगाढ आगाढग्लानत्वेनत्यर्थः, चतुर्थ उभयस्याप्यागाढस्याभावे ।

तत्र प्रथमधिकृत्याह-

**[भा.२१२८]** उभयम्मि वि आगाढे, दड्ढे लग्गएहि तिन्नि दिने ।
मक्खंति य ठायंते पक्कंते धरे दिना तिन्नि ।।

**वृ-** उभयस्मिन्नपि योगे ग्लानत्वे चागाढेतं प्रतिपन्नागाढयोगमागाढग्लानं दग्धेन पक्व पक्वान्नोद्धरितेन धृतेन तैलेन वा यदि वा पक्केन शतपाकादिना तैलेन त्रीणि दिनानि म्रक्षयन्ति । तथाप्यतिष्ठति ग्लानत्वे यत्र पच्यते पक्वान्नं तत्र त्रीणि दिनामी यावत् नीत्वा नात्वा पर्यन्ते ध्रियते येन तद्गन्धपुद्गलाघ्रानत आप्यायना भवति ।

**[भा.२१२९]** जत्तियमेत्ते दिवसे, विगइं सेवइ न उद्दिसे तेसु ।
तहवि य अठायमाणे निक्खिवणं सव्वाहा जोगे ।।

**वृ-** यावन्मात्रान् दिवसान् दिवसेषु विकृतिमुक्तप्रकारेण सेवते, तेषु तावन्मात्रेषु सूत्रं नोद्दिशत् । तथापिच दिनत्रयं पर्यन्तधरणेनाप्यतिष्ठत्यनिवर्तमानग्लानत्वे सर्वथा योगो योगस्य निक्षेपणं कर्तव्यम् ।।

**[भा.२१३०]** जइ निक्खिप्पइ दिवसे, भूमीए तत्तिए उवरि वड्ढे ।
अपरिमियं तु देसो, भूमीए ततो परं कमसो ।।

**वृ-** यति यावत्प्रमाणान् मत्वा योगो निक्षिप्यते, तावन्मात्रान्दिवसान् भूमेः स्वाध्यायभूमेरुपरि वर्धयेत् । किमुक्तं भवति । यावति पठिते स्थितः स्वाध्यायः स्वाध्यायभूमिस्तत्र यावतो दिवसान् योद्वा योगो निक्षिप्यते यावतो दिवसान् भूयोऽपि योगमुत्क्षिप्य योगोद्वहनेन स्वाध्यायभूमेरुपर्येव-मेवातिवाहयेत् । अथ यस्मिन् दिने योगः प्रथममुत्क्षिप्तस्तस्य विस्मृतेर्दिवसपरिणाणं प्रतिनियतं कर्तुं न शक्यते, । तत आह परिमितं यदि दिवसपरिमाणं तत उद्देशो ग्राह्यः, स स्वाध्यायभूमेरुपर्येवमेन योगोद्वहनेनातिवाह्यते, ततस्तावन्मात्रदिवसातिवाहनतः परं क्रमशः सूत्रपाठानुसारेण वहेत् । गतः प्रथमभङ्गः । सम्प्रति द्वितीयभङ्गमधिकृत्याह–

**[भा.२१३१]** गेलण्णमनागाढे रसवति नेहोव्वरे असति पक्वा ।
तह विय अठायमाणे, आगाढतरं तु निक्खिवणा ।।

**वृ-** ग्लानत्वेऽनागाढे रसवत्यां शालनकादी यः स्नेह उद्धरितः स म्रक्षणाय प्रदीयते तथाप्यस्यतिष्ठति

ग्लानत्वे यानि शतपाकादिना पक्वानि धृततैलानि तानि म्रक्षणाय दातव्यानि, । तथाप्यतिष्ठति ग्लानत्वे ग्लानमागाढतरं ज्ञात्वा योगस्य सर्वथा निक्षेपणं कर्तव्यं, । गतो द्वितीयो भङ्गः । सम्प्रति तृतीयमाह—

**[भा.२१३२]** तिन्नि तिगेगंतरिए गेलन्नागाढ निक्खिवपरेणं ।
तिन्नि तिगा अंतरिया चउत्थवंते निक्खिवणा ॥

**वृ-** अनागाढेयोगे आगाढेग्लानत्वे त्रीन् दिवसानां त्रिकान् एकान्तरिकान् कारयेत् । तथाप्यतिष्ठति ततः परेण योगस्य निक्षेपः कर्तव्यः, इयमत्र भावना-एकस्मिन् दिवसे विकृतिग्रहणाय कायोत्सर्गः कृतः, द्वितीये दिवसे पुनः कृतः कायोत्सर्ग एवं तृतीयेपि चतुर्थे दिवसे कृते निर्विकृतिकं पुनः पंचम षष्ठम सप्तमेषु कायोत्सर्गः ततो अष्टमे दिवसे निर्विकृतिकं नवमे कायोत्सर्गः कृतेऽपि यदि न स्थितं ग्लानत्वं, ततो दशमे दिवसे योगनिक्षेपः । गतस्तृतीयोऽपि भङ्गः । सम्प्रति चतुर्थमाह-तिन्नि तिगा इत्यादि, त्रयस्त्रिकानत्थ दिवसा इत्यर्थः अन्तरिता एकान्तरिताश्चतुर्थे भङ्गे कर्तव्यास्तथाप्यतिष्ठति ग्लानत्वे योगस्य निक्षेपणम् । अत्रापीयं भावना-एकस्मिन् दिवसे कायोत्सर्गो द्वितीये दिवसे निर्विकृतिकं, तृतीये दिवसे कायोत्सर्गश्चतुर्थे निर्विकृतिकं, । एवमेकान्तरिते कायोत्सर्गविकृतिके नवदिवसान् यावत्कारयेत्तथाप्यतिष्ठति ग्लानत्वे दशमे दिवसे योगो निक्षिप्यते, यत्रापि प्रतिदिवसं ग्लानप्रयोगस्यालाभे तत्परिवासयितव्यं भवति, । तत्रापि योगो निक्षिप्यते, अथ कदाचित् क्षीरादिभिर्ग्लानस्य प्रयोजनमजायत, तदा स्वग्रामे तन्मार्गयितव्यं, असति स्वक्षेत्रे परग्रामादप्यानतेव्यं, तथाप्यसति क्षेत्राद्बहिरपि गत्वा समानेतव्यम् । अथ कदाचित्तत्राप्यलाभस्तर्हि व्रजिकामपि ग्लानं गमयेत् । पतितं द्वितीयं व्रजिकाद्वारं । तत्रेयं यतना-

**[भा.२१३३]** वइया अजोगि जोगीव अदढ अतरंगस्स दिज्जंते ।
निव्विगिकमाहारो, अंतरविगीतीए निक्खिवणं ॥

**वृ-** व्रजिकायां गोकुले गन्तुकामस्य अंतरंगस्सत्ति ग्लानस्य वा ग्लानत्वेन विना दुर्लभस्य द्वितीया दीयन्ते अयोगवाहिनस्तदबावे योगवाहिनो वा तत्राहारो निर्विकृतिकमन्तरा च कायोत्सर्गः, अथ लभ्यते प्रतिदिवसं विकृतिस्तदा योगस्य निक्षेपणमत्रेयं भावना-ग्लानस्य दढस्य वा व्रजिकागन्तुकामस्य द्वितीया [साधवो] दीयन्ते अयोगवाहिनः । अथ ते न सन्ति तदा अनागाढयोगवाहिनो दातव्यस्तत्र गता विकृतीः परिहरन्ति निर्विकृतिकमाहारमाहारयन्ति, अथ न लभ्यते दिने दिने निर्विकृतिकं तदान्तरान्तरा विकृतिग्रिहणाय कायोत्सर्गं कुर्वन्ति । अथ दिने दिने विकृतिरेव प्रायो लभ्यते नान्यत्तदा योगस्तेषां निक्षिप्यते । सम्प्रति निर्विकृतिकमाहारमाहारयतां विधिमाह-

**[भा.२१३४]** आयंबिलस्सऽलंभे चउत्थमेगंगयं च तक्कादि ।
असतेयरमागाढे निक्खिवनुद्देस तह चेव ॥

**वृ-** यद्याचाम्लवारके आचाम्लप्रायोग्यं न लभ्यते, तदा तद्वारकेऽभक्तार्थं कुर्वन्ति, अथ न शन्कुवन्त्यभक्तार्थं कर्तु तदा एकाङ्गिकं तक्रमाहारयन्ति तक्रायामाम्लं कुर्वन्तीत्यर्थः, आदिशब्दात् एकाङ्गिकं काष्ठमूलमाहारयतीति द्रष्टव्यम्, अथ सन्त्यनागाढयोगवाहिनो द्वितीयास्तत इतरे आगाढयोगवाहिनो द्वितीया दीयन्ते, तत्र यदि तेषां प्रायोग्यं लभ्यते, ततः सुन्दरमथ न लभ्यते, केवलं तत्र क्षीरादीनि लभ्यन्ते, तदा योगो निक्षिप्यते, निक्षेपानन्तरं च पुनरुद्देशस्तथैव यथाऽधस्ताद्भणितम्;

**[भा.२१३५]** जत्ति निक्खिप्पइ दिवसे, भूमीए तत्तिए उवरिवड्ढे ।
अपरिमियं तु देसो, भूमीए तओ परं उ कमसो ॥

वृ- गतं प्रजिकाद्वारमिदानीं महामहद्वारमाह—

[भा.२१३६] सक्कमहादीसु पमत्तं मा तं सुरा छले ठवणा ।
पीलिज्जंतु व अदढा इतरे उ वहंति न पढंति ।।

वृ- महामहः शक्रमहादय आदिशब्दात् सुग्रीष्मकमहादिपरिग्रहः । तिसु ठवणत्ति अनागाढ-योगप्रतिपन्नास्तेषां योगो निक्षिप्यते, किं कारणमिति चेदत आह मा तं प्रमत्तं सन्तं काचित् मिथ्यादृष्टिर्देवता च्छलयेत् । अन्यच्च तेषु दिवसेषु विकृतयो लभ्यन्ते, ततो येऽदृढा दुर्बलाः सन्ति तैर्विकृति परिभोगत अप्यायन्तामिति योगनिक्षेपणं ये पुनरितरे आगाढयोगवाहिनस्तेषां योगो न निक्षिप्यते, केवलमन्यत् नोद्दिशन्ति, नापि पठन्ति, गतं महामहद्वारमिदानीमध्वावमराजद्विष्टलक्षणं द्वारत्रयमाह-

[भा.२१३७] अद्धाणो मे जोगीणं एसियं सेसगाणं पनगादी ।
असतीए अनागाढे, निक्खिव सव्वासती इयरे ।।

वृ- अध्वनि ग्रमानुग्रामिके योगं वहन्ति । अथ छिन्नाध्वकं तदा यत् एषितं प्रासुकमित्यर्थः । तत योगिनां योगवाहिना दीयते, शेषाणां पञ्चकादि दातव्यं, किमुक्तं भवति । शेषाः पञ्चकपरिहान्या पञ्चकादिषु यतन्ते, अथ सर्वे योगवाहिनो न संस्तरन्ति ते प्रासुकेन, तत आह असति सर्वेषां तेषां योगवाहिनां प्रासुके अनागाढयोगवाहिनां योगस्य निक्षेपः करणीयः । अथ सर्वथा तत्र प्रासुकं न लभ्यते तत आह-सर्वेषां प्रासुकस्यासत्यभावे इतरेऽप्यागाढयोगवाहिनो निक्षिप्यन्ते, एवमवमोदर्ये राजद्विष्टेऽपि च भावनीयं ।। साम्प्रतमागाढे नवकवर्जनमिति व्याख्यानार्थमाह-

[भा.२१३८] आगाढंमि च जोगे, विगती उ नव विवज्जणी उ ।
दसमाए होइ भयणा, सेसग भयणा वि इयरम्मि ।।

वृ- आगाढयोगे पक्वविकृतिव्यतिरेकेण शेषा नवापि विकृतयो विवर्जनीया दशम्याः पुनः पक्वविकृतेर्भवति भजना विकल्पना, आगाढं ग्लानत्वमधिकृत्य पूर्वप्रकारेण तस्याः सेवना भवति, शेषकालं नेति भावः । इतरस्मिन्नागाढयोगे शेषकाणामपि क्षीरादीनां विकृतीनां भजना विकल्पना आगाढग्लानस्यानागाढग्लानस्य चान्तरान्तरा विकृतिग्रहणाय कार्योत्सर्गस्यापि करणाभ्यनुज्ञातात् ।। सम्प्रति निक्कारणे कारणे विगली इति व्याख्यानयति-

[भा.२१३९] निक्कारणे न कप्पंति विगतीतो जोगवाहिणो ।
कप्पंति कारणे भोत्तुं अनुन्नाया गुरुहिओ ।।

वृ- योगवाहिन आगाढयोगवाहिनो वा निष्कारणग्लानत्वादिकारणाभावे विकृतयः पूर्वप्रकारेण भोक्तुं न कल्पन्ते, कारणे पुनरनुज्ञाता गुरुभि र्भोक्तुं कल्पन्ते । न च कारणे योगनिक्षेपेऽपि दोषस्तथा चाह—

[भा.२१४०] विगती कएण जोगं निक्खिवए दढदुब्बले ।
से भावतो अनिक्खित्ते निक्खंते वि य तंमि ओ ।।

वृ- यः संहननेन दृढोपि सन् शरीरेण दुर्बल इति कृत्वा विकृतिकृते न भोगाय योगं निक्षिपति, से तस्य निक्षिप्तेपि तस्मिन् योगे भावतः स योगोऽनिक्षिप्त एव गुर्वाज्ञया निक्षेपणात् ।।

[भा.२१४१] विगति कएण जोगं निक्खिवे अदढबले ।।
सभावतो अनिक्खित्ते, उववाएण गुरुणा उ ।।

वृ- यो बली बलवानपि संहननेनादृढ इति कृत्वा विकृतिकृते न योगं निक्षिपति स योगस्तस्य

भावतोऽनिक्षिप्ते एव, कुतः ? इत्याह-गुरुणामुपपातेन आज्ञया उवसतो निद्देसो आणा विनओ होंति एगट्ठा इति वचनात् निक्षेपणादिति वाक्यशेषः । न च तथा योगस्य सर्वथा भंगो यत आह—

**[भा.२१४२]** सालंबो विगति जो उ आपुच्छित्ताण सेवए ।
स जोगे देसभंगो उ सव्वभंगो विवज्जए ।।

**वृ-** सालम्बो विकृतिभिः प्रीणितः सन् क्षिप्रं ज्ञानादि ग्रहीष्यामीत्यालम्बनसहितो यो गुरुमापृच्छ्य विकृतीः सेवते परिभुङ्क्ते, स योगे योगस्य देशभंगो भवति न सर्वभङ्गो विपर्यये आलम्बनाभावे गुर्वनापृच्छायां च सर्व भङ्गः । अथ साक्षाद्योगं निक्षिपति, न च सर्वभङ्ग इति का वार्ता युक्तिरत आह-

**[भा.२१४३]** जह कारणे असुद्धं भुंजंतो न उ असंजतो होइ ।
तह कारणंमि जोगं, न खलु अजोगीय ठवेंतोवि ।।

**वृ-** यथा कारणे छिन्नाध्यकादावशुद्धमपि भुञ्जानो न तु नैवासंयतो भवति तथा कारणे दुर्वलत्वादिलक्षणे सति योगं स्थापनमपि खलु नैवायोगी भवति, ततो न सर्वभङ्गः ।

**[भा.२१४४]** अन्नो इमो पगारो सोपडिच्छयस्स उ अहिज्जमानस्स ।
माया नियडि य जुत्ते ववहारो सचित्तमादिम्मि ।।

**वृ-** प्रतीच्छकस्याधीयानस्यायं वक्ष्यमाणः प्रकारः तमेवोपदर्शयति । सचित्तादिकविषये यो मायानिकृतियुक्तो मायावञ्चनाभिप्रायो निकृतिस्तदनुरुप बहिराकाराच्छादनं ताभ्यां युक्त-स्तस्मिन् व्यवहार आभवद्व्यवहारः प्रायश्चित्तव्यवहारश्च भणनीयः, तमेवभिधित्सुराह-

**[भा.२१४५]** उप्पन्ने सचित्त जो उ निक्खिवे जोगं ।
सव्वेसि गुरुकुलाणं उवसंपज्ज लोपिया तेन ।।

**वृ-** उप्पन्ने उत्पन्ने सचित्ते उपलक्षणमेतदचित्ते वा यो योगं निक्षिपति, किमुक्तं भवति । यदा यदा तस्य सचित्तादिकमुत्पन्नं भवति, तदा तदा गुरुं विज्ञपयति । अस्ति किञ्चित्प्रयोजनं साधयितव्यमतो निक्षिपामि योगमिति, एवं मायाबहुलतया यो योगं निक्षिपति, तेन पापीयसा सर्वेषां गुरुकुलानां श्रुतोपसम्पल्लोपिता ।

**[भा.२१४६]** बहिया य अनापुच्छा विहीयाए आपुच्छणाए मायाए ।
गुरुवयणे पच्छकडो, अब्भुवगमे तस्स इच्छाए ।।

**वृ-** बहिरुद्ग्रामकभिक्षाचार्यां गतो यः सचित्तादिकमुत्पन्नं यस्य सकाशेऽधीते तमनापृच्छ्य निजाचार्याणां प्रेषयति, तेनापि सर्वगुरुकुलानां श्रुतोपसम्पल्लोपिता, अमीषां च त्रयाणामपि मायानिष्पन्नं प्रायश्चित्तं मासगुरु सचित्तविषयं जघन्यमध्यमोत्कृष्टोपधिनिष्पन्नं, गुरुवयणपच्छ-कडोति । ये ते त्रिभिः प्रकारैरपहृताः शिष्यास्ते कदाचित्स्नानादिषु समवसरणादौ मिलन्ति गुरुणा च पृष्टाः सन्तो यथावन्निवेदयन्ति, ततो व्यवहारे जाते स आचार्यवचनेन पश्चात् क्रियते पराजयते, तस्य सक्तं सर्वमाचार्यस्याभवतीत्यर्थः, । अब्भुवगमे तस्स इच्छा इदि यदि पुनस्तेन पराजितेनाभ्युपगमः क्रियते, यथा न सर्वं मया सुन्दरं कृतं मिथ्यादुष्कृतं ममेति तदा तस्यैवमभ्युपगमे इच्छया करोतु मा वा तदुत्पादितसचित्ताद्यपहरणमिति ।। साम्प्रतमेतदेव गाथाद्वयोक्तं व्याख्यानयति-

**[भा.२१४७]** अहिज्जमाणे उ सचित्तं, उप्पन्नं तु जया भवे ।
जोगो निक्खिपत्तं भंते, कज्जं मे किंचि बेति उ ।।

वृ- अधीयाने अधीयानस्य सतो यदा यदा सचित्तमुत्पन्नं भवति, तदा तदा गुरुसमीपं गत्वा ब्रूते,-भदन्त मम किञ्चित्कार्यप्रयोजनमस्ति भो निक्षिप्यतां योग इति । अधुना बहिया य अनापुच्छा इति व्याख्यानयति-

**[भा.२१४८]** बहियाय अनापुच्छा, उब्भामे लभिय सेहमादि तु ।
नेइ सयं पेसति वा, आसन्नठियाण उ गुरुणं ।।

वृ- बहिरुद्भामे उद्भामकभिक्षायां गतः शैक्षकादि लब्ध्वा यस्य सकाशेऽधीते तमनापृच्छ्य आसन्नस्थितानामनन्तरक्षेत्रस्थितानां गुरूणां निजाचार्याणां स्वयं नयति, अन्यैर्वा स्वगुरुकुलसक्तैः प्रेषयति । विहिए आपुच्छणाए मायाए इति व्याख्यानार्थमाह—

**[भा.२१४९]** अहवुप्पन्ने सचित्तए मा मे एतअंच्छिती ।
मायाए आपुच्छइ नायविहिं गंतु मिच्छामि ।।

वृ- अथवेति मायायाः प्रकारान्तरोपदर्शने उत्पन्ने सचित्तादिके चिन्तयति मा मे ममेदं सचित्तादिकमुत्पन्नमेतैगुरुभिरंच्छिती इति अपह्रियतामिति मायया आपृच्छति ज्ञातिविधिस्वजन-वर्गं वन्दापयितुं गन्तुमिच्छामि ।

**[भा.२१५०]** पव्वावेउं तहियं नालमनालेय पत्थवे गुरुणो ।
आगंतुं च निवेयइ लद्धं मे नालवद्धंति ।।

वृ- तत्र गत्वा नालबन्धान् नालसम्बन्धान् अनालबद्धान्वा प्रव्राज्य गुरोः स्वाचार्यस्य प्रेषयति प्रेष्य च पुनरध्यापयितुः समीपे समागच्छति । समागत्य च निवेदयति । यथा मया लब्धा नालबद्धा इति तत्र प्रेषिताः ।

**[भा.२१५१]** ण्हाणादिसु इहरा वा दट्ठुं पुच्छा कया सि पव्वइया ।
अमुएण अमुयकाले इह पेसविया नीया वा वि ।।

वृ- ये ते त्रिभिः प्रकारैः अपहृताः शिष्यास्तान् जिनस्नानादिषु समवसरणे इतरथा अन्यत्र वा मिलितान् दृष्ट्वा आचार्येण पृच्छा कृता यथा कदा कथं वा प्रव्रजिता अभवन् ततस्ते तत्क्षेत्रं च कालं च पुरुषं कथयन्ति । यथामुकेनामुके काले इह अस्मिन् क्षेत्रे प्रव्राजितास्तथा एवमन्यैः सह प्रेषताः स्वयं वा तत्र नीता एवं निवेदिते व्यवहारो जातस्तस्मिंश्च व्यवहारे स पराजितस्तत आचार्येण यत्कर्तव्यं तदाह-

**[भा.२१५२]** सो उ पसंग नवत्था निवारणठाए हु अन्नो वि ।
काहिति एवं हो, गुरुयं आरोवणं देइ ।।

वृ- स आचार्यो मा एवं भूत्वाऽन्योऽप्येवं कार्षीदिति प्रसङ्गानवस्थानिवारणार्थं गुरुकमारोपणं मासगुरुप्रभृतिकं पूर्वोक्तं ददाति ।। अधुना अब्भुवगमे तस्स इच्छाए इति व्याख्यानयति-

**[भा.२१५३]** अब्भुवगयस्स सम्मं, तस्सं उ पणिवइय वच्छलो कोइ ।
वियरति तेच्चिय सेहे, एसेव य वत्थपत्तादी ।।

वृ- सत्यं मयाऽसुन्दरं कृतं तस्मान्मिथ्या मे दुष्कृतमिति सम्यगभ्युपगतस्य प्रतिपन्नस्य कोऽप्या-चार्यः प्रणिपतितवत्सलो ये शैक्षास्तेन दीक्षितास्तानेव वितरति प्रयच्छति । एवमेव वस्त्रपात्रादिकमपि तदुत्पादितं तस्यैव प्रयच्छति । उपसंहारमाह-

[भा.२१५४] एवं तु अहिज्जंते ववहारो अभिहितो समासेन ।
अभिधारेंते इणमो ववहारविहिं पवक्खामि ।।

वृ- एवमनेन प्रकारेण तुर्भिन्नक्रमः स चाग्रे योक्ष्यते । अधीयाने व्यवहारं समासेन संक्षेपेणाभिहितः । इमं पुनर्व्यवहारविधिमभिधारयति प्रवक्ष्यामि प्रतिज्ञातमेव निर्वाहयति-

[भा.२१५५] जं होति नालबद्धं घाडियनातीव जोव तहल्लं ।
भोएहि तिविमग्गंतो, विधं सेसेसु आयरितो ।।

वृ- यद्भवति नालबद्धं, वल्लीबद्धमित्यर्थः । सा च वल्ली द्विधा- अनन्तरा सान्तरा च । तत्रानन्तरा इमे- षड् जनास्तद्यथा- माता पिता भ्राता भगिनी पुत्रो दुहिता च ।

[भा.२१५६] वल्लीसंतअनंतर अनंतरा छञ्जणा इमे हुंति ।
मायापिया भाया भगिनीपुत्तो य धूया च ।।

वृ- सान्तरा पुनरियं मातुर्माता १ पिता २ भ्राता ३ भगिनी च ४ तथा पितुः पिता १ माता २ भ्राता ३ भगिनी ४ च । तथा भ्रातुरपत्यं भ्रात्रीयो भ्रात्रीया वा, भगिन्या वा अपत्यं भागिनेयो भागिनेयी वा, पुत्रस्यापत्यं पौत्रः पौत्री वा, दुहितुरपत्यं दौहित्रो दौहित्री वा । उक्तं च-

माउम्मायाय पिया भाया भगिणीएय एव पिउणोपि ।
भाउ भगिणीए वद्या, धूया पुत्ताण वि तहेव ।।

परंपरवल्लिया वा एसा । अन्येत्वाहुः- प्रपौत्रप्रपौत्री इत्यादिरपि परम्परवल्ली यावत्स्वाजन्य- स्वीकारः, घाडियनातीवत्ति यो वा घटितज्ञातिदृष्टा भाषित इत्यर्थः यो वा तत्र नालबद्धे घटितज्ञातौ वा लाभः । एते ते अनन्तरोदिताश्चिहं विमार्गयन्तः सन्तोभिधारयन्तं यान्ति अभिधारयत आभाव्या भवन्ति शेषेषु पुनरनभिधारयत्स्वाचार्यः श्रुतगुरुस्वामी भवति । शेषा अनभिधारयन्तः श्रुतगुरोराभाव्या भवन्तीत्यर्थः । उक्तं च-

जइते अभिधारयंती पडिच्छंते अपडिच्छगस्सेव ।
अह नो अभिधारंती सुयगुरुणो तो उ आभव्वा ।।

इयमत्र भावना- येनालबद्धा एव घटितज्ञातयो ये वा तैर्दीक्षितास्तैः सह सङ्केतःपुर्व कृतो यथ यूयममुकस्याचार्यस्य पार्श्वे व्रजताहं पुनः पश्चादागमिष्यामि । एवं संकेतं कृत्वा ते पूर्वमुपस्थापितास्तं चाभिधारयन्तो वर्तन्ते । यथाऽमुकोऽमुककाले समागमिष्यति । सोऽपि च पश्चादागतः सन् तथैव यदि निवेदयति चिह्नान्यपि च सर्वाण्यपिमिलन्ति तदा पूर्वमुपस्थापितास्तस्य सर्वे । उक्तं च-

संगारो पुव्वकतो, पच्छा पाडिछओ उ सो जातो ।
तेनं निवेदयव्वं उवठिया पुव्व सेहा से ।।

यदि पुनः कालतश्चिह्नैश्चविसंवादस्तदा गुरोराभाव्य इति, । एतदेव चैतत्येन व्याख्यानयन्नाह-

[भा.२१५७] उवसंपज्जे जत्थ उ, तत्थ पुठो भणातित्त ।
वयचिंधेहिं संगारं, वञ्चसीएयनंतगं ।।

वृ- यत्रोपसम्पद्यते स पश्चात्तत्र तैः पृच्छयते, केन कारणेनत्त्वमागतोऽसि; 'स' प्रह सूत्रार्थानामर्थायोपसम्पत्तुमेवमुक्त्वा तेन सद्भावः कथनीयो यथा उपसम्पद्ये इति परिणाम पूर्वकालमपि युष्माकं पार्श्वे ये नालबद्धा घटितज्ञातयस्तैर्दीक्षिता वा पूर्वमुपस्थितास्तेषां मया सङ्के

कृतो यथाहं पश्चात् शीते शीतकाले चशब्दादन्यस्मिन् वा काले उपसम्पत्स्ये। तेषां चैतावद्वय एवं भूतस्य शरीरस्य वर्ण इत्थंभूतं च शीतकालप्रायोग्यमनन्तकं वस्त्रमेवं वयसा चिह्नैश्च सङ्केतं स्पष्टयति। उक्तं च-

एवेइएहिं दिनेहिं तुज्झसगासं अवस्स एहामो।
संगारो एव कातो चिंधानि य तेसि चिंधेइ॥

अत्राभाव्यविधिमाह-

**[भा.२१५८]** नालबद्धाउ लब्भंते, जे य तमभिधारए।
जे यावि चिंधकालेहिं संवयंति उवट्ठिया॥

**वृ-** यदा तमुपसम्पत्स्यमानमभिधारयन्ति नालबद्धाः पूर्वोपस्थिता यथासोऽत्र सत्वरमुपसम्पत्स्यते, तदा ते नालबद्धास्तेन लभ्यन्ते, ये चापि घटितज्ञातयो नालबद्धादिदीक्षिताश्चिह्नैः कालेन च तेऽपि तस्याभवन्ति, विसंवदन्तस्तु गुरोरथ चिह्नैः संवादोऽस्ति, न कालतस्तथा हि यस्मिन् काले पूर्वमुपस्थिताः कथिता न ते तस्मिन् काले आयाताः, किन्तु कालान्तरे, सोऽपि च सङ्केतदिवसैर्नायातस्ततः स ते चापृच्छ्यन्ते। यत्र यदि केनापि कारणेन ग्लानत्वादिना स ते वा नायातास्तदास्ति तत्वतः कालसंवाद इति ते तस्याभाव्याः। एतदेवाह-

**[भा.२१५९]** अन्नकाले वि आयाया, कारणेण उ केणवि।
ते वि तस्साभवंती उ विवरीयायरियस्स उ॥

**वृ-** ये कारणेन ग्लानत्वादिना केनचित्पूर्वमुपस्थिता अन्यकालेऽपि यस्तेनोपसम्पद्यमानेन कालो निर्दिष्टस्तस्मादन्यस्मिन्नपि काल आयातास्तेऽपि तस्याभवन्ति, विपरीतास्तु कारणमन्तरेण कालविसंवादिन आचार्यस्याभाव्याः। उपलक्षणमेतत्। सोऽपि यदि कारणेन केनचिन्निर्दिष्टकालादन्यस्मिन् काले समायातस्तथापि तस्याभवन्ति विपरीतास्तु कारणमन्तरेणोपसम्पद्यमानविसंवादभाज आचार्यस्याभाव्याः।

**[भा.२१६०]** विप्परिणयंमि भावे जइ भावो सिं पुनो वि उप्पन्नो।
ते होंतायरियस्स उ अहिज्जमाणे य जो लाभो॥

**वृ-** सङ्केतकारणादनन्तरं यदि तेषां पूर्वमुपस्थितानां भावो विपरिणतो यथा नामुकस्य पार्श्वे उपसम्पत्तव्यं तस्मिन् विपरिणते भावे पश्चात्पुनरपि केनापि कारणेन उपसम्पदनाभिप्राय उत्पन्नस्तदा ते पूर्वमुपस्थिता भवन्त्याचार्यस्य अधीयानेषु तेषु गाथायामेकवचनं प्राकृतत्वात्, प्राकृते हि वचनव्यत्ययोऽप्यस्ति। यो लाभः सोऽप्याचार्यस्य उपलक्षणव्याख्यानादेतदपि द्रष्टव्यं। सङ्केतकरणादूर्ध्वं यदि तस्य पश्चादुपसम्पद्यमानस्य भावो विपरिणतः पश्चात्पुनरपि कालान्तरेण जातस्तदा ते पूर्वोपस्थिता गुरोराभाव्या यश्च तेषां लाभः सोऽपि गुरुस्तथा च पश्चादुपसम्पद्यमानमधिकृत्य पञ्चकल्पेऽभिहितम्।

कालेन य चिंधेहिं य, अविसंवादी हि तस्स गुरुणिहरा।
कालंमि विसंवदिए, पुच्छिज्जइ किंतु आतोसि॥
संगारय दिवसेहिं, जइ गेलन्नादि दीवए तो उ।
तस्सेव य अहभावो विपरिणतो पच्छ पुनो जातो॥

तो होइ गुरुस्सेव उ एवं सुयसंपदाए उ । जे यावि वत्थपायादी चिंधेहि संवयंति उ ।।
आ भवंती उ ते तस्सा विवरीयायरियस्स उ ।।

यान्यपि च वस्त्रपात्रादि चिह्नैः संवदन्ति यथाऽमुकस्य पार्श्वेऽमुकमीदृशाकृतिवस्त्रं पात्रं वा यत्तन्मदीयमित्यादि तान्यपि गाथायां पुस्त्वं प्राकृतत्वात् । तस्यां भवन्ति विपरीतानि तु चिह्नविसंवादभाजि आचार्यस्य ।।

[भा.२१६१] आ[illegible]ताहिगारेउ [illegible] [illegible]संगमा ।
आभवंता इमे अन्ने सुहसीलादि आहिया ।।

वृ- आभवदधिकारे वर्तमाने तत्प्रसङ्गादाभवदधिकारप्रसङ्गादिमे वक्ष्यमाणा इमे आभवन्तः सुखशीलादयः सुखशीलादिप्रयुक्ता आख्याताः तानेव द्वारगाथया संगृह्णान आह—

[भा.२१६२] सहसीलनुकंपायाट्ठिए य संबंधि खमगगेलस्य ।
सचित्ते स सिहाओ पकड्डए धारए दिसा उ ।।

वृ- सुखशीलेन भावप्रधानोऽयं निर्देशः सुखशीलतयाऽनुकम्पया आत्मस्थितस्य सम्बन्धिनः स्वज्ञातेः क्षपकस्य ग्लानस्य वा ये प्रेषिता य श्च सचित्तेष्वपि अशिखाकोऽन्यस्य प्रेषित एतान् स्वकुलसम्बन्धी स्वगणसम्बन्धी वा प्रकर्षयति आकर्षयतीत्यर्थः । धारयति च दिशा वात्मीये इत्येषद्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेव विवरीषुः प्रथमतः सुखशीलद्वारमाह--

[भा.२१६३] सुहसीलयाए पेसेइ कोइ दुक्खं खु सारवेउं जे ।
देइ व आयट्ठीणं सुहसीलो दुक्खसीलोत्ति ।।

वृ- दुःखं साधून् सारयितुमिति मन्यमानः कोऽपि सुखशीलतया कमपि साधुमन्यस्य प्रेषयति यदि वा कोऽपि सुखशील आत्मार्थिनामात्माश्रितानां दुःखशीलोऽयमिति प्रकाश्य ददाति ।

[भा.२१६४] तणुगंपि नेच्छए दुक्खं सुहमाकंखए सया ।
सुहसीलतए वावी, सायागारवनिस्सितो ।।

वृ- तनुकमपि स्तोकमपि नेच्छत्यात्मनो दुःखं किन्तु केवलं सदा सुखमाकांक्षति । ततः सुखशीलतया सातगौरवनिश्रितः स्वयं साधूनादत्ते सर्वे ते भवन्त्याचार्यस्याभाव्याः । गतं सुखशीलद्वारं ।

[भा.२१६५] एमेव असहायस्स देति कोइ अनुकंपयाए उ ।
नेच्छइ परमायट्ठी गच्छा निग्गंतु कामो वा ।।

[भा.२१६६] पेसये सो उ अन्नत्थ सिणेहा नयगस्स वा ।
खमए वेज्जवच्चट्ठा देज्ज वा तहि कोइ तु ।।

वृ- एवमेव स्वसबन्धित्वादिकारणव्यतिरेकेणापि असहायस्य सतः कोऽप्यनुकम्पया ददाति । गतमनुकंपाद्वारमात्मस्थितद्वारमाह-- आत्मार्थी आत्माश्रितार्थी सन् परं नेच्छति ततः कमप्यात्मस्थितं करोति यदि वा गच्छन्निर्गन्तुकामः स आत्मार्थी अन्यत्र यस्य यास्यति तत्र कमपि साधुं प्रेषयति । गतमात्मास्थितद्वारं । सम्बन्धिद्वारमाह- स्नेहात् ज्ञातस्य वा स्वजनस्य सोऽन्यत्र प्रेषयति । क्षपकद्वारमाह- तत्रान्यत्र वा प्रसिद्धक्षपके कोऽपि वैयावृत्त्यार्थं कमपि साधुं दद्यात्सम्प्रति ग्लानद्वारं सशिखाकद्वारं चाह-

[भा.२१६७] पेसेंति गिलाणस्स वा अहव गिलाणे सयं आयायंतो ।
पेसंतस्स असिहो ससिहो पुन पेसितो जस्स ।।

**वृ-** ग्लानस्य वा कोऽपि वैयावृत्यकरणाय प्रेषयति साधुं अथवा स्वयं ग्लानः सन् न शक्नुवत्कमपि शिष्यं करोति, सर्वेऽप्येते आचार्यस्याभाव्याः तथा यदि सशिखाकः परस्मै प्रेष्यते तर्हि स यस्य प्रेषितस्यस्यैवाभवति । अथाशिखाकः परस्मै प्रेरितस्तर्हि स प्रेषयितुरेवाभाव्यो न परस्य तथा चाह पेसंतस्स उ असिहो ससिहो पुन पेसितो जस्स । अत्र परः प्रश्नमाह—

**[भा.२१६८]** चोदेती कप्पंमी पुव्वं भणियं ति पेसितो जस्स ।
ससिहो वा असिहो वा असंथरे सो नु तस्सेव ।।

**वृ-** चोदयति प्रश्नं करोति ननु पूर्वकल्पे भणितं यस्य सशिखो वाऽशिखो वा प्रेषितः स तस्यैवा-संस्तरणे सति भवति । ततः कथम त्राशिखाकः प्रेषयितुराभाव्योऽभिहित इति अत्रोत्तरमाह—

**[भा.२१६९]** भन्नइ पुव्वुत्तातो पच्छा वृत्तो विही भवे बलवं ।
कामं कप्पे भिहियं इह असिहं दाउ न लभति उ ।।

**वृ-** भण्यते अत्रोत्तरं दीयते पूर्वोक्ताद्विधिः पश्चादुक्तो विधिर्बलवान् भवति ततो यद्यपि कामं कल्पेऽभिहितं तथापीहाशिखं दातुं न लभते । अन्यच्च—

**[भा.२१७०]** संविग्गाण विही एसो असंविग्गे न दिज्जए ।
कुलिव्वो वा गणिव्वो वा दिन्नं पि तं तु कड्ढए ।।

**वृ-** एष दानविधिः संविग्नानां भणितो असंविग्ने असंविग्नस्य पुनः सर्वथा न दीयते न दातव्यः, । अथ कथमपि केनपि दत्तो भवतितर्हि तं दत्तमपि कुलसत्को वा गणसत्को वा कर्षयति ।।

**[भा.२१७१]** खित्ताती आउरे भीते अदिसत्थीव जं दए ।
सचित्तादि कुलादीओ भुज्जो तं परिकड्ढए ।।

**वृ-** क्षिप्रादिरादिशब्दात् दत्तयक्षाविष्टादि परिग्रहः । आतुरो मरणचिह्नान्युपलभ्यात्याकुलो भीतः किमपि मे राजप्रद्विष्टादिकं करिष्यति न विघ्न इति भयाकुलोऽदिसत्थी वाधिकृतां दिशं मोक्षकामो यद्ददति परस्मै सचित्तादिकं तद्भूयः कुलादिरादिशब्दात् गणपरिग्रहः परिकर्षयति तदेतत् प्रतीच्छकानधिकृत्योक्तमधुना शिष्यानधिकृत्याह—

**[भा.२१७२]** नालबद्धे अनाले वा सीसंमि उ नत्थि मग्गणा ।
दोक्खरखरदिट्ठंता, सव्वं आयरियस्स उ ।।

**वृ-** शिष्ये स्वदीक्षितेऽयं नालबद्धोऽयमनालबद्ध इति विषयविभागेन नास्तिमार्गणा किन्तु यत्ते शिष्या लभन्ते सचित्तादि तत्सर्वमाचार्यस्याभवति, केन दृष्टान्तेनेत्याह-द्व्यक्षरदृष्टान्तेन तद्व्यक्षरो दासः खरो गर्दभस्तद्दृष्टान्तात् दासेन मे खरः क्रीतो दासोऽपि मे इत्येवं लक्षणात् ।।

**मू. (११८)** *दो साहम्मिया एगतो विहरंति, तं जहा-सेहे रायनिए य तत्थ सेहतराए पलिच्छन्ने, रायनीए अपलिच्छन्ने सेहतराएणं रायनीए उवसंपज्जियव्वे, भिक्खोववायं च दलयइ कप्पागं ।।*

**[भा.२१७३]** चारियसुत्ते भिक्खू थेरो वि य अहिकतो इह तेसिं ।
दोण्ह वि विहरंतानं का मेरा लेसतो जोगो ।।

**वृ-** चरिकासूत्रे प्राक् भिक्षुः स्थविरश्चाधिकृतस्तत इहास्मिन् सूत्रे तयोर्द्वयोर्विहरतोः का मर्यादा व्यवस्थितिरित्यभिधीयते, एष लेशतः पूर्वसूत्रेण सहास्स सूत्रस्य योगः सम्बन्धः पुनः प्रकारान्तरेणाह—

**[भा.२१७४]** साहम्मियतणं वा अनुयत्तित्ति होति मे विसाहम्मी ।

उवसंपयावहगाया इहइं पुवसंपया तेसिं ।।

**वृ-** बहवे साहम्मिया इत्यतसूत्रात्साधर्मिकत्वमनुवर्तते वाशब्दः सम्बन्धस्य प्रकारान्तरतोपदर्शनार्थः इमावपि चाधिकृतमूत्रोपात्तौ शैक्षरत्नाधिको साधर्मिकौ ततः साधर्मिकप्रस्तावादधिकृतसूत्रोपनिपातः तृतीयप्रकारः । भिक्खूगणातो अवकम्म अन्नंगणं उवसंपज्जित्ताणं विहरेज्जा इत्यत उपसम्पत्प्रकृता वाशब्दः प्रागुवदिहाप्यस्मिन् सूत्रे तयोः शैक्षरत्नाधिकयोरुपसम्पदभिधीयते इत्यधिकृतसूत्रारंभ इत्येष सूत्रसम्बन्धः । अस्य व्याख्या द्वौ साधर्मिकौ समानगुरुकुलावेकतः सह तौ विहरतस्यद्यथा-शैक्षो रात्निकश्च तत्र यः शैक्षः सपरिच्छन्नः परिवारोपेतः, रात्निको रत्नाधिकोऽपरिच्छन्नः परिवाररहित इत्यर्थः तत्र शैक्षतरकेण रत्नाधिक उपसम्पत्तव्यस्तथा शैक्षतरको रत्नाधिकस्य भिक्षामुपपातं च विनयादिकं च कल्पाकं कल्पनीयं ददाति एष सूत्रसंक्षेपार्थः । अधुना भाष्यविस्तरः —

**[भा.२१७५]**　　सेहम्मि पलिच्छन्ने उवसंपय दोण्हवी पलिच्छतो ।
　　वोवत्थे मासलहुओ कारण असईं सभावो वा ।।

**वृ-** तौ द्वावपि जनौ सहाध्यायिनौ सब्रह्मचारिणौ । तत्र यः शैक्षतरकः सपरिच्छन्नो द्रव्यपरिच्छेदोपेतः परिवारसहित इत्यर्थः । भावपरिच्छेदेन पुनर्द्वयोरपि परिच्छेदोऽस्ति । तत्र शैक्षे द्रव्यतः परिच्छन्ने सति तेन रत्नाधिकस्योपसम्पत् दातव्या । ततो जघन्यतः संघाटो रत्नाधिकस्स देय उत्कर्षतो बहवोऽपि दातव्याः तथा शैक्षकेण रत्नाधिकस्य पुरत आलोचनीयं रत्नाधिकेन शैक्षकस्य पुरतोऽन्यथा वोवत्थे विपर्यासे उभयोरपि प्रायश्चित्तं मासलघु । तथाकारेण ग्लानादिलक्षणे व्यापृततया द्वावेव तौ जनावित्यसति सहायस्याभावे न दद्यादपि सहायं, स्वभावो वा तस्यात्मीयकरणादिलक्षणस्ततो न ददाति सहायं, किन्त्वौचित्येन तस्य कृत्यं कारयति, । एष द्वारगाथा संक्षेपार्थः साम्प्रतमेनामेव विवरीषुः प्रथमतः पूर्वार्धं—

**[भा.२१७६]**　　सज्झंतिवासिणो दोवि भावेन नियमसो छन्नो ।
　　रायणिए उवसंपय सेहतरोन कायव्वो ।।

**वृ-** तौ द्वावपि सहाध्यायिनावेकस्य गुरोरन्तेवासिनौ च द्वावपि भावेन ज्ञानादिना नियमसो नियमेनच्छन्नौ ज्ञानादिरूपभावपरिवारोपेतावित्यर्थः । द्रव्यपरिच्छेदेन पुनः शैक्षतरक एवोपेतस्तत्र शैक्षतरकेण रात्निको रत्नाधिकस्योपसम्पत्कर्त्तव्या । वोवत्थे मासलहुतो इत्यस्य व्याख्यानार्थमाह—

**[भा.२१७७]**　　आलोइयंमि सेहेन तस्स बियडे पहराइनितो ।
　　इति अकारणंमि लहुगो अवरोपरगव्वतो लहुगा ।।

**वृ-** प्रथमतः शैक्षतरकेण रत्नाधिकस्य पुरत आलोचनीयं, तेनालोचितः पश्चाद्रत्नाधिकस्तस्य शैक्षतरस्य पुरतो विकटयत्यालोचयति, एतच्चेतौ न कुरुतस्तत इति एतस्याकरणे द्वयोरपि प्रत्येकं लघुको मासः प्रायश्चित्तं, अवरोपरगव्वतो लहुगा इति यदि शैक्षतरको द्रव्यपरिच्छेदेनाहं परिच्छन्न इति गर्वतो रत्नाधिकस्य पुरतो नालोचयति तदा तस्यापि प्रायश्चित्तं चत्वारो लघुकाः एतदेवोपदेशद्वारेण स्पष्टयति ।

**[भा.२१७८]**　　एगस्स उ परीवारो बीइए रायनियत्तवादो य ।
　　इइ गव्वो न कायव्वो दायव्वो चेव संघाडो ।।

**वृ-** एकस्य परिवारोऽस्ति द्वितीये रात्निकत्ववादः, रत्नाधिकोऽयमिति प्रवाद इति एवं रूपो गर्वो द्वाभ्यामपि न कर्तव्यः । किन्तु परस्परमालोचयितव्यमन्यथा चतुर्लघुकप्रायश्चित्तापत्तेर्दातव्यश्च शैक्षतरकेण जघन्यतोऽपि रत्नाधिकस्य सङ्घाटः । सम्प्रति भिक्खोवायं च दलाति कप्पागमिति—

[भा.२१७९] पेहाभिक्ख किती उ करेंति सो आवितें पवाएति ।
न पहुव्वंत दोण्हवि गीलाणमादीसु च न देज्जा ।।

वृ- शैक्षतरस्य शिष्या रत्नाकिस्य सम्बन्धिनो वस्त्रादेः प्रेक्षां प्रतिलेखनां कुर्वन्ति, । तथा तद्योग्यांभिक्षामानयन्ति । कृतिकर्मविनयो विश्रामणा च तत् कुर्वन्ति, किमुक्तं भवति यदाज्ञापयति ततकुर्वन्ति वाचनादिपरिश्रान्तस्य च विश्रमणामाते स चापि रत्नाधिकस्तान् प्रवाचयति सूत्रं पाठयत्यर्थं च श्रावयतीत्यर्थः ।कारणे असती इत्यस्य व्याख्यानमाह-न पहुप्पंते इत्यादि ते शैक्षतरशिष्या ग्लानादिषु प्रयोजनेषु व्यापृतास्ततो न प्रभवन्ति प्रपारयन्तिसाधव इति सहायं न दद्यात् । यदि वा द्वायेन तौ जलो ततः किं दीयतामिति न दद्यात् । अधुना सभावो वा इत्यस्य व्याख्यानमाह—

[भा.२१८०] अलीकरेज्जा खलु जोवि दिन्ने, एसोवि मज्झंति महंतमानी ।
न तस्स ते देइ बहिं तु नेनुं तत्थेव किच्चं पकरिंति जं से ।।

वृ- यो वितीर्णान् साधूनात्मीकुर्यात्, यश्चैषोऽपि शिक्षाधिपतिः शैक्षतरको ममेति महामानी, तस्य तान् साधून् बहिस्तस्मात् स्थानादन्यत्र विहारक्रमेण नेतुं न ददाति, । किन्तु यत्से तस्य कृत्यं करणीयं तत्रैव स्थितस्य सतः कुर्वन्ति अथवा—

[भा.२१८१] वारएण से देइ न य दावेइ वायणं ।
तहवि भेदमिछंत अविकारी उ कारए ।।

वृ- वारेण वारेण तस्य शुश्रूणकमेकैकं साधुं नियुङ्क्ते न च तस्मात्साधूनां वाचनां दापयति, मा स गणभेदं कार्षीरिति हेतोः ।अथैवमपि दुस्वभावतया गणभेदं करोति तत आह—तथापिएवमपि क्रियमाणे गणभेदं कर्तुमिच्छति योऽविकारी दुर्भेदः साधु स्तेन तस्य कृत्यं कारयति—

मू. (११९) *दोसाहम्मिया एगयओ विहरंति तंजहा से हे य राइनीए य । तत्थराइनीए परिच्छन्ने, सेहतराए अपलिच्छन्ने इच्छा रायनीए सेहतरागंउवसं पज्जेज्जा, इच्छा नो उवसंपज्जेज्जा, इच्छा भिक्खोववायं दलयइ कप्पागं, इच्छा नो दलयइ कप्पागं ।।*

वृ- द्वौ साधर्मिकावेकतःसंहतौ विहरतस्तद्यथा शैक्षो रत्नाधिकश्च तत्र रात्निकः परिच्छन्नः परिवारोपेत इत्यर्थः ।शैक्षतरकोऽपरिच्छन्नः परिवाररहितस्तत्र रात्निके रत्नाधिकस्येच्छा यदि प्रतिभासते शैक्षतरकमुपसम्पद्यते । अथ नेच्छा न प्रतिभासते तर्हि नोपसम्पद्यते भिक्षामुपपातं च कल्पं यदीच्छा तर्हि ददाति । अथादातुमिच्छा तर्हि न ददाति । एष सूत्रसंक्षेपार्थः । अधुना भाष्यविस्तरः—

[भा.२१८२] रायनिय परिच्छन्ने उवसंप पलिच्छओ य इच्छाए ।
सुत्तत्थ कारणे पुन पलिच्छयं देंति आयरिया ।।

वृ- रात्निके रत्नाधिके द्रव्यतः परिच्छन्ने परिवारोपेते सति तेन शैक्षतरकस्य उपसम्पत् परिच्छदश्च इच्छया दातव्यः, । इयमत्र भावना-स यदि शैक्षतरकोऽवमरत्नाधिकस्तुल्यश्रुतो गुरुरत्नाधिकेन सह ततः स रत्नाधिकश्चिन्तयति । मा नूनमेतस्य भिक्षाहिण्डनव्याक्षेपेण च सूत्रार्था नश्येयुस्ततः संघाटं ददाति, ।अथवा मा एष समानगुरुकुलवासी सहाध्यायी द्रव्ये परिच्छदेनापरिच्छदो भूयात्सहाध्यायान्ते वासिस्नेहतः संघाटं ददात्यालोचनां प्रयच्छति । अल्पश्रुतस्य तु परिच्छदमुपसम्पदं वा ददातीति । अथ स शैक्षतरको रत्नाधिकाद्बहुश्रुतस्तदा नियमत उपसम्पत्तव्यः, परिच्छदश्च तस्य दातव्यस्तथा चाह-सूत्रार्थकारणात्सूत्रार्थं गृहीतुकामाः पुनराचार्या उपसम्पद्यन्ते परिच्छदं च ददाति । एतदेव स्पष्टयति—

[भा.२१८३] सुत्तत्थं जइ गेण्हइ तो से देइ परिच्छदं ।
गहिएवि देइ संघाडे मा से नासेइ तं सुयं ।।

वृ- यदि स रत्नाधिकस्ततः सूत्रार्थं गृह्णाति ततः से तस्य ददाति परिच्छदं परिवारं गृहीतेऽपि सूत्रार्थे ददाति सङ्घाटं कस्मादित्याह मा से से तस्य भिक्षाटनव्याक्षेपतः प्रतिलेखनाव्याक्षेपतश्च तत् श्रुतं नश्येदिति हेतोः अबहुश्रुतादौ तु न ददाति इत्येतद्भावयति—

[भा.२१८४] अबहुस्सुते नदेंती भिक्खरो तरुणगाय संघाडं ।
घेत्तुण जाव वच्चइ तत्थ य गोणीए दिट्ठंतो ।।

वृ- अबहुश्रुतोऽल्पश्रुतो निरुपहतपञ्चेन्द्रियस्तरुणकश्च तस्मिन् सत्स्वपि साधुषु संघाटं न ददाति सहायान्न ददातीति भावः यो वा गीतार्थोपिसन् प्रदत्तान् सहायान्विपरिणाम्य गृहीत्वा व्रजति, तस्यापि सत्स्वपि साधुषु सहायान्न ददाति तथा च तत्र दुष्टशीलतया गवा दृष्टान्तस्तमेव भावयति—

[भा.२१८५] साडगबद्धा गोणी जह तं घेत्तुं पलाति दुस्सीलो ।
इय विप्परिणामेंते न देज्ज संतेवि हु सहाए ।।

वृ- यथा कस्यापि गौः पलायिता ततः कथमपि लब्ध्वा सती तेन शाटकेन बद्धा यथा सा शाटकबद्धा दुःशीला गौस्तं शाटकं गृहीत्वा पलायते इति । एवममुना प्रकारेण यो विपरिणामयति सहायान् तस्मिन् विपरिणामयति सतोऽपि सहायान्न दद्यात् ।।

मू. (१२०) *दोभिक्खुणो एगयओ विहरंति नोण्हं कप्पइ अन्नमन्नस्स उवसंपज्जिताणं विहरित्तए, कप्पइण्हं अहाराइणियाए अन्नमन्न उवसंपज्जिताणं विहरित्तए ।।*

मू. (१२१) *दोगणावच्छेइया....(जाव).... विहरित्तए ।*

मू. (१२२) *दोआयरिउवज्झाया... (जाव) विहरित्तए ।*

मू. (१२३) *बहवे भिक्खुणो... (जाव)....विहरित्तए ।*

मू. (१२४) *बहवेगणावच्छेइया (जाव) विहरित्तए ।*

मू. (१२५) *बहवेआयरियउवज्झाया (जाव) विहरित्तए ।*

मू. (१२६) *बहवे भिक्खुणो बहवे गणावच्छेइया बहवे आयरिय उवज्झाया (जाव) विहरित्तए ।*

वृ- 'दो भिक्खुणो एगतो विहरंति' इत्यादि सूत्र सप्तकं । अस्य सम्बन्धमाह—

[भा.२१८६] संखहिगारा तुल्लाधिगारिया एस लेसतो जोगो ।
आयरियस्स व सिस्सो भिक्खु अभिक्खु अह तु भिक्खू ।।

वृ- अनन्तरसूत्रे दोसाहम्मिया इत्यादिलक्षणे द्विकलक्षणा संख्याधिकृता । अत्रापि सैव दो भिक्खुणो इत्यादि वचनात्ततः संख्याधिकारात्तुल्याधिकारिता पूर्वसूत्रे रत्नाधिकपदेनाचार्य उपात्त आचार्यस्य च शिष्यो द्विधा भिक्षुरभिक्षुश्च । तत्र भिक्षुः प्रतीतोऽभिक्षुर्गणावच्छेदक उपाध्याय आचार्यो वा तत् आचार्यसूत्रात्प्रागुक्तादथानन्तरं भिक्षुसूत्रमुक्तं, शेषसूत्रसम्बन्धप्रतिपादनार्थमाह—

[भा.२१८७] एमेव सेसएसु वि गुणपरिवड्ढीए ठाणलंभो व ।
दुप्पभिइ खलु संख्या बहुआ पिंडो उ तेन परं ।।

वृ- एवमेव पूर्वोक्तप्रकारेणैव शेषयोरपि गणावच्छेदकाचार्यसूत्रयोः सम्बन्धः । तथाह्याचार्यस्य शिष्यो भिक्षुरभिक्षुश्च तत्र भिक्षुसूत्रमुक्तम् । तदनन्तरमभिक्षोर्गणावच्छेदकस्याचार्यस्य च सूत्रे अथ

गुणपरिवृद्ध्या स्थानलाभी भवति । तथा हि भिक्षुर्गुणाधिकत्वेन गणावच्छेदकस्थानं लभते । गणावच्छेदको गुणाधिकतया आचार्योपाध्यायस्थानमतो भिक्षुसूत्रानन्तरं क्रमेण गणावच्छेद-काचार्योपाध्यायसूत्रे, तथा द्विप्रभृतिका खलु संख्या बहुका भवति, । ततो द्विसंख्या सूत्रत्रयानन्तरं बहुसंख्यासूत्रत:यं बहूनां च परस्परमुपसम्पन्नानां पिण्डो भवति तेन बहुसंख्यासूत्रत्रयात्परं पिण्डः पिण्डसूत्रमुक्तमिति, एवमनेन सम्बन्धजातेनायातस्यास्य सूत्रसप्तकस्य व्याख्या-; द्वौ भिक्षू एकतः संहतौ विहरतो नोण्हमिति वाक्यालङ्कारे कल्पते अन्योन्यमुपसम्पद्य विहर्तुं, कल्पते ण्हमिति पूर्ववत् । यथा रत्नाधिकतयाऽन्योन्यमुपसम्पद्य विहर्तुमेव, गणावच्छेदकसूत्रमाचार्योपाध्यायसूत्रं च भावनीयमेवं बहुसंख्यासूत्रत्रयं पिण्डसूत्रं चेति सूत्रसंक्षेपार्थः । सम्प्रत्याद्यभिक्षुसूत्र व्याख्यानार्थ माह -

[भा.२१८८] संभोइयाण दोण्हं, खेत्तादिपेहकारणगयाणं ।
पंथे समागयाणं भिक्खूण इमा भवे मेरा ॥

वृ- द्वावाचार्यावन्यस्मिन्नन्यस्मिन् क्षेत्रे स्थितौ, तौ च परस्परं सांभोगिकौ तयोः सांभोगिकयोः द्वयोराचार्ययो र्भिक्षवस्ताभ्यां प्रेषिताः क्षेत्रादिप्रेक्षाकारणगताः क्षेत्रप्रत्युपेक्षणार्थमादिशब्दादुपधि-मार्गणार्थं गतास्ते च तथा गच्छन्तः पथि समागताः परस्परं मिलितास्तेषां चैकेन पथा गन्तव्यमतस्तेषां क्षेत्रादिप्रेक्षाकारणगतानां पथि समागतानां भिक्षूणां या मर्यादा सामाचरी सा इयं वक्ष्यमाणा भवति—

[भा.२१८९] भिक्खुस्स मासियं खलु पलिच्छणाणं च सेसगाणं तु ।
चउलहुगा ऊपलिच्छन्ने तम्हा उवसंपया तेसिं ॥

वृ- यौ द्वौ भिक्षुस्पर्धकपती तयोः शैक्षतरकेण रत्नाधिकस्य पुरतः आलोचयितव्यः तेनालोचिते पश्चात् रत्नाधिकेनाशैक्षतरकस्य पुरत एमवकरणे भिक्षोः शैक्षस्य रत्नाधिकस्य प्रायश्चित्तं खलु मासिकं मासलघु, पलिच्छन्नणं चेत्यादि । एतद्बहुसंख्याविशिष्टस्य भिक्षुसूत्रस्य व्याख्यानं, परिच्छन्नानां जघन्यतोऽप्यात्मतृतीयाणां शेषकाणां चात्मद्वितीयानां यथोक्तवैध्यकरणे प्रायश्चित्तं मासलघु, । तत्र हि यद्येकोऽपरिच्छन्नस्तर्हि तेनान्य आत्मद्वितीय आत्मतृतीयो वा उपसम्पत्तव्यो नो चेदुपसम्पद्यते तर्हि तस्मिन्नपरिच्छन्नेऽनुपसंपद्यमाने प्रायश्चित्तं चत्वारो-लघुकास्तं चोपसम्पद्यमानं यो नोपसम्पदा प्रतीच्छति, तस्य मासलघु, यत एवं तस्मात्परस्परमुपसम्पत्तेषां भवति कर्तव्या, । एतामेव निर्युक्तिगाथां भाष्यकृत् व्याचिख्यासुः प्रथमतो भिक्खुस्स मासियं खल्वित्येतद्व्याख्यनयति- -

[भा.२१९०] दो भिक्खू अगीयत्था, सीया एक्को व होज्ज उ अगीतो ।
राइनिय पलिच्छन्ने पुव्वं इयरेसु लहुलहुगा ॥

वृ- द्वौ भिक्षू अगीतार्थौ यदि वा द्वावपि गीतौ गीतार्थौ तयोः परस्परस्यालोचनमन्यथा प्रायश्चित्तं मासलघु, । अथवा एको गीतार्थ एकश्च भवत्यगीतार्थः । तत्र रत्नाधिकेन परिच्छन्ने भावपरिच्छेदोपेते गीतार्थे इत्यर्थः । पूर्वमालोचयितव्यं पश्चादितरेष्वगीतार्थेषु रत्नाधिकेन एवं चेत्ते न कुर्वते तर्हि रत्नाधिकं प्रायश्चित्तं मासलघु, । इतरेषां चत्वारो लघुकाः । एतमेव गाथां विवरीषुः प्रथमतो दो भिक्खू अगीयत्था सीया इत्येतद्विवृणोति ।

[भा.२१९१] दोसु अगीयत्थेसु अहवा गीतेसु सेहतरो पुव्विं ।
जइ नालोयइ लहुओ । न विगडे इयरोवि जइ पच्छा ॥

वृ- द्वयोर्भिक्ष्वोरगीतार्थयोर्मध्ये यदि शैक्षतरः पूर्वं रत्नाधिकस्य पुरतो नालोचयति तदा तस्य

प्रायश्चित्तं लघुको मासः इतरेऽपि रत्नाधिकोऽपि यदि पश्चात्तस्य शैक्षतरस्य पुरतो न विकटयति, तदा तस्यापि प्रायश्चित्तं मासलघु, । अथ यदि द्वावप्यगीतार्थौ तदा परस्परस्य विहारालोचनैव केवला, नापराधलोचनापि, अथ द्वावपिगीतार्थौ तदा परस्परविहारलोचना अपराधलोचना च अथैको गीतार्थो गीतार्थोऽपरस्त्वगीतार्थ स्तत्रालोचनाविधिमाह—

**[भा.२१९२]** रायणिए गीयत्थे, राइणिए चेव वियडणा पुव्विं ।
देइ विहारवियडणं, पच्छा राइनितो सेहे ।।

**वृ-** यदि रत्नाधिको गीतार्थ इतरोऽगीतार्थस्तर्हि गीतार्थे रत्नाधिके सति रत्नाधिके एव पूर्वं शैक्षतरेण विहारविकटना अपराधविकटना च दातव्या । ततः पश्चात् रत्नाधिकः शैक्षतरकस्य विहारविकटना ददाति । अथ शैक्षतरको गीतार्थो रत्नाधिकस्त्वगीतार्थस्तत्राह—

**[भा.२१९३]** सेहतरगे वि पुव्वं गीयत्थे दिज्जए पगासणा ।
पच्छा गीयत्थो वि हु, ददाति आलोयणमगीतो ।।

**वृ-** यदि गीतार्थः शैक्षतरकस्तर्हि तस्मिन गीतार्थे शैक्षतरकेऽपि पूर्वं रत्नाधिकेन प्रकाशना विहारविकटना अपराधविकटना चेत्यर्थः दीयते, पश्चात् गीतार्थोऽपि सन् सशैक्षतरको हु निश्चितमगीके रत्नाधिके आलोचनां विहारलोचनां ददाति । न त्वपराधलोचनां । कस्मादित्याह—

**[भा.२१९४]** अवराह विहारपगासणा उ दोन्नि भवंति गीयत्थे ।
अवराहपयं मुतुं, पगासणं होतु अगीयत्थे ।।

**वृ-** अपराधप्रकाशना विहारप्रकाशना च एते द्वे अपि प्रकाशने भवतो गीतार्थे, गीतार्थे पुनरपराधपदं मुक्त्वा शेषस्य विहारस्य प्रकाशनं भवति विहारालोचनां भवति, । नापराधालोचनेति भावः, अगीतार्थतया तस्यापराधलोचनानर्हत्वात् । सम्प्रत्युपसंहारमाह—

**[भा.२१९५]** भिक्खुस्सेगस्स गयं पलिच्छन्नाणं इयाणि वोच्छामि ।
दव्वपलिच्छन्नाणं-जहन्नेण अप्पतइयाणं ।।

**वृ-** भिक्खुस्स मासियं खल्वित्यनेन पदेन यदेकस्य भिक्षोर्वक्तुमुपक्रान्तं तत् गतं परिसमाप्तमिदानीं द्रव्यपरिच्छदेन परिच्छन्नानां जघन्येनात्मतृतीयानां यद्वक्तव्यं वद्वक्ष्यामि । तदेवाह—

**[भा.२१९६]** तेसिं गीयत्थाण, अगीतमिस्साण एस चेव विही ।
एत्तो सेसाणंपि य वुच्छामि विहिं जहाकमसो ।।

**वृ-** तेषां परिच्छदेन परिच्छन्नानां बहूनां सर्वेषा गीतार्थानामथवा अगीतार्थानां यदि वा मिश्राणां केषांचित् गीतार्थानां केषांचिदगीतार्थानामित्यर्थः । एष एवानन्तरोदित एकभिक्षुगत आचार्याणां आलोचनाविषयो विधिरवसातव्यो व्यतिरेके च प्रायश्चित्तमपि नथैव, । अंते ऊर्ध्वं शेषाणामपि विधिं यथाक्रमशो यथाक्रमेण वक्ष्यामि । तत्र शेषशब्दवाच्यानुपदर्शयति—

**[भा.२१९७]** सेसा तू भन्नंती अप्पबितिया उ जे तहिं केइ ।
गीयत्थमगीयत्थे मीसे य विही उ सो चेव ।।

**वृ-** शेषानाम ते भण्यन्ते-यत्र तेषां बहूनां भिक्षुणां मध्ये केचिदात्मद्वितीयास्तस्मिन् शेष गीतार्थे अगीतार्थे मिश्रे च स एव पूर्वोक्तो विधिरालोचनाविषयस्तद्व्यतिरेके प्रायश्चित्तविधिश्चावसातव्यः ।

**[भा.२१९८]** संजोगा उ च सद्देण, अहिगया जह य एग दो चेव ।

एगो जइ नवि दोण्हिं, उवगच्छे चउ लहुलो से ।।

वृ- परिच्छन्नानां चेत्यत्र चशब्देन संयोगा अधिकृताः सूचिता इत्यर्थः । तानेवोपदर्शयति- यथा चेति भंगोपप्रदर्शने, एकत एको भिक्षुरपरतो द्वौ । भिक्षू । तत्रैकेनात्मद्वितीय उपसम्पत्तव्यो, यदि पुनरेको न द्वावुपगच्छति न उपसम्पद्यते तदा से तस्य प्रायश्चित्तं चत्वारो लघुकाः ।

**[भा. २१९९]** पच्छा इतरे एगं जइ नवि उवगच्छ मासियं लहुयं ।
जत्थवि एगो तिन्नी, न उवगमे तत्थवी लहुगा ।।

वृ- एकस्मिन्नुपसपन्ने पश्चादितरावप्युपसम्पद्येते, यदि पुनरेकं तावितरौ पश्चान्नोप्यच्छेतां तदा तयोर्मासिकं प्रायश्चित्तं लघु यत्राऽपि भङ्गे एकत एको परत्र त्रयस्तत्र यदि परस्परमुक्तप्रकारेण नोपगमस्तदा प्रायश्चित्तं लघुकाः, । किमुक्तं भवति । यद्येकस्त्रीन्नोपगच्छति तदा तस्य प्रायश्चित्तं चत्वारो लघुकास्ते यदुपगच्छन्तं पश्चादितरे त्रयो नोपगच्छन्ति तर्हि तेषां प्रायश्चित्तं लघुको मासः ।

**[भा. २२००]** एमेव अप्पबीतो अप्पतईयं तु जइ न उवगच्छे ।
इयरेसि मासठहुयं एवमगीए य गीए य ।।

वृ- एवमेव अनेनैवानन्तरोदितेन प्रकारेणात्मद्वितीय आत्मतृतीय यदि नोपगच्छति तदा तस्य प्रायश्चित्तं चतुर्लघु । इतरश्चेत्यभ्युपगच्छन्तं नोपगच्छेत्तदा तस्य मासिकं लघु इतरेपामेक आत्म-तृतीयोऽपर आत्मचतुर्थ इत्योस्मादीनां परस्परमनुपगमे प्रायश्चित्तं मासलघु, । एवमुक्तप्रकारेणागीते अगीतार्थानां च द्रष्टव्यं मिश्रानधिकृत्याह--

**[भा. २२०१]** मीसाण एगो गीतो, होंति अगीया उ दोण्हि तिन्नि वि वा ।
एवं उवसंपज्जे ते उ अगीया इहर मासो ।।

वृ- मिश्राणां मध्ये एक एकाकी गीतो गीतार्थोऽपरे तु द्वौ वा भवन्त्यगीता अगीतार्थाः । तत्र तेऽगीता एकमुपसम्पद्येरन् । इतरथा चेन्नोपसम्पद्यन्ते तर्हि तेषां प्रायश्चित्तं लघुको मासः ।

**[भा. २२०२]** सोवि य जइ नवि इयरे तस्स वि मासो उ एव सव्वत्थ ।
उवसंपया उ तेसिं, भणिया अन्नेण निस्साए ।।

वृ- सोऽपि चैको यदि तान् इतरानुपसम्पद्यमानान् नोपसम्पद्यते, तदा तस्यापि प्रयश्चित्तं मासो लघुरेवमेक आत्मद्वितीयो गीतार्थोऽपर आत्मतृतीय आत्मचतुर्थः इत्यादौ सर्वत्र भावनीयमे-वमन्योन्यनिश्रया प्राग् द्वारगाथायां तेषामुपसम्पत् भणिता उद्दिष्टा ।।

**[भा. २२०३]** अन्नोन्ननिस्सियाणं अगीयाणंपि उग्गहो तेसिं ।
गीयपरिग्गहियाणं इच्छाए तेसिमो होइ ।।

वृ- अन्योन्यनिश्रितानां तेषामगीतानामपि गीतापरिगृहीतानामवग्रहो भवति । अवग्रहो नाम आभवनव्यवहारः । स च द्विधा- इच्छया सूत्रोक्तश्च । तत्रेच्छया तेषामयं वक्ष्यमाणो भवति । तमेवाह-

**[भा. २२०४]** इच्छिय पडिच्छियाएण । खेत्ते वसहीए दोण्हवी लाभो ।
अत्थंते न होइ उग्गहो, निक्कारण कारणे दोण्हं ।।

वृ- इच्छाया अवग्रहो नाम इच्छित प्रतीच्छितेन इच्छा संजाताऽस्योति इच्छितं, प्रतीच्छा सञ्जातास्येति प्रतीच्छितं, । इच्छितं च तत् प्रतीच्छितं च इच्छितप्रतीच्छितं वाचा आभवन-व्यवहारस्थापना यथा यत्पथि तन्यतेतदस्माकं यत्ग्रामे तत् युष्माकं यदि वा यत्सचित्तं तदस्माकं, यदचित्तं

तत् युष्माकमथवा या स्त्री व्रतग्रहणार्थमुपतिष्ठति । सा युष्माकं पुरुषो अस्माकं, । यद्वा बालो युष्माकं वृद्धोऽस्माकमथ वाय: सार्थेन सह व्रजतां लाभ:, सोऽस्माकमसार्थे युष्माकं, यदि वा यो यल्लभते तत्तस्यैव एवंभूतेनेच्छितप्रतीच्छितेन य आभवनव्यवहार: स इच्छयाऽवग्रह एष च प्राय: पथि गच्छतां भवति, । स्थानप्राप्तानां तु सूत्रोक्त आभवनव्यवहारस्ततस्तमुपदर्शयति-समकालं क्षेत्रे प्राप्तानामक्षेत्रे वा वसतिं प्राप्तानां द्वयानामपि लाभ: साधारण: । अथ न क्षेत्रमक्षेत्रे वा वसतिं समकालं प्राप्ता: किन्तु विषमकालं तत आह-अच्छंते न होति इत्यादि यदि निष्कारणं स्थिता इति पश्चात् प्राप्तास्तदा नास्ति तेषामवग्रह:, किन्तु पूर्वप्राप्तानामेव । अथ कारणेन केनापि ग्लानप्रतिजागरणादिना स्थितास्तत: पश्चात्प्राप्तास्तर्हि भवति द्वयेषामपि साधारणोऽवग्रह: । एतदेव स्पष्टमुपदर्शयति-

[भा.२२०५] समयपत्ताणं तु साहारणं तु दोण्हपि होति तं खेत्तं ।
विसमं पत्ताणं पुन, इमा उ तहिं मग्गणा होइ ।।

वृ- समकमेककालं प्राप्तानां द्वयानामपि तत्क्षेत्रं भवति साधारणं विषमं विषमकालं प्राप्तानां पुनरियं तत्रक्षेत्रे मार्गणा भवति । तामेव कुर्वन्नाह-

[भा.२२०६] पडियरए च गिलाणं सयं गिलाणाउरे व मंदगती ।
अपत्तस्स वि एएहि, उग्गहो दप्पतो नत्थि ।।

वृ- प्रतिचरति वा प्रतिजागर्ति ग्लानं वा यदि वा स्वयं ग्लान आतुरो वा यदि वा स्वभावान्मन्दगतिरेतै: कारणैरप्राप्तस्यापि समकालं पश्चात्प्राप्तस्यावग्रहो भवति । दर्पतो निष्कारणं स्थितानां पुनरवग्रहो नास्ति ।

[भा.२२०७] एमेव गणावच्छे पलिछन्नाणं विसेसगाणं तु ।
पलिच्छन्ने ववहारो, दुविहो वायंतिउ नाम ।।

वृ- यथा भिक्षोरेकस्य बहूनां परिच्छन्नानां शेषकाणां चोक्तमेव अनेनैव प्रकारेण एकस्मिन् गणावच्छेदे बहूनां परिच्छन्नानां जधन्यतोऽप्यात्मतृतीयानां शेषाणां च कारणवशात परिच्छन्नानामुपलक्षणमेतत् । परस्परमुपसम्पन्नानां चाभवनव्यवहारो द्विधा भवति, सूत्रोक्तो वागन्तिकश्च वाचा अन्तपरिच्छेदो वागन्तस्तेन निवृत्तो वागन्तिकस्तत्र वागन्तिको नाम वक्ष्यमाणस्तमेवाह-

[भा.२२०८] पहगामे चित्तऽचित्तं, थीपुरिसं बालवुड्ढसत्थादी ।
इच्छाए वा देंती जो जं लाभे भवे वितितो ।।

वृ- यत्पथि मार्गे लभ्यं तदस्माकं । यत् ग्रामे तत् युष्माकं, । यदि वा यत्सचित्तं तत् युष्माकमचितमस्माकमथवा स्त्री युष्मामाकं पुरुषोऽस्माकम् । अथवा बालोऽस्माकं वृद्धो युष्माकं, । यदि वा सत्थादी इति सार्थे लभ्यं तत् युष्माकमसार्थे अस्माकमथवा इच्छया ददाति । कथमित्याह-यो यल्लभते तत्तस्य भवति एष सूत्रोक्तादाभवनव्यवहारात् द्वितीयो वागन्तिक आभवनव्यवहार: क्षेत्रेप्राप्तानामक्षेत्रे वा वसतिं प्राप्तानां य: सूत्रोक्तआभवनव्यवहार: स भिक्षूणामिव प्रतिपत्तव्य: ।

[भा.२२०९] समगीता गीतावा गीतत्थपरिग्गहाण सति कज्जे ।
असमत्ताण वि खेत्तं, अपहुपच्छा समत्तोवि ।।

वृ- स चाविशेषेणार्यो यदि वा द्वावप्यगीतार्थौ अथवा गीतार्थपरिगृहीता गीतार्थनिश्रां प्रतिपन्ना: समकमेककालं प्राप्तास्तेषां साधारणं क्षेत्रमाभवति, सति विद्यमाने कार्ये ग्लानप्रतिजागरणादिलक्षणे ये स्थिता अगीतार्था असमाप्ताश्च प्राप्तानां साधारणं क्षेत्रं, ये पुनरगीतार्था अपि असमाप्ता अपि

पूर्वप्राप्तगीतार्थसमाप्तश्च निष्कारणं प्राक् स्थित्वा प्राप्ता स्तदा असमाप्तानामल्पगीतार्थानामपि च तत् क्षेत्रं पूर्व प्राप्तत्वान्नगीतार्थः समाप्तो पि च तस्य क्षेत्रस्य प्रभु र्निष्कारणं स्थित्वा पश्चात्प्राप्तत्वात् ।

[भा.२२१०] समपत्तकारणेणं खेत्ते वसहीए दोन्न वी लाभो ।
रायनिए होत्ति उग्गहो गीयत्थसमंमि दोण्हंपि ।।

वृ- समं समकमेककालं कारणेन पश्चाद्वा क्षेत्रेऽक्षेत्रे वा वसतौ वा प्राप्तयोर्द्वयोरपि लाभः साधारणः, । अत्र पुनर्यदि विशेषविवक्षा क्रियते, तदा यो रत्नाधिकस्तस्मिन्नवग्रहो भवति । यद्यपि नाम द्वयोरपि साधारणो लाभस्तथापि यथा संघाटकेन भिक्षां हिण्डबानयोरत्नाधिकस्य लाभो गण्यते, । एवमिहापि रत्नाधिकस्यावगृहः । अथैको गीतार्थः अपरोऽगीतार्थस्तत्र यदि रत्नाधिकोऽगीतार्थोऽवमरत्नाधिको गीतार्थस्ततोऽवमरत्नाधिकस्यावग्रहः । अथ द्वावपि समं गीतार्थौ तत आह समे गीतार्थे परस्मिन् समकं च प्राप्ते द्वयोरपि साधारणोऽवग्रहः, । तदेवं द्विसंख्याकगणावच्छेदकसूत्रमिति भावितमेवं द्विसंख्याकाचार्योपाध्यायसूत्रमपि भावनीयमिदानीं बहुत्वसूत्राणि पिण्डसूत्रं चातिदिसत आह-

[भा.२२११] एमेव बहूणंपी पिंडे नरोवग्गहस्स उ विभागो ।
किं कतिविहो कस्स कंमि व केवइयं वा भवे कालं ।।

वृ- एवमेव बहूनामपि भिक्षुप्रभृतीनां सूत्राणि भावनीयानि, । द्विकसूत्रापेक्षया बहुत्वसूत्राणामर्थतो नानात्वाभावात् । पिण्डे पिण्डक सूत्रस्यापि स एवार्थो नवरमत्रावग्रहस्य विभागो वक्तव्यस्तमेवाह- किं कतिविधः तस्य वा कस्मिन् वा कियन्तुं वा कालं भवत्यवग्रहः । तत्र किमित्याद्यद्वारव्याख्यानार्थमाह-

[भा.२२१२] किं उग्गहोत्ति भणिए, उग्गहो उ होत्ति चित्तादी ।
एक्केक्को पंचविहो देविंदानी मुणेयव्वे ।।

वृ- किमवग्रह इति भणिते पृष्टे सूरिराह-त्रिविधो भवत्यवग्रहश्चित्तादिः सचित्तोऽचित्तो मिश्रश्च । पुनरेकैकः कतिविध इति प्रश्नमुप जीव्याह एकैकः पंचविधः पंच देवेंद्रादि देवेंद्रावग्रहो राजावग्रहो मांडलिकावग्रहः शय्यातरावग्रहः साधर्मिकावग्रहश्च ।। गतं कतिविधद्वारमिदानीं कस्य न भवतीति-

[भा.२२१३] कस्स पुन उग्गहोत्ती परपासंडीण उग्गहो नत्थि ।
तिण्ही सन्ने संजति अगीते गीतएक्के वा ।।

वृ- कस्य पुनरवग्रहो भवतीति शिष्यप्रश्नमाशंक्योच्यते, परपाषण्डिनामवग्रहो नास्ति, । ये च निण्हवा ये ऽवसन्ना याश्च संयत्यो गीतार्थैरपरिगृहीता येचागीतार्था गीतार्थनिश्रामनुपपन्नाश्च निष्कारणमेवैकाकी गीतार्थ एतेषां सर्वेषामप्यवग्रहो नास्ति, एतदेव सुव्यक्तमाह-

[भा.२२१४] उसन्नाण बहूण व गीतमगीताण उग्गहो नत्थि ।
सच्छंदियगीयाणं असमत्त अनीसगीए वि ।।

वृ- अवसन्नानां बहूनामपि गीतार्थानां चावग्रहो नास्ति । सच्छंदियगीयाणयत्ति ये गीतार्था अपि स्वच्छन्दिकाः स्वच्छन्दतयैव एकाकिनो विहरन्ति, तेषामपि नास्त्यवग्रह, । तथा ये असमाप्ता असमाप्तकल्पाः यस्य च समुदायस्य न विद्यते गीतो गीतार्थ ईश स्तेषामपि नास्त्यवग्रहः ।।

[भा.२२१५] एवं ता सावेक्खे निरवेक्खाणंपि उग्गहो नत्थि ।
मुत्तूण अहालंदे तत्थ वि जे गच्छपडिबद्धा ।।

वृ- एवं तावत्सापेक्षे जातावेकवचनं । सापेक्षिणामुक्तं सापेक्षानामस्थविरकल्पिकाः निरपेक्षा

जिनकल्पिकादयस्तेषामप्यवग्रहो नास्ति । किमविशेषेण सर्वेषां, नेत्याह-मुक्त्वा यथालब्धान् । तत्रापि गच्छप्रतिबद्धान् तेषामवगृहो भवति गच्छप्रतिबद्धत्वात्, अन्येषां तु सर्वेषामपि नास्ति ।।

**[भा.२२१६]** आसन्नतरा जे तत्थ, संजया सो व जत्थ निच्छरइ ।
तहियं देंतुवदेसं, आयपरं ते न इच्छंति ।।

**वृ-** तेषां गच्छनिर्गतानां जिनकल्पिकादीनां यो व्रतग्रहणार्थमुपतिष्ठति तं ते न प्रव्राजयन्ति । तथा कल्पत्वात् । किन्तु ये तत्रासन्नतराः संयताः स्थितास्तत्रोपदेशं ददति । यथा अमुकानां समीपे गत्वा प्रव्रजेति । अथवा जानन्ति श्रुतबलतो ये दूरे स्थितास्तत्र स एव निस्तरिष्यति । तदेतत् ज्ञात्वा यत्र स निस्तरति तत्रोपदेशं प्रयच्छन्ति परमार्थतः पुनस्ते आत्मपरमात्मगच्छपरगच्छविभागं नेचछंति, स्थविरकल्पादुत्तीर्णत्वात्, ।।

**[भा.२२१७]** अगीय समण संजइ गीयत्थ परिग्गहाण खेत्तं तु ।
अपरिग्गहाण गुरुगा [illegible] आयरिओ ।।

**वृ-** अगीतानामगीतार्थानां श्रमणानां च गीतार्थपरिग्रहाणां गीतार्थपरिगृहीतानां क्षेत्रमवग्रहो भवति, । इयमत्र भावना-येऽगीतार्था अपि साधवो गीतार्थपरिगृहीता विहरन्ति या अपि संयत्यो गीतार्थ-परिगृहाणां गीतार्थपरिग्रहरहितानां विहरतां प्रायश्चित्तं चत्वारो गुरुका इत्येषां च संयतानां संयतीनां च गीतार्थाऽपरिगृहीतानां यः परिव्राजक आचार्यः सोऽत्र शिष्यान् स्वदीक्षितान् न लभते, परिगृहीतत्वेनैव तेषां दीक्षणात् ।

**[भा.२२१८]** गीयत्थागते गुरुणा असती एगानिएवि गीयत्थे ।
समोसरणे नत्थि उग्गहो, वसहीए उ मग्गण अक्खेत्ते ।।

**वृ-** ये ते स्वयमगीतार्था गीतार्थाः परिग्रहरहिता वर्तन्ते यद्यन्यस्मिन् गीतार्थे आगते तस्योपसम्पदं न प्रतिपद्यन्ते, तदा तेषां प्रायश्चित्तं चत्वारो गुरुकाः, । अथान्यो गीतार्थ उपसम्पदार्हो नायातः कारणवशतः कथमप्येकाकी जातस्तस्य गीतार्थस्याशठस्य परिवाररहिततत्वेनैका किनोऽपि क्षेत्रमाभवति । गतं कस्येति द्वारमिदानीं कस्मिन्वेति द्वारमधिकृत्याह-यत्र यावन्ति दिनानि सङ्घस्य समवसरणं तत्र तावन्ति दिनान्यवग्रहो न भवति, । एवं जिनस्नानादिषु मिलितानां यावन्महिमा तावदवग्रहाभावः एतत्सर्वं समवसरणेनास्त्यवग्रह इत्यनेन सूचितमेवमक्षेत्रेवग्रहाभावः अक्षेत्रेऽपि वसतौ मार्गणाऽवग्रहस्य भवति । सा चैवमक्षेत्रे वसतिषु समकं स्थितानां साधारणं क्षेत्रं पश्चादागतानां तु न भवति-

**[भा.२२१९]** सेसं सकोसजोयण पुव्वग्गहियं तु जेण तस्सेव ।
समगोग्गह साहारं पच्छागतो होइ अक्खेत्ती ।।

**वृ-** शेषं क्षेत्रमवग्रहो भवति, तच्च प्रमाणतः सकोशयोजनं पञ्चगव्यूतानीत्यर्थः । तत्रापि येन पूर्वमवगृहीतं तस्यैव तत्क्षेत्रमावहति, न शेषस्य । अथ समकमेव तस्यावग्रहः कृतस्तत आह-साधारणं तदा तेषां क्षेत्रं यस्तु पश्चादागतः स भवत्यक्षेत्रो न तस्याभवति क्षेत्रमिति भावः ।

**[भा.२२२०]** अब्भागते कहंतो, उवसंपग्गो तहिं च ते सव्वे ।
संकंतो उवकहेंते, साहारणं तस्स जो भागो ।।

**वृ-** अन्यः कोऽप्याचार्यः कथयन् बहुश्रुतः पश्चादागत ते च पूर्वस्थिताः सर्वेऽपि तस्मिन्नागते कथयत्युपसम्पन्नाः तदा तस्मिन् कथयति सोऽवग्रहः संक्रान्तस्तस्याभाव्यं तत् क्षेत्रं जातमिति भावः ।

अथ समकप्राप्ततया साधारणे क्षेत्रे स्थितानां मध्ये एकः कश्चनापि तं पश्चादागतमन्यमाचार्यं बहुश्रुतमुपसम्पन्नस्तदा य स्तस्य भागः स तत्र कथयति सङ्क्रान्तः ।

**[भा. २२२१]** निक्खित्तगणाणं वा तेसिं वि य होइ तंतु खेत्तं तु ।
खेत्त भया वा कोई, माइठाणेण सुण एवं ॥

**वृ-** यदि क्षेत्रवतां शिष्य आगन्तुकमाचार्यमुपसम्पन्नो यदिवाचार्यः गणं शिष्ये गीतार्थे निक्षिप्य तमुपसम्पन्नास्तदा तेषामेव निक्षिप्तगणानां वाशब्दादुपसम्पन्नस्तदेकशिष्याणां तत् क्षेत्रम् । किमुक्तं भवति ? यत्ततः क्षेत्रात्सचित्तादिकमुत्पद्यते तत्तेषामाभवति प्रवाचयन्नागन्तुको न लभते । कोऽपि पुनर्मा ममागन्तुकस्य पार्श्वे शृण्वतः क्षेत्रं यायादिति क्षेत्रभयादेवं वक्ष्यमाणप्रकारेण मातृस्थानेन शृणोति तमेवं प्रकारमाह-

**[भा. २२२२]** कुड्डेण चिलिमिलीए व अंतरितो सुणइ कोइ मानेन ।
अहवा चंकम्मणीयं करेंतो पुच्छागमो तत्थ ॥

**वृ-** कुड्येन यदि वा चिलिमिलिन्या जवनिकान्तरितः सन् कोऽपि मानेन ममेदं क्षेत्रमाभवति तन्मा हस्तादुत्तरत्विति क्षेत्रगर्वेण शृणोति । अथ वा मानेनैव यथोक्तरुपेण चंक्रमणिकां कुर्वन् कोऽपि शृणोति, । तत्र यद्यपि स न शृणोति तथापि तत्र पृच्छागमो भवति, पृच्छा कर्तव्या भवति, ततः पृच्छा कर्तव्या भवति, ततः पृच्छातोऽपि तस्य तस्य भवति क्षेत्रं, । अथ कतिभिः पृच्छाभिः कियन्तं कालं तस्याभवति क्षेत्रमत आह-

**[भा. २२२३]** पुच्छाहिं तीहिं दिवसं, सत्तहिं पुच्छाहिं मासियं हरेइ ।
अहवा विसेसमन्नो इमो उ तहियं अहिज्जंते ॥

**वृ-** तिसृभिः पृच्छाभिरेकं दिवसं यावत् तत्क्षेत्रं हरति, पृच्छादिवसे यत्तस्मिन् क्षेत्रे सत्तादिकमुत्पद्यते तत् कथयन् लभते नेत्तर इति भावः । सप्तभिः पृच्छाभिः पुनर्मासिकं पृच्छादिवसादारभ्य मासं यावत्सचित्तादिकमपहरति । तदेवं खेत्तभया वा कोइ इत्यादि गाथा पश्चार्धं व्याख्यातमिदिनीं निक्खित्तगणाणं चेत्यादि पूर्वार्धं व्याख्यानयति । अथवाऽयं वक्ष्यमाणोऽन्यविशेषस्तस्मिन्नधीयापनेऽध्यापयतरि तमेवाह-

**[भा. २२२४]** जति निक्खिविऊणं गणं उवसंपाए हवावि सीसं तु ।
ता तेसिं चिय खेत्तं वाएंतो लाभो खेत्तबहिं ॥

**वृ-** यदि गीतार्थे गणं निक्षिप्य तमागन्तुकमुपसम्पद्यते अथवा शिष्यं प्रेषयति तदातेषामेव पूर्वस्थितानां तत्क्षेत्रमाभवति न तु वाचयतो वाचयति लाभस्तस्मात्क्षेत्राद्बहिः ॥

**[भा. २२२५]** अह बेती वायंतो लाभेन नत्थि हं ति वच्चामो ।
इयरे हिं य सो रुद्धो मा वच्चसु अम्ह साहारं ॥

**वृ-** अथ ब्रूते वाचयन् यथा नोऽस्माकमिह नास्ति लाभ इति व्रजाम एवमुक्ते इतरैः पूर्वस्थितैः स रुद्धो यथा मा व्रजत यूयं युष्माकमस्माकं च साधारणं क्षेत्रमिति । अथ साधारणेऽपि क्षेत्रे स्थिता न संस्तरंति तत्र विधिमाह-

**[भा. २२२६]** निग्गमने चउभंगो निड्डिय सुह कक्खयं जति करेंति ।
निड्डिय पट्ठावितो वा रुद्धो पच्छा य वाघातो ॥

वृ- अथ साधारणे क्षेत्रे स्थितास्ते न संस्तरंति तर्हि निर्गन्तव्यम् । तत्र च निर्गमने चतुर्भङ्गी वक्तव्या गाथायां पुंस्त्वनिर्देशः प्राकृतत्वात् । तथा यस्य श्रुतस्कन्धस्य निमित्तमुपसम्पन्नास्तत् निष्ठितं तस्मिन्निष्ठिते समासे भूयः क्षेत्रं साधारणं जातम् । तत्र यदि भूयः सुखदुःखतां कुर्वन्ति सुखदुःखनिमित्तमुपसम्पदं प्रतिपद्यन्ते तथा निष्ठिते श्रुतस्कन्धे यः प्रधावितः पुनरपि प्रतीच्छकैः पश्चात् रुद्धो व्याघातो वाऽशिवादिभिः कारणैरुपजातस्तत्र यदाभाव्यं तद्वक्तव्यमिति द्वारगाथासमासार्थः ।।

[भा.२२१७]　　　वत्थव्वनिंति नउ जे उ पाहुणा न इयरे वा ।
उभयं च नोभयं वा चउभयणा होति एवं तु ।।

वृ- यस्य ग्रामप्रधानस्य नगरप्रधानस्य वा नियोगेन तिष्ठन्ति साधवः स चतुर्धा तद्यथा- आगन्तुकभद्रको नामैको न वास्तव्यभद्रकः वास्तव्यभद्रको नामैको नागन्तुकभद्रः २, आगन्तुकभद्रको वास्तव्यभद्रकश्च ३, नागन्तुकभद्रको नापि वास्तव्यभद्रकः ४ । एतच्चतुर्भङ्गीवशादधिकृतापि चतुर्भङ्गी जाता । तद्यथा- प्रथमभङ्गवशात् वास्तव्या निर्गच्छन्ति न प्राघूर्णका, नियोक्तुरागन्तुभद्रकत्वात्, द्वितीयभङ्गवशात् प्राघूर्णका निर्गच्छिन्ति न इतरे वा द्वितीयभङ्गे नियोक्तुर्वास्तव्यभद्रकत्वा- चतुर्थभङ्गवशात् उभयं प्राघूर्णका वास्तव्याश्च निर्गच्छन्ति, । उभयानपि प्रतिनियोक्तुरभद्रत्वा- तृतीयभङ्गवशान्नोभयं वास्तव्या प्राघूर्णकाश्च निर्गच्छन्ति । उभयानपि प्रति तस्य भद्रकत्वात् । एवममुना प्रकारेण चतुर्भजना चतुर्भङ्गी भवति । तत्र प्रथमं भङ्गमधिकृत्य विशेषमाह-

[भा.२२१८]　　　आगंतु भद्दगंमी पुव्वट्ठिया गंतु जइ पुणो एज्जा ।
तंमि अपुन्ने मासे, संकमति पुणोवि सिं खेत्तं ।।

वृ- आगन्तुकभद्रके नियोक्तरि ये पूर्वस्थितास्ते वक्ष्यमाणचतुर्भागार्धभागगमनयतनया गच्छन्ति, तथाप्यसंस्तरणे सर्वात्मना गच्छन्ति । ते गत्वा यद्यपूर्ण एव मास तस्मिन् क्षेत्रे पुनरागच्छेयुस्तदा । सिं तेषां प्रत्यागतानां क्षेत्रं संक्रामति । तेषां तदाभाव्यं भवतीति भावः । कारणतो गत्वा पुनरपूर्ण एव मासे प्रत्यागमनात् । अथ साधारणमुभयेषां तत्क्षेत्रमासीत् । मा वच्चमु अम्ह साहारणमिति व्यवस्थाकरणात् तदा तेषां पुनः प्रत्यागतानां साधारणेन क्षेत्रं संक्रामति । द्वितीयं भङ्गमधिकृत्याह-

[भा.२२१९]　　　वत्थव्वभद्दगंमी संघाडगजयण तहवि उ अलंभो ।
आगंतु नेति तउ अत्थति यो पवायगो नवरं ।।

वृ- वास्तव्यभद्रके योक्तरि तेषामागन्तुकानामसंस्तरतामियं यतना वास्तव्या आगन्तुकैः सममेकैकेन सङ्घाटेन भिक्षां हिण्डन्ते, । अथ तथाप्यलाभस्तर्हि निर्गच्छति, तत्रेयं भङ्गचतुष्टयेन यतना- आगन्तुकानां चतुर्भागो निर्गच्छति, न वास्तव्यानां १, वास्तव्यानां चतुर्भागो निर्गच्छति नागन्तुकानां २, वास्तव्यानामपि चतुर्भागा आगन्तुकानां च चतुर्भागः ३, उभयेषामपि चतुर्भागागमने चतुर्थः ४ । स चात्र शून्यो गमनमन्तरेणासंस्तरणात् । एवमप्यसंस्तरणेऽर्द्धार्द्धगमनेन यतना प्रथमभङ्गेऽपि द्रष्टव्या । स चात्रापि पूर्वप्रकारेण शून्यः । अथैवमपि न संस्तरति तत आगन्तुकाः सर्वे निर्गच्छन्ति । नवरमेकः प्रवाचकस्तिष्ठति येन वास्तव्यान् प्रवाचयति । अथ सोऽप्यसंस्तरणे स्वशिष्यैः सह गतस्ते च वास्तव्यास्तमुपसम्पन्ना यदि मावच्चह साहारणमिति व्यवस्थाकारणत उभयेषां साधारणं तत् क्षेत्रं ततो यदि गत्वा पुनरपि अपूर्ण एव मासे तत्र क्षेत्रे प्रत्यागच्छन्ति । तदा कृतायामुपसम्पदि तेषामेव प्रत्यागतानां क्षेत्रमाभाव्यतया संक्रामति । यदि वा साधारणेन । साम्प्रतमनयोरेव भंग्योरुभयव्यवहारशेष उच्यते ।

अत्र पतितं नियट्टि सुहदुक्खयं जति करेंतीति द्वारस्य व्याख्यानमाह-

**[भा.२२३०]** सुहदुक्खित्तो समत्ते वाएंतो निग्गएसु सीसेसु ।
वाइज्जंति वि तहा निग्गयसीसो समत्तंमि ।।

**वृ-** इदमुक्तमागन्तुकाः सर्वेऽपि निर्गच्छन्ति केवलमेव प्रवाचकोऽवतिष्ठते । तत्र यदि निर्गतेषु शिष्येषु वाचयन् प्रवाचकः समाप्ते श्रुते सुखदुःखितः सुखदुःखनिमित्तमुपसम्पदं ग्राहितस्तथा तस्य वाच्यमानस्य भवति तत्क्षेत्रम् । इदं द्वितीयभङ्गमधिकृत्योक्तं प्रथमभङ्गमधिकृत्याह-तथा वाच्यमानोपि निर्गतः शिष्यः समाप्ते श्रुते वक्तव्यं । किमुक्तं भवति ? । यदि वाच्यमानो निर्गतेषु शिष्येषु [illegible]साहाय्याय पश्चात् स्थितः । समाप्ते श्रुतस्कन्धे वाचयता सुखदुःखनिमित्तमात्मोपसम्पदं ग्राहितस्तदा वाचयति आभवति क्षेत्रम् ।।

**[भा.२२३१]** दोण्हवि विनिग्गएसुं वाएंतो तत्थ खेत्तितो होति ।
तंमि सुए असमत्ते समत्ते तस्सेव संकमति ।।

**वृ-** द्वयोरपि शिष्येषु विनिर्गतेषु तावेव द्वौ केवलौ तिष्ठतस्तत्र यावदद्यापि तत् श्रुतं न समाप्यते तावत्तस्मिन् श्रुतं असमाप्ते तत्र तयोर्द्वयोर्मध्ये वाचयन् क्षेत्रिको भवति । समाप्तं पुनः श्रुतस्यैव पूर्वस्थितस्य तत्क्षेत्रं संक्रामति । अथ द्वावपि परस्परं सुखदुःखोपसम्पदं प्रतिपन्नौ तदा साधारणं क्षेत्रमिति यो यल्लभ्यते तस्य तद्वा भवतीति ।

**[भा.२२३२]** संथरे दोवि न नेंती तेहि उववाइया उ जइ सीसा ।
लाभो नत्थि महंति य अहव मत्ते पधाविज्ञा ।।

**वृ-** संस्तरे संस्तरणा द्वयेऽपि पूर्वस्थिता आगन्तुकाश्च न निर्गच्छन्ति, तैश्च पूर्वस्थिते यदि बहवः शिष्या उपपादिता उत्पादितास्तदा स आगन्तुको नास्ति मम लाभ इति विचिन्त्य प्रधावेत् गच्छेत् । अथ ते निक्षिप्तगणास्तस्य समीपे वाचयन्ति तेषां शिष्या वा तत आह-अथवा समाप्ते श्रुते प्रधावेत् ।। सम्प्रति निङ्घयपहाविओ वा रुद्धो पच्छाय वाघातो इत्येतद्व्याख्यानयति-

**[भा.२२३३]** जइ वायगो समत्तो मंतिउ पडिच्छिएहिं रुंभेज्ञ ।
असिवादिकारणे वा न नेंते लाभो इमो होइ ।।

**वृ-** यदि समाप्ते श्रुते तत्क्षेत्रात् वाचको निर्गच्छन् प्रतीच्छिकैरुच्यते यथा मा निर्गच्छत यूयं, वयमद्यापि वाचयिष्याम इति यदि वा निर्गतो बहिरशिवादीनि कारणान्युपस्थितानि ततो व्याघात इति कृत्वा न निर्गच्छति, तदा तस्मिन् प्रतीच्छकैरवरोधनात् । पश्चाद्व्याघाताद्वा अनिर्गच्छति तस्यायमाभाव्यो लाभो भवति । तमेवाह-

**[भा.२२३४]** आयसमुत्थं लाभं, सीसपडिच्छएहिं सो लहइ रुद्धो ।
एवं छिन्नुववाए अच्छिन्ने सीसा गते दोण्हं ।।

**वृ-** स प्रातीच्छिकैर्गच्छन्नपरुद्धः सन् यत्स्वयं लभते, यच्च तस्य शिष्या यच्च तस्य प्रातीच्छिका वा लभन्ते, तत्सर्वमात्मसमुत्थं शिष्यप्रातीच्छकैर्वा समुत्पादितं लभते । एवमाभवनं छिन्ने समाप्ते उपपातहेतौ श्रुतस्कन्धादौ श्रुते द्रष्टव्यं, । अच्छिन्ने असमाप्ते श्रुतस्कन्धादौ यदि तस्य पठत आचार्यस्य शिष्या ग्रामन्तरगताः प्रत्यागताः तस्य च शिष्यो नियमात् गीतार्थो यस्य गण आरोपितस्तदा द्वयोरपि लाभः साधारणो गीतार्थे शिष्ये निक्षिप्तगणतया पठतोऽप्याचार्यस्य पाठयिता गच्छत् तेन प्रतिरुद्ध

इति पाठयितुस्याभवनात् ।।

[भा.२२३५] एवं ता उउबद्धे, वासासु इमो विही हवति तत्थ ।
खेत्त पडिलेहगा उ पयठिया तेन अन्नत्थं ।।

वृ- एवं तावत् ऋतुबद्धे काले-आभवनव्यवहारविधिरुक्तो वर्षासु वर्षाकाले पुनरयं वक्ष्यमाणो विधिर्भवति तमेवाह तत्थेत्यादि ।। द्वयोराचार्ययोः ऋतुबद्धे काले साधारणक्षेत्रस्थितयोरेकोऽपरस्यैकस्य पार्श्वे उपसम्पदं गृहीतवान् । वर्षारात्रश्च प्रत्यासन्नीभूतोऽन्यानि च क्षेत्राणि वर्षावासयोग्यानि तादृशानि प्रत्यासन्नानि न सन्ति, ततः उपसम्पन्न आचार्यस्तत्रैति तस्मिन्नेव आषाढमासिके क्षेत्रे वर्षावासं स्थितस्तेन च वाचनाचार्येणान्यत्र वर्षावासयोग्यस्य क्षेत्रस्य प्रतिलेखकाः प्रवर्तितास्तांश्च प्रवर्तयन्निदमवादीत् ।

[भा.२२३६] जा तुब्भे पेहेहा तावेतेसिं इणं तु सारेमि ।
तं च समत्ते तेसिं वा वासं च पबद्धमालग्गं ।।

वृ- यावत् यूयं क्षेत्रं प्रत्युपेक्ष्य समागच्छथ । तावदेतेषामाचार्याणामिदं श्रुतस्कन्धादिकं सारयामि सूत्रतोऽर्थतश्च गमयामि । तच्च श्रुतस्कन्धादिकं तेषां तथा अधीयानानां समाप्तमेतद्व्यवच्छिन्न-मित्युच्यते, । अत्रान्तरे च वर्षं प्रबद्धं प्रबन्धेन पतितुमालग्नं तेऽपि च क्षेत्रप्रत्युपेक्षकास्तत्रैव वर्षेण निरुद्धाः ।

[भा.२२३७] निग्गंतूण न तीरेइ, चउमासे तत्थ लाभमायगयं ।
लभते वोच्छिन्नेवं कुव्वंति गिलाणगस्स वि य ।।

वृ- यतः प्रबन्धेन वर्षं पतितुमारब्धं, च क्षेत्रप्रत्युपेक्षकाः समागच्छन् ततः समाप्तेऽपि श्रुते स वाचनाचार्यस्ततः क्षेत्रान्निर्गन्तुं न शक्नोति । अनिर्गतश्च तस्मिन् क्षेत्रे चतुरो वर्षारात्रमासान् यावदात्मगतं आत्मसमुत्थं लाभं लभते, । द्वितीयोऽप्यात्मसमुत्थस्य लाभस्य स्वामी एवं कुर्वते व्यवच्छिन्ने समाप्ते श्रुते अथवा गिलानस्स विय इति समाप्ते श्रुते वाचनाचार्यो ग्लानोऽभवत् ततो गन्तुमशक्तस्यापि च ग्लानस्यैवमाभवनव्यवहारो द्रष्टव्यः । उभयोरपि चतुरो वर्षामासानात्मसमुत्थो लाभ इत्यर्थः ।

[भा.२२३८] अह पुन अच्छिन्न सुए, ते आया बेंतिमे य तुब्भे तु ।
अम्हे खेत्तं देमो साहारणं तंमि एसिंतु ।।

वृ- अथ तत् श्रुतस्कन्धादिकमद्यापि न समाप्तं, ते च क्षेत्रप्रत्युपेक्षका, आयातास्ततो वाचनाचार्या आपृच्छन्ति वयं निर्गच्छामः । तत् इमे प्रतीच्छिका आचार्य ब्रुवते, मा यूयं निर्गच्छत, समाप्तेऽपि श्रुते युष्माकं वयं क्षेत्रं दास्यामः । एवमुक्ते तत्क्षेत्रमेतेषां द्वयानामपि साधारणं भवति । एष संस्तरणे विधिरसंस्तरणमधिकृत्याह-

[भा.२२३९] असंथरण निंत अनिंते चउभंगो होइ तत्थवि तहेव ।
एवं ता खेत्तेसुं, इणमन्ना मग्गणविहादी ।।

वृ- असंस्तरणे साधुषु निर्गच्छदनिर्गच्छत्सु चतुर्भङ्गी भवति । सा चैवम्-वास्तव्यानां चतुर्भागादिना प्रकारेण साधवो निर्गच्छन्ति न वाचनाचार्याणामिति प्रथमः, । वाचनाचार्याणां नेतरेषामिति द्वितीयः, । उभयेषामिति तृतीयः, । नोभयेषामिति चतुर्थः, । तत्रापि चतुर्भङ्ग्यामपि तथैवाभवनव्यवहारः । द्वयानामप्यात्मसमुत्थो लाभ इति भावस्तृतीयेभङ्गे यद्येकतर एकतरस्यापार्श्वे साध्वभावत उपसम्पद्यते, तत उपसम्पद्यमान लाभ इतरस्मिन् संक्रामति । अनुपसम्पन्ने च द्वयोरपि साधारणं क्षेत्रं, । एवं तावत्

क्षेत्रे मार्गणा कृता । अयमन्यो मार्गणाविधिरादिशब्दात् दिग्वारणपरिग्रहः । गाथायां च क्लीत्वनिर्देशः प्राकृत्वात्तमेव मार्गणाविध्यादिकमाह-

**[भा.२२४०]** अद्धाणादिसु नट्ठा, अनुवट्ठिया तहा उवट्ठविया ।
अगविट्ठा य गविट्ठा निप्फन्ना धारणदिसासु ।।

**वृ-** अध्वा मार्ग आदिशब्दादशिवावमौदर्यादिनिमित्तनिर्गमनपरिग्रहः तेष्वध्वादिषु नष्टाः साधवः ।ते च द्विधा-उपस्थापिता अनुपस्थापिताश्च एकैके द्विधाचार्यस्य ते तेन गवेषिता अगवेषिताश्च । तत्र ये निष्पन्ना उपस्थापितास्ते निष्पन्ना एव न तेषां दिग्वारणं कर्तव्यमितरेषां यथाऽभवनं धारणं दिक्षु अध्वादिषु नष्टा इत्युक्तं तत्र यैः कारणैस्ते नष्टाः साधवस्तान्यभिधित्सुराह-

**[भा.२२४१]** संभममहंतसत्थे भिक्खायरिया गया व ते नट्ठा ।
सिग्घगती परिरएणव आउर तेनादिएसु च ।।

**वृ-** संभ्रमो वनदवाग्निसंभ्रमादिकः तद्वशाद्गच्छात् स्फिटिता यदि वा महति सार्थे व्रजतां कोऽपि कुत्रापीति गच्छादपगता यदि वा भिक्षाचर्यानिमित्तं सार्थादपसृत्य व्रजिका पल्यादिषु गतास्ततो नष्टा । अथवा सार्थः शीघ्रगतिस्ते च मन्दगतः तत्सार्थात् गच्छात् परिभ्रष्टाः परिरएणवत्ति यदि वा नद्यादिषूत्तरीतव्यासु सार्थ ऋजुमार्गेणोत्तीर्ण इतरे साधवः परिरएण गत्वा स्तोकपानीये समुत्तरन्ति, चिन्तयन्ति च ददं सार्थं झटित्येव मिलिष्यामरो द यथा परिरएण गच्छन्तः सार्थात् स्फिटिता अथवा आतुराः प्रथमद्वितीयपरीषहाभ्यां जितास्ते तथा आतुराः सन्तोऽशुक्नुवन्तः सार्थात्परिभ्रष्टाः स्तेना श्चोरा आदिशब्दात् परचक्रादिपरिग्रहस्तेषु स्तेनादिषु समापत्सु भयेन पलायमाना गच्छादवस्फिटिता एवमध्वादिषु साधवो नष्टा भवन्ति ।अत्र मार्गणविधिं दिग्धारणविधिं चाह-

**[भा.२२४२]** गवेसउ मा व कयव्वया जे सव्वे व तेसिं तु दिसा पुरिल्ला ।
गवेसमाणो लभते नुबद्धे अणाढिया संगहिया उ जेणं ।।

**वृ-** ये कृतव्रता उपस्थापिता इत्यर्थः । तान् प्रव्राजनाचार्यो गवेषयतु वा मा वा, तथापि तेषां सैव दिक् पुरातनीया प्रव्राजनाचार्योऽशठभावेन गवेषयति, । न च लभते । तथापि तान् सुचिरेणापि कालेन लब्धान् स एव प्रव्राजनाचार्यो लभते, । अनाढिया संगहियाउ जेणमिति ये पुनरनादृतानादरपरेण गवेषितास्ते येन संगृहीतास्तस्यैव ते शिष्या इति स तेषामात्मीयां दिशं धारयति । अयमेव वृत्तबद्धोऽर्थोऽन्येनाचार्येण श्लोकेन बद्धस्तमेव श्लोकमाह-

**[भा.२२४३]** गवेसिए पुव्वदिसा अगविट्ठए उ पच्छिमा ।
अनुबद्ध विए एवं अभिधारेंते उ इणमन्ना ।।

**वृ-** अनुपस्थापिते नष्टे शिष्ये शिष्यवर्गे वा प्रव्राजनाचार्येण गेवषिते पूर्वदिक् प्रव्राजनाचार्यदिग् भवति, । अगवेषिते पश्चिमा दिक् । येन संगृहीतास्तस्य दिग् भवतीत्यर्थः । एवमनुपस्थापिते मार्गणा भवति, यः पुनरन्यक्षेत्रे गतानाचार्यानभिधारयन् व्रजति तत्रेयमन्या मार्गणा तामेवाह-

**[भा.२२४४]** अभिधारेंतो वच्चति वत्तअवत्तो व वत्त एगागी ।
जं लभति खेतवज्जं अभिधारिज्जंते तं सव्वं ।।

**वृ-** अन्यक्षेत्रगतानाचार्यान् अभिधारयन्व्रजति व्यक्तोऽव्यक्तो वा गीतार्थोऽगीतार्थो वा इत्यर्थः, ।

तत्र व्यक्त एकाकी व्रजन् यत् लभते तत्सर्वं क्षेत्रवर्जं क्षेत्रमेकाकिनो न भवतीति सप्रतिषेधः कुतः अभिधार्यमाणे यस्य एकाकिनो गन्तव्यं तस्मिन् भवति । तदभिधारणपरिणतेन तेन तस्य लाभात् ।।

[भा.२२४५] अव्वत्ते ससहाये, परखेत्तविवज्जलाभो दोण्हंपि ।
सव्वो सो मग्गिल्ले जाव न निक्खिप्पए तत्थ ।।

वृ- अथाव्यक्तः ससहायस्तमभिधारयन् व्रजति तर्हि तस्मिन् अव्यक्ते सहाये व्रजति यः परक्षेत्र वर्जो यस्मिन् क्षेत्रे ते अभिसन्धार्यमाणा आचार्या वर्तन्ते तत् क्षेत्रवर्जं किल क्षेत्रवर्जं तेषामभिधार्यमाणानामाभाव्यमिति, तत्प्रतिषेधः । यो द्वयोरपि लाभो व्यक्तस्य सहायानां च यो लाभ इत्यर्थः । स सर्वः पूर्वस्याचार्यस्याभवति, स च तावद्यावत्तत्र न निक्षिप्यते ।।

[भा.२२४६] निक्खित्तनियत्ताणं खेत्तं वो लाभो होति वाएंते ।
तस्स वि य जाननीति लाभो सो ऊ य वाएंतो ।।

वृ- तमव्यक्तं तत्र निक्षिप्तं कृत्वा निवृत्ताः सहायास्तेषां क्षेत्रस्य पञ्चगव्यूतप्रमाणस्यान्तर्मध्ये यो लाभो भवति, स वाचयत्याभवति, तत्क्षेत्रे तस्य लाभस्य भावात् तस्यापि च निक्षिप्तस्य यावन्न निर्गच्छति तावद्यः कश्चनापि लाभः सोऽपि प्रवाचयति भवति, । सम्प्रति यस्तत्र क्षेत्रे स्थितः सन् गणं निक्षिप्योपसम्पन्नस्तस्य यत्सर्वं न भणितं, तदिदानीं सिंहावलोकनन्यायेनाह-

[भा.२२४७] अहवा आयरिओ वी निक्खित्तगणागतो उ आउत्थं ।
वाएंते देइ लाभं, खेत्तीतो न उ न ईसो ।।

वृ- अथवेति प्रकारान्तरे । तच्च प्रकारान्तरमिदं-पूर्वं शिष्यस्य वक्तव्यस्याव्यक्तस्य चोक्तमिदानीमाचार्यस्यैतत् क्षेत्रगतस्योच्यते, । आचार्योऽपि क्वचित् गीतार्थे शिष्ये निक्षिप्तगणो भूत्वा तत्रागतस्तत्रोपसम्पन्नः सन् यत्स्वयं लभते तमात्मोत्थं लाभं वाचयति तथा अथ तेन गणः स्वशिष्ये निक्षिप्तस्तस्य ततः स क्षेत्रस्याप्रभुरेवेति कुतस्तस्यात्मसमुत्थो लाभस्तत आह-यत् यस्मात् स क्षैत्रिकः क्षेत्रस्य प्रभुरासीत्तस्मान्न शक्यते वक्तुं तस्मिन् क्षेत्रे आत्मसमुत्थस्य लाभस्य न ईशः प्रभुरिति तदेवमुक्तो विधिः संयतानाम् ।। अधुना संयतीनां विधिमतिदेशत आह-

[भा.२२४८] आरब्भसुत्ता सरमाणगा तो जा पिंडसुत्तं इणमंतिमं तू ।
एमेव वच्चो खलु संजतीणं वोच्छिन्नमिसेसु अयं विसेसो ।।

वृ- सरमाणकान् आयरिय उवज्झाए सरमाणे इत्येवंरूपात्सूत्रादारभ्य यावदिह अन्तिमं पिण्डसूत्रं तेषु सूत्रेषु यथा संयतानां विधिरुक्त एवमेव खलु संयतीनामपि गीतार्थपरिगृहीतानां वाच्यः । केवलं व्यवच्छिन्ने मिश्रे वाच्यं वक्ष्यमाणो विधिविशेषस्तमेवाह-

[भा.२२४९] वोच्छिन्ने उ उवरए गुरुम्मि गीयाण उग्गहो तासिं ।
दोण्ह बहूणं च पिंडए कुलिव्व मन्ने जयभिधारे ।।

वृ- व्यवच्छिन्नो नाम तासां गुरुरुपरतः कालगत इत्यर्थस्तस्मिन् गुरावुपरते यदि कुलिव्व मन्नंति कुलसक्तमन्यमाचार्यमभि धारयन्ति ततस्तासां द्वयोर्बहूनां वा पिण्डके समुदायेन स्थितानां गीतार्थानां सतीनां पिण्डकेन व्यवस्थितानामपि नावग्रहः । संयतीनां स्वतन्त्रानामवग्रहा भावात् ।।

[भा.२२५०] मीसो उभयगणावच्छेउ तत्थ समणीण जो लाभो ।
सो खलु गणिणो नियमा पुव्वठिया जाव तत्थन्ना ।।

**वृ-** मिश्रोनाम उभयगणावच्छेदकस्तत्र उभयगणावच्छेदके सति यः श्रमणीनां संयतीनां लाभः स खलु नियमात् ये पूर्वस्थितास्तत्र गणिनो यावदन्ये न गच्छन्ति तावत्तस्य गणिनो वेदितव्यः । सोऽन्येष्वाचार्येष्वागतेषु तेषामिति । तदेवं गतं कस्येति द्वारम् ।। सम्प्रति कियन्तं कालमवग्रह इति व्याख्यानार्थमाह-

**[भा.२२५१]** केयति काल उग्गहो तिविहो उउबद्धे १ वास २ वुड्ढे ३ य ।
मास चउमासं वासे गेलन्ने सोलमुक्कोसा ।।

**वृ-** कियन्तं कालमवग्रह इति शिष्येण प्रश्ने कृते सूरिराह-त्रिविधो भवति अवग्रहस्तद्यथा-ऋतुबद्धे वर्षे वर्षाकाले वृद्धवासे च । तत्र ऋतुबद्धे को उत्सर्गत एकं मासमवग्रहो वर्षे वर्षाकाले चतुरो मासान्, ग्लानत्वमधिकृत्योत्कर्षतः षोडश मासान् । अन्ये तु षोडश वर्षाणीत्याहुः ।।

**[भा.२२५२]** वुड्ढेस्स उ जो वासो वुड्ढिं व गतो उ कारणेणं तु ।
एसो उ वुड्ढवासो तस्स उ कालो इमो होइ ।।

**वृ-** वृद्धस्य जरसा परिणतस्य परिक्षीणजङ्घाबलस्य यस्तत्र वासो वृद्धवासः, अथवा वृद्धः कारणवशेन रोगेण वृद्धिं गतो वासो वृद्धवासः एष खलु वृद्धवासो वृद्धवासशब्दार्थस्तस्य तु वृद्धवासस्य कालोऽयं वक्ष्यमाणो जघन्यादिभिन्नो भवति तमेवाह-

**[भा.२२५३]** अंतो मुहुत्तकालं जहन्नमुक्कोस पुव्वकोडीओ ।
मोत्तुं गिहि परियागं जं जस्स व आउयं तित्थे ।।

**वृ-** वृद्धवासो जघन्येनान्तर्मुहूर्तं कालं कथमिति चेदुच्यते-वृद्धवासबुद्ध्या स्थितस्यान्तर्मुहूर्तानन्तरं मरणभावादुत्कर्षतः पूर्वकोटीगृहिपर्यायं नववर्षलक्षणं मुक्त्वा नववर्षोना पूर्वकोटी इत्यर्थः, । कथमेतावान् कालो वृद्धवासस्य लभ्यते इति चेत् ? कोऽपि नववर्षप्रमाण एवं श्रमणो जातः । स च श्रामण्यपरिग्रहात्तदनन्तरमेव प्रतिकूलकर्मोदयवशतः क्षीणजङ्घाबलस्तथा रोगेण वा विहर्तुमसमर्थो जातस्तत एकत्र वासो यथोक्तकालमानो भवति । इदं चोत्कर्षतो वृद्धवासकालपरिमाणं भगवत ऋषभस्वामिनस्तीर्थे शेषतीर्थकरतीर्थान्यधिकृत्याह-यस्य वा तीर्थकरस्य तीर्थे यत् उत्कृष्टमायुः प्रमाणं वर्षनवकहीनं तस्य तीर्थे तावान् उत्कृष्टो वृद्धवासकालः । तत्र योऽसौ जरापरिणामेन वृद्धवासीभूतः स एतादृशः ।।

**[भा.२२५४]** कयाविज्जा चरियं लाघवेणं ततो तवो देसितो सिद्धिमग्गो ।
अहाविहि संजम पालइत्ता, दीहाऊणो वुड्ढ वासस्स काले ।।

**वृ-** विद्यानाम सूत्रार्थतदुभयग्रहणं तत्कृत, तद्यथा-द्वादशवर्षाणि सूत्रग्रहणं कृतं । द्वादशवर्षाण्यर्थग्रहणं । तदनन्तरं चरितं देशदर्शनाय द्वादशवर्षाणि भ्रमणं कृतं, । तथा सदैव लाघवेन उपकरणलाघवादिना चरितं यथार्तं चतुर्थषष्ठादिरूपं नाना प्रकारं तपः तथा अनिगूहितबलवीर्येण देशदर्शनान्तरं द्वादशावर्षाण्यव्यवच्छित्तिं कुर्वता ज्ञानादिकः सिद्धिमार्गो दर्शितः सदैव च यथाविधिः श्रुतोपदेशेन सप्तदशविधः संयमः परिपालितः । तं सकलकालं संयमं यथाविधि पालयित्वा द्वादशवर्षाण्यव्यवच्छित्तिं कुर्वता यदि शिष्यो निष्पादितस्ततस्तं गणे स्थापयित्वा स्वयमभ्युद्यतविहारेण विहर्तव्यमिति भगवतामर्हतामुपदेशः, । अथ न कोऽपि शिष्यो निष्पन्नस्तर्हि गच्छः परिवर्द्धनीयः । यथा यद्यपि च निष्पन्नः कोऽपि शिष्यस्तथापि कश्चिदसमर्थो भवत्यभ्युद्यतविहारेण विहर्तुं

सोऽपि नाभ्युद्यतविहारं प्रतिपद्यते । तस्य शिष्यनिष्पत्त्यभावे नाभ्युद्यतविहारप्रतिपत्त्यशक्त्या वा गच्छं परिपालयतो दीर्घायुषो वृद्धवासस्य कालः ।। एनामेव गाथां व्याख्यानयति–

[भा.२२५५] सुत्तागमो बारससमा चारियं देसाण दरिसणं तु कया ।
उवकरण देह इंदिय तिविहं पुन लाघवं होइ ।।

वृ- विद्यानाम सूत्रागमः । स च द्वादशवर्षाणि यावत् तदुपलक्षणमेतदर्थागमोऽपि विद्या सोऽपि द्वादशवर्षाणि कृतः । तथा चरितं नाम देशानां दर्शनं तदपि द्वादश वर्षाणि कृतं । लाघवं पुनस्त्रिविधं भवति । तद्यथा-उपकरणलाघवं, देहलाघवं, इन्द्रियलाघवं च । तत्रो पकरणलाघवं नाम यद-तिरिक्तमुपकरणं न गृह्णाति, गृहीतं वारक्तद्विष्टः सन् सूत्रोक्त विधिना परिभुंक्ते, शरीरलाघवं-यन्नातिकृशो नातिस्थूलः शरीरेण, इन्द्रियलाघवं यदिन्द्रियाणि तस्य वशे वर्तन्ते ।।

[भा.२२५६] चउत्थ छट्ठादि तवो कतो उ अव्वोच्छित्ताए होइ सिद्धिपहो ।
सुत्तविहीए संजमो वुड्ढो अह दीहमाउं च ।।

वृ- तपश्चतुर्थषष्ठादिकं कृतं । तथा अव्यवच्छित्तौ क्रियमाणायां सिद्धिपथो मोक्षमार्गो दंशितो भवति । तथा सूत्रविधिना संयमः परिपालितः स च जातो वृद्धोऽथ दीर्घमायु. ।।

[भा.२२५७] अब्भुज्जयमवएंतो अगीत सिस्सो व गच्छपडिबद्धो ।
अच्छति जुन्नमहल्लो कारणतो वा अजुन्नो वी ।।

वृ- अभ्युद्यतविहारमशक्नुवन् अगीताः शिष्याः अद्यापि यस्यासौ वा गच्छप्रतिबद्धो गच्छपरिपालनमप्रवृत्तः सन् जीर्णो महान् वृद्धवासे तिष्ठति । अजीर्णोऽपि वा तरुणोऽपि वा कारणतः क्षीणजङ्घाबलतया रोगादिना वा वृद्धवासमुपसेवते, ।। तदेव कारणजातं गाथाद्वयेनाह–

[भा.२२५८] जंघाबले च खीणे गेलन्ने सहाय ताव दुब्बल्ले ।
अहवावि उत्तमट्ठे निप्पत्ती चेव तरुणाणं ।।

[भा.२२५९] खेत्ताणं व अलंभे कय संलेहे य तरुणपडिकम्मे ।
एएहिं कारणेहिं, वुड्ढावासं वियाणाहि ।।

वृ- जङ्घाबलं वा क्षीणं ग्लानत्वं वा तस्यान्यस्य वा जायं, असहायता वा समुत्पन्ना, दौर्बल्यं वा शरीरस्योपजातं । अथवा उत्तमार्थप्रतिपन्नोऽथवा तरुणानामात्मपरलक्षणानां निष्पत्तिः सूत्रतोऽर्थतश्च कर्तव्या, क्षेत्राणां वा संयमस्फीतिहेतूनामलाभः कृतः संलेखो वा प्रतिपन्नसंलेखनाको वर्तते । यदि वा तरुणस्य वा रोगविमुक्तस्य सतः प्रतिकर्मबलविवृद्धिकरणं समारब्धं ततो वृद्धवासस्तथा चाह-एतैः कारणै र्वृद्धावासं विजानीहि, । तत्र प्रथमे द्वारे जङ्घाबलं परिक्षीणमित्येवं रूपं कियत् क्षेत्रं कियता कालेन गन्तुमशक्नुवन् विहरणार्हो भवति, । कियद्वा अशक्नुवन् जङ्घाबलपरिक्षीणइत्येतत्प्रतिपादयति–

[भा.२२६०] दुन्निवि दाऊण दुवे सुत्तं दाऊण अत्थवज्जं च ।
दोन्नी दिवड्डमेगं गाऊयं तीसु अनुकंपा ।।

वृ- द्वे पौरुष्यौ सूत्रपौरुषीमर्थपौरुषीं चेत्यर्थः । दत्वा यावद्भिक्षावेला भवति तावद्यो द्वे गव्यूते व्रजति, एष सपराक्रमो विहर्तुं सुत्तं दाऊण अत्थवज्जं चेति सूत्रं सूत्रपौरुषीं दत्वा अर्थवर्जं अर्थपौरुषीमदत्वा यो भिक्षावेलात अर्वाक् द्वे गव्यूते व्रजति सोऽपि पराक्रमो विहर्तुं चशब्दो-ऽनुक्तसमुच्चयार्थः । स चैतत्सूत्रं पौरुषीमर्थपौरुषीं वा दत्वा भिक्षावेलात आरतो यो द्वे गव्यूते याति

एषोऽपि सपराक्रमो विहर्तुमिति, । एवमेतत्त्रयः प्रकारा गव्यूतद्वयेऽभिहिताः । एत एव त्रयः प्रकारा द्वार्द्धगव्यूते द्रष्टव्याः । एतेषु च त्रिष्वपि द्विकद्वार्धगव्यूतरूपेषु तस्यानुकम्पा विश्रामणादिरूपा वक्ष्यमाणा कर्तव्या ।। सम्प्रति चशब्दसूचितं तृतीयं प्रकारमुपदर्शयति-

[भा.२२६१] खेत्तेण अद्धजोयण कालेणं जाव भिक्खवेलाओ ।
खेत्तेणं कालेण य, जाणसु सपरक्कमं थेरं ।।

वृ- सूत्रपौरुषीमर्थपौरुषीं वा कृता कालतः प्रातर्वेलात आरभ्य यावद्भिक्षावेला भवति, तावत् यः क्षेत्रतोऽर्धयोजनं गव्यूतद्वयप्रमाणं व्रजति, तं जानीत क्षेत्रतः । कालतश्च सपराक्रमं स्थविरं तदेवं गव्यूतद्वयविषये चशब्दः सूचितः तृतीयः प्रकारत्रयदर्शित एवं द्व्यर्द्धगव्यूतेऽपि च द्रष्टव्यस्तथा चैतदर्थाख्यापनार्थमेव गव्यूतविषयं तृतीयं प्रकारमाह-

[भा.२२६२] जो गाउयं समत्थो, सूरादारब्भ भिक्खवेलाओ ।
विहरउ एसो सपरक्कमो उ नो विहरे तेन परं ।।

वृ- यः सूरात्सूरोद्गमादारभ्य यावद्भिक्षावेला भवति तावत् गव्यूतं गन्तुं समर्थ एषोऽपि सपराक्रम इति विहरतु । ततः परं गव्यूतमिति तावता कालेन गन्तुमशक्नुवन् नो विहरेत्, । इदमुक्तं त्रिष्वपि गव्यूतद्वयादिष्वनुकम्पा कर्तव्येति । तत्र तामेवानुकम्पामाह-

[भा.२२६३] वीसामण उवगरणे, भत्ते पाने वलंवणे चेव ।
गाउय दिवड्ढदोसुं अनुकंपे सा तिसुं होइ ।।

वृ- अन्तरान्तरा यत्र विश्रामणार्थं तिष्ठति, तत्र विश्राम्यते उपकरणे उपकरणविषयोऽनुकम्पा कर्तव्या, यत्तस्योपकरणं तदन्ये वहन्ति, । यैश्च तस्य शीतं न भवति तादृशानि वस्त्राणि देयानि, । तथा भक्तं पानं च तत्प्रायोग्यं शुद्धं न लभ्यते । तदा पञ्चकपरिहान्या तदुत्पादनीयं, यत्र च विषमं तत्र बाहुप्रदानादिनाऽवलम्बनं कर्तव्यम् । च शब्दात्स तेन कालेनोच्चालनीयो यस्मिन्नुष्णादिभिर्न परिताप्यते एषानुकम्पा त्रिषु गव्यूतद्व्यर्धगव्यूतद्विगव्यूतेषु भवति ज्ञातव्या । अथवा त्रिष्वनुकम्पेति प्रकारान्तरेण व्याख्यानयति ।।

[भा.२२६४] अहवा आहारुवही सेज्जा अनुकंप एस तिविहा उ ।
पढमालियदानविस्सामणादि उवही य वोढव्वे ।।

वृ- अथवा आहारे उपधौ शय्यायां च । या अनुकम्पा एषा त्रिविधानुकम्पा भवति । तत्राहारे प्रथमालिकादानं, शय्यायां गतस्य विश्रामणादिमार्गे चोपधिर्वोढव्यः । साम्प्रतमपराक्रममाह-

[भा.२२६५] खेत्तेण अद्धगाउय कालेन य जाव भिक्खवेलाओ ।
खेत्तेण य जाणसु, अपरक्कमं थेरं ।।

वृ- यः कालगतः सूरोद्गमादारभ्य यावद्भिक्षावेला तावत् यः क्षेत्रतोऽर्धगव्यूतं याति तं क्षेत्रतः कालतश्च जानीतापराक्रमं स्थविरम् ।।

[भा.२२६६] अन्नो जस्स न जायइ दोसो देहस्स जाव मज्झण्हो सो ।
विहरइ सेसो, पुन अच्छति मा दोण्हवि किलेसो ।।

वृ- प्रातरारभ्य यावन्मध्याह्नस्तावत्तस्य गच्छतो देहस्यान्यो दोषो भ्रम्यादिलक्षणो नोपजायते स विहरति शेषः पुनस्तिष्ठति कस्मादित्याह-मा द्वयानामपि तस्य सहायानां च क्लेशो भूयादिति हेतोरन्यो

दोषो न ज्ञायते इत्युक्तं । तत्रान्यं दोषमाह—

[भा.२२६७] भमो वा पित्तमुच्छा वा उद्धसासो व खुब्भति ।
गति विरए वि संतं मुच्छादिसु न रीयति ।।

वृ- यस्मिन् गति विरतेऽपि सति भ्रम आकस्मिकी भ्रमिः पित्तनिमित्ता मूर्च्छा उर्ध्वश्वासो वा क्षुभ्यति चलति । आदिशब्दात् शिरोव्यथादिपरिग्रहो न रीयते, न गच्छति न विहारक्रमं करोतीति भावः, तस्य चापरक्रमस्य वृद्धावासेन तिष्ठतः सहाया दातव्यास्तेषां परिमाणमाह—

[भा.२२६८] चउभागतिभागद्धे सव्वेसिं गच्छतो परीमाणं ।
संतासंतसतीए वुड्ढावासं वियाणाहि ।।

वृ- गच्छतो गच्छमधिकृत्य साधूनां परिमाणं कृत्वा सर्वेषां चतुर्भागस्त्रिभागोऽर्धं वा साहाय्यास्तस्य वृद्धावासप्रतिपन्नस्य दीयन्ते, । तत्र त्रिभागोऽर्द्धं वा दीयन्ते । संतासंतसतीए सद्भावेनासद्भावेन चेत्यर्थः । तत्र सद्भावे सन्ति साधवो भूयांसः केवलमगीतार्थास्ततस्ते सन्तोऽप्यसन्तः, । असद्भावो न सन्ति बहवः साधवः । एवं वृद्धावासं ससहायं जानीहि । ततो गच्छतः साधूनां परिमाणं ज्ञात्वा परिमाणं ज्ञात्वा सर्वेषां चतुर्भङ्गसहाया दातव्या इत्युक्तं ततो गच्छपरिमाणं जघन्यादिभेदत आह—

[भा.२२६९] अट्ठावीस जहन्नेण उक्कोसेण सयगसो ।
सहाया तस्स जेसिं तु उवट्ठाणा न जायति ।।

वृ- गच्छस्य परिमाणं जघन्यतोऽष्टाविंसतिरुत्कर्षतः शताग्रशः शतादारभ्य यावद्द्वात्रिंशत् सहस्राणि तत्राष्टाविंशतिकस्य गच्छस्य चतुर्भागाः सप्त एतावन्तः सहायास्तस्य दातव्याः यैरुपस्थापना उप सामीप्येन सर्वदावस्थानलक्षणेन तिष्ठन्त्यस्यामिति उपस्थापना शय्या अजादिपाठात् प्रत्ययः नित्यवसतिर्न जायते । इयमत्र भावना । प्रतिमासमन्यान्या वसतिर्न लभ्यते स चालाभो द्विधा-सदलाभोऽसदलाभश्च । तत्र सदलाभो नाम लभ्यन्ते वसतयः किन्त्वकल्पिका, असदलाभो मूलत एव न लभ्यन्ते वसतयः, । एवं सदलाभेनासदलाभेन वा प्रतिमासमन्यान्यवसत्यलाभे एकस्यामेव वसतौ जङ्घाबलपरिक्षीणो वसति । तस्य च सहाया अष्टाविंशतिकस्य गच्छस्य चतुर्भागमात्राः सप्त प्रदत्तास्ते ऋतुबद्धे काले एकं मासं स्थित्वा गच्छं व्रजन्ति, । अन्य सप्त सहाया स्थविरस्यागच्छति, तेऽपि द्वितीये मासे परिपूर्णे गतास्ततोऽन्ये सप्तागच्छन्ति तेऽपि तृतीयमासे पूर्णेगतास्ततोऽन्ये सप्त सहाया आयान्ति तेऽपि चतुर्थमासं स्थित्वा गच्छं व्रजन्ति, ये प्रथमे मासे सप्तागच्छन्ते भूयः समागच्छन्ति, एवं त्रिमासांतरितः सर्वेषां पुनर्वारको भवति एवं वारेण वारेणागमने तै नित्यवसति दोषः परिहृतो भवति, अथ सदभावेनाष्टाविंशते रूनो गच्छो वर्तते यावदेकविंशतिकस्तस्य त्रिभागे सप्त तेषां द्विमासांतरितो वारको भवति, तथैव सद्भावेन वा यदि चतुर्दशको गच्छो भवति तदा तेषामर्द्धेन सप्त तेषामेकमासान्तरितः पुनर्वारकः एवं प्रतिमासमन्योन्यवसत्यभावे वृद्धस्यैवैकस्य वृद्धावासो भवति न तु सहायानामथ सदभावेन असद्भावेन वा चतुर्दश गच्छे न सन्ति, तदा ते एव सप्तजना चिरकालमपि तिष्ठन्तो यतनया तं वृद्धं परिपालयन्ति । अमुमेवार्थममिधित्सुराह—

[भा.२२७०] चत्तारिगा तिन्नि दोन्नि एक्को व होज्ज असतीए ।
संतासई अगीय ऊणाउ असंतउ असती ।।

वृ- चत्वारः सप्तका वारेण वारेण वृद्धपरिपालनाय प्रेषणीयाः । असति सदभावेनवाष्टाविंशतेरभावे

न्नयः सप्तका वारेण प्रेष्यास्तावतामप्यभावे द्वौ सप्तकौ वारेण पेष्यौ तयोरप्यभावे एकः सप्तकः सदावस्थायी तत्परिपालको भवेत् । सद्भावेनासद्भावेन वा असतीत्युक्तं तत्र सदभावं च व्याख्यानयति । सन्तासतासदभावो नाम यदगीतार्थाः ते हि सन्ति भूयांसः परं ते सन्तोऽप्यसन्तो वृद्धस्य सहायकार्येष्वसमर्थत्वात् । असंतेउ असती असदभावः । स्वभावतोप्यूनाः । अथ कस्मात्सप्तसहायाः क्रियन्ते न न्यूना इत्याह—

**[भा.२२७१]** दो संघाडा भिक्खं एक्को बहि दोय गेण्हए थेरं ।
आलित्तादिसु जयणा इहरा परितावदाहादी ।।

**वृ-** द्वौ सङ्घाटौ भिक्षां हिण्डेते । एकोबहि र्वसतेस्तिष्ठति रक्षकः, द्वौ च स्थविरं गृह्णीत एवं सप्तसु सत्सु आदीप्तादिषु प्रदीपनादिषु यतना भवति । इतरथा परितापदाहादिकं वृद्धादेरुपजायते । अथ सदभावेना सदभावेन वा सप्तको गच्छो न विद्यते, किन्तु षष्ठादिकस्तदापि सर्वेऽपि वृद्धावासिका भवन्ति यतनया च तं परिपालयन्ति । तामेव यतनामाह—

**[भा.२२७२]** आहारे जयणा वुत्ता, तस्स जोगे य पाणए ।
निवाग मनुए चेव, छवित्ताणेसणादिसु ।।

**वृ-** तस्य वृद्धस्य योग्ये आहारे पानके उपाश्रये निवाते छविस्त्राणं वस्त्रं तस्मिन्मृदुके च एषणीयानि तदलाभे पञ्चक परिहान्याप्युत्पादनीयानि यानि तदेवमुक्ताचतुर्विधा यतना ।।

सम्प्रति प्रकारान्तरेण चतुर्विधामेव यतनामाह—

**[भा.२२७३]** वुड्ढावासे जयणा खेत्ते काले वसहि संथारे ।
खेत्तंमि नवगमादी परिहाणी एक्कहिं वसइ ।।

**वृ-** वृद्धावासे यतना चतुर्विधा । तद्यथा-क्षेत्रे, काले, वसतौ, संस्तारे च । तत्र क्षेत्रे नवकोटिविभागः नवकमादिं कृत्वा एकैकविभागे परिहान्या तावद्वस्तव्यं यावदेकस्मिन्नपि भागे चिरकालं वसति, । इयमत्र भावना-क्षेत्रे नव भागान् करोति, । तत्रैकस्मिन् भागे वसतिं गृहीत्वा तस्मिन्नेव भागे संस्तारकभिक्षादीनि निर्दिशति, । शेषान्यष्टौ भागान्परिहरति । तांस्तु तावत्परिपूर्णो मार्गशीर्षस्ततो द्वितीये पोष मासे द्वितीये भागे वसत्यादि गृह्णाति, शेषानष्टौ भागान्परिहरति । एवं तृतीयादिषु विभागेषु माघादय आषाढान्ता मासा नेतव्याः । वर्षाकाले चतुरो मासान् नवमे भागे वसत्यादि गृह्णाति शेषानष्टौ भागान्परिहरति तथाविधभिक्षाद्यलाभे नव वसतयोऽष्टौ भिक्षादियोग्या भागाः परिकल्पनीयाः । वसत्यलाभे अष्टौ भागा वसतियोग्या नवभागा भिक्षादियोग्या, वसत्यलाभे भिक्षाद्यलाभे चाष्टौ वसति भागा अष्टौ भिक्षादिभागा एवं त्रिभिः प्रकारैरेकैकभागपरिहान्या तावत् ज्ञेयं यावदेकस्मिन् भागे वसति भिक्षादीनि च गृह्णाति ।

**[भा.२२७४]** भागे भागे मासं काले वी जाव एक्कहिं सव्वं ।
पुरिसेसुवि सत्तण्हं असतीए जाव एक्को उ ।।

**वृ-** ऋतुबद्धे काले भागे भागे मासं कुर्यात् । अलाभे च सति भिक्षादीनां च पूर्वप्रकारेणैकैक-परिहान्या तावद्यतेत यावत्कालेऽपि ऋतुबद्धकालेऽपि सर्वं वसत्यादिकमेकस्मिन् भागे गृह्णीयात् पुरुषेष्वपि सहायभूतेषु चिन्तायां सप्तानामभावे एकैक परिहान्या तावद्यतना विधेया यावदेकोऽपि सहायो भवत्विति ।।

**[भा.२२७५]** पुव्वभणिया उ जयणा, वसही भिक्खे वियारमादी य ।

सव्वे य होइ इहं, वुड्ढावासे वसंताणं ।।

वृ- पूर्वमोघनिर्युक्तौ कल्पाध्ययने या या वसतौ भिक्षायां विचारादौ च यतना भणिता महता प्रबन्धेन, सैव चेह वृद्धवासे वसतां भवति ज्ञातव्या, । उक्ता क्षेत्रयतना ।। कालयतनामाह--

[भा.२२७६] थीरा कालच्छेयं, करेंति अपरक्कमा तहिं थेरा ।
कालं वा विवरीयं करेंति तिविहा तहिं जयणा ।।

वृ- धीरा बुद्धिमन्तः संयमकरणोद्यता अप्रमादिनोऽपराक्रमा जङ्घा बलपरिहीनाः स्थविरास्तत्र वृद्धवासे कालच्छेदं कुर्वन्ति ऋतुबद्धे काले अष्टसु मासेषु प्रतिमासमन्यान्यवसतिभिक्षादिग्रहणतो वर्षासु चतुरो मासान् एकवसत्येकभागभिक्षादिग्रहणतस्तदभावे पूर्वोक्तयतना कालत्रुटिं कुर्वन्ति । तथा कालमविपरीतं च कुर्वन्ति । ऋतुबद्धे काले वर्षाकालकल्पं वर्षासु ऋतुबद्धकालकल्पं न कुर्वन्तीति भावः, तथा त्रिविधा यतना तत्र ऋतुबद्धे काले च कर्तव्या साम्प्रतं विपरीतमेव कालं --

[भा.२२७७] अव्विवरीतो नामं कालो उवठाण दोसपरिहरति ।
असती वसहीए पुन अव्विवरीओ उवठेवि ।।

वृ- अविपरीतो नाम कालः क्रियमाण एष यत्काले ऋतुबद्धे प्रतिमासमन्यान्यवसतिभिक्षादि ग्रहणत उपस्थान् दोषान् नित्यवासदोषान् परिहरति । असत्यभावे वसतेरुपलक्षणमेतत् । भिक्षाद्यभावे च उपस्थेऽपि एकस्यां वसतौ सततमवस्थितेऽपि यतना कर्तव्या; ।

[भा.२२७८] तिविहा जयणाहारे उवहीसेज्जासु होइ कायव्वा ।
उग्गमसुद्धानि तिवि असईए पणगपरिहाणी ।।

वृ- आहारे उपधौ शय्यासु च वसतिषु का यतनेत्यत आह-त्रीण्यपि प्रथमत उद्गमादिशुद्धानि उद्गमोत्पादनैषणाशुद्धानि गृहीतव्यानि तेषामसत्यभावे पञ्चकपरिहान्यापि समुत्पादनीयानि गता कालयतना ।। सम्प्रति वसतियतनामाह--

[भा.२२७९] सेलियकाणिट्टघरे पक्केट्ठामेय पिंडदारुघरे ।
कटिंतं कडग तणघरे वोवत्थ होंति चउ गुरुगा ।।

वृ- शैलिकं नाम पाषाणेष्टकाभिः कृतं । काणिट्ठत्ति लोहमय्य इष्टकास्ताभिः कृतं गृहं काणेष्टकागृहं, पक्के इति पक्वेष्टकागृहं आमेय इति आमा अपक्वास्ताभिरिष्टकाभिः कृतं गृहमामेष्टकागृहं पिण्डदारु घरमिति गृह शब्दः प्रत्येकमभिसम्बध्यते । पिण्डगृहं च्किखल्लपिण्डैर्निष्पादितं, दारुगृहं करपत्रस्फाटितदारुफलमयगृहं, कटिंतं कडगति वंशदलनिर्मापितकटात्मकं गृहं कटकगृहं, तृणगृहं वृक्षादितृणमयं, एतेषां सति लाभे प्रथमं गृहीतव्यम् । तदभावे द्वितीयं एवं शेषाण्यपि भावनीयानि । यदि पुनः सति विपर्यस्तं कुर्यात् तदा विपर्यस्ते विपर्यासे प्रायश्चित्तं भवति चत्वारो गुरुकाः ।। तत्राद्येषु चतुर्षु गृहेषु यो गुणो भवति तमविधित्सुराह--

[भा.२२८०] कोटिमघरे वसंतो आलित्तमिव्वि न डज्झती तेन ।
सेलादीणं गहणं, रक्खति य निवायवसही उ ।।

वृ- कोटिमुपरिबद्धभूमिकं गृहं तच्च शिलादिमयं तस्मिन् वसन् आदीप्तेऽपि प्रदीपनकेऽपि न दह्यते । तत्राग्नेः प्रवेशासंभवात्, तेन कारणेन शैलादीनां ग्रहणं । तथा रक्षति निवाता वसतिः शीतादिकमिति वा शैलादिग्रहणमकारि । उक्ता वसतियतना ।। सम्प्रति संस्तारक यतनामाह--

[भा.२२८१] थिरमउस्स असती अपडिहारिस्स चेव वच्चंति ।
बत्तीस जोयणाणि वि आरेण अलब्भमाणम्मि ॥

वृ- यो वसतौ यथा संस्तृतश्चम्पकपट्टोऽन्यो वा स्थिरमृदुकः संस्तारको अप्रतिहार्यः स गृहीतव्यः । तस्याभावे वसतेरेव सम्बन्धि य निवेशनं गृहं तस्यदानेतव्यस्तस्याप्यलाभे वाटकाद्वहिर्ष्टो- ऽप्यानेतव्यस्तत्राप्यसति स्वग्रामे दूरस्तेऽपि तत्राप्यलाभे परग्रामादर्धकोशात्तयाप्यलाभे कोशादपि एवमर्धकोशवृद्ध्या तावद्गन्तव्यं याव दुत्कर्षतोऽपि द्वात्रिंशतो योजनेभ्योऽपि । तथा चाह- मृदुकस्याप्रतिहार्यस्य संस्तारकस्य वसत्यादावलाभेऽप्रतिहार्यस्यैव संस्तारकस्यानयनाय परग्रामे व्रजन्ति । तत्र च आरतोऽलभ्यमाने द्वात्रिंशति योजनान्यपि यावत् व्रजन्ति । एतदेव सुव्यक्तमाह—

[भा.२२८२] वसहि निवेसन साही दूरानयनंपि जो उ पाउग्गो ।
असतीए पाडिहारिय मंगलकरणंमि नीणंति ॥

वृ- वसतौ यथा संस्तृत स्थिरमृदुकः संस्तारको मृगणीयस्तदभावे निवेशने अप्रतिहार्ये गवेषणीयस्तत्राप्यलाभे साहीति वाटके तत्राप्यलाभे यः प्रायोग्योऽप्रतीहार्यः संस्तारकस्तस्य दूरादपि द्वात्रिंशद्योजनप्रमाणानयनं कर्तव्यं, । एवमपि तथा रूपन्या प्रतिहार्यस्य संस्तारकस्या सति अलाभे प्रतिहार्ये मंगलकरणे मंगलकरणनिमित्तं ध्रियमाणं नीणयन्ति आनयन्ति एतदेव स्पष्टतरमाह—

[भा.२२८३] उगाली कणगं पुन मंगलबुद्धीए सारविज्जंतं ।
पुनरवि मंगलदिवसे अच्चियमहियं पवेसिंति ॥

वृ- उगालं फलकं नाम आर्यकप्रार्यकप्रभृतीनामावल्या समागतं चम्पकपट्टादिफलकं मंगलबुध्या सारविज्जंतं ध्रियमाणं, तथाहि-ते मङ्गलबुध्या तं फलकं धरन्ति । उत्सवादिषु च तं फलकं श्रीखण्डादिना अर्चयन्ति, । पुष्पादिभिर्महयन्ति न च कोऽपि तं फलकं परिभुङ्क्ते, एवं मङ्गलबुध्या साराप्यमानं साधवो याचन्ते । यथास्माकमाचार्याः स्थविरास्तेषामिदं फलकं प्रातिहार्यं समश्यत, अस्माकं विरतानां पूज्यास्ते देवानामपि पूज्याः । किं पुनर्युष्माकं ते एवमुक्ताः सन्तो ब्रूवते-सत्यं दद्यः केवलमुत्सवदिवसे आनेतव्यो येन वयं पूजयामस्ततः पुनरपिदास्यामः एव मुक्ते तं नीत्वा उत्सवदिवसे तस्यां पूजावेलायां प्रेषयंति, येना पक्कण उत्वकण दोषा न भवंति ततः पुनरपि तस्मिन् मंगल दिवसे अर्चितमहितं चंपकादिपट्टं कृत्तं वसतौ प्रवेशयंति—

[भा.२२८४] पुव्वंमि अप्पणंती अन्नस्स व वम्ढवासिणो देंति ।
मुत्तूण वुड्ढवासिं, आवज्जइ चउलहु सेसे ॥

वृ- पूर्वे वृद्धवासे कालगतत्वादिना यस्य सत्कश्चम्पकादिपट्ट स्तस्य तं समर्पयन्ति । अन्यस्य वा वृद्धवासिनो ददाति । वृद्धवासिनं मुक्त्वा यद्यन्यस्य शेषस्य समर्पयन्ति ततः शेषे शेषस्य समर्पणे तेषां प्रायश्चित्तमापद्यते चतुर्लघु इहशस्य फलकस्यालाभे यदन्यत् अपरिशाटिफलकं तद प्रातिहार्यं मृगयन्ते । तदलाभे प्रातिहार्यमपि । एवं क्षेत्रकालवसतिसंस्तारकयतना कर्तव्या, । एकतरयतनाविभागासंभवे त्रिविभाग यतना कर्तव्या । तस्या अप्यसंभवे एकविभागापीति गतं जङ्घाबलं क्षीणमिति द्वारम् ॥

[भा.२२८५] पडियरति गिलाणं वा सयं गिलाणो वि तत्थवि तहेव ।
भाविय कुलेसु अत्थति असहाए रीयते दोसा ॥

वृ- प्रतिचरति ग्लानं, यदि वा स्वयं ग्लानो जातस्ततस्तस्य वृद्धवासो भवति । तत्रापि तथैव

क्षेत्रकालवसतिसंस्तारकयतना द्रष्टव्या । गतं ग्लानद्वारम्, असहायताद्वारमाह-भावितकुलेषु संविग्नभावितेषु कुलेष्वसहायः सहायहीनस्तिष्ठति । यतस्तस्य रीयमाणस्य विहरतो बहवो दोषाः स्त्र्यादिभ्यः । गतमसहायद्वारम् ।। सम्प्रति दौर्बल्यद्वारमाह–

[भा.२२८६] उमादी तवसा वा अचइंतो दुब्बलोवि एमेव ।
संतासंतसतीए बल्करदव्वे य जयणा उ ।।

वृ- अवमं दुर्भिक्षं, आदिशब्दात् नगररोधादिपरिग्रहस्तत्रावमौदर्येण दुर्बलीभूतो न शक्नोति विहर्तुं तपसा वा क्षामीभूतः । कथमित्याह संतासंतसतीए-सदभावे न वासदभावेन वा । तत्र सदभावो लभ्यते, यथातृप्तिभक्ष्यं केवलमन्तं प्रान्तं तेन क्षामीभूतोऽसदभावो यथा तृप्ति भक्ष्यस्यैवाभावः स तथा क्षामीभूतो विहर्तुमशक्नुवन् । एवमेव क्षीणजङ्घाबलगतेन प्रकारेण तिष्ठति, । केवलं तेन बल्करद्रव्यैर्यतना कर्तव्या । प्रथमत उद्गमादिशुद्धं तदुत्पादनीयं । तदभावे पञ्चकपरिहान्यापि । ततो बलिकीभूतो विहरति । गतं दौर्बल्यद्वारम् ।। साम्प्रतमुत्तमार्थद्वारमाह–

[भा.२२८७] पडिवन्नउत्तमट्ठे, पडियरगा वा वसंति तन्निसा ।
आयपरे निप्फत्ती कुणमाणो वावि अच्छेज्जा ।।

वृ- प्रतिपन्न उत्तमार्थोऽनशनं येन स प्रतिपन्नोत्तमार्थः । स वा तस्य वा प्रतिचारकस्तन्निश्रा उत्तमार्थप्रतिपन्ननिश्रा मासातीतं वर्षाकालातीतं वा तिष्ठन्ति । गतमुत्तमार्थद्वारम् ।। अधुना तरुण निष्पत्तिद्वारमाह-आत्मनश्च परस्य च सूत्रार्थतदुभयेन निष्पत्तिं कुर्वन्वा वृद्धवासेन तिष्ठेत् कियन्तं कालमत आह–

[भा.२२८८] संवच्छरं च झरए बारसवासाइ कालियसुयम्मि ।
सोलस य दिठिवाए एसो उक्कोसतो कालो ।।

वृ- संवत्सरं यावत् कालिकश्रुतं झरति परावर्तयति । ग्रहणे पुनः कालिकश्रुते कालिकश्रुतस्य लगन्ति द्वादशवर्षाणि । दृष्टिवादग्रहणमधिकृत्य षोडश वर्षाणि । एष एतावान् आत्मपरनिष्पत्तिमधिकृत्यैकत्रा-वस्थानस्योत्कृष्टतः कालः एतदेव सुव्यक्तमाह–

[भा.२२८९] बारसवासे गहिए उक्कालियं झरति वरसमेगंतु ।
सोलस न दिठिवाए गहणं झरणं दसदुवे य ।।

वृ- द्वादश वर्षाणि यावत् यत्परिपूर्णं गहीतं कालिकश्रुतं तत् वर्षमेकं झरति एकेन वर्षेण परावर्त्यति । ग्रहणमधिकृत्य दृष्टिवादे षोडश वर्षाणि लगन्ति । झरणमधिकृत्य पुनर्दश द्वे च द्वादश वर्षाणीत्यर्थः । ततो ग्रहणं झरणं वाधिकृत्य तावन्तं कालमेकत्रावतिष्ठते । अत्र पर आह–

[भा.२२९०] झरए य कालियसुए पुव्वगए जइ एत्तिउ कालो ।
आयारपकप्पनामे कालच्छेदे उ कयरेसिं ।।

वृ- कालिकश्रुते च पूर्वगते च श्रुते झरके च शब्दात् ग्राहके च यदि एतावान् कालो लगति तर्हि आचार प्रकल्पनाम्नि निशीथेऽध्ययने योऽसौ कालच्छेदः कृतो यथा ऋतुबद्धे मासमासितव्यं । वर्षासु चतुरो मासानिति स कतरेषां द्रष्टव्यः ? । सूरिराह–

[भा.२२९१] सुत्तत्थ तदुभएहिं जे उ सत्तमा महिड्डिया थेरा ।
एएसिं तु पकप्पे भणितो कालो नियमसुत्ते ।।

वृ- सूत्रार्थतदुभयैर्ये समाप्ता महर्धिकाः स्थविरा एतेषामाचारप्रकल्पे नैत्यिकसूत्रे भणितः कालो द्रष्टव्यः । न तु सूत्रार्थग्राहकाणामपि ग्रहणे झरणे च तावानुत्कृष्टः कालो तथा गलन् संभवति ।

[भा.२२९२] थेरे निस्सणेणं कारणजातेन एत्ति उ कालो ।
अज्जाणं पणगं पुन नवगग्गहणं तु सेसाणं ।।

वृ- स्थविरे जङ्घाबलपरिक्षीणे निश्रणेन निश्रया कारणजातेन आत्मपरिनिष्पत्तिलक्षणेन जातेन कारणेन । एतावान् पूर्वोक्तप्रमाण एकत्र स्थाने उत्कृष्टकालो भवति आचार्याणाम्, आर्यिकानां पुनर्वृद्धवासमावसन्तीनां पञ्चकं क्षेत्रपञ्चकं भवति । तद्यथा-स बाह्ये क्षेत्रे द्वौ भागौ, बहि द्वौ भागावन्त एकैकस्मिंश्च क्षेत्रविभागे द्वौ द्वौ मासाववस्थानं । पञ्चमो वर्षरात्रयोग्यः क्षेत्रविभागः । शेषाणां साधूनां पुनः कारणवशत एकत्र स्थितानां नवकग्रहणं नवभिर्भागैः क्षेत्रकारणं । इह ये जङ्घाबलपरिक्षीणाः स्थविरास्तेषां समीपे आत्मपरिनिष्पत्ति मिच्छतां यादृशाः सहाया दातव्याः तादृशानभिधित्सुराह-

[भा.२२९३] जे गेण्हिउं धारिउं च जोग्गा, थेराण ते दिंति सहायहेउ ।
गेण्हंति ते कालियदिट्ठिवायं सुहेणं, किच्चं च थेराण करेंति सव्वं ।।

वृ- सूत्रमर्थं च ये गृहीतुं धारयितुं च योग्यास्तान्सहायकान् स्थविराणां ददति । ततस्ते स्थानस्थिताः कालिकश्रुतं दृष्टिवादं वा सुखेन गृह्णन्ति, । कृत्यं च सर्वं स्थविराणां कुर्वन्ति, एवं तेषां ग्रहणे झरणे च पूर्वोक्त उत्कृष्टः काल एकत्रावस्थाने भवति । गतं तरुणनिष्पत्ति द्वारम् । । अधुना क्षेत्रालाभद्वारमाह-

[भा.२२९४] आसज्ज खेत्तकाले, बहुपाउग्गा न संति खेत्ता वा ।
निच्चं च विभत्ताणं, सच्छंदादी बहू दोसा ।।

वृ- आसद्य प्रतीत्य क्षेत्रकालौ । तद्यथा अन्येषु क्षेत्रेष्वशिवादीनि कारणानि, यदि नास्ति साम्प्रतमन्येषु क्षेत्रेषु तादृशः कालो येन संस्तरति । अथ बहु प्रायोग्यानि महागणप्रायोग्यानि न सन्ति क्षेत्राणि । यदि पुनर्महतो गणस्य विभागः क्रियते । ततो विभक्तानामद्याप्यपरिनिष्पन्नत्वेनागीतार्थानां नित्यमवश्यं स्वच्छन्दादयो दोषा भवन्ति । एतैः कारणै ऋतुबद्धातीतं वर्षातीतं च कालमेकक्षेत्रे यतनया तिष्ठन्ति । अधुना कृतसलेखद्वारं तरुणप्रतिकर्मद्वारं चाह-

[भा.२२९५] जह चेव उत्तमट्ठे कयं संलेहम्मि ठंति तह चेव ।
तरुण पडिकम्मं पुन रोगविमुक्के बलविवड्ढी ।।

वृ- यथा चैवं उत्तमार्थे प्रतिपन्ने तिष्ठन्ति तथा चैवं कृतसंलेखेऽपि तिष्ठन्ति । इयमत्र भावना-यथा प्रतिपन्नोत्तमार्थस्तत् प्रतिचारका वा तन्निश्रया एकत्र वसन्ति । एवं प्रतिपन्नसंलेखनास्तत्प्रति-चारकाश्चैतनिश्राएकत्रस्थाने वसन्ति । तरुणप्रतिकर्म नामरोग विमुक्तस्य सतस्तस्य बलविवृद्धिकरणं तन्निमित्तं मासातीतं वर्षातीतं च कालं तिष्ठन्ति ।।

[भा.२२९६] वुड्ढावासातीते, कालातीतेन उग्गहो तिविहो ।
आलंबणे विसुद्धे उग्गहो तक्कज्ज वुच्छेओ ।।

वृ- वृद्धवासातीते मरणेन । प्रतिभग्नतया वा । आरोगीभवनेन वा झरणेन वा वृद्धवासे अतीते कालेऽतीते ऋतुबद्धे काले मासाधिके काले वर्षासु चतुर्मासाधिके अवग्रहस्त्रिविधोऽपि न भवति, सचित्तस्याचित्तस्य मिश्रस्य च ग्रहणं न कल्पते इति भाव; । कुत इत्याह- आलम्बणे वृद्धवासलक्षणे विशुद्धे परिसमाप्ते यस्तत्कार्यभूतोऽवग्रहस्तस्यापि व्यवच्छेदो भवति । कारणाभावे कार्यस्याभावत् ।

यस्तु मन्यते कालतीते विनावग्रहस्य व्यवच्छेदस्तं प्रति दृष्टान्तमाह-

[भा.२२१७] आगास कुच्छि पूरो, उग्गहपडिसेहियम्मि जो कालो ।
न हु होंति उग्गहो सो कालदुवे वा अनुन्नातो ।।

वृ- यथा कोऽपि पुरुषो बुभुक्षया पीडितः सन् चिन्तयति पूरयाम्युदरमाकाशेन येन मे बुभुक्षापगच्छति । स यथा आकाशस्य एवमव गृहे प्रतिषेधितो यः कालो वर्त्तितोऽस्मिन्नुत्पादितः सो उग्गहोऽवग्रहो न भवति प्रतिषिद्धकालाचीर्णत्वात् । अथवा प्रकारान्तरेण कालद्विकेऽनुज्ञातोऽवग्रहः ।

[भा.२२१८] गिम्हाण चरिम मासो, जहिं कतो तत्थ जति पुनो वासं ।
ठायंति अन्नखेत्तासत्तीए दोसुंपि तो लाभो ।।

वृ- यत्र गीष्माणां उष्णकालस्य चरमपश्चादाषाढाभामा मासः कृत स्तत्र यदि पुनरन्यक्षेत्रासति तथाविधान्यक्षेत्रभावतो वर्ष वर्षाकाले तिष्ठन्ति । ततो द्वयोरपि कालयोः ग्रीष्मचरममासे वर्षा चेत्यर्थः लाभो भवति एवं कारणतो द्वयोरपि कालयोः सचित्तादिलाभोऽनुज्ञात इत्यर्थः ।।

[भा.२२१९] एवमेव समतीते वासे तिन्नि दसगा उ उक्कोसा ।
वासंनिमित्तठियाणं उग्गहो छम्मास उक्कोसा ।।

वृ- एवमेव अनेनैव प्रकारेण वर्षे वर्षाकाले समतीते यदि मेघो वर्षति ततोऽन्यद्दिवसदशकं स्थीयते, तस्मिन्नपि समाप्तिमुपगते यदि पुनवर्षति ततो द्वितीयदिवसदशकं स्थातव्यम्, तस्मिन्नप्यतीते पुनर्वृष्टौ तृतीयमपि दिवसदशकं तिष्ठति, एवं उत्कर्षतस्त्रीणि दिवसदशकानि वर्षा निमित्तस्थितानामुत्कृष्टतोऽवग्रहः षण्मासः षण्मासप्रमाणो भवति । तद्यथा एको ग्रीष्मचरममास श्चत्वारो वर्षाकालमासाः षष्ठो मार्गशीर्षो दिवसदशकत्रयलक्षण इति ।।

उद्देशकः ४ समाप्त

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता व्यवहारसूत्रे चतुर्थोद्देशकस्य**
**(भद्रबाहु स्वामि रचितानिर्युक्तियुक्तं) संघदासगणि विरचितं भाष्यं**
**एवं मलयगिरि आचार्य विरचिता टीका परिसमाप्ता ।**

## उद्देशक - ५

उक्तश्चतुर्थ उद्देशकः, अधुना पञ्चमो वक्तव्यः तत्रेदमादिसूत्रकदम्बकम्-

मू. (१२७) *नो कप्पइ पवत्तिणीए अप्पबिइयाए हेमंतगिम्हासु चारए ।*

मू. (१२८) *कप्पइ पवत्तिणीए अप्पतइयाए हेमंतगिम्हासु चारए ।*

मू. (१२९) *नो कप्पइ गणावच्छेइणीए अप्पतइयाए हेमंतगिम्हासु चारए ।*

मू. (१३०) *कप्पइ गणावच्छेइणीए अप्पचउत्थाए हेमंतगिम्हासु चारए ।*

मू. (१३१) *नो कप्पइ पवत्तिणीए अप्पतइयाए वासावासं वत्थए ।*

मू. (१३२) *कप्पइ पवत्तिणीए अप्पचउत्थाए वासावासं वत्थए ।*

मू. (१३३) *नो कप्पइ गणावच्छेइणीए अप्पचउत्थाए वासावासं वत्थए ।*

मू. (१३४) *कप्पइ गणावच्छेइणीए अप्पपञ्चमाए वासावासं वत्थए ।*

मू. (१३५) *से गामंसि वा.... जाव संनिवेसंसि वा गयहाणिंसि बहूणं पवत्तिणीणं अप्पतइयाणं*

बहूणं गणावच्छेइणीणं अप्पचउत्थाणं कप्पइ हेमंतगिम्हासु चरए अन्नमन्नं नीसाए ।

**मू. (१३६)** से गामंसि वा....जाव संनिवेसंसि वा बहूणं पवत्तिणीणं अप्पचउत्थाणं बहूण गणावच्छेइणीणं अप्पपञ्चमाणं कप्पइ वासावासं वत्थए अन्नमन्नं नीसाए ।

**मू. (१३७)** गामाणुगामं दूइज्जमाणा निग्गंथी य जं पुरओ काउं विहरेज्जा सा य आहच्च वीसम्भेज्जा. अत्थि याइं थ काइ अन्ना उवसंपज्जणारिहा, सा उवसंपज्जियव्वा, नत्थि याइं थ काइ अन्ना उवसंपज्जणारिहा, तीसे य अप्पणो कप्पाए असमत्तो एवं से कप्पइ एगराइयाए पडिमाए जन्नं जन्नं दिसं अन्नाओ साहम्मिणीओ विहरन्ति तन्नं तन्नं दिसं (जाव)...छेए वा परिहारे वा ।

**मू. (१३८)** वासावासं पज्जोसविया निग्गंथी...(जाव)..छेए वा परिहारे वा ।

**मू. (१३९)** पवत्तिणी य गिलायमाणी अन्नयरं वएज्जा 'मए णं अज्जो ! कालगयाए समानीए इय समुक्कसियव्वा' । सा य समुक्कसणारिहा सा स समुक्कसियव्वा सिया, सा य नो समुक्कसणारिहा नो समुक्कसियव्वा, अत्थि या इत्थ काइ अन्ना समुक्कसणारिहा सा समुक्कसियव्वा, नत्थि या इत्थ काइ अन्ना समुक्कसणारिहा सा चेव समुक्कसियव्वा, तंमि च नं समुक्कट्ठंसि परावएज्जा दुस्समुक्किट्ठं ते अज्जो निक्खिवाहि, तीसे निक्खिवमाणीए नत्थि कोइ छेए वा परिहारे वा, तं जाओ साहम्मिणीओ अहाकप्पेणं नो उवट्ठायति तासिं सव्वासिं तप्पत्तियं जाव...छेए वा परिहारे वा ।

**मू. (१४०)** पवत्तिणी य ओहायमाणी...एगयरं वएज्जाममंसि णं अज्जो ! ओहायंसि एसा समुक्कसियव्वा सिया, सा समुक्कसणारिहा सा समुक्कसियव्वा सिया, साय नो जाव...छेए वा परिहारे वा ।

**वृ-** इत्यादि तावत्, यावद् अवधावनसूत्रम् । अर्थसम्बन्धप्रतिपादनार्थमाह-

**[भा.२३००]** उद्देसंमि चउत्थे जा मेरा वन्निया उ साहूणं ।
सा चेव पञ्चमे संजतीण गणणाए नाणत्तं ।।

**वृ-** चतुर्थे उद्देशके या मर्यादा वर्णिता साधूनां सैव पञ्चमे उद्देशे संयतीनां वर्ण्यते, केवलं गणनयां नानात्वम्, तदपि च सूत्रे साक्षादुक्तमिति प्रतीतम् । अतः प्रथमत एव संयतीसूत्रकदम्बकोपनिपातः ।।

**[भा.२३०१]** वुत्तमहवा बहुत्तं पिंडगसुत्ते चउत्थ चरमंमि ।
अबहुत्ते पडिसेहं काउमणुन्ना बहुणं तु ।।

**वृ-** अथवा चतुर्थस्य उद्देशकस्य चरमे पिण्डकसूत्रे बहुत्वमुक्तम्, ततो बहुत्वप्रस्तावात् पञ्चमे उद्देशके संयतीनां अबहुत्वे प्रतिषेधं कृत्वा बहुनामनुज्ञा कृता, ननु बहुनामपि त्रिप्रभृतीनां विहारो न कल्पते, असमाप्तकल्पत्वात् । तथा हि-जघन्यतोऽपि ऋतुबद्धे काले संयतीनां सप्तकः समाप्तकल्पः, वर्षाकाले नवकः । ततः कथं नाधिकृतसूत्रकदम्बकविरोधः ? उच्यते, नैष दोषः, कारणवशतः सूत्रकदम्बकस्य प्रवृत्तेः ।। तान्येव कारणान्युपदर्शयति-

**[भा.२३०२]** संघयणे वाउलणा, छट्ठे अंगंमि, गमणमसिवादी ।
सागर जाते जयणा, उउबद्धालोयणा भणिया ।।

**वृ-** प्रवर्तिन्या गणावच्छेदिन्या वा उत्तमेन संहननेन, उपलक्षणमेतत्, उत्तमया च धृत्या, सूत्रमर्थश्च भूयान् गृहीतो गच्छे च व्याघातः १ । स च व्याकुलनावशात्तत उक्तं द्वितीयं कारणं व्याकुलना, सा च 'धम्मकहि महिएड्ढि' इत्यादिना प्रकारेण यथा प्राक् तृतीयोद्देशकेऽभिहिता तथैवात्रापि भावनीया, पुनरुक्तदोषभयात्तु नाभिधीयते, ततः सूत्रार्थस्मरणनिमित्तमात्मतृतीयायाः प्रवर्तिन्या आत्मचतुर्थायाश्च

गणावच्छेदिन्या गमनम् २। तथा षष्ठेऽङ्गे ज्ञाताधर्मकथाख्ये बहवः सदृशा गमास्तथा च तत्रानेकाः कथानककोटयः सदृशपाठा विसदृशपाठास्त्वर्द्धचतुर्थाः कथानककोटयस्तदभिनवगृहीतं वर्तयते पुनः पुनरस्मृतं च विस्मृतिमुपयाति, ततस्तत्स्मरणार्थमुक्तपरिवाराया अपि गमनम् ३। तथा अशिवादिभिरशिवावमौदर्यादिभिरुक्तसंख्याकपरिवाराया गमनम् ४। तथा षष्ठप्रभृतीन्यङ्गानि संयतीनां 'सागरत्ति', स्वयंभूरमणसागरतुल्यानि तानि अभिनवगृहीतानि परावर्तनीयानि सन्ति अपरावर्तितानि नश्यन्ति, ततस्तेषां परावर्तनाय यथोक्तसंख्याकपरिवाराया अपि गमनम्, तदेवमधिकृत-सूत्रकदम्बकप्रवृत्तौ कारणान्यभिहितानि ५। अधुना शेषवक्तव्यतामाह- 'जातेति' जातादिरूपः कल्पो वक्तव्यः, स च ऋतुबद्धे सप्तकः समाप्तकल्पः, तदूनोऽसमाप्तकल्पः, वर्षाकाले नवकः समाप्तकल्पस्तदूनोऽसमाप्तकल्पश्च, एकैको द्विधा-जातोऽजातश्च, गीतार्थोऽगीतार्थश्चेति; अत्र च भङ्गचतुष्टये प्रथमवर्जेषु शेषेषु त्रिषु भङ्गेषु प्राग्वत् यतना कर्तव्या ६। तथा ऋतुबद्धे काले निरन्तरं साध्वीप्रेषणतोऽवलोकना कर्तव्या भणिता ७। तदेवमभिहितानि कारणान्येतैः कारणैरायातस्यास्य सूत्रकदम्बकस्य व्याख्या, सा च तथैव।। तथा चाह-

[भा.२३०३] जह भणिय चउत्थे, पंचमम्मि तहेवेविमं तु नाणत्तं।
गमनत्थि मीस संबंधि वज्जए पूजिते लिंगे।।

वृ- यथा चतुर्थे उद्देशके निर्ग्रन्थसूत्राणां व्याख्यानं भणितम्, तथा पञ्चमेऽपि उद्देशके निर्ग्रन्थीसूत्राणामपि वक्तव्यम्, नवरं इदं नानात्वम्, तदेवाह- 'इत्यादि-विष्वग्भूतायां प्रवर्तिन्यां गमनं सर्वाभिरार्यिकाभिराचार्यसमीपे कर्तव्यम्। तच्च स्त्रीभिः सह, तदभावे मिश्रैःस्त्रीपुरुषैः, तेषामप्यभावे सम्बन्धिपुरुषैः, एतेषामप्यभावे सम्बन्धवर्जितैरविकारिभिः पुरुषैः, अथ सप्रत्यपायाः पन्थानः तर्हि यत् पूजितं लिङ्गं तस्मिन् लिङ्गे गृहीते गमनम्।। एतदेव सुव्यक्तमाह-

[भा.२३०४] वीसुं भियाय सव्वासिं गमनं अद्धद्ध जाव दोण्हेक्का।
संबंधि इत्थिसत्थे भावितमविकारितेहिं वा।।

वृ- विष्वग्भूतायां शरीरात्पृथग्भूतायां मृतायामित्यर्थः, प्रवर्तिन्यामाचार्यसमीपे सर्वाभिर्गन्तव्यम्, तत्र च गतानामाचार्येण प्रवर्तिनी स्थापयितव्या, यदि तरुणीनां सर्वासां पथि प्रत्यवायस्तर्हि अर्धाधाः परिणतवयसस्ता व्रजन्ति, अथ सर्वास्तरुणप्रायाः कतिपयाः स्थविरास्ततो या मंदरूपास्तरुण्यो याश्च स्थविरास्ताः समुदायस्य चतुर्भागमात्रा व्रजन्ति, एवं तावद्वाच्यं यावत् द्वे जने (च, ते ?) गच्छतः, द्वयोरप्यसंभवे एका व्रजति। ताः पुनः केन सार्थेन सह व्रजन्ति, तत आह- 'सम्बन्धी' त्यादि सम्बन्धिना स्त्रीसार्थेन सह गन्तव्यम्, तदलाभेऽसम्बन्धिनापि स्त्रीसार्थेन, तस्याप्यलाभे पुरुषार्थे भाविताः सम्बन्धिनस्तैः समं व्रजेयुः, तेषामप्यलाभेऽसम्बन्धिनोऽपि येऽविकारिणः पुरुषास्तैः समम्। अथ सप्रत्यवायाः पन्थानः, तर्हि यत् यत्र देशे पूजितं लिङ्गं तेन गृहीतेन व्रजन्ति, एतच्च सुगमत्वान्न व्याख्यातम्।। अत्र शिष्यः प्राह- यद्यप्याचार्येण प्रवर्तिनी स्थापयितव्या तर्हि ये एते द्वे सूत्रे ''पवत्तिणी गिलायमाणी वएज्जा, मए नं कालगयाए इयं समुक्कसियव्वा'' इत्यादि, तथा ''पवत्तिणी ओहायमाणी वएज्जा, मए नं ओहावियाए इयं समुक्कसियव्वा'' इत्यादि ते कथं नीयेते। तत आह-

[भा.२३०५] असिवादिएसु फिडिया कालगए वावि तंमि आयरिए।
लिंग थेराण य असती गिलाण ओहाणि सुत्ताओ।।

वृ- अशिवादिभिः कारणैः, गाथायां सप्तमी तृतीयार्थे प्राकृतत्वात्, यस्याचार्यस्य समीपे आसीरन् तस्मात् स्फिटिताः । ततः सा ग्लानीभूता अवधावनप्रेक्षिका वा यत्सूत्रेऽभिहितं तद्वदति अन्यस्याचार्यस्य परिज्ञानकरणार्थं यथा एषा आर्हति तां प्रवर्त्तिनीं, स एव अन्य आचार्यः स्थापयति, यदि वा यस्याचार्यस्य समीपे ता अतिष्ठन् स कालगतः ततस्तस्मिन्नाचार्ये कालगते सा ग्लानीभूता अवधावनप्रेक्षिका वा अन्यस्याचार्यस्य परिज्ञानकरणार्थं सूत्राभिहितं वदति, 'तिग थेराण य असतो' इतित्रिकं कुलगणसङ्घस्तस्य स्थविराः त्रिकस्थविरास्तेषामसति । किमुक्तं भवति ? कुलस्थविराणां गणस्थविराणां सङ्घस्थविराणां वा प्रत्यासन्नानामभावे एषार्हेति शेषस्थविरपरिज्ञानकरणाय यत्सूत्रेऽभिहितं तद्वदति, ततो ग्लानावधावनसूत्रे उपपन्ने ।।

[भा.२२०६]　　साहिणम्मि वि थेरे पवत्तिणी चेव तं परिकहेइ ।
　　　　　　　　एसा पवत्तिणी भे जोग्गा गच्छे बहुमता य ।।

वृ- अथवा स्वाधीनेऽपि स्थविरे आचार्ये सा प्रवर्तिनी ग्लायन्ती अवधावनप्रेक्षिका वा तां परिकथयति । यथा भे भगवन् एषा प्रवर्तिनी योग्या प्रवर्तिनीत्वस्यार्हा सूत्रार्थतदुभयनिष्णातत्वात्, गच्छे बहुमता ततो एवमपि ते सूत्रे उपपन्ने ।।

[भा.२२०७]　　अब्भुज्जयं विहारं परिवज्जिउकामे दुस्समुक्कड्डं ।
　　　　　　　　जह होंति समणाणं, भत्तपरिन्ना तहा तासिं ।।

वृ- यथा प्राक् श्रमणानामभ्युद्यतविहारं प्रतिपत्तुकामे दुःसमुत्कृष्टं भवति दुःसमुत्कृष्टं प्रतिपादितम्, तथा तासां श्रमणीना भक्तपरिज्ञां प्रतिपत्तुकामायां दुःसमुत्कृष्टं भावनीयम् ।।

मू. (१४१) *निग्गंथस्स नवडहरतरुणगस्स आयारपकप्पे नामं अज्झयणे परिब्भट्ठे सिया, से य पुच्छियव्वे 'केण ते अज्जो ! कारणेणं, आयारपकप्पे नामं अज्झयणे परिब्भट्ठे, किं आबाहेणं उदाहु पमाएणं' ? वएज्जा 'नो आबाहेणं, पमाएणं,' जावज्जीवाए तस्स तप्पत्तियं नो कप्पइ आयरियत्तं वा जाव गणावच्छेइयत्तं वा उद्दिसित्तए वा धारेत्तए वा । से य वएज्जा 'आबाहेणं, नो पमाएणं.' से य 'संठवेस्सामीति' संठवेज्जा, एवं से कप्पइ आयरियत्तं वा जाव गणावच्छेइयत्तं वा उद्दिसित्तए वा धारेत्तए वा, से य संठवेस्सामीति नो संठवेज्जा, एवं से नो कप्पइ आयरित्तं वा जाव गणावच्छेइयत्तं वा उद्दिसित्तए धारेत्तए वा ।।*

वृ- नवडहरतरुणव्याख्यानं च प्रागुक्तमवसेयम् । 'ति वरिसो होइ नवो (व्रतपर्यायेणेति वाक्यशेषः), आसोलसगं तु (जन्मपर्यायेणेति गम्यते) डहरगं बेंति । तरुणो चत्ता सत्तरुण मज्झिमो थेरओ सेसो' आचार्यत्वं वा यावत्करणादुपाध्यायत्वं वा प्रवर्तित्वं स्थविरत्वं वेति परिग्रहः, शेषं तथैव ।। अत्राह शिष्यः- पुरुषोत्तमो धर्म इति पूर्वं निर्ग्रन्तसूत्रं वक्तव्यं, पश्चान्निर्ग्रन्थीसूत्रं, पूर्वत्र चाध्ययनद्वये पूर्वं निर्ग्रन्थसूत्राण्युक्तानि पश्चान्निर्ग्रन्थीसूत्राणि ।

मू. (१४२) *निग्गंथीएणं नवडहरतरुणियाए आयारपकप्पे नामं अज्झयणे परिब्भट्ठे सिया, सा य पुच्छियव्वा 'केणं भे कारणेणं अज्जो ! आयारपकप्पे नामं अज्झयणे परिब्भट्ठे, किं आबाहेणं पमाएणं' ? सा य वएज्जा 'नो आबाहेणं, पमाएणं', जावज्जीवाए तीसे तप्पत्तियं नो कप्पइ पवत्तिनित्तं वा गणावच्छेइयित्तं वा उद्दिसित्तए वा धारेत्तए वा । सा य वएज्जा 'आबाहेण, नो पमाएणं', सा य 'संठवेस्सामीति' संठवेज्जा. एवं, से कप्पइ पवत्तिनित्तं वा गणावच्छेइयित्तं वा उद्दिसित्तए वा धारेत्तए*

*वा, सा य संठवेस्सामीति' नो संठवेज्ञा, एवं से नो कप्पइ पवित्तिणित्तं वा गणावच्छेइयितं वा उद्दिसित्तए वा धारेत्तए वा ॥*

**वृ-** 'निग्गंथीए नवडहरतरुणाए' इत्यादि सूत्रद्विकम् । अस्य व्याख्या-निर्ग्रन्थ्या नवडहरतरुण्या वक्ष्यमाणस्वरूपाया: आचारप्रकल्पो नामाध्ययनं परिभ्रष्टं स्यात्, सा च प्रष्टव्या, केन कारणेन आचारप्रकल्पो नामाध्ययनं परिभ्रष्टमभवत्, किमाबाधेन प्रमादेन वा, एवं पृष्टा सती सा, यदीति गम्यते, वदेत्, नाबाधेन किन्तु प्रमादेन, तर्हि यावज्जीवं तस्यास्तत्प्रत्ययं प्रमादतोऽध्ययननाशनप्रत्ययं न कल्पते प्रवर्तिनीत्वं वा गणावच्छेदिकात्वं उद्देष्टुं नापि तस्या: स्वयं धारयितुम् । अथ सा वदेत् आबाधेन नष्टं न तु प्रमादेन, सा च नष्टमध्ययनं संस्थापयामीत्युक्त्वा संस्थापेत्, एवं 'से' तस्या: कल्पते प्रवर्तिनीत्वं वा गणावच्छेदिकात्वं वा उद्देष्टुं अनुज्ञातं स्वयं धारयितुम् । अथ नष्टमध्ययनं संस्थापयिष्यामीत्युक्त्वा न संस्थापयेत् एवं तर्हि से तस्या न कल्पते प्रवर्तिनीत्वं गणावच्छेदिकात्वं वा उद्देष्टुं वा स्वयं धारयितुमिति; । अत्र तु केन कारणेन सूत्र विपर्यय: कृत: ।। सूरिराह-

**[भा.२३०८]** जइ वि य पुरिसादेसो पुव्वं तहवि विवज्ञओ जुत्तो ।
जेन समणीउ पगया पमायबहुला य अथिरा य ।।

**वृ-** यद्यपि च पुरुषोत्तमो धर्म: पूर्वत्र वाध्ययनद्वये पूर्वं पुरुषोदेशस्तथाप्यत्र विपर्ययो युक्त: । केन कारणेनेत्याह-येन कारणेन श्रमण्य: प्रकृतास्तथा प्राय: श्रमण्य: प्रमादबहुला अस्थिराश्च, न तु श्रमणा:, अध्ययनस्य च नाश: प्राय: प्रमादतस्तत: श्रमण्यधिकारादधिकृतसूत्रार्थस्थानत्वात् पूर्वं निर्ग्रन्थीसूत्रमुक्तम्, पश्चात् निर्ग्रन्थसूत्रम् । नवडहरतरुणीनां व्याख्यानमाह-

**[भा.२३०९]** ते वरिसा होइ नवा अठारसिया डहरिया होइ ।
तरुणी खलु जा जुवई चउरो दसगा य पुव्वुत्ता ।।

**वृ-** व्रतपर्यायेण यावत्त्रिवर्षा तावद्भवति नवा, जन्मपर्यायेण यावदष्टादशिका अष्टादशवर्षप्रमाणा तावद्भवति डहरिका, तरुणी खलु तावद्द्रष्टव्या यावद् युवति: । अथवा पूर्वोक्तास्तृतीयोद्देशके नवडहरतरुणसूत्रे येऽभिहितास्तरुणस्य चत्वारो दशकाश्चत्वारिंशद्वर्षाणीत्यर्थ:, ते अत्रापि तरुण्या द्रष्टव्या: ।।

**[भा.२३१०]** सा एव गुणोवेया सुत्तत्थेहिं पकप्पमज्झयणं ।
समहिज्जिया इतोयाअवि आगयानवसु या अन्ना ।।

**वृ-** सा नवडहर तरुणी एतावद्गुणोपेता सूत्रार्थाभ्यां प्रकल्पनामकमध्ययनमधीता अधीतिनी तत:सा प्रवर्तिनीत्वस्य योग्या सूरिभि: संभाविसाधिता । अथ च तस्या: सूत्रतोऽर्थतश्चाचारप्रकल्प: परिभ्रष्ट: स कथं ज्ञात इत्याह-इतश्चापि आगता अन्यगच्छादन्या साध्वी उपसम्पन्ना, सा विज्ञपयति ।।

**[भा.२३११]** अत्थेण मे पकप्पो समानितो न य जितो महंभंते ।
अमुगा मे संघाडं, ददतुं वुत्ता उ सा गणिणा ।।

**वृ-** हे भदन्त! भगवन्! अर्थेनार्थतो मम आचारप्रकल्प: समानीत: समाप्तिं नीत:, परं न च नैव मम स जित: परिचितोऽभूत्, ततोऽमुका, या प्रवर्तिनीत्वेन संभाविता, तां संघाटं पूज्या ददतु; एवं तया विज्ञापितेन गणिता आचार्येण सा उक्ता आर्ये देहि एतस्या: संघाटम्-

**[भा.२३१२]** सा दाउं आढत्ता नवरि य नट्ठ न किंचि आगच्छे ।

एमेव मुणमुणंती चिट्ठति मुणिया य सा तीए ।।

**वृ-** सा संघाटं दातुं प्रवृत्ता, परावर्तयितुं व्याख्यातुं च प्रवृत्ता इत्यर्थः नवरं नष्टं तदध्ययनम्, न किमप्यागच्छति, केवलमेवमेव मुणमुणंती अव्यक्ताक्षरं किमपि ब्रुवन्ती तिष्ठति, ततः सा तया मुणिता यथा न किमप्येतस्या आगच्छति-

**[भा.२३१३]** पुनरवि साहति गणिणो सा नट्ठसुया दलाह मे अन्नं ।
अब्भक्खाणं पि सिया वाहिंतुं होइमा पुच्छा ।।

**वृ-** ततः सा पुनरपि गणिन आचार्यस्य कथयति, यथा सा नष्टश्रुता, तस्मात् ममान्यां सहायां दद्तु, एवमुक्ते आचार्येण विचारयितव्यं-सत्यं किं परिभ्रष्टं तस्या अध्ययनं किं वा न, को जानाति, अभ्याख्यानमपि काचित् केनापि कारणेन प्रद्विष्टा सती दद्यात् । ततस्तां व्याहृत्य तस्या इयं वक्ष्यमाणा पृच्छाकर्तव्या ।। तामेवाह-

**[भा.२३१४]** दंडकगहनिक्खेवे आवस्सियाए निसीहिया ।
गुरुणं च अप्पनामे य भणसु आरोवणा काउ ।।

**वृ-** दण्डकस्य प्रत्युपेक्षाप्रमार्जनाव्यतिरेकेण ग्रहणे निक्षेपणे च, तथा आवशिक्या नैषिधिक्याश्चाकरणे, बहिः प्रदेशादागच्छता वसतेः प्रवेशे नमः क्षमाश्रमणेभ्यः इत्येवं गुरुणामप्रणामे च प्रणामाकरणे च का आरोपणा प्रायश्चित्तं भवति ।।

**[भा.२३१५]** पुट्ठ अनिव्वहंती किह नट्ठं बाहतो पमाएणं ।
साहेइ पमाएणं सो य पमादो इमो होइ ।।

**वृ-** सा एवं पृष्टा सती यदि न निर्वहति, न यथावस्थितमुत्तरं ददाति तदा सा तदा सा अनिर्वहन्ती भूयः प्रष्टव्याः कथं केन कारणेन ते नष्टमाचारप्रकल्पनामकमध्ययनं, किमाबाधात उत प्रमादेन ? तत्र यदि सा कथयति प्रमादेन, स च प्रमादोऽयं वक्ष्यमाणो भवति ।। तमेवाह-

**[भा.२३१६]** धम्मकह-निमित्तादी, उपमातो तत्थ होति नायव्वो ।
मलयंवइ मगहसेणातरंगवइयाइ धम्मकहा ।।

**वृ-** तत्र तस्यां संयत्यां धर्मकथानिमित्तादिकः, आदिशब्दात् ग्रहचरितादिपरिग्रहः, प्रमादो भवति ज्ञातव्यः, तत्र धर्मकथा मलयवती मगधसेना तरङ्गवती आदिशब्दात् वसुदेवहिण्ड्यादिपरिग्रहः, एताः कथा अधीयानाया विस्मृतिं गतं प्रकल्पनामकमध्ययनम् ।।

**[भा.२३१७]** गहचरियविज्जमंताचुन्ननिमित्तादिणा पमाएणं ।
नट्ठंमि संधयती असंधयंती व सा न लभे ।।

**वृ-** ग्रहचरितं ज्योतिष्कं, ससाधना विद्या, साधनरहितो मन्त्रः, चूर्णो योगचूर्णः निमित्तमतीतादिभावकथनम्, आदिशब्दात् कुहुकशास्त्रादिपरिग्रहः, इत्यादिना प्रमादेन इत्याद्यध्ययनलक्षणेन प्रमादेन नष्टे प्रकल्पनाम्नि अध्ययने, यदि भूयः सा तत्संदधाति, यदि वा न संदधाति, तथापि सा सन्दधती असन्दधती वा यावज्जीवं गणं न लभते ।।

**[भा.२३१८]** जावज्जीवं तु गणं इमेहिं नाएहिं लोगसिद्धेहिं ।
अतिपालवेज्जजोहे धणुगाई भग्गफलगेण ।।

वृ- यावज्जीवं गणं न लभते, एभिरजापालकवैद्ययोधैर्लौकिकसिद्धैर्ज्ञातैः तत्र योदि प्रमादाचरितं सम्यग् विदितं धनुरादिभिर्धनुर्भग्नविभग्नं दृष्टं, जीवा च्छिन्नाविच्छिन्ना, काण्डान्यसञ्जितानि; न केवलमेतज्ज्ञातैः, किन्तु भग्नफलकेन सटित-पतित-मलयनवज्ञातेन तत्र प्रथममजापालकदृष्टान्तमाह-

[भा.२३१९] खेलंतेन उ अइया पणासिया जेण सो पुनो न लभे ।
सूलादि रुया नट्ठा वि लहंति एमेव उत्तरिए ।।

वृ- कोइ अ[illegible] अयाओ [illegible], तेन ततो वट्टगादिखेल्लणआदिहिं पमाएहिं नासिया, तो सो अन्नातो दवावितो भणइ, पुनो रक्खाभि न एरिसं करहामि, सो एवं भणंतो वि जावज्जीवं अन्नत्थ वि न लहति । अह सूलं से उट्ठियं जरो वा अति आउरो आगतो, ततो नट्ठातो ताहे सो पुनो वि लभते रक्खिउं अक्षरगमनिका-येन खेलता वृत्तादिना क्रीडता अजिकाः प्रणाशिताः, स पुनर्न लभते, यावज्जीवमन्यत्राप्यजा रक्षितुम् । अथ शूलादिरुजा अत्रादिशब्दादत्यातुरज्वरादिपरिग्रहः, ता अजा नष्टास्ततः पुनरपि लभते ।। अधुना वैद्यज्ञातं भावयति-

[भा.२३२०] जति से सत्थं नट्ठं पेच्छह से सत्थकोसगं गंतु ।
हीरति कलंकिएसुं भोगो जूयादिदप्पेणं ।।

वृ- कोइ वेज्जो रन्ना कयवित्तीतो तेन जूयपमादेण विसयपमादेण वा वेज्जसत्थं नासियं सत्थकोसगाणि य पच्छणगादीणि कट्टकलंकियाणि, न निसीयइ, अन्नया रन्नो कज्जं जायं, सद्दावितो वेज्जो सो किरियोवदेसं न किंचि सक्केइ वोत्तुं । ततो रन्ना भणियं, किमेयं, ततो सो भणइ-मे पोत्थगा चोरेहिं हिया, पाडिपुच्छगंपि नत्थि, तो मम नट्ठं वेज्जसत्थं, नत्थि पुन मम अन्नो पमाओ जेण वेज्जसत्थं नासियं । ताहे रन्ना पुरिसा पेसिया । यदि से तस्य शास्त्रं नष्टं तर्हि 'से' तस्य यूयं गत्वा शास्त्रकोशकं प्रेक्षध्वं ततस्तैस्तद् ह्रियते राज्ञः समर्प्यते, दृष्टानि राज्ञा समस्तानि प्रतक्षणकप्रभृतीनि शास्त्राणि कट्टकलङ्कितानि, ततस्तेषु कलङ्कितेषु दृष्टेषु ज्ञातं यथा द्यूतादिदर्पेण द्यूतादिना प्रमादेन विनाशितं वैद्यशास्त्रं, ततो भोगच्छिन्नः पश्चादन्यत्र गत्वा वैद्यशास्त्रं पुनरप्युज्ज्वाल्य समागतो भूयोऽपि राज्ञः समीपे भोगान् याचते, स च याचमानोऽपि न लभते एवं लोकोत्तरेऽप्युपनयभावना प्राग्वत् कर्तव्या ।। योधदृष्टान्तभावनार्थमाह-

[भा.२३२१] चुक्को जइ सरवेही तहावि पुलोएह से सरे गंतुं ।
अकलंक वा भग्गमभग्गाणि य धनूनि ।।

वृ- कोइ जोहो धनुव्वेयं अहिज्जंतो गुरुवएसेणं अब्भासेण य सो अपासंतो वि सद्देणं विंधति रन्ना कयपभूयवित्तिको कतो अन्नया तेन विसयपमाएण तं धणुव्वेयसत्थं, तं च अब्भासकरणं नासियं । अन्नया जुद्धकज्जे समावडिए न किंचि सक्केइ विंधिउं पराजिणिउं वा, रन्ना पुच्छितो, किमेयंति, सो भणइ-नत्थि मे पमादो, ताहे रन्ना भणियं, यदि नाम प्रमादाकरणत एषश्च स्वरवेधी चुक्को भुद्ध तथापि 'स' तस्य शरान् गत्वा प्रलोकयत, किं तत् शरजालमकलङ्कं सकलंकं वा, धनूंष्यपि तेषां भग्नान्यभग्नानि वा, दृष्टं शरजालं कलङ्कितं, धनूंषि च भग्नानि ततो ज्ञातं प्रमादतः सर्वं नष्टम् । कृतो वृत्तिव्यवच्छेदः सोऽन्यत्र गत्वा धनुर्वेदशास्त्रमुज्ज्वाल्य कृताभ्यासः पुनरागतो वृत्तिं याचमानोऽपि यावज्जीवं न लभते ।। एवं लोकोत्तरेऽप्युपनयः प्राग्वत् कर्तव्यः ।। फलकज्ञातमाह-

[भा.२३२२] फालहियस्स वि एवं जइ फलतो भग्गलुग्गो तो भोगी ।।
हीरति सव्वेसि विय न भोगोहारो भवे कज्जे ।।

वृ- कोइ अणेगवनफत्ति पत्त सागादि कत्तिए फलए केनावि निउत्तो, सो विसयपमाएणं जुयपमाएण वा न रक्खइ न य पाणिएणं पालेति, सो य फलहो लोगेण गोरूवेहि य उल्लुडितो सुक्को य न किंचि ततो वनफलादि आगच्छइ, फलहसामिणा भणियं किमियं सो भणइ - किं करेमि रक्खेमि ताव अहं नत्थि मे पमादो, ततो फलहसामिणा फलहो गवेसावितो । तथा चाह-फालकिकस्य फलकस्वामिन एवं पूर्वदृष्टान्तेषु राज्ञ इव फलगवेषणा चिन्ता जाता, यदि फलको भग्नलुग्नो भविष्यति, ततोऽस्य भोगो हरिष्यते । गाथायां वर्तमानसामीप्ये वर्तमानवद्वेति वचनतो भविष्यति वर्तमानः । कस्मात् हरिष्यते इत्याह कार्ये प्रयोजने समापतिते सर्वेषामपि कुटुम्बजनानां भोगाहारो न स्यादिति हेतोस्तत्र गवेषणे कृते फलको भग्नलुग्नो दृष्टः । भग्नो गोरुपादिभिर्विध्वंसनात्, लुग्नो जलसेचनाकरणतः ततस्तस्य वृत्तिश्छिन्ना । ततो नाहं भूय एवं करिष्यामीति याचमानोऽपि यावज्जीवं न लभते वृत्तिम् ।।

एवं लोकोत्तरेऽप्युपनयः कर्तव्यस्तमेवाह-

**[भा.२३२३]** एवं दप्पपनासिते न वि दिंति गणं पकप्पमज्झयणे ।
आबाहेणं नासिए गेलन्नादीण दलयंति ।।

वृ- एवं पूर्वोक्तदृष्टान्तप्रकारेण दर्पतो धर्मकथाध्ययनतः व्याकरणाध्ययनतो निमित्तशास्त्राद्यध्ययनतो वा इत्यर्थः । प्रणाशिते प्रकल्पनाम्न्यध्ययने यावज्जीवमाचार्यास्तस्या गणं न ददति । आबाधेन ग्लानत्वादिना पुनर्नाशिते भूयोऽप्युज्ज्वालिते दलयन्ति प्रयच्छन्ति ।। एतदेव भावयति-

**[भा.२३२४]** गेलन्ने असिवे वा ओमोयरियाए रायदुट्ठे वा ।
एएहिं नासियंमी संधेमाणीए दिंति गणं ।।

वृ- ग्लानत्वे वा जाते ग्लानप्रतिजागरणे वा कृते, अशिवे वा समुपस्थिते, अवमौदर्ये वा दुर्भिक्षे जाते भिक्षापरिभ्रमणतो राजद्विष्टे वा पलायनतो, यदि नष्टं प्रकल्पनामकमध्ययनं, तत एतैः कारणैः नाशितेऽपि पुनः सन्दधत्या गणं ददति प्रयच्छन्ति । तदेवं निर्ग्रन्थीसूत्रं भावितमधुना निर्ग्रन्थसूत्रं विभावयिषुराह-

**[भा.२३२५]** एमेव य साहूणं, वागरणनिमित्तछंदकहमादी ।
बिइयं गिलाणतो मे अद्धाणे चेव थूभे य ।

वृ- एवमेव अनेनैव प्रकारेण, साधूनामपि सूत्रं भावनीयं, नवरं तत्र प्रमादो व्याकरणनिमितच्छन्दःकथाद्यधीयानस्य प्रतिपत्तव्यः द्वितीयमाबाधलक्षणं ततो ग्लाने ग्लानप्रतिजागरणे वा, अवमौदर्ये, अशिवादिकारणतोऽध्वनि वा गमने, स्तूपे वा द्रष्टव्यम् । इयमत्र भावना, यदि व्याकरणाध्ययनतो निमितशास्त्राध्ययनतश्छन्दःशास्त्राध्ययनतो धर्मकथाध्ययनतः, आदिशब्दाद्विधामन्त्रादिव्याक्षेपतो यदि प्रकल्पाध्ययनं नाशितं, तदा पश्चादुज्ज्वालितेऽपि यावज्जीवं तस्मै गणं सूरयो न प्रयच्छन्ति । अथ ग्लानत्वाद्याबाधतो नाशितं, तदा तस्मिन् पुनरुज्ज्वालिते प्रयच्छन्ति प्रमाददोषाभावात् तत्र ग्लानत्वादिविषय आबाधः प्रतीतः । सम्प्रति स्तूपविषयमाह-

**[भा.२३२६]** महुरा खमगा य वनदेवय आउट्ट आण विज्जत्ति ।
किं मम असंजतीए अप्पत्तिय होहिती कज्जं ।।

**[भा.२३२७]** थूम वि उ घन भिच्छू विवाय छम्मास संघो को सत्तो ।
खमगुस्सग्गा कंपण खिंसण सुक्का कय पडागा ।।

वृ- मथुरायां नगर्यां कोऽपि क्षपक आतापयति, यस्यातापनां दृष्ट्वा देवता आद्दता तमागत्य वन्दित्वा

ब्रूते, यन्मया कर्तव्यं तन्ममाज्ञापयेद्भावानिति । एवमुक्ते सा क्षपकेण भण्यते, किं मम कार्यमसंयत्या भविष्यति, ततस्तस्या देवताया अप्रीतिकमभूत् । अप्रीतिवत्या च तयोक्तमवश्यं तव मया कार्यं भविष्यति, ततो देवतया सर्वरत्नमयः स्तूपो निर्मितः, तत्र भिक्षवो रक्तपटा उपस्थिताः अयमस्मदीयः स्तूपः, तैः समं संघस्य षण्मासान् विवादो जातः, ततः संघो ब्रूत-को नामात्रार्थे शक्तः, केनापि कथितं यथामुकः क्षपकः, ततः संगेन स भण्यते, -क्षपक कायोत्सर्गेण देवतामाकम्पय, ततः क्षपकस्य कायोत्सर्गकरणं देवताया आकम्पनम् सा आगता ब्रूते,-संदिशत किं करोमि क्षपकेण भणिता-तथा कुरुत यथा सङ्घस्य जयो भवति, ततो देवतया क्षपकस्य खिंसना कृता, यथा एतन्मया असंयत्या अपि कार्यं जातं एवं खिंसित्वा सा ब्रूते-यूयं राज्ञः समीपं गत्वा ब्रूत, यदरिक्तपटानां स्तूप ततः कल्ये रक्ता पताका दृश्यतां, अथास्माकं तर्हि शुक्ला पताका, राज्ञा प्रतिपन्नमेवं भवतु, ततो राज्ञा प्रत्ययिकपुरुषैः स्तूपो रक्षापितः रात्रौ देवतया शुक्ला पताका कृता, प्रभाते दृष्टा स्तूपे शुक्ला पताका, जितं संघेन ।

**मू. (१४३)** *थेराणं थेरभूमिपत्ताणं आयारपकप्पे नामं अज्झयणे परिब्भट्ठे सिया; कप्पइ तेसि संठवेत्ताण वा असंठवेत्ताण वा आयरियत्तं वा जाव गणावच्छेइयत्तं वा उद्दिसित्तए वा धारेत्तए व ।*

**[भा.२३२८]** एवं ताव पनट्ठे भिक्खुस्स गणो न दिज्जए सुत्ते ।
नट्ठसुए माहु गणं हरेज्ज थेरे अतो सुत्तं ॥

**वृ-** एवं उक्तेन प्रकारेण तावत्प्रनष्टे सूत्रे प्रकल्पनाम्न्यध्ययने भिक्षोर्गणो न दीयते । एवं स्थविरे आचार्ये नष्टश्रुते माहु निश्चितं गणं हरेदतः सूत्रं आह-अनेन सम्बन्धेनायातस्यास्य व्याख्या-स्थविराणां स्थविरभूमिं प्राप्तानामाचार्यपदप्राप्तानामाचारप्रकल्पो नामाध्ययनं परिभ्रष्टं स्यात् कल्पते तेषां सूत्रं संस्थापयतामसंस्थापयतां वा आचार्यत्वं वा यावत्करणादुपाध्यायत्वं इति परिग्रहः गणावच्छेदकत्वमुद्देष्टुं अनुज्ञातुं जीर्णमहत्वकारणतः सूत्रधरणशकनात् एष सूत्रसंक्षेपार्थः ॥ सम्प्रति भाष्यविस्तरः-

**[भा.२३२९]** सुत्ते अनिते लहुगा अत्थे अणिंते धारेंति चउ गुरुगा ।
सुत्तेण वायणा अत्थे सोही तो दोहणुन्नाया ॥

**वृ-** इदं सूत्रमापवादिकमुत्सर्गतः पुनः सूत्रे अनागच्छति यदि गणं धारयति तदा चत्वारो गुरुकाः आज्ञादयश्च दोषास्तस्मादुभयधरेण गणो धारयितव्यः । किं कारणमत आह-सूत्रेण आगच्छता वाचनां ददाति । अर्थेन आगच्छता प्रायश्चित्तस्थानमापन्नानां शोधिं करोति, तस्मात् द्वाभ्यामपि सम्पन्नो गणधारणेऽनुज्ञातः ॥

**[भा.२३३०]** अवि य विना सुत्तेणं ववहारे ऊ अपच्चतो होइ ।
तेन ऊभयधरो ऊ गणधारी सो अनुन्नातो ॥

**वृ-** अपि च विना सूत्रेण व्यवहारे क्रियमाणे अप्रत्ययो भवति । तस्माद्व्यवहारे अर्थनिर्देशं कुर्वता सूत्रमवश्यं उच्चारणीयं । यथा इदं सूत्रं । तस्मादयमेवात्र व्यवहारस्ततो भवति प्रत्ययस्तेन स गणधारी उभयधरोऽनुज्ञातः ॥

**[भा.२३३१]** असति कडजोगी पुन अत्थे ये तंमि कप्पति धारेउं ।
जुन्न महल्लो सुत्तं न तरति पच्चज्झुयारेउं ॥

**वृ-** उभयधरस्स असति अभावेयः कृतयोगी, कृतयोगी नाम यः पूर्वमुभयधर आसीत् नेदानीं, सोऽर्थे समागच्छति गणं धारयितुं कल्पते । अथ केन कारणेन तस्य सूत्रमनेशत् । अत आह- 'जुन्नमहल्लो'

इत्यादि । जीर्णो नामैको नो महान् यस्तरुणक एव सन् जरसा परिणतो जातः, नो जीर्णो महानिति द्वितीयः यो वृद्धोऽपि सन् दृढशरीरः, जीर्णोऽपि च महानपि च तृतीयः, नो जीर्णो नो महानिति चतुर्थः एष शून्यः। शेषाणां तु त्रयाणां एकतरो न शक्नोति प्रत्युच्चालयितुं अतः सूत्रं तस्य नश्यति ।।

**[भा. २३३२]** उभयधरंमि उ सीसे विज्जंते धारणा उ इच्छाए ।
मा परिभव नयनं वा गच्छे व अनिच्छमाणंमि ।।

**वृ-** उभयधरे सूत्रार्थधरे शिष्ये विद्यमाने स्वयं गणस्य धारणा इच्छया, स्वयं वा गणं धारयति तस्य वा शिष्यस्योभयधरस्य ददाति । स हि गणस्य शिष्यस्य वा भावं जानाति । यदि शिष्यस्य गणं दास्यामि तत एते मम परिभवं करिष्यन्ति, अथवा मां त्यक्त्वा गच्छमादाय गमिष्यति । यदि वा तमुभयधरं गणधरे स्थाप्यमानं गणो नेच्छति ततो मा परिभवं एते कार्षुर्नयनं वा मां त्यक्त्वाऽन्यत्र गच्छस्य कार्षीदिति हेतोरनिच्छति वा गणे तस्य गणं न ददाति किन्तु स्वयं धारयति । तत्र सूत्रमुतेनोभयसूत्रेण शिष्येण वाचयत्यर्थमात्मना ददाति, प्रागुक्तदोषाभावे तस्य गणं समर्पयति ।

**मू. (१४४)** *थेराणं थेरभूमिपत्ताणं आयारपकप्पे नामं अज्झयणं परिब्भट्ठे सिया; कप्पइ तेसि संनिसन्नाण वा संतुयट्टाण वा उत्ताणयाण वा पासिल्लयाण वा आयारपक्कं नामं अज्झयणं दोच्चंपि तच्चंपि पडिपुच्छित्तए वा पडिसारेत्तए ।*

**वृ-** थेराणं थेरभूमिपत्ताणं इत्यादि । स्थविराणां स्थविरभूमिं प्राप्तानामाचारप्रकल्पो नामाध्ययनं परिभ्रष्टं स्यात्कल्पते तेषां सन्निषिन्नानां वा निषद्यागतानां 'संतुयट्टाण' वेति सम्यक्त्वग्वर्तनेन स्थितानां उत्तानानां वा पासिल्लयाणवेत्ति पार्श्वतः संतिष्ठतां वा आचारप्रकल्पनामैकमध्ययनं द्वितीयमपि तृतीयमपि, आदिशब्दाच्चतुर्थमपि वारं प्रत्येष्टुं वा प्रतिसारयितुं वा अवमरत्नाधिकः प्रतिसारयति । स्थविराः प्रतीच्छन्ति । एष सूत्रसंक्षेपार्थः ।। अधुना भाष्यविस्तरः-

**[भा. २३३३]** एमेव वि इय सुत्तं कारणियं संति बले न हावेति ।
जं जत्थ उ कित्तिकम्मं निहाणसम ओमरायनिए ।।

**वृ-** यथा प्राक्तनं सूत्रं कारणियं संति बले न हावेति । स च प्रत्युज्ज्वालयन् सति विनयं न हापयति। अथ कोऽसौ विनयो यस्तेन सूत्रं प्रत्युज्ज्वालयता सति बले न हापयितव्य इत्यत आह । जं जत्थ उ इत्यादि यत् कृतिकर्म वन्दकं यत्र सूत्रेऽर्थे वाधिकृतं तत्रावमरत्नाधिके निधानसमे सूत्रमर्थं च प्रत्युज्ज्वालयता तत् न हापयितव्यं । निधानसमे इति वदता निधानदृष्टान्तः सूचितः । स चैवं यथा महति क्षुल्लके वा निधाने उत्खनितव्ये तस्य तदनुरूपचारमुत्खानको यदि करोति ततस्तमुत्खनितुं शक्नोति । अथ न करोति तदनुरूपमुपचारं तर्हि वृश्चिकाद्युपद्रवतो न शक्नोति । एवं यदि समरत्नाधिकेऽवमरत्नाधिके वा सूत्रमर्थं वा प्रत्युज्ज्वालयन् अपूर्वं वा पठन् तदनुरूपं विनयं न करोति, तदा निर्जरालाभस्तस्य नोपजायते, न च शास्त्रं स्थिरपरिचितं भवति, विभङ्गं वा तस्य ज्ञानं विनयभ्रंशितया प्रान्तदेवता कुर्यात्कलहं वा । एतदेवाभिधित्सुः प्रथमतः प्रायश्चित्तमाह-

**[भा. २३३४]** सुत्तंमि य चउ लहुगा, अत्थंमि य चउ गुरुं च गव्वेण ।
कितिकम्ममकुव्वंतो पावति थेरो सति बलंमि ।।

**वृ-** स्थविरः प्रत्युज्ज्वालयन्नपूर्वं पठित्वा सति बले यदि गर्वेण कृतिकर्म न करोति, तर्हि तत् अकुर्वन् सूत्रे सूत्रविषये चतुरो लघुकान् प्राप्नोति, अर्थे चतुर्गुरुकम्-

[भा.२३३५] उवयारहीनमफलं होइ निहाणं करेइ वाणत्थं ।
इय निज्जराए लाभो न होइ विब्भंग वलहो वा ।।

**वृ-** यथा उपचारहीनं निधानं अफलं भवति नोत्खनितं शक्यते इति भावः, अनर्थ वा करोति, वृश्चिकाद्युपद्रवकरणात् इत्येवमनेनैव दृष्टान्तप्रकारेण कृतिकर्माकरणे निर्जराया लाभो न भवति, प्रान्तदेवता कोपवशाद्विभङ्गो वा तस्मेपजायेत कलहो वा ।।

[भा.२३३६] दूरत्थो वा पुच्छइ, अहवा निसिज्झाए सन्निसन्नो उ ।
अच्चासन्न निविट्ठुट्ठिए य चउभंगो बंधव्वो ।।

[भा.२३३७] अंजलि पणाम अकरणं वि प्पेक्खंते दिसाहोउड्ढमुहे ।
भासंतं नुवउत्ते व हसंते पुच्छमाणे उ ।।

[भा.२३३८] एएसु उ सव्वेसु वि सुत्ते लहुतो उ अत्थे गुरुमासो ।
नाभीतोवरि लहुगा गुरुगमहो काप्यंकडुयणे ।।

**वृ-** दूरस्थितो वा पृच्छति अथवा निषद्यायां संनिषन्नः पृच्छति, शृणोतीति भावार्थः । यदि वा अत्यासन्न ऊरुणा ऊरुं संघृष्य शृणोति । निविष्टोत्थिते चतुर्भङ्गी बोद्धव्या, सा चैवं, निविष्टो निविष्टं पृच्छति, १ निविष्ट उत्थितं पृच्छति २, उत्थितो निविष्टं पृच्छति ३, उत्थित उत्थितं पृच्छति ४ ।। तथा अंजलेरकणम्, अर्थपरिसमाप्तौ प्रणामस्याकरणम्, तथा दिशोवि प्रेक्षमाणः पृच्छति, यदि वाऽधोमुख ऊर्ध्वमुखो वा शृणोति न गुर्वभिमुखः, अथवा येन तेन वा सह भाषमाणः शृणोति, अनुपयुक्तो वा शृणोति, हसित्वा पृच्छति ।। एतेषु सर्वेष्वपि स्थानेषु सूत्रे श्रूयमाणे प्रायश्चित्तं लघुको मासः, अर्थे गुरुमासः, । तथा नाभीत उपरि सूत्रं शृण्वतः कायकण्डूयने चत्वारो लघुकाः अर्थं शृण्वतश्चत्वारो गुरुकाः। नाभीतो ऽधस्तात् सूत्रश्रवणे कायकण्डूयने चत्वारो गुरुका, नवरं तपःकालयोरन्यतरेण गुरुकाः ।।

[भा.२३३९] तम्हा वज्जंतेनं ठाणाणेयाणि पंजलुक्कुडुणा ।
सोयव्व पयत्तेणं कितिकम्मं वा वि कायव्वं ।।

**वृ-** यस्मादेवमविनकरणे प्रायश्चित्तविधिः, तस्मादेतानि प्रागनन्तरमुपदर्शितानि स्थानानि वर्जयित्वा प्राञ्जलिना प्रकृताऽञ्जलिना उत्कुटुकेन प्रयत्नेनादरपरतया श्रोतव्यम्, कृतिकर्म चापि वन्दनमपि कर्तव्यम् । यद्यपि च वन्दनकेनोपस्थितं वाचनाचार्योऽनुजानाति तथापि क्षमाश्रमणं दत्वा कृतप्राञ्जलिना श्रोतव्यम् ।।

[भा.२३४०] तेन वि धारेयव्वं पच्छावि य उट्ठिएण मंडलीतो ।
वेडुइनिसन्नस्स व सारेयव्वं हवति भूयो ।।

**वृ-** तेनापि श्रोत्रा यत् व्याख्यानमण्डल्यां सूत्रमण्डल्यां वा श्रुतं तत् मण्डलीत उत्थितेन पश्चादपि धारयितव्यम्, तस्य च धारयत उपविष्टस्य ऊर्ध्वस्थितस्य निषन्नस्य वा क्वचित् स्खलनतो तेनापि वाचनाचार्येण भूयो भवति स्मारयितव्यं गमयितव्यम् ।।

[भा.२३४१] अह से रोगो न होज्ज तहि भासंत एगपासंमि ।
सन्निसन्नो तुयट्टो वा अत्थई अनुग्गह पवत्तो ।।

**वृ-** अथ से तस्य स्थविरस्य रोगो न भवेत्तर्हि व्याख्यानमंडल्या उत्थितो भाषमाणस्य अनुभाषमाणस्य चिन्तापयत इत्यर्थः, एकपार्श्वे तत्सेवाबुद्धया संनिषन्नः सम्यग् निषद्यागतस्त्वग्वर्तितो वा

भाषमाणस्यानुग्रहप्रवृत्तस्तिष्ठति ।। पर आह

[भा.२३४२] थेरस्स तस्स किं तू एद्दहेणं किलेसकरणेण ।
भन्नइ एगत्तुवयोग सद्धजणणं च तरुणाणं ।।

वृ- अथ तस्य स्थविरस्य जीर्णमहतः किमेतावन्मात्रेण क्लेशकरणेन । सूरिराह भण्यते, अत्रोत्तरं दीयते एवमाचारतस्तस्य सूत्रार्थाभ्यां सह एकत्वोपयोगोपयुक्तस्य तु सूत्रार्थाः सम्यग् लगन्ति तथा तरुणानां च श्रद्धाजननं कृतं भवति, तथा हि व्याख्यानमण्डल्या उत्थितमपि निजमाचार्यं जीर्णमहान्तमेवं विनयं कुर्वन्तं दृष्ट्वा चिन्तयन्ति । यद्यस्माकमाचार्यो जीर्णमहानप्येवं श्रुतस्य विनयं करोति ततोऽस्माभिस्तरुणैः सुतरां कर्तव्यः ।। आह-शिष्यो यथा जीर्णमहत आचार्यस्यानुग्रहः क्रियते यथानुभाषमाणस्य एकपार्श्वे सन्निषन्नस्त्वग्वर्तितो वा तिष्ठतु । एवमन्यस्यापि क्रियते ? क्रियते इति ब्रूमस्तथा चाह-

[भा.२३४३] सो उ गणी अगणी वा अनुभासंतस्स सुणति पासंमि ।
न वएइ जुन्नदेहो होउ बद्धासणो सुचिरं ।।

वृ- स जीर्णो महान् गणी आचार्य उपाध्यायो गणावच्छेदको वा अगणी वा अन्यो यः स्थाननियुक्तः सोऽनुभाषमाणस्य चिन्तापयत एकस्मिन् पार्श्वे सन्निषन्नस्त्वग्वर्तितो वा शृणोति, यतो न शक्नोति जीर्णदेही बद्धासनो भवितुं सुचिरं कालम् ।

मू. (१४५) *जे निग्गंथा निग्गंथीओ य संभोइया सिया, नो ण्हं कप्पइ अन्नमन्नस्स अंतिए आलोएत्तए। अत्थि या इत्थ केइ आलोयणारिहे; कप्पइ से तेसिं अंतिए आलोएत्तए; नत्थि या इत्थ केइ आलोयणारिहे, एव ण्हं कप्पइ अनमन्नस्स अंतिए आलोएत्तए ।*

[भा.२३४४] थेरो अरिहो आलोयणाए आयारकप्पितो जोग्गो ।
सा य न हइ विवक्खे नेव सपक्खे अगीएसु ।।

वृ- स्थविरः पूर्वसूत्रेऽभिहितः, स च आलोचनाया अर्हः, सोऽपि च योग्य आलोचनाया भवति आचारकल्पिक आचारप्रकल्पाभिधानाध्ययनधारी तत एवं सति सा आलोचना न विपक्षे नापि सपक्षे अगीतेष्वगीतार्थेषु भवति, तत्र संयताः संयतीनां विपक्षः, संयत्यः संयतानाम् सपक्षः, संयताः संयतानां संयत्यः संयतीनाम् ।। तत्र विपक्षे सपक्षे चाऽगीतार्थेष्वालोचनाप्रतिषेधार्थमधिकृतं सूत्रम् अनेन सम्बन्धेनायातस्यास्य व्याख्या-ये निर्ग्रन्था निर्ग्रन्थ्यो वा सांभोगिकाः स्युस्तेषां, नो ण्हं व्याक्यालङ्कारे, कल्पतेऽन्योन्यस्य परस्परस्यान्तिके आलोचयितुमगीतार्थत्वात् । अस्ति चेदत्र कश्चिदालोचनार्ह एवं सति कल्पते अन्योन्यस्यान्तिके आलोचयितुम्, एष सूत्रसंक्षेपार्थः ।। अधुना भाष्यविस्तरः-

[भा.२३४५] संभोइत्ति भणिते संभोगा छव्विहो उ आदीए ।
भेदप्पभेदतो वि य नेगविहो होति नायव्वो ।।

वृ- संभोइत्ति इति भणिते संभोगो विचार्यते, तत्रादौ संभोगः षड्विधो भवति । प्रभेदतोऽपि च, एकैकस्य भेदस्य प्रभेदतः पुनरनेकविधो भवति ।। तत्र प्रथमतः षड्विधमाह-

[भा.२३४६] ओह अभिग्गह दानग्गहणे अनुपालनाए उववाए ।
संवासंमि य छट्ठो संभोगविही मुणेयव्वो ।।

वृ- ओघे उपध्यादौ अभिग्रहे दानग्रहे अनुपालनायामुपपाते । एवमेते पञ्च संभोगा भवन्ति, षष्ठः

संभोगविधिः संवासे ज्ञातव्यः ।। तत्र यथोद्देशं निर्देश इति न्यायात् प्रथमत ओघसंभोगविधिमाह-

[भा.२३४७] ओघो पुन वारसहा उवधिमादि कमेण बोधव्वो ।
काय़व्व परूवणाया एतेसिं आनुपुव्वीए ।।

[भा.२३४८] उवहि सुय भत्तपाने अंजलिपग्गहेइ य ।
दावणा य निकाए य अब्भुट्ठाणेत्ति आवरे ।।

[भा.२३४९] कीकम्मस्स य करणे वेयावच्चकरणे इय ।
समोसरण सन्निसेज्जा कहाए य पबंधणा ।।

वृ- ओघसंभोगो द्वादशप्रकारः, तद्यथा-उपधिविषयः १, श्रुतविषयः २, भक्तपानविषयः ३, अञ्जलीग्रहविषयः ४, दवणाए त्ति दापना शय्याहारोपधिस्वाध्यायशिष्यगणानां प्रदापनं तद्विषयः ५, निकाय त्ति निकाचो निकाचनं च्छदनं निमंत्रणमित्येकार्थास्तद्विषयः ६, अब्भुट्ठाणेत्ति आवरे अपरेऽभ्युत्थानविषयः ७, कीकम्मस्स य इत्यादि कृतिकर्म वन्दनकं तत्करणविषयः ८, वैयावृत्यकरणविषयः ९, समवसरणविषयः १०, सन्निषद्याविषयः ११, कथाप्रबन्धनविषयश्च १२ तत्रोपधिसंभोगः षट्प्रकारस्तथा चाह-

[भा.२३५०] उवहिस्स य छ भेया उग्गम १ उप्पायणे २ सणासुद्धे ३ ।
परिकम्मण ४ परिहरणा ५ संजोगो ६ छट्ठओ होइ ।।

वृ- उपधेः उपधिसंभोगस्य षड् भेदा भवन्ति तद्यथा-उद्गमशुद्धः १, उत्पादनाशुद्धः २, एषणाशुद्धश्च ३, परिकर्मणासंभोगः ४, परिहरणासंभोगः ५, संयोगविषय षष्ठसंभोगः ६, तत्र यत्सांभोगिकस्सांभोगिकेण सममाधाकर्मादिभिः षोडशभिरुद्गमदोषैः शुद्धमुपधिमुत्पादयति एष उद्गमशुद्ध उपधिसंभोगः, अथाशुद्धमुत्पादयति तर्हि येन दोषेणाशुद्धमुत्पादयति तन्निष्पन्नं प्रायश्चित्तमापद्यते, तत्रापीयं व्यवस्था-अशुद्धग्राही सांभोगिकशिष्यमाणः सती मे प्रतिचोदनेति मन्यमानो मिथ्यादुष्कृतपुरस्सरं न पुनरेवं करिष्यामीति ब्रुवाणः प्रत्यावर्तते, तदा यत्प्रायश्चित्तमापन्नस्तद्दत्वा संभोग्यते। एवं द्वितीयवारं तृतीयवारमपि, चतुर्थवेलायां त्वावर्त्तस्यापि न संभोगः । अथ निष्कारणे अन्यसांभोगिकेण समं शुद्धमशुद्धं वोपधिमुत्पादयति तर्हि सोऽपि यदि शिक्षमाणः व्यावर्त्तते ततः संभोगविषयी क्रियते, अन्यथा प्रथमवेलायामपि तस्य विसंभोगः, एवं द्वितीयतृतीयवारमपि, चतुर्थवारमावर्तस्यापि नियमतो विसंभोगः । वारत्रयेऽपि तस्य प्रायश्चित्तं मासलघु कारणे त्वन्यसांभोगिकेणापि सममुपधिमुत्पादयन् शुद्धः । एवं पार्श्वस्थादिभिर्गृहिभिर्यथाच्छन्दैश्च सह वेदतव्यिम् । प्रायश्चित्तविधिरपितथैव, नवरं यथाच्छन्दे मासगुरु चतुर्गुरुकमित्यपरे, योऽपि पार्श्वस्थादेः सङ्घाटकं प्रयच्छति, तस्यापि मासलघु । तथा संयतीभिः संविग्नाभिरसंविग्नाभिर्वा सांभोगिकीभिरसांभोगिकीभिर्वा सममुद्गमेन शुद्धमशुद्धं चोपधिमुत्पादयतश्चतुर्गुरुकम् एतावत् एतत् पुरुषवर्गेऽभिहितं संयतीवर्गेऽपि द्रष्टव्यम् [१] एवं षोडशभिरुत्पादनादोषैर्दशभिरेषणादोषैः सांभोगिकेन सममुपधिमुत्पादयन् शुद्धः, विपर्यासे प्रायश्चित्तविधिः पूर्ववत् [२, ३] परिकम्मणत्ति परिकर्मणा नाम यदुपधिमुचितप्रमाणकरणतः संयतप्रायोग्यं करोति अत्र भङ्गाश्चत्वारस्तद्यथा-परिकर्मणा कारणे विधिना १, कारणेऽविधिना २, निष्कारणे विधिना ३, निष्कारणेऽविधिना ४ । अत्र प्रथमभङ्ग शुद्धः, द्वितीये मासलघु तपोगुरु, तृतीये मासलघु कालगुरुकं, चतुर्थे मासालघु द्वाभ्यां गुरु, संवङ्गिरन्यसांभोगिकैः समं चतुर्थेष्वपभिङ्गेषु मासलघु,

अत्रापि द्वितीयादिषु भङ्गेषु पूर्ववत् तपःकालविशिष्टता गृहस्थैः पार्श्वस्थादिभिः समं प्रत्येकं चतुर्लघुकम्, यथाच्छन्दैः समं चतुर्गुरुकम्, अत्रापि द्वितीयादिषु भङ्गेषु प्राग्वत् तपःकालविशिष्टता । तथा सांभोगिकीनां संयतीनामुपधिं विधिना संयतीप्रायोग्यं गणधरः परिकर्मयन् ददानश्च परिशुद्धः, अविधिना परिकर्मयतश्चतुर्गुरु, पार्श्वस्थादिसंयतीनां गृहस्थानां च कारणे विधिनेत्यादि भङ्गचतुष्टये प्रत्येकं चतुर्गुरु, द्वितीयादिषु भङ्गेषु तपःकालविशिष्टता प्राग्वत् [४] ।

तथापरिहरणा नाम परिभोगस्तत्रापि भङ्गचतुष्टयम्-कारणे विधिना १, काणेऽविधिना २, निष्कारणे विधिना ३, निष्कारणेऽविधिना ४ । तत्र प्रथमभङ्गे सांभोगिकैः सममुपकरणं परिभुञ्जानः शुद्धः, शेषेषु द्वितीयादिषु भङ्गेषु मासलघु तपःकालविशिष्टमं, असांभोगिकैः सममुपकरणं परिभुञ्जानस्य चतुर्ष्वपि भङ्गेषु मासलघु, द्वितीयादिषु तपःकालविशिष्टता, पार्श्वस्थादिभिर्गृहस्थादिभिश्च सममुपभुञ्जानस्य भङ्गचतुष्टयेऽपि प्रत्येकं चतुर्लघु, यथाच्छन्दैः संयतीभिर्गृहस्थाभिश्चतुर्गुरु, उभयत्रापि द्वितीयादिषु भङ्गेषु तपःकालविशिष्टता [५] संयोगो द्वयादिपदानां मीलनं, तत्र भङ्गाः षड्विंशतिस्तद्यथा-दश द्विकसंयोगाः, दश त्रिकसंयोगाः, पञ्च चतुष्कसंयोगाः, एकः पञ्चसंगः । तत्र दश द्विकसंयोगा इमे-सांभोगिकः सांभोगिकेन सममुद्गमेनोत्पादनया च शुद्धमुपधिमुत्पादयतीति प्रथमः, उद्गमेनैषणया च द्वितीयः, उद्गमेन शुद्धमुत्पादयति परिकर्मयति चेति तृतीयः, उद्गमेन शुद्धमुत्पादयति परिहरति चेति चतुर्थः, एते चत्वारोऽपि भङ्गा उद्गमपदममुञ्चता लब्धाः, एवमुत्पदनापदामोचनेन लभ्यन्ते त्रय, एषणापदामोचनेन द्वौ, परिकर्मणापरिहरणापदयोरेकः । दश त्रिकसंयोगा इमे-भोगिकः सांभोगिकेन सममुद्गमेनोत्पादनया एषणया च सुद्धमुत्पादयतीति प्रथमः, उद्गमेनोत्पदनया च शुद्धमुत्पादयति परकिर्मयति चेति द्वितीयः, उद्गमेनोत्पादनया च शुद्धमुत्पादयति परिहरति चेति तृतीयः, इत्याद्युपयुज्य वक्तव्यम् । एवं पञ्च चतुष्कसंयोगाः, एकः पञ्चकसंयोगश्च वक्तव्यः । एतेषु च षड्विंशतिभङ्गेषु सांभोगिकेन समं शुद्धः, असांभोगिकादिभिः सममसांभोगिकादिविषयं द्वयासंयोगनिष्पन्नं प्रायश्चित्तं तद्यथा-उद्गमनिष्पन्नमुत्पादनानिष्पन्नमित्यादि ।। उक्त उपधिसंयोगः, सम्प्रति श्रुतसंभोगादीनतिदेशत आह-

**[भा.२३५१]** एवं जहा निसीहे पंचम उद्देसए समक्खाउ ।
संभोगविही सव्वो, तहेव इहयं पवित्तव्वो ।।

**वृ-** एवं उक्तेन प्रकारेण यथा निशीथे निशीथाध्ययने पञ्चम उद्देशके सर्वश्रुतादिसंयोगनिष्पन्नं प्रायश्चित्तविषयं संभोगविधिः समाख्यातस्तथैवेहापि वक्तव्यः । स च ग्रन्थगौरवभयान्न शक्यते लिखितुमिति तत एवावधारणीयः ।। एष च संभोगविधिः पूर्वमस्मिन्नर्धभरते सर्वसविग्नानामेकरूप आसीत् । पश्चात्कालदोषत इमे सांभोगिका इमेत्वसांभोगिका इत प्रवृत्तम् । किं कारणमिति चेदत आह-

**[भा.२३५२]** अगडे भाउय-तिल-तंदुल य सरक्खे य गोणि असिवे य ।
अविनठे संभोगे सव्वे संभोइया आसी ।।

**वृ-** पूर्वमनिवष्टे संभोगे सर्वे संविग्नाः सांभोगिका आसीरन्, पश्चात्तु कालवैगुण्यतः सांभोगिकासांभोगिकविभागः । तत्र दृष्टान्तोऽवटो गाथायां जातावेकवचनमेवमुत्तस्त्रापि १ तथा द्वौ भ्रातरौ २ तिलाः ३ तन्दुलाः ४ सरजस्काः ५ गोवर्गश्चाशिवविषयः ६ ।। तत्रावटदृष्टातभावनार्थमाह-

**[भा.२३५३]** आगंतु-तद्दुत्थेण व दोसेन विनट्ठे कूवे तो पुच्छा ।
कउ आनीयं उदयं अविनट्ठे नासि सा पुच्छा ।।

**वृ-** एगस्स नगरस्स एक्कीए दिसाए बहवे महोदगा कूवा । तत्थ केइ आगंतुगेन लया विसाइणा दोसेन केई तदुत्थेण खारलोणविसयाधियासिरसंभवरूपेण विना । तत्थ केसु वि कूवेसु पाणियं पिज्जमाणं कुट्ठाइणा सरीरसंदूसणकरं हवइ, केई जीवंतकरा भवंति, केइ ण्हाणाय मणाइसु अविरुद्धा, केइ ण्हाणाइसु विरुद्धा, तत्थ बहुजणो एयद्दोसदुट्ठे तेमाउं आणिए पाणिए पुच्छइ, कउ आणियं । तत्थ जइ निद्दोसं तो परिभुंजंति, अह सदोसं तो वज्जंति । तत्थ वजिइ जाणं तेन सदोसमाणियं, ताह सो तओ फेडिज्जइ तज्जिज्जइ य । अह अयाणं तेनमाणियं तो वारिज्जइ मा पुनो आणिज्जासि । अक्षरगमनिका त्वयम्-आगन्तुकेन तदुत्थेन वा दोषेण कूपे कूपसंघाते विनष्टे सति ततस्तदनन्तरं यतस्ततोवा समानीते उदके लोकस्य पृच्छा प्रावर्तत, कुत आनीतमिदमुकमिति । अविनष्टे कूपसंघाते नासीत् सा पृच्छा । एष दृष्टान्तोऽयमर्थोपनयः-अविनष्टे संभोगे न सांभोगिकपरीक्षा आसीत्; अधुना दुःमानुभावतः केचित् चारित्रशरीरोत्तरगुणदूषका अभवन्, केचित् चारित्रजीवितव्यपरोपका:, केचित् संस्पर्शपरिभोगिनः, केचित् संस्पर्शतोऽपि विवर्जिताः, ततः परीक्षा [१] ।। अधुना भ्रातृदृष्टान्तमाह-

[भा.२३५४] भोइकुलसेवि भाउय दुस्सीलेगे तु जायतो पुच्छा ।
एमेव सेसएसु वि होइ विभासा तिलाईसु ।।

**वृ-** द्वौ भ्रातरौ भोजिकुलसेवकौ राजकुले अभ्यर्हितसेवकौ सर्वत्रावारितप्रसरौ, तयोः कनिष्ठोऽन्तःपुरे कृतानाचारो जातस्ततो राज्ञा प्रवेशो निवारितः । ज्येष्ठोऽपि च राज्ञोऽकथिते प्रवेशं न लभते, प्रतिहारेण तु कथिते राज्ञा पृच्छयते, क आगतो ज्येष्ठः कनिष्ठो वा, तत्र ज्येष्ठ इति कथिते स प्रवेश्यते । इत्थं पृ पृच्छा पूर्वं नासीत् । कालक्रमेण त्वेकस्मिन् कनिष्ठे दुःशीले जाते प्रावर्तत । उपनयभावना प्राग्वत् [२] तिलादिदृष्टान्तानाह-एमेवत्यादि, एवमेवानेनैव प्रकारेण शेषेष्वपि तिलादिषु दृष्टान्तेषु भवति विभाषा व्याख्यानं कर्तव्यम् । तच्चेदम् । पूर्वं सर्वेष्वपि आपणेषु अपूतिकास्तिला अदुष्टजन्मानस्तन्दुला विक्रयाय प्रसार्यन्ते स्म । कालदोषत एकेन वणिजा निकृतिबहुलेन पूतिकास्तिलाः प्रसारिताः । अपरेण तु दुष्टजन्मानस्तन्दुलास्ततो लोकस्य पृच्छा प्रावर्तत, कीदृशास्तवापणे तन्दुलाः । कीदृशा वा तिला इति पूर्वं नासीत् । उपनयः प्राग्वत् [३-४] ।। तथा एकस्मिन्नगरे एकस्यां दिशि बहूनि देवकुलानि तेषु सर्वेषु सरजस्का वसन्ति सुशीलास्तान् सर्वानपि भूयान् जनो निर्विशेषं पूजयति, श्वाल्केषुचिद्देवकुलेषु दुःशीला जातास्ततो निमन्त्रणवेलायां पृच्छा प्रवृत्ता कतमान्निमन्त्रयामि, पूर्वं त्वेवंरूपा पृच्छा नासीत् । उपनयः प्राग्वत् [४] ।। तथा एकस्मिन् ग्रामे महान् गोवर्गः । स कदाचिदशिवेन गृहीतस्ततस्तस्मात् ग्रामादीनीतासु गोषु लोकस्य पृच्छा अभवन् कुतो ग्रामादानीता कस्य वा गोवर्गस्येयमिति, पूर्वं तु नासीत् [६] ।। एवमत्रापि विनष्टे सभोगे संभोगिकः परीक्ष्य संभोज्यते । तथा चाह-

[भा.२३५५] साहम्मिय वइधम्मिय निधरिसभाणे तहेव कूवे य ।
गावी पुक्खरिणीया नीयल्लग सेव आगमने ।।

**वृ-** सधर्मता समानशीलधर्मता तां सम्यक्परीक्षया ज्ञात्वा संभुञ्जते, विधर्मता विगतधर्मशीलता तांज्ञात्वा परिवर्जयंति । यथा सुवर्णं निघर्षे निकषोपले परीक्ष्य यदि युक्तं ज्ञायते ततः प्रतिगृह्यते, अन्यथा तु परित्यज्यते । एवमज्ञातशीलोऽपि भाजनेन परीक्षणीयः । यदि भाजनस्य तलमघृष्टमुपकरणं वा विधिना सीवितं तत आलएण विहारेणमित्यादिवचनतः साधर्मिको ज्ञेयः शेषस्तु वैधर्मिकः । यथा वा कूपे यदि वा गोषु यथा वा पुष्करिणी यथा या निजकस्य भ्रातुः सेवकस्यागमने परीक्ष्य तथात्रापि परीक्ष्य च

संभोगविसंभोगी । उक्तः सप्रपञ्चः संभोगः । सम्प्रति येनाधिकारस्तमभिधित्सुरिदमाह-

[भा.२३५६] एएसिं कयरेणं संभोगेण तु होइ संभोगी ।
समणाणं समणीतो भन्नइ अनुपालणाए ओ ॥

वृ- एतेषामनन्तरोदितानां संभोगानां मध्ये कतरेण संभोगेण संभोगिन्य श्रमणानां श्रमण्यो भवन्ति । सूरिराह-भण्यते अनुपालनया अनुपालनारूपेण संभोगेन [संभोगः] । तदेवमुक्तसंभोगे ।

[भा.२३५७] आलोयणा सपक्खे परपक्खे चउगुरुं च आणादी ।
भिन्नकहादि विराधन दङ्कुण य भावसंबंधो ॥

वृ- आलोचना सपक्षे दातव्या । तद्यथा-निर्ग्रन्थो निर्ग्रन्थस्य पुरत आलोचयति निर्ग्रन्थी निर्ग्रन्थ्याः पुरतो, यदि पुनर्विपक्ष आलोचयति यथा निर्ग्रथो निर्ग्रन्थ्याः पुरतो, निर्ग्रन्थी वा निर्ग्रन्थस्य, तदा प्रायश्चित्तं चतुर्गुरुकं । न केवलं प्रायश्चित्तं चतुर्गुरुकं किन्त्वाज्ञादयश्च दोषाश्चशब्दो भिन्नक्रमः । स च तथैव योजितः कस्मादेवमत आह-'भिन्नकहादि' इत्यादि चतुर्थव्रतातिचारमालोचयन्त्याः संयत्या भिन्नकथादोषो भवति । चतुर्थव्रतातिचारकथनस्तस्याः कदाचिदालोचनाधारस्य भावभेदो भवतीत्यर्थः। आदिशब्दात् धृष्टीभूता सा याञ्चामपि कुर्यादिति परिग्रहः । एवं सति शीलविराधना । 'दङ्कुण य भावसंबंधो' दृष्टिविकारेण मुखविकारेण वा स वा सा वा भावं दृष्ट्वा मामिच्छतीति अभिप्रायं ज्ञात्वा सम्बन्धो घटना स्यात् ॥ एतदेव व्याख्यानयति-

[भा.२३५८] मूलगुणसु चउअथे वियडंअंते विराधना दुञ्जा ।
निच्छक्क दिट्ठिमुहरागतो य भावं वियाणंति ॥

वृ- मूलगुणेषु मध्ये चतुर्थे मूलगुणातिचारे विकटमाने आलोच्यमाने विराधना शीलस्य भिन्नकथादिना प्रागुक्तस्वरूपेण भवति । तथा निच्छक्का घृष्टा सती याञ्चां कुर्यात्, तथा दृष्टिरागतो मुखरागतो वा परस्य भावं विजानीतो यथा मामेष एषा वा इच्छतीति ततो घटना स्यात् । न केवलमेते विपक्षे आलोचायां दोषाः किन्त्विमेऽपि तानेवाह-

[भा.२३५९] अप्पच्चय निब्भयया पेल्लणया जइपगासणे दोसा ।
वयणी वि होइ गम्मा नियए दोसे पगासंति ॥

[भा.२३६०] वंदत वा उठे वा गच्छो तह लहुसगत्तनाणगणे ।
विगडिंत पंजलिउडं दङ्कुणुञ्जाह कुवियटु ॥

वृ- यतः संयत्याः पुरतः प्रकाशने आलोचनायामिमे दोषाः । तद्यथा-अप्रत्ययः किमेषा वराकी जानातीत्यवज्ञातो यत्किमपि सा प्रायश्चित्तं ददाति तत्र विश्वासाभावः । तथा भूयोऽपराधकरणे गुरुगरीयांसं दण्डं दास्यतीति महत्याशंका संयतीनां तु पुरुषस्य न भयमिति निर्भयता तदभावाच्च भूयो भूयोऽपराधकरणप्रवृत्तिः । तथा पेल्लणयेति यदि महत् प्रायश्चित्तं ददाति ततः संयतो ब्रूते-न भवत्येतत्प्रायश्चित्तं किन्त्विदमित्येवं प्रायश्चित्तस्य प्रेरणा ॥ तथा व्रतिन्यपि यदि संयतस्य पुरत आलोचयति ततः सा निजकान् दोषान् प्रकाशयन्ती गम्या भवति । यथा एकवारं तावदिदमाचरितं, भूयोऽपि सम्प्रति मया सह समाचर्यतां पश्चात्प्रायश्चित्तं दास्यते इति । द्वितीयगाथा सम्प्रदायात् व्याख्येया । यद्येवं तर्हि कथं पूर्वमार्यिकाः च्छेदश्रुतमधीयेरन्, कथं वालोचना दद्युत्तरमाह-

[भा.२३६१] ततो जाव अज्जरक्खिय आगमववहारिणो वियाणित्ता ।

न भविस्सति दोसोत्ति तो वायंती उ च्छेदसुयं ।।

**वृ-** यावदार्यरक्षितास्तावदागमव्यवहारिणोऽभूवन् । ते चागमव्यवहारबलेन विज्ञाय यथा एतस्याश्छेदश्रुतवाचनायां दोषो न भविष्यतीति संयतीमपि च्छेदश्रुतं वाचयन्ति स्म ।।

**[भा.२३६२]** आरेणागमरहिया मा विद्दाहिंति तो न वाएंति ।
तेन कहं कुव्वंतं सोहिं तु अयाणमानीतो ।।

**वृ-** आर्यरक्षितादारात् आगमरहितास्ततस्ते मा च्छेदश्रुताध्ययनतः संयत्यो विद्रास्यन्ति विनक्ष्यन्तीति हेतोश्छेदश्रुतानि संयतीर्न वाचयन्तीति अत्राह-तेन श्रुताध्ययनाभावेन कथं ताः संयत्योऽजानानाः शोधिं कुर्वन्तु । अत्राचार्य आह-

**[भा.२३६३]** तो जाव अज्जरक्खिय सट्ठाणे पगासयंसु वइणीतो ।
असतीए विवक्खंमि वि एमेव य होंति समणा वि ।।

**वृ-** यतः पूर्वमागमव्यवहारिणः स्युः च्छेदश्रुतं च संयत्योऽधीयेरन् ततो यावदार्यरक्षितास्तावत् व्रतिन्यः स्वस्थाने स्वपक्षे संयतीनां प्रकाशने प्रकाशनामकार्षुः । स्वपक्षाभावेऽपि विपक्षेऽप्या-लोचितवत्यः श्रमण्यः । एवमेव श्रमणा अपि भवन्ति ज्ञातव्याः किमुक्तं भवति ? श्रमणा अपि सपक्षे आलोचितवन्तः । तदलाभे विपक्षेऽपि श्रमणीनां पार्श्वे इत्यर्थः दोषाभावात्, आगमव्यवहारव्यवहारिभिर्हि दोषाभावमवबुध्य च्छेदश्रुतवाचना संयतीनां दत्ता नान्यथेति, आर्यरक्षितादारतः पुनः श्रमणानामेव समीपे आलोचयंति श्रमण्योऽपि श्रमणानामगमव्यवहारच्छेदाद् । अत्रैव परमतमाशंक्य दूषयति ।।

**[भा.२३६४]** मेहुणवज्जं आरेण केइ समणेसु ता पगासंति ।
तं न जुज्जइ जम्हा लहुसगदोसा सपक्खे वि ।।

**वृ-** आर्यरक्षितादारतः श्रमणेषु श्रमणानां पार्श्वे ताः श्रमण्यः प्रकाशयन्त्यालोचयन्ति मैथुनवर्जं, मैथुनं पुनः श्रमण्यः श्रमणीनामेव सकाशे शालोचयन्ति इति केचिद् व्याचक्षते, तत्तु न युज्यते यस्माल्लघुस्वकदोषाः सपक्षेऽपि किमुक्तं भवति ? श्रमण्योऽपि स्वकलघुदोषतस्तुच्छत्वरूपस्वक-दोषपरिश्रिवित्वं कुर्युः परिभवं वा समुत्पादयेयुः । तस्मान्मैथुनमपि श्रमणानामेवान्तिके विकटनीयम् ।

**[भा.२३६५]** असती कडजोगी पुन मुत्तूणं संकियाइं ठाणाइं ।
आइन्ने धुवकम्मिय तरुणी थेरस्स दिट्ठिपहे ।।

**वृ-** आर्यरक्षितकालेऽपि यदि संयत्या मूलगुणापराध आलोचयितव्यस्तर्हि संयत्याः सकाशे आलोच्यते । तस्यासति अभावे यः कृतयोगी सूत्रतोऽर्थतश्च च्छेदग्रन्थधरः स्थविरस्तस्य समीपे आलोचयति । नवरं शङ्कितानि स्थानानि वक्ष्यमाणानि शून्यगृहादीनि मुक्त्वा किन्त्वाचीर्णे उचिते प्रदेशे आलोचयितव्यम् । यत्र ध्रुवकर्मिको दृष्टिपथे वर्तते दृष्ट्या पश्यति, न तु शृणोति, तत्र नवनिकान्तरिता आलोचयति । तरुणी थेरस्सेत्येष तृतीयभङ्ग उपात्तः । स च शेषभङ्गानां त्रयाणामप्युपलक्षणं ते चेमे स्थविरा स्थविरस्यालोचयति । स्थविरा तरुणस्यालोचयति । तरुणी स्थविरस्यालोचयति । तरुणी तरुणस्य ।। यदुक्तं मुक्त्वा शङ्कितानि स्थानानि, सम्प्रति तान्येवोपदर्शयति-

**[भा.२३६६]** सुन्नघर देउलऽऽआणरन्नपच्छन्नुवस्सयस्संतो ।
एयविवज्जे ठायंति तिन्नि चउरो हवा पञ्च ।।

**वृ-** शून्यगृहं देवकुलं उद्यानमरण्यं प्रच्छन्नं च स्थानं तथा उपाश्रयस्यान्तर्मध्ये एतद्विवर्जे

एतद्विरहिते प्रदेसे आलोचना निमित्तं तिष्ठन्ति । ते च जघन्यतस्त्रयो यदि वा चत्वारोऽथवा पञ्च । ते च त्रिप्रभृतयो वक्ष्यमाणभङ्गकानुसारेण प्रतिपत्तव्याः । भङ्गकानेवाह-

[भा.२३६७] थेरतरुणेसु भंगा चउरो सव्वत्थ परिहेदिट्ठिं ।
दोण्हं पुन तरुणाणं थेरे थेरी य पच्चुरसं ।।

वृ- स्थविरतरुणेषु भङ्गाश्चत्वारस्ते च प्रागेवोपदर्शिताः । स्थविरः स्थविरस्यालोचयतीत्यादि । तत्र यदि जवनिकाया अवकाशो नास्ति ततः सर्वत्र चतुर्ष्वपि भङ्गेषु दृष्टिं परिहरेत् । भूमिगतदृष्टिका सती आलोचयेत् । यथा आलोचनार्हः शृणोति, तत्र चतुर्थभङ्गे द्वयोस्तरुणयोः स्थविरः स्थविरा च प्रत्युरसमिति प्रत्यासन्नौ सहायौ दीयेते, येन परस्परं तौ दृष्टिं न बध्नीतो नापि मुखविकारं कुरुतः । एवमस्मिन् चतुर्थे भङ्गे चत्वारो भवन्ति ।।

[भा.२३६८] थेरो पुन असहायो निग्गंथी थेरिया वि ससहाया ।
सरिसवयं च विवज्जे असती पंचमं कुज्जा ।।

वृ- तृतीयभङ्गे पुनः स्थविरोऽसहायोऽपि भवतु, तरुण्याः पुनः स्थविरा सहाया दीयते । द्वितीयभङ्गे निर्ग्रन्थी स्थविरापि ससहाया कर्त्तव्या । तरुणस्यालोचनार्हस्य सहायोऽस्तु वा न वा न कश्चिद्दोषः । एवं च तृतीये द्वितीये च भङ्गे त्रय जना भवन्ति । तथा सदृशवयो नियमतः सहायानां विवर्जयेत् तदसंभवे सदृशवया अपि भवेत् । तत्र प्रथमभङ्गे चतुर्थभङ्गे वा सदृशवयः सहायसंभवे पञ्चमे क्षुल्लकं क्षुल्लकां वा पटुकां कुर्यात् ।।

[भा.२३६९] ईसिं अन्नोयत्ता ठिया [ठविया] उ आलोयए विवक्खंमि ।
सरिपक्खे उक्कुडुओ पंजलिविट्ठो वणुन्नाती ।।

वृ- विपक्षे श्रमणस्य समीपे श्रमणी आलोचयति । ईषदवनता ऊर्ध्वस्थिता । सादृशपक्षे पुनः श्रमणः श्रमणस्य पार्श्वे पुनरुत्कुटुकः कृतप्राञ्जलिरालोचयति । अथ सोऽर्शोव्याधिपीडितः ततोऽनुज्ञापनां कृत्वा अनुज्ञातः सन् निषद्यायामुपविष्ट आलोचयति ।।

[भा.२३७०] दिट्ठीए होंति गुरुगा सविकाराउ सरत्ति सा भणिया ।
तस्स विवड्ढिते रागे तिगिच्छ जयणाए कायव्वा ।।

वृ- यो दृष्ट्या दृष्टिं बध्नाति, तस्य दृष्टौ सविकारायां भवन्ति प्रायश्चित्तता चत्वारो गुरुकाः, तत्र ये ते द्वितीयका दत्तास्ते यदि एकतरं सविकारं पश्यन्ति तत आलोचनातोऽपसारयन्ति यथाऽपसरतापसरत यूयं, न किमप्यालोचनया प्रयोजनमिति । अथ सा निर्ग्रन्थी स्वभावत एवोरालशरीरा सविकारा दृष्ट्वा अपसरेत्ति भणिता सती अपसृता तथापि तस्यालोचनाचार्यस्य यदि तस्या उपरि विवर्द्धितो रागस्तर्हि तस्मिन् सति यतनया चिकित्सा कर्तव्या । तामेव यतनामाह-

[भा.२३७१] अन्नेहिं पगारेहिं जाहे नियत्तेउ सो न तीरति उ ।
घेत्तूणाभरणाइ तिगिच्छ जयणाए कायव्वा ।।

वृ- यदा अन्यैः प्रकारैस्तं भावं निवर्तयितुं न शक्नोति तदा तस्याः संयत्या आभरणानि वस्त्राणि गृहीत्वा यतनया चिकित्सा कर्तव्या । एनामेवाह-

[भा.२३७२] जारिसिसिवएहिं ठिया तारिसएहिं तमस्सती वरिया ।
संभलि विनोयकेयण चेलयणं चिहुरगंडेहिं ।।

**वृ-** यादृशैः सिववैर्वस्त्रैः प्रावृत्तः सा संयती उपविष्टा दृष्टा तादृशैर्वस्त्रैस्तमो ऽन्धकारमस्या अस्तीति तमस्विनी रात्रिस्तस्यां तरुणसाधुर्वस्त्रैः प्रावृत्तः क्रियते । ततः संभलिति दूती प्रेष्यते । ततो विनायिनूको नरविहीनो यत्र को निवासो गृहं इत्यर्थः, तत्र केतनं संकेतनं सङ्केतो दीयते, दत्वा च स तत्र स्थितस्तावत्तिष्ठति, यावत् स तरुणसाधुः संयतीनेपथ्योपेत आगच्छति, तस्मिन्नागते चिहुरेषु केशेषु गंडयोश्च दिल्लनं क्रीडनं करोति, तत्र यदि सा संयती निवर्तते तर्हि सुंदरं, अथ न तिष्ठति तर्हि स संयतीनेपथ्योऽपसार्यते । प्रकारान्तरमारभ्यते । तदेव प्रकारान्तरमाह-

**[भा.२३७३]** अहवा वि सिद्धपुत्तिं पुव्वं गमेऊन तीय सिवएहि ।
आवरिय कालियाए सुन्नागारादि संमेला ।।

**वृ-** अथवेति प्रकारान्तरद्योतने पूर्वं सिद्धपुत्रीं गमयित्वा तस्याः संयत्याः सिवयैरावृत्य कालिकायां रात्रौ शून्यगृहादिषु तथा सहतस्य संमेलः सङ्गमः कर्तव्यः । सम्प्रति यादृशा उत्सर्गत आलोचनार्हास्तादृशानभिधित्सुराह-

**[भा.२३७४]** गीयत्था कयकरणा पोढा, परिणामिया य गंभीरा ।
चिरदिक्खिया य वुड्ढा जईण आलोयणा जोगा ।।

**वृ-** गीतार्थाः सूत्रार्थतदुभयनिष्णातत्वात्, कृतकरणा अनेकवारमालोचनायां सहायीभवनात्, प्रौढाः समर्थाः सूत्रतोऽर्थतश्च प्रायश्चित्तदाने पश्चात्कर्तुमशक्यत्वात्, परिणामिका नापरिणामिका अतिपरिणामिका वा, गंभीरा महत्यप्यालोचकस्य दोषे श्रुते अपरिश्राविणः, चिरदीक्षिताः प्रभूतकं प्रव्रजिता, वृद्धाः श्रुतेन पर्यायेण वयसा च महान्त, एवंभूता यतीनां साधूनामुपलक्षणमेतत् संयतीनां चालोचनायोग्याः ।

**मू. (१४५)** *जे निग्गंथा य निग्गंथीओ य संभोइया सिया, नो ण्हं कप्पइ अन्नमन्नेणं वेयावच्चं कारवेत्तए। अत्थि या इत्थ ण्हं केइ वेयावच्चकरे, कप्पइ ण्हं तेनं वेयावच्चं करावेत्तए; नत्थि याइ ण्हं केइ वेयावच्चकरे, एव ण्हं कप्पइ अन्नमन्नेणं वेयावच्चं कारवेत्तए।*

**वृ-** ये निर्ग्रन्था निर्ग्रन्थ्यश्च सांभोगिकास्तेषां नो, ण्हमिति वाक्यालङ्कारे, कल्पते अन्योन्यस्य वैयावृत्त्यं कारयितुं, अस्ति कश्चित् वैयावृत्त्यकरस्ततः कल्पते तं वैयावृत्त्यं कारयितुं, नास्ति कश्चित् वैयावृत्त्यकरः एवं सति कल्पते अन्योन्यस्य वैयावृत्त्यं कारयितुमिति सूत्रसंक्षेपार्थः ।। अधुना भाष्यविस्तरः-

**[भा.२३७५]** आलोयणाए दोसा वेयावच्चे वि हुंति तह चेव ।
नवरं पुन नाणत्तं, बितियपदे होइ कायव्वं ।।

**वृ-** ये एव विपक्षे आलोचयतां दोषा उक्ताः परस्परं वैयावृत्त्येऽपि त एव दोषा भवन्ति । ये चाभ्यधिकास्तेऽनन्तरगाथायां वक्ष्यन्ते, नवरं पुनर्नानात्वं द्वितयपदे अपवादपदे भवति कर्तव्यं । तत्राभ्यधिकान् अभिधित्सुराह-

**[भा.२३७६]** उउभयमाणसुहेहिं देहसहावानुलोमभुत्तेहिं ।
कढिणहिययाण वि मणं चंकल अचिरेण कइयविया ।।

**वृ-** ऋतौ ऋतौ यैर्भज्यमानैः सेव्यमानैर्भज सेवायामिति वचनात् सुखं जन्यते तानि ऋतुभज्यमानसुखानि तैस्तथा देहः शरीरं तस्य स्वो भावः स्वरूपं देहस्वभावस्यानुलोमान्यकूलानि यानि तैर्वैयावृत्त्यं कुर्वत्यः संयत्यो ये संयतीभिरानीतं भुञ्जते तेषां कठिहृदयानामपि धृतिबलिष्टानामपि

संयमात्मनोऽचिरेण कालेण वक्तव्यांति वा[व्या]धयन्तीत्यर्थः । कथंभूता इत्याह- कैतविक्यः कैतवेन कपटेनान्यन्मनस्यन्यद्वाचि इत्यादिलक्षणेन निवृत्ताः कैतविक्यः, सम्प्रति द्वितीयपदे विपक्षेऽपि वैयावृत्त्ये करणे युक्तिमुपन्यस्यति ।।

**[भा.२३७७]** जहा चेव य बितियपदे लभंति आलोयणं तु जयणाए ।
एमेव य बिइयपदे वेयावच्चं तु अन्नोन्नं ।।

**वृ-** यथा चैव द्वितीयपदेऽपवादपदे विपक्षेपि यतनया संयत्यः श्रमणानां पार्श्वे आलोचनां ददति । एवमेव द्वितीयपदेऽपि अन्योन्यस्मिन् परस्परवैयावृत्यमपि कुर्वन्ति । तदेव द्वितीयपदमाह-

**[भा.२३७८]** भिक्खू मयण च्छेवग एएहिं गणो उ होज्ज आवन्नो ।
वायपराइउ वा से संखडिकरणं च विच्छिन्नं ।।

**वृ-** भिक्षूपासकः कोऽपि विषमिश्रं भोजनं ददाति, मदनं मदनकोद्रवकूरं वा प्रतिलाभयेत् । च्छेवगत्ति मारिर्वा सकलस्यापि साधुगणस्योपस्थिता एतैः कारणैर्गण आपन्नो विपन्नो भवति । तत्र प्रथमतो भिक्षुपासकस्य प्रतिनिविष्टस्य विषमिश्रभोजनदानं भावयति । कोऽप्युपासको भिक्षुपासको बहुजनमध्ये वादे पराजितस्ततः स प्रतिनिविष्टो जातः । स च कैतवेनाचार्याणां समी सम्यगुपस्थितः कथय मे भगवन्नार्हतं धर्ममाचार्येण कथितस्ततः स कैतवेन ब्रूते । अद्यप्रभृति ममार्हतो धर्मो मया युष्मत्समीपे गृहीत एवमुक्त्वा आचार्यान् विज्ञपयति । यथा मया भिक्षूणामर्थाय विस्तीर्णं संखडिकरणं कृतं प्रभूतं परमान्नमुपस्कृतं कारितमित्यर्थः । तन्मा असंयतास्ते भुञ्जीरन्निति साधूनां प्रयच्छामि । अनुगृहीत मां यूयमिति ।। एवमुक्ते साधवश्चिन्तयन्ति-सत्यमेतत् यदेवं ब्रूते ततो गृह्णीम इति । ततस्तेषु गतेषु तस्मिन् परमान्ने विषं क्षिप्तं साधूनां पर्याप्तं दत्तं । तच्च साधुभिराहारितं तेन सर्वे पतिता यदि वा तत्प्रदत्तं मदनकोद्रवकूरं भुक्त्वा पतिताः एतदेवाह-

**[भा.२३७९]** कतियवयधम्मकहाए वेति भिक्खुगाणट्ठा ।
परमन्नमुवक्खडियं मा जाउ असंजओति मुहाइं ।।

**[भा.२३८०]** तं कुणह उग्गहं मे साहुजोग्गेण एसणिज्जेणं ।
पडिलाभणा विसेणं पडिया पडिती य सव्वेसिं ।।

**वृ-** कैतवेन धर्मकथायां कथितायामावृत्तो ब्रूते मया भिक्षुकाणामर्थाय परमान्नमुपस्कृतं कारितं तन्मा असंयतमुखानि यातु तस्मात् कुरुत मे साधुयोग्येनैषणीयेनानुग्रहमेवमुक्ते गतेषु साधुषु ये पापीयसा विषेण विषमिश्रेण परमान्नेन प्रतिलाभना कृता यदि वा मदनकोद्रवकूरेण सा वसत्यागतानां साधूनां मुखेषु पतिता ततः सर्वेषां पतितिर्मरणमभूत् ।

**[भा.२३८१]** आयंबिलखमगासइ लद्धाण चरंतएण उ विसेण ।
बिइयपदे जयणाए कुणमाणि इमाउ निद्दोसा ।।

**वृ-** न च तत्र कोऽपि क्षपक आचाम्लो वा आसीत् यो विषादुद्धरति ततः क्षपकानामाचमाम्लानां वासत्यभावे तेषां च साधूनां चरता संचरिष्णुना विषेण लब्धां मृतानामित्यर्थः । मार्या वा समुपस्थितया मृतानां द्वितीयपदे इयं संयती यतनया वैयावृत्त्यं कुर्वाणा निर्दोषा ।

कीदृशी पुनर्वैयावृत्त्यकरणे योग्येत्यत आह-

**[भा.२३८२]** संबंधिनी गीयत्था ववसाया थिरत्तणे कयकरणा ।

चिरपव्वइया य बहुस्सुया परिणामिया जाव ।।

[भा.२३८३] गंभीरा मद्दविया मियवादी अप्पकोउहल्ला य ।
साहुं गिलाणगं खलु पडिजागति एरिसी अज्जा ।।

वृ- या आर्या ग्लानस्य प्रतिजाग्रमाणस्य भगिन्यादिनात्रकेण सम्बन्धिनी, तथा गीतार्था एषणीयानेषणीयविधौ सम्यक् कुशला तथा व्यवसायिनी, या च स्थिरत्वे वर्तते स्थिरा इत्यर्थः तथा कृतकरणा, चिरपव्वइया, बहुश्रुता, तथा या परिणामिकी, गंभीरा, मार्दविता संजातमार्दवा, मितवादिनी, अल्पकुतूहला, ईदृशी आर्या गणाभावे ग्लानं खलु प्रतिजागर्ति । सम्प्रति व्यवसायिन्यादि -

[भा.२३८४] ववसायी कायव्वे थिरा उ जा संजमम्मि होइ दढा ।
कयकरणाजीए बहुसो वेयावच्चा कया कुसला ।।

वृ- या कर्तव्ये व्यवसायाधिकारिणी नालस्येनोपहता तिष्ठति साध्यवसायिनी सा संयमे भवति दृढा सा स्थिरा यया बहुशो वैयावृत्यानि कृतानि सा कृतकरणा कुशला इत्यर्थः ।

[भा.२३८५] चिरपव्वइय समाणं तिण्हवरिं बहुस्सुया पकप्पधरी ।
परिणामिय परिणामं जा जाणइ पोग्गलाणं तु ।।

वृ- चिरप्रव्रजिता नाम या तिसृणां समानां वर्षाणामुपरि, या प्रकल्पधरी सा बहुश्रुता, तया पुनः पुद्गलानां विचित्रं परिणामं जानाति सा परिणामिकी ।।

[भा.२३८६] काउं न उत्तुणई, गंभीरा, मद्दविअ विम्हइया ।
कज्जे परिम्मियभास मियवादी होइ अज्जा उ ।।

वृ- या वैयावृत्त्यं कृत्वा न उत्तुणइ गर्वबुद्धया न प्रकाशयति सा गंभीरा, मर्दविनी अविस्मयिता, तथा कार्ये परिमितभाषिणी मितवादिनी ।

[भा.२३८७] कक्खंत गुज्झादी न निरक्खे अप्पकोउहल्ला य ।
एरिसिगुणसंपन्ना, साहूकरणे भवे जोग्गा ।।

वृ- या कक्षान्तरे गुह्यादीनि न निरीक्षते सा भवत्यल्पकुतूहला ईदृशगुणसम्पन्ना साधुकरणे साधुवैयावृत्त्यकरणे भवत्यार्या योग्या, सम्प्रति वैयावृत्त्यकरणविधानमाह ।

[भा.२३८८] पडिपुच्छिऊण विज्जे, दुल्लभ दव्वंमि होइ जयणाओ ।
विसघाई खलु कणगं, निहि जोणीपाहुडे सड्ढे ।।

वृ- प्रतिपृच्छय वैद्यान् यदि दुर्लभद्रव्येण प्रयोजनं जातं, ततस्तस्मिन् उत्पाद्ये भवति वक्ष्यमाणा यतना तामेवाह- विसघाईइत्यादि विषघाति खलु कनकं विषेण चोपहताः साधवस्तिष्ठन्ति । ततः सुवर्णेन प्रयोजनं जातं । तत्र यदि ज्ञानमयेन निधिर्निखातो ज्ञायते । तर्हि तमुत्खन्य यावता प्रयोजनं तावद्गृह्णाति, शेषं तथैव स्थापयति । अथ निधिपरिज्ञा नास्ति, तर्हि योनिप्राभृतोक्तेन प्रकारेणोत्पादयेत् । अथ योनिप्राभृतमपि नास्ति तर्हि श्राद्धान् श्रावकान् याचते ।।

[भा.२३८९] असतीए अन्नलिंगं तं पि जयणाए होइ कायव्वं ।
गहणे पन्नवणे वा, आगाढे हंसमादीवि ।।

वृ- अथ श्राद्धा अपि तादृशा न सन्ति, ये सुवर्णं याचितं ददति, ततस्तेषां श्राद्धानामसति अभावे आत्मना ग्रहणाय प्रज्ञापनाय च तत्रान्यदर्चितं लिंगं तदपि यतनया कर्त्तव्यं । सा चेयं

पूर्वमगारस्त्रीलिङ्गेनोत्पादयति । तथाप्यनुत्पत्तावर्चितलिङ्गेन तेनाप्युत्पादनाशक्तौ हंसादि वा यन्त्रमयं कृत्वा तेनोत्पादयेत् । यथा कोक्कासो यंत्रमयान् कापोतान् कृत्वा शालिमुत्पादितवान् । एवं तावन्निर्ग्रन्थी निर्ग्रन्थस्य वैयावृत्त्यं करोत्येवं संयतोऽपि संयत्या ग्लानाया वैयावृत्त्यं करोति-

**मू. (१४७)** *निग्गंथं च नं राओ वा वियाले वा दिहपड्डो लूसेज्जा; इत्थी वा पुरिसस्स ओमावेज्जा पुरिसो वा इत्थीए ओमावेज्जा । एवं से कप्पइ, एवं से चिट्ठइ, परिहारं च से न पाउणइ-एस कप्पे थेरकप्पियाण एवं से नो कप्पइ, एवं से नो चिट्ठइ, परिहारं च नो पाउणइ-एस कप्पे जिणकप्पियाणंति बेमि ।।*

**[भा.२३९०]** पडिसिद्धमणुन्नायं वेयावच्चं इमं खलु दुपक्खे ।
स चेवय समणुन्ना, इहंपि कप्पेसु नाणत्तं ।।

**वृ-** अनन्तरसूत्रे विपक्षे वैयावृत्त्यकरणं प्रतिषिद्धं । तच्चेदमं-वैयावृत्त्यं खलु पुनर्द्विपक्षे परपक्षे चेत्यर्थः । सूत्रेणैवानुज्ञानात् । अत्थियाइण्ह केई वेयावच्चकरे कप्पतिण्हं वेयावच्चं करावित्तए इति वचनात् । सा च समनुज्ञा वैयावृत्त्य समनुज्ञा इहापि अस्मिन्नपि सूत्रेऽभिधीयते । केवलं कल्पयोन-नात्वमधिकमित्येष सूत्रसम्बन्धः । पुनः प्रकारान्तरेण सम्बन्धमाह-

**[भा.२३९१]** अत्थेण व आगाढं, भणिउ इहमवि या होइ आगाढं ।
अहवा अतिप्पसत्तं तेन निवारेइ जिनकप्पे ।।

**वृ-** वा शब्दः पक्षान्तरद्योतने पूर्वसूत्रेऽर्थेऽनागाढं भणितं सूचितं, तथा घागाढे प्रयोजने समुत्पन्ने संयती संयतस्य वैयावृत्त्यं कुर्वती समनुज्ञाता नान्यथा, । इहपि च भवत्यागाढं प्रयोजनमधिकृत्य वैयावृत्त्यकरणमिति सम्बन्धः । अथवातिप्रसक्तं खलु वैयावृत्त्यकरणं, तेन जिनकल्पे निवारयति ।।

**[भा.२३९२]** सुत्तम्मि कड्डियम्मि वोच्चत्थ करेंति चउगुरू होंति ।
आणादिणो य दोसा विराधना जा भणिय पुव्विं ।।

**वृ-** सर्वत्रापि सूत्रे कर्षिते उच्चारिते सति सम्बन्धः । तथा श्रमणैः श्रमणस्य वैयावृत्त्यं कर्त्तव्यं, श्रमणीभिः श्रमण्या यपिनर्विपर्यासं करोति, तर्हि विपर्यासं कुर्वति प्रायश्चित्तं चत्वारो गुरुका, न केवलं प्रायश्चित्तमाज्ञादयश्चाज्ञानवस्थामिथ्यात्वविराधनारूपाश्च दोषास्तथा या पूर्वं वैयावृत्त्यसूत्रे भणिता विराधना शीलविराधना सा अत्रापि द्रष्टव्या । सुत्तंमि कड्ढियंमीत्येतदेव प्रपञ्चयति-

**[भा.२३९३]** संबंधो दरिसिज्जइ उस्सुत्तो खलु न विज्जते अत्थो ।
उच्चारितछिन्नपदे विग्गहिए चेव अत्थो उ ।।

**वृ-** सूत्रे उच्चारिते सति सम्बन्धोऽनन्तरसूत्रादिभिः सह दर्शते यतः सम्बन्धोऽर्थतो भवति । वर्णानां स्वतः सम्बन्धाभावात् । स चार्थः खलु उत्सूत्रः सूत्ररहितो न विद्यते, सम्बन्धे चोपदर्शिते उच्चारितसूत्रस्य च्छिन्नानि पदानि कर्तव्यानि, पदच्छेदोविधातव्य इत्यर्थः । ततो यानि पदानि विग्रहभाञ्जि तेषु विग्रह उपदर्शनीयः । विग्रहीते च सूत्रस्योऽर्थो व्याख्येयः ।

**[भा.२३९४]** अकखेवो पुन कीरइ, कत्थइ विना वि तस्सिद्धी ।
जत्थ अवायनिदरिसणं एसेव उ होइ अक्खेवो ।।

**वृ-** आक्षेपः पुनः क्वचित् क्रियते । यथा किं कारणं परपक्षे वैयावृत्त्यं न क्रियते । कुत्रचित् पुनर्विनाप्याक्षेपं तत्सिद्धिराक्षेपसिद्धिः । कथमित्याह- यत्रापायनिदर्शनमपायप्रकटनमेष एव भवत्याक्षेपः

आक्षेपहेतुकत्वात् । न खल्वाक्षेपसूचामन्तरेणापाय प्रदर्शनं विपक्षे भवतीति परिभावनीयमेतत्सं-प्रत्याक्षेपप्रसिद्धी एव वैविक्त्येनाह ।

**[भा.२३९५]** किं कारणं न कप्पइ अक्खेवो दोसदसिणं सिद्धी ।
लोए वेदे समए विरुद्धसेवादयो नाया ।।

**वृ-** किं कारणं विपक्षे वैयावृत्यं न कल्पते इत्याक्षेपः । विपक्षे दोषदर्शनं सिद्धि प्रसिद्धिः । अत्रार्थे लोके वेदे समये च विरुद्धसेवादयो ज्ञातानि । किमुक्तं भवति ? यथा लोके वेदे समये च विरुद्धसेवयामकल्पिकसेवायां च दोषोपदर्शनं तदकरणेप्रसिद्धिरेवमिहापि विपक्षे वैयावृत्त्यकरणे-ऽपायदर्शनमेव तदकरणे प्रसिद्धिः ।

**[भा.२३९६]** तम्हा सपक्खकरणे परिहरिया पुव्ववन्निया दोसा ।
कप्पे छठुद्देसे, तह चेव इहंपि दठव्वा ।।

**वृ-** यस्मादेव विपक्षे वैयावत्यकरणे प्रायश्चित्तादयो दोपास्तस्मात्सपक्षे वैयावृत्यं कर्तव्यं । सपक्षवैयावृत्त्यकरणे च ये पूर्ववर्णिता दोषास्ते यथा कल्पाध्ययने षष्ठोद्देशे परिहृतास्तथा चेव इहापि द्रष्टव्याः । अत्र पर प्रश्नमाह-

**[भा.२३९७]** चोएती परकरणं, नेच्छामो दोसपरिहरणहेउं ।
किं पुन भेसजगणो घेतव्वो गिलाण्णकरणा ।।

**वृ-** चोदयति प्रश्नयति शिष्यः परकरणे परपक्षे वैयावृत्यकरणं दोषपरिहरणहेतोर्दोषपरिहरणनिमित्तं नेच्छामः । किं पुनः केवलं भैषज्यगणः औषधसमूहो ग्लानरक्षार्थं गृहीतव्यः । अत्रैव विपक्षे दोषमाह-

**[भा.२३९८]** पुव्वं तु अगाहिएहिं दूरा जा ओसहाइं आणंति ।
तावतो उ गिलाणो, दिठंतो दंडियाईहिं ।।

**वृ-** पूर्वमगृहीतेषु भैषजेषु गाथायां तृतीया सप्तम्यर्थे प्राकृतत्वात् । यावदार्याद्दूरादौषधान्यानयन्ति, तावत् ग्लानस्य आगाढादि परितापना भवति । तदभावे च स परमार्थतस्त्यक्तो भवति, । अत्रार्थे च दृष्टान्तो दण्डिकादिभिस्तमेवविभावयिषुराह ।।

**[भा.२३९९]** उवठ्ठियंमि संगामे, रन्नो बलसमागमो ।
एगो वेज्जोत्थ वारेई, न तुब्भे जुद्धकोविया ।।

**[भा.२४००]** घेप्पंतु ओसहाइं वणपट्टामक्खणाणि विविहाणि ।
सो बेइ अमंगलाइं मा कुणह अनागयं चेव ।।

**वृ-** द्वयोर्दण्डिकयोरुपस्थिते सङ्ग्रामे लिलिते च द्वयोर्बले द्वयोरपि राज्ञो वैद्या उपस्थिता । तत्र एको दण्डिको वैद्यानत्र संग्रामप्रस्थाने उपस्थितान् वारयति । न यूयं युद्धकोविदास्ततः किं युष्माभिः संग्रामे कर्तव्यमेवमुक्त ते वैद्याः प्राहुर्यद्यपि न वयं युद्धकोविदास्तथापि प्रहारव्रणितेष्वस्माकं वैद्यक्रियोपयोगिनी तस्माद्वयमागच्छामो गृह्यन्तां चौषधानि व्रणपट्टा विविधानि चानेकप्रकाराणि च म्रक्षणानि । एवमुक्ते स दण्डिको ब्रवीति- मा कुरुतानागतमेवामङ्गलानि तस्मान्निवर्तध्वं यूयमिति ।

**[भा.२४०१]** किं घेत्तव्वं रणे जोग्गं, पुच्छिया इत्तरेण ते ।
भणंति वणतिल्लाइं घयदव्वोसहाणि य ।।

**वृ-** इतरेण द्वितीयेन दण्डिकेन ते आत्मीया वैद्याः पृष्टाः । किं रणे संग्रामे योग्यं गृहीतव्यं, । एवमुक्तास्ते

भणन्ति । व्रणसंरोहकानितैलानिव्रणतैलानि तथा तिजीर्णघृतं द्रव्यौषधानिच यैरौषधैः संयोजितैस्तैलं घृतं वातिपच्यते । व्रणसंरोहकचूर्णोवाव्रणसंरोहणायभवतितानिद्रव्यौषधानिततोराज्ञापुरुषाःसन्दिष्टा यद्वैधैरुपदिष्टं तत्सर्वं गृहीतम् ।

[भा.२४०२] भग्गसिव्विय संसित्ता वणा वेज्जेहि जस्स ।
सो पारगो उ संगामे, पडिवक्खो विवज्जए ।।

वृ- ततः संग्रामे वर्त्तमाने यस्य राज्ञो ये पुरुषा मुद्गरादिप्रहारहतास्तेषां प्रहारा वैद्यैरौषधैर्भग्ना ये च व्रणितास्तेषां व्रणाः सीवतिस्तं औषधैः संसिक्ता । एवं व्रणेताः प्रहारिता द्वितीय दिवसे युद्धसमर्था जाताः एवं द्वितीयदिवसे तृतीयदिवसे ऽपि कृतम् । एवं स राजा वैद्योपदेशनौषधसंग्रहतः संग्रामे पारगो अभूत्, प्रतिपक्षे विपर्ययो जित इत्यर्थः । एष दृष्टान्तोऽयमर्थोपनयः ।।

[भा.२४०३] एवमेवासपेज्जाइ खज्जलेज्झाणि जेसिओ ।
भेसिज्जाइं सहीनाइं पारगा ते समाहीए ।।

वृ- एवमेव दण्डिकदृष्टान्तगतेन प्रकारेण येषामाचार्याणां भैषजानि असति अशनरूपाणि, पेयानि पानकरूपाणि, खाद्यानि खादिमरूपाणि, लेह्यानि च स्वादिमानि ते आत्मनो गच्छस्य च समाधेः पारगा भवन्ति । ये पुनरौषधानां न संग्रहीतास्ते समाधेरपारगाः । प्रकारान्तरेण दण्डिकदृष्टान्तमाह-

[भा.२४०४] अहवा राया दुविहो आयभिसित्तो पराभिसित्तो य ।
आयभिसित्तो भरहो तस्स उ पुत्तो परेणं तु ।।

वृ- अथवेति प्रकारान्तरद्योतने राजा द्विविधो भवति । तद्यथा-आत्माभिषिक्तः, पराभिषिक्तश्च आत्मनैध निजबलेन राज्येऽभिषिक्तः आत्माभिषिक्तः, परेणाभिषिक्तः पराभिषिक्तः । तत्रात्माभिषिक्तो भरतश्चक्रवर्ती तस्य पुत्र आदित्ययशाः पराभिषिक्तः ।

[भा.२४०५] बलवाहणकोसा य बुद्धी उप्पत्तियादीया ।
साहगो उभयोवेत्ता सेसा तिन्नि असाहगा ।।

वृ- बलंहस्त्यादि,वाहनानियानानिकोशोभाण्डागारंतथाबुद्धिरौत्पत्यादिकाः । अत्रभङ्गाश्चत्वारः- एको बलवाहनादि समग्रो नो बुद्धि समग्रः १ एको नो बलवाहनादिसमग्रः किन्तु बुद्धिसमेतः २, एको बलवाहनादिसमेतोऽपि बुद्धिसमेतोऽपि ३, एको नो बलवाहनादिसमेतो नापि बुद्धिबलोपेतः ४ । एषु चतुर्षु भङ्गेषु मध्ये य उभयोपेतो बलवाहनादि समेतो बुद्धिसमेतश्चेत्यर्थः स राज्यस्य साधकः शेषास्त्रयोऽसाधकाः । एष दृष्टान्तोऽयमर्थोपनयः ।।

[भा.२४०६] बलवाहणत्थहीनो बुद्धिहीनो न रक्खए रज्जं ।
इय सुत्तत्थविहीणो ओसहहीना उ गच्छं तु ।।

वृ- यथा बलेने वाहनैरर्थेन च हीनो बुद्धिहीनश्च राजा राज्यं न रक्षति, एवमाचार्योऽपि सूत्रार्थविहीनो औषधविहीनश्च गच्छं न रक्षति ।।

[भा.२४०७] आयपराभिसित्तेण जम्हा आयरिएणओ ।
उसहमादीणि चओ कायव्वो चोयती सीसो ।।

वृ- तस्मादाचार्येणआत्माभिषिक्तेनश्रुतकेवलिना इतरेणचपराभिषिक्तेनऔषधादिनिचयः कर्त्तव्य इति शिष्यश्चोदयति-

[भा.२४०८] सीसेणाभिहिते एवं बेइ आयरिओ ततो ।
वदंतो गुरुगा तुब्भं आणादीया विराहना ।।

वृ- एवं शिष्येणाभिहिते तत आचार्यो ब्रूते-एवं वदतस्तव प्रायश्चित्तं चत्वारो गुरुकाः आज्ञादयश्च दोषा विराधना सूत्रस्य । एतदेव भावयति-

[भा.२४०९] दिट्ठंतसरिसं काउं अप्पाणपरं च केइ नासंति ।
ओसहमादीनि चओ कायव्वो जहेव राईणं ।।

वृ- केचित्तव सदृशा दृष्टान्तसदृशं दण्डिकसदृशमात्मानं परं च कृत्वा नाशयन्ति । यथा औषधादीनिचयः कर्तव्यो यथा राज्ञमिति एतदेवातिप्रसङ्गापादनेन दूषयति-

[भा.२४१०] कोसकोट्ठारदाराणि पदातीमादीयं बलं ।
एवं मनुयपालाणं किंतु तुज्झंपि रोयइ ।।

वृ- कोशकोष्ठागारदाराः पदात्यादिकं बलमेतन्मनुष्यपालानां भवति तदेतत् किन्तु तवापि रोचते । एतदपि दृष्टान्तबलेन गृह्यतामिति भावः ।

[भा.२४११] जावि ओसहमादीणं निचयो सोवि अक्खमो ।
न संचये सुहं अत्थि इह लोए परत्थ य ।।

वृ- योऽप्यौषधानां निचयः सोऽपि सुखोत्पादनायाक्षमः । यतो न संचये सुखमस्ति इहलोके तदुत्पादनतद्रक्षणतन्नाशे दुःखसंभवात् । परत्र च परलोके च सुखं नास्ति परिग्रहधरणतः कुगतिप्रयातात्

[भा.२४१२] आदि सुत्तस्स विरोधो समणचित्तागिहीण अनुकंपा ।
पुव्वायरिय अन्नाणी अणवत्था वंत मिच्छत्तं ।।

वृ- आदिसूत्रस्य दशवैकालिकस्य विरोधस्तथा एवं ब्रुवाणो भवान् परिग्रहे साधून्नियुक्ते तन्नियोगाच्च ते त्यक्तास्था गृहिणामनुकम्पा अनुग्रहस्त्यक्तः साधूनां स्वत एवस्वत भैषजादेः संभवात् । तथा ये पूर्वाचार्याः सन्निधिंप्रतिषिद्धवन्तस्तेअज्ञानी कृताः सन्निधिर्भवता गुणोपदर्शनात् अनवस्था चैवं प्रसज्यते । सन्निधिरिव भवताऽन्येनान्यस्यापि ग्रहणप्रसक्ते स्तथा वान्तप्रतिसेवनं भवतः समापतितं प्रतिषिद्धस्यापि संचयस्य पुनर्ग्रहणात् तथा मिथ्यात्वं मिथ्यावादित्वमनुषज्यते । यथावादमकरणात् निष्परिग्रहा वयमित्यभिधाय परिग्रहधारणात् । एनामेव गाथां व्याचिख्यासुः प्रथमतः सूत्रस्य विरोधमुपदर्शयति-

[भा.२४१३] जं वुत्तमसनपानं खाइमं साइमं तहा ।
संचयं तु न कुव्वेज्जा एयं दायविरोहियं ।।

वृ- यत् दशवैकालिके उक्तमशनं पानं खादिमं तथा संचयं न कुर्यात् तथा च तद्ग्रन्थः- असनं पानगं चेव खाइमं साइमं तहा । जे भिक्खू सन्निहिं कुज्जा, गिही पव्वइए न से ।। इति तदिदानीं विरोधितं विरोधमापादितं सन्निधिरिदानीं त्वयाभ्युपगतत्वात् ।।

[भा.२४१४] परिग्गहेनिजुज्जंता परिचत्ता उ संजया ।
भारादिमाइया दोसा पेहापेहकयाइया ।।

वृ- संयताः परिग्रहे नियुज्यमानाः परित्यक्ताः संसारे पातनात् । किं चान्यत् । इहलोके भारादयो भारवहनादयो दोषा आदिशब्दात् कायक्लेश सूत्रार्थहान्यादिदोषपरिग्रहस्तथाप्रेक्षादिकाश्च तथाहि-

यदि सर्वं प्रत्युपेक्षते ततः सूत्रार्थपरिमन्थः । अथ न प्रत्युपेक्षते तर्हि संसक्तिभाव आदिशब्दात्तत्परितापनादिदोषपरिग्रहः ।।

[भा.२४१५] अहवा तप्पडिबद्धा य अत्थंते नियया‍दयो ।
अनुग्गहो गिहत्थाणं सयावि ताण होइ ओ ।।

वृ- अथवा तत्प्रतिबन्धादौषधनिचयप्रतिबन्धात्तिष्ठन्ति सदावस्थायितया न तु विहारक्रमं कुर्वन्ति; तथा च सति नैत्यिकादयो नैत्यिको नित्यवासी, आदिशब्दात् पार्श्वस्थादि परिग्रहः । तदादयो दोषाः प्रसज्जंति, । गतं समणा चत्ता इति द्वारमधुनागिहीण अनुकंपेति व्याख्यानयति, । गृहस्थानां सदा साधूनां भेषजादि प्रयच्छतामनुग्रहो भवति स इदानीं परित्यक्तः । साधूनां स्वत एव तन्निचयभावात् ।।

[भा.२४१६] पडिसिद्धा संनिही, जोहिं पुव्वायरिएहिं तेविओ ।
अन्नाणीउ कया एवं, अनवत्थापसंगतो ।।

वृ- यैः पूर्वाचार्यैः प्रतिषिद्धः संनिहिरतेऽपि त्वयैवं बुध्वा सन्निधिः कृताः । अनवस्थाप्रसङ्गमाह अनवस्थाप्रसङ्गता यथा त्वयौषधसंचयः कृतस्तथान्येऽन्यस्यापि करिष्यन्तीति प्रसङ्गतः सर्वस्याप्यनवस्था, वांतद्वारं चाह-

[भा.२४१७] वंतं निसेवियं होइ गिण्हंता संचयं पुनो ।
मिच्छत्तं न जहावादी न तहाकारी भवंति उ ।।

वृ- संचयं त्यक्त्वा पुनः संग्रह्णतो वांतं निषेवितं भवति, तथा मिथ्यात्वं न यथावादिन उत्सूत्रप्ररूपणात्

[भा.२४१८] एए अन्ने य जम्हा दोसा हुंति सवित्थरा ।
तम्हा तोसहमादीणं संचयं तु न कुव्वए ।।

वृ- यस्मादेतेऽनन्तरोदिता अन्ये च दोषाः सविस्तरा भवन्ति । तस्मादौषधादीनां संचयं न कुर्यात् ।

[भा.२४१९] जइ दोसा भवंतेते किं खु घेत्तव्वयं ततो ।
समाहिसंधावणट्ठाए भन्नती सुण तो इतो ।।

वृ- यद्येते अनन्तरोदिता दोषा भवन्ति ततः किं खु समाधिस्थापनाय गृहीतव्यम् ? आचार्य आह-भण्यते अत्रोत्तरं दीयते तदेव तावदितोऽनन्तरमुच्यमानं श्रृणु तदेवाह-

[भा.२४२०] नियमा विज्जागहणं कायव्वं होइ दुविहदव्वं च ।
संजोगदिट्ठपाढी असती गिहि अन्नतित्थीहिं ।।

वृ- यया विद्ययाऽपमार्जनं क्रियते तस्या अन्यासां च विद्यानामाचार्येण नियमात् ग्रहणं कर्तव्यम्, तथा यदि कारणतच्छिन्नमण्डपे स्थातव्यं भवति, ततो दीर्घपृष्ठविषविघाताय द्विविधं द्रव्यं गृहीतव्यं । तच्चाग्रे वक्ष्यते, । तस्मादार्यः संयोगदृष्टपाठी भवेत् । अनेकान् संयोगान् व्यापार्यमाणान् यो दृष्टवान् यश्च तत् पाठं पठितवान् स संयोगदृष्टपाठी । अथ स्वयं संयोगदृष्टपाठी न भवति तर्हि तस्यासति गृहिभिः कार्यते विचिकित्सा, तेषामप्यसत्यन्यतीर्थिभिर्यदुक्तं द्विविधं द्रव्यं गृहीतव्यं, तदभिधित्सुराह-

[भा.२४२१] चित्तमचित्तपरित्तम, नंतसंजोइणं च इतरं च ।
थावरजंगमजलजं, थलजं चेमादि दुविहं तु ।।

वृ- द्विविधं द्रव्यं-सचित्तमचित्तं वा, । यदि वा परीतमनन्तकायिकं । अथवा सांयोगिकमनेक सांयोगनिष्पन्नमितरदसांयोगिकं, । अथवा स्थावरंजङ्गमं प्रत्युपन्नं कार्यं यदि स्थावरद्रव्यप्रयोगतः कथमपि

गुणो न भवति, तदा अनन्यगत्या जंगमागं द्रव्य प्रयुज्यते, । अथवान्यथा द्विविधं द्रव्य जलजं थलजं च, । एवमादि द्विविधं द्रव्यं ग्रहीतव्यम्, । इयं चिकित्सा दीर्घपृष्टविषविघातायाभिहिता ।

[भा.२४२२] जह चेव दीहपट्ठे, विद्यामता य दुविहदव्वा य ।
एमेव सेसएसुवि विज्ञा दव्वा य रोगेसु ।।

वृ- यथा चैव दीर्घदंशे विद्यामन्त्रा द्विविधानि च द्रव्याणि ग्रीहतव्यानि । एवमेव शेषेष्वपि रोगेषु विद्याद्रव्याणि च ग्राह्याणि ।

[भा.२४२३] संजोगदिट्ठपाठी, न धरेंतंमि चउ गुरू हुंति ।
आणादिणो य दोसा, विराधना इमेहिं ठाणेहिं ।।

वृ- आचार्येण स्वयं संयोगदृष्टपाठिना भवितव्यं । यदि पुनः सति शक्तिसंभवे संयोगदृष्टिपाठं न धरति, तर्हि तस्मिन्नधरति । प्रायश्चित्तं चत्वारो गुरुकाः । न केवलं प्रायश्चित्तं, किन्त्वाज्ञादयश्च दोषास्तथा विराधना एभिर्वक्ष्यमाणैः स्थानैः । तान्येवाह-

[भा.२४२४] उप्पण्मे गेलन्नु, जो गणधारी न जाणइ तिगिच्छं ।
दीसंतलो विनासो, सुहदुक्खी तेन उचत्ता ।।

वृ- उत्पन्ने ग्लानत्वे यो गणधारी चिकित्सां न जानाति, तस्या पश्यतः सतो ग्लानस्य विनाश इति, तेन सुखदुःखिनः सुख-दुःखोपसम्पन्नकाः स्वशिष्याः प्रीतच्छकाश्च परित्यक्ताः, कथं पश्यतः सतो ग्लानस्य शेषकाणा च विनाश इत्यत आह-

[भा.२४२५] आउरत्तेण कायाणं, विसकुंभादिघायए ।
डाहे छेज्जे य जे अन्ने, भवंति समुवद्दवा ।।

[भा.२४२६] एते पावइ दोसा, अनागयं अग्गहियाव विज्ञाए ।
असमाही सुयलंभं केवललंभं तु चुक्केज्जा ।।

वृ- कस्यापि साधोर्विषकुम्भो लूता आदिशब्दाद्दाहादिपरिग्रहस्तस्मिन्नुत्थिते आतुरत्वेनाकुलत्वेन विषकुंभादिघाताय कायानामुदकादीनामुपद्रवं कुर्यात् । तथा हि विषकुंभे दाहे वा समुपस्थिते आकुलीभूतः सन् तं शीतलेमोदकेन सिञ्चेत्, सचित्तेन वा कर्दमेन लिम्पेत् । तथा दाघे च्छेदे च येऽन्ये भवन्ति समुपद्रवा एतान् दोषाननागतगृहीतायां विद्यायां प्राप्नोति, तथा तीव्रायां वेदनायामनुपशान्तायामसमाधिना असमाधिमरणेन म्रियेत, तथा च सति दीर्घसंसारमनुपरिवर्तते, चिरं च यदि जीवति, तर्हि भूयांसं श्रुतलाभं प्राप्नुयात्, केवलज्ञानं चोत्पादयेत् । तथा-

[भा.२४२७] इह लोगियाण परलोगियाण लद्धीण फेडितो होइ ।
इहलोगामोसादी परलोगे अनुत्तरादीया ।।

वृ- असमाधिमरणेन मरणतः सह ऐहलौकिकीनां पारलौकिकीनां च लब्धीनां स स्फेटितस्त्याजितो भवति । तत्र इहलोके ऐहलौकिक्यो लब्धय आमर्षादय आमर्षौषध्यादयः परलोके पारलौकिक्यो-ऽनुत्तरादय अनुत्तरा अनुत्तरा लवसत्तमा देवा आदिशब्दात् सुकुलप्रत्यायातिश्रुतलाभादिपरिग्रहः; ।।

[भा.२४२८] असमाहीमरणेणं एवं सव्वासि फेडितो होइ ।
जह आउगपरिहीना देवा लवसत्तमा जाया ।।

वृ- एवममुना प्रकारेण सर्वासामैहिकीनां पारत्रिकीनां च लब्धीनामसमाधिमरणेन स्फेटितो भवति ।

यथा आयुष्कपरिहीना देवा लवसत्तमा जाता, आयुष्कपरिहान्या सिद्धिलाभतो भ्रष्टा यथा देवा लवसत्तमा जाता इत्यर्थः । सम्प्रति लवसत्तमदेवस्वरूपमाह-

**[भा.२४२९]** सत्तलवा जइ आउं पहुप्पमाणं ततो उ सिज्झंतो ।
तत्तियमेत्तं न हु तत्तो ते लवसत्तमा जाया ।।

**वृ-** यदि सप्तलवाः कालविशेषा आयुः प्रभवन् स्यात् सत्तलवप्रमाणं यद्यायुः प्राप्येतेत्यर्थः ततः सिद्धेयुः परं तद् आयुस्तावन्मात्रं न हु नैवाभवत् ततस्ते लवसत्तमा देवा जाता लवे सप्तमे सिद्धिरभविष्यत् यदि तावदायुरभविष्येषां ते लवसत्तमा नाम नाम्नैकार्थे समासो बहुलमिति समासः । के ते लवसत्तमा इत्याह-

**[भा.२४३०]** सव्वट्ठसिद्धिनामे उक्कोसट्ठिईय विजयमादीसु ।
एगावसेसगब्भा भवंति लवसत्तमा देवा ।।

**वृ-** ये देवाः सर्वार्थसिद्धिनामके महाविमाने ये च विजयादिषूत्कृष्टस्थितय एकोऽवशेषो गर्भो येषां ते एकावशेषगर्भास्ते भवन्ति लवसप्तमाः । उपसंहारमाह-

**[भा.२४३१]** तम्हा उ सपक्खेणं कायव्व गिलाणगस्स तेगिच्छं ।
विवक्खेण न कारेज्जा एवं उदितंमि चोदेति ।।

**वृ-** यस्माद्विपक्षे दोषास्तस्मात्सपक्षेण ग्लानस्य चिकित्साकर्म कर्तव्यं विपक्षे पुनर्न कारयेत् तदेवं सम्बन्धस्ततः सूत्रव्याख्यालक्षणं तदन्वाक्षेपपरिहारौ तत्प्रसक्त्याऽन्यदपि चाभिहितं सम्प्रति सूत्रव्याख्या क्रियते-निर्ग्रन्थश्चशब्दान्निर्ग्रन्थी च रात्रौ वा विकाले वा दीर्घपृष्टः सर्पो लूषयेत् दशेत् । तत्र स्त्री वा पुरुषस्य हस्तेन तं विषमपमार्जयेत्, पुरुषो वा स्त्रिया हस्तेन एवं से तस्य स्थविरकल्पस्य कल्पते । स्थविरकल्पकस्यापवादबहुलत्वादेवं चामुना प्रकारेणापवादमासेवमानस्य से तस्य तिष्ठति पर्यायो न पुनः स्थविरकल्पात्परिभ्रश्यति, तेन च्छेदादयः प्रायश्चित्तविशेषास्तस्य न सन्ति परिहारं च तपो न प्राप्नोति । कारणेन यतनया प्रवृत्तेरेष कल्पः स्थविरकल्पिकानां । एवममुना प्रकारेण सपक्षेण विपक्षेण वा वैयावृत्त्यकारापणं से तस्य जिनकल्पिकस्य न कल्पते । केवलोत्सर्गप्रवृत्तत्तस्येति भावः । एवमपवादसेवनेन से तस्य जिनकल्पपर्यायो न तिष्ठति, जिनकल्पात् पततीत्यर्थः । परिहारं च तपोविशेषं न परिपालयति एष कल्पो जिनकल्पिकानां, एवं सूत्रे व्यवस्थिते यदाचार्येण प्रागुदितं सपक्षेण वैयावृत्त्यं कारयितव्यम् न परपक्षेणेति तत्र चोदयति ब्रूते परः । यदुच्यते तदाह-

**[भा.२४३२]** सुत्तंमि अनुन्नायं इह पुन अत्थतो निसेहेह ।
कायव्व सपक्खेणं चोयग सुत्तं तु कारणियं ।।

**वृ-** सूत्रे सपक्षेणेति वैयावृत्त्यकारापणमनुज्ञातं इह इदानीं इ पादपूरणे पुनरर्थतो यूयं परपक्षेण वैयावृत्त्यकारापणं निषेधयत् कर्तव्यम् सपक्षेणेति वचनात् ततः सूत्रभवद्व्याख्यानयोर्विरोधः । अत्राचार्य आह-न विरोधो, यतो हे चोदक सूत्रमिदं कारणिकं कारणापेक्षम् । तदेव कारणमाह-

**[भा.२४३३]** विज्ज सपक्खाऽसती गिहि परतित्थीउ तिविह संबंधी ।
एमेव असंबंधी असोयवादेतरा सव्वे ।।

**वृ-** सपक्षाणां वैद्यानामसति अभावे गृही पिता भ्राता स्वजनो वा स्थविरादिभेदतस्त्रिविधो यः सम्बन्धी स वैयावृत्त्यं कारणीयः । तदभावेऽसम्बन्धी स्थविरमध्यमतरुणभेदतस्त्रिभेदः पूर्वपूर्वालाभे उत्तरोत्तरः कारणीयः, तस्याभावे परतीर्थिकः पितृभ्रातादिः संबन्धेन संबंधी स्थविरादिभेदतस्त्रिभेदः पूर्वपूर्वालाभे

उत्तरोत्तरः कारणीयः तस्याप्लाभे असम्बन्ध्यपि स्थविरादिभेदतस्त्रिविध उक्तक्रमेण कारयितव्यः । एते सर्वेऽपि द्विधा-अशौचवादा इतरे च । तत्र प्रथमतः सर्वत्राप्यशौचवादः कारयितव्यस्तदसंभवे इतरोऽपि ॥

[भा.२४३४] एएसिं असतीए गिहि गिणि परतित्थिगी तिविहभेया ।
एएसिं असतीए समणी तिविहा करेइ जयणाए ॥

वृ- एतेषां प्राग्गाथानिर्दिष्टानां सर्वेषामसति अभावे गृहस्था माता भगिनी तदभावे स्वजनाः स्थविरमध्यमतरुणभेदतस्त्रिविधाः पूर्वपूर्वालाभे उत्तरोत्तरा कारयितव्या । तदभावे असम्बन्धिनी स्थविरादिभेदतस्त्रिप्रकारा पूर्वपूर्वालाभे उत्तरोत्तरा यतनया करोति, तामेव यतनामाह-

[भा.२४३५] दूती अद्दाए अंतेउरे य दब्भेया ।
वियणे य तालवंटे चवेडतो मञ्जणा जयणा ॥

वृ- काचति द्यूतविद्या भवति । तया च द्यूतविद्यया यो द्यूत आगच्छति, तस्य दंशस्थानमपमार्ज्यते । तेनेतरस्य दंशस्थानमुपशाम्यति । अद्दाएत्ति अपरा आदर्शविद्या तया आतुरआदर्शे प्रतिबिम्बितोऽपमार्ज्यते आतुरः प्रगुणो जायते । अन्या विद्या वस्त्रविषया भवति तया परिजपितेन वस्त्रेण वा प्रमृज्यमानः आतुरः प्रगुणो भवति । अपरा विद्यान्तःपुरे आन्तःपुरिकी विद्या भवति यया आतुरस्य नाम गृहीत्वा आत्मनो अङ्गमपमार्जयति, आतुरश्च प्रगुणो जायते सा आन्तःपुरिकी । अन्या दर्भे दर्भविषया भवति विद्या यया दर्भैरपमृज्यमान आतुरः प्रगुणो भवति । वियणेयत्ति व्यञ्जनविषया विद्या यया व्यञ्जनमभिमन्त्य तेनातुरोऽमृज्यमानः स्वस्थो भवति, सा व्यञ्जनविद्या । एवं तालवृन्तविद्यापि भावनीया । चपेटा चापेटीविद्या, यया अन्यस्य चपेटायां दीयमानायामातुरः स्वस्थो भवति, सा चापेटी । तत्र पूर्वं त्या विद्ययापमार्जनं कर्तव्यमं । तदभो आदर्शिकया । एवं तावद्यावदन्ते चापेटया । एषा अपमार्जनायतना एतदेव स्पष्टतरमाह-

[भा.२४३६] दूयस्सोमाइज्जइ य सती अद्दागपरजविसाणं ।
परिजवियं वत्थं वा पाउज्जइ तेन वोमाए ॥

[भा.२४३७] एवं दब्भादीसुं असंफुसंतो य हत्थेण ।
चापेडीविज्जाएवऽउमाएवेडयं दिंतो ॥

वृ- दूत्या विद्यया दूतस्यागतस्यांगमप्रमार्ज्यते, तस्या विद्याया असति आदर्शे सङ्क्रान्तमातुर-प्रतिबिम्बं परिजप्यातुरः प्रगुणः कर्तव्यः । तदभावे वस्त्र प्रावार्यते, तेन वा परिजपितेन वस्त्रेणातुरोऽपमार्जतेएवं दब्भादिभिः परिदर्भविद्यादिभिर्हस्तेनासंस्पृशन्नपमार्जयेत् । चापेटया वा विद्यया अन्यस्य चपेटां ददन्योपमाजयेत् ।

[भा.२४३८] एसेव गमो नियमा निग्गंथीणंपि होइ नायव्वो ।
विज्जादी मुत्तूणं अकुसलकुसले य करणं च ॥

वृ- एष एवानन्तरोदितो यतनागमो नियमात् निर्ग्रन्थीनामपि ज्ञातव्यः । तदा निर्ग्रन्थीनां विद्यादि न दातव्यं मुक्त्वा पूर्वगृहीतमसाधनं मन्त्रं स हि कदाचिद्दीयेत न कश्चिद्दोषः । तथा यदि निर्ग्रन्थ्योऽकुशलो भवति निर्ग्रन्थी च कशला तत्र करणं निर्ग्रन्थ्या निर्ग्रन्थी कारयेदित्यर्थः । विद्यादी मुत्तूणमिति ।

[भा.२४३९] मंतो हविज्ज कोई विज्जा उ ससाहणा न दायव्वा ।

तुच्छा गारवकरणं पुव्वाहीया उ कुज्जा ।।

वृ- तस्याः स्याद्गौरवमात्मनोऽतिशयेन कुर्यात् या तु पूर्वाधीता पूर्वगृहीता विद्या सा प्रागुक्तयतना क्रमेण कुर्यात् ।।

[भा. २४४०] अज्जाणं गेलन्ने संथरमाणे सयं तु कायव्वं ।
वोच्चत्थमास चउरो लहु गुरुगा थेरए तरुणे ।।

वृ- आर्यिका यदि ग्लानप्रयोजने स्वयं समर्थास्ततः स्वयमेव ताः कुर्वन्ति । एवं निर्ग्रन्था अपभिवनीयाः । यदि पुनर्विपर्यासः क्रियते, यथा निर्ग्रन्थानां ग्लानत्व संस्तरति निर्ग्रन्थ्यो यदि कुर्वन्ति, निर्ग्रन्थीनां वा यदि निर्ग्रन्था इततिदा तस्मिन् विपर्यासे स्थविरे कारके प्रायश्चित्तं चत्वारो लघुकाः, तरुणे चत्वारो गुरुकाः । सम्प्रति कल्पे नानात्वं भावयति-

[भा. २४४१] जिनकप्पिए न कप्पइ दप्पेणं अजयणाइ थेराण ।
कप्पइ य कारणम्मी जयणाए गच्छे स साविक्खो ।।

वृ- जिनकल्पिके स्वपक्षेण परपक्षेण वा वैयावृत्यकारापणं न कल्पते, तथा कल्पत्वात् । स्थविराणां स्थविरकल्पिकानां पुनर्दर्पेण निष्कारणमयतनया च-न कल्पते ।। कारणे यतनया पुनः कल्पते यतो गच्छे स सापेक्ष इति ।।

[भा. २४४२] चिट्ठइपरियातो से तेन च्छेदाइया न पावेंति ।
परिहारं च न पावेइ परिहार तवोत्ति एगट्ठं ।।

वृ- यतः से तस्य पर्यायस्तिष्ठति तेन कारणेन च्छेदादिकास्तस्य न प्राप्नुवन्ति न भवन्तीत्यर्थः । परिहारमपि च न प्राप्नोति कारणे यतनया कारापणात् परिहारस्तप इत्येकार्थम् ।।

उद्देशकः-५ समाप्तः

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता व्यवहारसूत्रे पञ्चमोद्देशकस्य (भद्रबाहु स्वामि रचिता निर्युक्ति युक्तं) संघदास गणि विरचितं भाष्यं एवं मलयगिरि आचार्येण विरचिता टीका परिसमाप्ता ।**

## उद्देशकः-६

वृ- व्याख्यातः पञ्चमोद्देशकः । सम्प्रति षष्ठो व्याख्येयः । तस्येदमादि सूत्रम्-

**मू. (१४८)** *भिक्खू य इच्छेज्जा नाय-विहिं एत्तए, नो से कप्पइ थेरे अनापुच्छित्ता नायविहिं एत्तए, कप्पइ से थेरे आपुच्छित्ता नायविहिं एत्तए । थेरा य से वियरेज्जा, एवं से कप्पइ नायविहिं एत्तए, थेरा य से नो वियरेज्जा, एवं से नो कप्पइ नायविहिं एत्तए । जं तत्थ थेरेहिं अविइन्ने नायविहिं एइ, से सन्तरा छेए वा परिहारे वा । नो से कप्पइ अप्पसुयस्स अप्पागमस्स एगाणियस्स नायविहिं एत्तए; कप्पइ से जे तत्थ बहुस्सुए बज्झागमे तेनसिद्धं नायविहिं एत्तए । तत्स तत्थ पुव्वागमनेनं पुव्वाउत्ते चाउलोदने कप्पइ पडिगाहेत्तए; से जे तत्थ पुव्वागमणेणं पच्छाउत्ते चाउलोदने, नो से कप्पइ पडिगाहेत्तए ।*

[भा. २४४३] च्छेयणदाहनिमित्तं मंडलिडक्के च देहगेलन्ने ।
पाउग्गो सहहेउं नायविहिं सुत्तसंबंधो ।।

वृ- सर्पेण दृष्टः सर्पदंशस्थानस्य च्छेदननिमित्तं वा ज्ञातविधिं गन्तुमिच्छति । अथवा मण्डलिसर्पेण

दष्टस्ततो दीर्घ ग्लानत्वं जातं, तस्मिन् सति प्रायोग्यौषधहेतोर्ज्ञातविधौ गमनं भवति । ततस्तत्प्रतिपादनार्थमेव सूत्रारम्भ इति सूत्रसम्बन्धः । अथवायं सम्बन्धः ॥

[भा.२४४४] गेलन्नमहिकयं वा, गिलाणहेउं इमो वि आरंभो ।
आगाढं च तदुत्तं, सहनेयतरं इमं होति ॥

वृ- वा शब्दः प्रकारान्तरद्योतने । ग्लानत्वमनन्तरसूत्रेऽधिकृतमयमपि च सूत्रारम्भो ग्लानहेतुरिति सूत्रसम्बन्धः । केवलं यदि अनन्तरसूत्रे उक्तं ग्लानत्वं तदागाढं कालक्षेपासहनात् । इदं त्वधिकृतसूत्रसूचितं सहनीयतरं ज्ञातविधिं गन्तुं शक्तत्वादिति एवमनेन सम्बन्धेनायातस्यास्य व्याख्या-भिक्षुश्च शब्दात् भिक्षुकी च इच्छेत् ज्ञातविधिं स्वजनभेदमागन्तुं तस्य न कल्पते स्थविरान् अनापृच्छ्य ज्ञातविधिमागन्तुं यावत्करणादेवंपरिपूर्णपाठः । 'कप्पति थेरा आपुच्छित्ता नयाविहिं एत्तए थेरा य से वियरेज्जा । एवं से कप्पइ नायविहिं एत्तए जं तत्थ थेरेहिं अवितिन्ने नायविहिं एइ से अंतरा वा परिहारे वा ॥' इदं प्राग्वत् । नो से कप्पइ इत्यादि न से तस्य कल्पते, । अल्पश्रुतस्यागीतार्थस्य अल्पागमस्य बहिः शास्त्रेष्वति परिचयस्याविद्यमाननिजागमस्य एकाकिनो ज्ञातविधिमागन्तुं, कल्पते से तस्य यः सूत्रगच्छे बहुश्रुतसूत्रापेक्षया बह्वागमार्थापेक्षया तेन सार्धं ज्ञातविधिमागन्तुं । तत्र नमिति वाक्यालङ्कारे । तस्य ज्ञातविधिमागतस्य पश्चादागमनेन आगमनात् पश्चात् यः पूर्वायुक्तश्चाउलोदनः पूर्वायुक्त इति केचित् व्याचक्षते । आगमनात्पूर्वं तुल्यमारब्धो रन्धनाया अपरे व्याचक्षते गमनात्पूर्वं पाकाय समीहितमेतन् मतद्वयमप्यसंगतमारब्धे समीहिते च पुनः प्रक्षेपसंभवात्तस्मात्पूर्वायुक्त इति किमुक्तं भवति आगमनात्पूर्वं गृहस्थैः स्वभावेन रध्यमानः स तन्दुलौदनो भिलिङ्गसूपो नाम सस्नेहसूपः कल्पते प्रतिग्रहीतुं योऽसौ तत्र पूर्वागमनेन पूर्वमागताः साधव इति हेतोः पश्चादायुक्तप्रवृत्तस्तंदलौदनो भिलिंगसूपो वा नासौ कल्पते प्रतिग्रहीतुम् । एष सूत्रसंक्षेपार्थः ।

अत्र भाष्यकारो ज्ञातविधिपदं व्याख्यानयति ॥

[भा.२४४५] अम्मापितिसंबंधी पुव्वं पच्छा व संथुया जे तु ।
एसो खलु नायविहि नेगा भेया य एक्केक्के ॥

वृ- मातृद्वारेण पितृद्वारेण च यः सम्बन्ध एष ज्ञातविधिः । अथवा ये पूर्वं संस्तुता मातापित्रादयो ये च पश्चात्संस्तुताः श्वश्रूश्वशुरादय एष समस्तोऽपि ज्ञातविधिरेकैकस्मिंश्च मातृद्वारे पितृद्वारे वा यदि वा पूर्वसंस्तुते पश्चात्संस्तुते वानेके भेदाः अनेन विधिशब्दो भेदवाची व्याख्यातः । अधुना निर्युक्तिविस्तरः-

[भा.२४४६] नायविहिगमने लहुगा आणाइविराहसंजमायाए ।
संजमविराधना खलु उग्गमदोसो तहिं हुज्जा ॥

वृ- निष्कारणे विधिनापि ज्ञातविधौ गन्तुं न कल्पते, यदि विधिनापि निष्कारणे ज्ञातविधौ गमनं करोति, तर्हि प्रायश्चित्तं चत्वारो लघुकाः । तथा आज्ञादयो दोषास्तथा संयमे आत्मनि च विराधना तत्र संयमविराधना यतस्तत्र खलु निश्चितमुद्गमदोषा आधाकर्मादयो भवेयुः ॥ कथमुद्गमदोषा भवेयुरत आह-

[भा.२४४७] दुल्लभलाभा समणा नीया नीहेण आहकम्मादी ।
चिर आगयस्स कुज्जा, उग्गमदोसं तु एगयरं ॥

वृ- दुर्लभलाभाः खलु श्रमणाः, । तथा महता स्नेहेनास्माकं वन्दापनाय नीता निर्गतास्तत-श्चिरादागतस्य आत्मस्वजनस्य तस्य प्राघूर्णकत्वकरणायोद्गमदोषमाधाकर्मादिकमेकतरं कुर्यात् ।

[भा.२४४८] इति संयमंमि एसा विराहना होइमा उ आयाए।
छगलगसेनावतिकलुण रयणथालेय एमादी ।।

वृ- इत्येवममुना प्रकारेण एवानन्तरोदिता संयमे विराधना भवति । आत्मविराधना पुनरियं वक्ष्यमाणा छागदृष्टान्तेन सेनापतौ मृते समागते करुणरोदने रत्नस्थाले रत्नभूते स्थाले ढौकिते एवमादी । तत्र यथा च्छागदृष्टान्तेनाभिसमीहिते सेनापतौ मते तस्मिन्नागते आत्मविराधना भवति तथा-

[भा.२४४९] जह रन्नो सूयस्सा मंसं मज्जारएण अक्खित्तं ।
सो अद्दन्नो मंसं मग्गइ इणमो य तत्थातो ।।

[भा.२४५०] कट्टुहुंडपट्टलीए गलबद्धाए उ छगलतो तत्थ ।
सूवेण य सोवहिंतो थक्के आतोत्ति नाऊणं ।।

वृ- यथा राज्ञसूपस्य सूपकारस्य मांसंमाजरिणाक्षिप्तं नीतं, ततः सूपकारो भीतोऽर्दनो जातो मांसं मृगयते । तस्मिंश्च मृगयमाणे तत्र महानसेऽयमतर्कितः कडुभागडपोट्टलिकया गलबद्धया युक्तश्छाग आयातः सन् सूपेन सूपकारेण मारितः । थक्के प्रस्तावे आयात इति ज्ञात्वा एव दृष्टान्तः । साम्प्रतमुपनयमाह

[भा.२४५१] एवं अद्दन्नाइं तउं गमंति तं समंतेन ।
सो य तहिं संपत्तो ववरोवितो संजमातेहिं ।।

वृ- एवं सूपकार इव तस्य साधोर्ये स्वजनास्तेषां सेनापतिर्मृतस्ततस्तानि स्वजनरूपाणि मानुषाणि अद्दन्नाइं इति असत्यानि तं श्रमणीभूतं सेनापतिभ्रातरमात्मीयं समं ततो मृगयन्ते । स च मृग्यमाणस्तत्रैव सम्प्राप्तस्ततस्तं ससमुपस्थिताः स्वजना वयं परिभूता भविष्यामो न च त्वयि नाथे विद्यमाने परिभवोऽस्माकं युक्तस्तस्मात् कुरु प्रसादमित्येवं तैरुपसर्ग्यमाणः संयमात् व्यपरोपितः ।।

[भा.२४५२] सेनावती मतो ऊ भायपिया वा वि तस्स जो आसि ।
अण्णो य नत्थि अरिहो नवरि इमो तत्थ संपत्तो ।।

वृ- सेनापतिर्मृतस्तस्य यो भ्राता पिता वा आसीत् सोऽपि मृतोऽन्यश्च तस्मिन् गृहेऽर्हो योग्यः सेनापतित्वस्य नास्ति नवरमयमेव योग्यः । स च तत्र संप्राप्तः ।।

[भा.२४५३] तो कलुणं कंदंता बिंति अनाहा वयं विना तुमए ।
मा य इमा सेनावतिलच्छी संकामउ अन्नं ।।

वृ- ततस्तत्सम्प्राप्त्यनन्तरं ते स्वजनाः करुणं क्रन्दतो ब्रुवते वयमनाथास्त्वया विना इयं च प्रत्यक्षत उपलभ्यमाना सेनापतिलक्ष्मीरन्यं पुरुषान्तरं मा संक्रामतु ।।

[भा.२४५४] तं च कुलस्स पहाणं बलविरिए तुज्झहीणमयं च ।
पच्छावि पुनो धम्मं काहिसि देता पसीयाहि ।।

वृ- त्वं च कुलस्यास्य समस्तस्यापि प्रमाणं । एतच्च बलं हस्त्यादि वीर्यमान्तरोत्साहः समस्तस्यापि कुलस्य तवाधीनं पश्चादपि त्वं धर्मं करिष्यसि ।। सम्प्रति पदे प्रार्थये तावत् यावत् सेनापतिपद-प्रतिपत्त्या प्रसीद-

[भा.२४५५] एवं कारुण्णेणं इड्ढीए उ लोभितो ततो तेहिं ।
ववरोविज्जइ ताहिं संजमजीयातो सो तेहिं ।।

वृ- एवमुपदर्शितेन प्रकारेण कारुण्येन ऋद्धया च तैः स्वजनैः स लोभितो लोभं ग्राहितस्ततो

लोभग्राहणानन्तरं स तैः संयमजीविताद्वयपरोप्यते तदेवं करुणद्वारं व्याख्यातमथ रत्नस्थालद्वारमाह-

[भा.२४५६] अविभव अविरेगेण विनिग्गतो पच्छ इड्ढिमं जातं ।
थालं वत्थूण पुनं उवणंती गेण्हिमं तंति ।।

वृ- कदाचित् स व्रती अविभवेन विभवाभावेन दारिद्र्येणत्यर्थः, । रिक्थं (क्तं) च पूर्वपुरुषोपार्जितं विरिक्तं स्वजनैस्तदा नष्टं ततो अविरेकेण च रोषेण गृहान्निर्गत्य प्रव्रजितोऽभवत् । पश्चाच्च स स्वजनवर्गो भ्रात्रादिक ऋद्धिमान् जातस्ततो वस्तूनां रत्नानां पूर्णं भृतं स्थालं तस्यगतस्योपनयन्ति । यता गृहाण रत्नस्थालमेतदिति ।।

[भा.२४५७] तस्स वि दट्ठूण तयं अहं लोभकली ततो उ समुद्दिण्णो ।
वोरवितो संजमातो एए दोसा हवंति तहिं ।।

वृ- तस्यापि साधोस्तत् रत्नभृतं स्थालं दृष्ट्वा अथानन्तरं ततो रत्नभृतस्थालदर्शनात् लोभकलिः समुदीर्णः सम्यक् उदयप्राप्तस्ततस्तेन संयमात् व्यपरोपितः । एते दोषास्तत्र ज्ञातविधिगमने दोषा भवन्ति-

[भा.२४५८] अहवा न होज्ज एते अन्ने दोसा हवंति तत्थ इमे ।
जेहिं तु संजमातो चालिज्जइ सुठितो ठियतो ।।

वृ- अथवा एते अनन्तरोदिता दोषो न भवेयुरन्ये इमे वक्ष्यमाणास्तत्र ज्ञातविधिगमने दोषा भवन्ति । यैः सुस्थितोऽपि स्थितकः सन् संयमाच्चाल्यते के ते दोषा इत्यतस्तत्संसूचकं द्वारगाथाद्वयमाह-

[भा.२४५९] अक्कंदठाणे ससुरे उवरए पेल्लणाए उवसग्गे ।
पंथे रोवणभवएउहावण अम्ह कम्मपरा ६ घातो ७ ।।

[भा.२४६०] अनुलोमे ८ अभियोग ९ विसे १० सयं च ससुरेणं ।
पंतवण बंधरंभण, तं वा ते वाऽति वायाति ११ ।।

वृ- आक्रन्दस्थानद्वारं प्रथमं । द्वितीयं स्वसुरेणापवरके क्षिप्त इति द्वारं, तृतीयं प्रेरणाद्वारं, चतुर्थमुपसर्गद्वारं, पञ्चमं पथिरोदनं भृतके भार्या इति द्वारं, षष्ठमं अपभ्राजनाद्वारं यथाऽस्माकमेष कर्मकर आसीत्, सप्तमं च्छागघातद्वारं अष्टममनुलोभद्वारं, नवममभियोग्यद्वारं, दशमं विषद्वारं । स्वयं श्वशुरेण प्रान्तापणबन्धरोधनं क्रियते ततः स कोपात्तश्वशुरं निपातयेत्, विनाशयेत् वा, स्वशुरप्रभृतयस्तं साधुमतिपातयेयुरित्येकादशं द्वारमिति द्वारगाथाद्वयसमासार्थः ।। साम्प्रतमेतदेव विवरीषुराह-

[भा.२४६१] दीसंतोवि हु नीया पव्वयहियंपि संपकंप्पंति ।
कलुणकिवणाणि किं पुन, कुणमाणा एगसेज्जाए ।।

वृ- सेनापतौ मृते स तत्र ज्ञातविधौ गतस्तत्र दृश्यमाना अपि निजकाः पर्वतहृदयमपि पर्वतसदृशमानसमपि साधुं संयमात् स प्रकम्पयन्ति । सम्यगन्तर्लीनीभूय प्रकर्षेण च्यावयन्ति किं पुनरेकस्यां शय्यायां वसतौ करुण-कृपणानि रोदनानि कुर्वाणास्तानि कुर्वाणाः सुतरां संयमाद् भ्रंशयंति ।।

[भा.२४६२] अक्कंदठाणठितो तेसिं सोच्चा उ नायगादीणं ।
पुव्वावरत्तरोवण जाय अनाहा वए कोवि ।।

वृ- सोधिकृतः साधुर्यत्र ते ज्ञात्वा क्रंदंति तस्मिनाक्रंदस्थाने स्थितः पूर्वरात्रेऽपररात्रे च रोदनं तेषां 'ज्ञातकादीनां' करुणकृपणं यथा जात वयमनाथा भविष्यामः, सर्वेषां परिभवास्पदमिति श्रुत्वा कश्चित् व्रजेत् प्रव्रज्यां मुञ्चेदित्यर्थः गतमाक्रंदस्थानद्वारमधुना 'ससुरउवरए' इत्यादिद्वारमाह-

**[भा.२४६३]** महिलाए समं छोढुं ससुरेणं ढक्कितो उ उवरए ।
नायविहिमायगं वा पेल्ले उब्भामगसगाए ।।

**वृ-** तस्य साधोः श्वशुरकस्तं तत्र समायातं साधुं दृष्ट्वा निजदुहितरं सर्वालङ्कारभूषितां कारयेत् । कारयित्वा च वन्दापनाय भिक्षार्थं वा समागतः तेन श्वसुरकेण महेलया भार्यया सममपवरके क्षिप्त्वा अपवरको ढंकितः स्थगितद्वारकृतः, तत्र चोपसर्गमाणः कश्चिदुत्प्रव्रजेत् ।। प्रेरणाद्वारमाह- ज्ञातविधिमागतं सन्तं साधुं दृष्ट्वा स्वजनवर्गस्तस्य स्वकीयया उद्भ्रामिकया भार्यया प्रेरयेत् संयमात् च्यावयेत् ।। गतं प्रेरणद्वारं । साम्प्रतं चतुर्थमुपसर्गद्वारं प्रतिपिपादयिषुरिदमाह-

**[भा.२४६४]** मोहुम्मायकराइं उवसग्गाइं करेइ से विरहे ।
भज्जा जेहिं तरुवि वाएणं भज्जते सज्जं ।।

**वृ-** भार्या से तस्य स्वजनविधिं गतस्य सा विरहे मोहोन्मादकरान् उपसर्गान् आलिङ्गनादीन् तान् करोति । यैस्तरुरिव वातेन भिद्यते सद्यः ।। सम्प्रति 'पान्थ रोवण भइए' इति द्वारव्याख्यानमाह-

**[भा.२४६५]** कइएण सभावेन य भयगुलो पहंमि पंतावे ।
हियर्यं अमुंडियं मे भएवं पंताराए कुविते ।।

**वृ-** साधुर्ज्ञातिविधिं गतस्तत्र च लज्जया भिक्षां न हिण्डते, तत् उद्भ्रामक भिक्षार्यया 'गतस्तेषां ज्ञातानां क्षेत्रं पथि तत्र कैतवेन वा स्वभावेन वा तस्य भार्या भृतकेन समं क्षेत्रं गता तत्र सभृतकः कैतवन स्वभावेन वा कर्मणि ।।

**[भा.२४६६]** कम्महतो पव्वइतो भयतो एसम्ह आसि मा वंदा ।
उब्भामए वोहे च्छागघायंतस्स सा देइ ।।

**वृ-** कदाचित् स प्रव्रजितः कर्मकर आसीत्ततस्तं बहुजनो दृष्ट्वा ब्रूयात् एषोऽस्माकं भृतक आसीत् कर्महतः कर्मभग्नः सन् प्रव्रजितः तस्मान्मा वंदिषत ।। छागघातद्वारमाह उदभ्रामके उदभ्रामकि- भिक्षाचर्यागतेऽधिकृते भृतकरूपे साधौ वोद्रे मूर्खे तस्य भृतकस्य सा भृत्या छागघातं ददाति कुपिता सति छागमिव तं घातयतीत्यर्थः ।। अधुना अनुलोमोपसर्गद्वारमाह-

**[भा.२४६७]** मा च्छिज्जउ कुलतंतू धणमोत्तारं तु जणयमेगसुयं ।
वत्थन्नमादिएहिं अभियोगेउं च तं नेति ।।

**वृ-** तस्य ज्ञातविधिगतस्य साधोर्ज्ञातविधिरेवं ब्रूयात् मा च्छिद्यतां च्छेदं यायात् कुलतन्तुः कुलसन्तानस्तस्माद्धनरक्षकमेकं सुतं प्रसादं कृत्वा जनय पश्चात् गृह्णीथाः, । एवमुक्तः सन् कश्चित् उत्प्रव्रजेत् ।। अधुना अभियोग्यद्वारमाह वस्त्रान्नादिकैरादिशब्दात् खादिमस्वादिमादिविशेष- परिग्रहस्तैरभियोज्य वशीकृत्य स्वजनस्तात्मसमीपं नयति ।। विषद्वारमाह

**[भा.२४६८]** नेच्छंति देवरा मे जीवंते इमंमि इति विसंदिज्जा ।
अन्नेण चंदावेज्जा ससुरो वा से करेइ इमं ।।

**वृ-** तं ज्ञातविधिं गतं साधुं दृष्ट्वा तद्भार्येदं विचिन्तयेत् । अस्मिन् जीवति मां देवरा भोग्यतया नेच्छंति तस्मान् मारयामि केनाप्युपायेनैनमिति विचिन्त्य स्वयं वा विषं दद्यादन्येन वा दापयेत् 'सयं व' स्वयं श्वशुरेणमित्यादिद्वारमाहतस्य साधोः श्वशुरो वा स्वयमिदं कुर्यात्किं तदित्याह-

**[भा.२४६९]** पंतवण बंधरोहं तस्सवि नीयल्लगा व खुब्भेज्जा ।

अहवा कसाय त्ति ऊ सेवति तिवाएज्ज एक्कतरं ।।

वृ- श्वशुरस्तं दृष्ट्वा कुप्येत यथैतेन मम दुहिता जीवच्छल्पी जाता ततः कोपात्तस्य साधोः प्रान्तापणं प्रहारदानं बन्धनं वा निगडादिभिः रोधं वा गृहान्निर्गत्य नगराद्वा अनिर्गमनं कुर्यात् कारयेद्वा, तस्यापि च साधोर्निजका आत्मीयास्तमेनामवस्थां प्राप्तं दृष्ट्वा ज्ञात्वा वा क्षुभ्येयुः क्षोभाच्च श्वशुराद्यन्यतममतिपातयेत् ।। अत्र प्रायश्चित्तविधिमाह-

[भा.२४७०] एक्कंमि दोसु तीसु व मूल नवड्डो तहेव पारंची ।
अह सो अतिवाइज्जइ पावइ पारंचियं ठाणं ।।

वृ-एकस्मिन्नतिपातिते मूलप्रायश्चित्तभाग् भवति । द्वयोरतिपातितयोरनवस्थाप्य स्त्रिष्वतिपातितेषु पाराञ्ची । अथ स एवातिपात्यते साधुस्तर्हि स यदि कथमपि जीवति ततः पाराञ्चितं स्थानं प्राप्नोति ।

[भा.२४७१] अहवा वि धम्मसड्ढा साधू तेसिं घरे न गेण्हंती ।
उग्गमदोसा उभया ताहे नीया भणंति इमं ।।

वृ- अथवेति प्रकारान्तरेण दोषकथनोद्योतने साधवो धर्मश्रद्धा उद्गमदोषादिभयात्तेषां गृहे न किमपि गृह्णन्ति । ततस्ते निजाः स्वजना इदं भणन्ति । किं तदित्याह-

[भा.२४७२] अम्हं अनिच्छमाणो आगमने लज्जणं कुणति एसो ।
उहावाण हिंडंतो अणे लोगो वण्णं भणति ।।

वृ- अस्माकं गृहे भिक्षामनिच्छन् एष आगमने लज्जा अयशस्कारं करोति यतोऽस्मिन् प्रतिगृहमन्यत्र भिक्षां हिण्डमानेन महती नूनमस्माकमपभ्राजना लोको वान्य इदं भणति । किं तदित्याह-

[भा.२४७३] नीयल्लस्स वि भत्तं न तरह दाउंति तुब्भे किवणत्ति ।
गेहे भुंजसु वुत्ते भणाति नो कप्पियं भुंजे ।।

वृ- तं साधुं भिक्षामटन्तं दृष्ट्वा केचिदन्ये स्वजनान् प्रति ब्रूयुः-यथा यूयं कृपणा निजकस्याप्येकस्य प्राघूर्णकागतस्य भक्तं दातुं न शक्नुथ ततस्ते एवमुक्ताः सन्तः साधुसमीपमागत्य ब्रुवते । यावन्ति दिनानि यूयमत्र तिष्ठत तावन्मान्यत्र भिक्षामटत किन्तु गृहे भुङ्क्ष्व । अन्यत्र भिक्षाटने हि महत्यस्माकमपभ्राजना स एवमुक्तः साधुर्भणति युष्मद्गृहे न भुञ्जे यतोऽहं कल्पिकं भुञ्जे युष्मद्गृहे चोद्गमादिदोषाशङ्का । एवमुक्ते स्वजनाः प्राहुः-

[भा.२४७४] किंतंति खीरमादी दद्दामो दिन्ने य भाति भज्जातो ।
बेंति सुते जावंते पडिया नेकरा बहु पुत्ता ।।

वृ- किं तत् कल्पिकं यत्त्वं भुंक्षे । ततः साधवो यानि युष्माकं यथाप्रवृत्तानि क्षीरादीनि क्षीरदधिघृतगुडादीनि ततस्ते आहुरेतानि यथा प्रवृत्तानि दास्यामः, गाथायां वर्तमानसामीप्ये वर्तमानवद्वेति वचनात्, तं दातुं प्रवृत्तास्ततो दत्ते क्षीरादिके भ्रातृभार्याः सुतान् क्षीरादीनि याचमानान् प्रति ब्रुवते । हे पुत्रा बहवोऽस्माकं कराः पतितास्तानेवाह-

[भा.२४७५] दहिधयगुलतेल्लकरा तक्ककरा चेवपाडिया अम्हं ।
रायकरपल्लियाणं समणकरा दुक्करा वोढुं ।।

वृ- दधिकर घृतकर गुलकर तैलकरास्तथा तक्रकराश्चास्माकं पातिताः श्रमणैः राजकरा अपि बहवोऽस्माकमावतन् तैः सदैव प्रेरिता वयं वर्तामहे, परं राजकरप्रेरितानामस्माकमयं श्रमणकरो

दुष्करो वोढुमिति प्रभूतसर्वापहरणात् ॥

[भा.२४७६] एए अने य तहिं नायविही गमने होंति दोसाओ ।
तम्हा उ न गंतव्वं कारणजाते भवे गमनं ॥

वृ- एते अनन्तरोहिता अन्ये चानुक्तास्तत्र ज्ञातविधिगमने दोषा भवन्ति, तस्मात् ज्ञातविधौ न गन्तव्यम् । एष उत्सर्गः, कारणे पुनर्ग्लानत्वादिलक्षणे जाते पुनरपवादतो गमनं भवेत् । तहेवाह-

[भा.२४७७] गेलणकारणेणं पाउग्गा सति तहिं तु गंतव्वं ।
जे उ समत्थुवसग्गे सहिउंते जंति जयणाए ॥

वृ- ग्लानत्वकारणेनान्यत्र प्रायोग्यस्यौषधादेरसत्यभावे उपलक्षणमेतत् वैद्याभावे च तत्र गन्तव्यम् । तत्र वैद्यस्य प्रायोग्यस्यौषधस्याशनादेश्च प्राप्यमाणत्वात्तत्र ये उत्सर्गान् सोढुं समर्था ये च परिश्रमेण न गृह्यन्ते यतनया वक्ष्यमाणया यान्ति गच्छन्ति तामेव यतनामाह-

[भा.२४७८] बहिय अणापुच्छाए लहुगा लहुगो य दोव्वणा पुच्छा ।
आयरियस्स व लहुगा अपरिच्छिय पेसवंतस्स ॥

वृ- अत्रेदं सूत्रं पतति, । 'नो से कप्पति थेरे य(?)नापुच्छा नायविहिं एतए' इत्यादि । तत्र यदि बहिः स्थविराणामनापृच्छ्या व्रजति ततस्तस्य प्रायश्चित्तं चत्वारो लघुकाः स्थविरनापृच्छ्य तैर्विसर्जितो यदि द्वितीयं स्थविरान् अनापृच्छय व्रजति । ततो द्वितीयानापृच्छायां मासलघु, आचार्योऽपि यद्यपरीक्षितान्प्रेषयति ततस्तस्या परीक्षितान् प्रेक्षयतश्चत्वारो लघुकाः प्रायश्चित्तं

[भा.२४७९] तम्हा परिच्छियव्वो सज्झाए चेव भिक्खभावे य ।
थिरमथिरजाणणठा सो उ उवाएहिमेहिं तु ॥

वृ- यत एवमपरीक्षितप्रेक्षण प्रायश्चित्तं, तस्मात् स्थिरज्ञानार्थस्वाध्याये भिक्षिभावे च परीक्षितव्यः । स च एभिर्वक्ष्यमाणैरुपायैस्तानेवाह-

[भा.२४८०] चरणकरणस्स सारो भिक्खायरिया तहेव सज्झाओ ।
एत्थ परितम्ममाणं तं जाणसु मंदसंविग्गं ॥

वृ- चरणं व्रतश्रमणधर्मादि उक्तं च ॥ वयसमणधम्मसंजमवेयावच्चं च बंभगुत्तीतो । नाणादितियं तवो कोहनिग्गहा इइ चरणमेयं ॥ करणं पिण्डविशुद्ध्यादि । उक्तं च- पिंडविसोही समिति भावणपडिमा य इंदियनिरोहो । पडिलेहणगुत्तीतो अभिग्गहा चेव करणं तु ॥ तस्य चरणकरणस्य सारो भिक्षाचर्या स्वाध्यायश्च । ततोऽत्र भिक्षाचर्यायां स्वाध्याये च परिताम्यति । क्लेशं मन्यन्ते तं जानीत मन्दसंविग्नम् ।

[भा.२४८१] चरणकरणस्स सारो भिक्खायरिया तहेव सज्झाओ ।
एत्थओ उज्जममाणं तं जाणसु तं जाणसु तिव्वसंविग्गं ॥

वृ- चरणकरणस्य सारो भिक्षाचर्या तथैव स्वाध्यायस्ततोऽत्र भिक्षाचर्यादावुद्यच्छति तं जानीत तीव्रसंविग्नं तदेवं स्थिरास्थिरपरीज्ञानार्थं परीक्षोक्ता । सम्प्रति किमेष उपसर्ग सहिष्णुः किंवानेति ।

[भा.२४८२] कइएण य सभावेण य अन्नस्स च साहसे कहिज्जंते ।
मायपितिभायभगिणी भज्जपुत्तादिएसुं तु ॥

व- यथा स शृणोति तथा कैतवेन स्वभावेन वा अन्यस्य साधोर्मातापितृभ्रातृभगिनीभार्यापुत्रादिषु विषये साध्वसं कथ्यते केन प्रकारेणेत्यत आह-

[भा.२४८३] सिरकोट्टण कलुषाणि य कुणमाणाइं तु पायवडियाइं ।
अमुएण न गणियाइं जो जंपंति निप्पिवासोत्ति ।।

वृ- मातापित्रादीनि शिरःकुट्टनकरुणरोदनभाषणानि कुर्वाणानि पादपतितानि वामुकेन न गणितानि । एवं साध्वसे कथ्यमाने यो जल्पति अतीव खलु निष्पिपासो घोरहृदयो न वर्तते तेन सह वक्तुमपीति ।.

[भा.२४८४] सो भावतो पडिबद्धो अप्पडिबद्धो वएज्ज जा एवं ।
सोइहिति कित्तिया तू नीया जे आसि संसारे ।।

वृ- स भावतः स्वज्ञातेषु प्रतिबद्धो ज्ञातव्यो न शक्तः स सोढुमुपसर्गानिति, यस्तु तथा साध्वसे कथ्यमाने एवं ब्रूते संसारे सर्वजीवाः सर्वेषां पुत्रत्वादिकमुपगतास्ते आसीरन् संसारेऽनन्ते निजास्तान् कियतः स शोचयिष्यति । किं वा मातापित्रादिभिः शोचितैर्ये संसारहेतावसंयमे पातयन्ति स ज्ञातव्यो भावतः स्वजनेष्वप्रतिबद्धः समर्थः सोढुमुपसर्गानिति ।।

[भा.२४८५] मुहरागमादिएहि य तेसिं नाऊण रागवेरग्गं ।
नाऊण थिरं ताहे ससहायं पेसवेंति ततो ।।

वृ- तस्य ज्ञातविधिंजिगमिषोः शोभनो मुखरागः स ज्ञायते स्वजनेषु भावतः प्रतिबद्धउपसर्गान् न सहिष्णुश्च यस्य तु न तथाविधो मुखरागः केवलं विरागः स्पष्टो लक्ष्यते स ज्ञेयो भावतः स्वज्ञातिष्वप्रतिबद्धः सहिष्णुश्चोपसर्गान् । एवं मुखरागादिभिस्तेषां ज्ञातविधिं गन्तुमिच्छतां रागं वैराग्यं च ज्ञात्वा तथा स्थिरमुपलक्षणमेतदस्थिरं च ज्ञात्वा ततः स्थिरं भावतः स्वजनेष्वप्रविद्धं ससहायं सूरयः प्रेषयन्ति साम्प्रतमल्पश्रुताल्पागमपदव्याख्यानार्थमाह-

[भा.२४८६] अबहुस्सुतो अगीतो बाहिरसत्थेहिं विरहितो इयरो ।
तव्विवरीए गच्छे तारिसगसहायसहितो वा ।।

वृ- अल्पश्रुतो नामाबहुश्रुतः स चागीतार्थ उच्यते । इतरो अल्पागमो यो बाह्यो बाह्यशास्त्रैर्विरहितः । एतादृशो न गच्छेत् । स्वजनविधौ किन्तु तद्विपरीतो बहुश्रुतो बह्वागमश्च यदि वा स्वयमल्पश्रुतोऽल्पागमो वा तादृशहायसहितो बहुश्रुतबह्वागमसहायसहितो गच्छेत् ।

[भा.२४८७] धम्मकही वादीहिय तवस्सि गीएहिं संपरिवुडो उ ।
निमित्तएहिय तहा, गच्छइ सो अप्पछट्ठो उ ।।

वृ- धर्मकथाभिर्द्वित्रिप्रभृतिभिर्वादकुशलैस्तपस्विभिः षष्ठाष्टमादितपःकारिभिर्गीतार्थैः सूत्रार्थतदुभयनिष्णातैर्नैमित्तिकैश्च संपरिवृतो गच्छेत् । अथ धर्मकथ्यादयो बहवो न सन्ति ततो जघन्यतोऽप्येकैकधर्मकथ्यादिसहाय आत्मषष्ठो व्रजेत्तत्र प्रवेशविधिमाह-

[भा.२४८८] पत्ताणवेलपविसण अह पुन पत्ता पगे हविज्जाहि ।
तं बाहिं ठावेउ वनसहिं मग्गंति अन्नत्थ ।।

[भा.२४८९] पडिवत्तिकुसलेहिं सहितो ताहे उ वच्चए तहियं ।
वासपडिग्गहगमनं नातिसिनेहासणग्गहणं ।।

वृ- यदि वेलायां भिक्षावेलायां स्थानं प्राप्तास्तर्हि समकालमेव सर्वेषां प्रवेशनमथ पुनः प्रगे प्रभात एव प्राप्ता भवेयुस्तदा तं स्वजनवन्तं बहिः स्थापयित्वा वसतिमन्यत्र गृह्णन्ति । अन्यत्र वसतौ गृहीतायां प्रतिपत्तिकुशलैः सहितस्ततो बहिः स्थानात् तत्र वसतौ व्रजति तत्र तावदावासो यावद्भिक्षावेला

ततःपतद्‌ग्रहं गृहीत्वा गमनं विधेयं। तत्र यदि प्राप्तायां भिक्षावेलायां पतद्‌ग्रहं गृहीत्वा व्रजन्ति। तत्कालमेव गृह्णन्ति भक्तादिकमथ भिक्षावेलायामप्राप्तायां तत्र पतद्‌ग्रहं गृहीत्वा व्रजन्ति। निमन्त्रयन्ति च ते तदा तत्क्षणमेव यल्लभन्ते तद्‌गृह्णन्ति। अथ मुहूर्तानुगु(ग)ण्यतः कृतभिक्षाकास्तत्र गतास्तर्हि तत्र पतद्‌गृहं न नयन्ति, तत्र च गत्वा नातिस्नेहः स्वज्ञातानां दर्शनीयो यदि पुनः अतिस्नेहं दर्शयति ततोऽनुरक्तोऽस्माकमिति ज्ञात्वा ते उपसर्गयेयुः, । तथा तत्र गतेनासनपरिग्रहः कर्तव्यो न पुनरेवं चिन्तनीयम् ।। आसंदीपलियंकेसु मंचमासालएसु वा । अनायरियमज्झाणं आसइ तु सइत्तुवा ।। आसनपरिग्रहाभावे ह्यपभ्राजना भवति तस्मादासने उपवेष्टव्यम् ।।

**[भा.२४९०]** सयमेव उ धम्मकहा सासग पंतेय निम्मुहे कुणति ।
अपडुप्पपणेय तर्हि कहेइ तल्लद्धितो अण्णो ।।

**वृ-** यदि स स्वज्ञातिक साधुर्धर्मकथायां कुशलः प्रान्तांश्चनिरुत्तरान् कर्तुं समर्थस्ततः स्वयमेव तस्य धर्मकथा कथनीया भवति, अथ सोऽप्रत्युत्पन्नो नागमिकः प्रतिपत्त्यकुशलो वा तदा तस्मिन्नप्रत्युत्पन्नेऽन्यस्तल्लब्धिको धर्मकथालब्धिसम्पन्नः प्रत्युत्तरदानलब्धिसम्पन्नश्च कथयति-

**[भा.२४९१]** मलिया य पीढमद्दा पव्वज्जा एय थिरनिमित्तं तु ।
थावच्चापुत्तेणं आहरणं तत्थ कायव्वं ।।

**वृ-** ताहे पीढसमुद्दा मुहपियजंपगाते पव्वज्जाओ। भावणा वयणाणि भणिज्जा तणपडिवत्तिकुसलेणं कहएणं मलिया मद्दिया भवन्तीति चूर्णिः । पीठमर्दानाम मुखप्रियजल्पाः स्थिरीकरणनिमित्तं तत्र धर्मकथायां स्थापत्यापुत्रेण ज्ञाताधर्मकथाप्रसिद्धेनाहरणं कर्तव्यम् ।।

**[भा.२४९२]** कहिए व अकहिए वा जाननहेउं अयंति भत्तघरं ।
पुत्ताउत्तं तहिय पच्छाउत्तं व जं तत्थ ।।

**वृ-** धर्मे कथिते अकथिते वा भिक्षाग्रहणवेलायामुद्गमादिशुद्धिज्ञानार्थं भक्तगृहं महानसं प्रविशन्ति। प्रविश्य च यत्तत्र पूर्वायुक्तं पूर्वप्रवृत्तमुपस्क्रियमाणं पश्चादायुक्तं यत्तेषु साधुष्वागतेषु तन्निमित्तमुपस्क्रियमाणं तत्परिभावयन्ति। पूर्वायुक्तमित्यत्र व्याख्यानद्वयं परमतेन दर्शयति-

**[भा.२४९३]** पुव्वाउत्तारुहिए केसिंचि समीहियं तु जं तत्थ ।
एए न होंति दोण्णि वि पुव्वपवत्तं तु जं तत्थ ।।

**वृ-** केचित् व्याचक्षते पूर्वायुक्तं नाम चुल्ल्यां पाकार्थमारोपितं केषाचित्पुनरिदं व्याख्यानं यत् तत्र समीहितं पाकाय ढौकितं एतौ द्वावप्यादेशौ प्रमाणं न भवतस्तस्मादिदं व्याख्यानं यत्तत्र गृहस्थानां पूर्वप्रवृत्तमुपस्क्रियमाणं तत्पूर्वायुक्तमिति ।। अथ कस्मादिदादेशद्वयं न प्रमाणमत आह-

**[भा.२४९४]** पुव्वारुहिते ते समीहिए य किंछिब्भइ न खलु अण्णं ।
तम्हा खलु जं उचियं तं तु पमाणं न इतरं तु ।।

**वृ-** पूर्वं चुल्यामारोपिते समीहिते वा किं न क्षिप्यते खलु अन्यत् क्षिप्यते इति भावः । तस्मात्खलु यदुचितं व्याख्यानं तत्प्रमाणं नेतरत् परकीयमादेशद्वयम्-

**[भा.२४९५]** बालग पुच्छादीहि य नाउं आयस्सनायरेहिं च ।
जं जोग्गं तं गेण्हइ दव्वं पमाणं च जं तत्थ ।।

वृ- बालकपृच्छादिभिरादिशब्दात् बालकोल्लापादिश्च पिण्डनिर्युक्तिप्रसिद्धैस्तथा आदरानादराभ्यां च योग्यमयोग्यं ज्ञात्वा यत्तत्र च योग्य श्रमणप्रायोग्यं प्रतिभाति तद्गृह्णाति । वरवृषभः द्रव्यप्रमाणं च जानीयात् । कियत् कुटुम्बमन्यद्वा भोजकं कयद्वाराद्धमित्येवं यद्यावत् प्रायोग्यं प्रतिभासते तावत् गृह्णीयात् । सम्प्रत्येतदेव सविशेषतरमाह-

[भा.२४९६] दव्वपमाणगणणा खारिय फोडिय तहेव अद्धा य ।
संविग्ग एगठाणा अणेगसाहूसु पन्नरस ।।

वृ- द्रव्यं प्रमाणं नाम द्रव्याणां गणना यथा एतावन्तोऽत्रौदनभेदा एतावन्ति च शाकविधानानि । इयंतश्च खाद्यविशेषा एतावन्ति च द्रक्षापानकादीनि पानकानि तथा क्षारितानि नाम यानि लवणखरण्टितानि शालनकान्यास्तानानीत्यर्थः । फोडितं जीरकहिंगुधूपवासितं एतत्सर्वं ज्ञातव्यं, (तथा अश्राकालो भिक्षाया ज्ञातव्यो अन्यथा अवष्वक(ष्क)णादयो दोषाः स्युः, तथा संविग्रा एकस्थाना एकसंघाटात्मकाः प्रविशंति, ततःकल्पते, अनेकसाधुषु अनेकेषु साधुसंघाटकेषु प्रविशत्सु न कल्पते यतस्तत्रनियमादाधाकर्मरहिता उद्देशिकादयः पंचदशदोषाः एतदेव विवरीषुः प्रथमतो द्रव्यप्रमाणमाह-

[भा.२४९७] सत्तविहमोयणो खलु शालीवीही य कोद्दवजवे य ।
गोहुमरालग आरण कूर खज्जा य अनेगविहा ।।

वृ- सप्तविधो मकारोऽलाक्षणिकओदनः कूरस्तद्यथा- १ शालि कलमशाल्यादिकूरः, २ व्रीहि सामान्यतन्दुलौदनः ३ कोद्रवकूरो ४ यवकूरः गोधूमकूरो ६ लाककूरः ७ अकृष्टपच्यारण्यव्रीहिकूरश्च खाद्यानि चानेकविधानि ।।

[भा.२४९८] सागविहाणाय तहा खारियमादीणि वंजणाइं च ।
खंडादिपाणगाणि य नाउं तेसिं तु परिमाणं ।।

वृ- शाकविधानानि प्राजमनकानि क्षारितादीनि आदिशब्दात् स्फोटितपरिग्रहो व्यञ्जनानि तथा खण्डादिपानकानि आदिशब्दात् द्राक्षादिपरिग्रहः । तेषामोदनादीनां परिमाणं ज्ञात्वा किमित्याह-

[भा.२४९९] परिमियभत्तगदाणे दसुवक्खडियंमि एगभत्तठो ।
अपरिमिते आरेण वि गेण्हइ एवं तु जं जोग्गं ।।

वृ- परिमितभक्तकदाने परिमितानां भक्तकदाने परिमितानां भक्तकमेभिर्दातव्यमिति निश्चये यावद्दशानां योग्यमुपस्कृतं तावत्येकभक्तार्थो ग्राह्यः । एकयोग्यं तत्र भक्तं ग्राह्यमिति भावः । अपरिमिते अपरिमितभक्तकदाने दशानामारतोऽपि नवानामष्टानां वा योग्यं यदुपस्कृतं तत्रैवं स्थान-परिणामचिन्ताव्यतिरेकेण यत् योग्यं तद्यावत्पर्याप्तं गृह्णाति ।।

[भा.२५००] अद्धा य जाणियव्वा इहरा उ सक्कणादयो दोसा ।
संविग्गो संघाडो एगो इयरेसु न विसंति ।।

वृ- अद्धा भिक्षावेला ज्ञातव्या, । इतस्था अवष्वष्कणादयो दोषा भवेयुस्तथा संविग्गे संविग्नानामेकः संघाटो यत्र प्रविशति तत्र गन्तव्यम् । इतरेषु यत्र बहवः संघाटकाः प्रविशन्ति, तत्र न गच्छन्ति ।।

[भा.२५०१] तहियं गिलाणगस्सा अहागडाई हवंति सव्वाइं ।
अब्भंगसिरावेहो अपाणच्छेयावणेज्जाइं ।.

वृ- यदि स्वजनानां सम्बन्धी कोऽपि ग्लानो वर्तते तस्य चिकित्सां वैद्यः करोति यदि वा वैद्यः

साधुस्वजनानां स्वजनोऽन्यस्य कस्यापि ग्लानस्य क्रियां करोति । ततस्तत्र ग्लानो ज्ञातविधिं नीयते । यतस्तत्र ग्लानस्याभ्यङ्ग शिरावेधोऽपानमपानकर्म च्छेदेनापनीयानि छेदापनीयानि । एतानि सर्वाणि यथा कृतानि पुरःकर्मपश्चात्कर्माणि तानि भवन्ति । एतदेव स्पष्टं भावयति-

[भा.२५०२] जइ नीयाण गिलाणो नीओ विज्जो व कुणइ अनस्स ।
तत्थ हु न पच्छकम्मं जायइ अब्भंगमादीसु ।।

वृ- यदि निजकानां सम्बन्धी ग्लानो वैद्यो वा निजकोऽन्यस्य कस्यापि ग्लानस्य कुरुते चिकित्सां, तत्र हु निश्चितं न पश्चात्कर्माभ्यङ्गादिषु जायते, कथं न जायते इत्याह-

[भा.२५०३] पुव्वं च मंगलठा उप्पेउं जइ करेइ गिहियाणं ।
सिरवेधवत्थिकम्माइएसु न उ पच्छकम्मेयं ।।

वृ- पूर्वं यदि मङ्गलार्थं साधुं उप्पेउं देशीपदमेतत् । अभ्यङ्ग्य पश्चाद् गृहिकाणां गृहस्थानां करोत्यभ्यङ्गमेतत्पश्चात्कर्म न भवति । एवं शिरावेधवस्तिकर्मादिष्वपि पूर्वं साधौ कृत्वा पश्चाद् गृहस्थेषु क्रियमाणेषु न पश्चात्कर्म ।।

[भा.२५०४] अत्तठा उवनीया ओसहमादी हवंति ते चेव ।
पच्छाहारो य तेहिं अहाकडो होइ साहुस्स ।।

वृ- आत्मार्थं यान्युपनीतानि औषधादीनि गृहस्थैस्तान्येव साधोरपि भवन्ति । पथ्याहारोऽपि च तत्र साधोर्यथाकृतो भवति ततो न पश्चात्कर्म ।।

[भा.२५०५] अगिलाणे उ गिहिम्मी कुव्वुत्ताए करेंति जयणाए ।
अनत्थपुन अलंभे नायविहिं नेंति अतरंतं ।।

वृ- यदि निजकानां सम्बन्धी न कश्चित् ग्लानो नापि निजको वैद्योऽन्यस्य चिकित्सां करोति, तदा गृहिणि गृहस्थे अग्लानेऽन्यत्र पूर्वोक्तया यतनया पर्व कल्पाध्ययने ग्लानसूत्रे चिकित्सा यतनोक्ता, तया चिकित्सां कुर्वन्ति । तथान्यत्रौषधानां लाभो नास्ति, तत आह- अन्यत्र पुनरौषधानामलाभे ज्ञातविधिमनन्तरं तं ग्लानं नयन्ति, । तदेवं ग्लानविधिरप्युक्तः ।।

[भा.२५०६] अहुणा उ लाभचिन्ता, तत्थगयाणं इमा हवइ तेसिं ।
जइ सव्वेगायरियस्स, होंतितो मग्गणा नत्थि ।।

वृ- अधुना तेषां तत्र गतानां ज्ञातविधौ गतानामियं लाभचिन्ता भवति । यदि ते धर्मकथ्यादयः सर्वेऽप्येकस्याचार्यस्य भवन्ति, तर्हि नास्ति मार्गणा सर्वमाचार्यस्याभवतीति भावः ।।

[भा.२५०७] संतासंतसतीए, अह अणगणाविइज्जगानीया ।
तत्थ इमं मग्गणा ऊ आभव्वे होइ नायव्वा ।।

वृ- सदभावो नाम सन्तिसाधवः, परं न धर्मकथादिषु कुशला असदभावो मूलत एव न सन्ति साधव एवं सदभावेनासदभावेन वा येऽन्यगणसक्ता द्वितीयका नीतास्तेषामियमाभाव्ये मार्गणा भवति ।

[भा.२५०८] जं सो उवसामेइ तन्निसाए य आगया जे उ ।
ते सव्वे आयरितो, लभते पव्वावगो तस्स ।।

वृ- स ज्ञातविधिमागतः स तु यमुपशमयति प्रव्रज्यापरिणामं ग्राहयति, ये च तन्निश्रया तस्य ज्ञातिविधिमागतस्य निश्रया स्वजनोऽयमस्माकमिति बुद्धया तत्समीपमागतास्तान् सर्वान् यो

ज्ञातविधिं द्रष्टुमागतस्तस्य साधोर्यः प्रव्राजक आचार्यः स लभते ।

[भा.२५०९] जे पुन अहभावेणं धम्मकही सुंदरोत्ति वा सोउं ।
आउवसामिय तेहिं, तेसिं चिय ते हवंती उ ।।

वृ- ये पुनर्यथाभावेन यदि वा ये सुन्दरो धर्मकथीति श्रोतुमागताः सन्तस्तैर्धर्मकथ्याभिरुपशामिताः प्रव्रज्यपरिणामं ग्राहितास्ते तेषामेव भवन्ति ।।

[भा.२५१०] अनेहिं कारणेहिं व, गच्छंताणं तु जयण(णा)एसेव ।
ववहारो सेहस्स य ताइं च इमाइं कज्जाइं ।।

वृ- आस्तां स्वजनवन्दापनाय ग्लानप्रयोजनेन वा ज्ञातविधिगतानां यतना प्रागुक्ता भवति । अन्यैर्वा कारणैर्वक्ष्यमाणैर्ज्ञातिविधिं गच्छतामेषैवानन्तरोदिना यतना । एष एव च शैक्षस्य विषये ऽनन्तरोदितआभवनव्यवहारः तानि चान्यानि कार्याणि कारणानि इमानि तान्येवाह-

[भा.२५११] तवसोसिय अप्पायण ओमेव असंथरंत गच्छेज्जा ।
रमणिज्जं वा खेत्तं कालजोगं तु गच्छस्स ।।

वृ- तपसा विकृष्टेन शोषितस्तपःशोषितः, स्वजनाश्च प्रत्युत्पन्नास्तत आप्यायननिमित्तं सपरिवारो ज्ञातविधिं व्रजेत् । अथवा अवमं दुर्भिक्षं जातं तत्रासंस्तरन्तो ज्ञातविधिं गच्छेयुः । रमणीयं वा तत्क्षेत्रं गच्छस्य त्रिकालयोग्यं ततो गच्छन्ति । त्रिकालयोग्यतामेव भावयति ।।

[भा.२५१२] वासे निचिक्खिल्लं सीयलदव उग्गमेव गिम्हासु ।
सिसिरे य घननिवाया वसही तह घट्ठमट्ठा य ।।

वृ- वर्षे वर्षाकाले निश्चिक्खिल्लं कर्दमाभावः ग्रीष्मकाले प्रचुरं शीतलं द्रवं लभ्यते । शिशिरे शीतकाले घनमतिशयेन निवाता वसतिर्लभ्यते घृष्टा मृष्टा च ।

[भा.२५१३] छिनमंडवं च तयं सपक्खपरपक्खविरहितो माणं ।
पत्तेय उग्गत्तिय, काऊणं तत्थ गच्छेज्जा ।।

वृ- यदन्यत् क्षेत्रं गन्तव्यं तत् छिन्नमंडवं यत्र तु स्वजनाः सन्ति, तत्स्वपक्षपरपक्षकृतापमानविरहितं गाथायामपमानशब्दस्यान्यथोपनिपातः प्राकृतत्वात्प्रत्येकं ग्लानबालादीनामवग्रह उपष्टम्भश्च जायते इति कृत्वा इति हेतोः तत्र ज्ञातिविधौ गच्छेत् ।।

[भा.२५१४] उवदेसं काहामि य धम्मं गाहिस्स पव्वयाविस्सं ।
सड्ढाणि व वुग्गाहे भिच्छगमादी ततो गच्छे ।।

वृ- धर्मोपदेशं वा स्वजनानां करिष्यामि यदि वा धर्मं श्रावकधर्मं ग्राहयिष्यामि । अथवा ते निष्क्रमितुकामा वर्तन्ते । ततः प्रव्राजयिष्यामि दानश्रद्धानि वा तानि कुलानि भिक्षुकादिर्व्युद्ग्राहयेत् । तत एतैः कारणैर्ज्ञातिविधिं गच्छेत् ।

मू. (१४९) *आयरिय उवज्झायस्स गणंसि पंच अइसेसा पन्नत्ता, तं जहा- आयरिय उवज्झाए अंतो उवस्सयस्स पाए निगिज्झिय निगिज्झिय पप्फोडेमाणे वा पमज्जेमाणे वा नो अइक्कमइ, आयरिय उवज्झाए अंतो उवस्सयस्स उच्चारपासवणं विगिंचमाणे वा विसोहेमाणे वा नो अइक्कमइ, आयरिय उवज्झाए पभू वेयावडियं इच्छा करेज्जा इच्छा नो करेज्जा, आयरिय उवज्झाए अंतोउवस्सयस्स एगरायं वा दुरायं वा वसमाणे नो अइक्कमइ; आयरिय उवज्झाए पभू वेयावडियं इच्छा करेज्जा इच्छा नो करेज्जा, आयरिय*

*उवज्झाए अंतोउवस्स यस्स एगरायं वा दुरायं वा वसमाणे नो अइक्कमइ; आयरिय उवज्झाए बाहि उवस्सयस्स एगरायं वा दुरायं वा वसमाणे नो अइक्कमइ ।*

[भा.२५१५] अतिसेसियदव्वठा नायविधिं वयति बहुसुतो ।
नेगा य अतिसया बहुसुयस्स उ एसो उ पस्सेसो ।।

वृ- अतिशेषितानामतिशयितानां ग्लानप्रायोग्याणां शतपाकादीनां द्रव्याणामर्थाय बहुश्रुतः सन् ज्ञातविधिं व्रजति इति पूर्वसूत्रे प्रतिपादितमस्मिंश्च सूत्रे बहुश्रुतस्य सतो अनेके अतिशया इति प्रतिपाद्यमित्येष सूत्रस्य प्रश्लेषसम्बन्धः प्रकारान्तरेण सम्बन्धमाह-

[भा.२५१६] अन्नो वि अत्थि जोगो असाहुदिठीहिं हीरमाननं ।
वायादतिसयजुत्ता, तहियं गंतुं नियत्तंति ।।

वृ- अन्योऽपि पूर्वसूत्रेण सहास्य सूत्रस्य योगः सम्बन्धोऽस्ति तमेवाह- असाधुदृष्टिभिः परतीर्थिकदृष्टिभिः ह्रियमाणानां स्वजनानां वादाद्यतिशययुक्तास्तत्र ज्ञातविधिस्थाने गत्वा ते कुदृष्टयस्तेषां निवर्तयन्ति । इति प्रागुक्तं वुग्गाहे भिच्छुक्कमादी इति वचनात् ते चातिशयाऽत्रापि प्रतिपाद्यन्ते इति भवति सम्बधः पुनः प्रकारान्तरेणाह-

[भा.२५१७] पुनरवि भणइ जोगो, नायविधिं गंतु पडिनियत्तस्स ।
वसहिं विसंतो सुत्तं संसाहिउमागते वा वि ।।

वृ- पुनरपि प्रकारान्तरेण भण्यते-योगो ज्ञातविधिं वन्दापनाय गत्वा प्रतिनिवृत्तस्य परतीर्थिकं वा वादोपस्थितं संसाध्य निर्जित्यागतस्य वसतिं विशतोऽधिककृतं सूत्रमुपतिष्ठते । अधिकृतसूत्रार्थ उपढौकते तत एतदर्थं ज्ञातविधिसूत्रनन्तरमस्य सूत्रस्योपनिपातः कृतः, एभिः सम्बन्धैरायातस्यास्य व्याख्या-आचार्यश्च उपाध्यायश्च आचार्योपाध्यायः स हि केषांचिदाचार्यः केषांचिदुपाध्यायः तत एवमुक्तं यावता पुनः सनियमादाचार्य एव तस्य गणे गणमध्ये पञ्च अतिशेषा अतिशयाः प्रज्ञप्तास्तद्यथा-आचार्योपाध्यायानां उपाश्रयस्यान्तर्मध्ये पादान् निगृह्य निगह्य तथा पादा यतनया प्रस्फोटयितव्याः । यथा धूलिः कस्यापि क्षपकादेर्नलगति । एवं शिक्षयित्वा शिक्षयित्व प्रस्फोटयतः प्रस्फोटको नातिक्रमति । एष एकोऽतिशयः । तथा आचार्योपाध्यायान् उपाश्रयस्यान्तरुच्चारंप्रश्रवणं वा विगिश्चयतो व्युत्सृजतो विशोधक उच्चारादिपरिष्टापको नातिक्रामति । एष द्वितीयस्तथा आचार्योपाध्यायः प्रचुरतो वैयावृत्यमिच्छया कारयेत् । न बलाभियोगत आणा बलाभियोगा निग्गंथाणं न कप्पए काउमिति वचनात् । एष तृतीयस्तथाचार्योपाध्याय उपाश्चस्यान्तर्मध्ये एकरात्रं वा द्विरात्रं वा वसन् नातिक्रामति । नातिचारभाग् भवति एष चतुर्थः, । आचार्योपाध्याय उपाश्रयाद्वहिरेकरात्रं वा वसन् नातिक्रामति ।

[भा.२५१८] बहि अंतो विवच्चासो पणगं सागारि चिठइ मुहुत्तं ।
बिइयपयं विच्छिण्णे निरुद्धवसहीए जयणाए ।।

वृ- बहिरन्तश्च यदि विपर्यासो बहिस्स्फोटयांतःप्रस्फोटनरूपस्तदा पंचकरात्रिंदिवं प्रायश्चित्तम् अथ बहिः सागारिको वर्त्तते ततस्तिष्ठति मुहूर्त्तं, व्याख्यानतो विशेषप्रतिपत्तिरंतर्मुहूर्तमित्यर्थः, अथैतावत्कालेन सागारिको नापयाति तर्हि द्वितीयपदमपवादपदमाश्रीयते बहिः पादाप्रस्फोटने-ऽप्यन्तर्वसतेः प्रविश्यते । तत्र विस्तीर्णे उपाश्रये अपरिभोगे प्रदेशे आचार्यपादाः प्रस्फोटयितव्या, निरुद्धायां संकटायां वसतौ यत्राचार्यसत्कवेण्टकाद्यवकाशस्तत्र यतनया यथा न कस्यापि

धूलिर्लगतीत्येवंरूपया प्रस्फोटयितव्याः । एष द्वारगाथासंक्षेपार्थः साम्प्रतमेनामेव विवरीषुरिदमाह-

[भा.२५१९] बाहिं अपमज्जंते पणगं गणिणो उ सेसए मासो ।
अप्पडिलेहदुपेहा पुव्वुत्ता सत्तभंगा उ ॥

वृ- आचार्यः कुलादिकार्येण निर्गतः प्रत्यागत उत्सर्गेण तावद्वसतेर्बहिरेव पादान् प्रस्फोटयति प्रत्युप्रेक्षते प्रमार्जयति चेत्यर्थः । यदि पुनर्निष्कारणं बहिः पादान् न स्फोटयति, तदा बहिरप्रमार्जने गणिन आचार्यस्य प्रायश्चित्तं पञ्चकं शेषके साधौ बहिः पादान् (अ)प्रमार्जयति लघुको मासः प्रायश्चित्त, तस्मात् बहिः पादान् प्रस्फोटयान्तः प्रस्फोटयान्तः प्रवेष्टव्यं, । तच्च प्रस्फोटनं विधिना कर्तव्यं, । स चायं विधिः प्रत्युपेक्षते ततः प्रमार्जयति, । अविधिः पुनरयं न प्रत्युपेक्षते न प्रमार्जयति ? न प्रत्युपेक्षते प्रमार्जयति २ प्रत्युपेक्षते न प्रमार्जयति ३ प्रत्युपेक्षते प्रमार्जयति ३ प्रत्युपेक्षते प्रमार्जयति च ४ । अत्राद्येषु त्रिषु भङ्गेषु प्रत्येकं प्रायश्चित्तं मासिकं चतुर्थे भङ्गे भङ्गाश्चत्वारस्तद्यथा दुःप्रत्युपेक्षते दुःप्रमार्जयति १, दुःप्रत्युपेक्षते सुप्रमार्जयति २, सुप्रत्युपेक्षते दुःप्रमार्जयति ३, सुप्रत्युपेक्षते सुप्रमार्जयति ४ । अत्र च चतुर्थो भङ्गः शुद्धः शेषेषु त्रिषु भङ्गेषु प्रत्येकं प्रायश्चित्तं पञ्चरात्रिंदिवं । एतदेवाहअप्रेक्षणे उपलक्षणमेतत् । अप्रमार्जने च तथा दुःप्रेक्षायामत्राप्युपलक्षणव्याख्यानमिति दुःप्रमार्जनायां च पूर्वोक्ताः कल्पाध्ययनोक्ताः सप्त भङ्गाः । तत्र चोक्तः प्रायश्चित्तविधिः-

[भा.२५२०] बहिअंतो विवच्चासो पनगं सागारिए असंतंमि ।
सागारियंमि उ चले, अच्छंति मुहुत्तगं थेरा ॥

वृ- यदि सागारिके अथ सागारिको बहिस्तिष्ठति सोऽपि चलश्चलो नाम मुहूर्तमात्रेण गन्ता तस्मिन् सागारिके चले तिष्ठति मुहूर्तकमल्पार्थे कप्रत्ययोऽल्पं मुहूर्तं । किमुक्तं भवति ? सप्ततालमात्रं सप्तपदातिक्रमणमात्रं वा कालं स्थविरास्तिष्ठन्ति ॥

[भा.२५२१] थिरवक्खित्ते सागारिए अनुवउत्तो पमज्जिउं पविसे ।
निव्विक्खित्तुवउत्ते अंतो उ पमज्जणा ताहे ॥

वृ- स्थिरो नाम यस्तत्रावस्थायी ध्रुवकर्मिको व्याक्षिप्तः कर्मणि कर्तव्ये व्याकुलस्तद्विपरीतो-ऽव्याक्षिप्तः उपयुक्त आचार्यान् दृष्ट्या निरीक्षमाणस्तद्विपरीतोऽनुपयुक्तः । तत्र स्थिरे व्याक्षिप्ते-ऽनुपयुक्ते सागारिके विद्यमाने बहिः पादान् प्रमार्ज्य प्रविशेत्, स्थिरे निर्व्याक्षिप्ते उपयुक्ते बहिः सागारिके सति वसतेरन्तः प्रमार्जना पादानां, । अथाचार्यस्य पादाः किं स्वयमेवाचार्येण प्रस्फोटयितव्या उतान्येन साधुना तत आह-

[भा.२५२२] आभिग्गहियस्स असती तस्सेव रओहरेन अन्नयरे ।
पाउंछणुण्णिए नव पुसंति य अनन्नभुत्तेणं ॥

वृ- केनापि साधुना अभिग्रहो गृहीतो वर्तते । यथा मया आचार्यस्य बहिर्निर्गतस्य प्रत्यागतस्य पादाः प्रस्फोटमितव्या इति, यद्यस्ति तर्हि तेन प्रमार्जनायोपस्थातव्यम् तत्र चाचार्येणात्मीयं रजोहरणं तस्य समर्पयितव्यं पादप्रमार्जनाय, ततः स आभिग्रहिकस्तेनाचार्यसक्तेन रजोहरणेन आचार्यस्य पादान् प्रमार्जयति, । अथवा यदन्यदौर्णिकं पादप्रोञ्छनकमन्येन साधुना पादप्रमार्जनेनापरिभुक्तं तेनाचार्यस्य पादान् प्रस्फोटयति । अथाभिग्रहिको न विद्यते । तत आभिग्रहिकस्यासत्यभावे अन्यतरस्तस्यैवाचार्यस्य रजोहरणेन औणिकेन वा पादप्रोञ्छनकेनानन्यभुक्तेन पादान् पुंसयति । यदि पुनरव्यापृता अपि

निष्कारणमाचार्यस्य पादान्न प्रमार्जयति तदा मासलघु, अथात्मीयेन रजोहरणेन पादप्रोञ्छनेन वा अन्यपादप्रमार्जनतः परिभुक्तेन प्रमार्जयंति, तदापि मासलघु । यदि बहिर्वसतेः सागारिक-स्तिष्ठतीत्याचार्यस्य पादा न प्रस्फोटितास्तर्हि वसतेरन्तः प्रविष्टस्य प्रस्फोटनीयास्तत्रायं विधिः-

**[भा.२५२३]** विपुलाए अपरिभोगे अप्पणउवासए व चिट्ठस्स ।
एमेव भिक्खुयस्स वि नवरिं बाहिं चिरयरं तु ॥

**वृ-** यदि विपुला वसतिस्तर्हि तस्यां विपुलायां वसतावपरिभोगे अवकाशे आचार्येण स्थित्वा पादाः प्रस्फोटयितव्याः, । अथ संकटा वसतिस्तर्हि आचार्यस्य आत्मीयो वेण्टकाद्यवकाशस्तत्र ऐर्यापथिकी प्रतिक्रम्योपविष्टस्य पादाः प्रमार्जनीयास्ते च कुशलेन साधुना तथा प्रमार्जनीया यथाऽन्ये साधवो धूल्या न भ्रियन्ते यथा आचयस्योक्तमेव भिक्षोरपि द्रष्टव्यं, नवरं बहिर्वसतेः सागरिकस्तिष्ठति । ततश्चिरतरमपि कालं प्रतीक्षेत, यावच्चलः सागारिको व्यतिक्रामति यदि पुनर्भिक्षु वसतेर्बहिः सागारिकाभावेऽपि पादान् (अ) प्रस्फोट्य वसतेरन्तः प्रविशति तदा तस्य प्रायश्चित्तं मासलघु ।

**[भा.२५२४]** निगिज्झ पमज्जाही अभणंतस्सेव मासियं गुरुणो ।
पासरए खमगादी चोयगकज्जा गते दोसा ॥

**वृ-** यदि बहिः सागारिकइति कृत्वा वसतेरन्तः पादाः स्फोटयितव्याः । ततः सङ्कटायां वसतौ पादान् प्रमार्जयितुमुपस्थितं साधुमाचार्यो ब्रूते-आर्य निगृह्य पादान् प्रमार्जय । किमुक्तं भवति । तथा यतनया पादान् प्रमार्जय । यथा पादधूल्या न कोऽपि साधुर्भ्रियते । अथैवं न ब्रूते तत एवमभणतो गुरोः प्रायश्चित्तं मासलघु, । अथ पादरसा क्षपकादयः खरंट्येरन् । तथा च सति वक्ष्यमाणा दोषाः । अत्र चोदक आह-आचार्यः कस्माद्बहिर्गच्छति । सूरिराह-कार्यागते कार्येषु समापतितेष्वगते दोषास्तस्माद्गच्छति । अधुना पायरए खमगादी इत्येतद्व्याख्यानयति-

**[भा.२५२५]** तवसोसितो व खमगो इड्डिमावुड्ढो कोञ्चितो वावि ।
मा भंडण खमगा इति सुत्तनिगिज्झ जयणाए ॥

**वृ-** तपसा शोषितस्तपःशोषित क्षपकः तस्य स्वल्पेऽप्यपराधे द्वेषोजायते ततः स आचार्य-पादप्रमार्जनधूल्या विकीर्णः कुपितो भवेत् कुपितश्च सन् भंडनं कृत्वा अन्यत्र गच्छे प्रविशेत् प्रतिभज्यते वा, अथवा कोपि ऋद्धिमान् वृद्धो राजादिः प्रव्रजितः सपादधूल्याऽवकीर्णो रुष्टः सन् भंडनादि कुर्यात्, कोञ्चितो नाम शैक्षकः प्रव्रजितः सोपि रुष्टः प्रतिभज्येत तस्मात् क्षपकादि मा भंडनं कार्षीदिति सूत्रे निगिज्झ निगिज्झ निगिज्झेत्युक्तमस्याप्ययमर्थो यतनयेति ॥ सम्प्रति चोयगे कज्जागते दोसा इति-

**[भा.२५२६]** थाणे कुप्पते खमगो किं चेव गुरुस्स निग्गमो भणितो ।
भण्णइ कुलगणकज्जे चेइयगमनं च पव्वेसु ॥

**वृ-** स्थाने कुप्यति क्षपकस्तथाहि स पादधूल्यावकीर्यते ततो मा कोपं कार्षीत् किञ्चिद्गुरोराचार्यस्य निर्गमः । केन कारणेन भणितस्तत्कारणमेव नास्ति येन कारणेन बहिराचार्यस्य निर्गमनं, आचार्य आह-भण्यते-अत्रोत्तरं दीयते कुलकार्ये गणकार्ये उपलक्षणमेतत् । संघकार्ये च बहुविधे समापतिते तथा पर्वसु पाक्षिकादिषु चैत्यानां सर्वेषामपि नमनमवश्यं कर्तव्यमिति हेतोश्चाचार्यस्य वसतिर्बहिर्गमनं-

**[भा.२५२७]** जति एवं निग्गमणे भणाति तो बाहि चिट्ठिए पुच्छे ।
वुच्चति बहि अच्छंते वा चोयग गुरुणो इमे दोसा ॥

**वृ-** चोदको भणति-यदि एवं कुलादिकार्यनिमित्तमाचार्यस्य निर्गमनं ततो निर्गमने सति प्रत्यागतो यदि वसतेर्बहिः सागारिकस्ततो तावद्बहिस्तिष्ठतु, यावद्बलसागारिको व्युत्क्रान्तो भवति, । तत बहिरेव पादान् प्रस्फोट्य वसतेरन्तः प्रविशतु, । एवं च सति क्षपकादिदोषाः परित्यक्ता भवन्ति, । आचार्य आह उच्यते-उत्तरं भण्यते । हे चोदक गुरोराचार्यस्य वसतेर्बहिस्तिष्ठत इमे वक्ष्यमाणा बहवो दोषास्तानेवाह-

**[भा.२५२८]** तण्हुण्हावि अभाविए वुड्ढा वा अच्छमाण पुच्छादी ।
विनए गिलाणभादी, साहु सन्नी पडिच्छंती ।।

**वृ-** कुलादिकार्येण निर्गते आचार्य उष्णेनाभाविते तृष्णा जायते । ततस्तृष्णाभिभूतो वसतिमागतो यदि बहिर्वसतेः प्रतीक्षते यावत्सागरिकोऽपगच्छति । तावत्तृष्णया उष्णेन आदिशब्दादनागाढा-गाढपरितापनापरिग्रहः पीडिते मूर्च्छा जायते आदिशब्दात् वसतिं प्रविष्टः सन् प्रचुरं पानीयमा-पिवतस्ततो भक्ताजीर्णतया ग्लानत्वं भवेदित्यादि परिग्रहस्तथा वृद्धा उपलक्षणमेतत् । बालशैक्षाऽ-सहाद्यश्चाचार्ये तिष्ठति प्रतीक्ष्यन्ते ते च प्रतीक्ष्यमाणाः प्रथमद्वितीयपरीषहाभ्यां पीडिता मूर्च्छाद्याप्नुवन्ति तथा ग्लाना आदिशब्दात् क्षपकादिपरिग्रहस्ते विनयेन प्रतीक्षमाणाः भोजन मकुर्वन्त औषधादिकं च गुरुणा विना अलभमाना गाढतरं ग्लात्वाद्याप्नुवन्ति । यथा साधवः केचित् प्राघूर्णका गन्तुमनसः तथा संज्ञिनः श्रावका अष्टम्यादिषु कृताभक्ताः पारणके भिक्षायामदत्तायां अपारयन्त आचार्यां प्रतीक्ष्यमाणास्तिष्ठन्ति । तत्र साधूनां दिवसो गरीयान् घटति तत्र चोष्णादि परितापनादोषः, संज्ञिनां चान्तरायमित्येष गाथासंक्षेपार्थः । साम्प्रतमेनामेव विवरीषुः प्रथमतः तण्हुण्हादि भाविए इति ।

**[भा.२५२९]** तिण्हुण्हभावियस्स पडिस्समाणस्स पुच्छमादीया ।
खद्धादियणगिलाणे सुत्तत्थविराहधना चेव ।।

**वृ-** आचार्यःस्वरूपत उष्णेनाभावितः क्वचित् प्रयोजनवशतो वहिर्निर्गमनात् ततः कुलादिकार्येषु निर्गतस्तृष्णाभिभूतो वसतिमागतोऽपि यदि सागारिकमपगच्छन्तं यावत्प्रतीक्षते, ततः प्रतीक्षमाणस्य तृष्णया उष्णेन च तापितस्य मूर्च्छादयो भवन्ति । आदि शब्दादागाढादिपरितापनापरिग्रहस्तथा वसतिं प्रविष्टेऽतीव तृष्णाभिभूतः खद्दस्य चतुरस्य पानीयस्यादानं ग्रहणं कुर्यात्, । प्रचुरं पानीयं पिबेदित्यर्थः । ततो भक्ताणतया ग्लानो भवेत्, तस्मिंश्च ग्लाने सूत्रार्थपरिहानिर्विराधना च तस्याचार्यस्य स्यात् । ग्लानत्वेनाचार्यो म्रियेतेति भावः, । अथवा सूत्रार्थपरिहान्या अजानतां साधूनां ज्ञानादिविराधना स्यात्,। सूत्रार्थाभावतोऽजानन्तः साधवा ज्ञानादिविराधनां कुर्युरिति भावः । अधुना वुड्ढावेति व्याख्यानार्थमाह-

**[भा.२५३०]** वुड्ढासाहुसेहादी खमगो वा पारणंमि भुक्खुत्तो ।
अच्छइ पडिच्छमाणो, न भुंजण लोइयमदिट्ठं ।।

**वृ-** वृद्धा वयोवृद्धा असहाः प्रथमद्वितीयपरीषहान् सोढुमसमर्थास्तथा शैक्षका आदिशब्दात् ग्लानाश्चाचार्य प्रतीक्षमाणास्तिष्ठन्ति, ते च तथा तिष्ठन्तस्तृडादिभिः पीडिता मूर्च्छाद्याप्नुवन्ति ग्लानस्य च गाढतरं ग्लानत्वमुपजायते, । यदि पुनरागतमात्र एव वसतौ प्रविशति, ततो यथायोगं वृद्धादिनामकालहीनं सम्पाद्यते इति, न कश्चिद्दोषः । अधुना विनये गिलाणादी इत्येतद्व्याख्यानयति-खमगो वा इत्यादि क्षपको वा कोऽपि विकृष्टेन तपसा क्लान्तो विनयेन पारणके बुभुक्षार्तः प्रतिक्ष्यमाणस्तिष्ठति । न पुन र्भुंक्ते अद्यापि नालोचितमाचार्येण च न दृष्टमिति कृत्वा ।

**[भा.२५३१]** परितावा अंतराया दोसा हुंति अभुंजणे ।
भुंजणे अविणादीया दोसा तत्थ भवंतिय ।।

**वृ-** एवं क्षपकस्य विकृष्टतपसा क्लान्तस्य प्रतीक्षणेनाभोजने महान् परितापो भवति, अन्तरायं चोपजायते । अथ भुङ्क्ते तर्हि भोजने तत्राविनयादयो ऽविनयः प्रतीत आदिशब्दाद दृष्टानालोचित-भोजने अदत्तादानदोषपरिग्रहो दोषा भवन्ति ग्लानमधिकृत्याह-

**[भा.२५३२]** गिलानस्सोसहादी उ न देंति गुरुणो विणा ।
ऊनाहियं व देज्जाहि, तस्स वेलातिगच्छति ।।

**वृ-** ग्लानस्यौषधादिकं साधवो गुरुणा विना न ददाति, आदिशब्दात् भोजनपरिग्रहः, यदि वा ऊनमधिकं वा दद्युस्तस्य च ग्लानस्याथार्थं प्रतीक्षमाणस्य वेला तिगच्छति सम्प्रति साधूसत्री इति-

**[भा.२५३३]** पाहुणमागंतुमना वंदिय जो तेसि उण्हसंतावो ।
पारग पाडिच्छंते सड्ढे वा अंतरायं तु ।।

**वृ-** प्राघूर्णकाः केचित्साधव आगतास्ते गन्तुमनसस्ते यद्याचार्यमवन्दित्वा अनापृच्छ्या गच्छन्ति,। ततोऽविनयादयो दोषास्ततः प्रतीक्षमाणास्तिष्ठन्ति आचार्य श्चचिरेण वसतिं प्रविष्टस्तावद्दिवस आसमन्ततसोऽभवत् ततो गुरुं वन्दित्वा व्रजतां य उष्णसन्तापस्तेषां स आचार्यनिमित्तकस्तथा श्राद्धेऽष्टम्यादिषु पर्वसु कृताभक्ते पानके आचार्य प्रतीक्षमाणे अन्तरायं कृतं भवति । उपसंहारमाह-

**[भा.२५३४]** जम्हा एते दोसा तम्हा गुरुणा न चिठयव्वं तु ।
भिक्खूण चिट्ठियव्वं तस्स न किं दोस होतिए ।।

**वृ-** यस्मादे दोषास्तस्मात् गुरुणा न वसेतर्बहिः स्थिरं स्थातव्यं, । भिक्षुणा पुनश्चिरमपि स्थातव्यं यावद्यतः सागारिकोऽपयाति ततो बहिः पादान् प्रमृज्यान्तर्वसतेः प्रवेष्टव्यम् । अत्र चोदक आह-तस्य भिक्षः किमेते अनन्तरोदिता दोषा न भवन्ति ? । आचार्य आह-

**[भा.२५३५]** अनेगबहुनिगमणे अब्भुट्ठण भाविया य हिंडंता ।
दसविहवेयावच्चे सग्गामे बहिं च वायामो ।।

**[भा.२५३६]** सी उण्ह सहा भिक्खु न य हानी वायणादिया तेसिं ।
गुरुणो पुन ते नत्थी तेन पमज्जंतो खेयन्नो ।।

**वृ-** अनेकैः कारणैः बहून् वारान् निर्गमनं बहुनिर्गमनं तस्मिन् तथा गुर्वादीनामभ्युत्थाने आसनप्रदानादौ च तथा भिक्षार्थं हिंडमाना भाविता व्यायामितशरीराः यदुक्तमनेकैः बहुवारं निर्गमनं, तत्र कारणान्याह दशविधवैयावृत्त्यनिमित्तं । स्वग्रामे बहिः परग्रामेऽनेकवारमनेकधा व्यायामोऽभवत् । तथा शीतोष्णसहा भिक्षवो न च तेषां भिक्षूणां वाचनादिका वाचनादिविषया हानिर्गुरोः पुनस्तेऽनेकवारमनेकबहुनिर्गमनादयो न सन्ति । ततस्तूष्णाद्यध्यासितुमसहिष्णव आचार्या-वसते र्बहिः सागारिके तिष्ठति लघुवसतेरन्तः प्रविशन्ति, । ततः खेदज्ञेन कुशलेन पादान् प्रमार्जयन्ति ।

**[भा.२५३७]** धुवकम्मियं व नाउं कज्जेणण्णेण वा अनतिपातिं ।
अव्वक्खित्ताउत्तं न उदिक्खति बाहिभिक्खूवि ।।

**वृ-** वसतेर्बहिः सागारिकं ध्रुवकमिकं वा लोहकारादिकमन्येन वा कार्येणान्यमपि सागारिक-मनतिपातितमगच्छन्तं तथा अव्याक्षिप्तमायुक्तं च ज्ञात्वा भिक्षुरपि बहिर्नोदीक्षते न प्रतीक्षते ।

किन्तु वसतिं प्रविश्यात्मीय अवकाशे यतनयात्मनः पादौ प्रमार्जयेत् । प्रथमोऽतिशयो गतः ।

**[भा.२५३८]** बहिगमने चउगुरुगा आणादी वाणिएय मिच्छत्तं ।
पडियरणमनाभोगे खरिमुहमरुए तिरिक्खादी ।।

**वृ-** आचार्यो यदि विचारभूमिं बहिर्गच्छति ततः प्रायश्चित्तं चत्वारो गुरुका आज्ञादयश्च दोषाः, । तथा वाणिएय मिच्छत्तमिति वणिजि अभ्युत्थानं पूर्वं कृतं [illegible] कुर्वन्ति [illegible] मिथ्यात्व-मुपजायते । इयमत्र भावना आचार्यं संज्ञाभूमिं व्रजन्तं ततः प्रत्यागच्छन्तंच दृष्ट्वा वणिजो निजनिजापणे स्थिता अभ्युत्थानं कृतवन्तस्तं च तथा वणिजां बहुमानेनाभ्युत्थानं दृष्ट्वा केचिदन्ये मन्यन्ते गुणवानेष आचार्यो येन वणिज एवमनेमभ्युपतिष्ठन्ति । तस्मादस्माकमपि पूज्य इति तेऽपि पूजयन्ति यदा त्वाचार्यः कदाचित् द्वौ वारौ संज्ञाभूमिं व्रजति तदा चतुरो वारान् गमने प्रत्यागमने चोत्थातव्यम् । ते चालस्यं मन्यमाना अभ्युत्थातव्यं भविष्यतीति कृत्वा आचार्यं दृष्ट्वाऽन्यतो मुखं कुर्वन्ति । तांश्च तथा कुर्वतो दृष्ट्वा अन्ये चिन्तयन्ति । नूनमेष प्रमादी जातो ज्ञातोऽपि गुणवानपि यदीदृशः पतति तर्हि न किञ्चिदिति ते मिथ्यात्वं गच्छन्ति । तथा आचार्यं लोकेन पूज्यमानं दृष्ट्वा मस्के ब्राह्मणस्य मारणबुद्धया प्रतिचरणं भवति । ततः संज्ञाभूमिं गतं विजने प्रदेशे मारयेत् । तथा खरमुखीं नपुंसकीं दासीं वा प्रापयित्वा उड्डाहं कुर्यात् । अनाभोगेन वा वनगहने प्रविष्टे तिर्यगादौ च गर्दभ्यादौ कुलटादौ च प्रविष्टायामात्मपरोभयसमुत्था दोषा एष गाथासंक्षेपार्थः ।। सम्प्रति वाणिए य मिच्छत्तमित्येतद्विभावयिषुराह-

**[भा.२५३९]** सुयवंतंमि परिवारवं च वणियंतरावनुट्ठाणे ।
दुट्ठाणनिग्गिमंमि य हाणी य परमुहावणा ।।

**वृ-** संज्ञाभूमिं व्रजति ततः प्रत्यागच्छति वा तस्मिचार्ये श्रुतवानेष परिवारवांश्चेति मन्यमाना अन्तरा निजनिजापणेषु स्थिता वणिजोऽभ्युत्थानं कृतवन्तः । तेषां चोत्थाने लोकस्य च भूयान् बहुमान आसीत् कदाचिदाचार्यो द्वौ वारौ संज्ञाभूमिं व्रजेत् ततो द्विस्थाननिर्गमने चतुरो वारान् गच्छति प्रत्यागच्छति चोत्थातव्यं ततस्ते आलस्यं मन्यमाना अभ्युत्थानस्य हानिं कुर्वन्ति । ते च हानिमभ्युत्थानस्य चिकीर्षवोऽभ्युत्थातव्यं भविष्यतीति कृत्वा तमाचार्यं दृष्ट्वा परमुखा भवन्ति । अन्यतो मुखं कुर्वन्तीति भावः । अथवा अवर्णः स्यात्तथाहि द्वौ वारौ संज्ञाभूमिं व्रजन्तमाचार्यं दृष्ट्वा ते वदन्ति । नूनमेष आचार्यो द्वौ त्रीन् वारान् समुद्दिशति तेन द्वौ वारौ संज्ञाभूमिं याति ।।

**[भा.२५४०]** गुणवं तु जतो वणिया पूर्यं तत्रेव सन्नया तंमि ।
पडियत्ति अनुठाणे दुविहनियत्ती अभिमुहाणं ।।

**वृ-** वणिजां बहुमानेनाभ्युत्थानं दृष्ट्वा केचिदन्ये चिन्तयन्ति । गुणवानाचार्यो यतो वणिजः पूजयन्ति। एवं चिन्तयित्वा तेऽप्यन्ये तस्मिन्नाचार्ये सन्नता भवन्ति । वारद्वयं संज्ञाभूमिगमने वणिजामनुत्थाने ते चिन्तयन्ति । नूनमेष आचार्यः पतितः । कथमन्यथा वणिजः पूर्वमभ्युत्थानं कृतवन्तो नेदानीं कुर्वन्ति, तथा च सति तेषामभिमुखाणां द्विविधा निवृत्तिस्तथा ये श्रावकत्वं गृहीतुकामा ये च तस्य समीपे प्रव्रजितुकामास्ते चिन्तयंति । यद्येषोपि प्रधानो ज्ञात्वा कुशीलत्वं प्रतिपद्यते तर्हि नूनं सर्वं जिनवचनमसारमिति मन्यमानाः श्रावकत्वात् व्रतग्रहणाद्वा प्रतिनिवर्तन्ते मिथ्यात्वं गच्छन्ति । सम्प्रति पडियरणमणाभोगे इत्यादि व्याख्यानमाह-

**[भा.२५४१]** आउट्ठोत्ति वलोगे पडियरिउ च्छिन्ने मारुए मरुगो ।

खरियमुह संढगं वा लोभेउ तिरिक्खसंगहणं ।।

वृ- गुणवानाचार्य इति कृत्वा सर्वो लोक आचार्यस्यावृतोऽभवत् प्रणतोऽभूत्धिग्जातीयानां च केषाञ्चित् पापीयसां तथा पूजामाचार्यस्य दृष्ट्वा महामत्सरस्ततो मात्सर्येण संज्ञाभूमिगतमाचार्यं प्रतिचर्य छन्न्ने प्रदेश मरुको ब्राह्मणः कोऽपि जीविताद्व्यपरोप्य गर्तादिषु प्रच्छन्ने प्रदेशे स्थगयेत् । तथा खरिकामुखीं दासीं नपुंसकं वा प्रलोभ्य तत्र प्रेष्य संग्रहं कुर्यात् । तथा मैथुनमेष सेवमानो गृहीतस्ततः उड्डाहः स्यात्तथाऽनाभोगेनाचार्यो वनादिगुपिलमवकाशं संज्ञाव्युत्सर्जनाय प्रविष्टः स्यात्तत्र च तिरिक्खत्ति तिर्यग्योनिका गर्दभ्यादिका पूर्वगता पश्चाद्वा प्रविष्टा भवेत् । तां च केचित्प्रत्यनीका दृष्ट्वा उड्डाहं कुर्युः । मूलगाथायां यदुक्तं तिरिक्खादीति । तत्रादिशब्दव्याख्यानार्थमाह-

[भा. २५४२] 	आदिग्गहणा उब्भामिगा व तहा अन्नतित्थिगा वावि ।
अहवा वि अन्नदोसा हवंति सेवादिमादीया ।।

वृ- आदिग्रहणात् उद्भामिका कुलटा तथा अन्यतीर्थिकी वा परिगृह्यते । सा तस्मिन् गहने पूर्वगता पश्चाद्वा प्रविष्टा भवेत् । तऊवात्मपरोभयसमुत्था दोषाः संग्रहणादयश्च प्रागुक्ताः । अथवा इमे वक्ष्यमाणा अन्ये वाद्यादयो दोषा भवन्ति तानेव संजिघृक्षुर्द्वारगाथामाह-

[भा. २५४३] 	वादी दंडियमादी सुत्तत्थाणं व गच्छपरिहानी ।
आवस्सगमिहरे कुमार आयरोसे इत्तीए ।।

वृ- वादि दण्डिकादयो वादिदण्डिकादिविषया बहवो दोषास्तथा सूत्रार्थानां गच्छस्य च परिहानिः । अथवा सूत्रार्थानां परिहानिर्गच्छे च ज्ञानादीनां परिहानिस्तथा आवश्यकं उक्तावश्यकं कुवन् अकुर्वंश्च कुमारो दृष्टान्तः एष द्वारगाथासंक्षेपार्थः ।। साम्प्रतमेनामेव विवरीषुः प्रथमतो वादिद्वारमाह-

[भा. २५४४] 	सन्नागतोत्ति सिद्धे भयातिसारोत्ति बेति परिवादी ।
मा होहिरिसिवज्झा वच्चामि अलं विवाएण ।।

वृ- कोऽपि परप्रवादी बहुश्रुतमाचार्यं लोकपूजितं श्रुत्वा तेन समं वादं करिष्यामीत्यागतो भवेत् । आचार्यश्च संज्ञाभूमिं तदा गतस्तेन चागतेन वसतौ पृष्टक्क आचार्याः ? साधुभिः कथितमाचार्याः संज्ञाभूमिं गताः एवं श्रुत्वा स परप्रवादी ब्रूयात् स मम भवेन पलायितो यदि वा मम भयेनातिसारो जातः । अथवा मा भविष्यत्येषां हत्येति व्रजामि अलं पर्याप्तं विवादेन । अधुना दंडियमादिति व्याख्यानयति-

[भा. २५४५] 	चंदगवेज्झासरिसं आगमनं रायइड्ढिमंताणं ।
पव्वज्जसागभद्दा इच्चादिगुणाण परिहानी ।।

वृ- यथा इन्द्रपुरे इन्द्रदत्तस्य राज्ञः सुतेन कथमपि पुत्तलिकाक्षिचन्द्रकस्य वेधः कृतस्तत् सदृशं राज्ञऋद्धिमतां वान्येषामाचार्यसमीपे आगमनं आचार्ये च संज्ञाभूमिं गते दण्डिकादिरागतो भवेत् । ततः संज्ञाभूमिं गतश्चाचार्य इति श्रुत्वा प्रतिवर्त्तते यदि पुनः संज्ञाभूमिं न गता आचार्या भवेयुस्ततो धर्मं श्रुत्वा कदाचित्ते प्रव्रज्यां गृह्णीयुः । प्रव्रजितेषु च राजादिषु महती प्रवचनप्रभावना तथा श्रावकत्वं केचित्कदाचित्प्रतिपद्येरन् । यथा भद्रका वा भवेयुस्तथा च चैत्यसाधूनां महानुपग्रहः । संज्ञाभूमिगमने चैतेषां गुणानां हानिः । सम्प्रत सुत्तत्थाणं य गच्छे परिहाणी इत्येतद्व्याख्यानार्थमाह-

[भा. २५४६] 	सुत्तत्थे परिहानी वीयारं गंतु जा पुनो एइ ।
तत्थेव य वोसरणे सुत्तत्थेसुं न सीयंति ।।

वृ- विचारं विचारभूमिं गत्वा यावत् तावत्सूत्रार्थपरिहानिः । इयमत्र भावना-संज्ञाभूमिर्दूरे भवेत्सूत्रपौरुष्यामर्थपौरुष्यां चार्धकृतायां आचार्यः संज्ञावान् जातस्ततो गतः संज्ञाभूमिं ततः उद्घाटायां पौरुष्यामर्थपौरुष्यां कालवेलायां समागतस्ततः सूत्रार्थपरिहानिः । तद्भावाच्च शिष्याः प्रतीच्छिकाश्चान्यं गणं व्रजन्ति, ततो गच्छस्यापि परिहानिस्तत्रैव पुनरुपाश्रये संज्ञाया व्युत्सर्जने सूत्रार्थेषु साधवो न सीदन्ति । अत्र चावश्यकं कुर्वन्नकुर्वन् कुमारो दृष्टान्तमेव भावयति-

[भा.२५४७] तीरगए ववहारे खीरगते होंति तदिह उट्ठाणे ।
कोसस्स हानि परचमुपेल्लण रज्जस्स अपसत्थे ।।

वृ- कुमारस्यास्थाने समुपविष्टस्यार्थिनः प्रत्यर्थिनश्च व्यवहारेणोपस्थितास्तेषां चोत्तरोत्तरेण व्यवहरतां व्यवहारस्तीरं गतः, । परं नाद्यापि समाप्तिमुपयाति । तस्मिंश्चासमाप्ते व्यवहारे सति राजकुमारः संज्ञावान् जातस्तत उत्थाय संज्ञाभूमिं गतः । स च यावन्नायाति तावदर्थिनः प्रत्यर्थिनश्च क्षीरोदक-संयोगादिवदेकीभूतास्ततो राजकुमारस्य प्रत्यागतस्य ते ब्रुवते वयं परस्परं सुस्थीभूताः । एवं सदा कुर्वन् समस्तादपि लक्षादिप्रमाणान् दण्डाय पदात्परिभ्रष्टस्ततः कोशस्य हानिर्जाता । तां च ज्ञात्वा परचमूः परबलमागतं तया च राज्यस्य प्रेरणमेषोऽप्रशस्ते दृष्टान्तः । प्रशस्ते पुनर्दृष्टान्तः स्वयं भावनीयः। स चायं-प्रथमत एवावश्यकमुच्चारादेः कृत्वा आस्थाने समुपविशति उपविष्टो यदि संज्ञावान् भवति । ततः प्रच्छन्ने प्रदेशे व्युत्सृजति । एवं तस्य कुर्वतः प्रभूतं प्रभूततरं दण्डाय पदं जातं । तथा च सति कोशस्यमही वृद्धिस्ततः परबलस्य प्रेरणं राज्यान्तरसंग्रहः । एष दृष्टान्तोऽयमर्थोपनयः । य आचार्यो बहिः संज्ञाभूमिं व्रजति, तस्य प्रागुक्तप्रकारेण सूत्रार्थपरिहानिस्तत्परिहान्या गच्छस्यापि परिहानिः शिष्याणां प्रातीच्छिकानां चान्यत्र गणान्तरे गमनात् । यस्तु तत्रैवोपाश्रये व्युत्सृजति तस्य न किञ्चिदपि परिहीयते इति सर्वं सुस्थं । एतदेवाह-

[भा.२५४८] वेलं सुत्तत्थाणं न भंजए दंडियादिकहणं वा ।
पच्छण्णअमयकोसे पुच्छा पुन साहणा विनए ।।

वृ- यथा बहिर्नगन्तव्यमेवं ग्रामादीनामन्तरेऽपि सूत्रार्थानामपरिहानिमित्तं दण्डिकादीनामागतानां धर्मकथाया अविघ्ननिमित्तं च संज्ञा व्युत्सृजनाय न गन्तव्यं किन्तूपाश्रयस्यान्तर्व्युत्सृजनीयम् । येन सूत्रार्थ वेलायां न भनक्ति । नापि दण्डिकादीनामागतनां धर्मकथनं विघ्नयति । पूर्वमेव चोपयोगः कर्तव्यः । किं मम संज्ञा भवेन्न वा तत्र यदि शङ्का तदा कृतावश्यकेन सूत्रपौरुष्यामर्थपौरुष्यां च सूत्रार्थ-प्रदानायोपवेष्टव्यम् । तत्रापि न तावदासितव्यं यावदवश्यमुत्थेयं भवति । किन्त्वग्रे अत्रार्थे निदर्शनमेक आचार्य आवश्यकं शोधयित्वा तिष्ठति, । दण्डिकश्च धर्मश्रवणार्थमागत आचार्येण धर्मकथा प्रारब्धा। स च धर्मकथाक्षिप्तो राजकुमारो धर्मं शृण्वन्नभीक्ष्णमभीक्ष्णं कायिकीं व्युत्सृजनायोत्तिष्ठति । आचार्यस्य च प्रच्छन्नो भृतकोशः समर्प्यते । प्रच्छन्नं कायिकी मात्रकं साधवः समर्पयन्ति । तत्र कायिकीः व्युत्सृजति । ततो विनये लोकोत्तरिके बलवति राज्ञः पृच्छा आचार्यस्य कथनमेतदेव विभावयिषुरिदमाह-

[भा.२५४९] निद्धाहारो वि अहं असइं उठेमि न 'स' कहयंतो ।
पासगतो मन्ने मत्तं तत्थंतरिय पणामेइ ।।

वृ- राजा चिन्तयति ममास्ति स्निग्ध आहारस्तथापि कायिकी व्युत्सर्गाय पुनः पुनुत्तिष्ठामि । आचार्यस्तु कथयन् रुक्षाहारोऽपि कायिकी व्युत्सर्गाय नोत्तिष्ठति नूनं मन्ये य एष आचार्यस्य पार्श्वे स्थितः

क्षुल्लकः स तत् कायिकी मात्रं प्रच्छन्नं वस्त्रान्तरितं प्रणयति समर्पयति । तत्र कायिकीमाचार्यो व्युत्सृजति। एतच्च यदि पृच्छ्यते तर्ह्यविनयः कृतो भवति तस्मादुपायेन पृच्छामीति विचिन्त्येदं पृच्छति-

[भा.२५५०] विनओ उत्तरिओत्ति य वलितो गंगा कतो मुही वहति ।
पुव्वमुही अवरतो भणति भिक्खं आगितिजुत्तोयं ।।

वृ- राजा सूरिमापृच्छति-भगवन् । किं लौकिको विनयो बलीयान् अथ लोकोत्तरिकः । आचार्येणोक्तमयमर्थः परीक्ष्यतां परमेवं ज्ञायते । लोकोत्तरिको विनयो बलीयान् । तत्र परीक्षा कर्तुमारब्धा । आचार्येणोक्तं यस्तव दृष्टप्रत्ययोऽयं चाकृत्या त्वं जानासि न एष विनयभ्रंशी तं प्रेषय, यथा कुतोमुखी गंगा वहतीति ज्ञात्वा निवेदय । ततो राजा य आकृतिमान् यश्च दृष्टप्रत्ययस्तं प्रेषयति व्रज कुतोमुखी गङ्गा वहति । सोऽचलन् तत्रैव स्थितो नृपं भणति-यथा पूर्वाभिमुखी गङ्गा वहति लोकोऽप्यन्य एतत् जानाति । तत आचार्यो ब्रूते । मम शिष्यानां मध्ये यं त्वं विषमकरचरण-नाशादिभिर्विषमं जानासि । उक्तं च -

विषमसमैर्विषमसमा विषमैर्विषमाः समैः समाचाराः ।
करचरणवदननाशाकर्णोष्ठनिरीक्षणैः पुरुषाः ।।

विषमत्वाच्च विषम एव विनयभ्रंशं करिष्यतीति तं प्रेषयः ।।

[भा.२५५१] रन्ना पयंसितो एस अविनीयदंसणो समणो ।
पच्छागय उस्सग्गं, काउं आलोयए गुरुणो ।।

वृ- एवमाचार्येणोक्ते राज्ञा यो विषमकरचरणादिना अविनीतदर्शनः श्रमणः स प्रदर्शित एषः व्रजतु कया दिशा गङ्गा वहतीति आचार्येण स प्रेषितः स आचार्यानापृच्छय तत्र गत्वा ततः प्रत्यागत्य ऐर्यापथिक्या कायोत्सर्गं कृत्वा गुरोः पुरत आलोचयति । कथमित्याह-

[भा.२५५२] आदिच्चदिसालोयणतरंगतणमाइयाय पुव्वमुही ।
मा होज्ज दिसामोहो पुट्ठोवि जणो तहेवाह ।।

वृ- भगवन् युष्मत्पादानापृच्छ्याहं गङ्गातटं गतस्तत्र च गत्वा सूर्यं निर्ध्यातवान् यतः आदित्याद् दिग्विभागः सम्यक् ज्ञायते । एवमादित्यदिगालोचनं कृतं । तथा तरंगैस्तृणादीनि पूर्वाभिमुखाण्युह्यमानानि; तत्र कदाचिद् दिग्मोहोऽपि स्यात्ततो मा भूद्दिग्मोह इत्यन्योऽपि जनस्त्रिःसंख्याकः पृष्टः सोऽपि तथैवाह । यथा पूर्वाभिमुखी गंगा वहतीति । एतच्च राज्ञा प्रत्ययिकप्रच्छन्नपुरुषैः परिभावोऽपि, तं तैरपि तथैव कथितं । ततो राजा प्राह-

[भा.२५५३] वहबंधच्छेयमारणनिव्विसयधणवहारलोगम्मि ।
भवदंडो उत्तरितो उच्छहमानस्स तो बलितो ।।

वृ- लोके योऽस्माकमाज्ञां भनक्ति तस्य वधं लकुटादिप्रहारैस्ताडनं, बन्धं निगडादिभिश्छेदं कर्णच्छेदादिकं केषांचित् मारणविनाशनमपरेषां निर्विषयकरणमन्येषां धनापहारं कुर्मः । तथा केचिदस्माकमाज्ञां भञ्जन्ति, लोकोत्तरेषु पुनराज्ञां भञ्जतामेतानि भयानि [न] सन्ति तथापि परेण प्रयत्नेन लोकोत्तरिका आज्ञां कुर्वन्ति । तत्किं कारणमाचार्यमाह-भवदण्डो इत्यादि । पश्चार्धं यस्तीर्थकरगणधरादीनामाज्ञां भनक्ति तस्य परभवे हस्तच्छेदनादीनि भवंति । एष लोकोत्तरे भवदण्डः अस्माद्भीतस्य साधोरुत्सहमानस्य स्वशक्त्यनिगूहस्यनिगूहनेनोद्यमं कुर्वतो विनयो बलीयान् । एवं

लोकोत्तरिको विनयो बलिकः । अत्रैवापवादमाह-

[भा.२५५४] बितियपयं उवस्सए अन्नाए उवस्सय ससागारे ।
न पवततति संते वी जे य समत्था समं तेहिं ।।

[भा.२५५५] कुप्पहादीनिग्गमणं नातिगभीरे अपच्चवायंमि ।
वोसरियं मि य गुरुणा निसिरंति महंतदण्डधरा ।।

वृ- द्वितीयपदमपवादपदमधिकृत्य संज्ञाभूमिमाचार्यो व्रजेत् । तदेव द्वितीयपदमाह-उपाश्रयस्य पश्चात्कृते संज्ञाभूमिर्नास्ति । ततस्तस्या असति बहिर्व्रजेत् । अज्ञाएत्ति यत्र न ज्ञायते । एष आचार्यस्तत्रापि बहिर्व्रजेत् । अथवा उपाश्रये सागारिको विद्यते ततो बहिर्याति, कस्यापि पुनरुपाश्रयस्य पश्चात्कृते विद्यमानेऽपि संज्ञा न प्रवर्तते सोऽपि बहिर्याति । एतैः कारणैर्बहिर्गमने जाते ये समर्थास्तरुणाः साधवः तैः समं याति । तत्र यानि कुपथादीनि कुरथ्यादीनि तैर्गन्तव्यं तैर्गच्छतोऽपि प्रायः पूर्वोक्ता दोषा न भवन्ति, । तत्रापि यन्नातिगंभीरं नातिविषमप्रत्यवायं प्रत्यवायविरहितं तत्राचार्यः संज्ञां व्युत्सृजति येषां च सहायानां हस्ते महान्तो दण्डकास्ते महादण्डधराश्चतसृष्वपि दिक्षु संरक्षणपरायणास्तिष्ठन्ति । व्युत्सृष्टे च गुरुणा पुरीषे ते महादण्डधरा वनस्तरन्ति कस्मादेवं रक्षा क्रियते इति चेत् कुलस्य त-दायतत्वात् । उक्तं च जंमि कुलं आयत्तं तं पुरिसं आयरेण रक्खाहि ।। इत्यादि कथं पुनः स रक्षितव्य-

[भा.२५५६] जह राया तोसलिओ मणिपडिमा रक्खए पयत्तेण ।
तह होइ रक्खियव्वो सिरिधरसरिसो उ आयरितो ।।

वृ- यथा राजा तोसलिको मणिप्रतिमें च प्रयत्नेन रक्षति तथा भवत्याचार्यो रक्षितव्यो यतः श्रीगृह-सदृश एष आचार्य अथ के ते प्रतिमे इत्यत आह-

[भा.२५५७] पडिमुप्पत्ती वणिए उदही उप्पातो उ वायणं भीतो ।
रयणदुगे जिनपडिमा करेमि जइ उत्तरे विग्घं ।।

[भा.२५५८] उप्पाउवसमउत्तरणमविग्घं एक्कपडिमकरणं वा ।
देवयच्छंदेन ततो जाया बितीए वि पडिमातो ।।

वृ- प्रतिमायारुत्पत्तिर्वक्तव्या सा चैवमेकस्य वणिज समुद्रं प्रवहणेनावगाढस्योत्पात उपस्थितस्ततः स वणिक् भीतः सन् औपयाचितिकं करोति । यथा यदेतदौत्पादिकमुपशाम्यति अविघ्नेनोत्तरामि च ततोऽनयोर्द्वयोर्मणिरत्नयोर्द्वे मणिमय्यौ जिनप्रतिमे कारयिष्यामि । एवमौपयाचितिके कृते देवतानुभावेनोत्पातिकमुपशान्तमविघ्नं समुद्रोत्तरणमभूत् । स चोत्तीर्णः सन् लोभेन एकस्मिन्मणिरत्ने एकां जिनप्रतिमां कारयति । ततो देवतया द्वितीयेपि मणिरत्ने द्वितीया जिनप्रतिमा कारिता । तथा चाह-देवताच्छन्देन ततो जाता द्वितीयेऽपि मणिरत्नप्रतिमा ।।

[भा.२५५९] तो भत्तीए वणितो सुस्सूसइ ता परेण जत्तेणं ।
ता दीवएणपडिमा, दीसंति हरा उ रयणाइं ।।

वृ- ततः प्रतिमाद्वयकारापणानन्तरं ते प्रतिमे वणिग् भक्त्या परेण यत्नेन शुश्रूषते । ततस्तयोश्च प्रतिमयोरिदं प्रातिहार्यं ते प्रतिमे यावद्दीपकः पार्श्वे ध्रियते तावद्दीपकेन हेतुना प्रतिमे दृश्येते । इतरथा दीपकाभावे सप्रकाशेऽपि प्रकाशे मणिरत्ने दृश्येते ।।

[भा.२५६०] सोऊण पाडिहेरं राया घेत्तूण सिरिहरे छुहति ।

मंगलभत्ती एसतो भूएति पेच्छ जोगे ।।

वृ- इदमनन्तरोदितं प्रातिहार्यं राजा तोसलिकः श्रुत्वा ते प्रतिमे स्वयमेवात्मीयश्रीगृहके भाण्डागारे क्षिपति मुञ्चति । ततो मङ्गलबुद्ध्या भक्त्या च परेण पूजयति । यस्मिंश्च दिवसे ते प्रतिमे श्रीगृहमानीते ततः प्रभृति राज्ञः कोशादिषु वृद्धिरुपजाता । आह-श्रीगृहसदृश आचार्य इत्युक्तंतत एवं दृष्टान्तभावना कृता उच्यते-

[भा.२५६१] मंगलभत्ती अहिया उप्पज्जइ तारिसंमि दव्वंमि ।
रयणग्गहणं तेनं रयणप्पभूते तहायरीतो ।।

वृ- श्रीगृहे द्रविणं रक्षणीयं मणिमयप्रतिमयोः पुनर्द्रविणमप्यतिप्रभूतमस्ति मङ्गलबुद्धिश्च तत्रापि परमतीर्थकरभक्तिश्चेति प्रयत्नेन रक्षणे त्रीणि कारणानि । तथा चाह-मङ्गलं मङ्गलबुद्धिर्भक्तिश्चाधिका तादृशे द्रव्ये समुत्पद्यते ततो रत्नग्रहणं यथा ते रत्नप्रतिमे कारणत्रयवशाद्विशिष्टेन प्रयत्नेन रक्ष्येते शुश्रूष्येते च तथा शिष्यैराचार्यः प्रयत्नेन रक्षणीयः शुश्रूषणीयश्च । अथैवमाचार्ये रक्षिते शुश्रूषिते च को गुण इत्यत आह ।

[भा.२५६२] पूयंति य रक्खंति य सीसा सव्वे गणिं सया पयया ।
इह परलोए य गुणा हवंति तप्पूयणे जम्हा ।।

वृ- गणिनमाचार्यं शिष्याः सर्वे सदा प्रयताःप्रयत्नपराःपूजयन्ति शुश्रूषन्ते च यस्मात्तत्पूजने आचार्यपूजने इहलोके परलोके च गुणा भवन्ति । इहलोके सूत्रार्थतदुभयानि परलोके सूत्रार्थाभ्यामधीताभ्यां ज्ञानादिमोक्षमार्गप्रसाधनं अथवा पारलौकिकागुणा आयरिए वेयावच्चं करेमाने महानिज्जरे महापज्जवसाणे भवति । इत्येवमादयः गतो द्वितीयोऽतिशयः । सम्प्रति तृतीयं इच्छापहूवेयावडियं - कारेज्जा इत्येवं रुपमतिशयमभिधित्सुराह-

[भा.२५६३] जेनाहारो उ गणी स बालवुड्ढस्स होइ गच्छस्स ।
तो अतिसेसपभुत्तं इमेहिं दारेहिं तस्स भवे ।।

वृ- येन कारणेन गणी आचार्यः स बालवृद्धस्य गच्छस्याधारस्ततस्तस्य भवत्यतिशेषप्रभुत्वं अतिशायिप्रभुत्वं तच्चैभिर्वक्ष्यमाणैर्द्वारैरवगन्तव्यम् ।।

[भा.२५६४] तित्थयरपवयणे निज्जराय सावेक्खभत्तवोच्छेदो ।
एएहिं कारणेहिं अतिसेसा होंति आयरिए ।।

वृ- आचार्यस्तीर्थकरानुकारी तथा सूत्रतोऽर्थतश्चाधीती प्रवचने तथा तस्य वैयावृत्यकरणे महती निर्जरा भवति, । तथा शिष्याः प्रातीच्छिकाश्चात्मानुग्रहबुद्ध्या सुरैर्वैयावृत्यं कुर्वन्तः सापेक्षा भवन्ति, । सापेक्षाणां च भूयान् ज्ञानादिलाभो महती निर्जरा इतरे त्वकुर्वन्तो निरपेक्षास्तेषांस महान् संसारस्तथा भक्तावाचार्यस्य क्रियमाणायां सकलस्यापि गच्छस्यानुग्रहकरणात्तीर्थस्याव्यवच्छेदः कृतो भवति । एतैः कारणैराचार्यस्य सूत्रोक्ता अतिशेषा भवन्त्यन्ये वक्ष्यमाणा इति द्वारगाथासंक्षेपार्थः ।।

[भा.२५६५] देविंदचक्कवट्टी मंडलिया ईसरा तलवरा य ।
अभिगच्छंति जिणंदे तो गोयरियं न हिंडंति ।।

वृ- जिनेन्द्रान् भगवत उत्पन्ने ज्ञाने देवेन्द्राः शक्रप्रभृतयश्चक्रवर्तिन उपलक्षणमेतत् यथायोगं वासुदेवा बलभद्राश्च तथा मण्डलिकाः कतिपयमण्डलप्रभव ईश्वरास्तलवराश्चाभिगच्छन्ति ततस्ते

गोचरचर्या न हिंडंते ॥

[भा.२५६६] संखादीया कोडी सुराण निद्यं जिणे उवासंति ।
संसयवागरणाणि य मणसा वयसा य पुच्छंते ॥

वृ-संख्यातीताः सुराणां कोट्यो नित्यं सर्वकालं जिनान् तीर्थकृत उपासते । तथा सततं वचसा च पृच्छति सुरादिके मनसा वचसा च संशयव्याकरणानि करोति । ततो भिक्षां न हिण्डन्ते ।

[भा.२५६७] उप्पननाणा जह नो अडंती चोत्तीसबुद्धातिसया जिणिंदा ।
एवं गणी अट्ठगुणोववेतो सत्था व नो हिंडइ इड्ढिमं तु ॥

वृ- यथा उत्पन्ने ज्ञाने जिनेन्द्राश्चतुस्त्रिंशत् बुद्धातिशयाः सर्वज्ञातिशया देहसौगन्धादयो येषां ते यथा भिक्षां न हिण्डंते । एवं तीर्थकरदृष्टान्तेन गणी आचार्योऽष्टगुणोपेतोऽष्टविधगणिसम्पदुपेतः शास्ता इव तीर्थकर इव ऋद्धिमान् न हिण्डते ॥

[भा.२५६८] गुरु हिंडणंमि गुरुगा वसमे लहुया ऽनिवारयतस्स ।
गीतागीते गुरुलहु आणातया बहुदोसा ॥

वृ- आचार्य भिक्षामहामीति व्यवसितं यदि वृषभो न निवारयति तथा तस्यानिवारयतः प्रायश्चित्तं चत्वारो लधुकाः । अथ वृषभेवा निवारितोऽपि न तिष्ठति तर्हि वृषभः शुद्ध आचार्यस्य प्रायश्चित्तं चत्वारो गुरुकाः तथा गीतार्थो भिक्षुश्चेन्न गमने प्रत्येकं चतुर्गुरु आज्ञादयश्च दोषा इमे च वक्ष्यमाणा बहवो दोषास्तानेवाह-

[भा.२५६९] वाते पित्ते गणालोए कायकिलेसे अचिंतया मेढी ।
अकारगे वाले गणचिंता वा इड्ढिणो ॥

वृ- भिक्षामटतो वातो वातप्रकोपो भवति । तथा अत्युष्णपरितापनात् पित्तमुद्रिक्तीभवति तथा गणस्य गच्छस्य भिक्षाटनपरिश्रमत आलोकः कर्तव्यो न भवति, तथा भिक्षाटने कायक्लेशो भवति तस्माच्च सूत्रार्थपरिहानिस्तथा सूत्रार्थयोरचिन्ता भवति । तथा मेढीभूत आचार्यस्तस्मिन् भिक्षामटति शिष्याणामात्मद्वारभावतः प्राघूर्णकादीनां वात्सल्यकरणाभावः, तथा अकारकं चेत् द्रव्य लभते तस्यभोजने ग्लानत्वमभोजने परिस्थापनिकादोषः । तथा भिमटतो व्यालश्वादिरुपतिष्ठति तत्र चात्मविराधना तथा भिक्षाटने दोषा एष द्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेव विवरीषुराह-

[भा.२५७०] भारेण वेयणाए हिंडंते उच्चनीयसासो वा ।
बाहुकडिवायगहणं विसमाकारेण सूलं वा ॥

वृ- भारेण भक्तभृतभाजनभरेण वेदना भवति । तथा कोऽपि ग्रामो गिरौ निविष्टो भवेत् । तत्र च कानिचित् गृहाण्युच्चस्थाने कानिचित् नीचस्थाने तानि भारेण वेदनायां सत्यां हिण्डमानस्य श्वासो भवति । तथा बाहोः कटेश्च वातेन ग्रहणं भवति, तथा ग्रामे विषमाकारेण व्यवस्थिते यत्र तत्र वा तिर्यक् शरीरं कृत्वा गच्छतः शूलं वा भवेत् ॥

[भा.२५७१] अच्चुण्हतावितोऽन्नखद्धदवा वियणे च्छड्डणाईया ।
अप्पियणे असमाही गेलन्ने सुत्तभंगादी ॥

वृ- तथा अत्युष्णेन परितपितः सन् खद्धं प्रचुरद्रवं पानीयमतितृषित आददीतः । तथा समुद्दिष्टोऽपि तथा परितापभावतः पुनः पुनः पानीयमामपिबेत् । तथा चाहारः पानीयेन प्लावितः सन् न जीर्येत् ।

अजरणाद्य च्छर्दनं वमनं भवेत् । आदिशब्दादाहाररुचिर्नोपजायते । अथ पानीयं प्रभूतं न पिबति ततोऽसमाधिः आहारारुचौ च पुनर्भोजने ग्लानत्वं ग्लानत्वे च सूत्रभङ्गः । सूत्रपौरुषीभङ्गः । आदिशब्दादर्थपौरुषीभङ्गश्च गतं वातद्वारमधुना पित्तद्वारमाह-

**[भा.२५७२]** बहिया य पित्तमुच्छा पडणं उण्हेण वावि वसहीए ।
आदियणे छड्डणादी सो चेव य पोरिसीभङ्गो ।।

**वृ-** उष्णेन परितापितस्य पित्तप्रकृतेर्बहिः पित्तमूर्च्छावशतः पतनं भवेत् । तथा च सति भक्तभृतभाजनसहितस्य महानुड्डाहः वसतौ वा पित्तमूर्च्छावशतः पतनं । तत्र प्रभूतजलपानं समुद्देशानन्तरमपि प्रचुरजलादानं तथा च सति त एव च्छर्दनादयः प्रागुक्ता दोषाः स एव च सूत्र-पौरुष्याश्च भङ्गः ।। गतं पित्तद्वारधुना गणालोकद्वारमाह-

**[भा.२५७३]** आलोगो तिन्निवारे, गोणीण जहा तहेव गच्छेवि ।
नंठ न नाहिति नियट्टदीहसोही निरिसत्रं च ।।

**वृ-** यथा गोपालस्तिसृषु वेलासु गवमालोकं करोति, । तद्यथा-प्राक् प्रसरंतीनां मध्याह्ने च्छायासु स्थितानां विकालवेलायां गृहं प्रत्यागच्छन्तीनां यदि न करोति तदा न जानाति का विनष्टा का वा गतेति ।एवमाचार्येणापि तिसृषु वेलासु गच्छेऽप्यालोकः कर्तव्यः ।तद्यथा-प्रातर्मध्याह्ने विकालवेलायां च तत्र यदि प्रातरावश्यके कृते गणालोकं न करोति, तदा मासलघु । भिक्षावेलायां द्वितीयं वारं गणालोकमकुर्वतो मासलघु, ।तृतीयं वारं विकालवेलायामप्यकुर्वतो मासलघु, तत्राचार्यो यदि भिक्षां नाटति तदा तिसृषु वेलासु गणालोकं कर्तुं शक्नोति, भिक्षामटन् कथं कुर्यात् । गणालोके पुनरकृते नष्ट इत्येव न ज्ञास्यते, ।तथा भिक्षाचर्यागमने कः सन्निवृत्तः को वा नेति केन ज्ञायते, । तथा गणालोकेऽ-क्रियमाणे को दीर्घं कालं भिक्षाचर्यं करोति, को वा नेति केन ज्ञायते, ।तथा भिक्षामटत्याचार्ये भिक्षाचर्यात् आगतानामालोचनायां कः शोधिं करोति, ।तथा भिक्षां हिण्डमाने सूरौ कोऽपि गृहनिषद्यां वाहयत्येतन्न ज्ञायते ।।

**[भा.२५७४]** मा आवस्सयहानी, करेज्ञ भक्खिलसा व अच्छेज्ञा ।
तेनति संज्झालगं सिस्साण करेइ अच्छंतो ।।

**वृ-** भिक्षामटत्याचार्यो येऽवश्यं कर्तव्या योगास्तेषां यः प्रमादतो हानिं करोति ।स न ज्ञायते ।तथा आचार्य एवास्माकं भिक्षामानेष्यति इति केचित् भिक्षालसा वसावेव तिष्ठेयुर्नभिक्षामटेयुर्यत एवं गणालोकेऽक्रियमाणे इमे [अमी] दोषास्तस्मात्तिसृष्वपि सन्ध्यासु शिष्याणामालोकस्तिष्ठन् भिक्षामहिण्डमानः करोति गतं गणालोकद्वारमधुना कायक्लेशद्वारमाह-

**[भा.२५७५]** हिंडंतो उज्ञा[व्वा]तो सुत्तत्थाणं च गच्छपरिहानी ।
नासेहिति हिंडंतो सुत्तं अत्थं आरेगेणं ।।

**वृ-** हिण्डमानः पुनर्भिक्षां महान् कायक्लेश इति उद्धातोत्ति परिश्रान्तो भवति परिश्रान्तत्वात् सूत्रमर्थं च दातुमसमर्थ इति शिष्येषु प्रातीच्छिकेषु च सूत्रार्थानां परिहानिस्ततो गच्छस्यापि परिहानिः, शिष्याणां प्रातीच्छिकानां चान्यत्रान्यत्र गणान्तरे संक्रमात् । तथा हिण्डमानः सूत्रमर्थं चारेकेणा-क्षेपेणात्मनोऽपि नाशयिष्यति गतं कायक्लेशद्वारमिदानीं चिन्ताद्वारमाह-

[भा.२५७६] जा आससिउं भुंजइ भुत्तो खेयंव जाव परिणेई ।
ताव गतो सो दिवसो, नट्ठसती दाहिती किं व ।।

वृ- यावद्भिक्षामटित्वा क्षणमात्रमाश्वास्य भुंक्ते भुक्तोऽपि च खेयंति भिक्षाऽटनपरिश्रमं यावत् प्रतिनयति स्फेटयति, तावद्दिवसः सकलोऽपि गतस्ततो नास्ति सा वेला यत्र सूत्रस्यार्थस्य वा चिन्तां करोति । अचिन्तितं च विस्मृतिमुपयाति, ततो नष्टस्मृतिः । किं दास्यति न किमपीति भावः, । वाशब्दो दूषणसमुच्चये । एतदेव सुव्यक्तं भावयति-

[भा.२५७७] रेगो नत्थि दिवसतो रत्तिंपि न जग्गते समुव्वातो ।
न य अगुणेउं दिज्जइ जइ दिज्जइ संकितो दुहातो ।।

वृ- नास्ति रेको विविक्तो अवसरो दिवसमध्ये यत्र सूत्रमर्थं वा चिन्तयति । रात्रावपि समुद्वान्तः सम्यक् परिश्रान्तो न जागर्त्ति । न च सूत्रमर्थं वा अगुणयित्वा दीयते । यदि पुनर्दीयते तर्हि द्विधितः सूत्रतोऽर्थतश्च शङ्कितो भवति । गतं चिन्ताद्वारमधुना मेढिकाद्वारमाह-

[भा.२५७८] मेढीभूते बाहिं भुंजण आदेसमाइ आगमनं ।
विनए गिलाणमादी अच्छंतो मेढिसंदेसा ।।

वृ- आचार्यः सर्वस्यापि गच्छस्य मेढिभूतः मेढिरिति वा आधार इति वा चक्षुरिति वा एकार्थः । स चेद्भिक्षां गच्छति, ततः साधूनां वसतेर्बहिर्यद्दच्छया भोजनं स्यादेतदनन्तरमेव भावयिष्यते । तत एवं ज्ञायते कोचिदादेशा प्राघूर्णकाः आगच्छेयुरादिशब्दात्के चिदलब्धिका लब्धिपरिहीनास्ततः तेषामादेशानामागमनं ज्ञात्वा कः प्राघूर्णकानां विश्रामणं सन्देशं वा कुर्यात् । को वा लब्धिशब्दात् बालवृद्धासहानां च कः सन्देशप्रदानेन चिन्तां कुर्यात् । तिष्ठति भिक्षामनटत्याचार्ये तस्य मेढेः सन्देशाद्यादिशात् सर्वमादेशादेः सुस्थं भवति । सम्प्रति यदुक्तं बाहिंभुञ्जति तद्भावयति-

[भा.२५७९] आलोयदायणं वा कस्स करेहा मुगं च छंदेमो ।
आयरिए य अडंते को अत्थिउ मुच्छहे अन्नो ।।

वृ- शिष्याः प्रातीच्छिकाश्च भिक्षां प्रविष्टाश्चिन्तयन्ति । सूरिरपि भिक्षार्थं निर्गतो भविष्यति, ततो वयं प्रतिश्रयं गत्वा कस्य पुरत आलोचयिष्यामः कस्य वा भक्तं पानं वा दर्शयिष्यामः । कं चान्यं साधुं तत्र गताः छन्दयामो निमन्त्रयामो यतो भिक्षामटत्याचार्ये कोऽन्यः साधुः स्थातुमुत्सहते, । सर्वोऽपि भिक्षां यातीति भावः । तथा हि-सर्वे साधवो भिक्षामटत्याचार्ये चिन्तयन्ति । यदि स्वयमाचार्यो भिक्षां हिण्डते कास्माकं शक्तिः पश्चात्स्थातुं वयमपि यास्यामः । एवं सर्वस्यापि गमने निमन्त्रणापि कस्य स्यादिति विचिन्त्य बहिरेव समुद्दिश्य वसतावागच्छेयुरिति गतं मेढिद्वारमिदानीमकारकद्वारमाह-

[भा.२५८०] नानिते अकारगंमी दव्वे पडिसेहणा हवति दुक्खं ।
रायनिमंतणगहणे सणक्खिवावारणा दुक्खं ।।

वृ- भिक्षामटत आचार्यस्य यदकारकं तस्य तत् भिक्षार्थं निष्काशितं तस्मिन् अकारकं द्रव्ये भिक्षार्थं निष्काशिते प्रतिषेधनं ममैतदकारकमन्यद्देहीति वक्तुं लज्जातो भवति दुःखं, यदि पुनर्लज्जां मुक्त्वा भणाति तदानन्तरवक्ष्यमाणगाथाद्वयोक्ता दोषास्तथा भिक्षामटन्नाचार्यो राज्ञा मत्तवारणकस्थितेन दृष्टस्ततः आकारयित्वा भणितो मम गृहे भिक्षां गृहाण । स प्राह न कल्पते राजपिण्ड इति, एवं निमन्त्रणानन्तरमग्रहणे राज्ञा भणयते-साधो किं तव पतद्ग्रहे समस्ति । ततो दर्शितेऽन्तप्रान्तादिके खासिदी च राजा तत् दृष्ट्वा

खिंसनं कुर्यात् । तथा आचार्योऽलब्धिको भवेत् । स चेत् ग्लानादिनिमित्तं शिष्यान् प्रातीच्छिकांश्च व्यापारयेत् यथा ग्लानादीनां योग्यमानयत ते चालब्धिकं ज्ञात्वा परिभवमुत्पादयन्तिति तथा व्यापारणे दुःमेवगाथास्समासार्थः । साम्प्रतमेनामेव विवरीषुर्लज्ञां मुक्त्वा अकारकद्रव्यप्रतिषेधने ये दोषास्तानेवाह-

**[भा.२५८१]** जेणेव कारणेणं सीसमिणं गुंडियं भदंतेन ।
वयण घरवासिनी विहु न मुंडिया ते कहिं जीहा ॥

**वृ-** येनैव कारणेन हेतुना भदन्तेन गुरुणा तवशीर्षमिदं मुण्डितं, तेनैव कारणेन तव जिह्वापि वदनगृहवासिनी ममैतदकारकमन्यद्देहीति ब्रुवाणा कथं न मुण्डिता, येनैवं न भाषते तथा,

**[भा.२५८२]** गयमागयंमि लोए सीसावि तहेव तस्स गच्छंति ।
सयमेव दुट्ठ जिब्भो सिसे विनइस्सति केन ॥

**वृ-** गतागमोयं स्वभावतो लोकः पितृस्वभावं पुत्रोऽनुकरोतीति भावः । ततो गतागमेऽस्मिन् लोके यथाचार्यो गच्छति चेष्टते शिष्या अपि तस्य तथैव गच्छन्ति वर्तन्ते । तं च स्वयमेवेत्थं दुष्टजिह्वस्ततः केन प्रकारेण शिष्यान्विनेष्यति शिक्षयिष्यति नैवं कथं च नेति भावस्तस्तेऽपि भविष्यन्तीति ।

**[भा.२५८३]** पडिसेहं तमजोग्गं अन्नस्सवि दुल्लहं हवइ भिक्खं ।
सद्धा भंग चियत्तं जिब्भादोसो अवन्नो य ॥

**वृ-** अयोग्यमकारकं प्रतिषिध्यमानं महान्तमपगुणं करोति । किंतमित्याह-कोऽसावपगुण इत्याह-अन्यस्यापि साधोर्दुर्लभं भवति भैक्षं, नैते यद्वा तद्वा गृह्णन्तीत्यदानात् । तथा अकारकस्य प्रतिषेधने कस्या अपमिहत्याः श्रद्धाया भङ्गः । अपरस्यापि अचियत्तमप्रीतिस्ततस्तद्वशादवर्णो जिह्वादोष उत्पद्यते सम्प्रति यदुक्तं राजनिमन्त्रणाग्रहणे खिंसनमिति तत्र तदेव खिंसनमाह-

**[भा.२५८४]** पुव्विं अदत्तदाना अकोविया इह उ संकिलिस्संति ।
काऊण अंतरायं नेच्छंतिट्ठंवि दिज्जंतं ॥

**वृ-** आन्तप्रान्तादौ वासितादौ च दर्शिते राजा प्राह-पूर्वमदत्तदाना यूयं तत इहाकोविदा अतत्वज्ञा सन्तः क्लिश्यन्ति । तथा च राजपिण्डे इत्यन्तरायं कृत्वा इष्टमपि दीयमानं भवन्तो नेच्छन्ति ।

**[भा.२५८५]** गहण पडिसेए भुंजण अभुंजणे चेव मासियं लहुयं ।
अमणुन्न अलंभे वा खिंसिज्ज व सेहमादीया ॥

**वृ-** अकारकस्य ग्रहणे सति यद्यन्यैः साधुभिः प्रतिषिध्यमानोऽपि भुङ्क्ते तदा ग्लानत्वमथ न भुङ्क्ते तदा अभोजने पारिष्ठापनिकादोषस्तत्र च प्रायश्चित्तं मासिकं लघु, तथा यद्याचार्योऽलब्धिकस्तदा अमनोज्ञलाभे मनोज्ञालाभे वा शैक्षकादयः खिंसेयुर्न किमपि क्वापि गतो लभतेऽतिरिक्त मेतस्याचार्यत्वं ॥

**[भा.२५८६]** वावारिया गिलाणादियाण गेणहए जोग्गंति ते तओ बेंति ।
तुब्भे कीस न गेण्हह हिंडंता ऊ सयं चेव ॥

**वृ-** आचार्यो लब्धिहीनः सन् शिष्यान् प्रातीच्छिकांश्च व्यापारयेत् । यथा ग्लानादीनां ग्लानप्राघूर्णकप्रभृतीनां योग्यं गृह्णीत तत एवं ते व्यापारिताः सन्तो ब्रुवते । यूयं स्वयमेव हिण्डमाना ग्लानादिप्रायोग्यं कस्मान्न गृह्णीत ॥

[भा.२५८७]　　　　एवाणाए परिभवो बेंति दीसंति य पाडिरूवं भे ।
　　　　　　　　　　अन्नेहि जाणमाणा, खिंसंति एवमादीहिं ।।

वृ- एवमुपदर्शितेन प्रकारेण आज्ञायाः परिभव उत्पाद्यते, यथा यदि यूयं प्रायोग्यं न लभध्वे कथं वयं लप्स्यामहे । एवमुक्ते यद्याचार्यो ब्रूते-आर्या उद्यमेन किं न लभ्यते । तत एवमुक्ते रुष्टा ब्रुवते-दृश्यते खलु भे भवतां प्रतिहार्यसातिश[illegible]र्थं स्यवर्णैः [illegible] एवमा[illegible]दीर्वचनैः खिंसंति हीलयंति ।। गतंकारकद्वारं, व्यालद्वारमाह-

[भा.२५८८]　　　　वालो य साणमादी दिट्ठंतो तत्थ होति छत्तेण ।
　　　　　　　　　　लोभे य आभिओगे विसे य इत्थीकए वावि ।।

वृ- भिक्षामटतो व्यालः श्वप्रभृतिकः कदाचिल्लगति तदा महत्यपभ्राजना तत्र च दृष्टान्तश्छत्रेण यथा च्छत्रमुपरि ध्रियमाणं शोभते अधःपतितं तु न किमपि एवमाचार्योऽपि बहुभिः परिवारितो गच्छन् शोभते । तथा भिक्षाटनप्रवृत्तस्तु श्वादिपरिगृहीतो न किमपि तथा प्रतिरूपवानाचार्यो भवतीति लोभेन, गाथायां सप्तमी तृतीयार्थे, ऽभियोगो वशीकरणं स्त्रीकृतं स्यात्, विषं वा केनचित् प्रद्विष्टेन दीयते,

[भा.२५८९]　　　　मोएउं असमत्था बद्धं रुद्धं नच्चणं कुसिया ।
　　　　　　　　　　जुवति कमणिज्ररूवो सो पुन सव्वेवितो सत्तो ।।

वृ- युवतिः कमनीयरूपतया अलीकदोषसंभावनया अन्यथा बद्धं रुद्धं वा नर्तकं नटानां नायकं कुसिता मोचयितुमसमर्थास्तेषां तादृक् शक्त्यभावात्स पुनर्युवतिकमनीयरूपस्तान् कुसितान् सर्वानपि केनापि दोषेण बद्धान् रुद्धान् वा मोचयितुं शक्तस्ततो यथा स प्रयत्नेन रक्ष्यते, एवमाचार्योऽपि रक्षणीयोऽन्यथा दोषस्तथा चाह-

[भा.२५९०]　　　　एमेवायरियस्स वि दोसा पडिरूववं च सो होइ ।
　　　　　　　　　　दिज्ज विस भिक्खुवासो अभिजोग वसीकरणमादी ।।

वृ- एवमेव नर्तनस्येवाचार्यस्याप्यपरक्षितस्य दोषा भवन्ति, तथाहि सोऽपि प्रतिरूपवान् भवति, ततः कोऽपि भिक्षूपासको जिनप्रवचनप्रभावनामसहिष्णुर्विषं दद्यात् । स्त्री वा काचिद्रूप-लुब्धा आभियोग्यं कुर्यात् वशीकरणादि वा प्रयुञ्जीत । यस्मादेते दोषास्तस्मात् प्रयत्नतो रक्षणीयो-ऽन्यथा तदभावे गणस्याप्यभावापत्तिस्तथा चाह-

[भा.२५९१]　　　　नच्चणहीना व नडा नायगहीना व रूपिणी वावि ।
　　　　　　　　　　चक्कं च तुंबहीनं न हवति एवं गणो गणिणा ।।

वृ- यथा नर्तनहीना नटा, यथा नायकहीना रूपवती स्त्री, यथा च चक्रं तुम्बहीनं न भवति, एवं गणिनाचार्येण विना गणोऽपि न भवति ।। तदेवं व्याल द्वारमिदानीं गणचिन्ता द्वारमाह-

[भा.२५९२]　　　　लाभालाभद्धानि अकारके वा वुड्ढमादेसे ।
　　　　　　　　　　सेहक्खए न नाहिंति अच्छंतो नाहिति सव्वे ।।

वृ- केन पर्याप्तं लब्धं केन वा न लब्धमिति न ज्ञास्यति स्वयं भिक्षाटने परिश्रान्तत्वात् । तथा अध्वनि मार्गे ये परिश्रान्ताः समागमनप्राघूर्णकाः तेषामिदमकारकमिदं वा कारकं तथा बालान् वृद्धान् पूर्वागतांश्चादेशान् प्राघूर्णकान् तथा शैक्षान् क्षपकांश्च करणीयसारा करणतया न ज्ञास्यति । स्वयं भिक्षापरिश्रमणपरिश्रान्तत्वात् तिष्ठन् पुनः सर्वान् यथौचित्येन ज्ञास्यति परिश्रमाभावात् ।।

गतं गणचिन्ताद्वारमधुना वादिद्वारमाह-

[भा.२५९३] सोऊण गतं खिंसति पडिच्छउव्वाय वादि पेल्लई ।
अच्छंति सत्थचित्तेन होंति दोसा तवादिया ॥

वृ- भिक्षामटितुं प्रवृत्ते आचार्ये वादी कोपि समागसतस्तेन साधव उक्ताः क आचार्यः ? । साधुभिरुक्तम्-भिक्षाटनाय गतस्ततः स भिक्षार्थं गतं श्रुत्वा खिंसति हीलयति, । एतावत्तस्य पाण्डित्यं स स्वयं भिक्षामटति ततः क्षणमात्रंप्रतीक्षितः स चाचार्य उद्भ्रान्तः परिश्रान्तः समागतस्तं समागतं दृष्ट्वा वादी प्रेरयति । स च परिश्रान्तत्वात् उत्तरं दातुमसमर्थस्तिष्ठति । पुनः स्वस्थचित्ते दोषास्तापादयः । आदिशब्दात् तृषादिपरिग्रहो न भवति तथा च सति न वादिना तस्य प्रेरणं किन्तु जय इति वादी समागतो भिक्षार्थं गत इति श्रुत्वा यदवादीत्तदुपदर्शयति-

[भा.२५९४] पागडियं माहप्पं, विन्नाणं चेव सुट्ठु ते गुरुणो ।
जइ सोवि जाणमाणो न वि तुब्भ मनादितो होंता ॥

वृ- भिक्षार्थं गत इति ब्रुवाणैर्भवद्भिः सुष्ठु अतिशयेन माहात्म्यं गरिमलक्षणं विज्ञानं च प्रकटितं । यदि सोऽपि ज्ञाता भवति न वै युष्माकमनादृतो भवेत् ॥ अधुना पडिच्छिउव्वाय वादि पेल्लेइ इति-

[भा.२५९५] न वि उत्तराणि पासइ पासणियाणं च होंति परिभूतो ।
सेहादि भत्तगावि य दट्ठुं अमुहं परिणमंति ॥

वृ- स भिक्षाटनपरिश्रान्तः सन् नवि नैव उत्तराणि पश्यति परिश्रमेण बुद्धेः संव्यापादनात्तथा च सति स प्राश्निकानामपि सभ्यानामपि परिभूतो भवति ततो ये शैक्षकादयो ये च भद्रकादयस्ते तममुखं निरुत्तरं दृष्ट्वा परिणमन्ति विपरिणामं भजन्ते । भिक्षार्थमनटने पुनरिमे गुणाः ॥

[भा.२५९५] सुत्तत्थाणं गुणणं विज्जामंता निमित्तजोगाणं ।
वीसत्थे पइरक्खे परिजिणइ रहस्ससुत्ते य ॥

वृ- सूत्रार्थानां तथा विद्यानां मन्त्राणां निमित्तशास्त्राणां योगशास्त्राणां च गुणनं परावर्तनं भवति तथा विश्वस्तः सन् प्रतिरिक्ते विविक्ते प्रदेशे रहस्यसूत्राणि परिजयति । अत्यन्तस्वभ्यस्तानि करोति तस्मात्र भिक्षार्थमटितव्यमाचार्येण गतं वादिद्वारमिदानीमृद्धिमद्वारमाह-

[भा.२५९६] रन्नावि दुवक्खरतो ठवितो सव्वस्स उत्तमो होति ।
गच्छं वियाइरितो सव्वस्सवि उत्तमो होइ ॥

वृ- राज्ञा द्व्यक्षरको दासो यद्यपि जात्या हीनस्तथापि संस्थापितः सन् सर्वस्याप्युत्तमो भवति उत्तमत्वाच्च यथा न कश्चन प्रेषणेन हिण्डाप्यते सोऽप्येवं यथा, तथा गच्छेऽप्याचार्यः सर्वस्याप्युत्तमो भवतीति स सुतरां भिक्षां न हिण्डापयितव्यः ॥

[भा.२५९७] रायामच्च पुरोहिय सेट्ठी सेणावतीतलवरा य ।
अभिगच्छंतायरिए तहियं च इमं उदाहरणं ॥

वृ- यथा तीर्थकरश्छद्मस्थकाले हिण्डमानोऽप्युत्पन्ने ज्ञाने देवेन्द्राद्यभिगमान्न हिण्डते, एवमाचार्यानपि आचार्य एव स्थापितान् राजा अमात्यः पुरोहितः श्रेष्ठी सेनापतितलवराश्चाभिगच्छन्ति ततस्तेऽपि भिक्षां न हिण्डन्ते । अन्यथा दोषस्तत्र वेदमुदाहरणं तदेवाह-

[भा.२५९८] सोऊण य उवसंतो अमच्चो रण्णो तं निवेदेइ ।

रायावि बितियदिवसे तइए अमच्चो य देवी य ।।

वृ- राज्ञो अमात्य आचार्यसमीपे धर्मं श्रुत्वा उपशान्तः स च राज्ञस्तकमाचार्यं निवेदयति । यथा गुणवानतीवाचार्योऽमुकप्रदेशे तिष्ठति, ततो द्वितीयदिवसे राज्ञा अमात्येन सहागतः । स धर्मं श्रुत्वा परितुष्ट आगतो निजाग्रमहिष्याः परिकथयति । अमात्येनाप्यात्मीयभार्यायाः कथितं, ततोऽमात्यी देवी च तृतीयदिवसे धर्मश्रवणाय समागता आचार्यो भिक्षार्थं गतस्ततः ।।

[भा.२५९९] साउ पडिच्छिऊण गया अहवा पडिच्छिंत्रे खिंसा ।
हिंडंति होंति दोसा कारणे पडिवत्ति कुसलेहिं ।।

वृ- भिक्षार्थं गत इति श्रुत्वा ते हीलयित्वा गते, अथवा क्षणमात्रं प्रतीक्ष्य हीलयन्त्यौ गते, यदि वा यावदाचार्य आगच्छति, तावत्प्रतीक्ष्यमाणे हीलयतः अथवा प्रस्विन्नशरीरं परिगलतप्रस्वेदमागतं दृष्ट्वा खिंसतो यदि वा क्लमेन सुष्ठुकृतं न वदनं नवासोमं कथयतो वा परिश्रमेण न सुष्ठु वचनविनिर्गमस्तत उत्थिते हीलयतो यथा पिण्डोलकइवैष भिक्षामटति किमाचार्यत्वमेतस्य । एते भिक्षां हिण्डमाने दोषाः । यदि पु[illegible] कारणे वक्ष्यमाणे भिक्षार्थं गतो भवेत्[illegible] आगतास्ते च पृच्छेयुः क्व गत आचार्यस्तत्र ये प्रतिपत्तिकुशलास्तैर्नेदं वक्तव्यं भिक्षार्थं गत इतचित्यवन्दनमित्तं गत इति यदि ते राजादय आचार्यमागच्छन्तं प्रतीक्षेरन् तदा येऽतीव दक्षा गीतार्थास्तेषां सुन्दरं पानकं प्रथमाकिं च सुन्दरं कल्पं चोलपट्टं च गृहीत्वाचार्यसमीपे गत्वा आचार्यस्य कथयन्ति । तत आचार्यो मुखहस्तपादादि-प्रक्षाल्यप्रथमालिकां पानकं च कृत्वा कल्पं प्रावृत्य पात्राण्यन्यस्य समर्प्य तादृशवेषो वसतावानीयते यथाऽनाख्यातोऽपि राजादि भिज्ञायते एष आचार्य इति । ततो वसतिं प्राप्तस्य पादप्रोञ्छनं पादप्रमार्जनार्थमादाय साधव उपतिष्ठन्ति । पादप्रमार्जनान्तरं वसतेरंतरवसतेरंतः प्रविश्य पूर्वरचितायां निसद्यायामुपविशति, उपविष्टस्य च चरणकल्पकरणाय कोपि साधुरुपढौकते, चरणप्रक्षालनानन्तरं सर्वे साधवः पुरतः पार्श्वतः पृष्टतो वा किंकरभूतास्तिष्ठन्ति यथा राजा चकितस्तिष्ठति । एतदेवाह ।

[भा.२६०१] कारणे भिक्खुस्स गते वि कज्जं अन्नं निवस्स साहित्ता ।
निज्जोग नयण पढमा कमादि धुवणं मणुन्नाई ।।

वृ- कारणे वक्ष्यमाणे लक्षणे समापतिते भैक्षस्य गतेऽप्याचार्ये नृपस्यान्यत्कार्यं कथयित्वा प्रथमालिकादेर्निर्योगस्य नयनं, ततः क्रमादि प्रक्षालनं ततो मनोज्ञप्रथमालिकादिकरणम् ।।

[भा.२६०२] कयकुरुकय आसत्थो पविसइ पुव्वरइयनिसेज्जाए ।
पयया य होंति सीसा जह चकितो होइ राया वि ।।

वृ- कृतकुरुकचः कृतकुल आस्वस्थः प्रविशति । प्रविश्य च पूर्वरचितायां निषद्यायामुपविशति । ततः पादप्रक्षालनसमीपोपवेशनप्रयतास्तथा भवन्ति यथा राजापि चकितो जायते । अत्र परः प्रश्नमाह-

[भा.२६०३] सीसा य परिचत्ता चोदगवयणं कुटुंबिज्झामणया ।
दिट्ठंतो दंडिएणं सावेक्खे चेव निरवेक्खे ।।

वृ- चोदकवचनमाचार्यं रक्षयित्वा शिष्या भिक्षायां प्रेषितास्तर्हि ते त्यक्ता, आचार्य आह-अत्र कुटुम्बिगृहप्रदीपनदृष्टान्तः । सापेक्षनिरपेक्षे चाचार्ये । एष द्वारगाथाक्षरार्थः । साम्प्रत्येनामेव विवरीषुः प्रथमतः सीसाय परिचत्ता इति भावयति-

[भा.२६०४] वायादीया दोसा गुरुस्स इतरेसि किं न ते होंति ।

रक्खण सिस्सच्चाए हिंडणतुल्ले समताया ॥

वृ- वातादयो दोषा गुरोर्भवन्ति । इतरेषां साधुनां किं ते न भवन्तिभवन्त्येवेति भावः । ततो हिण्डते हिण्डनदोषे तुल्ये आत्मनो रक्षा क्रियते । शिष्याणां च त्याग इत्यसमता नेदं समंजसमित्यर्थः । अन्यच्च-

[भा.२६०५] दसविहवेयावच्चे निच्चं अब्भुट्ठिया असढभावा ।
ने दानि परिचत्ता अनुजमंताण दण्डो य ॥

वृ- दशविधि आचार्यादिभेदतो दशप्रकारे वैयावृत्त्ये नित्यं सर्वकालमशठभावाः सन्तो अभ्युत्थितास्ते सम्प्रति वातादिदोषान्पश्यद्भिरपि भिक्षाटने प्रेष्यमाणपरित्यक्ताः तथा दशविधवैयावृत्त्येनोद्यच्छन्ति ततस्तेषामनुद्यच्छतामाचार्यादिवैयावृत्त्यकरणे यथार्हं प्रायश्चित्तं दण्डो दीयते । तदेवं 'सीसाय परिचत्ता' इति भावितमिदानीं कुटुंम्बिका पंणयेति दृष्टान्तं भावयति ।

[भा.२६०६] वड्ढि धन्नसुभरियं कोट्ठागारे डज्झंते कुटुंबस्स ।
किं अम्ह मुहा देई केई तहियं न अल्लीणा ॥

वृ- एक कौटुम्बिकः स कर्षकाणां कारणे समुत्पन्ने वृद्धया कालान्तरलपया धान्यं ददाति । तया च वृद्धया कौटुंबिकस्य कोष्ठागाराणि धान्यस्य सुभृतानि जातानि । अन्यदा च तस्यैकं कोष्ठागारं वृद्धिधान्यसुभृतं वह्निना प्रदीप्तेन दह्यते । तत्कोचेत्कर्षका विध्यापननिमित्तं तत्र प्रदह्यमाने कोष्ठागारे न समागता किमेष कौटुमिबकोऽस्माकं मुधा ददाति येन वयं विध्यापनार्थमभ्युद्यता भवामः ॥

[भा.२६०७] एयस्स पभावेणं जीवा अम्हेति एव नाऊणं ।
अण्णे उ समल्लीणा विज्झविए तेसि सो तुट्ठो ॥

वृ- अन्ये कर्षका एतस्य कौटुम्बिकस्य प्रभावेन वयं जीवन्ति स्म जीवा अचप्रत्ययः जीविता इत्यर्थः एवं ज्ञात्वा समालीनास्तत्र समागता विध्यापनाय च प्रवृत्तास्ततो विध्यापिते कोष्टागारे सा कौटुम्बिकस्तेषां तुष्टः किमकार्षीदित्यत आह-

[भा.२६०८] जे उ सहायगत्तं करेसु तेसिं अवड्ढियं दिन्नं ।
दिहुंति न दिन्नियरे अकासगा दुक्खजीविया ॥

वृ- ये तु विध्यापने सहायत्वमकार्षुस्तेषामवृद्धिकं कालान्तररहितं धान्यं दत्तं, इतरेषां तु सहायत्वमकृतवतां दग्धमित्युत्तरं विधायन दत्तंततस्ते कर्षकाः सन्तो दुःखजीविनो जाताः ।

[भा.२६०९] आयरियकुटुंबी वा सामाणिया भवे साहू ।
वावाह अगनितुल्ला सुत्तत्था जाण धन्नं तु ॥

वृ- आचार्यः कुटुम्बीकः कुटुम्बितुल्य इत्यर्थः । सामान्य कर्षक स्थानीयाः साधवः आचार्यस्य भिक्षाटने वातादिव्याबाधाग्नितुल्या, सूत्रार्थान् जानीहि धान्यं धान्य तुल्यान् ।

[भा.२६१०] एमेव विनीयाणं करेंति सुत्तत्थ संगहं थेरा ।
होवेंति उदासीने किलेस भागी य संसारे ॥

वृ- कौटुम्बिकदृष्टान्तप्रकारेण ये विनीतास्तेषां स्थविरा आचार्या सूत्रार्थसंग्रहं कुर्वन्ति सूत्रार्थान् प्रयच्छन्ति, यत्र उदासीनः तत्र हायन्तीति न प्रयच्छन्तीति भावः । स चोदासीनो वर्तमानो न केवलं सूत्रार्थयोग्यो भवेत्, क्लेशभागी च संसारे जायते । गतं ध्यापनद्वारं सम्प्रति दण्डिकदृष्टान्तं-

[भा.२६११] उप्पन्नकारणे पुन जइ सयमेव सहसा गुरू हिंडे ।

अप्पाणगच्छमुभयं परिच्चयती तत्थिमं नायं ॥

वृ- उत्पन्नेऽपि कारणे वक्ष्यमाणलक्षणे यदि सहसा स्वयमेव गुरुर्भिक्षां हिंडते तर्हि स गुरुरात्मानं गच्छमुभयं च परित्यजति । तत्र चेदं वक्ष्यमाणज्ञातमुदाहरण । तदेवाह -

[भा.२६१२] सोउं परबलमायं सहसा एक्कागिओ उ जो राया ।
निग्गच्छति सो चयती अप्पाणं रज्जमुभयं च ॥

वृ- यो निरपेक्षो राज्ये परबलमागतं श्रुत्वा बलवाहनान्यमेलयित्वा सहसा एकाकी परबलस्य संमुखो निगच्छति, स आत्मानं राज्यमुभयं च त्यजति, बलवाहव्यतिरेकेण युद्धारंभे मरणभावात् । एवमाचार्योऽपि निरपेक्षः समुत्पन्नेऽपि कारणे सहसा भिक्षामटन्नात्मानं गच्छमुभयं च परित्यजति ।

[भा.२६१३] सावेक्खो पुन राया कुमारमादीहि परबलं खविया ।
अजिए सयंपि जुज्झइ उवमा एसेव गच्छेवि ॥

वृ- सापेक्षः पुना राजा प्रथमं कुमारादीन् युद्धाय प्रेषयति ततः कुमारादिभिः परबलं क्षपयित्वा यदा कुमारैर्न परिजीयते परबलं, तदा तस्मिन्नजिते स्वयमपि राजा युध्यते । एषा एवोपमा गच्छेऽपि द्रष्टव्या । आचार्योऽपि पूर्वं यतनां करोति तथापि असंस्तरणे स्वयमपि हिण्डते एव चात्मानं गच्छमुभयं च निस्तारयतीति भावः ॥ सम्प्रति यैः कारणैराचार्येण भिक्षार्थमटितव्यं तानि कारणान्याह-

[भा.२६१४] अद्धाणकक्खडासति गेलणादेसमाईएसु च ।
संथरमाणे भइतो हिंडेज्ज असंथरंतंमि ॥

वृ- अध्वानं प्रपन्नः सार्थेन सममाचार्यो गच्छंस्तत्र चासंस्तरणे यदि सार्थिका आचार्यस्य गौरवेण प्रयच्छन्ति, ततः स्वयमेव आचार्यो हिण्डते, एवं कर्कशेऽपि क्षेत्रे भावनीयं, तथा असति सहायानामभावे को भिक्षामानीय ददाति स्वयं हिण्डते । तथा ग्लाना बहवस्ततस्तेषां सर्वेषामपि गच्छसाधवः प्रायोग्यमुत्पादयितुमशक्ता अथवा ग्लानप्रायोग्यमन्यः कोऽपि न लभते तत आचार्यो हिण्डते । एवमादेशाः प्राघूर्णिका आदिशब्दात् बालवृद्धासहपरिग्रहस्तेष्वपि भावनीयं । एतेषु विषयेष्वसंस्तरति गच्छे नियमाचादार्यो कुर्वन् हिण्डते । शेषकाले नेत्यर्थः । एष द्वारगाथा संक्षेपार्थः ॥ अत्र यदुक्तं संस्तरणे न हिण्डते इति तत्र संस्तरणं त्रिविधं - जघन्यं मध्यममुत्कृष्टं च तत्र जघन्यमधिकृत्याह-

[भा.२६१५] पंचवि आयरियादी अच्छंते जहन्नए वि संथरणे ।
एवं संथरंते सयमेव गणी अडति गामे ॥

वृ- जघन्येऽपि वक्ष्यमाणस्वरूपे संस्तरणे पञ्चाप्याचार्योपाध्यायप्रवर्तिस्थविरगणावच्छेदिनस्तिष्ठन्ति । जघन्येऽपीत्यपिशब्दः संभाने । स चैतत् संभावयति यदि तावत् जघन्येऽपि संस्तरणे पञ्चाप्याचार्यादयस्तिष्ठन्ति । ततो मध्यमे उत्कृष्टे संस्तरणे नियमात् पञ्चभिरपि स्थातव्यं । एवमपि जघन्येनापि संस्तरणेनासंस्तरति गच्छे स्वयमेव गणी आचार्यो ग्रामे भिक्षामटति । स च प्रतिलोमपरिपाट्या पर्यन्ते तथा हि-जघन्येनापि संस्तरणेनासंस्तरति प्रथमं गणावच्छेदको हिण्डते, तथाप्यसंस्तरणे स्थविरो हिण्डते, एवमप्यसंस्तरणे प्रवर्त्यपि तथाप्यसंस्तरणे उपाध्यायोऽपि, तथापि चेन्न संस्तरति गच्छस्तत आचार्योऽपि तत्र प्रथमत उत्कृष्टसंस्तरणमाह-

[भा.२६१६] मंडलगयंमि सूरे उत्तिणा जाव पठवणवेला ।
ता एंति भुत्ता सन्नागया च उक्कोससंथरणे ॥

**वृ-** नभोमण्डलस्य मध्यगते सूर्ये मध्याह्ने इत्यर्थः । भिक्षार्थमवतीर्णास्ततः पर्याप्तं हिंडित्वा यावत् तृतीयपौरुष्या आदौ स्वाध्यायप्रस्थापनवेला तावत्सन्निवर्तति । एतावदुत्कृष्टं संस्तअनुवा तृतीयपौरुष्या आदौ स्वाध्यायप्रस्थापनावेला तावत्सन्निवर्तन्ते । एतदुत्कृष्टं संस्तरणम् । मध्यमं जघन्यं चाह-

**[भा. २६१७]** सणातो आगयाणं च पोरिसी मज्झिमं हवंति एवं ।
विसुयावियमत्तदिणे समतित्थं ते जहण्णं तु ।।

**वृ-** मध्याह्नादारभ्य भिक्षार्थमवतीर्णानां पर्याप्तं हिण्डित्वा वसतावागतानां भुक्तानां संज्ञातः संज्ञाभूमीत आगतानां यदि चतुर्थी पौरुषी अवगाहते एतत् मध्यमं संस्तरणं भवति मध्याह्नादारभ्य भिक्षामटित्वा भुक्त्व संज्ञाभूमीतः प्रत्यागत्यमात्रेषु चतुर्थी पौरुषी अवगाहते एतत् मध्यमं संस्तरणं भवति, । मध्याह्नादारभ्य भिक्षामटित्वा भुक्त्वा संज्ञाभूमीतः आगतानां यदि विसूयादिएसु विशोधितेषु सूरास्तमयेन दिनं समतिक्रामति जघन्यं संस्तरणवसातव्यं, तदेवमुक्तं जघन्यादिभेदभिन्नं संस्तरणमिदानीमध्वादिद्वारव्याख्यानार्थमाह-

**[भा. २६१८]** अद्धाणे असंथरणे अकोवियाणं विकरणपलंबे ।
एमेव कक्खडंमि वि असतिति सहायगा नत्थि ।।

**वृ-** अध्वनि सार्थेन समं व्रजतामसंस्तरणे भिक्षार्थमाचार्यो हिण्डते, अथवा ते सहाया अकोविदाः सार्थे च प्रलम्बान्यविकरणकृतान्यखण्डीकृतानि लभ्यन्ते । ततः आचार्यः स्वयमेव हिण्डमानस्तानि विकरणानि कृत्वा सन्निवर्तते अथवा ददतामुपदेशं ददाति विकरणानि कृत्वा दद्ध्वमिति । एवमकोविदानां सहायानां भावे प्रलम्बविकरणनिमित्तमाचार्यो गच्छति । एवमेव कर्कशेपि क्षेत्रे भिक्षार्थं गमनमाचार्यस्य भवति । तत्राप्यसंस्तरणे अकोविदसहायभावे प्रलम्बविकरणाय वा गच्छतीति । तथा असतित्ति नाम सहायका न सन्ति ततः स्वयमेव भिक्षामटति ।।

**[भा. २६१९]** बहुया तत्थ अतरंता अहव गिलाणस्स सो परं लहति ।
एमेव य आदेस सेसेसु विभासबुद्धीए ।।

**वृ-** बहवस्तत्र गच्छे अतरन्तो ग्लानास्ततः सर्वेषां गच्छसाधवः प्रायोग्यमुत्पादयितुमशक्ता अथवा ग्लानस्य परं प्रायोग्यमन्यो न लभते किन्तु स एवाचार्यस्ततः स हिण्डते । एवमेवादेशेषु प्राघूर्णकिशेषेषु च बालवृद्धासहेषु विभाषा विविधं भाषणं स्वबुद्धया कर्तव्यं । तद्यैवं-यद्यादेशादयो बहवः सर्वेषां साधवः कर्तुं न शक्नुवन्ति । यदि वा स एवादेशादिप्रायोग्यं लभते नान्यः कोऽपि ततः स हिण्डते सम्प्रति संथरमाणे भइओ इति व्याख्यानयति-

**[भा. २६२०]** अब्भुज्जयपरिकम्मं कुणमाणं जा गणं न वोसिरिति ।
ताव सयं सो हिंडइ इति भयणा संथरंतंमि ।।

**वृ-** अभ्युद्यतविहारपरिकर्म कुर्वन् यावत् गणं न व्युत्सृजति तावत्स्वयं स आचार्यो हिण्डते, इत्येषा भजना संस्तरति गच्छे-

**[भा. २६२१]** अद्धाणादिसुवेहं सुहसीलत्तेण जो करेज्जाहि ।
गुरुगा य जं च जत्थ व सव्वपयत्तेण कायव्वं ।।

**वृ-** अध्वादिषु अध्वकर्कशादिष्वसंस्तरति गच्छे सुखशीलत्वेन सुखमाकांक्षमाण आचार्योऽहमित्यालम्बनमाधाय य उपेक्षामाचार्यः करोति भिक्षां न हिण्डते इत्यर्थः । तस्य प्रायश्चित्तं

चत्वारो गुरुकाः; । यद्ययत्र वा अनागाढपरितापनादि साधवः प्राप्नुवन्ति तन्निष्पन्नमपि तस्य प्रायश्चित्तं, तस्मात्सर्व प्रयत्नेनाध्वादिष्वसंस्तरणे भिक्षाटनं कर्त्तव्यम् । साम्प्रतमसंस्तरणयतनामाह-

[भा.२६२२] असतो पडिलोमं सगामे गमणदाणसड्ढेसु ।
पेसेति बितियदिवसे आवज्जइ मासियं गुरुयं ।।

वृ- असंति अवमौदर्यादिना गच्छसंस्तरणाभावे प्रतिलोमं गणावच्छेदकादारभ्य प्रतिकूल गमनमवसातव्यं । तद्यथा-प्रतिवृषभादिरसंस्तरणे गणावच्छेदकोऽपि प्रतिवृषभादिभिः सह हिण्डते तथाप्यसंस्तरणेस्थविरोपि तथाप्यसंस्तरणे प्रवर्तकोपि तथाप्यसंस्तरणे उपाध्यायोपि तथा चैन्न संस्तरति तदा स्वग्रामे दानश्रद्धेषु कुलेष्वाचार्यस्य गमनं भवति, तथापि चेदसंस्तरणं तत आचार्यो अन्यान्यपि गृहाणि, तथा केनापि साधुना कस्मिंश्च कुले ग्लानप्रायोग्यं किमपि द्रव्यं याचितं, परं न लब्धमथ च तत् द्रव्यं तस्मिन् गृहे प्रभूतमस्ति अन्यत्र च न विद्यते, तत्र यदि द्वितीये दिवसे तस्मिन् कुले येन न लब्धं तमेवाचार्यः प्रेषयति ततो गुरुकं मासिकं प्रायश्चित्तमापद्यते तस्मात् तस्मिन् कुले प्रतिलोमं प्रेषयितव्यस्तद्यथा-प्रथमं गणावच्छेदकः प्रेष्यस्तेनालब्धे स्थविरस्तेनाप्यलब्धे प्रवर्तकस्तेनाप्यलब्धे उपाध्यायस्तेनाप्यलब्धे स्वयमाचार्यो व्रजति । यदि वा स गृहप्रभुर्यस्य गौरवं करोति स प्रेषयितव्यः । साम्प्रतमेनामेव गाथां विवरीषुः प्रथमतो गाथापूर्वार्धं भावयति-

[भा.२६२३] गणावच्छेदओ पुव्वं ठवणकुलेसुं च हिंडइ सगामे ।
एवं थेर पवित्ती अभिसेय गुरुय पडिलोमं ।

वृ- पूर्वं गणावच्छेदकः स्वग्रामे स्थापनाकुलेषु हिण्डते । एवं गणावच्छेदादारभ्य प्रतिलोमं वक्तव्यं, तद्यथा-असंस्तरणे स्थविरोऽपि हिण्डते, तथाप्यसंस्तरणे प्रवर्त्यपि, तथाप्यसंस्तरणे अभिषेक उपाध्यायस्तथापि संस्तरणाभावे गुरुरपि ।। अधुना पेसेति वितियदिसे इत्यादि भावयति-

[भा.२५२४] उभासिय पडिसिद्धं तं चेव तत्थ पठवेज्जा उ ।
पडिलोमं गणिमादी गोरवं जत्थ वा कुणति ।।

वृ- केनापि साधुना ग्लानप्रायोग्यं किमपि द्रव्यं कस्मिंश्चित् कुले अवभाषितं याचितमित्यर्थः, तच्च गृहे प्रभुणा प्रतिषिद्धमन्यत्र तत् द्रव्यं नास्ति, किन्तु तस्मिन्नेव गृहे । ततो द्वितीयदिवसे तत्र कुले न तमेव प्रेषयेत् । किन्तु प्रतिलोमं गण्यादिं गणावच्छेदप्रभृतिकं यथोक्तं प्राक् । यत्र वा गृहप्रभुर्गौरवं करोति तं वा प्रेषयेत् ।

[भा.२६२५] तित्थगरत्ति समत्तं अहुणा पावयण निज्जरा चेव ।
वच्चंति दोवि समगं दुवालसंगं पवयणं ।।

वृ- तीर्थकर इति द्वारं समाप्तम् । अधुना प्रवचनं निर्जरा चेति द्वे अपि द्वारे समकमेककालं व्रजतस्तत्र प्रवचनं नाम द्वादशाङ्गं गणिपिटकम् ।

[भा.२६२६] तं तु अहिज्जंताणं वेयावच्चे उ निज्जरा तेसिं ।
कस्स भवे केरिसिया सुत्तत्थे जहोत्तरं बलिया ।।

वृ- तत्तु द्वादशाङ्गं गणिपिटकमधीयानानां वैयावृत्ये क्रियमाणे तेषां वैयावृत्यकराणां महती निर्जरा भवति, उक्तं च-आयरियं वेयावच्चं करेमाणे महानिज्जरे महापज्जवसाने भवति, इत्यादि अत्र महानिर्जरस्तदावरणीयस्य कर्मणः क्षयकरणात् महापर्यवसानः पुनरन्यनवकर्मबंधाभावात् । अत्र

शिष्यःप्राह अस्य कीदृशी निर्जरा भवति ? आचार्यःप्राह सूत्रे अर्थे च यथोत्तरं बलिका ।

**[भा.२६२७]** सुत्तावासगमादी चोद्दसपुव्वीण तह जिनानं च ।
भावे सुद्धमसुद्धे सुत्तत्थे मंडली चेव ।।

**वृ-** सूत्रमावश्यकादि यावच्चतुर्दशपूर्वाणि, एतद्धराणां यथोत्तरं महत्तरा निर्जरा एवमर्थेपि भावनीयं, तथा जिनानामप्यवधिजिनप्रभृतीनां यथोक्तं बलिका निर्जरा इयमत्रभावना- एक आवश्यकसूत्रधरस्य वैयावृत्यं करोति । अपरो दशवैकालिकश्रुतधरवैयावृत्यकरस्तस्यावश्यकसूत्रधरवैयावृत्यकरान् महती निर्जरा । एवमधस्तनाधस्तन श्रुतधरवैयावृत्यकरादुपर्युपरितर श्रुतधरवैयावृत्यकरो यथोत्तरं महानिर्जरस्तावदवसेयो यावत्त्रयोदशपूर्वधरवैयावृत्यकराच्चतुर्दशपूर्वधरवैयावृत्यकरो महानिर्जरः । एवमर्थेऽपि भावनीयम् । तदभयचिन्तायां सूत्रवैयावृत्यकरादर्थवैयावृत्यकरो महर्धिको नवरं निशीथकल्पव्यवहारार्थधराणां वैयावृत्यकरात् कालिकश्रुतवैयावृत्त्यकरो महानिर्जरः । तथा श्रुतज्ञानिवैयावृत्यकरः तथा भावः परिणामस्तस्मिन् शुद्धेऽशुद्धे च तदनुसारेण निर्जरा प्रवर्तते । तथा सूत्रार्थे युगपच्चिन्त्यमाने यथोत्तरं बलिका तथा मण्डलीकसूत्रार्थवधिकृत्य विचारणीया इहाचार्यः प्रस्तुतमधिकृत्य वैयावृत्यकरणे महती निर्जरा । तामेवाह-

**[भा.२६२८]** पावयणी खलु जम्हा, आयरितो तेन तस्स कुणमाणो ।
महतीए निज्जराएं वट्टति साहू दसविहंमि ।।

**वृ-** प्रावचनी प्रावचनिकः खलु यस्मादाचार्यस्तेन तस्य वैयावृत्त्यं कुर्वन् साधुर्महत्यां निर्जरायां वर्तते । एवं दशविधेऽपि वैयावृत्ये महानिर्जराकत्वं भावनीयं, सम्प्रति यदुक्तं भावे शुद्धेऽशुद्धे च तदनुसारतो निजरा भवतीति । तत्र शुद्धाभावो व्यवहारतः शुद्धवस्तुप्रभावाद्भवतीति प्रतिपिपादयिषुराह-

**[भा.२६२९]** जारिसगं जं वत्थुं, सुयं च तिण्हं व ओहिमादीणं ।
तारिसतो च्चियभावो उपज्जति वत्थुतो जम्हा ।।

**वृ-** यादृशं यद्वस्तु प्रतिमादिकं यस्य यावच्च श्रुतं त्रयाणां चावध्यादीनां स्वस्थाने ये विशेषास्तस्माद्वस्तुनः श्रुताद्विशेषाद्वा तादृशान् भावः परिणामो व्यवहारतः तादृश उत्पद्यते तदनुसारेण च निर्जरा, ततः पूर्वं श्रुतचिन्तायां अर्थचिन्तायां वा तथा जिनानां च यथोत्तरं बलिका निर्जरोक्ता तथा चेतमेव व्यवहारनयं प्रतिपिपादयिषुराह-

**[भा.२६३०]** गुणभूइठे दव्वंमि जेन मत्ताहियत्तणं भावे ।
इति वत्थुतो इच्छति ववहारो निज्जरं विउलं ।।

**वृ-** येन यतो गुणभूयिष्ठद्रव्यं ततस्तस्मिन् येन कारणेन मात्राधिकत्वं भावे परिणामे भवतीति अस्मात् कारणात् वस्तुनः प्रतिमाश्रुतादेर्यथोत्तरं गुणभूयिष्टात् विपुलां निर्जरामिच्छति व्यवहारो व्यवहारनयः । एतदेव स्पष्टतरं भावयति-

**[भा.२६३१]** लक्खणजुता पडिमा पासादी या समत्तलंकारा ।
पल्हायति जह वयणं तह निज्जरमो वियाणाहि ।।

**वृ-** या जिनप्रतिमा लक्षणयुक्ताः प्रसादी मनः प्रसादकरणं समस्तालङ्कारा तां पश्यतो यथैव मनः प्रह्लादते तथा निर्जरां विजानीहि । यद्यधिकं मनः प्रल्हत्तिस्ततो महती निर्जरा, मन्दमनःप्रल्हत्तौ तु मंदेतिभावः ।।

[भा.२६३२] सुयव्वं अतिसयसुत्तो सुहोचितो तवि तव गुणजुत्तो ।
जो सो मनप्पसातो जायइ सो निज्जरं कुणति ।।

वृ- श्रुतवानेष अत्राप्यनेके भेदास्तथाऽतिशययुक्तोऽवध्याद्यतिशयोपेतोऽत्राप्यवध्यादिविषये बहवस्तत्तमविशेषाः सुखोचितोऽपि तपसि स बाह्याभ्यन्तरे गुणे ज्ञानादौ उद्युक्तस्तपोगुणोद्यत इत्येवं योऽसौ यादृशो मनःप्रसादो मनःप्रसत्तिपरिणामो जायते स तादृशीं निर्जरां करोतिति स्माद्वस्तुतो निर्जरेति व्यवहारनयः । तदेवमुक्तं व्यवहारनयमतमधुना निश्चनयमतमाह ।

[भा.२६३३] निच्छयतो पुन अप्पे, जस्स वत्थुंमि जायते भावो ।
तत्तो सो निज्जरगो, जिन गोयम सीह आहरणं ।।

वृ- निश्चयतः पुनरल्पेऽपि महागुणगुणतराद्धीनगुणेऽपि वस्तुनि यस्य जायते तीव्रः शुभो भावस्तस्मान्महागुणतरविषयभावयुक्तात् स हीनगुणविषयतीव्रशुभभावो निर्जरको महानिर्जरतरः सद्भावस्यातितीव्रशुभत्वात् । अत्र जिनगौतमसिंहजीवआहरणं । तच्चैवं ''तिविट्ठत्तणे भयवया वद्धमानसामिणा सीहो विहतो अद्धितिं करइ 'खुड्डलगेण निहतोमिति' परिभवात्, गोयमेणं सारहित्तनेन मनुसासितमा अद्धितिं करेह । तुमं पसुसीहो नरसीहेन मारियस्स तुज्झ को परिभवो, एवं सो अनुसासिज्जंतो मतो । ततो संसारं भमिऊण भयवतो वद्धमानसामिस्स चरमतित्थगरभवे रायगिहे नयरे कविलस्स बंभणघरे वडुतो जातो । सो अनया समोसरणे आगतो भगवंतं दट्ठूण रुस्सभम्मेइ । ततो भगवया गोयमसामी पेसितो जहा उवसामेह । ततो गतो अनुसासितो य । जहा एस महप्पा तित्थंकरो, एयंमि जो पडिनिवसति सो दुग्गइं जाति । एवं सो उवसामितो तस्स दिक्खा गोयमसामिना दिन्ना'' एतदेवाह-

[भा.२६३४] सीहो तिविट्ठ निहतो भमिउं रायगिहं कविल बडुगत्ति ।
जिनवरकहणमनुवसम गोयमोवसम दिक्खा य ।।

वृ- सिंहस्त्रिपृष्ठेन निहतः स संसारं भ्रमित्वा राजगृहे कपिलस्य ब्राह्मणस्य बटुकोऽभूत् । जिनस्य वीरस्य कथनं तथापि तस्यानुपशमो, गौतमेन चानुशासने कृतेऽभूदुपशमो दीक्षा च अत्र भगवदपेक्षया हीनगुणेऽपि गौतमे तस्य गुरुपरिणामोऽ जायतेति महती निर्जराऽभवदिति ।।

[भा.२६३५] सुत्ते अत्थे तदुभए पुव्वं भणिया जहोत्तरं बलिया ।
मंडलिए पुन भयणा, जइ जाणइ तत्थ भूयत्थं ।।

वृ- सूत्रेऽर्थे तदुभयस्मिन् स्वस्थाने निर्जरा पूर्वं यथोत्तरं बलिका बलवती भणिता । सम्प्रति पुनः सूत्रार्थतदुभयेषु युगपच्चिन्त्यमानेषु यथोत्तरं निर्जरा बलवती साम्प्रतं मंडली चेवत्ति व्याख्यानार्थमाह मंडलीए पुन इत्यादि मंडल्यां पुनर्भजना विकल्पना यदि जानाति, तत्र मंडल्यां भूतार्थं सद्भूतमर्थं तदा स महानिर्जरइयमत्र भावना मण्डल्यां पठन्ति पाठयन्ति च तत्रावश्यकादिपठतां यथोत्तरं पाठितो बलिकाः । अथ जानाति वैयावृत्यकरो यथाधस्तनसूत्रपाठको ज्ञानादिभिर्गुणैरधिकतरस्ततो-ऽधस्तनश्रुतपाठकस्य वैयावृत्यकरणे महती निर्जरा, ददतां मध्ये य उपरितनश्रुतवाचकः स ज्ञानादिभिरधिकतर इति तद्वैयावृत्यकरणे महती निर्जरा । अथ जानाति वैयावृत्यकरोऽधस्तनः श्रुतवाचको ज्ञानादि-भिरधिकतरस्ततोऽधस्तनश्रुतवाचकस्य वैयावृत्त्यकरणे बलवती निर्जरा वाचकप्रातीच्छिकानां मध्ये यो वाचकस्तद्वैयावृत्त्यकरणे महती निर्जरा, । अथ वैयावृत्यकरो जानात्येषप्रातीच्छिक आचार्यो वाच्यते ततु प्रत्युज्वालनमात्रं यावत् सर्वमेतस्याधाति सूत्रतोऽर्थतश्चाधिकतरं इति तदा तस्य

प्रतीच्छिकस्य वैयावृत्यकृतौ महती निर्जरा, इह सूत्रेऽर्थे तदुभये च यथोत्तरं बलवती निर्जरेत्युक्तं तत्र यथोत्तरं निर्जराया बल... भावयति-

[भा.२६३६] अत्थो उ महिड्डितो कडकरणेणं घरस्स निप्पत्ती ।
अब्भुट्ठाणे गुरुगा रणोपीणेय देवीया ॥

वृ- सूत्रात् केवलात् अर्थाद्वा स सूत्रार्थो महर्द्धिकः किं कारणमिति चेत् उच्यते । अत्र कृतकरणेन । गृहस्य निष्पत्तिर्दृष्टान्तः । इतश्च सूत्रादर्थः ससूत्रो महर्द्धिकः, सूत्रमण्डल्यामाचार्यादयः प्राघूर्णकप्रभृतीनामभ्युत्थानं कुर्वन्ति । अर्थ मण्डल्यां पुनर्यस्य समीपेऽनुयोगं श्रुतवान् तमेकं मुक्त्वाऽन्यस्य दीक्षागुरोरप्यभ्युत्थाने चत्वारो गुरुकाः प्रायश्चित्तं । ततः सूत्रार्थो राज्ञः शातवाहनस्य याने निगमने दृष्टान्तः । एष गाथाक्षरार्थः । साम्प्रतमेनामेव विवरीषुः कृतकरणेन गृहस्य निष्पत्तिरिति दृष्टान्तं भावयति-

[भा.२६३७] आराहितो नरवती तिहिं उ पुरिसेहिं तेसि संदिसति ।
अमुगपुरे सयसहस्सं घरं च एएसि दायव्वं ।

[भा.२६३८] पट्टं घेत्तूण गतो उंडियबितियो उ तइओ उभयं ।
निप्फलगा दोन्नि तहिं मुद्दा पट्टो य सफलो उ ॥

वृ- एको नरपतिस्त्रिभिः पुरुषैराधितः ततः परितुष्टः सन्नरपतिस्तेषां प्रत्येकं संदिशति । यथा-अमुकपुरे सुन्दरं गृहं शतसहस्रं च दीनाराणामित्येषां प्रत्येकं दातव्यमिति । तत्रैकोऽमुं संदेशं पट्टके गृहीत्वा लेखयित्वा गतो, द्वितीय उंडि मुद्रां गृहीत्वागतस्तृतीय उभयं पट्टके लिखापयित्वा गतस्तत्र येन पट्टके लेखापितं यथामुकपुरे सुन्दरं गृहं शतसहस्रं च दीनाराणां न तूपरि मुद्रा दापिता । येन पट्टकव्यतिरेकेण मुद्राप्रतिबिम्बमात्रं गृहीतं तौ द्वावपि निष्फलौ जातौ । तथाहि- ते त्रयोऽपि तन्नगरं गतास्तत्र आयुक्तस्तस्य समीपमुपागताः पट्टकं मुद्रामुभयं च दर्शयन्ति । तत्रायुक्तेन प्रथमो भणितो मुद्रां न पश्यामि कथं च दामि, द्वितीयो भणितो जानामि राज्ञो मुद्रां न पुनर्जानामि राज्ञः सन्देसं किं दातव्यमिति, । एवं तौ निष्फलौ जातौ । यस्य तु तृतीयस्य मुद्रा पट्टकश्च स सफलस्तस्यायुक्तेन यथाज्ञासदानात् एष दृष्टान्तः

[भा.२६३९] एवं पट्टगसरिसं सुत्तं अत्थो य उंडियत्थाणे ।
उस्सग्गववायत्थो उभयसरित्थो य तेन बली ॥

वृ- एवमभुना प्रकारेण पट्टकसदृशं पट्टकस्थानीयं सूत्रं, उंडिका मुद्रा ततः स्थानीयोऽर्थः उत्सर्गापवादस्य उभयसदृशस्तेन बली । तस्योभयस्य भावात् ।

[भा.२६४०] सुत्तस्समंडलीए नियमा उठंति आयरियमादी ।
मुत्तूण पयायंतं न उ अत्थे दिक्खाण गुरुंपि ॥

वृ- सूत्रमण्डल्यां वाचयंत आचार्यादय आचार्योपाध्यायप्रभृतयः प्राघूर्णकादीनामागच्छतां सर्वेषामपि नियमादुत्तिष्ठन्ति अभ्युत्थानं कुर्वन्ति । अर्थमण्डल्यां पुनरुपविष्टः सन् यस्य समीपेऽनुयोगः श्रुतस्तमेकं प्रवाचयन्तं मुक्त्वान्यं दीक्षणगुरुमपि नाभ्युत्तिष्ठति यदाभ्युत्तिष्ठति तदा तस्य प्रायश्चित्तं चत्वारो गुरुकाः, श्रोतारोऽपि यद्याचार्येऽनभ्युत्तिष्ठत्यभ्युत्तिष्ठन्ति तदा तेषामपि प्रायश्चित्तं चतुर्गुरुकं, यदि पुनर्यस्य समीपेऽनयोगं श्रुतवान् तस्य नाभ्युत्तिष्ठति तर्हि तदापि तस्य चतुर्गुरुकम् । अत्र दृष्टान्तो राज्ञो याने देवी तं भावयति-

[भा.२६४१] पतिलीलं करेमाणी नोठिया सालवाहणं ।

पुहवी नाम सा देवी सो य रुट्ठो तहिं निवो ।।

वृ- राज्ञः सातवाहनस्य पृथिवी नामाग्रमहिषी । अन्यदा सा क्वापि निर्गते राज्ञि शेषाभिरन्तःपुरिकाभिर्देवीभिः संपरिवृता शातवाहनवेषमादाय राज्ञ आस्थानिकायामुपविष्टा पतिलीलाविलम्बमानाऽवतिष्ठते । राजा प्रत्यागतः प्रविष्टस्तस्मिन् प्रदेशे । सा च पतिलीलां कुर्वती पृथिवी नाम देवी शातवाहनं राजानमायान्तमपि दृष्ट्वा नोत्थिता । तस्यानुत्थाने शेषा अपि देव्यो नाभ्युत्थितवत्यस्ततः स नृपो राजा तत्र रुष्टो ब्रूते-त्वं तावन्महादेवी, ततो महादेवी वाते नाभ्युत्थिता एताः किं त्वया वारिता यन्नाभ्युत्थानमकार्षुस्ततो न सुन्दरमेतदिति ।।

[भा.२६४२] ततो णं आह सा देवी अत्थाणीए तवाणहा ।
दासावि सामियं पत्तं नोठंति अवि पत्थिवं ।।

वृ- ततो राज्ञोक्तानन्तरं सा पृथिवीनाम देवी राजानमाह । तवास्थानिकायामुपविष्टा दासा अपि नाथाः सम्पूर्णगुणा अपि पार्थिवमपि स्वामिनमागच्छन्तं नाभ्युत्तिष्ठन्ति, तवास्थानिकायाः प्रभाव एव-

[भा.२६४३] तं वा वि गुरुणो मोत्तुं न वि उठेसि कस्सइ ।
न ते लीला कया होंती उठंती हं स तोसितो ।।

वृ- त्वमप्यस्यामास्थानिकायामुपविष्टो गुरून्मुक्त्वा नान्यस्य कस्यापि महीयसोऽभ्युत्तिष्ठसि । अहमपि तवास्थानिकायां त्वदीयां लीलां धरन्ती समुपविष्टा । ततो न सपरिवाराभ्युत्थिता । यदि पुनस्ते तव लीला न कृतास्यात्ततोऽहमभ्युत्तिष्ठेयमित्येवं राजा देव्या तोषितः । एवमत्रापि तीर्थकरस्थानीय आचार्योऽर्थमण्डल्यामुपविष्टः सन् न कस्याप्यभ्युत्तिष्ठति अमुमेवार्थं गौतमदृष्टान्तेन दृढयति-

[भा.२६४४] कहंतो गोयमो अत्थं, मोत्तं तु तित्थगरं सयं ।
नवि उठेइ अन्नस्स तग्गयं चेव गम्मति ।।

वृ- न खलु भगवान् गौतमो अर्थं कथयन् स्वकमात्मीयं तीर्थकरं मुक्त्वा अन्यस्य कस्यापि उत्तिष्ठति । अभ्युत्थानं कृतवान्, तद्गतं चेदां सर्वैरपि गम्यते । तदनुष्ठितं सर्वमिदानीमनुष्ठीयते । ततोऽर्थं कथयन् न कस्याप्युत्तिष्ठति ।। सम्प्रति श्रवणविधिमाह-

[भा.२६४५] सोयव्वे उ विही इणमो अवक्खेवादि होइ नायव्वो ।
विक्खेवम्मि य दोसा आणादीया मुणेयव्वा ।।

वृ- श्रोतव्ये पुनरयं विधिरव्याक्षेपादिर्भवति ज्ञातव्य आदिशब्दाद्विकथादिपरिग्रहः । व्याक्षेपे पुनराज्ञादय आज्ञानवस्थामिथ्यात्वविराधनारूपदोषा ज्ञातव्याः, । अत एवाभ्युत्थानमपि न क्रियते; तस्मिन् सति व्याक्षेपादिसंभवात्तथा चैतदर्थमेव द्वारगाथाद्वयमाह-

[भा.२६४६] काउस्सग्गे विक्खेवया य विकहा विसोत्तिया पयतो ।
उवनय वाउलणादि य अक्खेवो चेव आहरणे ।।

[भा.२६४७] आरोवणा परूवण उग्गाह तह निज्जरा य वाउलणा ।
एएहिं कारणेहिं अब्भुट्ठाणं तु पडिकुट्ठं ।।

वृ- अनुयोगारंभनिमित्तं कायोत्सर्गे कृते एतैः कारणैरभ्युत्थानं प्रतिकुष्टं निराकृतं, कैः कारणैरत आह-विक्खेवया य इति व्याक्षेपस्य व्याक्षेपशब्दस्य भावः प्रवृत्तिनिमित्तं व्याक्षेपता व्याक्षेप इत्यर्थः । अभ्युत्थाने क्रियमाणे व्याक्षेपो भवति, व्याक्षेपाच्च विकथा चतुर्विधा प्रवर्तते । तत्प्रवृत्तौ चेन्द्रियैर्मनसा

विश्रोतसिका संयमस्थानप्लावनमिति भावः, तस्मादभ्युत्थानकुर्वन् प्रयतः शृणुयात् । प्रयतो नाम कृताञ्जलिप्रग्रहो दृष्ट्वा सूरिमुखारविन्दमवेक्षमाणो बुध्युयुक्तस्तथाभ्युत्थाने क्रियमाणे उपनयस्य विपर्ये व्याकुलता, उपनयः कस्याप्यर्थेन क्रियते अन्यथा वा क्रियेत येन उपनयग्रहणमुपलक्षणं तेन यत् ग्रहणं ज्ञातं तत् व्याकुलनात् भ्रश्यति पृच्छा वा कर्तुमारब्धा विस्मृतिमुपयाति, कालो व्याख्यानस्य त्रुट्यतीति तथा निरन्तरमविच्छेदेन भाषमाणस्य शृण्वतो महानाक्षेपस्तीव्रशुपरिणामरूपो जायते । अभ्युत्थाने तद्व्याघातस्तद्यथा च सति शुभपरिणामाभावतो येऽवध्यादिलाभः संभाव्यते तस्य विनाशोऽत्रार्थे चाहरणं ज्ञातं वक्तव्यं । तथा आरोपणायाः प्रायश्चित्तस्य प्ररूपणे क्रियमाणेऽभ्युत्थाने व्याघातो भवति, व्याघाताच्च सम्यगवग्रहो ग्रहणं न भवति, । न खलु व्याक्षिप्तोऽवग्रहीतुं शक्नोति किं त्वव्याक्षिप्त इति प्रतीतमेतत् । तथाभ्युत्थाने क्रियमाणे व्याकुलता ततः सम्यक् श्रुतोपयोगो न भवति । तदभावाच्च ज्ञानावरणीयस्य कर्मणो न निर्जरा । एतैः कारणैरभ्युत्थानं प्रतिकुष्टं । साम्प्रतमेतदेव गाथाद्वयं विवरीषुः प्रथमतः काउस्सग्गे विक्खेवया य इति भावयति-

[भा.२६४८] [illegible] ।
अप्पसत्थे पसत्थे च दिट्ठंतो हत्थिलावका ।।

वृ- अनुयोगारंभार्थं कायोत्सर्गं कृते नन्द्यां ज्ञानपञ्चकरूपायामुच्चारितायामभ्युत्थानेनान्येन वा प्रकारेण यो व्याक्षेपं करोति, तस्य प्रायश्चित्तं गुरुको मासः । तस्माद्व्याक्षेप न कर्तव्यः । अत्राप्रशस्ते व्याक्षेपकरणे प्रशस्ते च व्याक्षेपाकरणे दृष्टान्तो हस्तिलावकाः हस्ती च शालीनां लावकाश्च हस्तिलावकास्तत्राप्रशस्ते प्रतिपादयति-

[भा.२६४९] जह सालिं लुणावेंतो कोई अत्थारिएहिं उ ।
सेयं हत्थिं तु दावेइ धाविया ते य मग्गओ ।।

[भा.२६५०] न लुओ अह साली उवेक्खेवेण तेन उ ।
वक्खेवेयगणं तु पोरिसी एव भज्जइ ।।

वृ- यथा कोऽपि कुटुम्बी निजे क्षेत्रे अत्थारिएहिं तु ये मूल्यप्रदानेन शालिलवनाय कर्मकराः क्षेत्रे क्षिप्यन्ते ते अस्तारिकास्तैर्लावयन् कथमपि सप्ताङ्गप्रतिष्ठितं श्वेतमारण्यहस्तिनमागतं दृष्ट्वा दर्शयति । तद्दर्शिते च ते हस्तिनो मार्गतः पृष्टो धाविताः आगतैरपि हस्तिनो रूपेणाक्षिप्तैर्हस्तिरूपं वर्णयद्भिः तेन व्याक्षेपेणाथ शालिर्नलूना एवमिहापि अभ्युत्थानेन व्याक्षेपे स्तानां पौरुषीभङ्गो भवति । व्याख्यानं पुनर्न किमपि याति, तस्माद्व्याक्षेपो न विधेयः । प्रशस्ते व्याक्षेपाकरणे दृष्टान्तः स्वयं भावनीयः स चैवम्-एकः कौटुम्बिकः शालिक्षेत्रं लावयति । तस्य सत्कया दास्या शालिलुनंत्या सप्ताङ्गप्रतिष्ठितः श्वेतोवनहस्ती चरन् दृष्टो, दास्या ज्ञातं यदि शालिलावकानां कथयिष्यामि ततो हस्तिनं दृष्ट्वा हस्तिनो रूपेणाक्षिप्ता हस्तिनो रूपं वर्णयन्त आसिष्यन्ते एष च हस्ती दिनेऽस्मिन्नवकाशे दृश्यते, ततः शालिर्न लविष्यते यदा तु शालिः परिपूर्णो लूनो भवेत् तदा सा दासी स्वामिनः शालिलावकानां चाकथयत् । ततस्तैरुक्तं किं तदा नाख्यातं दासी प्राह शालिलवितव्यव्याघातो भविष्यतीति हेतोस्तत एवमुक्ते कौटुम्बिकः परितुष्टः, तेन च परितुष्टेन मस्तकप्रक्षालनतो दासी अदासकृता । एवमिहापि व्याक्षेपो करणीयस्तथा च सति भगवदाज्ञापरिपालनतः कर्मक्षयेण त्रिलोकमस्तकस्थो भवति सम्प्रति विकथादिपदव्याख्यानार्थमाह-

[भा.२६५१] विकथा चउव्विहा वुत्ता, इंदिएहिं विसोत्तिया ।

अंजलीपग्गहो चेव दिट्ठीबुध्धुजुत्तया ।।

वृ- विकथा स्त्रीकथादिभेदाच्चतुर्विधोक्ता, विश्रोतसिका इन्द्रियैरुपलक्षणमेतत् मनसा वाचा प्रयत्त अञ्जलिप्रग्रहो गुरुमुखे दृष्टिर्बुद्ध्युपयुक्तता च उपनयव्याकुलतेति व्याख्यानयति-

[भा.२६५२] तस्स ते वणेंतो सो उ अन्नहा वोवणिज्जइ ।
नायं वाकरणं वा वि पुच्छा अद्धा च भस्सइ ।।

वृ- अभ्युत्थानेनान्येन वा व्याकुलतायां स दर्शित उपनयो नश्यति, विस्मृतिं याति यदि व व्याकुलतयाऽन्यथोपनीयते ज्ञातं वा व्याकरणं वा पृच्छा वा कर्तुमारब्धा अद्धा वा पौरुषीलक्षण भ्रश्यति । आक्षेपव्याख्यानार्थमाह-

[भा.२६५३] भासंतो सावओ वावि तिव्वसंजायमानसो ।
लभंतो ओहिलंभादी जहा मुंडिवगो मुनी ।।

वृ- निरन्तरमविच्छेदेन भाषकः श्रावको वा उत्तरोत्तरविशिष्टार्थावगाहनस्तीव्रसंजातमानसो जातपरमाक्षेपो यद्यभ्युत्थानेन व्याक्षेपो नाभविष्यत्ततोऽवधिलाभादिकमलप्स्यत । यथा मुडिम्बको मुनिस्तथा सुहिडिम्बक आचार्यः परमकाष्टीभूते शुभध्याने प्रवृत्तो अवध्यादिलब्धिमलप्स्यत यदि तस्य पुष्पमित्रेण ध्यानविघ्नोनाकरिष्यत । परं सर्वसाधुसाध्वीप्रभृत्यत्याकुलमभवदितितेन ध्यानव्याघातः कृतः । अधुना आरोवणा परूवणेति व्याख्यानार्थमाह-

[भा.२६५४] आरोवणमक्खेवं व दाउकामो तहिं तु आयरितो ।
वाउलणाए फिट्टइ उ घेत्तुमणो न उ गेण्हे ।।

वृ- आरोपणां प्रायश्चित्तं तत्रार्थं मण्डल्यामाचार्यो दातुकामः प्ररूपयितुकाम इति तात्पर्यार्थः यद्यभ्युत्थानं करोति, ततो व्याकुलतया स्फिटति, व्याकुलेनैव प्रायश्चित्तप्ररुपणा तिष्ठतीति भावस्तथा-ऽवग्रहीतुमना अभ्युत्थानेन व्याकुलनातो नावगृह्णाति ।

[भा.२६५५] एगग्गो उ गिणहइ विक्खप्पंतस्स विस्सुतिं जाइ ।
इंदपुरइंददत्ते, अज्जुणतेने य दिट्ठंता ।।

वृ- एकाग्रः सन् अवगृह्णाति, अभ्युत्थानेन पुनर्व्याक्षिप्यमानस्यावगृहीतमपि विस्मृतिं याति, कुतोऽनवगृहीनार्थावग्रहणं व्याक्षेपाद्यविस्मृतिगमने इन्द्रपुरे पत्तने इन्द्रदत्तस्य राज्ञः सुताः दृष्टान्तः । तथा च तेषां कला अभ्यस्यतां प्रमादविकथादिव्याक्षेपान्न किमप्यवगृहीतमभूत् । यद्यपि किञ्चिदवगृहीतं, तदपि विस्मृतिमुपगतमत एव ते राधावेधो न कर्तुं शक्तिः । तथा अर्जुनस्तेनश्च दृष्टान्तः । तथा हि-सोऽर्जुनकः स्तेनोऽगडदत्तेन सह युध्यमानो न कथमप्यगडदत्तेन पराजेतुं शक्यते, । ततो निजभार्यातीवरूपवती सर्वालङ्कारभूषिता रथस्य तुण्डे निवेशिता, ततः स्त्रीरुपदर्शनव्याक्षेपात् युद्धकरणं विस्मृतिमुपगतमितिसोऽगडदत्तेन विनाशितः । एवमिहापिव्याक्षेपात् श्रुतोपयोगप्राणविनाशमाप्नोति ।

[भा.२६५६] एए चेव य दोसा अब्भुट्ठाणे वि होंति नायव्वा ।
नवरं अब्भुट्ठाणे, इमेहिं तीहिं कारणेहिं तु ।।

वृ- यस्मात् श्रवणे कर्तव्ये व्याक्षेपादिषु क्रियमाणेष्वेतेऽनन्तरोक्ता दोषास्तस्माद्व्याक्षेपादिरहितैः श्रोतव्यं, । एते एव च व्याक्षेपाद्यो दोषा अभ्युत्थानेऽपि क्रियमाणे भवन्ति, । तस्मादभ्युत्थानमपि न कर्तव्यं, । नवरमभ्युत्थानमेभिर्वक्ष्यमाणैस्त्रिभिः कारणैः कर्तव्यम् । तान्येवाह-

[भा.२६५७] पगयसमत्ते काले अज्झयणुद्देस अंगसुयक्खंधे ।
एएहिं कारणेहिं अब्भुट्ठाणं तु अनुयोगे ।।

वृ- प्रकृते सम्पाते तथा काले समाप्तेऽध्ययनोद्देशांगश्रुतस्कन्धेषु वा समाप्तेषु यदि प्राघूर्णकाद्यागमनं भवति तदेतैः कारणैरभ्युत्थानमनुयोगे भवति, । तत्र कालोऽध्ययनादिकं च प्रतीतं न प्रकृतप्रतिपादनार्थमाह-

[भा.२६५८] कप्पंमि दोण्णि पगया पलंबसुत्तं च मासकप्पे, य ।
दो चेव य ववहारे पढमे दसमे य जे भणिया ।।

वृ- कल्पे कल्पाध्ययने द्वे प्रकृते । तद्यथा-प्रलम्बसूत्रं मासकल्पश्च । मासकल्पसूत्रं तु व्यवहारे द्वे प्रकृते ये भणिते प्रथमे दशमे चोद्देशके । तत्र प्रथमे आरोपणासूत्रं दशमे पञ्चविधव्यवहारसूत्रम् । न केवलमेतदेव प्रकृतं किन्त्वन्यदपि तथा चाह-

[भा.२६५९] पेढियातो य सव्वातो चूलियातो तहेव य ।
निज्जुत्तीकप्पनामस्स ववहारस्स तहेव य ।।

वृ- सर्वाः प्रकल्पकल्पादिगताः पीठिकास्तथा सर्वाश्चूलिकास्तथा कल्पनाम्नो व्यवहारस्य च तथा चैवेति वचनादन्येषां च दशवैकालिकप्रभृतीनां च निर्युक्तयः प्रकृतानि । अत्रैवादेशान्तरमाह-

[भा.२६६०] अन्नोवि य आएसो, जो रायनिंतो य तत्थ सोयव्वे ।
अनुयोगधम्मयाए किइकम्मं तस्स कायव्वं ।।

वृ- अन्योऽपि चादेशो मतान्तरं तत्र श्रोतव्ये यो रात्निको रत्नाधिकोऽनुभाषक इत्यर्थः । तस्य नन्द्यामुच्चारितायामनुयोगधर्मतया कृतिकर्म वन्दनं कर्तव्यं, । तथा-

[भा.२६६१] केवलिमादी चोद्दसदसनवपुव्वी य उठणिज्जो उ ।
जे तेहिं ऊनतरगा समाणे अगुरुं न उठेंति ।।

वृ- अर्थमपि कथयता समागच्छन् केवली अभ्युत्थातव्यः । आदिशब्दान्मनःपर्यवज्ञानी अवधिज्ञानी च परिगृह्यते, तथा ये तेभ्यो नवपूर्वधरादिभ्य ऊनतरास्तैः पूर्वधरादिरभ्युत्थानीयः, तथाहि कथको यदि कालिक श्रुतधारी तर्हि तेनार्थमपि कथयता नवपूर्वीदशपूर्वी चतुर्दशपूर्वी वाभ्युत्थातव्यो नवपूर्विणा दशपूर्वी । दशपूर्विणा चतुर्दशपूर्वी इति । तथा यदि समगच्छन् समानः समानश्रुतोऽगुरुश्च तदा तं नाभ्युत्तिष्ठति । तदेवं प्रवचने निर्जरा चेति द्वारद्वयं गतमिदानीं सापेक्षद्वारमाह-

[भा.२६६२] सावेक्खे निरवेक्खे गच्छे दिठंतो गामसगडेणं ।
राउलकज्जनिउत्तं जहा गामेणं कयं सगडं ।।

[भा.२६६३] अस्सामिबुद्धियाए पडियं सडियं व निखक्खत्ति ।
रन्नापत्ते दंडो सयं व सीयंति कज्जेसु ।।

वृ- आचार्यस्य शिष्यैः प्रतीच्छिकैश्च सर्वं कर्तव्यं, ते च तथा कुर्वन्तः सापेक्षा उच्यन्ते, ये तु न कुर्वन्ति, ते निरपेक्षास्तत्र सापेक्षे निरपेक्षे च गच्छे दृष्टान्तो ग्रामशकटेन, । तद्यथा-एकस्मिन् ग्रामे ग्रामेण ग्रामेयकैः पुरुषैः राजकुलकार्यनियुक्तं शकटमेकं कृतं । ततो यत्ते राजकुलेनाज्ञाप्यन्ते धान्यं घृतघटादि वा नेतव्यं आनेतव्यं वा तस्मिन् शकटे आरोप्यानयन्ति नयन्ति वा, तथा नास्य कश्चित्स्वामीत्यस्वामि-

बुद्ध्यात्मनोऽपि कार्याणि तेन कुर्वन्ति । अस्वामिबुद्ध्यैव पतितं शटितं वा तस्य शकटस्य नापि रक्षन्ति, ततः कालेन गच्छता तत्मग्नं, अन्यदा राजकुलेन ते आज्ञप्ता धान्यमानय, तैः शकटाभावान्नानीतं, तदाज्ञाभङ्गोऽकारीति तेषां दण्डः कृतः, । कार्येषु च समापतितेषु स्वयं ते सीदंतो दृश्यते ।

[भा.२६६४] एवं न करेंति सीसा, काहींति पडिच्छियति काऊणं ।
ते वि य सीसत्ति ततो, हिंडणपेहादिसुसिग्गो ।

वृ- एवं ग्रामेयकदृष्टान्त-प्रकारेण शिष्याः प्रातीच्छिकाः करिष्यन्तीति कृत्वा न कुर्वन्तीति, तेऽपि च प्रातिच्छिकाः शिष्याः करिष्यन्तीति बुद्ध्या न कुर्वते । ततः सीदन्नाचार्यः स्वयं भिक्षामटति । स्वयं चोपकरणप्रेक्षादिकं विधत्ते इति हिण्डना प्रेक्षादौ च सिग्नः परिश्रान्तः तेषां च शिष्यप्रतीच्छिकानां दण्डः प्रायश्चित्त दीर्घसंसारिता, वा, तदेवं निरपेक्षे दृष्टान्तः । सम्प्रति सापेक्षे भावयति-

[भा.२६६५] बितिएहिं उसारवियं, सगडं रन्ना य उक्करा य कया ।
इय जे करेंति गुरुणो निज्जरलाभो य कित्तीय ।

वृ- अपरस्मिन् ग्रामे द्वितीयके ग्रामेयकै राजकुलकार्यनियुक्तं शकटं कृतं, तेन राजकीयं धान्यधृतघटाद्यानयन्ति नयन्ति च, । तच्च शकटं तैः सम्यक् सारापितं, ततो न कदाचिदाज्ञाभङ्गः कृत इति परितुष्टेन राज्ञा ते उत्कराः करविहीनाः कृताः । एष दृष्टान्तोऽयमर्थोपनय इति एवमुक्तेन प्रकारेण शिष्याः प्रातीच्छिकाश्चात्मानुग्रहबुद्ध्या ये गुरोः कृत्यं कुर्वन्ति तेषां महती निर्जरा भूयात् ज्ञानादिलाभः कीर्तिश्च । गतं सापेक्षद्वारं । सम्प्रति भक्त्यव्यवच्छेदद्वारमाह-

[भा.२६६६] दव्वे भावे भत्ती, दव्वे गणिया उ दुति जाराणं ।
भावंमि सीसवग्गो, करेति भत्तिं सुयधरस्स ।।

वृ- आचार्यस्य भक्तौ क्रियमाणायां तीर्थस्याव्यच्छेदो । भक्तावक्रियमाणायां तु तीर्थव्यवच्छेदः । सा च भक्तिर्द्विधा द्रव्ये भाव च । तत्र यन्नाम गणिका भुजङ्गानां भक्तिं कुर्वन्ति, दुतयो वा जाराणां, सा द्रव्ये द्रव्यभक्तिर्भावे भावविषया भक्तिः पुनरियं यत् शिष्यवर्गः श्रुतधरस्य भक्तिं करोति, । यद्यपि चान्योऽपि गुरोर्भक्तिं करोति, । तथा ममापि निर्जरा स्यादित्यात्मानुग्रहबुद्ध्यान्येनापि भक्तिः कर्तव्येति लोहार्यगौतमदृष्टान्तेन भावयति-

[भा.२६६७] जइवि य लोहसमाणे गेणहइ खीणंतराइणो उच्छं ।
तहवि य गोयमसामी पारणए गिण्हए गुरुणो ।।

वृ- यद्यपि च लोहसमानो लोहार्यः क्षीणान्तरायस्य भगवतो वर्धमानस्वामिनः सदैवोञ्छमेषणीयभक्तादिकं गृह्णाति तस्य भगवद्वैयावृत्यकरत्वात् । उक्तं च -

धन्नो सो लोहज्जो खंति खमाएवरलोहसरिवन्नो ।
जस्स जिनो पक्षातो इच्छइ पानीहिंभुत्तुं जे ।।

तथापि गौतमस्वामी स्वपारणके गुरोर्वर्धमानसवामिनो योग्यं गृह्णाति । एवमन्येनाप्यवैयावृत्यकरभावेऽपि यथायोग्यं गुरोः कर्तव्यं । तदेवं भक्तिर्व्याख्याता अधुना तस्यां क्रियमाणायां यथा तीर्थस्याव्यवच्छेदो भवति, तथा भावयति-

[भा.२६६८] गुरुअनुकंपाए पुन, गच्छो अनुकंपितो महाभागो ।
गच्छानुकंपयाए, अव्वोच्छित्ती कया तित्थो ।।

वृ- गुरोरनुकम्पया अनुग्रहेण गच्छो महाभागे महाचिन्त्यशक्तिरनुकम्पितो गृहीतो भवति, । गच्छानुकम्पया चाव्यवच्छित्तिस्तीर्थस्य कृता ।।

[भा.२६६९] किह तेन न होइ कयं वेयावच्चं दसविहं जेण ।
तस्स पओत्ता अनुकंपितो उ थेरो थिरसभावो ।।

वृ- कथं तेन दशविधं वैयावृत्यं न कृतं ? येन स्थविर आचार्यः स्थिरस्वभावोऽनुत्सुकस्तस्य दशविधस्य वैयावृत्यप्रयोक्ता ऽनुकम्पितोऽनुगृहीतस्तत्करणे कृतं तेन दशविधमपि वैयावृत्यं, तत्प्ररुपणावास्तदधीनत्वादिति भावः, । तदेवमव्यवच्छेदोऽपि भावितोऽधुना अतिसेसा पञ्च आयरिए-

[भा.२६७०] अन्नेवि अत्थि भणिया, अतिसेसा पंच होंति आयरिए ।
जो अन्नस्स न कीरइ, न यातिचारो असतिसेसो ।।

वृ- आतिशेषाः पञ्च भवन्त्याचार्ये इत्यनेन वचनेनान्येऽप्यतिशयाः पञ्चार्थतो भणितास्सन्ति यः पञ्चानामन्यतरोऽप्यन्यस्यानाचार्यस्य न क्रियते, न च शेषेऽनाचार्ये पञ्चानामेकस्मिन्नप्यतिशये असति अक्रियमाणेऽतीचारः, । आचार्यस्य तु पञ्चाप्यतिशयाः कर्तव्याः । पञ्चानामेकतरस्मिन्नप्यतिशयेऽसति अक्रियमाणे अतीचारः । तानेव पञ्चातिशयानाह-

[भा.२६७१] भत्ते पाने धुव्वण पसंसणा हत्थपाय सोए य ।
आयरिए अतिसेसा अनातिसेसा अनायरिए ।।

वृ- उत्कृष्टं भक्तमुत्कृष्टं पानं, मलिनोपधिधावनं, प्रशंसनं हस्तपादशौचं च । एते पञ्चातिशेषा अतिशया आचार्ये, त्वनतिशया अनाचार्ये एते न कर्तव्या इति भावः । सम्प्रति भक्तादिव्याख्या-

[भा.२६७२] कालसहावानुमयं भत्तं पानं च अच्चितं खेत्ते ।
मलिन मलिना य जाया, चोलादी तस्स धोवंति ।।

वृ- यत्कालानुमतं स्वभावानुमतं च कालानुकूलं स्वभावानुकूलं चेत्यर्थः, । भक्तमाचार्यस्य प्रदेयमिति प्रथमोऽतिशयः, तथा यत् यत्र क्षेत्रेऽर्चितं पानीयं तत्सम्पाद्यमाचार्यस्येति द्वितीयोऽतिशयः, । तथा चोलादीनि मलिनमलिनानि जातानि तस्याचार्यस्य प्रक्षाल्यन्ते, । किं कारणमिति चेदत आह-

[भा.२६७३] परवादीण अगम्मो नेव अवण्णं करिंति सुयसेहा ।
जह अकहितो वि नज्जइ, एस गणी उज्जपरिहीनो ।।

वृ- यथा परवादिनामगम्यो भवति, यथा च शुचिशैक्षाश्रोक्षशिष्याः अवज्ञां न कुर्वते, यथा चाकथितोऽपि ज्ञायते एष गणी आचार्यस्तथानुद्यमसौन्दर्य तत्परिहीनो मलिनमलिनवस्त्रस्तत्र प्रक्षालनेन कर्तव्यो, न च विभूषादोषप्रसक्तिर्यत आह-

[भा.२६७४] जह उवगरणं सुज्झइ, परिहारमाणो अमुच्छितो साहू ।
तव खलु विसुद्धभावो, विसुद्धवासान परिभोगो ।।

वृ- यथा साधुरुपकरणं धर्मोपकरणममूर्च्छितः सन् परिहरन् परिभोगयन् शुद्धयते न परिग्रहदोषेण लिप्यते अमूर्च्छितत्वात्तथाचार्योऽपि विशुद्धवाससां परिभोगे विशुद्धभावः सन् शुद्ध्यतीति एष तृतीयोऽतिशयः ।। सम्प्रति प्रशंसनमाह-

[भा.२६७५] गंभीरो मद्दवितो अब्भुवगय वच्छलो सिवो सोमो ।
विच्छिन्नकुलुप्पन्नो, दाया कयन्नुतो सुयवं ।।

[भा.२६७६] खंतादिगुणोवेओ, पहाणनाणतवसंजमावसहो ।
एमाइ संतगुणगवि कत्थणं संसणातिसये ।।

वृ- गंभीरोऽपरश्रावी, मार्दवितो मार्दवोपेतस्तथाभ्युपगतस्य शिष्यस्य प्रातीच्छिकस्य वत्सलो यथोचितवात्सल्यकारी, तथा शिवोऽनुपद्रवस्तथा सोमः शांताकृतिः तथा विस्तीर्णकुलोत्पन्नो दाता कृतज्ञः श्रुतवान् तथा क्षान्त्यादिगुणोपेतः ज्ञानप्रधानतपः संयमानामावसथो गृहं एवमादीनां सतां गुरुणां गुणानां विकथनं श्लाघनमेव चतुर्थः प्रशंसनातिशयः । अधुना प्रशंसनस्य फलमाह-

[भा.२६७७] संतगुणकित्तणया अवण्णवादीन चेव पडिघातो ।
अविहोज्ज संसईणं पुच्छाभिगमे दुविहं लाभो ।।

वृ- सद्गुणोत्कीर्तनायां महती निर्जरा भवति । तथा सद्गुणकीर्तनाया अवर्णवादिनां प्रतिघातः कृतो भवति, अपिभवेदयं महान् गुणो गुणो गुणवन्तमाचार्य श्रुत्वा बहूनां राजेश्वरतलवरप्रभृतीनां संशयिनां पृच्छार्थमभिगमो भवति । पृच्छानिमित्तमाचार्यसमीपमागच्छन्ति आगताश्च धर्मं श्रुत्वा अगारधर्ममनगारधर्मं वा प्रतिपद्यन्ते इति द्विविधो लाभः पञ्चमातिशयप्रतिपादनार्थमाह-

[भा.२६७८] करचरण नयन दसणाइ धावणं पंचमो उ अतिसेसो ।
आयरियस्स उ सययं, कायव्वो होति नियमेन ।।

वृ- करचरणनयनदशनादि प्रक्षालनं पञ्चमोऽतिशयः । सततमाचार्यस्य नियमेन भवति कर्तव्यः । अत्र पर आह-

[भा.२६७९] मुहनयनदंतपायादि धोवणे को गुणोत्ति ते बुद्धी ।
अग्गि मतिवाणिपडुया तो होइ अनोतप्पया चेव ।।

वृ- मुखनयनदंतपादादिधोवने को गुण इति एषा ते बुद्धिः स्यात् । अत्रोच्यते-मुखदन्तादिप्रक्षालनेऽग्निपटुता जाठराग्निप्राबल्यं, मतपिटुतावाक्पटुता च नयनपादादि प्रक्षालने अनोतप्पया अलज्जनीयशरीरता भवति । एष गुणो मुखादिप्रक्षालेन । एते पञ्चातिशयाः । पञ्च उपलक्षणमन्यदपि यथायोगमाचार्यस्य कर्तव्यम् ।। तथा चाह-

[भा.२६८०] असढस्स जेन जोगाण संधणं जह उ होइ थेरस्स ।
तं तं करेंति तस्स उ जह से जोगा न हायंति ।।

वृ- यथा स्थविरस्याशठस्य सतो येन येन क्रियमाणेन योगानां सन्धानं भवति तत्तस्याचार्यस्य साधवः कुर्वन्ति, । तथा से तस्याचार्यस्य योगा न हीयन्ते न हानिमुपगच्छन्ति ।।

[भा.२६८१] एए पुन अतिसेसे उवजीवेयावि कोवि दढदेहो ।
निदरिसणं एत्थ भवे अज्जसमुद्दा य मंगू अ ।।

वृ- एतान् पुनरतिशयान् कोऽप्याचार्यो दृढदेहः सन् नोपजीवति यस्तु दृढदेहः सोऽशठो भूत्वा उपजीवति न तु तैरतिशयैर्गर्वं करोति हर्षं वा मनसि मन्यते, त्र निदर्शनं भवन्त्यार्यसमुद्रा मंग्वाचार्याश्च ।

[भा.२६८२] अज्जसमुद्दा दुब्बलकिति(त)कम्मा तिन्नि तस्स कीरंति ।
सुतत्थ पोरिसि समुट्ठियाण तइयं तु चरमाए ।।

वृ- आर्यसमुद्राः सूरयो दुर्बलाः दुर्बलशरीरास्ततस्तेऽतिशयानुपजीवितवन्तोऽनुपजीवने योगसन्धानकरणाशक्तेस्तथा च तस्य प्रतिदिवसं त्रीणि कृतकर्माणि विश्रामणारूपाणि क्रियन्ते । तद्यथा-

द्वे सूत्रार्थपौरुषी समुपस्थितानां तृतीयं कर्म चरमायां पौरुष्यामियमत्र भावना-सूत्रपौरुषी समाप्त्यनन्तरं यावत् निषद्या क्रियते तावत् प्रथमा विश्रामणा द्वितीयार्थपौरुषी समाप्त्यनन्तरं तृतीया चरमपौरुषी पर्यन्ते कालप्रतिक्रमणानन्तरम् ।।

**[भा.२६८३]** सड्ढकुलेसु य तेसिं दोच्चंगादी उ वीसु घेप्पंति ।
मंगुस्स न किइकम्मं न य वीसुं धीप्पए किंचि ।।

**वृ-** श्राद्धकुलेषु भक्तेषु तेषामाचार्यसमुद्राणामाचार्याणां योग्यानि कूरादीनि द्वितीयाङ्गादौ मात्रकादौ विष्वक् गृह्यन्ते । आर्यमङ्गोः पुनराचार्यस्य न कृतिकर्म क्रियते नापि तद्योग्यं पौद्गलादि किञ्चित् विष्वक् मात्रके गृह्यते । किंतु यदपि श्राद्धकुलेष्वतिभक्तेषूत्कृष्टं लभ्यते । तदपि गृहीत्वा ज्ञातोऽपतद्गृहे क्षिप्यते । विष्वगानीतमपि न भुङ्क्ते तौ च द्वावप्याचार्यौ विहरन्तावन्यदा सोपारके गतौ । तत्र च द्वौ श्रावकावेकः शाकटिकोऽपरो वैकटिको वैकटिको नाम सुरासन्धानकारी । तौ च द्वावपि श्रावकावाचार्यसमुद्राचार्याणां योग्यमतिशायि पौद्गलिकप्रभृतिकं विष्वङ्मात्रके गृह्यमाणमार्यमङ्गूनां पुनर्योग्यमेकस्मिन्नेव पतद्गृहे गृह्यमाणं पश्यतो दृष्ट्वाचार्यमङ्गुसमीपमागच्छतः ।

**[भा.२६८४]** बेंति ततो नं सड्ढा तुज्झ व वीसुं न घेप्पए कीस ।
ततो बेंति अज्जमंगू तुब्भे च्चिय इत्थ दिट्ठंतो ।।

**वृ-** ततः समीपागमनानन्तरं तौ श्रावकौ ब्रुवाते किमार्यसमुद्राणामिव युष्माकमपि विष्वक् प्रायोग्यं गृह्यते । ततो ब्रुवन्त्यार्यमङ्गव आचार्या अत्रार्थे यूयमेव दृष्टान्ताः । कथमित्याह-

**[भा.२६८५]** जा भंडि दुब्बला ऊ तुं तुज्झे बंधहा पयत्तेण ।
नवि बंधह बलिया ऊ दुब्बलबलिए व कुंडीवि ।।

**वृ-** अहो शाकटिक ! या तव भण्डी गन्त्री दुर्बला तां यूयं प्रयत्नेन बध्नीश ! ततः सा वहति पुनरबध्या वाह्यते तदा विनश्यति, । या पुनर्बलिका तां नैव बध्नीय बन्धनव्यतिरेकेणापि तस्या वहनात् वैकटिकां प्रतिब्रुवते-भो वैकटिक ! या तव कुण्डी दुर्बला तां वंशदलैर्बध्वा तत्र मद्यं संधत्थ । या तु बलिका कुण्डी तस्या बन्धमकृत्वापि तत्र सन्धानं कुरुथ । दुब्बलबलिए य कुंडी वि एवं कुंड्यपि दुर्बला बलिका च भण्डीवत् वक्तव्या उक्तो दृष्टान्तः । साम्प्रतमुपनयमाह ।।

**[भा.२६८६]** एवं अज्जसमुद्दा दुब्बलभंडीवा संठवणयाए ।
धारंति सरीरं तू बलि भंडी सरिसगा वयं तु ।।

**वृ-** एवमुक्तेन प्रकारेण दुर्बलभंडी दुर्बलगन्त्रीवात्मीयं शरीरं संस्थापनया धारयन्ति नेतरथा ततस्तेषां योग्यं विष्वक् मात्रके गृह्यते, वयं तु बलिकभण्डीसदृशास्ततो न शरीरस्य संस्थापनापेक्षामाह-

**[भा.२६८७]** निप्पडिकम्मो वि अहं जोगाण तरामि संधणं काउं ।
नेच्छामि य बितियंगे वीसुं इति बेंति ते मंगू ।।

**वृ-** निःप्रतिकर्मापि योगानां सन्धानं कर्तुं शक्नोमि ततो नेच्छामि द्वितीयेऽङ्गमात्रके विष्वक् गृह्यमाणमिति ते मङ्ग्वाचार्या ब्रुवते ।।

**[भा.२६८८]** न तरंति तेन विना अज्जसमुद्दा उ तेन वीसं तु ।
इय अतिसेसायरिए सेसा पंतेन लाटेंति ।।

**वृ-** आर्यसमुद्राः पुनराचार्यास्तेन विष्वक् प्रायोग्यग्रहणेन विना योगानां सन्धानं कर्तुं न शक्नुवन्ति

तेन तत्प्रायोग्यं विष्वक् गृह्यते । एवं शेषाणामपि इत्यस्मात् कारणात् अतिशेषा अतिशया आचार्ये भवन्ति, शेषाः पुनः साधवः प्रान्तेन-लाटयन्ति । आत्मानं यापयन्ति । गतस्तृतीयोऽतिशयः ।। सम्प्रति चतुर्थं पञ्चमं चातिशयं अंतो उवसयस्स एगरायं वा दुरायं वा इत्यादि लक्षणं विभावयिषुरिदमाह-

[भा.२६८९] अंतो वहिं च विसुं वसमाणो मासियं तु भिक्खुस्स ।
संजम आयविराधन सुत्ते असुभोदओ होइ ।।

वृ- यदि भिक्षुरुपाश्रयस्यान्तरपवरके विष्वक् वसति, यदि वा बहिरुपाश्रयात् शून्यगृहादिषु तदा तस्य प्रायश्चित्तं मासिकं लघु न केवलमिदं प्रायश्चित्तं किन्तु दोषाश्च । तानेवाह-अन्तर्वहिर्वा शून्ये स्थाने वसतोऽशुभोदयोऽशुभकर्मोदयो भवति । तदभावाद्यात्मविराधना संयमविराधना च । एतामेव भावयति-

[भा.२६९०] तब्भावुवयोगेणं रहिए कम्मादि संजमे भेदो ।
मेरावलंबिया मे वेहानिसमादि निव्वेदो ।।

वृ- तस्य भावस्तद्भावः । पुंवेद इत्यर्थः । तस्मिन्नुपयोगस्तद्भावोपयोगेन विजने स्थाने वर्तमानः सहायरहितो हस्तकर्मादि कुर्यात् । एवं संयमे संयमस्य भेदो विराधना । तथा कोऽप्यतिप्रबलपुंवेदोदयपीडित एवं चिन्तयेत् । यथा-मया मर्यादा सकलजनसमक्षं गुरुपादसमीपेऽवलम्बिता; । सम्प्रति चाहमतिपीडित आसितुं न शक्नोमि ततो निर्वेदात् वैहानसमुक्तलम्बनमादिशब्दादन्यद्वा आत्मघातादिकमाचरेत् । एषात्मविराधना तस्माद्बहिरन्तर्वा एकाकिना न स्थातव्यम्, आह यदि संयमान्निर्गतभावस्तस्तस्य सहाया अपि किं करिष्यन्ति तत आह-

[भा.२६९१] जइवि य निग्गयभावो तहवि य रक्खिज्जए स अन्नेहिं ।
वंसकडिल्लच्छिन्नो वि वेनुतो पावए न महिं ।।

वृ- यद्यपि च स संयमान्निर्गतभावस्तथापि सोऽन्यैर्हस्तकर्मादि वैहानसादि वा समाचरन् रक्षते । अत्रैवार्थे प्रतिवस्तूपमामाह-वंसकडिले वंश-गहने च्छिन्नोऽपि वेणुको वंशो महीं न प्राप्नोति । अन्यैरन्यैर्वंशैरपान्तराले स्खलितत्वात्, । एवं संयमभावान्निर्गतोऽपि शेषसाधुभिः सर्वथा पतन् रक्ष्यते तदेतद्भिक्षोरुक्तमिदानीं गणावच्छेदकाचार्ययोराह ।।

[भा.२६९२] वीसु वसंते दप्पा गणि आयरिए य होंति एमेव ।
सुत्तं पुन कारणियं भिक्खुस्सवि कारणेणुन्ना ।।

वृ- विष्वग् दर्पात् कारणमन्तरेण गणिनि गणावच्छेदके आचार्ये च एवमेव भिक्षोरिव च प्रायश्चित्तं संयमात्मविराधने च भवतः, यद्येव तर्हि सूत्रमनवकाशमत आह-सूत्रं पुनः कारणिकं कारणमधिकृत्य प्रवृत्तं, ततो नानवकाशं, न केवलं गणावच्छेदकाचार्ययोः कारणे वसतेरन्तर्बहिर्वा वसनमनुज्ञातं किन्तु भिक्षोरपि कारणे बहिरन्तर्वा वसनस्यानुज्ञा । अथ किं तत्कारणं यदधिकृत्य सूत्रं प्रवृत्तमत आह-

[भा.२६९३] विज्जाणं परिवाडी पव्वे पव्वे य देंति आयरिया ।
मासद्धमासियाणं पव्वं पुन होइ मज्झं तु ।।

वृ- आचार्याः पर्वणि पर्वणि विद्यानां परिपाटीर्ददति, । विद्याः परावर्तन्ते इति भावः । अथ पर्व किमुच्यते तत आह-मासार्धमासयोर्मध्यं नः पर्व भवति, । एतदेवाह-

[भा.२६९४] पक्खस्स अठमी खलु मासस्स य पक्खिअं मुणेयव्वं ।
अन्नंपि होइ पव्वं उवरागो चंदसूराणं ।।

वृ- अर्धमासस्य पक्षात्मकस्य मध्यमष्टमी सा खलु पर्व, । मासस्य मध्यं पाक्षिकं पक्षेण निर्वृत्तं ज्ञातव्यं, । तच्च कृष्णचतुर्दशीरूपमवसातव्यं, । तत्र प्रायो विद्यासाधनोपचारभावता बहुलादिका मासा इति वचनाच्च न केवलमेतदेव पर्व किन्त्वन्यदपि पर्व भवति, । यत्रोपरागो ग्रहणं चन्द्रसूर्ययोः एतेषु च पर्वसु विद्यासाधनप्रवृत्तेर्यद्येवं तत एकरात्रग्रहणं, । तत आह-

[भा.२६९५] चाउद्दसी गहो होइ कोइ अहवावि सोलसिग्गहणं ।
वत्तं तु अनज्जंते होइ दुरायं तिरायं वा ।।

वृ- कोपि विद्याया ग्रहश्चतुर्दश्यां भवति, अथवा षोडश्यां शुक्लपक्षप्रतिपदि विद्याया ग्रहणं । किमुक्तं भवति कोऽपि विद्याया ग्रहश्चतुर्दश्यां कृतः कोऽपि प्रतिपदि क्रियते इत्येवं त्रिरात्रवसनमथवैकेन दिवसेन व्यक्तमज्ञायमाने विद्याग्रहणाय भवति द्विरात्रं त्रिरात्रं वा विष्वग् वसनमिति यदुक्तं सूत्रे-तिरायं वेति ।

[भा.२६९६] वा सद्देण चिरं पी महपानादिसु सो उ अच्छेज्जा ।
उयविए भरहम्मी जह राया चक्कवट्टादी ।।

वृ- वाशब्देनेदं सूच्यते चिरमपि कालं महाप्राणादिषु ध्यानेषु स तिष्ठेत्, स हि यावन्नाद्यापि विशिष्टलाभो भवति, तावन्न निवर्त्तते ध्यानादत्रैव दृष्टान्तमाह-यथा राजा चक्रवर्त्यादिरादिशब्दाद्वासुदेवपरिग्रहः उयविए प्रसाधिते अर्धभरते वा निवर्तते, यावदलब्ध्यादिलाभो न भवतीति, ।

अथ महाप्राणध्याने कः कियन्तं कालमुत्कर्षतस्तिष्ठतीति प्रतिपादनार्थमाह-

[भा.२६९७] बारसवासा भरहाहिवस्स, छच्चेव वासुदेवाणं ।
तिन्निय मंडलियस्स छम्मासा पागयजनस्स ।।

वृ- महाप्राणध्यानमुत्कर्षतो भरताधिपस्य चक्रवर्तिनो द्वादशवर्षाणि यावद्भवति, षट् वर्षाणि यावद्वासुदेवानां बलदेवानामित्यर्थः । त्रीणि वर्षाणि माण्डलिकस्य षण्मासान् यावत् प्राकृतजनस्य ।।

[भा.२६९८] जे जत्थ अहिगया खलु अस्सादद्धक्खमाइया रन्ना ।
तेसिं भरणंसि ऊने भुंजति भोए अदंडादी ।।

वृ- ये अस्सादद्धक्खमाइया महाश्वपत्यादयो यत्राश्वभरादौ राज्ञा अधिकृता व्यापारिताः स तेषामश्वादीनां भरणे ऊने सति भोगान् अदंड्यक्षतिदण्डादिरहितान् भुङ्क्ते न तस्य तथा भोगान् भुञ्जानस्य दण्डोऽपराधो वाऽप्यश्वादिभरणाभावात् एष दृष्टान्त उक्तः । सम्प्रति दार्ष्टान्तिकयोजनामाह-

[भा.२६९९] इयपुव्वगयाधीते बाहु सनामेव तं मिणेपिच्छ ।
पिय इत्ति व अत्थपए मिणइत्ति व दोवि अविरुद्धा ।।

वृ- इत्येवममुना दृष्टान्तप्रकारेण पूर्वगते अधीते बाहु स नामे भद्रबाहुरिव पूर्वगतं पश्चान्महापानध्यानबलेन मिनोति निः-शेषमात्मेच्छया तावन्ननिवर्तते ततश्चिरकालमपि वसति, तस्य न कोऽप्यपराधः प्रायश्चित्तदण्डो वा सम्प्रति महापानशब्दस्य व्युत्पत्तिमाह-पिवतीति वा मिनोतीति वेत द्वावपि शब्दावेतावविरूद्धौ तत्वत एकार्थावित्यर्थः । तत एवं व्युत्पत्तिः-पिबति अर्थपदानि यत्रस्थित-स्तत्पानं, महच्च तत्पानं च महापानमिति ।।

[भा.२७००] वा अंतो गणी व गणो विक्खेवो मा हु होज्ज अग्गहणं ।
वसते हि परिखित्तो उ अत्थेन कारणे तेहिं ।।

वृ- अन्तर्गणी गणो वा वाशब्दादेवं बहिरपि । इयमत्र भावना-यद्याचार्यो वसतेरन्तस्ततो गणी

बहिर्वसति, गणो अंतस्तत आचार्यो बहिः । किं कारणमाचार्यो गणश्च विष्वक् वसति तत आह- 'विक्खेवो' इत्यादि, आचार्यस्य विद्यादिगुणयतो व्याक्षेपो माभूत्, अग्रहणमिति अयोग्यानां कर्णाभ्यटनतो विद्यादीनां संग्रहणं भूयात् । एताभ्यां कारणाभ्यां वृषभैः परिक्षिप्तोऽन्तर्बहिर्वा विष्वग् आचार्यो वसति;

**मू. (१५०)** *गणावच्छेइयस्स नं गणंसि दो अइसेसा पन्नत्ता, तं जहागणावच्छेइए अंतो उवस्सयस्स एगरायं वा दुरायं वा वसमाणे नो अइक्कमइ, गणावच्छेइए बाहिं उवस्सयस्स एगरायं वा दुरायं वा वसमाणे नो अइक्कमइ ।*

**वृ-** गणावच्छेदकस्य गणे गणमध्ये द्वावतिशयौ भवतस्तद्यथा गणावच्छेदक उपाश्रयस्यान्त एकरात्रं वा वसन् नातिक्रामति नातीचारभाग् भवति, । तथा गणावच्छेदको बहिरुपाश्रयादेकरात्रं वा वसन् नातिक्रामति ।एतौ द्वावप्यतिशयौ सूत्रोक्तौ गणावच्छेदकस्य तस्य द्रष्टव्यौ यो नियमादाचार्यो भविष्यति, यः पुनर्गणावच्छेदकत्वे वर्तमान आचार्यपदस्यानर्हस्तस्यैतौ द्वावप्यतिशयौ न कल्पेते,

**[भा.२७०१]** पंचेते अतिसेसा आयरिए होंति दोन्नि उ गणस्स ।
भिक्खुस्स कारणंमि उ अतिसेसा पचंवी भणिया ।।

**वृ-** एते अनन्तरसूत्रोदिताः पञ्चातिशया आचार्ये भवन्ति ।द्वौ गणिनो गणावच्छेदकस्य, भिक्षोः पुनः कारणेपंचाप्यतिशया भणिताः । एतदेवाह-

**[भा.२७०२]** जे सुत्ते अतिसेसा, आयरि अत्थतो व जे भणिया ।
ते कज्जे जयसेवी, भिक्खूवि न बाउसी भवति ।।

**वृ-** ये अतिशेषाः आचार्ये आचार्यसूत्रे साक्षादभिहिता, ये चान्ये पञ्चार्थतो भणितास्तान् दशाप्यतिशयान् कार्ये कारणे समागते कज्रंति वा कारणंति वा एगठमितिवचनात् । जयसेवीति यतनया सेवमानो भिक्षुरपि न बकुशी भवति, । न बकुशत्वदोषेण गृह्यते इति भावः । किं तत्कार्यमत आह-

**[भा.२७०३]** बाला सहमतरंतं सुइवादिपप्प इड्ढिवुड्ढं वा ।
दसविभइयतिसेसा भिक्खुस्स जहक्कमं कज्जे ।।

**वृ-** बालमसहमतरन्तं ग्लानं शुचिवादिनं ऋद्धिवृद्धं वा प्राप्य दशाप्यतिशेषा भिक्षोः कार्ये समापतिते यथाक्रमे भाजिता विकल्पिता भवन्तीति भावः ।तथा हि बालस्य हस्तपादादयः प्रक्षाल्यन्ते, अन्येतिशया यथासंभवं क्रियन्ते । तस्य असहो नामासमर्थस्तस्यापि यथाप्रयोगमतिशयाः क्रियन्त यथा ऽतरन् ग्लानः शुचिवादी शौचप्रधानः शिष्यः ऋद्धिवृद्धो राजादि प्रव्रजित इत्येषामपि दशाप्यतिशा यथा योगं विधेयाः-

**मू. (१५१)** *से गामंसि वा जाव रायहाणिंसि वा एगवगडाए एगदुवाराए एगनिक्खमणपवेसाए नो कप्पइ बहूणं अगडसुयाणं एगयओ वत्थए । अत्थि याइण्हं केइ आयारपकप्पधरे, नत्थि याइण्हं केइ छेए वा परिहारे वा; नत्थि याइण्हं केइ आयारकप्पधरे से संतरा छेए वा परिहारे वा ।*

**[भा.२७०४]** कप्पति गणिणो वासो बहिया एगस्स अतिपसंगेन ।
मा अगडसुया वीसुं वसेज्ज अह सुत्तसंबंधो ।।

**वृ-** कल्पते गणिनो गणावच्छेदिनो वासो बहिर्वहिरेकस्यैकाकिनः इति श्रुत्वा मा अतिप्रसङ्गेनाकृतश्रुता अपि विष्वक् वसेयुस्ततस्तेषां विष्वकुवासप्रतिषेधार्थमिदं सूत्रमित्येष सूत्रसम्बन्धः ।अनेन सम्बन्धेनायातस्यास्य व्याख्या सेशब्दोऽथ शब्दार्थः ग्रामे वा नगरे वा यावत्करणात्

खेडंसि वा कव्वडंसि वा इत्यादिपरिग्रहः । राजधान्यां वा एगवगडाए एगो वगडः परिक्षेपो यस्या सा एकवगडा तस्यां तथा एकस्मिन् प्रदेशे निष्क्रमणप्रवेशो यस्याः सा एकनिष्क्रमणप्रवेशे तस्यां न कल्पते बहूनामकृतश्रुतानामगीतार्थानामित्यर्थः । एकत एवास्यां वसतौ वस्तुं अस्ति चात्र एतेषां मध्ये आचारप्रकल्पधरस्तर्हि नास्त्यमीषां कश्चिच्छेदः परिहारो वा शब्दादन्यदपि प्रायश्चित्तमथ नास्ति कश्चिदत्र एतेषां मध्ये आचारप्रकल्पधरस्तर्हि से तेषामन्तरा तस्मात्स्थानादिप्रतिक्रमणालक्षणाच्छेदः परिहारो वा ।

[भा.२७०५] एगंमि वी असंत न कप्पती कप्पती य संतंमि ।
उउबद्धे वासासु य गीयत्थो देसिए चेव ।।

वृ- एतेषां बहूनामकृतश्रुतानामेकतो वसतामेकस्मिन्नपि गीतार्थेऽसत्यविद्यमाने ऋतुबद्धे वर्षासु च वस्तुं न कल्पते । यदि वसति तत् ऋतुबद्धे काले प्रायश्चित्तं मासलघु वर्षाकाले चतुर्लघुकं । अथैकोऽप्यस्ति गीतार्थस्तर्हि तस्मिन् ऋतुबद्धे वर्षासु च वस्तुं कल्पते, न तत्र प्रायश्चित्तमिति भावः । किं कारणं गीतार्थेन सह संवसतां न प्रायश्चित्तमत आह-गीतार्थो देशक एव भवति । इयमत्र भावना-यथा केचित् पुरुषा अटव्यां विप्रनष्टाः, केनचिद्देशकेन दृष्टास्ते भणिता मा इतो व्रजन्तोऽटवीं प्रविशताहं भवतो निस्तारयामि, । ततस्तेन ऋजुकेन पथा नगरं प्रापिता, एवं गीतार्थोऽपि मोक्षपथविप्रनष्टानां मोक्षपथप्रदर्शक इति तेन सह संवसतां सतां कालद्वयेऽपि नास्ति प्रायश्चित्तमिति ।।

[भा.२७०६] किह पुन होज्ज बहुनामगडसुयाणं तु एगतो वासो ।
होज्जा हि कक्खडंमि खेत्ते अरसादि चइयाणं ।।

वृ- कथं केन कारणेन पुनर्बहूनामकृतश्रुतानामेकत्र वासो भवेत्, । सूरिराह-कर्कश क्षेत्रे अरसादित्याजितानां भवेदेकत्र वासः । तथाहि-ते साधवो महति गच्छे वर्तमाना नगरे रूक्षैरसविरसादिभिराहारै र्निर्भर्त्सिताः सम्प्रधारयन्ति कियच्चिरं वयं रुक्षाहारैर्योगं संस्तरणं कर्तुं शक्नुमस्तस्माद्गच्छाम एवं चिन्तयित्वा गच्छादपक्रामन्ति । एवमेतेषामकृतश्रुतानां बहूनामेकत्र वासः-

[भा.२७०७] चइयाण य सामत्थं संघयणजुयाणमाउलाणं पि ।
उउवासे लहुलहुगा सुत्तमगीयाणमानादी ।।

वृ- अरसविरसादिभिराहारैस्त्याजितानामाकुलानां संहननयुतानामपि अपिशब्दो भिन्नक्रमत्वादत्र योजित एवं सामत्थं पर्यालोचनं भवति । यथा कियन्तं कालं वयं रुक्षाहाराः स्थास्यामस्तस्मादपक्रमामो गच्छादिति, एवं चिन्तयित्वा यदि ऋतुबद्धे काले वसन्ति तदा प्रायश्चित्तं मासलघु वर्षाकाले चतुर्लघुकं । एतेनागीतार्थानां विषयेऽधिकृतं सूत्रं न केवलमधिकृतं प्रायश्चित्तं किन्त्वाज्ञादयश्च तानेव मिथ्यात्वादीन् दोषान् द्वारगाथया संजिघृक्षुराह-

[भा.२७०८] मिच्छत्तसोहिसागारियाइ गेलन्ने अहव कालगए ।
अद्धाणओमसंभम भए य रुद्धे य उसरिए ।।

वृ- तेषामगीतार्थानां मतिभेदादिना मिथ्यात्वं स्यात्, तथा शोधिस्तैर्न ज्ञायते, तथा स सागारिकायां वसतौ ये दोषाः परिहार्यास्तेषामपरिज्ञानं अथवा ग्लानत्वे अथवा कालगते अध्वनि मार्गे अवमे अवमौदर्ये अग्न्यादिसंभ्रमे बोधिकम्लेच्छस्तेन भये अकालवर्षेण रुद्धे तथा अपसृते पथि गच्छतां कस्मिंश्चित् मन्दगतित्वात् स्फिटिते या यतना तां न जानन्ति । एष द्वारगाथासंक्षेपार्थः ।। साम्प्रतमेनामेव विवरीषुः-

[भा.२७०९] मतिभेया १ पुव्वोग्गह २ संसग्गीए य ३ अभिनिवेसेनं ४ ।

गोविंदि य ५ जमाली १ सावग २ तवन्निए ३ गोठे ।।

वृ- कस्यापि मतिभेदात् मिथ्यात्वं स्यात्, कस्यापि पूर्वव्युद्ग्राहात् कस्यापि संसर्ग्या कस्यचिदभिनिवेशेन, । अत्रार्थे निदर्शनान्याह-गोविंदे य इत्यादि, अत्र गोविन्दजमालिशब्दयोर्व्य-त्ययेनोपन्यासो गाथानुलोम्यतः ... गोविन्दश्रावकः तवनियः श्रावकभिक्षुर्गोष्टे गोष्टामाहिल एतानि यथाक्रमं निदर्शनानि तथा चाह-

[भा.२७१०] मतिभेएण जमाली, पुव्वग्गहिएण होइ गोविंदो ।
संसग्गि सावग भिक्खू गोठामाहिलअभिनिवेसे ।।

वृ- मतिभेदेन मिथ्याद्दष्टिर्जायते यथा जमालिः पूर्वगृहीतेन भवति मिथ्याद्दष्टिर्यथा गोविन्दः । संसर्ग्या यथा श्रावकभिक्षुरभिनिवेशेन यथा गोष्टामाहिल एतानि च निदर्शनानि सुप्रतीतानीति न कथ्यन्ते ।।

गतं मिथ्त्वद्वारमधुना शोधिद्वारं सागारिकं द्वारं चाह-

[भा.२७११] आवन्नमणावण्णे सोहिं न वियंति ऊनमहियं वा ।
जे य वसहि य दोसा परिहरति न ते अयानंतो ।।

वृ- अकृतश्रुता आलोचिते परेण एष प्रायश्चित्तं प्राप्तो न वेति न जानन्ति अजानन्तश्चापन्नेऽनापन्ने वा प्रायश्चित्तं शोधिं नैव ददति यदि वा ऊनामधिकां वा ददाति । गतं शोधिद्वारमधुना सागारिकाद्वारमाह-ये च वसतौ दोषास्तान जानन्नकृतश्रुतो न परिहरति सम्प्रति ग्लानत्वादिद्वारचतुष्टमाह-

[भा.२७१२] गेलन्ने वोच्चच्छं करेंति नयविधिं वियालंति ।
अद्धाणमडंति सया जयाण न याणे व उमेवि ।।

वृ- ग्लानत्वेऽज्ञानतो विपर्यासं कुर्वन्ति अनागाढे आगाढकृत्यमागाढे नागाढकृत्यमुभयत्रापि प्रायश्चित्तं चतुर्गुरुकं । गतं ग्लानद्वारमथ कालगतद्वारमा-न च मृतस्य विधिं बन्धनच्छेदनादिकं परिष्ठापनाविधिं वा जानन्ति मृतस्योपधिरुपहत इति त्यज्यते । सम्प्रत्यध्वद्वारमाह-अध्वानं पन्थानमजानतः सदा सर्वकालं रात्रौ दिवसे वाऽटन्ति न च कारणतो रात्रावपि गमने यतनां जानन्ति । एवमवमेऽपि अवमौदर्येपि वक्तव्यं । तत्रापि यतनां न जानन्तीति भावः संभ्रमादिद्वारकदम्बकमाह-

[भा.२७१३] अगनादिसंभमेसु य बोहिगमेच्छादिएसु य भएसु ।
रायदुट्ठादीसु य विगहगाजयण अयानंता ।।

वृ- अग्न्यादिसंभमेसु तथा बोधिकास्तेना म्लेच्छाः प्रतीता आदिशब्दात्परचक्रादिपरिग्रहः । तदादिकेषु राजद्विष्टादिषु च भयेषु राजद्विष्टं राजप्रद्वेषः । आदिशब्दादशिवादिपरिग्रहस्तथा भिक्षाचर्यां गतेऽकाल-वर्षतो नदीपूरेणावरुद्धे पथि सह व्रजतां मन्दगतित्वादपसृते यतनामजानन्तः संयमात्मविराधका भवति ।

[भा.२७१४] संभम नदि रुद्धस्स वि उन्निक्खंतस्स अहव फिडियस्स ।
उसरियसहायस्स व छड्डेउ इहिं उवहतोत्ति ।।

वृ- अग्न्यादिसंभ्रमवशादेकाकिनस्तथा नदीनिरुद्धस्य उन्निःक्रान्तस्य अथवा मन्दगतित्वात्सार्थात् स्फिटितस्य अपसृतसहाया यस्य वा अपगतसहायस्य उपधिमुपहत इति कृत्वा च्छर्दयति त्यजत्ये-बहुश्रुतः ।

[भा.२७१५] एएण कारणेणं अगडसुयाणं बहूणवि न कप्पो ।
बितिए य रायदुट्ठे असिवोमगुरुण संदेसा ।।

वृ- एतेनानन्तरोदितेन कारणेनाकृतश्रुतानां बहूनामप्येकत्र वासो न कल्पे द्वितीयपदे पुनः कल्पते केत्याह-राजद्विष्टेऽवमौदर्ये गुरूणां सन्देशाच्च तथाहि राजप्रद्वेषवशादेकाकी आत्मद्वितीय आत्मतृतीयो वा भवेत् । एवमशिवेऽवमौदर्ये च भावनीयं । तथा गुरोः सन्देशवशादागाढकारणे गीतार्थनामभावे अगीतार्था अपि व्रजन्ति इति ।

**[भा.२७१६]** तह नाणादीनट्ठाए एएसिं गीतो दिज्ज एक्केक्को ।
असती एगागी वा फिडिया वा जाव न मिलंति ।।

वृ- तथा ज्ञानादीनामर्थाय ज्ञाननिमित्तं दर्शननिमित्तं चारित्रनिमित्तं वैयावृत्त्यकरणनिमित्तं वा चलितानां तेषां गीतार्थनामभावे अगीतार्था अपि गच्छन्ति । स्पर्धकपतौ वा कालगत आचार्यसमीपमथ सार्थात् मन्दगतितया स्फिटिता यावन्नाद्यापि मिलन्ति । तावदेकत्र बहूनामकृतश्रुतानामपि वासो न विरुध्यते ।।

**[भा.२७१७]** एगाहिगमद्धाणे अंतरा तत्थ होज्ज वाघातो ।
तेनच्छेज्जा तत्थ वि सेहस्स नियल्लगा बेंति ।।

**[भा.२७१८]** ततो वि पलाविज्जइ गीयत्थ बिइज्जगं तु दाऊणं ।
असतीए संगारो कीरइ अमुगत्थं मिलियव्वं ।।

वृ- कोऽपि साधुः गीतार्थाभावे आचार्येण क्वचित् प्रयोजने प्रेषितो भणितश्चाद्यैव प्रत्यागन्तव्यमिति एवमेकाहगमे एकदिनगमागमे अध्वनि अन्तरा अपान्तराले तत्र व्याघातो भवेत् । तेन कारणेन स यत्र प्रेषितस्तत्रैवासीत् न प्रत्यागच्छति, । अथ चैतस्य स्वज्ञातय उत्प्रव्राजननिमित्तमाचार्यसमीपं गता अपश्यन्तः सर्वतः समन्तात् निरीक्षन्ते, निरीक्षमाणाश्च तत्र गता यत्र स गतस्तिष्ठति । ततो येषां समीपे स प्रेषितस्तत्साधुभिर्ज्ञातं यथा शैक्षस्य निजकाः समायातास्तिष्ठन्ति । ते च ब्रुवते वयमात्मी-यमुत्प्रव्राजयिष्यामस्ततः स ततोऽपि स्थानात् द्वितीयं गीतार्थं दत्वा पलाय्यते दूरं, यत्र तन्निजकानां गतिविषयो नास्ति, असति गीतार्थे अगीतार्थोऽपि सहायो दीयते, तेषां च सङ्केतः क्रियते, यथाऽमुकप्रदेशे मिलितव्यमगीतार्थस्यापि सहायस्याभावे एकाक्यपि प्रेष्यति । तत्रापि सङ्केतः कर्तव्य एवमेकाकिनस्त्रि-प्रभृतीनां वा बहूनामृतुबद्धे वर्षासु च वासो भवति ।।

**[भा.२७१९]** रायदुट्ठादीसु व सव्वेसुं चेव होइ संगारो ।
ण्हाणादिवओसरणे, गीयत्थ बिइज्जगं मग्गे ।।

**[भा.२७२०]** असती एगागी उ निब्बंधे वा बहूण अगीयाणं ।
सामायारीकहणं मा बहिभावं निरुंभंति ।।

वृ- राजद्विष्टादिषु राजद्विष्टाशिवावमौदर्यसंभ्रमादिषु सर्वेषु भवति सङ्केतः कर्तव्यः, । तथा स्नानादिनिमित्तं जिनप्रतिमास्नानरथनिर्याणादिनिमित्तं समवसरणं भूयसामाचार्यादीनां मिलनं भविष्यतीति समवसरणे श्रुते कोऽप्याचार्यसमीपमागतय द्वितीयं गीतार्थं मार्गयति, । तस्य द्वितीयो गीतार्थो दातव्यः, असति अविद्यमाने गीतार्थे, अविद्यमानता च द्विधा । सदभावेनासदभावेन वा, सदभावो नाम सन्ति गीतार्थाः परं स्नानादिप्रयोजनव्यापृता, असदभावो मूलत एव गीतार्था न सन्ति तत्र सदभावेन असदभावेन वा अविद्यमाने गीतार्थे स प्रतिषेधनीयो यथा नास्ति द्वितीयो गीतार्थः । अथ स निर्बन्धं करोति तर्हि स एकाकी प्रेष्यते । यदि वा बहवोऽगीतार्थाः सहाया दीयन्ते बहूनामपि

स्नानदर्शनादिनिमित्तं गमनेच्छाभावात् । तेषां च बहूनामगीतार्थानां या पथि सामाचारी या च समवसरण प्रविष्टानां तस्याः कथनं अथ कस्मात्ते निर्बन्धेऽपि कृते मुत्कल्यन्ते, तत आह-मा निरुध्यमाना बहिर्भावं व्रजेयुरिति कृत्वा ।

**मू. (१५१)** *से गामंसि वा जाव रायहाणिंसि वा अभिनिव्वगडाए अभिनिदुवाराए अभिनिक्खमणपवेसणाए नो कप्पइ बहूणं वि अगडसुयाणं एगयओ वत्थए. अत्थि याइ णं केइ आयारपकप्पधरे जे तत्तिय रयणिं संवसइ नत्थि या इत्थ केइ छेए वा परिहारे वा; नत्थि या इत्थ केइ आयारपकप्पधरे, जे तत्तिय रयणिं संवसइ सव्वेसिं तेसिं तप्पत्तियं छेए वा परिहारे वा ।*

**[भा. २७२१]** अन्ने गामे वासं नाऊण निवारियं अगीयाणं ।
सग्गामे मा वीसुं वसेज्ज अगडा अयं लेसो ॥

**वृ-** अन्यस्मिन् ग्रामे अगीतार्थानां वासं निवारितं ज्ञात्वा मा स्वग्रामे विष्वगपि वासः कल्पते इति मन्यमाना अश्रुता अकृतश्रुताः स्वग्रामे विष्वक् वसेयुरतस्तस्मिन्निषेधार्थमिदं सूत्रमित्ययं सूत्र-सम्बन्धलेशः । अथवाऽयमन्यः सम्बन्धः-

**[भा. २७२२]** अगडसुया वाहिकया समागमो एस होइ दोण्हंपि ।
सच्छंद अनिस्सिया वा निस्सियजयणा विहं भणिया ॥

**वृ-** अनन्तरसूत्रेऽकृतश्रुता अधिकृता अस्मिन्नपि सूत्रे ते एवाकृतश्रुताः प्रोच्यन्ते, इत्येष द्वयोरपि सूत्रयोः समागमः सम्पर्कः । अथवाऽधस्तनानन्तरसूत्रे स्वच्छन्दतोऽनिश्रितो उक्ताः । अस्मिन् पुनर्गीतार्थनिश्रितानां यतना भणिता, । अनेन सम्बन्धेनायातस्यास्य व्याख्या- 'से गामंसि वा' इत्यादि पूर्ववत् । नवरमभिनिव्वगडाए अभि प्रत्येकं नियतो वगड परिक्षेपो यस्यां सा अभिनिव्वगडा तस्यां पृथक् परिक्षेपायामित्यर्थः । तथा अभि प्रत्येकं नियतं द्वारं यस्याः सा तथा तस्यां तथा अभि प्रत्येकं निष्क्रमणप्रवेशौ निष्क्रमणप्रवेशस्थानं यस्याः सा तथा तस्यां वसतौ बहूनामकृतश्रुतानामेकतो वस्तुमस्ति चात्र कश्चिदाचारप्रकल्पधरो यस्तृतीयां रजनीं गत्वा तैः समं वसति । तर्हि तेषामापन्नः समापन्नो नास्ति कश्चित् च्छेदः परिहारो वा, नास्ति कश्चिदाचारप्रकल्पधरो यस्तृतीयां रजनिं गत्वा तैः समं वसति तर्हि तेषां सर्वेषामपि तत्प्रत्ययमगीतार्थ सह सम्बन्धिनः प्रत्ययं च्छेदः परिहारो वा एष सूत्रसंक्षेपार्थः-

**[भा. २७२३]** गामे उवस्सए वा अभिनिव्वगडाए दोस ते चेव ।
नवरं पुन नाणत्तं तइ दिवसे गीयसंवसणा ॥

**वृ-** ग्रामे वा एकस्मिन्नुपाश्रये विष्वक् अभिनिवगडायां पृथक् परिक्षेपायामुपलक्षणमेतत् पृथक् द्वारायां पृथक् निष्क्रमणप्रवेशायां । येऽनन्तरसूत्रे मिथ्यात्वादयो दोषा उक्तास्ते एवान्यूनातिरिक्ता द्रष्टव्याः । नवरं पूनर्नानात्वमिदमस्मिन् सूत्रे यदि गीतार्थनिश्रया वसति तर्हि तृतीयदिवसे गीतसंवसनं गीतार्थेन सह संवसनं कर्तव्यमाचार्यस्तृतीयदिवसे तेषां शोधिनिमित्तं गीतार्थमेकं प्रेषयत्येवं च तेषां नास्ति प्रायश्चित्तं । अत्र पर आह-

**[भा. २७२४]** एवं पि भवे दोसा दोसु दिवसेसु जे भणिय पुव्विं ।
कारणियं पुन वसही असती भिक्खोभए जयणा ॥

**वृ-** ननु यदि तृतीयेदिवसे गीतार्थेन सह संवसनमेवमपि ये पूर्व भणिता मिथ्यात्वादयो दोषास्ते द्वयोर्दिवसयो र्भवन्ति । आचार्य आह-सत्यमेतत्; केवलमिदं सूत्रं कारणिकं, कारणवशप्रवृत्तमतो न

दोषः किं पुनस्तत्कारणमत आह- 'वसही असती' इत्यादि, वसतिरेकत्र सर्वेषां न विद्यते यदि वा भिक्षा सर्वेषामेकत्र न भवति । अथवोभयमेकत्र सर्वेषां न संभवति तत एतेषां त्रयाणां कारणानामन्यतमेन कारणेन पृथक् पृथक् वसन्ति । तत्र च यतना कर्तव्या यतनया च संवसां प्रायश्चित्ताभावः तामेवाह-

**[भा. २७२५]** संकिठा वसहीए निवेसणस्संतो अन्नवसहीए ।
असती वाडगंतो तस्स असती होज्ज दूरे वा ॥

**वृ-** स्वग्रामे संक्लिष्टायामतिसङ्कटायां वसतौ सर्वेषामेकत्र स्थानं न भवति । तदा एकनिवेशनस्यान्तः पृथगन्यस्यां वसतौ स्थातव्यमसत्येकनिवेशनस्यान्तरन्यस्या वसतेरभावे वाटकस्यान्तः पृथगन्यस्यां वसतौ वसन्ति । अथवा वाटकस्याप्यन्तः पृथगन्या वसतिर्न लभ्यते तदा वाटकस्यबहिर्हस्तशताभ्यन्तरे पृथगन्या वसतिर्गवेषणीया । तस्य हस्तशतस्याभ्यन्तरे वसतेरभावे दूरेऽपि वसतिरन्या स्यात्; । तत्र हस्तशताभ्यन्तरं यावत् यतनाविधिमाह-

**[भा. २७२६]** अंतो निवेसणाणं दोन्नि वि आवासगाइ सह गुरुहिं ।
दूरे पोरिसि भंगे उग्धाडा गंतु विगडंति ॥

**वृ-** निवेशनपाटकहस्तशताभ्यन्तरे विष्वगपि वसतामेष विधिर्दिवसे दिवसे द्वे अप्यावश्यके प्रभातिकवैकालिकप्रतिक्रमणलक्षणे सह गुरुभिः कर्तव्ये । भिक्षामप्यटित्वा ततः संनिवृत्ता आचार्यस्य समीपे समागत्यालोचयन्ति । अथ हस्तशतस्यबहिर्वसतिर्लब्धा तर्हि गुरुसमीपे चतुर्थपौरुष्यामालोचनां कृत्वा वैकालिकमावश्यकं स्वकीयायां वसतौ कुर्वन्ति । ततः प्रातरप्यावश्यकं तत्र कृत्वा गुरुमसमीपमागत्य प्रत्याख्यानां गृह्णन्ति दूरे इत्यादि यदि पुनर्दूरे अन्यस्मिन् ग्रामे स्थिता भवेयुस्ततो यदि गुरुसकाशमागच्छतां पौरुषीभङ्गस्तत उद्घाटायां पौरुष्यामागत्याचार्यसमीपे आलोचयन्ति प्रत्याख्यानं च गृह्णन्ति पूर्वार्धिका एतत् दूरे स्थितानामविशेषेणोक्तम् अधुना विशेषमभिधित्सुराह-

**[भा. २७२७]** गीयसहाया उ गया आलोयण तस्संतिय गुरुणं ।
अगडा पुन पत्तेयं आलोयंती गुरुसगासे ॥

**वृ-** तत्र यदि तेषां दूरस्थितानां कोऽपि गीतार्थः सहायोऽस्ति तर्हि ते गीतसहाया गीतार्थसहाया दूरे गताः सन्तस्तस्य गीतार्थस्य पुरत आलोचयन्ति । स पुनर्गीतार्थ उद्घाटायां पौरुष्यां गुरूणां समीपमागत्य कथयति, अथ नास्ति कोपि तेषां गीतर्थसहायस्तर्हि ते केवला अकृतश्रुता उद्घाटायां पौरुष्यां गुरुसकाशे समागत्य प्रत्येकं प्रत्येकमालोचयन्ति ।

**[भा. २७२८]** एताण य जंताण य पोरिसिभंगो गुरुव्वयेती ।
थेरेअजंगमंभिव मज्झण्हे वावि आलोए ॥

**वृ-** यदि दूरे वसतिर्लब्धा उद्घाटायां च पौरुष्यामागच्छतां गच्छतां च पौरुषीभङ्गस्ततो गुरवः स्वयं तेषामकृतश्रुतानां समीपं व्रजन्ति, । आचार्यो वृद्धत्वेन ग्लानत्वेन वा गन्तुं न शक्तस्ततः स्थविरे अजङ्गमे वाचार्ये ते अकृतश्रुता मध्यान्हे गुरुसमीपमागत्यालोचयन्ति ।

**[भा. २७२९]** एवंपिदुल्लहाए पडिवसहठिया न एंति पतिदिवसं ।
समपुण दढधिइ य अ तरुणेय बहिया विसज्जंति ॥

**वृ-** एवमपि अनेनापि दुर्लभायां वसतौ दूरे प्रतिवृषभस्थिता न प्रतिदिवसं गुरुसमपमागच्छन्ति, अर्थादापन्नं द्वितीये दिवसे आलोचका आगच्छन्ति, । अथ कीदृशास्ते प्रतिवृषभा यानाचार्यः प्रेषयति ।

तत् आह-समणुन्नेण ति । समनोज्ञा नाम ये परस्परं प्रतिसत्तान् समनोज्ञान् दृढधृतीन् अतरुणान् मध्यमवयसो बहिः प्रतिवृषभानाचार्या विसर्जयन्ति, । तदेवं वसत्यलाभे यतनोक्ता ।

[भा.२७३०] दुल्लभभिक्खे जतितुं, सग्गामुब्भाम पल्लिया सुं च ।
अतिखेय पोरसिवहेन वावि ठायंति तो वीसुं ॥

वृ- दुर्लभे भैक्षे यदि स्वग्रामे उद्भ्रामकभिक्षाचारप्रत्यासन्नग्रामे पल्लिकादिषु वसन्ति, तथापि यतित्वापि नास्ति संस्तरणं, अथवा अतिशयेन महता कालक्षेपेण यदि पर्याप्तं कथमपि लभ्यते । पौरुषीवधेन द्वितीयचतुर्थपौरुषीभङ्गेन ततो विष्वक् अन्यक्षेत्रेऽपि गीतार्थाभावेनाकृतश्रुता अपि तिष्ठन्ति, । ते च विष्वक् क्षेत्रेषु तथा तिष्ठन्ति यथा आचार्यस्पर्द्धकेन सह त्रीणि स्पर्धकानि भवन्ति ॥

[भा.२७३१] उभयस्स अलंभंमिवि गीता सति वीसु ठंति अगडसुवा ।
दुसु तीसु व ठाणेसुं पतिदिवसालोय आयरिओ ॥

वृ- उभयस्य वसतेर्भैक्षस्य वाऽलाभे गीतार्थस्याभावेऽकृतश्रुता अपि विष्वक् तिष्ठन्ति । कथमित्याह-द्विषु त्रिषु वा स्थानेष्वाचार्यस्थानेन सहोत्कर्षवलिषु स्थानेषु इत्यर्थः, । तत्र भिक्षाऽलाभे उभयालाभे वा विष्वक् स्थितानां प्रतिदिवसमाचार्यास्तेषामन्तिकं गत्वा तानालोकते, । प्रतिपृच्छादिदानेन तेषां सारं करोतीत्यर्थः । किं कारणमाचार्येण प्रतिदिवसं तेषां समीपे गन्तव्यमत आह-

[भा.२७३२] सयरा भवंति अनवेक्खणाए जइ भिन्नवायणा लोए ।
पडिपुच्छ सोहिचोयण तम्हा उ गुरु सया वयइ ॥

वृ- भिन्नप्रवहणाः स्वैरिणो भवन्ति । एव तेऽपि स्वैरिणो जायन्ते, तस्मात् प्रतिपृच्छाशोधि-शिक्षादिदानाय गुरुः सदा तेषामन्तिकं व्रजति, । तस्य पुनराचार्यस्य तेषां समीपं व्रजतस्तैर्यत्कर्तव्यं -

[भा.२७३३] तण्हाइयस्स पानं जोग्गाहारं च नेइ पच्चोणि ।
कितिकम्मं च करेंती मा जुन्न रहो व्व सीएज्जा ॥

वृ- येषां समीपमाचार्यो गच्छति, ते आचार्यस्य पच्चोणिं सम्मुखं तृष्णायितस्यातिशेषतृषितस्य योग्यं पानं पानीयं योग्यमाहारं च प्रथमालिकानिमित्तं नयन्ति । कृतिकर्म च विश्रामणां कुर्वन्ति, नान्यथा जीर्णरथ इव स सीदेत् । अथ तस्याचार्यस्य नित्यसहायो न विद्यते तत आह-

[भा.२७३४] असती निच्चसहाये गेण्हइ पारंपरेण अन्नोअण्णे ।
ते च्चिय अन्नेहिं समं तं मेलेउं नियत्तंते ॥

वृ- असति अविद्यमाने नित्यसहाये अविस्थतसहाये यः सकलदिवसाचार्येण सह हिण्डते, ततः पारम्पर्येणान्यानन्यान् सहायान् गृह्णाति । तद्यथा-एके साधवस्तावन्नयन्ति यावत् द्वितीयं स्पर्धकं, ततस्ते तैः समं मेलयित्वा प्रतिनिवर्तन्ते, ततोऽप्यन्ये साधवस्तावन्नयन्ति यावत्तृतीयं स्पर्धकं । ततस्तेऽपि तैः सह मेलयित्वा प्रतिनिवर्तन्ते, । तानि च स्पर्धकान्याचार्यस्पर्धकेन सह त्रीणि स्पर्धकानि भवन्ति ॥ अथ कथमाचार्य एकदिवसेन त्रयाणामकृतश्रुतस्पर्धकानां शोधिं करोति तत आह-

[भा.२७३५] एगत्थ वसितो संतो तेसिं दाऊण पोरसिं ।
मज्झण्हे बितियं गंतुं भोत्तुं तत्थावरं वए ॥

वृ- आत्मीये स्पर्धके उषितः सन् आचार्यस्तत्र पौरुषीं दत्वा मध्याह्ने द्वितीयं स्पर्धकं गच्छति, । तत्र गत्वा भुक्त्वा शोधिं च कृत्वा, तदनन्तरमपरं तृतीयं स्पर्धकं व्रजति, । तत आलोचनादिशोधिं कृत्वा

तत्रैव वसति ।।

[भा.२७३६] एवमेगेन दिवसेन सोहिं कुणति तिण्हवी ।
पडिपुच्छगं तु बलवं आह सुत्तमवत्थयं ।।

वृ- एवमेकेन दिवसेनाचार्यस्त्रयाणामपि स्पर्धकानां शोधिं करोति, यसि प्रतिपृच्छां प्रत्येकं पृच्छां सारं कर्तुं गंतुं बलवान् । -यद्येवं तर्हि तइयं रयणिं संवसतित्ति तदिदानीमपार्थकमवकाशा भावात् ।

[भा.२७३७] सुत्तनिवातो थेरेकलाव काउं तिहिण वा सोहिं ।
बितियपयं च गिलाणे कलाव काउण आगमणं ।।

वृ- आचार्यः प्राह-अधिकृतस्य सूत्रस्य निपातोऽवकाशं स्थविरे, तथाहि यद्याचार्यः स्थविरतया दुर्बलत्वेन वा प्रतिदिवसं त्रिषु स्पर्धकेषु शोधिं कर्तुं न शक्नोति, । तत एकैकस्मिन् स्पर्धके तृतीयां रात्रिं वसति तथा चाह-आचार्यस्य प्रतिदिवसमनागमने त्र्यहेण वापराधान् कलां कृत्वा पिण्डयित्वा शोधिमाचार्यस्य समीपे कुर्वन्ति, ।तथा हि एकसस्मिन् स्पर्धके उषित्वा तत्र पौरुषी दत्वा द्वितीये स्पर्धके समायाति, तत्रैव च वसति, यत्र वसति तत्रत्यास्तत्रत्याः साधवो येऽपराधाऽभवन् ते एकत्र पिण्डयित्वा आचार्यस्य पुरत आलोचयन्ति, । आचार्यस्तु शोधिं ददात्यप्रमादार्थं चोपदेशं प्रयच्छति, । अत्रापि द्वितीयपदमाह-द्वितीयपदमपवादं पदं ग्लाने सत्याचार्ये अपराधान् कलापं कृत्वा पिण्डयित्वा इत्यर्थः स्पर्धकाः साधूनामागमनमाचार्यसमीपे । इयमत्र भावना-यद्याचार्यो ग्लानत्वेनातिवृद्धत्वेनाजङ्गमो न शक्नोति तेषां समीपमागन्तुं, तदा इतरे स्पर्द्धकद्वयसाधवो यथा मयूरः स्वपिच्छान् कलापयति, एकत्र पिण्डयति । एवमपराधान् एकत्र पिण्डयित्वा हृदये सम्यगवधार्य गुरुसमीपमागत्यालोचयन्ति । आलोचितेषु च तेषु अपराधेषु यदि प्रायश्चित्तं दातव्यं भवति, तदा प्रायश्चित्तमाचार्यो दत्वा प्रमादाभावार्थमुपदेशं च दत्वा विसर्जयति । एतदेव सविस्तरमाह-

[भा.२७३८] एवं अगडसुयाणं वीसुठियाणं तु तीसु गामेसु ।
लहुया असंथरंते तेसिअनिंताण वा लहुओ ।।

वृ- सर्वेषां यद्याचार्येण समं नास्ति क्षेत्रं यत्र वसतिः संस्तरणं च भवति अथवास्ति वसतिः संस्तरणं न विद्यते, यदि वास्ति संस्तरणं न पुनर्वसतिः । एवमेतैः कारणैस्त्रिषु विष्वक् ग्रामेषु विष्वक् स्थिता अकृतश्रुतास्तेषामसंस्तरणे तथा स्थितानां यद्याचार्यो द्वयोरितरयोः स्पर्धकयोः प्रतिदिवसं सारां न करोति तदा प्रायश्चित्तं चत्वारो लघुकाः । स्पर्धकसाधवो यद्याचार्यमनागच्छंतं न गवेषयन्ति तदा तेषामप्यनागच्छतां मासलघुः ।

[भा.२७३९] एगदिन एक्केक्के तिट्ठाणत्थाण दुब्बलो वसति ।
अह सो अजंगमो च्चिय ताहे इयरे तहिं एंति ।।

वृ- अथ ग्लानत्वेन वृद्धत्वेन दुर्बलतया न प्रतिदिवसं त्रिषु स्पर्धकेष्वागन्तुं शक्नोति तदा स दुर्बलआचार्यसत्रिस्थानं स्थानं स्पर्धकानामेकैकस्मिन् स्पर्धके एकैकं दिवसं वसति । यथा च वसति तथा प्रागेवोक्तम् । अथ स आचार्योऽतिवृद्धत्वेन ग्लानत्वेनाजङ्गमो जातस्तत इतरे स्पर्धकद्वयसाधवस्तत्राचार्यसमीपे आगच्छन्ति तेषामपि विधिर्मूलगाथायामुक्तः । अथवा तत्रान्यः प्रकारस्तमेवाह-

[भा.२७४०] एइ व पडिच्छए व मेहावि कलावकाउमवराधे ।
अतिदूरे पुन वइए पक्खे मासे परतरे वा

वृ- यस्तेषां स्पर्धकः साधूनां मध्ये कोऽपि साधुर्मेधावी । सर्वेषां साधूनामपराधान् हृदये धारयितुमलं तेन स्पर्धकसाधव आलोचयन्ति, । तद्यथा-स तेषामपराधपदानि कलापं कृत्वा हृदये संपिण्ड्याचार्य-समीपमागत्यालोचयति । तान्याचार्यः श्रुत्वा यदापन्नाः प्रायश्चित्तं ततो यत् येनापन्नं प्रायश्चित्तं तमेनमित्थं वाहयेदिति भणित्वा प्रेषयति । सोऽपि च साधुस्तेषां तत्कथयति प्रायश्चित्तं च तेऽपि साधवस्तद्वहन्ति । पडिच्छए वत्ति अथवा आचार्य आत्मीयान् स्पर्धकान् विनिर्गत्य येन प्रदेशेन इतरौ स्पर्धकावा-गच्छतस्तस्मिन् प्रदेशेऽन्तरा प्रतीक्षमाणस्तिष्ठति । तत्र स्पर्धकसाधव आगच्छन्ति । एको वा मेधावी अत्राप्यालोचनादिकं तथैव अइदूरे इत्यादि यद्यतिदूरे स्थितास्ततदा पञ्चमे पञ्चमे दिवसे यदि वा पक्षेण पक्षेण अथवा मासेन मासेन परतरे वेति परतरेणवा द्व्यर्धमासादिना समागच्छन्ति । आगत्य चाचार्यादिसमीपे शोधिं कुर्वन्ति ।।

**मू. (१५३)** *से गामंसिवा जाव.. रायहाणिंसि वा अभिनिव्वगडाए अभिनिदुवाराए अभिनिक्ख-मणपवेसणाए नो कप्पइ बहुसुयस्स बब्भागमस्स भिक्खुस्स वत्थए, किमङ्ग पुनं अप्पागमस्स अप्पसुयस्स ।*

**[भा.२७४१]** आगडसुयाण न कप्पइ वीसुं मा अइप्पसंगतोसुयवं ।
एगानितो वसेज्जा निकायणं चेव पुरिमाणं ।।

वृ- अनन्तरसूत्रे अकृतश्रुतानां न कल्पते विष्वग् वास इति श्रुत्वा मातिप्रसङ्गतः श्रुतवानेकाकी वसेदित्येवमर्थमिदं सूत्रं तथा निकाचनं च नियमश्च पूर्वाणामकृतश्रुतानां कृतमनेन सूत्रेण । तथा हि यदि कृतश्रुतस्यापि न कल्पते एकाकिनो वासः किमङ्गपुनरकृतश्रुतस्य तस्य सुतरामेकाकिनो न कल्पते वास इत्येष सूत्रसम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या अथ ग्रामे वा नगरे वा यावद्राजधान्यां वा अभिनिव्वगडायामभिनिद्वारायामभिनिष्क्रमणप्रवेशायामेतेषां त्रयाणामपि पदानां व्याख्यानं पूर्ववत् न कल्पते बहुश्रुतस्य सूत्रापेक्षया एकाकिनो भिक्षोर्वस्तुं किमङ्गपुनरल्पागमस्याल्पश्रुतस्येति सूत्रसंक्षेपार्थः । सम्प्रति भाष्यविस्तरः-

**[भा.२७४२]** अंतो वा बहिं वा अभिनिविगडाए ठायमाणस्स ।
गीयत्थे मासलहुं गुरुतो मासो अगीतत्थे ।।

वृ- अन्तरुपाश्रयस्याभिनिव्विगडायां पृथक् परिक्षेपायां वसतौ यथा एकस्यां वलभ्यां विष्वगपवरके बहिरुपाश्रयस्याभिनिर्विगडायामन्यस्मिन् प्रतिश्रये यदि गीतार्थो भिक्षुर्वसति तदा तस्य तत्र तिष्ठतो गीतार्थस्य प्रायश्चित्तं मासलघु अगीतार्थस्य गुरुको मासः । साम्प्रतमन्तर्बहिर्वा गृहस्य या अभिनिर्विगडा तस्याः प्रकारानाह-

**[भा.२७४३]** अंतो निवेसणस्स सोहीमादीव जाव सगामो ।
घरवगडाए सुत्तं एमेव य सेस वगडासु ।।

वृ- निवेशनस्य गृहस्यान्तरभिनिर्विगडा अथवा निवेशनाद्बहिरन्या वसतिरभिनिर्विगडा तस्यां मुख्यतो द्रष्टव्यम् । एवमेव शेषवगडा निवेशनाद्बहिरभिनिर्विगडाप्रकारेषु वा तद्य गीतार्थानामगीतार्थानां भिक्षूणामेकाकिनां वसतां प्रायश्चित्तं तदेव प्रागुक्तं । केवलं प्रायश्चित्तं किन्त्वन्येऽपि च दोषास्तथा चाह –

**[भा.२७४४]** आणादिणो य दोसा विराधना होइ संजमायाए ।
लज्जाभयगोरवधम्मसद्धक्खा यउड्डा य ।।

वृ- अन्तर्निविशनस्याभिनिर्विगडायां वसतौ तिष्ठत आज्ञादयो दोषास्तथा संयमविराधना आत्मविराधना च एते यथा प्राक् चतुर्थपञ्चमातिशये भाविते तथा भावनीये, यदि पुनरनभिनिर्विगडायां वसतौ वसति तदा पापं कर्तुमिच्छतो लज्जातो भयतो गौरवतो धर्मश्रद्धातो वा रक्षा चतुर्विधा स्यात् । किमुक्तं भवत्यनभिनिर्विगडायां वसतौ वसन् संयमविराधनारूपमात्मविरा धनारूपं वा पापं लज्जादिभ्यो न कुर्यादपि तत्र प्रथमतो लज्जाद्वारं भावयति—

[भा. २७४५] लज्जणिज्जो उ होहामि लज्जए वा समायरं ।
कुलागमतपस्सी वा सपक्खपरपक्खतो ।।

वृ- यद्यहं हस्तकर्माद्यन्यद्वा पापं समाचरिष्यामि तल्लज्जनीयो भविष्यामि । लज्जितश्च कथं कुलस्य गणस्य सङ्घस्य आगमज्ञस्य वा तपस्विनो वा स्वपक्षस्य श्रावकादेः परपक्षस्य परतीर्थिकादिरूपस्य मुखं दर्शयिष्यामि । अथवा तत्पापमाचरन् कुलागमतपस्विस्वपक्षपरपक्षेभ्यो लज्जते, यथाहमेवमाचरन् कथमात्मीयं मुखं तेषां दर्शयिष्यामि एवं लज्जातः पापं न करोति; ।। सम्प्रति भयद्वारभावनार्थमाह—

[भा. २७४६] असिलोगस्स वा वाया जो अतिसंकति कम्मतं ।
तहावि साहु तं जम्हा जसो वण्णो य संजमो ।।

वृ- अश्लोकस्य वा अवर्णस्य वा वादात् प्रवादात् यः कर्म अशुभासेवनारूपमतिशयेन शङ्कते । अपकीर्त्यवादभयात्र कुरुते इत्यर्थस्तथापि तस्य तत् अशुभकर्मानाचरणं साधुर्यस्मात्तेन यशोभिकाङ्क्षितं यशो वर्णसंयम इत्येकार्थम् । जसोत्ति वा संजमोत्ति वा वण्णोत्ति वा एगट्ठमिति वचनात्, ततः परमार्थतः संयमोऽपेक्षित इति तदा नाचरणं श्रेयः ।। सम्प्रति यशः संयम इत्येकार्थतया भगवद्वचनमुपदर्शयति—

[भा. २७४७] जसं समुवजीवंति जे नरा वित्तमत्तणो ।
अलेस्सा तत्थ सिज्झंति सलेसाउ विभासिया ।।

वृ- ये नरा मनुष्या वृत्तमात्मन इच्छंति, ते यशः समुपजीवन्ति, इत्येतद्व्याख्याप्रज्ञप्तौ राशियुग्मे शते भणितं, । तथा च तद्ग्रन्थः -मनुस्साणं भंते किं भंते आयजसं उवजीवंति । आत्मसंयममित्यर्थः । आय अजसं उवजीवन्ति । आत्मा संयममित्यादि । एवं यशः संयमावेकार्थावुक्तौ । तत्र ये अलेश्याः शैलेशीप्रतिपन्नास्ते नियमात् सिद्ध्यन्ति । सलेश्याः पुनर्विभाषिता विकल्पिताः केचित् सिद्ध्यन्ति केचिन्न सिध्यन्तीत्यर्थः । तत्र ये भव्यास्ते सिध्यन्ति, । तत्राहमशुभं कर्म समाचरन्नभव्यो भविष्यामीति भयतो नाशुभकर्म समासेवते ।।

[भा. २७४८] दाहिंति गुरुदंडं जइ नाहिंति ततत्तो ।
तं च वोढुं न चाइ संघायमादीय लोगतो ।।

वृ- यदि परस्त्र्यादिकं सेविष्ये, ततो यदि गुरवस्त्वतो ज्ञास्यन्ति तदा दण्डं प्रायश्चित्तमुग्रं दास्यन्ति, । तथोग्रं प्रायश्चित्तं वोढुमहं न शक्ष्ये नापि लोकतः परयुवतिभर्त्रादिलक्षणात् घातादिकं घातवधादिकं सोढुं शक्ष्ये इति भयतो नासेवते अशुभं कर्म, गतं भयद्वारम् । अधुना गौरवद्वारमाह—

[भा. २७४९] जोहं सइर कहासुंपि च कामि गुरुसन्निहो ।
सोहं कहमुपासिस्संतमनायरदूसितो ।।

वृ- योऽहं स्वैरकथास्वपि गुरुसन्निधौ गौरवेण चकास्मि सोऽहमनाचारदूषितस्तं गुरुं कथमुपासिष्ये,

अनाचारदूषिततया तथारुपगौरवभयात् ।।

[भा.२७५०] लोए लोउत्तरे चेव गुरवो मज्झ संमता ।
मा हु मज्झावराधेन होज्ज तेसिं लहुत्तया ।।

वृ- मम गुरवो लोके लोकोत्तरेऽपि च सम्मताः ततो ममापराधेन मा तेषां लघुता भूयात् । तथा

[भा.२७५१] माननिज्जो उ सव्वस्स नामे कोइ न पूयए ।
तणाण लहुतरो होहं इति वज्जेति पावगं ।।

वृ- अहं सर्वस्यापि माननीयो न मां कश्चिन्न पूजयति, । यदि पुनरधुना पापमाचरिष्यामि ततस्तृणेभ्योऽपि लघुतरो भविष्यामीति हेतोः पापं मैथुनासेवनादिकं वर्जयति गतं गौरवद्वारमधुना धर्मश्रद्धारमाह-

[भा.२७५२] आयसक्खियमेवेह पावगं परिवज्जए ।
अप्पेव दुट्ठसंकप्पं रक्खा सा खलु धम्मतो ।।

वृ- यः पापं कमात्मसाक्षिकमेव वर्जयति, स परमार्थतो धर्माधिकारीत्येवं मन्यमानस्य अपि संभावनायां दुष्टसंकल्पस्य रक्षामूलत एवानुत्थानमुत्थितस्य विफलीकरणं वा सा खलु धर्मतो भवति । धर्मश्रद्धाया एव महत्फलमुपदर्शयति-

[भा.२७५३] निस्सग्गुस्सग्गकारी य सव्वतो छिन्नबंधनो ।
एगो वा परिसाए वा अप्पाणं सो भिरक्खइ ।।

वृ- यस्तीव्रधर्मश्रद्धाभावतो निसर्गत एव स्वभावत एव उत्सर्गकारी सर्वतश्छिन्नबन्धन सर्वत्र ममत्वरहित इत्यर्थः । स एको वा एकाकि वा पर्षदि वा व्यवस्थित आत्मानमभिरक्षति । तदेवमनभिनि-र्विगडायां वसतौ वसतो लज्जादीनि संयमविराधनारक्षकाण्युक्तानि । अभिनिर्विगडायां पुनर्वसतः शुभोऽशुभो वा मनःपरिमाण उपजायते तथा चाह-

[भा.२७५४] मनपरिणामो वीयी सुभासुभो कंटएण दिट्ठंतो ।
खिप्पं करणं जह लंखियव्वं तहियं इमं होइ ।।

वृ- यथा गङ्गादीनां नदीनां वा तेनानन्तानन्तरमनेका वीचय उत्पद्यन्ते । एवं जीवस्यान्योन्य-मनःपरिणाम उपजायते स च द्विधा-शुभाऽशुभश्च दृष्टान्तः कंटकेन वृश्चिकलांगूलेन यथा वा लंखिकायाः भिन्नं करणं तथैवेदं भवति एवं जीवस्य शुभोऽशुभश्च परिणामः क्षणेनोपजायते क्षणेन वाऽपैति इत्यर्थः ।

[भा.२७५५] परिणामाणवत्थाणं सति मोहे उ देहिणं ।
तस्सेव उ अभावेणं जायते एगभावया ।।

वृ- मनः परिणामानामनवस्थानं देहिनां प्राणिनां सति विद्यमाने मोहे भवति । तस्यैव तु मोहस्याभावेन जायते एकभावता मनःपरिणामस्य एकरूपता । तदेवं मनःपरिणामो वीचिरूपो व्याख्यातः ।।

[भा.२७५६] जहा विज्झए मोहो सुद्धलेसस्स ज्झाइणो ।
तहेव परिणामो वि विसुद्धो परिवड्ढए ।।

वृ- यथा शुद्धलेश्याकस्य ध्यायिनो धर्मध्यायिनः शक्लध्यायिनो वा मोहोऽपचीयते तथैव विशुद्धपरिणामो वर्धते । उक्तः शुभपरिणामोऽशुभपरिणामप्रतिपादनार्थमाह-

[भा.२७५७] जहा य कम्मिणो कम्मं मोहनिज्जं उदिज्जइ ।
तहेव संकिलिट्ठो से परिणामो विवड्ढती ।।

**वृ-** यथा च कर्मिणः संक्लिष्टलेश्यास्थानवर्तिनः आर्तध्यायिनो रौद्रध्यायिनश्चेत्यर्थः । कर्ममोहनीयं कषायनोकषायरुपमुदीर्यते तथैव से तस्य संक्लिष्टपरिणामो विवर्धते ॥

**[भा.२७५८]** जहा य अंबुनाहम्मि अनुबंधपरंपरा ।
वीइ उप्पज्जए एवं, परिणामो सुभोसुभो ॥

**वृ-** यथा अंबुनाथे समुद्रे अनुबद्धपरंपरा वीचिरुत्पद्यते । एवं जीवस्य परिणामशुभोऽशुभश्चानुबद्धपरम्पराक उपजायते । शुभाशुभपरिणामवैचित्र्यमेव दृष्टान्तेन विभावयिषुः कण्टकदृष्टान्तं प्रागुपन्यस्तं भावयति-

**[भा.२७५९]** कण्हगोमी जहा चित्ता कंटकं वा विचित्तियं ।
तहेव परिणामस्स विचित्ता कालकंडया ॥

**वृ-** कृष्णागोमी कृष्ण(कर्ण) शृगाली यथा सा कृष्णादिभी रेखाभिश्चित्रा विचित्रवर्णा भवति, वृश्चिकस्य महाविषलांगूलं कण्टक उच्यते । यथा स कृष्णादिरेखाभिश्चित्रितो नाना प्रकारो भवति, तथैव परिणामस्य विचित्राणि कालभेदेन कण्टकान्यसंख्येयस्थानात्मकानि भवन्ति । अथ कथं शुभाऽशुभेऽशुभाद्वा शुभे परिणामे याति तत्र लङ्खिकादृष्टान्तमाह-

**[भा.२७६०]** लंखिया वा जहा खिप्पं उप्पत्तिता समोयइ ।
परिणामो तहा दुविहो खिप्पं एइ अवेति य ॥

**वृ-** यथा वा लङ्खिका क्षिप्रमुत्पत क्षिप्रमेव समवपतति तथा परिणामो द्विविधः-शुभोऽशुभश्च क्षिप्रमागच्छति अपैति च । एवं शुभादऽशुभाद्वाशुभे परिणामे गमनं, कियन्ति संख्ययाऽध्यवसायस्थानानीति चेदत आह-

**[भा.२७६१]** लेस्साठाणे उ एक्केक्के ठाणसंखमतिच्छिया ।
किलिट्ठेण तरेणं वा जे उ भावेन खुंदती ॥

**वृ-** एकस्मिन् लश्यास्थाने संख्यामतिक्रान्तानि संख्यातीतानि स्थानानि परिणामस्थानानि भवन्ति, यानि क्लिष्टेन संक्लिष्टेन इतरेण विशुद्धेन भावेन खुन्दति आस्कन्दति प्राप्नोतीत्यर्थः । अय कः संक्लिष्टः को वा इतरो भाव इति चेदुच्यते-इह कृष्णलेश्यापरिणामान्नीललेश्यापरिणामो विशुद्धो नीललेश्यापरिणामादपि कापोतलेश्यापरिणामो विशुद्धस्तस्मादपि तेजोलेश्यापरिणामो विशुद्धस्तस्मादपि पद्मलेश्यापरिणामो विशुद्धस्तस्मादपि शुक्ललेश्यापरिणामः । शुक्ललेश्या परिणामात् पद्मलेश्यापरिणामः क्लिष्टस्तस्मादपि कापोतलेश्यापरिणामः क्लिष्टः । ततोऽपि नीललेश्यापरिणामस्तस्मादपि कृष्णलेश्यापरिणामः । उक्तं च-क्रमशः स्थितासु लेश्यागतासु जीवस्य भावपरिणतिषु अवपतनोत्पतनाद् वा संक्लेशाद्वा विशोद्धयाद्वा प्रत्येकैकस्मिन् लेश्यास्थाने परिणामसंख्ययातीतत्वं भावयति-

**[भा.२७६२]** भवसंघयणं चेव ठिति वासज्ज देहिणं ।
परिणामस्स जाणिज्जा विवड्ढी जस्स जत्तिया ॥

**वृ-** भव एव संहननं भवसंहननं दृढं भवं देहभवं वाधिकृत्येत्यर्थः । तथा स्थितं च जघन्यादिभेदभिन्नमाश्रित्य देहिनां नारकादीनां यस्य परिणामस्य कृष्णलेश्यादिरूपस्य यावती विवृद्धिस्तस्य तावती(तीं) जानीयात् । तथाहि-नारकाणां देवतानां जघन्यायां स्थितौ कृष्णलेश्यापरिणामो

नानाजीवापेक्षया तरतमभेदेन चिन्त्यमाना असंख्येया एवं समयाधिकायामपि जघन्यस्थितौ द्विसमयादिकायामपि जघन्यस्थितावेव तावद्वाच्यं यावदुत्कृष्टं स्थितिस्थानं. । एवं कृष्णलेश्यायां परिणामा असंख्येया भवन्ति । एवं नीललेश्यागतस्य विशुद्धस्य भावस्य फलमाह-

[भा.२७६३] विसुज्झंतेन भावेन मोहो समवचिज्जइ ।
मोहस्सावचएयावि भावसुद्धी वियाहिया ।।

वृ- विशुद्धयता भावेन लेश्यागतेन मोहो मोहनीयं कर्म समपचीयते हानीमुपगच्छति मोहस्यापचये वापि भावविशुद्धिर्जीवस्य परिणामविशुद्धिर्व्याख्याता प्रतिपादता । यथा कालक्षेपमृते केवलश्रिया लाभो भवति ।। अथ मोहनीयं कर्म उदयप्राप्तं शुभपरिणामेन क्षपयितुं शक्यते किं वा नेति शक्यन्ते इति ब्रूमस्तथा चाह-

[भा.२७६४] उक्कढंतं जहा तोयं सीयलेन उझविज्जए ।
गदो वा अगदेनं तु वेरग्गेण तहोदओ ।।

वृ- यथा उत्कथ्यमानं तोयं शीतलेन तोयेन क्षिप्यते । गदो वा अगदेन तता मोहनीयस्योदयो वैराग्येण क्षिप्यते । तदेवमुक्तं प्रसक्तानुप्रसक्तमधुना प्रकृते योजनामाह-

[भा.२७६५] असुभोदयनिप्फन्ना संभवंति बहूविहा ।
दोसा एगानियस्सेवं इमे अन्ने विआहिया ।।

वृ- अशुभोदयेन अशुभकर्मोदयेन निष्पन्ना अन्तरुपाश्रयस्याभिनिर्विगडायां वसतावेवमेकाकिनो बहुविधा दोषास्तदेवं अन्तरुपाश्रयस्याभिनिर्विगडायां दोषा उक्ताः सम्प्रति बहिरुपाश्रयस्या-भिनिर्विगडायां दोषानाह । इमे वक्ष्यमाणा अन्ये दोषा एकाकिनो व्याख्याताः प्रतिपादिताः-

[भा.२७६६] मिच्छत्त सोहि सागारियादि गेलण्णखद्धपडिनीए ।
बहिपेल्लणित्थिवो रोगे तह सल्लमरणे य ।।

वृ- एकाकिनो मिथ्यात्वगमनं तथा शोधिरभावस्तथा सागारिकप्रवेशो वसतौ आदिशब्दाद्यचलत्-कुड्यां वसतौ कुड्यादिप्रपतनत आत्मवधेनेतपरिग्रहस्तथा ग्लानत्वे प्रतिजागरणा-भावस्तथा एकाकिनो मन्दाग्नेर्निवारकाभावात् प्रचुरभक्षणसंभवस्तथा च ग्लानत्वादिभावः । तथा एकाकी प्रत्यनीकस्य गम्यो भवति, । तथा उद्भ्रामका दण्डपाशादयो नगररक्षा एकाकिनं चौरोऽयं हेरिको वा न ज्ञायते । कथमन्यथा एकाकीति विचिन्तयतो बहिः प्रेरयेयुः । ग्रामान्नगराद्वा बहिर्निष्काशयेदिति भावः । तथा स्त्रीदोषा एकाकिनो जायन्ते । तथा व्यालेन दष्टस्य भेषजाकरणसंभवः रोगस्य च वृद्धिगमनं, । तथा सशल्यस्य सतो मरणमित्येष द्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेव विवरीषुराह-

[भा.२७६७] ओगाढमप्पसहायं पन्नवेंति कुतित्थिया ।
समावण्णो विसोहिं च कस्स पासे करिस्सइ ।।

वृ- ओगाढमप्पसहायं कुतीर्थिकाः प्रज्ञापयन्त्यतो मिथ्यात्वगमनं, तथा समापन्नः प्रायश्चित्तं कस्य पार्श्वे शोधिं करिष्यति । नैव कस्यचित् पार्श्वे ततः शोध्यभावः ।। सम्प्रति सागारिकद्वारं ग्लानद्वारं चाह-

[भा.२७६८] भया आमोसयादीणं सिज्जं वयति सारियं ।
असहायस्स गेलण्णे को से किच्चं करिस्सइ ।।

वृ- आमोषकादीनां भयात्तस्मिन्नेकाकिनि सति शून्यां शय्यां वसतिं दृष्ट्वा तां सागारिको व्रजति

द्वारगाथायामादिशब्दस्य व्याख्यानं तत्रैव कृतं तथा असहायस्य से तस्य ग्लानत्वे सति कः कृत्यं करिष्यति । अधुना प्रत्यनीकद्वारमाह-

[भा.२७६९] मंदग्गी भुंजए खद्धं ऊसढंति निरंकुसो ।
एगो परुट्ठगम्मो य पेल्लेउब्भामया वणे ।।

वृ- एकाकी निवारकाभावान्निरंकुशं ऊसढंति उत्कृष्टमितिकृत्वा मन्दाग्निः प्रचुरं भुङ्क्ते ततो ग्लानत्वादिदोषसंभवः अथवा एकोऽसहायः प्ररुष्टस्य प्रत्यनीकस्य गम्यो भवति । तथा उद्भ्रामका नगरादिरक्षका एकाकिनममुं चौरादिरिति कृत्वा नगरादेर्बहिः प्रेरयेयुः ।। अधुना स्त्रीद्वारमाह-

[भा.२७७०] विभिचारिम्मि परिणते निनिंदट्ठूण समणवसहीतो ।
पंतावनादगारो उड्डाहो पउसएमादी ।।

वृ- या व्यभिचारी नाम जारस्तस्मिन् परिणते सा स्त्री केनापि कारणेन संयतिवसतिं गता भवेत् । ततः श्रमणवसतेस्तां निर्गच्छन्तीं दृष्ट्वा अगारस्तस्या भर्ता अन्यो वा निजकोऽनिजको वा तस्यामासक्तः प्रान्तापनमपि मारणादि कुर्यात् । तथा च सति प्रवचनस्य उड्डाहः प्रान्तापनाद्यभावे तस्य दर्शनस्य वा सकलस्योपरि प्रद्वेष उपजायते । तथा च सति तस्यान्यस्य वा भक्तपानादिव्यवच्छेद इत्यादयो दोषाः ।।

[भा.२७७१] वालेण वावि डंकस्स से को कुणइ भेसज्जं ।
दीहरोगे वि वड्ढिं च गतो किं सो करिस्सइ ।।

वृ- व्यालेन सर्पादिना दष्टस्य से तस्य को भेषजं करोति । नैव कश्चिदेकाकित्वात्तथा दीर्घरोगे कृत्याकरणतो विवृद्धिं गतः स पश्चात्किं करिष्यति । नैव किञ्चित्केवलं मरिष्यतीत्यर्थः ।।

[भा.२७७२] सल्लुद्धरणविसोही मए दोसा बहुस्सुए वावि ।
सविसेसा अप्पसुए रक्खंति परोप्परं दोवि ।।

वृ- शल्योद्धरणे विशोधिरेकाकिनः शल्योद्धरणाभावस्ततो मृतेऽपि च स शल्ये तस्मिन् दोषास्तथाहि- स शल्यो यो म्रियते स दीर्घकालं संसारमनुवर्तते इति बहुश्रुतं चाप्येकाकिनि मृते दोषास्तथाहि-सोप्येकाकी मृतो गृहिणा बलीवर्दाभ्यां मल्लेन राजकुलेन वा निष्काश्यते । तथा वा लोकनिन्दाप्रवृत्ते प्रवचनव्याघातः सविसेसा अप्पसुएत्ति अल्पश्रुते एकाकिनि सविशेषा दोषास्तथाहि-बहुश्रुत आलोचनार्हाभावे सिद्धानामन्तिके आलोचयति । अल्प श्रुतस्त्वमुं विधिं न जानातीति सशल्य एव म्रियते । यदि द्वावपि बहु (श्रुताल्प) श्रुतावभिनिर्विगडायां वसतौ परस्परं संभूय वसतस्तदा द्वावपि तौ परस्परं रक्षयतः । अधुना सविसेसा अप्पसुए इत्येतद्व्याख्यानयति-

[भा.२७७३] अप्पेव जिनसिद्धेसु आलोएहि बहुस्सुतो ।
अगीतो तमजानंतो ससल्लो जातिदुग्गतिं ।।

वृ- अप्येवमेवमपि एकाक्यपीत्यर्थः । बहुश्रुतो जिनेषु अर्हत्सु सिद्धेषु मनसि सम्प्रधारितेषु तेषां पुरत आलोचयिष्यते । अगीतोऽबहुश्रुतः पुनस्तं विधिमजानानः सशल्यो मृत्वा याति दुर्गतिमतः सविशेषा अल्पश्रुते ।। सम्प्रति 'रक्खंति परोप्परं दोवित्ति' व्याख्यानार्थमाह-

[भा.२७७४] सीहो रक्खई तिनिसे तिनिसेहिं विरक्खितो तहा सीहो ।
एवणमनसहिया बिइयमद्धाणमादीसु ।।

वृ- सिंहो रक्षति तिनिशात् तिनिशवृक्षगुहां तिनिशैरपि तिनिशवृक्षगुहयापि सिंहो रक्ष्यते ।

एवमभिनिर्वगडायां वसतौ वसन्तावन्योन्यसहितौ परस्परं रक्षयतः । अत्रैचापवादमाह-द्वितीयपदम-पवादमपदमध्वानं प्रतिपन्नकारणेनैकाकी अन्यसंभोगिकादीनां पार्श्वस्थादीनां वा वसते विष्वग् अपवरके निवेशनादिषु वा वसेत् । आदिशब्दादशिवादिगृहितो वा विष्वक् तिष्ठेत् ।।

*मू. (१५४) से गामंसिवा जाव रायहाणिंसि वा एगवगडाए एगदुवाराए एगनिक्खमणपवेसाए कप्पइ बहुसुयस्स बब्भागमस्स एगाणियस्स भिक्खुस्स वत्थए दुहओ कालं भिक्खुभावं पडिजागरमाणस्स ।*

[भा.२७७५] कारणतो वसमाणोऽगीतो गीओ व होइ निद्दोसो ।
पुव्वं च वणिया खलु कारणवासिस्स जयणा उ ।।

वृ- कारणतो गीतार्थोऽगीतार्थो वा यतनया वसन् निर्दोषो भवति । सा च यतना कारणत एकाकिनो वसनशीलस्य पूर्वमुक्ता एतदर्थख्यापनार्थमिदं सूत्रम् । अधुना सूत्रत एव सम्बन्धमाह-

[भा.२७७६] सुत्तेण व उ सुत्तं जोइज्जई कारणं तु आसज्ज ।
संबंधधरुव्वरए कप्पइ वसिउं बहुसुयस्स ।।

वृ- सूत्रेणैव सूत्रं योज्यते सम्बद्ध्यते । तद्यथाऽनन्तरसूत्रेणैकाकिनो बहुश्रुतस्य वासो निषिद्धोऽनेन तु सूत्रेणेदं प्रतिपाद्यते, कारणमाश्रित्याध्वप्रतिपत्त्यादिकं सम्बन्धगृहोद्वरके बहुश्रुतस्य वस्तुं कल्पते इत्येष सूत्रसम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-अथ ग्रामे वा नगरे वा यावद्राजधान्या-मेकवगडायामेकपरिक्षेपायामेकद्वारायामेकनिष्क्रमणप्रवेशायां वसतौ बहुश्रुतस्य बह्वागमस्य भिक्षोर्वस्तुं कल्पते केवलमुभयकालं भिक्षुभावं प्रतिजाग्रतो भिक्षुभावश्चारित्रं तस्याविराधनार्थं या सामाचारी तां कुर्वत इत्येष सूत्रसंक्षेपार्थः । अधुना भाष्यनिर्युक्तिविस्तरस्तत्र भिक्षुभावं पडिजागरमाणस्सेति व्याख्यानार्थमाह भाष्यकृत-

[भा.२७७७] चरणं तु भिक्खुभावो सामायारीए जा तदट्ठाए ।
पडिजागरणं करणं उभयकालं अहोरत्तं ।।

वृ- भिक्षोर्यथावस्थितस्य भावो भिक्षुभावश्चरणं तदर्थं तस्य चारित्रस्याविराधनार्थं या सामाचारी तस्याः प्रतिजागरणं नाम करणमुभयकालमहिनरात्रौ च आचार्योऽपितस्यैवं भिक्षुभावं प्रतिजाग्रतो गोसर्गे रात्रिकं पृच्छति । दिवसेऽपि भक्तपानादिचिन्तां करोति । विकाले च दैवसिकं पृच्छति । सुखेन वृत्तस्तव दिवस इति । एवमुभयकालमाचार्यस्तं प्रतिजागर्ति । सम्प्रति निर्युक्तिविस्तरः-

[भा.२७७८] वक्खारे कारणम्मी निक्कारणपुव्ववण्णिया दोसा ।
किं पुन हुज्जा कारण तद्दोसाई मुणेयव्वा ।।

वृ- वक्खारो नाम एकस्यां वलभ्यामभिनिर्विगडो विष्वक् अपवरकस्तस्मिन् कारणे सति वसति एतद्विषयमिदं सूत्रं यदि पुनः कारणमृते विष्वग् अपवरके वसति, तत्पूर्ववर्णिता मिथ्यात्वादयो दोषाः किं पुनर्भवेत्तत्कारणं, यद्वशात् पृथक् अपवरके तिष्ठति, तत आह-त्वग् दोषादीनि त्वग्दोषक्षयव्या-ध्यादीनि कारणानि ज्ञातव्यानि, । तथाहि-त्वग्दोषादिकमाचार्यो यदि निष्काशयति, तदा तस्य प्रायश्चित्तं चतुर्गुरुकम् । तस्मान्न स निर्यूहयितव्यः । किन्तु पृथगपवरके स्थितः परिपालनीयः । स च त्वग्दोषो द्वाभ्यां प्रकाराभ्यां भवति । तथा चाह-

[भा.२७७९] संदंतमसंदंते अस्संदिनसित्तमंडलपसुत्ती ।
किमिपूयं रसिगा वा पस्संदति तत्थिमा जयणा ।।

वृ- द्विविधस्त्वग्दोषस्तद्यथा-स्पन्दमानोऽस्पन्दमानश्च, । तत्रास्पन्दनोऽस्रावणश्चित्रप्रसुप्ति-मण्डलप्रसुप्तिश्च । यस्तु स्पन्दमानः स कृमीन् प्रस्पन्दते पूतं वा रसिकां वा । तत्र स्पन्दमाने त्वग् दोषे इयं वक्ष्यमाणा यतना तामेवाह-

[भा.२७८०] संदंतो वक्खारो अंतो बाहिं च सारणा तिन्नि ।
जत्थ विसीएज्ज ततो नाणादि उग्गमादी वा ।।

वृ- स्पन्दमाने त्वग्दोषऽनंतरेकस्यां वलभ्यां विष्वगपवरके तस्याभावे एकस्मिन्निवेशनेऽन्यस्यां वसतौ स्थाप्यते, । तत्र च वसतस्तिस्रः सारणाः साराः कर्तव्याः । यत्र (त्र) सको विसीदेत् । कास्तास्तिस्रः सारा इत्याह-ज्ञानादौ ज्ञाने दर्शने चारित्रे च । अथवा उद्गमादावुद्गमे उत्पादनायामेषणायां च अथवान्यथा तिस्रः सारास्ता एवाह-

[भा.२७८१] अहवा भत्ते पाने सामायारीए वा विसीयतं ।
एएसु तीसु सारे तिन्नि वि काले गुरुपुच्छे ।।

वृ- अथवेति प्रकारान्तरे भक्ते पाने सामाचार्यां च एतेषु त्रिषु स्थानेषु सीदंतं सारयन्त्याचार्या यदि वा तिस्रः-सारानाम त्रीनपि कालान् गुरुः पृच्छति । कथमेवाह-

[भा.२७८२] गोसे केरिसयं तिय, कयमकयं वा किं ते आवासं ।
भिक्खंक लद्धमलद्धं किं दिज्जउ वा ते मज्झण्हे ।।

[भा.२७८३] पेहिय पेहियं वा वट्टइ ते केरिसं च अवरण्हे ।
निज्जूहणंमि गुरुगा अविहि परियट्टणे वा वि ।।

वृ- गोसे प्रातरिदं पृच्छति । कीदृशं ते शरीरमिति, । तथा त्वया किमावश्यकं कृतमकृतं वा तथा मध्याह्ने पृच्छति-भैक्षं त्वया लब्धमलब्धं वा किं तव दीयतामिति । तथा अपराह्ने पृच्छति । किं तवोपकरणं केनापि त्वया वा प्रेक्षितं किं वा न प्रेक्षितं । कीदृशं वा ते शरीरमिति । यदि पुनरेव सारां न करोति, किन्त्वेवमेव परित्यजति, तदा गुरोः प्रायश्चित्तं चत्वारो गुरुकाः, । अनिर्यूहेऽपि यद्यविधिना परिवर्तनं परिपालनं कारयति तदापि चतुर्गुरुकं प्रायश्चित्तं ।

[भा.२७८४] आणादिणो य दोसा विराधना होइ इमेहिं ठाणेहिं ।
पासवणफासलाला सेए मरुएण दिठंतो ।।

वृ- न केवलं प्रायश्चित्तं किन्त्वाज्ञादयश्च दोषास्तथा एभिर्वक्ष्यमाणैः स्थानैर्विराधना साधूनामात्मविराधना भवति, । कैः स्थानैरित्याह- प्रश्रवणेन स्पर्शेन, लालया स्वेदेन च प्रस्वेदेन । तथाहि-स्पन्दमानत्वग्दोषवतः प्रश्रवणस्पर्शनेनापि व्याधिरन्यत्र संक्रामति, । तथा गात्रस्पर्शनेन यदि वा तेन व्याधितेन ये परिभुक्ताः पीठफलकादयस्तान् यद्यव्याधितः परिभुङ्क्ते तदा व्याधिः संक्रामति । तथा लालया सह भोजने व्याधिः संक्रामति । तस्य प्रस्वेदेन यदि कोऽपि स्पृश्यते, तदा तस्यापि व्याधिः संचरति, । अत्र च दृष्टान्तो मरुकेण संडकब्राह्मणेन तत्कथानकं चावश्यके प्रबन्धतः कथितमिति ततोऽवधार्य, । साम्प्रतमेतदेव पश्चार्धं व्याचिख्यासुः प्रथमतः प्रश्रवणे यतनामाह-

[भा.२७८५] पासवण अन्नअसती भूतीए लक्खे माहु दूसियं मोयं ।
चलणतलेसु कमेज्जा एमेवेय निक्खमपवेसो ।।

वृ- तस्य स्पन्दमानत्वग्दोषवतः पृथक् कायिकी भूमिः कर्तव्या; । अन्यस्याविष्वक् प्रश्रवणभूमेरसति

अभावे एकस्या एव कायिक्या भूमेस्तस्य योग्यं पृथक् अवकाशं भूत्या लक्षयति वृषभो यथा साधवस्तं परिहरन्ति, । तथा चाह-मा कोऽपि त्वग्दोषव्याधितस्य दूषितं मोकं प्रश्रवणं पादेनाक्रमेत् । आक्रमेण को दोष इत्यत आह-आक्रान्ते तस्य प्रश्रवणे चरणतलेषु पादतलेषु त्वग्दोषव्याधिः संक्रामति, । तथा तस्य त्वग्दोषव्याधितस्य येनावकाशेन निष्क्रमणं प्रवेशो वा तमवकाशं भूत्या लक्षयति, । येन साधवस्तमपि परिहरन्ति, । अपरिहरणेऽनन्तरोदित एव दोषः ।।

[भा.२७८६] निंती व सी काउतली कमसु संथारतो दूर अदंसणोवो ।
मा फासदोसेण कमेज्ज तेसिं तत्थिक्कवत्थाविवि परिहरंति ।।

वृ- सस्पन्दमानत्वग्दोषी क्रमयोः पादयोस्तलके उपानहौ कृत्वा निर्गच्छति प्रविशति वा । योऽप्यस्पन्दमानत्वग्दोषी तस्यापि कायिकी भूमिर्विष्वक् क्रियते न पुनः पृथग् भूमिनिर्गम-प्रवेशस्थानम् । सम्प्रति स्पन्दमानस्यास्पन्दमानस्य च स्पर्शविषयां साधारणां यतनामाह-अस्पन्देऽपि त्वग्दोषे आस्तां स्पन्दमाने इत्यापि शब्दार्थः । संस्तारको दूरे क्रियते मा स्पर्शदोषेण तेषां शेषसाधूनां व्याधिः संक्रमेदिति हेतोस्तथा न केवलं दूरे संस्तारकः क्रियते । किन्तु तेन त्वग्दोषवता यत्स्पृष्टं वस्त्रादि तत्परिहरन्ति । पूर्वोक्तादेव दोषात्तदेवं प्रश्रवणयतनास्पर्शयतना च सप्रपञ्चोक्ता ।।

[भा.२७८७] न य भुंजतेगड्डा लालादोसेण संकमति वाही ।
सेओ से वज्जिज्जइ जलपडलंतरप्पो य ।।

वृ- न च एकार्थे एकस्मिन्पात्रे तेन त्वग्दोषवता सह साधवो भुंजते । कुत इत्याह यतो लालादोषेण संक्रामति व्याधिः । तथा स तस्य त्वग्दोषवत स्वेदप्रस्वेदो वर्ज्यते । तथा जल्लः शरीरमलस्तथा तत्सत्कानि पात्रपटलानि तथा आन्तरकल्पश्च परिहियते व्याधिसंक्रमभयात्तथा चाह-

[भा.२७८८] एएहिं कमइ वाही एत्थं खलु सेउएण दिट्ठंतो ।
कुट्ठय कच्छुयसिवं नयनामय कामलादीवा ।।

वृ- एतैर्जल्लादिभिर्व्याधिस्त्वग्दोषव्याधिः संक्रामति । अत्र दृष्टान्तः खलु सेतुकेन (सिद्धकेन) तत एतानि परिह्रियन्ते, । किं नाम त्वग्दोष एव उतान्यस्मिन्नपि रोगे तत आह-कुष्टे क्षयव्याधौ कच्छ्वां पामायामशिवे शीतलिकायां नयनाऽमये नयनदोषे कामलादावेषा अनन्तरोदिता प्रश्रवणादिविषया यतना द्रष्टव्या ।।

[भा.२७८९] एसा जयणा बहुस्सुए अबहुस्सु न कीरंत तु वक्खारो ।
ठावेंति एगपासे अपरिभोगंभि उ जतीणं ।।

वृ- एषा अनन्तरोदिता यतना बहुश्रुते द्रष्टव्या । अबहुश्रुतेऽप्येवं, नवरं स सम्बद्धगृहापवरके स्थाप्यते, भिन्नस्तु वक्षारोऽपवरको न क्रियते, । सम्बद्धगृहापवरकाभावे च वसतेरेकस्मिन् यतीनामपरिभोग्ये तं स्थापयन्ति, । अपान्तराले कटो दीयते, । कटाभावे भूत्या अन्तरं क्रियते । अथ किं कारणमबहुश्रुतो बहिर्न क्रियते ? तत आह-

[भा.२७९०] विवज्जतो उड्डविवज्जएहिं मा बाहिभावं अबहुस्सुतो उ ।
रुट्ठाए भूतीव तिरो करेंति, मा एक्कमेक्कं सहसा फुसेज्जा ।।

वृ- उड्डविवज्जकैरहं विवर्जित परिहृत इत्येवमबहुश्रुतो मा बहिर्भावमुपयासीदिति भिन्ने अपवरके न स्थाप्यते किन्तु वसतेरेकस्मिन् प्रदेशे, तत्रापि काष्ठादिना फलकादिरूपेण तदभावात् भूत्या वा अन्तरं

कुर्वन्ति, । मा एकैकेन त्वग्दोषेण साधवः सहसा स्पृशेयुः । अस्पन्दमानत्वग्दोषे विधिविशेषमाह-

**[भा. २७९१]** अगलंते न वक्खारो लालासेया विविज्जन तहेव ।
उस्सासभाससयनासनादीहिं होंति संकंती ।।

**वृ-** अगलति अस्पन्दमाने त्वग्दोषे तस्मादुच्छ्वासादीनां वर्जनमत आह- उच्छ्वासभाषा-शयनासनादिभिरादिशब्दात्पीठफलकादिपरिग्रहः संक्रांति व्याधिर्भवति ।।

**[भा. २७९२]** मुत्तूण जल्लपडलं धरेंति भाणं से काइयाइगते ।
सीए य दाउ कप्पं उवरिमधोयं परिहरंति ।।

**वृ-** यदि स त्वग्दोषे व्याध्युपेतः काविक्या व्युत्सर्गाय व्रजति भाजनं च तस्य धारयितव्यं भवति, तदा से तस्य कायिक्यागतस्य मुक्त्वा स्फेटयित्वा जल्लपटलं भाजनमलखरण्टितं पटलमन्ये साधवो धरन्ति यावत्स आयाति, । अथ स त्वग्दोषी ग्लानः शोते पतति नात्मीयैर्वस्त्रैः कम्बलेन च संस्तरति तदा तस्य कल्पं वस्त्रं प्रावरणाय दीयते, । सोऽपि च त्वग्दोषी आत्मीयानां वस्त्रकल्पानामुपरि प्रावृणोति । तच्च समर्पितं वस्त्रमधौतं परिहरन्ति । यदा तु तद्वस्त्रमात्मना प्रावरितुकामास्तदा प्रक्षालयित्वा प्रावृण्वन्ति ।।

**[भा. २७९३]** असहुस्सुवत्तणादीनि कुव्वतो छिक्कुजत्तियं ।
लेवेण कुव्वतु धो[illegible]मट्टियादीहिं तत्तियं ।।

**वृ-** असहस्य त्वग्दोषव्याधितस्यागाढं ग्लानीभूतस्योद्वर्त्तनमुपविष्टीकरणमित्यादि कुर्वतो यावत्स्पृष्टं त्वग्दोषगात्रादिना तावत्खेदमकुर्वन् मृत्तिकादिभिरुध्धृष्य प्रक्षालयेत् ।।

**[भा. २७९४]** असती मोय महीए कयकप्प अगलंतमत्तए निसिरे ।
सेणावकए कप्पइतरे निसिरंति जयणाए ।।

**वृ-** मोकमह्याः प्रश्रवणभूमेरभावे अगलत्यस्त्राविणि कृतकल्पे मात्रके व्युत्सृजति प्रश्रवणमन्ये साधवोऽन्यस्मिन्मात्रके पृथग्मात्रकाभावे तेनैव यत्र त्वगदोषीक व्युत्सृष्टवान् तत्रैव कृतकल्पे मात्रके इतरे साधवो यतनया यथा कायिक्या मात्रस्य च शरीरावयवस्पर्शो न भवति, तथा कायिकां निसृजन्ति ।।

**[भा. २७९५]** एसा जयणा उ तहिं कालगते पुन इमो विही होइ ।
अंतरकप्पं जल्लपडलं च अगलंति उज्झंति ।।

**वृ-** एषा अनन्तरोदिता यतना तत्रगलत्यगलति वा त्वग्दोषवति कालगते पुनस्त्वगदोषवति विधिरयं वक्ष्यमाणो भवति, तत्र प्रथमतो अगलत्याह-आन्तरं कल्पं भाजनस्य जल्लपटलमुपरितनं वस्त्रमेते द्वे अपि वस्त्रे उज्झंति परिष्ठापयन्ति । किं कारणमत आह-

**[भा. २७९६]** धोयावि न निद्दोसा तेन छड्डुंति ते दुवे ।
सेसगं तु कए कप्पे सव्वं से परिभुंजइ ।।

**वृ-** प्रक्षालिते अपि ते वस्त्रे न निर्दोषे तेन छर्द्यते परिष्ठाप्येते शेषकं तु सर्वमपि से तस्य कृते कल्पे परिभुज्यते दोषाभावात् गलति त्वग्दोषे विधिमाह-

**[भा. २७९७]** संदंतस्स वि किंचन असतीए तु भायणुक्कोसं ।
लेवड्डगमवनित्ता अनणमयं धोविउं लिंपि ।।

**वृ-** स्पन्दमानस्यापि स्पन्दमानत्वग्दोषवतो यत्किञ्चनाऽस्ति तत्सर्वं परिष्ठाप्यते केवलं यदि भाजनं नास्ति सति वा भाजने यदि तद्भाजनं सलक्षणं तदा तदेकभाजनमुत्कृष्टं मुक्त्वा शेषं परिष्ठाप्यते । तत्रापि

लेपभृक्तं यापनीय उष्णोदकादिभिः प्रक्षाल्यान्यमयमिव कृत्वा पुनः लिम्पेत् ततः परिभुञ्जीत ।।

[भा.२७९८] अगलंतमसंसेवी असती कप्पे काउ भुंजंति ।
एसा जयणा उ भवे सव्वेसिं तेसिं नायव्वा ।।

वृ- यदि कायिकीभूमिर्न विद्यते बहिश्च सागारिकस्तथा शेषसाधूनामरोगाणां मात्रकमगलन् अस्पन्दमानत्वग्दोषवान् सेवते किमुक्तं भवति- कायिकी तस्मिन् मात्रके व्युत्सृजसि ततः कृतेकल्पे-ऽरोगाः तस्मिन् व्युत्सृजन्ति यदि पुनरकृते कल्पे व्युत्सृजन्ति तदा प्रायश्चित्तं चतुर्गुरुकं, । एषा यतना सर्वेषां गलत्त्वग्दोषिणामन्येषां च क्षयव्याध्याद्युपेतानां ज्ञातव्या ।

**मू. (१५५)** *जत्थ एए बहवे इत्थीओ य पुरिसा य पण्हावेंति, तत्थ से समणे निग्गंथे अन्नयरंसि अचित्तंसि सोयंसि सुक्कपोग्गले निग्घायमाणे हत्थकम्मपडिसेवणपत्ते आवज्जइ मासियं परिहारट्ठाणं अनुग्घाइयं ।*

[भा.२७९९] एगानियस्स दोसा केत्तिय भवसो उ सुत्तसंबंधो ।
कारणनिवासिनो वा दुविहा सेविस्स पच्छित्तं ।।

वृ- एकाकिनो दोषा के इति शिष्य [illegible] सूत्रस्य सम्बन्धः, । अथवा कारणनिवासिनो द्विविधासेविनः सचित्तासेविनोऽचित्तासेविनश्च किं प्रायश्चित्तमिति परप्रश्नमुपजीव्य प्रायश्चित्तप्रतिपादनाय सूत्रद्वयमाहेति सम्बन्धः, अनेन सम्बन्धेनाऽऽयातस्यास्य व्याख्या- यत्र यस्मिन् प्रदेशे प्रत्यक्षत उपलभ्यमानाः स्त्रियः पुरुषाश्च प्रस्नुवन्ति मैथुनकर्म प्रारम्भन्ते तत्र तस्मिन् प्रदेशे प्रदेशे मैथुनकर्म दृष्ट्वा कश्चिदुदीर्णमोहः स श्रमणो निर्ग्रन्थोऽन्यतरस्मिन्नचित्ते हस्तकर्माद्युचिते युगच्छिद्रनलिकादौ श्रोत्रवति शुक्रपुद्गलान् निघातयन् शुक्रपुद्गलनिर्घाताय हस्तकर्मप्रवेशना प्रसक्तो भवति । स च तथा प्रसक्त आपद्यते अनुद्घातितं गुरुकं मासिकं परिहारस्थानं प्रायश्चित्तस्थानं । तथा यत्रैते बहवः स्त्रियः पुरुषाश्च प्रस्नुवन्ति मैथुनकर्मप्रारम्भे तत्र तत् दृष्ट्वा कश्चित् स श्रमणो निर्ग्रन्थोऽन्यतरस्मिन्नचित्ते प्रतिमादौ श्रोत्रवति शुक्रपुद्गलान् निर्घातयन् मैथुनप्रतिसेवनाप्रसक्तो भवति, । स च तथा प्रसक्त पद्यते चातुर्मासिकमनुद्घातितं परिहारस्थानमित्येष सूत्रसंक्षेपार्थः ।

[भा.२८००] बाहिं वक्खारट्ठिए महिलादागम अवारणे गुरुगा ।
वारण पेसे पेल्लणमुदए पडिसेवणा भणिया ।।

वृ- बहिर्वक्षस्कारे अपवरके स्थिते त्वग्दोषवति तत्र निवेशनादौ वा कृतसङ्केता स्त्री सखीकं वा पुरुषः समागच्छेत् । स चागच्छन् वारयितव्योऽवारणे प्रायश्चित्तं चत्वारो गुरुकाः । वारणेत्यादि तत्र यथा वारणं तथा वक्तव्यम् । अथ बहिर्वर्षं गाढं पतित उपलक्षणमेतत् । स्तेनाः स्वापदानि वा बहिर्विद्यन्ते तेन ते न निर्गच्छन्ति । तदा तेष्वनिर्गच्छत्स्वधिकृतसूत्रस्यावकाशः तथा साधोः स्त्रिया प्रेरणा क्रियते । तथा प्रेरणायां तथा उदये वेदोदये सूत्रे प्रतिसेवणा भणिता । किमुक्तं भवति । प्रेरणायामुदये चाधिकृत-सूत्रस्योपनिपातस्तत्र वारणप्रतिपादनार्थमाह-

[भा.२८०१] पडिसेहो पुव्वुत्तो, उज्जु अनुज्जुमिहुणे चउत्थंमि ।
उ निग्गममनिग्गमे विजहिं च सुत्तस्स पारंभो ।।

वृ- वारणं प्रतिषेधः । स च कल्पाध्ययने चतुर्थोद्देशके पूर्वमुक्तस्तथा तस्मिन् मिथुनमृजु किंवा अनृजु इत्याद्यपि यद्वक्तव्यम् । ततस्तत्रैवाभिहितं तथा सखीकस्य पुरुषस्य यथा च सति निर्गमो भवति

यथा वाऽनिर्गम एतदपि तत्रैव व्याख्यातम् जहिं च सुत्तस्स पारंभो इत्येतत् पश्चाद्व्याख्यास्यते ।। गतं वारणद्वारमधुना उदये प्रतिसेवनेति व्याचिख्यासुस्तान् प्रतिसेवमानान् दृष्ट्वा कोऽपि वेदोदयवशात् येषु येषु स्थानेषु प्रतिसेवनामारमते, तानि प्रतिपादयति ।।

**[भा.२८०२]** जुगच्छिद्दनालिगादिसु पढम जामादि सेवणा सोही ।
मूलादी कप्पंमि या पुव्वुत्ता, पंचमजामे भवे सुत्तं ।।

**वृ-** युगच्छिद्रे नालिकायामादिशब्दात्तथाविधान्यवस्तुपरिग्रहः, तेषु युगच्छिद्रनालिकादिषु प्रथमयामासेवने प्रथमयामादारो [illegible] पूर्वं करकर्मकरणे उक्ता, सा चैवं यदि रात्रेः प्रथमयामे युगच्छिद्रेण नालिकायां करकर्म करोति तदा प्रायश्चित्तमूलं, द्वितीयं यामे च्छेदः, तृतीये यामे षड् गुरु चतुर्थे यामे चतुर्गुरु । प्रभाते दिवसस्य प्रथमयामे रात्रिगतप्रथमयामापेक्षया पञ्चमे यामे मासगुरुस्तथा चाह - पञ्चमे यामे भवति सूत्रम् - पञ्चमयामविषयमधिकृतसूत्रमिति भावः । एतेन यदुक्तं प्राक् यत्रच सूत्रस्य प्रारम्भस्तद्वक्ष्ये इति तद्भावितम् ।।

**मू.** *(१५५... वर्तते) जत्थ एए बहवे इत्थिओ य पुरिसाय पण्हावेंति तत्थ से समणे निग्गंथे अन्नयरंसि अचित्तंसि सोयंसि सुक्क पुग्गले निग्घाएमाणे मेहुणपडिसेवणपत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अनुग्घाइयं ।*

**[भा.२८०३]** दुविहच्चा पडिमेयरसन्निहितेतरअचित्तसचित्ते ।
बाहिं व देउलादिसु सोही तेसिं तु पुव्वुत्ता ।।

**वृ-** अर्चा द्विविधा । तद्यथा-अचित्ता सचित्ता च । तत्राचित्ता द्विविधा-प्रतिमा इतरा च । इतरा नाम स्त्रीशरीरं निर्जीवं । एकैका पुनर्द्विविधा-सन्निहिता असन्निहिता असन्निहित च । एतेषु सर्वेष्वपि स्थानेषु प्रतिसेवनायां प्रथमे रात्रेर्यामे मूलं, द्वितीये च्छेदः, तृतीये षड्गुरु, चतुर्थे चतुर्गुरु पञ्चमेऽपि चतुर्गुरु सचित्ता स्त्रीशरीरं तत्राग्रे विधिर्वक्ष्यते । तत्र ग्रामादीनामन्तरुक्तं बहिरधिकृत्याह - बहिर्देवकुलादिषु प्रतिमादिकमचित्तमासेवमानस्य करकर्म वा कुर्वतस्तेषां भावानां शोधिः पूर्वोक्ता अनन्तरोक्ता द्रष्टव्या । करकर्म कुर्वतः पञ्चमे यामे मासगुरु प्रतिमाद्यचित्तासेवने चतुर्गुरु इत्यर्थः सम्प्रति या प्रेरणा पूर्वमुक्ता तां भावयति-

**[भा.२८०४]** संगारदिन्न उ एसा सातितं वच्चेहिं अपेच्छंती ।
पेलेज्जवतं कुलडा पुत्तठा देज्ज रूवं वा ।।

**वृ-** साधुं कायिक्यादिनिमित्तं निर्गच्छन्तं दृष्ट्वा सा कुलटा चिन्तयेत् स एष आगतो येन मम संकेतो दत्तः । एवं चिन्तयित्वा तं साधुं गृह्णीयात् । साधुश्च तत्तथाग्रहणमास्वादेयत् । तथा च सति धर्मविराधना । अथवा तं दत्तसंकेतं पुरुषमपेक्षमाणा तं कायिक्यादिविनिर्गतं साधुं प्रेरयेत् तत्रापि धर्मविराधना यदि वा काऽपि महिला तस्य साधो रूपं रमणीयं दृष्ट्वा 'ईदृशो मम पुत्रो भूयात्' इति पुत्रार्था सीत साधुमाददीत । यदि नेच्छति ततोऽहमुड्डाहं करिष्यामि । ततो धर्मविराधना अत्रैव प्रायश्चित्तविधिमाह-

**[भा.२८०५]** जइ सेव पढमजामे मूलं सेसेसु गुरुगावच्छेल ।
अहवादिव्वाईयं सचित्तं होइ नायव्वं ।।

**वृ-** यदि प्रागुक्त प्रेरणावशात् स्त्रियं रात्रेः प्रथमयामे सेवते तदा प्रायश्चित्तं मूलं । द्वितीये यामे च्छेदस्तृतीये षट् गुरुकाः । चतुर्थे चत्वारो गुरुकाः । पञ्चमेऽपि चत्वारो गुरुका इति । तदेवं प्रेरणा-

व्याख्यानद्वारेण सचित्तमचित्तं व्याख्यातमथवान्यथा सचित्तमचित्तं तथा चाह- अथवा सचित्तं भवति ज्ञातव्य दिव्यादिकं दिव्यं तैर्यग्योनं मानुषं च प्रतिपिपादयिषुराह-

[भा.२८०६] जं सासु होति तिविं ना दिव्वपासवं व संगीयं ।
जह वुतं उवहाणं न तं न पुनं इहावणं ।।

**वृ-** असवः प्राणाः सह असवो यस्य येन वा तत् सासु-सचित्तमित्यर्थः । यत्तु सासुसजिवत्तं तत्रिधा त्रिप्रकारं भवति । दिव्यं मानुषं पाशवं च । तत्र मानुषं त्रितयं सचित्तं, तद्यथा-जघन्यमध्यममुत्कृष्टं च तत्र जघन्यं प्राकृतं, मध्यमं कौटुंबमुत्कृष्टं दाण्डिनं । यथा त्रिविधं मानुषं दिव्यमपि जघन्यादिभेदभिन्नं त्रिधा, पाशवमपि च त्रिधा जघन्यादिभेदतः सङ्गीतं व्याख्यातं यथा कल्पाध्ययने तथात्रापि व्याख्येयं यथा चोक्तमत्रोपधानं प्रायश्चित्तं तदपि न तत्पूर्णमिहापत्रं न वक्तव्यं किन्तु वक्तव्यं । द्वयोर्नञोः प्रकृत्यर्थं च गमनात् । अत्रैवापवादमाह-

[भा.२८०७] बितियपदे तिगिच्छं निवीइयमाइयं अतिक्कंते ।
ताहे इमेण विहिना जयणा तत्थ सेवेज्जा ।।

**वृ-** चिकित्सां निर्विकृतिकादिकां [illegible] हस्तकर्मकरणतो वा अनुपशाम्यति वेदोदये ततो द्वितीयपदे अपवादपदे अनेन वक्ष्यमाणेन विधिना यतनया सेवेत ।

[भा.२८०८] खल खिलमदिट्ठविसयं विसत्त अव्वंगवं गणं काउं ।
ताहे इमंमि लेसे गीयत्थजतो निलिज्जेज्जा ।।

**वृ-** खलं प्रतीतं । यत्र सजीवस्यापि सेवने वैराग्यमुपजायते किं पुनर्निर्जीवस्यासेवने । तत्र निर्जीवप्रतिपादनार्थमाह-खलखिलं खलखिलं निर्जीवमित्यर्थः । तत्कथं सेवते इत्यत आह- अदृष्टविषयं यथा भवत्येवं सेवेत रात्रौ सेवतेति भावः । पुनः कथ मित्याह- विसत्त्वं विगताः सत्वा यत्र तत् विसत्त्वं विगतजनमित्यर्थः । अव्यङ्गं, नाम यस्य क्षतं क्षतकृतं न विद्यते तस्य व्यङ्गनं कृत्वा क्षतं कृत्वा अन्यं वेतालोत्थानदोषप्रसजनात् । ततोऽस्मिन् निर्जीवलेश्ये संलग्ने मूत्रविवरे इत्यर्थः । गीतार्थो यती-ऽक्तद्विष्टः स निलीयत् शुक्रपुद्गलान्निष्कशयेत् ।।

**मू. (१५६)** *नो कप्पइ निग्गंथाण वा निग्गंथीण वा निग्गंथिं अन्नगणाओ आगयं खुयायारं सबलायारं भिन्नायारं संकिलिट्ठायारचित्तं तस्स ठाणस्स अनालोयावेत्ता अपडिक्कमावेत्ता अनिंदावेत्ता अगरहावेत्ता अविउट्टावेत्ता अविसोहावेत्ता अकरणाए अनब्भुट्ठावेत्ता अहारिहं पायच्छित्तं तवोकम्मं पडिवज्जावेत्ता उवट्ठावेत्तए वा संभुंजित्तए वा तासिंहत्तरियं दिसं वा अनुदिसं वा उद्दिसित्तए वा धारेत्तए वा ।*

**मू. (१५७)** *कप्पइ निग्गंथाण वा अन्नगणाओ आगयं जाव ठाणस्स आलोयावेत्ता पडिक्कमावेत्ता निन्दावेत्ता गरहावेत्ता विउट्टावेत्ता विसोहावेत्ता अकरणाए अब्भुट्ठावेत्ता अहारिहं पायच्छित्तं तवोकम्म पडिवज्जावेत्ता उवट्ठावेत्तए वा धारेत्तए वा ।*

**मू. (१५८)** *नो कप्पइ निग्गंथाण वा निग्गंथीण वा निग्गंथं खुयायारं जाव अपडिक्कमावेत्ता अहारिहं पायच्छित्तं अपडिवज्जावेत्ता उवट्ठावेत्तए वा संभुंजित्तए वा संवसित्तए वा तीसे इत्तरियं दिसं वा अनुदिसं वा उद्दिसित्तए वा धारेत्तए वा ।*

[भा.२८०९] अभिनिव्वगडादीसु व समणीणं पडिस्सगस्स दोसेणं ।

दोसबहुला गणतो अवक्कमे काइ संबंधो ।।

वृ- अनन्तरसूत्रेष्वभिनिर्विगडादिका वसतिरुक्ता । तासु च अभिनिर्विगडादिकासु संयतीनां मध्ये उपाश्रयस्य दोषेण कापि दोषबहुला सामाचारी प्रमादपरा सती गणादपक्रामेत् । तस्या अनेन सूत्रेण विधिरुच्यते इत्येष सूत्रसम्बन्धः ।। प्रकारान्तरेण सम्बन्धमाह-

**[भा. २८१०]** इत्थी पण्हाइ जहिं व सोयए तेन सबलियायारी ।
उज्जुय विहारमनं उव्वेज्ज बिइतो भवे जोगो ।।

वृ- यत्र स्त्री उपलक्षणमेतत् पुरुषो वा प्रश्नौति प्रस्पन्दते मिथुनकर्म समारभते इत्यर्थः । वाशब्दः सम्बन्धस्य प्रकारान्तरोपदर्शने । तत्र तत् दृष्ट्वा तेन हेतुना काचित् उदीर्णप्रबलवेदा सचित्ते वाऽचित्ते वा तत्राचित्ते मृतकस्य सचित्ते पुरुषलिङ्गे तिर्यग्योनिकलिङ्गे वा शबलिताचारा सती अन्यदुद्यतविहारमुपेयात् आश्रयेत्तस्या विधिरनेनोच्यते इत्येष द्वितीयो योगः सम्बन्धो अनेन सम्बन्धेना-यातस्यास्य व्याख्या न कल्पते-निर्ग्रन्थीनां वा निर्ग्रन्थीनां वा निर्ग्रन्थीं क्षत्ताचारां शबलाचारां संक्लिष्टाचारां क्षतादीनां शब्दानामर्थः प्राग्वत् । तस्य स्थानस्य अनालोचयित्वा यस्मिन् सेविते सा क्षताचाराऽभवत् तत्स्थानमअनालोच्य तस्मात्स्थानादप्रतिक्राम्य तथा तस्य स्थानस्य विषये प्रायश्चित्तमप्रतिपाद्य उपस्थापयितुं वा संभोक्तुं वा संवस्तुं वा तस्यां इत्वरां दिशमनुदिशं वा उद्देष्टुमनुज्ञापयितुं नापि तस्याः स्वयं धारयितुं कल्पते इत्येष सूत्राक्षरार्थः ।। सम्प्रति भाष्यविस्तरः । तत्र परप्रश्नावकाशमाह-

**[भा. २८११]** जा होइ परिभवंतीह निग्गया सीयए कहं सत्ती ।
संवासमाइएहिं स छलिज्जइ उज्जमंतावी ।।

वृ- या प्रमादगणं परिभवन्ती धर्मश्रद्धया गृहवासादिह निर्गता सा कथं सीदति येन सा क्षताचारापि जाता । अत्र सूरिराह-संवासादिभिः सा उद्यच्छन्त्यपि उद्यमं कुर्वत्यपि शबलो क्रियते । इयमत्र भावना-सा एकाकीत्वेन विहरन्ती गृहस्थाभिः समं वसन्ती स्वशक्त्यनुसारेणोद्यमं कुर्वत्यपि छलनां प्राप्नोति । आदिशब्दाद्गोचरचर्यायां विचारभूमौ वा यतः सत्येकाकिनी छलनामाप्नुयादिति । अथैकाकिनी सा कथं जातेत्यत आह-

**[भा. २८१२]** अद्धाण निग्गयादी कप्पट्ठी संभरंति जा बितिया ।
आगमनदेसभंगे चउत्थी पुन मग्गए सिक्खं ।।

वृ- अध्वनि अवमौदर्येणाशिवेन वा निर्गता । आदिशब्दात् राजद्विष्टेन वा सार्थेन या स्तेनैरभिहृटता, निर्गताऽपि परिगृह्यते । एषा प्रथमा, द्वितीया कप्पट्ठिं दुहितरं संस्मरन्ती एकाकिनी जाता । तृतीया परचक्रगमनेन देशभङ्गे एकाकिनी । चतुर्थी शिक्षां मृगयमाणा एकाकिनी जाता ।

**[भा. २८१३]** गोउम्मुगमादीया नाया पुव्वमुदाहडा उमे ।
असिवे य दुट्ठे य सत्थे वा तेनभिहते ।।

वृ- अवमौदर्ये संयत्यो न संस्तरंति । तत्र गोज्ञातं पूर्वमुदाहृतं यथा अल्पं गोब्राह्मणं नन्दति तत एतत् ज्ञातमवधार्य या यत्र संस्तरति सा तत्र गच्छति, अशिवे समुपस्थिते उल्मुकज्ञातमुदाहृतं पूर्वं कल्पाध्ययने यथा उल्मुकानि बहूनि मिलितानि ज्वलन्ति एकं द्वे वा न ज्वलतः, । एवमशिवमपि बहुषु गाढमुपतिष्ठति । नैकस्मिन् द्वयोर्वा ततो वृन्दघाते एकाकिनी जाता । एताभ्यां प्रकाराभ्यामध्वानं प्राप्ता । तथा राजद्विष्टेन पूर्वभणितेनैकाकिनी जायते । सार्थे वा स्तेनैरभिहृटता एकाकिनी जायते, ततः सा

आचार्योपाध्यायप्रवर्तिनीविरहिता निर्द्धर्म्मीभूता पार्श्वस्थादिविहारं विहृत्य पुनरपि संवेगमापान्ना कंचिदाचार्यमुपाध्यायं गणावच्छेदकं वा द्रष्टुमुपस्थिता विज्ञपयति, -यथाहं पार्श्वस्थादिविहारात् प्रतिक्रमामिततो मम सङ्ग्रहं कुरुत यावदाचार्यमुपाध्यायं त्वात्मीयं पश्यामि । एवमन्यगणादागतं । तत्स्थानादप्रतिक्रा च न कल्पते उपस्थापयितुं, नापि षड्विधेन संभोगेन, यथा संभवमार्यिकाणां संयतानां च संभोक्तुं नापि यावदात्मीयमाचार्यादिकं न गच्छति, तावदित्वर आचार्य एषा दिगित्युच्यते, । इत्वर उपाध्यायप्रवर्तिनी वा दीयते, एषा अनुदिक् गतमध्वानं प्रतिपन्नादीतिद्वारं अधुना कप्पट्टि संभरंति जा वितिया इति व्याख्यानार्थमाह-

[भा.२८१४] अन्नत्थ दिक्खिया थेरी तीसे धूया य अन्नहिं ।
वारिज्जंति एसा एज्जा धूयानेहेन तं गणं ।।

वृ- अन्यत्र गच्छे स्थविरा माता दीक्षिता, अन्यत्र गच्छान्तरे से तस्य दुहिता दीक्षिता । ततः सा माता दुहितुः स्नेहेन आत्मीयानाचार्योपाध्यायान् पृच्छति व्रजामितां दुहितरं द्रष्टुं । सा वार्यमाणाप्याचार्योपाध्यायैर्निर्गता । एवमेकाकिनी सा जाता एकाकितया निर्धर्मीभूता यत्र सा दुहिता दीक्षिताऽस्ति, तंगणमागता दृष्टा दुहिता संवेगमापन्ना, शेषं प्राग्वत् ।। इदानीमागमनदेशं भङ्गे इत्यादिव्याख्यानार्थमाह-

[भा.२८१५] परचक्केण खुंमि विद्दुते बोहिकाइणा ।
जहा सिग्घे पणंठासु एज्ज एगा असहायिका ।।

वृ- परचक्रेण बोधिकादिना बोधिका म्लेच्छविशेषा तदादिना विद्रिते अभिद्रुते राष्ट्रे तथा शीध्रमार्यिकाः प्रनष्टा यथा तासु प्रनष्टासु मध्ये सा एकाऽसहायिका जाता । एकाकितया धर्मरहिता बभूव । ततो गणान्तरं दृष्ट्वा पुनः संवेगमापन्ना, शेषमध्वानं प्रतिपन्ना इव वाच्यं अधुना चतुर्थी पुनर्मृगयते शिक्षाम् ।

[भा.२८१६] सोऊण काइ धम्मं उवसंता परिनया य पव्वज्जं ।
निक्खंत मंदपुना सो चेव जहंतु आरंभो ।।

वृ- श्रुत्वा काचन संविग्नानां पार्श्वे धर्मं श्रुत्वा उपशान्ता प्रव्रज्यांप्रति परिणीता च सा च निष्क्रान्ता पार्श्वस्थादीनां समीपे ततः सा अचिन्तयत्, । यस्मादारम्भादसंयमरुपात् भीताहं मन्दपुण्या स एव मे समापतित आरम्भो यस्मादत्राहं प्रव्रजिता वर्ते इति । एतदेवाह-

[भा.२८१७] आभीरि पव्वविताण गया ते आयवट्ठिया ।
जह तत्थेतरे पत्ता निक्खमंति तमुज्जयं ।।

वृ- आयतो मोक्षस्तत्र स्थिता आयतस्थिता उद्यतविहारिणः संविग्ना इत्यर्थः । ते आभीरीं काञ्चन प्रव्राज्यान्यत्र विहारक्रमेण गता । अथानन्तरं तत्र ग्रामे इतरे पार्श्वस्थादयः प्राप्तास्ते तामुद्यतां निष्क्रामयन्ति । सा च पूर्वप्रकारेणासंयमाद्भीतातत्र समाधिं न लभते ।।

[भा.२८१८] दट्ठुं वा सोउं वा मग्गंती तु पडिच्छिया विहिना ।
संविग्गसिक्खमग्गइ पवत्तिनिमायरिय उवज्झं ।।

वृ- ततः सा मूलधर्मग्राहकानाचार्यन्मृगयन्ती द्रष्टुं वा श्रोतुं वा स्नानादिसमवसरणादौ समागतान् संविग्नशिक्षां ग्रहणशिक्षामासेवनाशिक्षां च मार्गयति । अन्यां च प्रवर्तिनीमन्यमाचार्यमन्यं चोपाध्यायं सा चैवं मार्गयति विधिना तैः प्रतीच्छिता स्वीकृता कर्तव्या । यत्र तत्र ते दृष्टाः श्रुता वा मूलधर्मग्राहका यथा च तैर्विधिना प्रतीच्छनीया तदेतदभिधित्सुराह-

[भा.२८१९] ण्हाणाइएसु मिलिया पव्वावेंते भणंति ते तस्से ।
होहव उज्जुयचरणा इमं वइनिं वयं नेमो ।।

वृ- स्नानादि समवसरणं गतया तया ते मूलधर्मग्राहका आचार्या दृष्टा भवेयुः श्रुता वा यथा अमुकग्रामनगरादौ वर्तन्ते ततः स्नानादिसमवसरणे तत्र गत्वा तेषां मिलिता शिष्यां प्रवर्तिन्यादिकं च याचते ततो विधिना तस्याः प्रतीच्छनं कुर्वन्ति । तमेव विधिमाह- ते मूलधर्मग्राहका आचार्यास्तस्याः प्रव्राजयतः प्रव्राजकान् आचार्यान् भणन्ति । यूयं वा भवत उद्यतचरणा अथवा इमां व्रतिनीं नयामः ।।

[भा.२८२०] भन्नति पवत्तणी यातेसि सति विसज्जे एयति ।
निंतंति विसज्जिए नयंती अविसज्जंतीए मासलहुं ।।

वृ- तेषां प्रव्राजकानामाचार्योपाध्यानामसति अभावे प्रवर्तिनी भण्यते-यथैतां व्रतिनीं विसर्जय । एवं भणिते यदि विसर्जयति ततो विसर्जिते विसर्जने कृते नयन्ति । अथैवं भणितापि सती सा प्रवर्तिनी न विसर्जयति तर्हि तस्या अविसर्जयन्त्याः प्रायश्चित्तं मासलघु । अत्रायं विधिः -प्रथमतः सा प्रवर्तिनी संयत्या भण्यते । यथा विसर्जयेमां साध्वीमिति । एवमुक्ता यदि न विसर्जयति तदा मासलघु ।।

[भा.२८२१] वसभे य २ उवज्झाए ३ आयरि ४ कुलेण ५ वावि थेरेण ।
गणथेरेण गणेण व ६ संघथेरेण संघेण ७ ।।

[भा.२८२२] भणियान विसज्जंती लहुगादी सोही जाव मूलं तु ।
नीयम हरिऊण ततो अन्नो से दिज्जते उ गणो ।।

वृ- यदा संयत्या भणितेऽपि सा प्रवर्तिनी न विसर्जयति तदा (२) वृषभो गीतार्थः कोऽपि साधुर्गत्वा तामापृच्छति । तत्रापि यदि न विसर्जयति तदा प्रायश्चित्तं चतुर्लघु । ततो यः (३) साधुरुपाध्यायस्थानं प्राप्तस्तेन आपृच्छ्यते । तत्राप्यविसर्जने चतुर्गुरु ततो यः साधु (४) रचार्यस्थानं प्राप्तः स तामापृच्छति । यदि न विसर्जयति तर्हि तस्याः प्रायश्चित्तं षड्लघु । ततः (५) कुलेन कुलस्थविरेण वा भणनीया । तत्राविसर्जने षड्गुरु । ततो गणेण (६) गणस्थविरेण वा सा प्रज्ञापनीया तथाप्यमुत्कलने प्रायश्चित्तं च्छेदस्तदनन्तरं सङ्घेन सङ्घस्थविरेण वा सा भणनीया तथापि चेन्न विसर्जयति तर्हि प्रायश्चित्तं तस्या मूलं अन्यच्च यदि वा सङ्घमपक्रामति । ततस्तस्याः सकाशात् हृत्वा से तस्या अन्यो गणो दीयतेऽन्यस्याः प्रवर्तिन्याः सा समर्प्यते इत्यर्थः ।।

[भा.२८२३] एमेव उवज्झाए अविसज्जंते हवंति लहुगाओ ।
भन्नंते गुरुगादी जाव नवमं तु ।।

[भा.२८२४] एमेवय आयरिए अविसज्जंते हवंति गुरुगा उ ।
वसभाईएहिं भणिए छल्लहुगाई उ जा चरिमे ।।

वृ- संयत्या भणितया स्वयं प्रवर्तिन्यास्तस्यामविसर्जनायां यदि तस्या उपाध्यायो न तां भणति यथा विसर्जयेमां साध्वीमिति तदा तस्य प्रायश्चित्तं लघुकाः । उपाध्यायातिक्रमणे यद्याचार्यो न भणति यथेमां विसर्जयेति, तदा तस्यापि प्रायश्चित्तं चतुर्लघु एवं तावत् प्रवर्तिन्यामविसर्जयन्त्यामुक्त-मिदानीमाचार्यस्योपाध्यायस्य वा अविसर्जयतः प्रतिपाद्यते । एवमेव अनेनैव प्रकारेणोपाध्याये अविसर्जयति प्रथमतो भवन्ति चत्वारो लघुकाः । ततो वृषभादिक्रमेण प्रायश्चित्तं वर्धमानं तावत् द्रष्टव्यं यावत् पर्यन्ते नवममनवस्थाप्यलक्षणं प्रायश्चित्तं आचार्येण प्रथमतोऽभण्यंते गुरुकाश्चत्वार-

स्ततस्तदादिके वृषभादिक्रमे प्रवर्धमानं तावद्वसेयं यावत्पर्यन्ते चरमं पाराञ्चितमितीयमक्षरयोजना भावार्थस्त्वयम्-संयत्या प्रेषणे प्रवर्तिन्या विसर्जितायामविसर्जितायां वा यद्युपाध्यायो न विसर्जयति तदा तस्य प्रायश्चित्तं चत्वारो लघुकास्ततोऽन्येन साधुना गीतार्थेन स उपाध्यायो भण्यते। तथाप्यमुत्कलने चतुर्गुरु ततो यः साधुरुपाध्यायस्थानं प्राप्तस्तेन स प्रज्ञास्तेन स प्रज्ञाप्यते तथाप्य विसर्जने षड्लघु तदनन्तरमाचार्यस्थानं प्राप्तः साधुः प्रेष्यते तेनाप्यविसर्जने षड्गुरु कुलेन ततः कुलस्थविरेण वा भावनीयस्तत्राविसर्जने छेदः। गणेन गणस्थविरेण वा भणनेऽप्यविसर्जने मूलं सङ्घेन स्थविरेण वा प्रज्ञापनायामप्यमुत्कलने ऽनवस्थाप्यं तथा संयत्याभणने प्रवर्तिन्या विसर्जितायामविसर्जितायांवा यदि आचार्यो न विसर्जयति तदा तस्य प्रायश्चित्तं चतुर्गुरुकम् तदनन्तरं तस्य समीपे वृषभः प्रेष्यते तस्याप्यमुत्कलने षट्लघु। तत उपाध्यायस्थानप्राप्तेन साधुना भणनेऽप्यविसर्जने षट् गुरु। तदनन्तरमाचार्यस्थानप्राप्तः साधुः प्रेषणीयः। तस्याप्यमुत्कलने छेदः। कुलेन कुलस्थविरेण भणितेऽप्यविसर्जने मूलं गणेन गणस्थविरेण वाऽनवस्थाप्यं सङ्घेन सङ्घस्थविरेण वा पाराञ्चितं संघातिक्रमे तस्या गणादपहरणं सङ्घेन। तथा चाह-

[भा.२८२५] साहत्थमुंडियं गच्छवासिणं बंधवेविभगंती।
अन्नस्स देइ संघो नाणचरणरक्खणा जत्थ॥

वृ- पार्श्वस्थादिभिः स्वहस्तमुण्डितां गच्छवासिनीं पार्श्वस्थादि गच्छवासिनीं वा बान्धवा उद्यत-विहारिणो ये संसारान्निस्तारयन्ति तान् विमार्गयन्ती अन्यस्याचार्यस्योपाध्यायस्यान्यस्याश्च प्रवर्तिन्याः सङ्घो ददाति। यत्र तस्या ज्ञानचरणरक्षणा भवति किमित्येवमत आह-

[भा.२८२६] नाणे चरणस्स पव्वज्जकारणं नाणचरणतो सिद्धी।
जहि नाणचरणवुड्ढी अज्जाणं तहिं वुत्तं॥

वृ- प्रव्रज्याकारणं ज्ञानस्य चरणस्य च ज्ञानचरणनिमित्तं प्रव्रज्या प्रतिपद्यते इति भावः। यतो ज्ञानचरणतः सिद्धिर्नान्यस्मात्ततो यत्र ज्ञानचरणवृद्धिस्तत्रार्याणामार्यिकाणां स्थानप्रवस्थानमुक्तं तीर्थकरगणधरैः। पार्श्वस्थादीनां सकाशे ज्ञानचरणे न ततस्तेभ्यस्तामपहृत्य सङ्घो अन्यस्य ददाति॥

[भा.२८२७] मोत्तूण इत्थ चरिमं इत्तरितो होइ ऊ दिसाबंधो।
उवसंपदिक्खिताए आवकहाए दिसाबंधो॥

वृ- अत्र एतेषु चतसृषु मध्ये चरमां चउत्थी पुन मग्गए सिक्खमित्येवंरूपां मुक्त्वा शेषाणां तिसृणामध्वनिर्गतादिकादीनां दिग्बन्ध इत्वरो भवति। चरमायाः पुनरुपसम्पद्दीक्षिताया यावत्कथिको दिग्बन्धः।

सू. (१५९) *कप्पइ निग्गंथाण वा निग्गंथीण वा निग्गंथं अन्नगणाओ आगयं खुयायारं जाव तस्स ठाणस्स आलोयावेत्ता पडिक्कमावेत्ता निन्दावेत्ता गरहावेत्ता विउट्टावेत्ता विसोहावेत्ता अकरणाए अब्भुट्ठावेत्ता अहारिहं पायच्छित्तं पडिवज्जावेत्ता उवट्ठावेत्तए वा धारेत्तए वा॥*

वृ- अस्याक्षरगमनिका भाष्यविस्तरश्च प्राग्वत् द्रष्टव्यस्तथा चाह-

[भा.२८२८] एसेव गमो नियमा निग्गंथाणंपि होइ नायव्वो।
नवरं पुन नाणत्तं अनवठ्ठप्पो य पारंची॥

वृ- एष एवानन्तरोदितो गमः प्रकारो निर्ग्रन्थानामपेत्य गणादागच्छतां भवति नियमात् ज्ञातव्यः।

नवरं पुनः प्रायश्चित्ते नानात्वं अनवस्थाप्यं पाराञ्चितं च । इयमत्र भावना-येन प्रव्रजितः स क्षुल्लको भिक्षुर्वा स चेत् संयते प्रेषिते न मुत्कलयति तदा तस्य प्रायश्चित्तं चतुर्लघु । ततो वृषभादिक्रमेण प्रायश्चित्तं पूर्वप्रकारेण वर्धमानं तावद् द्रष्टव्यं यावत्सङ्घेन सङ्घस्थविरेण वा भणनेऽप्यमुत्कलनेऽनवस्थाप्यं तथा तस्य साधुना भणनेऽप्यमुत्कलने यद्युपाध्यायस्तं प्रव्राजकं न भणति यथा विसर्जयैनमिति तदा तस्य प्रायश्चित्तं चतुर्लघु । आचार्यस्याभणेन चतुर्गुरुकस्तथा उपाध्यायः साधुप्रेषणे यदि न मुत्कलयति तदा चतुर्लघु । ततो वृषभादिक्रमेण पूर्ववद्वर्धमानं प्रायश्चित्तं तावद् द्रष्टव्यं यावत्संघातिक्रमेऽनवस्थाप्यं, आचार्यस्य तु चतुर्गुरुकादारभ्य तावद्वक्तव्यं यावत्सङ्घातिक्रमे पाराञ्चितमत्रापि निर्ग्रन्थ्या इव चत्वारो भेदास्तथा चाह-

**[भा. २८२९]**　अद्धाण निग्गयादी कप्पट्ठगसंभरंततो बिइतो ।
आगमनदेसभंगे चउत्थ उ मग्गए सिक्खं ॥

**वृ-** प्रथमोऽध्वनिर्गतादिकोऽद्वितीयः कल्पस्थकं बालकं संस्मरन्, तृतीयः परचक्रागमेन देशभङ्गे चतुर्थः पार्श्वस्थादिदीक्षितः शिक्षां मार्गयति । अमीषां च व्याख्यानं सविस्तरं प्रागवत्रिरवशेषं द्रष्टव्य-मत्राप्यचरमं मुक्त्वा शेषाणां त्रयाणामित्वरो दिग्बन्धश्चतुर्थस्य तु यावत्कथिक इति ।

<u>उद्देशकः - ६ - समाप्तः</u>

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता व्यवहार सूत्रे षष्ठ उद्देशकस्य (भद्रबाहुस्वामी रचिता निर्युक्ति युक्त) संघदासगणि विरचितं भाष्यं एवं मलयगिरि आचार्येण विरचिता टीका परिसमाप्ता ।**

## उद्देशकः - ७

व्याख्यातः षष्ठोद्देशकः । सम्प्रति सप्तम आरभ्यते । तत्र चेदमादि सूत्रम्-

**मू. (१६०)** *जे निग्गन्था य निग्गन्थीओ य संभोइया सिया, नो कप्पइ निग्गंथीणं निग्गंथा अनापुच्छित्ता निग्गंथि अन्नगणाओ आगयं खुयायारं सबलायारं भिन्नायारं संकिलिट्ठायारचित्तं तस्स ठाणस्स अनालोयवित्ता जाव पायच्छित्तं अपडिवज्जावेत्ता पुच्छित्तए वा वाएत्तए वा उवट्ठावेत्तएवा संभुञ्जितए वा संवसित्तए वा तीसे इत्तरियं दिसं वा अनुदिसं वा उद्दिसित्तए वा धारेत्तए वा ।*

**मू. (१६१)** *जे निग्गंथा य निग्गंथा य निग्गंथीओ य संभोइया सिया कप्पइ निग्गंथीणं निग्गंथं आपुच्छित्ता निग्गंथिं अन्नगणाओ आगयं खुयायारं जाव संभुंजितए वा संवसित्तए वा तीसे इत्तरियं दिसं वा अनुदिसं वा उद्दिसिए वा धारेत्तएवा ।*

**[भा. २८३०]**　निग्गंथीण हिगारे ओसरणत्ते य समनुवत्तंते ।
सत्तमए आरंभो नवरं पुन दोवि निग्गंथी ॥

**वृ-** निर्ग्रन्थी नामाधिकारेऽवसन्नत्वे षष्ठोद्देशके चरमसूत्रद्वयाऽनुवर्तमाने सप्तमे उद्देशके सूत्रद्वयस्यारम्भो भवति । तत्र यथा षष्ठोद्देशके चरमसूत्रद्वये एकस्मिन् सूत्रे निर्ग्रन्थी द्वितीये सूत्रे निर्ग्रन्थ एवमिहापि नयत आह-नवरं सूत्रद्वयेपि द्वेपि निर्ग्रन्थ्यौ एवमनेन सम्बन्धेनायातस्यास्य व्याख्याः-ये निर्ग्रन्था निर्ग्रन्थ्यश्च सांभोगिकाः स्युस्तेषां मध्ये निर्ग्रन्थीनां न कल्पते निर्ग्रन्थाननापृच्छ्यान्य-स्माद्गणा-

दागतां क्षुताचारां भिन्नाचारां संक्लिष्टाचारचित्तामसीषां श्रद्धानामर्थः प्राग्वत्, यस्मिन् स्थाने सीदति स तस्य स्थानस्य अनालोच्य अप्रतिक्रम्य प्रायश्चित्तमप्रतिपाद्य प्रष्टुं वा वाचयितुं वा उपस्थापयितुं वा षण्णां संभोगेन संभोक्तुं वा संवस्तुं वा तस्या इत्वरं दिशमाचार्य लक्षणामनुदिशं वा उपाध्यायप्रवर्तिनी लक्षणामुपदेष्टुं वा अनुज्ञातुं नापि तस्याः स्वयं धारयितुमित्येष प्रथमसूत्राक्षरार्थः ।। सम्प्रति भाष्यविस्तरः-

**[भा.२८३१]** सुत्तधम्मकहनिमित्तमादि घेत्तूण निग्गया गच्छा ।
पणवणचेइयाणं पुअं काऊण आगमनं ।।

**वृ-** कस्याप्याचार्यस्य शिष्या सा सूत्रमुपलक्षणमेतदर्थं च गृहीत्वा तथा धर्मकथाः पठित्वा निमित्तं वातीतमनागतं गृहीत्वा आदिशब्दात् विद्यामन्त्रचूर्णयोगांश्च ज्ञात्वा गच्छान्निर्गता ततः संनिमित्तादिबलेन धर्मकथा च इत्यादीनामीप्सिता जाता ततः संस्तवेन तानावृत्य चैत्यायतनप्रज्ञापनातश्चैत्यायतनं कारितवती विपुलं तत्र सत्कारसमुदयमनुभवति । अन्यदा सा महत्तरिका तस्याः संबोधनार्थं वा विहारप्रत्ययं वा चैत्यमहमुद्दिश्य वा तत्र समागता सा तस्याः शिष्या परितुष्टा तत इभ्यगृहेषु विविधान्यशनादीनि वस्त्राणि च महार्हाणि तस्या महत्तरया उत्पादयति, ततस्तस्या महत्तरिकया साऽनुशिष्टा किमद्यापि पार्श्वस्थत्वेन तिष्ठसि । कुरु संयमे समुद्योगं स्वयं वा सा उद्यंतु कामा एवं तस्यामुपस्थितायां यदि चैत्यानामन्यः शुश्रूषकोऽस्ति । ततस्तस्मात्स्थानात् प्रतिक्राम्य तां महत्तरिका नयति, अथ नास्ति चैत्यानामन्य शुश्रुषकस्ततो यदि तस्मात्स्थानात् प्रतिक्राम्य तां महत्तरिका नयति तदा चैत्याभक्ति निमित्तं तस्याः प्रायश्चित्तं चतुर्गुरुकं, । एवं पूजां महत्तरिकायाः कृत्वा महत्तरिकया सह गुरु सन्निधावागमनमेतदेवाभिधित्सुराह-

**[भा.२८३२]** धम्मकहनिमित्तेहिय विज्जामंतेहिं चुणजोगेहिं ।
इब्भादि जोसियाणं संथवदाने जिनायवनं ।।

**वृ-** धर्मकथानिमित्तं विद्यामन्त्रैश्चूर्णयोगैश्चइत्यादि । जोषित्वा प्रीतयित्वा संस्तवदाने परिचयकरणे तथाविध प्रज्ञापनया निचतनं कारितवती ।।

**[भा.२८३३]** संबोहणट्ठयाए विहारवत्ती य जिनवरमहेव ।
मपह (महय) रिया तत्थ गया निज्जरणं भत्तवत्थाणं ।।

**वृ-** तस्याः सम्बोधनार्थं विहारवृत्या वा जिनवरमहे वा तस्या महत्तरिका तत्र गता तत इभ्यगृहेषु तस्या विविधस्य भक्तस्य महार्हाणां वस्त्राणां निर्जरणं दानं तया कारितम् ।।

**[भा.२८३४]** अनुसट्ठ उज्जमंती विवज्जए चेइयाण सारवए ।
पडिवज्जंत अविज्जंतए उ गुरुगा अभत्तीए ।।

**वृ-** ततः सा महत्तरिकया संयमोद्योगकरणे समनुशिष्टाः स्वयं वा उद्यच्छन्ती वर्तते । तत्र विद्यमाने चैत्यानां सारापके सारकारके तां नेतुं प्रतिपद्यन्ते । अविद्यमाने तु चैत्यसारकारके तस्यानयेन अभक्तिनिमित्ताश्चत्वारो गुरुकास्तासां महत्तरिकाणांम प्रायश्चितम् ।।

**[भा.२८३५]** आगमनं सक्कारं हिंडंति जहिं विरुवरुवेहिं ।
लाभेण सन्निविट्ठा हिंडंती तो तहिं दिट्ठा ।।

**वृ-** एवं सत्कारं सन्मानं च प्रतिगृह्य गुरुसमीपे आगमनं ततो लाभेन वस्तुलाभेनोपेताः सन्निवृत्ता विरूपरूपैरन्यदेशसत्कैर्वस्त्रैः प्रावृतास्तत्रभिक्षां हिण्डन्ते । चैत्यवन्दनाय वा व्रजन्ति । तत्र हिण्डमाना

वृषभैर्दृष्टा एतदेव स्पष्टं भावयति-

[भा.२८३६] सक्कारिया य आया हिंडंति तहिं विरूवरूवेहिं ।
वत्थेहिं पाउयाते दिट्ठा य तहिं तु वसभेहिं ।।

वृ- सत्कारिताश्च महत्तराः प्रवृत्तकार्या यत्र गुरवस्तिष्ठन्ति तत्रायातास्तत्र च विरूपरूपै-र्नानाप्रकारैर्महार्हैर्वस्त्रैः प्रावृत्ता हिण्डन्ति । ताश्च तत्र हिण्डमाना वृषभैर्दृष्टाः ।।

[भा.२८३७] भिक्खाउ सरणंमि व अपुव्ववत्थ उ ताउ दट्ठूणं ।
गुरुकहण तासि पुच्छा अम्हे अदिन्ना नवा दिठा ।।

वृ- भक्षियां समवसरणे वा अपूर्ववस्त्रास्ता दृष्ट्वा वृषभा गुरुकथनं कृतवन्तो वषभैर्गुरोर्निवेदितं । तत आचार्येण वृषभा भणिताः । पृच्छत ता आर्याः कुतो युष्माकं तानि वस्त्राणि ततो वृषभैस्तासां समीपं गत्वा पृच्छा कर्तव्या । यथा-आर्ये नास्माभिरेतानि वस्त्राणि दत्तानि, नापि केनचिद्दीयमानानि अस्माभिर्दृष्टानि ।।

[भा.२८३८] निवेदियं च वसभे आयरिए दिट्ठ एत्थ किं जायं ।
तुम्हे अम्ह निवेयह किं तुब्भहियं नवरं दोनि ।।

[भा.२८३९] लहुगो लहुगा गुरुगा च्छम्मासा होंति लहुगुरुगा य ।
च्छेदो मूलं च तहा गणं च होउं विगिंचेज्जा ।।

वृ- अत्र द्वयोर्गाथयोर्यथासंख्येन पदघटना । सा चैवम्-संयतीभिर्यत् किमपि वस्त्रादिकं लभ्यते तत्सर्वं गुरवे निवेदनीयं अनिवेदिते प्रायश्चित्तं लघुको मासः । वसभे इति वृषभे पृच्छके वृषभेण पृच्छायां कृतायां यदि न निवेदयन्ति तदा चत्वारो लघुकाः । आचार्येऽपि प्रच्छके यदि न कथयन्ति तदा चत्वारो गुरुकाः । यदि पुनराचार्यैरधिक्षिप्ता यथा किं युष्माभिर्न निवेदितानि तदा यद्व्यावृत्ता तदा चतुर्ल-घुकमथानावृत्ताः सत्यो न कथयन्ति तदा चतुर्गुरुकम् । अथ ता ब्रुवते यद् भणन्ति तत् दृष्टं स्यात्तदा षण्मासा लघवः । अथाभिदधति किमत्रजातं यदि न निवेदितं तदा षण्मासा गुरवः प्रायश्चित्तं । अथ भाषन्ते यूयं किमस्माकं निवेदयत । अत्र प्रायश्चित्तं च्छेदः । किं युष्माकमस्मदधिकं नवरमावां परस्पर द्वे भ्रातृभाण्डे एवं तासां ब्रुवतीनां प्रायश्चित्तं मूलं । तस्याश्च प्रवर्तिन्या गणो हृत्वा अन्यस्या दीयते । अथ सापि नेच्छति ततोऽन्यस्या दातव्यः । अथ सापि नेच्छति तर्ह्यन्यस्या दीयते । एतदेवाह-

[भा.२८४०] अनिस्सादेंति गणं अह नेच्छति ततो विगिंचते ।
तंपि पुनरविदिन्निस्सा एवं तु कमेण सव्वासिं ।।

वृ- अन्यस्या गणमाचार्या ददति । तां पूर्वां प्रवर्तिनीं गणं हृत्वा विगिञ्चयेत् परित्यजेत् । पुनरन्यस्या ददति । एवं क्रमेण सर्वासामपि पूर्वस्या अनिच्छायां गणो दातव्यः । सर्वासामनिच्छायां सर्वासां परित्यागः ।

अथ कस्मात् ता गणं दीयमानं नेच्छन्ति तत आह-

[भा.२८४१] पवतिनि ममत्तेनं गीयत्थातो गणं जई ।
धारेत्ता न ईच्छंति सव्वासिंपि विगिंचणा ।।

वृ- यदि गीतार्था अपि गणं धारयितुं प्रवर्तिनी ममत्वेन नेच्छन्ति तदा सर्वासां विगिञ्चना परित्यागः ।

[भा.२८४२] चोयग गुरुतो दंडो पक्खेवगचरियसिद्धपुत्तीहिं ।
विसयहरणट्ठया तेनियं च एयं न नाहिंति ।।

वृ- चोदकः प्राह-प्रवर्तिन्यास्तुच्छेऽपराधे गुरुको दण्डो दत्तः । आचार्यः प्राह-अपराधोऽपि तासां गरीयान् यत्व्याहृताः (अभिहिताः) सत्यो निष्ठुरं भाषंते । अन्यच्च ता एव स शिष्यमाणा अनापृच्छ्योपधिं गृह्णत्यश्चरिकासिद्धपुत्रीभ्यां प्रक्षेपकमुपचारविषयनिमित्तहरणार्थतया न ज्ञास्यन्ति । नापि कयाचित् सिद्धपुत्रिकया स्तैन्यकरणाय प्रव्रजितया एतत् उत्कृष्टवस्त्रादिकं स्तेनितं न ज्ञास्यंति तस्मादेतिच्छिष्यापननिमित्तमेष गुरुको दण्डः । एतदेव सप्रपञ्चमाह-

[भा.२८४३] अवराहो वि गुरूतासिं सच्छंदेनोवहिं तु जा घेत्तुं ।
न कहंती भिन्न वा जं निट्ठरमुत्तरं बेंति ।।

वृ- अपराधोऽपि तासां संयतीनां गुरुरेव यत् स्वच्छन्दसा उपधिं गृहीत्वा न कथयन्ति भिन्ना वा ज्ञाता वा सत्यो यन्निष्ठुरमुत्तरं ब्रुवते । अन्यच्च अनापृच्छया गृह्णत्यो विषयहरणार्थतया चरिकासिद्धपुत्रीभिः प्रक्षेपकं न ज्ञास्यन्ति । एतदेव भावयति-

[भा.२८४४] अचियत्ता निक्खंता निरोहलावन्नलंकियं दिस्सा ।
विरहालंभे चरिया आराधना दिक्खलक्खेण ।।

वृ- कापि महेला कुटुम्बिनो अवियत्ता अप्रीतिमती अहमिति प्रव्रजिता । ततो संयतीत्वे निरोधेन कुतोऽपि कर्मकरणादीनामर्थाय निर्गमनं ततः शरीरस्य लावण्यमद्भुतं लावण्यालंकृतां भिक्षामटतीं स भर्त्ता दृष्ट्वा लोभं गतः । सा चात्मतृतीया भिक्षामटती विरहो न विद्यते यत्र तामालापयति । ततः स चरिकां दानसन्मानाभ्यामाराधयति । ततश्चरिका ब्रूते-सन्दिश यन् मया कर्त्तव्यं । स प्राह-एतां संयतीं तथा कुरुष्व यथा प्रतिभज्यते । ततः सा दीक्षालक्षेण दीक्षाव्याजेनाहं प्रव्रजिष्यामीत्येवं रूपेण तां संयतीमुपागता ।।

[भा.२८४५] अहवावि अनो कोई रूवगुणुम्माइतो सुविहियाए ।
चरियाए पक्खेवं करेज्ज छिद्दं अविंदंतो ।।

वृ- अथ च कोऽप्यन्योऽविरतः सुविहितायाः संयत्या रूपगुणेनोन्मादित उन्मादं ग्राहितश्छिद्रमविन्दन् अलभमानश्चरिकया दानसन्मानाभ्यामाराधितया प्रक्षेमुपचारं कुर्यात् ।।

[भा.२८४६] सिद्धीवि कावि एवं अहवा उक्कोसनंतगा भिन्ना ।
होहं वीसं भेउं अगहियगहिए य लिंगंमि ।।

वृ- अथवा चरिकया अभावे चरिकया प्रयोजनासिद्धौ कापि सिद्धवपि सिद्धपुत्रिकापि एवं दानसन्मानाभ्यां गृहीत्वा प्रयुञ्ज्येत, ततोऽनापृच्छया ग्रहणेऽजानत्यस्ता स्तमप्युपचारं गृह्णीयुस्तथा च सति महान् दोषः । अथवा सा सिद्धपुत्रिका तासां संयतीनामुत्कृष्टान्ययन्तकानि वस्त्राणि दृष्ट्वा भिन्ना वस्त्रग्रहणलोभेन चित्त(वि)भक्तमुपागता भविष्याम्यहं प्रव्रजितेति विश्रम्य गृहीत अगृहीते च लिङ्गे उत्कृष्टवस्त्राणां स्तैन्यं कुर्यात् । पर आह-

[भा.२८४७] वीसिज्जिय नासिहिती दिट्ठंतो तत्थ घंटलोहेण ।
तम्हा पवित्तिनीए सारणजवणाए कायव्वा ।।

वृ- चोदकः प्राह-नन्वेवं विसर्जितास्ता नंक्ष्यन्ति तस्मान्मा क्रियतामी दृशो गुरुको दण्डः । आचार्यः प्राह-दृष्टान्तस्तत्र घण्टालोहेन । किमुक्तं भवति ? यस्मिन्नेव दिने यत्र लोहे घण्टा कृता तल्लोहं तस्मिन्नेव दिने विनष्टं । एवं यत्र दिवसे ताः स्वच्छन्दतो वस्त्राणि गृहीतवत्यः प्रव्रज्यां या दत्तवत्य स्तस्मिन्नेव दिने

ता विनष्टा यत एते दोषास्तस्मात् प्रवर्तिन्या सारणा यतनया कर्तव्या । तामेवाह-

[भा.२८४८] धम्मं जइ काउ समुट्ठियासि अप्पोवद्गं तु कुमं सएहिं ।
तदानि वद्यामो गुरूण पासं भव्वं अभव्वं च विदंति तेऊ ।।

वृ- सा परिव्राजिका सिद्धपुत्रिका यदि संयतीनामुत्तिष्ठति ततः सा प्रवर्तिन्या वक्तव्या यदि धर्म कर्तुंसमुत्थितासि तर्हि सम्प्रति व्रजामो गुरूणां पार्श्व यतो भव्यमभव्यं वा ते विदन्ति । वयं तु किं जानीमः । गुरुवः कथं जानन्तीति चेदत आह-

[भा.२८४९] जो जेन अभिप्पाएण एति तं भे गुरू वियाणंति ।
पारामपारगति य लक्खणतो दिस्स जाणंति ।।

वृ- यो येनाभिप्रायेण समागच्छति तत् भो गुरवो विजानन्ति तथा प्रव्रज्यां गृहीतुकामां दृष्ट्वा लक्षणत एव जानन्ति यथा एष प्रव्रज्यायाः पारगो भविष्यत्येषोऽपारग इति तथा-

[भा.२८५०] पत्ता पोरिसिमादी च्छाया उव्वाय वुत्थ साहंति ।
चोदेति पुव्वदोसे रक्खंती नाउ से भावं ।।

वृ- प्राप्ता पौरुष्यादिकं प्रथमपौरुष्यादिकं गुरवे निवेदनीया । तथा च्छाता बुभुक्षिता उद्धाता परिश्रान्ता तथा उषिता तदपि संयत्यो गुरूणां कथयन्ति गुरुश्च पूर्वदोषान् चादयति कथयति । तथा से तस्या दीक्षिताया भावमभिप्रायं द्रष्टुं ज्ञात्वा गुरवो रक्षयन्ति । एष द्वारगाथा संक्षेपार्थः ।

[भा.२८५१] जा जीए होति पत्ता नयंति तं तीए पोरिसीए ।
छाओ उव्वाय निमित्तं बितियाए ततियाए चरिमाए ।।

वृ- या यस्यां पौरुष्यां संयतीनां पार्श्वे प्राप्ता भवति तस्यां पौरुष्यां संयत्यो गुरुसमीपं नयन्ति । अथ सा च्छाता उद्धाता वा तर्हि तन्निमित्तं तेन कारणेन तस्या द्वितीयस्यां तृतीयस्यां चरमायां वा गुरु समीपं नीयते । नीत्वा च च्छातादिकं सर्व कथ्यते । एतेन च्छातोद्धातेति व्याख्यातम् ।। साम्प्रतमुषिता-

[भा.२८५२] चरमाए जा दिज्जइ भत्तं विस्सामयंतिणं जा वं ।
ता होइ ति सा दूरं च अंतरं तेन वुच्छंमि ।।

वृ- चरमायां पौरुष्यां सा समागता सा च्छाता ततो यावत्तस्यां चरमायां पौरुष्यां भक्तं दीयते । भक्तानन्तरं च संयत्यस्तां विश्रामयन्ति तावन्निशा भवति । दूरंतरं वा गुरुणामुपाश्रयात् तेन सा तत्रैव संयतीनामुपाश्रये उषिता प्रभाते च गुरुसमीपे नेष्यते ।।

[भा.२८५३] नाहिंति ममंते तू काइ ना सेज्ज अप्प संकाए ।
जा उ न नासेज्ज तहिं तं तू गयं बेंति आयरिया ।।

वृ- प्रभातेऽहं गुरुसमीपे नेष्यते तु गुरवो मां ज्ञास्यन्ति इति विचिन्त्य काचिदात्मशङ्कया नश्येत् । या तु नश्यति तां तत्र गुरुपाश्रये गतामाचार्याणां संयत्यः कथयन्ति । यथेपास्माकमुपाश्रयेऽनेन कारणेनोषिता एतेन वुत्थसाहंतीति व्याख्यातम् ।। एवं कथिते आचार्यास्तां ब्रुवते किमित्याह-

[भा.२८५४] न हु कप्पइ दूती वा चोरा अम्हका इ इति वुत्ते ।
गुरुणानायामि अहं वएज्ज नाहंति वा बूया ।।

वृ- न हु नैव कल्पते दूती चौरी चास्माकं काचित् दीक्षयितुं कल्पते इति गुरुणोक्ते ज्ञाताहमिति विचिन्त्य व्रजेत् । यदि ब्रूयात्तु नाहं तादृशीति एतेन पूर्वदोषात् चोदयतीति व्याख्यातम् ।। सम्प्रति रक्खंति

नाउं सभावमिति व्याख्येयं । तत्र कथं तस्या भावं लक्षयन्तीत्यत आह-

[भा.२८५५] अतिसयरहिया थेरा भावं इत्थीण नाउ दुन्नेयं ।
रक्खेथ एयं उसिं ... हिया से ... ।।

वृ- अतिशयरहिता अपि स्थविराः स्त्रीणां दुर्विज्ञेयं भावभिङ्गिताकारकुशलतया ज्ञात्वा वदन्ति-एतामुत्परां यत्नेन रक्षत लक्षयत वा से तस्या अभिप्रायं कथं लक्षयन्त्वित्यत आह-

[भा.२८५६] उच्चारभिक्खे अदुवा विहारे थेरेहिं जुत्तं गणिणी उ पेसे ।
थेराण असती तु अतव्वयाहि ठवेति एमेव उवस्सयंमि ।।

वृ- यदा सा ब्रूते नाहं ताद्दशीति तदा तस्या उत्परिचितेन लिङ्गमात्रं समर्पितं तत उच्चारभूमौ भिक्षायामथवा विहारे गणिणी(नी) प्रवर्तिनी तां स्थविराभिर्युक्तां प्रेषयेत् । स्थविराणामभावे अतद्वयो-भिरत्तस्याः सकाशात् या याः क्षुल्लकतरास्तरुणास्ताभिः सममुच्चारभूम्यादिषु प्रेषयति । एवमेव प्रथमतः स्थविराभिस्तासामभावे असदृशवयोभिरित्यर्थः । उपाश्रये स्थापयति ।।

[भा.२८५७] कइयविया उपविट्ठा अच्छति छिड्डुतहिं निलिच्छंती ।
विरहालंभे अहवा भणाइ इणमो तहिं सा उ ।।

वृ- कैतविका कैतववती प्रविष्टा सती या तत्र छिद्रं निरीक्षमाणा तिष्ठति । अथवा विरहालाभे तत्र सा इदं भणति । किं तद्भणतीत्यत आह-

[भा.२८५८] अविहाडाहं अव्वोमा मं पसेज्जनीयवग्गो वा ।
तंदानि चेइयाइं वंदह रक्खामहं वसहिं ।।

वृ- पाक्षिकादिषु आर्यिका चैत्ये वन्दनार्थं प्रस्थिता अवलोक्य सा शैक्षी ब्रूते- अव्वो इति सम्बोधने । अहमविघाटा अप्रकटा वर्ते यदि वा मा मां प्रव्रजितां निजवर्गः पश्येत्ततः स व्रतात्त्याजयेत् । तस्मादिदानीं यूयं चैत्यानि वन्दध्वमहं वसतिं रक्षामि । एवमुक्ते एकया तरुण्या सह प्रतिश्रयपालिका स्थापिता । तत गतास्वार्यिकासु सा शैक्षी तां तरुणीमार्यिकां ब्रूते-

[भा.२८५९] उवन्नो सो धणिणं तुज्झ धवो जे तया सि नित्तणही ।
वभिचारी उवअन्नो इति ना ते विगिंचणानीसे ।।

वृ- तव धवो भर्ता यस्तदा निस्तृष्णा आसीत् स इदानीं धणियमत्यर्थं तवविषये उत्पन्न उत्कण्ठितः । अथवा अन्यः कोऽप्यव्यभिचारी पारदारिकः संयतीं प्रार्थयामास । तां प्रव्रज्या व्याजेन व्यापारितवान् तत एव विरहं ज्ञात्वा ब्रूयात् । को वा तरुणोरूपादिगुणोपेतः तवानुगोऽनुरूपो वर्तते । स ते समागम-मिच्छति । एवं तस्या भावे ज्ञाते विगिञ्चना परित्यागः कर्तव्यः । अथवा काचित् सिद्धपुत्रिका वा अन्या वा संयतीनां वस्त्राद्यपहर्तुकामा निष्क्रमण व्याजेन प्रविष्टा चैत्यवन्दनार्थं गतास्वार्यिकासु तरुणीं क्षुल्लकां प्रतीदं ब्रूते-

[भा.२८६०] पारवयादीयाइं दिट्ठाणं नासिणं तगामिणए ।
तुज्झं नत्थिहितिरिहं वुत्ता खुड्डीतो दंसंति ।।

वृ- पारापतादिकानि आदिशब्दात् पुण्ड्रवर्धनकानि परिग्रहो न मया नन्तकानि वस्त्राणि दृष्टानि नमिति वाक्यालङ्कारे । तत् किं युष्माकं महत्तरिकायाः पार्श्वे तानि न सन्ति । एवमुक्तास्ताः क्षुल्लकाः तुच्छतया मास्माकं महत्तरिकाया परिभवो भूयादिति कृत्वा दर्शयन्ति । कानि कानीत्यत आह-

[भा.२८६१] कोट्टंब तामलित्तगसिंधव एकसिण जुंगिए चेव ।
बहु देसिए य अन्ने पेच्छसु अम्हं खमज्जाणं ।।

वृ- कोट्टम्बानि गौडदेशोद्भवानि, तामलित्तिकानि सैन्धवानि अन्यानि च बहुदेशिकानि कृत्स्नानि परिपूर्णानि जुङ्गितानि खण्डीकृतानि अस्माकं क्षमार्याणां क्षमाप्रधानानामार्याणां प्रवर्तिन्या इत्यर्थः । प्रेक्ष्य वस्त्राणीति उपसंहारमाह-

[भा.२८६२] सच्छंदगेण्हमाणीण होंति दोसा जतो उ इच्चाती ।
इइ पुच्छिउं पडिच्छा न तासि सच्छंदया सेयं ।।

वृ- स्वच्छंदत उपधिं शिष्यां वा गृह्णतीनां यतइत्यादय एवमादयो दोषा भवन्ति इत्यस्मात् कारणात् गुरुनापृच्छय उपधेः शिष्याया वा प्रतीच्छाग्रहणं न तु स्वच्छन्दता तासां श्रेयसी ।।

मू. (१६२) *जे निग्गंथा य निग्गंथीओ य संभोइया सिया कप्पइ निग्गंथाणं निग्गंथीओ आपुच्छित्ता वा अनापुच्छित्ता वा निग्गंथिं अन्नगणाओ आगयं खुयायारं सबलायारं भिन्नायारं संकिलिट्ठायारचित्त तस्स ठाणस्स आलोयवेताजाव पायच्छित्तं पडिवज्जावेता पुच्छित्तए वा वाएत्तए वा उवट्ठावेत्तए वा संभुञ्जित्तए वा संवसित्तए वा तीसे इत्तरियं दिसं वा अनुदिसं वा उद्दिसित्तए वा धारेत्तए वा । तं च निग्गंथीओ नो इच्छेज्जा सेवमेव नियंठाणं ।*

[भा.२८६३] अत्थेन गंथतो वा संबंधो सव्वहा अपडिसिद्धो ।
सुत्तं अत्थमवेक्खति अत्थो वि न सुत्तमतियाति ।।

वृ- अर्थतो ग्रन्थतश्च सम्बन्धोऽप्रतिषिद्धः सर्वथा यतः सूत्रमर्थमुपेक्षते । अर्थोऽपि चनिर्ग्रथीनामधिकारे सूत्रमिदं प्रवृत्तमतः सूत्रतोऽर्थतश्च सम्बन्धोऽस्तीति न किञ्चिदनुपपन्नम् ।

[भा.२८६४] नदिसोय सरिसओ वा अहिगारो एस होइ दव्वठो ।
छठानंतरसुत्ता समणीणमयं तु जा जोगो ।।

वृ- अथवा षष्ठोद्देशके चरमानन्तरसूत्रद्वयादारभ्य एषोऽधिकारो नदीश्रोतः सदृशो द्रष्टव्यो, अयं तु योगः तावत् यावत् श्रमणीनामधिकारः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पते निर्ग्रन्थानां निर्ग्रन्थीरापृच्छय अनापृच्छय वा निर्ग्रन्थीमन्यगणादागतां क्षताचारां संक्लिष्टाचारचरित्रां तस्मात्स्थानादालोच्य प्रतिक्रम्य प्रायश्चित्तं प्रतिपाद्य प्रष्टुं वाचयितुं वा उपस्थापयितुं वा संभोक्तुं वा संवस्तुं वा तस्या इत्वरां दिशमाचार्यलक्षणामनुदिसमुपाध्यायलक्षणां प्रवर्तिनीलक्षणां च उद्देष्टुं वा स्वयं धारयितुं वा तां च निर्गन्थ्यः सांभोगिक्यो वा नेच्छेयुस्तर्हि सेहिमेव नियंठाणं निजमात्मीयं स्थानं प्रतिगमयतामपि तां परित्यज्यतामपीति भावः । निर्दोषत्वं प्रतिसिद्धिरेव न कश्चनापि दोष इति सूत्रसंक्षेपार्थः ।

[भा.२८३५] संविग्गाणुवसती आभीरी दिक्खिया य इतरेहिं ।
तत्थारंभं दट्ठु विपरिणमति तेरवदिठाओ ।।

वृ- कां दिवा (काचिदा) भीरी संविग्नानां समीपे धर्मं श्रुत्वा उपशान्ता ते य संविग्ना अन्यत्र विहृता इतरेऽसंविग्नाः समागतास्तैः सा आभीरी दीक्षिता । तेषां चा संविग्नानामारंभं रन्धनादिकं दृष्ट्वा सा विपरिणमति विपरिणामेन तस्या अभिप्रायोजातस्तेषामेव संविग्नानां समीपमुपगच्छामि । एवं चिन्तयन्त्या तया ते इतरे संविग्ना स्थानादिसमवसरणे दृष्टाः श्रुता वा यथामुकस्थाने तिष्ठन्ति ।।

[भा.२८६६] तह चेव अब्भुवगया जह छट्ठुद्देस वणिया पुव्विं ।

अविसज्जंताणंपि य दंडो तह चेव पुव्वुत्तो ॥

**वृ-** सा तत्र गता यत्र ते संविग्नाः श्रुता गत्वा च ग्रहणशिक्षामासेवनशिक्षामन्यमाचार्यमन्य-मुपाध्यायमन्यां च प्रवर्तिनीं याचते एवमुक्ते यथैव षष्ठोद्देशके चतुर्थीमग्गए सिक्खमेत्यत्र । पूर्वं वर्णिता तथैव एषापि संविग्नैरभ्युपगन्ता यथा अविसर्जयतां प्रवर्तिन्युपाध्यायाचार्याणां पूर्वदण्डः प्रायश्चित्तं दण्डस्तथैवात्रापि द्रष्टव्यः ॥

**[भा.२८६७]** तं पुन संविग्गमणो तत्थानीयं तु जइ न इच्छेज्जा ।
नियगातो संजतीतो ममकारादीहिं कज्जेहिं ॥

**वृ-** तां पुनः संविग्नमनसं तत्रानीतां यदि निजकाः संयत्यो ममकारादिभिः कार्यैर्नेच्छेयुस्तान्येव ममकारादीनि कारणान्याह-

**[भा.२८६८]** पासत्थि ममत्तेणं पगती वेसा अचक्खुकंताय ।
गुरुगणतनीवरस व नेच्छंती पाडिसिद्धीतो ॥

**[भा.२८६९]** उमाणं नं(नो)काहिति संखलिबद्धाव ततो सव्वातो ।
मा होहि ईसागरियं सीयंति च उउयं नेच्छे ॥

**वृ-** यस्याः सा शिष्या तया सह तासां मैत्री ततो मा सा पार्श्वस्था अस्माकमुपरिमन्यु कार्षीरिति पार्श्वस्थाममत्वेन नेच्छंति । अथवा सा कर्मानुभावतः प्रकृत्या प्रायः सर्वजनस्यापि द्वेष्या यदि वा पूर्वभवानुभावत एकस्याः प्रवर्तिन्या अचक्षुः कान्ता अथवा सा प्रवर्तिनी आत्मीयस्याचार्यस्य विषये केनापि कारणेन कुपिता वर्त्तते । यदि वा गणस्य गच्छस्योपरि एतच्चाचार्यो न जानाति यद्वा तस्याः संयत्या या निजवर्गस्तस्य विषये प्रवर्त्तिन्याः [प्रव्रर्तिन्या प्रतिसिद्धिः] प्रतिस्पर्धता विद्यते । अथवा ताः सर्वा अपि संयत्यः शृंखलाबद्धाः परस्परं स्वजनाः ततो नोऽस्माकमपमानमेषा करिष्यति तस्मान्मा सागारिकं भवतु । यदि वा ताः सीदन्ति तच्चाचार्यो न जानाति सा च धर्मश्रद्धया पार्श्वस्थाविप्रहायात्र समागता सास्माकं सागारिकीति कारणैः तामुद्यतामपि नेच्छन्ति । अत्र प्रायश्चित्तविधिमाह-

**[भा.२८७०]** भणिय वसभाभिसेए आयरियकुलेणगणेन संघेन ।
लहुगादि जाव मूलं अनिस्से गणो य दायव्वो ॥

**[भा.२८७१]** एवं पुव्वगमेणं विगिंचणं जाव होइ सव्वासिं १ ।
देवण २ मणुन्नाणं ३ अमणुन्न ४ चउण्हमेगयरं ॥

**वृ-** वृषभैरानीतां यदि पूर्वकारणैस्तां नेच्छन्ति तदा तासां प्रायश्चित्तं चतुर्लघुः । अभिषेक उपाध्यायस्तेन ताः संयत्यो भणनीयाः प्रतीच्छतेमां संयतीमिति नेच्छंति चतुर्गुरु एवमाचार्येणापि भणनेऽनिच्छायां षट् लघु कुलेन षट् गुरु, गणेन च्छेदः, सङ्घेन मूलम्, तथा चाह-लघुकादि चतुर्लघ्वादि प्रायश्चित्तं क्रमेण तावत् द्रष्टव्यं यावन्मूलम् । सङ्घभणनेऽप्यनिच्छायां प्रवर्तिन्या गणोऽपह्रियते अन्यस्याः गणो दातव्यः । अथ सा प्रवर्तिनी ममत्वेन गणं नेच्छति तर्ह्यन्यस्या दीयते । एवं पूर्वगमने विगिंचणं परित्यजनं तावत् द्रष्टव्यं यावत्सर्वासामपि भवति । ततो यस्तस्याचार्यस्य द्वितीयो गच्छस्तत्र नीयते तत्रापि यदि तथैव ता नेच्छन्ति । ततोऽन्यगच्छसत्काः सांभोगिक्यः संयत्यस्तासां दीयते ता अपि यदि नेच्छेयुस्तर्हि अन्यसांभोगिकीनां दीयते । तथा चाह-अन्यानामनोज्ञानाममनोज्ञानां च सर्वसंख्यया चतसृणामेकतरं स्थानं ददति । तत्र प्रथमं स्थानमात्मीयाः संयत्यो द्वितीयं गच्छवर्तिन्यः तृतीयमन्याः

सांभोगिक्यश्चतुर्थममनोज्ञा इति अथवा अन्यथा चतुर्णामेकतरमिति व्याख्यायते-

**[भा.२८७२]** समणुन्नमणुन्नाणं संजय तह संजतीण चउरो य ।
पासत्थि ममत्तादिव अद्धाणादिव्व जे चउरो ।।

**वृ-** समनोज्ञानां संयतानां समुदायः एकं स्थानं समनोज्ञानां संयतीनां द्वितीयम्, अमनोज्ञानां संयतानां तृतीयमनोज्ञानां संयतीनां चतुर्थमेवमेतानि चत्वारि स्थानानि एतेषामेकतरं समनोज्ञसंयतीनामात्म-तृतीयानां द्वितीयं गच्छवर्तिनीनामन्य गच्छवर्तिनीनां वा स्थानं दीयते । तदभावे अमनोज्ञसंयतीनामपि अथवा पार्श्वस्था ममत्वं प्रकृत्या सर्वजनद्वेष्या प्रवर्तिन्या वा अचक्षुः कान्ता गुर्वादिप्रतिस्पर्धता वा प्रवर्तिन्या एतानि यानि चत्वारि कारणानि । एतेषामेकतरत्कारणमधिकृत्यान्य सांभोगिकीनाम-सांभोगिकीनां च दीयते । अथवा याऽध्वनिर्गतादिका दुहितरं वा संस्मरन्ती परचक्रागमनेन देशभङ्गे वा शिक्षां वा मृगयमाणा एता याश्चतस्रस्तासामेकतरामन्यसांभोगिकीनामसांभोगिकीनां वा दातव्या । यद्यसांभोगिक्योऽपि नेच्छन्ति तदा किं कर्तव्यमित्याह-

**[भा.२८७३]** सेहित्ति नियं ठाणं एवं सुत्तंमि जंतु भणियमिणं ।
एवं कयपयत्ता (त्ता) ताहे सुयं ताउ ते सुद्धा ।।

**वृ-** एवमसांभोगिकीनामप्यनिच्छायां यत्सूत्रे भणितं 'सेहमेव नियंठाणमिति तत्कर्तव्यमस्यायमर्थ एवं कृतप्रयत्ना अपि यदा संयत्यो नेच्छन्ति तदा ते तां मुञ्चन्तोऽपि शुद्धाः ।

**मू. (१६३)** *जे निग्गंथा य निग्गंथीओ य संभोइया सिया, नोण्हं कप्पइ पारोक्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए; कप्पइण्हं पच्चक्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए । जत्थेव अन्नमन्नं पासेज्जा, तत्थेव एवं वएज्जा- 'अहण्णं अज्जो, तुमाए सद्धिं इमम्मि कारणम्मि पच्चक्खं संभोगं विसंभोगं करेमि' । से य पडितप्पेज्जा, एवं से नो कप्पइ पच्चक्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए, से य नो पडितप्पेज्जा, एवं से कप्पइ पच्चक्खं पडिएक्कं संभोइयं विसंभोगं करेत्तए ।।*

**वृ-** सूत्रसम्बन्धमाह-

**[भा.२८७४]** संभोइउं पडिक्कमाविया य कप्पइ अयंपि संभोगो ।
सो उ विवक्खे वुत्तो इमं तु सुत्तं सपक्खंमि ।।

**वृ-** अनन्तर सूत्रे प्रतिक्राम्य संभोक्तुं कल्पते इत्युक्तम् । अयमपि चानेन सूत्रेणाभिधीयमानः संभोगस्ततः संभोगधिकारादिदं सूत्रं प्रवृत्तमथवायं सम्बन्धः । पूर्वसूत्रे संभोगो विपक्षे संयतीरूपे-ऽभिहितः । इदं तु सूत्रं सपक्षे संयतरूपे संभोगविषयमिति सम्बन्धः । अनेन सम्बन्धेना-यातस्यास्य व्याख्या-ये निर्ग्रन्था निर्ग्रन्थ्यश्च सांभोगिकाः स्युस्तेषां नोणमिति वाक्यालङ्कारे कल्पते परोक्षे प्रत्येकं सांभोगिकं विसांभोगिकं कर्तुं कल्पते परोक्षं प्रत्यक्षं प्रत्येकं सांभोगिकं विसंभोगं करोमि । एवमुक्ते यदि स प्रतितप्यते मिथ्यादुष्कृतं न भूय एवं करिष्यामि एवं सति से तस्य न कल्पते । त्रयाणां प्रत्यक्षं प्रत्येकं सांभोगिकं विसांभोगिकं कर्तुमथ स न प्रतितप्यते । एवं सति से तस्य कल्पते त्रयाणां प्रत्येकं सांभोगिकं विसंभोगिकं कर्तुमिति सूत्राक्षरार्थः ।। अधुना भाष्यकार आह-

**[भा.२८७५]** संभोगो पुव्वुत्तो पत्तेयं पुन वयंति पडियक्कं ।
तप्पंते समणुन्ने पडितप्पणमापुतप्पं तु ।।

**वृ-** संभोगः पूर्वं निशीथाध्ययने उक्तः, पडियकं पुनर्वदन्ति प्रत्येकं यो विसंभोगं करोति स तप्यते

यथा एतेन नाम शय्यातरपिण्डः प्रतिसेवितो हा कष्टमेवं तप्यन्तमितरो ज्ञात्वानुतप्यते । एष मम दोषेण तप्यति तस्मात्प्रत्याययामि यथा असदेतत् यदहं शय्यातरपिण्डं सेवितवान् । अथ स तु तदासौ चिन्तयति मा ममदोषेणैष तप्यतु तस्मान्मिथ्या दुष्कृतं करोमि । एवं संविग्ने तप्यति यदनुतपनं तत्प्रति तपनमिति तदेवं भाष्यकृता विषमानि सूत्राक्षराणि विवृतानि । सम्प्रति निर्युक्त्यऽवसरः :-

[भा.२८७६] सागारिए गिहा निग्गएय वडघरिय जंबुघरएय ।
धम्मिय गुलवाणियए हत्थी तित्थेय दीवे य ॥

वृ- सागारिके शय्यातरे शय्यातरगृहान्निर्गति वटगृहिके जम्बूगृहिके च असदभ्याख्यानेन विसंभोगः कृतः । इयमक्षरघटना । भावार्थस्त्वयं-एकस्मिन्ननगरे आचार्यस्य वटगृहिकः शय्यातरः तस्मिन्नेव नगरे अन्य जम्बूगृहिको गृहस्थोऽस्ति । ताभ्यां वटगृहिकजम्बूगृहिकाभ्यां आत्मीयं गृहं कारितं । तयोश्च निर्मापितयोर्द्वयोरपि गृहयोः कपोताः प्रविष्टास्ततोऽमङ्गलमिति मन्यमानौ तौ नैमित्तिकं पृच्छतः । कथमेतस्य दुर्निमित्तस्य व्याघातो भवेत् । नैमित्तिको वदति वटगृहिको जम्बूगृहिक गृहमधितिष्ठतु जम्बूगृहिको वटगृहिकगृहं, ततः कतिपयानि दिनानि स्थित्वा पश्चान्निजनिजगृहे गच्छेयातां । तौ परस्परगृहे संचरितौ तावदिदमथान्यदा अन्यस्मात् गच्छात् प्रघूर्णकाः समागताः । ततो वास्तव्यै जम्बूगृहिकस्य वटगृहिकगृहं प्रविष्टस्य गृहात्प्रथमालिकामानीय तेषां प्राघूर्णकानां दत्वा (ता) तैः शय्यातरपिण्डं मन्यमानैरुपरोधवशादप्रीत्यानुभुक्तास्ततस्ते प्राघूर्णका निर्गत्य आत्मीयस्याचार्यस्य समीपं गत्वा लोचयन्ति । तेऽस्माकं सांभोगिकाः शय्यातरपिण्डं भुञ्जते अस्माभिः कथमप्युपरोधशादप्रीत्या प्रथमालिका भुक्ता एवं श्रुत्वा आचार्योऽपि[अ]विचिन्त्य यदि विसंभोगं तं करोति ।

[भा.२८७७] नवघरकवोयपविसण दोण्हं नेमित्ति जुगवपुच्छा य ।
अन्नोन्नस्स घराइं पविसह नेमित्तितो भणइ ॥

[भा.२८७८] आदेसागमपढमा भोत्तुं लज्जाए गंतु गुरुकहणं ।
सो जइ करेज्जवीसुं संभोगं एत्थ सुत्तं तु ॥

वृ- नवयोर्गृहयोः कपोतानां प्रविशनं । ततो द्वयोरपि गृहस्वामिनो युगपन्नैमित्तिको भणति-अन्योन्यस्य गृहं प्रविशतस्तौ च प्रविष्टावन्यदा आदेशानां प्राघूर्णकानामागमस्ततो वास्तव्यैर्जम्बूगृहिकस्य वटगृहिकगृहं प्रविष्टस्य गृहात्प्रथमालिका आनीता तां लज्जया भुक्त्वा ततो निर्गत्य गुरुसमीपं गत्वा गुरोः कथनं स यद्यविचार्य विष्वक् संभोगं तं करोति । तदा अत्र सूत्रमापतितं द्रष्टव्यम् । अत्र विचारादि तावित्वरं गृहपरिवर्त्तं कृतवन्तौ तदा स जम्बूगृहिकोऽशय्यातर एव अथ यावत्कथिकस्तदा जम्बूगृहिक एव शय्यातरः ॥ धम्मियत्ति अस्य व्याख्यानम्-

[भा.२८७९] धम्मितो देउलं तस्स पालेइ जइ भद्दओ ।
सो विसंवड्ढियं तत्थ लद्धुं देज्जा जईणउ ॥

वृ- तस्य शय्यातरस्य किञ्चित् देवकुलं तत् धार्मिकः पालयति । स च यतीनां भद्रकस्ततः संवर्धितमग्रकूरं तस्मिन् शय्यातरगृहे लब्ध्वा साधूनामानीय ददाति । अत्रापि तथैव प्राघूर्णकागमनं धार्मिकाऽथमालिकानयनमित्यादि सर्वं तथैव वाच्यं गुलवणिक इत्यस्य व्याख्यानम्-

[भा.२८८०] वाणियतोयगुलं तत्थ विक्किणंतो उ तं दये ।
तत्थसो वारिए हुज्जा अइकच्छपुडेण वा ॥

वृ- शय्यातरगृहे स्थितो गुडवणिक् स तत्र गुडं विक्रीणन् साधूनां गुडं ददाति । अथवा शय्यातरस्य अपवरिकायामात्मीयं भांडं निक्षिप्तं ततः कच्छपुटेनाटित्वा तत्रैव समागच्छति । स चाटन् यदा तदा वा साधूनां भिक्षां ददाति । ततः प्राघूर्णका गमनमित्यादिविभाषा तथैवहरितोपलित इत्यस्य व्याख्यानम्-

[भा.२८८१] हरितोलित्ता कया सेज्जा कारणे तेय संठिया ।
पसज्झ वसहिपालस्स चेइयगणेनिग्गए ।।

वृ- छिन्नानि वा विहरियाणि छगणेन वसतिरघुनोपलिप्ता कृता हरितानि च तत्र परिसाटितानि । तस्यामधुनोपलिप्तायां पातितेषु च हरितेषु साधवः कारणेन स्थिताः । अथवा पूर्वस्थितानां चैत्यवन्दनार्थं गणे निर्गते पश्चात् वसतिपालस्य प्रसह्य बलात्कारेणोपलिप्ता कृता हरितानि च पातितानि । अत्रावसरे प्राघूर्णकाः समागतास्तं वसतिं दृष्ट्वा चिन्तयन्ति । प्रतिदिवसमुपलिप्यते शय्याऽचार्यस्य कथितं तत्र च यद्यविचार्य विसंभोगः क्रियते तदा अत्र सूत्रोपनिपातः । दीपेचेत्यस्य व्याख्यानम् ।।

[भा.२८८२]पविट्ठो दीवएण वा कयकज्जस्स पम्हुट्ठे (.......) संविजाने दिने दिने ।।

वृ- यस्यां शय्यायां संयताः स्थिताः । तत्र शय्यातरः केनापि कारणेन प्रदीपे दीपकेन सह प्रविष्टस्ततो येन कार्येण समागतस्तत्कार्यं कृत्वा निर्गतो दीपस्तत्रैव विस्मृतस्तत्रच तस्मिन् दिवसे सांभोगिकाः समागमन् स च प्राघूर्णक बृहत्तरः शय्यातरस्य कृतकार्यस्य विस्मृते दीपे जानाति दिने दिने वसतौ दीपः क्रियते । एवंज्ञात्वा गुरोः कथितं । स चाविचिन्त्य विसंभोगं कृतवान् । अत्राप्यधिकृतसूत्रस्योपनिपातः। एतान्यसन्ति कारणानि । अत्र प्रायश्चित्त विधिमाह-

[भा.२८८३] दट्ठुं साहणलहुओ वीसुं करेंताण लहुगआणादी ।
अद्धाण निग्गयादी दोण्हं गणभंडणं चेव ।।

वृ- योऽसन्तिकारणान्यविवेच्य गुरोर्निवेदयतितस्य प्रायश्चित्तं लघुको मासः । कथितेऽपि यद्याचार्यो न विवेचयति अविवेच्य च विसंभोगं कुर्वन्ति तदा तेषां विष्वक् कुर्वतां चत्वारो लघुकाः । न केवलं प्रायश्चित्तं किन्त्वाज्ञादयश्च दोषाः तथाऽध्वादि निर्गतानामादिशब्दादशिवादिकारणपरिग्रहः द्वयोरपि गणयोर्मण्डनं च । एतदेव स्पष्टं भावयति-

[भा.२८८४] तं सोउ मन संतावो संतई एइ उड्डई ।
अन्नेवि ते विवज्जंते वज्जिया अमुएहि तो ।।

वृ- ये तेषां संभोगिकास्तैस्तत् शय्यातरपिण्डाद्यासेवनं श्रुत्वा मनः संतापः क्रियते यथा तेन धर्म श्रद्धिकेनापि भवता शय्यातरपिण्डाद्य कल्पिकमासेवितं । ततः सोऽद्यप्रभृत्यस्माकं सन्तते स्तुट्यति पृथग् विभिन्न इत्यर्थः । ततोऽन्ये तेषां साम्भौ गिकास्तेऽपितान् विवर्जयन्ति यतस्तेऽ वसन्ना जातस्तेनोऽमुकेन आचार्येण विवर्जिता ।

[भा.२८८५] ततो वा अन्नतो वावि ते सुच्चा इह निग्गया ।
वज्जंता जं तु पावेंति निज्जरातो य हाविता ।।

वृ- ततस्ते विवर्जिता अध्वनिर्गता अशिवादिकारणेन वा निर्गता इह यत्र ते पूर्वसंभोगिकास्तिष्ठन्ति तत्र प्राप्तास्ततो यैरविवेच्य शय्यातरपिण्डादिकमासेवितमित्याचार्याणां कथितं तेभ्योऽन्येभ्यो वा श्रुत्वा यूयं पृथक्कृताइत्याकर्ण्य तंगणं वर्जयित्वा यतः प्रथमद्वितीयपरीषहभ्यामनगाढादि परितापनं प्राप्नुवन्ति । तन्निष्पन्नमविवेच्य विसंभोगकारणं प्रायश्चित्तं । निज्जरातो य हाविया इति तेषाम ध्वादिनिर्गतानां ते

यस्तव्या वैयावृत्यं कृत्वा निर्जरां प्राप्नुवुस्ते ततो हापिताः, प्रभूतं च कर्म अविवेच्य नतल्पकैर्बध्यते यन्महता संसरेण निस्तीर्तुं शक्यते ।।

[भा.२८८६] न कज्जते अकज्जे आगेविय्यं जइ वि तं अकज्जेण ।
नहु कीइ परोक्खं सहसा इति भंडणं हुज्जा ।।

वृ- यस्मादेते दोषास्तस्मात्कार्यतः कारणेन अकार्ये वा कारणाभावे वा यद्यपि सेवितं तत् शय्यातरपिण्डादिकं तथाप्यकार्येण एवमेव परोक्षं सहसा इत्येवं विसंभोगः न कथित । मा परस्परं द्वयोर्गणयोर्भण्डणं भूयादिति हेतोः कथं विवेकः कर्तव्य इत्यत आह-

[भा.२८८७] निस्संकियं व काउं आसंक निवेयणा तहिं गमनं ।
सुद्धे हि कारणमनाभोगजाणया दप्पतो दोण्हं ।।

वृ- तैः प्राधूर्णकैस्ते प्रष्टव्याः को युष्माकं शय्यातरः । कथं वा एव शय्यातरो न भवति । एवं निःशङ्कितं कृत्वा । अथ लज्जया न पृष्टास्ततो न निश्चय इति एवमाशङ्का निवेदनायां कृतायां यस्याचार्यस्य कथितं तेन प्रेषितस्य संघाटस्य तत्र गमनं तेन च संघाटकेन गत्वा यत्तैः कथितं तत्तेन प्रष्टव्यास्ततस्ते गृहपरिवर्त्यादि यथा तथ्यं कथयन्ति ततः सङ्घाटो गत्वा निजसूरिसमीपं कथयति । एवमक्रियमाणे द्वयोर्गणयोर्भण्डनं तदेव पश्चार्द्धेन भावयति । शुद्धे हि शुद्धेष्वस्माभिः समं यूयं विसंभोगं कुरुथ अथवा कारणं गृहपरिवर्तादिकमाधिकृत्य न गृहीतव्यं, यदि वा अनाभोगेन गृहीतमथवा द्वयोः प्रथमद्वितीय-परीषहयोरुदीर्णयोर्जानता दर्पतो गृहीतं । पुनः पश्चात्कृता शोधिरपि च यदि निष्कारणेऽपि गृहीतं तथापि न युक्तं परोक्षे विसंभोगकारणं यदि वयं नादृता भवामस्ततो युक्तं विसंभोगकरणमथ कारणे गृहीतं तदा वयं शुद्धा एव कथं विसंभोगकारणमेवं भण्डनं स्यात् । साम्प्रतं कारणमनाभोगेति पदद्वयं व्याख्यानयति-

[भा.२८८८] कज्जेण वा विगहियं सागरपरियट्टतोय सो अम्हं ।
कारणमजाणतो वा गहियं किं ची सुकरणं तु ।।

वृ- कार्येण कारणेन गृहीतमस्माभिर्वापि शब्दो विकल्पने । तत्र कार्यमस्माकं स्वागारपरिवर्तः । अथवा कारणमजानता यदि गृहीतं तथापि किं कस्मात्परोक्षे विष्वक्करणं विसंभोकरणं ।

[भा.२८८९] जाणंते हिव दप्पा घेत्तुं आउट्टिउ कया सोही ।
तुब्भेत्थ निरइयारा पसीयह भंते कुसीलाण ।।

वृ- जानद्भिरपि वा प्रथमद्वितीयपरीषहत्याजितैर्दर्पात् गृहीत्वा आवृत्य कृतास्माभिः शोधिः तस्मात् यूयमेवात्र गतिर्निरतिचारा भवन्तः कुशीलानामस्माकं प्रसीदतेत्युपहासवचनमेतत् ।।

[भा.२८९०] पढमबिइओदएणं जं सव्वं आउरेहिं तं गहियं ।
दिट्ठादानि भवंतो जं विइय पएसु नित्तण्हा ।।

वृ- प्रथमद्वितीयोदयेन प्रथमद्वितीयपरीषहोदयेन यत्तत्सर्वमातुरैर्गृहीतं युष्माभिस्तत् विस्मृतं दृष्टा भवन्त इदानीं यत् द्वितीयपदेषु निस्तृष्णा इति । एतदप्युपासवचनं । एवं भण्डनं प्रवर्तते । यत एवं परोक्षे विसंभोगकरणे भण्डनदोषस्तस्मात्कल्पते निर्ग्रन्थानां प्रत्यक्षं सांभोगिकं विसंभोगं कर्तुम-स्यैव सूत्रस्य व्याख्यानमाह-

[भा.२८९१] सत्तमए ववहारे अवराहविभावियस्स साहुस्स ।
आउट्टणाउट्टे पच्चक्खेणं विसंभोगे ।।

वृ- अस्मिन् सप्तमे व्यवहारे व्यवहारस्योद्देशके अपराधेन विभावितः परिभावितो यः साधुः स यदि प्रत्यावर्तते, तदा तस्यापराध विभावितस्य साधोरावृत्तस्य विसंभोगो न क्रियते प्रायश्चित्तं पुनर्दीयते । अथ नावर्तते ततो वारत्रयं भण्यते-आवर्तस्व महानुभाव एवमुक्तोऽपि यदि नावर्तते तदा तस्मिन्ननावृत्ते प्रत्यक्षेण प्रत्यक्षतया विसंभोगः क्रियते ।।

[भा.२८९२] संभोगेभिसंबंधेन आगति केरिसेन सह नेओ ।
केरिसएण विभागो भणइ सुणसु समासेणं ।।

वृ- एवमभिसम्बन्धेन संभोगआगते शिष्यः पृच्छति-कीदृशेन सह संभोगो ज्ञेयः । कीदृशेन सह विसंभोगः ? । सूरिराहभण्यते एतत्समासेन तत्वं भण्यमानं श्रुणु । प्रतिज्ञातमेव निर्वाहयति-

[भा.२८९३] पडिसेहे पडिसेहो असंविग्गे दानमादितिक्खुत्तो ।
अविसुद्धे चउ गुरुया दूरे साहारणं काउं ।।

वृ- प्रतिषिध्यते पार्श्वस्थादिकं न कल्पते इति निवार्यते इति प्रतिषेधोऽसंविग्नः पार्श्वस्थादि भण्यते । तस्मिन् प्रतिषेधेऽसंविग्ने दानादेर्दानग्रहणसंस्तवादिः प्रतिषेधः त्रिः कृत्व इति यदि कथमपि दानादि करोति तदा एक द्वौ त्रीन् वारान् वार्यते । एकैकस्मिंश्च वारे प्रायश्चित्तं मासलघु वारत्रयवारणेऽपि यदि भूयस्तैः सह दानादि करोति । तदा सोऽविशुद्ध इति विसंभोगः क्रियते । विसांभोगिकमपि सांभोगिकं करोति । तस्य प्रायश्चित्तं चत्वारो गुरुकाः । दूरे गतानां यदि केऽपि पृच्छन्ति यथा सन्त्यस्माकं केचित्संभोगिकास्तत्र देशे इति तदा साधारणं कृत्वा वक्तव्यम् । यथा तदा सांभोगिकाः अभवन् । इदानीं पुनर्न जानीमः किमनुपालयन्ति सांभोगिकत्वं वा नेति एष निर्युक्ति गाथा समासार्थः ।

[भा.२८९४] पासत्थादि कुसीले पडिसिद्धे जाउ तेसिं संसग्गी ।
पडिसिज्झइ एसो खलु पडिसेहे होइ पडिसेहो ।।

वृ- पार्श्वस्थादिके कुसीले स्थाने प्रतिषेधे यातेषां पार्श्वस्थादि स्थानवर्तिनां संसर्गिः प्रतिषिध्यते । सा च संसर्गिर्दानग्रहणाभ्यामवसातव्या एष भवति प्रतिषेधे प्रतिषेधः न चैष प्रतिषेधे प्रतिषेधोनानर्थो-

[भा.२८९५] सूयगडंगे एवं धम्मज्झयणे निकाचितं ।
अकुसीले सया भिक्खू नो य संसग्गियं वदे (वे) ।।

वृ- सूत्रकृते द्वितीय अङ्गे धम्मज्झयणे एवं निकाचितं निश्चयपूर्वकं भणितं । यथा सदा भिक्षुरकुशीलो भवेत् । न च कुशीलैः सह संसर्गिकां व्रजेत् ।।

[भा.२८९६] दानादि संसग्गी सयं कते पडिसिद्धे लहुतो ।
आउट्टे असुद्धे गुरुत्तो उ तेन परं ।।

वृ- दानादिभिः संसर्गिदानादि संसर्गिस्तस्यां सकृत् कृतायां संप्रतिनिषिध्यते । आर्य कस्मात्पार्श्वस्थादिभिः समं संसर्गिंकरोषि । एवं प्रतिषिद्धे यदि स आवर्तते तदा स सांभोगिक एव । केवलं तस्मिन्नावृत्ते प्रायश्चित्तं लघुको मासः द्वितीयमपि वारं यदि करोति ततोपिमासलघु अथ तृतीयमपि वारं करोति आवर्त्तते चऽतदापिमासलघु सद्भावतस्त्रिकृत्वा आवृत्ते लघुको मासस्तेनपरमिति ततस्तृतीयात् वारात् चतुर्थं वारं संसर्गं करोति तदासोऽशुद्ध इति तस्यप्रायश्चित्तं गुरुको मासः एतदेव स्पष्टतरमाह-

[भा.२८९७] तिक्खुत्तो मासलहू आउट्टे गुरुगो मासो तेन परं ।
अविसुद्धे तं वीसुं करेंति जो भुंजति गुरुगा ।।

वृ- त्रिःकृत्व आवृत्ते प्रायश्चित्तं लघुको मास स्ततः परं भूयः संसर्गि करणे सोऽविशुद्ध इति गुरुको मासस्तं च विष्वक् विसंभोगं करोति । योऽपि तं संभुक्ते तस्यापि प्रायश्चित्तं चत्वारो गुरुकाः । अथ कस्मात् वारत्रयात् परं भूयः संसर्गिकृतो विसंभोगः क्रियते इत्यत आह-

[भा.२८९८] सति दोन्नि तिन्निवावी होज्ज अमाईसु मा तेन परं ।
सुद्धस्स होंति चरणं मायासहिते चरणभेदो ।।

वृ- सकृदेकवारं द्वौ त्रीन् वारान् भवेदमायी ततस्तृतीयान् वारान् परं संसर्गिकरणे मायी अथच शुद्धस्य भवति चरणं मायासहिते तु चरणभेदः चरणाभावस्ततो विसंभोगः क्रियते ।

[भा.२८९९] एवंतु पासत्थादिएसु संसग्गिवारिआ एसा ।
समणुन्नेवि अपरिच्छिन्ते विदेसमादी गते एवं ।।

वृ- एवमुक्तेन प्रकारेण एषा दानग्रहणाभ्यां संसर्गि वारिता । एवं समनोज्ञोऽपि विदेशादौ गते अपरीक्षिते संसर्गिवारिता द्रष्टव्या सह संसर्गिः परीक्ष्य कर्तव्याः नान्यथेति भावः ।। सम्प्रति दूरे साहागणं काऽमित्यस्य विभावनार्थमाह-

[भा.२९००] समणुन्नेसु विदेसं गतेसु पच्छण्णेहोज्जअवसन्ना ।
तेवितहिं गंतु मना आहत्थि तहिं मणुन्नाणे ।।

वृ- कस्याप्याचार्यस्य समनोज्ञेषु सांभोगिकेषु विदेशं गतेषु पश्चादागत्य सांभोगिकाः केचिद् भिक्षाद्यलाभेनावसन्ना भवेयुस्ततस्तेऽपि तत्र विदेशं गन्तुं मनस आचार्यं पृच्छति सन्ति तत्रकेचिदस्माकं मनोज्ञाः सांभोगिकाः ।।

[भा.२९०१] अत्थित्ति होइ लहुतो कयादिउसन्न भुंजणे दोसा ।
नत्थि वि लहुतो भंडण नक्खित्तकहनेव पाहुण्णं ।

वृ- एवमुक्ते यद्याचार्यो,वदति सन्ति तत्र नक्र सांभोगिकास्तदाप्रायश्चित्तंभवति तस्य लघुको मासः किं कारणमिति चेदत आहकदाचित्तेऽवसन्नौ भूता भवेयुस्ते च प्राधूर्णिकास्तत्रगतास्तैः सह भुंजते, भुंजानानां च चतुर्गुरुकंप्रायश्चित्तं यत एवं दोषास्तस्मात्सन्तीति न वक्तव्यमत्राचार्यो ब्रूयात्-न सन्तीति तदपि मासो लघुकः कस्मादिति चेत् भण्डनदोषात्तनाहि ते तत्र ग्रामास्तेषां नास्ति केनापि गृहीते तैर्वस्तव्यैरुक्तमस्माकं ते सांभोगिकास्ततस्तैः प्राधूर्णका उक्ताः । कस्माद्वसतौनोत्तीर्णाः । प्राधूणकै रुक्तमस्माभिः क्षमाश्रमणाः पृष्टाः सन्त्यस्माकं तत्र सांभोगिकास्तैरुक्तं-न सन्ति । एवं वास्तव्यानाम-प्रीतिर्जाता किमस्माभिः कृतं यद्वयं विसंभोगाः कृतास्तदनन्तरं परुषमपि भाषन्ते ततो भण्डनं तथैव चाप्रीत्या मासपर्योग्यं वर्षाप्रायोग्यं वा न कथयन्ति । न च प्राघूर्णकत्वं कुर्युर्यस्मादेते दोषास्तस्मादाचार्येणैवं वक्तव्यम् ।।

[भा.२९०२] आसि तया समणुन्ना भुंजह दव्वाइएहिं पेहित्ता ।
एवं भंडणदोसा न होंति अमणुन्न दोस य ।।

वृ- यदास्मात् देशात् निर्गतास्तदा समनोज्ञाः सांभोगिका आसीत् आसीरन् । इदानीं न जानीमः किमनुपालयन्ति सांभोगिकत्वं वा नेति । केवलं द्रव्यादिभिद्रव्यतः क्षेत्रतः कालतो भावतश्च प्रेक्ष्य परीक्ष्य स भुंग्धमित्येवमाचार्येणोक्ते न भण्डनदोषा नाप्यमनोज्ञदोषा भवन्तीति ।।

[भा.२९०३] नायमनाए आलोयणाउ अनालोइए भवे गुरुगा ।

गीयत्थे आलोयण सुद्धमसुद्धं विविचंति ।।

**वृ-** ज्ञाते अज्ञाते वा सांभोगे आलोचना दातव्या तदनंतरं तैः सह संभुज्यते, यदि पुनरनालोचिते परस्परं भुंजते तदा भवंति चत्वारो गुरुकाः प्रायश्चित्तं सालोचना गीतार्थैर्दातव्या । सुद्धमसुद्धंविविचंति इति शुद्धो अशुद्धो वा य उपधिस्तं विविचंति पृथक्कुर्वन्ति प्रतिपद्यन्ते । एष निर्युक्ति गाथा समासार्थः ।

**[भा. २९०४]** अविनठे संभोगे नायमनाए य नत्थि पारिच्छा ।

एत्थोवसंपय खलु संहंवासेन्न आरं वो ।।

**वृ-** आर्यमहागिरेः परतः संभोगो अविनष्ट आसीत् । तदा ज्ञातेऽज्ञाते वा नास्ति द्रव्यादिभिः परीक्षा आर्यसुहस्तिशिष्य द्रमकप्रव्रज्या प्रतिपत्तिप्रभृतित आरात् विनष्टः संभोग इतिज्ञाते अज्ञाते वा द्रव्यादिभिः परीक्ष्यालोचयितव्यमालोचिते च सह भुज्जते । अथ सांभोगिकाः सन्तः कथं न ज्ञायन्ते येनाज्ञातेने-त्युच्यमानं संभवेत् तत आह- एत्थोवसंपवं खलु इत्यादि पूर्वं ये उपसम्पन्नास्ते असमानीभूता अन्ये पश्चात्केऽप्युपसम्पन्ना । अथवा पश्चादागत्य केचित् प्रव्रजितास्ततोऽदृष्टपूर्वतया ते न ज्ञायन्ते इत्यज्ञाता भवन्ति । गाथायामेकवचनं जातौ ततोऽयमर्थः । आरादपि पूर्वदर्शनादर्वागपि पश्चादुपसम्पत् शैक्षान् वा आसाद्य सांभोगिकानामप्यज्ञातता भवति । तदेवं नायमनाएति गतमिदानीमालोयणाउ-

**[भा. २९०५]** महल्लायए गच्छस्स कारणेहऽसिवदिहिं ।

देसांतरगयाणो णे तत्थिमा जयणा भवे ।।

**वृ-** अति महत्तया गच्छस्य नास्ति एकत्र संस्तरणं । यद्यस्ति वा अशिवादिभिः कारणैर्देशान्तरगताएतैः कारणैः बहवः पृथक् पृथक् स्थिता स्तत्र पूर्वस्थितेषु पश्चादागतानां परस्परं यत्र मेलापको भवति तत्रेयं यतना ।।

**[भा. २९०६]** दोन्नि वि जइ गीयत्था राइनिए तत्थ विगडणा पुव्वं ।

पच्छा इयरो वि दए समानतो च्छत्तछायातो ।।

**वृ-** अगीतार्थेन गीतार्थस्य पुरत आलोचयितव्यं । यदि पुनर्द्वावपि गीतार्थौ ततोऽवमरत्नाधिकेन गुरुरत्नाधिकस्य पुरत आलोचयितव्यमवमरत्नाधिकेनालोचिते पश्चादितरोऽपि अवमरत्नाधिकस्य पुरतो आलोचनां ददाति । यः पुनः समानच्छत्रछायाकः समरत्नाऽधिकस्तत्र यः पश्चादाचार्यसमीपा-न्निर्गतस्तस्य पुरतः प्रथममालोचयितव्यः । पश्चादितरस्य समीपे तेन यदि पुनरनालोचिते परस्परं भुञ्जते तदा प्रायश्चित्तं प्रत्येकं चत्वारो गुरुकाः । एतेन अनालोइए भवे गुरुगा गीयत्थे आलोयणा इति व्याख्यातम् ।। सम्प्रति शुद्धमशुद्धं विविचंतीत्यस्य व्याख्यानमाह-

**[भा. २९०७]** निक्कारणे असुद्धो उ कारणे वानुवायतो ।

उज्झंति उवहिं दोवि तस्स सोहिं करेंति य ।।

**वृ-** य उपधिर्निष्कारणे पुष्टालम्बनमन्तरेणोद्गमादिभिर्दोषैरशुद्धो गृहीतो यश्च कारणेऽनुपायतो यतनया गृहीतस्तमुपधिं द्वावपि परित्यजतस्तस्य परस्परमालोचनायां येन दोषेण शुद्धोपधिरात्त-स्तत्प्रत्ययमयतना प्रत्ययं च प्रायश्चित्तं प्रतिपद्यते ।।

**[भा. २९०८]** एवं तु विदेसत्थे अयमन्नो खलु भवे सदेसत्थे ।

अभिनीवारीगादी विनिग्गए गुरुसगासतो ।।

**वृ-** एवमुक्तेन प्रकारेण खलु विदेशस्थे यतना भणिता । अयमन्यः खलु यतनाप्रकारः स्वदेशस्थे

तमेवाह-अभिनिवारिका प्रागुक्त स्वरुपा तया, आदिशब्दादुपधिकार्येण स्पर्धकपतीनां वा सारा-करणेन गुरुपदेशतो गुरुसकाशाद्विनिर्गते विनिर्गमेनैव प्रत्यागतैराचार्यपादमूलं कस्यां वेलाया-मागन्तव्यमेनामेव निर्युक्तिगाथां भाष्यकारो विवृणोति-

**[भा.२९०९]** अभिनिवारे निग्गते अहवा अन्नेण वावि कज्जेण ।
विसणं समणुन्नेसुं काले कोवावि कालो उ ।।

**वृ-** अभिनिवारिकया प्रागुक्तस्वरुपया निर्गते अन्येन वा उपध्युत्पातनादिना कार्येण निर्गते भूयः स मनोज्ञेषु सांभोगिकेषु स्याचार्यपादमूले इत्यर्थः । विशनं प्रवेशः काले कर्तव्यः । शिष्यः प्राह-कः कालः ? । सूरिराह-

**[भा.२९१०]** भत्तट्ठिय आवासग सोहेउ मतिति पच्छअवरण्हे ।
अब्भुट्ठाण दंडाइयाण गहणेगवयणेणं ।।

**वृ-** भक्तार्थिनां कृत्वा बाह्यग्रामेषु भिक्षामटित्वा भोजनं च विधाय तदानन्तरमावश्यकमुच्चारादि शोधयित्वा पश्चादपराह्णे कालवेलायामायान्ति वास्तव्यैरपि नैषेधिकीं शब्दं श्रुत्वा अभ्युत्थानं कर्तव्यम् । दण्डादीनामादिशब्दात् पात्रादिपरिग्रहो ग्रहणं कर्तव्यं । कथमित्याह-एकवचनेन दण्डादिकं गृह्णामीत्येवं रुपेणैकेन वचनेन यदि समर्पयन्ति तदा गृहीतव्यः । किं कारणमिति चेदुच्यते-वास्तव्येनातिशयेन गृहीते गृहीतमिति मन्यमानेन प्राघूर्णकेन वास्तव्या गृहीते मुक्ते भाजनभेदो भवति । तेन च पतता प्राणजातिविराधनास्ततस्तन्निष्पन्नं प्रायश्चित्तं तस्मादेकवचनेन दण्डादिग्रहणं, वक्ष्यमाणकारणैः । पुनरपवादपदतः कालवेलायां न प्रविशेत् । तान्येव कारणान्याह-

**[भा.२९११]** खुड्डगविगिट्ठगामे उण्हं अवरण्हे तेन तुपगेवि ।
पक्खित्तं मुत्तूणं निक्खिव उक्खित्तमोहेणं ।।

**वृ-** क्षुल्लको ग्रामे यत्र प्रस्तो वर्ततेतत्र पर्याप्तं न भविष्यतीति हेतोर्यदि वा विकृष्टमन्तरं ततः कृतभिक्षाका न प्राप्स्यामोऽथवाऽपराह्णे व्रजतां तापस्तत एतैः कारणैः प्रागपि प्रातरपि प्रविशेत् । तत्र च नैषेधिकशब्दं श्रुत्वा यत् मुखे प्रक्षिप्तं तत् मुक्त्वा तत् गिलनीयमित्यर्थः यत् उत्क्षिप्तं लम्बने वर्तते तत्पात्रे निक्षिप्य वास्तव्यैरभ्युत्थातव्यमत्र यदि प्राघूर्णकाः कृतपर्यायाः ततस्तैर्वक्तव्यं मा अभ्युत्तिष्ठत वयं कृतपर्याप्ताः समागता यदि वा यस्य कस्याप्यर्थः तैः समं भुङ्क्ते । अथ कदाचित् प्राघूर्णका न कृतपर्याप्ता भवेयुस्तदा सर्वा तेषां दत्वा वास्तव्या अन्यत् गृह्णन्ति । अथ वास्तव्यैरतिशयेन पर्याप्ते लब्धे ते प्राघुर्णकास्स-मागतास्ततो यदि तपोऽर्हं प्रायश्चित्तमापन्नास्तदा ओघालोचनया आलोच्य तैः समं भुञ्जते । एष निर्युक्तिगाथासमासार्थः साम्प्रतमेनामेव विषयपदव्याख्यानतो व्याख्यानयति -

**[भा.२९१२]** जइ उ तवं आवन्नो जा भिन्नो अहव होज्ज नावन्नो ।
तहियं ओहालोयण तेन परेण विभागी उ ।।

**वृ-** वास्तव्यैर्भिक्षावेलायामतिशयेन पर्याप्ते लब्धे यदि प्राघूर्णकाः समागच्छन्ति तदा यदि प्राघूर्णकस्तपोर्हं प्रायश्चित्तमापन्नोऽपि यावदद्यापि भिन्नो न भवति छेदादिकं प्राप्त इत्यर्थः । अथवा तपोऽर्हमपि प्रायश्चित्तं नापन्नः तदा ओघालोचनया आलोच्य तैः सम मण्डल्यां समुद्दिशन्ति । ततः समुद्देशानन्तरं परतो विभागालोचनयालोच्य प्रायश्चित्तं प्रतिपद्यन्ते । अथ छेदादिकमापन्नस्ततो मण्डल्या उत्कृष्य दीयते । अथ वेलायां न प्राप्ताः किन्त्वनागाढायां पौरुष्यां प्राप्तास्तत्र विधिमाह-

[भा.२११३] अहवा भुत्तुद्धरियं संखडि अन्नेहिं वा वि कज्जेहिं ।
तं मुक्कं पत्तेयं इमे य पत्ता तहिं हुज्जा ।।

वृ- अथवेति प्रकारान्तरे वास्तव्यानां भुक्तोद्धरितं वर्तते । अथवा संखड्यां निमन्त्रिताः श्राद्धादिभिर्वास्तव्यास्तत्र भुक्तपर्याप्तं गृहीतमस्ति यदि वा आचार्याः कुलादिकार्ये विनिर्गतास्तान् कियन्तं कालं प्रतीक्ष्य ततु योग्यं मण्डल्यां भुंक्ते प्रत्येकमुद्धरितमस्ति । इमे च प्राघूर्णकास्तत्रावसरे प्राप्ता भवेयुस्ततो वास्तव्या नैषेधिकी शब्दं श्रुत्वा समुत्थाय भणन्ति-

[भा.२११४] भुंजह भुत्ता अम्हे जे वा इच्छंति य भुत्ते सह भोज्जं ।
सव्वं च तेसि दाउं अन्नं गेण्हंति वत्थव्वा ।।

वृ- भुगृध्वं यूयं वयं भुक्ता यो वा इच्छति अभुक्तैर्वास्तव्यैः सह भोज्यं स तैः सह भुङ्क्ते । अथवा प्राघूर्णकानां न पश्चाद्भागे परिपूर्णं जातं ततु सर्वं तेषां प्राघूर्णकानां दत्वा वास्तव्या अन्यतु गृह्णन्ति ।।

[भा.२११५] तिन्नि दिने पाहुणं सव्वेसिं असति बालवुड्ढाणं ।
जे तरुणा सग्गामे सव्वत्था बाहि हिंडंति ।।

वृ- सर्वेषामागतानां त्रीणि दिनानी यावत् प्राघूर्णकत्वं करणीयं । अथ सर्वेषा कर्तुं न शक्नुवन्ति ततः सर्वेषामभावे बालवृद्धानां त्रीणि दिनानि प्राघूर्णकत्वं करणीयं ये तथा प्राघूर्णकानां तरुणास्ते स्वग्रामे हिण्डन्ते ये तु वास्तव्यास्तरुणास्ते उद्भ्रामकभिक्षाचर्यया बहिर्ग्रामे हिण्डन्ते ।।

[भा.२११६] संघाडेगसंजोगो आगंतुगभद्दएतरेसाहिं ।
आगंतुकावबाहिं वत्थव्वयभद्दए हिंडे ।।

वृ- यदि ग्रामवास्तव्या जना आगन्तुकभद्रकास्तदा प्राघूर्णकानामेकैको वास्तव्येन समं सङ्घाटकेन हिण्डते । इतरे वास्तव्यानां संङ्घाटसंयोगा उद्भमरितास्तेबहिर्ग्रामे उद्भ्रामकभिक्षाचर्यायां व्रजन्ति । अथ ग्रामवास्तव्या जना वास्तवभद्रकास्ततो वास्तव्यनामेकैकः प्राघूर्णकेन समं हिण्डते । ये तु प्राघूर्णकानां सङ्घाटकसंयोगा अधिकास्ते बहिरुद्भामक भिक्षाचर्यया व्रजन्ति । उपधिचिन्तायामपि परस्परमालोचनायां दत्तायां यो गीतार्थेन उपधिरुत्पादितः स परिभुज्यते । यस्त्वगीतार्थेनोत्पादि तस्तस्य परित्यागः करणीयः ।

मू. (१६४) *जाओ निग्गंथिओवा निग्गंथा वा संभोइया सिया, नोण्हं कप्पइ पच्चक्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए; कप्पइण्हं परोक्खं पाडिएक्कं संभोइयं विसंभोगं करेत्तए । जत्थेव ताओ अप्पणो आयरियउवज्झाए पासेज्जा, तत्थेव एवं वएज्जा- 'अहणं, भंते, अमुगीए अज्जाए सद्धिं इमम्मि कारणम्मि परोक्खं पाडिएक्कं संभोगं विसंभोगं करेमि ' । साय से पडितप्पेज्जा, एवं से नो कप्पइ परोक्ख पाडिएक्कं संभोइयं विसंभोगं करेत्तए; सा यं से नो पडितप्पेज्जा, एवं से कप्पइ परोक्खं पाडिएक्कं संभोइय विसंभोगं करेत्तए ।*

[भा.२११७] मंडुगगति सरिसो खलु अहिगारो होइ बिइयसुत्तस्स ।
संपुडतो वा दोण्हवि होइ विसेसोवलंभो वा ।।

वृ- मण्डूकः शालूरः स यथा उत्प्लुत्य गच्छति एवं निर्ग्रन्थसूत्रान्निर्ग्रन्थीसूत्रं विसदृशमिति मण्डूकी गतिसदृशं तत उक्तं द्वितीयसूत्रस्याधिकारप्रस्तावो मण्डूकगतिसदृशः । तथा संपुडतो वा इत्यादि यथा

द्वे फलके एकत्र कृते फलक सम्पुट इत्युच्यते । एवं निर्ग्रन्थसूत्रात् द्वितीयं निर्ग्रन्थी सूत्रं सम्पुटसदृशं भवति तत उक्तं द्वयोरपि सूत्रयोः सम्पुटक इति निर्ग्रन्थसूत्रादनन्तरं निर्ग्रन्थीसूत्रमुक्तं भवति । विशेषोपलंभो वा इति ये निर्ग्रन्थी सूत्रं पठ्यते । ततः शिष्याणां विशेषोपलम्भो भवति । दूरव्यवधाने तु न स्यात् ततो भवति विशेषोपलंभ इति कृत्वा निर्ग्रन्थसूत्रादनन्तरं निर्ग्रन्थीसूत्रमुक्तमेवमनेन सम्बन्धेनायातस्यास्य व्याख्या-या निर्ग्रन्थ्यो वा सांभोगिकाः स्युस्तेषां न कल्पते प्रत्यक्षं प्रत्येकं सांभोगिकी सांभोगां कर्तुं कल्पते परोक्षं प्रत्येकं सांभोगिकं विसांभोगीकर्युं यत्रैववा तानि निर्ग्रन्थ्य आत्मीयान् आचार्योपाध्यायान्पश्यन्तितत्रैव एवं वदन्ति । अथ नमिति वाक्यालङ्कारे । भदन्त अमुकया सहास्मिन् कारणे समापतिते परोक्षं प्रत्यक्षं प्रत्येकं संभोगं विसंभोगं करोमि । सा च सं तस्याः प्रवर्तिन्याः प्रति तपति मिथ्यादुष्कृतप्रदानेनानुतपति असद्धातदाख्यानमिति प्रत्याययति । एवं सति न कल्पते परोक्षं प्रत्येकं सांभोगं विसंभोगं कर्तुमत सा तस्याः प्रागुक्तप्रकारेण नानुतपिता स्यत एवं सति से तस्याः कल्पते परोक्षं प्रत्येकं संभोगं कर्तुमिति सूत्राक्षरार्थः ।। सम्प्रति भाष्यकारः प्राह-

[भा.२११८] एसोवगमो नियमा निग्गंथीणं पि होइ नायव्वो ।
जं एत्थं नाणत्तं तमहं वुच्छं समासेणं ।।

वृ- यो निग्रन्थसूत्रस्य व्याख्यागम उक्त एव एव गमो निर्गन्थीनामपि सूत्रे भवति ज्ञातव्यः केवलं यदत्र नानात्वं तदहं समासेन वक्ष्ये । तदेव विवक्षुः प्रथमतः प्रश्नमुत्थापयति-

[भा.२११९] किं कारणं परोक्खं संभोगा तासु कीरइ वीसुं ।
पाएण ताहि तुच्छा पच्चक्खं भंडणं कुज्जा ।।

वृ- किं कारणं केन कारणेन तासु संयतीसु परोक्षं संभोगो विष्वक् क्रियते । आचार्य आह-हि यस्मात्प्रायेण ताः संयत्यस्तुच्छाः । ततः प्रत्यक्षं विसंभोगकरणे भण्डनं कुर्युः ।।

[भा.२१२०] दोन्नि वि ससंजतीया गणीणो एक्कस्स वा दुवे वग्गा ।
वीसुकरणंमि तेच्चिय कवोयमादी उदाहरणा ।।

वृ- द्वौ गणिनावाचार्यौ ससंयतीकौ परस्परं सांभोगिकावथवा एकस्य द्वौ वर्गौ संयतवर्गः संयतीवर्गश्च । अपरस्य त्वेक एव संयतवर्गः । तौ यां विसंभोगां कुरुतस्तां तैरेव चटकगृहिककपोतप्रविशनादिरूपादुदाहरणात् प्रागुक्तप्रकारेण विसंभोगं कुरुत इत्यर्थः । कथमित्याह-

[भा.२१२१] पडिसेवितं तु नाउं साहंती अप्पणा गुरुणं तु ।
तेवि य वा हरिऊणं पुच्छंती दोवि सब्भावं ।।

वृ- काश्चित्संयत्यः कासांचित् संयतीनां प्राघूर्णिका गतास्ताभिश्च पूर्वप्रकारेण प्रथमालिका कृता जाता शय्यातरपिण्डा शङ्का । अथवा हरितोपलिप्तायां वसतौ स्थिता यदि वा सदीपायां ततस्ताभिरागत्य निजप्रवर्तिन्या कथितं यथा-एताः शय्यातरपिण्डमासेवन्ते । प्रतिदिवसं हरितोपलिप्तायां वसतौ वसन्ति सदीपायां वेति सापि प्रवर्तिनी तन्मुखात्प्रतिसेवितमिति ज्ञात्वा ताभिः सह गत्वात्मनो गुरुणां कथयति । तेऽपि च गुरवो व्याहृत्य आकार्यद्वावपि संयती वर्गौ सद्भावं पृच्छन्ति । केवलं यदि ता एकगुरुप्रतिबद्धा अन्यथा दोषस्तथा चाह-

[भा.२१२२] जइ ताउ एगमेगं अहवावी परगुरुं वइज्जाहि ।
अहवावी परगुरुतो पवत्तिणी तीसुवीगुरुगा ।।

**वृ-** यदि यकाभिः प्रतिसेवितं शय्यातरपिण्डादि यकाभिश्च प्रतिसेवितं ज्ञात्वा गुरुभ्यः कथितं ता यदि एकमाचार्यमाश्रिताः । अथवा आत्मीया अपि सत्यः शय्यातरपिण्डाद्या सेविन्यः परं गुरुं कुतश्चित्कारणात् व्रजेयुः प्रतिपन्ना यदि वा सा प्रवर्तिनी यत्संयतीभिः शय्यातरपिण्डाद्यासेवितं परगुरुत्त उपसम्पदं प्रतिपन्नासु एतासु तिसृष्वपि यद्याचार्यः स्वयं पृच्छति कोऽत्र भूतार्थ इति तदा प्रायश्चित्तं चत्वारो गुरुकाः किं कारणमिति चेदत आह-

**[भा.२९२३]** भंडण दोसा हुंती वगडासुत्तं मि जे भणियपुव्विं ।
सयमवि य वीसुकरणे गुरुगा चावल्लया कलहो ।।

**वृ-** तासां तिसृणामपि स्वयं प्रच्छने भण्डनदोषा भवन्ति ये भणिताः पूर्वं कल्पाध्ययने प्रथमोद्देशके वगडासूत्रे तं चेमे तासां स्वयं प्रच्छने त्रिषु स्थानेषु भण्डनं तानि च त्रीणि स्थानान्यमूनि-आत्मनो द्वौ गच्छौ संयतवर्गः संयतीवर्गश्च तृतीयोऽन्याचार्यः सक्ताः संयताः संयत्यश्च एषैको वर्गो भ(ग) एयक्ते । भण्डनं पुनरेवं जायते ताः संयत्यः परकीयरूपाः पृष्टाः सत्यो ब्रूयुर्यथा जानीमो यत् दुःखापिता इहलोक-सहायया निजप्रवर्तिन्या एवमुक्ते संयतास्ताभिः सह कलहं कुर्युः । संयतीनामपि परस्परं रण्डारटिर्भवति । तथान्ये गच्छवर्तिनः साधवः पराचार्येण समं परसंयतैः समं परसंयतीभिश्च समं रटिं विदध्युर्यत् एवं दोषास्तस्मात् द्वावपि तौ संयतीवर्गावात्मनः आत्मनाचार्यस्य कथयतः । यदि पुनस्ताः संयत्यः स्वयमेव विष्वक् संभोगं कुर्वन्ति ता तासां प्रायश्चित्तं चत्वारो गुरुकाः, कस्मादिति चेदत आह-चापल्यतश्चपलतादोषेण कलहः परस्परं भूयादिति हेतोः ।।

**[भा.२९२४]** पत्तेयं भूयत्थं दोण्हंपि गणहरो तुलेऊणं ।
मिलिउं त्तगुण दोसे परिक्खिउं सुत्तनिद्देसो ।।

**वृ-** यत एवं दोषास्तस्मादात्मन आचार्यस्य कथनीयं तौ च गणधरौ द्वावपि संयती वर्गयोः प्रत्येकं भूतार्थं तुलयित्वा सम्यग् विज्ञाय तत एकत्र मिलित्वा तयोर्द्वयोरपि संयतीवर्गयोर्गुणदोषान् परीक्ष्य सूत्रनिर्देशः कर्तव्यः । स चायं यदि नानुतपंति ततस्तत्रैव यत्र मिलिताः सयतीनां परोक्षं संभोगं कुर्वन्ति । प्रत्यक्षं संयतीनां विसंभोगकरणे तुच्छतया कलहभावात् ।।

**मू. (१६५)** *नोकप्पइ निग्गंथाणं निग्गंथीं अप्पणो अट्ठाए पव्वावेत्तए वा मुंडावेत्तए वा सेहावेत्तए वा उवठावेत्तए वा संभुंजित्तए वा तीसेइत्तरियं दिसं वा अनुदिसं वा उद्दिसित्तए वा धारेत्तए वा ।*

**मू. (१६६)** *कप्पइ निग्गंथाणं निग्गंथिं अन्नेसिं अट्ठाए पव्वावेत्तए वा धारेत्तए 'वा ।।*

**[भा.२९२५]** संभोगंमि पवत्ते इमा विसंभुजते उवठविउं ।
सीसायरियत्ते वा पगते न दिक्खंति दिक्खेय ।।

**वृ-** पूर्वसूत्रेभ्यः संभोगे प्रवृत्ते प्रस्तुतसूत्राभिहिता उपस्थाप्य संभुज्यते अथवा शिष्यत्वमाचार्यत्वं च प्रकृतमस्ति ततः शिष्याचार्यत्वे प्रकृतेऽनेनापि सूत्रद्वयेनेदमुच्यते-अन्यस्यार्थाय निर्ग्रन्थी दीक्षन्ति नात्मनोऽर्थायेति । अनेन सम्बन्धेनायातस्यास्य व्याख्या न कल्पते निर्ग्रन्थानां निर्ग्रन्थीमात्मनोऽर्थाय प्रव्राजयितुं सामायिकारोपणतो मुंडापयितुं लोचकारापणतः शिष्यापयितुमासेवनाशिक्षाग्रहणप्रदानतः उपस्थापयितुमुत्थापनाकरणतः संभोक्तुं षण्णां सांभोगिकानामन्यतमेन यथा योगेन संभोगेन वस्तुं वा तथा तस्या इत्वरां दिशमाचार्य लक्षणामनुदिशं वा उपाध्यायादिरूपामुद्देष्टुं वा धारयितुं वा कल्पते । निर्ग्रन्थानां निर्ग्रंथीमन्येषामपि इत्यादि प्राग्वन्नवरमन्येषामित्याचार्यस्योपाध्यायस्य वा प्रवर्तिन्या

अर्थाय ते एतस्या उपग्रहं करिष्यन्तीत्यादि अभिप्रायेण शेषं सुगमम् । अत्र भाष्यकारः प्राह-

[भा.२१२६] अन्नट्ठमप्पणा वा पव्वावणे चउगुरुं च आणादी ।
मिच्छत्ता तेन संकइ मेहुणे गहणे जं च ॥

वृ- शिष्यस्य मे सर्वकार्येषु सहायिनी भविष्यति इत्येवमन्यार्थमेवमात्मनो वार्थाय यदि प्रव्राजयति निर्ग्रन्थी तदा तस्य प्रायश्चित्तं चतुर्गुरु आज्ञादयश्च दोषास्तथा मिथ्यात्वं तीर्थकरवचनातिक्रमात् । तथा स्तैन्यार्थं शङ्कायां किमयं प्रव्राज्य (ज्या) हरिष्यति एष धर्मं श्रद्धया प्रव्राजयतीत्येवं शङ्कायां प्रायश्चित्तं चतुर्लघु उपलक्षणमेतत् । निःशङ्कितमेषप्रव्राज्य हरिष्यतीति निश्चयेऽपयत्प्रायश्चित्तं चत्वारो गुरुकाः । तथा मैथुने शङ्किते शङ्कितेयथा किंमैथुनार्थमेव प्रव्राजयति उत् धर्मश्रद्धयाति यत् प्रायश्चित्तं चतुर्गुरुकम् । नूनमेष मैथुनार्थं प्रव्राजयतीत्येवं निःशङ्किते यन्मूलं प्रायश्चित्तम्, । वस्त्र ग्रहणे कञ्चुकादि संघाट प्रावरणोपदेशदाने कक्षान्तरादिदृष्ट्वा परोभयसमुत्थदोषैर्ब्रह्मचर्यविराधनं तन्निमित्तमपि प्रायश्चित्तमापद्यते ॥

[भा.२१२७] तेनट्ठमेहुणे वा हरइ अयं संकसंकिए सोही ।
कक्खादिभिक्खदंसण मथथक्कातोभये दोसा ॥

वृ- अयं प्रव्राजनाव्याजेन हरतीत्येवं शङ्कायामशङ्किते वा स्तैन्यस्यार्थे तथा मैथुनशङ्कायमशङ्किते वा मैथुने या शोधिः प्रायश्चित्तं तदापद्यते । तथा कक्षादीनामथक्रमप्रस्तावमभीक्ष्णदर्शने आत्मोभयदोषा उपलक्षणमेतत् । परदोषाश्च च तानपि प्राप्नोति एतदेव सविशेषमाह-

[भा.२१२८] हरतिती संकाए लहुगा गुरुगाय होंति नीसंकी ।
मेहुणसंके गुरुगा निस्संकिए होइ मूलं तु ॥

वृ- अथ प्रव्रज्यादानव्याजेन हरतीत्येव शङ्कायां प्रायश्चित्तं चत्वारो लघुकाः । निशङ्कं हरणे नूनमेष निश्चितं हरिष्यतीत्येवं निश्चये भवन्ति चत्वारो गुरुकाः । तथा मैथुनाशङ्कायां चत्वारो गुरुका निःशङ्किते मैथुने वा भवति मूलं अमुमेवार्थं सूत्रकृतालापकेन संवादयति-

[भा.२१२९] अविधूवगादिवासो पडिसिद्धो तहयवाससतिहिगा ।
वीसत्थादीदोसा वि जड्डा एवं तु वुत्ता ॥

वृ- पूर्वसूत्रकृताङ्गे एवोक्ता अभिहिताः पूर्वोक्ताः ॥

[भा.२१३०] पव्वावणेसपक्खे परिच्छिए दोसविवज्जिए ।
दिक्खाएवं सुत्तं सफलं सुत्तनिवातोउकारणिउ ॥

वृ- यस्मादेते दोषाः सपक्षे प्रव्राजना कर्त्तव्या । तद्यथा-पुरुषाः संयतैः प्रव्राजनीयाः, स्त्रियः संयतीभिः, संयतिरनुज्ञाताभिः सा च दीक्षा परिपृच्छ्य किंप्रव्रजसि इतिपृष्टा यद्यभ्युपगच्छति तदा दातव्या परदोषवर्जिते अठारसपुरिसेष्वेवमादिदोषरहिते । अत्र पर आह-यद्येतत्तत्वं तर्हि सूत्रमफलं सूत्रे परपक्षेऽपि दीक्षाया अभ्यनुज्ञानात्तस्याश्चासम्भवात् । आचार्यः प्राहसूत्रनिपातः कारणिकः कारणमपेक्ष्येदं सूत्रं प्रवृत्तमिति भावः । किं तत्कारणमत आह-

[भा.२१३१] कारणमेगमडंवेखंतियमादीसु मेलणा होइ ।
पव्वज्जमब्भुवगए अप्पाणे च उव्विहातुलना ॥

वृ- कारणमशिवादि लक्षणमधिकृत्य कोऽपि साधुरेकाकी जातः कथमप्येक मण्डवेगतः एक मण्डवं नाम यस्य निवेशस्य सर्वासु दिक्षु च नास्ति कोऽप्यन्यो ग्रामो नगरं वा तस्मिन्नेवमण्डवे गतस्तत्र च संयत्यो

न विद्यन्ते अथ च तस्मिन्नेकमण्डवे तस्य साधोर्माता भगिनी अन्या वा काचननालसम्बधा स्वजनास्ति, कोऽप्यन्यो ग्रामं नगरं वा तासां मात्रादीनां मेलनं मेलापकः सार्थोर्भवति । स च मात्रादिकः स्त्रीजनो धर्मे कथितेऽकथिते वा प्रव्रज्यां प्रतिपत्तुमभ्युपगतो यथा वयं प्रव्रज्यां प्रतिपद्यामहे । एवं प्रव्रज्यामभ्युपगते मात्रादावशङ्कनीये स्त्रीवर्गे यतना कर्तव्या । सा चेयं-तेन साधुना चतुर्विधया तुलनया तोलयित-व्यस्तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्र द्रव्यतो यदि समर्थ हारमुपधिभैषजादिकं चोत्पादयितुं समर्थः, ।तथा कस्याप्येवं स्भावतो भवति । यथा न शक्नोतिस्थातुं प्रथमालिकां विना चतुर्थरसिकादिकं वा पानकं न शक्नोति पातुं । ततस्तद्योग्यं पानकं प्रथमालिकां वा नेतुं समर्थः । क्षेत्रतो यदि शक्नोति पथि पादाभ्यां गन्तुमध्वनि वा यदि शक्नोति आहारादिकमुत्पादयितुम् । कालतो ग्रीष्मकाले पानकं शीतकाले तत्कालप्रायोग्यमाहारादिकं तदुत्पादयितुं समर्थः । रात्रौ मध्याह्ने वा यदि गन्तुं प्रभुः, भावतो यदि क्रोधादीनां जयं कर्तुं क्षमो ज्ञानदर्शनचारित्राणि सामाचारीं च ग्राहयितुमीशस्ततो यावदाचार्याणां प्रवर्तिन्या वा मूलं न प्राप्नोति, तावदनया चतुर्विधया तुलनयात्मानं तुलयित्वा यदि समर्थो जातस्ततः प्रव्राजयति । एतदेवाह-

**[भा.२१३२]** असिवादिकारणगतो वोच्छिन्नमडंबसंजती रहिते ।
कहियाकहियउवट्ठिय असंकइत्थी समा जयणा ॥

**वृ-** अशिवादिभिः कारणैरेकाकी व्यवच्छिन्ना ग्रामनगरादयो दिक्षुविदिक्षु च यस्मात्तस्मिन् व्यवच्छिन्ने संयतीरहिते मडंबे गतस्तत्र च धर्मे कथिते अकथिते वा मात्रादयो व्रतग्रहणार्थमुपस्थितास्तासु अशङ्कासु अशङ्कनीयास्वियं वक्ष्यमाणा यतनातामेवाह-

**[भा.२१३३]** आहारा दुप्पायणे दव्वे समुइं च जाणते तीसे ।
जइ तरइ गंतु खेत्ते आहारादीनि अद्धाणे ॥

**वृ-** द्रव्ये द्रव्यतो यद्याहारादीनामादि शब्दादुपध्यादि परिग्रहः उत्पादने समर्थः । समुइं नाम स्वभावः भावं तस्या जानाति यथा प्रथमालिकां विना न शक्नोति चतुर्थरसिकादिकं च पानीयं पातुं न शक्नोति, ततस्तद्योग्यं पानं प्रथमालिकांचोत्पादयितुं क्षमः । तथा क्षेत्रतो यदि पथि पादाभ्यां गन्तुं तरति अध्वनि वाहारादिकमुत्पादयितुम् ।

**[भा.२१३४]** गिम्हातिकाले पानग निसिगमनातिसुवा विजइसत्तो ।
भावे कोहाइ जओ गाहणनाणेय चरणे य ॥

**वृ-** काले ग्रीष्मादौ यदि पानकमुत्पादयितुमीश उपलक्षणमेतत् । शीतकाले वर्षाकाले च प्रायोग्यं तत्सम्पादयितुं शक्तो भावे यदि क्रोधादिजयः कर्तुं शक्यते ज्ञाने चरणे च तस्या ग्रहणे समर्थस्तदा यावदाचार्यमूलं प्रवर्तिनी मूलंचन प्राप्नोति । तावदेतया चतुर्विधयात्मानं तोलयित्वा यद्यात्मनः समर्थता गम्यते तदा प्रव्राजयति यावत्कथा समर्थो वा प्रव्राजयति । अत्रेयं मार्गणा यो यावत्कथं परिपालयितुं समर्थः स नियमात् प्रव्राजयति, इतरस्मिंस्तु भजना । तथाहि-यो यावत्कथं परिपालयितुं समर्थः तस्य यद्याचार्यः सलब्धिकः परिपालने समर्थोऽन्यो वा स्वगणशक्तः परिपालयितुं क्षमः, ततः प्रव्राज्य तस्य समर्पयति । अथाचार्योऽन्यो वा स्वगणाशक्तस्तां परिपालयितुसमर्थस्तदा न प्रव्राजयति । इयमितरस्मिन् भजना ॥

**[भा.२१३५]** अब्भुज्ज मेगयरं पडिवज्जिउ कामो जो उ पव्वावे ।

गुरुगा अविज्जमाने अन्नेगणधारणसमत्थे ।।

वृ- योऽभ्युद्यतमेकतरं नाम लब्धिक आर्यिकाणां परिपालने च समर्थस्तदा तस्य मात्रादिकाव्रत-ग्रहणार्थमुपस्थिताः स यदि अभ्युद्यत विहारं मरणं वा प्रतिपत्तुकामस्तर्हि यदि तस्याचार्योऽन्यो वा स्वगणसक्तः परिपालने समर्थस्तदा ता प्रव्राज्यतस्यसमर्पयति समर्प्य वाभ्युद्यतविहारमरणं वा प्रतिपद्यते अथ-नास्त्याचार्यः स्वगणसक्तो वातासां परिपालकस्तदा अन्यस्मिन् गणधारणसमर्थेऽविद्यमाने योऽभ्युद्यतमेकतरं विहारं मरणं वा प्रतिपत्तुकामः प्रव्राजयति तस्य प्रायश्चित्तं चत्वारो गुरुकाः ।।

[भा.२९३६] जो विय अलद्धिजुत्तो पव्वावेंतस्स होंति गुरुगाउ ।
जम्हा जोउ समत्थो सो पव्वावेइ ता उवा ।।

वृ- योऽप्यलब्धियुक्तो न तत्प्रायोग्याहारयितुमीशस्तस्यापि प्रव्राजयतो भवन्ति चत्वारो गुरुकाः प्रायश्चित्तं, यत एवमसमर्थतायां प्रायश्चित्तं तस्माद्यः समर्थः स ता मात्रादिकाः स्त्रीः प्रव्राजयति ।

[भा.२९३७] एवं तुलेऊणप्पं सा वि तुलिज्जइ उ दव्वमाईहिं ।
कायाणं दायाणं दिक्खसिक्ख इत्तरदिसानयणं ।।

वृ- एवमुक्तेन प्रकारेणात्मानं द्रव्यादिरूपया चतुर्विधया तुलनया तोलयत्वा या सा प्रव्राजनीया सापि द्रव्यादिभिस्तोलयितव्या । सा च तुलनाग्रे भणिष्यते, । यदि तुलनायामुक्तायां सा ब्रूते सर्वमहं कर्तुं समर्था इति तदा सा दीक्षणीया सा च तुलना तस्याः कर्तव्या । यस्याः स्वभावो न ज्ञायते यस्याः पुनः स्वभावो ज्ञातो वर्तते । तत्रान्यतुलनैव प्रागुक्ता कर्तव्या, । अथ यदि तस्य माता भगिनी वा ततः कथं तस्याः स्वभावो न ज्ञायते, । उच्यते-स लघुक एव नष्टः प्रव्रजितो वा । ततः स्वभावापरिज्ञानं, कायाणदायणमिति कायानां पृथिवीकायादीनां कर्तव्यं । यथा एष पृथिवीकाय उच्यतेऽयमप्कायोऽयं तेजस्काय एष वायुकायोऽयं वनस्पतिकाय एष चलनधर्मा द्वीन्द्रियादिस्त्रसकायस्तत्र पृथिव्या आलिखनादि न कर्तव्यमप्कायेन स्वगात्रसेवनादि, तेजस्कायेन प्रतापनादि च वनस्पतिकायेन दन्तधावनादि त्रसकायस्य परितापनादि । यदि पुनः कायैः कार्यमुपजायते, तदा तत्कारणे, प्रासुकेन परिमितेन कर्तव्यम् । एवमभ्युपगते तस्या दीक्षा दातव्या । तदनन्तरं ग्रहणशिक्षा सेवनाशिक्षा च शिक्षणीया । तत्र ग्रहणशिक्षा सा दशवैकालिकादि सूत्रं पाठनीया । आसेवनाशिक्षा यत्परिधानपनादि शिक्षतं तत्र परिधापनविधि-मुपदर्शयितुकामेन पूर्वं लघुबालकसंयती नेपथ्येन परिधाप्यते तत उच्यते एवमार्ये त्वमपि परिधानं कुर्याः तथा भिक्षाटनसामाचारीं संक्षेपेण कथयति । तत इत्वरदिक्करणं यावदाचार्यसकाशं न व्रजामि तावदहमेव ते आचार्योऽहमेव च प्रवर्तिनी । आचार्यसमीपं गतानां त्वाचार्या ज्ञातारस्ततो वक्ष्यमाणविधिना गुरुसमीपे नयनं । एष निर्युक्ति गाथासमासार्थः । साम्प्रतमेनामेव विवरीषुः भाष्यकारः आह-

[भा.२९३८] पेज्जादि पायरासा सयनासनवत्थपाउरणदव्वे ।
दोसीण पुव्वलाणि य सयनादि असक्कयाएहिं ।।

वृ- गृहस्थावस्थायां प्रातराशा प्रथमालिकापेयादिरूपा पेया प्रतीता । आदिशब्दान्मण्डकमोद-कादिपरिग्रहस्तथा शयनासनवस्त्राणि शोभनानि प्रावरणानि च कालोचितान्यासीरन् । इदानीं तु व्रतप्रतिपत्तौ प्रथमालिकायां भक्तं दोसीणमिति पर्युषितं भविष्यति । दुर्बलानि च शयनादीनि शयनासनवस्त्राणि प्रावरणानि च एतस्य कर्तुमशक्यता इयं द्रव्ये द्रव्यविषया प्रतिपृच्छा, ।

[भा.२९३९] पडिकाराय बहुविहा विसयसुहा आसि से न पुन इण्हिं ।

वत्थानिण्हाणधूवा विलेवणा ओसहाइं च ।।

**वृ-** तथा ते भवतीनां गृहस्थावस्थायां व्याधेः प्रतीकारा बहुविधा आसीरन् । विषयसुखानि च बहुविधानि, । तथाहिगृहस्थावस्थायां मनोज्ञानि वस्त्राणि, शरीरमनःप्रल्हत्तिकरं स्नानं प्राणमनोनिवृत्तिकरा धूपाः शरीरशुभगानि विलेपनानि । एतेन विषयसुखानि भावितानि । तथा औषधानि च गृहस्थाव स्थायां नानाप्रकाराणि संगृहीतानि, इदानीं पुनर्न विषयसुखानि नापि प्रतीकारा बहुविधास्ततः परमदुष्करं व्रतमेतदिनि, क्षेत्रतः प्रतिपृच्छामाह-

**[भा. २१४०]** अद्धाण दुक्खसेज्जा सरेणुतमसाय वसहितो खेत्तो ।
परपाएहिं गयाणं पुच्छाणाय उउसुहघरेसु ।।

**वृ-** युष्माकं सदैव पर पादैर्गतानां सदैव ऋतुसुखेषु ग्रहेषूषितानां प्रव्रज्या प्रतिपत्त्यनन्तरमध्वनि स्वपादाभ्यां गमने महत् दुःखं भविष्यति । शय्यावसतिः सरेणुका तथा दीपो रात्रौ न प्रज्वाल्यते, वसतयो वसनानि तमसा कष्टानि भविष्यन्ति । एषा क्षेत्रे प्रतिपृच्छा । कालत आह-

**[भा. २१४१]** आहाराउवजोगो जो जम्मि होइ कालंमि ।
सोन्नहा न यनिसिं अकालो जोग्गो य हीनो य ।।

**वृ-** यो यस्मिन्काले योग्य आहाराद्युपयोगः स गृहस्थावस्थायां समपद्यत, व्रतप्रतिपत्त्यनन्तरं तु आहाराद्युपयोगोऽन्यथा भवति, तथा न रात्रावाहाराद्युपयोगो नवा कालेऽपि च कदाचिदयोग्यो भवति, । सोऽपि च न परिपूर्णः किन्तु हीन इति, गता कालप्रतिपृच्छा । भावपृच्छामाह-

**[भा. २१४२]** सव्वस्स पुच्छणिज्जा नय पडिकूलेन सइरमुदतासि ।त्य
खुड्डीविपुच्छणिज्जा चोयण फरुसा गिराभावे ।।

**वृ-** गृहस्थावस्थायां त्वं सर्वस्य पृच्छनीया वर्तसे, तत्रापि न प्रतिकूलेन, तथा स्वैरं स्वेच्छया मुदिता प्रमोदवती गृहस्थावस्थायामसि भवसि, । व्रतप्रतिपत्त्यनन्तरं तु क्षुल्लिकापि त्वया प्रच्छनीया, तथा तथा चोदना शिक्षणं परुषया गिरा भविष्यति एतच्च परम दुस्सहमित्येषा भावे भावविषया प्रतिपृच्छा ।

**[भा. २१४३]** जा जेन वयेण जहा वलालिता तं तदन्नहा भणति ।
सोयादि कसायाण य जोगाण य निग्गहो समिति ।।

**वृ-** या यस्मिन् वयसि गाथायां तृतीया सप्तम्यर्थे प्राकृतत्वात् । यथा येन प्रकारेण लालिता वा शद्धो भावविषया प्रतिपृच्छा प्रकारान्तरोपदर्शने तां तदन्यथा इदं वक्ति । श्रोत्रादीनामिन्द्रियाणां कषायाणां योगानां च कायप्रभृतीनां निग्रहः कर्तव्यः समितयश्च ईर्यासमित्यादयः पञ्च परिपालनीयाः तदेवं तस्या द्रव्यादिभिस्तुलनोक्ता । सम्प्रति कायानां च दर्शनमाह-

**[भा. २१४४]** आलिहणं सिंचतावणवीयणं दंत धुवणादिकज्जेसु ।
कायाण अनुवभोगो फासुयभोगो परिमितो य ।।

**वृ-** पृथिव्याः काष्टादिना आलिखनमुदकेन सिञ्चनमग्निनातापनं वायोर्व्यञ्जनं दन्तधवनं दन्तप्रक्षालनमित्यादि कार्येषु कायानामनुपभोगः यदि पुनः कार्यैः प्रयोजनमुपजायते, । तदा प्रासुकेन परिभोगः कर्तव्यः । सोऽपि च परिमित इति, । सम्प्रति दीक्षाद्विद्वार प्रतिपादनार्थमाह-

**[भा. २१४५]** अब्भुवगयाए लोउ कप्पठ्ठगलिंगकरणदावणया ।
भिक्खगहणकहेति वेति वहंते दिसा तिन्नि ।।

वृ- पूर्वोक्तं सर्वं यद्यभ्युपगतवती भवति तदा तस्या अभ्युपगताया अभ्युपगमवत्यालोचः कर्तव्यो यदा तु निवसनविधेरुपदेष्टुमुपक्रान्तो भवति तदा कल्पस्थकस्य बालस्य संयती नेपथ्यपरिधापनेन निवसनस्य दर्शनं कर्तव्यम्। तथा शिक्षाग्रहणं भिक्षाटनसामाचारीं कथयति वदति च। यावदाचार्यसमीपं न व्रजामि तावदहं ते तव तिस्रो दिशः अहमेव तवाचार्योऽहमेवोपाध्यायोऽहमेव च प्रवर्तिनीति।

आचार्यपादमूलं गतानां त्वाचार्यः प्रमाणं नयनविधिमाह-

[भा.२१४६] माऊ एक्कियाए संबंधी इत्थी पुरिससत्थे य।
एवमेव संयतीण वि लिंगं करणमोत्तुबितियपदं॥

वृ- एकस्या मातुरुपलक्षणमेतत् भगिन्या वा नयनं नालबद्धस्त्रीसम्बन्धिना स्त्रीसार्थेन समं तदभावे नालसम्बन्धिना पुरुषसार्थेन तस्याप्यभावेऽन्येन भद्रकेन सार्थेन सहगाथायां सप्तमी तृतीयार्थे।

मू. (१६७) *नो कप्पइ निग्गंथीणं निग्गंथं अप्पणो अठाए पव्वतावित्तए वा जाव धारेत्तए वा।*

मू. (१६८) *कप्पइ निग्गंथीणं निग्गंथं अन्नेसिं अट्ठाए पव्वावेतए वा जाव धारेत्तए वा।*

वृ- सूत्रद्वयस्य अक्षर गमनिका प्राग्वत्- अत्र भाष्यकारः प्राह-एवेत्यादिगाथापश्चार्धं। एवमेव अनेनैव प्रकारेण संयतीनामपि संयतं प्रव्राजयन्तीनां निरवशेषं वक्तव्यम्। नवरं लिङ्गकरणे द्वितीयपदं मुक्त्वा लिंगकरणे द्वितीयपदमधिकं वा सेवनीयमिति भावः। एतदेव दर्शयति -

[भा.२१४७] उठंत निवेसंते सति करणादीय लज्जनासे य।
तम्हा उ सकडिपट्टं गाहेंति तयं दुविह सिक्खं॥

वृ- अग्र पूरकमात्रकरणे उत्तिष्ठतिथ निवसति सकृत्करणादौ च यस्माल्लज्जानाशो भवति तस्मात्तकं संयतं द्विविधामपि शिक्षां ग्राहयति। सकट्टीपट्टकं सन्तं कटीपट्टकपरिधानोपेतं सन्तं।

[भा.२१४८] आयरियउवज्झातो तइयाय पवत्तिनीउ समणीणं।
अन्नेसिं अट्ठाएत्ति होइ एएसिं तिण्हंपि॥

वृ- श्रमणीनामाचार्यउपाध्यायस्तृतीया च प्रवर्तिनी भवति, श्रमणानां त्वाचार्योपाध्यायौ ततोऽन्येषामर्थायेति। यदुक्तं सूत्रद्वयेऽपि तस्यायमर्थो भवति, यथायोगमेतेषां त्रयाणां आर्थाय संयतो त्रयाणामर्थाय संयतस्तु द्वयोरर्थायेत्यर्थः। एतेन अन्नेसिं अठाए इति सूत्रद्वयमपि व्याख्यातम्।

मू. (१६९) *नो कप्पइ निग्गंथीणं वितिगिठिंयं दिसं वा अनुदिसं वा उद्दिसित्तए वा धारेत्तए वा।*

मू. (१७०) *कप्पइ निग्गंथाणं विइकिट्ठियं दिसं वा अनुदिसं वा उद्दिसित्तए वा धारेत्तए वा॥*

[भा.२१४९] पव्वावियस्स नियमा देंति दिसिं दुविहमेव तिविहा वा।
सो पुन कस्सविगिठा उद्दिसतिसन्निगिट्ठावा॥

वृ- अनन्तरसूत्रेषु प्रव्राजनमुक्तं प्रव्राजितस्य तु नियमात् दिशं द्विविधां त्रिविधां वा प्रयच्छंति, । संयतस्य द्विविधामाचार्योपाध्यायलक्षणां संयत्यास्त्रिविधामाचार्योपाध्यायप्रवर्तिनीरूपामित्यर्थः, । सा पुनर्दिक्कस्य विप्रकृष्टा उद्दिश्यते, कस्य सन्निकृष्टेति प्रतिपादनार्थमधिकृतं सूत्रद्वयमित्येष सम्बन्धः।

[भा.२१५०] अहवा विसरिसपक्खस्स अभावादिक्खणावि पक्खेवि।
तत्थविकस्सविगिठाद्दिसति कस्स वा नेति॥

वृ- पुरुषाः संयतानां सदृशपक्षः, संयतीनां पुरुषा विपक्षः। अथवापीति सम्बन्धस्य प्रकारान्तरोपदर्शने सदृशपक्षस्याभावात् दीक्षणं विपक्षेऽपि कर्तव्यमित्यनन्तरसूत्रेष्वभिहितम्, तत्रापि कस्य

दिक्विकृष्टा उद्दिश्यते, कस्य वा नेति; तदधिकृतसूत्रद्वयेनाभिधातव्यमिति सम्बन्धः, । अनेन सम्बन्धेनायातस्यास्य व्याख्या-न कल्पते निर्ग्रन्थीनां व्यतिकृष्टामतिशयेन क्षेत्रतो भावतश्च विकृतां दिशमनुदिशं वा उद्देष्टुमनुज्ञातुं नापि स्वयं धारयितुं तथा कल्पते निर्ग्रन्थानां क्षेत्रतो भावतश्च व्यतिकृष्टां दिशामनुदिशं वा स्वयं धारयितुं वा इत्येष सूत्रद्वयाक्षरार्थः । सम्प्रतिभाष्यम्-

[भा.२९५१] दुविहंपिय तिविगिठं निग्गंथीनुद्दिसंति चउगुरुगा ।
आणाइणो य दोसा दिठंतो होइ कोसलए ।।

वृ- द्विविधामपि विकृष्टां क्षेत्रविकृष्टां भावविकृष्टां चेत्यर्थः निर्ग्रन्थीनां दिशमुद्दिशति तस्मिन् प्रायश्चित्तं चत्वारो गुरुकाः आज्ञादयश्च दोषाः । तत्र क्षेत्रविकृष्टां दिशमुद्दिशतो ये दोषास्तत्र कोशलको भवति दृष्टान्तस्तमेव भावयति ।

[भा.२९५२] उवसामिया जयंतेन कोसलेणं गते य सातंमि ।
तं चेव ववदिसंती दिक्खंती दिक्खंता अन्नगच्छंमि ।।

[भा.२९५३] वारिज्जंती विगया पडिवण्णा सा य तेय पावेणं ।
जिनवयण बाहिरेण कोसलएणं अकुलएणं ।।

वृ- एकः कोशलकः कोशलदेशोत्पन्न इत्यर्थः । तेन अन्यदेशं गतेन वर्तमानेन सदनुष्ठान-परायणेनकापि श्राविका उपामिता, । स च कोशलकः स्वदेशं गतस्तस्मिंश्च गते सा श्राविकाऽन्यस्मिन् गच्छे तत्र गते तस्य समीपे निष्क्रमितुमुपस्थिता यथा मां निष्क्रामयत परं मम स एव कोशलकः आचार्यः, । एवं सा तमेव व्यपदिशन्ती ते दीक्षिता सा च दीक्षाप्रतिपत्त्यनन्तरं वार्यमाणापि कोशलसमीपे गता । सा च तेन पापेन जिनवचनबाह्येनाकुलजेन कोशलेन प्रतिपन्ना । एष दोषः । क्षेत्रविप्रकृष्टां दिशमुद्दिशतः ।

[भा.२९५४] कोसलए किं कारणगहणं बहुदोसलो उ कोसलतो ।
तम्हा दोसुक्कडया गहणइह कोसले अवि य ।।

वृ- किं कारणमत्र कोशलकस्य ग्रहणं कृतम् ? सूरिराह-यस्मात्कोशलको देशस्वभावात् बहूदोषान् लाति आदत्ते । अतिबहुदोषलो बहुदोषवान् तस्मात् दोषोत्कटतयात्र कोशलस्य ग्रहणमपि च-

[भा.२९५५] अंधं अकूरमयवं अवि य मरहट्ठयं अवोगिल्लं ।
कोसलयं च अपावं सएसु एक्कं न पेच्छाम्मो ।।

वृ- अन्ध्रमन्ध्रदेशोत्पन्नमकूरमतकमक्रूराभिप्रायमपि च महाराष्ट्रकमवोगिल्लमवाचालं कोशलकं चापापं शतेषु मध्ये एकं न प्रेक्षामहे इति प्रसिद्धिरतः कोशलग्रहणं । पुनरपि प्राह-

[भा.२९५६] कोसलए जो दोसा उदिदस्संतंमि किन्न सेसाणं ।
ते तेसिं होज्ज वन वा इमेहिं पुने नोद्दिसे तेवी ।।

वृ- ये दोषाः कोशलके दिशमुद्दिशति ते किं न शेषाणां दिशमुद्दिशन्ति । किं न भवन्ति भवन्त्येति भावः । सूरिराह-ते दोषास्तेषां भवेयुर्वा न कोशलके पुनर्नियमाद्भवन्ति देशविदेशजन्मनोऽपि गुणदोषा हेतुत्वात्ततः कोशलोपादानं । एतैः पुनर्वक्ष्यमाणैः कारणैस्तानपि शेषदोषोत्पन्नान् क्षेत्रविकृष्टां नोद्दिशेत् ।

[भा.२९५७] अन्न उद्दिसिऊणं निक्खंता वा सरागधम्मंमि ।
आगोपंमि ममत्तं न हुअग्गाणंपि संभवति ।।

वृ- वा शब्दो दूषणान्तरसमुच्चये । यद्यकालभाविनि सरागधर्मेऽन्यमाचार्यमुद्दिश्य निष्क्रान्ता परम-

न्योन्यस्मिन् परस्परस्मिन् यत् ममत्वं तत् व्यग्राणामपि व्यग्रचित्तानामपि न तु नैव भवति । किन्त्वे-कचित्तानामुपजायते । सा चैकचित्तता अत्र नास्ति । तथा चाह-

[भा.२९५८] सुचिरंपि सारिय गच्छइति ममयानघा गच्छस्स ।
सीयंतचोयणासु य परिभूयामित्ति मन्नेज्जा ॥

वृ- सुचिरमपि कालं सारिता शिक्षिता सती गमिष्यतीति मन्यमानस्य गच्छस्य न तस्या विषये ममता ममत्वमायाति सीदन्त्या: संयमयोगेषु शिथिलीभवन्त्यो याश्चोदनाशिक्षास्तासु दीयमानासु सान्यत्र गन्तुमना: परिभूतास्मीति मन्यते तत स्तस्या अपि न गच्छस्योपरि ममता । किं च-

[भा.२९५९] गमणुस्सुएण चित्तेन सिक्खातो वि न गेण्हई ।
वारिज्जंतीवि गच्छेज्जा पंथदोसे इमे लभे ॥

वृ- गमनोत्सुकेन चित्तेन शिक्षा अपि नाना प्रकारा ग्रहणशिक्षा आसेवनाशिक्षाश्च न गृह्णाति तथा वार्यमाणापि तस्य क्षेत्रविकृष्टस्यान्यस्याचार्यस्य समीपं गच्छेत् । तत्र च पथि दोषानिमान् वक्ष्यमाणान् लभते, । अत्र यदुक्तं प्राक् एतैर्वक्ष्यमाणैर्दोषैस्तानपि नोदिशेदिति तद्व्याख्यानावसर: । तानेव दोषानाह-

[भा.२९६०] मिच्छत्तसोहि सागारियादि पासंडतेन सच्छंदा ।
खेत्तविगिठे स दोसा अमंगलं भवविगिट्ठंमि ॥

वृ- मिथ्यात्वं मिथ्यात्वगमनं शोधेरभावस्तथा सागारिके अगारसहिते आदिशब्दादनागारे एकाकिन्या उपाश्रये दोषा:, । तथा पाषण्डैर्विपरिणामनं स्तेनैरपहारस्तथा स्वच्छन्दा स्यात् । न गच्छाधीना तथा च सति भूयांसो दोषा एते क्षेत्रविकृष्टे उद्दिश्यमाने दोषा भवविकृष्टे उद्दिश्यमाने अमङ्गलं तेन संयमजीविता-द्भव जीविताद्वा भ्रश्येत्तस्माद्भवविकृष्टोऽपि नोद्देष्टव्य: एष द्वारगाथासंक्षेपार्थ: साम्प्रतम् विवरणमाह-

[भा.२९६१] उवदेसा न सिं अत्थि जेनेगागीए हिंडए ।
इति मिच्छं जनो गच्छे कत्थ सोहिं च कुव्वउ ॥

वृ- उपदेश: सिं तासमेकाकिनीनां नास्ति येन स तादृश: स्त्रीजन एकाकी हिण्डते । तत इति अस्मा-त्कारणात् । उपदेशाभावलक्षणात् जन: स्त्रीजनो मिथ्यात्वं गच्छेत् । गतं मिथ्यात्वद्वारं । शोधिद्वारमाहकुत्र प्रायश्चित्तमापन्ना सती शोधिं कुर्यात् । नैवकुत्रापीति भाव:, । एकाकिनीत्वान्न च प्रायश्चित्तस्थानम-प्रायश्चित्तस्थानं वा सा जानाति । तत इतोऽपि शोध्यभाव: सागारिकाद्वारं पाखण्डद्वारं चाह-

[भा.२९६२] सागारमसागारे एकी उवस्सए भवे दोसा ।
चरिगादिविपरिणामण सपक्ख परपक्ख निण्हादी ॥

वृ- सागारे अगारसहिते असागारे अगाररहिते उपाश्रये एकस्या एकाकिन्या दोषा भवन्ति । तत्र सागारे दीपस्पर्शनादयोऽनाकारे कुलटाजारादिप्रवेशतो, गतं सागारिकादिद्वारं, । पाषण्डद्वारमाह इत्यादि स्वपक्षे च विपरिणमनं तत्र स्वपक्षे निन्हवादिभिरादिशब्दात् पार्श्वस्थादि परिग्रह: परपक्षे चरकादिभि:, स्तेन द्वारं स्वच्छंदद्वारं चाह-

[भा.२९६३] तेनेहिवा विहिज्जइ सच्छन्दुत्थाणगमणमादीय ।
दोसा भवंति एए, किं च न पावेज्ज सच्छंदा ॥

वृ- स्तेनैर्वा शरीरापहारिभिर्वा सा पथि गच्छन्ती ह्रियेत, तथा स्वच्छन्दमुत्थानं स्वच्छन्दगमन-मित्यादयश्चैते दोषा एकाकिन्या भवन्ति । किं वा स्वच्छन्दा सती सा न प्राप्नुयात् । सर्वं दु:खस्थान

माप्नुयादित्यर्थः । सम्प्रति भवविकृष्टे दोषानाह-

**[भा.२९६४]** गौरवभयममकारा अविदूरत्थे वि होइ जीवत्ते ।
कोदानि समज्ञा तस्स, कुणइ नय तेन जं किच्चं ।।

**वृ-** अविदूरस्थेऽपि जीवति सति तद्विषया गौरवभयममीकारा भवन्ति भूयस्तन्मिलनादि प्रत्याशासंभवात् । इदानीं पुनस्तस्य समुद्घातस्य को गौरवं भयं ममीकारं वा करोति न च नैव कश्चित् यत् यस्मात् न च नैव तेन कृत्यं प्रयोजनं मृतत्वेन सर्वप्रयोजनातीतत्वात् ।

**[भा.२९६५]** कोसलवज्जा ते च्चिय दोसा सविसेस भवविगिट्ठंमि ।
दुविहंपि दिसिविगिट्ठं तम्हा उ न उद्दिसे अज्जं ।।

**वृ-** य एव दोषा मिथ्यात्वगमनादयः । क्षेत्र विकृष्टेऽभिहितास्त एव सविशेषा भवविकृष्टेऽपि ज्ञातव्याः केवलं कोशलवर्जाः । कोशलदोषा हि भवविकृष्टे न भवन्ति मृतत्वेनासंभवात्तस्माद्द्विविधमपि व्यतिकृष्टं क्षेत्रविकृष्टं भवविकृष्टं च नोद्दिशेत् अत्रैवापवादमाह-

**[भा.२९६६]** बितियं तिव्वनुरागा संबंधी वा न तेय सीयंति ।
इत्तरदिसाउनयनं अप्पाह एव दुरंमि ।।

**वृ-** द्वितीयपदमपवादमधिकृत्य क्षेत्रविकृष्टमपि उद्दिशेत् । यदि साधर्मग्राहिण्याचार्ये तीव्रानुरागा भवेत् । स वा आचार्यस्तस्याः सम्बन्धी स्वजनो न च ते आचार्याः संयमयोगेषु सीदन्ति उद्यतविहारिण इत्यर्थः । केवलं तस्या इत्वरादिशोऽनुबन्धयित्वा यावत्ते स्वक आचार्यो न मिलति तावद्वयमाचार्या एते उपाध्याया इयं प्रवर्तिनीति ततः स्वाचार्यसमीपे विधिना नयनमथतं च दूरे ते आचार्यास्ततः सन्देशं कथयन्ति । यथा युष्मदीयधर्मशिष्याऽस्माकं पार्श्वे प्रतिपन्नदीक्षाका वर्तते सा प्रतिग्राह्या ।

**[भा.२९६७]** भवविगिट्ठे वि एमेव समुज्ञातोत्ति वा न वा ।
तत्थ आसंकिए बंधो निस्संके उ न बज्झति ।।

**वृ-** भवविकृष्टेऽप्येवमेव । द्वितीयपदमवगन्तव्यमिति भावः । कथमित्याह- किंसमुद्घातः कालगतः किं वा नेत्येवं तस्मिन् भवविकृष्टे तस्याबन्धः क्रियते । निशङ्किते तु भवविकृष्टे सा न बध्यते ।

**[भा.२९६८]** अहवा तस्स सीसं तु, जति साउ समुद्दिसे ।
विप्पकट्ठे तहिं खेत्ते जयणा जा उ सा भवे ।।

**वृ-** अथवा यदि सा तस्य शिष्यं समुद्दिशति कथयति मम त एव आचार्या अहंतु तच्छिष्यसमीपे स्थास्यामीति, तदा भवविकृष्टेऽपि तस्याबन्धः क्रियते । तत्र या विकृष्टे क्षेत्रे यतनोक्ता साऽत्रापि भवति ज्ञातव्या । तदेवं निर्ग्रन्थसुत्रव्याख्यानार्थमाह-

**[भा.२९६९]** निग्गंथाण विगिट्ठे दोसा ते चेव मुत्तु कोसलयं ।
सुत्तनिवातोभिगए संविग्गे सेस इत्तरिए ।।

**वृ-** निर्ग्रन्थानामपि विकृष्टे उद्दिश्यमाने य एव निर्ग्रन्थानां दोषा मिथ्यात्वादय उक्तास्त एव कोशल-कर्मेकं दोषं मुक्त्वा शेषा सर्वे निरवशेषा द्रष्टव्याः । यद्येवं तर्हि सूत्रमनर्थकमविषयत्वात्तदत आह- सूत्रनिपातो अभिगते संविग्ने च शेष इत्वरिकः । इयमत्र भावना-अभिगतो ज्ञाततत्वः श्राद्धः पुराणो वा संविग्नः स्वयं योऽपि धर्मदेशकस्तस्य आचार्यस्सोऽपि संविग्नस्तस्मिन् सूत्रनिपातो यस्तु शेषः स्वयं न सम्यक् ज्ञाततत्त्वस्तस्य पथिं व्रजतो मिथ्यात्वादयो दोषाः । तस्य दीक्षामाधाय इत्वरिको दिग्बन्धः क्रियते

पुनः प्रेष्यति । एतदेव व्याचिख्यासुराह-

[भा.२१७०] सड्ढो पुराणो वा जइ लिंगं घेत्तुवयति अन्नत्थ ।
तस्स वितिगिठबंधा जा इच्छइ ताव इत्तरितो ।।

वृ- श्राधः श्रावकः पुराणः पश्चात्कृतो वा शद्धो विकल्पनेऽधिगततत्वतः स्वयं संविग्नो योऽपि तस्य धर्मग्राहकः चार्यः सोऽपि संविग्नः । स इत्थंभूतो यदि लिङ्गं गृहीत्वाऽन्यत्र क्षेत्रविकृष्टमूलाचार्यसमीपे व्रजति तस्य विकृष्टो दिग्बन्धः कर्तव्यो, यावन्न तत्र तिष्ठति तावत्तस्यात्मीय इत्वरिको दिग्बन्धः-

[भा.२१७१] मिच्छत्तादी दोसा जे वुत्ता ते उ गच्छतो तस्स ।
एगागिस्सवि न भवे इति दूरगते वि उद्दिसणा ।।

वृ- ये च पूर्वं मिथ्यात्वादयो दोषा उक्तास्तेऽपि तस्यैकाकिनोऽमप गच्छतो न भवन्ति, ज्ञाततत्वत्वात्संविग्नत्वाच्च इति हेतोस्तस्य दूरगतेऽपि क्षेत्रविकृष्टेऽपि गुरावुद्देशनं भवति ।।

[भा.२१७२] गीयपुराणो वुढं धारंतो सत्तमुदिसंतं तु ।
आसन्नं तं उदिस्सइ पुव्वदिसं वा सयंधरए ।।

[भा.२१७३] चोइज्जंतो जो पुन उज्जमिहिति तंपि नाम बंधंति ।
सेसेसु न उद्दीसणा इति भयणा खेत्तविकिट्ठे ।।

वृ- गीतो नाम सूत्रार्थनिष्पन्नः पुराणः पश्चात्कृतश्रमण भावः स निष्क्रमितुभावोऽन्येषामाचार्याणा-मुपस्थितस्तस्य च पूर्वाचार्योऽवसन्नो विदेशस्थश्च सतं सततमेवाभिधारयति । येषां च समीपे निष्क्रमितुमुपस्थितस्तान् प्रति उद्दिशतिभणतीत्यर्थः । मम स एवाचार्य इति तं गीतं पुराणमुवस्थमुपस्थितं पूर्वमाचार्यमवसन्नमभिधारयन्तं वचसा तमेवोद्दिशन्तं च प्रति यस्य समीपे निष्क्रमितुमुपस्थितः स पूर्वाचार्यस्य विदेशस्थस्य योऽन्य आसन्नस्थस्य सम्बन्धी संविग्नस्तमुद्दिशति । यथा स तवाचार्य इति अथवा स्वयं तेनात्मीयावसन्नदिक् धारयितव्या न पुनः स तेन तत्रोद्देशयितव्यः । तस्यावसन्नत्वाद्यदि वा तमप्यवसन्नमुद्दिशन्तमुद्दिशति । केवलमनेन प्रकारेण केनेत्यत आह-चोइज्जंतो इत्यादि यः पुनर्ज्ञायते चोद्यमानः शिष्यमाण उद्यस्यन्ति संविग्नो भविष्यन्ति तमपि नाम ते आचार्यो बध्नन्ति यथा ते तवाचार्य इति । ये पुनर्न ज्ञायन्ते न चोद्यमानाः संविग्नाभविष्यन्ति तेषु शेषेषु नोद्देशनमिति भजना ।

[भा.२१७४] एमेव य कालगते आसन्नंतं च उद्दिसइ गीए ।
पुव्वदिसा धारणं वा अगीयमुत्तूण कालगयं ।।

वृ- एवमेव अनेनैव प्रकारेण कालगते तस्य मूलाचार्ये यदि स्वयं गीतार्थो भवति तदा तस्य योऽन्य आसन्न आचार्यस्तं च उद्दिशति पूर्वदिशं वा धारयति । अथ स स्वयमगीतार्थस्तदा तस्य कालगतं मुक्त्वा शेषोऽन्य उद्दिश्यते इति ।

मू. (१७१) *नोकप्पइ निग्गंथाणं वितिगिठाइं पाहुडाइं विओसवित्तए ।*

[भा.२१७५] वितिगिट्ठा समणाणं अव्वितिगिट्ठा य होइ समणीणं ।
मा पाहुडंपि एवं भवेज्ज सुत्तस्स आरंभो ।।

वृ- व्यतिकृष्टा श्रमणानां दिग्भवति अव्यतिकृष्टा श्रमणीनामित्यनन्तरसूत्रद्वयेऽभहितमेव तच्चाकर्ण्य माप्राभृतमप्येवं भवतीति मन्येतेत्यधिकृत सूत्रस्यारम्भः । अस्य व्याख्या-न कल्पते निर्ग्रन्थानां व्यतिकृष्टानि प्राभृतानि कलहानित्यर्थः । वितोषयितुमुपशमयितं किन्तु यत्रोत्पन्नं तत्रोपशमयितुं कल्पतो

[भा.२९७६] सेज्जासनातिरित्ते हत्थादीघट्टभाणभेदेय ।
वंदंतमवंदंते उप्पज्जइ पाहुडं एवं ॥

वृ- शय्यासनातिरिक्ते किमुक्तं भवति ? अतिरिक्तां शय्या मतिरिक्तानि वसनानि परिग्रहे कुर्वति वार्यमाणे यदि वा हस्तादि हस्तपादादिकं पादेन संघट्याक्रम्या क्षमयित्वा व्रजति, यद्वा कथमप्यनुपयोगतो भाजनभेदे अथवा पूर्वं वन्दमाने पश्चाद्वन्दने प्राभृतं नाम कलहस्तदेवमुत्पद्यते ।

[भा.२९७७] अहिगरणस्सुप्पत्ती जा वुत्ता परिहारियकुलंमि ।
सम्ममनाउट्टंते अधिकरणतउ समुप्पज्जे ॥

वृ- उत्पत्तिसंभवे सत्यं ततः सम्यगनावर्तमाने अधिकरणं समुत्पद्यते ।

[भा.२९७८] अहिगरणे उप्पन्ने अवितोसवियम्मि निग्गयं समणं ।
जे साइज्जइ संभुञ्जए व मासा चत्तारि भारीया ॥

वृ- अधिकरणे उत्पन्ने सति येन सहाधिकरणमुदपादि, तस्मिन्नतोपिते निर्गतं श्रमणं य आसादयति प्रतिगृह्णाति स्वसत्तामात्रेण य च तेन सह भुङ्क्ते तस्य प्रायश्चित्तं चत्वारो भारिका गुरवः;

[भा.२९७९] सगणं परगणं वा विसंकंतमवितोसिते ।
छेदादि वणियासोहि नाणत्तं तु इमं भवे ॥

वृ- येन सहाधिकरणमुपजातं तस्मिन्नवितोषिते स्वगणं परगणं वा संक्रान्तमधिकृत्य या च्छेदादिका शोधिः पूर्वं कल्पाध्ययने वर्णिता, साऽत्रापि तथैव वक्तव्या । नवरमत्र यन्नानात्वं तदिदं वक्ष्यमाणं भवति-

[भा.२९८०] मादेह ठाणमेयस्स पेसवे जइउ गुरुचउ ।
गुरु ततो तस्स कहं तेवि य चउलहू ॥

वृ- अन्यत्र गतस्य यद्याचार्यः साधुसंघाटं सन्देशं वा प्रेषयन्ति यथैषोऽधिकरणं कृत्वा समागतो वर्तते, तस्मादेतस्य स्थानं मादेया इति, तदा तस्य प्रायश्चित्तं चतुर्गुरु । ततः प्रेषणानन्तरं यस्य पार्श्वे सोऽन्यत्रगतस्तस्य स प्रेषितो यदि कथयति तदा तस्मिन्नपि प्रायश्चित्तं चतुर्लघु यतस्तत्रेमे दोषाः ।

[भा.२९८१] उद्दाणं वा वि वेहासं पदोसा जं तु काहिली ।
मूलं उद्दावले होइ वेहासे चरमं भवे ॥

वृ- यत् यस्मात् प्रेषणे कथने वा स द्वेषादवधावनं करिष्यति । वेहायसं वा वैहायसनं नामोत्कलम्बनं तत्रावधावने तेन कृते सति प्रेषयितुः कथयितुर्वा मूलं प्रायश्चित्तं, । वैहायसे पाराञ्चितं । अन्यच्च-

[भा.२९८२] तत्थनत्थवासं नादेंति मे न विय नंदमाणेणं ।
नंदंति ते खलु मए इति कलुसप्पा करे पावं ॥

वृ- मे मम तत्रात्मीयसमीपे अन्यत्रैवेहागतस्य जन्मान्तरवैरवासं न ददति । नापि च मयि नन्दति ते नन्दन्ति, महाप्रद्वेषतोऽसुखभावात्ततो न जन्मान्तरवैरिणस्ते मर्म पृष्टं मुञ्चन्तीति कलुषात्मा पापं कुर्यात् किं तदित्याह-

[भा.२९८३] आलीवेज्जवसहिं गुरुणो अन्नस्स घायमरणं वा ।
कंडत्थारिउसहितो सयं च उरस्स बलवं तु ॥

वृ- कंडच्छारिउ नाम ग्रामो ग्रामाधिपतिर्देशो देशाधिपतिर्वा लुपका वा सहायास्तेन सहितः स्वयं वा उरस बलवान् वसति मादीपयेत् । गुरोरन्यस्य वा घातं मरणं वा कुर्यात् किं तदित्याह-

[भा.२९८४] जइ भासइ गणमज्झे अवप्पयोगा तत्थगंतूणा ।
अवितोसविएसा गतोत्ति ते चेव ते दोसा ॥

वृ- यः प्रेषितो यद्वा अव प्रयोगात् अन्येन कार्येण तत्र गत्वा गणमध्ये सकलगणसमक्षं यदि भाषते यथा एषोऽधिकरणं कृत्वा येन सहाधिकरणमभूत्तस्मिन्नतोषितेऽत्रागत इति ते इति तस्यापि त एव प्रागुक्ता दोषाः ।

[भा.२९८५] जम्हा एए दोसा अविही पेसणे य कहणे य ।
तम्हा इमेण विहिणा पेसणकहणं तु कायव्वं ॥

वृ- यस्मादविधिना प्रेषणे कथने च एते अनन्तरोदिता दोषास्तस्मादनेन वक्ष्यमाणेन विधिना प्रेषणं कथने तु कर्तव्यम् । तमेव विधिमाह-

[भा.२९८६] गणिणो अत्थि निब्भेयं रहितो किच्चपेसितो ।
गमेति तं रहे चेव नेच्छे सहासहं खु त्तो ॥

वृ- अन्येन प्रयोजनेन प्रेषितः स तु रहिते विविक्ते प्रदेशेऽथ निर्भेदं तदधिकरणरहस्यं गणिन आचार्यस्य गमयति कथयति क्रमेणाचार्यस्तं कृताधिकरणं रहस्येव गमयति । यथा त्वमित्थमधिकरणं कृत्वाऽत्र समागतो न च स उपशमित इति एवमुक्ते यदि स नेच्छेत् । तथाहं नाधिकरणं कृत्वा समागतो यस्त्विदं ब्रूते तेन सहाहं ध्रु[श्रु] वे धु[खु] निश्चितमिति ।

[भा.२९८७] गुरुसमक्खं गमितो तहावि जइ नेच्छइ ।
ताहे गणमज्झंमि भासते नातिनिट्ठुरं ॥

वृ- एवं तस्यानिच्छायां स प्रयोजनान्तरव्याजेन प्रेषितो रहसि गुरुसमक्षमधिकरणं गमयति, तथा कथञ्चनापि तच्चित्तमनुप्रविश्य कथयति यथारोपं न विदश्नाति, तथा गमितोऽपि यदि नेच्छति । ततः प्रहरदिवसाद्यतिक्रमेण प्रस्तावान्तरमास्थय्या गणमध्ये तं भाषते, परं नातिनिष्ठुरं, कथं तं भाषते इत्याह-

[भा.२९८८] गणस्स गनिनो चेव तुमंसी मगतं तया ।
अद्धिती महती आसि सोविपक्खो य तज्जितो ॥

वृ- तदा तस्मिन् काले त्वयि अधिकरणं कृत्वा निर्गते समस्तस्यापि गणस्य गणिनश्चाचार्यस्य महती अधृतिः आसीत्, येन च सह तवाधिकरणमभूत्, सोऽपि विपक्षो गणिना गणेन च तर्जितः ।

[भा.२९८९] गणेन गणिना चेव सारिज्जंत मज्झंपिए ।
ताहे अन्नावदेसेण विविगो से विहिज्जइ ॥

वृ- एवमुक्तानन्तरं तत्रत्येन गणिना च सम्यक् सारणीयः शिक्षणीयो येन स्वदोषं प्रतिपद्य तत्र गत्वा विपक्षं क्षमयति. । अथ स तथा सार्यमाणो ज्ञपितो नोपशमनीतो दुःस्वभावत्वात्ततोऽन्यापदेशेन स तस्य विवेकः परित्यागो विधीयते, केनापदेशेनेत्याह-

[भा.२९९०] महाजनो इमो अम्हं खेत्तंपि न पहुप्पति ।
वसही संनिरुद्धा या वत्थपत्ताति नत्थि नो ॥

वृ- अयं साधुसाध्वीलक्षणो महान् जनोऽस्माकमेतावत्तां स चैतत् क्षेत्रं न प्रभवति संकीर्णत्वात्, यदि वा वसतिः संनिरुद्धा संकटा वर्तते, तत एतावन्तः साधवोऽत्र न मान्ति । अथवा वस्त्रपात्राण्यस्माकं सम्प्रति न सन्ति, अपि शब्दान्न चात्र तथाविधपाठोऽप्यस्ति, साधवोऽप्येतेतीवासहनास्तस्मात् यूयमन्यत्र

क्वापि गच्छत, यदि पुनः स सार्यमाण उपशममधिगच्छति । स च वक्ष्यमाणेन विधिनोपशमयितव्यस्तत्र प्रथमतोऽधिकरणोपशमनस्थानमाह-

**[भा.२९९१]** सगणिच्चपरगणिच्चेण समुणुन्नेयरेण वा ।
रहस्सावि व उप्पन्नं जं जहिं तं तहिंक्खवे ॥

**वृ-** स्वगणसत्केन परगणसत्केन वा तेनापि समनोज्ञेन संभोगिकेनेतरेण वा सह रहसि वा आदिशब्दात् अरहसि वा यत् यत्राधिकरणमुत्पन्नं तत्तत्र क्षपयेत् उपशमयेत्, । तत्रोपशमनविधिमाह-

**[भा. २९९२]** एक्को व दोव निग्गय उप्पनं जत्थ तत्थ वोसमणं ।
गामे गच्छे दुवे गच्छा कुलगणसंघेय बिईयपयं ॥

**वृ-** एको वा द्वौ वा वाशब्दा त्रयो वा चत्वारो वा येऽधिकरणं कृत्वा निर्गतास्ते यत्र ग्रामे वाऽधिकरणमुत्पन्नं, तत्रानीयन्ते, । आनीय च यैः सहाधिकरणमभूतैः सह व्युपशमनं क्षामणं कार्यते, । तत्पुनरधिकरणमेकस्मिन् गच्छे यदि वा द्वयोर्गच्छयोरथवा कुले यदि वा गणे यदि वा संघे समुत्पन्नं स्यात्, बिइयपदमिति अत्रापि द्वितीयपदमपवादपदं, ततो वक्ष्यमाणकारणैर्विप्रकृष्टमपि प्राभृतं वितोषयेत्तत्र वितोषणामग्रे भावयिष्यते । साम्प्रतमधिकरणमुत्पन्नं यथोपशमयितव्यं तथा चाह -

**[भा.२९९३]** तं जित्तिएहिं दिटंतेत्ति यमित्ताणमेलणं काउं ।
गिहियाण व साहूण व पुरतोच्चिय दोवि खामेंति ॥

**वृ-** तत् अधिकरणमुत्पन्नं यावद्भिर्गृहस्थैः संयतैर्वा दृष्टं, तावन्मात्राणां गृहस्थानां साधूनां वा मीलनं कृत्वा तेषां पुरतो द्वावपि परस्परं क्षमयतः कुलादिसमवाये यद्युत्पन्नं ततः कुलादिसमवायं कृत्वा क्षमयतः किं कारणं यावन्मात्रैर्गृहिभिः संयतैर्वा दृष्टं तावतां मीलनं कृत्वा परस्परं क्षमयतस्तत्राह-

**[भा.२९९४]** नवनीयतुल्लहियया साहू एवं गिहिणो उ नाहेंति ।
न य दंडभया साहू काहिंति तत्थ वोसमणं ॥

**वृ-** नवनीततुल्यहृदयाः साधव एवं गृहिणस्तुशब्दादभिनव शैक्षादयश्चज्ञास्यन्ति न च दंडभयात् साधवस्तत्राधिकरणे समुत्पन्ने व्युपशमनं करिष्यन्ति किंतु कर्मक्षपणाय एवं च ज्ञास्यन्ति; एवं रुपा च प्रतिपत्तिः शुभोदयपरंपराहेतुरतस्तावतां मीलनं कृत्वा परस्परं तौ क्षमयतः । सम्प्रति यदुक्तं बिइयपयम्।

**[भा.२९९५]** बिइयपदे वितिगिठे वितोसवेज्जा उवट्ठिते बहुसो ।
विइतो जइ न उवसमे गतो य सो अन्नदेसेसु [सं तु] ॥

**वृ-** द्वितीयपदे व्यतिकृष्टान्यपि प्राभृतानि वितोषयेत् उपशमयेत्कथमित्याह - येन सहाधिकरणं बहुशो बहून् वारान् कृतं, तस्योपस्थितस्तं क्षमयति, स च क्षाम्यमाणो द्वितीयो नोपशाम्यति अनुपशाम्यति अनुपशान्तश्च स गतोऽन्यं देशम् ।

**[भा.२९९६]** कालेन व उवसंतो वज्जिज्जंतो अन्नमन्नेहिं ।
खीरादिसलद्धीणव देवयगेलन्नपुट्ठो वा ॥

**वृ-** तस्यान्यं देशं गतस्य बहुना कालेनागतेन तस्य कषायाः प्रतनवोऽभवन् तत उपशान्तः तथा अन्योऽन्यैः साधुभिकृताधिकरण एष इति स्थाने स्थाने विवर्जमान एवं स्वचेतसि संकथयति, यथा कषायदोषेणाहं स्थाने स्थाने विवर्जे, तस्मादलं कषायैरिति पुनरावृत्तिरथवा क्षीरादिसलब्धीनां क्षीराश्रवादिलब्धीनामुपदेशतः शममुपगतवान्, देवतया शिक्षितो यदि वा ग्लानत्वेन स्पृष्टस्ततश्चिन्तयति

यदि कथमपि साधिकरणो म्रियेऽहं ततो नाराधको भवामि, । तस्मात्तं गत्वोपशामयामि एवं जातपुनरावृत्तिना यत्कर्तव्यं तदाह-

[भा.२९९७] गंतुं खामेयव्वो अहवा न गच्छेज्जमेहिं दोसेहिं ।
नीयल्लग उवसग्गो, तहियं तस्स होज्जत्त ।।

वृ- तेन जातपुनरावृत्तिना स गत्वा सोऽधिकरणं क्षमयितव्यः अथवा एतैर्वक्ष्यमाणैर्दोषैस्तत्र न गच्छेत् यत्रोत्पन्नमधिकरणं, कैर्दोषैरित्यत आह- निजकाः स्वजनास्तस्य तत्र विद्यन्ते, ततस्तत्र गतस्य तैरुपसर्गः क्रियते । तथा-

[भा.२९९८] सो गामो उठिओ हुज्जा अंतरा वावि जनवतो ।
निण्हगमनं गतो वा न तरइहवावि पडिचरती ।।

वृ- यत्र ग्रामेऽधिकरणमुत्पन्नं स ग्रामउत्थित उद्वसीभूतोऽथवा अन्तरा जनपदउत्थितो यदि वा येन सममधिकरणमजायत, स निण्हवगणं प्रविष्टवान् । अन्यत्र गत इतरो वा ग्लानो जातस्ततो गन्तुं न शक्नोति, अथवा ग्लानं प्रतिचरति।

[भा.२९९९] अब्भुज्जयं च पडिवज्जे भिक्खादि अलंभो अंतर तहिं वा ।
रायदुट्ठं उमं असिवं वा अंतरतहिं वा ।।

वृ- अथ वा सोऽधिकृतः क्षमयितुमना अभ्युद्यतं विहारं प्रतिपत्तुकामो लग्नं प्रत्यासन्नं ततो गन्तुं न शक्नोति, । अथवान्तरा अपान्तराले तत्र वा यत्राधिकरणमुत्पन्नं भिक्षाया अलाभो, यदि वान्तरा तत्र वा राजद्विष्टमवमौदर्यमशिवं वा ।

[भा.३०००] सबरपुलिंदादिभयं अंतरतहियं च अहव हुज्जहि ।
एएण कारणेणं वच्चंतं कंपि अप्पाहे ।।

वृ- अन्तरा तत्र वा शवरभयं पुलिन्द्रभयमादिशब्दात् स्तेनम्लेच्छादिभयपरिग्रहो अथवा भवेत्, तत एतैः कारणैस्तत्र गन्तुमशक्नुवन् यः कोऽप्यन्यः श्रावको वा सिद्धपुत्रो वा मिथ्यादृष्टिर्वा तत्र भद्रको व्रजति तं सन्देशयति यथाहमधुनोपशान्तः । एतैश्च कारणैरागन्तुमशक्तस्तस्मात्त्वमत्रागत्य मया सह क्षमणं कुरु । ततः सन्देशे कथिते तेन यत्कर्तव्यं तदाह-

[भा.३००१] गंतूण सोवि तहियं सपक्खपरपक्खमेव मेलित्ता ।
खामेइ सोवि कज्जं व दीवए नागतो जेन ।।

वृ- यस्य सन्देशः कथापितः स तत्र गत्वा यैस्तदधिकरणं ज्ञातं समस्तस्वपक्षं परपक्षं च मेलयित्वा तं क्षमयति, । सोऽपि च क्षम्यमाणो येन कारणेन नागतस्तत्कारणं तस्य साक्षाद्दीपयति कथयति ।

[भा.३००२] अह नत्थि कोइ वच्चंतो ताहे उवसमति अप्पणा ।
खामेइ जत्थणं मिलती अदिट्ठे गुरुणं तियं ।।

वृ- अथ नास्ति कोऽपि तत्र व्रजन् यस्य सन्देशःकथ्यते, तर्हि आत्मना स्वयमुपशाम्यति सर्वथा मनसोऽधिकरणमुपशमपरायणतया स्फेटयति । ततो यत्र मिलति तत्र क्षमयति, । अथ न क्वापि मिलती, ततस्तस्मिन्नदृष्टे गुरुणामन्तिकं गत्वा तं मनसि कृत्य क्षामणं करोति ।

मू. (१७२) *कप्पइ निग्गंथीणं वितिगिठाइ पाहुडाति वितोसवित्तए ।*

वृ- कल्पते निर्ग्रन्थीनां व्यतिकृष्टानि क्षेत्रविप्रकृष्टानि कलहान् विलोपयितुमुपशमयितुमिति ।

[भा.३००३] निग्गंथीणं पाहुडवितोसवियव्व होइ वितिगिठं ।
किह पुन होज्जुप्पण्णं चेइयघरवंदमाणीणं ।।

[भा.३००४] चेइय थुतीण भणतो उण्हे अन्नातो बाहि अच्छंति ।
परितावियामो धणियं कोइलसद्दाहि तुब्भाहिं ।।

वृ- निर्ग्रन्थीनां प्राभृतं वितोषयितव्यमुपशमयितव्यं भवति, व्यतिकृष्टं क्षेत्रं विकृष्टं शिष्यःप्राह-कथं केन प्रकारेण पुनस्तासामधिकरणमुत्पन्नं स्यात् । सूरिराह-काश्चनार्यिकाश्चैत्यवन्दनाथ चैत्यगृहं गतास्तस्मिंश्च चैत्यगृहे बहिर्मुखमण्डपादिकं न समस्ति । ततः चैत्यगृहमध्यस्थिताश्चैत्यानि वन्दन्ते, । तासां च वन्दमानानां प्रथमस्तुतेरारभ्य अन्याः काचन संयत्यः समागतास्ता श्चमध्येऽवकाशो नास्तीति बहिरुष्णे स्थितास्ततो विस्तरणैः चैत्यस्तुतीनां भणने ता बहिःस्थिता उष्णेन परिताप्यमाना वदन्ति । युष्माभिः कोकिलाशद्धाभिर्धणियमतिशयेन वयं परितापितास्तथा-

[भा.३००५] नच्चंति नडे नाइं कलंपि कलभाणिणीण तुज्झाणं ।
विप्पगते भवतीणं, जायतं भयं नरवतीतो ।।

वृ- युष्माकं कलभाननानां तु स्वरमनोज्ञाननानां पुरतः कलामपि मनागपि नाटकानि नार्थन्ति । ततो भवतीनां विप्रकृते कारणेन जातं नोऽस्माकं भयं नरपतेर्नुनं नरपतिना यूयं नाटके प्रक्षेपि स्यथ्वे ।

[भा.३००६] इति असहणउत्तुयय मज्झत्थातो समंति तत्थे व ।
असुणाम सव्वगण भंडेण व गुरुसिट्ठिमा मेरा ।।

वृ- इत्येवमुपदर्शितेन प्रकारेणासहनाभियां उत्तोजता कोपं ग्राहितानां मध्यस्थाः संयत्यस्तत्रैव शमयन्ति, । न च तास्तत् भण्डनं कस्यापि श्रावितवत्यः । अथ मध्यस्थानां संयतीनामभावतो क्लेवशाद्वा सर्वगणस्य भण्डनमभूत्तर्हि सर्वगणभण्डने स्वस्वगुरुशिष्टं कर्तव्यम् । ततस्तावुपशमयतो अथ लज्जातो भयतो वा न स्वस्वगुरोर्निवेदितं, तर्हि तत्रेयं मर्यादा । एतदेवाह-

[भा.३००७] गणहरगणहरगमनं एगायरियस्स दोन्नि वा वग्गा ।
आसन्नागमदूरे य पेसणं तं च बितियपयं ।।

वृ- समस्तस्यापि गणस्य भण्डने जाते आत्मीयस्यात्मीयस्य समीपे गमनमथवा एकस्याचार्यस्य सम्बन्धिनौ तौ द्वावपि संयतीवर्गौ । तत एकस्य समीपे गच्छतस्ततः स एकस्तौ वा द्वौ गणधरौ तदधिकरणं यत्र चैत्यगृहेऽन्यत्र चोत्पन्नं तत्र द्वावपि वर्गौ नीत्वा उपशमयतोऽथ लज्जादिना स्वस्वगुरोर्न निवेदित-मेकतरश्च पक्षो निर्गतस्तत आह-आसन्नेत्यादि यद्यासन्नं गतोऽपान्तराले च निर्भयं ततः स आनाय्यते । अथ सापायां (यं) तर्हि तासां गणधर आगच्छति आगत्य क्षमणं करोति, । अथ दूरं गताः, तर्हि वृषभाणां प्रेषणं कर्तव्यं, ततो वृक्षभाः समेत्य ताः सयंतीः क्षमयन्ति, । अथ द्वितीयपक्षो नोपशान्तस्ततः पुनरावर्त्तो जातायां पुर्वोक्तकारणैस्तदेवं प्रागुक्तं द्वितीयं पदमवसातव्यं, । यत्र मिलन्ति तत्रैव क्षमयन्ति, । अमिलने गुरूणामन्तिके इति एतदेवमूलतः सविस्तरं विभावयिषुरिदमाह-

[भा.३००८] चेइयघरन्नेइत्ता जत्थुप्पन्नं च तत्थ विज्झवणं ।
लज्जभयाव असिट्ठे दुवेगतरनिग्गमइमंतु ।।

वृ- स्वस्वगुरुनिवेदने कृते तौ द्वावपि गुरु संयतीवर्गद्वयमपि चैत्यगृहं नीत्वा अथवा यत्रान्यत्रोत्पन्न-

मधिकरणं तत्र नीत्वाधिकरणस्य विध्यापनं करुतः । अथ लज्जया भयाद्वा गुरुणामशिष्टमभवत् द्वयोश्च पक्षयोर्मध्ये एकतरस्य पक्षस्य निर्गमस्तत इदं कर्तव्यम् ।

[भा.२००९] आसन्नमाणावाए अनवाहे वा गणहरागमा ।
जननाय अविक्खामण आणाविज्जन्नहिं वावि ।।

वृ- यद्यासन्नं निर्भयं च ततस्ता निर्गताः संयत्यः स्वगणेन सह आनाय्यन्ते अथ सापायं ततस्तासां गणधर आगच्छति । ततस्ताः संयत्य आनीता गणधरो वा एक आगतो यत्र जनज्ञातं भण्डनमभूत तत्रानाय्यन्ते । अन्यत्र वा आनाय्य च परस्परमभिक्षमणं कार्यं । अथ दूरेण गतास्तर्हि वृषभाः समागत्य संयता क्षमयन्ति ।

**मू. (१७३)** *नोकप्पइ निग्गंथाण वा निग्गंथीण वा वितिगिट्ठे काले सज्झायं उद्दिसित्तए वा करेत्तए वा ।*

[भा.२०१०] वितिगिट्ठं खलुपगयं एगंतरितो य होइ उद्देसो ।
अव्वितिगिट्ठविगिट्ठं जह पाहुडमेव नो सुत्तं ।।

वृ- व्यतिकृष्टमिति खलु प्रकृतमनुवर्तमानमस्ति दिग् सूत्रादव्यतिकृष्टे काले उदघाटायां पौरुष्यामित्यर्थः स्वाध्यायमुद्दिष्टुं वा कर्तुं वेति सूत्राक्षरार्थः । सम्प्रति भाष्यविस्तरः-

[भा.२०११] लहुगा य स पक्खंमी गुरुगापरपक्खउद्दिसंतस्स ।
अंगंसुयखंधं वा अज्झकयणुद्देसथुतिमाई ।।

वृ- यदि विकृष्टे उद्‌घाटा पौरुषीलक्षणे सपक्ष उद्दिशति संयतः संयतस्योद्दिशतीत्यर्थः । तदा तस्य प्रायश्चित्तं चत्वारो लघुकाः परपक्ष संयतस्य संयती संयत्याः संयतस्तत्र संयतः संयत्याः उद्दिशति कारणे वा संयती संयतस्य तदा प्रायश्चित्तं चत्वारो गुरुकाः, । अथ किमुद्दिशत एवं प्रायश्चितमत आह-अङ्गं श्रुतस्कन्धमध्यमध्ययनमुद्देशं स्तुतिमादिशब्दात् सम्बन्धात्तत्र स्तुतिस्तवयोर्विशेषमभिधित्सुराह-

[भा.२०१२] एगदुग तिसलोका कतीसु अन्नेसि होइ जा सत्त ।
देविंदथयमादी तेनं तु परं थया होइ ।।

वृ- एक श्लोका द्विश्लोका त्रिश्लोका वा स्तुतिर्भवति, परतश्चतुः श्लोकादिकः स्तवः । अन्येषामाचार्याणां मतेन एक श्लोकादि सप्तश्लोकपर्यन्ता स्तुतिस्ततः परमष्ट श्लोकादिकाः स्तवाः, । यथा देवेन्द्रस्तवादयः । आदिशब्दात्कर्मस्तवादि परिग्रहः । अथ व्यतिकृष्टे काले उद्दिशतः पठतो वा को दोषः ?

[भा.२०१३] ऽऽहा नाणमायारो तत्थकाले य आदिमो ।
अकालज्झाणासोउ नाणायारो विराहितो ।।

वृ- ज्ञानाचारोऽष्टधाऽष्टप्रकारः । काले विनए इत्यादि प्रागुक्तलक्षणस्तेषु चाष्टसु ज्ञानाचारेषु मध्ये काले इत्यादि यो ज्ञानाचारः । स चाकालाध्यायिना ज्ञानाचारो विराधितः न केवलमयं दोषः ।

[भा.२०१४] कालादि उवयारेण विज्जासिज्झए विना देइ ।
रंधे वा अवद्धंसं साव अनावसतेहिं ।।

वृ- कालाद्युपचारेण विना विद्या न सिध्यति न केवलं न सिध्यति । किन्तु कालादि वैगुण्यलक्षणे रन्धे छिद्र सति साधिकृतविद्याधिष्ठ्यऽन्यावाक्षुद्रदेवता तत्रावसरे अवध्वंसं दधा(दा)ति । एष दृष्टान्तोऽयमुपनयो व्यतिकृष्टे काले सूत्रे उद्दिश्यमानेन पठ्यमानेन वा सूत्रं निर्जरा फलदायितया न

सिध्यति, न केवलं न सिध्यति, किन्तु यया देवतया सूत्रमधिष्ठितं, सा कालातिक्रमेण पठनतः क्षाम्यन्ती प्रान्ता वा काचिद्देवता अकाल अकालपठनलक्षणं छिद्रं अवाप्यावध्यं संदध्यात् । अथ कथं ज्ञायते सूत्रं देवतयाधिष्ठितमत आह-

[भा.३०१५] स लक्खणमिदं सुत्तं जेण सव्वन्नु भासियं ।
सव्वं च लक्खणोवेयं समहिट्ठंति देवया ।

वृ- इदमधिकृतं सूत्रं सलक्षणं येन कारणेन सर्वज्ञेन भाषितं, सर्वमपि च लक्षणोपेतं वस्तु जगति देवताः समधितिष्ठन्ति, ततो ज्ञायते सूत्रमपि देवताधिष्ठितं । अन्यच्च-

[भा.३०१६] जहा विज्ञा नरिंदस्स जं किंचिदपि भासियं ।
विज्ञा भवति सा चेह देसे काले य सिज्झइ ।।

वृ- यथा विद्या नेन्द्रस्य विद्या चक्रवर्तिनो यत् कश्चिदपि भाषितं विद्या भवति, सा चेह जगति देशे काले वा सिद्ध्यति, न कालाद्युपचारमन्तरेण तथा-

[भा.३०१७] जहा य चक्किणो चक्कं पत्थिवेहिं वि पुज्जइ ।
तया वि कित्तणं तस्स जत्थ तत्थ न जुज्जति ।।

वृ- यथा वा शब्दो दृष्टान्तान्तरसूचने, चक्रिणश्चक्रवर्तिनश्चक्रमाज्ञा पार्थिवैरपिसर्वैः पूज्यते, न चापि तस्य चक्रस्य यत्र तत्र वा कीर्तनं संशब्दनं पुज्यते । उक्तौ दृष्टान्तवुपनयमाह-

[भा.३०१८] तहेहट्ठगुणोवेया जिनसुत्तीकायवती ।
पुज्जते नय सव्वत्थ ती सज्झायाओ जुज्जती ।।

वृ- तथा तेन प्रकारेण इह जगति वाक् सूत्रीकृता अष्टगुणोपेता वक्ष्यमाणनिर्दोषत्वाद्यष्टगुणसमन्विता सर्वैरपि सुरासुरमनुजैः पूज्यते, न च सर्वतः देशे काले वा तस्याध्याता युज्यते किन्तु यथोक्त एव देशे काले च, । सम्प्रति तानेवाष्टौ गुणानाह-

[भा.३०१९] निद्दोसं सारवंतं च हेउजुत्तमलंकियं ।
उवनीयं सोवयारं च मियं महुरमेव य ।।

वृ- निर्दोषं द्वात्रिंशतापि दोषैर्विनिर्मुक्तं, सारवत् बह्वर्थमधिकृत व्यवहारसूत्रवत्, हेतवोऽन्वयव्यतिरेकलक्षणास्तैर्युक्तम्, अलंकृतमुपमाद्यलंङ्कारोपेतं, उपनीतमुपनयोपसंहृतं, सोपचारं, मितं परिमिताक्षरं, मधुरं ललिताक्षरपदाद्यात्मकतया श्रोत्रमनोहारि,

[भा.३०२०] पुव्वह्ले अवरह्ले य अरहा जेन भासई ।
एसावि देसना अंगे जं च पुव्वुत्तकारणं ।।

वृ- येन कारणेन भगवानर्हन् पूर्वाह्णेऽपराह्णे च (भाषते) एषैव भगवतो देशना अङ्गे निबद्धा, तस्मादुद्घाटायां पौरुष्यां न पठनीयं, नाप्युद्देष्टव्यम् । यच्च पूर्वं निशीथाध्ययने उक्तं कारणं तत्रोदाहरणं लक्षणं तस्मादप्यकाले न पठनीयं, नाप्युद्देष्टव्य मितः संध्या [श्रद्धे] कालं न पठनीयं । यत आह-

[भा.३०२१] रत्ती दिनानमज्झेसु उभयतो संज्झतो रवि ।
चरंति गुज्झगा केई तेन तासिं तु नो सुयं ।।

वृ- रात्रिदिनमध्ययोः प्रातः सन्ध्यायां विकालसन्ध्यायां चेत्यर्थः । तथा उभयोरपि सन्ध्ययोर्मध्याह्नसन्ध्यायामर्धरात्रासन्ध्यायां चेत्यर्थः । येन कारणेन केचित् गुह्यका व्यन्तरविशेषाश्चरन्ति परिभ्रमन्ति,

तेन कारणेन तासु च चतसृष्वपि सन्ध्यासु न श्रुतमुद्दिश्यते, पठ्यते वा मा भूत् च्छलनादोष इति कृत्वा आह, -यदि सन्ध्यासु गुह्यकाश्चरन्ति ततः कथमावश्यकं सन्ध्यायां क्रियते, तत आह-

[भा.३०२२] जाव होमादि कज्जेसु उभओ संज्झओ सुरा ।
लोगेन भासिया तेन संझावासगदेसणा ।।

वृ- यावत्होमादिकार्येषु उभयोः सन्ध्ययोः सुरा गुह्यका लोकेन भाषितास्तिष्ठंति, तावद्वयमावश्यकं कुर्मस्तेषां तत्र व्यापृतत्वादावश्यकस्यापि च सन्ध्याकृत्यरुपत्वात्तेन सन्ध्यायामावश्यकदेशना ।

[भा.३०२३] एते उ सपक्खंमी दोसा आणादयो समक्खाया ।
परपक्खंमि विराधन दुविधेन विसेण दिठंतो ।।

वृ- एते प्रवचनवेदिनामतीव सिद्धाः सपक्षे उद्देशत आज्ञादयो दोषाः समाख्याताः, । तद्यथा-आज्ञा तीर्थकराणां भग्ना भवति, अनवस्था तं दृष्ट्वा अन्येषामपि तथा करणात् । मिथ्यात्वं तीर्थकराज्ञाभङ्गात्; विराधना द्विविधा-संयमविराधना आत्मविराधना च । तत्र संयमविराधना ज्ञानाचारविराधना दात्मविराधनादेवताच्छलनात्; । परपक्षेऽपि एते दोषाः । केवलं या संयमविराधना सा ज्ञानाचारविघातात्मिका, ब्रह्मघातात्मिका च ज्ञातव्या । तत्र द्विविधेन विषेण द्रव्यविषेण भावविषेण च दृष्टान्तः -

[भा.३०२४] दव्वविसं खलु दुविहं सहजं संजोइयं च तं बहुहा ।
एमेवय भावविसं, सचेयणा चेयणं बहुहा ।।

वृ- द्रव्यविषं खुल द्विविधं, तद्यथा-सहजं संयोगिमं च संयोजनं संयोगस्तेन निवृत्तं संयोगिमं भावादिमइतीमप्रत्ययस्त च्च सह संयोगिमं च बहुधा अनेनैव प्रकारेण खलु द्विविधं भावविषयं तद्यथा-सहजं संयोगिमं च । तच्च प्रत्येकं सचेतनमचेतनं च बहुधा बहुप्रकारं ।

[भा.३०२५] सहजं सिंगियमादी संजोइमधयमहुं च समभागं ।
दव्वविसं नेगविहं एत्तो भावंमि वुच्छामि ।।

वृ- सहजं द्रव्यविषं शृङ्गिकादि, । संयोगिमं धृतं मधु च समभागं, । एतद्वैकैकमपि द्रव्यविष मनेकविधं द्रष्टव्यमत ऊर्ध्वभावे भावविषं वक्ष्यामि, । प्रतिज्ञातमेव निर्वाहयति

[भा.३०२६] पुरिसस्स निसग्गवीसं इत्थी एवं पुमंपि इत्थीए ।
संजोइमो सपक्खो दुण्हवि परपक्ख नेवत्थो ।।

वृ- पुरुषस्य निसर्गविषं स्त्रीनेपथ्योपेता एवं स्त्रिया अपिसहजं विषं पुमान् नेपथ्योपेतः । संयोगिमविषं द्वयोरपि संयतस्य संयत्याश्चेत्यर्थः, । स्वपक्षः परपक्षनेपथ्यः । तद्यथा-संयतस्य पुरुष स्त्रीनेपथ्योपेतो निर्गन्थ्याः स्त्री पुरुषनेपथ्योपेता ।

[भा.३०२७] घाणरसफासतो वा दव्वविसं वा सइति वाएइ ।
सव्वविसयानुसारी भावविसं दुज्जई असइं ।।

वृ- द्रव्यविषं घ्राणतो रसतः स्पर्शतो वा सकृदेकवारतो अतिपातयति । वा विभाषायां तेऽपि सकृदतिपातवैकल्पिकं भवति । तथाहि-द्रव्यविषं जीवितान्न च्यावयेदिति । भावविषं पुनः सर्वविषयानुसारि पञ्चस्वपीन्द्रियविषयेषु संप्रापकत्वात्तथा दुर्जयमल्पसत्वेन जेतुमशक्यत्वान्नियमाद्यास-कृदनेकवारमतिपातयति, विनाशयति । भावविषमूर्च्छितानामनेकमरणभावात् । उपसंहारमाह-

[भा.३०२८] जम्हा एए दोसा तम्हा उ सपक्खसमणसमणीहिं ।

उद्देसो कारणत्थो, किमत्थ पुन कीर उद्देसो ।।

**वृ-** यस्माद्विपक्षे एते दोषास्तस्मात् श्रमणश्रमणीभ्यां स्वपक्षे उद्देशः कर्तव्यः, । संयतैः संयतानामुद्देशः कार्यः, संयतीभिः संयतीनामित्यर्थः । ततः प्रागुक्तदोषा न भवन्ति । आह परः-किमत्र पुनः कारणं यदुद्देश क्रियते, अनुद्दिष्टं कस्मान्न पठ्यते । तत्राह-

**[भा.२०२९]** बहुमानविनयआउ त्तया य उद्देसतो गुणाहुंति ।
पढमाएसो उ सव्वा एत्तो कुच्छं करणकालं ।।

**वृ-** उद्देशे हि क्रियमाणे श्रुतस्य श्रुताधारस्य वा ध्यापकस्योपरि बहुमानमान्तरप्रीतिविशेषो भवति, विनयश्च प्रयुक्तः स्यादायुक्तता च महती भवति, । एते उद्देशतो गुणा भवन्ति, । एष सर्वोऽध्ययनादिविषयउद्देशः प्रथमोद्देशः, । अत ऊर्ध्वं तु स्वाध्यायकरणकालं वक्ष्ये प्रतिज्ञातमेव निर्वाहयति-

**[भा.२०३०]** थयथुइ धम्मक्खाणं पुव्वद्दिठं तु होइ संज्झाए ।
कालिय काले इयरं पुव्वुद्दिठं विगिठेवि ।।

**वृ-** स्तवः स्तुतिधर्माख्यानं वा पूर्वोद्दिष्टं सन्ध्यायामपि पठनीयं भवति, कालिकं पुनः श्रुतं प्रथमायां पौरुष्यामुद्दिष्टं काले प्रथमपौरुषी लक्षणे चरमपौरुषीलक्षणे च पठ्यते नाकाले, इतरं (इतरत्) उत्कालिकं प्रथमायां पौरुष्यामुद्दिष्टः व्यतिकृष्टेऽपि काले सन्धायाममस्वाध्यायिकं च वर्जयित्वा पठ्यते ।

**[भा.२०३१]** पत्ताणसमुद्देसो अंगसुयक्खंध पुव्वसूरंमि ।
इच्छानिसीहमादी सेसादिनपच्छिमादीसु ।।

**वृ-** अध्ययनमुद्देशं वा पठन्तो यदैव श्रवणं प्राप्ता भवन्ति, तदैव तस्या ध्ययनस्योद्देशस्य वा समुद्देशः क्रियते, अंगं श्रुतस्कन्धो वा पूर्वसूरे उद्घाटायामपि पौरुष्यामनुज्ञायते, येषामागाढा योगास्तेषां निशीथादीनामिच्छा प्रथमायां चरमायां वा पौरुष्यां तेषामनुज्ञा प्रवर्तते इति, शेषाण्यध्ययनान्युद्देशका वा दिवसस्य पश्चिमायां पौरुष्यामादिशब्दात् रात्रेः प्रथमायां चरमायां वानुज्ञायन्ते, ।

**[भा.२०३२]** दिवसस्स पच्छिमाए निसिं तु पढमाए पच्छिमाए वा ।
उद्देसज्झयणुन्ना न य रत्ति निसीहमादीणं ।।

**वृ-** उद्देशानामध्ययनानां चानुज्ञा दिवसस्य पश्चिमायां, निशि तु प्रथमायां पश्चिमायां वा प्रवर्तते, निशि तु प्रथमायां पश्चिमायां वा प्रवर्तते, निशीथादिनामागाढयोगानां दिवसस्य प्रथमायां चरमायां वा पौरुष्यामनुज्ञातं न तु रात्रौ । अत्रैवादिशब्दस्याधिकार्थसंसूचकत्वमुपदर्शयति-

**[भा.२०३३]** आदिग्गहणादसकालिय मुत्तरज्झायण चुल्लसुयमादी ।
एएसि भइयणुन्ना । पुव्वण्हे आवि य अवरण्हे ।।

**वृ-** आदिग्रहणादादिशब्दोपादानात् यानि दशवैकालिकोत्तराध्ययनक्षुल्लककल्पश्रुतादीनि । अत्र आदिशब्दादौपपातिकादिपरिग्रहः । एतेषामनुज्ञा भजिता विकल्पिता पूर्वाह्णे वा स्यादपराह्णे वा ।

**[भा.२०३४]** नंदीभासणचुन्ने य विभासा होइ अंगसुयखंधे ।
मंगलसद्धाजननं अज्झयणाणं च वुच्छेदो ।।

**वृ-** अङ्गे श्रुतस्कन्धे च भवति अनुज्ञायां कर्त्तव्यायां नन्दिभाषणं ज्ञानपञ्चकोच्चारणं, चूर्णेच विभाषा यदि भवन्ति वासाः शिरसि प्रक्षिप्यन्ते, । तदभावे केसराण्यपि, कस्मादेवमनुज्ञा क्रियते इति चेदत आह-नन्दीभाषणे वासनिक्षेपे च मंगलं भवति, ज्ञानपञ्चकस्यभावमङ्गलत्वाद्वासनिक्षिपस्य च द्रव्य-

मंगलत्वात्तथाहि अन्येषां परमश्रद्धाजननं, यथैकोऽमुकस्याङ्गस्यश्रुतस्कन्धस्य च पारगत आचार्येण चैवं सकलजनसमक्षं पूजितस्तस्माद्वयमपि गाढतमुत्साहं कुर्म इति, तथा अध्ययनानां वा व्यवच्छेदो-ऽन्यथा नानुज्ञातमन्येषां दीयते इति तेषां व्यवच्छेदः स्यात् । अत्रैवापवादमाह-

[भा.३०३५] बिइयपयं आयरिए अंगसुयक्खंधमुद्दिसंतंमि ।
मंगलसद्धाभयगोरवे य तह निठिए चेव ।।

वृ- सपक्षे उद्देशः कर्तव्यो न परपक्षे इत्युत्सर्गः । अत्र द्वितीयपदमपवादपदं यदि प्रवर्तिन्यास्तत् श्रुतं न विद्यते तत आचार्यः परपक्षेऽपि संयतीरूपे अङ्गं श्रुतस्कन्धं वा उपलक्षणमेतदध्ययनादिकं चोद्दिशति । अथवा सत्यपि तस्मिन् प्रवर्तिन्याः श्रुते आचार्ये संयत्या अङ्गं श्रुतस्कन्धं वा उद्दिशति मङ्गलादीनि भवन्ति ततः स एवोद्दिशति । स परम ज्ञानपात्रमिति मङ्गलबुद्धिरुपजायते तथा यस्मादाचार्येणोद्दिष्टमिदमत आदरेण पठनीयमिति तत्पाठविषया महती श्रद्धा भवति । तथा यदि पाठे प्रमादं करिष्यामि ततो न पठितमित्याचार्यारुष्येयुरिति भयं तथा ममेदमाचार्येण गौरवेणोद्दिष्टं तस्मादादरेण पठित्वा शीघ्रं समाप्तिं नयामि । तह निट्ठिए चेवात्ति तदा निठिते अङ्गे श्रुतस्कन्धे वा समाप्तिं नीते यथासंभवमेतैरेव कारणैरङ्गं श्रुतस्कन्धं वाचार्योऽनुजानीयात् ।

[भा.३०३६] एमेव संयतीवा उद्दिसंती संजयाण बिइयपदे ।
असतीए संजयाणं अज्झयणाणं च वोच्छेदो ।।

वृ- तत् विवक्षितं श्रुतं संयतानां न विद्यते अध्ययनानां चान्यथा व्यवच्छेदः स्यात् ततो द्वितीयपदेनापवादपदेन गाथायां सप्तमी तृतीयार्थे संयत्यपि संयतानामुद्दिशति ।

[भा.३०३७] एवं ता उद्देसो अज्झाओवी न कप्पइ विगिट्ठे ।
दोण्हंपि हुंति लहुगा विराधनासेव पुव्वुत्ता ।।

वृ- एवमुक्तेन प्रकारेण तावदुद्देशोऽभिहितो यथा व्यतिकृष्टे काले स न क्रियते अध्यायोऽप्यध्येय-मात्मविराधना च । तत्र ज्ञानविराधना ज्ञानाचारहननादात्मविराधनाप्रान्तदेवताच्छलनात् ।

[भा.३०३८] बितियविगिठे सागारियाए कालगय असतिवुच्छेदो ।
एवं कप्पइ तहियं किं ते दोसा न संतीओ ।।

वृ- कदाचित्साधवः कारणेन सागारिकायां वसतौ स्थितास्तत्र परिचारणाशब्दं श्रुत्वा यस्य यत्पराजितं स तत्परावर्तयति । आदि शब्दात् स्तेनकादिष्वपि समापतत्सु यस्य यत्पराजितं स तत् गुणयति परिग्रहस्तथा कालगतः संयतो यदि कारणेन प्रतीक्षापयितव्यो भवति । तदा रात्रौ जागरणनिमित्तं यस्य यत्पराजितं स तत्परावर्तयति । तथा यस्य सकाशे तत् श्रुतमधीतं कालगतोऽन्यत्र च तत् श्रुतं नास्ति । ततः सम्प्रति पठितं माविस्मृतिंयायात् अनुप्रेक्षायां च सोऽकुशलस्तत एवमेतैः कारणै द्वितीयपदमधिकृत्य व्यतिकृष्टेऽपि कालेऽध्यायः कल्पते । अत्र पर आह-तत्रापवादपदेन व्यतिकृष्टेऽपि काले पठति किं ते दोषाः आज्ञाभङ्गादयो न सन्ति न भवन्ति । अत्रोत्तरमाह-

[भा.३०३९] भण्णइ जेणजिनेहिं अनुणायाइ कारणे ताइं ।
तो दोसो न संजायइ जयणाए तहिं करेंतस्स ।।

वृ- भण्यतेऽत्रोत्तरं दीयते-येन कारणेन जिनैः कारणे सागारिकादिलक्षणे तानि पठनान्यनुज्ञातानि तस्मात्कारणात् रहस्य श्रुतस्यापि च यतनया वक्ष्यमाण लक्षणया । तत्र सागारिकवसत्यादौ पाठं कुर्वतो

दोष आज्ञाभङ्गादिलक्षणो न संजायते । तत्र यतनामाह-

**[भा.३०४०]** कालगयं मुत्तूण इमो अनुप्पेहदुब्बले जयणा ।
अन्नवसहिं अगीते असतीतत्थेवणुच्चेणं ॥

**वृ-** कालगतं मुक्त्वा शेषेषु कारणेष्वनुप्रेक्षादुर्बले इयं चवक्ष्यमाणयतना अन्यस्यां वसतौ गत्वा रहस्यश्रुतं परावर्तयन्ति । मा अगीते अगीतार्थस्य श्रुतश्रुवणं भूयादिति हेतोस्यथान्य उपाश्रयो न विद्यते ततोऽन्यस्या वसतेरभावे तत्रैव तस्यामेव वसतावनुच्चेन शब्देन परावर्तयन्ति । कालगतेऽपि वसत्यन्तरे न यान्ति किन्तु तत्रैव जागरणनिमित्तं अनुच्चशब्देल गुणयन्ति संयत्योऽप्यपवादपदेन संयतानां समीपे पठेयुः परावर्तयेयुर्वा न कश्चिद्दोषः

**मू. (१७४)** *कप्पति निग्गंथीणं वितिगिट्ठे काले सज्झायं करेत्तए निग्गंथनिस्साए ॥*

**वृ-** कल्पते निर्ग्रन्थीनां निर्ग्रन्थनिश्रया व्यतिकृष्टेऽपि काले स्वाध्यायं कर्तुमिति सूत्रार्थः । अधुना भाष्यप्रपञ्चः । तत्र प्रथमतः पूर्वपक्षस्यावकाशं दर्शयति-

**[भा.३०४१]** कप्पइ जइ निस्साए वितिगिट्ठे संजतीण सज्झाओ ।
इति सुत्ते दारे कयंमि उ कमागतं भणइ ॥

**वृ-** कल्पते यति निश्रया व्यतिकृष्टे काले संयतीनां स्वाध्याय इति सूत्रेण द्वारे कृते परः क्रमागतं परिपाट्यागतमिदं भणति किं तदित्याह-

**[भा.३०४२]** पुव्वं वन्नेऊणं संजोगविसं च जायरूवं च ।
आरोवणं च गुरुइं न हु लब्भावायणं दाउं ॥

**वृ-** पूर्वसंयोगविषयजातरूपं च विषं सहजविषं चेत्यर्थः । आरोपणं प्रायश्चित्तं चतुर्थी (गुरुकं) वर्णयित्वा यत्सम्प्रति वाचनां दद्वत अन्तर्भूतण्यर्थत्वाद्दापयत तां दापयितुं न हुनैव लभ्यं । एवं परेण पूर्वपक्षे कृते सूरिराह-

**[भा.३०४३]** कारणियं खलु सुत्तं असति पवायंतीयाए वाएज्जा ।
पाढेण विना तासिं हानी चरणस्स हुज्जाहि ॥

**वृ-** इदं खलु सूत्रं कारणिकं कारणेन निवृत्तं । तदेव कारणमाह-असत्यभावे प्रवाचयन्त्याः प्रवर्तिन्या वाचयेत् संयतीरन्यथा पाठेन विना तासां चरणस्य हानिर्भवेत् । यदि भवति ततः को दोष इत्यत आह-

**[भा.३०४४]** जातो पव्वइयातो सग्गं मुक्खं च मग्गमानीतो ।
जइ नत्थि नाणचरणं दिक्खाहु निरत्थिगा तासिं ॥

**वृ-** याः स्वर्गं मोक्षं च मृगयमाणाः प्रव्राजितास्तासां यदि ज्ञानं चरणं च नास्ति ततो हु निश्चितं दीक्षा निरर्थिका, । कथं निरर्थिकेत्यत आह-

**[भा.३०४५]** सव्वजगुज्जोयकरं नाणं नाणेण नज्जए चरणं ।
नाणंभी असंतंमी अज्जा किह नाहिति विसोहिं ॥

**वृ-** सर्वस्यापि जगत उद्योतकरं ज्ञानं ज्ञानेन च ज्ञायते चरणं, । ततो ज्ञाने असत्यार्यिका विशोधिं कथं ज्ञास्यन्ति, । नैव ज्ञास्यन्तीति भावः, । ततो विशुद्ध्यभावाद्वरणाभावस्तथा चाह-

**[भा.३०४६]** नाणंमि असंतंमी चरित्तं वि न विज्जए ।
चरित्तंमि असंतंमी तित्थे नो स चरित्तया ॥

वृ- ज्ञाने असति प्रागुक्तयुक्तेश्चारित्रमपि न विद्यते, असति चारित्रे सकले तीर्थे नार्यिकाणां स्वचारित्रता ।

[भा.३०४७] अचरित्तयाए तित्थस्स निव्वाणं नाभिगच्छइ ।
असती निव्वाणस्स य दिक्खा होति निरत्थिगा ।।

वृ- संयतीरधिकृत्य तीर्थस्याचारित्रतया संयती निर्वाणं कापि न गच्छति, । निर्वाणस्याभावे दीक्षा निरर्थिका ।

[भा.३०४८] तम्हा इच्छावेई एयासिं नाणदंसणचरित्तं ।
नाण चरणेण काहिति अंतं भवसयाणं ।।

वृ- यतो निर्वाणाभावे दीक्षा निरर्थिका अथ च तासां निर्वाणाय भगवता दीक्षानुज्ञाता तस्मादेतासां दीक्षा बलादपि ज्ञानदर्शनचारित्रं समाहारत्वादेकवचनमिच्छापयति यतो अन्तं विनाशं भवशतानां करिष्यत्यार्यिका, यतो निर्वाणं लभ्यते ज्ञान चरणेन नान्यथा ।

[भा.३०४९] नाणस्स दंसणस्स चारित्तस्स महानुभावस्स ।
तिण्हं पि रक्खणट्ठा दोसविमुक्को पवाएज्जा ।।

वृ- ज्ञानस्य दर्शनस्य चारित्रस्य च कथंभूतस्यैकैकस्येत्यत आह-महान् अनुभावः प्रभावो यस्य तत्तथा तस्य एतेषां त्रयाणां रक्षणाय दोषविमुक्तो वक्ष्यमाणदोषविप्रमुक्तः प्रवाचयेत् ।

[भा.३०५०] अप्पसत्थेन भावेन वाएतो दोस संभवे ।
केरिसो अप्पसत्थो उ इयो सोइ पवुच्चती ।।

वृ- अप्रशस्तेन भावेन वाचयन् दोषवान् भवति न प्रशस्तेन, । अथ कीदृशः सोऽप्रशस्तो भावः । सूरिराह-सोऽप्रशस्तो भावोऽयं प्रोच्यते, तमेवाह-

[भा.३०५१] परिवारहेउमणट्ठयाए अभिचारठ व हेउं वा ।
आगाराय बहु विहा असंवुडादीउ दोसाउ ।।

वृ- परिवारो मे भूयादिति हेतोरन्नार्थतया वा अन्नं पानं वा ममानीय दास्यतीत्येतदर्थं वा इत्यर्थः । व्यभिचारार्थं वा अन्येषां वा एतद्व्यतिरिक्तानां कार्याणां हेतोरथ आगाराणि गृहाणि बहुविधानि असंवृतादीनि मे सम्पादयिष्यतीत्येतदर्थं यदि वाचयति तदा सोऽप्रशस्तो भाव इति तस्य दोषाः ।

[भा.३०५२] गणिणी कालयाए बहि यान्य नविज्जए जया अघा ।
संतावि मंदधम्मा मज्जायाए पवाएज्जा ।।

वृ- गणिन्यां प्रवर्तिन्यां कालगतायां तत्रान्यत्रवा बहिर्यदा अन्य प्रवाचिका न विद्यते, । अथास्ति परसत्यपि सा मन्दधर्मा, ततः साधुर्मर्यादया प्रवाचयति तामेव मर्यादामाह-

[भा.३०५३] आगाढजोगवाहीए कप्पो वावि होज्ज असमत्तो ।
सुत्तत्तो अत्थतो वावि कालगया य पवत्तिनी ।।

वृ- आगाढयोगवाहिनी कापि संयती यदि वा कस्याश्चित्संयत्याः प्रकल्पो निशीथाध्ययनं सूत्रतोऽर्थतश्चासमाप्तो भवेत् वर्तते, । अत्रान्तरे च प्रवर्तिनी कालगता ।

[भा.३०५४] अन्नाय सगच्छंमी जइ नत्थि पवाइगा ।
अन्नगच्छा मणुन्नं तु आनयंति ततो तहिं ।।

वृ- अन्या स्वगच्छे यदि प्रवाचिका न विद्यते, ततोऽन्यगच्छान्मनोज्ञां सांभोगिकी तत्रार्यिकां वसतावानयन्ति ।

[भा.३०५५] सा तत्थ निम्मवे एक्कं तारिसीए असंभवे ।
उग्गहधरणाकुसलं ताहे य नयंति अन्नत्थ ।।

वृ- सा मनोज्ञा समानीता सती तत्र एकामार्यिका निर्मापयति । अथ तादृशी मनोज्ञा न विद्यते, तत आह-तादृशाभावे ततोऽवग्रहधारणाकुशलामन्यत्रासांभोगिक गच्छान्तरेनयति तत्र संयतीनां संयतानां च परीक्षा कर्तव्या । तथा चाह-

[भा.३०५६] संविग्ग असंविग्गा परिच्छियव्वा य दोविग्गाओ ।
अपारिच्छणंमि गुरुगा परिच्छ इमेहिं ठाणेहिं ।।

वृ- द्वावपि संयतसंयतीरुपौ वर्गौ संविग्नावसंविग्नाविति,वा परीक्षितव्यौ यदि साचपरीक्षा एभिर्वक्ष्यमाणैःस्थानैः कर्तव्या तानेवाह

[भा.३०५७] वच्चंतिताववएंती, भत्तं गेण्हंति तावदेंति ।
कदंप्पतरुणा बउसं, अकालभीयायसच्छंदा ।।

वृ- न परीक्ष्यन्ते ततो द्वयोर्वर्गयोरपरीक्षणे प्रायश्चित्तं चत्वारो गुरुकाः, । सयंताः संयतीनामुपाश्रये निष्कारणं व्रजन्ति, ता अपि वा संयत्यः संयतनामुपाश्रयं निष्कारणमागच्छन्ति, । तथा भक्तं पानं वा संयतानां पार्श्वे संयत्यो यथा कथंचन गृह्णन्ति ता वा संयत्यः संयतानां प्रयच्छन्ति । तथा परस्परं तरुणास्तरुण्यश्च कन्दर्पकथां कथयन्ति, तथा संयताः संयत्यश्च बकुशं भावं बिभ्रति । तथा द्वावपि वर्गावकाले चरतस्तथा संयता आचार्यस्य न बिभ्यति, । आर्यिकाः प्रवर्तिन्याः, तथा संयताः संयत्यश्च स्वच्छन्दा आत्मन् इच्छयायान्त्यायान्ति वा इत्यर्थः ।

[भा.३०५८] अट्ठमी पक्खिए मोत्तुं वायणाकालमेव य ।
पुव्वुत्ते कारणे वावि गमनं होइ अकारणे ।।

वृ- अष्टमीं पाक्षिकं तथा वाचनाकालं तथा पूर्वोक्ता निगम्मंतो कारणजाए इत्यादिना ग्रन्थेन यानि कल्पे अभिहितानि तानि मुक्त्वा शेषकालं यद्भवति गमनं, तदकारणं निष्कारणमित्यर्थः । एतेन ता वा संयत्यो निष्कारणमायान्तीति व्याख्यातम् ।

[भा.३०५९] थेरा सामायारिं अज्जा पुच्छंति ता परिकहेंति ।
आलोयणसच्छंदं वेंटल गेलन्न पाहुणिया ।।

वृ- स्थविरा आचार्या आत्मीया आर्यिका वास्तव्यानामार्यिकाणां समाचारीं पृच्छन्ति । यथा कीदृशविस्तव्यानामार्यिकाणां सामाचारीति । एवं पृष्टाः सत्यस्ताः परिकथयन्ति । या यत्र गता सा ततः प्रत्यागता नालोचयति नापि दैवसिकं रात्रिकं पाक्षिकं वातीचारमालोचयन्ति, यथा स्वच्छन्दं वर्तंते, नाचार्योपाध्यायप्रवर्तिनीनां च वश्यायत्ता, तथा वेंटलानि प्रयुञ्जन्ति न च ग्लानायाः प्रति तर्पयन्ति नापि प्राघूर्णकानां वात्सल्यं बिदधति ।

[भा.३०६०] चित्तलए सविकारा बहुसो उच्छोलणं च कप्पट्ठे ।
थलि घोड वेससाला, जं त व ए काहिय निसज्जा ।।

वृ- तथा चित्रलानि वस्त्राणि परिदधति, तथा सविकारा गता वुल्लापे च विकारसहिताः तथा

बहुशोऽनेकप्रकारं मुखनयनकक्षाहस्तपादादीनामुच्छोलनं प्रक्षालनं कुर्वन्ति । तथा कल्पस्थानिडिम्भरुपाणि स्मयन्ति मण्डयन्ति ममीकुर्वन्ति वा तथा स्थल्यो देवद्रोण्यस्तासु भिक्षार्थं व्रजन्ति, । तत्र घोटाडिंगरास्ते निरुद्धा बलादपि गृह्णन्ति स्थल्यां वा समवसृत: प्रत्यासन्ने य उपाश्रयस्तत्र वसन्ति वेश्यागृहाणि वा हिण्डन्ते । तत्पाटके वा वसतौ तिष्ठन्ति, शाला हस्तिशाला अश्वशाला वा तासु हिण्डन्ते तासां वा समीपे उपाश्रये तिष्ठन्ति, । यन्त्राणि इक्षु यन्त्रतैलयंत्रादि गृहाणि तानि हिण्डन्ते, तन्मध्ये वा उपाश्रये वसन्ति तथा व्रजान् गोकुलानि व्रज. .‌।, काथिकादिकल्यं वा कुर्वन्ति, गृहनिषद्यां वा बाधन्ते एष द्वारगाथाद्वयसमासार्थ: । साम्प्रतमेतदेव विवरिषु: प्रथमत आलोचनाद्वारं सच्छन्दद्वारं चाह-

[भा.३०६१] ज [illegible] जतो गया [illegible], ना [illegible] देवसियपक्खियं वा [illegible] ।
सच्छंदातो वयणे, महतरियाए न ठायंति ।।

वृ- या यत्र गता सा तत: प्रत्यागता नालोचयति, नापि काचन दैवसिकं पाक्षिकं अपि शब्दात् रात्रिकं वातीचारमालोचयति । तथा स्वच्छन्दा: सर्वा अपि वर्तन्ते न महत्तरिकाया उपलक्षणमेतत् । नाप्याचार्योपाध्याययोर्वचनेन तिष्ठन्ति । अधुना विंटलादिद्वार चतुष्टयमाह-

[भा.३०६२] विंटलानि पजुंजंति, गिलायाणाविन पडितप्पंति ।
आगाढेवा अनागाढं करेंति अनागाढे आगाढं ।।

[भा.३०६३] अजयणाएव कुव्वंती पाहुणगादि अवच्छला ।
चित्तलाणिय नियसंति चित्तायहरणा तहा ।।

वृ- विंटलानि खिंटिका चप्पुटिकादीनी प्रयुञ्जते, नापि ग्लानाया: प्रति तर्पयन्ति प्रतिचरन्ति यदि वा आगाढे अनागाढं कुर्वन्ति, अनागाढे वा आगाढमयतनया वा कुर्वन्ति, तथा प्राघूर्णिकाद्यामवत्सलास्तथा चित्रलानि विचित्ररेखोपेतानि वस्त्राणिनि वसने परिदधति । चित्राणि वा नानाप्रकाराणि रजोहरणानि धारयन्ति । सम्प्रति सविकारद्वारमाह-

[भा.३०६४] गइविब्भमादिएहिं आगार विगारा तहा पदंसंति ।
जह किढगाणा विमोहो समुदीरति किं तु तरुणाणं ।।

वृ- गतिविभ्रमादिभिराकार विकारास्तथा प्रदर्श्यन्ते, यथा किटकानामपि वृद्धानामपि मोह: समुदीर्यते, । किं पुनस्तरुणानामिति बहुश: । उच्छोलन द्वारं कल्पस्थद्वारं चाह-

[भा.३०६५] बहुसो उच्छोलंती मुहनयने हत्थ पायकक्खादी ।
गेण्हणमंडणरामण भोयतिव ता तो कप्पट्ठे ।।

वृ- ता मुखनयनानि हस्तपदाकक्षादिकं च बहुशोऽनेकवारमुच्छोलयन्ति, प्रक्षालयन्ति, तथा गृहस्थबालकानां ग्रहणं कुर्वन्ति, । मण्डनं वा रामणं वा क्रीडनं यदि वा ता: कल्पस्थान् गृहस्थदारकान् भोजयन्ति, । स्थलीघोटद्वारं वेश्याद्वारं चाह-

[भा.३०६६] थलि घोडादिठाणे वयंति ते वावि तत्थ समुवेंति ।
वेसित्थी संसग्गी उवासतो वा समीवंमि ।।

वृ- स्थली घोटादिस्थाने अत्रादिशब्दस्तेषामेव देवडिंगराणामनेकभेदख्यापनार्थं ता व्रजन्ति, ते वा स्थली घोटादेवडंगरापरपर्यायास्तत्रार्यिकोपाश्रये स्थली समीपे समुपयन्ति गच्छन्ति, तथा वेश्यास्त्रीसंसर्गि: सदैव तासां यदि वा वैश्यगृहसमीपे तासामुपाश्रय: ।

[भा.३०६७] तह चेव हत्थिसाला घोडगसालाण चेव आसन्ने ।
जंति तह जंतसाला काहीयत्तं च कुव्वंति ॥

वृ- तथा चैव हतिशालानां घोटकशालानां चासन्ने प्रदेशे हिण्डन्ति यदि वा तासां प्रत्यासन्ने उपाश्रये वसन्ति, । तथा इक्ष्वादियन्त्रशालां गच्छन्ति, तत्समीपे वा वसन्ति, । व्रजद्वारं सुगमत्वान्नविवृतं, काथिकत्वं वा कुर्वन्ति । सम्प्रति स्थलीघोटद्वारे दोषमाह-

[भा.३०६८] थलि घोटादिनिरुद्धा पसज्झगहणं करेज्ज तरुणीणं ।
संकाइ होइ तहियं गोयरे किमु पाडिवेसेहिं ॥

वृ- स्थली घोटादयोऽनेकप्रकारा देवडिंगरानिरुद्धाः कृतसन्तास्तरुणीनां प्रसह्य बलात्कारेण ग्रहणं कुर्युस्ततो गोचरेऽपि तत्र गतानां शङ्का भवति, किं पुनस्तैः प्रातिवेश्मिकैः तेषु प्रातिवेशिमकेषु सुतरां शङ्का; एवं हस्तिशालादिष्वपि दोषविभाषा यथायोगं कर्तव्या । कथिकद्वारमेव सविस्तरं गृहनिषद्या-बाधनद्वारं चाह-

[भा.३०६९] सज्झायमुक्कजोगा धम्मकहाविकह पेसणगिहीणं ।
गिहि निसिज्जं च वाहंती संथवं वा करेंति उ ॥

वृ- स्वाध्यायेन मुक्तो योगो व्यापारो यासां ताः स्वाध्यायमुक्तयोगास्तथाभूताः सत्यो गृहीणां धर्मकथानामाख्याने विकथानां च स्त्रीकथादीनां करणेप्रेरणे च नानारूपे गृहिणामुद्युक्ताः तथा गृहनिषद्यां बाधन्ते गृहनिषद्यामुपवसन्तीत्यर्थः । संस्तवं वा परिचयं वा गृहस्थैः सह कुर्वन्ति, । उपलक्षणमेतत् । वस्त्राण्यन्नपानं वा गृहस्थानां ताः संयत्यो ददति, । अविरतीश्च मण्डयन्ति, मण्डनोपदेशं वा तासां प्रयच्छन्ति, । मण्डनकानि वा ददतीति ।

[भा.३०७०] एवं तु ताहि सिट्ठे निक्खिवियव्वा उ ता उ कहियं तु ।
दोसु वि संविग्गेसु निखिवियव्वा भवे ताउ ॥

वृ- एवमुक्तेन प्रकारेण ताभिः संयतीभिः शिष्टे कथिते ता क्व निक्षेप्तव्याः । सूरिराह-द्वयोरपि संयत संयतीवर्गयोः संविग्नयोस्ता भवन्ति निक्षेप्तव्याः । अत्र संयतसंयतीवर्गयोः संविग्नासंविग्नभेदतश्चत्वारो भङ्गास्तद्यथा संयताः सीदन्ति संयत्योऽपि सीदन्ति प्रथमो भङ्गः, संयताः सीदन्ति न संयत्यः इति द्वितीयः, संयता न सीदन्ति किन्तु संयत्यः सीदन्ति इति तृतीयः । न संयताः सीदन्ति नापि संयत्य इति चतुर्थः, । तत्र दोसु संविग्गेसु इति चतुर्थो भङ्गो गृहीतः । शेषेषु भङ्गेषु निक्षेपणं प्रतिषिद्धं, । तथा च तत्र प्रायश्चित्त-

[भा.३०७१] संजयसंजतिवग्गे संविग्गेक्केक्के अहव दोसं तु ।
निक्खवणा होंति गुरुगा अहपुनसुद्धे चेमेदोसा ॥

वृ- संयतवर्गे संयतीवर्गे वा एकैकस्मिंन्नसंविग्ने एतेन द्वितीयतृतीयभङ्गौ गृहीतौ, । अथवा द्वयोरपि संयतसंयतीवर्गयोरसंविग्नयोरनेन प्रथम भङ्गो गृहीतः, । निक्षेपणे प्रायश्चितं चत्वारो गुरुका भवन्ति, । नवरं तपः कालविशेषता प्रथमभङ्गे द्वाभ्यामपि विशेषिता, । अथ पुनः शुद्धेऽपि चतुर्थे भङ्गे इमे वक्ष्यमाणा दोषास्तर्हि तत्रापि क्षेपणे चत्वारो गुरुकाः, सम्प्रति तानेव दोषानाह-

[भा. ३०७२] तरुणा सिद्धपुत्तादी पविसंति नियल्लगाण निस्साए ।
महयरिय न वारेती, जे वि य पडिसेवे तहिं किंच ॥

वृ- तरुणाः सिद्धपुत्रादयो निजकानामात्मीयानां आर्यिकाणां निश्रयावन्दनव्याजेन प्रविशन्ति, ।

प्रवेशेय च तत्रैव चिरकालमवतिष्ठते तान्महत्तरिका यदि न निवारयति, येऽपि च तत्र वसत
काश्चिदार्यिकामात्मीयां । प्रतिसेवन्ते पर्युपासन्ते पर्युपासीनाश्च चिरं कालं तिष्ठन्ति तानपि न निवारयति
भा. [३०७३] निक्खेवणे तत्थ गुरुगा अह पुन होज्जा हु सासमुज्जु त्ता ।
चरणगुणसुनियमं वियक्खणा सील संपन्ना ।।
वृ- तत्रापि निक्षेपणे प्रायश्चित्तं चत्वारो गुरुकाः, । अथ पुनः सा महत्तरिका चरणगुणेषु नियत
विचक्षणा शीलसम्पन्ना सती समुद्युक्ता अयुक्तं समस्तमपि वारयति तथा-
[भा.३०७४] समासीसपडिच्छीणं चोयणासु अनालसा ।
गणिणी गुणसंपन्ना पसज्झा पुरिसाणुगा ।।
वृ- शिष्याणां प्रातीच्छिकानां च समा । तथा चोदनासु शिक्षणासु अनलसा कृतोद्यमा गणिणी
महत्तरिका गुण सम्पन्ना तथाऽप्रसह्याऽप्रधृष्यो यः पुरुषस्तदनुगता तदनुसारिणी ।
[भा.३०७५] संविग्गा भीयपरिसा य उग्गदंडाय कारणे ।
सज्झायज्झाणजुत्ता य संगहे य विसारया ।।
वृ- संविग्ना सामाचार्यां सम्यगुद्युक्ता तथा भीता पर्षत् यस्याः सा भीतपर्षत् यतः कारणे उग्रदण्डा
स्वाध्यायध्याने युक्ता संग्रहे च विशारदा ।।
[भा.३०७६] विगहा विसोत्तियादीहिं वज्जिया जाय निच्चसो ।
एयगुणोववेयाए तीए पासंभि निक्खिवे ।।
वृ- या च नित्यशः सर्वकालं विकथा विश्रोतसिकादिभिरादिशब्दात् ऋद्धिगौरवादिपरिग्रहोपवर्जिता
एतद्गुणोपेतायास्तस्याः पार्श्वे निक्षिपेत्-
[भा.३०७७] एयारिसाए असती वाएज्जाहि ततो सयं ।
वायंते इमा तत्थ विही उ परिकित्तिया ।।
वृ- एतादृश्या गणिन्या अभावे स्वयं वाचयेत्, तस्मिंश्च वाचयत्ययं वक्ष्यमाणो विधिः परिकीर्तितः ।
[भा.३०७८] माया भगिनी धूया मेहावी उज्जुया य आनत्ती ।
एआसिं असईए सेसा वाएज्जिमा मोत्तुं ।।
वृ- मातरं भगिनीं दुहितरं वा कथं भूतामित्याह-मेधाविनीं प्रज्ञावतीं ऋजुकामकुटिलां आज्ञप्तां
यदुपदिश्यते तस्यै तथैव कारिकां वाचयेदिति योग एतासामसत्यभावे शेषा अपि अस्वजना वाचयेत् ।
इमा वक्ष्यमाणामुक्ता ता एवाह-
[भा.३०७९] तरुणिं भोइय मेहुणियं पुव्वहसिय वभिचारिं ।
एतासु होंति दोसा तम्हा य न वायए तेऊ ।।
वृ- तरुणीं पुराणां पश्चात्कृतव्रतां पुनरभ्युपगतदीक्षां, भोग्यां वेश्यां, मैथुनिकीं भार्यां ययासह पूर्वं
सहितमासीत व्यभिचारिणीं पूर्वावस्थां स्वैरिणीं एतासु यस्माद्वाच्यमानासु पूर्वाभ्यासेनात्मपरसमुत्था दोषा
भवन्ति तस्मात्तान् न वाचयेत् । अत्रैव विशेषमाह-
[भा.३०८०] वज्जकुड्डसमं चित्तं जइ होज्जाहि दोण्हवि ।
तहावि संकितो होइ पज्जातो वाययंत उ ।।
वृ- यद्यपि द्वयोरपि वाच्यवाचकयोश्चित्तं वज्रकुड्यसमं तथाप्येता वाचयन् शंकितः शङ्कागोचरो

भवति तत एतासां वर्जनम् ।

[भा.३०८१] पूर्वं तु किंटी असतीए मज्झिमा दोसरहिय वाएति ।
गणहरो अन्नयरो वावि परिणतो तस्स असतीए ।।

वृ- पूर्वं तावत् किण्टी वृद्धां वाचयेत् । तस्यामसत्यां दोषरहितो गणहरो मध्ययां वाचयेत् । अथ गणधरः प्रयोजनान्तरेण व्याकुलस्ततस्तस्य गणधरस्यासत्यभावे परिणतोऽन्यतरो वापि वाचयेत् ।

[भा.३०८२] तरुणेसु सव्वं दाए दोसअन्नयरेण य विकुलेसु ।
विहुणा उ इमेणं तु दव्वादीएण उ जयंतो ।।

वृ- अथान्यतरः परिणतो न विद्यते, किन्तु सर्वेऽपि तरुणाः वृद्धा अन्यतरेणदोषेण सविकारत्वादिना युक्तास्ततस्तरुणेषु शेषेसु वृद्धेसुवान्यतरेण दोषेण युक्तेषु सत्स्वनेन वक्ष्यमाणेन गणधरः स्वयं वाचयेत् । किं विशिष्ट इत्याह-द्रव्यादिना यतमानस्तामेव द्रव्यादियतनामभिधित्सुराह-

[भा.३०८३] दव्वे खेत्ते काले मंडलिदिठी तहा पसंगो य ।
एएसु जयणं वुच्छं, आनुपुव्विं समासतो ।।

वृ- द्रव्ये क्षेत्रे काले मण्डल्यां तथा दृष्टिप्रसङ्गे एव एतेषु स्थानेषु यतनामानुपूर्व्या समासतो वक्ष्ये ।

[भा.३०८४] जं खलु पुलागदव्वं तव्विवरीयं दुवेवि भुंजंति ।
पुव्वुत्ता खलु दोसा तत्थ निरोधे निसग्गे य ।।

वृ- यत् खलु पुलाकमसारं द्रव्यं तद्विपरीतं द्वावपि वाच्या वाचयिता चेत्यर्थः भुञ्जाते अन्यथा तत्र व्याख्यानमंडल्यां सूत्रादि निरोधे निसर्गे वा पूर्वोक्ताः खलु दोषा उक्ता द्रव्ययतना । क्षेत्रयतनामाह-

[भा.३०८५] सुन्नधरे पच्छन्ने उज्जाने देउले सभारामे ।
उभयवसहिं च मोत्तुं वाएज्ज असंकणिज्जेसु ।।

वृ- शून्यगृहाणि प्रच्छन्नानि विविक्तान् प्रदेशिन् तथा उद्घातानि देवकुलानि सभा आरामाश्च तथा उभयवसतिं संयतवसतिं संयतिवसतिं च मुक्त्वा शेषेष्वशङ्कनीयेषु स्थानेषु वाचयेत् ।

[भा.३०८६] उभयनिजे वय नीए वसन्नियहा भद्द तहय धुवकम्मी ।
आसन्ने सति अन्नाणु वसहए अप्पणो वावि ।।

वृ- उभयस्य संयत्याः संयतस्य च निजे स्वस्थाने आसन्ने सति यदि वा व्रतिन्या निजे अथवा संज्ञिनी श्रावके यदि वा यथा भद्रके अथवा ध्रुवकर्मणि लोहकारादौ प्रत्यासन्ने सति वाचयेत् । अथान्यदर्शनीयं स्थानं न विद्यते, ततः अन्यस्य स्थानस्यासति आर्याणामुपाश्रयेऽथवा आत्मन उपाश्रये यत्र शय्यातरस्य संलोको भवति, तत्र स्थितो वाचयति, गतं क्षेत्रद्वारमधुना कालयतनाद्वारमाह-

[भा.३०८७] जइ अत्थि वायणं दिंतो अदाउं ताहे गच्छइ ।
अह नत्थि ताहे दाउण सुत्तअत्थाण पोरिसिं ।।

वृ- यदि साधूनां सूत्रस्यार्थस्य च वाचनां दाता समस्ति तत आचार्यो वाचनां साधूनामदत्वा गच्छति । प्रातरेव साध्वीनामशङ्कनीये स्थाने वाचनां दातुं गच्छतीति भावः । अथार्थ पौरुषी दाता समस्ति, न सूत्र पौरुषी दाता, तदा सूत्रवतां संयतानां सूत्रपौरुषीं दत्वा गच्छति ।

[भा.३०८८] अह अधइत्ता होज्जा हि तो जाइ पढमाए ।
ऊ असतीए दोण्हवी दाने इमाउ जयण तेहिं ।।

वृ- अथ सूत्रस्य दाता विद्यते नार्थस्य, साधवश्चार्थयन्तोऽपि अर्थार्थिनोऽपि सन्ति, ततः प्रथमपौरुष्यां संयतीनां वाचना प्रदानाय गच्छति, । द्वितीयस्यां तु पौरुष्या मागत्य संयतानामार्थं ददाति, । अथ संयतानां सूत्रस्य वा प्रदाता अन्यो न विद्यते, तदान्यस्यासत्यभावे द्वयानामपि संयतानां संयतीनां चात्मनउपाश्रये एकस्मिन् तेन वाचना देया । तत्र द्वयानां वाचनादाने इयं वक्ष्यमाणा यतना । अत्र मण्डलीयतनाद्वारमापतितं तदेवाह-

[भा.३०८९] कडिनंतरितो वाए दीसंति जनेन दोविजह वग्गा ।
बंधंति मंडलिं ते उ एक्कतो वावि एक्कतो ।।

वृ- ते संयताः संयत्यश्च मण्डलीं बन्धन्ति, । तद्यथा-एकतः संयतमण्डली एकतः संयतीमण्डली, । अपान्तराले च संयतीनां व्यवधानाय कटो दीयते, । तत्रापि प्रच्छन्ने प्रदेशे स्थिताः संयतीर्न वाचयति, । अन्यथा ये शून्यगृहादिषु वाचयतः शङ्कादयो दोषा उक्तास्तेऽत्रापि स्युस्तत आह-यत्र द्वावपि वर्गौ संयतसंयती समुदायरुपावुपविष्टौ जनेन दृश्येते, तत्र स्थितः कटेनान्तरितो वाचयति । एवं सति योगुणस्तमाह-

[भा.३०९०] लोगेवि पच्चतो खलु वंदनमादीसु होंति वीसत्था ।
दुग्गूढादी दोसा विगारदोसा य नो एवं ।।

वृ- एवं क्रियमाणे सति लोकेऽपि शुद्धशीलसमाचारविषयः प्रत्यय उपजायते । येऽपि च वन्दनादिषु समागच्छन्ति तेऽपि द्वावपि वर्गौ तथोपविष्टौ दृष्ट्वा विश्वस्ता भवन्ति । एवं च सति ये दुर्गूढादयः प्रच्छन्नप्रदेशादि भाविता दोषाः ये च परस्परं संयतसंयतीनां विकारदोषास्ते न भवन्ति । अथ कटो न विद्यते तदा वस्त्रेण चिलिमिलि क्रियते । तथा चाह-

[भा.३०९१] चिलिमिलि छेदे वायइ जह पासइ दोण्हवी पवायंती ।
दिट्ठी संबंधादी इमेय तहियं न वाएज्जा ।।

वृ- प्रवाचयन् गणधरश्चिलिमिल्या उपलक्षणमेतत् कटस्य च छेदे पर्यन्ते तिष्ठति, यथा द्वावपि संयतसंयतीवर्गौ (स) पश्यति । तत्र ये संयताः संयतीनां दृष्टिर्दृष्ट्यात्मीयया संबध्नन्ति, ते दृष्टिसम्बन्ध उच्यं(च्य)ते । आदिशब्दान्मैथुनकादि परिग्रहस्तानिमान् वक्ष्यमाणान्न वाचयेत् ।

[भा.३०९२] सविकारा मेहुणादी य जे या वि धिइदुब्बला ।
अन्नेन वायए तेउ निसिं वा पडिपुच्छणं ।।

वृ- ये दृष्ट्या सविकारा ये च मैथुनिकादयो मैथुनिको भर्ता आदि शब्दात्पुराणादि परिग्रहः, ये चापि धृत्या दुर्बलास्तान् अन्येनोपाध्यायादिना वाचयेत्, निशि रात्रौ वा तेषां सन्दिग्धस्थानं प्रतिप्रच्छनं ।।

[भा.३०९३] असयणे पवायंते पढंति सव्वे तेहिं अदोसिल्ला ।
अनिसन्नथेरसहिया थेरसहाओ पवायंतो ।।

वृ- अथान्य उपाध्यायादि प्रवाचयन् न विद्यते तदान्यस्मिन्नसति वाचयति सर्वे तत्र पठन्ति ततऽदोषवन्तस्तत्रापि संयत्यः पठन्त्यनिषन्ना अनुपविष्टा स्थिता इत्यर्थः । येन परस्परं दृष्टिसम्बन्धी न भवति तथा स्थविराः सहिताः प्रवाचयन्नपि स्थविरसहायः प्रवाचयति, येन तत्सहायः सर्वानपि निभालयति, संयत्योऽनिषन्नाः संयत्योऽनिषन्नाः पठन्तीत्युक्तं तत्रापवादमाह-

[भा.३०९४] जा दुब्बला होज्ज चिरं व सज्झातो ताहे निसण्णा न य उक्कसद्दा ।

पलंब संघाडेन उज्जला य अनुनाया वास तिरंजलीय ।।

वृ- या शरीरेण दुर्बला भवति वर्तते चिरं च स्वाध्यायः कर्तव्यः । तदा निषण्णा उपविष्टा सती पठति, न च उच्चशब्देन महता शब्देनालापकमुद्घोषयतीत्यर्थः । तदा संघाटिः प्रलम्बा पादगुल्फपर्यन्ता क्रियते, नोज्वला तथा अनुन्नता पठति, । किमुक्तं भवति । नोर्ध्वमुखा सती अन्यस्यान्यस्य मुखं विप्रक्ष्यमाणा पठति तथा वासी वस्त्रान्तेन तिरोहिताञ्जलिरालापकं गुरोः समीपे याचते

[भा.२०९५] एयविहि विप्पमुक्को संजतिवग्गं तु जो पवाएज्जा ।
मज्जायातिक्कंतं मनायारं वियाणाहि ।।

वृ- एतेनान्तरोदितेन विधिना विप्रमुक्तो यः संयतिवर्गं प्रवाचयेत्, तं मर्यादातिक्रान्तमनाचार-माचारमाचाररहितं विजानीयात् ।

मू. (१७५) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा असज्झाए सज्झाइयं करित्तए*

मू. (१७६) *कप्पइ निग्गंथाण वा निग्गंथीण वा सज्झाइए सज्झायं करित्तए ।*

[भा.२०९६] सज्झातो खलु पगतो वितिगठे नो कप्पइ जहाउ ।
एमेव असज्झाए तप्पडिवक्खे उ सज्झाओ ।।

वृ- स्वाध्यायः खलु प्रकृत पूर्वसूत्रे वर्तते, स च यथा व्यतिकृष्टे काले न कल्पते । एवमेवा-स्वाध्यायकेऽपि, तत्प्रतिपक्षे पुनः स्वाध्यायिके स्वाध्यायः कल्पते । इत्येतदर्थख्यापनार्थमिदं सूत्रमिति सम्बन्धः, । अनेन सम्बन्धेनायातस्यास्य व्याख्यान कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा अस्वाध्यायिके स्वाध्यायं कर्तुं, कल्पते निर्ग्रन्थीनां वा स्वाध्याये स्वाध्यायं कर्तुमिति सूत्राक्षरसंस्कारः ।

[भा.२०९७] असज्झाइयं च दुविहं आयसमुत्थं च परसमुत्थं च ।
जं तं तु परसमुत्थं तं पंचविहं तु नायव्वं ।।

वृ- द्विविधं खलु अस्वाध्यायिकं तद्यथा-आत्मसमुत्थं परसमुत्थं । आत्मानः स्वाध्यायं चिकीर्षोः समुत्थं आत्मसमुत्थं । परस्मात् स्वाध्यायकर्तुरन्यस्मात्समुत्थं परसमुत्थं च शब्दाच्च स्वाध्यायिकतया तुल्यकक्षता संसूचकौ तत्र यत्परसमुत्थं तत्पञ्चविधं ज्ञातव्यम् । तानेव पञ्च प्रकारानाह-

[भा.२०९८] संजमघाउप्पाए सा दिव्वे वुग्गहे य सारीरे ।
एएसु करेमाणे आणाइयमो उ दिठंतो ।।

वृ- संयमघाति संयमोपघातिकमौत्पातिकमुत्पातानिमित्तं स देवता प्रयुक्तं व्युद्ग्रहः शारीरं च एतेषु पञ्चस्वप्यस्वाध्यायिकेषु स्वाध्यायं कुर्वत्याज्ञादय आज्ञाभङ्गादयो दोषास्तथाज्ञां तीर्थकराणां भञ्जति । प्रायश्चित्तं चतुर्गुरु । अनवस्थया अन्येऽपि तथा करिष्यन्तीति, तत्रापि प्रायश्चित्तं चतुर्गुरु, यथा वादि तथाकारी न भवतीति मिथ्यात्वं, तन्निष्पन्नमपि प्रायश्चित्तं चतुर्गुरु, विराधना द्विविधा संयमविराधना आत्मविराधना च । तत्र संयमविराधना ज्ञानाचारविराधना आत्मविराधनायामिदमुदारहरणं तदेवाह-

[भा.२०९९] मिच्छभयघोसणनिवे दुग्गाणि अतीहमाविनेसिहि हा ।
फिडिया जेउ अतिगया इयरा हयसेसंनिवदंडो ।।

वृ- कस्सवि रन्नो मेच्छा खंधावारोपि सयं आगंतुं हणियकामो तं भयं जाणित्ता रना सविसए सयलेवि घोसावियं, मिच्छ खंधावारो आगंतु विसयं हनिउकामो वंट्टति, तासं, तुब्भे दुग्गाणि अतीहतत्थ जेहिं । रन्नो आणाकया ते मिच्छ भयातो फिडिया जेहिं न कया आणा तेमिच्छेहिं लूसिया मारिया य जेवि तत्थ

केइ परिमुक्का ते वि रणा दंडिया ।। अक्षरयोजना त्वेवम्-म्लेच्छभयमाकर्ण्य नृपेण दण्डः कृतः ।

[भा.३१००] राया इव तित्थगरो जानवया साहुणो घोषणं सुत्तं ।
मिच्छाय असज्झातो रयणधनाइं च नाणादी ।।

वृ- अत्र राजा इव तीर्थकरो जनपदा इव साधवः, घोषणमिव सूत्रम् । म्लेच्छा इव अस्वाध्यायो रत्नधनानीव ज्ञानादीनि । तत्र ये साधवो जनपदस्थानीया राजस्थानीयस्य तीर्थकरस्याज्ञां नानुपालयन्ति ते प्रान्तदेवतया छल्यन्ते । प्रायश्चित्तदण्डेन च दण्ड्यन्ते । केन पुनः कारणेनास्वाध्यायिके स्वाध्यायं करोति । तत आह-

[भा.३१०१] पोवावसेस पोरिसि अज्झयणं वा वि जो कुणइ सोउं ।
नाणाइ साररहीनस्स तस्स छलणाउ संसारो ।।

वृ- स्तोकावशेषामपि पौरुष्यमध्ययनं पाठ उद्देशो वाद्यापि नान्तं नीत इति कृत्वा उद्घाटायामपि पौरुष्यामस्तमिते वा सूर्ये अथवा अस्वाध्यायिकमिति श्रुत्वापि योऽध्ययनं पाठमपि शब्दादुद्देशनं च करोति । तस्य ज्ञानादित्रिकं तत्वतोऽपगतं तीर्थकराज्ञा भङ्गकरणादिति, ज्ञानादित्रिकसाररहीनस्य संसारे नरकादि भवभ्रमणलक्षणे छलना भवति, । अपारघोर संसारे निपतनं भवतीति भावः, ।

[भा.३१०२] अहवादिठंत अवरो जहरन्नो केइ पंचपुरिसाओ ।
दुग्गातिपरितोसिओ, तेहिंग राया अह कयाई ।।

[भा.३१०३] तो देति तस्स राया नगरंमी इच्छियं पयारं तू ।
महिएया दइमोल्लं जनस्स आहारवत्थादी ।।

[भा.३१०४] एगेन तोसियतरो गिहमगिहे तस्स सव्वहिं वियरे ।
रत्थाइं सुचउण्हं एविह सज्झाइए उवमा ।।

वृ- अथवेति दृष्टान्तस्य प्रकारान्तरसूचने अपरो दृष्टान्तो यथा-राज्ञः पञ्चपुरुषाः सेवकास्तैश्च कदाचित् राज्ञा दुर्गादिषु पतितो निस्तारितस्तत्रापि तेषां पञ्चानां मध्ये एकेन केनचित् परमसाध्वसमव-लंब्यस्वयमवलंब्य भूयस्तरं साहायिकमकारि ततस्तेषां तेनैकेन वर्जितानां चतुर्णां पुरुषाणां राजा परितुष्टः सन् नगरे रथ्यादिषु गृहचर्येषु प्रचारमीप्सितं ददाति, । यथा यत्किमपि रथ्यावामापणादिषु त्रिकचतुष्क-चत्वारादिषु वा यूयं यद्वस्त्राहारादिकं प्राप्नुयात् युष्माकमेव एवं प्रसादे कृते वस्त्राहारादौ नगरे तैः स्वेच्छया गृहीते राजा यस्य सत्कं तैः गृहीतं तस्य मूलं ददाति । येन चैकेन पुरुषेण भूयस्तरं साहायिकं कुर्वता राजा तोषितस्तस्य राजा गृहेऽगृहे वा सर्वत्र नगरमध्ये प्रचारमीप्सितं वितरति अनुज्ञानाति । तत्रापि यस्य सत्कं तेन गृह्यते वस्त्राहारादि तस्य राज्ञा मूल्यं दीयते । इतरेषां तु चतुर्णां रथ्यादिष्वेव प्रचारमनुज्ञातवान् न गृहेषु । एवमुक्तेन प्रकारेण इह प्रस्तुते अस्वाध्यायिके उपमादृष्टान्तः । तदेवमुक्तो दृष्टान्तः ।

[भा.३१०५] पढमम्मि सव्वचिट्ठा सज्झातो वा निवारितो नियमा ।
सेसेसु असज्झातो चेट्ठा न निवारिया अण्णा ।।

वृ- प्रथमे अस्वाध्यायिके संयमोपघातिलक्षणे सर्वा कायिकी वाचिकी चेष्टा स्वाध्यायश्च नियमाद्वारितस्तोषकतर पुरुषस्थानीयतया तस्य सर्वत्र साधुव्यापारेषु प्रवृत्ते, शेषेषु पुनश्चतुर्थ-स्वाध्यायिकेषु अस्वाध्यायः स्वाध्याये एव केवलो निवारितो नान्या कायिकी वाचिकी वा प्रतिलेखनादिका चेष्टा वारिता, तेषां शेषपुरुष चतुष्टयस्थानीयानां बहीरथ्यादाविव स्वाध्यायमात्र एव

व्यापारभावात् । तदेव पञ्चस्वप्यस्वाध्यायिकेषु सामान्यतो विशेषतश्चोदाहरणयुक्तमिदानीं प्रथमस्वाध्यायिकं संयमोपघाति प्ररुपयति ।

[भा.३१०६] महिया य भिन्नवासे सच्चित्तरए य संजमे तिविहे ।
दव्वे खेत्ते काले, जहियं वा जच्चिरं सव्वं ॥

वृ- महिका गर्भमासे पतन्ती प्रसिद्धा तस्यां तथा गृहादौ यत्पतति वर्षं तत् । भिन्नं वर्षं तस्मिन् तथा सचित्तरजसि च एवंविधे त्रिप्रकारे संयमे पदैकदेशे पदसमुदायोपचारात् संयमोपघातिनि अस्वाध्यायिके निपतति द्रव्यतः, क्षेत्रतः कालत, भावतश्च वर्जनं भवति, । तत्र द्रव्यत एतदेव त्रिविधमस्वाध्यायिकं द्रव्यं, क्षेत्रतो जहयन्ति यावत्क्षेत्रे तत्पतति तावत् क्षेत्रं, कालतो यच्चिरं यावन्तं कालं पतति तावन्तं कालं । भावतः सर्वकायिक्यादिचेष्टादिकं वर्ज्यते । एतामेव गाथां व्याख्यानयति-

[भा.३१०७] महिया उ गब्भमासे वासे पुनहोंति तिन्नि उ पगारा ।
बुब्बुयतव्वज्ज फुसी सच्चित्तरजो य आ तंबो ॥

वृ- महिका गर्भमासे प्रतीता, । गर्भमासो नाम कार्तिकादियावत् माघमासः । वर्षे पुनस्त्रयः प्रकाराः भवन्ति तानेवाह, बुब्बुयतिः यत्र वर्षे निपतति पानीयमध्ये बुद्बुदास्तोयशलाका रुपा उत्तिष्ठन्ति ततो वर्षमप्युपचारात् बुद्बुदमित्युच्युते । तद्वर्जं बुद्बुद्वर्जं, द्वितीयंवर्षं तृतीयं फुसी इति जलस्पर्शिकनिपतन्त्यः । तत्र बुद्बुदे वर्षे निपतति यामाष्टकादूर्ध्वं अन्ये तु व्याचक्षते । त्रयाणां दिनानां परतस्तद्वर्ज पञ्चानां दिनानां जलस्पर्शिकारुपे सप्तानां परतः सर्वमप्कायस्पृष्टंभवति । ततस्तत्र द्रव्यतः क्षेत्रतः कालतो भावतश्च वर्जनं प्राग्वद्भावनीयम् । यावन्नापकायमयं न भवति तावत् यद्युपाश्रयो श्लक्ष्णधूलिस्तद्य सचित्तरजो वर्णेनाताम्रं गाथायां पुस्त्वं प्राकृतत्वात् । तच्च दिगंतरेषु दृश्यते । तदपि निरन्तरपातेन त्रयाणां दिनानां परतः सर्वं पृथिवी कायभावितं करोति । तत्रापि पतितद्रव्यादितो वर्जनं प्राग्वत् ।

[भा.३१०८] दव्वे तं चिय दव्वं खेत्ते जहियं तु जच्चिरं काले ।
ठाणादिभासभावे मुत्तुं तउस्सासउम्मेसुं ॥

वृ- द्रव्ये द्रव्यतस्तदेवास्वाध्यायिकं महिकं भिन्नवर्षं सचित्तरजो वा वर्ज्यते । क्षेत्रतो यत्र क्षेत्रे निपतति । कालतो यच्चिरं कालं पतति । भावतो मुक्त्वा उच्छ्वासमुन्मेषं च तद्वर्जने जीवितव्याघातसंभवात् । शेषां स्थानादिकमादिशब्दात् गमनागमने प्रतिलेखनादि परिग्रहः कायिकां चेष्टां भाषां च वर्जयति ।

[भा.३१०९] वासत्ताणा वरिया निक्कारणेठंति कज्जजयणाए ।
हत्थत्थंगुलिसन्ना पोत्तावरिया व भासंति ॥

वृ- निष्कारणे कारणाभावे वर्षत्राणं कम्बलमयः कल्पस्तेन सौत्रिककल्पान्तरितेन सर्वात्मना आवृत्तातिष्ठन्ति न कामपि लेशतोऽपि चेष्टां कुर्वन्ति । कार्ये तु समापतिते यतनया हस्तसंज्ञया वा व्यवहरन्ति, पोताचरिता वा भाषन्ते । ग्लानादि प्रयोजने वर्षा कल्पावृता गच्छन्ति । गतं संयमोपघात्यस्वाध्यायिकमिदानीमौत्पातिकमाह-

[भा.३११०] पंसूयमंसरुहिरे केससिलावुट्ठितह रउग्धाए ।
मंसरुहिरेहोरत्तं अवसेसो जच्चिरं सुत्तं ॥

वृ- अत्र वृष्टिशब्दः प्रत्येकमभिसम्बध्यते। पांशुवृष्टौ मांसवृष्टौ रुधिरवृष्टौ केशवृष्टौ शिलावृष्टौ च। तत्र पांशुवृष्टिर्नामयदि वृत्तं रजोनिपतति, मांसवृष्टिर्मांसखण्डानि पतन्ति, । रुधिरवृष्टिः रुधिरबिन्दवः पतन्ति, । केशवृष्टिर्यद्वराः केशाः पतन्ति । शिलावृष्टिः पाषाणनिपतनं करकादिशिलावर्षमित्यर्थः । तथा रजउद्घाते रजस्वलासु दिक्षु सूत्रं न पठ्यते शेषाः सर्वाअपि चेष्टाः क्रियन्ते । तत्र मांसे रुधिरे च पतति अहोरात्रं वर्ज्यते, अवशेषे पांशुवृष्ट्यादौ यावच्चिरं पांश्वादिपतनं तावन्तं कालं सूत्रं नन्द्यादि न पठ्यते । शेषकालं तु पठ्यते । सम्प्रति पाशुरजउद्घात व्याख्यानमाह-

[भा.३१११] पंसू अचित्तरजो रसलातो दिसारउग्घातो ।
तत्थ स वाते निव्वाघइ एयसुत्तं परिहरंति ।।

वृ- पांशवो नाम धूमाकारमापाण्डुरमचित्तं रजः, रज उद्घातो रजस्वलादिशो यासु सत्सु समन्ततोऽन्धकारइव दृश्यते । तत्र पांशुवृष्टौ रजउद्घातेवा स वाते निर्वातेच पततियावत्पतनं तावत्सूत्रं परिहरन्ति । अत्रैवापवादमाह-

[भा.३११२] साभाविए तिन्नि दिना सुगिम्हए निक्खेवंति ।
जइजोगं तो तंमि पडंतंमी कुणंति संवच्छरं ज्झायं ।।

वृ- यदि सुग्रीष्मे ग्रीष्मकालप्रारंभ उष्णकालप्रारंभ चैत्रशुक्लपक्षे इत्यर्थः । दशम्याः परतो यावत् पौर्णमासी । अत्रान्तरे निरन्तरं त्रीणि दिनानी यावत् यदि योगं निक्षिपन्ति एकादश्यादिषु त्रयोदशीपर्यन्तेषु यदि वा त्रयोदश्यादिषु पौर्णमासी पर्यन्तेषु सचित्तरजो अवहेट[व]नार्थं कायोत्सर्गं कुर्वन्ति तदा तस्मिन् पांशुवर्षे रजउद्घाते वा स्वाभाविके पतति संवत्सरं यावत्स्वाध्यायं कुर्वन्ति । इतरथानेति गतमौत्पातिकमिदानीं सदेवमाह-

[भा.३११३] गंधव्वदिसाविज्जुक्क[अ]गज्जिते जूव जक्खलित्ते य ।
एक्केकपोरिसिं गज्जियं तु दो पोरिसीहणति ।।

वृ- गन्धर्वनगरं नाम यच्चक्रवर्त्यादि नगरस्योत्पातसूचनाय सन्ध्यासमये तस्य नगरस्योपरि द्वितीयं नगरं प्राकाराट्टलकादि संस्थितं दृश्यते; दिग्दाहः विद्युत्प्रतीता उल्का सरेखाप्रकाशयुक्ता वा गर्जितं प्रतीतं यूपको वक्ष्यमाणलक्षणो यक्षालिप्तं नाम एकस्यां दिशि अन्तरान्तरा यद्दृश्यते विद्युत्सदृशः प्रकाशः एतेषु मध्ये गन्धर्वनगरादिकमेकैकं पौरुषीं हन्ति । गर्जितं पुनर्द्वे पौरुष्यौ हन्ति ।

[भा.३११४] गंधव्वनगरनियमा सदेव्वं संसगानि भजितानि ।
जेन न नज्जंति फुडं तेन य तेसिं तु परिहारो ।।

वृ- अत्र गन्धर्वनगरादिषु मध्ये गन्धर्वनगरं नियमात्सदेवमन्यथा तस्यासंभवात् । शेषकाणि तु दिग्दाहादीनि भक्तानि विकल्पितानि, कदाचित्स्वाभाविकानि विद्यन्ति भवन्ति । कदाचित् देवकृतानि । तत्र स्वाभाविकेषु स्वाध्यायो न परिह्रियते । किन्तु देवकृतेषु परं येन कारणेन स्फुटं वैविक्त्येन भाति ज्ञायन्ते तेन तेषामविशेषेण परिहारः । सम्प्रति दिग्दाहादि व्याख्यानमाह-

[भा.३११५] दिसिदाहो छिन्नमूलो उक्कसरेहा पगासजुत्ता वा ।
संज्झाच्छेयावरणो उ जूवतो सुक्के दिने तिन्नि ।।

वृ- दिशि पूर्वादिकायां छिन्नमूलो दाहः प्रज्वलनं दिग्दाहः । किमुक्तं भवति ? अन्यतमस्यां दिशि महानगर प्रदीप्तमिवोपरि प्रकाशोऽधस्तादन्धकार इति दिग्दाहः उल्का पृष्ठतः सरेखा प्रकासयुक्ता वा ।

यूपको नाम शुक्ले शुक्लपक्षे त्रीणि दिनानि यावत् द्वितीयस्यां तृतीयस्यां चतुर्थ्यां चेत्यर्थः सन्ध्याच्छेदः, सन्ध्याविभागः स आध्रि[व्रि]यते येन स सन्ध्याच्छेदावरणश्चन्द्रः । इयमत्र भावना-शुक्लपक्षे द्वितीया तृतीया चतुर्थी रुपेषु त्रिषु दिवसेषु संध्यागतश्चंद्र इति कृत्वा संध्या न विभाव्यते, ततस्तानि शुक्लपक्षे त्रीणि दिनानि यावच्चंद्रः संध्याच्छेदावरणः स यूप इति तेषु च त्रिषु दिवसेषु प्रादोषिकी पौरुषी नास्ति । सन्ध्याच्छेदाविभावनादिति । अत्रैव मतान्तरमाह-

[भा.३११६] केसिंचि होइ मोहो उ जूवतो ते होंति आइण्णा ।
जेसिं तु अणाइण्णा तेसिं खलु पोरिसी दोन्नि ॥

वृ- केषाञ्चिदाचार्याणां मतेन भवन्ति शुक्लपक्षे प्रतिपदादिषु त्रिषु दिवसेष्वमोघाममोघा शुभाशुभसूचननिमित्तादि तथोत्पादा आदित्यकरणविकारजनिता आदित्यस्योदयसमयेऽस्तमयसमये वा आताम्राः कृष्णश्यामा वा यूपक इति ते च भवन्ति वर्त्तन्ते । आचीर्णा नैतेषु स्वाध्यायः परिह्रियते इत्यर्थः, । येषां त्वाचार्याणामनाचीर्णास्तेषां मतेन यूपको द्वे पौरुष्यौ हन्ति न केवलममूनि सदेवानि किन्त्वमून्यपि । तान्येवाह-

[भा.३११७] चंदिमसूरुवरागा निग्घाए गुंजिते अहोरत्तं ।
चंदो जहन्नेनाट्ठ उ उक्कोसपोरिसि विच्छकं ॥

[भा.३११८] सूरो जहन्न बारस उक्कोसं पोरिसी उ सोलसउ ।
संगहनिव्वुड्ड एवं, सुरादी जेन होरत्ता ॥

वृ- चन्द्रोपरागे सूर्योपरागे च तद्दिनापगते इति वाक्यशेषः । तथा साभ्रे निरभ्रे वा नभसि व्यन्तरकृतो महागर्जितसमो ध्वनिर्निर्घातः गर्जितस्येव विकारो गुञ्जावत् गुञ्जमानो महाध्वनिर्गुञ्जितं तस्मिन् निर्घाते गुंजिते च प्रत्येकमहोरात्रं यावत्स्वाध्यायपरिहारः । तत्र जघन्यत उत्कर्षतश्चन्द्रोपरागं सूर्योपरागं चाधिकृत्य स्वाध्यायोचितकालमानमाह-चन्द्रो जघन्येनाष्टौ पौरिषीर्हन्ति, उत्कर्षतः पौरुषी द्विषट्कं द्वादशपौरुषीरित्यर्थः । कथमिति चेदुच्यते-तद्गच्छन् चन्द्रमा राहुणा ग्रहीतस्ततश्चतस्रः पौरुषीर्दिवसस्य हन्ति । चतस्र आगामिन्या रात्रेश्चतस्रो द्वितीयस्य दिवसस्याथवा औत्पातिकग्रहणेन सर्व रात्रिकं ग्रहणं जातं, सग्रह एव निमग्नस्ततः संदूषितरात्रेश्चतस्रः पौरुषी रन्यच्चाहोरात्रं । अथवा अभ्रच्छन्नतया विशेषपरिज्ञानाभावाच्च न ज्ञातं कस्यां वेलायां ग्रहणं प्रभाते च सग्रहो निमज्जन् दृष्टः । ततः समग्रा रात्रिः परिहृता । अन्यच्चाहोरात्रमिति द्वादशः सूर्यो जघन्येन द्वादशपौरुषीर्हन्ति उत्कर्षत षोडशमिति चेदुच्यते-सूर्यः सग्रह एवास्तमुपयातस्ततश्चतस्रः पौरुषी रात्रेर्हन्ति चतस्र आगामिनो दिवसस्य चतस्रस्ततः परस्या रात्रेरेवं द्वादश, षोडश पुनरेवं सूर्य उद्गच्छन् राहुणा गृहीतः सकलं दिनं समुत्पातवशात् सग्रह एवास्तमुपागतस्ततश्चतस्रः पौरुषीर्दिवसस्य हन्ति चतस्र आगामिन्या रात्रेस्ततश्चतस्रः परदिवसस्य ततोऽपि चतस्रः परतराया रात्रेरेवं षोडश पौरुषीर्हन्ति सग्रह निमग्नः सग्रह एवास्तमितस्तथा चोक्तम्-एवं उग्गच्छन्नगहिए सग्गहनिब्बुडे । दड्डव्वमिति सूरादी जेण हो रत्तित्ति ॥ सूर्योदयो येनाहोरात्रास्ततः किमित्याह-

[भा.३११९] आइन्नं दिनमुक्के सोव्विय दिवसो य राती य ।
निग्घाय गुंजिएसुं सव्वि य वेलाउ जा पत्ता ॥

वृ- यतः सूर्यादिरहोरात्रास्ततो दिनमुक्ते सूर्ये स एव दिवसः सैव च रात्रिरस्वाध्यायिकतया परिह्रियते

चन्द्रे तु तस्यामेव रात्रौ मुक्ते यावदपरश्चन्द्रो नोदेति तावदस्वाध्याय इति सैव रात्रि परंपरं च दिनमित्येषमहोरात्रमस्वाध्यायः । अन्ये पुनराहुश्चूर्णिमिदं चन्द्रो रात्रौ गृहीतो रात्रावेव मुक्तस्तस्या रात्रेः शेषंवर्जनीयं यस्मादागामिसूर्योदये समाप्तिरहोरात्रस्य जाता । सूर्योऽपि यदि दिवा गृहीतो दिवैव मुक्तस्तस्तस्यैव दिवसस्य शेषं रात्रिश्च वर्जनीया इति । तथा निर्घात गुञ्जितयोः प्रत्येकं यस्यां वेलायां निर्घातो गुञ्जितं वाऽधिकृतं दिनेऽभवत् द्वितीयेऽपि दिने यावत्सैव वेला प्राप्ता भवति, तावदस्वाध्याय एव तयोरप्यस्वाध्यायस्याहोरात्रप्रमाणत्वात् । उक्तं च- निग्घातो गुंजियं च लोकप्रतीता एए । अहोरत्तं उवहनंतित्ति तथा ।।

**[भा.३१२०]** चउसंज्झासु न कीरइ पाडिवएसुं तहेव चउसुंपि ।
जो जत्थ पूइज्जइ सव्वहिं सुग्गिम्हए नियमा ।।

**वृ-** चतस्रः सन्ध्यास्तिस्रो रात्रौ तद्यथा-प्रस्थिते सूर्ये अर्धरात्रे प्रभाते च चतुर्थी दिवसस्य मध्यभागे एतासु चतसृष्वपि स्वाध्यायो न क्रियते, । शेष क्रियाणां तु प्रतिलेखनादीनां न प्रतिषेधः स्वाध्यायकरणे चाज्ञाभङ्गादयो दोषास्तथा चतस्रः प्रतिपदस्तद्यथा-आषाढपौर्णमासी प्रतिपत् १, इन्द्रमह प्रतिपत् २, कार्तिक पौर्णमासी प्रतिपत् ३, सुग्रीष्म प्रतिपत् ४, चैत्रपौर्णमासी प्रतिपदित्यर्थः, एतास्वपि चतसृष्वपि प्रतिपत्सु तथैव स्वाध्याय एव न क्रियते न शेष क्रियाणां प्रतिषेधः । इह प्रतिपद्ग्रहणेन प्रतिपत् पर्यन्ताश्चत्वारो महाः सूचिताः । इत्येषां तु चतुर्णां महानां मध्ये यो महो यस्मिन् देशे यतो दिवदारभ्य यावन्तं कालं पूज्यते तस्मिन् देशे ततो दिवसादारभ्य तावन्तं कालं स्वाध्यायं न कुर्वन्ति, प्रतिपत् पुनः सर्वेषां पर्यन्तः । सव्वेसिं जाव पडिवतो इति वचनात् । सुग्रीष्मकश्चैत्रमासभावी पुनर्महामहः । सर्वेषु देशेषु शुक्लपक्ष प्रतिपद्य आरभ्य चैत्रपूर्णमासी प्रतिपत्पर्यन्तो नियमात्प्रसिद्धस्ततो यद्यध्वानं प्रतिपन्नस्तथापि चैत्रमासस्य शुक्लपक्ष प्रतिपद आरभ्य सर्व पक्षं पौर्णमासी प्रतिपत्पर्यन्तं यावदवश्यमनागाढो योगो निक्षिप्यते । शेषेषु आगाढादिकेषु योगो न क्षिप्यते केवलं स्वाध्यायं न कुर्वन्ति । गतं सदेवमस्वाध्यायिकमिदानीं व्युद्ग्राहमाह-

**[भा.३१२१]** वुग्गह दंडियमादी संखोभ दंडिए य कालगतो ।
अनरायए य सभए जच्चिर निदोच्चहोरत्तं ।।

**वृ-** व्युद्ग्रहे परस्पर विग्रहे दण्डिकादीनामादिशब्दात् सेनापत्यादिनां च विग्रहे अस्वाध्यायः । इयमत्र भावना-द्वौ दण्डिकौ सस्कन्धावारौ परस्परं संग्रामं कर्तुकामौ । यावन्नोपशाम्यतस्तावत्स्वाध्यायः कर्तुं न कल्पते किं कारणमिति चेतुच्यते-तत्र वानमन्तराः कौतुकेन स्वस्वपक्षेण समागच्छन्ति, ते च्छलयेयुर्भूयसांच लोकानामप्रीतिर्वयमेवं भीता वर्तामहेकामप्यापदं प्राप्स्याम एते च श्रमणका निर्दुःखं पठन्ति । अत्रादिशब्दव्याख्यानार्थमिमां गाथामाह-

**[भा.३१२२]** सेनाहिव भोइय महलरपुंसित्थीणं मल्लजुद्धे वा ।
लोठादिभंडणे वा गुज्झ उड्डाह अचियत्तं ।।

**वृ-** द्वयोः सेनाधिपत्योर्द्वयोर्वा तथाविध प्रसिद्धपात्रयोः स्त्रियोः परस्परं व्यूद्ग्रहे वर्तमाने अथवा मल्लयुद्धे तथा द्वयोर्ग्रामयोः परस्परे सकलुषभावे बहवस्तरुणाः परस्परं लोष्टैर्युध्यन्ते । यदिवा बाहुयुद्धादिभिस्ततो लोष्टादिभिर्वा परस्परंभण्डने कलहे यावन्नोपशमो भवति सेनाधिपादिर्व्युद्ग्रहस्य तावदस्वाध्यायः । अत्र कारणमाह-गुज्झगउड्डाह अचियत्तं गुह्यकाः कौतुकेन दण्डिके कालगते अन्नाराएयत्ति यावदन्यो राजा

नाभिषिक्तो भवती तावत् प्रजानां महान् संक्षोभो भवति । तस्मिन् संक्षोभे सति स्वाध्यायो न कल्पते किमुक्तं भवति ? यावत्संक्षोभस्तावदस्वाध्यायः । अत्रापि पूर्वोक्ता दोषाः सभयं म्लेच्छादिभयाकुलं तस्मिन्नपि स्वाध्यायो न कर्तव्यः, । एतेषु सर्वेषु व्युद्ग्रहादिष्वस्वाध्यायविधिमाह- जच्चिरनिद्दोव्यहोरत्तं व्युद्ग्रहादिषु यच्चिरं यावन्तं कालमनिदोषमित्यनिर्भयमस्वस्थमित्यर्थस्तावन्तं कालमस्वाध्यायः । स्वस्थीभवनानन्तरमप्येके महोरात्रं परिहृत्य स्वाध्यायः कर्तव्यः । उक्तं च-

निद्दोसी भूतेति अहोरत्तमेगं परिहरित्ता सज्झाओ ।
कीरइ इह संखोभे दंडिए कालगए वा ।।

कालगए इत्यनेनान्यदपि सूचितमस्ति, ततस्तदभिधित्सु । संखोभे दंडीए इत्येतदपि व्याख्यानयति-

[भा. ३१२३] दंडीय कालगयंमी जा संखोभो न कीरते ताव ।
तद्दिवस भोइ महत्तर वा दुगपति सेज्जवसादी ।।

वृ- दण्डिके कालगते सति यावत्संक्षोभस्तावत्स्वाध्यायो न क्रियते । अन्यस्मिंस्तु राज्ञि स्थापितेऽहोरात्रातिक्रमेण क्रियते स्वास्थ्यभवनात् । तथा भोजिके ग्रामस्वामिनि महत्तरिके ग्रामप्रधाने वाटकपतौ वसत्यनुगतवाटैकैक स्वामिनि तथा शय्यातर आदि शब्दादन्यस्मिन्वा शय्यातरसम्बन्धिनि मानुषे कालगते तद्दिवसमस्वाध्यायः एकमहोरात्रं यावत्स्वाध्यायपरिहार इत्यर्थः । तथा-

[भा. ३१२४] पगयबहुपक्खिए वा सत्तघरंतरमतेव तद्दिवसं ।
निदुक्खत्ति य गरिहा न पढंति सणियगं वावि ।।

वृ- अन्योऽपि यो नाम ग्रामे प्रकृतोऽधिकृतो महा मनुष्यस्तस्मिन् यदि वा बहुपाक्षिके बहु स्वजने कालगते अन्यस्मिन्वा प्रकृते स्ववसत्यपेक्षया सप्तगृहाभ्यन्तरे कालगते तद्दिवसमेकमहोरात्रमस्वाध्यायः । किं कारणमत आह- नि दुक्खा अभी इत्यप्रीत्या गर्हा संभवात् ततो न पठन्ति यथा न कोऽपि शृणोतीति महिलारुदित शब्दोऽपि यावत् श्रूयते तावन्न पठन्ति ।

[भा. ३१२५] हत्थसयमनाहम्मी जइ सारियमादित्तविगिंचिज्जा ।
तो सुद्धं अविचिते अन्नं च तहिं विमग्गंति ।।

वृ- कोऽप्यनाथो हस्तशताभ्यन्तरे मृतस्तस्मिन्ननाथे हस्तशताभ्यन्तरे कालगते कालगते स्वाध्यायो न क्रियते, । तत्रेयं यतना- शय्यातरस्य वा तद्विधस्य श्रावकस्य यथा भद्रकस्य वा वार्त्ताकथ्यते यथा स्वाध्यायान्तरायमस्माकमनाथमृतकेन कृतमस्ति ततः सुन्दरं भवति । यदीदं च्छर्दति एवमभ्यर्थितो यदि शय्यातरादिर्विगिश्चयेत् ततः शुद्धं भवतीति स्वाध्यायः कार्यः । अथ च शय्यातरादिर्न कोऽपि परिष्ठापयितुमिच्छति तदा तस्मिन्ननाथमृतके अविविक्ते अपरिस्थापित अन्यां वसतिं मार्गयन्ति ।

[भा. ३१२६] अण वसहीए असती ताहे रत्तिं वसभा विवेचेंति ।
विकिन्ने व समत्ता जं दिट्ठं असढ्यरे सुद्धा ।।

वृ- अन्यस्या वसतेरभावो यदि ततो रात्रौ सागारिका संलोके वृषभास्तदनाथमृतकं विविचन्ति अन्यत्र प्रक्षिपन्ति । अथ तत्कलेवरं श्वश्रृगालादिभिस्समंततो विकीर्णं ततो विकीर्णे तस्मिन् समंततो निभालयन्ति दृष्टं तत्सर्वमपि विविचन्ति । इतरस्मिंस्तु प्रयत्ने कृतेऽप्यदृष्टे असढा इति कृत्वा शुद्धाः स्वाध्यायं कुर्वन्तोऽपि न प्रायश्चित्तभागिन इति भावः । गतं व्युद्ग्रहजमिदानीं शारीरिकमाह-

[भा. ३१२७] सरीरंपि य दुविहं मानुसतेरिच्छियं समासेणं ।

तेरिच्छं तत्थ तिहा जल थल खहजं पुनो चउहा ।।

**वृ-** शरीरभवं शारीरं तदपि समासेन संक्षेपतो द्विविधं द्विप्रकारं । तद्यथा-मानुषं तैरश्चं च । तत्र तैरश्चं त्रिधा-जलजं जलजमत्स्यादि, तिर्यग्भवमेवं गवादीनां स्थलजं खजं च मयूरादीनाम् । पुनरेकैकं चतुर्धा चतुः प्रकारं । तानेव प्रकारानाह-

**[भा.३१२८]** चम्मरुहिरं च मंसं अत्थिपि य होइ चउविगप्पं तु ।
अहवा दव्वाईयं चउविहं होइ नायव्वं ।।

**वृ-** चर्म सशोणितं रुधिरंमांसमस्थि इत्येतानि प्रतीतानि । एवमेकैकं जलजाति चतुर्विकल्पं भवति । अथवा जलजादिकं प्रत्येकं चर्मादिभेदतश्चतुर्विकल्पं सत्पुनद्रव्यादिकं द्रव्यादिभेदतश्चतुर्विधं भवति ज्ञातव्यं । तानेव प्रत्येकं द्रव्यादीन् चतुरो भेदानाह-

**[भा.३१२९]** पंचेंदियाण दव्वे खित्ते सट्ठिहत्थपोग्गलाकिण्णे ।
तिकुरच्छमहन्नेगा नगरिं बाहिं तु गामस्स ।।

**वृ-** द्रव्ये द्रव्यतः पञ्चेन्द्रियाणां जलजादीनां चर्मादिकं चतुष्टयमस्वाध्यायिकं न विकलेन्द्रियाणां, क्षेत्रे क्षेत्रतः षष्टिहस्ताभ्यन्तरे परिहरणीयं न परतः । अथ तत्स्थानं तैरश्चेन पौद्गलेन मांसेन समन्ततः मांसने समन्ततः काककुकुरादिभिर्दिक्षुविक्षिप्तेनाकीर्णं व्याप्तं तदा यदि स ग्रामस्तर्हि तस्मिन् तिसृभिः कुरथ्याभिरन्तरिते विकीर्णे पुद्गलेस्वाध्यायः क्रियते । अथ नगरंतदा तत्र यस्यांराजा ज बलवाहनो गच्छति तदेवं यानंरथो वा विविधानि वा संवाहनानि गच्छन्ति । तथा महत्याप्येकया रथ्यया अन्तरिते स्वाध्यायः कार्यः । अथ स ग्रामः समस्तो विकीर्णेन पौद्गलेनाकीर्णो विद्यते तेन तिसृभिः कुरथ्याभिरन्तरिते तत्पौद्गलभवाप्यते तदा ग्रामस्य बहिः स्वाध्यायो विधेयः । गता क्षेत्रतो मार्गणा । सम्प्रति कालतो भावतश्च

**[भा.३१३०]** काले तिपोरिसि अट्ठव भवि सुत्तं तु नंदिमादीयं ।
बहि धोय रुद्धपक्के वूढे वा होति सुद्धं तु ।।

**वृ-** तत एकैकं जलजादिगतं चर्मादिकालस्तिस्रः पौरुषी हींति, । अट्ठवंति महाकाय पञ्चेन्द्रियस्य मूषिकादेराहननं । तत्राष्टौ पौरुषीर्यावत्स्वाध्यायविघातो गता कालतोऽपि मार्गणा भावत आह-भावे भावतो नन्द्यादिकं सूत्रं न पठति, बहिधोएत्यादि यदि षष्टिहस्तेभ्यः परतो बहि प्रक्षाल्य मांसमानीतं यदि वा राद्धास्थालीपाकेन तदा तस्मिन् बहिर्धौते बहिराद्धे बहिः पक्वे वा तत्रानीते शुद्धमस्वाध्यायिकं न भवतीति भावः । अथवा यत्तत्र षष्टिहस्ताभ्यन्तरे पतितमस्वाध्यायिकं रुधिरं तेनावकाशेन पानीयप्रवाह आगतस्तेन व्यूढं तदा पौरुषीत्रयमध्येऽपि शुद्धमस्वाध्यायिकमिति स्वाध्यायः कार्यः ।

**[भा.३१३१]** अंतो पुन सट्ठीणं धोयंमी अवयवा तहिं होंति ।
तो तिन्नि पोरिसीतो परिहरियव्वा तहिं हुंति ।।

**वृ-** यदि पुनः षष्टेर्हस्ता नामभ्यन्तरे मांसं प्रक्षालयति, तदा तस्मिन् धौते यतस्तत्र नियमादवयवाः पतिता भवन्ति, । ततस्तिस्रः पौरुष्यः स्वाध्यायमधिकृत्या तत्र परिहर्तव्या भवन्ति । अट्ठवेति यदुक्तं तदिदानीं भावयति-

**[भा.३१३२]** महाकाये अहोरत्तं मंज्जारादीन मूसगादिहतं ।
अविभिन्ने गिनं वा पठंति एगे जइ पलाति ।।

**वृ-** महाकाये मूषिकादौ मार्जरादिना हते मारितेऽहोरात्रमष्टौ पौरुषीर्यावदस्वाध्यायः । अत्रैव

मतान्तरमाह-अविभिन्ने इत्यादि । एके प्राहुर्यदि मार्जारादिना मूषिकादिरविभिन्न एव सन्मारितो मारयित्वा च गृहीत्वा अथवा गिलित्वा यदि ततः स्थानात् पलायते तदा पठन्ति, साधवः सूत्रं न कश्चिद्दोषः, अन्येनेच्छन्ति । यतः कस्तं जानाति अविभिन्नो वा मारित इति । अपरे पुनः एवमाहुर्यत्र मार्जारादिः स्वयं मृतो अन्येन वा केनाप्यविभिन्न एवं सन्मारितस्तत् यावत् तत्कलेवरं न भिद्यते तावन्नास्वाध्यायिकं विभिन्नेऽस्वाध्यायिकमिति तदेतदसमीचीनं यतश्चर्मादिभेदतश्चतुर्विधमस्वाध्यायिकं तस्मादविभिन्नेऽप्यस्वाध्याय एव ।

**[भा.३१३३]** अंतो बहिं च भिन्ने अंडबिंदू तह वियायाए ।
रायपह वूढ सुद्धे परवयणे साणमादीनि ॥

**वृ-** अन्तरुपाश्रयस्य मध्ये यदि चोपाश्रयाद्बहिः षष्टिहस्ताभ्यन्तरे अण्डके पतिते यदि तदण्डकमभिन्नमद्याप्यस्ति तदा तस्मिन्नुज्झिते स्वाध्यायः कल्पते । अथवा पतितं स दण्डकं भिन्नं तस्य चाण्डकस्य कललबिन्दुर्भूमौ पतितस्तदा भिन्ने अण्डके बिन्दौ च भूमौ पतिते न कल्पते स्वाध्यायः । अथ कल्पे पतितं सदण्डकं भिन्नकललबिन्दुर्वा तत्र लग्नस्तदा तस्मिन् पष्टिहस्तेभ्यः परतो बहिर्नीत्वा धौते कल्पते । तथा विजातायां प्रसूतायां तैरश्च्यामस्वाध्यायः पौरुषी त्रितयं यावत् तथा ये राजपथे अस्वाध्यायिक बिन्दवो गलितास्ते न गण्यन्ते । तथान्यत्र प्रतिपतित एवास्वाध्यायिकं ततो वर्षोदक प्रवाहेन तस्मिन् व्यूढे कल्पते । अत्र श्वादिकमाश्रित्य परस्य वचनं तदाग्रभाव इष्यते इति गाथासंक्षेपार्थः ।

**[भा.३१३४]** अंडयमुज्झियकप्पे न य भूमि खणंति इहरेहातिन्नि ।
असज्झाइयपरमाण मच्छियपाया जहिंबुप्पे ॥

**वृ-** यद्यण्डकमभिन्नमेव पतितं तदा तस्मिन्नुज्झिते स्वाध्यायः कल्पते, अभिन्नं तदा कल्पते, अथ भिन्नं तदा न कल्पते । न च भूमिं खनन्ति, इतरथा भूमिखननेन यदि तदस्वाध्यायिकमपनयन्ति तथाहि तिस्रः पौरुषीर्यावदस्वाध्यायः । अण्डक बिन्दोरस्वाध्यायिकस्य प्रमाणं । यत्र मक्षिकापादा निमज्जंति । किमुक्तं भवति ? यावन्मात्रे मक्षिकापादो ब्रुडति तावन्मात्रेऽप्यण्डकबिन्दौ भूमौ पतति अस्वाध्यायः ।

**[भा.३१३५]** अजराउ तिन्नि पोरिसि जरा उयाणं जरे पडिए तिन्नि ।
निज्जं तु वसस पुरतो, गलियं जति निग्गलं होज्जा ।

**वृ-** अजरायुः प्रसूता तिस्रः पौरुषी स्वाध्यायं हन्ति, अहोरात्रं च्छेदं मुक्त्वा अहोरात्रे तु च्छिन्ने आसन्नायामपि प्रसूतायां कल्पते स्वाध्यायो जरायुजानां यावज्जरायुर्लम्बते तावदस्वाध्यायो, जरायौ पतिते सति तदनन्तरं तिस्रः पौरुषीर्यावदस्वाध्यायः तथा उपाश्रयस्य पुरतो नीयमानं तदस्वाध्यायिकं गलितं भवति । तदा पौरुषीत्रयं यावदस्वाध्यायो, यदि पुनर्निर्गलं भवेत्तदा तस्मिन्नीते स्वाध्यायः रायपहवूढेति-

**[भा.३१३६]** रायपहे न गणिज्जति अह पुन अन्नत्थ पोरिसी तिन्नि ।
अह पुन वूढं होज्जा वासो देणं ततो सुद्धं ॥

**वृ-** राजपथे यद्यस्वाध्यायिकबिन्दवो गलितास्तदा तदस्वाध्यायिकं न गण्यते किं कारणमिति चेदुच्यते-यतस्ततः स्वयोग्यत आगच्छतां च मनुष्यतिरश्चां पदनिपातैर्व्योत्क्षिप्तं भवति । जिनाज्ञा चात्र प्रमाणमतो न दोषः । अतः पुनस्तदस्वाध्यायिकं तैरश्चं राजपथादन्यत्र षष्टिहस्ताभ्यन्तरे पतति तदा तिस्रः पौरुषीर्यावदस्वाध्यायः । अथ तदपि वर्षोदकेन व्यूढं भवेत् । उपलक्षणमेतत् प्रदीपनकेन वा दग्धं तदा शुद्धं तत्स्थानमिति कल्पते स्वाध्यायः । सम्प्रति परवयणे साणमादीण इति व्याख्यानयति-

[भा.३१३७]　　　　चोदेति समुद्दिसिउं साणो जइ पोग्गलं तुएज्जाहि ।
उदरगतेनं चिट्ठइ जाता चउहं असज्झातो ।।

वृ- अत्र परश्चोदयति श्वा यदि पौद्गलं तैरश्च मांसं बहिः समुद्दिश्य तत्रागच्छेत् तर्हि यावत्स तत्र तिष्ठति तावत्तेनोदरगतेन पौद्गलेन स्वाध्यायः कस्मान्न भवति । सूरिराह-

[भा.३१३८]　　　　भणति जइ ते एवं सज्झातो एव तो उ नत्थि तुहं ।
असज्झाइयस्स जेणं पुनोसि तुमं सया कालं ।।

वृ- भण्यते-अत्रोत्तरं दीयते,-यदि ते एवं पूर्वोक्तप्रकारेण मतिस्ततः तव स्वाध्यायः कदाचनादपि नास्त्येव एवकारो भिन्नक्रमः । स च यथास्थानं योजितः कस्मान्नस्वाध्यायः कदाचनापीत्यत आह-येन कारणेन सदाकालं सर्वकालं त्वमस्वाध्यायिकस्य पूर्णः शरीरस्य रुधिरादिचतुष्टयात्मकत्वात् ।

[भा.३१३९]　　　　जइ फुसति तहिं तुंडं जइ वलेच्छरिएण संचिक्खे ।
इहरा न होति चोवगबंतं परिनयं जम्हा ।।

वृ- यदिश्वा खरण्टेन मुखेन तत्रागत्यात्मीयं तुण्डं कापि स्पृशति, यदि वा खरण्टितेनैव मुखेन संतिष्ठति । तदा भवत्यस्वाध्याय इतरथा यदि पुनर्बहिरेव मुखं लीढ्वा समागच्छति तदा न भवति, । तथा यद्यप्यागन्तुं वमति तथापि चोदक ! नास्त्यस्वाध्यायिकं, यस्मात्तद्वान्तं परिणतमेवं मार्जारादिकमप्यविकृ(लं)त्य भावनीयं । गतं तैरश्चमधुना मानुषमाह-

[भा.३१४०]　　　　माणुस्सगं चउद्धा अट्ठिं मुत्तूण सयमहोरत्तं ।
परियावण विवणा सेसेइग सत्त अट्ठेव ।।

वृ- मानुषमानुषमस्वाध्यायिकं चतुर्धा ।तद्यथा-चर्मरुधिरं मांसमस्थि तत्र एतेष्वस्थि मुक्त्वा शेषेषु सत्सु क्षेत्रतो हस्तशताभ्यंतरे न कल्पते स्वाध्यायः कालतोऽहोरात्रं, परियावण विवणत्ति-मानुषं तैरश्चंवा यद् रुधिरं तत् यदि पर्यापन्नत्वेन स्वभाववर्णाद् विवर्णीभूतं भवति, खदिरसारसमाससारादिकल्पं तदा तदस्वाध्यायिकं न भवतीति क्रियते तस्मिन् पतितेऽपि स्वाध्यायः, । सेसत्ति पर्यापन्नं विवर्णं मुक्त्वा शेषमस्वाध्यायिकं भवति, । तिगत्ति यत् अविरताया मासे मासे आर्तवमस्वाध्यायिकमागच्छति तत्स्वभावस्त्रीणि दिनानी गलति, ततस्तानि त्रीणि दिनानि यावदस्वाध्यायस्त्रयाणां दिवसानां परतोऽपि कस्याश्चित् गलति, परं तदार्तवं न भवति तन्महारक्तं नियमात्पर्यापन्नं विवर्णं भवतीति नास्वाध्यायिकं गण्यते । तथा यदि प्रसूताया दारको जातस्तदा सप्तदिनान्यस्वाध्यायिकमष्टमे च दिवसे कर्तव्यः । अथ दारिकी जाता तर्हि सा रक्तोत्कटेति तस्यां जातायामष्टौ दिनान्यस्वाध्यायो नवमे दिने स्वाध्यायः कल्पते ।

[भा.३१४१]　　　　रत्तुक्कडा इत्थीं अट्ठादिना तेन सुत्त सुक्कहिए ।
तिएहदिनानवरेणं अनाउयं तं महारत्तं ।।

वृ- निषेककाले यदि रक्तोत्कटता तदा स्त्री इति तस्यां जातायां दिनान्यष्टावस्वाध्यायः दारकः शुक्राधिकस्तेन तस्मिन् जाते सप्तदिनानि अस्वाध्यायः । तथा स्त्रीणां त्रयाणां दिनानां परतस्तन्महा-रक्तमनार्तवं भवति ततो न गणनीयं-

[भा.३१४२]　　　　दंते दिट्ठे विगिंचण सेसट्ठिगबारसेव वासाइं ।
झामित्ते वूढे सीयाण पाणमादीण रुद्द धरे ।।

वृ- यत्र हस्तशताभ्यन्तरे दारकादीनां दन्तः पतितो भवति तत्र निभालनीयं यदि दृश्यते तदा

परिष्ठाप्यः, । अथ सम्यग् मृग्यमाणैरपि न दृष्टस्तदा शुद्धमिति कल्पते स्वाध्यायः, । अन्ये तु ब्रुवते तस्यावहेडनार्थ कायोत्सर्गः करणीयः दन्तं मुक्त्वा शेषे अङ्गोपाङ्गादिसम्बन्धिन्यस्थीनि हस्तशताभ्यन्तरे पतिते द्वादशवर्षाणि न कल्पते स्वाध्यायः । अथ तत्स्थानमग्निकायेन ध्यामितं पानीयेन वा प्रव्यूढं तदा शुद्धमिति ध्यामिते प्रव्यूढे वा स्वाध्यायः कल्पते, । तथा सीआणत्ति श्मशाने यानि कलेवराणि न दग्धानि तानि अस्वाध्यायिकानि न भवति यानि पुनस्तत्रानाथकलेवराणि न दग्धानि निखातीकृतानि वा तानि द्वादशवर्षाणिस्वाध्यायं धनन्ति । यद्यपि च नाम श्मशानं वर्षोदकेन प्रव्यूढं तथापि तत्र न कल्पते स्वाध्यायो मानुषास्थि बहुलत्वात् । पाणमादीणत्ति पाणानामाडम्बरो नामयक्षो हिरनिक्का (डिक्का) परनामा दैवतं तस्यायतनस्याधस्तात् मानुषान्यस्थीनि निक्षिप्यन्ते, ततस्तत्र तथा मातृगृहे चामुण्डायतने रुद्रगृहे वाधस्तात् मानुषं कपालं निक्षिप्यते । ततस्तयोरपि द्वादशवर्षाण्यस्वाध्यायः ।

**[भा.३१४३]** सीयाणे जं दड्ढं न तं त मुत्तूणणाह निहायाइं ।
आडंबरे यरुद्देमादिसु हेठठियाबारा ॥

**वृ-** श्मशाने यत् दग्धमस्थिजातं तदस्वाध्यायिकं न भवति, तन्मुक्त्वा शेषाणि न दग्धानि निखातानि वा तानि द्वादशवर्षाणि स्वाध्यायं धनन्ति । तथा आडम्बरे आडम्बरयक्षायतने रुद्रे रुद्रायतने मातृषु मातृगृहेषु आडम्बरादीनामधस्तादस्थीनि सन्ति तेन कारणेन तत्र द्वादशवर्षाण्यस्वाध्यायः ।

**[भा.३१४४]** असिवोमाधयणेसु बारसअवसोहितंमि न करेंति ।
झामियवूढे कीरइ आवासियसोहिते चेव ॥

**वृ-** यत्र ग्रामे समुत्पन्नेनाशिवेन भूयान् जनः कालगतो न च निष्काशितो यदि वा अवमौदर्येण प्रभूतो जनो मृतो न च निष्काशितो अथवा आघातस्थानेषु भूयान् जनो मारयित्वा निक्षिप्तो वर्तते । तत एतेष्वशिवावमौदर्याघातस्थानेषु पूर्वं विशोधनं क्रियते, । विशोधने च क्रियमाणे यत् दृष्टं तत्परित्यज्यते । अदृष्टविषये च देवतायाः कायोत्सर्गं कृत्वा पठन्ति । अथ न क्रियते विशोधनं ततस्तस्मिन्नविशोधिते द्वादशवर्षाणि यावत् स्वाध्यायं न कुर्वन्ति, । अथ तदशिवादिस्थानमग्निकायेन ध्यामितं वर्षोदकेन वा प्लावितं तदा क्रियते तत्र स्वाध्यायः आवासिय सोहिए चेयत्ति श्मशानं यदि भूयो जनैरावासितं तस्मिन्नावासिते शोधनं क्रियते तत् दृश्यते तत् विविच्यते । एवं शोधिते तस्मिन् अदृष्टास्थ्युपघाताय देवतायाः कायोत्सर्गं कृत्वा स्वाध्यायं प्रस्थापयन्ति ।

**[भा.३१४५]** उहरगाममयंमी न करेंती जाननीणियं होति ।
पुरगामे च महंते वाडवसाहिं परिहरंति ॥

**वृ-** उहरके क्षुल्लक ग्रामे कोऽपि मृतस्तस्मिन् मृते तावत्स्वाध्यायो न क्रियते यावत्तत्कलेवरं न निष्काशितं भवति, । पुरे पत्तने महति वा ग्रामे वाटके साहौ वा यदि मृतो भवति तदा तं वाटकं साहिं वा परिहरन्ति । किमुक्तं भवति । तत्र न कुर्वन्ति स्वाध्यायं यावत्ततः वाटकात् साहितो वा न निष्काशितं भवति वाटकात् साहीतो अन्यत्र मृते ना स्वाध्यायः ।

**[भा.३१४६]** जति उ उवस्सय पुरतो नीइज्जइ तंमहल्लयं ताहे ।
हत्थसयं तो जावउ तावउ न करेंति सज्झायं ॥

**वृ-** यदि तत्कलेवरं मृतकं नीयमानं यदि संयतानामुपाश्रयस्य पुरतो हस्तशताभ्यन्तरेण नीयते, ततो यावत् हस्तशतांतो हस्तशतं व्यतिक्रम्यते तावन्न कुर्वन्ति स्वाध्यायं हस्तशतं व्युत्क्रान्ते पठन्ति ।

[भा.३१४७] कोवी तत्थ भणेज्जा पुप्फादी जाउ तत्थ परिसाडी ।
जा दीसंति ताव उ न कीरए तत्थ सज्झातो ।।

वृ- कोऽपि तत्र ब्रूयात् या मृतके नीयमाने पुष्पादीनामादिशब्दात् जीर्णचीवरखण्डादीनामुपाश्रयस्य पुरतो हस्तशताभ्यन्तरे परिशाटिः सा यावत दृश्यते तावत्तत्र न क्रियते स्वाध्यायः । अत्र सूरिराह-

[भा.३१४८] भन्नइ न य तंतु तहिं निज्जंतो मोत्तु हो असज्झायं ।
जम्हा चउप्पयारं सारीरमतो न वज्जति ।।

वृ- भण्यते- अत्रोत्तरं दीयते तत्र नीयमानं मृतकमुक्त्वा अन्यत् कतकपुष्पादिकं पतितमस्वाध्यायिकं न भवति । यस्मात् शरीरमस्वाध्यायिकं चतुः प्रकारं रुधिरादिभेदतश्चतुर्विधं पुष्पादिकं च तद्व्यतिरिक्तमतोऽस्वाध्यायिकतया तन्न वर्जयन्ति । आत्मसमुत्थं त्वग्रेतनसूत्रे व्याख्यास्यते । तदेवं नो कप्पइ निग्गंथाण वा २ असज्झाइए सज्झायं करेत्तए इति सूत्रं व्याख्यातमधुना कप्पइ निग्गंथाण वा निग्गंथीण वा सज्झाइए सज्झायं करेत्तए इति सूत्रव्याख्यानार्थमाह-

[भा.३१४९] एसो उ असज्झातो तव्वज्जित्तो झायो तत्थिमा जयणा ।
सज्झाइए विकालं कुणइ अप्पहिं तु चउलहुगा ।।

वृ- एषोऽनन्तरोदित आत्मसमुत्थपरसमुत्थभेदाभिन्नो अस्वाध्याय उक्तस्तद्विवर्जितस्तद्व्यतिरिक्तः स्वाध्यायः स्वाध्यायिकमित्यर्थः । तत्र स्वाध्यायिक इयं वक्ष्यमाणयतना तामेवाह-स्वाध्यायिकेऽपि सति कालं प्रत्युपेक्ष्य स्वाध्यायं करोति यदि पुनः कालमप्रत्युपेक्ष्य स्वाध्यायं करोति तदा तस्य प्रायश्चित्तं चत्वारो लघुकाः । अत्र परावकाशमाङ्कते-

[भा.३१५०] जइ नत्थि असज्झायं किं निमित्तं तु घेप्पए कालो ।
तस्सेव जाणणठा भणइ किं अत्थि नत्थित्ति ।।

वृ- ननु यदि नास्त्यस्वाध्यायमस्वाध्यायिकं तर्हि कं निमित्तं केन कारणेन कालो गृह्यते । सूरिराह-भण्यते तस्यैवास्वाध्यायिकस्य परिज्ञानार्थं कालो गृह्यते यथा किमस्ति तद स्वाध्यायिकं किं वा नेति । यद्यस्वाध्यायिकं भविष्यति ततः कालो न शुद्धमासादयिष्यति अथ नास्ति ततः कालो शुद्धो भविष्यति ।

[भा.३१५१] पंचविह असज्झाइस्स जाणणठाए पेहए कालं ।
काए विहीए पेहे सामायारी इमा तत्थ ।।

वृ- यतो अस्वाध्यायस्यैव परिज्ञानाय कालग्रहणमुक्तं तीर्थकरगणधरैस्ततः पञ्चविधस्या-स्वाध्यायिकस्य ज्ञानायावश्यं प्रेक्षते साधुः कालं, । शिष्य प्राह-केन विधिना प्रेक्षते कालः । सूरिराह-तत्र कालप्रेक्षणे इयं वक्ष्यमाणा सामाचारी तामेवाह-

[भा.३१५२] चउभागवसेसाए चरिमाए पोरसीए ।
उभतो तत्तो पेहेज्जा, उच्चारादीन भूमीतो ।।

वृ- दिवसस्य चतुर्थी पौरुषी चरम पौरुषी तस्यां चरमायां पौरुष्यां चतुर्भागावशेषायां तिस्र उच्चारादीनां उच्चार प्रश्रवण कालादीनां भूमी प्रत्युपेक्षेत । इयमत्र भावना- उपाश्रयपरिधिस्तस्यान्तस्तिस्रो भूमीरुच्चारस्या-ध्यासितव्याः प्रत्युपेक्षते तद्यथा आसन्ने दूरे मध्ये च तिस्रोऽनध्यासितव्यास्ता अध्येवमेवमेताः परिधस्थान्तः । षट् एवमेव परिधाद्बहिरपि षट् तद्यथा- आसन्नदूरमध्य भेदतस्तिस्रोऽनध्यासित-व्यास्तिस्रोऽनध्यासितव्या इति सर्व संकलनया उच्चार भूमयो द्वादश एवमेव प्रश्रवणस्य

द्वादशभूयस्तिस्रो भूमयः कालस्य तद्यथा-आसन्ने दूरे मध्ये एताश्चोपाश्रयपरिधस्यान्तर्वेदितव्याः । सर्वसंख्यया चतुर्विंशतिभूमीः प्रत्युपेक्षते । एतदेवाह-

[भा.३१५३] अहियासिया य अंतो आसन्ने चेव दूरे मज्झे य ।
तिन्नेव अनहियासी अंतो छ छच्च बाहिरतो ।।

[भा.३१५४] एमेवय पासवणा बारस चउवीसतिं तु पेहित्ता ।
कालस्स य तिण्णि भवे अह सूरो अत्थमुवयाति ।।

वृ- अध्यास्या अध्यासनीया उपाश्रयपरिधस्यान्तस्तिस्रो भूमयस्तद्यथा-आसन्ने दुरमध्ये च एवमेव तिस्रो मध्येऽनध्यास्या अध्यासितुमशक्याः सर्वसंख्याया अन्तरुच्चारस्य भुमयः षट् एवमेव षट् परिधाद्बहिरपि सर्वसंकलनया द्वादशोच्चारभूमय एव प्रश्रवणेऽपि द्वादशभूमयः सर्वमीलने चतुर्विंशतिं भूमीः प्रत्युपेक्षते । तदनन्तरं कालस्य तिस्रो भूमयः जघन्येन हस्तान्तरिताः प्रत्युपेक्ष्य भवन्ति । तासु च प्रत्युपेक्षितास्तथानन्तरं सूर्योऽस्तुमुपयाति ।

[भा.३१५५] जइ पुन निव्वाघातो आवस्संतो करेंति सव्वेवि ।
सड्ढादिकहणवाधाय याए पच्छा गुरु ठंति ।।

वृ- सूर्यास्तमयसमये यदि निर्व्याघातं व्याघातस्याभावो गाथायां पुंस्त्वं प्राकृतत्वात् । ततः सर्वेऽपि गुरुप्रभृतय आवश्यकं प्रतिक्रमणं कुर्वन्ति । अथ श्राद्धानां श्रावकाणामादिशब्दादश्राद्धानां वा धर्मो गुरुणां कथयितव्योऽस्ति । ततः श्राद्धादीनां धर्मकथनेन व्याघातनायामावश्यक व्याघाते सति पश्चाद्गुरवो निषद्याधरसहिता आवश्यकं तिष्ठन्ते । इयमत्र भावना-श्राद्धादीनां धर्मः कथयितव्यो भवति । तत आचार्यो धर्मं कथयति । निषद्याधरश्च पार्श्वे तिष्ठति । शेषाः पुनरावश्यकभूमौ सूत्रार्थस्मरण निमित्तमाचार्यमापृच्छय आत्मीये स्थाने पश्चादागच्छतामवकाशप्रथमरुद्धाबलं वीर्यं चागूहयन्तो यथाशक्ति चारित्रिकायोत्सर्गेण तिष्ठन्ति, । स्थित्वा च सूत्रार्थान् तावदनुप्रेक्षन्ते, यावदचार्यः कायोत्सर्गेण स्थितो भवति, । तस्मिन् स्थिते दैवसिकमतीचारं चिन्तयन्ति । एतदेवाह-

[भा.३१५६] सेसाउजहासत्ति आपुच्छित्ताणठंति सट्ठाणे ।
सुत्तत्थज्झरणहेउं आयरियठियंमि देवसियं ।।

वृ- गुरुणा श्राद्धादीनां पुरतो धर्मकथने प्रारब्धे शेषाः साधवो गुरुमापृच्छ्य सूत्रार्थस्मरणहेतोः स्वसमिन् स्वस्मिन् स्थाने यथाशक्ति कायोत्सर्गेण स्थिता भवन्ति । आचार्ये कायोत्सर्गेण स्थिते दैवसिकमतीचारं चिन्तयन्ति । अत्रैवापवादमाह-

[भा.३१५७] जो होज्ज उ असमत्थो बालो वुड्ढोव रोगितो वावि ।
सो आवस्सगजुत्तो अत्थेज्जा निजरापेही ।।

वृ- यो बालो वृद्धो रोगितो वा सञ्जातरोगः कायोत्सर्गेण स्थातुमसमर्थः स निर्जरापेक्षी आवश्यकयुक्तोऽवश्यकर्तव्यव्यापारयुक्त उपविष्टस्तिष्ठेत् ।

[भा.३१५८] आवस्सयं काऊणं जिनोवइट्ठं गुरुवएसेण ।
तिन्नि थुतिपडिलेहा कालस्स विही इमो तत्थ ।।

वृ- आवश्यकं जिनोपदिष्टं गुरुपदेशेन कृत्वा पर्यन्ते तिस्रः स्तुतयः प्रवर्धमान वक्तव्याः । तद्यथा - प्रथमा एकश्लोकिका, द्वितीया द्विश्लोकिका, तृतीया त्रिश्लोकिका तदनन्तरं कालस्य प्रत्युपेक्षा कर्तव्या ।

तस्यां च कालप्रत्युपेक्षणायामयं वक्ष्यमाणो विधिस्तमेवाह-

[भा.३१५९] दुविहो य होइ कालो वाघाइमएयरो नायव्वो ।
वाघातो घंघसालाए घट्टणे धम्मकहणं वा ।।

वृ- इहकालो द्विविधो भवति, [illegible] । व्याघातेन निर्वृत्तो व्याघाति भावादिमइतीम प्रत्ययः । इतरो निर्व्याघातः । तत्र व्याघातो नाम घंघशालायां घट्टनं धर्मकथनं तत्राव्यतिरिक्ता बहुकार्पटिका सेविता वसतिर्घंघशाला तस्यां । इयमत्र भावना-घंघशालास्थिता साधुनामतिदूरमागच्छतोर्वाकालप्रत्युपेक्षकयोः स्खलनं पतनं वा भवति । अथवा कृते आवश्यके गुरुः श्राद्धादीनामग्रतो धर्मः कथयितव्यो वर्तते । ततो निवेदने व्याघातः एवं रूपेण घट्टनलक्षणेन व्याघाते निर्वृत्तो व्याघात इतरो निर्व्याघातस्तत्र निर्व्याघाते द्वौ जनौ कालप्रत्युपेक्षकौ प्रवर्तेते तौ काल प्रत्युपेक्ष्याचार्यस्य निवेदयतः, । व्याघातिमेतु काले उपाध्यायस्तृतीयः काले प्रत्युपेक्षया दीयते, येन तौ तस्यैव पुरतः कालं निवेदयतः । एवं ते द्वौ त्रयो वा जना आचार्य मस्तकेन वन्दामहे इत्यनेन वचनेनाभिमुखीकृत्य पृच्छन्ति-सन्दिशत कालप्रत्युपेक्षका वयं व्रजाम इति एवमापृच्छय निर्व्याघाते गुरुणामितरथोपाध्यायस्य वन्दनकं दत्वा प्रादोषिकं कालं गृह्णीम इत्यापृच्छय द्वयोर्व्रजतोर्यदि दीपद्यो[ज्यो]तिषास्पर्शनं भवति श्रुतं वा श्रवणपथमागतं तदा कालवधो भवतीति अथ न सन्त्येतानि तदा कालभूमिं व्रजतः एतदेव सविस्तरं प्रतिविवादयिषुरिदमाह-

[भा.३१६०] वाघाते ततिओ सिं दिज्जइ तस्सेव ते निवेदंति ।
इहरा पुच्छंति दुवे, जोगं कालस्स घेच्छामो ।।

वृ- व्याघाते घट्टशालायां घट्टनरूपे धर्मकथनरूपे वा तृतीयस्तयोः कालप्रत्युपेक्षकयोरुपाध्यायो दीयते, ततस्तौ तस्यैव पुरतो निवेदयतः सर्वं सन्देशापनादिकालानुष्ठानं तस्याग्रे कुरुत इत्यर्थः, । इतरथा व्याघाताऽभावे द्वौ कालप्रत्युपेक्षकौ गुरुमापृच्छय तौ यथायोगं व्यापारं कालस्यकरिष्याव इति ।

[भा.३१६१] किंतिकम्मे आपुच्छण आवासियखलिय पडियवाघाए ।
इंदियदिसायतारा वासमसज्झाइयं चेव ।।

वृ- यदि निर्व्याघातं भवति, ततो गुरूणां कृतिकर्मवन्दनकं दातव्यमितरथा उपाध्यायस्य, ततः कृतकर्मणि प्रदत्ते कालग्रहणास्यापृच्छनं कर्तव्यम् । यथा प्रादोषिकं कालं गृह्णीमस्तत्र यद्यना- पृच्छ्यावश्यकी न करोति, भूमिं वा न प्रमार्जयति । अपान्तराले गच्छन् स्खलितः पतितो वा वस्त्रादि वा क्वापि विलगति तदा कालस्य व्याघातः । अथवेन्द्रियार्थाः प्रतिकूलाः समापतिता दिशो वा विपरीताः प्रतिभान्तिस्म तारा वा पतन्ति, वर्षं वा अकाले निपतति, । अन्यद्वा अस्वाध्यायिकमुपजातं तदा कालवधः ।

[भा.३१६२] किंतिकम्मं कुणमाणो, आवत्तगमादीयं ।
तहिं वितहं गुरु पडिच्छती तत्थ कालवहो ।।

वृ- कृतिकर्म वन्दनकं कुर्वन् यद्यावर्तादिकं तत्र वितथं करोति, गुरुर्वा तत्र वन्दनके वितथं प्रतीच्छति तदा कालवधः ।

[भा.३१६३] एवं आवासा सज्जमादि वितहं खलियपडिए य ।
निंताण छीयजोई वहोऽत्ता ताहे नियत्तंति ।।

वृ- एवमावश्यिकीमशय्यां आदिशब्दादन्यामपि भूमिप्रत्युपेक्षणादिकां वितथां क्रियां कुर्वन्ति, तथास्खलिते पतिते च तथा यदि निर्गच्छतो क्षुतं भवति प्रदीपज्योतिर्वा भवेत्तदा व्याघात इति तौ निवर्तेते ।

[भा.३१६४] अह पुन निव्वाघायं ताहे वच्चंति कालभूमिं तु ।
जइ तत्थ गोणमादी संसप्पापततो एंति ।।

वृ- अथ पुनर्निर्व्याघातं यथोक्तरुपस्यैकस्यापि व्याघातस्याभावस्तदा कालभूमिं व्रजतः, । यदि तत्र कालभूमौ गोणमादीति गवादय आदि शब्दात् श्वादि परिग्रहः । संसर्पा बहवः कीटका येल्लुकप्रभृतयो-ऽत्रादि शब्दान्मार्जारादि परिग्रहः पतत आगच्छन्ति तत्र (न) कालग्रहणं कुर्वन्ति कालस्य व्याहननात् ।

[भा.३१६५] एमादि दोसरहिते संडासादी पमज्जिउ निविट्ठो ।
अच्छंति निलिच्छंतो दोदो दिसो दु अग्गादि (वि) ।।

वृ- एवमादिभिरनन्तरोक्तैर्दोषैरहिते कालग्रहणयोग्यप्रदेशे सण्डासादि प्रमार्ज्य कालग्रहणवेलां प्रतीक्ष्यमाणो निविष्टस्तिष्ठति । इतरोऽपि दण्डधारी युगमात्रान्तरितस्तिष्ठति तौ चैवं द्वावपि तिष्ठतो द्वे द्वे दिशौ निरीक्षमाणौ । पुनः कथंभूतावित्याह-

[भा.३१६६] सज्झायमचिंतंता कविहसिए विज्जुगज्जिउक्काए ।
कनगम्मिय कालवहो दिठे अदिठे इमा मेरा ।।

वृ- प्रत्येकं द्वे द्वे दिशौ निरीक्षमाणावुपयुक्तौ स्वाध्यायमचिन्तयन्तावननुप्रेक्षमाणौ तिष्ठतः, यदि स्वाध्यायमनुप्रेक्षेते तदा कालवधः । दिशो निरीक्ष्यमाणौ च यदि कपिहसितं श्रृणुतः । कपिहसितं नाम नभसि विकृतिरुपस्य वानर सद्दश मुखस्य अट्टहासः । विद्युतं वा पश्यतो गर्जितं वा समाकर्णयन्तः उल्का वा निरीक्षेते तदा कालवधः । कनकेऽपि च वक्ष्यमाणसंख्याके निपतिते कालवधः । एवं तावत् दृष्टेऽदृष्टे पुनरियं वक्ष्यमाणमर्यादासमाचारो तामेवाह-

[भा.३१६७] कालो सज्झाय तहादोवि समप्पंति जह समं चेव ।
तह तं तुलंति कालं चरमदिसं वा असज्झायं ।।

वृ- तथा कथं च नापि तं कालं तुलयतः कालग्रहणवेलां कलयतो यथाकालस्तथा सन्ध्यावद्वावप्येतौ यथा समकं समाप्नुतः समाप्तिं यातः । काले समाप्ति यथा संध्यादिविगमो भवतीति भावः, । यदि वा यथा कालसमाप्तौ चरमां पश्चिमां दिशं ससन्ध्याका पश्यतस्तथा तुलयतश्चरमायां दिशि पश्चात्सन्ध्या विगमो भवतीति प्रकारान्तरोपदर्शनम् ।

[भा.३१६८] नाऊण कालवेलं ताहे उठेउ दंडधारीउ ।
गंतूण निवेदेती बहुवेला अप्पसद्दत्ति ।।

वृ- उक्तप्रकारेण कालग्रहणवेलां तुलयित्वा ज्ञात्वा च कालवेलां किमुक्तं भवति । स्तोकावशेषसन्ध्यात इत इदानीं कालग्रहणसमयइति परिज्ञाय तदनन्तरं दण्डधारी साधुजननिवेदनार्थमुत्तिष्ठति, उत्थाय ततः कालग्रहणस्थानान् दण्डधारी प्रतिश्रयमागच्छति, । तस्य वा गच्छत इयं सामाचारी यदि समागच्छन् नैषेधिकी न करोति कालवधः, । अथ नमो खमासमणाणमिति न ब्रूते, तदापि कालवधः, । एवं गत्वा सनिवेदयति यथा कालस्य बहुवेला वर्त्तते, तस्मात् यूयमल्पशद्वा भवथइति ।

[भा.३१६९] ताहे उवउत्तेहिं अप्पसद्देहिं तत्थ होयव्वं ।
जइ न सुयत्थकेहिं विदिठंतो गंडएणतहिं ।।

वृ- एवं दंडधारिणा निवेदने कृते तत्र कालग्रहणवेलायां सर्वैरप्युपयुक्तैरल्पशब्दैर्भवितव्यं, यदि पुनर्
तथा दण्डधारिणा निवेदने कृतेऽपि कैश्चिदपि श्रुतं न भवेत्तत्र दृष्टान्तो गण्डकेन वक्तव्यस्तमेवाह-

[भा.३१७०] जह गंडगमुग्घुट्टे बहूहिं असुयंमि गंडए दंडो ।
अह थोवेहिं न सुयंति वयति तेसिं ततो दंडो ।

वृ- यथा ब्राह्मणाः किमपि भक्तुकामाः वा पर्यालोचयितुकामा वा चतुर्वेदसमवायनिमित्तं गण्ड
पूर्वस्थापितं संदिशन्ति, । यथा चातुर्वेदसमवायो दूरेण कुरुते, अथ तेन गण्डकेनोद्घुष्टे यदि बहुभिर्न श्रु
तदा गण्डके दण्डो गण्डकस्य दण्डः क्रियते, । अथ स्तोकैर्न श्रुतं च बहुभिस्तु श्रुतमिति तदा यैर्न श्रु
तेषां दण्डो निपतति । एष दृष्टान्तोऽयमर्थोपनयः ।

[भा.३१७१] एविहवि दठव्वं दंडधरे होति दंडो तेसिं च ।
आवेदेउं गच्छइ तमेव ठाणं तु दंडधरो ।।

वृ- एवमुक्तेन प्रकारेण इहापि द्रष्टव्यं यदि बहुभिर्नश्रुतं तदा दण्डधरस्य दण्डो भवति, । अथ बहुभि
श्रुतं कतिपयैर्नाश्रावि, तदा तेषां कतिपयानाम श्रुतवतां दण्डः । एवं दण्डधरः साधूनामावेद्य तदेवस्थान
मात्मीयं गच्छति ।

[भा.३१७२] ताहे कालग्गाही उट्ठेति गुणेहिमेहिं जुत्तो उ ।
पियधम्मो दढधम्मो संविग्गो वज्जभीरु य ।।

वृ- ततो दण्डधरस्यस्वस्थानागमनादनन्तरं कालग्राही । एभिर्वक्ष्यमाणैर्गुणैर्युक्तः कालग्रहणा-
योत्तिष्ठति, कैर्गुणैर्युक्त इत्याहप्रियो धर्मो यस्यासौ प्रियधर्मा न दृढधर्मः २, एकः
प्रियधर्मापि दृढधर्मापि च ३, एको न प्रियधर्मो नापि दृढधर्मः ४ । अत्र पदद्वयोपादानात्तृतीयभङ्गग्रहणं
संविग्नः सम्यग् अनुष्ठाता कस्मात् संविग्न इत्याह-वज्जभीरु अवद्यं पापं तस्माद्भीरुः अवद्यभीरुरथ
प्रथमाहेतौ निमित्तकरणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शनमिति वचनात्ततोऽयमर्थो
यदवद्यभीरुस्ततः संविग्नत्वं करोति ।

[भा.३१७३] खेयन्नो य अभीरू एरिसओ सो उ कालगाहीउ ।
उठेइ गुरुसगासं ताहे विनएन सो एइ ।।

वृ- खेदज्ञः कालविधेः सम्यक् ज्ञाता अभीरुर्मार्जारादेर्न बिभेति, अन्यथा उत्त्रस्तस्य छलना स्यात् ।
एतादृशः स कालग्राही तत उत्थाय गुरुसकाशं स्थापनागुरोः समीपं विनयेनागच्छति । कथमित्याह-

[भा.३१७४] तिनिय निसीहियातो नमनुस्सेहो य पंचमंगलए ।
कितिकम्मं तह चेव य काउं कालं तु पडियरई ।।

वृ- स्थापनागुरुसमीपमागच्छन् आसन्नदूरे मध्ये च तिस्रः नैषेधिकीः करोति तदनन्तरं च प्रत्या-
सन्नागमनेन नमनं नमः क्षमाश्रमणेभ्य इति भणनं ततो हस्त शताभ्यन्तरे गमनेऽप्यैर्यापथिक्याः
प्रतिक्रमणं, तत्र कायोत्सर्गे स्मर्तव्यं पञ्चमङ्गलिकस्तस्मिन् स्मृते नमस्कारेण पारयित्वा
पञ्चमङ्गलिकस्याकर्षणं ततो मुखपोतिकां प्रत्युपेक्ष्य कृतिकर्मवन्दनकं द्वादशावर्तं कर्तव्यम् । तत्कृत्वा
तदनन्तरं कालं प्रादोषिकं प्रतिचरति, सन्दिशत प्रादोषिकं कालं गृह्णीम इत्युक्त्वा प्रतिगृह्णाति, यथा
प्रतिचरति तथा प्रतिपिपादयिषुरिदमाह-

[भा.३१७५] थोवावसेसियाए संज्झाए वा तिउत्तराहुत्तो ।

दंडधरो पुव्वमुहो वायइ दंडंतरा काउं ।।

**वृ-** स्तोका वा शेषायां सन्ध्यायां कालग्राहक उत्तराभिमुखस्तिष्ठति । दण्डधरः पुनः पूर्वाभिमुखस्तिष्ठति, दण्डमन्तरा अपान्तराले तिर्यक् कृत्वायतं कृत्वा ।

**[भा.३१७६]** गहणनिमित्तुस्सग्गं अट्ठुस्सासेय चिंतियस्सारे ।
चउवीसगदुमपुष्फिय पुव्वा एक्केक्किय दिसाए ।।

**वृ-** त्रीन् वारान् भूमिं रजोहरणेन प्रमार्ज्य ततश्चोत्तराभिमुखो द्वावपि पादौ स्थापयित्वा पञ्चभिरिन्द्रियैः षष्ठेन च मनसा सम्यगुपयुक्तः प्रादोषिककालग्रहणनिमित्तं उत्सर्गं कायोत्सर्गं करोति । स चैवं पादोसियकालस्स रोहणवत्तियाए ठामि काउस्सग्गं अन्नत्थउससिएणं जाव अरिहंताणं भगवंताणं नमोक्कारेणं न पारेमि तावकायं ठाणेणं मोणेणं झाणेणं अप्पाणं वोसिरामि । एवं कायोत्सर्गं कृत्वा तत्राष्टावुच्छ्वासान् चिन्तयति पञ्च नमस्कारं मनसानुप्रेक्षते इत्यर्थः, । ततो मनसैव नमस्कारेण पारयित्वा चतुर्विंशतिस्तवं द्रुमपुष्पिकं श्रामण्यपूर्विकाध्ययनं परिपूर्णं क्षुल्लिकाचारकथाध्ययनस्य त्वाद्यामेक गाथां मनसानुप्रेक्षते । एवं तावदुत्तरस्यां दिशि विधिरुक्तः । इत्थं च शेषायामप्येकैकस्यां दिशि द्रष्टव्यम् । तद्यथा-क्षुल्लिकाचारकथाद्यगाथानुप्रेक्षानन्तरं ततोऽपि परावृत्य पश्चिमाभिमुखं एतच्चिन्तयति । तदनन्तरं ततोऽपि परावृत्य पश्चिमाभिमुख एव चिन्तयति चतसृष्वपि च दिक्षु प्रत्येकं चिन्तयन् द्वे द्वे दिशौ निरीक्षते द्वे द्वे दिशौ दण्डधरः । तत्र यदीमानि भवेयुस्तदा कालवधः कानीत्यत आह-

**[भा.३१७७]** बिंदुयच्छी य परिनयभयरोमं चेव होइ कालवहो ।
भासंत मूढ संकिय इंदियविसए य अमणुण्णो ।।

**वृ-** यदि कालं गृह्णत उदकबिन्दुस्तस्य दण्डधरस्य चोपरि निपतेत् क्षुतं केनापि स्यात् भावो तस्यान्यथा परिणतः स्यात् यदिवाऽन्यतोऽनानुपूर्व्या दिशः, परिणतोऽथवा अध्ययनमनानुपूर्व्यानुप्रेक्षितुं परिणतः । यदि वा बिभीषिकादि दर्शनतोभयेन रोमाञ्चः संजातः । अथवा वाचा अध्ययनमन्यद्वाभाषते यदि वा दिशि अध्ययने वा मूढं शङ्कितं वा अध्ययनादिकं जातं । अन्यत्र वा दिशि अध्ययने वा संक्रान्तः इन्द्रियविषयो वा अमनोज्ञः संवृत्तो यद्वा दुर्गन्धो गन्ध आगच्छति विकृतं वा रूपं पश्यति, । विकृतं नामास्वाभाविकं चेडरूपं च विस्वरं रुदितिच्छिन्धि भिन्धि मारयेति वा शब्दान् शृणोति । उपलक्षणमेतत् । इष्टविषयेषु वा विरागमुपगच्छति, तदा कालवधः । एतस्या एव गाथाया व्याख्यानमाह-

**[भा.३१७८]** गिण्हंतस्स उ काले जइ बिंदू तत्थ कोइ निवएज्जा ।
छीयं व परिणतो वा भावो होज्जा से अन्नत्तो ।।

**[भा.३१७९]** भीतो विभासियाइ भासंतो वावि गेण्हइ न सुज्झे ।
मूढो व दिस ज्झयणे संकियं वावि उवघाओ ।।

**[भा.३१८०]** अन्नं वादिसज्झयणं संकतो होज्जणिट्ठ विसए वा ।
इट्ठेसु वा विरागं जई यच्छइ तोह तो कालो ।।

**[भा.३१८१]** जइ उत्तरं अपेहिय गिण्हइ सेसाउ ता हतो कालो ।
तीसु अदीसंतीसु वि तारासु भवे जहन्नेणं ।।

**वृ-** यदि उत्तरां दिशमपेक्ष्य शेषादिशः प्राथम्येन गृह्णाति किमुक्तं भवति यदि पूर्वमुत्तराभिमुखो न भवति, । किन्तु शेषदिगभिमुखस्तदाहतः कालस्तथा यदि जघन्यतस्तिसृषु तारास्वदृश्यमानासु कालं

गृह्णाति तदापि हतः कालः ।

[भा.३१८२] वासं च निवडइ जती अहव असज्झाइयं व निवेहेज्जा ।
एमादीहिं न सुज्झे, तव्विरहंमी भवेसुद्धो ।।

वृ- यदि वर्षं निपतति अथवा किंचिदस्वाध्यायिकं निपतेत् तदा एवमादिभिरादिशब्दात् यदि कायोत्सर्गेण तिष्ठन् भूमिं न प्रमार्जयति, । छिन्नं वा मार्जारादिनापान्तरालं दण्डधरो वा कालग्राहिणो दुर्व्यवस्थानस्थितो न युगान्तरमात्र इत्यादि परिग्रहः । कालो न शुद्धयति उपहन्यते काल इत्यर्थः । तद्विपरीते यथोक्तदोषाभावे भवति शुद्धः कालः ।

[भा.३१८३] गहियंमि कालम्मी दंडधरो अच्छती तहिं चेव ।
इयरो पुन आगच्छइ जयणाए पुव्व भणियाए ।।

वृ- गृहीते काले दण्डधरस्तत्रैव कालभूमौ तिष्ठति इतरः पुनः कालग्राही यतनया पूर्वभणितया आवश्यकीं कृत्वा सम्यगु पयुक्तो रजोहरणेन भूमिं प्रमार्जयन् गुरुसमीपागमने च नैषेधिकीं कुर्वन् इत्यादिकयागच्छति ।

[भा.३१८४] जो गच्छंतंमि विही आगच्छंतंमि होति सव्वेव ।
जं एत्थं नाणत्तं तमहं वुच्छं समासेणं ।।

वृ- यो गच्छति विधिरुक्त आगच्छत्यपि विधिः स एव भवति नवरमत्र यन्नानात्वं तदहं समासेन वक्ष्ये । प्रतिज्ञातमेव निर्वाहयति-

[भा.३१८५] अकरणे निसीहियादी आवडणादीय होति जोइक्खे ।
अपमज्जिय भीते छीए छिन्ने य कालवहो ।।

वृ- अकरणे नैषेधिक्यादेरादि शब्दात् आवश्यिक्या नमस्कारादेश्च परिग्रहः । यदि कालभूमेर्निर्गच्छन् आवश्यिकीं न करोति गुरुसमीपं गच्छन् नैषेधिकीं गुरुसमपिमागतो नमः क्षमाश्रमणेभ्य इति नमस्कारं वा यदि न करोति नाप्यैर्यापथिकीं प्रतिक्रामति नापि वन्दनकं ददाति तदा कालवध इति योगः, । तथा आपतनादौ आपतने प्रस्खलने च कालवधः । तथा जोइक्खो नाम दीपः । जोइक्खं तह छाइल्लयं च दीवं मुणेज्जाहि इति वा तज्योतिः स्पर्शने वा कालवधः अथाप्रमार्जित भूमेरप्रमार्जने तथा क्षुते छिन्ने व मार्जारादिनापान्तराले मार्गे कालवधः ।

[भा.३१८६] इरियावहिया हत्थंतरेवि मंगलनिवेयणा समयं ।
सव्वेहिं वि पठविए पच्छाकरणं अकरणं वा ।।

वृ- आगत्य हस्तशताभ्यन्तरात्यैर्यापथिक्या प्रतिक्रन्तव्यम् । मुखपोतिका प्रतिलेखनान्तरं वन्दनकं दातव्यं । ततः शुद्धकाल इतिमङ्गलनिवेदनं कर्तव्यम् । ततो मङ्गलनिवेदनान्तरं समकमेव सर्वैः स्वाध्याये प्रस्थापिते पश्चात्करणमकरणं वा कालदानस्य किमुक्तं भवति ? यः प्रस्थापनवेलायां नागतस्तस्य कालदानाकरणमितरेषां तु प्रस्थापनवेलागतानां कालदानकरणमिति एतदेवाह—

[भा.३१८७] सन्निहियाण वडारोपट्ठविए पमादिनो दए कालं ।
वाहिठिए पडियरइ पविसइ ताहे य दंडधरो ।।

वृ- स्वाध्याये प्रस्थापिते ये स्वाध्यायप्रस्थापनवेलायां प्रमादिनो नागतास्तेषां कालं न दद्यात्, शेषाणां तु दद्यात् । तथा चात्र मरुकज्ञातं विजृम्भते यः समवाये नागतस्तस्य वडारो भागो न दीयते, सन्निहितानां

तु दीयते, एवम त्रापि ये प्रस्थापना वेलायां नागतास्ते प्रमादेन तीर्थकराज्ञाभङ्गकारिण इति कालस्तेषां न दातव्यः शेषाणां तु दातव्य इति स्वाध्यायप्रस्थापनानन्तरं च कालग्राही अन्यो वा बहिः स्थितः काले प्रतिचरति ततो दण्डधरः स्वाध्यायप्रस्थापनार्थं मध्ये प्रविशति ।

[भा.३१८८] पठवित वंदिते ताहे पुच्छंति केन किं सुयं भंते ।
ते विय कहंति सव्वं जं जेन सुयं वा दिट्ठं वा ॥

वृ- दण्डधरेणा प्रस्थापिते स्वाध्याये गुरौ च वन्दिते कालग्रादिदण्डधरावन्ये वा पृच्छन्ति साधून् केन किं श्रुतं भदन्त तेऽपि साधवः कथयन्ति यत् येन दृष्टं वा श्रुतं वा ।

[भा.३१८९] एगस्स दोण्ह वा संकियंमि कीरइ न कीरए तिण्हं ।
सगणंमि संकिए परगणंमि गंतुं न पुच्छंति ॥

वृ- एकस्य द्वयोर्वा क्षुतादौ शङ्किते स्वाध्यायः क्रियते त्रयाणां शंकिते न क्रियते, बहूनां शङ्कास्पदतया तस्य परमार्थतो निश्चिलीभूतत्वात् । तथा स्वगणे शङ्किते परगणं गत्वा न पृच्छन्ति । यतो यत्रास्वाध्यायिक संभवस्तत्राशङ्का परगणस्यस्थानान्तरवर्तिनस्तत्रास्वाध्यायिका संभवान्न भवेदप्याशंकेति ।

[भा.३१९०] पादोसितो अभिहितो इयानि सामन्नतो उ वुच्छामि ।
कालचउक्कस्सवि ऊ उवघाय वि ही उ जो जस्स ॥

वृ- तदेव मुक्तप्रकारेण प्रादोषिककालोऽभिहितः । सम्प्रति कालचतुष्कस्यापि सामान्यत उपघातविधिं वक्ष्ये । विशेषतोऽपि यो यस्योपघातविधिस्तमपि । प्रतिज्ञातमेव निर्वाहयति ।

[भा.३१९१] इंदियमाउत्ताणं हणंति कणगा उ सत्त उक्कोसं ।
वासासुवि तिन्नि दिसा उउबद्धे तारगा तिन्नि ॥

वृ- सर्वैरपीन्द्रियैर्मनसा वा युक्तानामुपयुक्तानां कनका उत्कर्षतः सप्त कालं घ्नन्ति । किमुक्तं भवति ? ग्रीष्मकाले यत्रः कणकाः कालं घ्नन्ति । शिशिरेकाले पञ्चवर्षाकालेसप्त, उल्काकणकयोश्चायं विशेषः । स रेखा उल्का, रेखारहितः कनक इति । तथा वर्षासु तिस्त्रो दिशः प्रकाशयुक्ता यदि स्युस्तदा प्राभातिककाल शुद्धिरिति वा शेषः । इयमत्र भावना-वर्षाकाले उपरिच्छन्ने तिर्यग् दिक्ष्वच्छन्नासु मण्डपिकादौ काला गृह्यन्ते । तत्राद्येषु कालेषु यदि चतस्त्रोऽपि दिशः प्रकाशयुक्ता अनन्तरिता इति भावस्तदा शुद्धयति, तथा यद्युपरिनीचं तदा प्राभातिकं कालमुपविष्टोऽपि गृह्णाति । ऋतुबद्धे काले चतुर्ष्वपि कालेषु यदि चतस्त्रोऽपिदिशः प्रकाशयुक्तास्तदा शुद्धिरितरथा नेति । उउबद्धे तारगा तिन्नित्ति ऋतुबद्धे काले आद्येषु त्रिषु यदि तिंस्त्रस्तारका दृश्यन्ते तदा कालो गृह्यते । अदृष्टासु न कालो गृह्यते, कालग्रहणानन्तरं तु यद्यपि न दृश्यन्ते तारकास्तथापि पठंति प्राभातिके पुनः काले अदृष्टेऽपि तारके ग्रहणमनुज्ञातं वर्षाकाले चत्वारोऽपि काला अदृश्यमानास्वपि तारकासु गृह्यन्ते ।

[भा.३१९२] कणगा हणंति कालं ति पंच सत्तेव घिंसि सिरवासो ।
उक्का उ सरेहागा रेहारहितो भवे कनगो ॥

[भा.३१९३] वासासुं पाभाइए तिन्नि दिसा जइ पगासजुत्तातो ।
सेसेसु तिसु वि चउरो उउंमि चउरो चउदिसंपि ॥

[भा.३१९४] तिसु तिन्नि तारगातो उउंमि पाभाइए अदिठेवि ।

वासासु अतारणाउ चउरो छण्णे निविठोवि ।।

वृ- इदं गाथा त्रयमपि व्याख्यातार्थत्वात्सुप्रतीतं । छन्ने निविठो वीत्युक्तमतस्तदेव सविशेषं भावति-

[भा.३११५] ठाणे सति बिंदुसुवगेण्हइ चिट्ठोवि पच्छिमं कालं ।
पडियरति वावि एक्को एक्को अंतट्ठितो गेण्हे ।।

वृ- वर्षाकाले तथाविधस्यान्यस्य स्थानस्यासति अभावे बिन्दुस्वपि निपतत्सुउपर्यति नीचतया ऊर्ध्वस्थानासंभवे उपविष्टोऽपि पश्चिमं प्राभातिकं कालं गृह्णाति तथा स्थाना सति एको दण्डधरो बहिः स्थितः कालं प्रतिचरति एकः पुनरन्तः स्थितः कालं गृह्णाति एष वर्षासु प्राभातिके काले विशेषो नाद्येषु त्रिषु कालेषु, ।अथ कतरे चत्वारः काला उच्यन्ते । प्रथमः प्रादोषिको, द्वितीयोऽर्धरात्रस्फिटितः तृतीयो वैरात्रिकश्चतुर्थः प्राभातिकः, । अथ कः कालः प्रथमतः कस्यां दिशि गृह्यते । तत आह—

[भा.३११६] पातोसि अड्ढरत्ते उत्तरदिसि पुव्वपेहए कालं ।
वेरत्तियंमि भयणा पुव्वदिसा पच्छिमे काले ।।

वृ- प्रादोषिकमर्धरात्रमर्धरात्रस्फिटितं च पूर्वं प्रत्युपेक्षते गृह्णाति उत्तरस्यां दिशि, वैरात्रिके भजना विकल्पना उत्तरस्यां दिशि पूर्वं प्रत्युपेक्षते पूर्वस्यां [illegible] [illegible] प्रत्युपेक्षणं पूर्वस्यांदिशि, अथ कियन्तः काला जघन्यत कियन्त उत्कर्षतः साधूनां ग्राह्यास्तत आह-

[भा.३११७] काल चउक्कं उक्कोसएण जहन्नेन तिगं तु बोधव्वं ।
बेइयपयंमि दुगंतूमाइट्ठाणे विमुक्काणं ।।

वृ- मातृस्थानेन विमुक्तानामशठानां साधूनामुत्कर्षेण कालचतुष्कं ग्राह्यं भवति, जघन्येन त्रिकं कालत्रिकं ग्राह्यं बोद्धव्यं द्वितीयपदे अपवादपदे द्विकं कालद्विकं तु शब्दादेकोऽपि कालो वोद्धव्यः । कथमुत्कर्षतः कालचतुष्कमत आह-

[भा.३११८] पातोसिएण सव्वे पढमं पोरिसि करेंति सज्झायं ।
ताहे उ सुत्तइत्ता सुवंति जग्गंति वसभाउ ।।

वृ- प्रादोषिकेन कालेन सर्वे साधवः प्रथमपौरुषीं यावत्कालिकं स्वाध्यायं कुर्वन्ति, ततो द्वितीये यामे सूत्रवन्तः साधवस्तेस्वपन्ति, वृषभा जाग्रति । ते च जाग्रतस्तेनैव कालेन प्रज्ञापनादिकं परावर्तयन्ति, तावत् यावत् कालवेला भवति । ततः कालवेलायां कालस्य प्रतिक्रम्य ।

[भा.३११९] फिडियंमि अद्धरत्ते काले घेत्तुं सुवंति जागरिया ।
ताहे गुरुगणंती चउत्थे सव्वे गुरु सुवती ।।

वृ- स्फिटिते अर्धरात्रं कालं गृह्णन्ति कालं गृहीत्वा ते आचार्यमुत्थापयन्ति ततस्ते जागरिताः स्वपन्ति ततो गुरव उत्थिताः सन्त उद्घाटकालिकं प्रज्ञापनादि गुणयन्ति । ततश्चतुर्थ्यां पौरुष्यामेव गाढायां वैरात्रिकं कालं गृहीत्वा सर्वेऽपि कालिकं श्रुतं परावर्तयन्ति गुरुः स्वपिति, ततो बालवृद्धादीनां वाचनोपग्रहकारिकालग्रहणाय यावत्यां वेलायां नवानां कालानां ग्रहणं भवति । तावतीं वेलां ज्ञात्वा एकः कालग्राही न प्रतिक्रामति शेषाः प्रतिक्रामन्ति यस्त्वप्रतिक्रान्तः स कालं प्राभातिकं गृह्णाति ।।

[भा.३२००] एवं तु होति चउरो कह पुन होज्जाहि तिन्नि कालाओ ।
पादोसियंमि पठिए गहियंमि अड्ढरत्ते य ।।

[भा.३२०१] जइ वेरत्तिय सुज्झे ताहे तेनेव अड्ढरत्तेण ।

पढियं पाभादीयं गिण्हंती होति तिन्नेव ।।

वृ- एवमुपदर्शितेन प्रकारेण चत्वारः काला भवन्ति, कथं पुनस्त्रयः काला भवेयुः । सूरिराह-प्रादोषिके काले गृहीते पठितं तदनन्तरं चार्धरात्रेऽपि काले गृहीते यदि वैरात्रिको न शुद्ध्यति कालस्तदा तेनैवार्धरात्रिकेन कालेन पठित्वा प्राभातिकं कालं गृह्णन्ति । एवमेते त्रयः काला भवन्ति ।

[भा.३२०२] अहवा पढमे सुद्धे बितिय असुद्धंमि होति तिन्नेवं ।
पातोसिय वेरत्तिय अतिउवयोगा भवे दोन्नि ।।

वृ- अथवेति प्रकारान्तरोपप्रदर्शने प्रथमे प्रादोषिके काले शुद्धे द्वितीये अर्धरात्रिणि काले अशुद्धे त्रय एवं काला भवन्ति उपलक्षणमेतत् । तेन प्रादोषिके वा प्राभातिके वा अशुद्धे तत्र इत्यपि द्रष्टव्यं । कथं द्वौ कालौ भवत इत्यत आह-प्रादोषिके काले गृहीते अर्धरात्रिके वा गृहीते चरमायां पौरुष्यामवगाढायां वैरात्रिके काले गृहीते कालिकं श्रुतं परावर्तयद्भिः स्वाध्यायविषमे (ये) त्युपयोगभावतस्तावत्र ज्ञाता प्राभातिककालवेला यावत् सन्ध्या उपस्थिता । एवं मातृस्थाने विमुक्ताना मशठानामपवादेन द्वौ कालौ भवतः, । तद्यथा प्रादोषिको वैरात्रिकश्च । अत्रैव प्रकारान्तरमाह-

[भा.३२०३] अहवा वि अद्धरत्ते गहिए वेरत्तिए असुद्धंमि ।
तेनेवय पढियंमी पाभातियं सुद्धदोनेव ।।

वृ- अथवेति पूर्ववत् प्रादोषिकं कालं गृहीत्वा तेन कालिके श्रुते परावर्तिते द्वितीये यामे तेनैव कालेन प्रज्ञापनादि परावर्त्य कालवेलायामतिक्रान्तायामर्धरात्रिके काले गृहीते तेनाचार्येण प्रज्ञापनादौ परावर्तिते चतुर्थ्यां पौरुष्यामवगाढायां वैरात्रिके अशुद्धे ततस्तेनैवार्धरात्रिकेन कालेन कालिके पठिते प्राभातिके अशुद्धे द्वावेव कालौ भवतः, उपलक्षणमेतत् । तेन प्रादेषिक प्राभातिकयोरथवाऽर्धरात्रिक वैरात्रिकयोरथवार्धरात्रिकप्राभातिकयोर्यदि वा वैरात्रिक प्राभातिकयोर्ग्रहणे शेषयोरग्रहणे कालद्विकमेकतरस्य कालस्य शुद्धावेकः कालः ।

[भा.३२०४] नवकालवेलसेसे उवग्गहियठाए पडिक्कमए ।
न पडिक्कमए एगो नववारहए असज्झातो ।।

वृ- नवानां कालानां वेला यत्र स नवकालवेल इत्थंभूते चरमपौरुष्यां शेषबालवृद्धादीनां वाचनायां औपग्रहिक उपष्टम्भकारी प्राभातिकः कालस्तदर्थं शेषाः साधवो वैरात्रिकस्य कालस्य प्रतिक्रामन्ति । एको न प्रतिक्रामति । ततः स प्राभातिकं कालं गृह्णाति । अन्ये तु ब्रुवते कालग्राही वैरात्रिकस्य कालस्य प्रतिक्रम्य प्राभातिकं कालं गृह्णाति । शेषास्तु कालवेलायां वैरात्रिकस्य प्रतिक्रामन्ति प्राभातिकश्च कालो यदि नववारान् हतस्तदा ध्रुवमस्वाध्याय इति कथं नववारान् ग्रहणं हनने वा तत्र आह--

[भा.३२०५] एक्केक्को तिन्निवारे छीयादि हयंमि गेण्हए कालं ।
असती एक्को वि हु नववारे गेण्हति ताहे ।।

वृ- क्षुतादिनाहते एकैकस्त्रीन् वारान् कालं गृह्णाति । इयमत्र भावना क्षुतादिभिः कालस्योपघातं संभवे एकस्त्रीन् वारान् गृह्णाति । तस्याप्युपहतेऽन्यस्त्रीन् वारान् अथान्यः कालं गृह्णन् न विद्यते तर्हि तस्य गृह्णतोऽसत्यभावे एकोऽपि नववारान् कालं गृह्णाति, तथापि चेदुपहतस्तर्हि हता पौरुषीति ध्रुवमस्वाध्यायः-

[भा.३२०६] पाभाइयंमि काले संचिक्खे तिन्नित्थीव रुणेसु ।

चोदइ अनिठसद्दे जंति होति काल घाताउ ।।

[भा.३२०७] एवं बारसवासे खरसद्देणं तुहम्मती कालो ।
भण्णइ मानुसनिठ्ठे तिरियाणं तू पहारंमि ।।

वृ- प्राभातिके काले गृह्यमाणे त्रयः पुरुषाः क्षुतरुदितानि संचिक्खे इति परिभावयंति गाथायां तु सप्तमी द्वितीयार्थे बहुवचन संकला स्वाध्यायिक सूचनार्थं तेन क्षुतरुदितादीनीति द्रष्टव्यं । अत्र परश्चोदयति यदि अनिष्टे रुदितशब्दे कालघातो भवति । एवं सति खरशब्देन गर्दभशब्देन द्वादशवर्षाणि कालो हन्यते खरशब्दस्यार्तत्वानिष्टुरतरत्वात्सूरिराह-भण्यते अत्रोत्तरंदीयते मानुष्यानिष्टे शब्दे कालोपघातः तिरश्चां तु प्रहारे दीयमाने विस्वर शब्दे ।

[भा.३२०८] पावासि जाइया ऊ जइ रोविज्जाहि कालवेलम्मि ।
ताहे घेप्प अनागत अहपुनारोए पगेचेव ।।

वृ- प्रवसतीत्येवं शीलः प्रवासी तस्य जायेव आयेका भार्या यदि कालवेलायां कालग्रहणसमये रुद्यात् तर्हि यावन्नरोदिति तावदनागते एवं कालो गृह्यते । अथ पुनः सा प्रगे एव अति समन्धकारेण रुदिति तत आह-

[भा.३२०९] ताहे उप्पन्नविज्जइ अह अन्नविया जया न वा एक्का ।
ताहे उग्घाडेज्जइ अह पुन वालं रुवेज्जासि ।।

[भा.३२१०] वीसरसरं रुवंते अव्वत्तगडिं भगंमि मा गिण्हे ।
अप्पेण वि विरसेणं महल्लवेडंतु उवहनतो ।।

वृ- यदि सा अति समन्धकारे एवं रुदिति मा गृह्णीयात् कालं महत् पुनः खेदरूपमल्पेनापि विरसेन स्वरेण कालमुपहन्ति । तदेवं प्राभातिककालग्रहणविधिरुक्तः । सम्प्रति प्रस्थापन विधिमभिधित्सुराह-

[भा.३२११] गोसेउ पठावंती छीए छीए उ तिन्नि वाराओ ।
आइण पिसिय महिया इ पेहणट्ठा दिसा पेहे ।।

वृ- गोसे प्रभाते स्वाध्याये प्रस्थाप्यमाने यदि क्षुतं भवति तदा आकीर्णमासमन्तात् विकीर्णं यत् पिशितं यत् महिकादिकमस्वाध्यायिकं तत्प्रेक्षणार्थं दिशः प्रेक्षते । तत्र यदि न दृष्टमस्वाध्यायिकं तदा पुनः प्रस्थापयति । तत्रापि यद्यर्धप्रस्थापिते भवति तदा पुनरप्याकीर्णं पिशित महिकादि प्रेक्षणार्थं दिशः प्रेक्षते । एवं क्षुते क्षुते उपलक्षणमेतदन्यस्मिन् वा स्वाध्यायभङ्ग कारिणि समुपस्थिते त्रीन् वारान् आकीर्ण पिशितादि निरीक्षणार्थं दिशः प्रेक्षते । न केवलं दिशः प्रेक्षते किन्तु—

[भा.३२१२] सेज्जायरसेज्जादिसु छाराद्दिाए विसिउ पेहंति ।
तिण्हयरेणं नत्थउ तत्थवि उ तिन्निवारा उ ।।

वृ- त्रिष्वपि वारेषु प्रत्येकमन्यत्र शय्यातरगृहे सेज्जेति प्रातिवेशिकगृहे आदिशब्दादन्यस्मिन् वा परतरादौ गृहे क्षारादिग्रहणनिमित्तं मध्ये प्रविश्य पिशितादिकमस्वाध्यायिकं प्रेक्षते । यदि न दृष्टं किमपि वाराणां त्रयाणां परतोऽन्यत्र गत्वा स्वाध्यायं प्रस्थापयन्ति । तत्रापि यदि त्रीन् वारानुपहतः स्वाध्यायः क्षुतादिना ।

[भा.३२१३] ताहे पुनोवि अन्नत्थ तत्थवि य तिन्नि वाराउ ।
एवं नववाराहते ताहे पढमाए न पढंति ।।

वृ- ततः पुनरन्यत्र गत्वा स्वाध्यायः प्रस्थापनीयः । तत्रापि यदि त्रीन् वारान् कालस्योपघातः स्यात् तत एवममुना प्रकारेण सर्वसंकलनया नववारानूहते स्वाध्याये प्रथनायां [illegible] स्वाध्यायम् ।

[भा.३२१४] पट्ठवियंमि सिलोगे घाणालोया य वज्जणिज्जाओ ।
सोणियवच्चिकाणं मुत्तपुरिसाण तहचेव ।।

वृ- प्रस्थापिते स्वाध्याये भणिते क्षुल्लकाचारकथाद्ये श्लोके स्वाध्यायं कुर्वन्ति कुर्वद्भिश्च स्वाध्यायं शोणित स्तबकानां शोणितसूचकानां मुत्रपुरीषाणां च घ्राणालोका वर्जनीयाः । कथमित्याह-

[भा.३२१५] आलोगंमि चिलिमिली गंधे अन्नत्थ गंतु पगरेंति ।
एसो उ सज्झातो तव्विवरीतो असज्झातो ।।

वृ- आलोके शोणितादीनामन्तरा चिलिमिली क्रियते । गन्धे पुनरागच्छति अन्यत्र गत्वा स्वाध्यायं कुर्वन्ति । एषोऽनन्तरोदितः सकलदोषविनिर्मुक्तः स्वाध्याये कालः स्वाध्यायः कारणे कार्योपचारात् तद्विपरीतः प्रागुक्तदोष संयुक्तः कालोऽस्वाध्यायः ।

[भा.३२१६] एएसामन्नयरेअसज्झाए जो करेइ सज्झायं ।
सो आणा अणवत्थ मिच्छत्त विराधनं पावे ।।

वृ- एतेषामनन्तरोदितानामस्वाध्यायिकानामन्यतरस्मिन्नस्वाध्याये अस्वाध्यायिके सति यः करोति स्वाध्यायं आज्ञाभङ्गं तीर्थकराज्ञाविलोपात् अनवस्थां तं तथा कुर्वन्तमवलोक्यान्यस्यापि तथा करणात् मिथ्यात्वमयथावादकरणात् विराधनां । संयमविराधनां ज्ञानोपचारोपघातात् आत्मविराधनां प्रान्तदेवता-च्छलनात् प्राप्नोति । अत्रैवापवादमाह-

[भा.३२१७] बिति आगाढे सागारियादि कालगते असति वुच्छेए ।
एएसिं कारणेहिं जयणाए कप्पई काउं ।।

वृ- द्वितीयपदमपवादपदमागाढे योगा उह्यमाने यद्यप्यस्वाध्यायिकं भवति, तथापि यतनया कर्तुं कल्पते स्वाध्यायो यथा स्कन्दके चमरे च प्रत्यासन्ने अनुदिष्टमपि स्कन्दकोद्देशं च रात्रौ रात्रौ त्रीन् वारान् दिवसान स्वाध्यायकेऽपि तदनुग्रहाय कर्षयंति । तथा कारणवशेन प्रतिबद्धायां स्थितस्तत्र सागारिकस्य शय्यातरस्य प्रतिचारणाशब्दं श्रुत्वा मा शृणुयात् एनमनिष्टं शब्दमिति कृत्वा यत् कालिकमुत्कालिकं वा परिजितं केवलं स तदस्वाध्यायिकेऽपि पठति । आदिग्रहणेन कदाचित् यथाच्छन्दस्योपाश्रयेकारणेन स्थितास्ततो यथामतिविकल्पितां तस्य सामाचारीं मा शृणुमेति तत्प्रतिघातार्थमस्वाध्यायिकेऽपि स्वाध्यायं कुर्वन्ति इति परिग्रहः । तथा कालगते जागरणनिमित्तं मेघनादादिकमध्ययनमस्वाध्यायिकेऽपि परावर्त्यते । असति वोच्छेए इति अधुना गृहीतं किमप्यध्ययनं तच्च यस्य समीपे गृहीतं स मरणमुपागतः अन्यत्र च तन्न विद्यते ततो मा भूत्तद्व्यवच्छेद इत्यस्वाध्यायिकेऽपि तत्परावर्त्यते । एतैः कारणैः पञ्चविधानामस्वाध्यायिकानामन्यतमस्मिन्नप्यस्वाध्यायिके यतनया कर्तुं कल्पते स्वाध्यायः ।

मू. (१७७) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा अप्पणो असज्झाइए सज्झायं करेत्तए । कप्पइण्हं अन्नमन्नस्स वायणं दलइत्तए ।*

[भा.३२१८] अच्चाउलाण निच्चोउयाणमोहेज्ज निच्च असज्झातो ।
अरिसा भगंदरादिसु इति वायणसुत्तसंबंधो ।।

वृ- अत्याकुलानां बालवृद्धैरतिशयेन समाकुलानां साधूनामर्शोभगन्दरादिषु श्रमणीनां च नित्यर्तुकानां

मा नित्यं सर्वकालमस्वाध्यायो भवतिइति वाचनासूत्रमुत्पन्नस्तमित्येषसम्बन्धः। अनेन सम्बन्धेनाया-तस्यास्य व्याख्या-न कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वात्मनः समुत्थे अस्वाध्यायिके स्वाध्यायं कर्तुं किन्तु कल्पते परस्परस्य वाचनां दापयितुमन्यत्र यदि वा प्रक्षालनानन्तरं गाढबन्धे प्रदत्ते सति तत्रापि स्वयमपि वाचानं दातुं कल्पते इति वाक्यशेषः। एतदेव भाष्यकारः सप्रपञ्चमाह-

[भा.३२१९] आयसमुत्थमसज्झाइयं तु एगविहं होइ दुविहं वा।
एगविहं समणाणं दुविहं पुन होइ समणीणं॥

वृ- आत्मनः शरीरात् समुत्थं संभूतमात्मसमुत्थमस्वाध्यायिकमेकविधं भवति द्विविधं वा तत्र यत् एकविधमर्शो भगन्दरादि विषयं तत् श्रमणानां भवति, श्रमणीनां पुनर्भवति द्विविधं अर्शो भगन्दरादि समुत्थमृतुसंभवं च। तत्र यतनामाह-

[भा.३२२०] धोयंमि य निप्पगले बंधा तिन्नेव होंति उक्कोसा।
परिगलमाणे जयणा दुविहम्मी होइ कायव्वा॥

वृ- व्रणादौ निप्रगले धौते उपरि क्षारप्रक्षेपः पुरस्सरं त्रयो बन्धा उत्कर्षतो भवन्ति यथापि परिगलति द्विविधे व्रणादावार्तवे च यतना वक्ष्यमाणा कर्तव्या। एतदेव सप्रपञ्चं भावयति।

[भा.३२२१] समणो उ वणे भगंदरे वंधेक्कक्काउ वाएति।
तह विगलेंत छारे मोद्धुं दोतिन्नि बंधाउ॥

वृ- श्रमणो व्रणे वा भगन्दरे वा परिगलति हस्तशताद्बहिर्गत्वा निःप्रगलं प्रक्षाल्य चीवरे क्षारं क्षिप्त्वा उपर्यन्यत् चीवरं कृत्वा व्रणं भगन्दरं बध्नाति, । तत एवमेकं बन्धं कृत्वा वाचयति यदि तथापि परिगलत्य-स्वाध्यायिकं तत उपरि क्षारं निक्षिप्य द्वितीयं बन्धं ददाति। ततो वाचयति तथाप्यतिष्ठति तृतीयमपि तृतीयमपि बन्धं प्रत्यवतारं दत्वा वाचयति।

[भा.३२२२] जाहे तिन्निविभिन्ना ताहे हत्थसयबाहिराधोउं।
बंधिउ पुनोविवाए गंतु अन्नत्थ व पढंति॥

वृ- यदा त्रयोऽपि बन्धास्तेना स्वाध्यायिकेन विभिन्ना भवन्ति तदा हस्तशताद्बहिर्गत्वा निप्रगलं प्रक्षाल्य पुनः क्षारं निक्षिप्योपरि चीवरेण बध्वा पुनरपि वाचयति। अन्यत्र वा गन्तुं पठन्ति।

[भा.३२२३] एमेव य समणीणं वणम्मि इयरम्मि सत्तबंधाउ।
तहवि य अठायमाणो धोऊणं अहव अन्नत्थ॥

वृ- एवमेव श्रमणीनामपि व्रणविषये यतना कर्तव्या भवति इतरस्मिन्नार्तवे सप्तबन्धाः पूर्वप्रकारेण भवन्ति। तथापि व्रणे इतरस्मिन् वा अतिष्ठति हस्तशताद्बहिः प्रक्षाल्य तथैव बन्धान् दत्वा वाचयति अन्यत्र गत्वा पठन्ति।

[भा.३२२४] एए सामन्नयरे असज्झाए अप्पणो उ सज्झायं।
जो कुणइ अजयणाए सो पावइ आणमादीनि॥

वृ- एतेषामनन्तरोदितानामन्यस्मिन्नात्मनोऽस्वाध्यायिके सति यः स्वाध्यायं करोति तत्राप्ययतनया स प्राप्नोत्याज्ञादीनि तीर्थङ्कराज्ञाभङ्गादीनि दूषणानि। आदिशब्दादनवस्थादि परिग्रहः। न केवलमिमे दोषाः किंत्विदमेव।

[भा.३२२५] सुयनाणंमि अभत्ती लोगविरुद्धं पमत्तछलणा य।

विज्ञासाहणवेगुण धम्मया एयमाकुणसु ।।

**वृ-** अस्वाध्यायिके पठनश्रुतज्ञानस्याभक्तिविराधनाकृता भवति, तद्विराधनायां दर्शनविराधना चारित्रविराधना च तदभावे मोक्षाभावः । तथा लोकविरुद्धमिदं यथात्मनो अस्वाध्यायिके पठनं तथाहि- लौकिका अपि व्रणे आतवे च परिगलति परिवेषणं देवतार्चनादिकं वा (न) कुर्वन्ति । तथा प्रमत्तीभूतस्य प्रान्तदेवतया च्छलना स्यात्तथा विद्या उपचारमन्त्रेण साध्यमाना साधनवैगुण्यधर्मतया न सिध्यति । तथा श्रुतज्ञानमपि तस्मान्नैवं कार्षीः । अत्र परावकाशमाह-

**[भा. ३२२६]** चोएइ जइ एवं सोणियमादीहिं होइ सज्झातो ।
तो भरितोच्चियदेहो एएसिं किंह नु कायव्वं ।।

**वृ-** परश्चोदयति यद्येवमुक्तप्रकारेणास्वाध्यायो भवति तत एतेषां शोणितादीनां देहो भृत इति तत्र कथं तु कर्तव्यम् । तस्मिन् सति कथं स्वाध्यायः । अत्र सूरिराह-

**[भा. ३२२७]** कामं भरितो तेसिं दंतादी अवजुया तह विवज्जा ।
अनवजुयाउ अवज्जा लोए तह उत्तरे चेव ।।

**वृ-** कामं मन्यामहे एतत्तेषां शोणितादीनां भृतो देहस्तथापि ये दन्तादयोऽवयुताः पृथग्भूतास्ते च वर्ज्या वर्जनीयाः । ये त्वनवयुताः अपृथग्भूता लोके उत्तरे च अवर्ज्या अपरिहर्तव्याः । एतदेव भावयति-

**[भा. ३२२८]** अब्भंतर मललित्तो कुणति देवाणमच्चणं लोए ।
बाहिरमललित्तो पुण कुणइ अवणेइ वा तोणं ।।

**वृ-** अभ्यन्तरमललिप्तोऽपि देवानामर्चनं लोके करोति । बाह्यमललिप्तः पुनर्न करोति अपनयति वा मलं ततः शरीरादेवमत्रापि भावनीयम् ।

**[भा. ३२२९]** आउड्डियावराहं सन्निहिया न खमए जहा पडिमा ।
इय परलोए दंडो पमत्त छलणा इह सियाउ ।।

**वृ-** उपेत्यकृतमपराधं सन्निहितासन्निहित प्रातिहार्या प्रतिमा न क्षाम्यति । इति एवममुना प्रकारेण श्रुतज्ञानमप्युपेत्य कृतमपराधं न क्षमते । तत्र परं लोके दुर्गतिप्रपातो दंड इहलोके प्रान्तदेवता छलना स्यात् ।

**[भा. ३२३०]** रागा दोसा मोहासज्झाए जो करेइ सज्झायं ।
आसायणावकासे को वा भणितो अनायारो ।।

**वृ-** रागात् द्वेषात् मोहाद्वायोऽस्वाध्याये स्वाध्यायं करोति, से तस्य का कीदृशी फलत आशातना को वा कीदृशाः फलद्वारेण भणितोऽनाचारः । तत्र रागद्वेषमोहात् व्याख्यानयति-

**[भा. ३२३१]** गणिसद्दमाइमहितो रागदोसंमि न सहते सद्दं ।
सव्वमसज्झायमयं पमादी होइ मोहाओ ।।

**वृ-** गणी आचार्य आदिशब्दादुपाध्यायो गणावच्छेदकः इत्यादि परिग्रह एवमादिभिः शब्दैर्महित उत्कर्षितो योऽस्वाध्यायं करोति स रागे द्रष्टव्यो । यस्त्वन्यस्य गणिशब्दमुपाध्याय शब्दं वा न सहते, अहमपि पठित्वा गणी उपाध्यायो भविष्यामि । इति विचिंतयन्नादरपरोऽस्वाध्यायेऽपि स्वाध्यायं विदधाति, स द्वेषेऽवसातव्यः । यस्तु सर्वमस्वाध्यायमयमित्येवमादि विचिन्त्यास्वाध्याये स्वाध्यायं करोति एष भवति मोह इति । सम्प्रत्याचार्य फलद्वारेणाशातनामाह-

[भा.३२३२] उम्मायं च लभेज्जा रोगायंकं च पाउणेदीहं ।
तित्थकरभासितातो भस्सइ सो संजमातो वा ।

[भा.३२३३] इहलोए फलमेवं परलोए फलं न देंति विज्जातो ।
आसादना सुयस्स कुव्वइ दीहं तु संसारं ।।

वृ- उन्मादं वा लभते रोगातङ्कं च दीर्घं प्राप्नुयात् । तीर्थकरभाषिताद्वा संयमाद्भ्रश्यति । इहलोके विद्या अङ्गश्रुतस्कन्धादि लक्षणाः फलं मोक्षलक्षणं न ददति न प्रयच्छति न केवलं फलदानाभावः किन्तु श्रुतस्याशातना दीर्घं संसारं करोति । तदेवं फलत आशातनाभिहिता । साम्प्रतमनाचारं फलत आह-

[भा.३२३४] नाणायारो विराहितो दंसणयारो वि तहा चरित्तं च ।
चरणविराधनयाए मुक्खाभावो मुणेयव्वो ।।

वृ- अस्वाध्याये स्वाध्यायं कुर्वता ज्ञानाचारो विराधितस्तद्विराधनायां दर्शनाचारश्चारित्रं च विराधितं । चरणविराधनतायां मोक्षाभावः । अत्रैवापवादमाह-

[भा.३२३५] बितियागाढे सागारियादि कालगय असति वुच्छए ।
एएहिं कारणेहिं जयणाए कप्पए काउं ।।

मू. (१७८) *तिवासपरियाए समणे निग्गंथे तीसं वास परियाए समणीए निग्गंथीए कप्पइ उवज्झायत्ताए उद्दिसित्तए ।।*

मू. (१७९) *पंचवास परियाए समणे सट्ठिवास समणीए निग्गंथीए कप्पइ आयरिय उवज्झायत्ताए उद्दिसित्तए ।।*

[भा.३२३६] संगहमादीनट्ठाए वायणं देंति अन्नमन्नस्स ।
अयमवि य संगहो च्चियदुविहदिसा सुत्तसंबंधो ।।

वृ- पूर्वसूत्रे अन्योन्यस्य वाचनां ददाति संग्रहादीनामर्थाय अयमपि च सूत्रेणाभिधीयमाने द्विविधदिशा आचार्यदिशा उपाध्यायदिशा च सङ्ग्रह एव ततः संग्रहप्रस्तावादधिकृतसूत्रस्योपन्यासः । एष सूत्रसम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्यात्रिवर्षपर्यायश्रमणो निर्ग्रन्थस्त्रिंशद्वर्षपर्यायाः श्रमण्याः कल्पते उपाध्यायतया उद्देष्टुं पञ्चवर्षपर्यायः श्रमणो निर्ग्रन्थः । षष्टिवर्षपर्यायाः श्रमण्या निर्ग्रन्थ्याः कल्पते । आचार्यतया उपाध्यायतया वा उद्देष्टुमिति एष सूत्राक्षरार्थः । सम्प्रति भाष्यविस्तरः-

[भा.३२३७] तइयंमि उ उद्देसे दिसासु जो गणहरो समक्खाओ ।
सो चेवय होइ इहं परियालो वण्णितो नवरं ।।

वृ- तृतीये उद्देशे दिक्षु आचार्योपाध्यायप्रवर्तिस्थविरगणावच्छेदिरूपासु यो गणधर आचार्य उपाध्यायो वा समाख्यातः स एव इहापि भवति ज्ञातव्यः । नवरमिह पर्यायोऽधिको वर्णितः ।

[भा.३२३८] तेवरिसो तीसियाए जम्मण चत्ताए कप्पति उवज्झे ।
बितियाए सट्ठि सयरीय जम्मण पणवास आयरितो ।।

वृ- त्रिवर्षस्त्रिवर्षपर्याय उपाध्यायः कल्पते त्रिंशत्कायास्त्रिंशद्वर्षपर्याया जन्मना जन्मपर्यायेण जघन्यतश्चत्वारिंशद्वर्षपर्याया उत्कर्षत देशोनपूर्वकोटिकायाश्चत्वारिंशत्कथं स्यादिति चेदुच्यते । दशवर्षजातायाः प्रव्रज्या प्रतिपत्तिस्त्रिंशद्वर्षाणि व्रतपर्याय एवं चत्वारिंशत्तथा द्वितीयस्याः श्रमण्या निर्ग्रन्थ्याः षष्टिवर्षव्रतपर्याया जन्मतो जघन्यतः सप्ततिवर्षप्रमाणायाः पञ्चवर्षपर्याय आचार्यः कल्पते

उत्कर्षतो देशोनपूर्वकोटिकाया जन्मतः सप्तभिर्वर्षाणि कथं भवतीति चेदुच्यते-दशवर्षपर्याया: प्रव्रज्याप्रतिपत्तिः प्रव्रजिताया षष्टि वर्षाणीति ।

[भा.३२३९] गीया गीता वुड्ढा अवुड्ढा जावतीसपरियागा ।
अरिहितिति संगहं सा दुसं गहं वा भयपरेणं ।।

वृ- गीता वा गीतार्था वा भवतु अगीता वा अगीतार्था वा भवतु तथा वृद्धा वा भवतु अवृद्धा वा यावत् त्रिंशद्वर्षपर्याया तावन्नियमात्त्रिसंग्रहं त्रयाणामाचार्योपाध्याय प्रवृत्तिनीनां संग्रहमर्हति द्विसंगहं भयवरेणं-त्रिंशत् वर्ष पर्यायात्परतो भजना विकल्पनात्रिसंग्रहं वा उपाध्यायस्य प्रवर्तिन्या वा अभावतः।

[भा.३२४०] वयपरिनियायगीया बहुपरिवाराय निव्वियाराय ।
होज्जउ अनुवज्झाया अप्पवत्तिणिया वि जा सठी ।।

वृ- या वयसा परिणता गीतार्था बहु परिवारा निर्विकारा च सा यावत् षष्ठिस्तावदनुपाध्यायी वा भवेद् प्रवर्तिनी वा एवं भवति द्विसंग्रहिका ।

[भा.३२४१] एमेव अनायरिया थेरी गणिणी व होज्ज इयरीय ।
कालगओ सणा एव दिसाए धारेंति पुव्वदिसं ।।

वृ- षष्टि वर्षेभ्यः परतो गणिनी प्रवर्तिनी इतरा वा अप्रवर्तिनी स्थविरा अनाचार्या भवेत् कथमित्याह-कालगतो सन्नाए वेत्यादि कालगतायामवसन्नायां दिशि आचार्यलक्षणायां षष्टि वर्षेभ्यः परतो वर्तमाना आर्यिका धारयन्ति पूर्वं दिशमेवमनाचार्या भवति । किं कारणं संयतीनामवश्यं संग्रहं इष्यते तत आह-

[भा.३२४२] बहुपच्चावाय अज्जाउ नियमा पुन संगहे अपरिभूया ।
संगहिया पुन अज्जा थिरथावर संजमा होइ ।।

वृ- आर्या पुनर्बहुप्रत्यवाया ततोऽसंग्रहे सति नियमात् परिभूता भवति पराभवस्थानमुपजायते । संगृहीता पुनरार्या स्थिरस्थावरसंयमा भवति । ततः संग्रह इष्यते । के अपाया इत्याह-

[भा.३२४३] पेसी अइया दीया जे पुव्वमुदाहया अवायाओ ।
ते सव्वे वत्तव्वा दुसंगहं वणयंतेन ।।

वृ- ये पूर्व कल्पाध्ययने द्विसंग्रहं वर्णयता पेसी आर्यिका आदि शब्दात् कुलपुत्र भोजिकादि परिग्रह इत्यादिका उदाहृता अपायास्ते सर्वेऽत्रापि वक्तव्यास्ततो बह्वपायदर्शनतः संग्रहो मन्यते । तदेव द्रढयति ।

[भा.३२४४] अज्जाय विउलखंधा लतावाएणा कंपते ।
जले वा अबंधणा नावा उवमा एस असंगहे ।।

वृ- अजात विपुलस्कन्धा यथा वातेन लता कम्पते जले वा यथा अबन्धना बन्धनरहिता नौरेपा असंग्रहे उपमाऽर्याप्यसंगृहीता सती बहु प्रत्यवायवातोत्कलिकाभिरितस्ततः संयमात्कम्पते इत्यर्थः ।

[भा.३२४५] दिट्ठंतो गुव्विणीए उकप्पट्ठगबोधिए हि कायव्वो ।
गब्भंते रक्खंती समत्थं खुड्डए अगडे ।।

वृ- अत्र लोके दृष्टान्तो गुर्विण्याः कर्तव्यो लोकोत्तरे कल्पस्थकबोधिकैः क्षुल्लकचौरैः तत्र गर्भस्थ पुत्रेस्वगोत्रजादयस्तां रक्षन्ति स एव पुत्रप्रभावः, । अवटेंगते चौरैक्षुल्लकस्य तन्मारणाय सामत्थं (सामर्थ्यं) पर्यालोचनं सोप्येष पुरुषस्य प्रभावस्तत्र प्रथमतो गुर्विणीदृष्टान्तं विभावयिषुस्तावदिदमाह-

[भा.३२४६] सगोत्तरायमादीसु गब्भत्थो वि धनं सुतो ।
रक्खए मायरं चेव किमुता जायवड्डितो ।

वृ- गर्भस्थोऽपि यतः स्वगोत्र राजादिषु धनं जिघृक्षु धनं रक्षति ।मातरं च किं पुनर्जातः प्रवर्धितश्च स सुतरां रक्षति, ।तत्र यथा गर्भस्थोऽपि रक्षति तथा प्रतिपादयति ।

[भा.३२४७] वणिए मए रायसिट्ठे गब्भिणि धनमिच्छतए भूपाए ।
सव्वं सुयस्स दाहं धूयाभत्तं च वीवाहं ।।

वृ- एको वणिक तस्य भार्या आपन्नसत्वा वणिक् कालगतस्तः केनापि राज्ञः शिष्टं देवगुर्विण्या धनमस्ति राज्ञोक्तं तिष्ठतु तद्धनं, यदि प्रसूतायाः सुतो भविष्यति ततः सर्वं सुतस्य दास्यामो दुहितरि च जातायां यावता भक्तं यावता भक्तं यावता च वीवाहस्तावन्मात्रं दास्यामः ।एवं गच्छेऽपि गर्भस्थोऽपि सुतो राज्ञः स्वगोत्रेभ्यश्च धनं रक्षति मातरं च अन्यथा स्वगोत्रजै राज्ञा वाद्यापि तव पार्श्वे धनमस्तीति बहुधा विलुप्यते ।भावितं लौकिकमुदाहरणमधुना लोकोत्तरं भावयति ।

[भा.३२४८] लोउत्तरिए अज्जा खुड्डगबोहिहरणं पसरणीयं ।
चोरो य रणं कूवे सामत्थण वारणा लेट्ठा ।।(थू) (लद्धा) ।।

वृ- लोकोत्तरिकोऽयं दृष्टान्तः । क्वचित् ग्रामे मालव शबरानीकमापतितं । तत्र कैश्चित् बोधिकैश्चौरैरार्यिकाणामेकस्य च क्षुल्लकस्य हरणं कृतं ते चौरा अन्यस्यैकस्य चौरस्यार्यिकाः क्षुल्लकं च समर्प्यान्यस्य हरणाय गताः स चैकश्चौरस्तृषापीडितः सन् कूपे पानीयायावतीर्णः ।ततः क्षुल्लकश्चिन्तयति वयमेतावत्संख्याका बहवोऽयमेकस्ततः किमेकस्यापि न प्रभविष्याम इति विचिन्त्य ता आर्यिका भणिताः ।पाषाणपुञ्जमेनं कुर्मस्तानेच्छन्ति मा मारयिष्यतीति कृत्वा ततः क्षुल्लकेन तद्वचो श्रुत्वा महानेकः पाषाणस्तस्योपरि मुक्तस्ततः पश्चात्ताभिः सर्वाभिरेककालं पाषाणा मुक्तास्ततः स पाषाण-पुञ्जेनाक्रान्तश्चौरो मरणमुपागमत् । ततः क्षुल्लकेन तास्ततो निष्काशिता एवं क्षुल्लको रक्षति किं पुनर्महान् तत एतेन उपाध्याय आचार्यश्च त्रिवर्षपञ्चवर्षपर्यायस्त्रिंशत् षष्टि वर्षपर्यायाणामपि गीतार्थानामपि दीयते ।

**मू. (१८०)** *गामानुगामं-दूइज्जमाणे भिक्खू य आहच्च वीसंभेज्जा तं च सरीरगं केइ साहम्मिए पासेज्जा कप्पइ सेतं सरीरगं न सागारियमिति कट्टु थण्डिले बहुफासुए पडिलेहित्ता पमज्जित्ता परिठवेत्तए, अत्थियाइंथकेइ साहम्मिय संतिए उवगरणजाए परिहरणारिहे, कप्पइ से सागारकडं गहाय दोच्चंपि ओग्गह अनुन्नवेत्ता परिहारं परिहारेत्तए ।।*

[भा.३२४९] अतिरेगद्ध उवट्ठा सट्ठी परिया य सत्तरी जम्मं ।
जरपागं मानुस्सं पडणं एक्कस्स संबंधो ।।

वृ- अनन्तरसूत्रे अतिरेकार्थमतिरेकप्रतिपादनार्थमाचार्यस्योपाध्यायस्य च उपस्था उपस्थापनं कृतं, तत्र षष्टिपर्यायं सप्ततिवर्षजन्मकं मानुषं जरापालं भवति, । जरसा एकस्य पतनं तच्चपतनमनेन सूत्रणाभिधीयते एष सूत्रसम्बन्धः, ।अनेन सर्वसम्बन्धेनायातस्यास्य व्याख्या ।गामानुगामं दूइज्जमाणे इति विहरन् आह कदाचित् शरीरात् विष्वक्पृथग् भवेत् म्रियते इत्यर्थः, ।तत्र शरीरकं केचित्साधर्मिकाः संयताःपश्येयुस्तत्र तस्य साधर्मिकस्य तत् शरीरं मा सागारिकं भवत्विति कृत्वा एकान्ते विविक्ते अचित्ते स्थण्डिले बहुप्राशुके कीटिकादिसत्वरहिते प्रत्युपेक्ष्य प्रमार्ज्य च परिस्थापयितुं अत्थिया इत्थ

इत्यादि । अस्ति चात्र किञ्चित्साधर्मिक सत्कमुपकरणजातं सलक्षणं पतद्ग्रहादि परिहरणार्हं परिभोगार्हं करिष्यति । से इत्यादि कल्पते से तस्य सागारिकृतं गृहीत्वा सागारकृतं नाम नालमना स्वीकरोति आचार्यसक्तमेतत् । आचार्य एव एतस्य ज्ञायक एवं गृहीत्वा आचार्याणां समर्पयेदिदं आचार्यस्तस्यैव ददाति । ततः स मस्तकेन वन्दे इति ब्रुवाण आचार्यवचः प्रमाणं करोति, । एष द्वितीयोऽवग्रहस्तमनुज्ञाप्य द्विविधेन परिहारेण परिहर्तुं परिभोगयितुं अथाचार्योऽन्यस्मै ददाति तदा तस्य तदिति सूत्रसंक्षेपार्थः ।

**[भा. ३२५०]** तं चेव पुव्वभणियं सुत्तनिवातो उ पथे गामे वा ।
गामे एगमनेगा बहूवएमेव पंथेवि ॥

**वृ-** यत्पूर्वं कल्पाध्ययने चतुर्थे उद्देशके विष्वग् भवनं विधानं भणितं तदेवात्रापि द्रष्टव्यम् । नवरमिह विशेषो भण्यते सूत्रनिपातो ग्रामे वा भवत् । पथि गामानुगामं दूइज्जमाणे इति वचनात् तत्र ग्रामे एको वा भवेदनेके वा तत्र ये अनेके ते द्विप्रभृतयो यावत् सप्त बहवो वा द्रष्टव्या एवमेव पथ्यपि द्रष्टव्यमेको वानेके वा तत्रानेके द्विप्रभृतयो यावत्सप्त बहवो वा एतदेवाह-

**[भा. ३२५१]** एगो एगो चेव उ दुप्पभिति अनेन सत्त बहुगावा ।
कालगत गाम पंथे वा जाणग उज्झण विहीए ॥

**वृ-** एकस्तावदेक एव तस्यैकत्वेन भेदाभावात् द्विप्रभृतयो यावत्सप्त तावदनेके ततः परं बहवः एतेषां मध्ये कदाचिदेको ग्रामे पथि कालगतो भवेत् तत्र उज्झनविधिः परिष्ठापनविधेर्ज्ञायकास्ते यथोक्त विधिना परिष्ठापयन्ति । अथानेके द्विप्रभृतयो यावत्सप्तेति कस्मादुक्तं न पञ्च षट्वेति उच्यते । सप्तानामेव समासकल्पत्वादन्यथात्वविधिरिति ज्ञापनार्थं तथा चाह-

**[भा. ३२५२]** चउरो वहंति एगो कुसादि रक्खइ उवस्सयं एगो ।
एगो य समुग्घातो इति सत्तण्हं अहाकप्पो ॥

**वृ-** चत्वारो जना विष्वग् भूतं वहन्ति । एकः पंचमकः कुशान् दर्भान् पानं च गृहीत्वा पुरतो याति एकषष्ठ उपाश्रयं रक्षति । एकः सप्तमः समुद्घातः कालगत इति एवममुना प्रकारेण सप्तानां यथाकल्पो विधिकल्पः ।

**[भा. ३२५३]** सत्तण्हं हेट्ठेणं अविहीउ न कप्पए विहरिउं जे ।
एगाणि यस्स अविहीउ अत्थि उंगच्छिउं वावि ॥

**वृ-** सप्तानामधस्तादविधिस्ततस्तेषां षट्पञ्चप्रभृतीनां विहर्तुं न कल्पते, जे इति पादपूरणं एकाकिनः पुनरासितुं गंतुं नियमादविधिः तेषामपि कदाचित्कारण वशतः स्थितानां यः परिष्ठापनाविधि सोऽग्रेऽभिधास्यते । तथा च एकानेकेषामेव विधिमभिधित्सुः प्रथमतोऽनेकेषां प्रतिजानीते-

**[भा. ३२५४]** नेगाण विहिं वुच्छं नायमनाएव पुव्वखेत्तंमि ।
दिसि थंडिल झामिय बिंबमादि तीसुं पदेसेसु ॥

**वृ-** पूर्वमेकेऽनेके चोक्तास्तत्र प्रथमतोऽनेकेषां विधिं वक्ष्यामि । प्रतिज्ञातमेव करोति । तत्र ज्ञातेऽज्ञाते वा पूर्वक्षेत्रे दिक् परिभावनीया । तथा त्रिषु प्रदेशेषु स्थण्डिलं तच्च स्वाभाविकं शिलातलादिरूपं ध्यामितमग्निना दग्धं बिम्बादीनां समीपं वा तत्र प्रथमतो ज्ञातक्षेत्रविषयविधिमाह-

**[भा. ३२५५]** नाएउ पुव्वदिट्ठं तं चेवय थंडिलं हवति तत्थ ।
अन्ना ते वेलपत्ता सन्नादिगयाउ पेहंति ॥

वृ- ज्ञाते क्षेत्रे यत् पूर्वं दृष्टं तदेव स्थण्डिलं भवति । अज्ञाते यदि वेलायां प्राप्तास्तदा संज्ञादिगताः स्थण्डिलं प्रेक्षन्ते ।

[भा.३२५६] अह पुन विकाले पत्ताइं ता चेव उ करेंति उवओगं ।
अकरणे हवंति लहुगा वेलं पत्ताण चउगुरुगा ।।

वृ- अथ पुनर्विकाले विकालवेलायां प्राप्तास्तत आगच्छन्त एवं स्थण्डिलविषयमुपयोगं कुर्वन्ति अथ प्रमादतोऽमङ्गलबुद्ध्या वा न कुर्वन्ति तदा उपयोगस्याकरणे चत्वारो लघुकाः प्रायश्चित्तं, वेलाप्राप्तानां पुनः स्थण्डिलविषयोपयोगाकरणे प्रायश्चित्तं चत्वारो गुरुकाः ।

[भा.३२५७] आणादिणो य दोसा कालगते संभमादिसुं हुज्जा ।
अच्छंतमनच्छन्ना विनासगरिहं च पावेंति ।।

वृ- न केवलं प्रायश्चित्तं किन्त्वाज्ञादयश्च दोषास्तथा तेषां मध्ये कोऽपि रात्रौ कदाचित्कालं कुर्यात्तत्र स्थण्डिलं न प्रत्युपेक्षितमिति न परिष्ठापयन्ति । अपरिष्ठापयत्सु च वेतालोत्थानदोषः अथ परिष्ठापयन्ति तर्ह्यस्थण्डिलदोषासंगः । तथाहि रात्रौ वह्निसंभ्रमे वा स्तेनसंभ्रमे वा परचक्रादिसंभ्रमो वा जातः सोऽपि च व्रती कालगतः स्थण्डिलं न प्रत्युपेक्षितमिति न परिष्ठापितस्तत्र यदि अग्निसंभ्रमादिषु कथमनाथकलेवरमिति त्यक्त्वा व्रजामो मा प्रवचनस्योड्डाहो भूदिति विचिन्त्य तिष्ठन्ति तस्य समीपे तदा तेषामग्न्यादेर्विनाशो उपधिर्वा स्तेनादिभिरपग्रहणं अथ न तिष्ठन्ति । किन्तु तत्त्यक्त्वा पलायन्ते तदा ते जनमध्ये गर्हां प्राप्नुवन्ति । अथवा स्थण्डिलं न प्रत्युपेक्षितमिति प्रभाते परिष्ठापयन्ति । तदा मलिनैर्वस्त्रैस्तस्मिन्परित्यज्याने प्रवचनस्यापभ्राजना अहो अमी वराका अदत्तदाना मृता अपि शोभां न लभंते, । संभमादिसु होज्जा इत्यादिकमेव व्याख्यानयति-

[भा.३२५८] तेनग्गि संभमादिसु तप्पडिबंधेन दाहो हरणं वा ।
मइलेहिव च्छड्डेंती गरिहाय अथंडिलेवावि ।।

वृ- स्तेनाग्निसंभ्रमादिष्वादि शब्दात्परचक्रसंभ्रमादि परिग्रहः तत्प्रतिबन्धेन कालगतप्रतिबन्धेन तिष्ठतामग्निदाहं स्तेनैर्वाहरणं स्यात् । अथ स्थण्डिलं न प्रत्युपेक्षितमिति प्रभाते परिष्ठापयन्ति । तदा मलिनैर्वस्त्रैरुपेतं छर्दयन्तीति गर्हा स्यात् । अथैतद्दोषभयाद्वा तद स्थण्डिलेऽपि परिष्ठापयन्ति तदा अस्थण्डिले परिस्थापनादोषः ।

[भा.३२५९] एएदोस अपेहिय अह पुन पुव्वं तु पेहितं होंति ।
ता ताहिच्चिय निंभाए ते दोसा न होंता य ।।

वृ- एते अनन्तरोदिता दोषा अप्रेक्षिते स्थण्डिले भवन्ति । अथ पुनः पूर्वं प्रत्युपेक्षितमभविष्यत्त एते अनन्तरोदिता दोषा ना भविष्यन् ।

[भा.३२६०] अह पेहिएवि पुव्विं दियाव रातो व होज्ज वाघातो ।
सावय तेन भया वा ढकिया ताहे अत्थावि (तो) ।।

वृ- अथ पूर्वं प्रेक्षितेऽपि स्थण्डिले दिवा वा रात्रौ वा भवेत् व्याघातः कथमित्याहस्वापदभयात् स्तेनभयाद्वा यदि वा रात्रौ द्वाराणि ढकितानि पिहितानि तदा आस्थापयन्ति धरन्ति न परिष्ठापयन्तीत्यर्थः । तदा बन्धनच्छेदनजागरणादिका पूर्वोक्ता यतनापि, (वा) स्थण्डिलस्य व्याघातः तर्हि यावत्स्तेनादि भयापगमो भवति स्थण्डिलं वा किमपि कालोचित्तं प्राप्यते, तावत्सैव प्राक्तनी यतना कर्त्तव्या ।।

[भा.३२६१] असतीए सुक्किलाणं दिनकालगयं निरिं विवेचंति ।
परिहारियं च पच्छा कडादि कोडीदुगेणं वा ।।

वृ- अथ दिवसे कालगतः परं शुक्लानि वस्त्राणि न विद्यते तर्हि शुक्लानां वस्त्राणामभावे दिनकालगते बन्धनादियतना विषयं कृत्वा निशि रात्रौ विवेचंति परिष्ठापयंति । अथ रात्रौ पूर्वापरा काले ... तर्हि यदन्यत एवमेव याचने शुक्लं वस्त्रं न लभ्यते, । तदा पश्चात्कृतादिषु प्रातिहारिकं शुक्लं वस्त्रं याच्यते । अथ तदपि न लभ्यते तर्हि कोटीद्विकेनाप्युत्पादयेत् । किमुक्तं भवति ? पूर्वं विशोधिकोट्यामुत्पतेतदभावे अविशोधिकोट्यापीति ।

[भा.३२६२] असती नीनेउ निसिं ठवेतु सागारियंडिलं पेहे ।
थंडिलावाधायंमिवि, जयणा एसेव कायव्वा ।।

वृ- कोटीद्विकप्रकारेणापि शुक्लवस्त्राणामभावे निशि रात्रौ परिष्ठापयन्ति । तत्र सागारिकं शय्यातरं कालगतस्य समीपे स्थापयित्वा स्वयं साधवः स्थण्डिलं तथाविधं प्रत्युपेक्षन्ते । अथ स्थण्डिलव्याघातः तथा एषैवानन्तरोदिता यतना कर्तव्या रात्रिद्वारं गतमथ दिग्द्वारमाह-

[भा.३२६३] महल्लपुरगामे वा दिसा वाडग साधीतो ।
इहरादुव्विभागाउ कुग्गामे सुविभाविया ।।

वृ- महानगरस्य महाग्रामस्य वा महत्वेन दिग्विभागो दुःखेन विभाव्यते । ततं उपाश्रयात् वाटकात् साहेर्वा दिग्विभागः परिभावनीयः । इतरथा दुर्विभागा भवेयुः कुग्रामे तु सुविभाव्यादिशस्ताः पुनरिमादिशः ।

[भा.३२६४] दिशा अवर दक्खिणा य अवरा य दक्खिणा पुव्वा ।
अवरुत्तरा य पुव्वा उत्तरपुव्वुत्तरा चेव ।।

वृ- दिक् प्रथमतोऽपरदक्षिणा नैरृती निरीक्षणीया तदभावे दक्षिण तस्या अभावे अपरा पश्चिमा तस्याप्यभावे दक्षिणपूर्वा आग्नेयी इत्यर्थः । तस्या अभावे अपरोत्तरा वायवीति भावः । तस्या अलाभे पूर्वा तस्या अप्यभावे उत्तरपूर्वा । सम्प्रति प्रथमायां दिशि सत्यां शेषदिक्षु परिष्ठापने दोषमाह-

[भा.३२६५] समाही य भत्तपाने उवगरणे ज्झायमेव कलहो उ ।
भेदो गेलण्णं वा चरमा पुन कड्डते अन्नं ।।

वृ- प्रथमायां अपरदक्षिणायां परिष्ठापने प्रचुरान्नपानलाभतः समाधिरुपजायते । तस्यां सत्यां द्वितीयस्यां दक्षिणायां परिष्ठापने अभक्तपानं भक्तपानालाभः तृतीयस्यामनुपकरणमुपधेरभावः । चतुर्थ्यां दक्षिणपूर्वस्यां स्वाध्यायभावः । पञ्चम्यामपरोत्तरस्यां कलहः । षष्ट्यां पूर्वस्यां गच्छभेदः । सप्तम्यामुत्तरस्यां ग्लानत्वं चरमा अष्टमी पूर्वोत्तराकृतमृतकपरिष्ठापना अन्यत् मृतकं कर्षयति मरणमापादयतीत्यर्थः । एतदेवस्पष्टतरमाह-

[भा.३२६६] पउरग पाणपढमा बितियाए भत्तपान न लभन्ति ।
तत्तियाए उवहिमादि नत्थि चउत्थीए सज्झातो ।।

[भा.३२६७] पंचमियाए असंखड छट्ठीए गणस्स भेयणं नियमा ।
सत्तमिया गेलण्णं मरणं पुन अट्ठमीबेंति ।।

वृ- गाथाद्वयमपि व्याख्यानार्थत्वात्सुगमम् । नवरं पउरण्णपाणपढमा इत्यत्र प्राकृतत्वात् सप्तम्या

लोपस्ततः प्रथमायामिति द्रष्टव्यम् । अष्टमीति अष्टम्यामिति । साम्प्रतमुक्तानुक्तद्वार संग्रहार्थमाह-

[भा.३२६८] रत्तिदिसा थंडिल्ले सिल चिंचा झामिए य उस्सन्ने ।
छेत्ता विभत्ती सीमा सीयाणा चेव ववहारो ।।

वृ- प्रथमं रात्रिद्वारं । तच्च प्रागेव सप्रपञ्चमुक्तं । द्वितीयं दिग्द्वारं तच्च भण्यमानमास्ते । तृतीयं स्थण्डिलद्वारं त्रिधा शिलारुपं बिम्बादि वृक्षादीनामधो ध्यामितं च चतुर्थमुत्सन्नद्वारं । पञ्चमं क्षेत्रैर्विभक्ते भूमिभागे द्वयोर्ग्रामयोः सीमायां परिष्ठापनीयमित्येवं लक्षणं षष्टे श्मशाने इति द्वारं । तत्र च व्यवहारो वक्तव्यः । एष द्वारगाथा संक्षेपार्थः । साम्प्रतमेनामेव विवरीतुकामो रात्रिद्वारं किल प्रागेव सप्रपञ्चमुक्तमतो दिग्द्वारस्य वक्तव्यशेषमाह-

[भा.३२६९] लब्भमाणे वा पढमाए असतीए वाघाते वा ।
ताहे अन्नाए विदिसाए पेहेज्ज जयणाए ।।

वृ- लभ्यमानायां गाथायां पुंस्त्वं प्राकृतत्वात् । प्रथमाया अपरदिग्लक्षणाया अभावे व्याघाते वा सति ततस्तस्याः प्रथमाया दिशोऽन्यस्यां दिशि द्वितीयस्यां स्थण्डिलं यतनया प्रेक्षेत । तस्या अपि लभ्यमानाया अभावे व्याघाते वा सति तृतीयस्यामेवं यावच्चरमायामपि न प्रागुक्तो दोषः । तीर्थकराज्ञानुपालनपुरस्सरं यतनया प्रवृत्तेर्यदि पुनर्द्वितीयस्यां सत्यां तृतीयस्यां दोष उक्तः स प्रसजति चतुर्थ्यां तृतीयोक्त एवमुत्तरोत्तरदिक्ष्वपि भावनीयं । गतं दिग्द्वारमधुना स्थण्डिलद्वारमाह-

[भा.३२७०] सिलायलं पसत्थं तु जत्थत्थाविफासुयं ।
झामं थंडिलमादिच्च बिंबादीन समीवे वा ।।

वृ- शिलातलं शिलातलरुपं यत्प्रशस्तं स्थण्डिलं तत्र परिष्ठापयन्ति । अथवा यत्र गोकुलमजा वा उषिता आदिशब्दादन्यथा यत् प्रासुकं तत्र यदि वा ध्यामिते अग्निना दग्धे प्रदेशे आदिशब्दात्करीषादिप्रदेशरुपे वा स्थण्डिले यदि वा बिम्बादीनां वृक्षाणां समीपे यत्र महान्सार्थ उषितस्तत्र परिष्ठापयति । गतं स्थण्डिलद्वारमधुना उस्सन्न उ द्वारमाह-

[भा.३२७१] उस्सन्ना तिन्नि कप्पाउ होंति खेत्तेसुकेसुई ।
अत्थंडिलादिसासुं वा तेवि जाणेज्ज पणवं ।।

वृ- केषुचित्क्षेत्रेषु उस्सण्णेन बाहुल्येन बहुकालाचीर्णाः कल्पा भवन्ति । किं विशिष्टा इत्याह- अस्थण्डिलास्तथाहि केषुचित् ग्रामेषु नगरेषु वा एवं रुपा मर्यादा यथा एतावति प्रदेशे मृतकं त्यक्तव्यं नान्यत्र तत्र च स्थण्डिलाभावः । ततस्तत्र धर्मास्तिकायप्रदेशनिश्रामुपकल्प्य परिष्ठापयेत् । यत्रापि नदीपूरेण वर्षासु स्थण्डिलप्रदेशः प्लावितो अन्यासु विदिक्षु स्थण्डिलव्याघातः । तत्रापि धर्मास्तिकायप्रदेशनिश्रया परिष्ठापनं कुर्यात् । एतच्च प्रस्तावादुक्तमन्यथा नायमाचीर्णः कल्पः तथा केषुचित् क्षेत्रेषु दिक्षु बहुकालाचीर्णाः कल्पा भवन्ति । यथा आनन्दपुरे उत्तरस्यां दिशि संयताः परिष्ठापयन्ति । ततस्तत्र तथैव परिष्ठापनं कर्तव्यं नास्ति कश्चिद्दोषः । तानपि अस्थण्डिलान् दिक्षु वा अकल्पान् प्रज्ञावान् जानीयात् । ज्ञात्वा च तथैव समाचरेदिति । गतमुत्सन्नद्वारमिदानी क्षेत्रमाह-

[भा.३२७२] खेत्ते विभत्ते गामे राय भए वा अदेंतसीमाए ।
भोइयमादीपुच्छा रायपहे सीममज्झे वा ।।

वृ- क्वचित् ग्रामे कौटुम्बिकैः क्षेत्रभूमयः सर्वा अपि सीमाच्छेदेन विभक्तास्ततः समस्तं भूमण्डलं

क्षेत्रैर्निरुद्धं क्षेत्रसीमासु च न लभ्यते परिष्ठापयितुं कुत इत्याहः-रायभए वा अदेंतसीमाए । यदि क्षेत्रसीमायां परिष्ठाप्यते तदा येषां कुटुम्बिनां सा सीमा ते राजकुले गृह्यन्ते । यथा युष्माभिरयं मारितः । ततः सीमायां राजभयेन वा शब्दः समुच्चये अददत्सु कौटुम्बिकेषु तस्य ग्रामस्य यो भोजिको महत्तरः स पृच्छयते यथा क्षेत्रसीमायां वयं मृतकं परिष्ठापयाम आदि शब्दात् यदि स ब्रूयात् आयुक्तो जानाति नाहमिति ततस्तं पृच्छ तदा स पृच्छ्यते । यदि सोऽनुजानाति ततः सुन्दरमथनानुजानाति तदा राजपथे परिष्ठाप्यते । अथवा द्वयोर्ग्रामयोर्मध्ये सीमायां स राजावग्रह इति कृत्वा । अधुना श्मशानद्वारमाह-

**[भा. ३२७३]** असती उ सीयाणे संभग अन्नत्थ अपरिभोगंमि ।
अस्सती अनुसट्ठादीनं तग अंताइ इयरे वा ।।

**वृ-** राजपथस्य ग्रामद्वयमध्यस्य वा कथमप्यभावे सीयाणे श्मशाने परिष्ठाप्यते । अथ श्मशानपालकः श्मशानद्वारे स्थितो निरुणद्धि यथा यत् दातव्यं तत् दत्वा श्मशानमभिगच्छथ तदा अन्यत्र अपरिभोगे यत्रानाथमृतकानि परिष्ठाप्यन्ते दह्यन्ते वा तत्र परिष्ठापयन्ति । अथ तादृक् स्थानं न विद्यते तदा तस्य असत्यभावे तस्य श्मशानपालकस्य अनुशिष्टिरनुशाशनमादिशब्दात् धर्मकथा च क्रियते । अथ तथापि न ददाति तर्हि से तस्य मृतस्य यानि नंतिगानि अन्तानि प्रान्तानि तस्मै दीयन्ते । अथ तानि नेच्छति तर्हि इतराणि नवानि दीयन्ते । कथंभूतानीत्यत आह-

**[भा. ३२७४]** अदसाइय निच्छंते साहारणगमनदारमुत्तूणं ।
सति लंभमुवारुहणं सव्वे व विगिंचणा लंभे ।।

**वृ-** अदशानि दशारहितानि दीयन्ते । अथ तानि नेच्छति तर्हि साधारणं वचनं भण्यते-यथा यं कालगतो अवतारितस्तिष्ठतु वयं ग्रामं प्रविश्य मार्गयामो यदि लभ्यामहे दास्यामो नो चेत्तर्हि तवायत्तमिदं मृतकमिति एवं साधारणं वचनमुक्त्वा तत्केवलं श्मशानद्वारे अवतार्य ग्राममध्ये गमनं कुर्वन्ति । सति लंभेत्यादि यदि लब्धानि सदशान्ति वस्त्राणि ततः प्रत्यागत्य दत्वा परिष्ठापयन्ति । अथ न लब्धानि तदा राजकुले उपारोहणं घटनं घटित्वा निवेद्यते यथा युष्मदीयः शमशानपालकः श्मशाने व्रतिनं कालगतं मोक्तुं न ददाति, साधवो हि निःकिञ्चनाः सन्नस्मभ्यं याचते । एवं निवेद्य तस्य पुरुषमानीय परिष्ठापयन्ति । एतेन यदधस्तान् द्वारगाथायां व्यवहार इत्युक्तं तद्भावितम् । अथ राजकुलं ब्रूयात् श्मशानपालस्यै तदायत्तं ततो यत्स ब्रूते तत्कर्तव्यम् । एवं राजकुले व्यवहारस्यालाभे सैव विवेचना । किमुक्तं भवति पुनस्तत्र न गम्यते ।

**[भा. ३२७५]** सीयाणस्सवि असती अलंभमाणे उवरि कायाणं ।
निसिरंता जयणाए धम्मादिपदेसनिस्साए ।।

**वृ-** अथ श्मशानपालकः श्मशानद्वारे मृतकस्य स्थापनं न ददाति तदा शमशानस्याभावे श्मशाने द्वारे च स्थापयितुमलभ्यमाने अस्थण्डिलेऽपि कायानां हरति । कायादीनामुपरिवितनया धर्मादि-प्रदेशनिश्रया धर्मास्तिकायादि प्रदेशेष्विदं परिष्ठापयाम इति कल्पनया निःसृजंतः परिष्ठापयन्तः शुद्धाः ।

**[भा. ३२७६]** एस सत्तण्हमज्झाया ततो वा जे परेण य ।
हट्ठा सत्तण्ह थोवाउ तेसिं वुच्छंमि जो विही ।।

**वृ-** एषा अनन्तरोदिता मर्यादाविधिः सप्तानां तेभ्यो वा सप्तभ्यः परतो येऽष्टप्रभृतयः तेषां द्रष्टव्यो ये तु सप्तानामधस्तात् स्तोकास्तेषां यो विधिस्तं वक्ष्ये प्रतिज्ञातमेव करोति ।

[भा.३२७७] पंचण्ह दोण्हि हारा भयणा आरेण पालहारेसु ।
ते चेव य कुससपडिमा नयंति हारावहारो या ।।

वृ- यदि सप्तानामधस्तात् षट् भवन्ति तदा त्रयो विश्रम्य द्वौ द्वौ भूत्वा वहन्ति, एको वसतिपाल एकस्तृणानि मात्रकं च गृह्णाति पञ्चानां विधिं साक्षादाह-पञ्चानां साधूनां संभवे द्वौ हारौ वहत इत्यर्थः । तृतीयः कुशादि नयति, चतुर्थो वसतिपालः पञ्चमः कालगतः पञ्चानामारतो ये चतुः प्रभृतयस्तेषां वसति रक्षणे वहने च विकल्पना, किमुक्तं भवति, यथा संभवमशून्यां वसतिं कृत्वा शय्यातरस्य वा निवेद्य शून्यामपि कृत्वा यथा शक्नुवन्ति, तथा परिष्ठापयन्ति, तथा चाह, तएव हरा मृतवाहकाः कुशप्रतिमा नयन्ति, इत्यत्र भावना समस्ततरा वसति निवेदने कृते विश्रम्य विश्रम्य वहंति, यस्तु विश्राम्यति सकुशादि नयतीति । अथवा एक एव यः समर्थः स हरो भवेत्स वहतीति भावः ।

[भा.३२७८] एक्को व दो व उवहिं रत्तिं वेहा सदि य असुणंमि ।
एक्कस्स य तह चेवा छड्डणे गुरुगा य आणादी ।।

वृ- यदि त्रयः साधवो भवेयुस्तदा एकः कालगतो ये च द्वौ तौ रात्रावुपधिं विहायसि कृत्वा एको द्वौ वा वहतो, अथ दिवा परिष्ठाप्यते तदा एकस्य मोचनेन शय्यातरभालनेन वा अशून्ये उपाश्रये कृते सति द्वाभ्यामेकेन वा उड्ढ्वा परिष्ठापयितव्यः । एकस्यापि परिष्ठापने विधिः तथैव द्रष्टव्यो यथा द्वयोरनन्तर मुक्तः । किमुक्तं भवति ? रात्रावुपधिं विहायसि कृत्वा परिष्ठापयति । दिने शय्यातरभालनेन वसतिमशून्यां कृत्वा परिष्ठापयेत् ।यद्येकद्वित्रिप्रभृतयः स्तोका वयं कथं वीक्ष्याम इति विचिन्त्य न परिष्ठापयन्ति । किन्तु त्यक्त्वा गच्छन्ति तदा तेषां प्रायश्चित्तं चत्वारो गुरुकाः न केवलं प्रायश्चित्तमेव किन्त्वाज्ञादयश्च दोषास्तन्निमित्तमपि तेषां प्रायश्चित्तमिति भावः । इमे चान्ये दोषाः ।

[भा.३२७९] गिहिगोणमल्लराउल निवेयणा पाणकड्डणुड्डाहो ।
छक्कायाण विराधन ज्झावणसुक्खेय वावन्ने ।।

वृ- साधूनामभावे गृहिणस्तं त्यजन्ति यदि वा गावौ बलीवर्दौ योक्त्रयित्वा ताभ्यां गृहस्थाः कर्षयन्ति । अथवा मल्लैः परित्याजयन्ति यदि वा गृहस्था राजकुले निवेदयन्ति । तत्र पाणैराकर्षणे प्रवचनस्योड्डाहः । यथा प्राप्तमीदृशेन धर्मेण यत्रेदृशी अवस्था प्राप्यते, एते प्रवचनविराधना विरूपा दोषा इयं संयमविराधना असंयतैर्नीयमानैः षट्कायविराधना, ध्यामनादहनं तस्य कलेवरस्य गृहस्थैः क्रियते । ततस्तत्रापि षट्कायविराधना तथा व्यापन्ने कुथिते कृमिजालसंसक्ते शुष्के शोषमुपगते द्वीन्द्रिय विराधना-

[भा.३२८०] तम्हा उवहि तं वोढुं जे जई पच्चला नयंति ।
दोवि निद्दोवे सद्दोवे ठावए निसिं ।।

वृ- यस्मादेते अनन्तरोदिता दोषास्तस्मात् स्तोकैरपि परिष्ठापयितव्यं । तत्र विधिः प्रागुक्त एवं यथा यदि चत्वारस्तदा एको वसतिपालः शेषास्त्रयो विश्रम्य विश्रम्य तत्कलेवरं वहन्ति । यस्तु विश्राम्यति स तृणानि मात्रकं च वहंति । अत्र योजना यदि वा द्वौ तदा यदि रात्रौ निर्भयं तर्हि निद्दोवे निर्भये ये यतय उपधिं कलेवरं वोढुं प्रत्यलाः समर्थास्ते द्वावपि नयतः उपधिं तच्च कलेवरं नयन्तीत्यर्थः । नीत्वा च कलेवरं स्थगयित्वा परिष्ठापयन्ति । अथ बहिरुपकरणस्तेन भयं तदा रात्रावुपकरणं विहायसि विलम्ब्य द्वारं बध्वा परिष्ठाप्य प्रत्यागच्छन्ति । यदि वा सद्दोषे समये रात्रौ तत्कलेवरं स्थापयन्ति स्थापयित्वा बन्धन-च्छेदनजागरणादिकां यतनां कुर्वन्ति ततो दिवसे यदि शक्नुवन्ति । तदा उपकरणं गृहीत्वा परिष्ठापयंति ।

अथोपकरणं वोढुं न शक्नुवन्ति तदा शय्यातरादीनां परिनिवेद्य द्वारं स्थगयित्वा परिष्ठापयन्ति। परिष्ठाप्य भूयो वसतौ प्रत्यागच्छन्ति।

[भा.३२८१] अह गंतुमना चेव तो नयंति ततो च्चिय।
उलोयणमकुव्वंतो असढो तत्थ सुज्झए ।।

वृ- अथान्यं ग्रामं ते गन्तुमनसस्तत उपकरणं सह नयन्ति नीत्वा तत्कलेवरं परिष्ठाप्य तत एव परिष्ठापनप्रदेशात्परतोऽन्यं ग्रामं गच्छन्ति। तत्र यदुक्तमधस्तात्कल्पाध्ययने अवरज्जूयंमि अवलोयणा कायव्वा इति तदन्यग्रामगमनेना शठोऽकुर्वन् शुध्यति न दोषभाग् भवति।

[भा.३२८२] छड्डेउं जइ जंती नायमनायावनाए परलिंगं।
जइ कुव्वंती गुरुगा आणादीभिक्खु दिट्ठंतो ।।

वृ- यदि कालगतं छर्दयित्वा अपरिष्ठाप्य गच्छन्ति तर्हि ते विचारणीयास्तेन ग्रामेण ते ज्ञाताऽज्ञाता वा तस्य परिचिता अपरिचिता वा इत्यर्थः। तत्र ज्ञाते ग्रामस्य परिचये सति यदि कालगतस्य परलिङ्गं कुर्वन्ति कृत्वा वा परिष्ठाप्य गच्छन्ति। तदा प्रायश्चित्तं चत्वारो गुरुका आज्ञादयश्च दोषा अथाज्ञाते परलिङ्गं कृत्वा अपरिष्ठाप्य गच्छन्ति। तदा कालगतस्य परलिङ्ग दर्शनतो मिथ्यात्वगमनमत्र च श्रावकभिक्षु दृष्टान्तः। स चावश्यकटीकातो भावनीयः। तत्र ज्ञातेऽन्ये च दोषास्तानेवाह-

[भा.३२८३] अचियत्तमादिवोच्छेयमादि दोसा उ होंति परलिंगे।
अन्नाए उहि काले एकए गुरुगा य मिच्छत्तं ।।

वृ- ज्ञाते सति परलिङ्गे क्रियमाणेऽचियत्तादयोऽप्रीत्यादयो व्युच्छेदादयश्च दोषा भवन्ति तथाहि ग्रामेयकास्तत् परलिङ्ग कृतमितरांश्च साधून् अप्रीतिं कुर्वन्ति। अहो इमे संयता निःशूका निर्लज्जामापरिष्ठाप्यो भूदिति परलिङ्गमारोप्यापरिष्ठाप्य त्यक्त्वा गताः। आदिग्रहणेनागाढमिथ्यादृष्टीनां प्रतिरूप जायते इति परिग्रहस्तत्र च व्युच्छेदादयो दोषास्तथाहि ते आगाढमिथ्यादृष्टयः प्रीतिं ब्रूवते। अहो सुन्दरमात्मनैव तैः प्रवचनस्य हीलना कृता मा एतेषामाहारादीनि प्रयच्छथ। आदिग्रहणान्मा अत्र कोऽपि प्रव्रज्यां प्रतिपद्येत मा सोऽप्येवं विधामवस्थां प्राप्नुयात्। एते ज्ञातानां दोषा अथाज्ञाता यतनां कृत्वा तत्कलेवरमरिष्ठाप्य व्रजन्ति। यदि क्षिप्रमेव गतास्ततः पश्चात्कालगतो देवलोके उत्पन्नो अवधिं प्रयुङ्क्ते ततः स एवं मन्येत। अहमेतेन लिङ्गेन देवोजात एवं (ममता) माननान्तरं मिथ्यात्वगमनं। अत्र काले कृते तेषां गमने प्रायश्चित्तं चत्वारो गुरुकाः। यस्मादेते दोषास्तस्माद्विधिना परिष्ठाप्यः सम्प्रति यः कथंचन एकाकी जातस्तस्य परिष्ठापना विधिमाह-

[भा.३२८४] एगानि तो जाहे न तरेज्ज विविचिउं तयं सोउ।
ताहे य विमग्गेज्जा इमेण विहिणा सहा उ ।।

वृ- यदा स एकाकी त्यक्तकलेवरं विवेक्तुं न शक्नुयात् तदा अनेन वक्ष्यमाणेन विधिना सहायान् विमार्गयेत्, तमेव विधिमाह-

[भा.३२८५] संविग्गमसंविग्गे सारुविय सिद्धपुत्त सन्नीय।
सग्गामंमि य पुव्वं सग्गामे असती परग्गामे ।।

[भा.३२८६] अप्पाहेइय सयं वा विगच्छई तत्थं वा विया अन्नं।

असतो निरुक्षए वा काउं ताहेव वच्चेज्जा ।।

[भा.३२८७] संविग्गइ तेच्चिय असतीए ताहे इत्थीवग्गेण ।
सिद्धीसाविग संजति किदि मज्झिमकायतुल्ला वा ।।

वृ- यदि तस्मिन् ग्रामे अन्येऽपि संविग्ना असांभोगिकाः सन्ति तदा तैः सह परिष्ठापयन्ति तेषामभावे असंविग्नैः पार्श्वस्थादिभिः समं तेषामप्यभावे सारूपिकसिद्धपुत्रैस्तेषामप्यप्राप्तौ संज्ञिभिः श्रावकैः समं एवं पूर्वं स्वग्रामे मार्गणा कर्तव्या । तत्र स्वग्रामे संज्ञिनामप्यसति अभावे यदि परग्रामे स्वपक्षोऽस्ति तत्र कंचित् प्रेषयति अन्यस्य वा तथाविधस्य प्रेषणयोग्यस्याभावे अप्पाहेसेति अन्यं गच्छन्तं सन्दिशति । अन्यस्यापि गच्छतोऽसंभवे कालगतस्य पार्श्वे कंचित्स्थापयित्वा स्वयमन्यग्रामं गच्छति गत्वा स्वपक्षमन्यमानयति अथ स कोपि न विद्यते, यः कालगतस्य पार्श्वे स्थाप्यते नहिं यत्र काकादिभिर्न भक्ष्यते तत्र निरत्यते निरपाये स्थले कालगतं कृत्वा ततोऽन्यग्रामं व्रजेत् । गत्वा संविग्नादीना नयति प्रथमतः संविग्नान् सांभोगिकानानीय तैः समं परिष्ठापयति । तेषामलाभे असांभोगिकैरपि तेषामप्यभावे असंविग्नैः पार्श्वस्थादिभिः तेषामप्यसति सारूपिकसिद्धपुत्रैस्तेषामप्यप्राप्तौ श्रावकैः समं तेषामप्यभावे स्त्रीवर्गेण । तत्र क्रममाह-प्रथमतः सारूपिकीभिः सिद्धपुत्रिभिरतुल्यवयोभिस्तासामप्यलाभे श्राविकाभिर तुल्यवयोभिस्तासामप्यभावे वृद्धाभिः संयतीभिस्तासामप्यप्राप्तौ मध्यमवयोभिः संयतीभिस्तासामप्य-लाभे तुल्याभिरपि तुल्यवयोभिरपि संयतीभिः ।

[भा.३२८८] गणभोइएवि जुंगिते संवरमादी मुहा अनिच्छंते ।
अनुसद्विं अदसादी तहिं समं तो विविंचेउ ।।

वृ- तुल्यवयसामपि संयतीनामभावे मल्लगणं वा हस्तिपालगणं वा कुंभकारगणं वा समुपतिष्ठति ततो यान् तं सहायान् ददति तैः समं परिष्ठापयति । गणानामभावे भोजिकं ग्राममहत्तरमुपतिष्ठते, । ततो यान् सहायान् ददाति तैः सह परिष्ठापयति । तत्रापि सहायानामलाभे ये जुङ्गिका हीनजातयो हीनकर्माणश्च सम्बरादयश्च सम्बराः कचवरोत्सारका आदिशब्दान्नखशोधकाः स्नानकारकक्षालप्रक्षालकादि परिग्रहस्तेषामनुशिष्टिं ददाति । ततस्तैः सहायैः परिष्ठापयति । अथ ते मुधानेच्छन्ति तदा येऽन्ये जातिजुङ्गिका वरुडादयस्तेषामनुशिष्टिं ददाति । अथ तेऽपि मुधानेच्छन्ति तदा तेषामदशानि वस्त्राणि मूल्यं दीयते । अदशानामनिच्छायां सदशान्यपि ततस्तैः समं विवेचयत् ।

[भा.३२८९] अथ रुंभिज्जदारद्वे मुल्लं दारुण दीनहा ।
अनुसद्वादितु तहियं अनो वा भणती जती ।।

वृ- तस्मिन् कालगते कदाचित् रात्रौ नीयमाने द्वारस्थो द्वारं न दद्यात् । यदि किञ्चित्प्रयच्छ ततो निष्काशं ददामि । क्वचिद्देशे पुनरयमाचारो दिवसेऽपि मृतं द्वारपालस्य किंचित् दत्वा निष्काश्यते । तस्य रुन्धतोऽनुशिष्टिः कर्तव्या । आदिशब्दात् धर्मकथापि । तत्र यदि नेच्छति ततो यद्यन्यः कोऽपि धर्मकथामनुशिष्टिं वा श्रुत्वा ब्रूते । किं ब्रूते इत्याह-

[भा.३२९०] मुंच दाहामहं मुल्लं उवेहं तत्थ कुव्वती ।
अदसादीनि वा देती असतो साहारणं वदे ।।

[भा.३२९१] जइ लद्धामो अनेमो अलद्धे तं वियापतो ।
सो वि लोगरवाभीतो मुंचते दारपालतो ।।

वृ- मुञ्चामुं साधुमहं ते मूल्यं दास्यामि । तत्रोपेक्षां साधुः कुरुते न तं मूल्यं प्रयच्छन्तं वारयति । अथान्यः कोऽपिनैवं भणति तदा अदशानि वस्त्राणि ददाति तेषामनिच्छायां सदशान्यपि अथ वस्त्राणि सदशान्यदशानि वा सन्ति तदा तेषामभावे साधारणं वदेत् । तथाहि यदि लप्स्यामहे तत् आनेष्यामो अलाभे त्वमेतस्य कलेवरस्य विज्ञायक एवं साधारणे उक्ते सोऽपि द्वारस्थो लोकरवभीतो नियमात्मुञ्चति अमोचने तत्रैव मुक्त्वा वस्त्रोत्पादनाय गच्छन्ति । गत्वा अन्तं प्रान्तं वा वस्त्रमानयन्ति । अलाभे सोऽपि द्वारपालो मृतकेन हील्यते ततो मुहूर्तानन्तरं स स्वयमेव मुञ्चति अज्ञातविषयेऽपवादमाह-

[भा.३२१२] अन्नाए वावि परलिंगं जयणाए काउ वच्चंती ।
उवयोगठ नाऊणं एसविही असहायए ।।

वृ- अथवा अज्ञाते अपरिचये ग्रामरूपयतना कालगतस्य परलिङ्गं कृत्वा व्रजति । कया यतनयेत्याह- उपयोगार्थं ज्ञात्वा एतावता कालेन तस्य कालगतस्य उपयोगलक्षणोऽर्थोऽभूत् । नातः परं परलिङ्गकरणेऽपि कश्चिद्दोष इति ज्ञात्वा एषविधिरसहायेष्वसहायस्य एकाकिनो द्रष्टव्यो न तु द्विप्रभृतीनामपि ।

[भा.३२१३] एएण सुत्ते न गयं सुत्तनिवा तो उ पंथगामे वा ।
एगो व अनेगो वा हवेज्ज वीसंभिया भिक्खू ।।

वृ- यदेतद्व्याख्यानमेतेन न सूत्रं गतं किन्तु सामाचारी प्रकाशननिमित्तं सर्वमेतद्व्याख्यातं । सम्प्रति यदधः प्रतिपादितः सूत्रनिपातः पथि ग्रामे वेति तदिदानीं व्याख्यायते । एको वा अनेके वा भवेयुर्विष्वग्भूता भिक्षवः । इयमत्र भावना- अत्र चत्वारो भङ्गाः एकेन साधुना एकः कालगतो दृष्टः १ एकेनानेके २ अनेकैरेकः ३ अनेकैरनेके ० ४ । तत्र प्रथमभङ्गमधिकृत्य विधिमाह-

[भा.३२१४] एगाणियं तु गामे दट्ठुं सोउं विगिंचण तहेव ।
जा दारुरुंभणं तू एसो गामे विही वुत्तो ।।

वृ- ग्रामे एकाकी एकाकिनं कालगतं संविग्नमसंविग्नं वा दृष्ट्वा श्रुत्वा वा विवेचनं परिष्ठापनं तथैव कुर्यात् यथोक्तमनन्तरं तावत् यावत् द्वारे निरोधनम् । एवं शेषेष्वपि भङ्गेषु संविग्नशरीरं वाऽसंविग्नशरीरं वा प्रागुक्तेन विधिना परिष्ठापयितव्य एष ग्रामे विधिरुक्तः सम्प्रति पथि विधिमभिधित्सुराह-

[भा.३२१५] एमेव य पंथंमि वि एवमनेगे विगिंचणा विहिना ।
एत्थं जो उ विसेसो तमहं वुच्छं समासेणा ।।

वृ- एवमेव अनेनैव प्रागुक्तेन प्रकारेण पथ्यपि एकस्यानेकस्य च विधिना विवेचना परिष्ठापना द्रष्टव्या । नवरमत्र यो विशेषस्तमहं समासेन वक्ष्ये ।

[भा.३२१६] एगोएगं पासति एगो नेगे नेगे एगं ।
नेगानेगे तेपुन संविग्ग तरेव जे दिट्ठा ।।

वृ- तत्र एकोऽनेक प्रतिपादनार्थमाह- दिठा एक एकं पश्यतीति प्रथमो भङ्गः १, एकोऽनेकान् २, अनेके एकं ३, अनेके अनेकान् ४ । तत्र ये दृष्टास्ते संविग्ना भवेयुरसंविग्ना वा सर्वथा परिष्ठापना कर्तव्या । अन्यथा प्रवचनोपघातसंभवात् । सम्प्रति विशेष प्रतिपादनार्थमाह-

[भा.३२१७] वीइक्कंते भिन्ने नियट्टे सोऊण पंथविपयाई ।
मिच्छत्त अन्न पंथेण कहणा ज्झामणाजं च ।।

वृ- व्यतिक्रान्तं व्यपगतजीवमिति भावः । भिन्नंश्वादिभिर्विकीर्णं कुथितमकुथितं वा तस्मिन् व्यतिक्रान्ते भिन्ने उपलक्षणमेतत् । अभिन्ने वा श्रुते निवृत्य यथोक्तविधिना तत्परिष्ठापयेत् । यदि पुनः श्रुत्वा एकमपि पदं गच्छति तदा आज्ञादीनि पञ्चापि पदानि तस्य प्रसजन्ति, न केवलमाज्ञादीनि पञ्चपदानि किन्त्वन्यान्यपि मिथ्यात्वादीनि प्रसजन्ति । तद्यथा श्रुत्वा यदि परिष्ठापना भयादन्यपथेन उन्मार्गेण वा अन्यथा ग्रामाभिमुखं व्रजति तदा न स यथा वादकारीति तस्य मिथ्यात्वं, कड्ढणत्ति गृहस्थाद्याकर्षणे यत्प्रायश्चित्तं तदपि प्राप्नोति । तथा झामणेत्ति ध्यामनं अग्निकायेन यदि तस्य कलेवरस्य क्रियते तदा ध्यामननिष्पन्नमपि प्रान्तस्य प्रायश्चित्तमापद्यते । यच्चान्यत्तदपि प्राप्नोति । किं तदिति चेत् यावन्तः प्राणा विमूर्च्छंति तावन्तो विराध्यन्ते । यावन्तश्चागन्तुकाः प्राणविराधनामाप्नुवन्ति तत्सर्वमपरिष्ठापयन् प्राप्नोति । अथवा श्रुत्वा पदमात्रातिक्रमेऽपि पञ्चापि पदानि प्राप्नोति । कानि तानीत्यत आह मिथ्यात्वमयथावादकारित्वात्, अन्यपथेन व्रजने तन्निमित्तं प्रायश्चित्तं २ गृहस्थादिभिः कर्षणं तन्निष्पन्नं ३ अग्निकायेन दहने तद्धेतुकं ४ यच्चान्यत्संमुर्च्छितागन्तुकप्राण जाति विराधना, जं तदपि ५ ।

[भा.३२९८] तं जीवातिक्कंतं भिन्नं कुहितेयरं व सोऊणं ।
एगपयंपिनियत्ते गुरुगामग्गमादिवा ।।

वृ- तत्कलेवरं जीवातिक्रान्तं व्यतिक्रान्तमुच्यते; । भिन्नं श्वादिभिर्विकीर्णं तच्च कुथितमकुथितं वा उपलक्षणमेतत् अभिन्नं वा श्रुत्वा एकपदमपि न गच्छति किन्तु निवर्तते । अन्यथा एकपदातिक्रमेऽपि प्रायश्चित्तं चत्वारो गुरुकाः । उन्मार्गादौ वा प्रत्येकं प्रायश्चित्तं चत्वारो गुरुकाः ।

[भा.३२९९] आणादी पंचपदे नियत्तणे पावए इमे ।
अन्नोमिच्छत्तादीवपदे कमविक्खेवावजे पंच ।।

वृ- न केवलमनिवर्तने प्रायश्चित्तं किन्त्वाज्ञादीनि पञ्च पदानि प्राप्नोति । तद्यथा आज्ञा १ नवस्था २ मिथ्यात्व ३ आत्मविराधना ४ संयमविराधना ५ च । न केवलममूनि पदानि किन्त्वमून्यपि मिथ्यात्वादीनि पदान्यन्यानि प्राप्नोति । तानि च प्रागेव विभावितानि अथवा पञ्चापि पदानि प्राप्नोति इत्युक्तं । तत्र तान्येव पञ्चपदानि द्वारगाथया दर्शयति-क्रमविक्षेपात्पादविक्षेपाद्यानि पञ्चपदानि मिथ्यात्वादीनि मिथ्यात्वमन्यपथेन प्रव्रजनं २ गृहस्थादिभिराकर्षणं ३ अग्निकायेन दहनं ४ यच्चान्यत्संमूर्च्छितागन्तुकप्राणजातिविराधनमिति तानि प्राप्नोति तदेवं पञ्चपदानि तस्य व्याख्यानं द्विधा कृतं सम्प्रति कर्षणपदं यच्चेति पदं च व्याख्यानयति ।

[भा.३३००] गोणादिजत्तिया लोय पाणजादीउ तत्थ मुच्छंति ।
आगंतुगाय्पाणाजं पावेते तयं पावे ।।

वृ- गवादयो यत्समाकर्षयन्ति यावन्तो वा प्राणजातयस्तत्र कलेवरे मूर्च्छन्ति । आगन्तुका वा प्राण यत्प्राप्नुवन्ति तदेतत्सर्वं सोऽनिवर्तमानः प्राप्नोति शेषपदानि सुगमानीति कृत्वा न व्याख्यातानि ।

[भा.३३०१] दट्ठुं वा सोउं वा अव्वावन्नं विगिंचए विहिना ।
वावन्ने परलिंगं उवहीनातो अनातो वा ।।

वृ- पथि कालगतं दृष्ट्वा यदि कालगत इति अन्यतः श्रुत्वा यदि तत्कलेवरमव्यापन्नम-विभिन्नमित्यर्थस्ततः पूर्वोक्तेन विधिना विवेचयेत् । अथ स एकाकी ततः परिष्ठापयितुं न शक्नोति यदि वा शक्नोति परं बहवो मृतास्ततः परलिङ्गं कृत्वा व्रजति । अथ तत् व्यापन्नं तदा तस्मिन्परलिङ्ग

कर्तव्यं । परलिङ्गकरणं नाम यस्तस्योपधिग्रहणं । स चोपधिर्द्विधा-ज्ञातोऽज्ञातो वा । ज्ञातो नाम यथैतत्सांभोगिकस्य साधोरुपकरणमज्ञातो नाम यो न ज्ञायते किमेष सांभोगिकस्य साधोरुपकरणं किंवा असांभोगिकस्येति । तत्र ज्ञातोऽज्ञातो वा तस्योपधिर्गृहीतव्यः । अथ कस्मात्परलिङ्गं क्रियते तत आह-

[भा.३२०२] मानं पिच्छंति बहूइति नाएवी करेइ परलिंगं ।
गहिउंमि वि उवगरणे परलिंगं चेव तं होइ ।।

वृ- मा अमुं बहवोज [illegible] इति कृत्वा ज्ञातेऽपि [illegible] परलिङ्गं क्रियते । किंतत्परलिङ्गकरणमिति चेदत आह-गृहीते चोपकरणे परलिङ्गमेव तद्भवति साधुलिङ्गाभावात् । सम्प्रति ज्ञातस्य वाऽज्ञातस्य चोपधिग्रहणे विधिमाह-

[भा.३२०३] सागारकडे एक्को मणुन्नदिन्नो गहो भवे बिइतो ।
अमणुन्ने अप्पिणतो न गेण्हती दिज्जमाणं पि ।।

वृ- सागारकृतं नाम यत्स्वयं नात्मामार्थीकृतं किन्त्वाचार्या एतस्य विज्ञायका इति बुद्धया परिग्रहीतं तस्मिन् सागारकृते एकःप्रथमोवग्रहः । यदि सांभोगिकस्योपधिरयमिति ज्ञातस्तदा आचार्यसमीपं गत्वा निवेद्य आचार्यस्य समर्पयति । तत्र यद्याचार्यो ब्रूते त्वमेवामुमुपधिं परिभुंक्ष्व ततो मस्तकेन वन्दे इति भणित्वाऽन्येषां साधूनां निवेदयति । यथा क्षमाश्रमणैरेतत् वस्त्रं पात्रं वा मह्यं दत्तमिति ततस्ते ब्रुवते-आरोग्यधारणीयं क्षमाश्रमणानां गुणैर्वर्धस्व । एवंमनोज्ञस्य सांभोगिकस्योपधेर्दत्तस्यावग्रहो द्वितीयः । अथामनोज्ञस्य स उपधिस्तर्हि तं गुरोः समर्पयति । तं च गुरुणा दीयमानपि न गृह्णाति । असांभोगिसत्कस्यात्तर्हि कथं तत्कर्तव्यमित्याहः-

[भा.३२०४] इयरे सिं घेत्तूणं एगं ते परिठवेज्जविहिना उ ।
अन्नए संविग्गो बहिंमि कुज्जाउ घोसणयं ।।

वृ- इतरेषामसांभोगिकानां लिङ्गमात्रोपजीविनां वा संबन्धी यदि ज्ञातोभवति, तर्हि आचार्याणां तथैव निवेदनीयं, । तत्र यद्यन्त उपधिर्नास्ति ततः कारणे आचार्यो ब्रूते परिभुंक्ष्वामुपधिमिति । तेन च तथेति प्रतिपत्तव्यं । अथान्य उपधिः समस्ति तदा सूरिवचनात्तं गृहीत्वा एकान्ते परिष्ठापयेत् । अथ न ज्ञातो भवति किमयमुपधिः संविज्ञानामिति तदा अज्ञाते संविज्ञोपधौ विधिना घोषणां कुर्यात् ।

मू. (१८१) *सागारिए उवस्सयं वक्कएणं पउंजेज्जा, सेयवक्कइयं वएज्जा इमम्हिय इमम्हिय ओवासे समणा निग्गंथा परिवसंति से सागारिए पारिहारिए, सेयनोवएज्जा वक्कइए वएज्जा, से सागारिए पारिहारिए दोवितेवएज्जा दोविसागारिया पारिहारिया ।*

मू. (१८२) *सागारिए उवस्सयविक्किणेज्जा, सेय कइयंवएज्जा इमम्हिय इमम्हिय ओवासे समणानिग्गंथा परिवसंति, से सागारिए, पारिहारिए, सेयनोवएज्जा कइए वएज्जा सेसागारिए पारिहारिए दोविते वएज्जा दोविसागारियापारिहारिया ।।*

वृ- सागारिए उवस्सय इत्यादि सूत्रद्वयं । अस्य सम्बन्धमाह-

[भा.३२०५] उग्गह एव अहिकितो इमे उ सुत्ताउ ऊग्गहो चेवं ।
साहम्मिय सागारिय नाणत्तमिणं दुवेण्हंपि ।।

वृ- अवग्रहः पूर्वसूत्रेऽधिकृते इमे अपि चाधिकृते द्वे अपि सूत्रेऽवग्रहप्रस्तावादस्य सूत्रद्वयस्यात्रोपन्यासो नवरं पूर्वसूत्रे साधर्मिक उक्तोऽस्मिन्सागारिकः शय्यातर इति नानात्वं द्वयोरपि तदेवमुक्त

सम्बन्धोऽनेन सम्बन्धेनायातास्य व्याख्या सागारिक शय्यातर उपाश्रयमवक्रयेण कियत्कालं भाटकप्रदानेन प्रयुञ्जीत व्यापारयेत् स च सागारिकोऽवक्रियकं भाटकेन प्रतिग्राहिकं वदेत् । अस्मिन् अस्मिन् अवकाशे श्रमणा निर्ग्रन्थाः परिवसन्ति तस्मादेतत्परिहारेण त्वया भाटकेन गृहीतव्यमेवमुक्ते स सागारिकस्त्वया परिहार्यः परिहर्तव्यः । अथ तेन पूर्वस्वामिना सागारिकेण सर्वमपि भाटकेन प्रदत्तं ततो न किमपि वदेत् । केवलमवक्रियको वदेत् । अस्मिन्नस्मिन्नवकाशे श्रमणा निर्ग्रन्था परिवसंतु तदा अवक्रियकः शय्यातर इति परिहार्यः परिहर्तव्यः । अथ द्वावपि वदेयातां यथा पूर्वस्वामिनोक्त-मेतावत्येकदेशे श्रमणाः [illegible] इत्युक्ते अवक्रियको ब्रूयादेतावति मदीयेऽपि प्रदेशे तिष्ठन्तु एवं विक्रिय सूत्रमपि भावनीयं । तदा द्वावपि तौ सागारिकौ शय्यातराविति परिहार्याविति सूत्रद्वयाक्षरार्थः । सम्प्रति भाष्यकारः -

[भा.३३०६] वक्कइयसालट्ठाणे चउरो मासा हवंति तनुग्घाया ।
दियरातो असिवा पुन भिक्खगते भुंजणगिलाणे ।।

वृ- वक्रयेण कियत्कालं भाटकप्रदानेन निवृत्ता वाक्रयिकी सा चासौ शाला च वाक्रयिकशाला तद्रूपे स्थाने शालाग्रहणमुपलक्षणं तेनापद्वारिकास्थाने वा गृहे वा इत्यपि द्रष्टव्यं यदि तिष्ठन्ति साधवस्तदा तेषां प्रायश्चित्त चत्वारो मासा अनुद्घाता गुरवो भवन्ति यतस्तत्र इमे दोषाः । सा शाला अपद्वारिका पूर्वं संयतानां दत्वा पश्चात्कोऽपि ग्रहणाय रुपकान् ददाति । ममेमां शालामपद्वारिकां गृहं वा कियत्कालं भाटकेन प्रयच्छ ततः सरुपकलोभेन संयतान् निष्काशयेत् । यदि वा रात्रौ वा उभयत्रापि निष्काशने स्पर्धकपतेराचार्यस्य वा प्रत्येकं प्रायश्चित्तं चतुर्गुरुकं रात्रौ निष्काशनेश्वश्वापदद्विविधस्तेनतोऽशिवापन्नं विनाशप्राप्तिरित्यर्थः । अन्यां च वसतिं मार्गयतामप्यलभ्यमानानां जनगर्हा यथैतेषां शुभं कर्म ततः पूर्वोपाश्रयादपि न निष्काशयेरन् । अन्यां वा वसतिं लभेरन् । भिक्खगयत्ति संयता एकं वसतिपालं मुक्त्वा शेषा भिक्षार्थं गताः । पश्चात्स एकाकी वसतिपालो निष्काश्येत । भुंजणत्ति भोक्तुकामा वा निष्काश्येरन् । तत्र चोभयत्रापि जनगर्हा ग्लानो वो कोऽपि वर्तते सोऽकाण्डे निष्काशितः कथं क्रियते । तदेवं शालामधिकृत्योक्तमिदानीमुपलक्षणव्याख्यानसूचितान्यपद्वारिकां गृहं च वाक्रयिकमधि-कृत्योक्तदोषयोजनां साक्षादाह-

[भा.३३०७] उवरिं च गिहं वावि वक्कएण पउंजए ।
पउत्तेतत्थ वाघातो विनासगरिहा धुवा ।।

वृ- अपद्वारिकां गृहं वा यत् शय्यातरो वक्रयेण प्रयोजयति तत्र स्थाने तदेव पूर्वोक्तं प्रायश्चित्तं यतो वक्रयेण प्रयुक्ते तत्र गृहादौ बलादकाण्डनिष्काशने सूत्रार्थव्याघातो रात्रौ निष्काशने श्वश्वापदस्तेनैर्विनाशोऽन्यवसत्यलाभे भिक्षागतादिनिष्काशने वा ध्रुवा लोगे गर्हा । एतच्च सर्वं प्रागेव भावितमिति न भूयो भाव्यते ।

[भा.३३०८] एगदेसंमि वा दिन्ने तन्निस्सहोज्ज तेनगा ।
रसालदव्वगिद्धा वा सेहमादीउज्जं करे ।।

वृ- शालाया अपद्वारिकाया गृहस्य वा एकदेशे दत्ते अन्तरा कटके प्रक्षिप्ते यदि तिष्ठन्ति तदा तन्निश्रयाः संयतनिश्रयाः स्तेनकाश्चौरा भवेयुः । संयतेषु कायिकभूमिं गतेषु स्तेनाः प्रविश्य गृहस्थानां भाण्डकमपहरेयुरथवा रसालं रसवत्यत्तत्तत्र द्रव्यं तद्गृद्धाः शैक्षकादयो वा यत्कुर्युं तत्कुर्युः । ततो गृहस्थेन

संयता वा शंक्यंते यथा नूनमेतैरस्मद्भाण्डमपहृतमथवा एतेषां द्वारेण स्तेनैरपहृतं यदि वा एतैरेव संयतैः कस्यापि दुस्थितस्य सम्प्रदत्तमिति । एवं शङ्कायां स विनाशं वा कुर्यात् । यदि वा राजकुलेऽन्यत्र वा नीत्वा वा ग्रामबृहत्पुरुषपार्श्वे कर्षणं तत्र भूयसी जनगर्हेति-

[भा. ३३०९] पेहाविया स्झायादी जे य दोसा उदाहिया ।
अच्छंते ते भवे तत्थ वयए भिन्नकप्पता ।।

वृ- ये दोषाः पूर्वं कल्पाध्ययने मद्योदकधान्यसालादिषु सागारिके चोपाश्रये प्रेक्षायां विचारभूमौ स्वाध्यायादौ वाऽभिहितास्ते तत्र शालादीनामेकदेशे तिष्ठति भवेयुरथैतद्दोषभवादन्यत्र व्रजति तर्हि भिन्नकल्पता दोषा मासकल्पे वर्षाकालकल्पे वा अपरिपूर्ण एव सति निर्गमात् ।

[भा. ३३१०] भिक्खं गतेसु वा तेसु वक्कति बेति नीहमे ।
नीनिएवा विपाले नं उवहिस्सासिवावणा ।।

वृ- भिक्षां गतेषु वा तेषु साधुषु वक्रयीभाटकेन गृहीतशालादिको ब्रूते । यथा निर्गच्छत यूयं मम गृहात्तदा भिक्षाटन व्याघातस्तत्कालमन्यवसत्यलाभेजनगर्हा सूत्रार्थव्याघातश्च । अथवा तेषु भिक्षांगतेषु पश्चादागत्य वसतिपालं निष्काशयन्ति तस्मिन् निष्काशने नमिति वाक्यालङ्कार उपधेः स्यादशिवापन स्तेनैरपहरणं विस्मरणतो वा नशनमिति ।

[भा. ३३११] अहवा भरियमाणाउ आगत जइ निच्छुभे ।
भत्तपानविनासोउ भुञ्जएसागते इमे ।।

वृ- अथ भक्तभृतभाजनानागतान् यदि निष्काशयति तदा गृहीतभक्तपानं विनाशी गतं भिक्षाद्वारमधुना भोजनद्वारमाह अथ भुञ्जानेषु स वक्रयी समागतस्तदा इमे वक्ष्यमाणा दोषाः तानेवाहः-

[भा. ३३१२] जिया अड्डि सरक्खावि लोगो सव्वोविवोट्टितो ।
पगासिए य अन्नेसिं हीला होइ पवयणे ।।

वृ- साधून् साधुक्रियया भुञ्जानान् दृष्ट्वा स विपरिणतभावो ब्रूते जिता एतैरस्थिसरजस्का अपि कापालिकास्तेभ्योऽप्यमी हीनाचारा इति भावस्तथा लोकः सर्वोऽप्येतैः पाणकैरिवैकत्र भुञ्जानैर्वोटितो विट्टालितो न केवलं स एवं तत्र ब्रूते-किन्त्वन्येषामपि जानानां स प्रकाशयति, प्रकाशिते वान्येषां प्रवचनस्य हीला भवति तदेवं भुंजणत्ति व्याख्यातमधुना ग्लानद्वारमाह-

[भा. ३३१३] सीयवायाभितावेहि गिलाणो जंतु पावई ।
अमंगलं भउक्खित्ते ठाणमन्नोवि नो दए ।।

वृ- शीतेन वातेन अभितापेन च यत् ग्लानो आगाढादि परितापनं प्राप्नोति तन्निष्पन्नं स्पर्धकपतेराचार्यस्य वा प्रायश्चित्तंतथा तैर्निष्काशितैर्ग्लान उत्क्षिप्तस्तस्मिन् उत्क्षिप्ते वसतिमन्यां मार्गयतां मृतोऽयमित्यमङ्गलमितिकृत्वा मारिस्पृष्टोऽयमिति भयेन वाऽन्योऽपि कश्चित्स्थानं न ददाति ।

[भा. ३३१४] गहिते उत्थाणरोगेन अच्छंते नीनियंमि वा ।
वोसरियंमि उड्डाहो धरणे चायविराधना ।।

वृ- तथा ग्लाने उत्थाणरोगेणातीसाररोगेण गृहीते तिष्ठति निष्काशिते वाऽतीसारे दोषस्तथा चाह-व्युत्सृष्टे उड्डाहो धरणे चात्मविराधनामरणगाढतरग्लानस्य वा भावात् । उपसंहारमाह-

[भा. ३३१५] एए दोसा जम्हा तहियं होंति उठावमाणाणं ।

तम्हा न ठायव्वं वक्कयसालाए समणेहिं ।।

वृ- यस्मात्तत्र वक्रयशालादौ तिष्ठतामेते अनन्तरोदिता दोषा भवन्ति तस्मात्तस्यां वक्रयशालाया-मुपलक्षणमेतत् वक्रयापद्वारिकायां वक्रयगृहे वा श्रमणैर्नस्थातव्यं । अत्र परस्यावकाशमाह-

[भा.३३१६] एवं सुत्तं अफलं सुत्तनिवातो उ असती वसहीए ।
बहियावि असिवादी उ कारणे तो न वच्चंती ।।

वृ- यदि नाम वक्रयशालादौ न स्थातव्यं तर्हि सूत्रमधिकृतमफलं सूत्रे वक्रयेऽपि श्रमणानामवस्था-नानुज्ञानात् सूरिराह-नेदं सूत्रमफलं । यतोऽयमुक्तो निर्गतोऽवकाशो वसतेरन्यस्या अभावे बहिरपि निर्गच्छतामशिवादिकं कारणं ततो न व्रजन्ति किन्तु तत्रैव वक्रयशालादौ तिष्ठन्ति । तत्र यतनामाह-

[भा.३३१७] एएहिं कारणेहिं ठायंताणं इमो विही तत्थ ।
च्छिंदंति तत्थकालं उउबद्धे वासवासे वा ।।

वृ- एतैरनन्तरोदितैरन्यत्र वसत्यलाभे बहिरशिवादिलक्षणैस्तत्रा वक्रयशालादौ तिष्ठतामयं वक्ष्यमाणो विधिस्तमेवाह-तत्र कालं च्छिन्दन्ति ऋतुबद्धे वर्षावासे वा इयमत्र भावनाऋतुबद्धे शय्यातरं प्रति भण्यते-यदि सम्पूर्णं मासं ददासि । वर्षाकाले भण्यते-यदि चतुरो मासान् ददासि तर्हि तिष्ठामोऽथ न ददासि तर्हि न तिष्ठामः । एतदेवाह-

[भा.३३१८] मासचउमासियं वा न विनिच्छोढव्वा उ अम्हे नियमे न ।
एवं च्छिन्नठियाणं वक्कइतो आगतो हुज्जा ।।

वृ- ऋतुबद्धे काले मासं वर्षाकाले चातुर्मासं नियमेन वयं न निष्काशयितव्याः । एवं च्छिन्नकाले शय्यातरेण तथैव प्रतिपन्ने तिष्ठन्ति तेषां च तथा तिष्ठतां वक्रयिको वक्रयेण ग्राही आगतो भवति ।

[भा.३३१९] दिन्नावचुगएणं अहवा लोभा सयंपि देज्जाहि ।
अनुलोमिज्जइ ताहे अदेंते अनुलोमे वक्कइयं ।।

वृ- स शय्यातरो वसतिं दत्वा प्रवसितः पश्चात्पुत्रस्य समीपं वक्रयी समागतः स ब्रूते-यत्र संयता-स्तिष्ठन्ति तम्मे भाटकेन प्रयच्छ सा वसतिर्दत्ताभूत् । केन पुत्रेण अथवा स शय्यातरः प्रभूतभाटकलोभेन स्वयमपि वक्रयिणो दद्यात् दत्वा च निष्काशयेत् । तत्र यद्यन्या वसतिर्लभ्यते तर्हि न तत्र स्थातव्यं अन्यवसत्यलाभे स धर्मकथया अनुलोम्यतेऽनुकूलः क्रियते । अथ स धर्मकथयानुलोमो न भवति तर्हि यस्तस्यार्हतो गरीयान् पितामहमातामहप्रभृतिकस्तेनानुलोमी क्रियते । अथैवमपि स न ददाति स्थातुं तर्हि तस्मिन्नददति वक्रयिकमुक्तप्रकारेणानुलोमयेत् ।

[भा.३३२०] तंमिवि अदेंते ताहे च्छिन्नमच्छिन्नेव नेंति उउबद्धे ।
वासासु ववहारो उउबद्धे कारणज्जाते ।।

वृ- तस्मिन्नप्यवक्रयिणि पूर्वप्रकारेणानुलोभ्यमानेऽप्यददति ऋतुबद्धे काले च्छिन्ने अच्छिन्ने वा परिपूर्णेऽपूर्णे वा अवधौ निर्गच्छन्ति वर्षाकाले यद्यन्यः कोऽपि साधूनामनुकल्पको न विद्यते । यो वसतिं प्रयच्छति तर्हि गत्वा राजकुले व्यवहारः कर्तव्यः । न केवलं वर्षासु किन्तु ऋतुबद्धेऽपि काले कारणजाते सति कर्तव्यः, कारणजातमेव पृच्छति ।

[भा.३३२१] किं पुन कारणजातं असिवोमादी उ बाहिं होज्जाहि ।
एएहिं कारणेहिं अनुलोमनुसट्ठि पुव्वं तु ।।

वृ- किं पुनः कारणजातं यद्वशात् ऋतुबद्धेऽपि काले व्यवहार आश्रीयते । अशिवावमौदर्यादिकमादिशब्दात् म्लेच्छपरचक्रादि भयपरिग्रहो बहिः कारणजातं भवेत् ? तत एतैः कारणैर्ऋतुबद्धेऽपि काले पूर्वमनुशिष्ट्यानुलोमनं क्रियते । कथं क्रियते इत्याह

[भा.३३२२] सगिं जंपंति रायाणो सगिं जंपंति धम्मिया ।
सगिं जंपंति देवावि तंपि ताव सगिं वदा ।।

वृ- सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति धार्मिकाः सकृज्जल्पन्ति देवा अपि, त्वमपि तावत्सकृद्वदसि ततः स्वयमुक्त्वा कथमकस्मान्निष्काशयसि ।

[भा.३३२३] अनुलोमिए समाणे तं वा अन्नं वज्जइ उ देज्जाहि ।
अनो वनुकंपाए देज्जाहीवक्कयं तस्स ।।

वृ- एवमुक्तेन प्रकारेणानुलोमिते सति तामन्यां वा यदि वसतिं दद्यात् यदि वा अन्योनुकम्पया तस्य वक्रयं भाटकं दद्यात् ।

[भा.३३२४] अन्नं व देज्ज वसहिं सुद्धमसुद्धं च तत्थ ठायंति ।
असती पुरुसा विज्जइ ननीमी दाउण को तंसि ।।

वृ- अन्यां वा वसति मन्योऽनुकम्पया दद्यात् किं विशिष्टामित्याह-शुद्धामशुद्धां वा शुद्धां विशुद्धय विशुद्धि कोटिरहितामशुद्धां विशुद्ध्य विशुद्ध कोटिदूषितां वा तत्र तिष्ठन्ति अथ स तामन्यां वा वसतिं न ददाति नापिकोप्यन्यो भाटकं शुद्धामशुद्धां वसतिं, तदाऽसति एकस्या प्युक्तरूपस्य प्रकारस्याभावे स पुरुषते पोरुषी क्रियते कथमित्याह छिन्न कालां वसतिं दत्वा संप्रत्य सम्पूर्ण एव काले अस्मान्निष्काशयसि न निर्गच्छामः । कः स्वं वसतिं दत्वा साम्प्रतमसि दत्वा दानमनीश्वर इति वचनात् अथ किञ्चिक्तव्यं तर्हि राजकुले गच्छामः एवं परुषितो यदि तिष्ठति ततः सुन्दरमथ न तिष्ठति तदा राजकुले गन्तव्यं ।

[भा.३३२५] रायकुले ववहारे चाउम्मासं तु दाउनिछुभती ।
पच्छाकडाय तहियं दाऊण भणीसरो होति ।।

वृ- राजकुले गत्वा व्यवहारः क्रियते । कथमित्याह-चतुर्मासं दत्वा एषोऽस्मान्निष्काशयति तत्र राजपुरुषैर्दत्वा दानमनीश्वरो भवतीति न्यायमनुसरद्भिः पश्चात्कृतः ।

[भा.३३२६] पच्छा कडो भणेज्जा अच्छउ भंडं इहन्निवायंमि ।
अहयं करेमि अन्नं तुब्भं अहवा वि तेसिं तु ।।

वृ- स उक्तप्रकारेण राजकुले पश्चात्कृतः सन् ब्रूयात् इह यत्र यूयं तिष्ठथ च तत्र निवाते भाण्डं क्रयाणकं तिष्ठतु अन्यथा कोपिष्यति । युष्माकं पुनरन्यां वसतिं करोमि । अथवा तेषां क्रयाणकानां योग्यमन्यत्स्थानं करोमि ।।

[भा.३३२७] असती अन्नाए ऊ ताहे उवेहा न पच्चनीयत्तं ।
ठायंति जत्थ जंपति चोए कम्मादि तहिं दोसा ।।

वृ- एवमुक्ते यदान्या वसतिः प्राप्यते तदा तत्र गन्तव्यमथान्या वसतिनास्ति तदाऽन्यस्या वसतेरभावे उपेक्षा कर्तव्या । किमुक्तं भवति ? यद्यन्यां वसतिं क्रीत्वा ददाति अविशोधिकोटिकृतां वा तदा तत्रापि स्थातव्यं न पुनः तत्रैवास्माभिः स्थातव्यमित्याग्रहपरतया तस्य प्रत्यनीकत्वमुत्पादनीयं स हि प्रत्यनीकीकृत्यः सन् साधूनामन्यस्य वसतिदायकस्य वा प्रतिकूलमाचरेत् । अत्र चोदको जल्पति ।

यत्र तिष्ठन्ति साधवस्तत्रकर्मादय आधाकर्मादियो दोषाः आदिशब्दान्मिश्रक्रीतादि दोषपरिग्रहः ।

[भा.३३२८] भन्नइ निंताण तहिं बहिया दोसा उ बहुतरा हुंति ।
वासासु हरिय पाणा संजमे आयाए कंटादी ।।

वृ- भण्यते अत्रोत्तरं दीयते । ऋतुबद्धे काले निर्गच्छतां तत्र यदि बहुतरा दोषा अशिवाद्युपद्रवलक्षणा भवन्ति, वर्षाकाले निर्गच्छतां संयमविराधना आत्मविराधना स (च) तत्र यत् हरितकायोपमर्दनं द्वीन्द्रियादिप्राणाक्रमणं वा, सा संयमे संयमस्य विराधना, कण्टकादिभिरात्मनो विराधना, । तदेवं च्छिन्ने काले तिष्ठतां विधिरुक्तोऽथ कालच्छेदो न कृतो अथ च वर्षाकालो वर्तते, अथवा ऋतुबद्धे काले बहिरशिवादि आगाढं कारणं तदा अन्यस्यां वसतौ गन्तव्यं न पुनः शय्यातरं प्रति किमपि वक्तव्यम् । अथान्या शुद्धा वसतिर्न प्राप्यते तदा विशोधिकोटिदूषितायां स्थातव्यं तस्या अप्यलाभे अविशोधिकोटि दूषितायां स्थातव्यमिति । सम्प्रति सागारिकक्रयिकयोः शय्यातरत्वचिन्तां कुर्वन्नाह-

[भा.३३२९] सोच्चिय पतरो तेसिं ठाणं तु मोत्तु जइ दिन्ने ।
अह पुन सव्वं दिन्नं तो वक्कई उ तरो ।।

वृ- शालगृहस्य वा अपवारिकाया वा अर्धं त्रिभागो वा वक्रयेण दत्तः शेषं संयतानां दत्तं यथा अत्र यूयं तिष्ठथ तत्र च साधवः सर्वेऽपि मान्ति, स एव स्वामी शय्यातरो भवति । अथ पुनस्तेन पूर्वस्वामिना सर्वमपि शालादि भाटकेन प्रदत्तं तदा निर्गच्छतः साधून् दृष्ट्वा यदि वक्रयी ब्रूते मा निर्गच्छत यूयमहं युष्माकमवकाशं दास्यामि । तर्हि सोऽवकाशं ददानो वक्रयीतरः शय्यातरः

[भा.३३३०] अह पुन एगपदेसे भणेज्ज अत्थह तहिं न मायंति ।
वक्कतिओ वेति इत्थं । अत्थहनो खित्ते भंडेणं ।।

वृ- अथ स पूर्वस्वामी भणेत् यथा यूयमस्मिन्नेकप्रदेशे तिष्ठथ तत्र च साधवो न मान्ति । ततोऽमातः साधून् दृष्ट्वा वक्रयिकोनुकम्पया ब्रूते । अत्र तिष्ठत यूयं न किं नोऽस्माकं भाण्डेन क्षिप्तेन प्रयोजनम् ।

[भा.३३३१] तहियं दोवितराऊ अहवा गेण्हेज्जणागइं कोई ।
दुल्लह अच्चग्घरं नाउ तहिं संकमइ तस्स ।।

वृ- तत्रानन्तरोक्ते प्रकारे द्वावपि शय्यातरौ अथवा कोऽपि चिन्तयति यदा भाण्डं नेष्यति तदा बहवः क्रयिका भविष्यन्ति ततोऽत्यर्धतरा शाला भविष्यति यदि बहुकेनापि मूल्येन दुःखेन लप्स्यते तत् दुर्लभामत्यर्धतरां वा शालां ज्ञात्वा अनागतं साधूनामनागमनकाले एव भाटकप्रदानेन गृह्णाति । एतच्च साधुभिरागतैर्ज्ञातं यथा शालाभाटकेनामुकस्यायत्ता जाता ततस्तं गत्वा याचन्ते सोऽपि ब्रूयात् ।

[भा.३३३२] जाव नागच्छते भण्डं ताव अत्थह साहवो ।
एवं वइक्कतो साहू भणंतो होइ सारितो ।।

वृ- यावन्नागच्छति भाण्डं तावत्साधवो यूयं तिष्ठथ, । एवं वक्रयिकः शय्यातरो भवति ।

[भा.३३३३] देसं दाऊण गतो गलभाणं जइछएज्ज वइक्कतो ।
अनोविनुकंपाए ताहे सागारितो तेसिं ।।

वृ- पूर्वस्वामी शालादेर्देशमेकं दत्वा काप्यन्यत्र गतो वर्षाकाले च स देशो गलति गलन्तं प्रदेशं वक्रयिकोऽन्यो वानुकम्पयाच्छादयति तदा स तेषां साधूनां सागारिकः शय्यातरः । एतदेव सविस्तरं -

[भा.३३३४] मुत्तूणं साधूणं गहितो पुन वक्कतो पउत्थंमि ।

हेठा उवरम्मि ठिते सीसंमि पडालि ववहारो ।।

**वृ-** साधूनामवकाशं मुक्त्वा तेन पूर्वस्वामिना शय्यातरेण वक्रयो भाटकं गृहीतः । गृहीत्वा च प्रोषितस्तस्मिन् प्रोषितेऽधस्तात् वक्रयिकस्य भाण्डमुपरि माले साधवः । अथवा अधस्तात् शालायां स्थिताः साधव उपरि माले वक्रयिकस्य दत्तं एतन्मिश्रमुच्यते । एवं मिश्रे रूपे मिश्रे स्थितानां यदा शालायां साधव उपरि माले वक्रयिकस्य भाण्डं तदा पडाली गलति भाण्डस्योपरीति न काचित्साधूनां क्षतिः । अथ वक्रयिकस्य भाण्डमधस्तात् शालायामुपरि माले तिष्ठन्ति साधवः । पडाली च गलति तदा वक्रयिकश्चिन्तयति । उपरि माले पडाली गलति तत्र साधूनां कष्टं मम त भाण्डमधस्तात् शालायां ततो न विनश्यतीति एवं चिन्तयित्वा पडाली न च्छादयति । तत्र यद्यन्योऽपि कश्चित् न च्छादयति तदा व्यवहारः कर्त्तव्यः व्यवहारेण छादयितव्य इति । एतदेवाह-

**[भा.३३३५]** हेट्ठाकयं वक्कइएण भंडं तस्सोवरिंवावि वसंति साहू ।
भंडं न मेउल्लइ मालवद्धे नोतं छयंतंमि भवेविवाओ ।।

**वृ-** अधस्तात् शालायां कृतं वक्रयिकेण भाण्डं तस्य भाण्डस्योपरि माले वसन्ति साधवस्ततो नाम भाण्डमस्मिन् माले बद्धेनार्द्रयते न तिम्यते । इति विचिन्त्य न तां पडाली च्छादयति । भवेद्विवादो व्यवहारो जायते कथमित्याह-

**[भा.३३३६]** वक्कइय छएयव्वे ववहारकयंमि यक्कयं बेंति ।
अकयंमि य साहीणं वेतितरं दाइयं वावि ।।

**वृ-** यदि पूर्वमवक्रयकाले एवं वागन्तिको व्यवहारः कृतो यः वक्रयिकेण छादयितव्यमिति तदा वक्रयिकं साधवोऽनुकूलेन प्रतिकूलेन वा वचसा ब्रूवते । यथा त्वया छादयितव्या पडालीति अथ न कृतस्तथारुपो वागन्तिक व्यवहारस्तत्राह-अकृते यथोक्तरूपे वागन्तिके व्यवहारे स्वाधीनं शय्यातरं ब्रुवते यथा च्छादयत पडालीमिति अथ स शय्यातरः क्वापि प्रोषितो भवेत् तदा तस्य शय्यातरस्य दायादं वा गोत्रिणं ब्रुवते-

**[भा.३३३७]** अच्छयंते च दाऊणं सयं सेज्जायरे घरं ।
अनुसट्ठाईहनिच्छं तं ववहारेण छावए ।।

**वृ-** अथ शय्यातरः प्रमाद्यति न च्छादयति, तदान्यः कश्चिदभ्यर्थ्यते ततो येन सा पडाली च्छादिता सोऽपि शय्यातरो भवति । अथान्यः कश्चनापि च्छादयिता न विद्यते तदा शय्यातरे स्वयं गृहं दत्वा प्रमादेनाच्छादयति अनुशिष्टिरनुशासनं क्रियते । आदिशब्दात् धर्मकथा च तथापि च्छादयितुमनिच्छंतं व्यवहारेण येन गृहं दत्तं तेन च्छादनमपि कर्त्तव्यं । न च पूर्वमाच्छादनं विचारितं, न चास्माकमकिञ्चनानां किञ्चिदस्ति येन च्छादयाम इत्येवं राजकुलेऽपि गत्वा व्यवहारकरणेन च्छादयेत् । तदेवमवक्रयसूत्रं भावितमिदानीं क्रयिकसूत्रमति देशतो व्याख्यानयति-

**[भा.३३३८]** एसोवकमो नियमा कइयंमि वि होइ आनुपुव्वीए ।
नवरं पुन नाणत्तं उग्गत्ता गेण्हती सोऊ ।।

**वृ-** य एव क्रमोऽवक्रयिकेऽभिहितः स एव क्रमो नियमात् क्रयिके शय्यातरत्वचिन्ता कृता तथा तयैव रीत्या क्रयिकेऽपि कर्त्तव्येति नवरं पुनर्वक्रयकात् क्रयिकस्य नानात्वं इदं वक्रयिकः कियत्कालं मूल्यप्रदानतो गृहीतः स तु क्रयिकः पुनरुच्चत्वेन गृह्णाति यावज्जीवं मूल्यप्रदानत आत्मसत्ताकी करोति ।

**मू. (१८३)** *विहवधूया नायकुलधूयवासिणी सावियावि ओग्गहं अनुन्नवेयव्वा किमंगपुनपिया वा भाया वा पुत्तेवासेवि यावि ओगाहे ओगेण्हियव्वे ।*

**[भा.३३३९]** सागारिय अहिगारे अनुवत्तं तंमि कोति सो होति ।
संदिठो व पभूवो विहवा सुत्तस्स संबंधो ।।

**वृ-** इह पूर्वसूत्रात्सागारिकाधिकारः शय्यातराधिकारोऽनुवर्तते । तस्मिन् अनुवर्तमाने अनेन सूत्रेण कोऽपि सागारिकः । कोऽपि प्रभुरिति प्रतिपाद्यते इत्येष विधवासूत्रस्य सम्बन्धः । अस्य व्याख्या-न विद्यते धवो भर्ता यस्याः सा विधवा धूता दुहिता ज्ञातिकुलवासिनी पितृगृहवासिनी पितामहगृहवासिनी वा इत्यादि । अथवा समासकरणादिदं द्रष्टव्यं-या दुहिता विधवा या च ज्ञातिकुलवासिनी दुहिता नाम या गृहजामातुर्दत्ता साप्यवग्रहमनुज्ञापयितव्या किमङ्ग पुनः पिता वा भ्राता वा पुत्रो वा समुतरामनुज्ञापयितव्यः । तथा चाह-सेयावतीत्यादि तौ द्वावप्यवग्रहमवग्रहीतव्याविति सूत्राक्षरार्थः ।

**[भा.३३४०]** विगय धवा खलु विधवा स्त्वं तु भत्तारमाहु नेरुत्ता ।
धारयति धीयते दधाति वा तेन उ धवोत्ति ।।

**वृ-** विगतधवा खलु विधवा विगतो धवोऽस्या इति व्युत्पत्तेः । धवं तु भर्तारमाहुर्नैरुक्ता निरुक्तशास्त्रविदः कया व्युत्पत्त्या इत्याह-धारयति तां स्त्रियं धीयते वा तेन पुंसा वा स्त्री दधाति सर्वात्मना पुष्णाति वा तेन कारणेन निरुक्तिवशात् धव इत्युच्यते-

**[भा.३३४१]** विधवा वणुन्न विज्जइ किं पुन पियमाइ मायपुत्तादी ।
सो पुन पभुवऽपभुवा अपभू पुन तत्थिमे होइ ।।

**वृ-** विधवाऽप्यनुज्ञाप्यते किं पुनः पिता माता भ्राता पुत्रादिर्वा स सुतरामनुज्ञाप्यः केवलं स पुनः पुत्रभ्रातृप्रभृतिको द्विधा प्रभुर्वा भवेत् अप्रभुर्वा तत्र पुनरप्रभव इमे वक्ष्यमाणा भवन्ति ।

**[भा.३३४२]** आदेसदासभइए विरिक्कजामाइए उदिन्नाय ।
अत्तेनामि मासो लहुतो सेस पभूणुग्गहेणं वा ।।

**वृ-** आदेशः प्राघूर्णको दासोऽङ्कितो भृतकः कर्मकरो विरिक्तो गृहीतरिक्तादिभागः पुत्रो भ्राता अन्यो वा तथा कन्या अन्यत्र पृथग्गृहे जामातरि एतेऽस्वामिनोऽप्रभव एतान् यदि अनुज्ञापयति तदा प्रायश्चित्तं मासलघु । शेषाः प्रभवः स्वामिनस्तान् अनुज्ञापयेत् आनुग्गहेणं चेति अप्रभूणामपि येषां प्रभुणानुग्रहः कृतो यथा त्वया कृतं दत्तं वा तत्प्रमाणमिति तेन वा अनुग्रहेणाप्रभूनपि अनुज्ञापयेत् नान्यथा अप्रभूणामनुज्ञापने दोषानाह ।

**[भा.३३४३]** दियरातो निच्छुहणा अप्पभूदोसा अदिन्नदानं च ।
तम्हाउ अनुन्नवए पभुं च पभुणाव संदिठं ।।

**वृ-** अप्रभूणामनुज्ञापने दोषाः दिवा रात्रौ वा निष्काशनं तत्र च जनगर्हा विनाशादयो दोषा न केवलं निष्काशनमदत्तादानं च यस्मादप्रभूणामनुज्ञापने एते दोषास्तस्मात्प्रभुं प्रभुसन्दिष्टं वानुज्ञापयेत् ।

**[भा.३३४४]** गहपति गहवतिणि वा अविभत्तसुतो अदिन्नकन्ना वा ।
पभवति निसिट्ठविहवा आदिट्ठे या सस यं दातुं ।।

**वृ-** गृहपतिर्गृहपत्नी वा अविभक्तसुतो वा अदत्तकन्या वा वाशब्दादविभक्त द्रव्यभ्रातृभ्रातृव्यादिर्वा प्रभवति, । अथवा या दुहिता विधवा निसृष्टागृहे प्रमाणीकृता सापि प्रभवति, यदि वा यः स्वयं दातुं

प्रभुणा आदिष्टः सोऽपि प्रभवति । एताननुज्ञापयेत् ॥

**मू. (१८४)** *पहेवि उग्गहो अनुन्नवेयव्वो ।*

**[भा.३३४५]** उग्गह पहंमि दिठे कहियं पुन सो अणुन्नवेयव्वो ।
अद्धाणादीएसुवि संभावणसुत्तसंबंधो ॥

**वृ-** अवग्रहस्य प्रभोर्दिष्टे क पुनः सोऽवग्रहमनुज्ञापयितव्य, इति निरूपणायाधिकृतसूत्रेणोच्यते पथ्यप्यवग्रहमनुज्ञापयितव्यः । अपिशब्दः ग्रामे नगरे वा किंतु संभावनाया अध्वन्यपि । तथा चाह-अध्वादिकेष्वप्यनुज्ञापयितव्यः । एष संभावना सूत्रसम्बन्धः । सम्प्रति भाष्यविस्तरः

**[भा.३३४६]** अद्धाण पुव्वभणियं सागारियमग्गणा इहं सुत्ते ।
एगेन परिग्गहिए सागारियसेसए भयणा ॥

**वृ-** अध्वनि यद्वक्तव्यं तत्सर्वं पूर्वं कल्पाध्ययने भणितमितीह-पुनः सूत्रेऽध्वानं व्रजतां सागारिकमार्गणा शय्यातरमार्गणा क्रियते । तथा एकेन परिगृहीते वृक्षादौ सति शेषे सागारिके भजना यदि संस्तरन्ति तर्हि यावद्भिस्तत् गृहीतं वृक्षादि तावतः शय्यातरान् करोति । असंस्तरणे एकमपि एकमपि शय्यातरमिति भावार्थः । सम्प्रति पूर्वार्धव्याख्यानमाह-

**[भा.३३४७]** दिने दिने जस्स उवल्लियंती भंडी वहंते व पडालियं वा ।
सागारिए होति स एगएव रीढागएसुं तु जहिं वसंति ॥

**वृ-** दिने दिने यस्य भण्डीं गन्त्रीं वहन्तीमुपलीयन्ते आश्रयन्ति साधवो यदि वा पडालिकां पडालिका नाम यत्र मध्याह्ने सार्थिकास्तिष्ठन्ति यत्र वा वसन्ति तत्र वस्त्रादिमयं कुवलयनं कुर्वन्ति तां वा यस्य दिने दिने उपलीयन्ते तदा स एवैकः सागरिकाः शय्यातरो भवति । रिढागतेषु तु अवज्ञया यत्र तत्र गतेषु तु साधुषु यत्र रात्रौ वसन्ति तद्दिवसं शय्यातरः । इयमत्र भावना । यस्य न नियमेन भण्डीं वा पडालिकां वा प्रतिदिनमुपलीयन्ते किन्तु यदृच्छयाकस्मिन दिने कस्यापि तदा यां यां रात्रिं यस्य भण्ड्यादिकमुपलीयते तस्मिन तस्मिन दिने स शय्यातरः ।

**[भा.३३४८]** वीसमंतावि छायाए जे तहिं पढमं ठिया ।
चिट्ठंति पुच्छियंतेवि पंथिए किमु जहिं वसे ॥

**वृ-** विश्राम्यन्तोऽपि च्छायायां ये तत्र पथिकाः प्रथमं स्थितास्तिष्ठन्ति तानपि पृष्ट्वा तत्र तिष्ठेत् नान्यथा । किं पुनर्यत्र वसेयुस्तत्र सुतरां ते अनुज्ञातव्यास्ततो भवन्ति से शय्यातराः । सम्प्रति एगेन परिग्गहिए सागरियसेसए भयणा इति व्याख्यानयन्नाह ।

**[भा.३३४९]** वसतिवाजहिं रत्तिं एगानेगपरिग्गहे
तत्ति ए उत्तरे कुज्जा यावंतेगमसंथरे ॥

**वृ-** यत्र वृक्षस्याधस्तादन्यत्र वा एकस्य वा परिग्रहे अनेकस्य वा पथिकसंघातस्य परिग्रहे अनेकस्य वा पथि संघातस्य परिग्रहे साधवो रात्रौ वसन्ति तर्हि सर्वानपि तान् शय्यातरान् कुर्युरथ न संस्तरन्ति ततस्तन्मध्ये एकं शय्यातरं स्थापयति शेषान् निर्विशन्ते एषा शेष सागारिके भजना ।

**मू. (१८५)** *सेरज्जपरियट्टेसु संथडेसु अव्वोगडेसु अवोच्छिन्नेसु अपरपरिग्गहिएसु सच्चेव ओग्गहस्स पुव्वाणुन्नवणा चिट्ठइ अहालदमवि ओग्गहे ।*

**मू. (१८६)** *सेरज्जपरियट्टेसु असंथडेसु वोगडेसु वोच्छिन्नेसु परपरिग्गहिएसु भिक्खुभावस्स अट्ठाए*

दोच्चंपि ओग्गहं अणुन्नवेयव्वेसिया । - तिबेमि ।

वृ- से रज्जपरियट्टेसु इत्यादि सूत्रद्वयस्य सम्बन्धप्रतिपादनार्थमाह -

[भा.३३५०] सागारियसाहम्मिय उग्गहगहणेण उत्तमाणंमि ।
सत्तम अंतिमसुत्तं ठवंति रायुग्गहे थेरा ।।

वृ- पूर्वसूत्रेभ्यः सागारिकावग्रहग्रहणमनुवर्तते ततोऽपि परतरेभ्यः साधर्मिकावग्रहग्रहणं तस्मिन् अनुवर्तमाने अवग्रहग्रहणप्रस्तावात् सप्तमोद्देशकस्यान्तिमं सूत्रद्वयं-राजावग्रहेस्थविराः सूत्रकर्तारः स्थापयन्ति । एषोऽधिकृतसूत्रद्वयसम्बन्धोऽनेन सम्बन्धेनायातस्यास्य व्याख्या-से तस्य भिक्षो राजपरावर्तेषु राजपरावर्तो नामाग्रेतनो राजा कालगतो नवोऽभिषिक्तस्तेषु पुनः कथंभूतेषु इत्याह-संस्तृतेषु न कोऽपिततृराज्यं विलुम्पतीति भावः । तथा अव्याकृतेषु येषां दायादानां सामान्यं तद्राज्यं तैरविभक्तेषु अव्यवच्छिन्नेषु तस्मिन् वंशे अनुवर्तमानेषु अत एवापरगृहीतेषु सैवावग्रहस्य पूर्वानुज्ञापना तिष्ठति । या तस्य वंशस्यावावनुज्ञापना कृता कियन्तं कालं पुनः सैव पूर्वानुज्ञा तिष्ठति तत आह-यथा लन्दमध्यमासाः [illegible] इत्युक्तं भवति । यावन्तं कालं स वंशोऽनुवर्तते तावन्तमपि कालमवग्रहे राजावग्रहे सैव पूर्वानुज्ञापना वर्तते । न पुनरस्मिन् राज्ञि उपविष्टे स भूयोऽवग्रह मनुज्ञापयितव्यः । एष प्रथमसूत्रस्यार्थः । सम्प्रति द्वितीयस्योच्यते-से तस्य भिक्षोराज्यपरावर्तेषु अन्येषु राज्यं प्रतिपन्नेषु असंस्थितेषु त्रुटितपूर्वराज्य संस्थितिषु व्याकृतेषु अन्यवंशीयैर्दायादैर्वा स विभज्य समीकृतेषु व्यवच्छिन्नेषुव्यवच्छिन्नपूर्ववंशेषु अत एव परपरिगृहितेषु भिक्षुभावस्यार्थाय भिक्षुभावो नाम ज्ञानदर्शनचारित्राणि तेषामेव भिक्षुशब्द प्रवृत्तिनिमित्तत्वादेतच्च प्रथमोद्देशके सप्रपञ्चं भावितम् । तस्यार्थाय स भिक्षुभावः परिपूर्णो भूयादित्येव-मर्थमित्यर्थः । अन्यथा सचित्तादीनामननुज्ञापने अदत्तादानं स्यात् द्वितीयमपि वारमवग्रहोऽनुज्ञा-पयितव्यः । एष द्वितीयस्यापि सूत्रस्यार्थः साम्प्रतमेनामेव व्याख्यां भाष्यकृदप्याह-

[भा.३३५१] संथड मो अविलुत्तं पडिवक्खो वा न विज्जतो जस्स ।
अणहिट्ठियन्नेण व अव्वोगडदाइ सामन्नं ।।

वृ- संस्तृतं नाम राज्यं यदविलुप्तं मो इति पादपूरणे । यस्य वा प्रतिपक्षो न विद्यते नाप्यन्येन केनाप्यधिष्ठितं अव्याकृतं नाम दायिनां सामान्यं न पुनस्तैर्विभक्तं ।

[भा.३३५२] अव्वोगडं अविगडं संदिट्ठं वावि जं हवेज्जाहि ।
अव्वोच्छिन्न परंपरमागय तस्सेव वंसस्स ।।

वृ- अव्याकृतं नाम यदविकृतं केनापि विकारमनापादितं यदि वा यद्भवेत् पूर्वराजेन सन्दिष्टं यथा एतस्मै राज्यं देयमिति तदव्याकृतम् । अव्यवच्छिन्नं नाम यत्तस्यैव वंशस्य परम्परया समागतमिति ।

[भा.३३५३] पुव्वाणुन्ना जा पुव्वएहिं राईहिं इह अनुन्नाया ।
लंदं तु होइ कालो चिट्ठइ जा वुग्गहो तेसिं ।।

वृ- पूर्वानुज्ञाता मया पूर्वकं राजभिरनुज्ञाता जहालन्दमवीत्यत्र लन्दो नाम भवतिकालस्ततोऽयमर्थो यावन्तं कालं तेषामवग्रहस्तावन्तमपि कालं सैवावग्रहे पूर्वानुज्ञा तदेवं प्रथमसूत्रव्याख्या कृता ।

[भा.३३५४] जं पुन असंथडं वा सगडंव तहवोगडं व वोच्छिन्नं ।
नंदसुरियाणव जहा वोच्छिन्नो जत्थ वंसोउ ।।

वृ- यत्पुनरसंस्तृतं शकटमिव विशरारुतया संतरीतुमशक्नुवन् यथा व्याकृतं दायादैरन्यवंशजैर्वा

विभज्यभक्तीकृतं व्यवच्छिन्नं यत्र नन्दमौर्याणामिव वंशो व्यवच्छिन्नः ।

[भा.३३५५] तत्थ उ अनुन्नविज्जइ भिक्खूभावठमोग्गहो नियय्रं ।
दिक्खादि भिक्खुभावो अहवा तइयव्वयादीउ ।।

वृ- तत्र नियतमवश्यंभावेन भिक्षुभावार्थं यथावस्थितभिक्षुभावसम्पादनायानुज्ञाप्यते । अथ कोऽसौ भिक्षुभाव इत्याह- दीक्षादिशादि शब्दात्सम्यक् ज्ञानादि परिग्रहो भिक्षुभावोऽथवा तृतीयव्रतादिकं भिक्षुभावः । तत्रैव भिक्षाशब्दस्य परमार्थत्वात्रूढत्वात्तदेवं कृता सूत्र व्याख्या । सम्प्रति निर्युक्तिः

[भा.३३५६] रन्नाकालगयंमी अथिरगुरुगा अणुन्नव तंमि ।
आणादिणोयदोसा विराधना इमेसु ठाणेसु ।।

वृ- राज्ञि कालगते ये द्वौ वा त्रयो वा दायिनस्तेषां मध्येयः स्थिरः सोऽनुज्ञापयितव्यः । यदि पुनरस्थिर मनुज्ञापयन्ति तदा तेषां प्रायश्चित्तं चत्वारो गुरुकाः आज्ञादयश्च दोषास्तथा विराधना आत्मविराधना संयमविराधना वा एषु वक्ष्यमाणेषु स्थानेषु तान्येवाह-

[भा.३३५७] धुवमन्नं तस्स नज्झइ एक्कंव मुक्कसंनाहो ।
ददेन्नेगयरपदोसो अणनुन्नवणे थिरे गुरुगा ।।

वृ- ध्रुवमन्यस्मिन् अन्यवंशजे अस्थिरे तस्य वा पूर्वराजस्य सम्बन्धिनां दायिनामेकस्मिन् अस्थिरे संयतैरनुज्ञापिते स चिन्तयति । एते भट्टारका जानन्ति यो राजा भविष्यति ततोऽहमनुज्ञापितो यदि पुनरितरस्यापि राज्यमभविष्यत् । ततो नाहमनुज्ञापयिष्ये इति स तथा विचिन्त्य नास्ति तथा भावस्थान्यथा भाव इति स एको मुक्तसन्नाहो वर्त्तते । तं च विश्वस्तं ज्ञात्वाऽन्यादसोऽन्येन दायादादिना मारितो राज्यमधिष्ठितं ततः स राजा चिन्तयति । संयतैर्ममामित्रः परिगृहीतो येन कारणेनसो-ऽवग्रहमनुज्ञापितस्ततः स प्रद्विष्टो द्वयोरेकतरस्य प्रद्वेषं कुर्यात् । किमुक्तं भवति ? निर्विषयत्वादि कुर्यात् जीवचारित्रयोर्वा भेदं कुर्यात् तस्मात् यः स्थिरः सोऽनुज्ञापयितव्यो ऽननुज्ञापने प्रायश्चित्तं चत्वारो गुरुकाः ।

[भा.३३५८] अणनुन्नविह दोसा पच्छावा अप्पितो अवन्ना वा ।
पत्ते पुव्वममंगलनिच्छुभण पदोसपत्थारो ।।

वृ- यदि स्थिरो नानुज्ञाप्यते तदा एतस्मिन्ननुज्ञापिते दोषाः सर्वे सामान्ये पाषण्डाः समीपमागता निर्ग्रन्थाः पुनरवज्ञां कृत्वा स्थितास्तः प्रद्वेषतो निष्काशनादि कुर्यात् । तस्मादव्यवच्छिन्ने वंशे सोऽवश्यमवग्रहमनुज्ञापयितव्यः । किं पूर्वं पश्चान्मध्ये वा तत्र यदि सर्वैरन्यैः पाषण्डैरनुज्ञापिते स पश्चादनुज्ञाप्यते ततः स चिन्तयति-अहमेतेषामप्रियोऽवज्ञा या ममैतैः क्रियते तेन पश्चादागताः । अथ प्राप्ते राज्ये पूर्वमनुज्ञाप्यते । तदा कदाचिदमङ्गलंमन्येत ततो निच्छुभणं निष्काशनं कुर्यात्प्रद्वेषतः प्रस्तारे जीविताद्व्यपरोपणं क्रियते । तस्मान्मध्येऽनुज्ञापयितव्यो यदि पुनर्भद्रक इति ज्ञातो भवति पूर्वं चानुज्ञाप्यमानो मङ्गलमिति मन्यते तदा पूर्वमप्यनुज्ञापनीयः । अथ कथं स स्थिरो ज्ञातव्यः कथं वा भद्रकः कथं वा पूर्वमनुज्ञाप्यमानो मङ्गलं मन्यते इति तत आह-

[भा.३३५९] ओहादी आभोगणा निमित्तविसएण वावि नाऊणं ।
भद्दगपुव्वा मणुना वयंतमनाएय मज्झंमि ।।

वृ- अवध्यादिनाऽतिशयेनादिशब्दान्मनः । पर्यवज्ञान श्रुतातिशयविशेषपरिग्रहोऽथवा निमित्तविशेषेणाथात्मनोऽवध्याद्यतिशयो निमित्तविशेषो वा न विद्यते तदा अन्यानवध्याद्यतिशयिनो

निमित्तविशेषं ज्ञात्वा पृष्ट्वा भद्रकं पूर्वम् ज्ञापयेत् प्रवरोन राज्ञो या ...

[भा.३३६०] एएणं विहिणाउ सो णुन्नवितो जया वएज्जाहि ।
राया किं देमित्ति यं जं दिन्नं अन्नराईहिं ।।

वृ- एतेनान्तरोदितेन विधिना सोनुज्ञापितो राजा यदा वदेत् किं ददामीति तदा वक्तव्यं यद्दत्तमन्यै राजभिस्तद्देहीति ।

[भा.३३६१] जाणंतो अनुजाणइ अजाणतो भणति तेहिं किं दिन्नं ।
पायोग्गंतिय भणिए किं पाउग्गं इमं सुणसु ।।

वृ- एवमुक्ते जानानः सर्वमनुजानाति, अज्ञायको ब्रूते तैरन्यैराजादिभिः किं दत्तं तत्र प्रायोग्यमिति भणितव्यं तस्मिन् भणिते पुनर्ब्रूते- किं प्रायोग्यमिति । ततो वक्तव्यं शृणुत इदं प्रायोग्यं तदेवाह -

[भा.३३६२] आहार उवहि सेज्जा ठाणनिसीयण तुयट्टगमनादी ।
थीपुरिसाण य दिक्खा दिन्ना नोपुव्वराइहिं ।।

वृ- नो अस्माकं पूर्वराजैराहारउपधिः शय्यास्थानमूर्ध्वस्थानं निषदनं त्वगवर्तो गमनमादिशब्दादागमनपरिग्रहस्तथा स्त्रीपुरुषाणां दीक्षाऽनुज्ञाद्वारेण दत्ता ।

[भा.३३६३] भद्दो सव्वं वियरइ पंतो पुन दिक्खवज्जमियराणि ।
अनु सठाइम काउ निंतिगुरुगाय आणादी ।।

वृ- एवं कथिते सति यो भद्रकः स सर्वं वितरति प्रान्तः पुनर्दीक्षावर्जमितराणि सर्वाण्यप्याहारादीनि अनुजानाति प्रव्रज्यां पुनर्नानुजानाति । तत्र यदि तस्य राज्ञोऽनुशिष्टिमकृत्वा आदिशब्दात् विद्यादि वा प्रभुकरणं वा अकृत्वा यदि तद्विषयात् निर्गच्छन्ति तदा तेषां प्रायश्चित्तं चत्वारो गुरुकाः आज्ञादयश्च दोषाः ।

[भा.३३६४] चेइय सावगपव्वइउ काय असंत बालवुड्ढाय ।
चत्ता अजंगमावि य अभत्ति तित्थस्स परिहानी ।।

वृ- अन्यच्च चैत्यानितेन परित्यक्तानि श्रावका ये च प्रव्रजितुकामास्तथा अतरन्तोग्लाना बाला वृद्धा अजङ्गमाश्च ते सर्वे परित्यक्ता अभक्तिस्तीर्थकराज्ञा खण्डनात् । तीर्थस्य च परिहानिरापादिता । तथा हि- ये तत्र विषये परिव्रजितुकामास्ते न प्रव्रजिष्यन्ति श्रावका अपि सम्यक्त्वमणुव्रतानि च गृह्णन्तो न ग्रहीष्यन्ति न ग्रहीष्यन्ति ततो भवति तीर्थस्य व्यवच्छेदः । यद्येवं तर्हि तत्रैव तिष्ठन्तु । तत्राप्याह-

[भा.३३६५] अत्थंताण वि गुरुगा अभत्तितित्थस्सहानि जा वुत्ता ।
भणमाण भणवित्ता अच्छंति अनिच्छि वच्चंति ।।

वृ- तत्र तिष्ठतामपि प्रायश्चित्तं चत्वारो गुरुका मासाः देशान्तरे भव्यपौण्डरीक प्रतिबोधनलाभतो भ्रष्टत्वात्तथा तीर्थकराणामभक्ति स्तिष्ठद्भिः कृता तदाज्ञा खण्डनात् तीर्थस्य हानिरापादितया स्वयमेव तेन राज्ञोक्ता स्त्रीपुरुषा न दीक्षितव्या इति यद्येवं तर्हि किं कर्तव्यमत आह-स्वयं भणन्तः प्रज्ञापयन्तोऽन्यैर्भणयंत स्तिष्ठन्ति तथापि चेत् स नेच्छेत् तर्हि ततो देशात् व्रजन्ति-

[भा.३३६६] अहपुन हवेज्ज दोन्नी रज्जाइं तस्स नरवरिंदस्स ।
तहियं अनुजाणंतो दोसुवि रज्जेसु अप्पबहुं ।।

वृ- अथ पुनस्तस्य नरवरेन्द्रस्य स्वयमन्यैर्वा प्रज्ञाप्यमानस्य कदाचित् द्वे राज्ये भवतस्तत्र तयोर्द्वयो

राज्ययोर्मध्ये एकत्र क्वाप्यनुजानाति यथा मम द्वे राज्ये तत्र तयोर्द्वयोर्मध्ये यत्रैकत्र भवद्भ्यो रोचते तत्र प्रव्राजय द्वितीये नानुजानामि । एवमुक्तेऽल्पबहु परिभाव्य यत्र भूयात्तीर्थ प्रवृद्धयादिलाभस्तत्र स्थातव्यमेतदेव स्पष्टतरमाह-

[भा.३३६७] एक्कहिं वि दिन्नरज्जे एगत्थ होइ अविदिन्नं ।
एगत्थ इत्थियातो पुरिसज्जायाय एगत्थ ।।

वृ- एकत्र एकस्मिन् राज्ये वितीर्णमनुज्ञातं भवति । एकस्मिन् राज्येऽवतीर्णं यत्रानुज्ञातं तत्र स्त्रियः पुरुषा वा अनुज्ञाता । अथवा एकत्र राज्ये स्त्रियो अनुजानीते एकत्र पुरुषजनान् ।

[भा.३३६८] थेरा तरुणा य तहा दुग्गया य अड्ढ्याच कुलपत्ता ।
जानवया नागरया अभंतरया कुमारा य ।

वृ- अथवा एकत्र राज्ये स्थविराननुजानात्येकत्र तरुणान्, अथवा एकत्र दुर्गतकान् पात्र आढ्यान् यदि चैकत्र कुलपुत्रान् परत्राभीरान् एवमेकत्रजानपदानन्यत्र नागरकान् एकत्राभ्यन्तरकान् अभ्यन्तरका नाम ये राजानमति प्रत्यासन्नीभूयावलगन्ति कुमारा राज्ञो दायादाः । एवमनुज्ञाते किं कर्तव्यमित्याह-

[भा.३३६९] उहीमादीनाउं जे बहुतरयाउ पव्वयंति तहिं ।
ते वेत्ति समनुजाणसु असती पुरिसेव जे बहुगा ।।

वृ- अवध्यादिनादिशब्दात् श्रुतातिशयविशेषेण निमित्तविशेषेण वा ज्ञात्वा यत्र बहुतरकाः । अत्र अनुजानीहि, असति अवध्यादेर्निमित्तविशेषस्याभावे वा ये बहवः पुरुषास्तानेवानुज्ञापयति न शेषान् स्तोकानष्टप्रभृतीनिति ।

[भा.३३७०] एयाणि वियरति तहिं कम्मघनो पुनभणेज्ज तत्थइमं ।
दिट्ठाउ अमंगलामा वा दिक्खेज्ज अच्छन्ना ।।

वृ- एतानि अनन्तरोदितानि प्रान्तोऽपि मनाक् भद्रकः सन् तत्रात्मीये राज्ये वितरति । य पुनः कर्मघनो निबिडपापकर्मा स तत्रानुज्ञापनायां क्रियमाणायां इदं ब्रूयात् । दृष्टा अपि सन्तो यूयममङ्गलास्तस्मादप्रतिछन्नो मा कश्चन दीक्षयेयुरिति वा शब्दो वापेक्षया विकल्पते ।

[भा.३३७१] मावादच्छामि पुनो अभिक्खणं बेंति कुणति निव्विसए ।
पभवत्तो भणति ततो, भरहाहिवती नसि तुमंति ।।

वृ- यदि वा मा पुनर्भूयो द्रक्ष्याम्येतान् अभीक्ष्णं वा ब्रुवन्ति स्वयमन्यैर्वा पुनः पुनर्विज्ञपयन्तीति कृत्वा निर्विषयान् करोति । ततोयः प्रभवत् वक्ष्यमाणगुणोपेतो ब्रूते नासि त्वं सकलस्य भरतस्याधिपतिर्येन निर्विषयत्वाज्ञापनेऽस्माकं भयं स्यादत्र स्थातुं न दास्यसि ततोऽन्यत्र यास्यामः । तथा इदमपि ब्रूते-

[भा.३३७२] केवइयं वा एयं गोपयमेत्तं इमं तुहं रज्जं ।
जं पेल्लिउ नासिय गमंति य मुहुत्तमित्तेण ।।

वृ- क्रियद्वा एतत् गोष्पद मात्रमिदं च राज्यं यत्प्रेर्य मुहूर्तमात्रेण नष्ट्वा गम्यते । एवमुक्ते स प्राह ।

[भा.३३७३] जं होउं तं होउ पभवामि अहं तु अप्पणो रज्जे ।
सो भणइ नीहमिज्जं रज्जातो किं बहूणाओ ।।

वृ- स राजा ब्रूते यत् यावन्मात्रंभवतु तावन्मात्रं आत्मनो राज्ये तावदहं तस्मात् किमत्र बहुना मम

राज्यात् यूयं निर्गच्छतेति एवमुक्ते यत्कर्तव्यं तदाह-

[भा.३३७४] अनुसट्ठी धम्मकहा विज्जनिमित्तादिएहिं आउट्टे ।
अट्ठिएपभुस्स ... अहा कयं विण्हुणा पुव्वं ।।

वृ- अनुशिष्ट्या अनुशासनेन धर्मकथया विद्यया निमित्तेन आदिशब्दान्मन्त्रेण चूर्णयोगैर्वा तं राजानमावर्तयेत् । अनुकूलयेत् अत्रैवमपि न तिष्ठति यर्हि तस्मिन् अस्थिते प्रभोरन्यस्य करणं कर्तव्यं यथा कृतं विष्णुना विष्णुकुमारेण । अथ कीदृशस्तं राजानमन्यप्रभुकरणे प्रेरयतीत्यत आह-

[भा.३३७५] वेउव्वियलद्धी वाईसत्थे विज्जतोरसबलीवा ।
तवलद्धिपुलातो वापेल्लेति तमंतरे गुरुगा ।।

वृ- यो वैक्रियलब्धिमान् यो वादिषु शास्त्रे निर्मातोऽनेकैरपि पुरुषसहस्त्रैर्दुर्जयः अथवा विद्यावलवान् यदि वौरसवली साह सिकोऽथवा तपो लब्धि पुलाकः स तमन्यप्रभुकरणेन प्रेरयति । यस्तु सत्यामपि शक्तौ प्रभुमन्यं न करोति तस्मिन्नितरस्मिन् प्रायश्चित्तं चत्वारो गुरुकाः । अथ कथं प्रभुमन्यं करोति ?

[भा.३३७६] तं घेत्तुं बंधिऊणं पुत्तं रज्जं ठवेंति उ समत्थो ।
असती अनुवसमंते निग्गंतव्वं ततो ताहे ।।

वृ- तं राजानं गृहीत्वा बन्धनेन च बध्वा समर्थस्तस्य पुत्रं राज्ये स्थापयति असति सामर्थ्ये अनुशिष्ट्यादिभिरुपशमयति । स च तथोपशम्यमानोऽपि नोपशाम्यति तर्हि ततो देशान्निर्गन्तव्यं तत्राध्वनि यतनामाह-

[भा.३३७७] भत्तादिफासुएणं अलब्भमाणे य पणगहानीए ।
अद्धाणे कायव्वा जयणा उ जा जहिं भणिया ।।

वृ- अध्वनि मार्गे प्रासुकेन भक्तादावलभ्यमाने पञ्चकहान्या यतना कर्तव्या । या यत्र ग्रामे नगरे अरण्येवा पूर्वं कल्पाध्ययने भणिता ।।

<u>उद्देशकः ७ समाप्तः</u>

**मुनि दीपरत्नसागरेण संशोधिता संपादिता व्यवहारसूत्रे सप्तमोद्देशकस्य [भद्रबाहु स्वामि रचिता निर्युक्तियुक्तं] संघदासगणि विरचितं भाष्यं एवं मलयगिरिआचार्येण विरचिता टीका परिसमाप्ता ।**

## उद्देशकः ८

व्याख्यातः सप्तमोद्देशकोऽधुनाष्टम आरभ्यते । तत्र चेदमादिसूत्रं-

**मू. (१८७)** *गाहाउउपज्जोसविए ताहे गाहाए ताहे पएसाए ताहे उवासंतराए जमिणं सेज्जा संथारग लभेज्जा तमिणं तमिणं ममेवसिया थेरायसे अनुजाणेज्जा तस्सेवसिया, थेरायसेनो अनुजाणेज्जा, एव से कप्पइ अहा राइनियाए सेज्जासंथारगंपडिग्गाहेत्तए ।।*

[भा.३३७८] तह चेव उग्गहम्मी अनुवत्तं तंमि रायमादीणं ।
साहम्मि उग्गहम्मी सुत्तमिणं अट्ठमे पढमं ।

वृ- तथैव पूर्वोक्तेनैव प्रकारेण राजादीनामवग्रहे त वर्तमाने अवग्रहप्रस्तावादष्टमे उद्देशके प्रथममिदं सूत्रं । साधर्मिकावग्रहे पठति एष सूत्र सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-गाहा गेहं तत्र

ऋतौ ऋतुबद्धे काले वर्षाकाले वा पर्युषितस्तस्मिन् गाहे सूत्रे क्लीत्वं प्राकृतत्वात्तदेवमुत्तरत्रापि तस्मिन् प्रदेशेऽन्तर्बहिरादिलक्षणे तस्मिन्नवकाशान्तरे द्वयोर्मध्यभागलक्षणे यत् यत् शय्यासंस्तारकं शय्यासंस्तारकभूमि लाभस्तत् ममैव स्यादिति ब्रूते । तत्र यदि स्थविरास्तस्या शठभावमवगम्यानुजानन्ति, तदातस्यैवस्यादथ से तस्य शठभावमवबुध्य स्थविरा नानुजानते । एवं तर्हि से तस्य कल्पते यथा रात्निकतया यथा रत्नाधिकतया शय्यासंस्तारकं शय्यासंस्तारकभूमिं परिग्रहीतुमिति सूत्रसंक्षेपार्थः ।

[भा.३३७९] गाहाघरे गिहेवा एगठा होंति उग्गहे तिविहो ।
उउबद्धे वासासु य वुड्ढावासे य नाणत्तं ॥

वृ- गाहा इति धरमिति गिहमिति वा एते त्रयोऽप्येकार्थास्तत्र गृहं त्रिविधे अवग्रह भवति । तद्यथा-ऋतुबद्धसाधर्मिकावग्रहे वर्षावाससाधर्मिकावग्रहे तत्रऋतुरिति ऋतुबद्धावग्रहो गृहीतः । पज्जोसविते इत्यनेन वर्षावग्रहः । एतयोर्द्वयोरप्यवग्रहयोरंतः प्रविष्ट इति कृत्वा सामर्थ्यतस्तृतीयोऽपि वृद्धावासावग्रहो गृहीतस्तथा चाह-वृद्धावासे च तत्र त्रिष्वप्यवग्रहेषु यन्नानात्वं तत्प्रत्येकसूत्रेषु वक्ष्यामीति वाक्यशेषः ।

[भा.३३८०] चाउस्सालादि गिहं तत्थ पदेसोउ अंतो बाहिं वा ।
उवासंतरमो पुन अमुगाणं दोण्ह मज्झंमि ॥

वृ- चतुःशालादिगृहमादि शब्दादेकशालद्विशालत्रिशाल परिग्रहः । तस्य प्रदेशा अन्तर बहिरासन्नद्वारादि लक्षणो अवकाशान्तरं नाम अमुकयोर्द्वयोर्मध्यमिति । तदेवं कृता भाष्यकारेण विषमपदव्याख्या ।

[भा.३३८१] खेत्तस्सउ संकमणे कारण अन्नत्थ पट्ठविज्जंतो ।
पुव्वुद्दिठे तंमि उउवासे सुत्तनिद्देसो ॥

वृ- आचार्य ऋतुबद्धकालनिमित्तं वर्षाकालनिमित्तं वा अन्यत् क्षेत्रं संक्रमितुमना अजायत । तत क्षेत्रस्य संक्रमणे कर्तव्येऽन्यस्मिन् वा आत्मनः कारणे समुत्पन्ने कंचित्साधुमन्यत्र प्रस्थापयेत् । स च प्रस्थाप्यमानः पूर्वोद्दिष्टे तस्मिन्नवकाशे आचार्यान् विज्ञयति । अस्मिन् प्रस्तावेऽधिकृतसूत्रस्य निर्देशो भणनं । इयमत्र भावना योऽसौ प्रस्थाप्यते तेन तत् गृहं दृष्टं यदि वा योऽन्यः पूर्वक्षेत्रप्रत्युपेक्षणाय गतस्तेन तस्य सम्यक्कथितंयथाऽमुक प्रदेशो निवातोऽमुकः प्रवातोऽमुकः साधारणोऽमुकः सुखावहोऽमुको दुःखावहोऽमुकः सालोकोऽमुको निरालोकस्ततः स प्रस्थाप्यमान आचार्य विज्ञपयति । यथा मम श्लेष्मा प्रस्पन्दतेऽथवा प्रवाते स्वपतोऽजीर्णमुपजायते यदि वा धर्ममध्यासितुं न शक्नोमि । अथवा अमुकं अमुकं च साधुमहं सदैव प्रतिपृच्छामि तत एतयोर्मध्ये मम शय्यासंस्तारभूमिमनुजानीत यदि वा प्रस्थापित स्तत्र गत्वा तत् गृहमालोक्यात्मनः संसाधकं प्रदेशमाचार्यस्य श्लेष्मप्रस्पन्दनादिकारणप्रकाशनपुरस्सरं सन्देशयति यथामुकाममुकां मे संस्तारकभूमिमनुजानीतेति तथा चाह-

[भा.३३८२] दीवेउं तं कज्जं गुरुं च अन्नं व सोउ अप्पाहे ।
ते वियं तं भूयत्थं नाउं असढस्स वियरंति ॥

वृ- तत् श्लेष्मप्रस्पन्दनादिकार्यं दीपयित्वा प्रकाश्य गुरुमाचार्यमन्यं वा स्पर्धकपतिमुपाध्यायादिकं अप्पाहेति सन्देशयति । तेऽपि च गुरवोऽन्ये वा यत्सन्दिष्टं साक्षात्कथितं वा तत् भूतार्थं यथावस्थितं ज्ञात्वा तस्या शठस्य तां शय्यासंस्तारकभूमिं वितरन्ति ।

[भा.३३८३] अह पुन कन्दप्पातीहिमगते सो उ तस्स न दलंति ।
एयं तु पिंडसुत्ते पत्तेय इहं तु पुच्छमि ॥

वृ- अथ कन्दर्पादिभिर्मार्गयति । कन्दर्पनिमित्तमन्यद्वा किञ्चित् शठत्वमवलम्ब्य विज्ञपयति तदा तस्य न ददति नानुजानन्ति । अथवा जमिणं सेज्जसंथारयं लभिज्जा इत्यादि सूत्रस्यायमर्थः-शय्या एव संस्तारकः शय्या संस्तारकः । स च द्विधाफलक संस्तारकः कंबि[थि]संस्तारको वा । तस्य योऽग्रेतनः संस्तारकः खरकस्तत्र स्वपतः पार्श्वाणि दुःखायन्ते । ततस्तेन पूर्वं मृदुकुले गत्वा मृदु संस्तारकोऽनुज्ञापितः तज्ञ आचार्यसमीपमागत्य विज्ञपयति यं यं शय्या संस्तारकं लभेत स ममैव स्यात् । तत्र यदि स्थविरा स्तस्याशठत्वमालोच्यानुजानन्ति तदा स तव [तस्य] स्यात् अथ शठ इति कृत्वा तस्य नानुजानन्ति तर्हि से तस्य कल्पते यथा रत्निकतया शय्यासंस्तारकं परिगृहीतुं नान्यथेति एतत् पिण्डसूत्रं व्याख्यातमधुना पुनः प्रत्येकसूत्राणि व्याख्यास्यामि ।

**मू. (१८८)** *सेय अहा लहुस्सगं सेज्ञा संथारगं गवेसेज्ञा । जं चक्किया एगेन हत्थेणं ओगिज्झ जाव एगाहं अद्धाणं परिवहित्तए एस मे वासावासु भविस्सइ ।।*

वृ- इत्यादि सोऽधिकृतो भिक्षुर्यथा लघुस्वकमनेकान्त लघुकं वीणाग्रहणग्राह्यं । शय्या सर्वाङ्गिका संस्तारकोऽर्धतृतीयहस्तदीर्घहस्तचत्वार्यङ्गुलानि विस्तीर्णः । अथवा तत्पुरुषः समासः शय्या एव संस्तारकः शय्यासंस्तारकः तृणमयं पट्टमयं वा गवेषयेत् । तत्र यत् शक्नुयात् एकेन हस्तेनावग्रह्य यावदेकाहं वा द्व्यहं त्र्यहं वा अध्वानं गच्छन् परिवोढुं तत् गृह्णीयात् । एष मे वर्षावासे भविष्यति एष वर्षा सूत्रस्यार्थः ।

**मू. (१८९)** *से अहा लहुसगं सेज्ञा संथारगं गवेसेज्ञा जं चक्किया एगेणं हत्थेणं ओगिज्झ जावएगाहं वा दुयाहं वा तियाहं वा परिवहित्तए एसमे हेमंतगिम्हासु भविस्सइ ।।*

**मू. (१९०)** *से अहा लहुसगं सेज्ञा संथारगं जएज्ञा जं चक्किया एगेणं हत्थेणं ओगिज्झ जावएगाहं वा दुयाहं वा तियाहं वा चउयाहं वा पंचगाहं वा अद्धाणं परिवहित्तए एस मे वुड्ढावासासु भविस्सइ ।।*

वृ- एवं हेमन्तग्रीष्मसूत्रार्थो वृद्धावाससूत्रार्थश्च भावनीयः नवरं वृद्धावाससूत्रे चतुरहं वा पञ्चाहं वेत्यधिकं वक्तव्यमधुना निर्युक्तिविस्तरः -

**[भा.३३८४]** सोपुन उउम्मि घेप्पइ संथारो वुड्ढावासे वा ।
ठाण फलगादी वा उउम्मि वासासुय दुवे वि ।।

वृ- स पुनः संस्तारकः स्थानं स्थानरूप ऋतुबद्धे वर्षाकाले वृद्धावासे च यथानुरूपे गृह्यते । तद्यथा-ऋतुबद्धे कालेऽवकाशे गृह्यते, वर्षावासे च वृद्धावासे च निवातस्थानेऽपि, तथा ऋतुबद्धे काले ऊर्णादिमयः संस्तारकः परिगृह्यः पुरुषविशेषं ग्लानादिकमपेक्ष्य फलकादिर्वा वर्षावासे द्विकावपि द्वावपि संस्तारकौ वक्ष्यमाणलक्षणौ गृह्णीयात् ।

**[भा.३३८५]** उउबद्धे दुविहगहणा, लहुगो लहुगाय दोष आणादी ।
झामियहियवक्खेवे संघट्टणमादिपलिमंथो ।।

वृ- द्विविधः संस्तारकः परिशाटिरूपोऽपरिशाटिरूपश्च । तत्र परिशाटिरूपो द्विविधो झुषिरोऽझुषिरश्च तत्र शाल्यादि पलालतृणमयो झुषिरः कुशवल्ककादिरूपोऽझुषिरः, । अपरिशाटिरूपो द्विविधः-एकाङ्गिकोऽनेकाङ्गिकश्च । एकाङ्गिकोपि द्विविधः सङ्घातितोऽसंघातितश्च । तत्रासङ्घातित एकफलकात्मकः संघातितोद्व्यादिफलक संघातात्मकः अनेकाङ्गिकः कंथिका प्रस्तारात्मकस्तत्र यदि ऋतुबद्धेऽझुषिरं परिशाटिं संस्तारकं गृहाति तदा तस्य प्रायश्चित्तं लघुको मासः । झुषिरंगृह्णतश्चत्वारो लघुका अपरिशाटिमपिगृह्णतश्चत्वारो लघुका न केवलं प्रायश्चित्तं किन्त्वाज्ञादयश्चदोषाः । तथा यद्यग्निना

स ध्याम्यते तत्रापि प्रायश्चित्तं चत्वारो लघुकाः व्याक्षेपणे वा स्तेनैरपहृते चतुर्लघुकं अपरिशाटौ ध्यामिते हृते वा मासलघुस्ततोऽन्यं संस्तारकं मृगयमाणानां सूत्रार्थपलिमन्थः तथा तस्मिन् संस्तारके ये आगन्तुकास्तदुद्भवा वा तान् संघट्टयति अपद्रावयति च ततस्तन्निष्पन्नं तस्य प्रायश्चित्तमिति गाथार्थः ।

**[भा.३३८६]** परिसाडिय अपरिसाडी दुविहो संथारओ समासेन ।
परिसाडि झुसिरेयर एत्तो वुच्छं अपरिसाडिं ।।

**वृ-** द्विविधः समासेन संक्षेपेण संस्तारकः तद्यथा परिशाटिरपरिशाटिश्च । तत्र परिशाटिर्द्विधा-झुषिरः इतरश्च । इतरो नाम अझुषिरः । अत ऊर्ध्वमपरिशाटिं वक्ष्ये प्रतिज्ञातमेव करोति-

**[भा.३३८७]** एगंगी अनेगंगी संघातिम एयरोय एगंगी ।
अम्कुसिरगहणे लहुतो चउरो लहुकाय सेसेसु ।।

**वृ-** अपरिशाटिर्द्विधा-एकाङ्गिकोऽनेकाङ्गिकश्च । तत्रैकाङ्गिको द्विधा-संघातिम इतरश्च । अमीषां व्याख्यानं प्रागेव कृतम् । तत्राझुषिरस्य संस्तारस्य ग्रहणे प्रायश्चित्तं लघुको मासः शेषेषु झुषिरसंघातिमेतरैकाङ्गिकानेकाङ्गेषु प्रत्येकं चत्वारो लघुकाः ।

**[भा.३३८८]** लघुकाय झामियंमि व हरिए वियहंति अपरिसाडिम्मि ।
अपरिसाडिंमिय लहूगो आणादि विराधना चेव ।।

**वृ-** अग्निना ध्यामितेऽपरिशाटौ स्तेनैर्वा तस्मिन्नपहृते प्रत्येकं प्रायश्चित्तं चत्वारो लघुका भवन्ति परिशाटौ ध्यामिते हृते वा प्रत्येकं लघुको मासः आज्ञादयश्च दोषास्तथा विराधना च संयमस्य ।।

**[भा.३३८९]** विक्खेवो सुत्तादिसु आगंतु तदुब्भवाण घट्टादी ।
पलिमंथो पुव्वुत्तो मंथिज्जत्ति संजमोजेन ।।

**वृ-** अन्य संस्तारकमार्गणे सुत्रादिष्वर्थेषु च विक्षेपो व्याघातः पलिमन्थ इत्यर्थः । तथा यत्तत्रागन्तुकाः प्राणाः कीटिकादयो ये च तदुद्भवा मत्कुणादयस्तेषां यत् घट्टनादि तन्निमित्तमपि प्रायश्चित्तं । इदानीं पलिमन्थो व्याख्येयः । स च पूर्वमेव विक्खेवो सुत्तादिषु इत्यादिना ग्रन्थेनोक्तः । अथ कस्मात् व्याक्षेपो घटनादि वा परिमन्थ इत्युच्यते । तत आह-येन प्रकारेण तेन संयम उपलक्षणमेतत् सूत्रमर्थश्च मथ्यते तेन परिमन्थ इति ।

**[भा.३३९०]** तम्हाउ न घेत्तव्वो उउंभि दुविहो वि एस संथारो ।
एवं सुत्तं अफलं सुत्तनिवाओउकारणितो ।।

**वृ-** यस्मादेते दोषास्तस्मात् ऋतौ ऋतुबद्धे काले द्विविधोऽप्येष परिशाट्य परिशाटिरूपः संस्तारो न गृहीतव्यः । अत्र पर आह-एवं सति सुत्रमफलं सूत्रे तृणमयस्य शय्यासंस्तारकस्यानुज्ञानादाचार्य आह-सूत्रनिपातः कारणिकः । कारणवशात्प्रवृत्तः । तदेव कारणमुपदर्शयति-

**[भा.३३९१]** सुत्तनिवातो तणेसु देसि गिलाणे य उत्तमट्ठेय ।
चिक्खल्लपाणहरिए फलगाणि वि कारणज्जाते ।।

**वृ-** सूत्रस्य निपातो निपतनमवकाश इति भावः । देशे देशविशेषे तथा ग्लाने उत्तमार्थे च तथा चिक्खल्ले कर्दमे प्राणे प्राणजाते भूमौ संसक्ते तथा हरिते हरितकाये एवं रूपे कारणजाते सति फलकान्यपि गृह्यन्ते । फलकरूपोऽप्यपरिशाटिः संस्तारको गृह्यते इति गाथा संक्षेपार्थः । साम्प्रतमेनामेव विवरीषुराह -

**[भा.३३९२]** असिवादिकारणगता उवही कुत्थण अजीरगभया वा ।

अज्झुसिरमसंधि अबीए एक्कमुहे भंगसोलसगं ।।

वृ- अशिवादिभिः कारणैस्तत्र प्रदेशंगता यो वर्षारात्रे पानीयेन प्लाव्यते, यथा सिन्धुविषयो अथवा तत्र देशे स्वभावतः प्रखराभूमिस्ततो रात्रौ शीतलवातसम्पर्कतोऽवश्याय-पतनतो वा जलप्लावितेव सा भूमिरुपजायते । अथवा आसन्नीभूतेन पानीयेन तमवकाशमप्राप्नुवतापि भूमिः स्विद्यति । तत्रोपधेः-कोथनंमाभूत् । मावाऽजीर्णेन ग्लान्यमित्युपधिकोथनभयादजीर्णभयाद्वा तृणानि गृह्णन्ति । साधवस्तानि च अझुषिराणि असन्धीनि अबीजानि च एतान्येकमुखानि क्रियन्ते यत्र च अझुषिर असन्धे वा अबीज एकमुखरूपेषु चतुर्षु पदेषु भङ्ग षोडशं शोडश भङ्गाः तत्र असंतमपितदपि अझुषिरादिपदमाह-

[भा.३३१३] कुसमादि अज्झुसिराई असंधबीयाइं एक्कतोमुहाइं ।
देसी पोरपमाणा, पडिलेहातिन्निवेहासं ।।

वृ- कुशादीनि कुशवच्चकप्रभृतीनि तृणानि अभ्कुषिराणि असन्धीनि अबीजानि च भवन्ति तानि एकमुखानि कर्तव्यानि । तत्र भङ्गषोडशमध्ये यत्र भङ्गेषु झुषिराणि तत्र प्रायश्चित्तं चत्वारो लघुकाः । बीजेषु प्रत्येकेषु पञ्चरात्रिं दिवानि लघुकानि अनन्तकायिकेषु गुरुकाणि । शेषेषु भङ्गेषु मासलघु, प्रथमे भङ्गेशुद्धतः शुद्धा पोरेत्यादि देशीत्यङ्गुष्ठोऽभिधीयते । तस्य यत्पर्व तत्प्रमाणानि जिनकल्पिकानां स्थविरकल्पिकानां च तृणानि भवन्ति. । इयमत्र भावना-अङ्गुष्ठस्य यत्पर्व तत्राङ्गुलाग्राणि स्थापयित्वा यावद्भिस्तृणैर्मुष्टिर्यपूर्यते तावन्ति मुष्टिप्रमाणानि जिनकल्पिकानां स्थविरकल्पिकानां च तृणानि भवन्ति । तेषां च तृणानां प्रत्युपेक्षास्तिस्रस्तद्यथाप्रभाते मध्याह्ने अपराह्णे च । यदा च भिक्षादौ गच्छन्ति तदा हियसि कुर्वन्ति । साम्प्रतमेतदेव किञ्चिद्व्याचिख्यासुराह-

[भा.३३१४] अंगुठपुव्वमेत्ता जिणाण थेराण होति संडासो ।
भूमिए विरल्लेउं अवनेत्तु पमज्जए भूमिं ।।

वृ- अङ्गुष्ठपर्वमात्राणि अङ्गुष्ठपर्वपरिमितमुष्टिप्रमाणानि जिनानां जिनकल्पिकानां स्थविराणां स्थविर कल्पिकानां भवन्ति । तैश्च तृणैः संस्तारक आस्तीर्यमाणस्तावद्भवन्ति यावत्सण्डासः तानि च भूमौ विरल्य शयनार्थं विरलीकृत्य भूमि प्रमार्जन समये अपनीय भूमिं प्रमार्जयति ।

[भा.३३१५] गेलन्न उत्तमट्ठे उप्पमगेणं तु वत्थसंथारो ।
असतीए अब्भकुसिराइं खराइसतीए वज्झुसिराधि ।।

वृ- यो नाम ग्लानो यो वा प्रतिपन्नोत्तमार्थः कृतानशनप्रत्याख्यानः तस्मिन् द्वयेऽपि संस्तारक उत्सर्गतो वस्त्ररूपः क्रियते तस्य कोमलतया समाधिभावात् असति अविद्यमाने वस्त्ररूपे संस्तारके अझुषिराणि कुशवच्चकप्रभृतीनि मृग्यन्ते । अथ तानि खराणि यदि वा न सन्ति तदा झुषिराण्यपि शाल्यादि पलालमयान्यानेतव्यानि

[भा.३३१६] तद्दिवसं मलियाइं अपरिमिय सयं तुयट्टजयणाए ।
उभयट्ठि ऊठिए ऊ चंक्कमण विज्झकज्जे वा ।।

वृ- तद्दिवसं प्रति दिवसं मलितानि तृणान्युत्सार्यन्ते । अन्यानि च समानयिन्ते तानि वा परिमितानि गृह्यन्ते यथा समाधिर्भवति तथा सकृत् एकवारं तुयट्टानि प्रस्तारितानि तिष्ठंति, तत्र यतनया करणं उभयं नाम उच्चारः प्रस्रवणं च तदर्थमुत्थिते ग्लाने उत्तमार्थे वा अन्यो निषीदति किं कारणमिति चेत्प्राणिदयार्थमन्यथा शुषिरभावस्तत्रागन्तुकाः प्राणास्तृणान्युपलीयेरन् स तावन्निषीदति यावत्स तत्र

प्रत्यागच्छति । एवं च क्रमणार्थमभ्युत्थिते प्रवालार्थं वा बहिर्निर्गते वैद्यकार्ये वा बहिर्नीते यावत्स प्रत्यानीयते तावदन्यो निषीदति तस्मिन्नागते स उत्तिष्ठति । अथवा स गुरुणामपि पूज्य इति तस्मिन् पूर्वोक्तकारणैरुत्थिते तत्रान्यस्य निषदनं न कल्पते । तेषां तृणानामुपरि हस्तः कर्तव्यः । एतदेवाह-

[भा. ३३९७] अन्नोन्नि सव्वइ तहिं पाणदयट्ठाए तत्थ हत्थो वा ।
निक्कारणमगिलाणे दोसा य ते चे चेव य विकप्पो ।।

वृ- अन्यस्तत्र संस्तारके प्राणदयार्थं निषीदति हस्तो वा तत्र क्रियते । अत्र भावना प्रागेव कृता । एतैः कारणैर्यथोक्तरूपसंस्तारक ऋतुबद्धे काले निष्कारणे दशादि कारणमन्तरेणाग्लानेऽग्लानस्य तृणमसंस्तारकग्रहणे त एव पूर्वोक्ता दोषा विकल्पो विकल्पदोषश्च । अत्र विकल्पग्रहणेन कल्पप्रकल्पा-वपि सूचितौ । तेषां व्याख्यानमाह-

[भा. ३३९८] अत्थरणवज्जितो उ कप्पो उ होति पट्टदुगं ।
तिप्पभिई तु विकप्पो अकारणेणं च तणाभोगो ।।

वृ- आस्तरणवर्जितः कल्पः किमुक्तं भवति यज्जिनकल्पिका अनवस्तृता रात्रावुत्कुटुकास्तिष्ठन्ति एष कल्प इत्यभिधीयते तत्पुनः पट्टद्विकं भवति । संस्तारोत्तरपट्टयोरुपरियत्सुप्यते इत्यर्थः एष भवति प्रकल्पः । यानि पुनः त्रिप्रभृतीनि संस्तारे प्रस्तारयति एष विकल्पः । यच्च अकारणेन कारणमन्तरेण तृणानां भोगं क्रियते एषोऽपि विकल्पः । अथवान्यथा कल्प प्रकल्प व्याख्यानमाह-

[भा. ३३९९] अहवा अज्झुसिरगहणे कप्पोकपकप्पो उ कज्जे ।
झुसिरे अज्झुसिरे वा, होइ विकप्पोअकज्जंमि ।।

वृ- अथवेति प्रकारान्तरोपदर्शने यत्कारणेसमापतिते अज्झुषिराणि तृणानि गृह्णन्ति । एष कल्पो यत्पुनः कार्ये समापतिते झुषिराण्यपि तृणानि गृह्णान्ति एष प्रकल्प । यत्पुनरकार्येज्झुषिराणि अज्झुषिराणि वा गृह्णाति एष भवति विकल्पः । एवं तावत्तृणानामृतुबद्धे काले कारणेन गृहीतानां यतनोक्ता । सम्प्रति कारणैरेव ऋतुबद्धे काले फलकरूपस्य संस्तारकस्य ग्रहणे यतनां चाह-

[भा. ३४००] जह कारण तणाइं उउबद्धंमि उ हवंति गहियाइं ।
तह फलगाणि वि गेण्हइ चिक्खल्लादीहिं कज्जेहिं ।।

वृ- यथा कारणे देशादिलक्षणे ऋतुबद्धे काले तृणानि गृहीतानि तथा ऋतुबद्ध एव काले चिक्खल्लादिभिः कार्यैरादि शब्दात्प्राणसंसक्तिहरितकाय परिग्रहफलकान्यपि गृह्णाति । तत्र यतनामाह-

[भा. ३४०१]. अज्झुसिरमविद्धफुडियअगुरुय अनिसठवीणगहणेन ।
आया संजमे गुरुगा सेसाणं संजमे दोसा ।।

वृ- अझुषिरो ज्झुषिररहितोऽविद्धो वेधरहितोऽस्फुटितोऽराजितोऽगुरुको गुरुभाररहितोऽनिसृष्टः प्रातिहारिकः । एतेषां च पञ्चानां पदानां द्वात्रिंशद्भङ्गा । ते च प्रागिव प्रस्तारतः स्वयं ज्ञातव्याः । अत्र यः प्रथमो भङ्गः सोऽनुज्ञातस्तत्र दोषाभावात् अयं लघुकः शेषदोषविनिर्मुक्तश्च ततो यथा वीणा लघुकत्वात् दक्षिणहस्तेन मुख्यं विवक्षितं स्थानं नीयते इति वाक्यशेषः शेषा एक त्रिंशत् भङ्गा नानु-ज्ञाताः । तत्र गुरुके आत्मविराधनाप्रत्ययं च प्रायश्चित्तं चतुर्गुरुकं संयमविराधना पुनरेव भवति । गुरुके हस्तात्पतिते एकेन्द्रियादीनामुपघातोऽत्र स्वस्थान प्रायश्चित्तं शेषेषु संयमे दोषाः संयम विराधना । ततस्तत्र प्रत्येकं प्रायश्चित्तं चत्वारो लघुकाः ।

[भा.३४०२] अज्झुसिरमादीएहिं अनिसिट्ठं तु पंचिगा भयणा ।
अह संथडपासुद्धे विवज्जए होंति चउलहुगा ।।

वृ- अज्झुषिरादिभिः पदैरारभ्य यावदनिसृष्टमिति पञ्चमं पदं तेषु पञ्चसु पदेषु प्रथमभङ्गरूपेषु इयं वक्ष्यमाणा भजना विकल्पना । तामेवाह-अह संथडेत्यादि शय्यातरेण य उपाश्रयो दत्तस्तस्मिन् यो यथावस्तुतः प्रथमभङ्गरूपः संस्तारकः स गृहीतव्यस्तदभावे पार्श्वनकृतस्तस्याप्यभावे ऊर्ध्वकृत एवं क्रमेण यतनया ग्रहणं कर्तव्यम् । यदि पुनर्विपर्यासेन गृह्णाति तदा विपर्यस्ते गृह्यमाणे प्रायश्चित्तं चत्वारो लघुकाः ।

[भा.३४०३] अंतो वसयबाहिं निवेसवाडसाहिएगामे ।
खेत्तंतो अन्नगाम खेत्तबहिं वा अवोवच्छं ।।

वृ- एवमन्तर उपाश्रयस्य यदि संस्तारकं फलकरूपं न लभते तदा बहिरुपाश्रयस्य तथैव गृहीतव्यः । तत्राप्यलाभे ऽनेनैव क्रमेण निवेशनादानेतव्यस्तत्राप्यसति वाटकात् तत्राप्यलाभे साहितः तत्राप्यसति दूरादपि ग्राममध्यादानेतव्यो ग्राममध्ये ऽप्यसति क्षेत्रान्तस्तत् क्षेत्रमध्या भावादन्यग्रामादाने तव्यस्तत्राप्यसति क्षेत्राद्बहिरो ऽप्यानेयः । एवमविपर्यस्तमानयनं कर्तव्यं यदि पुनः सति लाभे विपर्यस्तमानयति तदा प्रायश्चित्तं चत्वारो लघुकाः । सम्प्रत्यानयने यतनामाह-

[भा.३४०४] सुत्तं च अत्थं च दुवे वि काउं भिक्खं अडंतो उ दुए विएसे ।
लाभे सहूएति दुवेवि घेत्तुं लाभासती एगदुवेव हावे ।।

वृ- सूत्रं च अर्थं च द्वावपि कृत्वा भिक्षामटन् द्वावप्येषयेत् गवेषयेत् तद्यथा भिक्षां संस्तारकं च, तत्र लाभे सति समर्थो द्वावपि गृहीत्वा प्रत्यागच्छति लाभा सति भिक्षांगतस्य संस्तारकाभावे एकं सुत्रमर्थं वा यदि वा द्वावपि हापयति संस्तारकगवेषणेन ।

[भा.३४०५] दुल्लभे सेज्जसंथारे उउबद्धंमि कारणे ।
मग्गणंमि विहीएसो भणतो खेत्तकालतो ।।

वृ- ऋतुबद्धे काले कारणे समापतिते दुर्लभे शय्यासंस्तारके यन्मार्गणं तत्र क्षेत्रतःकालतश्च विधिरेष भणितो अनेन विधिना(ना)न्यथेति ।

[भा.३४०६] उउबद्धे कारणंमि अगेण्हणे लहुगगुरुगवासासु ।
उउबद्धे जं भणियं तं चेव य सेसयं वोच्छं ।।

वृ- ऋतुबद्धे काले कारणे सति यदि संस्तारकं न गृह्णाति तदा प्रायश्चित्तं चत्वारो लघुकाः, वर्षासु पुनरवश्यं गृहीतव्यः संस्तारकस्ततः तत्र तस्याग्रहणे चत्वारो गुरुकाः । तथा या ऋतुबद्धे काले यतना भणिता गवेषणादौ सर्वे सा वर्षास्वपि द्रष्टव्या । शेषं वक्ष्याम । प्रतिज्ञातमेव करोति ।

[भा.३४०७] वासासु अपरिसाडी संथारो सो अवस्स घेत्तव्वो ।
मणिकुट्टिमभूमीए वि तमगेण्हणे चउगुरु आणा ।।

वृ- वर्षासु यदि मणिकुट्टिमायां भूमौ वसन्ति तथापि संस्तारको ऽपरिशाटिः फलकरूपो ऽवश्यं गृहीतव्यस्तमगृह्णाति प्रायश्चित्तं चत्वारो गुरुकास्तथा आज्ञा उपलक्षणमेतत् अनवस्थादयश्च दोषाः ।

[भा.३४०८] पाणासीयलकुंथू उप्पायगदीहगोम्हि सिसुनागे ।
पणए य उवहि कुत्थणमलउदकवहो अजीरादी ।।

वृ- कालस्य शीतलतया भूमौ प्राणाः संमूर्च्छन्ति के त इत्याह-कुन्थवः प्रतीताः उत्पादका नाम ये भूमिर्भित्वा समुत्तिष्ठन्ति दीर्घाः सर्पास्तेभ्य आत्मविराधना, गोम्मी नाम कर्णशृगाली शिशुनागोऽलसः तथा शीतलायां भूमौ पनकः संजायते, उपधावपि पनकाः समुर्च्छन्ति तथा उपधेः शीतलभूमिस्पर्शतः कोथनसंभवः । तथा सत्रे (ए) (सती) हधूलि लगने मलसंभवः ततो हिण्डमानस्य वर्षा पतति उदकवधोऽप्काय विराधना तथा उपधेर्मलिनत्वेनारतिसंभवे निद्राया अलाभतो अजीर्णसंभव आदिग्रहणात् ततो ग्लानत्वं तदनन्तरं चिकित्सा करणेत्यादि परिग्रहः ।

**[भा.३४०९]** तम्हा खलु घेतव्वो तत्थ इमे पंच वण्णिया ।
गहणे य अनुन्नवणा एगंगिय अकुयपाउग्गे ।।

वृ- यस्मादेते दोषास्तस्मादवश्यं फलकरूपः संस्तारको गृहीतव्यः । तत्र च ग्रहणे इमे वक्ष्यमाणाः पञ्च वर्णिता भेदास्तानेवाह-ग्रहणेऽनुज्ञापनायामेकाङ्गिके अकुचे प्रायोग्ये च । तत्र प्रथमतो ग्रहणद्वारमाह-

**[भा.३४१०]** गहणं च जाणएणं सेज्जाकप्पोउ जेन समहीतो ।
उस्सग्गववाएहिं सो गहणे कप्पिओ होइ ।।

वृ- येन समधीतः सम्यगधीतः शय्याकल्पः शय्याग्रहणविधिस्तेन आनता ग्रहणं संस्तारकस्य कर्त्तव्यं । यतः स उत्सर्गापवादाभ्यां ग्रहणे कल्पिको योग्यो भवति । गतं ग्रहणद्वारमिदानीमनुज्ञापने या यतना तामाह-

**[भा.३४११]** अनुन्नवणाए जयणा गहिए जयणाहोति कायव्वा ।
अनुन्नाए लद्धे बेंति पडिहारियं एयं ।।

वृ- अनुज्ञापनायां यतना गृहीते च यतना कर्त्तव्या । तत्रानुज्ञायामियं लब्धे संस्तारके ब्रुवते । एतं संस्तारकं प्रातिहारिकं गृहीष्यामो यावत्प्रयोजनं तावद्धरिष्यामः पश्चात्समर्पयिष्याम इति ।

**[भा.३४१२]** कालं च ठवेइ तहिं बेंइयपरिसाडिवज्जमप्पेहं ।
अनुन्नवणजयणा एसा गहिए जयणा इमा होति ।।

वृ- यदा संस्तारको लब्धो भवति तदा तत्र कालं स्थापयति । एतावन्तं कालं धरिष्यामः तथा ब्रूते एष संस्तारको जराजीर्णतया परिशाटिरूपस्तमेनं वयं गृहीष्यामस्तत्र निर्व्याघातेनैतावता कालेन यत्परिशटति तन्मुक्त्वा शेषमर्पयिष्यामः । एवं यदि प्रतिपद्यते तदा गृह्यते अथ न प्रतिपद्यते तदा न गृहीतव्यः । किन्त्वन्यो याच्यते । अथान्यो याच्यमानो न लभ्यते, तदा स एव परिगृह्यते केवलं परिशाटौ यतना विधेया । एषा अनुज्ञापने यतना गृहीते यतना इयं वक्ष्यमाणा भवति तामेवाह-

**[भा.३४१३]** कासपुनप्पयव्वो बेंतिमिमं जाहितं भवे सुन्नो ।
अमुगस्सवि सोवि सुन्नो ताहे घरम्मो ठवेज्जाहि ।।

**[भा.३४१४]** कहि एत्थ चेव ठाणे पासे उवरिं च तस्स पुंजस्स ।
अहवा तत्थेवत्त उ ते वि हु नियल्लया अम्हं ।।

वृ- गृहीते संस्तारके पुनः पृच्छति कार्यसमाप्तौ कस्य पुनरर्पयितव्य एष संस्तारकः । एवमुक्ते स यदि ब्रूते ममैव समर्पयितव्यः इति तदा वक्तव्यम् त्वं भवसि शून्यः किमुक्तंभवति, यदायूयं न दृश्यध्वे तदाकस्य समर्पणीयः, अथ ब्रूयादमुकस्य, ततो भूयोपि वक्तव्यं सोऽपि यदा शून्यो भवति न दृश्यते इत्यर्थः । तदा कस्मै समर्पणीयः । अथ ब्रूयादत्रैव गृहे स्थापयेत् ततः पुनरपि पृच्छेत् कतरस्मिन्नवकाशे

स्थापनीयः । एवमुक्ते यदि स ब्रूयाद् यतोऽवकाशात् गृहीतोऽत्रैव स्थाने स्थापयेत् यदि वा वदेत् अत्रैव स्थाने च्छिन्नंप्रदेशेऽथवा यतोऽवकाशात् गृहीतस्तस्य पार्श्वे अथवा यस्य पुञ्जस्योपरिस्थितो गृहीतस्तस्य पुञ्जस्योपरिस्थापयेत् यदि वा यत्र यूयं नयथ तत्रैव तिष्ठतु । यतो यस्योपाश्रये यूयं वसथ तेऽपि हु निश्चितमस्माकं निजका । किं बहुना यत्र वदति तत्र नीत्वा स्थापयितव्याः ।

[भा.३४१५] एसा गहिए जयणा एत्तो गेण्हंत ए उ वुच्छामि ।
एगोच्चिय गच्छे पुन संघाडो गेण्हभिग्गहितो ॥

वृ- एषा अनन्तरोदिता गृहीते यतना । अत ऊर्ध्वं गृह्णाति यतनां वक्ष्यामि प्रतिज्ञातमेव करोति । गच्छे पुनरेक एवं सङ्घाटः आभिग्रहिकः संस्तारकं गृह्णाति न शेषोऽन्यथाऽव्यवस्थापत्तेः ।

[भा.३४१६] आभिग्गहियस्स असती वीसुं गहणे पडिच्छिउं सव्वे ।
दाऊण तिन्नि गुरुणो गिण्हतन्ने तहा वुड्ढं ॥

वृ- अभिग्रहिकस्याभावे विष्वक् प्रत्येकं सङ्घाटकानां ग्रहणं प्रवर्त्तते । इयमत्र भावना-एकैकः सङ्घाटः प्रत्येकमेकैकं संस्तारकं मार्गयति अभ्यधिकास्त्रयः संस्तारका आचार्यस्य योग्य मृग्यन्ते । अत्रापि सैव मार्गणाऽनुज्ञापनं गृहीते च यतना यावत्कार्यसमाप्तौ क्व स्थापयितव्यः इति । एवं विष्वक् ग्रहणे सर्वान् संस्तारकान् प्रतीक्ष्य प्रतिगृह्य त्रीन् संस्तारकान् गुरोर्दत्वा शेषानन्यान् यथा वृद्धं गृह्णन्ति । इयमत्र सामाचारी । आभिग्रहिकसंघाटेन प्रत्येकं प्रत्येकं संघाटैरानीतानां वा मध्यादाचार्यस्योत्कृष्टान् त्रीन् संस्तारकान् प्रवर्तको दत्वा शेषाणां रत्नाधिकतया संस्तारकान् भाजयति । तेऽपि तथैव गृह्णन्ति ॥

[भा.३४१७] नेगाणउ नाणत्तं सगणेयर भिग्गहीण वन्नगणे ।
इदिट्ठो भासणलद्धे सन्नाउट्टेपभू चेव ॥

वृ- अनेकानां स्वगणेतराभिग्रहिकानां यन्नानात्वं प्रतिविशेषो यच्चान्यगणेन सह स्वगणसाधूनां समुदायेन संस्तारकान् मार्गयतामाभवद्व्यवहारस्तानात्वं तद्वक्ष्ये तत्र पञ्च द्वाराणि । तद्यथा-दृष्टद्वारमव-भाषणं नाम याचनं तद्वारं, मानयाचनतद्वारं प्रभुद्वारं च ।

[भा.३४१८] दिट्ठादिएसु एत्थं एक्केक्के होंति छ भवे भेया ।
वद्धण अहाभावेन वाविसोउ च तस्सेव ॥

[भा.३४१९] विप्परिणामकहणा वोच्छिन्ने चेव तिपडिसिद्ध्या ।
एएसिं तु विसेसं वुच्छामि अहानुपुव्वीए ॥

वृ- अत्र एषु दृष्टादिकेषु द्वारेषुमध्ये एकैकस्मिन् द्वारे इमे वक्ष्यमाणाः षट्भेदा भवन्ति । तद्यथा-दृष्टेति द्वारं यथा भावेनेति द्वारं तस्य वा वचनतः श्रुत्वेति द्वारं विपरिणमेन कथनद्वारं व्यवच्छिन्नद्वारं विप्रतिपिद्धद्वारं च । एतेषां तु द्वाराणां यथानुपूर्व्या क्रमेण विशेषं वक्ष्यामि । यदपि च दृष्टादिषु द्वारनानात्वं तदपि यथावसरं वक्ष्यते । मानः संस्तारके फलकरूपं पट्टरूपं वा देहान्तं देहप्रमाणं अस्वाधीन प्रभुं न विद्यते स्वाधीनः । ततः कालप्रत्यासन्नप्रभुर्यस्य स तथा तमस्वाधीन प्रभुं दृष्ट्वा कमपि पृच्छति कस्यैष संस्तारकः । स प्राह-अमुकस्य परमिदानीमत्र स न तिष्ठति ततः संघाटकश्चिन्तयति यदा संस्तारकस्वामी समागमिष्यति तदा याचिष्ये इति विचिन्त्या प्रतिसरति प्रतिनिवर्तने वसतावागच्छतीत्यर्थः । ततः प्रतिनिवृत्य तदा अन्यदा च भाषिते याचिते संस्तारकं बध्वा वसतिमानयति । अत्रैवापान्तराले वक्तव्यशेषमाह-

[भा.३४२०] संथारोदिट्ठो नय तस्स जो प्रभूलहुगो अकहणे गुरूणं ।
कहिए व अकहिए वा अन्नोणवि आनितो तस्स ।।

वृ- यदा संस्तारकं प्रेक्ष्य तस्य स्वामिनमदृष्ट्वा वसतौ प्रत्यागतस्तदा तेन गुरुणामाचार्याणां कथनीयं यथा दृष्टः संस्तारको न च तस्य संस्तारकस्य यः प्रभु, स उपलब्ध इति एवं चेन्नालोचयति । तस्प्रायश्चित्तं लघुको मासः । तथा कथिते अकथिते वा गुरूणां यद्यन्येन संघाटकेनामुकस्य गृहे संस्तारकोऽमुकेन सङ्घाटकेन दृष्टः परं स्वामी नोपलब्ध इति न याचितस्तस्माद्वयं याचित्वा नयाम इति विचिन्त्य तत्र गत्वा स्वामिनमनुज्ञाप्यानीतस्तथापि येन पूर्वं दृष्टस्तस्या भवति न पाश्चात्यसंघाटकस्य तदेवं दहूणेति व्याख्यातमधुना यथा भावेनेति व्याख्यानयति-

[भा.३४२१] बितिओउ अन्नदिट्ठं अहभवेणं तु लद्धमानेइ ।
पुरिमस्सेव स खलु केई साहारणं बेंति ।।

वृ- प्रथमसङ्घाटके संस्तारकं दृष्ट्वा स्वामिनमनुपलभ्या याचित्वैव वसतौ प्रत्यागते द्वितीयः संघाटोऽशठभावोऽन्येन पूर्वं दृष्ट इत्यजानानो यथाभावेन तमन्यदृष्टं संस्तारकं स्वामिनमनुज्ञाप्य लब्ध्वा समानयति कस्य भवतीति चेदत आह-स खलु नियमात्पूर्वस्य संघाटकस्य येन पूर्वं दृष्टो न पाश्चात्यस्य येन लब्धः समानीतः केचित् उभयोरपि संघाटयोराभवनमधिकृत्य साधारणं ब्रूवते । गतं यथा भावेनेति द्वारमिदानीं तस्यैव वचनतः श्रुत्वेति द्वारव्याख्यानार्थमाह-

[भा.३४२२] लइतोउ गुरुसगासे विगडिज्जंतं सुणेत्तुं संथारं ।
अमुगत्थ मए दिट्ठो हिंडंतो वन्नसीसंत ।।

वृ- तृतीयः सङ्घाटः प्रथमेन सङ्घाटकेन कापि संस्तारकं दृष्ट्वा स्वामिनमनुपलभ्य वसतौ प्रत्यागतेन गुरुसकाशे आचार्यस्य समीपे दृष्टो मया संस्तारकः परं स्वामी न दृष्ट आगतं सन्तं याचिष्ये इति संस्तारकं विद्यमानमालोच्यमानं श्रुत्वा यदि वा भिक्षां हिण्डमानोऽन्यस्य सङ्घाटकस्य शास्ति कथयति यथा अमुकत्र मया दृष्टः परं स्वामी नास्तीति न याचितः स्वामिन्यागते याचिष्यामि इति शिष्यमाणं श्रुत्वा -

[भा.३४२३] गंतूण तहिं जायइ लद्धंमी बेंति अम्ह एस विही ।
अन्नदिठो न कप्पइ दिठो एसो उ अमुगेनं ।।

[भा.३४२४] मा देज्जसि तस्थेयं पडिसिद्धं तंमि एसुमज्झं तु ।
अन्ना धम्मकहाए आउट्टेऊण तं पुव्वं ।।

[भा.३४२५] संथारगदान फलादि लोभियं बेंति देहि संथारं ।
अंगंति तिन्निवारा पडिसेहेऊण तं मज्झं ।।

वृ- गत्वा तत्र संस्तारक स्वामिनं संस्तारकं याचते याचित्वा लब्धे तं परिणामयत यथा एषोऽस्माकं विधिराचारोऽन्येन दृष्टो दृष्ट्वा च संस्तारक स्वामिनं संस्तारकं याचिष्ये इत्यध्यवसितः सोऽन्यस्य न कल्पते । एवं च संस्तारको न दृष्टस्ततस्त्वं मम प्रियतया तस्य याच्यमानस्य मा न संस्तारकममुं दद्यात्ततस्तस्मिन् प्रतिषिद्धे एष मम भविष्यति । अत्रेयमाभवनचिन्ता यदि विपरिणामकरणे लब्धस्ततस्तस्य नाभवति । किन्तु पूर्वस्यैव संघाटस्य अथवा द्वितीयोविपरिणामनप्रकारस्तमाह-गुरुं सकाशे विकट्यमानमन्यस्य वा संघाटस्य शिष्यमाणं संस्तारकं श्रुत्वा अन्यः संघाटकस्तत्र गत्वा संस्तारक स्वामिनं पूर्वं संस्तारकदानफलादिलाभिनं । ब्रूतेऽमुकं संघाटं याचमानं त्रीन्वारान् प्रतिषिध्य तदनन्तरं

मम संस्तारकं देहि । एवं विपरिणामकरणतो लब्धे स पूर्वस्यैव संघाटकस्या भवति न पाश्चात्यस्य ।

[भा.३४२६] एवं विपरिणामिएण लभति बहुगो य हुंति सगणिल्ले ।
अन्नगणिल्ले गुरुगा मायनिमित्तं भवे गुरुगो ।।

वृ- एवमुक्तेन प्रकारेण विपरिणामितेन स्वामिना यदि लभते स्वगणसक्तसाधुस्तदा तस्य प्रायश्चित्तं चत्वारो लघुकाः अन्यगणसक्ते चत्वारो गुरुकास्तथा स्वगणसत्को वा अन्यगणसत्को वा विपरिणम्य लब्ध्वा यदि पृष्टः सन् विपरिणामनमपलपति । तदा मायानिमित्तो मायाप्रत्ययो भवत्यधिको गुरुको मासः । सम्प्रति व्यवच्छिन्नद्वारमाह-

[भा.३४२७] अह पुन जेणं दिट्ठो अन्नलद्धोउ तेन संथारो ।
छिन्नो उवरिभावो ताहे जो लभति तितस्सेव ।।

वृ- अथ पुनर्येन दृष्टः संस्तारक स्तेनान्यो लब्धः संस्तारकस्तस्य पूर्वदृष्टस्योपरिभावो व्यवसायश्छिन्नः व्यवच्छिन्न स्ततीयः पश्चाल्लभते तस्यैव स आभवति तेन तस्य गतं व्यवच्छिन्न द्वारम् ।

[भा.३४२८] अहवावि तिन्निवारा उमग्गितो नवि य तेन लद्धोउ ।
भावे छिन्नमच्छिन्ने अन्नो जो हवइ तस्से ।।

वृ- अथवा येन दृष्टस्तेन याचितः परं न लब्धो द्वितीयमपि वारं याचितो न लब्धस्तृतीयमपि वारं न लब्धस्ततः एवं त्रीन्वारान् याचितो न च तेन लब्धस्ततस्तस्योपरि यदि तस्य संघाटकस्य भावो व्यवच्छिन्नो यदि वा न व्यवच्छिन्नस्तथापि योऽन्यो लभते तस्या भवति न पूर्वसंघाटकस्य तदेवं षड्भिर्द्वारैः समाप्तं प्रथमं दृष्टद्वारमधुनावभाषित द्वारमाह-

[भा.३४२९] एवं ता दिट्ठंमीओ भासितेवि होंति छच्चेय ।
सोउं अह भावेन व विप्परिणामेय धम्मकहा ।।

[भा.३४३०] वोच्छिन्नंमिवभावे अन्नो वन्नस्य जस्स देज्जाहि ।
एए खलु छब्भेया उ हासणे होंति नायव्वा ।।

वृ- एवमुक्तेन प्रकारेण दृष्टे दृष्टद्वारे षट्भेदाः प्रकाशिताः । एवमवभाषितेऽपि षट् भेदा भवन्ति ज्ञातव्याः । तद्यथा-प्रथमं श्रुत्वेति द्वारं, द्वितीयं यथाभावेनेति द्वारं तृतीयं विपरिणामद्वारं चतुर्थं धर्मकथाद्वारं पञ्चमं व्यवच्छिन्नद्वारं षष्टमन्यो वा तस्येतिद्वारं । तत्र एते खलु षट् भेदा अवभाषेण भवन्ति बोद्धव्याः । प्रथमद्वार व्याख्यानार्थमाह-

[भा.३४३१] उभासिते अलद्धे अव्वोच्छिन्नेय तस्स भावेउ ।
सोउं अणोभासइ लद्धाणीतो पुव्विल्लस्स ।।

वृ- संघाटकेन भिक्षामटता संस्तारकंस्वामी च संस्तारकं याचितः परं न लब्धोऽथ च तस्य संघाटकस्य संस्तारको परिभावोऽद्यापि न व्यवच्छिद्यते तेन य संघाटकेन गुरुसमीपमागत्यालोचितो यथामुकस्य गृहे संस्तारको दृष्टो याचितश्च परं न लब्धो द्वितीयवारं याचिष्यते । एवमवभाषितेऽलब्धेऽव्यवच्छिन्ने च तस्य संस्तारकस्योपरि भावे विकटनं श्रुत्वा अन्यः संघाटकस्तत्र गत्वा याचते लभते च स लब्ध्वानीतः सन् कस्या भवतीत्यत आह-पूर्वस्य येन पूर्वमवभाषितोऽपि न लब्धस्तस्या भवति तद्विषयभावाव्यवच्छेदान्नेतरस्य ।।

[भा.३४३२] सेसाणि जहा दिट्ठे अह भावदीनि जाव वोच्छिन्ने ।

तम्हं जोएज्जा छट्टे विसेसं तु वुच्छामि ।।

वृ - शेषाणि यथा भावादीनि चत्वारि द्वाराणि यावत् व्यवच्छिन्नद्वारं यथादृष्टे द्वारे पूर्वं भावितानि तथा योजयेत् । तद्यथा-एकेन सङ्घाटेन भिक्षामटता क्वापि संस्तारको दृष्टो याचितश्च परं न लब्धो द्वितीयः संघाटको तथा भावेन तत्र गत्वा तं संस्तारकमानयति स पूर्वसङ्घाटकस्या भवति न येनानीतस्तस्य अन्ये तु ब्रूवते द्वयोरपि संघाटकयोराभवनमधिकृत्य साधारण इति । गतं यथा भावद्वारमधुना विपरिणाम-द्वारमुच्यते । गुरुसमीपे विकट्यमानमन्यस्य वा संघाटकस्य कथ्यमानं याचितमलब्धं संस्तारकं मह्यं सम्प्रति देहि । अत्रापि पूर्वस्यैव संघाटकस्य स आभवति न येनानीतस्तस्य । गतं विपरिणामद्वारं । सम्प्रति धर्मकथाद्वारमुच्यते-अप्रेतनेन संघाटकेन याचितेऽलब्धे चान्यः संघाटकस्तत्र गत्वा तं संस्तारकस्वामिनं धर्मकथा कथनेन समाकर्ण्य याचते । संस्तारकं स तथा लब्ध्वा नीतः सन पूर्वपूर्वसङ्घाटकस्या भवति न येन पश्चादानीतस्तस्येति गतं धर्मकथाद्वारमधुना व्यवच्छिन्नभावद्वारमुच्यते-प्रथम संघाटकेन संस्तारको याचितो न लब्धस्ततस्तद्विषये भावो व्यवच्छिन्नो गुरुसमीपे च गत्वा तथैवा लोचितं यथा अमुकस्य गृहे अमुकस्य गृहे संस्तारको दृष्टो याचितश्च परं न लब्धः स तिष्ठतु द्वितीयं वारं न कोऽपि याचिष्यते, । एवं व्यवच्छिन्नं भावं ज्ञात्वा योऽन्य संघाटको याचते लभते च स तस्याभवति न पूर्वस्य । तदेवं योजितानि यथा भावादीनि चत्वार्यपि द्वाराणि । अत ऊर्ध्वमाह-षष्टे द्वारेऽन्यो वान्यस्येति लक्षणे विशेषऽस्ति तं वक्ष्यामि । प्रतिज्ञातमेव करोति-

[भा. ३४३३] अच्छिन्ने अन्नोन्नं सो वा अन्नं तु जइ स देज्जाहि ।
कप्पइ जो उ पणइलो तेन व अन्नेण व न कप्पो ।।

वृ - येन प्रथमसंघाटकेन संस्तारको दृष्टो याचितश्च न लब्धस्तस्य तद्विषये भावे अच्छिन्नेअव्यवच्छिन्ने अन्येन संघाटकेन तत्र गत्वा याचितेऽन्यो मनुष्योऽन्यसंस्तारकं यदि दद्यात् यदि वा स एव संस्तारकस्वामी अन्यं संस्तारकं दद्यात् । तदा स तस्य कल्पते यस्तु प्रणयितो याचितः संस्तारकः स तेन स्वामिनाऽन्येन वा मनुष्येण दीयमानो न कल्पते । गतमवभाषितद्वारमधुना लब्धद्वारमाह-

[भा. ३४३४] लद्धद्वारे चेवं जोए जह संभवं तु दाराइं ।
जत्तिय मेत्तो विसेसो तं वुच्छामि समासेणं ।।

वृ - लब्धद्वारेऽप्येवमुक्तप्रकारेण श्रुत्यादीनि द्वाराणि यथासंभवं योजयेत् । यावन्मात्रश्च विशेषस्तावन्मात्रं तं विशेषं समासेन वक्ष्ये । तत्र प्रथम श्रुत्वेति द्वारमधिकृत्य विशेषमाह-

[भा. ३४३५] उभासियंमि लद्धे भणंति न तरामि एण्हि नेउं जे ।
अत्थउ न हामो पुन कल्ले वा घच्छेहामोत्ति ।।

वृ - प्रथमसंघाटकेन भिक्षामटता क्वापि संस्तारको दृष्टो याचितो लब्धश्च । तस्मिन् अवभाषिते लब्धे च साधवो भणन्ति न शक्नुमः । सम्प्रति भिक्षामटन्तः संस्तारकं नेतुं ततस्तिष्ठतु पश्चान्नेष्यामः । एतच्च गुरुसमीपे समागत्य तेन संघाटकेनालोचितं तच्च श्रुत्वाऽन्यो याचते लभते च आनीतः सन् पूर्व संघाटकस्या भवति न तस्य । अपरे द्वयोरपि तं साधारणमाचक्षते, विपरिणामद्वारं साक्षादाह-

[भा. ३४३६] नवरिय अनो आगतो तेन वि सो चेव परणतितो ।
तत्थ दिज्जो अन्नस्स स उ विपरिणामेइ तह चेव ।।

वृ - प्रथम संघाटकेन संस्तारको याचित्ते लब्धे नेतुमशक्यतया तत्रैव मुक्तेन नवरिकेवलमन्यः सङ्घाटक

आगतस्तेनापि तत्र स एव संस्तारकः प्रणयितो याचितः संस्तारकस्वामिनोक्तं दत्तोऽन्यस्य ततस्त
तं विपरिणामयति । यथा सर्वदिवाहं तव प्रियस्ततो मयि सति किमन्यस्मै तव दातुमुचितं तस्माद्यदि
आगच्छति तर्हि तस्य प्रतिषिद्ध पश्चान्मम दातव्य इति । एवं यदि विपरिणाम्यानीतो भवति तत पूर्वतम
भवति नेतरस्य तदेवमुक्तं विपरिणामद्वारमधुना धर्मकथाद्वारं ... प्रथम संघाट ... संस्तारक दत्तोऽन्य
ततो धर्मकथाकथनतस्तमावर्ज्य ब्रूते । यथा तस्य प्रतिषिध्यायं संस्तारको मह्यं देयः एवमानीतः
संघाटकस्य स आभवति नेतरस्य । तथा येन प्रथमसंघाटकेन संस्तारको याचितो लब्धश्रुत
तद्विषयभावव्यवच्छेदात्तथा प्रथमसंघाटकेन संस्तारके याचिते लब्धे नेतुमशक्यतया तत्रैवमुक्तोऽन
संघाटकस्तत्र समागत्य संस्तारकं याचते । तत्र यदि अन्यो मनुष्यो संस्तारकं दद्यात् स वा प्रथमसंघाटक
याचितोऽन्यं तदा स तस्य कल्पते यः पुनः प्रणयितः स तेनान्येन वा दीयमानो न कल्पते । तथा
विपरिणामद्वारं मुक्त्वा शेषद्वाराणामतिदेशमाह-

[भा.३४३७] अहभावो लोयण धम्मकहणवोच्छिन्नमन्नदाराणि ।
नेयाणि तहाचेव उ जहेवउ छट्ठ दारम्मि ॥

वृ- यथा भावद्वारमालोयणत्ति पदैकदेशे पदसमुदायोपचारादालोचनं श्रुत्वेति द्वारं धर्मकथनद्वा
व्यवच्छिन्नदारमन्यद्वारं चेति पञ्चद्वाराणि यथैवावभाषितद्वारेऽभिहितानि तथैव ज्ञेयानि षष्ठं द्व
विपरिणामद्वारं साक्षादुक्तं । गतं लब्धद्वारमिदानीं संज्ञातिद्वारमाह-

[भा.३४३८] सन्नायएवि एच्चिय दारा नवरं इमं तु नाणत्तं ।
आयरिएणाभिहितो गेण्हइ संथारयं अज्जो ॥

[भा.३४३९] सुद्धदसमी ठियाणं तेभी घेच्छामि तद्दिनं चेव ।
नायगिहे पडिनत्तो भाएउ संथारतो भंते ॥

वृ- यान्येव श्रुतादीनि षट् द्वाराणि लब्धद्वाराभिहितान्येतान्येव सज्ञातिकद्वारेऽपि द्रष्टव्यानि नवरं
भावनायां यन्नानात्वं तदिदं वक्ष्यमाणं तदेवा-आयरिएणेत्यादि आचार्येणाभिहित आर्यसंस्तारकं गृहाण,
एवमुक्तः सन् सज्ञातिकानां गृहमागमत् दृष्टः संस्तारको याचितो लब्धश्च अथवा सज्ञातिकैर्याचितैरेव
स उक्तो ग्रहाण संस्तारकं ततस्तेनोक्तं यस्मिन् दिवसे संस्तारके स्वप्तुमारप्स्यते तस्मिन् दिवसे नेष्यामः ।
आचार्याश्च शुद्धदशम्यास्तत्र स्थितास्तत आगत्य शुद्धदशमी स्थितानां गुरूणामन्तिके ब्रूते आलोचयति-
भदन्त मया ज्ञातिगृहे संज्ञातिकगृहे संस्तारकः प्रतिज्ञातो निभालितस्तिष्ठति ततो यत्र दिने संस्तारके
स्वप्स्यते तद्दिवसमेव तस्मिन्नेव दिने गृहीष्यामः । एवमालोचितं श्रुत्वाऽन्यो याचते लभते च आनीतः
पूर्व संघाटकस्या भवति न येनानीतस्तस्य गतं श्रुत्वाद्वारमपरः संघाटकोऽन्तलसंघाटकवृत्तान्तमनवज्ञाय
यथाभावेन गत्वा याचते लभते तेनाप्यानीतः पूर्वसंघाटकस्या भवति न तस्य, अपरे तु द्वयोरपि संघाटयोस्त
साधारणमाचक्षते यथा भावद्वारमपि गतमिदानीं साक्षाद्विपरिणामद्वारमाह-

[भा.३४४०] विपरिणामे तहच्चिय अन्नो गंतूण तत्थ नायगिहं ।
आसन्नयरो गिण्हइ मित्तो अन्नोवि मं मोत्तुं ॥

[भा.३४४१] अन्नेवि तस्स नियगा देहिहि अन्नं च तस्स मम दाउं ।
दुल्लभ लाभ मणाउं ठियंमि दाणं हवति सुद्धं ॥

[भा.३४४२] सन्नायगिहे अन्नो न गेण्हए तेन असमणुनातो ।

सत्तिविहवेसत्तीएव सोविहु नवि तेन निव्विसति ।।

**वृ-** तेन साधुना मया भदन्त ज्ञातिगृहे संस्तारकः प्रतिज्ञातोऽस्ति, तस्तस्मिन्नवेदिने समानेष्यते इत्यालोचितं श्रुत्वा अन्य आसन्नतरो मित्ररूपो वा ज्ञातिगृहं गत्वा तत्र तथैव संस्तारकस्वामिनं विपरिणामयति । स चान्यो विपरिणाम्य गृह्णाति इदं वक्ष्यमाणमुक्त्वा तदेवाह- अन्ने वीत्यादि अन्येऽपि च तस्य निजकाः संस्तारकं दास्यन्ति यदि वा मामामुं संस्तारकं दत्वा तस्यान्यं संस्तारकं दद्याः । अथवा अस्मादृशेऽज्ञातोच्छवृत्तिजीविनि यत् दुर्लभदानं दीयते तद्भवति शुद्धमिह परलोकाशंसा विप्रमुक्तत्वात् तथा स्वज्ञातिगृहेऽन्योऽसंज्ञातिकस्तेन संस्तारकस्वामिना असमनुज्ञातो न गृह्णाति । अहं पुनः संज्ञातिकस्ततो व शय्यामेकवारमनुज्ञातस्यापि संस्तारकस्य ग्रहणे तथा सति विभवे यदि वा विभवाभावेऽपि स्वशक्त्या [illegible] सज्ञातिक[illegible] [illegible] निर्विशति उपभुङ्क्ते भक्तपान संस्तरकादि तस्मान्मम दातव्य एष संस्तारक इति एवं विपरिणाम्यानीतः पूर्वसंघाटकस्या भवति न येनानीतस्तस्यगतं विपरिणामद्वार मधुना धर्मकथाद्वारमुच्यते तथैवालोचनामाकर्ण्यान्यः संघाटक स्तत्रागत्य धर्मकथामारभते । ततो धर्मकथया तमत्यन्तमावर्ज्य तं संस्तारकं याचते । स धर्मकथा-श्रवणोपरोधतो न निषेर्द्धु शक्त इति तस्मै दत्तवान् सोऽपि पूर्वसंघाटकस्या भवति, न येनानीतस्तस्य । गतं धर्मद्वारं । सम्प्रति व्यवच्छिन्नद्वारमाह- भावना तस्य सज्ञातिकस्य याचितसंस्तारकविषये भावः । कुतश्चित्कारणात् व्यवच्छिन्नोऽन्येन च संघाटकेनाभावेन याचित्वा समानीतः स येनानीतस्तस्या भवति न पूर्वसंज्ञातिकस्य । अन्यद्वारभावना त्वियम्- पूर्वप्रकारेण तेन संज्ञातिकेन गुरुणामन्तिके विकटेन कृते तत् श्रुत्वाऽन्यः संघाटकस्तत्र गत्वा संस्तारकं याचते । तत्रान्यो मनुष्योऽन्यं संस्तारकं यदि ददाति यदि वा स एव पूर्वसंघाटकयाचितः संस्तारकस्वामी परमन्यं संस्तारकं तदा कल्पते पूर्वयाचितस्त्वनेनान्येन वा दीयमानो न कल्पते तथा चाह-

**[भा.३४४३]** सेसाणि य दाराणि तहवि य बुद्धीय भासणियाइं ।
उड्ढद्दारे वि तहा नवरं उड्ढंमि नाणत्तं ।।

**वृ-** शेषाण्यपि विपरिणामजानि श्रुत्वादीनि द्वाराणि तथैव प्रागुक्त प्रकारेणैव बुद्धया परिभाव्य भाषणीयानि तानि च तथैव भावितानि । गतं संज्ञातिक द्वारमिदानीमूर्ध्वद्वारमाह- ऊर्ध्वद्वारेऽपि तथा पूर्वोक्तप्रकारेण द्वाराणि श्रुत्वादीनि योजनी यानि नवरमूर्द्धे नानात्वं तदेव भावयति ।

**[भा.३४४४]** आनेऊण न तिणे वासस्सय आगमं तु नाऊणं ।
माउल्लेज्ज हुच्छणे ठवेइ मावणो मग्गेज्जा ।।

**वृ-** संघाटकेन क्वापि गृहे संस्तारको दृष्टो याचितो लब्धश्च आनें तुमपि व्यवसितः । परं वर्षस्यागमनागमनं ज्ञात्वा मापान्तराले वर्षं पतेदिति कृत्वानानेतुं तीर्णः शक्तस्तथा मा वर्षेणात्र प्रस्तारित आर्द्रीक्रियते मा वा अन्यः संघाटकः समागत्य मार्गयत् याचेत इति । छन्ने प्रदेशे कुड्येऽवष्टभ्य ऊर्ध्वीकृतस्ततो गुरुसमीपे समागत्य विकटयति । तच्च श्रुत्वा अन्य उपेत्यागत्य याचते स च तेनानीतः पूर्व संघाटकस्या भवति, न येनानीतस्तस्य । गतं श्रुत्वा द्वारमिदानीं यथा भावद्वारं विवक्षुराह-

**[भा.३४४५]** पुच्छाए नाणत्तं केणुद्धकयं तु पुच्छियमसिद्धे ।
अन्नासढ माणीयंपि पुरिल्ले केइ साहारं ।।

**वृ-** यथा भावद्वारे पृच्छायां नानात्वं किं तदिति चेदुच्यते- अन्यः संघाटकस्तत्र यथा भावेन गतस्तेन

ऊर्ध्वकृतं संस्तारकं दृष्ट्वा चिन्तितं किं नामैष संयतेन ऊर्ध्वीकृत उत गृहस्थेन यथा भावत एवं तेन संशयानेन पृष्टः-'केनायमूर्ध्वीकृत' इति गृहस्थैश्च न किमपि शिष्टं कथितं ततोऽन्येन संघाटकेनाशेठन संस्तारको याचितो लब्ध आनीतश्च। तथान्येनाशठेनानीतमपि संस्तारकं पूर्वस्य संघाटकस्याभवन्त-माचक्षते। केचित्पुनर्द्वयोरपि संघाटकयोः साधारणं। अथ पृष्टे गृहस्थैराख्यातं गृहस्थेनोर्ध्वीकृतस्तथ यथभावेन याचितो लब्धश्च। सोऽप्यानीतः पूर्वसंघाटकस्याभवति। अपरेतु द्वयोरपि साधारणमाहुः-

[भा.३४४६] छन्ने उद्धोवकतो संथारो जइ वि सो अहा भावो।
तत्थवि सामायारी पुच्छिज्जइ इतरहा लहुलो॥

वृ- यद्यपि संस्तारको यथा भावात् यथा भावेन गृहस्थैः छन्ने प्रदेशे उर्ध्वोपकृतो ज्ञायते चेतत्तथापि तत्रेयं सामारी गृहस्थोऽवश्यमुक्तप्रकारेण पृच्छ्यते। इतरथा पृच्छाकरणाभावे प्रायश्चित्तं लघुको मासः गतं यथा भावद्वारं। विपरिणामनधर्मकथाव्यवच्छिन्नभावान्यद्वाराणि पूर्ववत् भावनीयानि। तथा चाह-

[भा.३४४७] सेसाइं तह चेव विपरिणामाइयाइं दाराइं।
बुद्धीए विभासेज्जा एत्तो वुच्छं पभुद्दारं॥

वृ- शेषाणि विपरिणामादीनि द्वाराणि बुद्ध्या यथा प्रागभिहितानि तथैव परिभाव्य विभाषेत प्रतिपादयेत। गतमुर्द्धीकृतद्वारमत ऊर्ध्वं प्रभुद्वारं वक्ष्यामि। प्रतिज्ञातमेव निर्वाहयति-

[भा.३४४८] पभुदारे वि एवं नवरं पुन तत्थ होइ अहभावे।
एगेन पुत्तो जाइतो बिइएण पिया उ तस्सेव॥

वृ- प्रभुद्वारेऽपि एवं पूर्वोक्तप्रकारेण श्रुत्वादीनि षट्द्वाराणि ज्ञेयानि, नवरं पुनस्तत्र प्रभुद्वारे यथा भावे यथा भावलक्षणे अवान्तरभेदे नानात्वं भवति। एकेन संघाटकेन यथाभावेन पुत्रो याचितः। द्वितीयेन तस्यैव पिता द्वाभ्यामपि दत्तः स कस्या भवति तत आह-

[भा.३४४९] जो पभुतरओ तेसिं अहवा दोहिंपि जस्स दिन्नंतु।
अपभुम्मि लहु आणा एगतरपदोसतो जं च॥

वृ- तयोःपितापुत्रयोःमध्ये यः प्रभुतरस्तेन यस्य दत्तस्तस्या भवति। अथ द्वावपि प्रभूताभ्यामपि संभूय यस्य दत्तस्तस्या भवति यस्य तु प्रतिषिद्धस्तस्य नाभवति। अथाप्रभुणा दत्तं गृह्णाति गाथायां सप्तमी तृतीयार्थे तदा तस्य प्रायश्चित्तं चत्वारो लघवः। तथा आज्ञादयो दोषा यच्च एकतरप्रद्वेषत आपद्यते प्रायश्चित्तं तदपि तस्य द्रष्टव्यमेकतरप्रद्वेषो नाम यः प्रभुः स संयतस्य चोपरि प्रद्वेषं यायात्। येन वा अप्रभुणा सता दत्तस्तस्य।

[भा.३४५०] अहवा दोन्नि वि पहुणो ताहे साधारणं तु दोण्हं पि।
विप्परिणामादीणि उ सेसाणि तहेव भासेज्जा॥

वृ- अथवा द्वावपि पितापुत्रौ प्रभू, द्वाभ्यामपि च पृथक् पृथक् द्वयोः संघाटकयोरनुज्ञातस्तदा तयोर्द्वयोरपि संघाटकयोः साधारणमाचक्षते संस्तारकं, तदेवं यथाभावे विशेषो दर्शितः। शेषाणि तु विपरिणामादीनि पञ्चपि द्वाराणि तथैव भावनीयानि यथा प्रागभिहितानि॥ साम्प्रतमुपसंहारमाह-

[भा.३४५१] एसविहीउ भणितो जहि यं संघाटएहिं मग्गंति।
संघाडेह अलभंता तो वंदेन मग्गंति॥

वृ- यत्र संघाटकैः प्रत्येकं प्रत्येकं संस्तारका मृग्यन्ते तत्र एष प्रत्येकं प्रत्येकमानीतानां संस्तार-

कानामाभवन् व्यवहारविषये विधिरुक्त: । यत्र पुनरेकैकः संघाटको न लभते तदा वृन्दसाध्यानि कार्याणि वृन्देन कर्तव्यानीति न्यायात् संघाटकैरलभमाने वृन्देन समुदायेन मार्गयन्ति तत्र विधिमतिदेशन्न आह-

**[भा. ३४५२]** वंदेणं तह चेवय गहणणुन्नवणाइतो विही एसो ।
नवरं पुन नाणत्तं अप्पणणे होइ नायव्वं ।।

**वृ-** वृन्देनापि मार्गणे तथैव तेन प्रकारेण ग्रहणेऽनुज्ञापनायामादिशब्दादर्पणे च विधिरेव प्रागभिहितो द्रष्टव्यो नवरं पुनरर्पणे भवति नानात्वं ज्ञातव्यं । तदेवाह-

**[भा. ३४५३]** सव्वेवि दिठरुवे करेहिं पुन्नंमि अम्ह एगयरो ।
अन्नो वा वाघो अप्पहिति जं भणसि तस्स ।।

**वृ-** संस्तारकस्वामिनं प्रत्युच्यते सर्वानप्यस्मान् दृष्टमूर्तान् कुरु अस्माकमेकतरः पूर्णे वर्षाकाले संस्तारकंयुष्माकमर्पयिष्यति । अथास्माकमेतेषां कश्चनापि व्याघातो भवेत् तदा अन्योऽपि यत्त्वं भणसि तस्य समर्पयिष्यति-

**[भा. ३४५४]** एवं ता सग्गामे असती आनेज्ज अनगामातो ।
सुत्तत्थे काऊणं मग्गइ भिक्खं तु अऽभाणां ।।

**वृ-** एवमुक्तप्रकारेण तावत्स्वग्रामे संस्तारकानयने विधिरुक्तोऽसति स्वग्रामे संस्तारकस्याभावे अन्यग्रामादपि आनयेत् । कथमित्याह-सूत्रार्थौ कृत्वा सूत्रपौरुषीमर्थपौरुषीं च कृत्वा भिक्षामटन-संस्तारकंमार्गयति यदि पुनरन्यग्रामेऽपि प्रत्येकं संघाटकस्यालाभस्तदा अर्थपौरुषीं हापयित्वा तत्र वृन्देन गत्वा याचन्ते ।

**[भा. ३४५५]** अदिट्ठे सामिम्मि उं वसिउं आनेइ बिइय दिवसंमि ।
खेत्तंमि उ असंते आनयनं खेत्तबहियातो ।।

**वृ-** यदि स्वग्रामे न दृश्यते संस्तारको दृश्यमानो वा न लभ्यते तदा स्वक्षेत्राद्विगव्यूतप्रमाणे अन्यग्रामे गत्वा याचनीयः । अथ न दृश्यते तत्र संस्तारकस्वामी तदा गृहे उषित्वा द्वितीयदिवसे संस्तारकमनुज्ञाप्य गृहीत्वा समागच्छन्ति । अथ स्वक्षेत्रे न लभ्यते तदा स्वक्षेत्रे संस्तारकस्याभावे स्वक्षेत्राद्बहिष्टादप्यानयनं संस्तारकस्य द्वित्रिदिनमध्ये कर्त्तव्यम् ।

**[भा. ३४५६]** सव्वेहिं आगएहिं दाउं गुरुणो उ सेस जह वुड्ढं ।
संथारे घेत्तूण उवासेहो अनुन्नवणा ।।

**वृ-** सर्वैरपि संघाटकैः पर परतरग्रामेभ्यः समागतैः संस्तारकपरिपूर्णतायां सत्यां त्रय उत्कृष्टाः संस्तारकाः गुरोर्दातव्यास्ततः शेषैर्यथावृद्धं यथा रत्नाधिकतया गृहीतव्याः । तान् संस्तारकान् गृहीत्वा तदनन्तरमवकाशेन भवत्यनुज्ञापना । एतावता ग्रहणद्वारं अनुज्ञापनाद्वारं समापतितमित्यावेदितम् ।

**[भा. ३४५७]** जो पुव्वपुनन्नवितो पेसिज्जंतेन होति उग्गासे ।
हेट्ठिल्ले सुत्तंमि तस्सावसरं इह पत्तो ।।

**वृ-** यः पूर्वमधस्तने प्रथमे पिण्डसूत्रे प्रेष्यमाणे-नावकाशोऽनुज्ञापितस्तस्यावसर इह प्राप्तस्ततः स भण्यते-

**[भा. ३४५८]** नाउण सुद्धभावं थेरा वियरंति तं तु उग्गासं ।

सेसाण वि जो जस्स उ पाउग्गो तस्स तं देंति ।।

वृ- तत्र प्रेष्यमाणस्यावकाशमनुज्ञापयतः स्थविरा आचार्याः शुद्धं भावं ज्ञात्वा तमेवावकाशं वितरन्ति । अनुजानते शेषाणामपि योऽवकाशो यस्य साधोः प्रायोग्यस्तस्य तं ददाति । अत्र विधिमाह-

[भा.३४५९] खेलनिवातपवाते कालगिलाणे य सेहपडियरए ।
समविसमे पडिपुच्छा आसंखडिए अनुन्नवणा ।।

वृ- यस्य खेलः श्लेष्पाम प्रस्पन्दते स गुरुन् अनुज्ञापयति भगवन् ! श्लेष्मापतति ततोऽन्यदवकाशान्तरमनुजानीत । ततस्तस्यान्योऽवकाशोदातव्यः । तथा निवाते धर्मे निपीड्यमानो यदि प्रवातमनुज्ञापयति तर्हि तस्य प्रवातो दातव्यः । प्रवातेवातेपीड्यमानस्य निवातः कालग्राही द्वारमूलमनुज्ञापयति, । स तत्र स्थाप्यते, ग्लानस्य समीपे शैक्षस्य प्रतिचारकः शिक्षाद्वयं ग्राहयित्वा शैक्षकस्य समीपे समविषमायां भूमौ यस्य पार्श्वाणि दुःस्वयतो सोऽध्यास्यायां भूमौ स्थाप्यते । यो यं पुनः पुनः प्रतिपृच्छति स तस्य पार्श्वे आसंखडिकाः स्वस्व तरकस्य पार्श्वे एवमनुज्ञापना साधूनां भवति । आचार्येण च शुद्धभावमवगम्य तथैवानुज्ञायते उपसंहारमाह-

[भा.३४६०] एवमणुन्नवणाए एयं दारं इहं परिसमत्तं ।
एगंदियादि दारा एत्तो उड्ढं पवक्खामि ।।

वृ- एवमुक्तप्रकारेण साधूनामनुज्ञानायां भणितायामेतत् अनुज्ञापना लक्षणं द्वारमिह परिसमाप्तमत ऊर्ध्वं तु एकाङ्गिकादीनि द्वाराणिप्रवक्ष्यामि । प्रतिज्ञातमेव निर्वाहयति-

[भा.३४६१] असंघातिमेव फलगं घेत्तव्वं तस्स असति संघाइं ।
दोमाइतस्स असती गेण्हेज्ज अहाकडा कंबी ।।

वृ- पूर्वमसंघातिममेव फलकं गृहीतव्यं तस्यासत्यभावे संघातिमं किं विशिष्ट मित्याह- द्वयादि फलकात्मकं द्विफलकात्मकमादि शब्दात्रिफलकात्मकं चतुःफलकात्मकं वा गृह्णीयादिति योगः । तस्य फलकसंघातात्मकस्य संस्तारकस्याभावे यथाकृताः कम्बी गृह्णीयात् । गृहीत्वातन्मयः संस्तारको विधीयते । तत्र या नमन्तिकं व्यस्ताः सान्तराः क्रियन्ते निरन्तराभिः प्राणजातैर्विराधनां एतच्च फलकेष्वपि द्रष्टव्यं । तथा चाह-

[भा.३४६२] दो मादि संतराणि उ करेइ मा तत्थ ऊनमंतेहिं ।
संथरसंणणोन्ने पाणादिविराहणा कुज्जा ।।

वृ- द्वयादीनि फलकानि नमन शीलानि सान्तराणि करोति । किमर्थमित्याह- तत्रद्वयादि फलकात्मके संस्तारके नमद्भिः फलकैरन्योन्यं संस्तारके प्राणादीनां विराधना भवेत् । प्राणा द्वि त्रि चतुरिन्द्रि आदिशब्दाज्जीवादि परिग्रहः । गतमेकाङ्गिकद्वारमिदानीमकुचद्वारम् कुचस्पन्दनेन कुचतीत्य कुच इगुपान्त्यलक्षणः । कः प्रत्ययः यस्तथा बद्धः सन् न स्पन्दते सो अकुचो ग्राह्यो यस्तु कुचबन्धनः स परिहार्यस्तथा चाह-

[भा.३४६३] कुयबंधणंमि लहुगा विराधना होई संजमायाए ।
सिढिलिज्जंतंमि जहा विराधना होइ पाणाणं ।।

[भा.३४६४] पवडेज्ज बदुबद्धे विराधना तत्थ होइ आयाए ।
जम्हा एए दोसा तम्हा उ कुयं न बंधेज्जा ।।

वृ- कुचं शिथिलं बन्धनं यस्य तस्मिन् कुचबन्धने संस्तारके गृह्यमाणे प्रायश्चित्तं चत्वारो लघुकाः। तथा विराधना भवति संयमे आत्मनि च यतस्तस्मिन शिथिल्यमाने शिथिलबन्धनतया प्रस्पन्दमाने प्राणानां विराधना भवति। एषा संयमविराधना दुर्बद्धे स प्रपतेत्। तत्र भवत्यात्मविराधना यस्मादेते दोषास्तस्मात् यथा कुचं शिथिलं भवेत् तथा न बन्धीयात् किन्तु गाढ बन्धनबद्धं कुर्यात्।

[भा. ३४६५] तद्दिवसं पडिलेहाई सी उक्खेतु हेट्ठंउवरिं च।
रयहरणेणं भंडं अंके भूमीए वा काउं॥

वृ- तद्दिवसं प्रतिदिवसं दिने दिने इत्यर्थः। भाण्डं संस्तारकादि लक्षणमीषत् उत्क्षिप्य अङ्के उत्सङ्गे भूमौ वा कृत्वा अध उपरि च रजोहरणेन तस्य प्रत्युपेक्षा कर्तव्या।

[भा. ३४६६] एवं तु दोन्नि वारा पडिलेहा तस्स होइ कायव्वा।
सव्वे बंधे मोत्तुं पडिलेहा होइ पक्खस्स॥

वृ- एवमुक्तेन प्रकारेण द्वौ वारौ प्रातरपराह्ने च तस्य संस्तारकस्य प्रत्युपेक्षा भवति कर्तव्या। पक्षस्य पक्षस्यान्ते पुनः सर्वान् बन्धान् मुक्त्वा च्छोटयित्वा प्रत्युपेक्षा भवति कर्तव्या। गतमकुचद्वारम्।

[भा. ३४६७] उग्गममादी सुद्धो गहणादी जो व वन्निंतो एस।
एसो खलु पाउग्गो हेठिमसुत्ते च जो भणितो॥

वृ- य उद्गमादि दोषशुद्धउद्गमोत्पादनादि दोषविशुद्धो यो वा एषोऽनन्तरमुपवर्णिथओऽग्रहणादौ ग्रहणेऽनुज्ञापनायां बद्ध एकाङ्गिकोऽकुचश्चयदिवा यो भणितोऽधस्तनसूत्रे ऋतुबद्धप्रत्येक सूत्रे द्वात्रिंशद्भङ्गेषु मध्ये प्रथमभङ्गवर्ती एष खलु प्रायोग्यो वेदितव्यः॥

[भा. ३४६८] कज्जंमि समत्तंमी अप्पेयव्वो अणप्पिणणे लहुगा।
आणादी आ दोसा बिइयं उट्ठाण हियदड्ढो॥

वृ- कार्ये समाप्ते सति नियमात्संस्तारकोऽर्पयितव्यो अनर्पणे प्रायश्चित्तं चत्वारो लघुकाः आज्ञादयश्च दोषाः। अत्रापि द्वितीयपदमपवादपदं यदि रोगस्योत्थानं प्रवर्तते। स्तेनैर्वापृतोऽग्निना वा कथमपि दग्धस्तदानार्पणमिति। तदेवं भावितं वर्षावाससूत्रं, (सं) प्रति वृद्धावाससूत्रभावनार्थमाह-

[भा. ३४६९] वुड्ढावासे चेवं गहणादि पदाउ होंति नायव्वा।
नाणत्तखेत्तकाले अप्पडिहारी य सो नियमा॥

वृ- वृद्धावासेऽप्येवं पूर्वोक्तेन प्रकारेण ग्रहणादीनि पदानि भवन्ति ज्ञातव्यानि भवन्ति। किमुक्तं भवति। यथा प्राक् वर्षावासे ग्रहणानुज्ञानैकाङ्गिका कुचप्रायोग्य लक्षणानिपञ्च द्वाराण्यभिहितानि। तथा वृद्धावासेऽप्यनुगन्तव्यानि तु शब्दो विशेषणो स चैतद्विशिनष्टि। वृद्धावासे ऋतुबद्धेऽप्येष एव विधिरिति नवरमत्र नानात्वं क्षेत्रे काले च तथा नियमादप्रतिहारी स वृद्धावासयोग्यः संस्तारको गृहीतव्यः।

[भा. ३४७०] काले जा पंचाहं परेण वा खेत जाव बत्तीसा।
अप्पडिहारी असती मंगलमादीसु पुव्वुत्ता॥

वृ- इह वर्षावासे संस्तारकस्यानयने कालत उत्कर्षेण त्रीणि दिनान्युक्तानि। अत्र तु वृद्धावासे काले कालमधिकृत्य यावत्पञ्चाहं पञ्चदिनानि ततः परेण वा आनयनं द्रष्टव्यम्। क्षेत्रतो यावत् द्वात्रिंशत् योजनानि तथा अप्रतिहारिणोऽसत्यभावे संस्तारकस्य यानि मङ्गलादीनि पूर्वमुक्तानि तानि प्रयोक्तव्यानि-

**मू. (१९१)** *थेराणं थेरभूमिपत्ताणं कप्पइ दंडए वा भंडए वा छत्तए वा मत्तए वा लट्ठिया वा चेले वा चम्मेवा चम्मपलिच्छेयणएवा अविरहिए ओवासे ठवेत्ता गाहावइकुलं पिंडवायपडियाए पविसित्तए वा निक्खमित्तए वा, कप्पइण्हं संनियट्टचारीणं ओग्गहं अनुन्नवेत्ता परिहरित्तए ।*

**[भा.३४७१]** वुड्ढो खलु समधिगतो अजंगमो य जंगमविसेसे ।
अविरहितो वा वुत्तो सहाय रहिए इमा जयणा ।।

**वृ-** अनंतरसूत्रे वृद्धः खलु समधिकृतोऽनेन पुनः सूत्रेण स्थविर उच्यते स्थविर वृद्ध शब्दयोरेकार्थत्वात् ततः पूर्वसूत्रादनंतरमस्यसूत्रस्योपन्यासो नवरं स पूर्व सूत्रे वृद्धोऽजंगमो जंधाबलपरिहान उक्तोऽत्र तु जङ्गमविशेषो न सर्वथा जङ्घाबलपरिहीनो वक्तव्योऽथवायं विशेषः पूर्वसूत्रे योधिकृतो वृद्ध उक्तः ससहायैरविरहित उक्तोऽत्रतु यः सहाय रहितस्तस्य सामाचारी प्रतिपाद्या तथा चाह-सहायरहिते इयमधिकृतसूत्रप्रतिपाद्या यतना अनेन सम्बधेनायातस्यास्य व्याख्या-स्थविराणां जरसा जीर्णानां स्थविरभूमिं प्राप्तानां सूत्रार्थतदुभयोपेतानामित्यर्थः । कल्पेन दण्डविदण्डादिर्भदभिन्नं भण्डकं अनेक विधानि उपकरणानि च्छत्रकं प्रतीतं मात्रकमुच्चारादिसत्कं लष्टिका दण्ड विशेषः चेलंकल्पादि चर्मतलिकादिरूपं चर्मपरिच्छेदनकं वध्रा । एतान् अविरहिते अवकाशे स्थापयित्वा गृहपतिकुलं पिण्डपातप्रतिपाताय प्रवेष्टुं वा निःक्रमितुं वा कल्पते सन्निवृत्तवाराणां भिक्षाचर्यातः प्रत्यागतानां स्थविराणां द्वितीयमपिवारमवग्रहमनुज्ञाप्य परिहर्तुं धारणया परिभोगेन चेत्येष सूत्राक्षरमात्रार्थः । विशेष व्याख्या तु भाष्यकृता क्रियते तत्र यानि पदानि व्याख्येयानि तानि दर्शयति ।

**[भा.३४७२]** दण्ड वि दण्डे लट्ठी वि लट्ठी चम्मोय चम्मकोसेय ।
चम्मस्सय जे च्छेया थेरा वि य जे जराजुणा ।।

**वृ-** दण्डो विदण्डः यष्टिर्वियष्टिः चर्म चम्मकोशः चर्मणश्च ये च्छेदास्ते चर्मपरिच्छेदनकास्ते च व्याख्येयास्तत्र प्रथमतः स्थविरपदमाचक्षते स्थविरा अपि च ये जराजीर्णास्ते द्रष्टव्याः ।

**[भा.३४७३]** आयवताण निमित्तं छत्तं दंडस्स कारणं वुत्तं ।
कीस ठवेई पुच्छा स दिग्धथूरो उ दुग्गाइ ।।

**वृ-** आतप उष्णेन परितापना तस्य त्राणार्थं च्छत्रकं गृह्णाति, दण्डस्य उपलक्षणमेतत् । विदण्डादीनां ग्रहणे कारणं पूर्वं निशीथे कल्पे च भणितं । अथ कस्माद्दण्डं स्थापयति । एषा पृच्छा । अत्रोत्तरं दण्डको दीर्घः स्थिरश्च । ततस्तं दुर्गे व्याघ्रादि परिवारणनिमित्तं परिवहति । सम्प्रति भाण्डादिपद व्याख्यानार्थमाह-

**[भा.३४७४]** भंडं परिग्गहो खलु उच्चारादी य मत्तया तिन्नि ।
अहवा भंडग गहणे नेगविहं भंडगं जोग्गं ।।

**वृ-** भाण्डकं खलु पतद्गह उच्यते उच्चारादी च आदि शब्दात् प्रश्रवणे श्लेष्मणि चेति परिग्रहत्रीणि मात्रकाणि भवन्ति । तद्यथा-उच्चारमात्रकं प्रश्रवणमात्रकं श्लेष्ममात्रकं चेति । अथवा भाण्डक-ग्रहणेनानेकविधं भाण्डकं गृहीतं द्रष्टव्यं ।

**[भा.३४७५]** चेलग्गहणे कप्पा तसं थावर जीवदेहनिप्फन्ना ।
दोरेयराव चिलिमिलि चम्मं तलिगावकत्ति व्व ।।

**वृ-** चेलग्रहणेन त्रसस्थावरजीवशरीरनिष्पन्ना ऊर्णिकसूत्रिकरूपा इत्यर्थः कल्पाः परिग्रह्यन्ते । चिलिमिलिनमिति जवनिका सादवरकमयी इतरा वा द्रष्टव्या चर्ममयतलिका उपानत् कृत्तिर्वा

औपग्रहिकोपग्रहण विशेषरुपा ।।

[भा.३४७६] अंगुठ अवरकाणु तहकोसगच्छेयणं तु जे वद्धा ।
तेच्छिन्न संघणट्ठा दुखंड संधाण हेउं वा ।।

वृ- चर्ममयः कोशः चर्मकोशः सोऽङ्गुष्ठस्य यदि वा अवरपार्ष्णु पार्ष्णिका तस्या परिरक्षणाय ध्रियते । अथवा नखरदनादेरौपग्रहिकोपकरणविशेषस्य चर्ममयः कोशश्चर्मकोशः ये तु बध्रास्ते चर्मपरिच्छेदनकमित्युच्यते । ते च च्छिन्नसन्धानार्थमथवा द्विखण्डसन्धानहेतोर्धियन्ते । तदेवं विषमपदानि व्याख्यातानि । सम्प्रति दण्डादि उपकरणस्थानचिन्तां चिकीर्षुराह-

[भा.३४७७] जइय ठवेइ असुने नचबेई देजहेत्थ उहाणं ।
लहुगो सुत्ते लहुगा हिंयमि जं जत्थ पावति उ ।।

वृ- यद्विवशून्ये अविरहिते प्रदेशे दण्डाद्युपकरणं स्थापयति न च कस्यापि संमुखमेवं ब्रूते अत्र दद्यादवधानमुपयोगमिति, तदा तस्य प्रायश्चित्तं लघुको मासः । अथ शून्ये स्थापयति तदा चत्वारो लघुकास्तथा शून्ये मुक्ते स्तेनैश्चापहृते यत् यत्र जघन्ये मध्यमे उत्कृष्टे वा उपकरणे प्रायश्चित्तमुक्तं तत् प्राप्नोति । अत्र परस्यावकाशमाह-

[भा.३४७८] एयं सुत्तं अफलं जं भणियं कप्पत्ति थेरस्स ।
भणाति सुत्त निवातो अति महल्लस्स थेरस्स ।।

वृ- चोदकः प्राह:- यद्येवमशून्ये शून्ये च प्रदेशे उपकरणे दोषस्तर्हि तत्सूत्रमफलविषयं यदुक्तं कल्पते अविरहिते अवकाशे स्थापयित्वेत्यादि सूरिराह- भण्यते अत्रोत्तरं दीयते । अस्य सूत्रस्य निपातो अतिमहल्लोऽतिशयेन गरीयसः ।

[भा.३४७९] गच्छानुकंपणिज्जो जेणट्ठवेउण कारणेणं तु ।
हिंडइ जुन्नमहल्लो तं सुण वोच्छं समासेनं ।।

वृ- सोऽति वृद्धो महान् गच्छस्यानुकम्पनीयः परं येन कारणेन सजीर्ण महान् एकाकीभूतोऽविरहिते प्रदेशे उपकरणं स्थापयित्वा भिभक्ष्यां हिण्डते तत्कारणं समासेन वक्ष्ये तच्च वक्ष्यमाणं शृणु ।

[भा.३४८०] सो पुन गच्छेण समं गंतूण मजंगमो न चाएइ ।
गच्छाणु कंपणिज्जो हिंडइ थेरो पयत्तेणं ।।

वृ- स पुनरजङ्गमो गच्छेन समं गंतुं न शक्नोति, ततः स गच्छस्याऽनुकम्पनीय इति कृत्वा स्थविरो वक्ष्यमाणेन प्रयत्ने नयतनया हिण्डतो । तमेव प्रयत्नमाह-

[भा.३४८१] अतक्किय उवहिणा उ थेरा भणिआय लोयणिज्जेन ।
संकमणे पट्ठवणं पुरतो समगं च जयणाए ।।

वृ- यमुपधिंन कोऽपितर्कयति विशेषतः परिभावयति तेनात्कारणीयेनोपधिना अत एवालोचनीयेन लोभगोचरतामति क्रान्तेन परिस्थाप्य मासकल्पप्रायोगस्य वर्षावास प्रायोगस्य वा क्षेत्रस्य संक्रमणे कर्त्तव्ये आचार्येण ते स्थविरा अति महान्तो भणिताः पुरतः समकं वा यतनयावल्यतां तत्र यदि प्रतिभासते तर्हि पुरतोऽग्रे साधुभिः सह तस्य प्रस्थापनं क्रियते । अथ न शक्नोति पुरतो गन्तुं तदा समकं नीयते । कथमित्याह- यतनया तामेव यतनामाह-

[भा.३४८२] संवाडगएगेण वा समगं गेण्हंति सभए ते उवहिं ।

किति कम्मदवं पढमा करेंति तेसिं असति एगो ।।

**वृ-** यदि गच्छेन समं व्रजति ततः सुन्दरमेव सकलस्यापि गच्छस्य तत्सारकरणात् । अथ समकं गन्तुं न शक्नोति तदा साधुसंघाटकेन समं साधुसंघाटकस्याभावे एकेन वा साधुना समं व्रजति । तत्र यो तौ सहायौ दत्तौ तौ तस्योपकरणं गृह्णीतः । परिवहतः । यदा तु चौरभयेन समवं स्थानं तदा समस्तमपि उपधिकल्पादि लक्षणं गृह्णीतो गृहीत्वा स स्थविरो यथाजातः-कृत्वा अग्रे क्रियते । ततः समयस्थानलङ्घने कृतिकर्मविश्रामणां तस्य कुरुतः कृत्वा द्रवं पानीयं समर्पयतः तदनन्तरं प्रथमालिकां कारयतः । तयोर्द्वयोः साध्वोरभावे एकः समस्तं प्रागुक्तं करोति ।

**[भा. ३४८३]** जइ गच्छेज्जाहि पुरओ पंथे व से फिडिज्जाहि ।

तत्थ उ ठवेज्जा एगं रिक्कं पडिपंथगप्पाहे ।।

**वृ-** अथैकोऽपि सहायो न विद्यते तदा स्थविर एकाक्यपि पुरतः प्रवर्त्यते । तत्र यदि सार्थादिवशतस्त्वरितं गच्छन् यदि वा पथि परिस्यादिना स स्फिटितो भवेत्तत्र एकं साधुं रिक्तमुपकरणरहितं स्थापयेत् । अथ तत्र शरीरापहारिस्तेन भयं दुष्ट व्याघ्रादि स्वापदभयं वा ततः स मोक्तुं न शक्यते तर्हि अग्रेतनस्थानात् प्रतिनिवर्तमानं पथि कमप्याहे इति सन्देशापयेत् । तथा अग्रे साधुसमुदायो व्रजन्नास्ते तस्मात्त्वरितं मागम्यतामिति । सम्प्रति यथा स स्फिटितो भवति तथा प्रदर्शयति ।

**[भा. ३४८४]** सारिक्खकड्ढणीए अहवा वातेन हुज्जपुट्ठो उ ।

एवं फिडितो हुज्जा अहवावी परिरएणं तु ।।

**[भा. ३४८५]** कालगए वसहाए फिडितो अहवावि संभमो हुज्जा ।

पढमबियतोवएणवगामपविट्ठो व जो हुज्जा ।।

**वृ-** पथि गच्छतो मार्गद्वयं तत्र येन पथा गच्छो गस्तस्मादन्यस्मिन् पथि केचित्साधु सदृशाः पुरतो गच्छन्तो दृष्टास्ततः साधव एते गच्छन्तीति सादृशन्तीति सादृश्य कर्षिन्याविप्रलब्धः सन् तेन पथा गच्छेदथवा अपान्तराले स वातेन स्पृष्टः स्यात् ततो गन्तुं न शक्नोति । एवममुना प्रकारेण स स्फिटितो-भवेत् । अथवा तथाविध महागर्तया पर्वतस्य नद्या वा परिरएण स स्थविरो व्रजन् गच्छन् स्फिटितः स्यात् यदि वा यस्तस्य सहायो दत्तः स कालगत इति स्फिटित एकाकी संजातः । अथवा संभ्रमे स्वापदसंभ्रमे वा त्वरितं सार्थेन सह पलायमाने गच्छे स्थविरः शनैर्व्रजन् स्फिटितो भूयात् । यदि वा प्रथमेन क्षुत्परीषहेन पीडितः सन् यः स्थविरो ग्रामं व्रजिकां वा प्रविष्टो भवेत् । गच्छश्च स्तेनादिभयेन सार्थेन समं त्वरितं व्रजति स गच्छात् स्फिटति ।

**[भा. ३४८६]** एएहिं कारणेहिं फिडितो जो अट्ठमं तु काऊण ।

अनहिंडंतो मग्गइ इयरे विय तं विमग्गंति ।।

**वृ-** एतैरनन्तरोदितैः कारणैर्यो गच्छात् स्फिटितः सोऽष्टमं पदं चतुर्थं वा कृत्वा भिक्षामटन् गच्छं मार्गयति अन्वेषयति इतरेऽपि च गच्छसाधवस्तं स्थविरं विमार्गयन्ति । अथ ते गच्छसाधवः सार्थेन समं व्रजन्तो यदि सार्थं मुञ्चति तदा स्तेनैरपह्रियन्ते वनदावेन दह्यन्ते दुष्टेन वा स्वापदेन केनापि गृह्यन्ते । तत गवेषयितुं न शक्नुवन्ति तर्हि स्थविरेणावश्यमुक्तप्रकारेण मार्गणा कर्तव्या ।

**[भा. ३४८७]** अह पुन न संथरेज्जा तो गहितो नेय हिंडतो भिक्खं ।

जहतरेज्जाहि ततो ठवेज्ज ताहे असुन्नम्मि ।।

**वृ-** यदि चतुर्थेन षष्ठेनाष्टमेन वा गवेषणं कर्तुं न संस्तरेत् ततस्तदा तदुपकरणमशून्ये प्रदेशे स्थापयेत्। तत्रापि यानि वर्जनीयानि स्थानानि तानि प्रदर्शयति-

**[भा.३४८८]** अह पुन ठविज्ञा मेहिं तु सुन्नगिकम्म कुत्थिएसुं वा ।
नाणुन्नवेज दीहं बहु भुंजपरिच्छिए पत्तें ॥

**[भा.३४८९]** तिसु लहुग दोस लहुगो खद्धाइयणे य चउ लहू होंति ।
चउ गुरुगासंखडीए अप्पत्तपडिच्छमाणस्स ॥

**वृ-** अत्राद्यगाथा पदानां द्वितीयगाथोक्त प्रायश्चित्तैः सह यथासंख्येन योजना सा चैवमथ पुनः स्थापयेदेषु वक्ष्यमाणेषु स्थानेषु गाथायां तृतीया सप्तम्यर्थे । ततः प्रायश्चित्त संभवस्तत्र यदि शून्ये स्थापयति चतुर्लघु । आग्निकर्मिकायामपि शालायां स्थापने चतुर्लघुका, अग्निना यदि कथमप्युपकरणस्य दाहस्तदा तन्निष्पन्नमपि प्रायश्चित्तं, जुगुप्सिते जुगुप्सितगृहेषु स्थापयतश्चतुर्लघु । तस्मादेतानि स्थानानि वर्जयित्वा वक्ष्यमाणेषु स्थानेषु स्थापयेत् । यत्र स्थापयति ते अनुज्ञापयितव्याः । अननुज्ञापने मासलघु दीर्घां भिक्षाचर्यां करोति मासलघु । बहुसु भुंजति प्रायश्चित्तं चत्वारो लघवो भवन्ति । खद्धाइयणे इति खद्धस्य प्रचुरस्य अदने भक्षणे सतीत्यर्थः । तथा अप्राप्तं संखडिं प्रतीक्षमाणस्य प्रायश्चित्तं चत्वारो गुरुकाः । सम्प्रति येषु स्थानेषु स्थापयेत्तानि दर्शयति-

**[भा.३४९०]** असतीए मणुन्नाणं सव्वोवहिणा व भद्दएसुं वा ।
देसकसिणेव घेत्तुं हिंडइ सइ लंभे आलोए ॥

**वृ-** यदि समनोज्ञाः सन्ति तर्हि तेषूपकरणं स्थापयितव्यम् । तेषामसत्यभावेऽमनोज्ञानामपि असांभोगिकानामप्युपाश्रये स्थापयेत् । यदि वा सर्वेणाप्युपधिना गृहीतेन हिण्डते यदि शक्तिरस्ति, अशक्तौ पार्श्वस्थादिष्वपि स्थापयति । यदि वा यथा भद्रकेषु गृहेषु स्थापयति देसकसिणे वा घेत्तुमिति समस्तस्योपधिर्देशभूतानि यानि कृत्स्नानि परिपूर्णानि कल्पादीनि तानि गृहीत्वा भिक्षामटति । अशक्तौ तान्यपि मुक्त्वा परिभ्रमति । तत्र सति लाभे तेषु गृहेषु भिक्षामटति येष्वटन् उपकरणं पश्यति ।

**[भा.३४९१]** असतीए अविरहियम्मि निंतिक्कादीण अंतीए ठवए ।
देज्जह उहानंतिय जावउ भिक्खं परिभमामि ॥

**वृ-** असति अविद्यमाने भावे अविरहिते प्रदेशे नैत्यकादीनां नैत्यिको ध्रुवकर्मिको लोहकारादिरा-दिशब्दात् मणिकारशङ्खकारादि परिग्रहस्तेषामन्तिके स्थापयेत् ब्रूते च-दद्यादस्योपकरणस्यावधानं यावदहं भिक्षां परिभ्रमामि-

**[भा.३४९२]** उवेंति गणयंतो वा समक्खं तेसि बंधिउं ।
आगतो रक्खिया मेत्ति तेन तुब्भेब्बिया इमे ॥

**वृ-** तेषां ध्रुवकार्मिकप्रभृतीनां समक्षं गणयन् बध्वा स्थापयति । वा शब्दः स्थापनाविषयप्रकारान्तर-सूचने आगतश्च सन् द्वितीयमपि वारमवग्रहमनुज्ञापयति । कथमित्याह-भोइत्यामन्त्रणे युष्माभी रक्षितान्यमूनि न युष्मदीयानीत्यनुजानीतमां गृह्णन्तमिति ।

**[भा.३४९३]** दट्ठुणवन्नहा गंतिं केन मुक्कोत्ति पुच्छती ।
रहियं किं घरं आसी को परो व इहागतो ॥

**वृ-** इह यदा तेषां समक्षमुपकरणं बध्वा स्थापयति तदा साभिज्ञानां ग्रन्थिं बध्नाति ततः आगतः सन्

तं प्रलोकयति मा केनाप्युन्मुच्य किंचित् हृतं स्यात्तत्र यदि तथैव ग्रन्थिं पश्यति ततः पूर्वोक्त प्रकारेणद्वितीयमवग्रहमनुज्ञापयति अथग्रंथिमन्यथा पश्यति, ततो ब्रूते ग्रंथिरुन्मुक्तः छोटितइति पृच्छति तदा । किमिति क्षेपे रहितं शून्यं गृहमासीत् को वा अपर इह समागत इति ।

[भा.३४९४] नत्थि वत्थुसुगंभीरं तं मे दावेहमाचिरा ।
न दिट्ठो वा कहं पत्तो तेन तो उ चउ इहं ॥

वृ- ममोपकरणमध्ये यद्वस्तु सुगंभीरमतिशोभनं तन्नास्ति तद्दर्शयत तद्वस्तु मा चिरकालीं कुरु । अथ न गृहीतं मया नापि कोऽप्यागच्छन् दृष्टस्तत आह- न दृष्टो वा कथमत्रागच्छन् स्तेन क उपयाति उत्परकः अवश्यं स दृष्टः स्वयं वा गृहीतमिति भावः ।

[भा.३४९५] धम्मो कहिज्ज तेसिं धम्मट्ठा एव दिन्नमेहिं ।
तुब्भारिसेहिं एयं तुब्भे सु य पच्चतो अम्हं ॥

वृ- धर्मस्तेषां ध्रुवकर्मकप्रभृतीनां कथ्यते । कथयित्वा च पर्यन्ते सं(स)टंकमानीयमिदमुच्यते-धर्मार्थमेव युष्मादृशैरस्यैरेतत् उपकरणं मह्यं दत्तं युष्मासु च विषयेऽस्माकमतीव प्रत्ययो विश्वासस्ततः किमित्याह-

[भा.३४९६] तो ठवियंणे एत्थ दिज्ज उ तं सावया इयं अम्हं ।
जइ देंती रमणिज्जं अदेंते ताहे इमं भणति ॥

वृ- यत एवं तस्मात् श्रावका यन्नोऽस्माकमत्र स्थापितं तदिदमस्माकं दीयतामेवमुक्ते यदि ददति ततो रमणियं सुन्दरं, अथ न ददाति ततोऽददतस्तानिदं वक्ष्यमाणं भवति तदेवाह-

[भा.३४९७] थेरोत्ति काउं कासु मा अवन्नं संती सहाया बहवो ममन्ने ।
ज उग्गमेस्संति ममे य मोसं खित्ताइ नाउं इति ये अदेंते ॥

वृ- स्थविर इति कृत्वा मा ममावज्ञां कार्षुर्यतः सन्ति ममान्ये बहवः साहाया ये क्षेत्रादि ज्ञात्वा क्षेत्रे कालादि ज्ञात्वा क्षेत्रकालादिक्रमपुष्य मामेतत् मोषमुद्गमयिष्यन्ति इत्येतत् तानददतः प्रति ब्रूते ।

[भा.३४९८] उवही पडिबंधेणं सो एवं अच्छइ तहिं थेरो ।
आयरियपायमूला संघाडेगो व अहपत्तो ॥

वृ- उपधि प्रतिबन्धेनः स स्थविरस्तत्र एवमुक्तप्रकारेण तिष्ठति तावत् यावदाचार्यपादमूलात् संघाटक एको वा साधुः समागच्छति अथ सोऽपि प्राप्तर्हि यतैः कर्तव्यं तदुपदर्शयति-

[भा.३४९९] तेविय मग्गंति ततो अदेंते साहिंति भोइयाईणं ।
एवं तु उत्तरुत्तर जा राया अहव जादिन्नं ॥

वृ- तेऽपि आचार्यपादमूलादागताः साधवस्तान् ध्रुवकर्मिकादीन्मार्गयन्ति याचन्ते ततो यदि न ददति तर्हि तान् अददतो भोजिकादीनां नगरप्रधान पुरुषादीनां साधयन्ति कथयन्ति । अथ तत्रापि न किमप्यनुशासनं तर्हि ततोऽपिवृहत्तां बृहत्तराणां कथनीयम् । एवमुत्तरोत्तरस्य कथनं तावत् यावत् राजा अथवा यावद्दत्तं भवति तावत्कथनीयम् ।

[भा.३५००] अह पुन अक्खयचिठे ताहे वो चोग्गइं अनुन्नवए ।
तुब्भच्चयं इमंतिय जेन भे रक्खियं तुमए ॥

वृ- अथ पुनस्तत् उपकरणमकृतं तिष्ठति तदा द्वितीयमवग्रहमनुज्ञापयति यथा इदं समस्तमप्युपकरणं

युष्मदीयं येनेदंयुष्माभी रक्षितंतस्मात्मूल्यमस्तमजानीतेति एवावता कम्पति गंतनिद्धजनणो दोच्चंपि उग्गहं अनुन्नवित्ते तिव्याख्यातम् ।

**[भा.३५०१]** घेत्तुं वहिं सुन्नघरं व भुंजेक्खिनोव तत्थेव उ च्छन्नदेसे ।
छन्नासती भुंजइ कच्चगेऊ सव्वोवि यं भाणे करे तु कप्पं ।।

**वृ-** गृहीत्वा उपधिं शून्यगृहे गत्वा भुंक्ते, । अथ मार्गपरिश्रमणे भिक्षाटनेन खिन्नः परिश्रान्तस्तर्हि तत्रैव छन्ने आवृत्ते प्रदेशे भुङ्क्ते । अथ च्छन्नप्रदेशो नास्ति तर्हि कच्चगे चङ्गो सर्वं भाजनादपवृत्य भाजनस्य च कल्पं कृत्वा भुङ्क्ते ।

**[भा.३५०२]** मज्झे दवं पि वत्तो भुते वा तेहिं चेव दावे ति ।
नेच्छे वामोयत्तणएमेवय कच्चए डहरे ।।

**वृ-** मध्ये भोजनमध्यभागे किञ्चिद्भुंक्ते इत्यर्थः । द्रवं पिबन् पातुंकामो वा भुङ्क्ते वा परिपूर्णे तैरेव गृहस्थैर्दापयति मात्र कात्पानीयम पवर्त्तापयति । अपवर्त्ताप्यद्वाभ्यां कृत्वा पिबति । अथ नेच्छति गृहस्थोपवर्तयितुं ततो वामहस्तेन स्वयमपवर्त्य एकेन हस्तेनाञ्जलिं कृत्वा पिबति । तथा यदि क्षुल्लके चङ्गे न सर्वं भक्तं माति तदायः पानीय पानविषयेविधिरुक्तः स एव अत्रापि द्रष्टव्यस्तथा एवमेवा नेनैव प्रकारेण डहरे क्षुल्लके च द्दष्टव्यं तथा चाहः-

**[भा.३५०३]** अप्पडिवज्झंतगमो इयरेवि गवेसह पयत्तेणं ।
एमेव अवुड्ढस्स वि नवरंगहिएण अडणं तु ।।

**वृ-** एवं यतनां कुर्वतो व्रजिकोदिष्वपि अप्रतिवध्यमानस्य प्रतिबन्दमकुर्वतो गमो गमनं गच्छे भवति । इतरेऽपि च गच्छसाधवस्तं स्थविरं प्रयत्नेन गवेषयन्ति । गाथायामेक वचनं प्राकृतत्वात् । योऽप्यवृद्धः कारणतः कथमप्येकाकी भवेत्तस्याप्येवमेवानेनैव प्रकारेण यतना द्रष्टव्या । नवरंभिक्षार्थमटनं गृहीतेनोपकरणेन तस्य द्रष्टव्यं-

**मू. (११२)** *नो कप्पइ निग्गंथाण वा निग्गंथीण वा पाडिहारियं वा सागारिय संतियं वा सेज्जा संथारगं दोच्चंपि आग्गहं अननुन्नवेत्ता बहिया निहरित्तए ।*

**मू. (११३)** *कप्पइ अनुन्नवेत्ता ।*

**मू. (११४)** *नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियसंतियं वा सेज्जा संथारगं दोच्चंपि ओग्गह अनुन्नवेत्ता बहिया नीहरित्तए, कप्पइ अनुन्नवेत्ता ।*

**मू. (११५)** *नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियसंतियंवा सेज्जासंथारगं सव्वप्पणा अप्पिणित्ता दाच्चंपि ओग्गहं अनुन्नवत्ता अहिट्ठित्तए । कप्पइ अनुन्नवेत्ता ।*

**[भा.३५०४]** संथारएसु पगएसु अंतर छत्तदंडकत्तिल्ले ।
जंगमथेरे जयणा अनुकंपरिहे समक्खाया ।।

**[भा.३५०५]** दोच्चंव अनुन्नवणा, भणिया इमिगावि दोच्चणुन्नवणा ।
नियउग्गहंमि पढमं बिइयं तु परोग्गहे सुत्तं ।।

**वृ-** संस्तारकेषु पूर्वसूत्रेष्वधिकृतेषु अन्तरा च्छत्र दण्ड कृत्तिचत्रि जङ्गमस्थविरे समस्तस्यापि गच्छस्यानुकम्पार्हे यतना अनन्तरसूत्रेण समाख्याता । सम्प्रति पुनः संस्तारकोऽनेन सूत्रेण भण्यते । एष सूत्रसम्बन्धः । अथवान्यथा सूत्रसम्बन्धस्तमेवाह दोच्चं वेत्यादि द्वितीयावग्रहानुज्ञापना जङ्गमस्थ-

विरस्यानतन्तरसूत्रेण भणिता । इयमपि सूत्रेणाभिधीयमाना द्वितीयावग्रहानुज्ञापना ततोद्वितीया-वग्रहानुज्ञापना प्रस्तावादिदं सूत्रं पूर्वसूत्रादन्तरमुक्तं नवरं प्रथममनन्तरसूत्रं निजकस्यात्मीयस्यो-पकरणस्यावग्रहेऽनुज्ञापना विषयं द्वितीयमधिकृतं तु परस्पर परकीयस्य शय्यातरसत्कस्यान्यसत्कस्य वा इत्यर्थः । अवग्रहेऽनुज्ञापनायामेवमनेन सम्बन्धेनायातस्यास्य व्याख्या नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा प्रातिहारिकं शय्यासंस्तारकं शय्यातरसत्कमन्यसत्कं वा द्वितीयमप्यवग्रहमननुज्ञाप्य-बहिर्निर्हर्तु, नवरमनुज्ञाप्यपुनः कल्पते इति सूत्रसंक्षेपार्थः । सम्प्रति निर्युक्तिविस्तरः -

**[भा.३५०६]** परिसाडीमपरिसाडी पुव्वं भणिया इमं तु नाणत्तं ।
पडिहारियसागारिय तं चेवं तेवहिंनेति ।।

**वृ-** परिशाटिः यादृशः संस्तारको भवति यादृश्या परिशाटिरेतौ द्वावपि पूर्वस्मिन्नेवाष्टमोद्देशके भणिताविदं त्वत्र नानात्वं तदेवाह-प्रातिहारिकं सागारिकसत्कं तमेव शय्यातरसंस्तारकमन्तः स्थितं बहिर्नयति । एतदेव सविस्तरं भावयति-

**[भा.३५०७]** परिसाडी परिसेहो पुनरुद्धारो य वणितो पुव्वं ।
अपरिसाडिग्गहणं वासासु य वणियं नियमा ।।

**वृ-** पूर्वं परिशाटेः शय्यासंस्तारकस्य प्रतिषेधः कृतो यथा न कल्पते परिशाटिः शय्यासंस्तारक इति ततः पुनरुद्धारेऽपवादः पूर्वमेव वर्णितो यथा ऋतुबद्धे काले निष्कारणं संस्तारका न कल्पन्ते तथा पूर्वमेवैतदपि वर्णितं यथा वर्षासु काले नियमादपरिशाटिः शय्यांस्तारकस्य ग्रहणं कर्तव्यमिति ।।

**[भा.३५०८]** पुन्नंमि अंतो मासे वासावासेविमं भवइ सुत्तं ।
तत्थेवगवावेसे असतीतं चेव नुन्नवए ।।

**वृ-** अन्तर्ग्रामस्य नगरस्य वा मध्ये पूर्णे मासे वा बहिरवस्थातुकामानामिदमधिकृतं सूत्रं भवति यथा न कल्पन्तेऽभ्यन्तराणि तृणफलकादीनि यैर्दत्तानि तानि अनापृच्छ्य बहिर्नेतुमिति तत्र प्रथमतस्तत्रैव बहिः प्रदेशेऽन्यं तृणफलकादिमयं शय्या संस्तारकं गवेषयेत् । असति बहिः संस्तारकस्यालभ्यमाना त्वनाभावे तमेव सागारिकं सत्कन्यसक्तं वा शय्यासंस्तारकनुज्ञापयेत् । यथा बहिर्याचितः शय्या संस्तारकः परं न लब्धस्ततो यूयमनुजानीतात्मीयं संस्तारकं येन बहिर्नयाम इति । यदि नानुज्ञापयति तदा तृणमयं संस्तारकविषये प्रायश्चित्तं मासलघु फलकमयसंस्तारकविषये चतुर्लधु । अत्रैवापवादमधिकृत्य विकल्पमाह-

**[भा.३५०९]** अहवा अवस्स घेत्तव्वयंमि दव्वंमि किं भवे पढमं ।
नयनं समणुन्ना यावि वज्जउ वा जुहत्तातो ।।

**वृ-** अथवेत्यपवादमधिकृत्य प्रकारान्तरोपदर्शने यदि नियमात्त संस्तारकद्रव्ये बहिर्नेतव्यं न शक्यते तद्विना मोक्षसाधनं कर्तुमिति तर्हि प्रथमतः किं कर्तव्यं नयनं समनुज्ञा वा ? आचार्य आह-अवश्यं नयनलक्षणेऽपवादे प्राप्ते पूर्वं नयनं कर्तव्यं पश्चादनुज्ञापना । यदि वा पूर्वमनुज्ञा कर्तव्या पश्चान्नयनं विपर्ययो वा यथोक्ता किमुक्तं भवति नापि पूर्वमनुज्ञापयेत् नापि नीत्वा पश्चादनुज्ञापयेत् । ततः पूर्वमनुज्ञापनं पश्चान्नयनमित्येकान्त शुद्धो भङ्गः एष च भङ्गस्तदा द्रष्टव्यो यदा ये दोषा मासकल्पे वर्णितास्ते अन्तः सन्ति बहिर्न विद्यन्ते बहिश्च तृणफलकादीन्यनुज्ञाप्यमानानि न लभ्यन्ते तदा अभ्यन्तराणि येषां सत्कानितानुज्ञाप्यनीयन्ते । अथान्तरं शिवादीनि कारणानि निर्गमनमुहूर्तश्चाति प्रत्यासन्नो न च

बहिस्तृणफककादीनि लभ्यन्ते तदा पूर्वंनयनं पश्चादनुज्ञापनं यथा बहिर्याचितानि तृणफलकादीनि परंनलब्धानि ततो युष्मदीयान्येव तत्र नीतानीत्यस्मार्क तान्यनुजानीत । यदा तु कारणवशतो बहिरवश्यं गन्तव्यं बहिश्च तृणफलकादानि न लभ्यन्ते न च तानि विना साधवः संस्तरीतुं शक्नुवन्ति न तु येषामभ्यन्तराणि तृणफलकादीनि ते अनुजानन्तः संभाव्यन्ते न वाननुज्ञाप्य तेषुबहिर्नीतेषु तेषामभिनवा तदा न पूर्वमनुज्ञापनं नापि नीत्वा पश्चादनुज्ञापनमिति । तदेवं पूर्णे मासकल्पे पूर्णे च वर्षाकल्पे चायं विधिरुक्त एवमपूर्णेऽपि द्रष्टव्यं । तथा चाह-

**[भा.३५१०]**　　एमेव अपुन्नंमिवि वसही वाघाए अन्नसंकमणे ।
गंतव्वुवासया सति संथारो सुत्तनिद्देसो ।।

**वृ-** एवमेव अनेनैव प्रकारेण पूर्णो मासकल्पे द्रष्टव्यं कथमित्याह - वसतेर्व्याघाते सति उपाश्रया भावे गन्तव्यमवश्यं जातं । तत्रान्यक्षेत्र संक्रमेण तत्र संस्तारकलाभे पूर्वप्रकारेण संस्तारको नेतव्यः । एव सूत्रनिर्देशः एष सूत्र विषय इति भावः, तत्र पूर्व नयनं पश्चादनुज्ञापनमिति भङ्ग मधिकृत्य विधिमाह-

**[भा.३५११]**　　नीहरिउं संथारं पासवणुच्चार भूमीभिक्खादी ।
गच्छेहगविज्झायं करेइमा तत्थ आरुवणा ।।

**वृ-** यदि कारणवशतः पूर्वमनुज्ञाप्य तृणफलकादिमयः संस्तारको बहिर्नीतो यदि वा तं वसतेर्व्याघाते बहिरन्यां वसतिं गतवा तत्र संस्तारकोऽननुज्ञाप्य नीत्वा स्थापितस्तर्हि शेषव्यापारपरित्यागेन नियमतः पश्चादनुज्ञापना कर्तव्या । अथ नीत्वा प्रश्रवणभूमिमुच्चारभूमिं भिक्षादौ वा गच्छेदथवा स्वाध्यायं करोति तत्रेयं वक्ष्यमाणा आरोपणा प्रायश्चित्तम् । तमेवाह-

**[भा.३५१२]**　　एएसु चउसुपि तणो सुलहुगो य लहुगफलगेसु ।
रायदुठगहणे चउगुरुगा हुंति नायव्वा ।।

**वृ-** एतेषु प्रश्रवणभूम्यादिषु चतुर्षु स्थानेष्वननुज्ञाप्यप्रवृत्तौ तृणेषु तृणमयसंस्तारकविषये प्रायश्चित्तं लघुको मासः । फलकेषु विषये चत्वारो लघुकाः राजद्विष्टाना राजप्रतिषिद्धानां तृणफलकादीनाननुज्ञाप्य ग्रहणे चत्वारो गुरुका भवन्ति ज्ञातव्याः

**मू. (१९६)** *नो कप्पइ निग्गंथाण वा निग्गंथीण वा पुव्वामेव ओग्गहं ओगिण्हित्ता तओ पच्छा अनुन्नवेत्तए ।।*

**मू. (१९७)** *कप्पइनिग्गंथाण वा निग्गंथीण वा पुव्वामेव ओग्गहं अनुन्नवेत्ता तओपच्छा ओगिण्हित्तए, अहपुन एवं जाणेज्जा इह खलु निग्गंथाण वा निग्गंथीण वा नोसुलभेपाडिहारिए सेज्जासंथारएत्तिकट्टुएवण्हं कप्पइ पुव्वामेव ओग्गाहं ओगिण्हित्ता तओ पच्छा अनुन्नवेतए मा वहउ अज्जोवइअनुलोमेण अनुलोमेयव्वे सिया ।।*

**[भा.३५१३]**　　उग्गहसमणुन्नासु सेज्जासंथारएसु य तहेव ।
अनुवत्ततेसु भवेपंते अनुलोमवति सुत्तं ।।

**वृ-** अवग्रहसंस्तारकाश्च स्वामिना अनुज्ञाता अवग्रहीतव्या इत्युत्सर्गत उपदेशस्तदेवमवग्रह-समनुज्ञासु सय्यासंस्तारकेषु तथैव समनुज्ञातव्येष्वनुवर्तमानोष्विदमपि सूत्रं समनुज्ञातसंस्तारकादि-ग्रहणविषये भवति, अपवादतो अननुज्ञाप्य संस्तारकग्रहणे यदि संस्तारकस्वामी प्रान्तो रुष्टो भवेत् । तस्मिन् प्रान्तेऽनुलोमवाक् वक्तव्या । अनेन सम्बन्धेनायातस्यास्य व्याख्या -न कल्पते निर्ग्रन्थानां

निर्ग्रन्थीनां वा प्रतिहारिकं शय्यासंस्तारकं सर्वात्मना अर्पयित्वा द्वितीयमप्यवग्रहमनुज्ञाप्य धिष्ठातुमनुज्ञाप्य पुनः कल्पते । एवं सागारिकसत्केऽपि शय्यासंस्तारके द्वावालापकौ वक्तव्यौ । तथ न कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा पूर्वमेवावग्रहमवग्रहीतुं ततः पश्चादनुज्ञापयितुं; कल्पते निर्ग्रन्था निर्ग्रन्थीनां वा पूर्वमेवावग्रहमनुज्ञापयितुं पश्चादवग्रहीतुमिति । अथ पुनरेतत् जानीयात् इह खलु निर्ग्रन्थान निर्ग्रन्थीनां वा न सुलभः शय्यासंस्तारक इति कृत्वा एवमेवामुना प्रकारेण नमिति वाक्यालंकारे कल्प पूर्वमेवावग्रहमवग्रहीतुं ततः पश्चादनुज्ञापयितुं [illegible] आचार्याः संयतान् ब्रुवते- मा चार्याद्वि विधा कुरुत द्वावपि कुरुत । एकेवसतिं प्रतिगृह्णीथ अपरे फलशा भाषध्वं तस्मात् क्षमध्वं इत्येवं वचसा अनुकूलेन अनुलोमेनानुलोमयितव्यः स्यादिति ।

[भा.३५१४] सेज्जासंथारदुगं अणुन्नवेऊण ठायमाणस्स ।
लहुगो लहुगो लहुगा आणादी निच्छुभणपंतो ॥

वृ- शय्यासंस्तारकद्विकं परिशाट्य परिशाटिरूपं शालादिषु चावग्रहमनुनज्ञाप्य तिष्ठतः प्रायश्चि लघुकादि तद्यथा-शालादिष्ववग्रहमननुज्ञाप्य तिष्ठतो लघुको मासः परिशाटौ मासलघु अपरिशाटौ चत्वा लघुकाः तथा आज्ञादय आज्ञाभङ्गादयो दोषाः तथा प्रान्तः कोऽपि रुष्टः सन् निच्छुभणं निष्काशनं कुर्यात्

[भा.३५१५] एयमदिन्नवियारे दिन्नवियारे वि सभ पवादीसु ।
तणफलगाणुन्नाया कप्पडियादीण जत्थ भवे ॥

वृ- एवमदत्तं विचारे शालादौ द्रष्टव्यं, दत्तविचारं नाम यत्र कार्पटिकादिर्न कोऽपि वार्यते । तत्र सभा वा प्रपा वा मण्डपको वा यान्यपि च तत्र तृणफलकादीनि तान्यप्यनुज्ञातानि । तथा चाह- यत्र कार्पटिकानां तृणफलकादीन्यनुज्ञातानि भवन्ति । तेष्वपि दत्तविचारेषु सभाप्रपादिषु यानि तृणफलकादीनि तान्यपि किमित्याह-

[भा.३५१६] ताणवि उ न कप्पंती अणनुन्नवियं मि लहुक मासो उ ।
इत्तिरियंपि न कप्पइ तम्हाउ अजातितोग्गहणं ॥

वृ- तान्यपि अननुज्ञापिते स्वामिनि गृहीतुं न कल्पते, यदि पुनरननुज्ञाप्य गृह्णाति तदा प्रायश्चित्तं लघुको मासः । कस्मादेवमत आह- यस्मादित्वरमपि क्षणमात्रमपीत्यर्थः अवग्रहणमयाचितं न कल्पते

(उक्तं च-) इत्तिरियंपि न कप्पइ अविदिन्नं खलु परोग्गहादीसु ।
चिट्ठित्तु निसीयितु व तइयव्वय रक्खणट्ठाए ॥

तथा अननुज्ञापने तिष्ठत इमे च दोषाः

[भा.३५१७] जावंतियदोसा वा अदत्तनिच्छुभणादिस रातो वा ।
एव दोसे पावइ दिन्न वियारे विठायंते ॥

वृ- अननुज्ञातो दत्तविचारेऽपि यदि तिष्ठति तदा यावन्तिकदोषस्तथा अदिन्नति अदत्तदान- गृहणदोषश्चोपजायते तथा कदाचित्स सभादिस्वामी प्रान्तो ब्रूयात् । केनामीषामत्र स्थानं दत्तं महामीषां योग्यमिति ततो रुष्टः सन् दिवसे रात्रौ वा निष्काशनं कुर्यात् । तस्याद्दत्ती विचारेऽप्य- ननुज्ञाप्य तिष्ठन् एतान् दोषान् प्राप्नोति तस्मात्तत्रापि पूर्वमनुज्ञाप्य पश्चात्कल्पते स्थातुमेवं सति यावन्तिकदोषो न भवति स्वामिसत्कं कृत्वा तदनुज्ञापनाददत्तादानं निष्काशनं च नभवतीति-

[भा.३५१८] किंतु अदिन्नवियारे कोट्ठारादीसु जत्थ तणफलगा ।

रक्खिज्जते तहियं, अणनुन्नाए नठायंति ।।

**वृ**- आस्तां दत्तविचारे अनुज्ञापनमंतरेण न तिष्ठतु, प्रागुक्तदोषसंभवात् किंतु अदत्तविचारेष्वपि, गाथायामेकवचनमपि शब्दलोपश्चार्षत्वात् न दत्तो विचारप्रदेशो यत्रतान्यदत्तविचाराणि तेष्वपि केष्वित्याह कोष्टागारादिषु कोठागारं धान्यस्य तृणादीनां वा आदिशब्दात् चतुःशालादीनि तथा देवकुलं गोष्ठिकादीनां वा गृहाणि यत्र गोष्ठिकादयः समवायं कुर्वन्ति तानि दत्तविचाराणि गृह्यन्ते तेषु कोष्टागारादिषु यत्र येषु तृणफलकानि रक्ष्यन्ते तथाहि- प्रलितमेतत्कोष्टागारादिषु मा कोऽपि किमपि हार्षीरिति प्राहरिकमोचनेन तृणानि फलकानि च प्रयत्नेन रक्ष्यन्ते । तत्र तेष्वननुज्ञातेषु साधवो न तिष्ठन्ति किमर्थमिति चेदत आह-

**[भा. २५१९]** दोसाणरक्खणठा चोएइ निरत्थयं ततो सुत्तं ।
भन्नइ कारणियं खलु, इमे य ते कारणा हुंति ।।

**वृ**- दोषाणां प्रायश्चित्तप्रसङ्गतो भङ्गादिरूपाणां रक्षणार्थं रक्षणाय तत्र न तिष्ठिन्ति अत्र परश्चोदयति, यद्येवं ततः सूत्रं इह खलु निग्गंथाण वा निग्गंथीण वा नो खलु मे पाडिहारिए इत्यादि निरर्थकमविषत्वात् सूत्रे हि अनुज्ञापनमन्तरेणापि पूर्वमनुज्ञातमिति सूरिराह-भण्यते उत्तरं दीयते इदं खलु सूत्रं कारणिकं कारणैर्निवृत्तं तानि च कारणानि इमानि वक्ष्यमाणानि भवन्ति तान्येवाह-

**[भा. २५२०]** अद्धाणे अठाहिय असिवे गामनुगामियविवेले ।
तेनासावयमसगा सीयं वासं दुरहियासं ।।

**वृ**- अध्वनि मार्गे गताः साधवस्तत्रान्यत्रयाचिता वसतिः परं न लब्धा अथवा अष्टाह्निकां द्रष्टुमागता, यदि वा अवमौदर्यमशिवं वाभविष्यतीत्यन्यदेशं प्रस्थिता विकाले प्राप्ता अथवा ग्रामानुग्रामं विहरन्ति । व्यतिकुष्टमन्तरमपान्तराले इति कृत्वा सार्थवशेनवाविकेल विकाले प्राप्ताः । अन्या च वसतिर्न रोचते वसतिमन्तरेण च स्तेनभयं वा स्वापदभयं वा मशका वा दुरध्यासाः सीतं वा दुरध्यासं पतति यथा उत्तरापथे वर्षं वा घनं निपतन् तिष्ठति तत एतैः कारणैरदृष्टेऽप्यधिकृतवसति स्वामिनि मा अन्यपथिकाः कार्पटिका वा तिष्ठंति, तथैव कायिक्यादिभूमीः प्रत्युपेक्ष्य पूर्वमवग्रहं गृहीत्वा पश्चादूवसतिस्वामिनमनुज्ञापयन्ति । एतदेव सविशेषमाह-

**[भा. २५२१]** एएहिं कारणेहिं पुव्वं पेहेतु दिठ्ठणुन्नाए ।
ताहे अयंत दिठ्ठे इमाउ जयणा तहिं होइ ।।

**वृ**- एतैरनन्तरोदितैः कारणैः पूर्वमुच्चारादिभूमीः प्रत्युपेक्ष्य दृष्टः परिजनोऽनुज्ञाप्यते । ततस्तस्यां वसतावायान्ति साधवः । तत्रदष्टे परिजने इयं वक्ष्यमाणा यतना भवति । तामेवाह-

**[भा. २५२२]** पेहेत्तुच्चार भूमादी ठायंति वोत्तु परिजणं ।
अत्थाउ जाव सोएइ जातीहामो तमागयं ।।

**वृ**- प्रेक्ष्य प्रत्युपेक्ष्य उच्चारभूम्यादिपरिजनमुक्त्वासाधवस्तत्र तिष्ठन्ति कथमुक्त्वेत्यत आह-आस्महे तावत् यावत् स गृहस्वामी समागच्छति ततः तमागतं याचिष्यामहे सच आगतो येनविधिना समनुज्ञापयितव्यस्तं विधिमाह-

**[भा. २५२३]** सवंवन्नं च नाऊण वयंते वग्गुवादिणो ।
सभंडावेयस्सेत्र अप्फंदंतीति निरंतरं ।।

वृ- वर्योवर्णं च गृहस्वामिनो वल्गु शोभनं वल्गु शोभनं ... गुणशीलो वसतिस्वामि वक्ष्यमाणं वदन्ति, । इतरे च सभाण्डाः सोपकरणाः सन्तो निरन्तरं वसतिमास्पन्दन्ते व्याप्नुवन्ति ।

[भा.३५२४] अब्भासत्थं गंतूण पुच्छए दुरपत्ति मा जयणा ।
तद्दिवसमंत पडिच्छण पत्तेयकहिंति सब्भावं ।।

वृ- यदि अभ्यासस्थो निकटवर्ती भवति, तदा गत्वा वसतिस्वामिनं पृच्छति । अथ च दूरप्रासस्तत्रे यतना तां दिशमागच्छतः प्रतीक्षणं कर्तव्यं प्राप्ते च तस्मिन् सद्भावं कथयन्ति । यथा बहिः स्तेनादिभया युष्माकमुपाश्रयेवयं स्थिताः तथेदं वदन्ति-

[भा.३५२५] बिले वसिउं नागा पातो गच्छामो सज्जणा निरत्थाणं ।
बहिं दोसा जाते मा, होज्ज तुज्झवी अहो सज्ज्ञान (व) ।।

वृ- विलेनागा इव वयं युष्मदुपाश्रये उषित्वा प्रातर्गच्छाम एवं याचितो यदि ददाति ततः सुन्दरमथ न ददाति तदानुलोमेन वचसानुलोमयितव्यः धर्मकथातस्यकथ्यते निमित्तादिकं वा प्रयुज्यते । तथाप्यददति परुषमपि वक्तव्यम् । कथमित्याह- निरस्तानां निष्काशितानामस्माकं ये स्तेनकस्वापदादि भिरुपधिशरीरस्मरणदोषा जायेरन् मा ते तवाप्युपरि पतेयुरिति । एतदेव सविस्तरमभिधित्सुराह-

[भा.३५२६] जइ देइ सुंदरं तू अह उवएज्जाहि नीह मज्झ गिहा ।
अन्नत्थ वसहिमग्गह तहियं अनुसट्ठिमादीणि ।।

वृ- यदि बिले वसिउं नागा इत्यादि भणनानन्तरं वसतिं ददाति ततः सुन्दरमथ वदेत् मम गृहान्निर्गच्छतान्यत्र वसतिं याचध्वमिति तदा तत्रानुशिष्ट्यादीनि क्रियते । अनुशिष्टिरनुशासनं क्रियते । आदिशब्दात् धर्मकथा कथ्यते इति परिग्रहः ।

[भा.३५२७] अनुलोमणं सजाती सजाइमेयेति तहवि उ अटंतो ।
अभिओगनिमित्तं वा बंधणगोसेय ववहारो ।।

वृ- तथानुलोमेन वचसाऽनुलोमनं कर्तव्यं । अथ तथापि न ददाति तर्हि सजातिः सजातिमनुकूलयतीति न्यायमङ्गीकृत्य ये तस्य स्वजना यानि च मित्राणि तैरनुनायितव्यः । तथाप्यतिष्ठति अभियोगो मन्त्रादिना कर्तव्यो निमित्तं वा प्रयोक्तव्यं बन्धनं वा तस्य सर्वैरपि साधुभिस्तस्य कर्तव्यं । ततः प्रभाते व्यवहारः कर्तव्यः ।

[भा.३५२८] मानेत्थि वसुभाणा इमाभिंदस्स सिणे जय ।
दुहतो माया वालेति थेरा वारेंति संजए ।।

वृ- यदि साधूनां भाण्डकं बहिर्नेतुं व्यवसितस्तदा स भण्यते-मा नोऽस्माकं भाजनानि स्पृश हे अयत मा वा नोऽस्माकं भाजनानि भिन्धि यदि पुनस्तं संयतानिर्धमादिवचोभिराक्रोशन्ति तदा स्थविरा आचार्याः संयतान् वारयन्ति वारयन्ति आचार्या द्विधातो वालं कापुरुषं तावत् वसतिं प्रतिगृह्णीथ - द्वितीयं परुषाणि भाषध्वे, तस्मान्मा एवं भणत । यत्करोति तत्क्षमध्वमिति ।

[भा.३५२९] अहवा बेंति अम्हे ते साहामो य सत्तंवाली ।
न सहेज्जा वराहं ते तेन होज्ज न ते खमं ।।

वृ- अथवा इदं ब्रुवते- वयं तवापराधं सहामहे । एष पुनर्बलीयान् तवापराधं न सहेत असहिष्णुना च तेन यत्क्रियते तन्न ते क्षमं भवेत् । एवमुक्तो यदि सोऽतिरोषेण न तिष्ठति निष्काशयति प्रहारैर्वा धावति

तदा स वलीयान् यत्करोति तद्दर्शयति ।

**[भा. ३५३०]** सो य रुठोव उठित्ता खंभं कुड्डं व कंपते ।
पुव्वं सनातिमित्तेहिं तं गमंति पहूण वा ।।

**वृ-** स वलीयान् रुष्ट इव न तु परमार्थतो रुष्ट उत्थाय स्तंभं वा कुड्यं वा मुष्टिप्रहारेण कम्पयति । कम्पयंश्च ब्रूते-वं शिरः पातयिष्यामि यदि न स्थास्यसि एतच्च पर्यन्ते उच्यते । अन्यथा पूर्वमेव ज्ञातिभिर्मित्रैर्वा प्रभुणा तं गमयन्ति तथाप्यतिष्ठत्यनन्तरोदितं क्रियते;

**मू. (१९८)** *निग्गंथस्सणं गाहावतिकुलं पिंडवाय पडियाए अनुपविठ्ठस्स अहालहुसए उवगरणजाए परिभट्ठे सिया, तं च केइ साहम्मिए पासेज्जा कप्पइ से सागारकंड गहाय जत्थेव अन्नमन्नंपासेज्जा तत्थेव एवं वएज्जा इमे भे अज्जोकिं परिन्नाए ? सेयवएज्जा, परिन्नाए तस्सेवपडिणिज्जाएव्वे सिया सेयवएज्जा नो परिन्नाए तं नो अप्पणा परिभुंजेज्जा नो अन्नमन्नस्सदावए एगंते बहुफासुए थंडिले परिठ्ठवेयव्वे सिया ।*

**मू. (१९९)** *निग्गंथस्सणं बहिया वियारभूमिं वा विहारभूमिंवा निक्खंतस्स अहालहुसए जाव परिठ्ठवेयव्वे सिया।*

**मू. (२००)** *निग्गंथस्सणं गामानुगामं दूइज्जमाणस्स अन्नयरे उवगरणजाए परिभट्ठे सिया तं च केइसाहम्मिए पासेज्जा कप्पइ से सागारकडं गहाय दूरमेवयद्धाणं परिवहित्तए जत्थेव अन्नमन्नं पासेज्जा तत्थेव जाव परिठवेयव्वं सिया ।*

**[भा. ३५३१]** गहियन्नरक्खणठा वइ सुत्तमिणं समासतो भणियं ।
उवहिसुत्ताउ इमे साहम्मिय तेन रक्खणठ्ठा ।।

**वृ-** अन्यकर्पटकादिरक्षणार्थं गृहीतेऽवग्रहे वाक्सूत्रमिदमनन्तरं समासतो भणितमिमानि च पुनरुपधिसूत्राणि साधर्मिकास्तेनरक्षणार्थमुपन्यस्तानीत्येष सूत्र सम्बन्धः । अनेन सम्बन्धेना-यातस्यास्यव्याख्या । निर्ग्रंथस्य नमिति वाक्यालङ्कारे गृहपतिकुलंपिंडं वा य पडियाए इति पिण्ड-भक्तं पानं वा पातयिष्यामीति बुद्ध्या यथा महाराष्ट्रं सुत्तं पाडिउं निग्गउं आनेष्यामीति बुद्ध्या निर्गत इत्यर्थः । अनुप्रविष्टस्य यथा लघु स्वकमेकान्तलघुकं जघन्यं मध्यमं वा इत्यर्थः । उपकरणजातं परिभ्रष्टं पतितं स्यात्तच्च कश्चित्साधर्मिकः पश्येत्कल्पते सेतस्य सागारकृतं नाम यस्यैवेदमुपकरणंतस्यैवेदं देयमिति बुद्ध्या गृहीत्वा यत्रैवान्यमन्यं साधर्मिकं पश्येत्तत्रैव एवं वदेत् । इदं भो आर्य किं परिज्ञातं स च यदि वदेत् परिज्ञातं, तत स्तस्यैव प्रतिनिर्यातव्यं समर्पणीयं स्यात् । किमुक्तं भवति । यदि तस्य सत्कं तर्हि तस्मै दीयते, । अथ ब्रूयादमुकस्य सत्कं यदा तस्येति, स च वदेत् न परिज्ञातं न कोऽपि जानातीति भावः तर्हि तन्नात्मना परिभुञ्जीत, न अन्यस्यान्यस्य दर्शयेत् । किन्त्वेकान्ते बहुप्रासुके स्थण्डिले परिस्थापयितव्यं स्यात् । एवं निग्गंथस्सणं बहिया वियारभूमिं वा विहारभूमिं वा निक्खंतस्सेत्याद्यपि सूत्रं भावनीयम् । तथा निर्ग्रन्थस्य नमिति प्राग्वत् ग्रामानुग्रामं दुइज्जमाणस्सेति विहरतोऽन्यतरत् उपकरणजातं भ्रष्टं स्यात् तच्च कश्चित्साधर्मिकः पश्येत्कल्पते से तस्य सागारकृतं गृहीत्वा दूरमप्यध्वानं परिवोढुं जत्थ चेत्यादि प्राग्वत् । एष सूत्रत्रयसंक्षे पार्थः । सम्प्रति भाष्यकृत् यथालधुस्वकग्रहणं तृतीयसूत्रमन्यतरग्रहणं च व्याख्यानयति ।।

**[भा. ३५३२]** दुविहो य अहालहुसो जहन्नतो मज्झिमो य उवहीउ ।
अन्नयरग्गहणेण उ घेप्पइ तिविहो उ उवहीय ।।

वृ- यथा लघुस्वक उपधिर्द्विविधो भवति जघन्यो मध्यमश्च । अन्यतरग्रहणेन तु त्रिविधोऽप्युपधि परिगृह्यते । तदेवंकृता विषमपदव्याख्या भाष्यकृता सम्प्रति निर्युक्तिविस्तरः ।

[भा.३५३३] अंतो परिठावंते बहिया य विहारमादिसु लहुगो ।
अन्नयरं उवगरणं दिठं संका न घेच्छंति ।।

[भा.३५३४] किं हुज्ज परिठवियं पम्फुठा वावितो न गेण्हंति ।
किं एयस्सन्नस्स वसं किज्जइ गेण्हमाणोवि ।।

वृ- अन्तर्ग्रामादीनां मध्ये बहिर्विचारभूमौ वा परिस्थापयति विस्मरति पम्हठंति वा परिठवियं ति व एगठमिति वचनात् प्रायश्चित्तं लघुको मासः । कस्मादीदृशं प्रमादं करोतीति हेतोः कः पुनर्दोषो यदि विस्मृतमत आह अन्यतरत् जघन्यं मध्यममुत्कृष्टं वा उपकरणं दृष्टं ततो जाता शंङ्का शंकातश्च न केचनापि ग्रहीष्यंति, शङ्कामेव स्पष्टतां भावयति । किं होज्जेत्यादि साधवस्तदन्यतरत् उपकरणमन्तर्बहिर्दृष्ट्वा शङ्कन्ते किमेतत् परिठापितमुतकस्यापि विस्मृतं भवेत् । एवं शङ्कमानास्तदुपकरणं विस्मृतं न गृह्णन्ति यतो गृह्णन्ति जनैः स शंक्यते । तथापि-तत्पतितं गृह्णन्तं संयतं कोऽपि दृष्ट्वा शङ्केत किमेतस्य अन्यस्य वा किमुक्त वा भवति । किमात्मीयं पतितं गृह्णाति किंवापरकीयं कस्यापि दानार्थमिवं शङ्कासंभवे तस्य प्रायश्चित्त चत्वारो लघुकाः । अथ निःशङ्कितं परेषां स्यात्तदा चतुर्गुरुकं । एवं शङ्कासंभवतो न गृह्णन्ति तस्मिंश्चागृह्यमाणे इमे दोषाः ।

[भा.३५३५] थिग्गलधुत्तापोत्ते बालगचीराइएहिं अहिगरणं ।
बहुदोसतमाकप्पा परिहानी जा विना तं च ।।

वृ- तत्पतितंयथा लघुस्वकमुपकरणं गृहस्थैर्दृष्टं ततस्ते तत् गृहीत्वाऽन्यस्य छिद्रवतो वस्त्रस्य थिग्गलकं कुर्वन्ति, तथा प्रक्षाल्य पोतकानि वहिकापट्टादिरूपाणि कुर्युर्यदि वा उत्तानशायिनां बालकानां योग्यानि चीवराणि विदधीरन् । इत्येवमादिभिः प्रकारैर्यथा लघुस्वकस्योपकरणाग्रहणे अधिकरणं यदा तु पतिताः कल्पा न गृह्यन्ते । तदा न बहुदोषतमाः प्रभूततमं तेष्वधिकमिति भावः । तच्च उपकरणंविना अन्यद् उपकरणं याचमानस्य परिहानिः सूत्रार्थयोः ये च तृणग्रहणाग्निसेवनादयो दोषास्तेऽपि प्रसजन्ति ।

[भा.३५३६] एते अन्नेय बहू जम्हा दोसा तहिं पसज्जंति ।
आसगणे अंतो वा तम्हा उवहिं न वोसिरए ।।

वृ- एते अनन्तरोदिता अन्ये च यस्माद्बहवो दोषास्तत्र पतिते प्रसजन्ति तस्माद्ग्रामादीनां बहिरासन्ने प्रदेशे अन्तर्वा तमुपधिं न व्युत्सृजेन्नविस्मरणतः पातयेत् । अधुना यः शङ्कानः शङ्कमानो वा न गृह्णाति तं प्रत्युपदेशमाह-

[भा.३५३७] निस्संकियं तु नाउं विच्चुयमेयंति ताहे घेत्तव्वं ।
संकादि दोसविजढा नाउं वप्पंति जस्स नयं ।।

वृ- यदा एतदुपकरणं कस्यापि विच्युतं विस्मरणतः पतितमिति निःशङ्कितं ज्ञातं भवति तदा नियमतो ग्रहीतव्यं । गृहीत्वा च शङ्कादिदोषरहिता मा ममविषये कस्यापि शङ्कास्यादित्यादि दोषवर्जिता यस्य यत् उपकरणं तस्य ज्ञात्वा समर्पयन्ति । एतच्च यद्विषये कर्तव्यं तदाह-

[भा.३५३८] समणुन्नेयराणं वा संजती संजयाण वा ।
इयरे उ अनुवदेसो गहियं पुन घेप्पए तेहिं ।।

वृ- समनोज्ञानां सांभोगिकीनामितरासामसांभोगिकीनां संयतीनां संयतानां वा स्तकमुपकरणं पतितं गृहीत्वा यस्य सत्कं तस्य दातव्यमितरे तु पार्श्वस्थादयस्तेषामयमुपदेशस्तेषां सक्तं पतितं गृहीत्वा यस्य सक्तं तस्मै देयमिति नास्माकमुपदेशोऽधिकरणप्रवृत्तेस्तैः पुनः पार्श्वस्थादिभिः संविग्नानां विहारिणामेतदुपकरणमिति ज्ञात्वा यत्पतितं गृहीतं तदानीं तं पुनर्गृह्यते । अत्रैव द्वितीयपदमाह-

[भा. ३५३९] बिइय पदे न गेण्हेज्ञा विविंचिय दुगुच्छिए असंविग्गे ।
तुच्छमपयोयणं वा अगेण्हता होय पच्छित्ती ।।

वृ- द्वितीयपदे अपवादपदे न गृह्णीयात् पतितं विविचितं परिष्ठापितमिति कृत्वा जुगुप्सितम- शुचिस्थानपतितमिति कृत्वा वा असंविग्नानां वा एतदुपकरणमिति ज्ञात्वा तथा तुच्छं मुखपोतिकादि तदपि कुथित्वादिना कारणेना कारणेनाप्रयोजनमगृह्णातो भवत्यप्रायश्चित्ती ।

[भा. ३५४०] अंतोविसगलजुणं विविंचियं तं च दङ्गुनोगिण्हे ।
असुअठाणिविचुतं बहुधावालादि छिन्नं वा ।।

वृ- अन्तर्ग्रामादीनां मध्ये विसर्जनं [illegible] स्पष्टीकृ[illegible] जीर्णं [illegible] परिष्ठापितमिति ज्ञात्वा [illegible] दृष्ट्वा न गृण्हीयात् तथा अशुचिस्थानेऽपि च्युतं बहुधा वा व्यालादिभिः श्वप्रभृतिभिश्छिन्नं न गृह्णीयात् ।

[भा. ३५४१] हीनाहियप्पमाणं सिव्वणिचित्तलाविरंगभंगी वा ।
एएहिं असंविग्गो विहिंत्ति दट्ठुं विवज्जंती ।।

वृ- हीनाधिक प्रमाणं नागमोक्तप्रमाणोपपन्नं तथा सीवनिकया चित्रलं चित्रं च ततुसीवनिका चित्रलं तथा विविधरंगेण रागद्रव्येण भक्तिविच्छित्ति तत् विरङ्गभक्तितद्रा दृष्ट्वा एतैः कारणैरयमसंविग्नाना- मुपधिरिति ज्ञात्वा विवर्जयन्ति ।

[भा. ३५४२] एमेवयबितिय पदे अंतो उवरिं ठविज्जड इमेहिं ।
तुच्छो अतिजुन्नो वा सुन्ने वीविंचेज्ञा ।।

वृ- एवमेव अनेनैव प्रकारेण एभिर्वक्ष्यणैर्ग्रामादीनामन्तर्द्वितीयपदेन परिष्ठापयेत् पतितं न गृह्णीयात् कैरित्याह-तुच्छो मुखपोत्तिका पादप्रोच्छनादिकः । कुथितत्वादिना अकिंचित्करः यदि वा अतिजीर्णो हस्तेन गृह्यमाणोऽनेकधाविशरारुर्जायते । शून्ये वा विविक्ते प्रदेशे पतितो यत्र विस्तरणासंभवस्तत एतैः कारणैः परिष्ठापितः एष उपधिरिति कृत्वा विविच्यात् न गृह्णीयादिति भावः ।

[भा. ३५४३] एमेव य बहियावी वियारभूमीए होज्जपडियं तु ।
तस्स विउ एस गमो होइ य नेओ निरवसेसो ।।

वृ- एवमेव अनेनैव प्रकारेण ग्रामादीनां बहिरपि विचारभूमौ पतितं भवेत् तस्याप्येव एवानन्तरोदितो गमः प्रकारो निरवशेषो ज्ञेयो भवति । तदेवं सूत्रद्वयं भावितमधुना तृतीय सूत्रभावनार्थमाह-

[भा. ३५४४] गामो खलु पुव्वुत्तो दूइज्जंते उ दोन्नि उ विहाणा ।
अब्भंतरगहणेणं दुविहो य उवही ।।

वृ- ग्रामः खलु पूर्वमुक्तस्तस्मादनुकूलोऽन्यो ग्रामोऽनुग्रामो ग्रामश्चानुग्रामश्च ग्रमानुग्रामं समाहारत्वादेकवचनं तत् दूयमानस्य गच्छतस्तस्मिन् गच्छति द्विविधानं ऋतुबद्धे काले गन्तव्यं । तथा पादाभ्यामिति आभ्यां द्वाभ्यां प्रख्या सम्प्रति निर्युक्तिविस्तरः -

[भा.३५४५] पंथे उवस्सए वा पासवणुच्चार माइयंते वा ।
पम्हुं सत्तं हए(?)हि तम्हा मोत्तूणमे ठाणा ।।

वृ- सत् उपकरणं पथिव्रजतः कथमपि पतेत् ग्रामानुग्रामं वा गच्छन् यत्रोपाश्रये उषितस्तत्र विस्मरणतः पतितं भवेत् । विश्राम्यतो वा क्वचित् पतितं स्यात् । उच्चारं प्रश्रवणं वा कुर्वतः स्यात् पतितं आचमतो वा विस्मृतमेतैः कारणैर्विस्मरणतः पतनसंभवस्ततो येषु विश्राम्यत उच्चारं प्रश्रवणं वा कुर्वतो दोषा भवन्ति तानीमानि स्थानानि वर्जयेत् । तान्येवाह

[भा.३५४६] पंथे वीसमणनिवेसणादि सो मासो होइ लहुओ ऊ ।
आगंतस्संठाणे लहुगा आणादिनो दोसा ।।

वृ- पथि यदि विश्राम्यति निवसति वा आदिशब्दात् ऊर्ध्वस्थितो वा तिष्ठति सुप्तो वा उच्चारं प्रश्रवणं वा व्युत्सृजति तदा सर्वत्र असमाचारी निष्पन्नंप्रायश्चित्तं मासलघु यदि पुनः आगन्तॄणां स्थाने सभादौ विश्रमणादि करोति तदा सर्वत्र प्रत्येकं चत्वारो लघुकाः आज्ञादयश्च दोषाः ।

[भा.३५४७] मिच्छत्त अन्नपंथे धूली उ विखनन उ उवहिणो विनासो ।
ते चेवय सविसेसा संकादिविविंचमाणे वी ।।

वृ- स साधुः पथिविश्राम्यति धिग्जातीयाश्चान्ये जातिमदावलिप्तास्तेन पथा समागता भवेयुस्ततः स साधुश्चिन्तयेत् । मा मन्निमित्तमेने उद्वर्तमाना हरितकायादिविराधनां कार्षुरिति । स साधुः पथ उत्थाय अन्यत्र तिष्ठेत् यत्र च इमे दोषा जानन्त्येते श्रमणवादिन आत्मनः सारमतोऽयमस्मान् दृष्ट्वादुवृत्त इति तथा साधूनां धिग्जातीयानां पथि दत्तोऽत्र एव तेषामपि गुरवो धिग्जातीयाः प्रधानाश्च एतद्याभिनवधर्माणः श्रुत्वा दृष्ट्वा वा मिथ्यात्वं प्रतिपद्येरन् । तथा अनपंथत्ति तं साधुं पथि स्थितं दृष्ट्वा पथिका उद्वृत्या व्रजन्ति । ते चोद्वर्तमाना हरितकायादीनां विराधनां कुर्वन्ति । तथा केचित्तं पथि स्थितं दृष्ट्वा ब्रुवते-अहो निर्लज्जः श्रमणः पन्थानं रुध्वा स्थितः । तच्च श्रुत्वा कोऽप्यसहनः कलहं कुर्यात् ततो युद्धे समापतिते भाजने भेदोऽनागाढादिः परितापना च स्यात् । तथा पादनिक्षेपेण धूल्या उत्खननं भवतीति तेन च उपधेर्विनाशो मलिनत्वभावात् ते एवानन्तरोदितदोषाः सविशेषाः शङ्कादयो विविंचत्यपि उच्चारादि त्यजत्यपि, तथाहि-उच्चारादि पथि कुर्वतो लोकस्य शङ्कोपजायते किमनेन गुदंनिर्लेपितमुत नेति । आदिशब्दात् किमेष स्तेनकः किं चाश्रमणोऽभिचारको हेरिको वा इत्यादि परिग्रहः । एष द्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेवगाथां विवरीषुः प्रथमतो मिथ्यात्वद्वारं विवृणोति-

[भा.३५४८] पंथे न ठाइयव्वं बहवो दोसा तहिं पसज्जंति ।
अब्भुट्ठियत्ति गुरुगा जं वा आवज्जती जत्तो ।।

वृ- पथि साधुना विश्रमणनिमित्तं न स्थातव्यं यतस्तत्र बहवो दोषाः प्रसजन्ति । तानेवाह-साधुना धिग्जातीयानां पथि प्रदत्ते अभ्युत्थिताएते अभ्युत्थानमेतेषां कृतमिति लोकप्रतिपत्तौ तस्य प्रायश्चित्तं चत्वारो गुरुकाः, । यच्चस्वयं दृष्ट्वा यतो वा श्रुत्वा मिथ्यात्वमापद्यते । अभिनवधर्या मिथ्यादृष्टिर्वा गाढतरं मिथ्यात्वमधिगच्छति तन्निष्पन्नं च तस्य प्रायश्चित्तं धिग्जातीयानां चात्मबहुमानसंभवः-

[भा.३५४९] जाणंति अप्पणो सारं एते समणवादिणो ।
सारमेएसि लोगो य मप्पणो न वियाणई ।।

वृ- ये आत्मानं श्रमणमिति वदन्ति ते आत्मनः सारं परमार्थतत्वं जानन्ति यथा अस्मभ्यमेते गरीयांस

इति । यस्त्वेषामयं लोकः स सारमर्थतत्त्वमात्मनो न विजानाति अविदितपरमार्थत्वात् । गतं मिथ्यात्वं ।

[भा. ३५५०] अन्नपहेण वयंते कायासो चेव वा भवे पंथो ।
अचियत्त संखडादी भाणाइ विराधना चेव ।।

वृ- तं साधुं पथि स्थितं दृष्ट्वा पान्था अन्येन पथा व्रजन्ति तथा च सति काया हरितकायदयो विराध्यन्ते । तथा स एव भवति पन्थास्ततो महान् प्रवर्तनादोषः । तथा पथि स्थितं दृष्ट्वा कस्याप्यचियत्तमप्रीतिरुपजायते ततः स ब्रूते-अहो मुण्डः पन्थानं रुध्वा स्थितः । तस्य श्रुत्वा कोऽप्यसहनोऽसंखडं कलहं कुर्यात् । आदिशब्दात् युद्धमपि । तथा च सति भाजनविराधना । आदिशब्दादनागाढादिपरितापना भावतः शरीर विराधना च । सम्प्रति धूली उक्खणउवहिविनासो इति व्याख्यानयति ।।

[भा. ३५५१] सरक्खधूलीचेयणे पत्थिवाणं विनासना ।
अचित्तरेणुमइलंमि दोसो धोव्वण धोव्वणे ।।

वृ- सह रजसा श्लक्ष्णधूलिरुपेण वर्तते इति सरजस्का स चासौ धूलिश्च तस्याश्चैतन्यो तस्यां चेतनायामित्यर्थः । पादनिक्षेपेण उत्खनने शरीरादिसंस्पर्शतः पार्थिवानां विनाशनं भवेत् । अथ सोऽचित्तोरेणुस्तर्हि तेनाचित्तेन रेणुना मलिने उपधौ यदि प्रक्षालयति तथापि दोषः प्राणविराधनापत्तेर्वा (ब) कुशत्वसंभवाद्यन्यत्वेऽपि दोषः । प्रवचनोपघातादयः अन्यच्च-

[भा. ३५५२] वेगाविद्धा तुरंगादी सहसा दुक्खनिग्गहा ।
परम्मुहं मुहं किच्चा पंता ठाणं पणोल्लए ।।

वृ- वेगाविद्धा वेगेनागच्छन्तस्तुरगादय आदिशब्दात् बलीवर्दादिपरिग्रहः सहसा दुःखेन निगृह्यन्ते निवार्यन्ते इति दुःखनिग्रहा निवारयितुमशक्या इति भावतस्तः शरीरविराधना भाजनविराधना च तथा केचित् प्रान्तः पराङ्मुखं कृत्वा पथि स्थितं प्रणुदेयुर्गाथायामेकवचनं प्राकृतत्वात् । प्राकृते हि वचनव्यत्ययोपिभवति । किंच-

[भा. ३५५३] पम्हुट्ठमवि अन्नत्था जइत्था कोविपेच्छती ।
पंथे उवरिमम्हुठं खेप्पं गेण्हंति अद्धगा ।।

वृ- पथोऽन्यत्र विस्मरतः पतितमपि यदृच्छया यदि कथमपि कोपिप्रेक्षते, पथि पुनरध्वगा परिभ्रष्टंक्षिप्रं गृह्णन्ति तस्मात्पथि न विश्रमितव्यं ।

[भा. ३५५४] एवं ठितोवविठे विसेसतरा भवंति उन्निवणे ।
दोसा निद्दपमायं गते य उवहिं हरं तत्तो ।।

वृ- एवममुना प्रकारेण स्थिते ऊर्ध्वस्थानेनावतिष्ठमाने तथा उपविष्टेदोषा वक्तव्याः । निवन्ने शयाने सविशेषतरा दोषा भवन्ति, तथाहि-पूर्वोक्तास्तावत्तथैव द्रष्टव्या, अन्यच्च शयाने कथमपि निद्राप्रमादं गते उपधिमन्ये पथिकादयो हरन्ति तस्मात्पथि न शयितव्यमिति । सम्प्रति ते चेवयसविसेसा संकादिविविंचमाणेवीत्येतद्व्याख्यानार्थमाह-

[भा. ३५५५] उच्चारं पासवणं अनुपंथे चेव आयरंतस्स ।
लहुतोय होइ मासो चाउम्मासो सवित्थारो ।।

वृ- उच्चारं प्रश्रवणं वाध्वगानामनुकूले पथि आचारतोऽसमाचारी निष्पन्नं प्रायश्चित्तं लघुको भवति मासः, । अथ तथोच्चारं प्रश्रवणं वा कुर्वन्तमवलोक्य केचिदन्यं पन्थानं कुर्वन्ति चत्वारो मासा लघुकाः, ।

सवित्थारोत्ति यद्यस्त्यादिभिः सह संघट्टनादि प्राप्नोति तन्निष्पन्नमपि तस्य प्रायश्चित्तमिति भावः । तथा-

[भा.३५५६] छड्डावणन्नपहो दवासती दुब्भिगंधकलुसण्णे ।
तेनोत्ति वसंकेज्ञा आदियणे चेव उड्डाहो ।।

वृ- कोऽपि सखरो राजकुलमान्यः प्रान्तः श्रवणमुच्चारं पथि कुर्वन्तं दृष्ट्वा कोपात्तमेव श्रमणमास्कन्ध तमुच्चारं छर्दापयेत् । अपरैन्यः पन्था क्रियतेत यथोक्तं प्रायश्चित्तं, तथा पथि द्रवाभावे दुरभिगन्ध उच्छलेत । तत्रापि प्रवचनोड्डाहस्तथा कोऽपि पथ्युच्चारमाः शंकेत स्तेनक इति उपलक्षणमेतत् । हेरिकोऽभचारिको वा इत्यपि शङ्केत । तत आदाने ग्रहणेप्रवचनस्य उड्डाहः तस्मात् पथि विश्रामणादि न कर्तव्यमत्रै-वापवादमाह-

[भा.३५५७] अद्दायव दूरपहे असहूभावेण खेदियप्पावा ।
छन्ने वा मोत्तुपहं गामसमीवे च छन्ने वा ।।

वृ- अतिशयेनातप उष्णंतपति वृक्षाश्च पथो दूरे वर्तन्त यथारण्यपद्धीमार्गं प्रतिपन्नानामेक एवाध्वनि विश्रमणयोग्यो वृक्ष एवमधिकृतेप्यध्वनि विश्रमणहेतुरेक एव वृक्षोऽन्यत्रमाकाशं तेन कारणेन पथ्यपि वृक्षस्य अधस्तात् विश्राम्येत् । असहो नाम नातिदूरे वृक्षाः सन्ति परं तत्र गन्तुं न शक्नोति ततः सोऽपि पथि वृक्षस्याधो विश्रमणं कुर्यात् । अथवा उपधिभारेण खेदितात्मा अतिशयेन परिश्रान्तस्ततः पथ उद्वर्तितुं न शक्नोतीति पथ्येव विश्राम्यति । तदेव पथ उभयोः पार्श्वयो दूरेण वृक्षसंभवे द्वितीयपदमुक्त-मिदानीं समन्ततो वृक्षच्छन्ने प्रतिपादयति - छन्ने वा मोत्तुपहमिति यत्र पन्था उभयोः पार्श्वयोर्वृक्षैः छन्नस्तवा वा विभाषायां यदि निर्भयं, न ततः पन्थानं मुक्त्वाऽन्यत्र विश्रमणादि करोति । अथ भयं तदा पथ्येवेति एतद्दूरेऽभिहितं, ग्रामसमीपे पुनर्निर्भयमिति वृक्षच्छन्ने वा पथिय उद्वर्त्य विश्रामणादि करोति ग्रामसमीपे यस्य तस्य वृक्षादेर्देवकुलादेश्छायासंभवात्तेन पुनः साधुना पथः कियद्दूरे उद्वर्तितव्यमत आह-

[भा.३५५८] पंथे ठितो न पेच्छइ परिहरिया पुव्व वन्निया दोसा ।
बिइयपए असतीए जयणाए चिट्ठणादीनि ।।

वृ- तावति दूरे उद्वृत्य स्थातव्यं यत्र पथिकः पथा वृजन् पथि ऊर्ध्वस्थितो वा साधुमुद्वृत्तं न पश्यति । एवं च पूर्ववर्णिता दोषाः समस्ता अपि परिहृताः । द्वितीये पदे अपवादपदे पुनरुद्वर्तने असति उद्वर्तनाभावे पथ्यपि यतनया वक्ष्यमाणया स्थानादीनि करोति स च तथा कुर्वन् तीर्थकराज्ञया प्रवृत्तेः शुद्ध इति, ।

[भा.३५५९] संकडहरियच्छाया असतीए गहितो वहिट्ठितो अत्थे ।
उठे इव अपत्ते सहसा पत्ते ततो पठिं ।।

वृ- संकठो नाम पन्था स उच्यते यो वाट्योरपान्तराले तत्रोद्वर्तनस्यासंभवः अथवा चतसृष्वपि दिक्षु समन्ततो हरितकायः अथवा पन्थानमतिरिच्यान्यत्र सर्वथा च्छाया न विद्यते, । तत एतैः कारणैरुद्वर्त-नासंभवे पथ्येव गृहीतोपकरणो मुहूर्तमात्रमूर्ध्वस्थितो मार्ग एव च्छायायां विश्राम्येत, यदातु पथिकानागच्छतः पश्यति तदा तेषु तं प्रदेशमप्राप्तेष्वेव उत्तिष्ठति । तथा ते जानन्ति पूर्वमेव उत्थित इति । अथ सहसैव ते पथिका अदृष्टा एवं संप्राप्तास्तदा तेषां पृष्टं दत्त्वा उत्तिष्ठति । तदा ते जानन्ति यथैष आत्मव्यापारेणोत्थित इति । एवं मिथ्यात्वादिदोषाः परिहृता भवन्ति ।

[भा.३५६०] भुंजणपियणुच्चारे जयणं तत्थ कुव्वती ।
उदाहडाय जे दोसा पुव्वं तेसु जतो भवे ।।

**वृ-** भोजने पाने उच्चारे यतनां तत्र पथि करोति कथमित्याह-उदाहृता ये पूर्वं दोषास्तेषु यतो भवेत् न भवन्ति तथा यतनेति भावः ।

**[भा. ३५६१]** गंतव्व पलोएउं अकरणिलहुगो उ दोस आणादी ।
पम्हुट्ठो वासट्ठो लहुगो आणादिनो चेव ॥

**वृ-** विश्रम्य उच्चारं प्रश्रवणं कृत्वा [illegible] सिंहावलोकनेन पश्चादवलोक्य गन्तव्यं । यदिपुनरवलोकनं नकरोति तदा प्रायश्चित्तं तस्य लघुको मासः, । अधिकरणदोषाश्च प्रागुक्ताः कथमपि विस्मरणः पतिते संभवन्ति । आज्ञादयश्च आज्ञाभङ्गादयश्च दोषः तथा यदि कथमपि विस्मरणतः पतितं स्यात्ततस्तद्ग्रहणाय प्रतिनिवर्तितव्यः । यदि मन्यतेकिं तेनेति व्युत्सृजति तदा मासलघुकं आज्ञाभङ्गादयश्च दोषाः । एतदेवाह-

**[भा. ३५६२]** पम्हुठे गंतव्वं आगमने लहुगो य दोस आणादी ।
निक्कारणंमि तिन्नि उ पोरिसीकारणे सुद्धो ॥

**वृ-** पम्हुटे कथमपि विस्मरणतः पतिते सिंहावलोकनेन च दृष्टे नियमतस्तदानयनाय पश्चाद्गन्तव्यं । अगमने प्रायश्चित्तं लघुको मासः । अधिकरणदोषाश्च प्रागुक्ता आज्ञादयश्चतथा निष्कारणमिति कारण-स्वाभावो निष्कारणं तस्मिन् यदि नास्तिवर्तमानस्य प्रत्यवाय इत्यर्थः । तदा अवश्यं निवर्तितव्यं तिन्नि उत्तियदि प्रथमायां पौरुष्यां विस्मरणतः पतितं चरमायां च पौरुष्यां स्मृतं तत्र यदि निःप्रत्यवायमन्तरा च वासोऽस्ति यदा निवृत्य गृहीत्वा आनेतव्यमथ सूर्यास्तसमयवेलायां स्मृतं यथाऽमुकं मे विस्मरणतः पतितमिति तदा आद्यान् त्रीन् यामान्-उषित्वा चतुर्थे यामे प्रतिनिवृत्यानेतव्यं प्रत्यवायाभावे, कारणे तु प्रत्यवायलक्षणे अनिवर्तमानोऽपि स शुद्धः । एतदेव भावयति-

**[भा. ३५६३]** चरमाए वि नियत्तइ जइ वासो अत्थि अंतराचसिमे ।
तिन्नि वि जामे वसिउं नियत्तइ निरच्चए चरमे ॥

**वृ-** प्रथमायां पौरुष्यां विस्मरणतः पतिते तदानयनाय चरमायामपि पौरुष्यां निवर्तते । यदि च सिमे अन्तरावासोऽस्ति । अथ चरमायां दिनपौरुष्यां पतितं तदा रात्रे त्रीन् यामान् उषित्वा चरमे यामे निरत्यये प्रत्यवायाभावतो-निर्भये-निवर्तते । कारणे शुद्धो इति व्याख्यानार्थमाहं-

**[भा. ३५६४]** दूरं सो विय पुच्छो सावय तेना नदी व वासं वा ।
इच्चाइ कारणेहिं करेति उस्सग्गमो तस्स ॥

**वृ-** दूरमतिशयेन गतानां स्मरणपथमवतीर्णः पतित उपधिः सोऽपि वा उपधिरतिशयेन तुच्छः मुखपोतिकादिरूपोऽति जराजीर्णश्चेति भावः । अथवा अपान्तराले व्याघ्रादीनि श्वापदानि स्तेना वा शरीरापहारिण उपकरणापहारिणो वा नदी वापान्तराले वर्षं वा पतति । आदिशब्दात् म्लेच्छभयं वा अशिवं वेत्यादिपरिग्रह इत्यादिभिः कारणैस्तस्य विस्मरणतः पतितस्योपकरणस्य उत्सर्गं वोसिरामित्ति त्रिभणनपूर्वकं परित्यागं करोति । एवं करणे अधिकरणादयो न भवन्ति ।

**[भा. ३५६५]** एवं ता पम्हुठो जेसिं तेसिं विही भवे एसो ।
जे पुनअन्ने पेच्छे तेसिं तु इमोविही होइ ॥

**वृ-** एवमुक्तेन प्रकारेण तावत् येषामुपधिर्विस्मरणतः पतितस्तेषामेषोऽनन्तरोदितो विधिर्भवति । ये पुनरन्ये साधर्मिकाः प्रेक्षन्ते तेषामयं वक्ष्यमाणो विधिर्भवति । तमेवाह-

[भा.३५६६] दट्ठु अगेण्हणे लहुगो दुविहो उ विहीउ नायमनातो ।
दुविहा नायमणीया संविग्ग तहा असंविग्गा ।।

वृ- द्विविध उपधिरौधिक औपग्रहिकश्च । तस्य द्वितीयस्यापि पतितस्य दृष्ट्वा अवग्रहणे लघुको मासो ये च पूर्वमुक्ता अधिकरणादयो दोषास्तेऽपितस्य प्रसजन्ति । सर्व उपधिर्भूयोद्विधा ज्ञातोऽज्ञातश्च । तत्र ज्ञातो नाम येषां स उपधिस्तेषां ज्ञायते अज्ञातोनाम यो न ज्ञायते यथाऽमुक्तस्य सम्बन्धीति । ते ज्ञाता द्विविधा भवेयुः-संविग्ना असंविग्ना वा । योऽपि चोपधिर्येषां सत्कतया न ज्ञायते तेऽप्यज्ञाता द्विविधाः संविग्ना असंविग्नाश्च ।

[भा.३५६७] मोत्तूण असंविग्गे संविग्गाणं तु नयनजयणाए ।
दोवग्गा संविग्गे छब्भंगा नायमनाए ।।

वृ- मुक्त्वा असंविग्नान् किमुक्तं भवति? यो ज्ञायतेऽसंविग्नानामेष उपधिः स न नीयते येस्तु संविग्नानां द्वौ वर्गौ तद्यथा संयताः संयत्यश्च । तत्र संविग्ने एकैकस्मिन् वर्गे षड् भङ्गा ज्ञाते भवन्ति अज्ञाते च वक्ष्यमाणो विधिः । तत्र षड् भङ्गानुपदर्शयति-

[भा.३५६८] संयमे व अन्नपेसे अप्पाहे वावि एय सग्गामे ।
परगामे वि य एवं संजति वग्गेवि छब्भंगा ।।

वृ- यदि ते संयताः संविग्ना इति ज्ञातास्तदा स्वयं वा गन्तुं नयति । अन्यस्य वा हस्ते प्रेषयति संदिशति वा यथा मया स उपधिर्विस्मरणतः पतितो लब्ध इति एवं स्वग्रामे त्रयो भङ्गाः परग्रामेऽपि स्थितानामेते एव त्रयः प्रकाराः षड् भङ्गाः संयतानामेवं संयतीवर्गेऽपि षड् भङ्गाः । तदेवं ज्ञातविषये विधिरुक्तः ।

[भा.३५६९] ण्हाणादि नाय घोसण सोउं गमनं च पेसणप्पाहे ।
पम्हुट्ठे वोसट्ठे अप्पबहु असंथरंतंमि ।।

वृ- यो न ज्ञायते कस्याप्येष उपधिरिति सपरिज्ञाननिमित्तं स्नानादिसमवसरणे घोष्यते । घोषणां च श्रुत्वा केनापि कथिते ज्ञाते येषां स उपधिस्तत्र स्वगं वा गन्तुं नयति । अन्यस्य वा हस्ते प्रेषयति सन्देशयति वा । तथा पम्हुट्ठे विस्मरणतः पतिते व्युत्सृष्टे परित्यक्ते येनानीतस्तस्मिन्नसंस्तरति अल्पबहु परिभाव्य परिभोगोऽनुज्ञातः । एतदेव व्याख्यानयति-

[भा.३५७०] कामं पम्हुट्ठं नो चत्तं पुन भावतो इमम्हेहिं ।
इति बेंति समणुन्ने इच्छा कज्जेसु सेसेसु ।।

वृ- येषां स उपधिर्विस्मरणतः पतितस्तेषामन्तिकं स नीयते नीत्वा चेदं भण्यते । यथायं युष्माद्विस्मरणतः पतितोऽस्माभिश्चानीतस्ततो गृह्यतामिति एवमुक्ते ते प्राहुः कामं नोऽस्माकं विस्मरणतः पतितमिदमुपकरणं परं भावत इदमस्माभिस्त्यक्तस्त्रिविधं त्रिविधेन व्युत्सृजति तमिति भावः । एवं ब्रुवति उपधिस्ते यदि संभोगिकास्तेन च विना संस्तरति तर्हि स येषां सत्कस्ते परिष्ठापयन्ति । एतेन इच्छाकज्जेसु इति व्याख्यातम् । सम्प्रति सेसेसुत्ति व्याख्यायते शेषा असांभोगिकास्तेष्वपि कार्येष्विच्छा । इयमत्र भावना अन्यसांभोगिकैरानीते तैश्च प्रतिषेधे यदि यैरानीतस्ते तेन विना न संस्तरति । अन्यश्चोपधिर्दुर्लभो न लभ्यते वा तदा तैः समनुज्ञातं परिभुञ्जते । एतावता अप्पबहुसंथरंतम्मिति व्याख्यातं तदेवं संविग्नानां विधिरिदानीमसंविग्नानामुपधिविधिरुच्यते-

[भा.३५७१] पक्खिगा पक्खिगा चेव हवंति इयरे दुहा ।

संविग्गपक्खगेणेति इयरेसिं न गेण्हती ।।

वृ- इतरे असंविग्ना द्विविधास्तद्यथा संविग्नपाक्षिकाश्चासंविग्न पाक्षिका इत्यर्थः । तत्र यः संविग्न-पाक्षिकस्य सम्बन्धी उपधिस्तं स्वयं वानयति अन्यस्य वा हस्ते प्रेषयति सन्देशयति वा यस्त्वि-तरेषामसंविग्नानामुपधिस्तं पतितं दृष्ट्वा न गृह्णन्ति । अत्रैवापवादमाह-

[भा.३५७२] इयरे वि होज्ज गहणं आसंकाए अनिज्जमाणंमि ।
किह पुन होज्जा संका इमेहिं उ कारणेहिं तु ।।

वृ- इतरस्मिन्नप्यसंविग्नपाक्षिक सम्बन्धिन्युपधावसंविग्नपाक्षिकसम्बन्धित्वे नाज्ञायमाने आशङ्कयाग्रहणं भवेत् । सूरिराह-एभिर्वक्ष्यमाणैः कारणैस्तान्येवाह ।

[भा.३५७३] ण्हाणादो सरणं वा अहयसमावत्तितो गयानेगा ।
संविग्गमसंविग्गा इति संकागेण्हंते पडियं ।।

वृ- जिनप्रतिमास्नान दर्शननिमित्तं आदिशब्दात् सङ्घ प्रयोजनेन वा केनापि समवसरणे मेलापके यदि वा एवमेव समापत्तितो गताः पुरतोऽनेके संविग्ना असंविग्नाश्च । तेषां च गच्छतां कस्याप्युपधे-र्विस्मरणतः पतितः स न ज्ञायते सम्यक् किं संविग्नानां केवलं स्यात् संविग्नानामपीति तं गृह्णाति ।

[भा.३५७४] संविग्गपुराणोवहि अहवा विहि सीवणा समावत्ती ।
होज्ज व असीवितो च्छिप्पइति आसंकाए गहणं तु ।।

वृ- अथवा पुराण संविग्नोपधिः किमुक्तं भवति ? येषां सत्क उपधिः पतितस्ते पूर्वं संविग्ना आसीरन् पश्चादसंविग्नीभूताः स चोपधेः पूर्वसंविग्नसीवनेन सीवितः अथवा असंविग्नैरपि समापत्त्याविधि-सीवनिकया सीवितो यदि वा असीवित एव स भवेत्ततस्तं दृष्ट्वा आशंका भवति किं संविग्नानामुता-संविग्नानां तत आशङ्कयाग्रहणं भवति । सम्प्रति ग्रहणानन्तरविधिशेषमाह-

[भा.३५७५] ते पुन परदेसगते नाउं भुंजंति अहव उज्झंति ।
अन्ने उ परिठवणा कारणभोगो व गीएसु ।।

वृ- तमुपधिं गृहीत्वा येषां संविग्नानां सत्क उपधिस्ते परदेशं गतास्ततस्तान्परदेशं गतान् ज्ञात्वा कारणे समापतिते परिभुञ्जते । अथवा कारणाभावे परिष्ठापयन्ति । एवं कारणैरसंविग्नानमपि पतितमुपधिं गृह्णानो न प्रायश्चित्तभाग् भवति, अथ येषां सत्क उपधिः पतितो गृहीतस्तेषा संविग्ना अप्यन्येऽसांभोगिकास्तेषां देशान्तर गतानामुपधिं गृहीत्वा निष्कारणे परिष्ठापयन्ति । कारणत्ति यदि ते सर्वे गीतार्थानां च तेषामुपधिरस्ति यदि वा तादृश उपधिरन्यो दुर्लभस्तदा एवं कारणे परिभुञ्जते । अथ ते गीतार्थमिश्रास्तदा परिष्ठाप्यते परिष्ठाप्य वा अगीतार्थान् परिभुञ्जते । एतद्वान्यसांभोगिसत्कतया परिज्ञायते, द्रव्यपरिज्ञाने प्रागुक्त एव विधिः -

[भा.३५७६] बिइयपदे न गेण्हेज्जा संविग्गाणंपि एहिं कज्जेहिं ।
आसंकाए न नज्जइ संविग्गाण व इयरेसिं ।।

वृ- द्वितीयपदे अपवादपदे संविग्नानामपि पतितमुपधिमेभिर्वक्ष्यमाणैः कार्यैः कारणैर्न गृह्णीयात् तान्येवाह-न ज्ञायते किमेष संविग्नानामितरेषामसंविग्नानामित्याशङ्कया पतितं न गृह्णाति तथा -

[भा.३५७७] असिवगहियं व सोउं ते वोमयं व होज्ज जइ गहियं ।
उभेण अन्नदेसं व गंतुकामा न गेण्हेज्जा ।।

वृ- येषां ते उपधिस्ते अशिवे गृहीतो येन दृष्टः स नेति प्रथमो भङ्गः । यैर्दृष्टस्तेऽशिवं गृहीता येषां सक्तस्तेन गृहीता अथवा उभयं गृहीतमिति तृतीयः । उभयमपि न गृहीतमिति चतुर्थः । तत्र चतुर्थभङ्गोऽपवादमधिकृत्य शून्यो न भवति । तत्रापवाद इति भावः । तत्र प्रथमभङ्गे न गृह्णाति अशिवोपहतत्वात् द्वितीयेऽपि न गृह्णाति । तदानीं तस्य तैर्ग्रहणादशिवोपहतत्वात् तृतीयेभङ्गे सद्दशेऽशिवे कारणेगृह्णाति विसद्दशे सोममुखादिलक्षणे न गृह्णाति । यदि वा अवमौदर्येण देशान्तरं गन्तुकामा न गृह्णीयुः ।

[भा.३५७८] अह पुन गहियं पुव्वं नयदिट्ठं जस्स विच्चुयं तं तु ।
पवहावियन्नदेसं इमेण विहिणा विगिंचिज्जा ।।

वृ- अत पुनर्गृहीतं पूर्वमुपकरणं न च स दृष्टो यस्य सत्कं तदुपकरणं विच्युतं विस्मरणातः पतितं यस्मात्पवनवेगेन धाविताः प्रधाविता अन्यदेशं तदनेन वक्ष्यमाणेन विधिना विवेचयेत् परिष्ठापयेत् ।

[भा.३५७९] दुविहा जायमजाया जाता अभियोगतह असुद्धाय ।
अभियोगादी चछेत्तुं इयरं पुन अक्खुयं चेव ।।

वृ- सा पारिष्ठापनिका द्विविधा जाता अजाता च । तत्र जातानामअभियोगकृता विषकृता च । तत्राभियोगावशीकरणं । अथवा जाता अशुद्धा सा द्विविधा मूलगुणा अशुद्धा उत्तरगुणा शुद्धा च । तत्र जाता अभियोगकृता विकृता वा मूलगुणा शुद्धा उत्तरगुणा शुद्धा वा सा चछेत्तुं भेत्तुं वा कर्तव्या इतरत् पुनरुपकरणमभियोगादि दोषरहितमक्षतं चैव परिष्ठापयितव्यम् । अत्र परः प्रश्नं करोति-

[भा.३५८०] पह निग्गया इदानिं विजाणणठाइ तत्थ चोदेइ ।
सुद्धासुद्धनिमित्तं कीरइ चिंधं इमं तु तहिं ।।

वृ- पथं निर्गता आदिशब्दादशिवादिभिः कारणैर्निर्गताः परिगृह्यन्ते । तेषां शुद्धाशुद्धनिमित्तं यदत्र प्रागुक्ते विधौ प्रतिपादिते परोऽसहमानश्चोदयति प्रश्नयति पथनिर्गतादीनां पथनिर्गता मार्गप्रतिपन्नाः तेषां परिष्ठापितमिदमिति विज्ञानार्था तत्रेदं वक्ष्यमाणं चिहनं क्रियतामिति तदेवाह-

[भा.३५८१] एगादी तिन्निवली वत्थे कीरंति पाए चीराणि ।
छब्भंतु चोदगेनं इति उदिते बेंति आयरिओ ।।

वृ- मूलगुणैरशुद्धे वस्त्रे एकावलिरेकं चक्रं कृत्वा तत् परिष्ठाप्यते मूलगुणैरशुद्धे पात्रे एकं चीवरमेकं प्रस्तरं क्षिप्त्वा तत्परिष्ठाप्यतामुत्तरगुणैरशुद्धे द्वे चक्रे क्रियेयातां, पात्रे द्वे चीवरखण्डे द्वौ वा प्रस्तरौ क्षिप्येयातां, मूलगुणैरुत्तरगुणैश्च शुद्धे वस्त्रे त्रीणि चक्राणि क्रियेरन् । पात्रे त्रीणि चीवराणि त्रयो वा प्रस्तराः क्षिप्येरन् । इति अमुना प्रकारेण चोदकेनोक्ते आचार्यो ब्रूते किं तदित्याह-

[भा.३५८२] सुद्धमसुद्धं एवं होति असुद्धं च सुद्धवायवसा ।
तेनतिदुगेगगंथी वत्थे पायंमि रेहाउ ।।

वृ- एवं युष्मदुक्तप्रकारेण चक्रकरणे वातवशात् शुद्धमपि चक्रैकद्विकभङ्गतोऽशुद्धं भवति । अशुद्धमपि वातवशेन चक्रत्रिकभावतः सुद्धं भवति । पात्रमपि वातवशेन विधिस्तत्र कर्तव्यः । मूलोत्तरगुणशुद्धे वस्त्रे त्रया ग्रन्थयः कर्तव्याः । पात्रे तिस्त्रो रेखा उत्तरगुणैरशुद्धे वस्त्रे द्वौ ग्रन्थी पात्रे द्वे रेखे मूलगुणैरशुद्धे वस्त्रे एको ग्रन्थिः पात्र एका रेखा ।

[भा.३५८३] अद्धाणनिग्गयादी उवएसाणायण पेसणं वावि ।
अविकोविते अप्पणगं दट्ठु भिन्ने वित्तेय ।।

वृ- अध्वनि मार्गे निर्गता अध्वनिर्गता आदिशब्दात् आशिवादिभिर्या कारणैर्निर्गताः परिगृह्यन्ते । तेषामुपकरणे दग्धे वह्निना भस्मीकृते भिन्ने वा विविक्ते वा विस्मरणतः पतिते वास्तव्यास्तान् अध्वनिर्गतादीन् ब्रुवतेऽस्माकमुद्धरितानि वस्त्राणि न सन्ति । केवलममुकप्रदेशे परिष्ठापितानि वर्तन्ते । तान्यानीय गृहीथ एवमुक्ते तेऽपि प्राधूर्णका ये गीतार्थास्तान् प्रेषयन्ति, वास्तव्या अपि च तेषां चिह्नानि उपदिशन्ति । यथा गर्तासमीपे तरुसमीपे तडागसमीपे कूपसमीपे इत्यादि । आणयणमिति अथैवं चिह्ने कथितेऽपि स्थानं न जानन्ति यदि वा न ते वास्तव्या ग्लानादिप्रयोजनैर्व्यापृतास्ततः स्वयमानीय प्रयच्छन्ति । एसणं वा विंति अथवा वास्तव्याः प्राधूर्णकानां देशनं ददति यथा अमुकप्रदेशे वस्त्रादिपरिष्ठापितमस्ति तदमीषां दर्शय अपिशब्दात् यदि ग्लानादिप्रयोजनैर्न व्यापृतास्तदा परिष्ठापिता भावे अन्यत् याचित्वा प्रयच्छन्ति । अविकोविए अप्पाणमिति आनीते परिष्ठापिते कोऽप्यकोविदोऽगीतार्थ उपहतमिति कृत्वा नेच्छेत् । तत्र प्राधूर्णकैर्वास्तव्यैर्वा तस्यात्मीयं वस्त्रं पात्रं दत्वा इतरत्स्वयं गृहीतव्यम् । अथ तदपि कश्चिदगीतार्थतया न गृह्णीयात्तर्हि तदानीं तं पुनः परिष्ठाप्यते ।

[भा. ३५८४] अद्धाण निग्गयादीना उपरित्तोवहीविवित्ते वा ।
संपड्डग भंडधारी पेसंती ते वियाणंते ।।

वृ- अध्वनिर्गतादीन् आदिशब्दादशिवादिकारणनिर्गतपरिग्रहस्तान् परितोपधीयान् परिमितोपधीयान् वा विविक्तोपधीन्वा विस्मरणतः पतितोपधीनित्यर्थः । उपलक्षणमेतत् दग्धोपधीन् वास्तव्या ज्ञात्वा कथंभूता वास्तव्या इत्याह - संपाण्डु (द्दु) गभाण्डधारिणो नाम यावन्मात्रमुपकरणमुपयुज्यते तावन्मात्रं धरन्ति शेषं परिष्ठापयन्ति । ते तान् तथाभूतान् ज्ञात्वा ब्रुवते अस्माकमुद्धरितानि वस्त्राणि न सन्ति । किन्त्वस्माभिरमुकप्रदेशे परिष्ठापितानि वर्तन्ते तानि गत्वा प्रतिगृह्णीतेति एवमुक्ते तथापि प्राधूर्णका जानते गीतार्थान् प्रेषयन्ति कथमित्याह-

[भा. ३५८५] गड्डागिरितरुमादीणि काउ चिंधाणि तत्थ पेसंति ।
अवियावडा सयं वा आणं तत्र व मग्गंति ।।

वृ- अत्र प्राधूर्णकप्रेषितान् वास्तव्या गर्तागिरितर्वादीनि चिह्नानि कृत्वा प्रेषयन्ति यदि ग्लानादिभिरव्यापृताः स्वयमानयन्ति परिष्ठापिताभावेऽन्यद्वा मार्गयन्ति । साम्प्रतमविकोविए अप्पणगमिति -

[भा. ३५८६] नीयंमि वि उवगरणे उवहमेयं न इच्छई कोइ ।
अविकोविए अप्पणगं अनिच्छमाणो विविचंति ।।

वृ- नीतेऽप्युपकरणे कश्चिदविकोविद उपहतमेतदिति कृत्वा नेच्छेत् । तस्मिन्नपिकोविदे आत्मीनं वस्त्रादि समर्प्यते । अथ तदपि नेच्छति तदापरिष्ठापितमानीतं पुनर्विविचन्ति परिष्ठापयन्ति ।

[भा. ३५८७] असतीए अप्पणाविय झामियदिह्न चूढपडियमादीसु ।
सुज्झति कयपयत्तो तमेव गेह्नं असढभावो ।

वृ- येन पूर्वं तत्परिष्ठापितमानीतं तस्य पश्चादुपधिः कथमपि प्रदीपनकेन दग्धः हृतो वा तस्करैः पानीयेन वा नद्यादिप्लवेन प्लावितः व्रजतो वा कथमपि विस्मरणतः पतित आदिशब्दात्प्रत्यनीकेनाऽपि वस्त्राणि फालितानि पात्राणि अनेकधाभिन्नानि ततो ध्यामितहृतव्यूढपतितादिषूपकरणानि याचनीयानि । तेषामसत्यभावे कृतप्रयत्नस्तदेव पूर्वपरिष्ठापितं स्वयं गृह्णानः शुद्धोऽशठभाव इति कृत्वा ।

मू. (२०१) *कप्पइ निग्गंथीण वा अतिरेगं पडिग्गहं अन्नमन्नस्सट्ठाए दूरमवि अद्धाणं परिवहित्तए*

धारेतएवापरिग्गहितएवासोवाणंधारेस्सइ नो से कप्पइ तं अनापुच्छिता अनामंतिय अन्नमन्नेसिं दाउं वा अनुप्पयाउं वा. कप्पइ से तं आपुच्छिय आमंतिय अन्नमन्नेसिं दाउं वा अनुप्पयाउं वा ।

[भा.३५८८] उवही दूराणे साहम्मि व तेन रक्खणा चेव ।
अनयत्तेते उ इमं अतिरेगपडिग्गहे सुत्तं ।।

वृ- अनन्तरसूत्रे इदमुक्तं विस्मरणतः पतित उपधिर्दूरादप्यध्वन आनेतव्य इत्युपदेशः कृतो अन्येषां च विस्मरणः पतितं गृहीत्वा दूरेऽपि येषां सत्कस्तेषां दातव्योऽन्यथाऽदाने साधर्मिका चोरिका स्यात् । तत उपधौ दूराध्वनि साधर्मिकस्तैन्यरक्षणेऽनुवर्तमाने इदमप्याधिकृतं सूत्रमतिरेकपतद्ग्रहविषयं दूराध्वाधिकारे साधर्मिकस्तैन्यरक्षणाधिकारेऽभिहितामित्येष सूत्रार्थः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा अतिरेकमतिरिक्तं पतद्ग्रहं अन्यस्य अर्थाय इदमविशेषितं वचनं साधर्मिकस्यार्थायेति द्रष्टव्यं । धारयितुं वा स्वयं वा परिग्रहितुं सोवाणं धारयिष्यतिइदं विशेषितवचनं अमुको गणी वाचकोऽन्यो वा विशेषनिर्दिष्टः साधुः तस्य भविष्यतीति भावः अहं वा नं धारयिष्यामि ममैव भवीष्यतीति भावः । अन्यो वाणमिति सर्वत्र वाक्यालङ्कारे धारयिष्यति । इदं विशेषितवचनं अमुको गणी वाचकोऽन्यो वा विशेषानिर्दिष्टः । साधुः यस्य कस्याप्यहं दास्यामि न वा से तस्य कल्पते । यस्य विशेषतो निर्दिष्टं अमुकस्य दातव्यं तं अनापृच्छ्य अनामन्त्र्य वा अन्येषां अन्येषां यदृच्छया दातुं वा अनुप्रदातुं वा, कल्पते से तस्य तान् आपृच्छय आमन्त्र्या च अन्येषामन्येषां दातुं वा अनुप्रदातुं वा एष सूत्राक्षरसंस्कारः । अधुना भाष्यकृत् सामान्यविशेषवचनरुपयोरुद्देशनिर्देशयोः स्वरुपमाह-

[भा.३५८९] साहम्मिय उद्देसो होइ इत्थि पुरिसाणं ।
गणिवायगनिद्देसो अमुगगणी वायए इयरो ।।

वृ- साधर्मिक इत्युद्देशो भवति स्त्रीणां पुरुषाणां वाभिधानमिति निर्देशः । अथवा गणी वाचक इत्युद्देशः । अमुको गणी अमुको वाचक इतीतरो निर्देशः । सम्प्रति निर्युक्तिविस्तरः-

[भा.३५९०] ऊनातिरित्तधरणे चउरो मासा हवंति उग्धाया ।
आणाइणो य दोसा संघट्टणमादिपलिमंथो ।।

वृ- गणनया प्रमाणेन च ऊनस्यातिरिक्तस्य वा उपकरणस्याधरणे प्रायश्चित्तं चत्वारो मासा उद्घाता लघवः आज्ञादयश्च दोषास्तथा पात्रपरिकर्मणां कुर्वन् तज्जातान् प्राणान् संघट्टयति आदिशब्दात् परितापयति अपद्रावयति वा ततस्तन्निमित्तमपि तस्य प्रायश्चित्तं तथा प्रतिदिवसमुभयकालं पात्राणि अन्यद्वातिरिक्तमुपकरणं प्रत्युपेक्ष्यमाणस्य परिमन्थः सूत्रार्थव्याघात तस्मात् गणनया प्रमाणेन च सूत्रोक्तमुपकरणं धारयितव्यं । तत्र पात्रमधिकृत्यातिरेकं व्याख्यानयित-

[भा.३५९१] दो पायाणुन्नाया अतिरेगं तइयं-पात्रं च माणातो ।
धारेंते पाणकड्डणभारे पडिलेह पलिमंथो ।।

वृ- द्वे पात्रे तीर्थकरैरनुज्ञाते । तद्यथा-पात्रं मात्रं च । यदि तृतीयं पात्रं गृह्णाति तदा गणनयातिरेकं भवति । यच्च प्रमाणं पात्रस्योक्तं ततो यदि बृहत्तरं गृहाति तदा प्रमाणतोऽतिरेकं तत्र गणनया प्रमाणेन वातिरिक्तं पात्रं धारयति । परिकर्मणायां तज्जातात जातप्रमाणसंघट्टणमुपलणमेतत् । प्राणानां परितापनमपद्रावणं च तथाध्वनि तद्वहने भारः उभयकालं प्रतिदिवसं प्रतिलेखने परिमन्थः ।

[भा.३५९२] चोदेति अतिरेगे जइ दोसा तो धरेइ उभंतु ।

एक्कं बहूण कप्पइ हिंडंतु य चक्कवालेण ।।

वृ- अत्र परश्चोदयति यद्यतिरिक्तपात्रे गृह्यमाणेऽनन्तरोक्ता दोषास्ततोऽवमं गणनया हीनं पात्रं धारयतु। यथा यथाऽल्पोपधिता तथा तथा बहुबहुतरगुणसंभवात्। कथं तथा हीनं धारयन्तीत्याह- एकं बहूनां पञ्चानां कल्पते ते च पञ्चजनाश्चक्रवालेन एकस्मिन् दिने एको द्वितीये द्वितीय इत्यादिरूपेण हिण्डंतामेतदेव स्पष्टयति—

[भा.३५९३] पंचण्हमेगपायं दसमेणं एक्कमेक्को पारेउ ।
संघट्टणादि एवं न होंति दुविहं च सिओमं ।।

वृ- पञ्चानां जनानामेकं पात्रं भवतु। तेषां च मध्ये एकैकः क्रमेण चक्रवाललक्षणेन दशमेन पारयतु। यस्य यस्मिन् दिने पारणकं स तत्पात्रं गृहीत्वा हिण्डतामेवं च तेषां परिपाट्यादशमदशमातिक्रमे दिवसे वारके भवति। एवं च संघट्टनादिने दोषा न भवन्ति। किं च तेषां यद्विविधमवमौदर्यं द्रव्यावमौदर्यं पञ्चानामेकस्य पात्रस्य भावात् भावावमौदर्यं च दशमदशमातिक्रमेण पारणात् तत् गुणो भवति।

[भा.३५९४] आहारे उवगरणे दुविहमेव होंति तेसिं तु ।
सुत्ताभिहियं च कयं वेहारियलक्खणं चेव ।।

वृ- द्विविधं द्रव्यभावभेदतो द्विप्रकारमवमं भवति तेषामाहारे उपकरणे च आहारविषयं भावावममुपकरणविषयं द्रव्यावममित्यर्थः। सूत्रे चाभिहितवैहारिकाणां विहारे हितं वैहारिकं तेन गच्छतां लक्षणमल्पोपधिताऽल्पाहारता च तत्कृतं भवति। एतदेवाह-

[भा.३५९५] वेहारियाण मन्ने जहसिं जल्लेणमइलियं अंगं ।
मइलाय चोलपट्टा एगं पायं च सव्वेसिं ।।

वृ- मन्ये यथा अमीषां वैहारिकाणां जल्लेन शरीरोत्थेन मलेनमलिनमङ्गं यथा च मलिनाश्चोपलक्षस्तथा सर्वेषामेकं पात्रं भवति तत एकपात्रग्रहणे वैहारिकालक्षणं कृतं भवति। अत्राचार्य आह-

[भा.३५९६] जेसिं एसुवदेसो तित्थयराणं तु कोविया आणा ।
चउरोय अनुग्घाया नेगे दोसा इमे हुंति ।।

वृ- येषामेषउपदेशस्तैस्तीर्थकाराणामाज्ञा कोपितास्तीर्थकरैः पात्रद्वयस्य प्रत्येकमनुज्ञातात्तेषां च प्रायश्चित्तं चत्वारो मासाः अनुद्घाता गुरवः। यत इमे वक्ष्यमाणा अनेके दोषा भवन्ति तानेवाह-

[भा.३५९७] अद्धाणे गेलन्ने अप्पपर चयायभिन्नमायरिए ।
आदेस बालवुड्डा सेहाखमगाय परिचत्ता ।।

वृ- अध्वनि ग्लानत्वेन आत्मा परश्च तैस्त्यक्तः। इयमत्र भावना-ये अध्वनिर्गता विस्मरणतः पतितोपधयः स्तेनापहृतोपधयो वा भिन्नपात्रा वा तद्विषये आत्मा परो वा त्यक्तो भवति,। यदि तेषां पात्रं ददाति तदा आत्मा त्यक्तः पात्राभावे भिक्षाटनासंभवात्,। अथ न ददाति अध्वनिर्गतास्त्यक्ता अपि बहूनामेषां पात्रमित्युक्तं तत एकेन पात्रेण यदानीतं न तेन बहवोऽध्वनिर्गताः संस्तरेयुः तथा ग्लानविषयेऽप्यात्मापरो वा त्यक्तः स्यात्तथाहि-यदि ग्लानस्य ददाति तत्पात्रं तदात्मा त्यक्तोऽथन ददाति तदापरो ग्लान इति। अन्यस्याध्वनिर्गतानां ग्लानस्य वा तत्पात्रार्पणे स्वयं कुलालभाण्डं याचनीयं स्यात्तद्यानीतं यदिकथमपि भिद्यते तदा तन्मूल्यं दाप्येत कलहादयो वा दोषाः स्युः। वयायत्ति व्रतान्यपि च परित्यक्तानि स्युर्यतः प्रत्येकपात्रग्रहणे एकत्रसंसक्तभक्तं पानं वा गृहीत्वा प्रत्युपेक्षत प्रत्युपेक्ष्यान्यत्र

प्रक्षिपति । बहूनां त्वेकपात्राभ्यनुज्ञाते शीतोष्णानि संसक्तासंसक्तभक्तपानानि गृह्णतः प्राणाना विराधना तथा च व्रतानि परित्यक्तानि । भिन्नत्ति एकं पात्रं कदाचित् भिन्नं स्यात्तदा कुतोऽन्यत्तत्काले लभ्यतेऽन्यत्र मार्गयतः स एव पलिमन्थदोषः कुलालभाण्डग्रहणे च प्रागुक्ता दोषास्तथा एकपात्रपरिग्रहे आचार्या आदेशाः प्राघूर्णका बालवृद्धाः शिक्षकाः क्षपकाश्च परित्यक्ता यत एकपात्रानीतमेकस्यात्मनो भवति । आचार्यानां किं [illegible] वा तेषां [illegible] परित्यक्ताः ।

[भा.३५९८] दंते तेसिं अप्पा जढो उ अदानं तं जढा जं च ।
कुज्जा कुलालगहणं वयाजढापाणगहणंमि ॥

वृ- तेषामध्वनिर्गतानां च ददति आत्मा परित्यक्तो भवति । अदाने ते अध्वनिर्गतादयः परित्यक्ता यच्च तेषां पात्रं दत्वा स्वयं कुलालभाण्डग्रहणं कुर्यात् तत्राप्यनेके दोषास्ते च प्रागेव भाविता व्रतान्यपि त्यक्तानि भवन्ति । पानग्रहणे पानग्रहणं भक्तोपलक्षणं संसक्तभक्तपानग्रहण इत्यर्थः । भावना सर्वत्र प्रागेव कृता । पुनरपि परः प्रश्नयति-

[भा.३५९९] जइ होंति दोस एवं तम्हा एक्केक्क धारए ।
सुत्ते य एगभणियं सुत्ते य उवदेसणा वेण्हिं ॥

[भा.३६००] दिन्नऽज्जरक्खिएहिं दसपुरनगरं उच्छु घरनामे ।
वासावासठिएहिं गुणनिप्पत्तिं बहुं नाउं ॥

वृ- एवमुक्तप्रकारेण बहूनामेकपात्राभ्यनुज्ञायां दोषा भवन्ति तस्मादेकैकः एकं पात्रं धारयेत् न मात्रकं, युक्तं चैतत् यतः सूत्रेऽप्येकं पात्रमनुज्ञातं तथा चोक्तं । जे निग्गंथे तरुणे बलवं से एगं पायं धरेज्जा नो बीयमिति । ततो ज्ञायते नानुज्ञातं तीर्थकरैर्मात्रकग्रहणं केवलमिदानीमार्यरक्षितैराचार्यै-र्दशपुरनगरे इक्षुग्रहनाम्नि उद्याने वर्षावासस्थितैर्बहीं गुणनिष्पत्तिं ज्ञात्वा मात्रकस्योपदेशना दत्ता कृता सा च यैः कारणैः कृता तान्युपदर्शयति-

[भा.३६०१] दूरे चिक्खल्लो वुड्डिकाय सज्झाय जाणपलिमंथो ।
तो तेहिं एस दिन्नो एवं भणंतस्स चउगुरुगा ॥

वृ- ते आर्यरक्षिता आचार्या दशपुरे नगरे नगरात् दूरे इक्षुगृहनाम्नि उद्याने वर्षारात्रे स्थिता मार्गे च कर्दमोऽतिप्रभूतो वर्षं तदप्यतिशयेन प्रभूतं पतति तत्र प्रायोग्ये आचार्यादीनां लभ्यमाने यदि न गृह्यते तदा ते परित्यक्ता भवन्ति । अथ गृह्यते तर्हि कुत्र पानीयं भैक्षं वा गृह्यतामथ नीत्वा प्रत्यागम्यते तदा कायानामप्कायहतिकायानां विराधना स्वाध्यायध्यानानां च परिमन्थो व्याघातस्ततस्तैरेतैः कारणैरेष मात्रकस्योपदेशो दत्तः, सूरिराह-यथोक्तकारणवशादार्यरक्षितैरेव मात्रकोऽनुज्ञातो न तीर्थकरैरिति एवं भणतो वदतस्तव प्रायश्चित्तं चत्वारो गुरुकाः तीर्थकरैरप्यनुज्ञातात् तच्चाग्रे दर्शयिष्यति । यदपि चोक्तम्-जे निग्गंथे तरुणे बलवं से एगं पायं धरेज्जा नो बीयमित्यादि सूत्रम् । तदपि गच्छनिर्गतविषयं न स्थविरकल्पाश्रितं न च तेन कारणजातेनार्यरक्षितैर्मात्रकानुज्ञाकृता तदेवैकं केवलं किन्त्वन्यदपि मात्रकानुज्ञायां कारणकदम्बकमस्ति तदेवाह-

[भा.३६०२] पाणदयखमणकरणे संघाडासति विकप्पपरिहारी ।
खमणा स हु एगागी गेण्हेति ऊ मत्तए भत्तं ॥

[भा.३६०३] थेराणे स विदिन्नो उदोवहिं मत्तगो जिनवरेहिं ।

आयरियादीणठा तब्भुवभोगो न इहराउ ।।

वृ- प्राणदयानिमित्तं कोऽपि साधुः क्षपणं कुर्यात् तस्य यः सङ्घाटकः स क्षपणं कर्तुं न शक्नोति न च तस्यान्यः संघाटको विद्यते । ततो यदि त्रयो जनाः संभूय भिक्षामटन्ति तदा जनानां विकल्पो भवति तस्य विपरिहरणाय एकाकि हिंडते संदिष्टःसंघाटकः साधोः प्राणदयार्थं क्षपणकरणे संघाटाभावे विकल्पपरिहारी क्षपणकरणसमर्थो भिक्षामेकाकी हिण्डमानः पतद्ग्रहे पानकं गृह्णाति । मात्रकं भक्तं अनेन कारणेन स्थविराणामोघोपधिरूपो मात्रको जिनवरैर्वितीर्णोऽनुज्ञातः औधनिर्युक्तौ तथाभिधानात् । एतेन यदुक्तं तीर्थकरैर्नानुज्ञातो मात्रक इति तन्मिथ्येत्यावेदितमत एव तस्यैवं ब्रुवतश्चतुर्गुरुकं प्रायश्चित्तं तथा तस्य मात्रस्योपभोग आचार्यादीनामाचार्यग्लानप्राघूर्णकबालवृद्धादीनामर्थाय यत्प्रायोग्यग्रहणाय उपलक्षणमेतत् संसक्तभक्तपाने शोधिकरणाय च प्रागुक्तकारणव्यतिरेकेण प्रायेणानुज्ञात इतरथा तूक्तकारणव्यतिरेकेण नानुज्ञात एतच्च परिभाव्य तत आर्यरक्षितैश्चिन्तितं प्रायः प्राणरक्षाय संसक्तभक्तपानविशोधिकरणाय च मात्रकपरिभोगोऽनुज्ञातस्तत्र भूयसां प्राणानामप्कायप्रभृतीनां संसक्तभक्तपानानां च वर्षासमये तत्र आर्यरक्षितैर्वर्षासु मात्रकपरिभोगोऽनुज्ञातः शेषकालं तु लोभप्रसङ्गनिवारणाय प्रतिषिद्धस्तथा चाह-

**[भा.३६०४]** गुणनिप्फत्ती बहुगी दगमासे होहितित्ति वितरंति ।
लोभे पसज्जमाणे वारेंति ततो पुनो मत्तं ।।

वृ- गुणनिष्पत्तिर्बह्वी दकमासे वर्षारात्रे भविष्यतीति तत्प्रारंभसमये भगवन्त आर्यरक्षिता मात्रकपरिभोगं वितरन्त्यनुजानन्ति । ऋतुबद्धे काले आचार्यादिप्रायोग्यग्रहणलक्षणं कारणमतिरिच्या-न्यत्कारणं समस्ति केवलं लोभ एव प्रसज्यते । तथा हि यत् उत्कृष्टं तत्तल्लोभेन मात्रके गृह्णाति तत इत्थं लोभे प्रसजति तन्निवारणायाचार्यादिप्रायोग्यग्रहणाभावे पुनर्मात्रकं तदा वारयन्ति ।

**[भा.३६०५]** एवं सिद्धं गहणं आयरियाईण कारणे भोगो ।
पाणदयठवभोगो बितिओ पुन रक्खियज्ञातो ।।

वृ- एवमुक्तप्रकारेण मात्रस्यग्रहणं सिद्धं यतः सूत्रे ओधनिर्युक्त्यादौ आचार्यादीनां कारणे आचार्यादिप्रायोग्यग्रहणेन कारणेन मात्रकस्य भोगोऽनुज्ञातो द्वितीयः पुनरुपभोग आर्यरक्षितात्प्राणदयार्थं प्रवृत्तः कारणाभावे तु मात्रकपरिभोगे प्रायश्चित्तं तदेवाह-

**[भा.३६०६]** जतियमित्ता वारा दिनेन आणेइ तितिया लहुगा ।
अठहिं दिनेहिं सपयं निक्कारणमत्तपरिभोगे ।।

वृ- निष्कारणं कारणाभावे मात्रकस्य परिभोगे यावन्मात्रान्वारान् दिवसेनैकेन तेन मात्रेणानयति तावतो लघुका मासास्तस्य प्रायश्चित्तमष्टभिर्दिनैः स्वपदं पुनर्व्रतारोपणं मूललक्षणमष्टमं प्रायश्चित्तमिति भावः ।

**[भा.३६०७]** जे बेंति घेत्तव्वो न म्मत्तओ जे य तं न धारेंति ।
चउ गुरुगा तेसिं भवे, आणादिविराहणा चेव ।।

वृ- ये ब्रुवते न ग्रहीतव्यो मात्रको ये च तं मात्रकं न धारयन्ति तेषां प्रत्येकं प्रायश्चित्तं भवति चत्वारो गुरुकाः आज्ञादयश्च दोषाः । प्राणविपक्षेः संयमविराधना वा अन्यच्च ।।

**[भा.३६०८]** लोए होइ दुगंछा वियारपडिग्गहेण उड्डाहो ।

आगमिमाई च्चा, नासग्गीए दिठंतो ।।

वृ- यदि येनैव पतद्ग्रहणं भिक्षामटति तेनैव विचारे विचारभूमौ गच्छति तर्हि लोके जुगुप्सायै जायते तथा च सति भवति प्रवचनस्योड्डाह आचार्यदयश्च मात्रका परिभोगेत्यक्ता अत्रार्थे वारतस्थल्या दृष्टान्तः

[भा.३६०९] तम्हा उ धरेयव्वो मत्तो य पडिग्गहो य दोन्नते ।
गणनाए पमाणेन य एवं दोसा न होतिए ।।

वृ- यत एवं पात्रस्य मात्रकस्य चाऽधारणे दोषास्तस्मान्मात्रकं पतद्ग्रहश्च द्वावप्येतौ धारयितव्यौ कथमित्याह-गणनामधिकृत्य एकैकः प्रमाणत ओधनिर्युक्त्यभिहितप्रमाणेन एवं चैते अनन्तरोदित दोषा न भवन्ति ।

[भा.३६१०] जइ दोण्ह चेव गहणं अइरेगपरिग्गहो न संभवति ।
अह देइ तत्थ एगं हानी उड्डाहगादीया ।।

वृ- यदि द्वयोरेवपात्रत्रकमात्रयोर्ग्रहणं ततो अतिरेकोऽतिरिक्तः पतद्ग्रहो न संभवति तदभावाद् कथमध्वनिर्गतादीनां पतद्ग्रहं ददाति । देयस्याभावादथात्मीयं तमेकं पतद्ग्रहमध्वगादीनां प्रयच्छति स्वयं तु केवलेन मात्रकेण सारयति तत आह-अथ तयोः पात्रकमात्रकयोर्मध्ये एकं पतद्ग्रहं ददाति तदा द्वितीयस्य हानिरिति येनैव भिक्षामटति तेनैवविचारभूमावपि गच्छतीति लोके जुगुप्साप्रसङ्गतः प्रवचनस्योड्डाह आदिशब्दादाचार्यादयश्च तेन परित्यक्ता इति परिग्रहः तस्मादफलं सूत्रमनवकाशादिति आचार्यो ब्रवीति सूत्रनिपातः खल्वयं कारणिकः । किं तत्कारणमिति चेदत आह-

[भा.३६११] अतिरेगदुविहकारण अभिनवगहणे पुराणगहणे य ।
अभिनवगहणे दुविहे वावारिय अप्पच्छंदे य ।।

वृ- द्विविधेन प्रकारेण द्वाभ्यां कारणाभ्यामतिरेकस्यातिरिक्तस्य पतद्ग्रहस्य संभवस्तद्यथा-अभिनवग्रहणेन पुराणग्रहणेन च तत्र य तदभिनवग्रहणं तत् द्विविधं द्विप्रकारं तद्यथा-व्यापारिताश्च गृह्णन्ति । आत्मच्छन्दसा च गाथायां सप्तमी तृतीयार्थे प्राकृतत्वात् तच्च द्विविधमप्यभिनवग्रहणमेभिः कारणैर्भवति ।

[भा.३६१२] भिन्ने व ज्झामिए वापडिनीए तेन साणमादिहिते ।
सेहो य संपयासु य अभिनवगहणं तु पायस्स ।।

वृ- प्रमादतो भिन्नं वाग्रेतनं पात्रमग्निना वा ध्यामितं दग्धं प्रत्यनीकेन हृतं अभिन्नं वा स्तेनैः श्वादिभिर्वा हृतमादिशब्देनात्र शृगालादिपरिग्रहः । शैक्षका वा केचिदुपपन्नास्तेषु भाजनानि दातव्यानि एतैः कारणैर-भिनवस्य पात्रस्य ग्रहणं भवति ।

[भा.३६१३] देसे सव्वुवहम्मी अभिग्गही तत्थ होति सच्छंदा ।
ते स सतिनिजोएज्जा जे जोग्गादुविह उवहिम्मि ।।

वृ- तत्र तेषां व्यापारितानां स्वच्छन्दसां च मध्ये स्वच्छन्दसो भवन्ति । अभिग्रहिण अभिग्रहिकास्ते चाभिग्रहिका द्विविधा भवन्ति तद्यथा-देशे सर्वस्मिंश्चोपधावुत्पाद्ये किमुक्तं भवतीति एक एवमभिग्रहं प्रतिपन्ना यथा उपधिदेशं पात्रादिकं वयमुत्पादयिष्यामः । अपरे चैवं प्रतिपन्नाः सर्वमुपधिमुत्पा-दयिष्यामः । ते चाभिग्रहिका भाजनैः कार्यमन्येन चोपधिना कार्यमिति कृत्वा (ज्ञात्वा) तदुत्पादनाय अव्यापारिता एव गच्छन्ति । अत एव ते आत्मच्छंदस उच्यन्ते आत्मनैव प्रेरणाभावेनैव उपधेरानयनाय

च्छन्दोऽभिप्रायो विद्यते येषां ते आत्मच्छंदस इति व्युत्पत्तेः । तेषामसत्यभावे ये योग्याः समर्था द्विविधे औधिके औपग्रहिके चोपधावुत्पद्येतानाचार्यो निर्युक्ते व्यापारयति-

**[भा. ३६१४]** दुविहाच्छिन्नमच्छिन्ना भणंति लघुकोय पडिसुणते य ।
गुरुवयणं दुरे तत्थउ गहिए गहणे य जं वुत्तं ।।

**वृ-** आभिग्रहिका अपि आचार्यमापृच्छ्य पात्राणामानयनाय गच्छन्ति ये वा निर्युक्ता इति द्विविधास्तद्यथा । छिन्ना अच्छिन्नाश्चछिन्नानाम ये आचार्येण संदिष्टा यथा विंशतिः पात्राण्यानयितव्यानि, अच्छिनाना येषां न परिणामनिरोधः तत्र ये तावन्नियुक्तास्तेषां छिन्नानां विधिरुच्यते । तत्र च्छिन्नेषुत्रिभिः प्रकारैरतिरिक्तपतद्रहसंभवः । तत्राद्येऽपि प्रकारे त्रयः प्रकारास्तद्यथा-एकः साधुः छिन्नानां सन्देशं श्रुत्वा तत्रैव समक्षमाचार्यस्य ब्रूते-क्षमाश्रमणा अनुजानीत युष्माकं योग्येषु परिपूर्णेषु पतद्ग्रहेषु लब्धेषु यद्यन्यान्यपि लभेरन् ततस्तान्यपि मम योग्यानि गृह्णन्तु एवं ब्रुवाणः शुद्धः । अथैवमाचार्यं नानुज्ञापयति किन्त्वेवमेतान् व्रजतो ब्रूते तर्हि तस्मिन्नेवं भणति प्रायश्चित्तं लघुको मासः ते चेत् व्रजन्तः प्रतिश्रृण्वन्ति ग्रहीष्याम इति तदा तेषामपि प्रायश्चित्तं प्रत्येकं लघुको मासः । द्वितीयो व्रजतस्तान् सांभोगिकान् दृष्ट्वा ब्रवीति क्व यूयं संप्रस्थितास्तैरवाचिपात्राणामानयनायाचार्येण प्रेषितास्ततस्तान् स ब्रूते-यावन्ति युष्माकं सन्दिष्टानि तावत्सु परिपूर्णेषु यद्यन्यानि यूयं लभध्वं ततोऽस्माकं कारणेन तान्यपि प्रतिगृह्णीत एवं भणति तस्मिन् प्रायश्चित्तं लघुको मासः । ते यदि प्रतिश्रृण्वन्ति तदा तेषामपि प्रत्येकं प्रायश्चित्तं लघुको मासः । तृतीयो लज्जालुतया न शक्नोति स्वयमाचार्यान् विज्ञपयितुं ततोऽन्येन विज्ञपयति । अथवा कोऽपि शठत्वेन अन्येन भाणयति तथा ये ते प्रेष्यन्ते ते ब्रुवते । यूयमाचार्यान् भणत युष्माकं परिपूर्णेषु लब्धेषु यद्यन्यान्यपि लभध्वं तदा मम कारणेन प्रतिगृह्णीत एवं भणति तस्मिन् प्रायश्चित्तं लघुको मासः तेऽपि यदीयः शठत्वेन भणयन्ति तस्य यदीच्छन्ति तर्हि तेषां प्रायश्चित्तं मास लघु । तस्मात्तैर्नेष्टव्यं यथा न भणाम इति लज्जालोर्वचनेन पुनराचार्यं भणति । तत्र यदा तत् समक्षमाचार्यो भणित आचार्येण च समनुज्ञातं तदा यल्लभ्यन्तेऽतिरिक्तं लक्षणयुक्तमयुक्तं वा तत्तस्यैव दातव्यं, द्वितीयं प्रकारमाह-गुरुव्वयणेत्यादि कोऽपि पथिगच्छतो दृष्ट्वा ब्रूते यथा ममापि योग्यानि भाजनानि गृह्णीत । तत्र यदि प्रत्यासन्नस्तदा तद्वचनं प्रतिग्राह्यं । किमुक्तं भवति-आसन्नप्रदेशात् प्रतिनिवृत्य गुरुः प्रच्छनीयो यथाऽमुकः साधुरेवं ब्रवीति ममाप्यर्थायभाजनानि प्रतिगृह्णीथ । अथवा तमेव त्वमेवाचार्यं विज्ञपय एवं कुर्वत्सु तेषु प्रायश्चित्तं मासलघु । अथ दूरे गतांस्तानसांभोगिकान् दृष्ट्वा ब्रूयुरस्माकमपि योग्यानि भाजनानि गृह्णीत ते ब्रूयुः प्रतिगृहीष्यामः । परं तत्र प्रमाणं गुरवस्तथा चाह- तत्र तु दूरगतानां प्रार्थने सति गृहीते च तद्योग्ये पात्रे गुरवः प्रमाणीकर्तव्याः । तृतीयो विंशतेरधिकं लक्षणयुक्तं पात्रं दृष्ट्वा स्वयं गृह्णाति एवं स्वयं ग्रहणे च यदुक्तं सूत्रे तत्संभवति अतिरिक्तं पात्रं संभवतीति गाथार्थः ।

**[भा. ३६१५]** गिह्णह वी संपाते तिन्नि पगाराउ तत्थ अतिरेगो ।
तत्थेव भणइ एगो मज्झवि गेह्णइ जहाअन्नो ।।

**वृ-** गृहीतविंशतिपात्राणि इत्युक्ते तत्रातिरेकेत्रयः प्रकारा भवन्ति । एकस्तत्रैवाचार्यमनुज्ञाप्य ब्रूते । ममापि योग्यान्यार्य ! भाजनानि गृह्णीत ।

**[भा. ३६१६]** आयरिए भणाहि तुमं लज्जालुस्स य भणंति ।
नाऊणवसठभावं नेच्छंति हरा भवेलहुगो ।।

**वृ-** अपरो अन्यं ब्रूते त्वमाचार्यान् भण यथा अमी आचार्येणानुज्ञाता अधिकान्यपि भाजनानि प्रतिगृह्णन्ति। तत्र यो लज्जालुतया आचार्यान् विज्ञपयितुं न शक्नोति तस्य कारणेन भणन्ति चाचार्यान् यदि च शठभावं तस्य ज्ञात्वा आचार्यान् विज्ञपयितुं नेच्छन्ति। इतरथा शठभावेऽपि ज्ञाते यदि विज्ञपयति तद तेषां प्रायश्चित्तं भवति लघुको मासः।

**[भा.३६१७]** जइ पुन आयरिएहिं समयेव पडिस्सुयं भवति तस्स।
लक्खणमलक्खणजुयं अतिरेगं जं तु तं तस्स॥

**वृ-** यदि पुनस्तस्य लज्जालोः कारणेनाचार्यास्तस्य समक्षं विज्ञप्ता आचार्यैश्च स्वयमेव तस्य लज्जालोरतिरिक्तपात्रग्रहणं प्रतिश्रुतमङ्गीकृतं तदा यल्लभ्यते अतिरिक्तं पात्रं लक्षणयुक्तमलक्षणयुक्तं वा तत्तस्य दातव्यं। गत एकः प्रकारो द्वितीयं प्रकारमाह-

**[भा.३६१८]** बितिओ पंथे भणंती आसन्ना गंतु विन्नवंति गुरुं।
तं चेवपेसवंति दूरगयाणं इमे मेरा॥

**वृ-** द्वितीयस्तान् पथि दृष्ट्वा भणति ममापि योग्यानि भाजनानि प्रतिगृह्णीत। एवं प्रार्थिता यदि ते आसन्ना वर्तन्ते तदा आगत्य गुरुं विज्ञपयन्ति यथा अमुकं साधुर्वदति मम योग्यानि भाजनानि प्रतिगृह्णीत अथवा तमेव साधुमभ्यर्थयमानं प्रेषयन्ति यथा त्वमेवाचार्यं विज्ञपय। तेषामेव कुर्वतां प्रायश्चित्तं मासलघु। दूरं गतानां पुनरियं वक्ष्यमाणा मर्यादा सामाचारी। तामेवाह-

**[भा.३६१९]** गेण्हासो अतिरेगं तत्थ पुन वियाणगा गुरु अम्हं।
देंति तगं वन्न साहारणमेव ठावेंति॥

**वृ-** दूरगतान् सांभोगिकः साधुरवलोक्य ब्रूते अस्माकमपि योग्यं पात्रमाददीध्वम्। ततस्तैरिदं वक्तव्यमतिरिक्तं पात्रं गृहीष्यामस्तत्र पुनर्विज्ञायका अस्माकं गुरवस्तदेव वा अतिरिक्तं पात्रं दास्यंति। अन्यद्वा को जानाति कदाचिदतिरिक्तं पात्रं सुन्दरमिति कृत्वा स्वयं प्रतिगृह्णन्ति यस्य वा इष्टं तस्मै ददति, एवं साधारणं स्थापयन्ति। उक्तो द्वितीयः प्रकारस्तृतीयमाह-

**[भा.३६२०]** तइतो लक्खणजुत्तं अहीयं वीसाए तं सयं गेण्हे।
एए तिन्नि विगप्पा होंति अइरेगस्स नायव्वा॥

**वृ-** तृतीयः प्रकारः पुनरयं ते प्रेषिताः साधवो विंशतेरधिकं पात्रं स्वयमेव गृह्णन्ति। एते त्रयो विकल्पा अतिरिक्तस्य पात्रस्य संभवाय ज्ञातव्याः। तदेवं व्यापारितानां च्छिन्नानिगतानि। साम्प्रतमाभिग्रहिकाणां च्छिन्नानि प्रतिपादयितुमाह-

**[भा.३६२१]** सच्छंद पडिन्नयणा गहिए गहणे य जारिसं भणियं।
अलंथिर धुवधारणियं सोवा अन्नोयणं धरए॥

**वृ-** स्वच्छन्दा नाम आभिग्राहिकास्ते अव्यापारिता एवाचार्यानापृच्छ्य गतास्ते यदि च्छिन्ना संदिष्टास्ततस्तेषामपि सैव सामाचारी या प्राक् व्यापारितानां च्छिन्नानामुक्ता। पडिन्नयणत्ति प्रतिज्ञापना नाम विधिना पात्रादीनां मार्गणा कर्तव्येत्युपदेशदानं उद्गमादिशुद्धानि पात्रादीनि प्रतिग्राह्याणीत्यु-पदेशदानमिति भावः। तदा गृहीते ग्रहणे च यादृशं कल्पाध्ययनपीठिकायां भणितं तादृशं कर्तव्यं। तत्र यावन्ति संदिष्टान्याचार्येण तावन्ति गृहीतानि यदि न केनचित् भणितंपूर्वं यथा ममापि योग्यं पात्रं गृह्णीमो गृहीते स एव ग्राहकश्चिन्तयति। अहमाचार्यानुज्ञातं धारयिष्यामि। यदि वा स एवाचार्यो धारयिष्यति

अन्यो वा साधुर्धारयिष्यति एवमतिरिक्त पतद्ग्रहसंभवः । सम्प्रति ग्रहणे गृहीते च यद्भणितं कल्प-पीठिकायां तदेव विनेयजनानुग्रहाय दर्शयति-

[भा.३६२२] उमंथपाणमादीगहणे तु विहिं तहिं पउंजंति ।
गहिए य पगासमुहे करेति पडिलेह दो काले ।।

वृ- अवमन्थमधोमुखं कृत्वा प्राणादीन् खोटनेन भूमौ यतनया पातयन्ति । अमुं विधिं तत्र ग्रहणे प्रयुञ्जन्ति । गृहीते च तानि पात्राणि प्रकाशमुखानि करोति । तथा द्वौ कालौ प्रातरपराह्ने च प्रत्युपेक्षते ।

[भा.३६२३] आनीतेसु उ गुरुणा दोसुं गहिएसु तो गया जह वुड्ढं ।
गेण्हंति उग्गहे खलु उमादीमत्तसेसेवं ।।

वृ- आनीतेषु तु भाजनेषु आचार्येण प्रधानं सुलक्षणं पात्रं मात्रकं च परिगृहीतव्यं । ततो गुरुणा द्वयोर्गृहीतयोः शेषाणि भाजनानि यावतां दातव्यानि तावन्तो भागाः क्रियन्ते । ततो ये गतास्ते यथा वृद्धं यथा रत्नाधिकतया पतद्ग्रहान् गृह्णन्ति तदनन्तरं ये गतानामेवावमरत्नाधिकास्ते यथा रत्नाधिकतया मात्रकाणि गृह्णन्ति तदनन्तरं यैः पतद्ग्रहा न गृहीतास्ते अवमरत्नाधिकाः शेषाश्च साधवो यथा रत्नाधिकतया मात्रकाणि गृह्णन्ति तदनन्तरं यैः पतद्ग्रहा न गृहीतास्ते अवमरत्नाधिकाः शेषाश्च साधवो यथारत्नाधिकतया पतद्ग्रहान् मात्रकाणि च गृह्णन्ति । तदेवं व्यापारितानां स्वच्छन्दसां विच्छिन्नानि ।

[भा.३६२४] एमेव अच्छिन्नेसु विगहिए गरणे य मोत्तु अइरेगं ।
एत्तो पुराणगहणं वोच्छामि मेहिं उ पदेहिं ।।

वृ- एवमेव पूर्वोक्तेनैव प्रकारेणाच्छिन्नेषु ग्रहीतव्येषु गृहीते च ग्रहणे च विधिरनुसरणीयो मुक्त्वा अतिरेकं भवति अतिरिक्तपतद्ग्रहस्तत्र न संभवति । परिमाणकरणादिति तत्संभवविधिर्न वक्तव्यः । सम्प्रति पुराणग्रहणमभिर्वक्ष्यमाणैः पदैर्वक्ष्यामि तान्येव पदान्याह-

[भा.३६२५] आगमगमकालगते दुल्लभतहिं कारणेहिं एएहिं ।
दुविहाए गमनेगा अनेगनिद्दिट्ठनिद्दिट्ठा ।।

वृ- आगमद्वारं गमद्वारं कालगतद्वारं दुर्लभद्वारमेतैः कारणैस्तत्र गच्छे पुराणग्रहणसंभवः । तत्र ये पात्राणि ददति ते द्विविधास्तद्यथा-एको वा अनेके वा येषामपि ददाति तेऽपि द्विविधा एको वा नेके वा दानं च निर्देशपूर्वकंयथा अमुकस्य दास्यापि । तत्र यदा एकस्य कस्यापिददाति तदा तन्निर्दिशति अमुकस्य दास्यामि ये त्वनेके निर्दिष्टा वा अपरिमितसंख्याकतया निर्देशाकारणात् । एष द्वारगाथासंक्षेपार्थः ।

[भा.३६२६] भायणदेसाएंतो पाए घेत्तूण एति दाहंति ।
दाऊण वरो गच्छइ भायणदेसं तहिं घेत्थं (च्छं) ।।

वृ- भाजनदेशात् यस्मिन् देशे भाजनानि संभवन्ति तस्मात् देशादानन्दपुरादवागच्छन् आगन्तुकामः पूर्वकृतानि भाजनानि गृहीत्वा समागच्छति । साधुभ्यो दास्यामीति बुद्ध्यागतमागमद्वारमधुना-गमद्वारमाह-अपरः साधुरानन्दपुरादिकात् देशात् भाजनदेशं गन्तुकामस्तत्रान्यान्यपि पात्राणि गृहीष्यामि सुलभत्वादिति पुराणानि पात्राणि दत्वा समागच्छति । गतं गमद्वारमिदानीं कालगतद्वारमाह-

[भा.३६२७] कालगयंमि सहाए भग्गे वन्नस्स होइ अइरेगं ।
पत्तोलंबतिरेगे दुल्लभपाएविभे पंच ।।

वृ- कस्यापि साधोः सहायः कालगतः प्रतिभग्नो वा ततस्तस्य पात्रमतिरिक्तं लभ्यते इत्यन्यस्य द्वितीयस्य साधोरतिरिक्तं पुराणं पात्रं च भवति । गतं कालगतद्वारमधुना दुर्लभद्वारमाह- दुर्लभानि पात्राणि यस्मिन् देशे स दुर्लभपात्रस्तस्मिन्नपि इमानि वक्ष्यमाणानि पञ्च भाजनानि धारयेत् । तान्येवाह-

[भा.३६२८] नंदिपडिग्गहविपग्गहे य तह कमढगंविमत्तो य ।
पासवणमत्तो विय तक्कज्ज परूपणा चेव ।।

वृ- यस्मिन् देशे पात्राणि दुर्लभानि तत्रेमान्यतिरिक्तानि ध्रियन्ते तद्यथा- नन्दी पतद्ग्रहो विपतद्ग्रहः । कमढकं विमात्रकं प्रश्रवणमात्रकं च तत्कार्यप्ररूपणा चैवं कार्या, नन्दी पतद्ग्रहोऽतिशयेन महान्पतद्ग्रहस्तेनाध्वनि अवमौदर्ये परचक्ररोधे च प्रयोजनं तथा च कश्चित् ब्रूयात् दिने दिने युष्माकमहमेकं पात्रं भरिष्यामि । ततस्तत् नंदीपात्रं भार्यते एतेन कारणेन गच्छोपग्रहनिमित्तं धार्यते, विपतद्ग्रहः पतद्ग्रहात् किञ्चिदूनः स एतदर्थं धार्यते कदाचित्पतद्ग्रहो भिद्येत । अन्यच्च भाजनं तस्मिन् देशे दुर्लभं तत एतेन कार्यं भविष्यति, कमढकः सागारिकरक्षणाय ध्रियते च, तथा कदाचिदेकाकी जायते तत्र च भक्तं पतद्ग्रहे गृहीतं पानीयं मात्रके यत्र च भोजनकं रक्षणार्थमवतीर्णस्तत्र सागारिकास्तेन यत्रैव भुङ्क्ते तथा वसतिर्महती छोतिरिति जुगुप्सा क्रियेत् । ततस्तद्रक्षणाय कमढके भोजनं करोति । तथा विमात्रको मात्रकात् मनाक् समधिक ऊनतरो वा तत्र मात्रकः कदाचित् भिद्येतान्यच्च तत्र देशे भाजनं दुर्लभं । तत एतेन प्रयोजनं भविष्यतीति स ध्रियते प्रश्रवणमात्रकोऽपि सागारिकभयेन यतनाकरणाय ग्लानस्याचार्याणां चार्थाय ध्रियते । एषा कार्यप्ररूपणा । सम्प्रति दुविहाएगमणेगा ।

[भा.३६२९] एगो निद्दिसएगं एगो अनेगा अनेग एगं वा ।
नेगो नेगे ते पुन गणिवसभे भिक्खुखुड्डेय ।।

वृ- ये पात्राणि प्रयच्छन्ति ते द्विविधास्तद्यथा- एको वा स्यादनेके वा येभ्योऽपि ददति पात्राणि तेऽपि द्विविधा एको वा स्यादनेके वा । तत्रैको नियमतो, ऽनेके विकल्पतो निर्देशा भवन्ति । अत्र चतुर्भङ्गिका, एको दाता एकं सम्प्रदानं निर्देशति आचार्यस्यमुकस्य वृषभस्य भिक्षोः क्षुल्लकस्य वा दास्यामि एव प्रथमो भङ्गः । एको अनेकान्निर्दिशतीति द्वितीयः । अनेके एकमिति तृतीयः । अनेकेऽनेकानिति चतुर्थः । ते पुनर्निर्देश्याः किं इत्याह- गणी वृषभो भिक्षुः क्षुल्लकश्च, गणी द्विविध आचार्य उपाध्यायश्च । एवमेते पञ्च भवन्ति या अपि स्त्रियो निर्दिशति ता अपि पञ्च तद्यथा- प्रवर्तिनी अभिसेव्वा (च्या) भिक्षुकी स्थविरा क्षुल्लका च । तथा चाह-

[भा.३६३०] एमेव इत्थिवग्गे पंच गमा अहव निद्दिसति मीसे ।
वाउं वच्चति पेसेति वा विति ते पुन विसेसा ।।

वृ- एवमेव अनेनैव संयतगतेन प्रकारेण स्त्रीवर्गे निर्दिश्यमाने पञ्च गमा भवन्ति । अथवा यत्रानेकान् निर्दिशति तत्र मिश्रान् निर्दिशति । संयतानपि निर्दिशति संयतीरपि तदेतद्वागमद्वारेऽभिहितम् सम्प्रतिगमद्वारे वक्तव्यं । तथापि तत्रैव नवरं दत्वा व्रजति प्रेषयति च अग्रेगतः नीते पुनर्विशेषः सचायं नीतानि भाजनाति समो निर्दिशति स समाने वा संयतस्य समानो वर्गः संयतवर्गोऽसमानः संयतीवर्गः अत्र च त एव चत्वारो भङ्गाः । तद्यथा- संयतः- संयतं निर्दिशति, संयतः संयतान्, संयताः संयतं, संयताः संयतान् । एवं समाननिर्देशे चत्वारो भङ्गाः । एवमसमाननिर्देशाऽपि द्रष्टव्यास्तद्यथा संयतः संयतीं निर्दिशति, १, संयतः संयतीः २, संयताः संयतीं ३, संयताः संयती ४ एवं कालगते प्रतिभग्ने वा सहाये दुर्लभद्वारे च

द्रष्टव्यम् ।

[भा.३६३१] सच्छंदमनिद्दिठे पावणनिद्दिठमंतरादेंति ।
चउलहु आदेसा वा लहुगा य इमेसि अद्धाणे ।।

वृ- तत्र यदि न निर्दिष्टममुकानां वा दातव्यमिति तदा स्वच्छन्दो यस्मै रोचते तस्मै ददाति, । यदि पुनर्दिष्टं ततो य र्दिशति । एकमनेकान्मिश्रत्वात्तेषां दातव्यम् । एतन्निर्दिष्टे प्रापणं अथ यस्य निर्दिष्टं सोऽन्यत्र अन्तरा । अपान्तरालेऽन्यस्मिन्ऽन्यस्मै ददाति तदा तस्मिन् अन्यस्मै ददाति प्रायश्चित्तं चत्वारो लघुका आदेशो वा अत्र विद्यते, मतान्तरमप्यस्तीति भावः । तदिदं केषांचिन्मतेनान्यस्य दानेऽनवस्थाप्यं तेषां प्रायश्चित्तमति अमीषां वक्ष्यमाणानामदाने चत्वारो लघवः केषामित्याह-

[भा.३६३२] अद्धाण बालवुड्ढे गेलन्ने जुंगिए सरीरेन ।
पायच्छिन्नासकरकन्न, संजतीणं पि एमेव ।।

वृ- अध्वनि वर्तमानानामध्वनिर्गतानामित्यर्थः । उपलक्षणमेतत् । तेनावमौदर्यनिर्गतानाम-शिवनिर्गतानामन्तरा विस्मरणतः पतितोपधीनां तथा बालस्य वृद्धस्य ग्लानस्य शरीरेण जुङ्गितस्य हीनस्य केनाङ्गेन हीनस्येत्यत आह-पादेनाक्ष्णा नासयाकरेण कर्णेन वा एवमेव संयतीनामप्यदाने प्रायश्चित्तं ।

[भा.३६३३] अद्धाणउम असिवेउ वूढाण वि न देंति जं पावे ।
बालस्सज्झोवाते थेरस्स सतीए जं कुज्जा ।।

वृ- अध्वनिर्गतानामवमौदर्यनिर्गतानामशिवनिर्गतानामुद्वुढानामन्तरा विस्मरणपतितस्तेना-पहृतोपधीनां यदि न ददाति प्रायश्चित्तं चत्वारो लघवः । यच्च भाजनैर्विना न प्राप्स्यन्ति तन्निमित्तमपि तस्य प्रायश्चित्तं गतमध्वद्वारं । तथा बालस्य उत्कृष्टमात्रकं दृष्ट्वा तद्विषये अध्युपपात उत्कृष्टोऽभिलाषो भवति । भूतेन वा ग्रस्यते, वृद्धस्याप्यदाने चत्वारो लघवः स हि भाजनानि याचितुं न शक्नोति ततोऽदाने यत् अधृत्या प्राप्नोति तन्निष्पन्नमपि तस्य प्रायश्चित्तमापद्यते । गतं बालवृद्धद्वारं च ।

[भा.३६३४] अतरंतस्स अदेंते तप्पडियरगस्स वाविजाहानी ।
जुंगितो पुव्वनिसिद्धो जाति वि देसे परो पच्छा ।।

वृ- अतरतो ग्लानस्य तत् प्रतिचारकस्य च यदि न ददाति तदा प्रायश्चित्तं त एव चत्वारो लघवः । तथा भाजनमृते प्रतिचारकं वा विना या ग्लानस्य हानिस्तन्निमित्तमपि प्रायश्चित्तं । गतं ग्लानद्वारं, जुङ्गितद्वारमाह-जुङ्गितो द्विविधो जात्या शरीरेण च जात्या असांभोगिक, इतरं छिन्नपादो गताक्षम इत्यादि । एष द्विविधोऽपि पूर्वमेव प्रतिषिद्धो यथा प्रव्राजयितुं न कल्पते, केवलं यो जातिजुङ्गितः स विदेशे कथमप्यज्ञाततया प्रवाजितः इतरः शरीरेण जुंगितः प्रव्राजितः सन् पश्चात्स्यात् ।।

[भा.३६३५] जातिए जुंगितो पुन जत्थ न नज्जइ तं हि तु सो अत्थे ।
अमुगनिमित्तं विगलो इयरो जहिं नज्जइ तहिं ।।

वृ- यो जात्या जुंगितो विशेषः कथमप्यज्ञायते इतरः प्रव्राजनानन्तरं पश्चात् शरीरेण जुङ्गितो-ऽत्रामुकनिमित्तमेष विकलो जात इति ज्ञायते तत्र तिष्ठति । अन्यत्र तिष्ठतो लोकानामप्रत्ययो भवति । केचिदेवं मन्यन्ते पारदारिकादिभिरपराधैः प्रव्राजितो जुङ्गित इति

[भा.३६३६] जे हिंडंता काए हंति जे वि य करेंति उड्डाहं ।
किन्नुहि (नह) गिहि सामन्ने वियंगिता लोकसंकाऊ ।।

वृ- ये जुङ्गिता हिण्डमानाः पादादिविकलतया कायान् पृथिवीकायप्रभृतीन् घ्नन्ति येऽपि च दृश्यमान छिन्ननासिकादयः प्रवचनस्योड्डाहं यांश्च दृष्ट्वा लोकस्य शङ्कोपजायते यथा किं नहु निश्चितं गृही सामान्ये व्यंगला अमी इति तेषां भाजनानि दातव्यानि अदाने चत्वारो लघवस्तथा हिण्डमाना यत् कायान् घ्नन्ति। यच्च प्रवचनस्योड्डाहकरणं तन्निष्पन्नमपि तस्य प्रायश्चित्तं तथा—

[भा.३६३७] पायच्छिन्नासकन्नजुंगिते जाति जुंगिते चेव।
वोच्चत्थे चउ लहुगा सरिसे पुव्वं तु समणीणं ॥

वृ- शरीरेण जुङ्गिता पञ्च तद्यथा-छिन्नपादो १ मक्षिकारेण २ वा छिन्नकरः ४ षष्ठो जातिजुङ्गितः। तत्र यदि षडपि जुङ्गितास्तत्र भाजनानि च दातव्यानि, अथ सर्वेषामपि भाजनानि न पूर्यंते तर्हि यावता पूर्यंते तावता मुत्क्रमव्यत्यस्तक्रमेण दातव्यानि, विपर्यासे, उक्तक्रमव्यत्यासेन दाने प्रायश्चित्तं चत्वारो लघवः। अथ संयताः संयत्यश्च जुङ्गिताः सन्ति तत्र भाजनसंभवे सर्वेषामविशेषेण दातव्यं अथ तावन्ति भाजनानि न पूर्यन्ते, ततः संयतसंयतीसमुदाये च्छिन्नपादादिक्रमेण दातव्यम्। अथ संयतोऽपि छिन्नपादः संयत्यपि छिन्नपादा एवं सर्वत्र विभाषा कर्तव्या। तत्राह-सदृशे जुङ्गितत्वे पूर्वं श्रमणीनां दातव्यं पश्चात्सति संभवे संयतानामन्यथा विपर्यासे त एव चत्वारो लघवः ॥ सम्प्रति निर्दिष्टस्य दाने विधिमाह—

[भा.३६३८] अह एते उ न हुज्जा ताहे निद्दिठ पायमूलं तु।
गंतूण इच्छकारं काउं तो तं निवेज्जंति ॥

वृ- अथ एतेऽध्वनिर्गतादयः प्रागुक्ता न स्युस्ततो यस्य निर्दिष्टं तस्य पादमूलं गत्वा इदं पात्रं मयायुष्मन्निमित्तमानीतमिच्छाकारेण गृहाण। एवमिच्छाकारं कृत्वा निवेदयति समर्पयति

[भा.३६३९] अद्दिठे पुन तहियं पेसि अहवा वि तस्स अप्पाहे।
अह उ न नज्जइ ताहे ओसरणे सुं तिसु विमग्गे ॥

वृ- अथ स न दृष्टो यस्य निर्दिष्टं ततो अन्यस्य हस्ते कृत्वा तत्र प्रेषयति। अथवा साधुं श्रावकं वा तत्र व्रजन्तं संदेशयति यथा तव योग्यं पात्रं मयानीतं इच्छाकारेणागत्य गृहाण प्रेषयत वा कमपि यो नयतीति। अथ पुनः स न ज्ञायते क्वापि तिष्ठतीति, ततस्त्रिषु क्षुल्लकेषु समवसरणेषु मृगयेत। इयमत्र भावना-अज्ञायमाने समाने समवसरणं साधुमेलापकरूपं गत्वा पृच्छ्यते यथा अमुकः कुत्र विद्यते तत्र यदि स्वरूपतो न दृष्टो नापि वार्त्तयोपलब्धस्तथापि द्वितीये समवसरणे पृच्छ्यते तथाप्यदृष्टेऽनुपलब्धे वा तृतीये पृच्छ्यते। एवं त्रिषु क्षुल्लकेषु समवसरणेषु मध्ये यत्रैकतरस्मिन् दृष्टस्तत्र तथैव समर्पयति। अथ न दृष्टः केवलमुपलब्धो वार्त्तया यथाऽमुकस्थाने स तिष्ठतीति स तत्र स्वयं वा नयति। अन्यस्य वा हस्ते प्रेषयति। अथ त्रिष्वपि समवसरणेषु न दृष्टो नाप्युपलब्धस्त आह—

[भा.३६४०] एगे वि महंतंमि उ उग्घोसाऊण नाउ नेइ तहिं।
अह नत्थि पवत्ती से ताहे इच्छाविवेगो वा ॥

वृ- महति समवसरणे पुनरेकस्मिन्नपि कुत्रामुक इत्युद्घोषणं कृत्वा यदि स्वयं दृष्टस्तत इच्छाकारपुरस्सरं तथैव समर्पयति। अथ वार्त्तयोपलब्धस्तर्हि तत्र स्वयं नयति अन्यस्य वा हस्ते प्रेषयति संदेशयति वा अथ तत्रापि न दृष्टो नाप्युपलब्धस्ततो द्वितीयं वारं महत्समवसरणं न गच्छति किन्तु इच्छा स्वयं तत्पात्रं धारयति अन्यस्मै वा ददाति विवेगोवेति परिष्ठापयति वा अथ येषां ददात्येकस्यानेकेषां वा सकाशात् गृहीतव्यं ते किं सांभोगिका उतासांभोगिका एवं प्रश्ने कृते प्रथमत एकानेकप्ररूपणामाह-

[भा.३६४१] एगो उ पुव्वभणिए कारणनिक्कारणे दुविहभेदो ।
आहिंडगओहाणे दुविहा ते होंति एक्केक्क ।।

वृ- एकाकी द्विविधभेदः पूर्वमोघनिर्युक्तौ भणितस्तद्यथा-कारणे निष्कारणे च । पुनः साधवो द्विविधा-आहिण्डका अवधावने च । एकैके द्विविधा भवन्ति वक्ष्यमाणभेदेनेति गाथासमासार्थः । साम्प्रतमेनामेव विवरीषुः प्रथमतः कारणनिष्कारणैकैकप्रतिपादनार्थमाह-

[भा.३६४२] असिवादीकारणिया निक्कारणिया च चक्कथूभादी ।
उवएस अनुवएसा दुविहा आहिंडगा हुंति ।।

वृ- अशिवादिभिरादिशब्दादवमौदर्यराजद्विष्टादिपरिग्रहः कारणैरेकाकिनः कारणिकाः, चक्रस्तूपादौ आदिशब्दात्प्रतिमानिष्क्रमणादिपरिग्रहस्तेषां वन्दनाय गच्छन्त एकाकिनो निष्कारणिका ये आहिण्डकास्ते द्विविधा भवन्ति तद्यथा उपदेशतोऽनुपदेशतश्च । तत्र ये उपदेशेन ते द्वादशसंवत्सराणि सूत्रं गृहीत्वा द्वादशसंवत्सराणि तस्यैव सूत्रस्यार्थं गृहीत्वा य आचार्यकं कर्तुकामः स द्वादशसंवत्सराणि देशदर्शनं करोति । तस्य व्रजतो जघन्येन संघाटको दातव्यः उत्कर्षेणानियताः साधवः येऽनुपदेशेन देशदर्शनं कुर्वन्ति ते चैत्यानि वन्दिष्यामहे इत्यवधिं कृत्वा व्रजन्ति ।

[भा.३६४३] ओहावंतो दुविहा लिंगे विहारे य होंति नायव्वा ।
एगागी छप्पेते विहारे तहिं दोसु समणुन्ना ।।

वृ- अवधाविनो द्विविधा-लिङ्गेन विहारेण च । लिङ्गेनोत्प्रव्रजितुकामा विहारेण पार्श्वस्थविहारेण विहर्तुकामा भवन्ति ज्ञातव्याः । षडप्येते कारणिका १ निष्कारणिका २ औपदेशिका ३ अनौपदेशिका ४ लिङ्गेनावधाविनः ५ । विहारेणावधाविनश्च ६ प्रायेणैते एकाकिनो विहरन्ति गच्छन्ति वा औपदेशिका यद्यपि नियमतः ससहायास्तथापि येन गच्छान्निर्गतास्ते न एकाकिनो भण्यन्ते । इतरेऽपि पञ्च यद्यपि वृन्देन हिण्डते तथापि गच्छान्निर्गता एकाकिनः प्रोच्यन्ते । तत उक्तं षडप्येते विहारेण एकाकिनस्तर्हि तेषु षट्सु मध्ये द्वयोः समनोज्ञा द्वयोः सांभोगिकास्तद्यथा अशिवादिकारणिका उपदेशा हिण्डकाश्च तैरानतानि भाजनानि ग्रहीतव्यानि, शेषैरानीतानां भजना कारणेगृह्यन्ते निष्कारणे नेति ।

[भा.३६४४] निक्कारणिएसुवदेसिए य आपुच्छिऊण वच्चंते ।
अनुसासंतिओ ताहे वसहा उ तहिं इमेहिं तु ।।

वृ- निष्कारणिकोऽनौपदेशिकश्च यद्यार्यमापृच्छय व्रजति तदा तत्र व्रजते एभिर्वक्ष्यमाणै-र्वचनैर्वृषभा अनुशासति । कैर्वचनैरित्याह-

[भा.३६४५] एसेव चेइयाणं भत्तिगतो जो तवंमि उज्जमती ।
इइ अनुसिठे अठिते अंसंभोगायारभंडंतु ।।

वृ- एष एव चैत्यानां भक्तिगतो भक्तिमुपनतो यस्तपसि द्वादशप्रकारे यथाशक्ति उद्यच्छति एवमनु-शिष्यमानो यदि तिष्ठति ततः सुन्दरं । अथ न तिष्ठति तर्हि यत्तस्य सांभोगिकमुपकरणं तन्निवर्त्यते इतरदसांभोगिकमाचारभाण्डं समर्प्यते । अथ कथमसांभोगिकमाचारभाण्डमुपजातमत आह-

[भा.३६४६] खग्गूडेणोवहयं अमणुन्ने सागयस्स वा जं तु ।
अंसभोगिय उवकरणं इहरा गच्छेतगं नत्थि ।।

वृ- यदुपकरणं खग्गूडेनोपहतं यदि वा यत् अमनोज्ञेभ्योऽसांभोगिकेभ्य आगतस्योपसंपन्नस्य

संबन्धि तत् असांभोगिकमुपकरणमाचारभाण्डमितरथा प्रकारद्वयव्यतिरिक्तेनान्येन प्रकारेण तद् असांभोगि-कमुपकरणं गच्छे नास्ति न संभवति ।

[भा.३६४७] तिठाणे संवेगो सावेक्खो निवत्तो तद्दिवससुद्धो ।
मासोवुच्छविवेचण त चेव नुसठिमादीणि ।।

वृ- तस्य गच्छान्निर्गतस्य कदाचित्त्रिभिः स्थानैः संवेगः स्यात् । गाथायां सप्तमी प्राकृतत्वात् एकवचनं समाहारत्वात् । तद्यथा-ज्ञानेन दर्शनेन चारित्रेण च । ततः संवेगसमापन्नः सापेक्षः प्रतिनिवर्तते स च यदि तस्मिन्नेव दिवसे गच्छं प्रत्यागतस्तर्हि शुद्धः अथ मासं यावद्बहिरुषितस्तदा तदेव नदुपकरण विवेचनं प्रायश्चित्तदानमनुशिष्ट्यादीनि च क्रियन्ते आदिशब्दादुपबृंहणादिपरिग्रहः ।

[भा.३६४८] अज्जेव पडिपुच्छं को दाहिइ संकियस्स मे उभए ।
दंसणे क उववूहे के थिरकरे कस्स वच्छल्लं ।।

[भा.३६४९] सारेहिंति सीयंतं चरणे सोहिं च काहिति को मे ।
एवं नियत्तनुलोमं काउं उवहिं च तं देंति ।।

वृ- अद्यैव उभयस्मिन् सूत्रे अर्थे च शङ्कितस्य कः प्रतिपृच्छां दास्यति एषा ज्ञाने चिन्तना, । दर्शने कमहमिदानीमुपबृंहिष्यामि कं वा स्थिरीकरिष्यामि कस्या वा वात्सल्यमधुना करिष्यामि । चारित्रे चिन्ता मां चरणे सीदन्तमिदानीं कः सारयिष्यति । को वा मे प्रायश्चितस्थानमापन्नस्य शोधिं करिष्यति एवं चिन्तयन् संवेगमापन्नः । सम्प्रति निवर्तते तस्य प्रतिनिवृत्तस्य गच्छं प्रत्यागतस्यानुलोमना कर्तव्या धन्योऽसि त्वं येनात्मा प्रत्यभिज्ञात एवमनुलोमनां कृत्वा तस्य तमेवोपाधिं प्रयच्छन्ति ।

[भा.३६५०] दुविह उहाविओ वसभा सारेति भयाणि वा से साहिंति ।
अठारसठाणाइं हयरस्सिगयं कुसनिभाइं ।।

वृ- द्विविधमप्यवधाविनमाचार्यमापृच्छय व्रजन्तं वृषभाः सारयन्ति शिक्षयन्ति भयानि वा से तस्य साधयन्ति कथयन्ति रतिवाक्यचूलिकाभिहितानि अष्टादशस्थानरूपाणि हयरश्मिगजाङ्कुशनिभानि । एतया अनुशिष्ट्या अनुशासितो यदि तिठति ततः सुन्दरमथ न तिठति तर्हि यत् खग्गूडेनोपहत-माचारभाण्डं यद्वा असांभोगिकेभ्यः समागतस्योपसम्पन्नस्य सम्बन्धि तस्य दीयते अग्रेतनं तु सांभोगि-कमुपकरणं निवर्त्यते ।

[भा.३६५१] संविग्गमसंविग्गे सारुवियसिद्धपुत्तमनुसठे ।
आगमनं आनयनं तं वा घेत्तुं न इच्छंति ।।

वृ- संविग्नाः सांभोगिकाः असांभोगिका वा उद्यतविहारिणः असंविग्नाः पार्श्वस्थावसन्नकुशील-संसक्तयथाच्छन्दाः सारुपिकसिद्धपुत्रो नाम मुण्डितशिखो रजोहरणरहितोऽलाबुपात्रेण भिक्षामटन् सभार्यो वा एतैरनुशिष्टस्य यदि आगमनं तत उपहतोपकरणस्य वा प्रायश्चित्तदानं ते वा संविग्नादयो गृहीत्वा तस्यानयनं कुर्वन्ति । अथ स आनयनं नेच्छति तदा वक्ष्यमाणो विधिः । एष गाथासंक्षेपार्थः ।

[भा.३६५२] संविग्गाण सगासे वुच्छो तेहिं अनुसासिय नियत्तो ।
लहुतो ना वा हम्मत्ति इयरे लहुगा उवहतो य ।।

वृ- यदि संविग्नानां समीपे उषितः तैश्चानुशिष्टः प्रतिनिवृत्तो वसतिं समागतः तदा तस्य प्रायश्चित्तं लघुको मासः । न च तस्योपधिरुपहन्यते यं चान्तरा लभते गृह्णाति चोपधिं सोऽपिनोपहन्यते संविग्नानां

समीपे उषितः संविग्न सहागमनाद्य । इतरेनाम असंविग्नाः पार्श्वस्थादयः सारूपिकसिद्धपुत्रश्च तेषां समीपे यद्युषितस्तैश्चानुशिष्टः प्रतिनिवृत्तः तस्यागतस्य प्रायश्चित्तं चत्वारो लघव उपकरणं च तस्योपहन्यते । यथाच्छन्दस्य सकाशे उषितस्य चतुर्गुरुकसम् । साम्प्रतमागमनद्वारमाह-

[भा. ३६५३] संविग्गादनुसिट्ठो तद्दिवसनियत्तो जइवि न मिलेज्जा ।
न य सज्जइ वइयादिसु चिरेण विहुतो न उवहम्मे ॥

वृ- संविग्नैरादिशब्दादसंविग्नैश्चानुशिष्टो यदि त नोषितः किन्तु तस्मिन्नेव दिने प्रतिनिवृत्तो यद्यपि तस्मिन्नेव दिने न मिलति न च प्रव्रजिकादिषु सजति ततश्चिरेणाप्यागच्छतो हु निश्चितं तस्योपकरणं नोपहन्यते आनीयमानस्य तूपहन्यते । एतदेवाह-

[भा. ३६५४] एगानियससमुवणे मासो उवहम्मते य सो उवही ।
तेन परं चउ लहुगा आवज्जइ जं च तं सव्वं ॥

वृ- बलादानीयमान एकाकी समागच्छन् यदि रात्रौ स्वपिति तदा तस्यैकाकिनः स्वप्ने प्रायश्चित्तं लघुको मासः उपधिश्च तस्योपहन्यते । अथ तस्माद् दिवसात् परमपि लगति तदा तस्य प्रायश्चित्तं चत्वारो लघुकाः । अथ व्रजिकादिष्वपान्तराले सजति यच्च तत्र प्राप्नोति तन्निष्पन्नं सर्वं तस्य प्रायश्चित्तमापद्यते ।

[भा. ३६५५] संविग्गेहणुसिठो भणेज्ज जइ हं इहेव अच्छामि ।
भणति ते आपुच्छसु अनिच्छ तेसिं निवेयंति ॥

[भा. ३६५६] सो पुन पडिच्छत्तो वा सीसे वा तस्स निग्गतो हुज्जा ।
सीसं समणुन्नायं गेण्हंतियरंमि भयणा उ ॥

वृ- संविग्नैरनुशिष्टो यदि ब्रूते अहमिहैव युष्माकं समीपे तिष्ठाति तदा स प्रष्टव्यो येषां समीपात्त्च-मागतस्तस्य शिष्यो वा त्वं भवति प्रातीच्छिको वा । तत्र यदि शिष्यस्तर्हि भण्यते-तान् आत्मीयान् आचार्यानापृच्छ्य स्वमुत्कलापय अथ स आप्रच्छनं नेच्छति तर्हि तेषां निवेदयन्ति । यथा यौष्माकीण शिष्योऽस्माकं पार्श्वे समागतो वर्तते स बहुधानुशिष्टः । परं प्रतिनिवर्तितुं नेच्छति किन्तु ब्रूते अहं युष्माकं पार्श्वे स्थास्यामि । एवं निवेदने कृते यदि तं समनुजानन्ति ततः प्रतीच्छन्ति । अथ नानुजानन्ति ततो न प्रतीच्छन्ति इतरो नाम प्रातीच्छिकस्तस्मिन् भजना । तामेव प्रतिपादयति-

[भा. ३६५७] उद्दिठमनुद्दिठे उद्दिट्ठसमाणियंमि पेसंति ।
वायंति वणुन्नायं कडे पडिच्छंति उ पडिच्छं ॥

वृ- तस्य प्रातीच्छिकस्य प्रथमतः प्रश्नेन परिभाव्यते । किमेतस्य श्रुतस्कन्धादिकमुद्दिष्टमस्ति किं वा नेति । तत्र यद्युद्दिष्टं तदपि वा परिसमापतितं तदा न प्रतीच्छन्ति । किन्तु तेषामेव समीपे प्रेषयन्ति । तत्र यदि समनुजानन्ति यूयमेवैनं वाचयत । तदा तैः समनुज्ञातं वाचयन्ति अन्यथा न प्रतीच्छन्ति । अथोद्दिष्टश्रुतस्कन्धादिपरं कृतं समाप्तिं नीतं तदाकृते श्रुतस्कन्धादौ तं प्रतीच्छकं प्रतीच्छन्ति । अथ न किमप्युद्दिष्टमस्ति तदापि समागतं प्रतीच्छन्ति । एष विहारेणावधावी भणितः ।

[भा. ३६५८] एवं ताव विहारे लिङ्गोहावी वि होइ एमेव ।
सो किं तु संकिमसंकी संकिविहारे य एग गमो ॥

वृ- एवमुक्तेन प्रकारेण विहारे विहारावधावी उक्तो लिङ्गावधाविन्यप्येवमेव भवति स पुनर्लिङ्गावधावी द्विधा-शङ्की अशङ्की च । शङ्की नाम यस्यैवं संकल्पो यदि मम स्वजना जीविष्यंति,

यदि वा तत्साधारणं धनमविनष्टं स्यात् यदि वा मां ते वदिष्यन्ति, निष्कामेति तदा उन्निष्क्रमिष्यामि, यदि पुनस्ते स्वजना मृता भवेयुस्तदा साधारणं विनष्टं न वा कश्चिन्मां वदेत् उन्निष्क्रामेति तदा पार्श्वस्थादिविहारमभ्युत्थास्यामि एवं संकल्पं कुर्वन् शङ्की । एवंरुपसंकल्पविकलोऽशङ्की । तत्र शङ्किनि लिङ्गावधाविनि विहारे च विहारवधाविनि एक एव गमः । किमुक्तं भवति ? यत् विहाराधाविन्युक्तं तत् लङ्गावधाविन्यपि शङ्किनि वक्तव्यमिति ।।

**[भा.३६५९]** संविग्गमसंविग्गे संकमसंकाए परिणए विवेको ।
पडिलेहणनिक्खिवणं अप्पणो अवाए अन्नेसिं ।।

**वृ-** स शङ्कि अशङ्की वा पथि अनुशिष्यमाणो यदि संविग्नेऽसंविग्ने वा परिणतो भवति वसति वा, तदा तस्योपकरणमुपहतमिति तस्य विवेकः कर्तव्यः । अथ स गतश्चिन्तयति एतदुपकरणं तेषामेव दास्यते मम वा भविष्यति तदा निष्कामतो वा उभयकालं प्रतिलेखयतो यतनया विनिक्षिपतस्तदुपकरणं नोपहन्यते । प्रत्यागच्छन्पुनर्यदि व्रजिकादिषु सजति तत उपहन्यते । अथ न सजति नोपहन्यते इति गाथासंक्षेपार्थः । सम्प्रत्यस्या एव विवरणमाह-

**[भा.३६६०]** घेत्तुण गारलिंगं वती व अवतीव जो उ ओहावी ।
तस्स कडिपट्टदाणंवत्थुं वासज्ज जं जोग्गं ।।

**वृ-** यो लिङ्गेनावधावी स द्विविधोऽगारलिंगं वा गृहीत्वा व्रजति स्वलिङ्गसहितो वा । तत्र योऽगारलिङ्गं गृहीत्वाऽवधावति तस्यैव विधिः पथि व्रजन् केनाप्यनुशिष्टो यदि निवर्तते उपतिष्ठते च मां प्रव्रजयेति तदा तस्य मूलं दीयते । स पुनरनगारलिङ्गं गृहीत्वा संप्रस्थितो व्रती वा स्यादव्रती वा अनुव्रतानि वा गृहीत्वा व्रजति वा सन् इत्यर्थः । तस्योभयस्यापि कटीपट्टको दातव्यो वस्तु वासाद्य यद्योग्यं तद्दातव्यम् । किमुक्तं भवति मा प्रद्वेषं यायात् दारुणस्वभावो वा तत उपरि प्रावारणमपि दीयते । अथवा राजादिः प्रव्रजितस्तस्य सुन्दरे द्वे वस्त्रे दातव्ये । तदेवमगारलिङ्गावधावी भणितः । सम्प्रति स्वलिङ्गावधाविनमधिकृत्याह-

**[भा.३६६१]** जइ जीविहिंति जइ वा बिंति धनं धरति जइ व वोच्छंति ।
लिंगं मोच्छिंति संका, पविट्ठवुच्छेव उवहम्मे ।।

**वृ-** स्वलिङ्गेन योऽवधावति स द्विधाशङ्की शङ्की च । तत्र अशङ्की एवं संकल्पयति- यदि मम ते स्वजना जीविष्यन्ति यदि वा तत्साधारणं धनं धरते विद्यते वा मां वक्ष्यपि लिङ्गं मुञ्च उन्निष्क्रामेति तदा उन्निष्क्रामिष्यामि इत्येवं शंकावान् पथि केनाप्यनुशिष्टः सन् संविग्नानामसंविग्नानां वा उपाश्रये प्रविशति तदा तस्योपकरणमुपहन्यते तदेवं सशङ्कलिङ्गावधावी उक्तः ।। सम्प्रति निःशङ्कं लिङ्गावधावी भण्यते । निःशङ्को नाम य एवं संकल्पयति अवश्यतया उन्निष्क्रमितव्यमिति तस्य विधिमाह—

**[भा.३६६२]** समुदाने चारिगाण व भीतो गिहिपंत तक्कराणं वा ।
न उवधिसे तेनो पविट्ठवुच्छेदितवहम्मे ।।

**वृ-** समुदानं भैक्षं तस्य भयेन किमुक्तं भवति यद्यहमिदानीं लिङ्गं मोक्ष्यामि ततो न कोऽपि मह्यं दास्यति, । किन्तु मामुत्प्रव्रजितुं दृष्ट्वा मध्ये निलीना भविष्यन्ति ततः समुदानभयेन चारिकास्तेषां वा भयेन अथवा अन्तरा गृहस्थप्रान्ताः संयतभद्रकाः स्तेनास्तेषां वा भयेन उपधिं नीत्वा तेनोपधिना युक्तः स संविग्नानामसंविग्नानां उपाश्रय उपविष्ट उषितो वा तथापि प्रत्यगच्छतस्योपधिर्नोपहन्यते तेनाप्युपधिना समन्वितः स भावतो गृहस्थ इति कृत्वा ।

[भा.३६६३] नीसंको वणुसठो नेहुवहिमहं खु उहामि ।
संविग्गाणि य गहणं इयरेहिं विजाणगा गेण्हे ।।

वृ- वाशब्दो विकल्पान्तरे निःशङ्को व्रजन् संविग्नैरसंविग्नैर्वाऽनुशिष्टो यथा यदि त्वमुन्निष्क्रमिष्यसि किमुपधिं नयसि ततः स ब्रूते । अमुमुपधिं तेषां समीपं नयत अहं खु निश्चितमवधाविष्यामि । तत्र यदि संविग्नानां हस्ते प्रेषयति तदा तैरानीतस्य ग्रहणमथागीतार्थानां हस्ते प्रेषयति तदा तैरितैरानीतं यदि सर्वे गीतार्थास्ततो गृह्णन्ति परिभुञ्जते च, अथागीतार्थमिश्रास्तदा कारणिकानामेकाकिनां व्रजतां ददति परिठापयन्ति वा ।

[भा.३६६४] नीसंकितोवि गंतूण दोहिं वि वग्गेहिं चोदितो एति ।
तक्खणनिंत न हम्मेतेहिं परिणयमुच्छ उवहम्मे ।।

वृ- निशङ्कितोऽपि गत्वा यदि द्वाभ्यां वर्गाभ्यां संविग्नैरसंविग्नैर्वा इत्यर्थः । चोदितोऽनुशिष्टः सन् तेषामुपाश्रयात् यदि तत्क्षण्मेव निर्गच्छति तदा तस्योपधिर्नोपहन्यते । अथ तत्क्षणं न निर्गच्छति वसति वा तदा उपहन्यते । अथवा यदि तस्यैवं परिणामो जायते अत्रैव तिष्ठामि तदापि तस्य तत्र परिणतस्यो-पधेर्घातः । ततस्तस्योपधिः कथमप्यागत इति कृत्वा परिष्ठाप्यते । सम्प्रति पडिलेहणनिक्खवणप्पणोद्धाए अन्नेसिम् इत्यस्य व्याख्यानमाह-

[भा.३६६५] अत्तट्ठा परट्ठा वा पडिलेहिय रक्खितो वि उ न हम्मे ।
एवं तस्स उ नवरि पवेस वइयासु भयणा ।।

वृ- स गतः सन् यदि चिन्तयति तेषामेवमुपकरणं दास्यते । अथवा मम भविष्यति एवमात्मार्थं वा उभयकालं प्रत्युपेक्षितो निरुपद्रवस्थाननिक्षेपणेन च रक्षितोऽपिशब्दः प्रागुक्तापेक्षया समुच्चये तुरवधारणे भिन्नक्रमे च नैव हन्यते नवरं केवलं प्रत्यागच्छतो व्रजिकादिषु प्रवेशे भजना । किमुक्तं भवति ? सं प्रत्यागच्छन् यदि व्रजिकादिषु सजति तदोपहन्यते अथ न सजति नोपहन्यते ।

[भा.३६६६] अह पुन तेलुक्जीवितो सारुविय सिद्धपुत्तलिंगीणं ।
केइ भणंतु वहं मति चरणाभावातो तन्न भवे ।।

वृ- अथासौ अनुशिष्टोऽपि न प्रतिनिवृत्तः किं तु तेन लिङ्गेनोपजीवति भिक्षादि किमित्येवं शीलमुपजीवी सारुपिकत्वेन सिद्धपुत्रत्वेन वा स्थित इत्यर्थः । सारुपिको शिरो मुण्डो रजोहरणरहितो अलाबुपात्रेण भिक्षामटति सभार्योऽभार्यो वा, सिद्धपुत्रो नाम सकेशो भिक्षामटति वा न वा वराटकैः विटलकं करोति यदि धारयति तस्य प्रत्युत्थितस्य यः पूर्वं उपधिर्यश्च सारुपकत्वेन सिद्धपुत्रत्वेन वा तिष्ठता यदुत्पादितं तदुपहन्यते न वा तत्र आह : केचिद्‌भणन्ति सारुपिकसिद्धपुत्रलिङ्गिनामुपकरणमुपहन्यते तन्न भवति कुत इत्याह- चरणाभावादुपहननमनुपहननं वा चरणवतामुपधिर्न च सारुपिकसिद्ध-पुत्रलिङ्गिनश्चरणवन्तः ।।

[भा.३६६७] सो पुन पच्छुट्ठितो जइ तं से उवहयं तु उवकरणं ।
असतीयवतो अन्नं उग्गोवेतिति गीयत्थो ।।

वृ- स पुनः प्रत्युत्थितो यदि तस्योपकरणमुपहतमथवा नास्ति तर्हि गीतार्थोऽन्यमुपधिमुद्गमयन् एति आगच्छति । कुत्र कुत्र स्थाने उत्पादयन् आगच्छतीत्याह-

[भा.३६६८] संजयभावियखेत्ते तस्स असतीए उ चक्खुविलिहवे ।

तस्स असती वेंटलहए, उप्पाएंतो उ सो एइ ।।

वृ- संयतभावितक्षेत्रं नाम यत्र क्षेत्रे संयतत्वेन स्थितस्तस्मिन् संयतभावितक्षेत्रे उत्पादयन् तस्यासत्यभावे चक्षुर्विंटहते दृष्ट्या परिचिते तस्याप्यभावे विण्टलहतेविंटलहतं नाम यत्र पूर्वं विण्टलैराहारोपधिशय्या उत्पादितास्तस्मिन् उत्पादयन् गच्छति ।

[भा.३६६९] जाणंति एसणं वा सावगदिट्ठी उ पुव्व झुसिया वा ।
विंटल भाविय तेणिह, किं धम्मो न होइ गेण्हेज्ञा ।।

वृ- स च उत्पादयति उत्पादनैषणादोषैर्विशुद्धं तांश्च दोषान् तेभ्यः कथयति । यदि वा संयतत्वेन विहृतो दृष्ट्या वा पूर्वं झुषिताः पचितास्ते श्रावकास्ते च ते एव दोषान् जानन्ति । ततो दोषविशुद्धं प्रयच्छन्ति । यत्र विण्टलहतं क्षेत्रं तत्र गीतार्थो यदि उत्पादयति तदादितः प्रतिब्रूते नाहमिदानीं वेष्टनं करिष्यामि यद्येवमेव दद्ध्वे ततः प्रतिगृह्णामि । एवमुक्त्वे यदि ते ब्रूवते किं युष्माकं मुधा दत्तेन भवति तस्माद्धर्म इति दद्मस्ततो गह्णाति ।

[भा.३६७०] एवं उप्पाणं इयरं च विगिंचिऊण तो एति ।
असती जह लोभं विविंचमाणे इमा जयणा ।।

वृ- वक्ष्यमाणा यतना कर्त्तव्या । किमुक्तं भवति ? यत् तत् सांभोगिकं लभ्यते तस्य यत् सदृशम-सांभोगिकं तत् परिष्ठाप्यते । एतदेवाह-

[भा.३६७१] उवगयउग्गह लंभो उग्गहणं विविचमत्तए भत्तं ।
अप्पज्जत्ते तत्थ दवं उज्झहभत्तं गिहिमत्तेण ।।

[भा.३६७२] अपहुच्चंते काले दुल्लभदवभाविते वा खेत्तंभि ।
मत्तगदवेण धावइ मत्तगलंभेवि एमेव ।।

वृ- उपहतस्य असांभोगिकस्यावग्रहणस्य अवग्रहलाभे विवेचनं परिष्ठापनं कर्तव्यं । एवं च तस्य पतद्ग्रहसांभोगिको मात्रकमसांभोगिकं तत्र यदसांभोगिकं तस्मिन् भक्तं ग्राह्यं यच्च सांभोगिकं तत्र पानीयं ततो मात्रके तेन भक्तं ग्राह्यं पश्चात् पतद्ग्रहपानीयेन तस्य कल्पो दातव्यः । यदि मात्रके गृहीतेन भक्तेन न संस्तरणं तत्र मात्रकं द्रव्यं गृह्णाति । अवग्रहे पतद्ग्रहे भक्तं तत्र भुक्त्वा गृहस्थभाजनेन पानीयमानीय पतद्ग्रहस्य कल्पो देयः । अथ यावता कालेन गृहस्थात्पानीयमानीयते तावान्कालो न प्राप्यते दुर्लभं तत्र द्रवं ततो न यतस्तो गृहस्थेभ्यो द्रवं लभ्यते । यदि वा तत्क्षेत्रमभावितं संयतैरतो गृहस्था न ददति भाजनं यत्र पानीयं गृह्यते तदामात्रकग्रहीतेनैव पानीयेन पतद्ग्रहो धाव्यते प्रक्षाल्यते । तथापि स नोपहन्यते । एवमेव अनेनैव प्रकारेण मात्रकस्यापि सांभोगिकस्य लाभे असांभोगिकस्य परिष्ठापनेन पतद्ग्रहे वा सांभोगिके विभाषा, कर्त्तव्या, तद्यथा पतद्ग्रहे भक्तं ग्राह्यं मात्रके पानीयमथ मात्रके संसक्तं भक्तं पानं वा गृहीतमाचार्यादिप्रायोग्यं वा पतद्ग्रहपानीयेनैव मात्रकं प्रक्षाल्यते, नोपहन्यते इति ।

[भा.३६७३] चोएइ सुद्ध असुद्धे संफासेणं तु तं तु उवहम्मे ।
भन्नइ संफासेणं जेसु वहम्मे न सिं सोही ।।

वृ- परश्चोदयति तत् शुद्धं भक्तं पानीयं वा अशुद्धे मात्रके वा पतद्ग्रहे वा प्रक्षिप्तं संस्पर्शिनोपहन्यते । ततः कथं शुद्धिरिति आचार्य आह भण्यते उत्तरं दीयते येषां संस्पर्शिनोपहन्यते तेषां न कदाचनापि शोधिरेतदेव भावयति-

**[भा. ३६७४]** लेवाऽहत्थच्छिक्के सहस अनाभोगतो व पक्खित्ते ।
अविसुद्धग्गहणंमि वि असुज्झसुज्झेज्ज इयरं वा ।।

**वृ-** यदि तव मतेनैवमुपधातस्तर्हि असांभोगिके भाजने यत् गृहीतं भक्तं पानं वा तेन लिप्ताभ्यां हस्ताभ्यां यत् सांभोगिकं भाजनं स्पृश्यते तदप्यसांभोगिकं जातं तत्संस्पर्शितोऽन्यान्यपि न च तत्कालं सर्वाण्यति परिष्ठापयितुं शक्यन्ते । न चान्यानि तावन्ति लभ्यन्ते ततो न कदाचनापि शुद्धिस्तथा सहसा नाम यत्त्वरमाणो असांभोगिकान् सांभोगिके प्रक्षिपति तदप्यसांभोगिकमुपजायते । अनाभोगो नाम एकान्तविस्मरणं तेनाप्यसांभोगिकात्सांभोगिके प्रक्षिप्ते तदप्यसांभोगिकं जायते । अविशुद्धं कथंचिदनाभोगतोऽविशुद्धस्योद्गमाद्यन्यतमदोषदुष्टस्य ग्रहणे तत् भाजनमशुद्धं स्यात् । न चैतष्यिते तस्माद्यसंस्पर्शमात्रेणोपहननमन्यच्च यथाऽशुद्धेन संस्पर्शतोऽशुद्धं भवति । तथा इतरदशुद्धं शुद्धेन संस्पर्शतः शुद्ध्येत् शुद्धीभूयात् । न्यायस्योभयत्रापिसमानत्वात् । न चैतदस्ति तस्मात् यत्किञ्चिदेतत्-

**मू. (२०१)** *अट्ठकुक्कुडिअंडगप्पमाणमेत्ते कवले आहारं आहारेमाणे निग्गंथे अप्पाहारे, दुवालसकुक्कुडिअंडगप्पमाणमेत्ते कवले आहारं आहारेमाणे निग्गंथे अवड्ढो मोयरिया, सोलस० दुभागपत्ते, चउवीस० तिभागपत्ते सिया ओमोयरिया एगतीसं किंचूणोमोयरिया, बत्तीसं पमाणपत्ते, एत्तो एगेनवि कवलेणं ऊणगं आहारं आहारेमाणे समणे निग्गंथे नोपकामभोइ ति वत्तव्वं सिया ।।*

**[भा. ३६७५]** लक्खणमतिप्पसत्तं अइरेगे वि खलु कप्पते उवही ।
इइ आहारेमाणं अतिप्पमाणे बहू दोसा ।।

**वृ-** अतिरेकोऽपि खलु कल्पते उपधिरित्युच्यमाने लक्षणमतिप्रसक्तं ततो मा अनेनैव प्रसङ्गेनाहारमप्यतिप्रमाणं कुर्यादिति हेतोराहारे मानमधिकृत्सूत्रेणोच्यते यतोऽतिप्राणे गृह्यमाणे आहारे बहवो दोषाः । 'हाएज्ज व वामेज्ज व' इत्यादिरुपाः प्रकारान्तरेण सम्बन्धमाह-

**[भा. ३६७६]** अहवावि पडिग्गहो भत्तं गेण्हंति तस्स किंमानं ।
जं जं उवग्गहे वा चरणस्स तगं तगं भणइ ।।

**वृ-** अथवेति प्रकारान्तरोपदर्शने, अपि शुद्धः सम्बन्धस्यैव समुच्चये पूर्वसूत्रेण प्रतिग्रहक उक्तः । तस्मिंश्च प्रतिग्रहके साधवो भक्तं गृह्णन्ति । तस्य भक्तस्य किं प्रमाणमित्यनेन प्रमाणमित्यनेन प्रमाणम-भिधीयते । अथवा किं सम्बन्धेन यच्चरणस्य चारित्रस्योपग्रहे वर्तते, तत्तत्सूत्रकारो वदति, । अनेन सम्बन्धेनायातस्यास्य व्याख्या अष्टौ कुकुड्यण्डकप्रमाणमात्रान् आहारमाहारयन् श्रमणो निर्ग्रन्थो-ऽल्पाहारो भण्यते द्वादश कुकुड्यण्डकप्रमाणमात्रान् कवलानाहारयन् अपार्धावमौदर्यः षोडश आहारयन् द्विभागश्चतुर्विंशतिकवलानाहारयन् -प्राप्तः एकविंशत् कवलान् आहारयन् किंचिद्नावमौदर्यः द्वात्रिंशत्कुक्कुड्यण्डकप्रमाणमात्रान् कवलानाहारमाहारयन् श्रमणो निर्ग्रन्थः प्रमाणप्राप्तः इतर एकेनापि कवलेन ऊनमाहारमाहारयन् श्रमणो निर्ग्रन्थो न प्रकामभोजीति वक्तव्याः स्यात् । एष सूत्राक्षरसंस्कारः-

**[भा. ३६७७]** नियमाहारस्स सया बत्तीस इमे उ जो भवे भागो ।
तं कुक्कुडिप्पमाणं नायव्वं बुद्धिमंतेहिं ।।

**वृ-** निजकस्याहारस्य सदा यो द्वात्रिंशत्तमो भागस्तत् कुक्कुटीप्रमाणं पदैकदेशे पदसमुदायोपचारात् । कुक्कुडिअण्डकप्रमाणं ज्ञातव्यं बुद्धिमद्भिः । अत्रैव व्याख्यानन्तरमाह-

**[भा. ३६७८]** कुच्छियकुडीयकुक्कुडि, सरीरअंडगं महतीए ।

जायइ देहस्स जउ पुव्वं वयणं ततो सेसं ।।

वृ- कुत्सिता कुटी कुकुटीशरीरमित्यर्थः । तस्यां शरीररूपायाः कुकुट्या अण्डकमिवाण्डकं मुखं केन पुनः कारणेनाण्डकं मुखमुच्यते तत आह-यतो यस्मात् चित्रकर्मणि गर्भे उत्पाते वा पूर्वं देहस्य वदनं मुखं निष्पद्यते । पश्चात् शेषं ततः प्रथमभावितया मुखमण्डकमित्युच्यते-

[भा.३६७९]　　थलकुक्कुडिप्पमाणं जं वा नायासिए मुहे खिवति ।
　　　　　　अयमन्नो सुविगप्पो कुक्कुडिअंडो वा न कवलं ।।

वृ- इह कवलप्रक्षेपणाय मुखे विडम्बिते यदाकाशं भवति, तत् स्थलं भण्यते, स्थलमेव कुक्कुड्यण्डके स्थलकुक्कुड्यण्डकं तस्य प्रमाणं यदनायासिते मुखे कवलं प्रक्षिपति । किमुक्तं भवति ? यावत्प्रमाणमात्रेण कवलेन मुखे प्रक्षिप्यमाणेन मुखं न विकृतं भवति तत् स्थलकुक्कुड्यण्डकं प्रक्षिपति । किमुक्तं भवति ? यावत्प्रमाणमात्रेण कवलेन मुखे प्रक्षिप्यमाणेन मुखं न विकृतं भवति तत् स्थल-कुक्कुड्यण्डकं प्रमाणं गाथायामण्डकशब्दलोपः प्राकृतत्वात् अयमन्यः कुक्कुड्यण्डकोपमे कवले विकल्पः अयमन्योऽर्थः कुक्कुड्यण्डकप्रमाणमात्रशब्दस्येत्यर्थः । एतेन कवलमात्रेणाष्टादिना संख्याद्रष्टव्या तदेवं कृता विषमपदव्याख्या भाष्यकृता । सम्प्रति निर्युक्तिविस्तरः—

[भा.३६८०]　　अठत्ति भणिऊणं छम्मासा हावत्तेउ बत्तीसा ।
　　　　　　नायं चोगवयणं पासाए होति दिठंतो ।।

वृ- अष्टाविति भणित्वा यावदवमौदर्यं तावदेतत्संस्तरतो मध्यं भणितं असंस्तरतः पुनर्द्वात्रिंशत्कं प्रमाणं भणितमुत्सर्गः पुनरयमुपदेशः षण्मासादारभ्य तावत् हापयेत् यावत् द्वात्रिंशत्कवलाः । इयमत्र भावना यदि योगानां न हानिरुपजायते तदा षण्मासान् उपवासं कृत्वा पारणके एकं सिक्थमाहारयेत् । अथ तेना न संस्तरति ततः पारणके द्वे सिक्थे आहारयेत् । एवमेकैकसिक्थपरिवृद्ध्या तावन्नेयं यावदेकं लम्बनं कवलमित्यर्थः । तेनाप्यसंस्तरणे कवलपरिवृद्धिर्वक्तव्या । सा च तावत् यावदेकत्रिंशत्कवलाः । षण्मासानुपवासं कर्तुमशक्नुवन् एकेन दिवसेनोनं षण्मासक्षपणं कृत्वा एवमेव सिक्थकवलपरिवृद्ध्या पारणकं कुर्यात् । एवमेकैकहान्या षण्मासक्षपणं तावद्वक्तव्यं यावच्चतुर्थं कृत्वा पूर्वप्रकारेण सिक्थकवलपरिवर्धनेन पारणकं परिभावयेत् । अथ न संस्तरति ततो दिने दिने भुंक्त्वा तत्राप्येवमेव सिक्थादारभ्य यावद्द्वात्रिंशत्कवला इति अत्र चोदकवचनं यद्येवमष्टावित्यादि सूत्रोपनिबद्धं नाममात्रं प्रवचनमात्रमाचार्य आह- सिद्धिप्रासादनिर्मापणाय योगानां संधारणनिमित्तमेतन्मध्यमुपात्तं सूत्रेण ततो न कश्चिद्दोषः तथा चात्र प्रासादो भवति दृष्टान्तः स चाग्रे भावयिष्यते । सम्प्रति यदुक्तं छम्मास हायते उ बत्तीसा इति तद्भावनार्थमाह-

[भा.३६८१]　　छम्मासा खमणं तंमि सित्थादण्हा तु लंबनं ।
　　　　　　ततो लंबनवड्ढीए जावेक्कतीस संथरे ।।

[भा.३६८२]　　एक्कमेक्कं तु हावेत्ता दिनं पुव्वकमेणओ ।
　　　　　　दिने दिने उ सित्थादी जावेक्कतीस संथरे ।।

वृ- षण्मासक्षपणान्ते सिक्थमेकमादिशब्दात् असंस्तरणे द्वे त्रीणि चत्वारि इत्यादि परिग्रहोऽश्रातु भुंक्ते मे (न) संस्तरणे च सिक्थपरिवृद्धिस्तावत्कर्तव्या यावल्लम्बनं केवलो भवति तेनाप्यसंस्तरणे द्वात्रिंशदपि द्रष्टव्याः । परमेतत्कस्यापि कदाचिदन्यथाप्रकाममोजित्वदोषप्रसक्तेर्यत आह-एत्तो एगेन

वि कवलेण ऊनगमाहारे माणे (ण) समणे निग्गंथे पगामरसभोइ त्ति वत्तव्वं सिया । इह प्रकामग्रहणेन निकाममपि सूचितमतो द्वे अपि व्याख्यानयति ।

[भा.३६८३] पगामं होइ बत्तीसा निकामं होइ निच्चसो ।
दुपविजहया ते उगही हवंति वज्जिया ।।

वृ- द्वात्रिंशत्कवलाः प्रमाणं भवति त एव यन्नित्यशः सर्वकालं भुज्यते तन्निकामं एते द्वे अपि द्वात्रिंशत्कवलेभ्य एकेनापि कवलेनोनमाहारयता परित्यक्ते गृद्धिश्च वर्जिता भवति ।

[भा.३६८४] अप्पावड्ढ दुभागो, मदेसणं नाममेत्तगं नामा ।
पइदिनमेक्कतीसं आहारे उत्ति जं भणइ ।।

वृ- यदि नाम प्रतिनमेकत्रिंशमपि कवलानाहारयदिति भणथ यूयं प्रतिपादयथ तर्हि यत् अल्पापार्धद्विभागावमौदर्यदिशनं तन्नाममात्रकं वचनमात्रकमेकत्रिंशतोऽपि कवलानां प्रतिदिवसमाहारानुज्ञानात् । आचार्य आह-

[भा.३६८५] भणति अप्पहारा दओ समत्थस्स भिग्गहविसेसा ।
चंदायणादयोविव सुत्तनिवातो पगामंमि ।।

वृ- भण्यते उत्तरं दीयते, अल्पाहारादयः समर्थस्य सतोऽभिग्रहविशेषाश्चान्द्रायणादय इव सूत्रनिपातः । पुनरन्तिमोऽसमर्थस्य प्रकामनिकामनिषेधपर इत्यदोषः । ये चाल्पाहारादयोऽभिग्रहविशेषास्ते बहूनां संयतसंयतीनां साधारणार्थं तथा चाह-

[भा.३६८६] अप्पाहारग्गहणं जेन य आवस्सयाण परिहानी ।
न वि जायइ तम्मत्तं आहारेयव्वयं नियमा ।।

वृ- अल्पाहारगाहणमपार्द्धाद्युलक्षणं तत इदं अल्पापार्द्धाद्याहारग्रहणमेतत् ज्ञापयति सिद्धिप्रासादनिर्मापणाय व्यापार्यमाणानामावश्यकानां योगानां यावन्मात्रेणाहारेण परिहानिर्नोपजायते । तावन्मात्रं ततोऽभिग्रहविशेषमभिगृह्याहारयितव्यं । अत्रैव दृष्टान्तमभिधित्सुराह-

[भा.३६८७] दिट्ठंतो अमच्चेणं, पासादेणं तु रायसंदिट्ठे ।
दव्वे खेत्ते काले भावेन य संकिलेसेइ ।।

वृ- पिव संक्लेशयति । इयं गाथाक्षरयोजना भावार्थस्त्वयम्-केनापि राज्ञा अमात्य आज्ञप्तः शीघ्रं प्रासादः कारयितव्यः । स चामात्यो द्रव्ये लुब्धः तान् कार्मकान् द्रव्यतः क्षेत्रतः कालतो भावतश्च संक्लेशयति । कथमित्याह-

[भा.३६८८] आलोयणा सक्कयं सुक्खं नोपगामं व दव्वतो ।
खेत्तानुचियं उण्हे काले उस्सूरभोयणं ।।

[भा.३६८९] भावे न देति विस्सामं निट्ठुरेहिं य खिंसइ ।
जे यं भित्तिं च नो देइ अकयदंडणा ।।

वृ- द्रव्यतोऽलवणमसंस्कृतं विशिष्टसंस्काररहितं, शुष्कं वातादिना शोषं नीतं वल्लचनकादि तदपि न प्रकामं न परिपूर्णं ददाति । क्षेत्रतो यत्तस्मिन् क्षेत्रे अनुचितं भक्तं पानं वा ददाति तथा उष्णे कर्म कारयति कालतउत्सूरे भोनं दापयति भावतो न ददाति विश्रामं, निष्ठुरैश्च वचनैः खिंसयति जितमपि च कर्मकरणतो लभ्यमपि भृतं मूल्यं न ददाति । एवं च सति ते कर्मकराः प्रासादमकृत्वापि नष्टाः पलायिता स्थिताः

प्रासादोऽकृतो राज्ञा चैतत् ज्ञातं ततोऽमात्यस्य दण्डता कृता अमात्यपदाच्च्यावयित्वा तस्य सर्वस्वापहरणं कृतमिति एष दृष्टान्तः साम्प्रतमुपनयनमाह-

[भा.३६९०] अकरणे पासायस्स उ जह सो मच्चो उ दंडितो रन्ना ।
एमेव य आयरिए उवणयं होति कायव्वं ।।

वृ- यथा प्रासादस्याकरणे सोऽमात्यो राजा दण्डित एवमेवाचार्ये उपनयनं भवति कर्तव्यं, । तथैवं राजस्थानीयेन तीर्थकरेण अमात्यस्थानीयस्याचार्यस्य सिद्धिप्रासादसाधनार्थमादेशो दत्तः । स च कर्मकरस्थानीयानां साधूनां द्रव्यादिषु तत्करोति यथा ते सर्वे पलायन्ते तथा चाह-

[भा.३६९१] कज्जंमि वि नो विगति दयाति अंतं न तं च पज्जत्तं ।
खेत्ते खलु खेत्तादि, कुवसहि उब्भामगे चेव ।।

[भा.३६९२] तइयाए देति काले उमे वुसग्ग वादितो निच्चं ।
संगह उवग्गहे विय, न कुणइ भावे पयंडो य ।।

वृ- द्रव्यतः कार्येऽपि समापतिते न विकृतिं घृतादिकं ददाति भक्तमपि प्रान्तं दापयति तदपि च न च पर्याप्तं । क्षेत्रतः खलु क्षेत्रादीन् प्रेषयति स खलु क्षेत्रं नाम यत्र तु किमपि प्रायोग्यं लभ्यते आदिशब्दात् यत्र स्वपक्षतः परपक्षतो वापभ्राजना तदाहि परिग्रहः । कुवसतौ वा स्थापयति उद्भ्रामके वा ग्रामे यदा वा प्रेषयति । कालतः सदैव तृतीयायां भोजनं ददाति । अवमेऽपि दुर्भिक्षेऽप्युत्सर्गवादिको नित्यं भावतः संग्रहज्ञानादिभिः उपग्रहं वस्त्रपात्रादिभिर्न करोति प्रचण्डश्च प्रकोपनशीलः ।

[भा.३६९३] लोए लोउत्तरे चेव दोवि एए असाहगा ।
विवरीयवत्तिणो सिद्धी अन्ने दोव विसाहगा ।।

वृ- लोके लोकोत्तरेऽपि च एतावनन्तरोक्तौ द्वावप्यसाधकौ द्रव्यतो भावतश्च प्रासादस्य विपरीतवर्तिनः पुनरुभयथापि सिद्धिरिति कृत्वा अन्यौ द्वावपि द्रव्यतो भावतश्च प्रासादस्य साधकौ ।

[भा.३६९४] सिद्धी पासायवडिंसग्गस करणं चउव्विहं होइ ।
दव्वे खेत्ते काले, भावे य न संकिलेसेइ ।।

वृ- सिद्धि प्रासादावतंसकस्य करणं चतुर्विधं भवति । तद्यथा-द्रव्यतः, क्षेत्रतः कालतो भावतश्च । ततो गीतार्थो द्रव्यादिषु साधून् न संक्लेशयति ।

[भा.३६९५] एवं तु निम्मवंती तेवि अचिरेण सिद्धिपासायं ।
तेसिं पि इमो उ विही आहारेयव्वए होति ।।

वृ- एवं द्रव्यादिषु संक्लेशाकरणतस्ते साधवोऽचिरेण स्तोकेन कालेन सिद्धिप्रासादं निर्मापयन्ति तेषामपि सिद्धिः प्रासा दनिर्मापकानामाहारयितव्ये अयं न च वक्ष्यमाणो विधिस्तमेवाह-

[भा.३६९६] अद्धमसणस्स सव्वंजणस्स कुज्जा दवस्स दो भागं ।
वायपवियारणट्ठा छब्भागं ऊणयं कुज्जा ।।

वृ- अर्धमुदरस्य सव्यंजनस्य दधितक्रतीमनादिसहितस्याशनस्य योग्यं कुर्यात् । द्वौ भागौ द्रव्यस्य पानीयस्य योग्यौ षष्ठं तु भागं वातप्रविचरणार्थमूनकं कुर्यात् । इयमत्र-भावना-उदरस्य षड्भागाः कल्पन्ते । तत्र त्रयोभागा अशनस्य स व्यञ्जनस्य द्वौ भागौ पानीयस्य षष्ठो वातप्रविचारणाय । एतच्च साधारणे प्रावृट्काले चत्वारो भागा सव्यञ्जनस्याशनस्य पञ्चमः पानीयस्य षष्ठो वातप्रतीचाराय

उष्णकाले द्वौ भागावशनस्य सव्यञ्जनस्य । त्रयः पानीयस्य षष्ठो वातप्रविचारणायेति ।

[भा.३६९७] एसो आहारविही जह भणितो सव्वभावदंसीहिं ।
धम्मवासगजोगा जेन न हायंति तं कुज्जा ।।

वृ- एष आहारविधिर्यथा सर्वभावदर्शिभिः सर्वज्ञैर्भणितो येन प्रकारेण धर्मनिमित्ता अवश्यकर्तव्या योगा न हीयन्ते तं कुर्यान्नान्यदिति ।

उद्देशक :-८- समाप्तः

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता व्यवहार सूत्रे अष्टमोद्देशक स्य ।**
**(भद्रबाहुस्वामि रचिता निर्युक्तियुक्तं) संघदासगणि विरचितंभाष्यं ।**
**एवं मलयगिरि आचार्येण रचिता टीका परिसमाप्ता ।**

## उद्देशक :- ९

व्याख्यातो अष्टम उद्देशोऽधुना नवम आरभ्यते । तस्य चेदमादिसूत्रं-

**मू. (२०३)** *सागारियस्स आएसे अंतो वगडाए भुंजति निट्ठिए निसिट्ठे पाडिहारए, तम्हा दावए, नो से कप्पइ पडिगाहेत्तए ।*

**मू. (२०४)** *सागारियस्स आएसे अंतो वगडाए भुंजइ निट्ठिए निसिट्ठे अपडिहारिए; तम्हा दावए, एवं से कप्पइ पडिगाहेत्तए ।*

**मू. (२०५)** *सागारियस्स आएसे बाहिं वगडाए भुंजइ निट्ठिए निसट्ठे पाडिहारिए; तम्हा दावए, नो से कप्पइ पडिगाहेत्तए ।*

**मू. (२०६)** *सागारियस्स आएसे बाहिं वगडाए निट्ठिए निसट्ठे अपाडिहारिए; तम्हा दावए, एवं से कप्पइ पडिगाहेत्तए ।*

**मू. (२०७)** *सागारयिस्स दासे वा भयए वा अंतो वगडाए भुंजइ निट्ठिए निसट्ठे पडिहारिए तम्हा दावए नो से कप्पइ पडिगाहेत्ताए*

**मू. (२०८)** *(एवं) अपाडिहारिए....*

**मू. (२०९)** *सागारियस्स दासेवा भयएवा बाहिं वगडाए भुंजइ निट्ठिए निसट्ठे पडिगाहेत्तए ।*

**मू. (२१०)** *(एवं) अपाडिहारिए...*

[भा.३६९८] आहारो खलु पगतो घेतव्वो सो कहिं न वा कहियं ।
सागारियपिंडस्स इति नवमे सुत्तसंबंधो ।।

वृ- आहारः खल्वष्टमोद्देशके अन्तिमसूत्रे प्रकृतः । स कुत्र ग्रहीतव्यः कुत्र वा नेत्येन सूत्रेण प्रतिपाद्यते । इत्येष नवमे उद्देशके सागारिकपिण्डस्य प्रतिपादकं यत् आदिमं सूत्रं तस्य सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-सागारिको नाम शय्यातरस्तस्यादेश आयासकर आदेशो यदि वा आदेशित आदेशः अथवा आदेशत इति शब्दसंस्कारस्तस्य व्युत्पत्तिमग्रे वक्ष्यामः । स च नायको मित्रं प्रभुः परतीर्थिको वा द्रष्टव्यः । वगडा नाम परिक्षेपस्तस्यान्तर्मध्ये भुंक्ते पदार्थान् ओदनादीन्, किं विशिष्टानित्याह- निष्ठितान् निष्ठानीतान् निसृष्टान् प्रातिहारिकान् सागारिकान्सागारिभुक्तशेषान् तस्मात्परिनिष्ठितादिमध्यात् दापयति । न से तस्य कल्पते प्रतिग्रहीतुमेवं शेषाण्यपि त्रीणि सूत्राणि

भावनीयानि । एवं चत्वार्यादेशविषयाणि चत्वारि दासादिविषयाणि इह यत्र यत्र प्रातिहारिकं तत्र तत्र सागारिकपिण्ड इति न कल्पते । यत्र पुनरप्रातिहारिकं तत्र तत्र न सागारिकपिण्ड इति कल्पते, प्रथम-तृतीय-पञ्चम-सप्तम-सूत्रेषु सागारिकपिण्ड इति कृत्वा न कल्पते, द्वितीयचतुर्थषष्ठाष्टमसूत्रेषु न भवति सागारिकपिण्ड इति कल्पते, केवलं भद्रकप्रान्तदोषतो वर्ज्यते इति सूत्राष्टकभावार्थः ।

[भा.३६९९] आयासकरो आएसितो उ आवेसणं व आविसइ ।
सो नायगो सुही वा पभू व परतित्थिओ वावि ॥

वृ- आयासकर आदेशः आदिशतीत्यादेश इति व्युत्पत्तेः, आदिशितो वा आदेशः आदेश्यते सत्कारपुरस्सरमाकार्यत इत्यादेशव्युत्पत्तेः । अथवा आवेश इति शब्दसंस्कारस्तत्र व्युत्पत्तिमाह- आवेशनं वा शब्दः शब्दसंस्कारापेक्षया विकल्पते आविशतीत्यावेशः । आवेशनं नाम यस्मिन् स्थाने प्रविष्टेन सागारिकस्यायासो जन्यते, स आदेश आवेशो वा नाम ज्ञातिकः स्वजनः सुहृद् मित्रं प्रभुर्वा नायकः परतीर्थिको वापि, कृता विषमव्याख्या भाष्यकृता । सम्प्रति निर्युक्तिविस्तरः ।

[भा.३७००] आएस-दास-भइए अट्ठहिं सुत्तेहिं मग्गणं जत्थ ।
सागारिय-दोसेहिं च पसंग-दोसेहिं य आगज्झो ॥

वृ- आदेशो यथोक्तरूपो दास आजन्मावधि किंकरो भृतकः कियत्कालंमूल्येन धृत आदेशश्च दासश्च भृतकश्च आदेशदासभृतकं तत्र च पिण्डस्याष्टभिः सूत्रैर्मार्गणा कृता । यत्र सागारिकदोषैः प्रसङ्गदोषैश्च भद्रकप्रान्तककृतैरग्राह्यो भवति । साम्प्रतमष्टानामपि सूत्राणां विभागमाह-

[भा.३७०१] तत्थादिमाइं चउरो आवेसे सुत्तमाहिया ।
दो चेव पाडिहारी अपाडिहारी भवे दोन्नि ॥

वृ- तत्र तेषामष्टानां सूत्राणां मध्ये आदिमानि चत्वारि सूत्राणि आदेशे प्रागुक्तस्वरूपे आख्यातानि, तत्रापि द्वे सूत्रे प्रातिहारिणि द्रष्टव्ये द्वे च सूत्रे अप्रातिहारिणि, प्रथम तृतीये प्रातिहारिणि, द्वितीये चतुर्थेऽप्रातिहारिणीत्यर्थः ।

[भा.३७०२] अंतो बहिं वा वि निवेसणस्स आवसएणं व ठिए सगारे ।
भत्तं न एयस्स विसेसजुत्तं, तंमी दलंते खलु सुत्तबंधो ॥

वृ- निवेशनं गृहस्यान्तर्बहिर्वा स्थिते सागारिके शय्यातरे यदि आदेश एव आदेशः प्राघूर्णकस्तेन वा सह स्थिते यद्भक्तं विशेषयुक्तं विशेषतो निष्ठं नीतं तत्र एतस्य प्राघूर्णकस्य सम्बन्धि किन्तु सागारिकस्य ततस्तस्मिन् ददति सूत्रसम्बन्धः सूत्रोपनिपातः । प्रातिहारिकभोजितया तस्मिन् ददाति प्रथमे तृतीये च सूत्रे न कल्पते सागारिकपिण्डत्वात् । द्वितीये चतुर्थे वा प्रातिहारिकभोजितया कल्पते । तदायत्वात्केवलं भद्रकप्रान्तदोषप्रसङ्गतो न गृह्यते । एतदेवाह-

[भा.३७०३] सागारियस्स दोसा दोसु दोसु पसंगतो दोसा ।
भद्दगपत्तादीया होइ इमे मुणेयव्वा, (दोसु पि कमेण नेयव्वा)

वृ- द्वयोः प्रथमतृतीययोः सूत्रयोः सागारिकस्य दोषात् शय्यतरपिण्डत्वान्न कल्पते इति भावः । द्वयोर्द्वितीयचतुर्थयोः प्रसङ्गतो दोषा भद्रकप्रान्तादिकाः आदिशब्दादतिभद्रकातिप्रान्तादिपरिग्रहस्ते च इमे वक्ष्यमाणा भवन्ति ज्ञातव्याः । तानेवाह-

[भा.३७०४] एएण उवाएणं गिण्हंतो भद्दे उग्गमेगतरं ।

पत्तो दुद्दिठधम्मा विनास गरिहा दिय निसिं वा ।।

**वृ-** भद्रकश्चिन्तयति साधव एतेनोपायेन मदीयं पिण्डं गृह्णन्ति, तत एवं चिन्तयित्वा उद्गमदोषाणामेकतरं दोषं कुर्यात्, यस्तु प्रान्तः स पापीयान् दुर्दृष्टधर्मा तद्ग्रहं पिण्डग्रहणतो दिवा निशि वा कोपावेशतो विनाशं कुर्यात् गर्हां वा दिवानिशमिति ।

**[भा. ३७०५]** सुत्तंमि कप्पइ निय वुत्ते किं अत्थतो निसेहेह ।
एगयरदेसे कालियसुतनिवातो इमेहिं तु ।।

**वृ-** सूत्रे कल्पते इत्युक्ते किं यूयमर्थतो निषेधयथ । सूरिराह-एकतरदोषात्, भद्रकदोषप्रसङ्गात् प्रान्तदोषप्रसङ्गाद्वा इत्यर्थः । यद्येवं सूत्रे कस्मात्कल्पते इत्युक्तमत आह-अधिकृतस्य कालिकसूत्रस्य निपात प्रवर्तमानमेभिवक्ष्यमाणः कारणैः एतच्च ज्ञायते व्याख्यानात् कालिकश्रुतं च व्याख्यानप्रधानं -

**[भा. ३७०६]** जं जह सुत्ते भणियं तहेव तं जइ वियालणा नत्थि ।
किं कालियानुयोगो दिठो दिठ्ठिप्पहाणेहिं ।।

**वृ-** यत् यथा सूत्रे कालिके भणितं तद्यदि तथैव प्रतिपत्तव्यं । न पुनर्विचारणा काचिदस्ति, तर्हि दृष्टिप्रधानैर्युगप्रधानैरित्यर्थः । किं कस्मात्कालिकानुयोगो दृष्टः तस्मादस्ति विचारणा सा चात्र प्रागुक्तस्वरूपेति । तत्र यदुक्तमेभिः कारणैः कालिकसूत्रनिपात इति तानि कारणान्याह-

**[भा. ३७०७]** अदिट्ठस्स उ गहणं अहवा सागारियं तु वज्जेत्ता ।
अन्नो पेच्छउ मा वा पेच्छंति वा वि वच्चंता ।।

**वृ-** यदि केनापि सागारिकसत्केन तत् दीयमानं न दृश्यते तदस्यादृश्यस्य ग्रहणं भवति । अथवा सागारिकं शय्यातरं वर्जयित्वा अन्यो दीयमानं प्रेक्षतां वा मा वा । अथवा सागारिकेऽपि प्रेक्षमाणे व्रजन्तो न तिष्ठन्ति केवलं दानवेलायां तद्दृष्टिः परिह्रियते । तत उक्तं सूत्रे कल्पते इति, तदेवमादेशविषयं सूत्रचतुष्टयं भावयति ।

**[भा. ३७०८]** दास-भयगाण दिज्जइ उक्खित्तं जत्थ भत्तयं नियमं ।
तंमि वि सो चेव गमो अंतो बाहिं व देतंमि ।।

**वृ-** दासभृतकादिसूत्रचतुष्टयेऽपि प्रथमसूत्रे तृतीयसूत्रे च प्रातिहारिकभोजनात्तस्मिन् ददति सागारिकपिण्ड इति कृत्वा न कल्पते । यत्र पुनर्द्वितीयचतुर्थे च सूत्रे दासभृतकानामुत्क्षिप्तं हस्तोत्पाटितं नियतं भक्तकं दीयते दत्तं च तैः स्वगृहे नीयते तस्मिन्नपि दासभृतकादौ निवेशनस्यान्तर्बहिर्वा ददति तत्र सूत्रे स एव गमः प्रकारः कल्पते वस्तु, ततः परं भद्रकप्रान्तादिदोषप्रसङ्गतो न गृह्यते । यदा तु केनापि सागारिकः सत्केन दृश्यते यदि वा सागारिकं मुक्त्वा अन्यः प्रेक्षतां वा तदा गृह्यते । यद्येवं तर्हि सागारियस्स आदेसे वा दासे वा भयगे वा इत्यनेन प्रकारेण चत्वार्येव सूत्राणि कस्मान्न कृतानि, उच्यते ।

**[भा. ३७०९]** निययानियय विसेसो आएसो होइ दासभयगाणं ।
अच्चियमनच्चिए वा विसेसकरणं पयत्तो वा ।।

**वृ-** आदेशो दासभृतकानां भवति नियतानां नियतकृतो विशेषः तथाह्यादेशः कोऽपि कदाचिदागच्छति ततस्तस्यानियतं दीयते दासभृतकानां नियतं तथा आदेशस्यार्चितं तथा आदेशस्यार्चितं सत्कारपुरस्कृतं दीयते दासभृतकानां सत्कारकरणतोऽनर्चितं तथा आदेशस्य भोजनविधिसम्पादनाय

महान् प्रयत्नः संभ्रमगर्मी विधीयते । दासभृतकानां तु न तादृशः प्रयत्न इति दासभृतकसूत्रचतुष्टया-द्विश्लेषकरणं पृथक्करणं-

**मू. (२११)** *सागारियस्स नायए सिया सागारियस्स एगवगडाए अंतो एगपयाए सागारियं चोपजीवइ तम्हा दावए नो से कप्पइ पडिगाहेत्तए ।*

**[भा.३७१०]** नीसट्ठ अपडिहारी समणुन्ना उ त्ति मा अइपसंगा ।
एगपए परपिंडं गेण्हे परसुत्त-संबंधो ।।

**वृ-** निसृष्टो दत्तोऽप्रतिहारी पिण्डः समनुज्ञात इति विचिन्त्य मा अतिप्रसङ्गत एकपदे एकस्यां चुल्यां शय्यातराद्व्यतिरिक्तस्य पिण्डं गृह्णीयादिति परसूत्रस्य परविषयसूत्राष्टकस्य सम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या सागारिकज्ञातकः सागारिकस्वजनः स्यात् सागारिकस्य एकवगडाए एकस्मिन् गृहे सागारिकस्यान्तरे तस्यां प्रजायां चुल्यां । सागारिकं चोपजीवति तस्माद्दापयेत् । न से तस्य साधोः कल्पते प्रतिग्राहयितुं सागारिकासक्तचुल्लीदारुलवणाद्युपजीवनस्तस्य शय्यातरपिण्डस्य शय्यातरसत्कत्वात्, एवं शेषाण्यपि सप्तसूत्राणि भावनीयानि पाठः पुनस्तेषामेवं-

**मू. (२१२)** *सागारियस्स नायए सिया सागारियस्स एगवडाए अंतो सागारियस्स अभिनिपयाए सागारियं चोपजीवति, तम्हा दावए, नो से कप्पइ पडिगाहित्तए।*

**मू. (२१३)** *सागारियस्स नायए सिया सागारियस्स एगवडाए बाहिं सागारियस्स एगपयाए सागारियं च उपजीवति, जम्हा दावए, नो से कप्पइ पडिगाहेत्तए ।*

**मू. (२१४)** *सागारियस्स नायए सिया सागारियस्स एगवडाए बाहिं सागारियस्स अभिनिपयाए सागारियं च उवजीवति, तम्हा दावए, नो से कप्पति पडिगाहित्तए।*

**मू. (२१५)** *सागारियस्स नायए सिया सागारियस्स अभिनिवगडाए एगदुवाराए एगनिक्खमण-पवेसाए अंतो सागारियस्स एगपयाए सागारियं च उवजीवति, तम्हा दावए, नो से कप्पइ पडिगाहेत्तए ।*

**मू. (२१६)** *सागारियस्स नायए सिया सागारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमण-पवेसाए अंतो सागारियस्स अभिनिपयाए सागारियं च उवजीवति, तम्हा दावए, नो से कप्पइ पडिगाहेत्तए ।*

**मू. (२१७)** *सागारियस्स नायए सिया सागारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमण-पवेसाए बाहिं सागारियस्स एगपयाए सागारियं च उवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहेत्तए ।*

**मू. (२१८)** *सागारियस्स नायए सिया सागारियस्स अभिनिव्वगडाए एगदुवाराए एगनिक्खमण-पवेसाए बाहिं सागारियस्स अभिनिपयाए सागारियं च उवजीवइ, तम्हा दावए, नो से कप्पइ पडिगाहेत्तए ।*

**वृ-** अत्र अभिनिव्वगडाए पृथग्गृहे एकद्वारे एकनिष्क्रमणप्रवेशे एकनिवेशनान्तर्वर्तित्वात्तया अभिनिपयाए इति अभि प्रत्येकं नियता विविक्ता प्रजा चुल्ली अभिनिप्रजा तस्यां, शेषं सुगमं -

**[भा.३७११]** पुरपच्छसंथुतो वावि नायतो उभयसंथुतो वावि ।
एगवगडा घरं तु पया उ चुल्ली समक्खया ।।

**वृ-** ज्ञातको नाम पूर्वसंस्तुतो यदि वा पश्चात्संस्तुतोऽथवा उभयसंस्तुतः स्वजनः, पूर्वसंस्तुतो नाम मातापितृपक्षवर्ती, पश्चात्संस्तुतो भार्यापक्षगत, उभयसंस्तुतस्तथा विधनात्रा सम्बन्धविशेषभावत उभयपक्षवर्ती, एकवगडा नाम एकं गृहं, प्रजा तु चुल्ली समाख्याता, प्रकर्षेण जायते पाकनिष्पत्ति-स्यामिति प्रजेति व्युत्पत्तेः ।

[भा.३७१२] एगपए अभिनिपए अट्ठहिं सुत्तेहिं मग्गणा जत्थ ।
सागारियदोसेहिं पसंगदोसेहिं य अगज्झं ।।

वृ- एकस्यां प्रजायामभिनिप्रजायां प्रत्येकं विविक्तायां प्रजायामष्टभिः सूत्रैः पिण्डस्य मार्गणा यत्र येषु सूत्रेषु प्रथमतृतीयेषु पञ्चमसप्तमरूपेषु सागारिकदोषैर्द्वितीयचतुर्थषष्ठाष्टमेष्वथ प्रसङ्गदोषै भक्तपानमग्राह्यम् ।

[भा.३७१३] आइल्ला चउरो सुत्ता चउक्कसालदवेक्खतो ।
पिहघरेसु चत्तारि सुत्ता एक्कनिवेसने ।।

वृ- आदिमानि चत्वारि सूत्राणि एकग्रहविषयाणि चतुःशाल्याद्यपेक्षातश्चतुःशालादावेव द्वयोः कुडम्बयोरवस्थानघटनात्अन्तिमानि चत्वारि सूत्राणि पृथग्गृहेषु तान्यप्येकस्मिन्निवेशने परिक्षेपे ।।

[भा.३७१४] सागारियस्स दोसा चउसु पसंगदोसा य ।
भद्दगपंतादीया चउसु पि कम्मेण नायव्वा ।।

वृ- चतुर्षु प्रथमतृतीयपंचमसप्तमरूपेषु सूत्रेषु सागारिकस्य दोषाः शय्यातरपिण्डग्रहणे ते दोषास्तत्र ज्ञातव्या इत्यर्थः । चतुर्षु द्वितीयचतुर्थषष्ठाष्टमादिरूपेषु सूत्रेषु प्रसङ्गदोषाश्चतुर्ष्वपि सूत्रेषु यथोक्तक्रमेण ज्ञातव्या, भद्रकप्रान्तादिकृता आदिशब्दात् तरतमविशेषपरिग्राहकः । अथ कथं प्रथमतृतीयादिषु चतुर्षु सूत्रेषु शय्यातरदोषाः कथं चान्यत्रप्रसंगदोषास्तत्राह-

[भा.३७१५] दारुगलोणे गोरससुवोदग अंबिले य सागफले ।
उवजीवइ सागारियं एगपए वावि अभिनिपए ।।

वृ- दारु काष्टं लवणं गोरसं च प्रतीतं सूपो मुद्गादि उदकमाम्लं शाकफलानि च प्रतीतानि यस्मात्सागारियमिति षष्ठ्यर्थे द्वितीया प्राकृतत्वात्सागारिकस्य सक्तानेकस्यां प्रजायां प्रत्येकं विविक्तायां वा प्रजायामुपजीवति तेन कारणेन सागारिकदोषाश्च प्रसजन्ति । एतेन सागारियं च उवजीवति इति व्याखातं । कस्मादेकां चुल्लीं प्रतिपद्यन्ते तत आह-

[भा.३७१६] भीयाइं करभयस्स य अंतो बाहिं व होज्ज एकपया ।
अभिनिपए वि न कप्पइ पक्खेवगमादिनो दोसा ।।

वृ- भीतानि, चुल्लीकरभयात्, गाथायां षष्ठी पञ्चम्यर्थे सम्बन्धविवक्षायां वा षष्ठी, यस्माच्चुल्लीकरभयात्तानि भीतानि तेन कारणेनान्तर्बहिर्वा तेषामेका प्रजा चुल्ली भवति । अभिनिप्रजायां तुसत्यां यद्यपि सागारिकसत्कमुपजीव्यते तथापि । निर्भिन्नचुल्लीकतया यत् गृह्यते तत्तेषामेव भवतीति सागारिकदोषा न भवन्ति । तथापि प्रसङ्गदोषतो न कल्पते तथा चाह- अभिनिप्रजायामपि न कल्पते यतो भद्रकप्रान्तकृताः प्रक्षेपादयो दोषाः, भद्रकः पक्षेपादीन् दोषान् कारयेत् । प्रान्तो विनाशप्रभृतीन्-

[भा.३७१७] जं देसी तं देमो एए घेत्तुं न इच्छते अम्हं ।
अहवा वि अकुलजोत्ति य गेण्हंति अदिट्ठमादीयं ।।

वृ- भद्रका ब्रूवते त्वं साधुभ्यः प्रभूतं देहि यद्ददासि तद्वयं तव दास्यामः । यत एतेऽस्माकं गृहे नेच्छंति ग्रहीतुं गाथायामेकवचनं प्राकृतत्वात्, एवं भद्रककृताः प्रक्षेपादयो दोषाः अथवा प्रान्तो ब्रूते अकुलजा एते इति कृत्वा अदृष्टादिकं गृह्णन्ति । एवं गर्हा करोत्यतिप्रान्तो विनाशमपि, अत्रैवापवादमुपदर्शयति ।

[भा.३७१८] बिइयपदे उदिट्ठगहणं असती तव्वजिएण दिट्ठस ।

दिट्ठेवि पत्थियाण गहणं अंतो व बाहिं वा ।।

वृ- द्वितीयपदेनापवादपदेन यदि न केनापि दीयमानं दृष्टं तदा तस्यादृष्टस्य ग्रहणं, अथ सर्वथा केनाप्यदृष्टं न प्राप्यते तदा तदभावे तद्वर्जितेन दृष्टस्य ग्रहणं तथा प्रस्थितानां गन्तुं चलितानां सागारिकेण दृष्टेऽपि दर्शनेऽपि अन्तर्बहिर्वा ग्रहणं भवति ।

मू. (२१९) *सागारियस्स चक्कियासाला साहारणवक्कयपउत्ता, तम्हा दावए, नो से कप्पइ पडिगाहेत्तए ।*

मू. (२२०) *सागारियस्स चक्कियासाला निस्साहारणवक्कयपउत्ता, तम्हा दावए, एवं से कप्पति पडिगाहित्तए ।*

मू. (२२१) (२२२) *सागारियस्स० — गोलियसाला०*

मू. (२२३) (२२४) *—बोधियसाला०*

मू. (२२५) (२२६) *—दोसियसाला०*

मू. (२२७) (२२८) *—सोत्तियसाला०*

मू. (२२९) (२३०) *—बोदियसाला०*

मू. (२३१) (२३२) *—गंधियसाला० जहा एवं से कप्पइ पडिगाहेत्तए ।*

[भा. ३७१९] साधारणमेगपयत्ति किच्च तहियं निवारियं गहणं ।
इदमवि सामन्नं विय साहारणसालसु यजोगो ।।

वृ- अनन्तरसूत्रेष्वेकस्यां प्रजायां साधारणमिति कृत्वा तत्र ग्रहणं निवारित्तं, इदमपि च वक्ष्यमाणं साधारणसालासु सामान्यं साधारणमतो निषिध्यते । अनेन सम्बन्धेनायातस्यास्य व्याख्या सागारिकस्य शय्यातरस्य चक्रिकाशाला तैलविक्रयशाला इत्यर्थः । सागारिकेणात्मना सह साधारणावक्रयप्रयुक्ता यत्तस्यां शालायां प्रक्षिप्यते । यश्च तस्य लाभः सागारिकेण साधारण इत्यर्थः । तस्मात् शालाया मध्यात् यत्साधूचितं तैलादिकमन्यो दापयति तत्से तस्य साधोर्न कल्पते इति प्रथमसूत्रार्थः । तथा सागारिकस्य चक्रिकाशाला तैलविक्रयशाला सा निस्साधारणा वक्रय्ययुक्ता न किमपि सागारिकसाधारणं तत्र भाण्डं प्रक्षिप्तमस्तीति भावः तस्मात् निस्साधारणावक्रयशालामध्यात् दापयति एवं से तस्य साधोः कल्पते प्रतिगृहीतुं एष द्वितीय सूत्रार्थः । एवं बोलिकशालाबोधिकशालादोषिकशालासौत्तिकशाला-गन्धिकशालाबोदियशालासूत्राण्यपि भावनीयानि । सूत्रपाठस्त्वेवं द्रष्टव्यः । सागारियस्स गोलियसाला दावए एवं से कप्पइ पडिसाहारणा वक्कयपउत्ता तम्हा दावए नो से कप्पइ पडिगाहेत्तए, सागारियस्से गोलियसाला निस्साहारणा वक्कयपउत्ता तम्हा गाहित्तए । एवं बोधिकशालादिसूत्रपाठोऽपि द्रष्टव्यः ।

[भा. ३७२०] तेल्लियगोलियगोणियदोसियसुत्तियबोहिकप्पासो ।
गंधिय सोंडियसाला जा अन्ना एवमादी उ ।।

वृ- चक्रिका नाम तैलिकास्तैलिकचक्रकारिणः । एवं गोलिका लावणिका दौषिकः सौत्रिकाः बोधिकाः कार्पासः गन्धिकाशाला शौण्डिकशाला अपि अन्या च या एवमादिका गन्धप्रधाना सा गन्धिकशालेत्युच्यते ।

[भा. ३७२१] ववहारे उद्देसंमि नवमए जत्तिया भवे साला ।
तासिं परिपिंडियाणं साहारणवज्जिए गहणं ।।

वृ- व्यवहारे नवमे उद्देशक यावत्यः शालाः शालासूत्राणि भवन्ति विद्यन्ते तासां सर्वासां परिपिण्डितानामयं तात्पर्यार्थः । यत्र साधारणमविभक्तं क्रमाणकं तत्र प्रतिषेधः साधारणवर्जिते तु ग्रहणं । सम्प्रति साधारणशब्द-शालाशब्दव्याख्यानार्थमाह-

[भा. ३७२२] साहारण सामन्नं अविभत्तमच्छिन्नसंथडेगट्ठं ।
सालत्ति आवनत्ति य पणिअ गिहं चेव एगट्ठं ।।

वृ- साधारणं सामान्यमविभक्तमच्छिन्नं संस्तृतमिति एकार्थं, एते सर्वेऽपि शब्दा एकार्थिका इत्यर्थः । शाला इति वा आपण इति वा पणितमिति वा गृहमिति वा एकार्थः ।

[भा. ३७२३] साहारणा उ साला दव्वे मीसंसि आवणे भंडे ।
साहारणवक्कपउत्ते छिन्नं वोच्छं अच्छिन्नं वा ।।

वृ- साधारण तु शाला भण्यते मिश्रे द्रव्ये सति किमुक्तं भवति । अन्यस्यापि अन्यस्यापि तिला एकत्र मिश्रयित्वा पील्यन्ते पीलयित्वा च एकत्र विक्रीणन्ति । अथवा साधारणेनावक्रयेण युक्ते आपण भाण्डे वा क्रयाणके साधारण शाला भवति । तथा छिन्नमच्छिन्नं वा वक्ष्ये एष गाथासंक्षेपार्थः ।

[भा. ३७२४] पीलंति एक्कतो वा विक्किंति य एक्कतो करिय तेल्लं ।
अहवावि चक्कएणं साहारणवक्कयं जाणे ।।

वृ- अन्यस्यान्यस्य तिलानेकत्र संमीलयित्वा पीलयन्ति ततो विक्रीणन्ति अथवा पृथक् तिलान् पीलयित्वा तैलं कृत्वा एकत्र विक्रीणन्ति । तदेवं द्रव्ये मिश्रे साधारणावक्रयप्रयुक्ता शाला व्याख्याता । अथवान्यथा साधारणावक्रयप्रयुक्तेति व्याख्यानयति । अथवा वक्रयेण भाटकेन था साधारणाशाला प्रयुक्ता व्यापारिता तत्र यल्लभ्यते भाण्डकं तत् शय्यातरस्यान्येषां वा शय्यातराणां साधारणमिति साधारणावक्रयप्रयुक्तं जानीहि । अत्र यथा कल्पते यथा वा न कल्पते तथा प्रतिपादयति ।

[भा. ३७२५] पीलिय विरेडियंमी पुव्वगमेणं तु गहणमदिट्ठे ।
एगत्थ विक्कयंमी अमेलियादिट्ठ अन्नत्थ ।।

वृ- अन्यस्यान्यस्य तिलानेकत्र मीलयित्वा पीलयित्वा च तैले विरेचिते विभक्तीकृते पूर्वगमेन पूर्वप्रकारेण शय्यातरेणादृष्टे ग्रहणं भवति, दृष्टे तु न कल्पते, मा प्रक्षेपकं कुर्यादिति हेतोरन्यत्र नीतं तु कल्पत एव, तथा पृथक् एव तिलान् पीलयित्वा च एकत्र विक्रीणन्ति । तत एकत्र विक्रये यावन्मूल्यं मिलितमविभक्तमित्यर्थः तावन्न कल्पते इत्यर्थः । अमीलिते मूल्यकरणेन विभक्तीकृते सागारिकेणादृष्टे स तु कल्पते, दृष्टे प्रक्षेपदोषसंभवात् । अन्यत्र पुनः स्वयोगेन नीतं निःशङ्कं कल्पते ।

सांप्रतमापणं साधारणावक्रयप्रयुक्तं व्याख्यानयति-

[भा. ३७२६] जो उ लाभगभावेण पउत्तो होति आवणो ।
सा उ साहारणा होइ तत्थ घेत्तुं न कप्पइ ।।

वृ- यस्तु सागारिकेन लाभभागेन त्रिभागादिना आपणः प्रयुक्तो भवति स साधारणो भवत्यापणस्ततस्तत्र गृहीतुं न कल्पते । साम्प्रतं भाण्डं साधारणावक्रयप्रयुक्तं व्याख्यानयति-

[भा. ३७२७] छेदे वा लाभे वा सागारितो जत्थ होइ आभागी ।
तं तु साधारणं जाणे सेसमसाहारणं होइ ।।

वृ- यत्र भाण्डे च्छेदे लाभे वा सागारिकार्द्धेन त्रिभागादिना वा आभागी भवति तत् भाण्डं साधारणं

साधारणाविक्रयप्रयुक्तं जानीयात् । एतद् व्यतिरिक्तं शेषं भाण्डमसाधारणं भवति । साधारणे च भाण्डं यावत् तं न विभज्यते, तावत्सागारिकपिण्डो, विभक्ते तु कल्पते तत्रापि प्रक्षेपदोषप्रसङ्गतो दृष्टेन कल्पते, अदृष्टे तु कल्पते । यदा तु सा शाला भाटकप्रदानेन गृहीता कालेन मया तवैतावत् दातव्यं । न च भाण्डं शय्यातरेण सह च्छेदे लाभे वा त्रिभागादिना साधारणं तत्राप्यसाधारणे अदृष्टे कल्पते दृष्टे तु प्रक्षेपदोषप्रसङ्गो नेति । सम्प्रति च्छिन्नं वोच्छं अच्छिन्नं वा द्व इति व्याख्यानार्थमाह-

[भा.३७२८] सचित्तअचित्तमीसेण य जा प्पउंजए साला ।
तद्दव्वमन्नदव्वेण होइ साहारणं तं तु ॥

वृ- सचित्तेन अचित्तेन गाथायां सप्तमी तृतीयार्थे वा कृतत्वेन मिश्रेण च प्रयुज्यते । शाला किं विशिष्टेन सचित्तादिनेत्यत आह-द्रव्येण वा तद्द्रव्यं नाम यत् शालायां प्रक्षिप्तमस्ति अन्यद् द्रव्यं तद्व्यतिरिक्तं द्रव्यमियमत्र भावना । यत् शालायां प्रक्षिप्तं सचित्तमचित्तं मिश्रं वा कार्पासादि तस्य त्रिभागादि दातव्यम् । यदि वा यन्निष्पद्यते कर्पासादिभ्यो वस्त्रादिकमन्यत् तस्य त्रिभागादि दातव्यमिति तत् भवति -

[भा.३७२९] तद्दव्वमन्नदव्वेण वावि च्छिन्ने वि गहणमदिट्ठे ।
मा खलु पसंगदोसा संछोभ भत्तिं व मुंचेज्जा ॥

वृ- तत् द्रव्यं यत् शालायां प्रक्षिप्तं अन्यद्द्रव्यं तद्व्यतिरिक्तं एतावता कालेन द्रव्यं वा मयैतावद्दातव्यमित्येवं तत् द्रव्येण अन्यद्रव्येण च्छिन्नेऽपि विभक्तीकृतेऽपि ग्रहणमदृष्टे शय्यातरेण कल्पते न दृष्टे; कुत इत्याह-मा खलु प्रसङ्गदोषाः स्युरिति कृत्वा एतदेव संच्छोभी नाम प्रक्षेपस्तं कुर्यात् भृतिं वा मूल्यं मुञ्चेत् यावदुपकुरुते साधूनां तावद्दस्य द्रव्यं, भृतिमध्यात् पातनीयमिति ।

[भा.३७३०] जंपि य न एइ गहणं फलकप्पासो सुरादि वा लोणं ।
फासंमि उ सामन्नं न कप्पए जं तहिं पडियं ॥

वृ- यद्यपि च प्रासुकतया ग्रहणं नागच्छति तद्यथा फलमाम्रादि कर्पासः सुरादिरादिशब्दात् सरकादिग्रहणं लवणं । एतान्यप्राशुकान्यपि कदाचित्कारणे गृह्यन्ते तत एवमुक्तं, प्रासुकमपि तु वस्त्रादि यत्तत्र शालायां शय्यातरेण सह साधारणं तु न कल्पते, तदेव दोषिकशालामधिकृत्य दर्शयति ।

[भा.३७३१] अंडजबोंडजवालज वागज तह कीडजाणवत्थाणं ।
नाणादिसागयाणं साधारणवज्जिते गहणं ॥

वृ- अण्डजानां वसरिसूत्रमयानां बोण्डजानां कर्पासिकसूत्रमयानां वालजानां कम्बलानां वल्कलजानां शणत्वग्मयानां कीटजानां वस्त्राणां नानादेशागतानां प्रयोजने समापतिते साधारणवर्जिते सागारिकेण सह साधारणरहिते आपणे ग्रहणं भवति दोषाभावात् । दृष्टादृष्टविभाषा प्राग्वत् ॥

**मू. (२३३)** *सागारियस्स ओसहीओ संथडाओ तम्हा दावए नो से कप्पइ पडिगाहित्तए*

**मू. (२३४)** *सागारियस्स ओसहीओ असंथडाओ तम्हा दावए, एवं से कप्पइ पडिगाहित्तए ॥*

**मू. (२३५) (२३६)** *सागारियस्स अम्बफला जाव एवं से कप्पइ पडिगाहेत्तए ।*

[भा.३७३२] सागारियंमि पगते साहारणमेव समनुवत्तंते ।
उसहिफलसुत्ताणं वंजणनाणत्तओ जोगो ॥

वृ- सागारिके पूर्वसूत्रेभ्यः प्रकृते साधारणे समनुवर्तमाने तत्प्रस्तावमुपजीव्य औषधिफल-सूत्राणामुपनिपातः कृतः । यद्येवमयमर्थः पूर्व सूत्रेभ्य एव गते इति किमर्थममून्युपात्तानीत्यत आह

व्यञ्जननानात्वात्किमुक्तं भवति पूर्वं शालामधिकृत्य कल्पाकल्पविधिरुक्त इदानीं तु तान्येव व्यञ्जनान्यधिकृत्य सोच्यते । ततो व्यंजनैर्नानात्वभेदाद्दोषः, एष योगः सम्बन्धः । अस्य व्याख्या सागारिकस्य शय्यातरस्य औषधयो गोरसवत्यो संवृताः साधारणास्तस्मात् तन्मध्याद्दापयति सूपकारो कल्पते से तस्य साधोः प्रतिग्रहीतुं तथा सागारिकस्यौषधयोऽसंस्कृता असाधारणास्तस्माद्दापयति एवं से तस्य कल्पते प्रतिग्रहीतुमेवमाम्रफलसूत्रद्वयमपि भावनीयम् । सम्प्रति भाष्यप्रपञ्चः

[भा. ३७३३] गोरस गुल तिल्ल घतादि उसहीतो वा होंति जा अन्ना ।
सूअस्स कट्ठलेणं तु जा संथडअसंथडा हुंति ।।

वृ- सूतस्य (सूपकारस्य) काष्ठलयने इन्धनगृहे या गोरसगुडतैलघृताद्या औषधयोऽन्या वा या भवन्ति ता द्विविधाः सागारिकेण सह संस्कृताः साधारणा भवन्ति असंस्कृता वा असाधारणा वा । कथं पुनः साधारणास्तत आह-

[भा. ३७३४] धुव आवाह विवाहे जन्ने सद्धे य करडुय छन्ने य ।
विविहातो ओसहीउ वानीता भत्तसूतस्स ।।

[भा. ३७३५] जं दढं विदढं वा जो वा तह भत्तसेस उवारो ।
लभइ जइ सूवकारो अविरिक्कं पि हु न लब्भा ।।

वृ- ध्रुवं सर्वकालमुपस्करोति सूपकारो भोजिकानामावाहो दारकपक्षिणां, वीवाहो वधूपक्षिणां, यज्ञो नागयज्ञादि श्राद्धं धिग्जातिजनप्रतीतं, करडुकं मृतकभक्तं, क्षण इन्द्रमहादिस्तेषु सूपकार आनीयते तस्य भक्तभतस्य सूपकारकस्य विविधा औषधयः पूर्वभणिता उपनीता ढौकितास्तत यत् दग्धमीषत् विदग्धं वा प्रभूतं दग्धं यो वा तत्र भक्तशेषस्योद्धारो भक्तशेषं यत्रोद्धरितमित्यर्थः । तद्यदि लभते सूत्रकारस्ततस्तत्कल्पते, अविरिक्तं अविभक्तीकृतं तदापि दग्धविदग्धादि हु निश्चितं ग्रहीतुं दातुं वा न लभते, ततस्तं न कल्पत । एतदेवाह-

[भा. ३७३६] अविरिक्को खलु पिंडो सो चेव विरेइतो अपिंडो उ ।
भद्दगपंतादीया धुवा उ दोसा विरेकेवि ।।

वृ- अविरिक्तोऽविभक्तीकृतः खलु भवति पिण्डः सागारिकपिंडः स एव विरेचितः पृथक्कृतो भवत्यपिंडः सागारिकपिण्डो न भवतीति भावः । यद्येवं तर्हि स ग्राह्यस्तत आह-विरक्तोऽपि ध्रुवाभद्रक-प्रान्तादिका दोषास्तस्मात्तत्रापि-

[भा. ३७३७] जा उ संथडियाओ सागारिय व संतिया न खलु कप्पे ।
जाओ असंथडियाओ सूतस्स य ताओ कप्पंति ।।

वृ- सागारिकसत्का असागारिकेण सह संस्तृतास्ताः खलु न कल्पन्ते यास्त्वसंस्तृताः सूतस्य सूप-कारस्य सम्बन्धितया जातास्ताः कल्पन्ते । तदेवमौषधिसूत्रद्वयं भावितमधुनाम्रफलसूत्रद्वयं भावयति-

[भा. ३७३८] वल्ली वा रुक्खो वा सागारिवसंति उ भएज्ज परं ।
तेसिं परिभोगकाले समणाण तहिं कहं भणियं ।।

वृ- वल्ली वा सागारिकसत्को वृक्षो वा सागारिकसम्बन्धिपरम्परस्यावग्रहं भजेत् । तत्र तेषां वल्लीवृक्षाणां फलपरिभोगकाले श्रमणानां कथं भणितं किं कल्पते किं वा न कल्पते इति एष गाथासंक्षेपार्थः । साम्प्रतमेनामेव व्याचिख्यासुः प्रथमतो वृक्षवल्लीव्याख्यानमाह-

[भा.३७३९] फणसं व चिंच तलनालिकेरमादी हवंति फलरुक्खा ।
लोमसिय तउसि मुद्दिय तंबोलादी य वल्लीतो ।।

वृ- पनस आम्रश्चिञ्चा विञ्जनिका आम्बिली इत्यर्थः । तलस्ताली नालिकेरी इत्येवमादयो भवन्ति फलवृक्षाः लोमसिका त्रपुषिका ताम्बूलीका इत्येवमादिका वल्ल्यः तदेवं वृक्षा वल्ल्यश्चोक्ताः ।

[भा.३७४०] परोग्गहं तु सालेणं अक्कमेज्ज महीरुहो ।
छिंदामित्ति य तेनुत्ते ववहारो तहिं भवे ।।

वृ- महीरुहो वृक्ष आम्रादिः सागारिकसक्तः । शलया गाथायां पुंस्त्वं प्राकृतत्वात् विवर्धमानः परावग्रहमाक्रमेत् । अत्र परो ब्रूते इयं शाखामदीयमवग्रहमाक्रामति । ततश्छिनद्मि एवं तेनोक्ते व्यवहारस्तत्र भवेत्कथमित्याह-

[भा.३७४१] सागारियस्स तहियं केवतिओ उग्गहो मुणेयव्वो ।
ववहार तिहा च्छिन्नो पासाय गड्ढे विती तिरिए ।।

वृ- सागारिकस्य शय्यातरस्य कियान् अवग्रहो ज्ञातव्य इति व्यवहारकारिभिश्चिन्तितं ततः शास्त्रं परिभाव्य व्यवहारस्त्रिधा ऊर्ध्वाधस्तिर्यगभेदतश्छिन्नः । तत्र ऊर्ध्वतोऽवग्रहस्य परिमाणे प्रासादो यावत्प्रमाणमूर्ध्वं प्रासादस्योक्तं तावदूर्ध्वमवग्रह इत्यर्थः । अधोऽवग्रह प्रमाणं पानीयं प्रमाणमित्यर्थः । तिर्यग्वृत्तिः एतदेवाह-

[भा.३७४२] उड्ढं अहे य तिरियं परिमाणं तु वत्थुणं ।
खायमुसियमीसं वा, तं वुच्छंति हो दियं ।।

वृ- ऊर्ध्वमधस्तिर्यक्त्वपरिमाणं वास्तूनां भवति तच्च वास्तु त्रिधोदितं तद्यथा-खातमुच्छ्रितं मिश्रं च खातोच्छ्रितं तत्र ऊर्ध्वतः परिमाणमाह-

[भा.३७४३] अट्ठसयं चक्किणं चोयट्ठी चेव वासुदेवाणं ।
बत्तीसं मंडलीए सोलसहत्था उ पागतिए ।।

वृ- अष्टाधिकं शतं हस्तानामूर्ध्वतश्चक्रवर्तिनां प्रासादो भवति । चतुःषष्टिर्वासुदेवानां द्वात्रिंशत् माण्डलिकस्य षोडशहस्ताः प्राकृतिके प्राकृतजनसम्बन्धिनि प्रासादे ।

[भा.३७४४] भवणुज्जाणादीनं एसुस्सेहो उ वत्थुविज्जाए ।
भणितो सिप्पिनिहिम्मि उ चक्कीमादीनि सव्वेसिं ।।

वृ- शिल्पिनिर्धौ वास्तुविद्यायां सर्वेषामपि चक्रवर्त्यादीनां भवनोद्यानादीनामेष उत्सेधो भणितस्ततः षोडशहस्ता ऊर्ध्वतोऽवग्रहस्य परिमाणमधो यावत् पानीयं तिर्यग्वृत्तिरिति ।

[भा.३७४५] एवं च्छिन्ने उ ववहारे परो भणइ सारियं ।
कप्पेमि हंते सालाई ततो भणइ (आह) सारितो ।।

वृ- एवमुक्तेन प्रकारेण व्यवहारे च्छिन्ने परः सागारिकं भणति कल्पयामि च्छिनद्मि अहं तवाम्रादिवृक्षसत्कं शाखादि, आदिशब्दात् प्रशाखापल्लवादिपरिग्रहस्तत आह सागारिकः ।

[भा.३७४६] मा से कप्पेहि सालादि दाहंते फलनिक्कयं ।
तत्थ च्छिन्ने अच्छिन्ने वा सुत्तसाफल्लमाहियं ।।

वृ- मा मम वृक्षस्य शाखादि कल्पय यतस्ते फलानि निष्क्रयं दास्यामि । तत्र एतावन्ति फलानि

दातव्यानीति छिन्नं, सामान्यतः फलानि दातव्यानीत्यच्छिन्नं तत्र छिन्ने अच्छिन्ने वा यथायोगं सूत्रद्वयस्य साफल्यमाख्यातम् । अत्र पर आह-

[भा.३७४७] साहूणं व न कप्पइ सुत्तमाहु निरत्थयं ।
गेलद्धाण उमेसु गहणं तेसिं देसियं ।।

वृ- केचिदाहुः सूत्रद्वयमिदं निरर्थकं यतः साधूनामाम्राणि सचित्तत्वान्न कल्पन्ते । आचार्य आह- तेषामाम्रफलानां ग्लानत्वे अध्वनि शेषभिक्षाया अलाभे अवमौदर्ये च ग्रहणं दर्शितं कथितं महर्षिभिः । अतो न निरर्थकमिति-

[भा.३७४८] अविरिक्सारिपिंडो विरिक्काविय सारि दिट्ठ न विकप्पे ।
अदिट्ठ सारिएणं कप्पंति तहि घेत्तुं जे ।।

वृ- अविरक्तान्यविभक्तनि फलानि सागारिकपिंडस्ततो न कल्पते, विभक्तान्यपि च सागारिकेण दृष्टानि न वै कल्पन्ते ततो अदृष्टानि सागारिकेण ग्रहीतुं कल्पन्ते । जे इति पादपूरणे । उपसंहारमाह-

[भा.३७४९] एवं अत्तट्ठाए सयं परुढाण वावि भणियमिणं ।
इणमन्नो आरंभो समणट्ठा वाविए सम्मि ।।

वृ- एवमुक्तप्रकारेणात्मार्थमारोपितानां स्वयं वा परुढानामिदमनन्तरोक्तं भणितम् । साम्प्रतमस्मिन् वृक्षे श्रमणार्थे वापिते अयं वक्ष्यमाणोऽन्य आरंभस्तमेव दर्शयति-

[भा.३७५०] वल्ली वा रुक्खो वा कोई रोएज्ज संजयट्ठाए ।
तेसिं परिभोगकाले समणाण तहिं कहं भणियं ।।

वृ- वल्लीर्वा वृक्षान्वा कश्चित्संयतानामर्थाय रोपयेत् । तत्र तेषां फलानां परिभोगकाले श्रमणानां कथं भणितं किं कल्पते किंवा न कल्पते इत्यर्थः । अत्र सूरिराह-

[भा.३७५१] तस्स कड निट्ठियादी चउरो भंगे विभावइत्ताण विसमेसु ।
जाण विसमं नियमा उ समो समग्गहणे ।।

वृ- तस्य कृतं तत्तस्य निष्ठितमिति प्रथमः, तस्य कृतमन्यस्य निष्ठितमिति द्वितीयः, अन्यस्य कृतं तस्य निष्ठितमिति तृतीयः, अन्यस्य कृतमन्यस्य निष्ठितमिति चतुर्थः । तत्र तस्य संयतस्य निमित्तं कृतमारोपितं वृक्षादि तथा तस्यैव संयतस्य निमित्तं निष्ठितं निष्ठां नीतमचित्तीकृतमित्यर्थः एष प्रथमभङ्गार्थः । एवं शेषाणामपि भङ्गानामर्थः परिभावनीयः, तत्र तस्य कृतं तस्य निष्ठितमित्यादीन् चतुरो भङ्गान् विभाव्य विषमयोर्भङ्गयोर्गृह्णतोर्विषममसंयमं जानीयात्तन्निमित्तं निष्ठानयनात् समयोर्द्वितीय-चतुर्थयोर्भङ्गयोर्ग्रहणे समं संयमं जानीयात् अन्यनिमित्तं निष्ठितत्वात् । पर आह-ननु श्रमणार्थं स आरोपितस्ततः कथं द्वितीये भङ्गे कल्पते ? सूरिराह-

[भा.३७५२] कामं सो समणट्ठा वुत्तो तहवि य न होइ सो कम्मं ।
जं कम्मलक्खणं खलु इह हं वुत्तं न पस्सामि ।।

वृ- काममनुमन्यामहेस वृक्षः श्रमणार्थमारोपितः तथाप्यसौ कर्म न भवति यतो यत्कर्मलक्षणं खलु तीर्थकरगणधरैर्भक्तं, तदिह इ पाठ पूरणे, न पश्यामि किं तत्कर्म लक्षणमत आह-

[भा.३७५३] सचित्तभावविकलीकयंमि दव्वंमि मग्गणा होइ ।
कामग्गहणा उ दव्वे सचेयणे फासुभोईणं ।।

वृ- यत्सचित्तभावविकलीकृतमचित्तीकृतं द्रव्यं तत्र प्रासुकभोजिनां मार्गणा भवति । तत आधाकर्मिकचिन्तापि तत्रैव युक्ता नान्यत्र सचेतने तु द्रव्ये का मार्गणा नैव काचित् सचित्ततया तस्य ग्रहणासंभवात्ततो न तदपेक्षया आधाकर्मिकत्वमिति, तदेवमारोपितरुपकृतनिष्ठितविषये कल्प्याकल्प्यविधिरुक्तः । सम्प्रति छिन्नरुपकृतनिष्ठितविषये तमाह-

[भा.३७५४] संजयहेउं छिन्नं अत्तट्ठोवक्खडं तु तं कप्पे ।
अत्तट्ठाच्छिन्नं पि हु समणा निट्ठियमकप्पं ॥

वृ- अत्रापि भङ्गचतुष्टयं तस्य कृतं तस्य निष्ठितं १ तस्य कृतमन्यस्य निष्ठितं २ अन्यस्य कृतं तस्य निष्ठितं ३ अन्यस्यकृतमन्यस्य निष्ठितं ४ । अत्र कृतं छिन्नं पाकादिकरणातो निष्ठं नीतम् । तत्र प्रथमभङ्गे सर्वथा न कल्पते । चतुर्थस्तु भङ्ग एकान्तशुद्धो द्वितीयभङ्गमधिकृत्य पूर्वार्धमाह-संयतहेतोःसंयतनिमित्तं च्छिन्नमात्मार्थमुपस्कृतं निष्ठं नीतं तत्कल्पते तृतीयभङ्गमधिकृत्याह- आत्मार्थं च्छिन्नमपि श्रमणार्थ-निष्ठितमकल्प्यं । सम्प्रति बीजान्युदकं चाधिकृत्याह-

[भा.३७५५] बीयाणी च वावेज्ञा अगडं व खणेज्ञ संजयट्ठाए ।
तेसिं परिभोगकाले समणाणं तहिं कहं भणियं ॥

वृ- बीजानि शाल्यादिसत्कानि वपेत् अवटं च खानयेत् संयतार्थं, तेषां परिभोगकाले तत्र श्रमणानां कथं भणितं कल्प्यमकल्प्यं वा । सूरिराह-

[भा.३७५६] दुच्छडाणियं च उदयं जइ हेउं निट्ठियं च अत्तट्ठा ।
तं कप्पइ अत्तट्ठा कयं तु जइ निट्ठियमकप्पं ॥

वृ- अत्रापि प्राग्विव भङ्गचतुष्टयं । तत्राद्यो भङ्ग एकान्तेनाशुद्धश्चरमस्त्वेकान्तशुद्धः द्वितीयभङ्गमधि-कृत्याह-यतिहेतोस्तण्डुला द्विच्छडीकृता उदकं वा संयतहेतोरवटादानीतं उभयसमपि च निष्ठितम-चित्तीकृतमात्मार्थे तत् कल्पते । तृतीयभङ्गमधिकृत्याह- कृतं द्विच्छटीकृतास्तण्डुला अवटादानीतं पानीयं निष्ठितं तु यतिनिमित्तं तदकल्प्यमिति पुनरपि पर आह-

[भा.३७५७] समणाण संजतीण व दाहामि जो किणेज्ञ अट्ठाए ।
गावीमहिसीमादी समणाण तहिं कहं भणियं ॥

वृ- श्रमणानां संयतीनां दुग्धादि दास्यामीति बुद्‌ध्या तेषामर्थाय गोमहिष्यादिकं यः क्रीणीयात्तत्र श्रमणानां कथं कल्प्यमकल्प्यं वा भणितं सूरिराह-

[भा.३७५८] संजयहेउं दूढा न कप्पए य सयमट्ठा ।
पामिच्चिय कीया वा जइ वि समणट्ठया धेनू ॥

वृ- यद्यपि च धेनुर्गोरुपा महिषीरुपा वा श्रमणार्थमयमित्यात्मीयां धेनुं दत्वा परकीया याचिता क्रीता वा यदि संयतहेतोर्दुग्धा ततो न कल्पते । अथ स्वयमात्मनोऽर्थाय दुग्धा तर्हि कल्पते ।

[भा.३७५९] चेइयदव्वं विभया करेज्ञ केई नरो सयट्ठाए ।
समणं वा सोवहियं विक्केज्ञा संजयट्ठाए ॥

वृ- चैत्यद्रव्यं चौराः समुदायेनापहृत्य तन्मध्ये कश्चिन्नर आत्मीयेन भागेन स्वयमात्मनोऽर्थाय मोदकादि कुर्यात् । कृत्वा च संयतानां दद्यात् ।

[भा.३७६०] एयारिसंमि दव्वे समणाण किंनु कप्पई धेत्तुं ।

चेइयदव्वेण कयं मुल्लेण वजं सुविहियाणं ।।

[भा.३७६१] तेन पडिच्छा लोए विगरहिया उत्तरे किमंग पुन ।
चेइय जइ पडिनीए जो गेण्हइ सावि हु तहेव ।।

वृ- एतादृशेन द्रव्येण, गाथायां सप्तमी तृतीयार्थे, यत् आत्मार्थे कृतं तत् श्रमणानां किं नु ग्रहीतुं कल्पते । सूरिराह-यच्चैत्यद्रव्येण यच्च वा सुविहितानां मूल्येनात्मार्थे कृतं तद्दीयमानं न कल्पते किं कारणमिति चेदुच्यते स्तेनानीतस्य प्रतीच्छा प्रतिग्रहणं लोकेऽपि गर्हिता किमङ्ग पुनरुत्तरे तत्र सुतरां गर्हिता यतश्चैत्ययतिप्रत्यनीके चैत्यचतिप्रत्यनीकस्य हस्तात् यो गृह्णाति सोऽपि हु निश्चितं तथैव चैत्ययति-प्रत्यनीक एव । कस्मादित्याह-

[भा.३७६२] हरिया हडिया सा खलु ससत्तितो उग्गये हरा गुरुगा ।
एवं तु कया भत्ति न वि हानि जा विना तेन ।।

वृ- स खलु स्तेनानीतप्रतीच्छा हृताहृतिका भण्यते स्तेनैर्हृतस्य स्तेनहरणं हृताहृतिका यत एवं तस्मात्स्वशक्तितश्चैत्यद्रव्यं सोपधिकं वा श्रमणमुद्भ्रमयेत् उत्पादयेत् । इतरथा प्रायश्चित्तं चत्वारो गुरुकाः । एवं च सति कृता भक्तिर्भवति । प्रवचनस्य या च तेन विना हानिः, सापि न भवति, पुनः पृच्छति-

[भा.३७६३] जा तित्थयराणं कया वंदन आवरिसनादि पाहुडिया ।
भत्तीहिं सुरवरेहिं समणाण तहिं कहं भणियं ।।

वृ- या तीर्थकराणां सुरवरैर्भक्त्या वन्दना वर्षणादिका आदिशब्दात् पुष्पवृष्टिप्रकारत्रया-दिकरणपरिग्रहः प्राभृतिका कृता तत्र श्रमणानां कथं भणितं । किं तत्र स्थातुं कल्पते न वा अत्र सूरिराह-

[भा.३७६४] जइ समणाण न कप्पइ एवं एगानि या जिनवरिंदा ।
गणहरमादी समणा अकप्पए न वि य चिट्ठति ।।

वृ- तस्यां प्राभृतिकायां श्रमणानामवस्थातुं कल्पते भगवतः प्रवचनातीतत्वात् । अन्यच्च यदि श्रमणानां न कल्पते तत एकाकिनो जिनवरेन्द्रा भवेयुर्यतो गणधरादयः श्रमणा अकल्पिकेनैव तिष्ठन्ति ।

[भा.३७६५] तम्हा कप्पइ ठाउं जह सिद्धायणंमि होइ अविरुद्धं ।
जम्हा उ न साहम्मी सत्था अम्हं ततो कप्पे ।।

वृ- तस्मात्कल्पते स्थातुं यथा सिद्धायतने भवत्यवस्थानमविरुद्धं, तथात्रापीति भावः । यस्मात् शास्ता तीर्थकरोऽस्माकं न साधर्मिकः प्रवचनातीतत्वात्ततः कल्पते एतदेवाह-

[भा.३७६६] साहम्मियाण अट्ठो चउव्विहो लिंगओ जह कुटुंबी ।
मंगल सासयभत्तीए जं कयं तत्थ आदेसो ।।

वृ- साधर्मिकाणामर्थाय कृतं न कल्पते, स च चतुर्विधस्तत्र लिङ्गतोऽसाधर्मिकस्तीर्थकरो यथा कुटुम्बी, ततस्तस्मिंन्निमित्तं कृतं कल्पते, अन्यच्च भगवतां मङ्गलनिमित्तं शाश्वतो मोक्षस्तन्निमित्तं वा भक्त्या यत्क्रियते समवसरणमायतनं तत्रादेशोऽनुज्ञावस्थानस्येति भावः । सम्प्रत्यतिप्रसङ्गनिवारणार्थमाह-

[भा.३७६७] जइ वि य नाहाकम्मे भत्तिकयं तह विवज्जियं तेहिं ।
भत्ती खलु होति कया जिनान लोगेवि दिट्ठं तु ।।

वृ- यद्यपि भक्तिकृतमायतनादि भवति तत्राधाकर्म तथापि तद्वर्जयद्भिः खलु भक्तिर्जिनानां कृता भवति । इदं तु लोकेऽपि दृष्टं तदेव दर्शयति ।

[भा.३७६८] बंधित्ता कासवतो वयणं अट्ठपुडसुद्ध पोत्तीए ।
पत्थिवमुवासते खलु वित्तिनिमित्तं भया चेव ।।

वृ- काश्यपः कौटुम्बिको वृत्तिनिमित्तं भयाद्वा पार्थिवमुपास्ते खल्वष्टपुट्या शुद्धया पोतिकया वदनं मुखं बध्वा एवमत्रापि पार्थिवस्थानीयायास्तीर्थकरप्रतिमाया भक्तिनिमित्तं नायतनं प्रविशन्ति को दोष इत्यत आह-

[भा.३७६९] दुब्भिगंध परिस्सावी तनुरप्पे सण्हाणिया ।
दुहा [illegible] ठंति न चेतिए ।।

[भा.३७७०] तिनि वा कड्ढए जाव थुतितो तिसिलोइय ।
तावत्थ अनुन्नायं कारणंमि परेण वि ।।

वृ- एषा तनुः स्नापितापि दुरभिगन्धप्रस्वेदपरिश्राविणी तथा द्विधा वायवोऽधोवायुनिर्गमः (१) उच्छ्वासनिःश्वासनिर्गमश्च (२) । तेन कारणेन चैत्ये चैत्यायतने साधवो न तिष्ठन्ति । अथवा श्रुतस्तवानन्तरं तिस्रः श्रुतीः त्रिश्लोकिकाः श्लोकत्रयप्रमाणा यावत्कर्षति तावत्तत्र चैत्यायतने स्थानमनुज्ञातं, कारणेन कारणवशात्परेणाप्यवस्थानमनुज्ञातमिति-

**मू. (२३७)** *सत्तसत्तमिया नं भिक्खूपडिमा एगूणपन्नए राइंदिएहिं एगेन छन्नउएणं भिक्खासएण अहासुत्तं अहाकप्पं अहामग्गं अहातच्चं अहासम्मं फासया पालिया तीरिया किट्टिया आणाए अनुपालिया भवइ ।।*

[भा.३७७१] सागारिय अग्गहणे अन्नाउंछं फुडं समक्खायं ।
सो होउ भिग्गहो खलु पडिमा य अभिग्गहो चेव ।।

[भा.३७७२] अन्नाउंछं विसुद्धं घेत्तव्वं तस्स परीमाणं किं ।
कालंमि य भिक्खासु य इति पडिमासुत्तसंबंधो ।।

वृ- पूर्वसूत्रेषु सागारिकपिण्डो न ग्राह्य इत्युक्तं सागारिकपिंडाग्रहणे स्फुटमज्ञातोञ्छग्रहः खलु भवत्यभिग्रहः प्रतिमाप्यभिग्रहं अभिग्रहप्रस्तावात्सागारिकसूत्रानन्तरं प्रतिमासूत्रस्योपनिपातः । अथवान्यथा सम्बन्धः सागारिकपिण्डप्रतिषेधतोऽज्ञातोञ्छविशुद्धं ग्रहीतव्यमित्याख्यातं, तस्य भिक्षाकालेषु किं परिमाणमिति प्रश्नावकाशमाशङ्कय प्रतिमासूत्रमुपन्यस्तवान् । एष प्रतिमासूत्रसम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-सप्तसप्तका दिनानां यस्याः सा सप्तसप्तकिकाः सप्तकशब्दककारस्य मकारः प्राकृतत्वात् । नमिति वाक्यालङ्कारे भिक्षुप्रतिमा एकोनपञ्चाशता रात्रिंदिवैरेकेन षन्नवतेन भिक्षाशतेन यथासूत्रं सूत्रानतिक्रमेण यावत्करणात्- 'अहाकप्पं अहामग्गं जाव किट्टिया अनुपालिया भवति' इति परिग्रहस्तत्र यथाकल्पं यथाविधि सूत्रोक्तविध्यनतिक्रमेणेत्यर्थः । यथामार्गं ज्ञानदर्शनचारित्राणामविराधनेन । अहातच्चंति यथातथ्यमेकान्ततः सूत्रानुसारेणापादितसत्यं। अहासम्मं यथा सम्यक् त्रिविधेनापियोगेनापरितास्यता सम्यक्करणं । स्पर्शिता सेविता । विराधना रक्षणतः। अत एव शोधिता अतीचारलेशेनाप्यकलङ्कनात् । तीरिता तीरं नीता पर्यन्तनीता इत्यर्थः । कीर्तिता आचार्याणां कथिता यथा प्रतिमा मया समाप्ता । आज्ञया तीर्थकरोपदेशेन अत्र पालिता भवति । एवमष्टाष्टकिका नवनवकिका दशदशकिका सूत्राण्यपि भावनीयानि-

**मू. (२३८)** *अट्ठअट्ठमियाणं भिक्खुपडिमा चउसट्ठिए राइंदिएहिं दाहिय अट्ठासिएहिं भिक्खासएहिं*

*अहासुत्तं जाव अनुपालिया भवइ ।*

**मू. (२३९)** *नवनवमियाणं भिक्खुपडिमा एगासीए राइंदिएहिं चउ हियपंचुत्तरेहिं भिक्खासएहिं अहासुत्तं जाव अनुपालिया भवइ ॥*

**मू. (२४०)** *दस दसमियाणं भिक्खु पडिमा एगेणं राइंदियसएणं अद्धछट्ठेहिय भिक्खासएहिं अहा सुत्तं जाव अनुपालिया भवइ ॥*

**वृ-** विशेषस्तु पाठसिद्धः । एष सूत्रचतुष्टयसंक्षेपार्थः ।

**[भा. ३७७३]** अह सुत्तसुत्तदेसा कप्पो उ विधिए मग्गणाणादी ।
तच्च तु भवे तत्थं सम्मं जं अपरितंतेन ॥

**[भा. ३७७४]** फासियजोगतिएणं पालियमविराहि सोहिते चेव ।
तीरियमंतंपाविय किट्टिय गुरु कहणा जिनमाणा ॥

**वृ-** यथा सूत्रमिति सूत्रादेशात् यथाकल्पमित्यत्र कल्पो विधिर्यथामार्गमित्यत्र मार्गो ज्ञानादि । यथा तथ्यमित्यत्र तद्यं नाम तथ्यं, यथा सम्ममिति सम्यग् नाम यदपरिताभ्यताकरणं, स्पर्शिता योगत्रिकेण सेविता पालिता अविराधिता शोधिताप्येवमेव अविराधनेनै चेत्यर्थः । तीरिता अंतं प्रापिता, कीर्तिता गुरुणां कथनतः आज्ञा जिनस्य तीर्थकृतः द्वितीया षष्ठ्यर्थः प्राकृतत्वात् ।

**[भा. ३७७५]** पडिमा उ पुव्वभणिया पडिवज्जइ को तिसंघयणमादी ।
नवरं पुण णाणत्तं कालच्छेए य भिक्खासु ॥

**वृ-** प्रतिमा भिक्षोः प्रतिमाः पूर्वमाचारदशासु भणिताः ताः कः प्रतिपद्यते ततः आह-तिसंघयणत्ति आद्येषु त्रिषु संहननेषु अन्यतर संहननोपेतः प्रतिपद्यते, चतुर्थादिषु तु संहननेषु वर्तमानो न प्रतिपद्यते । आदिशब्दात्सोऽपि सूत्रार्थतदुभयोपेतो गच्छे कृतपरिकर्मा सातिशयो न निरतिशयो निरतिशय इति परिग्रहः । तृतीयं च संहननं यावदार्यरक्षितस्तावदनुवृत्तं । ततः आरतो व्यवच्छिन्नं नवरं पुनर्नानात्वमत्र कालच्छेदे भिक्षासु च तत्र कालच्छेदमाह-

**[भा. ३७७६]** एगूणपन्नचउसट्ठि गासती सयं बोधव्वं ।
सव्वासिं पडिमाणं कालो एसत्ति तो होइ ॥

**वृ-** सप्तसप्ततिकायाः काल एकोनपञ्चाशत् रात्रिं दिवानि अष्टा अष्टकिकायाः चतुःषष्टिर्नवन-वकिकाया एकाशीतिर्दशदशकिकायाः शतं रात्रिंदिवानां बोद्धव्यं । सर्वाप्रतिमानामधिकृत-सूत्रचतुष्टयोपेतानामेष एतावान् भवति कालः । कथं पुनः सप्तसप्तकिका भवतीत्यत आह-

**[भा. ३७७७]** पढमाए सत्तगा सत्तपढमे तत्थ सत्तए ।
एक्केक्कं गेण्हई भिक्खं बिइए दोन्नि दोन्निओ ॥

**[भा. ३७७८]** एवमेक्केक्कियं भिक्खं छुभिज्जेक्कसत्तगे ।
गेण्हती अंतिम जाव सत्तसत्त दिनेदिने ॥

**वृ-** प्रथमायां प्रतिमायां सप्तसप्तकिका भवन्ति । तत्र प्रथमे सप्तके प्रतिदिवसमेकैका भिक्षा गृह्णाति । द्वितीये सप्तके प्रतिदिवसं द्वे द्वे भिक्षे । एवं तृतीयादिषु सप्तकेष्वेकैकेषु एकैका भिक्षामधिकां प्रक्षिपेत यावदन्तिमे सप्तके दिने दिने सप्त सप्तभिक्षा गृह्णाति । इयमत्र भावना-तृतीये सप्तके प्रतिदिवसं । तिस्र-स्तिस्रो भिक्षा गृह्णाति । चतुर्थे चतस्रश्चतस्रः पञ्चमे पञ्च पञ्च, षष्ठे षट् षट्, सप्तमे सप्त सप्तेति ।

[भा.३७७९] अहवा एक्किक्किं दत्तिजा सत्तक्कसत्तए ।
आदेसो अत्थि एसोवि सीहविक्कमसन्निभो ॥

वृ- अथवा एष द्वितीयोऽप्यादेशो यथा एकैकस्मिन् सप्तके प्रत्येकं प्रथमदिनादारभ्य प्रतिदिवसमेकैकां वर्धयेत् यावत् सप्तमे दिवसे । इयमत्र भावना-प्रथमे सप्तके प्रथमे दिवसे दिवसे एकांभिक्षां गृह्णाति, द्वितीये द्वे, तृतीये तिस्रः, चतुर्थे चतस्रः, पञ्चमे पञ्च, षष्ठे षट् सप्तमे सप्त एवं द्वितीये तृतीये चतुर्थे पञ्चमे षष्ठे सप्तमे च सप्तके द्रष्टव्यं एव आदेशः सिंहविक्रमसंनिभः यथा सिंहो गत्वा गत्वा पृष्ठतः प्रलोकयते, एवमेषोऽपि सप्तके सप्तके पुनर्मूलतः परावर्तते । गतः कालच्छेदः । संप्रति भिक्षापरिमाणमाह-

[भा.३७८०] छन्नउयभिक्खसयं अट्ठासीया य दोसया हुंति ।
पंचुत्तरा य चउरो अच्छट्ठासया चेव ॥

वृ- सप्त सप्तकिकायां भिक्षापरिमाणं षण्णवतं, शतमष्टाष्टकिकायामष्टशीते द्वेशते भिक्षाणां, नवनवकिकायां पञ्चोत्तराणि चत्वारि शतानि, दशदशकिकायामर्धपञ्चानिशतानि भिक्षाणामिति ।

[भा.३७८१] उद्दिट्ठवग्गदिवसा मूलगुणसंजुया दुहा छिन्ना ।
मूलेणं संगुणिया मानं दत्तीण पडिमासु ॥

[भा.३७८२] पदगयसु वेयसुत्तरसमाहयं दलियमादिना ।
सहियं गच्छगुणं, पडिमाणं भिक्खमाणं मुणेयव्वं ॥

वृ- उद्दिष्टा ये च वर्गाः सप्त सप्तकिकादयः ते दिवसा मूलदिनसंयुताः सप्तादिदिनसन्मिश्राः तदनन्तरं द्विधा छिन्ना अर्धी क्रियन्ते इति भावअ । ततो मूलेन सप्तादिलक्षणेन संगुण्यन्ते संगुणिताः प्रतिमासु दत्तीनां परिमाणं भवन्ति तद्यथा-सप्तसप्तकवर्गदिवसा एकोनपञ्चाशत् ते मूलदिनैः सप्तभिर्युताः क्रियन्ते जाताः षट्पञ्चाशत्, ते अर्धीक्रियन्ते जाता अष्टाविंशतिः, सा मूलेन सप्तकेन गुण्यते आगतं षण्णवतं शतं । तथा अष्टाष्टकवर्गदिवसा श्चतुःषष्टिः ते मूलदिनैः अष्टभिः संमिश्यन्ते जाताः द्वासप्ततिस्तस्या अर्धं क्रियते जाता षट्त्रिंशत् सा मूलेन अष्टकेन गुण्यते आगते द्वेशते अष्टाशीते । एवं नवनवकिकायां दशदशकिकायां च यथोक्तं भिक्षापरिमाणमानेतव्यम् । अत्रैव करणान्तरमाह-

[भा.३७८३] गच्छुत्तर संविग्गे उत्तरहीणं पक्खिवे आदि ।
अंतिमधनमादिजुयं गच्छद्धगुणं तु सव्वधनं ॥

वृ- गच्छ उत्तरेण संवर्गे संवर्ग्यतस्म, । संवर्गो गुणित इत्यर्थः । तस्मिन् उत्तरेण हीने कृते आदिं प्रक्षिपेत् तत अन्तिमधनमागच्छति तदन्तिमधनमादियुतं क्रियते तदनन्तरं गच्छार्धगुणं ततः सर्वधनमागच्छति । तत्र सप्तसप्तकिकायां सप्त आदिः सप्त उत्तरं सप्त गच्छः । ततः सप्तलक्षणो गच्छ उत्तरेण सप्तकलक्षणेन गुण्यते जाताः एकोनपञ्चाशत् । सा उत्तरेण सप्तकेन हीना क्रियते कृत्वा च पुनरादिना सप्तकेनैव युताकर्तव्या । इदं कारणमन्यत्रापि व्यापकं तत एवमुक्तमन्यथाचोत्तरं हानावादिप्रक्षेपे च न कश्चिद्विशेषः तस्या एव एकोनपञ्चाशतो भावात् । तदन्तिमधनं सप्तमे सप्तके भिक्षापरिमाणमित्यर्थः । एतत् आदिना सप्तकेन युतं क्रियते जाता षट् पञ्चाशत् । सा गच्छार्धेन गुण्यते । अत्र गच्छः सप्तकः । स विषमत्वादर्धं न प्रयच्छति ततो गुण्यो राशिः षट्पञ्चाशल्लक्षणोऽर्धी क्रियते । जाता अष्टाविंशति । सा परिपूर्णेन सप्तकलक्षणेन गच्छेन गुण्यते, जातं षण्णवतं शतं । अष्टाष्टकिकायामष्टक आदिरष्टक उत्तरमष्टको गच्छः तत्राष्टकलक्षणो गच्छ उत्तरेणाष्टकेन युतं क्रियते

जाता चतुः षष्टिः सा उत्तर हीना आदियुता क्रियते । तथापि सैव । चतुः षष्टिरेतत् अष्टमेऽष्टके भिक्षापरिमाणं एतदादिना अष्टकेन युतं क्रियते जाता द्वासप्तति: । सागच्छार्धेन चतुष्केन गुण्यते जाते द्वेशतेऽष्टाशीत्यधिके एवं नवनवकिकायां दशदशकिकायां च भावनीयं नवरं नवनवकिकायां नवक आदिर्नवक उत्तरं नवको गच्छो दशदशकिकायां दशक आदि र्दशक उत्तरं दशको गच्छः ।

**मू. (२४१)** *दोपडिमाओ पन्नताओ, तंजहा खड्डिया वा मोयपडिमा महल्लिया वा मोयपडिमा ।*

**मू. (२४२)** *खुड्डियन्नं मोयपडिमं पडिवन्नस्स अनगारस्स कप्पइ, से पढमनिदाहकालसमयंसि वा चरमनिदाहकालसमयंसि वा बहिया गामस्स वा जाव रायहानीए वा वणंसि वा वनदुग्गंसिया वा पव्वयंसि वा पव्वयदुग्गंसि वा भोच्चा आरुभइ चोद्दसमेण पारेइ, अभोच्चा आरुभइ, सोलसमेणं पारेइ, जाए मोए आईयव्वे दिया आगच्छेइ ।*

**मू. (२४३)** *महल्लियणं मोयपडिमं जाव पव्वयदुग्गंसिया, भोच्चा आरुभइ सोलसमेणं पारेइ, अभोच्चा आरुभइ अट्ठारसमेणं पारेइ जाए जाए मोए आइयव्वे दिया आगच्छइ ।*

**[भा. ३७८४]** पडिमाहिगारपगते हवंति मोयपडिमा इमा दोन्नि ।
ता पुन गणम्मि वुत्ता इमा उ बाहिं पुरादीनं ।।

**वृ-** प्रतिमाधिकारः प्रकृतस्तः इमेऽपि द्वे मोकप्रतिमे इह भवतः प्रतिमाप्रस्तावादिमे अपि प्रतिमे अत्रोपन्यस्ते इति भावः । केवलमयं विशेषः । ता अनन्तरोदिताः प्रतिमा गणे स्थितस्योक्ता इमे पुनः पुरादीनां बहिः स्थितस्येति सम्बन्धः । अनेन सम्बन्धेमायातस्यास्य व्याख्या-द्वे प्रतिमे प्रज्ञप्ते तद्यथा क्षुल्लिका च मोकप्रतिमा महती च मोकप्रतिमा मोक कायिकी । तदप्युत्सर्गप्रधानाप्रतिमा मोकप्रतिमा । तत्र क्षुल्लिकाणामिति प्राग्वत् । मोकप्रतिमां प्रपन्नस्यानगारस्य कल्पते से तस्य प्रथम निदाघकालसमये वा चरमनिदाघकालसमये वा बहिर्ग्रामस्य वा यावत्करणान्नगरादिपरिग्रहो राजधान्यां वा वने वा एकजातीयद्रुमसङ्घातो वनं, विदुर्गे वा नानाजातीयद्रुमसंघाते, पर्वते, प्रतीते, पर्वतविदुर्गे अनेकपर्वतसंघातरूपे मुक्त्वा यदि प्रतिमामारोहति प्रतिपद्यते, तदा चतुर्दशेन भक्तेन पारयति समापयति अथा भुक्त्वा आरोहति तदा षोडशकेन भक्तेन पारयति, तेन च जातं मोकं कायिकी पातव्यं आगमने च दिवा आगच्छति । एवं महत्या अपि प्रतिमायाः सूत्रं वाच्यं । विशेषोऽपि पाठसिद्ध एव ।

**[भा. ३७८५]** सव्वातो पडिमातो साधुं मोयंति पावकम्मेहिं ।
एएण मोयपडिमा अहिगारो इहं तु मोएण ।।

**वृ-** मोचयति पापकर्मेभ्यः साधुमिति मोकाउद्रादित्वादन्यदपि कुर्वन्ति सा चासौ प्रतिमा च मोकप्रतिमा । एतेनान्वर्येन सर्वा अपि प्रतिमाः साधुं पापकर्मभ्यो मोचयन्तीति कृत्वा मोकप्रतिमाः प्राप्नुवन्ति । ततो विशेषप्रतिपादनार्थमिहाधिकारः । प्रयोजनं मोकेन मोका परित्यागप्रधाना प्रतिमा मोकप्रतिमेति । सम्प्रति विषमपदव्याख्यानमाह-

**[भा. ३७८६]** एगदुमो होइ वनं एगजातीयजे जहिं रुक्खा ।
विवरीयं तु विदुग्गं एसेव य पव्वए विगमो ।।

**वृ-** एकद्रुम एकजातीया ये वृक्षास्ते यत्र विद्यन्ते तत् भवति वनं । नानाजातीयद्रुमरूपं विदुर्गं । एष एवगमः पर्वतेऽपि द्रष्टव्यः नानारूपपर्वतः पव्रतविदुर्गं । सम्प्रति येन विधिना बहिर्निर्गच्छति तं विधिमाह-

**[भा. ३७८७]** निसज्जं च चोलपट्टं कप्पं घेत्तूणमत्तगं चेव ।

एगंते पडिवज्जति काऊण दिसाणं वालोयं ।।

**वृ-** निषद्यां सोत्तरां चोलपट्टकल्पं मात्रकं च कायिकिमात्रकं गृहीत्वा ग्रामादेर्बहि र्विनिर्गच्छति। विनिर्गत्यैकान्ते प्रतिमां प्रतिपद्यते । तत्र कायिकीसमागमे तां मात्रके व्युत्सृज्यानापाते असंलोके दिशं वा लोकं कृत्वा आपिवति । यद्यपि स ज्ञानातिशयाऽतिशयज्ञानेनैव जानाति सागारिकोऽस्ति न वेति तथापि सामाचारी पालिता भवत्विति कृत्वा दिशमालोकं कृत्वा व्युत्सृजत्यापिवति च ।

**[भा.३७८८]** पाउणइ तं पवाए तत्थ निरोहेन जिज्जए दोसा ।
सिण्हाए परित्तणं च कुणति अच्चुण्हवाते वा ।।

**वृ-** तं कल्पं प्रतिवाते प्रवृत्ते प्रावृणोति तत्र च प्रावरणे कृते वातनिरोधेन यः प्रवाते वातसंपर्केणापादितो दोषः जीर्यते । यदि वा स कल्पः सिण्हादि परित्ताणं श्लक्ष्णादि सचित्तरजः परित्राणं करोति, । अथवा अत्युष्णे वाते वाति स प्रावृयते, मोकमापिवेदित्युक्तं तत्र मोकस्वरुपमाह-

**[भा.३७८९]** साभाविय च मोयं जाणइ जं यावि होइ विवरीयं ।
पाणबीयससणिद्धं ससरक्खाधिरायं न पिएज्जा ।।

**वृ-** स प्रतिमाप्रतिपन्नो यन्मोकं स्वाभाविकं यच्च भवति विपरीतं तत्सर्वं जानाति । तत्र स्वाभाविक-मापिवती । इतरत्तु विपरीतं प्राणसंसक्तं बीजसन्मिश्रसस्निग्धं सरजस्काधिराजकलितं न पिबति ।

**[भा.३७९०]** किमिकुट्ठे सिया पाणा ते य उण्हाभितावियां ।
मोएण सह मेज्जण्हु निसिरेत्ते उ छाहिए ।।

**वृ-** कृमिसंकुलं कोष्टमुदरं कृमिकोष्टे स्युः प्राणाः कृमिरुपास्ते चोष्णेनाभितापिताः सन्तो मोकेन कायिक्या सार्धमागच्छेयुस्ततस्तात् छायायां निसृजेत् । बीजादिप्रतिपादनार्थमाह-

**[भा.३७९१]** बीयं तु पोग्गला सुक्का ससणिद्धा उ चिक्कणा ।
पडंति सिथिले देहे खमणुण्हाभितावियां ।।

**वृ-** बीजं नाम शौक्राः पुद्गलास्ते च द्विधा चिक्कणा अचिक्कणाश्च । तत्राचिक्कणा बीजग्रहणेन गृहीता-श्चिक्कणाः सस्निग्धा उच्यन्ते । ते उभयेऽपि शिथिले देहे क्षपणेनोष्णेन तापिताः सन्तः पतन्ति ।

**[भा.३७९२]** पमेहकणिया तो य ससरक्खं पाहु सूरयो ।
सो उ दोसकरो वुत्तो तं च कज्जं न साहए ।।

**वृ-** प्रमेधकणिकाः सरजस्कं पदैकदेशे पदसमुदायोपचारात् सरजस्काधिराजं प्राहुः सूरयः, स च सरजस्काधिराज आपीयमानो दोषकर उक्तः । तच्च कार्यं रोगविमुक्तिलक्षणं न साधयति । ततः सोऽपि न पीयते ।

**[भा.३७९३]** बहुगा होइ मत्ता ऊ आइल्लेसे दिनेसु उ ।
कमेण हायमानो उ अंतिमे होइ वा न वा ।।

**वृ-** आदिमेषु कायिकी मात्रातो बह्वी भवति ततः क्रमेण हीयमाना अन्तिमे दिने भवति वा न वा ।

**[भा.३७९४]** पडिणी अनुकंपा वा मोयं वड्ढंति गुज्झगा केई ।
बीजादिजुयं जं वा विवरीयं उज्झाए सव्वं ।।

**वृ-** प्रत्युनीकोऽनुकम्पत इत्यनुकम्पता केचित् गुह्यका मोकं कायिकीं वर्धयन्ति, यद्वा बीजादियुतं कुर्वन्ति, । सर्वमेतत् स्वाभाविकं न भवति । किन्तु विपरीतमतस्त्यजति सम्प्रति द्रव्यादितो मार्गणामाह-

[भा.३७९५] दव्वे खेत्ते काले भावंमि य होइ सा चउविगप्पा ।
दव्वे उ होइ मोयं खेत्ते गामाधाण बहिं ।
[भा.३७९६] काले दिया व रातो भावे साभाविवं व इयरं वा ।
सिद्धाए पडिमाए कम्पविमुक्को हवइ सिद्धो ।।
[भा.३७९७] देवो महड्ढितो वावि रोगातो ऽहवा मुच्चती ।
जायती कणगवन्नो उ आगते य इमो विही ।।

वृ- सा क्षुल्लिका मोकप्रतिमा चतुर्विकल्पा चतुराश्रिता भवति । तद्यथा द्रव्ये क्षेत्रे काले भावे च । तत्र द्रव्ये भवति मोकमापातव्यं, क्षेत्रे ग्रामादीनां बाहः काले दिवा रात्रौ वा । भावे तन्मोकं स्वाभाविकमितरद्वा । तत्र स्वाभाविकमाविपत(पिब) ति इतरच्चजति । अस्यां च प्रतिमायां सिद्धायां कश्चित्कालं कुर्वन् कर्मविमुक्तः सिद्धो भवति । यदि वा देवो महर्द्धिकः अथवा काले कारणाभावे रोगाद्विमुच्यते । शरीरेण कनकवर्णो जायते, 'पालितायां प्रतिमायामुपाश्रयमागतस्यायं वक्ष्यमाणो विधिस्तमेवाह-

[भा.३७९८] उण्होदगे य थोवे तिभागमद्धे तिभाग थोवे य ।
महुरगभिन्ना महुरगएक्केक्कं सत्तदिवसाइं ।।

वृ- उष्णोदकादिकमधिकृतगाथोपन्यस्तमुक्तक्रमेण एकैकं सप्तदिवसान् कुर्यादिति गाथापदयोजना । भावना त्वियम्-सप्तदिवसानुष्णोदकेन ओदनं भुंक्ते । च शब्दात् द्वितीयान् सप्तदिवसान् यूषमाण्डेन यापयेत् एतदेवाह-

[भा.३७९९] ओयणं सिणोदएणं दिने सत्त भुंजिउं ।
जूसमंडेण वा अन्न दिनो जावेइ सत्तओ ।।

वृ- पाठसिद्धं थोवत्ति अन्यान् तृतीयान् सप्तदिवसान् त्रिभागे उष्णादके स्तोकं मधुरमोल्लणं मिश्रयित्वा तेन सह भुंक्ते, तिभागेत्ति तदनन्तरमन्यान् सप्तदिवसान् मधुरस्योल्लणस्य त्रिभागं द्वौ भागावुष्णोदकस्य मीलयित्वा तेन सह भुंक्ते अद्धे इति ततः परमन्यान् सप्तदिवसानर्थं मधुरोल्लणस्य मिश्रयित्वा तेन सह कूरं भुंक्ते तिभागत्ति तदनन्तरमन्यात् सप्तदिवसान् त्रिभागमुष्णोदकस्य द्वौ भागौ मधुरोल्लणस्य मिश्रयित्वा तेन सह भुंक्ते । थोवेयत्ति ततः परमन्यान् सप्तदिवसान् मधुरोल्लणोस्तोकमुष्णोदकं प्रक्षिप्य तेन सह भुंक्ते । एवं पञ्चमसप्तकान् मधुरकभिन्नान् स्तोकोदकान् मधुरकसहितान् भुंक्ते । एतदेवाह-

[भा.३८००] मधुरोल्लणेण थोवेण मीसे तइयसत्तए ।
तिभागव्वजुयं चेव तिभागो थोवमिस्सियं ।।

वृ- पूर्वव्याख्यानुसारेणेयं गाथा स्वयं भावनीया अधिकार्थाभावात् तदन्तरमन्यान् मधुरकेण उल्लणेन सह उपलक्षणमेतत् । अन्यैर्वायूषप्रकारैः सह भक्तं भुंक्ते । ततः परमन्यान् सप्तसप्तकान् यानि तस्य व्याधेरविरुद्धानि तैर्दध्यादिभिः सह भावयित्वा भुंक्ते । तदनन्तरं सर्वप्रचारा भवति । एतदेवाह-

[भा.३८०१] महुरेणं सत्तत्रे भाविता उल्लणादिना ।
दहिमादीन भावेत्ता ताहेव सत्त सत्तए ।।

वृ- अत्रादिशब्ददन्येषां यूषप्रकाराणां परिग्रहः । दहिमादीण भावित्ता ताहेवा सत्त सत्तए व्याख्यातम्-

[भा.३८०२] एवमेसा उ खुड्डीया पडिमा होति समाणिया ।
भोच्चा रुभंते चोदसेणं, अभोच्चा सोलसेन तु ।।

वृ- एवमेषा क्षुल्लिका मोकप्रतिमा भवति सा च भुक्त्वा आरोहता प्रतिपद्यमानेन चतुर्दशकेन समानीता समाप्तिं नीता भवति । अभुक्त्वा प्रतिमानेन षोडशकेन आरुहन्ते इत्यत्र सप्तमी तृतीयार्थे प्रतिपत्तव्या । सम्प्रति महतीं मोकप्रतिमां व्याख्यातुमाह-

[भा.३८०३] एमेव महल्लीवि उ अट्ठारसिमेण नवरि निट्ठाति ।
परिहारो अट्ठदिवसा नहु रोगि बलिसस वा एसा ।।

वृ- एवमेव अनेनैव प्रकारेण महत्यपि मोकप्रतिमा द्रष्टव्या नवरं सा अष्टादशकेन निष्ठां याति, परिहारस्तपोऽष्टौ दिवसान् न च स रोगी भवति प्रतिमाप्रभावात्, । यदि वा बलिन एषा प्रतिमा भवति नेतरस्य ।

[भा.३८०४] पडियत्ती पुन तासिं चरमनिदाधे व पढमसरए वा ।
संघयणधितीजुत्तो फासयति दोवि एयातो ।।

वृ- प्रतिपत्तिः पुनरेतयोः प्रतिमयोश्चरमनिदाघे वा प्रथमशरदि वा एते च द्वे अपि प्रतिमे स्पर्शयति आद्यसंहननत्रयोऽन्यतमसंहननयुक्तो धृत्या च वज्रकुड्यसमानः

मू. (२४४) *संखादत्तियस्स णं भिक्खुस्स पडिग्गह धारिस्स गाहावइ कुल-पिंडवाय पडियाए अनुपविट्ठस्स जावइयं केइ अंतो पडिग्गहंसि उवइत्तु दलएज्जा, तावइयाओ दत्तीओ वत्तवं सिया, तत्थ से केइ छप्पएण वा दूसएण वा वालएण वा अंतो पडिग्गहंसि दलएज्जा सावि णंसा एगादत्ती वत्तव्वं सिया, तत्थ से बहवे भुंजमाणा सव्वे ते सयं सयंपिंडं साविय अंतो पडिग्गहंसि उवित्ता दलएज्जा सव्वाविणं सा एगा दत्ती वत्तवं सिया ।।*

मू. (२४५) *संखादत्तियस्स णं भिक्खूस्स पाणिपडिग्गहियस्स जाव वत्तव्वं सिया ।*

[भा.३८०५] स साहियपतिन्नो उ नीरोगो दुहतो बली ।
मियं गेण्हइ सुद्धुच्छ सुत्तस्स समुप्पया ।।

वृ- स मोकप्रतिमसाधकः साधितप्रतिज्ञो । नीरोगो द्विधातो धृत्वा संहनने च बली मितं दत्तिसंख्यया च परिमितं शुद्धमुंछं गृह्णाति ततो दत्तिपरिमाणप्रतिपादनार्थमन्यस्य सूत्रद्वयस्य समुत्पादः प्रवृत्तिर्गाथायां स्त्रीत्वं प्राकृतत्वात् । एष सूत्रसम्बन्धः । अनेन सम्बन्धेनायातस्यास्य व्याख्या-संख्यापरिमाणं दत्तिकायाः सूत्रं पुस्त्वमार्षत्वात् यावत् यावत् कश्चिदन्तः पतद्गृहे उवित्ता अवनस्य दद्यात् । तत्र तावत्यो दत्तयइति वक्तव्यं स्यात, किमुक्तं भवति ? एकस्यामपि भिक्षायामुत्पादितायां यावतो वारानच्छिद्य विच्छिद्य ददाति तावत्यस्तत्र दत्तय इति तत्र से तस्य साधोः कश्चित् छब्बकेन वंशदलमयेन दूष्येण वा वस्त्रेण वालकेन वा गोमहिष्यादिबालकृतेन गालनादिना अन्तः पतद्ग्रहे अवनस्य दद्यात् । सापि नमिति वाक्यालङ्कारे । एका दत्तिरिति वक्तव्यं स्यात् । तत्र से तस्य साधोर्बहवो भुंजाना भिक्षार्थं साधुमागतं दृष्ट्वा सर्वे ते स्वीयं पिण्डं संहत्य एकं पिण्डं कृत्वा अन्तः पतद्गृहे उवित्ता अवनस्य दद्यात् । सर्वापि नमिति पूर्ववत् । एका दत्तिरिति वक्तव्यं । एतत्सूत्रं पतद्ग्रहवारिण उक्तं, । सम्प्रति पाणिपतद्ग्रहविषयमाह पाणीत्यादि पाणिपद्ग्रहस्यापि विषये एवमेव सूत्रं वक्तव्यमिति सूत्रसंक्षेपार्थः ।

[भा.३८०६] हत्थेण व मत्तेण वि भिक्खा होइ समुज्झया ।
दत्तितो जत्तिए बारे, खिवती होंति तत्तिया ।।

वृ- हस्तेन वा मात्रेण वा या समुद्यता उत्पादिता भिक्षा सा भिक्षेत्युच्यते दत्तयः पुन स्तामेव भिक्षां यावतो वारानवच्छिद्य क्षिपन्ति तावत्यो भवन्ति-

[भा.३८०७]　　अव्वोच्छिन्न निवाया उ दत्ती होइ उ चेतरा ।
एगानेगासु चत्तारि विभागा भिक्खदंतिसु ।।

वृ- अव्यवच्छिन्ननिपातात् तु दत्तिर्भवति इतरा सा भिक्षा च भवति, भिक्षादत्तिषु च एकानेकासु विषये चत्वारो विकल्पास्तानेवाह-

[भा.३८०८]　　एगाभिक्खा एगा दत्ती एगाभिक्ख अनेगा दत्तितो ।
नेगातोवि य एगा नेगातो चेव नेगातो ।।

वृ- एकाभिक्षा एका दत्तिरिति प्रथमो विकल्पः । एकाभिक्षा अनेका दत्तय इति द्वितीयः । अनेका भिक्षा एका दत्तिरिति तृतीयः । अनेकाभिक्षा अनेकादत्तय इति चतुर्थः । तत्र प्रथमभङ्ग एवं दायकेन व्यवच्छिन्ना भिक्षा दत्ता सा एका भिक्षा एका च दत्तिः, द्वितीयभङ्गे व्यवच्छिन्ना दत्ता, तृतीयभङ्गे सूत्रमिदम् तत्थ से बहवो भुंजमाणा इत्यादि जाव एगा सा दत्ती वत्तव्वं सिया अस्येयं भावना केचित् पथिकाः कर्मकरा वा एकत्रावकाशे पृथक् पृथक् उपस्कृत्य भुंक्ते भुञ्जते तेषामेकः परिवेषकः, साधुना तत्र च भिक्षार्थमागत्य धर्मलाभः समुत्सृष्टस्ततः सः परिवेषक आत्मीयान् ददामीतिव्यवसितस्तैरपि शेषकैः समं भण्यते प्रत्येकमस्मदीयमध्यादपि साधवे भिक्षां देहि ततस्तेन परिवेषकेण सर्वेषां सक्तान् गृहीत्वा एकत्र संमील्याव्यवच्छिन्नं दत्तं । एवमनेकाभिक्षा एकादत्तिरित्युपपद्यते । चतुर्थभङ्गे ध्येवमेव, नवरं व्यवच्छिन्नं दानमिति । अत्र दत्तिष्वेकानेकदायकभिक्षाभेदतोऽष्टौ भङ्गास्तान् उपदिदर्शयिषुः प्रथमतो एकानेकदायकभिक्षाविषयां चतुर्भङ्गीमाह-

[भा.३८०९]　　एमेव एगानेगे दायगमिभक्खासु होइ चउभंगो ।
एगो एगं दत्ती एगो नेगाओ नेगएगा उ ।।
नेगा य अनेगातो पाणिसु पडिग्गहधरेसु । (गाथार्द्धः)

वृ- एवमेव अनेनैव प्रकारेण एकस्मिन् अनेकस्मिंश्च दायके एकानेकभिक्षासु चतुर्भङ्गी भवति । गाथायां पुंस्त्वं प्राकृतत्वात् तामेव चतुर्भङ्गीमाह-एको दायक एकां भिक्षां ददाति ?, एको अनेकाः २, अनेके एकां ३, अनेके अनेकाः ४ । एते चत्वारो भङ्गा पाणिषु पाणिभोजिषु पतद्ग्रहधरेषु च द्रष्टव्याः । अत्र यथा दत्तिष्वष्टौ भङ्गास्तथा दर्शयति-

[भा.३८१०]　　एगो एगं एक्कसि एगो एक्कं बहुसो उ वारे ।
एगोनेगा एक्क सि एगो नेगा य बहुसो य ।।

वृ- को दायक एकां भिक्षामेकवारं ददाति १, एको दायक एकां भिक्षां बहुशो वारान् विच्छिद्य २ ददाति २, एको दायको अनेका भिक्षा एकवारमव्यवच्छेदेन ददाति ३ एको दायकोऽनेका भिक्षा बहुशो वारान् विच्छिद्य विच्छिद्य ददाति ४ । एवमेकं दायकमधिकृत्य एकानेकभिक्षासु दत्तिविषया चतुर्भङ्गभिहिता । साम्प्रतमनेकान् दाकानधिकृत्य एकानेकभिक्षासु दत्तिविषयां चतुर्भङ्गीमाह-

[भा.३८११]　　नेगा एगं एक्कसि नेगाएगं च नेगसो वारे ।
नेगानेगाएक्कसि नेगा नेगा य बहुवारे ।।

वृ- अनेकेदायका एकां भिक्षामेकवारमव्यवच्छेदेन ददाति ५ । अनेकेदायका एकां भिक्षामनेकशो

वारान् विच्छिद्य विच्छिद्य ददाति ६ । अनेके दायका अनेका भिक्षा एकत्र संपिण्डय एकवारं ददाति ७ । अनेके दायका अनेका भिक्षा विच्छिद्य विच्छिद्य वहून् वारान् ददाति ८ ।

[भा.३८१२] पाणिपडिग्गाहियस्सवि एसेव कमो भवे निरवसेसो ।
गणवासे निरवंक्खो सो पुन सपडिग्गहो भइतो ।।

वृ- पाणिपतद्ग्रहकस्यापि एष एवानन्तरोदितः क्रमो भवति निरवशेषो ज्ञातव्यः । स च पाणिपतद्ग्रभोजी गणवासे निरपेक्षाः स पतद्ग्रहो भजितो विकल्पितः कदाचिद्भवति कदाचिन्नेति ततस्तस्य पाणिपतद्ग्रहे भजिता

*मू. (२४६) तिविहे उवहडे पन्नत्ते तंजहा सुद्धोवहडे, फलिओवहडे, संसट्ठोवहडे ।।*

[भा.३८१३] दोण्हेगतरे पाते गेण्हती उ अभिग्गहाति दो वहडं ।
दुविहं एगाविहं वा अभिहडसुत्तस्स सबंधो ।।

वृ- अनन्तरसूत्रद्वये पतद्ग्रहधारी पाणिपतद्ग्रहिकश्चोक्तस्तयोश्च पाणिपतद्ग्रहयोरन्यस्मिन् पात्रे पतद्ग्रही गृह्णाति उपहृतमपि त्रिविधं द्विविधमेकविधं वा, अभिगृही गृह्णातीत्याभिग्रहिक प्रस्तावादत्रोपहृतस्तत्र रुपोपक्षेपः । एषोऽभ्याहृतसूत्रस्य सम्बन्धः । सूत्राक्षरसंस्कारस्त्वेवं त्रिविधमुपहृतं प्रज्ञप्तं तद्यथा शुद्धोपहृतं फलितोपहृतं संसृष्टोपहृतं च अमीषां पदानां व्याख्यानां करिष्यति-

[भा.३८१४] सुद्धे संसट्ठेया पलितोवहडे य तिविहमेक्केक्कं ।
तिन्नेगदुगातिन्निय तिगसंजोगो भवे एक्को ।।

वृ- उपहृतशब्दः प्रत्येकामभिसम्बान्ध्यते । त्रिविधमुपहृतं सूत्रेऽभिहितं । तद्यथा शुद्धोपहृतं, संसृष्टोपहृतं फलितोपहृतं च, एकैकं पुनस्त्रिविधं-यदवगृह्णाति, यच्च संहरति, यथास्ये प्रक्षिपति । एतदनन्तरसूत्रे वक्ष्यते, । अत्रैककसंयोगे त्रयो भङ्गास्तद्यथा शुद्धोपहृतं वा गृह्णाति १ फलितोपहृतं वा गृह्णाति २ संसृष्टोपहृतं वा गृह्णाति ३ द्विकसंयोगेऽपि व्यस्तद्यथा शुद्धोपहृतं फलितोपहृतं च १ शुद्धोपहृतं संसृष्टोपहृतं २ फलितोपहृतं संसृष्टोपहृतं च ३ त्रिकसंयोगे एकः शुद्धोपहृतं फलितोपहृतं संसृष्टोपहृतं च गृह्णाति । सर्वसंख्यया सप्त भङ्गा एतेषामेकतरमभिगृह्णाति अभिगृही ।

[भा.३८१५] सुद्धं तु अलेवकडं अहवणसुद्धोदनो भवे सुद्धं ।
संसट्ठ आदत्तं लेवडमलेवडं चेव ।।

[भा.३८१६] फलियं पहेणयादी वंजणभक्खेहि वा विरइयं तु ।
भोतुमणस्सोपहियं पंचमपिंडेसणा एसा ।।

वृ- यत् अलेपकृतं काञ्जिकेन पानीयेन वा सन्मिश्रीकृतं तत् शुद्धं । अथवा शुद्धोदनो व्यञ्जनरहितो भवति शुद्धं, तदपि नियमादलेपकृतं संसृष्टं नाम भोक्तुकामेनात्तं गृहीतं । किमुक्तं भवति ? यत्स्थाले परिवेषितं । तत ग्रहणाय हस्तः क्षिप्तो न तावदद्यापि मुखे प्रक्षिपति । अत्रान्तरे साधुरागतो भिक्षार्थं यत् लेपकृतमलेपकृतं वा संसृष्टमित्युच्यते फलितं नाम यत् व्यञ्जनैर्भक्ष्यैर्वा नानाप्रकारैर्विरचितं प्रहेणकादि प्रहेणकं लाभनकमादि शब्दात् सरजस्कानां दानाय कल्पितं परिगृह्यते । उपहृतशब्दस्यार्थमाह-यत्र भोक्तुमनस उपहृतमित्युच्यते एषा च पञ्चमी पिण्डेषणा ।

[भा.३८१७] सुद्धग्गहणेन पुन होइ चउत्थीवि एसणा गहिया ।
संसट्ठे उ विभासा फलियनियमा उ लेवकडं ।।

वृ- शुद्धग्रहणेन चतुर्थ्यप्येषणा अल्पलेपकृता नामिका गृहीता द्रष्टव्या । संसृष्टे विभाषा कदाचित्त-लेपकृतं कदाचिन्नेति फलितं तु नियमाल्लेपकृतमेवेति ।

मू. (२४७) *तिविहे उग्गहिए पन्नत्ते तं० जं च ओगिण्हति जं च साहरइ जं च आसगंसि पक्खिवति ।*

[भा.३८१८] पगया अभिग्गहिया खलु सुद्धयरा ते य जोगवुड्डीए ।
इति उवहडसुत्तातो तिविहं दुविहं च पग्गहियं ।।

वृ- प्रकृता खल्वनन्तरसूत्रे शुद्धोपहृतादिष्वभिग्रहास्ते चाभिग्रहाः शुद्धतरा भवन्ति । योगवृद्ध्या उत्तरोत्तरयोगवृद्धिकरणेन इति अस्मात्कारणात् उपहृत-सूत्रादनन्तरं त्रिविधं द्विविधं वा प्रग्रहीतमुक्तमनेन सम्बन्धेनापातस्यास्य व्याख्या त्रिविधमवग्रहीतं प्रज्ञप्तं । यदवगृह्णाति यच्च संहरति यच्च आस्यके प्रक्षिपति-

मू. (२४८) *एगे पुन एवमाहंसु दुविहे ओग्गहिए पन्नत्ते तंजहा जं च ओगिण्हइ जं च आसगंसि पक्खिवइ ।।*

वृ- एके एवमाहुरेके पुनरेवमाहु द्विविधमवग्रहीतं प्रज्ञप्तं यदवगृह्णाति यच्च संहृतमिति एष सूत्राक्षरसंस्कारः । सम्प्रति भाष्यविस्तरः

[भा.३८१९] पग्गहियं साहरियं पक्खिवयं तं च आसए तइयं ।
तिविहे य दुविहं पुन पग्गहियं चेय साहरियं ।।

वृ- यत् प्रगृहीतं यच्च संहृतं यच्चास्ये प्रक्षिप्यमाणमेतत् त्रिविधमवगृहीतं द्विविधं पुनरवगृहीत-मादेशानान्तरेणदं प्रगृहीतं संहृतं च अथादेसस्य किं लक्षणमत आह-

[भा.३८२०] बहुसुत्तमाइन्नं न उ बाहियन्नेहिं जुगपहाणेहिं ।
आदेसो सो उ भवे अहवावि नयंतरे विगप्पो ।।

वृ- यत् बहुश्रुतैराचीर्णं न चान्यैर्युगप्रधानैर्बाधितं स भवति नाम आदेशः । अथवा नयान्तरविकल्प आदेशः । तद्वशात्सूत्रमेवमुपन्यस्तमिति । साम्प्रतमवगृहीतादिपदव्याख्यानार्थमाह-

[भा.३८२१] साहिरमाणं गहियं दिज्जंतं जं च होइ पाउग्गं ।
पक्खेवए दुगुंछा आदेसो कुडमुहादीसु ।।

वृ- इह अनानुपूर्व्या ग्रहणं बन्धानुलोमतस्तत एवं द्रष्टव्यं गृहीतं नाम यत् दीयमानं यच्च भवति प्रायोग्यं संहृतं नाम संह्रियमाणं आस्ये प्रक्षिप्यमाणं प्रतीतं । अत्राह-ननु जं च आसगंसि पक्खिवइ इत्य-स्यायमर्थः । यदास्यके मुखे प्रक्षिपति तथोच्छिष्टमिति लोके जुगुप्सा ततः कथं तत् गृह्यते । सूरिराह-आदेसो कूडमुहादीसु कुटो घटस्तस्य यन्मुखं तदादिष्वादिशब्दात् पिठरमुखादि परिग्रहः । तत्र आदेशो व्याख्यानं । विमुक्तं भवति । पिठरमुखादीन्यधिकृत्य जं च आसगंसि पक्खिवति इति सूत्रं व्याख्यातमतो न कश्चिद्दोषः । अथ उपहृतसूत्रस्यावगृहीतसूत्रस्य च परस्परं कः प्रतिविशेषस्तत आह-

[भा.३८२२] उग्गहियामि विसेसो पंचमापिंडेसणातो छट्टीए ।
तं पि हु अलेवकडं नियमा पुव्वुद्धडं चेव ।।

वृ- उपहृतसूत्रे पञ्चमी पिण्डेसणआ उक्ता अवगृहीतसूत्रे पुनरस्मिन् अयं विशेषो यत् पञ्चम-पिण्डेषणातः परा या षष्ठी पिण्डेषणा तस्या अभिधानमिति तदपि बहु निश्चितं यल्लेपकृतं नियमाच्च पूर्वोध्धृतमिति । सम्प्रति दिज्जंतं च जं होति पायोग्गमित्यस्य व्याख्या-

[भा.३८२३] भुंजमाणस्य उक्खित्तं पडिसिद्धंतं च तेन उ ।
जहन्नोवहडं तं तू हत्थस्स परियत्तणे ।।

वृ- परिवेषकः पटिकायां कूरं गृहीत्वा दक्षिणहस्तेन तलं प्रेषया यस्य दातुकामस्तस्य भाजने क्षिपामीति व्यवसितं तच्च तथा भुञ्जानस्योत्क्षिप्तं, तेन भुञ्जानेन प्रतिसिद्धं पर्याप्तं मा मह्यं देहि, । अस्मिन् देशकाले साधुना तत्र प्रातेन धर्मलाभितं ततः परिवेषको ब्रूते-साधाधारस्य पतद्ग्रहं साधुना पात्रं धारितं । तत्रानेन प्रक्षिप्तं इदं हस्तस्य हस्तमात्रस्य परिवर्त्तनात् । गाथायां सप्तमी पञ्चम्यर्थे जघन्यमुपहृतं भवति । एतेन दीयमानमिति व्याख्यातं, यच्च भवति प्रायोग्यमित्यनेन शुद्धसंसृष्ट्योः प्रागुक्तयोरन्यतरत् गृहीतम् । तदेवं जं च ओगिण्हइ इति व्याख्यातं । सम्प्रति जं च साहरियमिति व्याख्यानाय तत्साहरिएत्ति गाथाशकलमुक्तं तद्भावयति-

[भा.३८२४] अह साहरिमाणं तु वट्टेउं जो उ दावए ।
दलेच वलितो तत्तो छट्ठाएं सावि एसणा ।।

वृ- अथ वर्त्तयितुं संहूयमाणं यो दापयेत् तस्य वचनतः स परिवेषकः तस्मात्स्थानात् मनागप्यचलितो दद्यात् । एतत्संह्रियमाण-मुच्यते । एषापि षष्ठी एषणा द्रष्टव्या । जं च आसगंसि पक्खिवइ व्याख्या-

[भा.३८२५] भुत्तसेसं तु जं भूयो छुभंती पिठरे दए ।
संवद्दंतीव अन्नस्स आसगंमि पकासए ।।

वृ- प्रल्हादननिमित्तं किलिञ्जादिभाजने विशाले उत्ताने च क्षिप्तं ततो भोक्तुमुपविष्टानां दत्वा यत् भुक्तशेषं तत् भूयः पिठरे क्षिपन्ती साधवे दद्यात् । यदि वा अन्यस्य भाजने प्रकाशके प्रकाशे आस्यके तस्य मुखे संवर्धयन्ती दद्यात् ।

उद्देशकः - ९ - समाप्तः

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता व्यवहार सूत्रे नवमोद्देशकस्य (भद्रबाहुस्वामि रचिता निर्युक्तियुक्तं) संघदाणगणि विरचितं भाष्यं एवं मलयगिरि आचार्येण विरचिता टीका परिसमाप्ता ।**

## उद्देशकः १०

वृ- तदेवं व्याख्यातो नवम उद्देशकः । सम्प्रति दशम आरभ्यते । तत्र चेदमादिसूत्रं-

**मू. (२४९)** *दो पडिमाओ पन्नताओ तं जहा जवमज्झा य चंदपडिमा य वयरमज्झचंदपडिमा, जवमज्झं चंदपडिमं पडिवन्नस्स अनगारस्स मासं निच्चं वोसट्ठकाए चियत्तदेहे जे केई परीसहोवसग्गा समुवज्जंति तं जहा दिव्वा वा माणुसा वा तिरिक्खजोणिया वा अनुलोमा वा पडिलोमा वा तत्थ अनुलोमा ताव वंदेज्जा वा नमंसिज्जा वा सक्कारेज्जा वा सम्माणेज्जा वा कल्लाणं मंगलं देवयं चेइयं पज्जुवासेज्जा, पडिलोमा अन्नयरेणं दंडेण वा अट्ठिण वा जोएण वा वेत्तेण वा कसेण वा काए आउट्टेज्जा ते सव्वे उपन्ने सम्मासहेज्जा खमेज्जा तितिक्खिज्जा अहियासेज्जा जवमज्झण्हं चंदपडिमं पडिवन्नस्स अनगारस्स सुक्कपक्खस्स पडिवए कप्पइ एगा दत्ती भोयणस्स पडिगाहित्तए, एगा पाणस्स सव्वेहि दुप्पयचउप्पयादिएहि आहारकंखीहिं सत्तेहिं पडिनियत्तेहिं अन्नायउंछं सुद्धोवहडं कप्पइ से एगस्स भुंजमाणस्स पडिग्गाहित्तए नो दुण्हं नो तिण्हं नो चउण्हं नो पंचण्हं नो गुव्विणीए नो बालवत्थाए नो दारग*

पेज्जमाणिए नो से कप्पइ अंतो एलुयस्य दोवि पाए साहड्ढल (य) भाणीए पडिगाहित्तए अहपुन एव जाणेज्जा एगं पायं अंतो किच्चा एगं पायं बाहिं किच्चा एलुयं विक्खंभइत्ता एयाए एसणाए लभेज्जा आहारेज्जा एयाए एसणाए नो लभेज्जा नो आहारेज्जा, बीयाए कप्पंति दोदत्तीओ भोयणस्स पडिगाहित्तए दो पानगस्स सव्वेहिं दुप्पयचउप्पयाइएहिं आहारकंखीएहिं सत्तेहिं पडिनियत्तेहिं अन्नायं उंछं सुद्धोवहडं कप्पइ जाव नो आहारेज्जा एवं तंतियाए तिन्नि जावपन्नरसिए पन्नरस, बहुलपक्खस्स पडिवए से कप्पइ चउद्दससदत्तीओ बीयाए तेरस्स जाव चउद्दसीए एगदत्ती भोयणस्स एगपानगस्स सव्वेहिं दुप्पयचउप्पय- जाव नो आहारेज्जा अमावसाए से य अभत्तट्ठभवई एवं खलु एसा जवमज्झचंदपडिमा अहासुत्तं जाव अनुपालिया भवइ, ।

**मू. (२५०)** वइरमज्झण्हं चंदपडिमं पडिवन्नस्स अनगारस्स मासं निच्चं वोसट्ठकाए चियत्तदेहे जाव अहियासेज्जा वइरमज्झण्हं चंदपडिमं पडिवन्नस्स अनगारस्स बहुलपक्खस्स पडिवए कप्पइ पन्नरस्स दत्तीओ भोयणस्स पडिगाहित्तए, पन्नरस्स पाणगस्स सव्वेहिं दुप्पयचउप्पयजाव नो आहारेज्जा बीयाए से कप्पइ चउदस्स एवं अमावसाए एगा दत्ती सुक्का पडिवए से कप्पइ दो दत्तीओ बीयाए तिन्नी जाव चउद्दसीए पन्नरस्स पुन्नमाए अभत्तट्ठे भवइ एवं खलु एसा वइरमज्झचंदपडिमा अहासुत्तं जाव अनुपालिया भवइ ।

**[भा.३८२६]** पगया अभिग्गहा खलु एस उ दसमस्स होइ संबंधो ।
संखा य समनुवत्तइ आहारे यानि अहिकारो ।।

**वृ-** प्रकृता: खलु नवमोद्देशकचरमसूत्रेष्वभिग्रहा अत्रापि ते एवाभिग्रहा: प्रतिपाद्या इत्येष दशमस्य दशमोद्देशकादिसूत्रस्य सम्बन्ध: । अथवा नवमोद्देशकचरमानन्तरसूत्रे आहारे अभिहिता संख्या सा अत्राप्यनुवर्तते । तत आहारविषयसंख्याप्रस्तावाद्दशमोद्देशकादिसूत्रस्याधिकारप्रवृत्ति: । सूत्राक्षराणि सामान्यत: सुप्रतीतानि, विशेषस्तु भाष्यकारो व्याख्यानयति-

**[भा.३८२७]** जवमज्झ वयरमज्झा वोसट्ठ चियत्त तिविह तीहिं तु ।
दुविहे वि सहइ सम्मं अन्नाउंछे य निक्खेवो ।।

**वृ-** यवमध्येतिपदं वज्रमध्येति पदं तथा व्युत्सृष्ट इति त्रिविधमुपसर्गं त्रिभिर्मनोवाक्कायै: सम्यक् सहते यदि वा द्विविधान् उपसर्गान् अनुलोमप्रतिलोमरूपान् त्रिभि: सम्यक् सहते । तथा अज्ञातोंछे च निक्षेप इति व्याख्येयमेष द्वारगाथासंक्षेपार्थ: । साम्प्रतमेनामेव विवरीषु: प्रथमतो यवमध्ये वज्रमध्येति-

**[भा.३८२८]** उवमा जवेण चंदेन वा जवमज्झं चंदपडिमाए ।
एमेव य बिइयाए, वइरं वज्जंति एगट्ठं ।।

**वृ-** यवमध्यचन्द्रप्रतिमाया यवेनोपमा चन्द्रेण च यवस्येव मध्यं यस्या: सा यवमध्या चन्द्रकारा प्रतिमा चन्द्रप्रतिमेति व्युत्पत्ते: । एवमेव द्वितीयाया अपि वक्तव्यम् । वज्रमध्यचन्द्रप्रतिमाया वज्रेणोपमा चन्द्रेण वज्रस्येव मध्यं यस्या: सा वज्रमध्या चन्द्राकारा प्रतिमा चन्द्रप्रतिमा प्राकृतमधिकृत्य वज्रशब्दस्य पर्यायेण व्याख्यानमाह- 'वइरं वज्जंति-एगट्ठं' इयमत्र भावना । शुक्लपक्षस्य प्रतिपदि चन्द्रविमानसदृशस्य पञ्चदशभागीकृतस्य एका कला दृश्यते । द्वितीयायां द्वे कले, तृतीयायां तिस्र: कला, एवं यावत् पञ्चदश्यां परिपूर्णा: पञ्चदश कला: ततो बहुलपक्षस्य प्रतिपदि एकया कलया ऊनो दृश्यते चतुर्दश कला दृश्यन्ते । द्वितीयायां त्रयोदश तृतीयायां द्वादश यावदमावास्यायामेकापि न दृश्यते, तदेवमयं मास आदावूनो मध्ये

सम्पूर्णोऽन्ते पुनरपि परिहीनो याप्यादावन्ते च तनुको मध्ये विपुलः । एवं साधुरपि भिक्षां गृह्णाति शुक्लपक्षस्य प्रतिपदि एकां, द्वितीयस्यां द्वे, तृतीयस्यां तिस्रः यावत्पञ्चदश्यां पञ्चदश । ततो बहुलपक्षस्य प्रतिपदि पुनश्चतुर्दश द्वितीयायां त्रयोदश यावच्चतुर्दशश्यामेकाममावास्यायामुपोषितः । ततश्चन्द्राकारतया चन्द्रप्रतिमा आदावन्ते च भिक्षायास्तनुत्वान्मध्ये विपुलत्वात् यवमध्योपमित-मध्यभागा, तथाऽमूमेव यवमध्यां चन्द्रप्रतिमामधिकृत्यान्यत्रोक्तं ।

"एकैकां वर्धयेद् भिक्षां, शुक्ले कृष्णे च हापयेत् ।
भुञ्जीत नामावास्यायामेष चान्द्रायणविधिः ।।

**वृ-** वज्रमध्यायां चन्द्रेण प्रतिमायां बहुलपक्ष आदौ क्रियते तत एवं भावना । बहुलपक्षस्य प्रतिपदि चन्द्रविमानस्यैका कला दृश्यते, द्वितीयस्यां त्रयोदश, तृतीयस्यां द्वादश यावच्चतुर्दश्यामेका अमावास्यायामेकापि न, ततः पुनरपि शुक्लपक्षस्य प्रतिपदि चन्द्रविमानस्यैका कला दृश्यते, द्वितीयायां द्वे, यावत्पञ्चदश्यां पञ्चदशापि तदयं मास आदावंते च पृथुलो मध्ये तनुको वज्रमप्यादावन्ते च विपुलं मध्ये तनुकमेवं साधुरपि भिक्षा गृह्णाति बहुलपक्षस्य पतिपदि चतुर्दश द्वितीयस्यां त्रयोदश तृतीयस्यां द्वादश यावत् अमावास्यायामुपोषितः ततः पुनरपि शुक्लपक्षस्य प्रतिपदि एकां भिक्षां गृह्णाति द्वितीयस्यां द्वे यावत्पञ्चदश्यां पञ्चदशेति । तत एषापि चन्द्राकारतया चन्द्रप्रतिमा आदावन्ते विपुलतया मध्ये च तनुतया वज्रमध्योपमितमध्यभागा वज्रभागा वज्रमध्या एतदेव यवमध्यस्य चन्द्रप्रतिमामधिकृत्य सूचयन्नाह-

**[भा.३८२९]** पन्नरसे व उ काउं भागे तु सुक्कपक्खस्स ।
जा वड्ढयए दत्ती हवइ ता चेव कालेन ।।

**वृ-** शशिनं शशिविमानं पञ्चदशभागान् कृत्वा यथा शुक्लपक्षस्यादित आरभ्य कलाः प्रतिदिवसं वर्धन्ते, । एवं दत्तयोऽपि आरभ्य या वर्ध्यंते ता एव कालेन कृष्णेन पक्षेण क्रमेण हापयेत् । एवं विपरीत-क्रमेण वज्रमध्यचन्द्रप्रतिमायामपि द्रष्टव्यम् ।

**[भा.३८३०]** भत्तट्ठिओ व खमओ इयरवणे तासि होइ पठवओ ।
चरिमे असद्धवं पुन होइ अभत्तठमुज्जवणं ।।

**वृ-** तयोर्यवमध्यवज्रमध्यप्रतिमयोः प्रस्थापक आरंभे इतरस्मिन् आरंभदिवसात् पाश्चात्ये दिने भक्तार्थो वा भवति, क्षपको वा चरमे चरमदिवसे पुनर्भक्तविपये अश्रद्दधान् श्रद्धामपि न करोति । एतत् यवमध्यचन्द्रप्रतिमामधिकृत्योक्तं । उद्यापनं पुनर्द्वयोरप्यनयोरभक्तार्थमवसेयम् ।

**[भा.३८३१]** संघयणे परियाए सुत्ते अत्थे य जो भवे बलिओ ।
सो पडिमं पडिवज्जइ जवमज्झं वयरमज्झं च ।।

**वृ-** संहनने आद्यत्रयस्यान्यतमस्मिन्पर्याये जन्मतो जघन्येन एकोनत्रिंशतिवर्षेषु उत्कर्षतो देशोनायां पूर्वकोट्यां प्रव्रज्यापर्यायेण जघन्यतो विंशतिवर्षेषु उत्कर्षतो देशोनायां पूर्वकोट्यां सूत्रमर्थश्च जघन्यतो नवमस्य पूर्वस्य तृतीयमाचारवस्तु उत्कर्षतः किञ्चिन्यूनानि दशपूर्वाणि । एवं संहनने पर्याये सति यः सूत्रेऽर्थे च भवति बलिको बलीयान् स प्रतिमां यवमध्यां वज्रमध्यां च प्रतिपद्यते, तदेवं यवमध्या वज्रमध्येति गतम् । इदानीं नित्यं व्युत्सृष्टकाय इति पदं व्याख्यायते-

[भा.३८३२] निच्चं दिवा य रत्तो पडिमाकालो व जत्तितो भणितो ।
दव्वंमि य भावंमि य, वोसटुं तत्थिमं दव्वे ॥

वृ- नित्यं सदा दिवारात्रौ च अथवा यावान् प्रतिमाकालो भणितस्तावन्तं कालं व्युत्सृष्टकायः । तच्च द्विधा-द्रव्ये भावे च । तत्र द्रव्ये इदं वक्ष्यमाणं, तदेवाह-

[भा.३८३३] असिणाण भूमिसयणा अविभूसा कुलवधू पउत्थधवा ।
रक्खइ पतिस्स सेज्जं अनिकामा दव्ववोसट्ठा ॥

वृ- कुलवधूः प्रोषितधवा अस्नाना भूमिशयना अकृतविभूषा एवं द्रव्यव्युत्सृष्टद्रव्या अनिकामा सकामा पत्युः शय्यां रक्षति एतद् द्रव्यव्युत्सृष्टं, भावव्युत्सृष्टमाह-

[भा.३८३४] वातियपित्तियसिंभियरोगायंकेहिं तत्थ पुट्ठो वि ।
न कुणइ परिकम्मं सो किंचिवि वोसट्ठदेहो उ ॥

वृ- तत्र यवमध्यायां वज्रमध्यायां वा चन्द्रप्रतिमायां स्थितो वातिकपैत्तिकश्लेष्मिकरोगातंकैः स्पृष्टोऽपि स व्युत्सृष्टदेहो न किञ्चिदपि परिकर्म करोति । सम्प्रति चियत्तदेहे इति व्याख्यायते तच्च त्यक्तं द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यत आह-

[भा.३८३५] जुद्धपराजियअट्टण फलहिय मल्ले निरुत्त परिकम्मे ।
गूहण मत्थियमल्ले तईयदिने दव्वतो चत्तो ॥

वृ- इदं कथानकं प्रबन्धेनावश्यकटीकायामुक्तमिह तु ग्रन्थगौरवभयान्न लिख्यते । ततस्तस्मादवधारणीयम क्षरयोजना त्वेवम्- अट्टनो नाम मल्ल उज्जयिनीवास्तव्यः सोपारे पत्तने वृद्धतया पराजितस्तेनान्यो फलही मल्लो मार्गितः स सोपारके मात्सिकमल्लेन सह युद्धं दत्तवान् ततः फलही मल्ले निरुक्तं निरवशेषं परिकर्म क्रियते, । इतरस्तु मल्लो गर्वाध्माततया शरीरपीडां गूहयन् न किमपि परिकर्म कारितवान् । ततः परिकर्माकरणतस्तृतीये दिने मारितस्तेन परिकर्माकरणतो यस्त्यक्तो देहः स द्रव्यतस्त्यक्तः । भावतस्त्यक्तमाह-

[भा.३८३६] बंधेज्ज व रुंभेज्ज व कोई व हणेज्ज अहव मारेज्ज ।
वारेइ न सो भयवं, चियत्तदेहो अपडिबद्धो ॥

वृ- स प्रतिमाप्रतिपन्नो भगवान् शरीरेऽप्यप्रतिबद्धो यदि कोऽपि बन्धीयात् अथवा रुन्ध्यात् यदि वा हन्यात् मारयेद्वा तथापि तं न निवारयति, एष भावतस्त्यक्तदेहः । "जे केइ उवसग्गा" इति- व्याख्यानम्-

[भा.३८३७] दिव्वाहि तिन्नि चउहा बारस एवं तु होइ उवसग्गा ।
वोसट्ठग्गहणेणं आयासंचेयणं गहणं ॥

वृ- उपसर्गास्त्रिविधास्तद्यथा-दिव्या मानुषास्तैर्यग्योनाश्च । एते त्रयोऽपि प्रत्येकं चतुर्धा । एवं तु सर्वसंख्यया भवन्त्युपसर्गा द्वादश, ननु चतुर्धा आत्मसंचेतनीया अप्युपसर्गा भवन्ति, ते कस्मात्सूत्रकृता नोक्तास्तत आह-व्युत्सृष्टग्रहणेनात्मसंचेतनग्रहणं । तत्र दिव्याद्युपसर्गभेदानाह-

[भा.३८३८] हासा पदोस वीमंसा पुढो वेसा य दिव्वया चउरो ।
हास पओस वीमंस कुसीला नरगावा चउहा ॥

वृ- दिव्यका उपसर्गाश्चत्वारस्तद्यथा-हासात् क्रीडात इत्यर्थः । प्रद्वेषादवज्ञानात् पूर्वभवसम्बन्धा-

दिकुलात् । विमर्शात् किमयं स्वप्रतिज्ञातश्चलति न वेत्येवंरूपात् । पृथग् विमात्रापक्षस्यात्र हासादिष्वे-वान्तर्भावविवक्षणं कुशीलस्य प्रतिसेवना समाश्रयणं कुशीलप्रतिसेवना ततो यथा ईर्ष्याप्रोषितस्य गृहे रात्रावुषितस्य तद्भार्या चतुष्टयतः ।

**[भा.३८३९]**　भयतो पदोस आहार तह अवच्चलेणरक्खट्ठा ।
तिरिया होंति चउहा, एए तिविहावि उवसग्गा ।।

**वृ-** तैरश्चा भवन्त्युपसर्गाश्चतुर्धास्तद्यथा-भयेन श्वादिर्दशति, प्रद्वेषतो यथा चण्डकोशिको मर्कटादिर्वा, आहारहेतोर्यथा सिंहादिरपत्यलयनरक्षणार्थे यथा काक्यादिः । एवं त्रिविधा उपसर्गा उक्ताः सम्प्रति ये व्युत्सृष्टग्रहणेनात्मसंचेतनीया गृहीतास्तानुपदर्शयति-

**[भा.३८४०]**　घट्टणय पवड थंभण लेसण चउहा उ आयसंचेया ।
ते पुन सन्निवयंती वोसठ्ठदारे न इहं तु ।।

**वृ-** चतुर्धा आत्मना संचिन्त्यन्ते ये ते इत्यात्मसंचेत्यास्तद्यथा-घट्टनतः प्रपतनतः स्तंभनतश्च श्लेष्मतश्च । तत्र घट्टनतो यथा चक्षुषि रजः प्रविष्टं तेन चक्षुर्दुःखयितुमारब्धं अथवा स्वयमेव चक्षुषि गल्के वा किंचित्तु खोल्लप्रभृतिसमुत्थितं घट्टयति । प्रपतनतो यथा मन्दप्रयत्नेन चंक्रम्यमाणः प्रपतति, ततो दुःखाप्यते स्तंभनतो यथा तावदुपविष्ट आस्ते यावत्पादं सुप्तः स्तब्धो जातः । श्लेष्मनातो यथा पादं तावदाकुञ्च्यावस्थितो यावत्तत्र वातेन लग्नः अथवा नृत्तं शिक्षयामीति किंचिदङ्गमतिशयेन नामितं तच्च तत्रैवं लग्नमिति । ये पुनरात्मसंचेतनीया व्युत्सृष्टद्वारे निपतन्ति, न इह, ते उत्पन्ने सम्मं सहति खमइ तितिक्खेइ अहियासेइत्ति चत्वार्यप्येकार्थिकानि पदानि । तत्र सम्यक् सहनमाह-

**[भा.३८४१]**　मन वयण कायजोगेहिं तहि उ दिव्वमादिए तिन्नि ।
सम्मं अहियासेइ, तत्थ सुण्हाए दिठ्ठंतो ।।

**वृ-** त्रिभिर्मनोवाक्कायर्योगैः प्रत्येकं दिव्यादीन् त्रीनुपसर्गान् प्रत्येकं चतुर्भेदान् सम्यगध्यास्ते सहते । तत्र सहनं द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यसहने स्नुषाया दृष्टान्तः । तमेवाह-

**[भा.३८४२]**　सासूससुरुवकोसा देवरभत्तारमादि मज्झिमगा ।
दासादी य जहन्ना जह सुण्हा सहिय उवसग्गा ।।

**वृ-** श्वशुरश्वश्रूरेतावुत्कृष्टौ पूज्यत्वात्, देवरभर्तृका मध्यमा, दासादयो जघन्या यथा तत्कृता उपसर्गाः स्नुषया पोढास्तथा साधुनापि सोढव्या । इयमत्र भावना-स्नुषया अपराधे कृते तां श्वसुरः श्वश्रूश्च हीलयति । सा च हील्यमाना अतीव लज्जते । यद्यपि तानि दुःखोत्पादनानि वचनानि दुरध्यास्यानि तथापि सा तानि सम्यगध्यास्ते चिन्तयति च न सम्यक् अध्यासिष्ये ततः कस्य मेऽवध्वंसो भविष्यति स्नुषावारश्चापयास्यति देवरा अपि चोल्लुण्ठवचनानि भाषन्ते यद्यपि तेषां सा नो लज्जते तथापि न ताननुल्लुण्ठन्ति किन्तु सम्यक् तद्वचनान्यध्यास्ते । दासा अपि च तां स्नुषामुल्लुण्ठयन्ति तथापि किमेतेषां वचनान्यहं गणयामीत्यवगणया सम्यगध्यास्ते न प्रतिवचनं ददाति । एतद् द्रव्यसहनं । यत्सा धुर्द्वादशविधानप्युपसर्गान् कर्मविनिर्जरणार्थं सम्यगध्यास्ते एतदेवाह-

**[भा.३८४३]**　सासुससुरोवमा खलु दिव्वा दियरोवमा य मानुसा ।
दासत्थाणी तिरिया तह सम्मं सो हियासति ।।

**वृ-** तथा वधूदृष्टान्तोक्तप्रकारेण श्वश्रूश्वशुरोपमान् दिव्यान् उपसर्गान्, देवरोपमान् मानुषान्,

दासस्थानीयान् तैरश्चान् उपसर्गान् सम्यगध्यास्ते । सम्प्रति दुविहे चेत्यस्य व्याख्यानार्थमाह-

[भा.३८४४] दुहावेते समासेन सव्वे सामन्नकंटगा ।
विसयानुलोमिया चेव तहेव पडिलोमिया ।।

वृ- अथवा एते उपसर्गाः श्रामण्यस्य कंटका इव श्रामण्यकंटकाः सर्वे समासेन द्विधा प्रतिपादिता-स्तद्यथा विषयानुलोमिका इन्द्रियविषयानुलोमिकास्तथैव प्रतिलोमिका इन्द्रियविषयप्रतिलोमिकाः ।

[भा.३८४५] वंदन-सक्कारादी अनुलोमा बंधवहण पडिलोमा ।
तेवि य खमती सव्वे एत्थं रुक्खेण दिट्ठंतो ।।

वृ- वन्दनसत्कारादयोऽनुलोमा बन्धवधप्रभृतयः प्रतिलोमास्तानपि सर्वान् क्षमते, अत्र वृक्षेण दृष्टान्तस्तमेवाह-

[भा.३८४६] वासी-चंदन-कप्पो जह रुक्खो ईय सुहदुहसमो उ ।
रायदोसविमुक्को सहई अनुलोमपडिलोमे ।।

वृ- वासीचन्दनकल्पा यस्य स वासीचन्दनकल्पोऽथवा कल्पस्तुल्यवाची ततोऽयमर्थः वास्यां वास्या तक्षणे, चंदने चन्दनेनानुलेपने कल्पस्तुल्यो वासीचन्दनकल्पो यथा वृक्षो भवति इत्येवमनुना प्रकारेण रागद्वेषविमुक्तो अत एव सुखदुःखसमो अनुलोमप्रतिलोमान् उपसर्गान् सम्यक् सहते ।

साम्प्रतमन्नाउंछमित्यस्य व्याख्यानमाह-

[भा.३८४७] अन्नाउंछं दुविहं दव्वे भावे य होइ नायव्वं ।
दव्वुंछऽणेगविहं लोगरिसीणं मुनेयव्वं ।।

वृ- अज्ञातोञ्छं द्विविधं तद्यथा द्रव्ये भावे च । तत्र द्रव्योञ्छमनेकविधं लोकर्षीणां तापसानां ज्ञातव्यं । तदेवानेकविधं द्रव्योञ्छमाह-

[भा.३८४८] उक्खल खलए दव्वी दंड संडासए य पोत्तीय ।
आमे पक्के य तहा दव्वोंछे होइ निक्खेवो ।।

वृ- तापसा उंछवृत्तयः । उद्खले चर्छटितेषु तन्दुलेषु ये परिशाटिताः शालितन्दुलादयस्तान् उच्चित्य रन्धन्ति, खलएत्ति खलधान्ये मर्दिते संव्यूढे च यत् शटितं तत् उच्चिन्वन्ति, दव्वीति धान्यराशेर्यदिकया दर्व्या उत्पाट्यते तत् गृह्णन्ति, एवमन्यत्रापि प्रतिदिवसं दण्डत्ति स्वामिमननुज्ञाप्य यत् धान्यराशेरेकया यष्टया उत्पाद्यते तत् गृह्णन्ति, एतदेवमन्यत्रापि प्रतिदिवसं । संडासए इति अंगुष्टप्रदेशिनीभ्यां यत् गृह्यते शाल्यादिकं तावन्मात्रं प्रतिगृहं गृह्णन्ति, यद्यपि बहुकं पश्यति शाल्यादि तथापि न मुष्टिं भृत्वा गृह्णन्ति । पोत्तीयत्ति स्वामिनमनुज्ञाप्य धान्यराशौ पोतिं क्षपन्ति तत्र यत्पोतौ लगति तत् गृह्णन्ति, एवमन्यत्रापि । तथा आमं पक्वं वा यच्चरकादयो भिक्षाप्रविष्टा मृगयन्ते । एष भवति द्रव्योञ्छे निक्षेपः ।

[भा.३८४९] पडिमापडिवन्ने एस भयवमज्ज किर एत्तिया दत्ती ।
आदियतित्ति न नज्जइ अन्नाउंछं तवो भणितो ।।

वृ- प्रतिमाप्रतिपन्न एष भगवान् अद्य किल एतावतीर्दत्तीरादत्ते इति न ज्ञायते तेन तस्य भगवतस्तपो अज्ञातोंछं भवति । एतदेव सविस्तरं भावयति-

[भा.३८५०] दव्वादभिग्गहो सो दव्वे सुद्धुंछमेत्ति या दत्ती ।
एलुगमेत्तं खेत्ते गेण्हइ तइयाए कालम्मि ।।

वृ- तदज्ञातोंछं तपो द्रव्याद्यभिग्रहो द्रव्याभिग्रहः क्षेत्राभिग्रह : कालाभिग्रहो भावाभिग्रहश्च । तत्र द्रव्ये द्रव्याभिग्रहो यत् शुद्धमुंछं गृह्णाति, शुद्धं नाम अलेपकृत् तदपि शुद्धमुंछं गृह्णाति उपनीतं नानुपनीतं तेन पञ्चानामाद्यानां पिण्डैषणानामग्रहणमुपरितन्योश्च द्वयोरेकतरस्या अभिग्रह इत्यावेदितं द्रष्टव्यम् । तथा एतावत्यो दत्तयोऽद्य मया ग्राह्या एष द्रव्याभिग्रहः । क्षेत्रे क्षेत्रविषयेऽभिग्रहे यदेलुकमात्रं विष्कंभ्य गृह्णाति । अत्रापीयं समाचारी यदि द्वावपि पादावेलुकस्यान्तस्तदा न कल्पते, तत्रेदं कारणं यद्युच्च एलुकस्तदा कस्य पादौ प्रतिष्ठितौ न दृश्यते, किं बीजादौ प्रतिष्ठितावुत नेति तस्मादेलुकं विष्कंभ्य यदि नीचे एलुके पाश्चात्यः पादः पतितः शुद्धयति यथा न बीजादौ प्रतिष्ठित इति तदा कल्पते, अत्युच्चे तु न कल्पते इति काले कालाभिग्रहे तृतीयस्यां पौरुष्यां यदिभक्षामटति । सम्प्रति द्रव्याभिग्रहे विशेष-

[भा.३८५१] अन्नाउंछं एगोवनीय निज्जूहिऊण समणादी ।
अगुव्विणिं अबालंती एलुगाविक्खंभणे दोसा ॥

वृ- स प्रतिमाप्रतिपन्नो भगवान् अज्ञातोंछं गृह्णाति, तदप्येकेनोपनीतं न द्विप्रभृतिभिस्तथा श्रमणादीन् आदिशब्दात् द्विपदचतुष्पदादींश्च निर्यूह्यातिवाह्य भिक्षामटति । तथा तां ददतीं भिक्षामगुर्विणीमभ्युपगच्छति । अबालां च क्षीराहारबालवर्जितां तथा एलुकविष्कंभणे दोषा भवंति ते चाग्रे वक्ष्यन्ते एष द्वारगाथासंक्षेपार्थः । साम्प्रतमेनामेव विवरीषुः प्रथमतोऽज्ञातोंछमाह-

[भा.३८५२] अनाउच्छं च सुद्धं च पंच काऊण अग्गहं ।
दिन दिने अभिगिण्हे तासिमन्नयरीय उ ॥

वृ- पञ्चानामाधानां पिण्डैषणानामग्रहणं कृत्वा तयोरन्तिमयोरन्यतरस्याश्च ग्रहणं कृत्वा दिने दिनेऽज्ञातोंछं च शुद्धं चाभिगृह्णाति । साम्प्रतमेकोपनीतमित्यस्य व्याख्यानमाह-

[भा.३८५३] एगस्स भुंजमाणस्स उवनीयं तु गेण्हइ ।
न गेण्हे दुगमादीणं अचियत्तं तु मा भवे ॥

वृ- एकस्य भुंजमानस्य उपनीतं भगवान् गृह्णाति न द्विकादीनां द्वयोस्त्रयाणां चतुर्णां पंचानां वा उपनीतं न गृह्णाति, । कस्मादिति चेन्मा भूदप्रीतिरितिहेतोः । अधुना निज्जूहिऊण समणादी व्याख्या-

[भा.३८५४] अडंतो भिक्खकालम्मी घासत्थी वसभादओ ।
वज्जेइ होज्ज मा तेसिं आउरत्तेन अप्पियं ॥

वृ- भिक्षाकाले वृषभादयो ग्रासार्थिनोऽटन्ति । ततस्तान् वर्जयति मा तेषामातुरत्वेनाप्रीतिकं भूयादिति हेतोः । एतदेवाह-

[भा.३८५५] दुपय चउप्पय पक्खी किविणातिहि समण साणमाईया ।
निज्जूहिऊण सव्वे अडइ भिक्खं तु सो ताहे ।

वृ- भिक्षाकाले द्विपदाश्चतुष्पदाः पक्षिणः कृपणातिथयः श्रमणा श्वादयश्च भिक्षार्थमटन्ति ततस्तान् सर्वान् निर्यूह्य तदनन्तरं स भगवान् भिक्षामटति । कथमतिवाह्येत्यत आह-

[भा.३८५६] पुव्विं चरइ तेसिं नियट्टिचारेसु वा अडइ पच्छा ।
जत्थ भवे दोन्नि काला चरइ तत्थ अतित्थिते ।

वृ- तेषां श्रमणानां पूर्वं वा चरति यदि वा तेषु श्रमणादिषु निवृत्तचारेषु पश्चादटति, एतच्च तस्मिन् क्षेत्रे द्रष्टव्यं यत्र त्रयो भिक्षा काला यत्र तु द्वौ भिक्षाकालौ तत्र अतीत्थिते अतिक्रान्ते श्रमणादौ गच्छति ।

[भा.३८५७]　　　अनारद्धे अन्नेसु मज्झे चरति संजओ ।
गेण्हेत देंतयाणं तु वज्जयंतो अपत्तियं ।।

वृ- यदि प्रथमभिक्षाकालप्रारंभे एव भिक्षामटति तदा दायकानामप्रीतिस्ततः प्रथमे भिक्षाकाले अतिक्रान्तप्राये द्वितीये च भिक्षाकाले अन्ये श्रमणादिभिरनारब्धे स भगवान् प्रतिमामतिपन्नः संयतश्चरति, कथंभूतः सन्नित्याह-गृह्णतां ददतां चाप्रीतिकं वर्जयन् । साम्प्रतमगुर्विणीमित्यादि व्याख्यानयति-

[भा.३८५८]　　　नवमासगुव्विणीं खलु गच्छे वज्जइ इयरो सव्वा उ ।
दारं खीराहारं गच्छो वज्जे इयरो उ सव्वंपि ।।

वृ- नवमासगुर्विणीं खलु गच्छो गच्छवासी वर्जयति । इतरो गच्छनिर्गतः प्रतिमाप्रतिपन्नादिकः सर्वा अपि गुर्विणीर्वर्जयति । तथा गच्छो गच्छवासी क्षीराहारं बालं वर्जयति, इतरस्तु सर्वमपि बालम् । साम्प्रतमेलुगविक्खंभणे दोसा इत्यस्य व्याख्यामाह-

[भा.३८५९]　　　गच्छगयनिग्गए या लहुगा गुरुगा य [illegible] ।
आणादिणो य दोसा दुविहा य विराधना इणमो ।।

वृ- एलुकात्परतः साधुरतिगच्छति, उपलक्षणमेतत् यदि साधुरेलुकं विष्कंभयति आसन्ने वा प्रदेशे एलुकस्य तिष्ठति, तदा गच्छगतस्य प्रायश्चित्तं चत्वारो लघुकाः, गच्छनिर्गतस्य चत्वारो गुरुकाः, तत आज्ञादय आज्ञाभङ्गादयो दोषा द्विविधा च विराधना-आत्मविराधना संयमविराधना च इयं वक्ष्यमाणा ।

[भा.३८६०]　　　संक गहणे इच्छा दुन्निविठा अवाउडा ।
निहणुक्खनन विरेगे तेने अविदिन्न पाहुडए ।।

[भा.३८६१]　　　बंधवहे उद्दवणे य खिंसणा आसीयावणा चेव ।
उव्वेवग कुरुंडिय दीने अविदिन्न वज्जणया ।।

वृ- एलुकात्परतो यदि गच्छति, तदा स्तैन्ये मिथुने या लोकस्य शङ्का स्यात् तदनन्तरं च ग्रहणं तथा यस्या गृहमभ्यन्तरं प्रविष्टस्तस्याविषयेऽस्य साधोः किन्तु, इच्छा येनाभ्यन्तरं गत इति लोकस्याशङ्का स्यात् तथा दुर्निविष्टा अप्रावृत्ता वा मध्ये आगारी स्यात्तस्या लज्जा स्यात्, दोषाश्चान्ये शङ्कादयः तथा मध्ये गृहस्वामी हिरण्यादेर्निधानं करोति, उत्खननं वा परस्परं विरेचनं, तत्र स्तेनोऽयमिति शङ्का स्यात्, तथा अतिभूमिप्रवेशनं तीर्थकृद्भिर्गृहस्थैश्चा-वितीर्णमननुज्ञातं । ततोऽदत्तादानदोषः तस्मात् कस्मादिति भूमिमेष प्रविष्ट इति गृहस्थः प्राभृतमधिकरणं कुर्यात्तथा बन्धं निगडादिभिर्वधं कशादिभिस्ताडनं अपद्रावणं जीविताद्व्यपरोपणं, तथा खिंसना हीलना, यथैते वराका अलभमाना अन्तः प्रविशन्ति, आसियावणा चेवत्ति आसीयावणा नाम निष्काशयितुमासादनं किमुक्तं भवति गले गृहीत्वा बहिर्वने निक्षिपति, तथा स व्रती धिग् इव प्रविष्टस्तासामगारीणामुद्वेजको भवति । तथा कुरुंडितो नाम उपचारक इत्युच्यते तं शङ्कमाना गृहिणो वधबन्धनादीनि कुर्युरेतैः कारणैरवितीर्णस्यातिभूमिप्रवेशनस्य वर्जना । एष द्वारगाथासमासार्थः । साम्प्रतमेतदेव विवरीषुः प्रथमतः शङ्काद्वारमाह-

[भा.३८६२]　　　पच्छित्ते आदेसा संकियनिस्संकिए य गहणादी ।
तेन्ने चउत्थे संकिय गुरुगा निस्संकिए मूलं ।।

वृ- एलुकात्परतः प्रवेशे स्तैन्यविषये चतुर्थे चतुर्थव्रतविषये वा शङ्का स्यात् । तस्यां च शङ्कायां सत्यां निःशङ्किते जनस्य जातं प्रायश्चित्ते प्रायश्चित्तविषये आदेशौ प्रकारौ तावेव दर्शयति, शङ्किते चत्वारो

गुरुकाः, निःशंकिते मूलमिति । तथा ग्रहणादयश्च शंकायां दोषास्तानेव कथयति-

**[भा.३८६३]** गेण्हण कड्ढण ववहार पच्छकडुड्डाह तहा य निव्विसए ।
किं उ हु इमस्स इच्छा अब्भिंतरमइगतो जेन ॥

**वृ-** गृहणं स्तेनः पारदारको चेति बुद्धया प्रतिग्रहणं ततो राजकुलं प्रतिकर्षणं तदनन्तरं राजकुले - व्यवहरणं । ततः पश्चात्कृतकरणं । वतमोचमित्यर्थः । एवं च सति महान् प्रवचनस्योड्डाहः । तथा निर्विषय आज्ञाप्ये तद्वारगाथायां तु ग्रहणे इति कर्षणादीनामु पलक्षणं ॥ गतं ग्रहणद्वारमिच्छाद्वारमाह- किं तु इति वितर्को हुरिति निश्चितं यस्या गृहमभ्यन्तरमतिगतस्तस्या विषयेऽस्य साधोरिच्छा येनेत्थमभ्यन्तरं सहसा प्रविष्ट इति । अधुना दुर्निविष्टा अप्रावृतेति पदद्वयं व्याख्यानयति-

**[भा.३८६४]** दुन्निविट्ठा व होज्जा, अवाउडा वा अगारी उ ।
लज्जिया सा वि होज्जा हा संका वा से समुब्भवे ॥

**वृ-** मध्ये आगारी दुर्निविष्टा वा भवेत् अप्रावृता वा भवेत् ततः सहसा साधोरभ्यन्तरप्रवेशे सापि लज्जिता भवेत् । शङ्का वा से तस्याः समुद्भवेत् । तामेवाह-

**[भा.३८६५]** किं मन्ने घेत्तुकामो एस ममं जेन लेतिए दूरं ।
अन्नो वा संकेज्जा गुरुगा मूलं तु निस्संके ॥

**[भा.३८६६]** आउत्थ परा वावी उभयसमुत्था व होज्ज दोसा उ ।
उक्खणनिहणविरेगं तत्थ किंचि करेज्जाहि ॥

**वृ-** किं मन्ये एष संयतो मां ग्रहीतुकामो येन एतद्दूरमागच्छति । अन्यो वा एवं शङ्केत, तत्र शङ्कायां सत्यां तस्य प्रायश्चित्तं चत्वारो गुरुकाः, निःशंकिते तस्य वा जातं मूलं प्रायश्चित्तं, आत्मोत्थः परस्मात् उभयसमुत्था दोषा भवेयुः । सम्प्रति निहणुक्खन्नेत्यादि व्याख्यानयति-उक्खणणेत्यादि तत्र गृहस्थो गृहमध्ये हिरण्यादेरुत्खननं वा कुर्यात् निधानं परस्परं विवेकं वा विरेचनं किंचित्कुर्यात्ततः किमित्याह-

**[भा.३८६७]** दिट्ठं एएण इमं साहेज्जा मा उ एस अन्नेसिं ।
तेनो त्ति व एसो ऊ संका गहणाइ कुज्जाही ॥

**वृ-** दृष्टमेतेन साधुना इदं हिरण्यादि उत्खन्यमानादिकं, ततो मा एष अन्येषां कथयेत् । यदि वा एष स्तेन इति शङ्कया ग्रहणादि ग्रहणवधबन्धनादि कुर्यात् । साम्प्रसमवितीर्णपदव्याख्यानार्थमाह-

**[भा.३८६८]** तित्थगरगिहत्थेहिं दोहिं वि अतिभूमिपविसणमदिन्नं ।
कीसे दूरमतिगतो अ संखडं बंधवहमादी ॥

**वृ-** तीर्थकरेण गृहस्थेन च द्वाभ्यामप्यतिभूमीप्रवेशनमदत्तं, तीर्थकरेणादत्तमतिभूमिं न गच्छेज्जा इत्यादि वचनात्, गृहस्थेनाप्रीतिकरणात्, प्राभृतादिद्वारकलापमाह-कस्मादेतदूरमयमागत इति गृहस्थो संखडं कलहं कुर्यादितिरोषाद्बन्धवधादिकं । सम्प्रति खिंसाद्वारमाह-

**[भा.३८६९]** खिंसेज्ज एए अलभंय वरागं अंतो पविसंति ।
गलए घित्तूण वणंमि निच्छुभेज्जाहि बाहिरतो ॥

**वृ-** खिंसेत हीलयेत् गृहस्थो यथा एते वराका अलभमाना मध्ये प्रविशन्ति । आसियावणद्वारमाह- गलके गृहीत्वा बहिर्वने निक्षिपत्, । उद्वेजकद्वारमाह-

**[भा.३८७०]** ता उय आगारीतो वीरल्लेणेव तासिया उसउगी ।
उव्वेवं गच्छेज्जा कुरुंडितो नाम उवचरओ ।।

**वृ-** यथा वीरल्लेण त्रासिता शकुनिका उद्वेगं गच्छति, तथा ताः अप्यगार्यः सहसान्तः प्रविष्टेन साधुना त्रासिताः सत्य उद्वेगं गच्छेयुः, कुरुंडितद्वारमाह-कुरुंटितो नाम उपचारकस्तदा शंकया च वधबन्धनादि कुर्यात्-

**[भा.३८७१]** अहवा भणेज्ज एते गिहिवासंमिवि अदिट्ठकल्लाणा ।
दीना अदिन्नदाना दोसे ते नाउ नो पविसे ।।

**वृ-** अथवा ब्रूयात् गृहवासेऽप्येते अदृष्टकल्याणा दीना अदत्तदाना आसीरन् तेन मध्ये प्रविशन्ति । उपसंहारमाह-एतान् दोषान् ज्ञात्वा नो मध्ये प्रविशेत् । अत्र चोदकः प्राह-यदि एलुकविष्कम्भे एते दोषा अन्तः प्रविष्टे सविशेषास्तत एलुकविष्कंभसूत्रमफलं स्यात्तत आह-

**[भा.३८७२]** उंबरविक्खंभमविज्जति दोसा अतिगयंमि सविसेसा ।
तहवि अफलं न सुत्तं सुत्तनिवाओ इमो जम्हा ।।

**वृ-** यद्यपि उम्बरविष्कम्भे दोषा अतिगते मध्यप्रवेशे सविशेषास्तथापि सूत्रमफलं न भवति, यस्मादयं सूत्रनिपातः । सूत्रविषयः स्वय मेव दर्शयति-

**[भा.३८७३]** उज्जाण घडा सत्थी सेना संवट्ट वय पवादी वा ।
बहि निग्गमणा जन्ने भुंजइ य जहिं पहियवग्गो ।।

**वृ-** उज्जाणत्ति औद्यानिक्यां निर्गतो जन उद्याने भुंक्ते, घटाभोज्यं नाम महत्तरानुमहत्तरा-दिर्बहिरावासितः सार्थो वणिक् सार्थः, सेना स्कन्धावारः, संवर्तो नाम यत्र विषमादी भयेन लोकः संवर्तीभूतस्तिष्ठति, व्रजिका गोकुलं प्रपा पानीयशाला, सभा ग्रामजनसमवायस्थाने एतेषु स्थानेषु ये भुञ्जते जनास्तथा बहिर्निर्गमनेन यज्ञपाटे वा यत्र वा पथिकवर्गो भुंक्ते एतेषु स्थानेषु प्रतिमाप्रतिपन्नो हिण्डते तत्रानेन विधिना ग्रहीतव्यम् ।

**[भा.३८७४]** पासट्ठितो एलुगमेत्तमेव पासति निवेयरे दोसा ।
निक्खमणपवेसणे विय अवियत्तादी जढा एवं ।।

**वृ-** तत्र गत्वा निष्क्रमणप्रवेशौ वर्जयित्वा ईषदेकपार्श्वे तिष्ठति यथा एलुकमात्रं पश्यति । नोत्क्षेप-निक्षेपविरेचनानि ततो वधबन्धादयः प्रागुक्ता दोषा परिहृता भवन्ति । तथा निष्क्रमणे प्रवेशे च ये अप्रतीत्यादयो दोषास्तेऽप्येवं परित्यक्ताः ।

**[भा.३८७५]** असतीए पमुहकोट्ठग सालाए मंडवे रसवतीए ।
पासट्ठितो अगंभीरे एलुगविक्खंभमेत्तंमि ।।

**वृ-** औद्यानिकी घटादीनामसत्यभावे यः शालायाः प्रमुखे कोष्टको विशालो यत्र दूरस्थितैरपि एलुक उत्क्षेपनिक्षेपौ च दृश्येते मण्डपे वा यत्र परिवेषणं रसवत्यां वा महानसेऽगंभीरेऽतिप्रकाशे तत्रापि निष्क्रमणप्रवेशौ वर्जयित्वा यत्र उत्क्षेपनिक्षेपौ न दृश्येते । एलुकविष्कंभमात्रे क्षेत्रे एकपार्श्वे स्थित्वा भिक्षामादत्ते । एष एलुकसूत्रस्य विषयः ।

**मू. (२५१)** *पंचविहे ववहारे पन्नत्ते, आगमे सुए आणा धारणा जीए । तत्थ आगमे सिया आगमेन ववहारं पट्ठवेज्जा (१) नो से तत्थ आगमे सिया, जहा से तत्थ सुए सिया, सुएणं ववहारं पट्ठवेज्जा (२),*

*नो से तत्थ सुए सिया, जहा से तत्थ आणा सिया आणाएणं ववहारं पठवेज्जा३ नो से तत्थ आणासिया, जहा से तत्थ धारणासिया, धारणाएणं ववहारं पट्ठवेज्जा ४, नो से तत्थ धारणा सिया, जहा से तत्थ जीए सिया, जीएणं ववहारं पठवेज्जा५ । एएहिं पंचहिं ववहारेहिं ववहारं पठवेज्जा तं आगमेणं सुएणं आणाएण धारणाएणं जीएणं जहाजहा आगमे सुए आणा धारणा जीए तहा तहा ववहारं पठवेज्जा से किमाहु भंते ? आगमबलिया समणा निग्गंथा इच्चेयं पंचविहं ववहारं जया जया जहिं जहिं तया तया तहिं तहिं अनिस्सिं ओवसियं ववहारमाणे समणे निग्गंथे आणाए आराहए भवइ ।*

**[भा.३८७६]** बहु आगमितो पडिमं पडिवज्जइ आगमो इमो वि खलु ।
सव्वं व पवयणं ववहारविसयत्थं ।।

**[भा.३८७७]** खलियस्स व पडिमाए ववहारो कोत्ति सो इमं सुत्तं ।
ववहारविहिन्नू वा पडिवज्जइ सुत्तसंबंधो ।।

**वृ-** अनन्तरसूत्रे प्रतिमाभिहिता तां च प्रतिमां प्रतिपद्यते बह्वागमिकः अयमपि पञ्चविधोऽपि व्यवहारः खल्वागमः तत आगमप्रस्तावात्प्रतिमासूत्रानन्तरं व्यवहारसूत्रमवादि, सध्वे वल्यांदि वाशब्दः सम्बन्धस्य प्रकारान्तरोपदर्शने सर्वं प्रवचनं प्रावचनिकश्च व्यवहारविषयस्थं व्यवहारविषयान्तर्गतमतोऽवश्यं व्यवहारो वक्तव्य इति व्यवहारसूत्रम्, अथवा प्रतिमायां स्थितस्य प्रतिमायाः स्खलितस्य को व्यवहारः किंकर्तव्यमिति प्रश्नमाशंक्य स व्यवहारः पञ्चविध इत्यादिकमिदं सूत्रमुपन्यस्तं, यदि वानन्तरसूत्रे प्रतिमाः प्रतिपद्यते इत्युक्तं ताश्च प्रतिपद्यते व्यवहारविधिज्ञो नेतर इति प्रतिमासूत्रादनन्तरं व्यवहारसूत्रस्य सम्बन्धः । सूत्राक्षरसंस्कारः सुप्रतीतो, विशेषव्याख्यां तु भाष्यकृत्करिष्यति । तत्र 'तत्थ आगमे सिया आगमेन व्यवहारं पट्ठवेज्जा' इत्यादि अस्य व्याख्यामाह-

**[भा.३८७८]** सो पुन पंचविगप्पो आगम सुय आण धारणा जीए ।
सेतंमि ववहरंते उप्परिवाडी भवे गुरुगा ।।

**वृ-** स पुनर्व्यवहारः पञ्चविधः प्रज्ञप्तस्तद्यथा आगमः श्रुतमाज्ञा धारणा जीतमिति । तत्र सति आगमादौ व्यवहारे यदि उत्परिपाट्या उत्क्रमेण व्यवहरति तदा प्रायश्चित्तं चत्वारो गुरुकाः । इयमत्र भावना, आगमे विद्यमाने यद्यन्येन सूत्रादिना व्यवहरति तदा चतुर्गुरुकं, यदा पुनरागमो न विद्यते तदा श्रुतेन व्यवहर्तव्यम् श्रुते विद्यमाने यद्याज्ञादिभिर्व्यवहरति तदा चतुर्गुरुकं प्रायश्चित्तं, यदा श्रुतमिति न विद्यते तदा आज्ञया व्यवहर्तव्यम् आज्ञायां विद्यमानायां यदि धारणया प्रस्थापयति तदा चतुर्गुरुकं, आज्ञाया अभावे धारणया व्यवहर्तव्यं यदि पुनर्धारणायां सत्यां जीतेन व्यवहरति तदा चतुर्गुरुकं, धारणाया अभावे जीतेन व्यवहर्तव्यमिति । तत्र 'से तत्थ आगमे सिया' इत्यादिकस्य सूत्रावयवस्यायमर्थः । तत्र तस्मिन् व्यवहारपञ्चकमध्ये से तस्य साधोरागमः स्यात्तर्हि आगमेन व्यवहारं प्रस्थापयेत् । व्यवहारैर्निश्शेषः सूत्रादिभिरेतदेवाह-

**[भा.३८७९]** आगमव्यवहारी आगमेन ववहरेइ सो न अन्नेणं ।
न हि सूरस्स पगासं दीयपगासो विसेसेइ ।।

**वृ-** स आगमव्यवहारी आगमेन व्यवहरति नान्येन श्रुतादिना, तस्य ततो हीनत्वादेतदेव प्रतिवस्तूपमया दर्शयति, न हि सूर्यस्य प्रकाशं दीपप्रकाशो विशेषयति, न सूर्यप्रकाशात् दीपप्रकाशोऽधिकतरः किन्तु हीन इत्यर्थः । एवमिहापि यादृशी विषय आगमस्य नैतादृशः शेषाणां

व्यवहारमिति; आह-यस्मिन् काले गौतमादिभिरिदं सूत्रं कृतं 'ववहारे पञ्चविहे पन्नत्ते' इत्यादि तदा आगमो विद्यते ततः किं कारणमाज्ञादयोऽपि सूत्रे निबद्धाः । अत्राह-

[भा.३८८०] सुत्तमनागयविसयं खेत्तं कालं च पप्प ववहारो ।
होहिंति न आइल्ला जा तित्थं ताव जीतो उ ॥

वृ- सूत्रमनागतविषयं भविष्यति स तादृशः कालो यस्मिन्नागमो व्युच्छेत्स्यति ततः शेषैर्व्यवहारैर्व्यवहर्तव्यं । तत्रापि व्यवहारः क्षेत्रं कालं च प्राप्य यो यथा संभवति तेन तथा व्यवहरणीयमिति । किमुक्तं भवति ? यस्मिन् यस्मिन् काले यो यो व्यवहारो व्यवच्छिन्नो अव्यवच्छिन्नो वा तदा तदा प्रागुक्तेन क्रमेण व्यवहर्तव्यं तथा यत्र यत्र क्षेत्रे युगप्रधानैराचार्यैर्या या व्यवस्था व्यवस्थापिता तया अनिश्रोपश्रितं व्यवहर्तव्यम् । अन्यच्च [illegible] व्यवहारा न यावत्तीर्थं च भविष्यन्ति जीतस्तु व्यवहारो यावत्तीर्थं तावद्भवितेति जीतोपादानम् । सम्प्रति 'आणाए आराहेइ' इत्यस्य - व्याख्यानमाह-

[भा.३८८१] दव्वे भावे आणा खलु सुयं जिनवराणं ।
सम्मं ववहरमाणो उ तीह आराहओ होति ॥

वृ- आज्ञा द्विविधा-द्रव्ये भावे च द्रव्ये राजादीनामाज्ञा, भावाज्ञा खलु श्रुतं जिनवराणां, तत्र सम्यक् पञ्चविधान्यतमेन व्यवहारेण प्रागुक्तनीत्या व्यवहरन् तस्या आज्ञाया आराधको भवति तदेवं व्याख्याता आज्ञा । सांप्रतमाराधनामाह-

[भा.३८८२] आराधना उ तिविहा उक्कोसा मज्झिमा जहन्नाओ ।
एग दुग तिग जहन्नं दुतिगट्ठभवा उ उक्कोसा ॥

वृ- आराधना त्रिविधा-उत्कृष्टा मध्यमा जघन्या च । तत्रोत्कृष्टाया आराधनायाः फलमेको भवः, मध्यमाया द्वौ भवौ, जघन्यायास्त्रयो भवाः । अथवा यदि तद्भवे मोक्षाभावस्तदा उत्कृष्टाया आराधनायाः फलं जघन्यं संसरणं द्वौ भवौ, मध्यमायास्त्रयो भवाः, जघन्याया उत्कृष्टा अष्टौ भवाः ।

तदेवं भाष्यकृता सूत्रव्याख्या कृता । सम्प्रति निर्युक्तिविस्तरः-

[भा.३८८३] जेन य ववहरइ मुनी जं पी य ववहरइ सो वि ववहारो ।
ववहारो तहिं पप्पो, ववहरियव्वं तु वुच्छामि ॥

वृ- येन मुनिर्व्यवहरति स आगमादिर्व्यवहारो व्यवह्रियतेऽनेनेति व्यवहार इति व्युत्पत्तेर्यदपि य व्यवहर्तव्यं मुनिर्व्यवहरति सोऽपि व्यवहारः कर्मणि घञः समानयनात्तत्र यो व्यवहारः करणपक्षरूपः संस्थाप्यः पश्चाद्वक्ष्यत इति भावः व्यवहर्तव्यं तु वक्ष्यामि । प्रतिज्ञातमेव निर्वाहयति-

[भा.३८८४] आभवंते य पच्छित्ते ववहरियव्वं समासतो दुविहं ।
दोसु वि पणगं पणगं आभवणाए अहीगारो ॥

वृ- व्यवहर्तव्यं समासतो द्विविधं तद्यथा आभवत् प्रायश्चित्तं च । तत्र द्वयोरपि आभवति प्रायश्चित्ते च प्रत्येकं पंचकं तत्राधिकारः प्रयोजनमिदानीमाभवनया एव द्वारसंक्षेपगाथार्थः ।

साम्प्रतमेनामेव व्याचिख्यासुः प्रथमतो 'दोसुपि पणगं पणगं' इत्यस्य व्याख्यानमाह-

[भा.३८८५] खेत्ते सुय सुहदुक्खे मग्गे विनए य पंचहा होइ ।

सचित्ते अचित्ते खेत्ते काले य भावे य ॥

वृ- आभवत्पञ्चधा पञ्चप्रकारं भवति । तद्यथा-क्षेत्रे श्रुते सुखदुःखे मार्गे विनये च प्रायश्चित्तमपि पञ्चधा। सचित्ते अचित्ते क्षेत्रे काले भावे च । एष प्रतिद्वारगाथासमासार्थः । तत्र क्षेत्रे तावदाभवत् प्राह-

[भा.३८८६] वासासु निग्गयाणं अट्ठसु मासेसु मग्गणा खेत्ते ।
आयरियकहण साहण नयने गुरुगा य सचित्ते ॥

वृ- अष्टसु ऋतुबद्धेषु मासेषु विहरतां वर्षासु निर्गते क्षेत्रे मार्गणा भवति क्षेत्रमार्गणा, यत्र निर्गतानां साधूनां क्षेत्रं प्रत्युपेक्ष्य प्रत्यागतानामाचार्यस्य पुरतः क्षेत्रगुणकथनं तच्च गच्छान्तरागतप्राघूर्णिकसाधुभिराकर्ण्य निजाचार्यसमीपं गत्वा तस्य कथनं तत्र नयने प्रायश्चित्तं, तत्र गतैः सचित्ते गृह्यमाने चत्वारो गुरुकाः । साम्प्रतमेनामेव गाथां विवृणोति-

[भा.३८८७] उउबद्धे विहरंता वासा जोग्गं तु पेहए खेत्तं ।
वत्थव्वा य गता वा उव्वेक्खित्ता नियत्ता वा ॥

वृ- ऋतुबद्धे काले विहरन्त आचार्यप्रायोग्यं क्षेत्रं प्रत्युपेक्ष्यन्ते, वास्तव्या वा क्षेत्रप्रत्युपेक्षणायोपेत्य गता, यदि वा तस्मात् क्षेत्रान्निवृत्ताः केचित् स्वगच्छसाधव समागताः ।

[भा.३८८८] आलोएंते सोउं साहेंते अप्पणो गुरुणो ।
कहणंमि होइ मासो गयाण तेसिं न तं खेत्तं ।

वृ- ते वास्तव्या गताः क्षेत्रंप्रत्युपेक्ष्य समागताः ततो वा क्षेत्रान्निवृत्ता आचार्याणां पुरत आलोचयन्ति । क्षेत्रस्य गुणान् कथयन्ति । तत्र चान्य अन्यस्मात्प्राघूर्णकाः समागतास्ते च तान् तथा आलोचयतः श्रुत्वा गत्वा आत्मनो गुरोराचार्यस्य साहयन्ति कथयन्ति । ततो ब्रुवते यावत्ते तत्र न तिष्ठन्ति तावद्वयं तिष्ठामः। एवं कथने तेषां प्रायश्चित्तं लघुको मासो भवति, न च गतानां तेषां तत्क्षेत्रमाभवति-

[भा.३८८९] सामत्थण निज्जविए पयभेदे चेव पंथ पत्ते य ।
पणवीसादि गुरुगा गणिणो ग्गहेण वा जस्स ।

वृ- तत् श्रुत्वा यद्याचार्याः सामत्थयन्ति संप्रधारयन्ति तत्क्षेत्रं गच्छाम इति तदा तेषां प्रायश्चित्तं पञ्चविंशति दिनानि, निर्यापितं नाम अवश्यं गन्तव्यमिति तन्निर्नयनं तत्रलघुको मासः पदभेदे क्रियमाणे गुरुको मासः पथि व्रजतां चतुर्लघुकं, क्षेत्रं प्राप्तानां चतुर्गुरुकं, एतत् प्रायश्चित्तं गणिन आचार्यस्य यस्य चाग्रहेण ते आचार्या व्रजन्ति । तस्याप्येतदेव प्रायश्चित्तं । न च तत् क्षेत्रं तेषामाभवति । तत्र गत्वा यदि सचित्तमाददति तदा प्रायश्चित्त चत्वारो गुरुकाः । आदेशान्तरेणानवस्थाप्यमचित्ते उपधिनिष्पन्नं तस्मादविधिरेष न कर्तव्यः । तथा चाह-

[भा.३८९०] एसा अविही भणिया तम्हा एवं न तत्थ गंतव्वं ।
गंतव्वं विहीए पडिलेहेऊण तं खेत्तं ॥

वृ- यस्मादेषो अनन्तरोदितो विधिर्गाथायां स्त्रीत्वं प्राकृतत्वादेवं तत्र न गन्तव्यं । किंतु विधिना क्षेत्रं प्रत्युपेक्ष्य गन्तव्यम् ।

[भा.३८९१] खेत्तपडिलेहणविही पढमुद्देसम्मि वन्निया कप्पे ।
सव्वे व इहोद्देसे खेत्तविहाणंमि नाणत्तं ॥

वृ- क्षेत्रप्रत्युपेक्षणविधिः कल्पे कल्पाध्ययने प्रथमोद्देशे वर्णितः । स एवेह अस्मिन्नपि व्यवहारस्य

दशमे उद्देशके द्रष्टव्यौ नवसमत्र क्षेत्रविधाने क्षेत्रभेदकथने नानात्वं इहाधिकं क्षेत्रभेदकथनमित्यर्थः ।

**[भा. ३८९२]** चतुगुणोववेयं तु खेत्तं होइ जहन्नगं ।
तेरसगुणमुक्कोसं दोण्हं मज्झंमि मज्झिमगं ।।

**वृ-** चतुर्भिर्गुणैर्वक्ष्यमाणैरुपेतं भवति क्षेत्रं जघन्यं, त्रयोदशगुणमुत्कृष्टं, द्वयोर्जघन्योत्कृष्टयोर्मध्ये मध्यमकं । तत्र जघन्यं चतुर्गुणोपेतमाह-

**[भा. ३८९३]** महती विहारभूमी वियारभूमीय सुलभवित्ती य ।
सुलभा वसही य जहिं जहन्नगं वासखेत्तं तु ।।

**वृ-** यत्र महती विहारभूमी भिक्षापरिभ्रमणभूमिर्महती च विचारभूमिस्तथा यत्र वृत्तिर्भिक्षा सुलभा वसतिश्च सुलभा तत् जघन्यं वर्षाक्षेत्रं । सम्प्रति त्रयोदशगुणानाह-

**[भा. ३८९४]** चिक्खल्लपाणिथंडिल वसही गोरस जनाउले विज्जे ।
ओसह निचयाहिवती पासंडा भिक्खसज्झाए ।।

**वृ-** चिक्खल्लत्ति यत्र प्रायो भूयान् कर्दमो न विद्यते, न च भूयांसः संमूर्छिमाः प्राणा यत्र च स्थण्डिलमनापातासंलोकं, महास्थण्डिलं च ईप्सितायां दिशि, तथा यत्र प्रचुरं गोरसं, भूयान् जनः सोऽप्यतीव भद्रकः, तथा यत्र वैद्या भद्रकाः, सुलभानि च औषधानि, कुटुम्बिनां भूयांसो धान्यनिचयाः, अधिपतिर्नाम राजा स भद्रकः, पाषण्डैरनपमानं, भैक्षं सुलभं तृतीयस्यां पौरुष्यां पर्याप्तं लभ्यते । अन्यास्वपि पौरुषीषु यदि कार्यं, ततो लभ्यते भिक्षा स्वाध्यायोऽपि च वसतावन्यत्र च शुध्यति । ईदृशं क्षेत्रं प्रत्युपेक्ष्यमवश्यमनुज्ञापयितव्यं । एतदेवाह-

**[भा. ३८९५]** खेत्तपडिलेहणविही खेत्तगुणा चेव वन्निया एए ।
पेहेयव्वं खेत्तं वासो जोग्गं तु जं कालं ।।

**वृ-** क्षेत्रप्रत्युपेक्षणविधिः क्षेत्रगुणाश्च एतेऽनन्तरोदिता वर्णितास्तत्र कस्मिन् काले वर्षायोग्यं क्षेत्रं प्रत्युपेक्षितव्यमनुज्ञापयितव्यमत आह-

**[भा. ३८९६]** खेत्ताण अनुन्नवणा जेट्ठामूलस्स सुद्धपडिवए ।
अहिगरणो मानो मा मनसंतावा नहा हुंति ।।

**वृ-** ज्येष्ठमूलस्य मासस्य शुद्धप्रतिपदि शुक्लपक्षे प्रतिपदि क्षेत्राणामनुज्ञापना भवति । किंकारणमत आह-अहिगरणो इत्यादि अन्येपि तत्राजानन्तस्तिष्ठेयुस्ततो ततो द्वयोरधिकरणं भवेत, तथा स्वपक्षेभ्यो-ऽपमानं भूयात् । तथा च सति महान्मनःसन्तापः प्रेरिता वयं परिभूताः स्म । इति । अथवा कलहप्रवृत्ताव-युक्तवचनैर्मनःसंतापः स्यात्तस्मात् ज्येष्ठमूलं शुद्धप्रतिपदि कर्तव्या । तथानुज्ञापना एतदेवाह-

**[भा. ३८९७]** एएहिं कारणेहिं अनागयं चेव होइ अनुन्नवणा ।
निग्गमपवेसणंमि य पेहंताण विहि वुच्छं ।।

**वृ-** एतैरनन्तरोदितैः कारणैरनागतमेव भवति क्षेत्रस्यानुज्ञापना, सम्प्रति तेषां क्षेत्रं प्रेक्ष्यमाणानां निर्गमे प्रवेशे च विधिं वक्ष्यामि प्रतिज्ञातमेव करोति ।

**[भा. ३८९८]** केई पुव्वं पच्छा व निग्गया पुव्वमतिगया खेत्तं ।
समसीमंत पत्ताण मग्गणा तत्थिमा होइ ।।

**वृ-** केचित् क्षेत्रप्रत्युपेक्षणाय पूर्वनिर्गताः केचित् पश्चान्निर्गतास्तथा प्रवेशे पूर्वमतिगताः प्राप्ताः क्षेत्रे

केचित्तत्रसमकालं सीमानं प्राप्तानामियं वक्ष्यमाणा मार्गणा भवति । अनया गाथयान्यपादत्रयेण समकं किल चतुर्भङ्गी सूचितास्ततस्तामेव दर्शयति-

[भा.३८९९] पुव्वं विनिग्गतो पुव्वमतिगतो पुव्वनिग्गतो पच्छा ।
पच्छा निग्गतो पुव्वं, तु अतिगतो दोवि पच्छा वा ।।

वृ- जातावेकवचनमतो बहुवचनं द्रष्टव्यं पूर्वं निर्गताः पूर्वमेव समकं प्राप्ताः १ पूर्वं निर्गताः पश्चादेकतरे प्राप्ताः २ पश्चाद्विनिर्गताः पूर्वं प्राप्ताः ३ एकतरे पश्चाद्विनिर्गताः पश्चादेव च तत् क्षेत्रमतिगताः ४ ।

[भा.३९००] पढमभंगे इणमो उ मग्गणा पुव्वणुन्नवे जइ तु ।
ता तेसि होइ खेत्तं अह पुन अच्छंति दप्पेण ।।

वृ- तत्र भङ्गचतुष्टयमध्ये प्रथमके भङ्गे इयं मार्गणा भवति । यदि पूर्वमेव समकं निर्गतैः पूर्वमेव च समकं तत्क्षेत्रं प्राप्तैः पूर्वमेव च समकमनुज्ञापयन्ति तदा तेषां भवति साधारणक्षेत्रमथ पुनः समकं प्राप्ता अपि एकतरे दर्पेण तिष्ठन्ति, दर्पो नाम निष्कारणं, तदा यैः पूर्वमनुज्ञापितं तेषां तत्क्षेत्रं नेतरेषाम् ।

[भा.३९०१] खेत्तमतिगयामोत्ति वीसत्थ जइ अत्थहे ।
पच्छा गयणुन्नवए, तेसिं खेत्तं वियाहियं ।।

वृ- क्षेत्रमतिगताः प्राप्ताः स्म इति यदि विश्वस्ता आसीरन् न क्षेत्रानुज्ञापनाय यतन्ते तदा आसतां पूर्वप्राप्ताः किन्तु पश्चाद्गताः अपि ये तेभ्यः पूर्वमनुज्ञापयन्ति क्षेत्रं तेषां तत् क्षेत्रं व्याख्यातं कथितम् ।

[भा.३९०२] गेलन्न वाउलाणं तु, खेत्तमन्नस्स नो भवे ।
निसिद्धो खमतो चेव तेन तस्स न लब्भते ।।

वृ- ग्लानत्वेन आकुलानां पूर्वं समकं प्राप्तानामपि समकं पूर्वं वानुज्ञापनमभूत्तदा कारणे स्थितत्वात्तेषामाभवति तत्क्षेत्रमन्यस्य पूर्वं प्राप्तपूर्वानुज्ञापकस्य वा, तथा क्षपको निष्कारणे क्षेत्रप्रत्युपेक्षणाय न प्रवर्तयितव्यो निषेधात्तेनाकारणेन तस्य क्षपकस्य यत्क्षेत्रं तेन क्षपकेणयदनुज्ञापितं क्षेत्रमित्यर्थः तत्तैर्न लभ्यते, किन्तु यैः पश्चादप्यागतैरनुज्ञापितं तेषां तत्क्षेत्रं, अथ कारणे क्षेत्रप्रत्युपेक्षणाय क्षपकः प्रवर्तितस्तदा तेनानुज्ञापितं ते लभन्ते क्षेत्रं, तथा क्षपकस्य पारणके व्याकुला इति नानुज्ञापयन्ति । तदा न तेषां तत्क्षेत्रं, किन्तु यैरनुज्ञापितं तेषामिति तदेवं गतः प्रथमो भङ्गः । सम्प्रति द्वितीयं तृतीयं च भङ्गमधिकृत्य विवक्षुरिदमाह-

[भा.३९०३] पुव्वविनिग्गया पच्छा, पविट्ठा पच्छा य निग्गया ।
पूव्विं कयरेसिं खेत्तं, तत्थ इमा मग्गणा होइ ।।

वृ- पूर्वं विनिर्गताः पश्चादन्यापेक्षया क्षेत्रे प्रविष्टाः, अपरे पश्चाद्विनिर्गता अन्यापेक्षया पूर्वं प्रविष्टाः, कतरेषां तेषां क्षेत्रं भवति मार्गणा । तमेवाह-

[भा.३९०४] गेलन्नादीहिं कज्जेहिं पच्छाइंताण होति खेत्तं तु ।
निक्कारण ठिया ऊ पच्छाितिता उ न लभंति ।।

वृ- पूर्वं विनिर्गताः सन्तो यदि ग्लानादिभिः कारणैः पश्चादागच्छन्ति तदा तेषां पश्चादतियतामागच्छतां भवति क्षेत्रं । अथ निष्कारणं यत्र तत्र वा स्थितास्तेन पश्चात् आगतास्तदा ते पश्चादागच्छन्तो न लभंते क्षेत्रम्, गतो द्वितीयभङ्गस्तृतीयमधिकृत्याह-

[भा.३९०५] पच्छाविनिग्गओविहु दूरासन्ना समा व अद्धाणा ।
सिग्घगती उसभावा पुव्वं पत्तो लभति खेत्तं ।।

वृ- गाथायामेकवचनं स्पर्धकस्याभ्यपेक्षया पश्चादिनिर्गतोऽपि हु निश्चितं दूरात् आसन्नात् समाद्वा स्वभावात् शीघ्रगतिरिति कृत्वा पूर्वं प्राप्तस्तदा स लभते क्षेत्रम् ।

[भा.३९०६] अह पुन असुद्धभावो गतिभेदं काउ वच्चती पुरतो ।
मा एए गच्छंती पुरओ ताहे न लभति ।।

वृ- अथ पुनर्मा एत अन्ये पुरतो गच्छन्ति यास्यन्तीति एवमशुद्धो भावो गतिभेदं कृत्वा पुरतो याति तदा स पुरोगाम्यपि न लभते क्षेत्रं भावस्याशुद्धत्वात् ।

[भा.३९०७] समयंपि पत्थियाणं सभावसिग्घगतिणो भवे खेत्तं ।
एमेव य आसन्ने, दूरठाणीण जो एति ।।

वृ- समकमपि विवक्षितान् प्रस्थितानां मध्ये यः स्वभावशीघ्रगतिः सन् पुरतो याति तस्य तत्क्षेत्रं एवमासन्ने आसन्नाध्वनीतो दूराध्वनतो वा यः पुरतः समागच्छति अनुज्ञापयति च स लभते क्षेत्रम्-

[भा.३९०८] अहवा समयं पत्ता, समयं चेव अनुन्नविते दोहिं ।
साहारणं तु तेसिं दोण्हवि वग्गाण तं होइ ।।

वृ- अथवा आसन्नात् दूरात्समाद्वा अध्वनः समकमेव तत् क्षेत्रं प्राप्ताः समकमेव द्वाभ्यामपि वर्गाभ्यां तत् क्षेत्रमनुज्ञापितं तदा तयोर्द्वयोरपि वर्गयोः साधारणं तत् क्षेत्रं, गतस्तृतीयो भङ्गश्चतुर्थे तु भङ्गे यदि पूर्वप्रविष्टैः सह समकमनुज्ञापितं तदा साधारणं अथ पश्चात्प्राप्तैरपि पूर्वमनुज्ञापितं तदा तेषामिति । तदेवमुक्ता चतुर्भङ्गिकी, सम्प्रति 'समसीमं तू पत्ताण' इत्येतद्व्याख्यानमाह-

[भा.३९०९] अहवा समयं दोण्हि वि सीमं पत्ता उ तत्थ जे पुव्विं ।
अनुजाणावे तेसिं न जे उ दप्पेण अच्छंति ।।

वृ- अथवेति प्रागुक्तापेक्षया प्रकारान्तरे द्वावपि वर्गौ समकं सीमानं प्राप्तौ तत्र ये पूर्वमनुज्ञापयन्ति तेषां तत्क्षेत्रं, न ये दर्पेण निष्कारण मेवमेव तिष्ठन्ति तेषामिति, सीमाग्रहणद्वारगाथायामुद्याना-दीनामुपलक्षणं तेन तद्विषयामपि मार्गणामाह-

[भा.३९१०] उज्जानगामदारे वसहिं पत्ताण मग्गणा एवं ।
समयमणुन्ने साहारणं तु ते न लभंति जे पच्छा ।।

वृ- उद्यानं ग्रामद्वारं ग्रामग्रहणं नगरादीनामुपलक्षणं तथा वसतिं समकं प्राप्तानामेवमुक्तप्रकारेण मार्गणा कर्तव्या । तामेव दर्शयति । यदि समकमनुज्ञापयन्ति ततः साधारणं, ये पुनः पश्चादनुज्ञापयन्ति ते न लभन्ते ।

[भा.३९११] ते पुन दोन्नी वग्गा गणि आयरियाणं होज्ज ।
दोण्हं गणिणं य होइज्ज दोण्हं तु आयरियाणं ।।

वृ- तौ पुनर्द्वौ वर्गौ द्वयोर्गण्याचार्ययोर्भवेतां, गणी नामात्र वृषभः एको वर्गो वृषभस्यापर आचार्यस्य, अथवा द्वयोर्गणिनोर्यदि वा द्वयोराचार्ययोर्द्वौ वर्गाविति तत्रेयं मार्गणा-

[भा.३९१२] अच्छंति संथरे सव्वे गणीनीति असंथरे ।
जत्थ तुल्ला भवे दोवी तत्थिमा होति मग्गणा ।।

वृ- यदि तत्र क्षेत्रं संस्तरणं तदा सर्वेऽपि तिष्ठन्ति । अथ सर्वेषामसंस्तरणं तदा असंस्तरणे गणी वृषभो निर्गच्छति आचार्यस्तिष्ठति । अथ द्वावपि वर्गौ तुल्यौ द्वावपि गणिनौ द्वावप्याचार्यौ वा तदा तत्रेयं भवति मार्गणा । तामेवाह-

**[भा.३९१३]** निप्फन्न तरुण सेहे जुंगिय पायच्छिनासकरकन्ना ।
एमेव संजतीणं नवरं वुड्ढीसु नाणत्तं ॥

वृ- एकस्य निष्पन्नपरिवारं एकस्यानिष्पन्नो यस्य निष्पन्नः स गच्छतु इतरस्तिष्ठतु, अथ द्वयोरपि परिवारो निष्पन्नः केवलमेकस्य तरुणा एकस्य वृद्धः वृद्धास्तिष्ठन्तु इतरे गच्छन्तु, अथ द्वयोरपि तरुणा वृद्धा वा नवरमेकस्य शैक्षा अपरस्य चिरप्रव्रजिताः तत्र ये चिरप्रव्रजितास्ते गच्छन्तु इतरे तिष्ठन्तु, अथ द्वयोरपि शैक्षाश्चिरप्रव्रजिता वा, केवलमेकस्य जुङ्गितपादाक्षिनाशाकरकर्णा, अपरस्या जुङ्गितास्तत्र जुङ्गितास्तिष्ठन्त्वितरे गच्छन्तु, अथ द्वयोरपि जुङ्गितास्तत्र ये पादजुङ्गितास्ते तिष्ठन्त्वितरे गच्छन्तुः, सम्प्रति संयतीनां प्रवर्तिन्या अभिषेकायाश्च मार्गणा कर्तव्या । ततस्तामाह- एवमेव अनेनैव प्रकारेण संयतीनां मार्गणा कर्तव्या, नवरं वृद्धासु नानात्वं तच्चेदं तरुणीवृद्धानां तरुण्यस्तिष्ठन्ति वृद्धा गच्छन्ति, शेषं तथैव । सम्प्रति संयतानां संयतीनां च समुदायेन मार्गणां करोति-

**[भा.३९१४]** समणाण संयतीण य समणी अच्छंति नेति समणा उ ।
संजोगे वि य बहुसो अप्पाबहुअं असंथरणे ॥

वृ- श्रमणानां संयतीनां चैकत्रस्थानेऽवस्थितानामसंस्तरणे श्रमण्यस्तिष्ठन्ति निर्गच्छन्ति श्रमणाः, संयोगे च बहुशः प्रवर्तमानेष्वसंस्तरणेऽल्प बहुपरिभाव्य वक्तव्यम् । तथैव यत्र संयता जुंगिताः श्रमण्यो वृद्धास्तत्र जुंगितास्तिष्ठन्ति श्रमण्यो निर्गच्छन्ति । एवं गुरुलाघवं परिभाव्यं स्वबुद्ध्या भावनीयं । सम्प्रति क्षेत्रिकाक्षेत्रिकाणां संस्तरणयोर्मार्गणां करोति ।

**[भा.३९१५]** एमेव भत्तसंतुठा तस्सालंभंमि अप्पभू निंति ।
जुंगियमादीएसु य वयंति खेत्ताण ते तेसिं ॥

वृ- एवमेव अनेनैव प्रकारेण क्षेत्रिकाक्षेत्रिकाणमपि संस्तरणेऽसंस्तरणे च भावनीयं । तच्चैवं यदि संस्तरणं तदा क्षेत्रिका अपि तिष्ठन्तु अक्षेत्रिका अपि नवरमक्षेत्रिका भक्तसंतुष्टास्तिष्ठन्तु । सचित्तमुपधिं च न लभन्ते 'तस्सालम्भंमिति' तस्य भक्तस्य अलाभे असंस्तरणे इत्यर्थः । अप्रभवोऽक्षेत्रिका निर्गच्छन्ति । अथाक्षेत्रिका जुङ्गिता आदिशब्दादजङ्गमा वा, तदा तेष्वक्षेत्रिकेषु जुङ्गितादिषु क्षेत्रिणो व्रजन्ति जुङ्गितादयस्तिष्ठन्तु, येषां च सम्बन्धिनस्ते जुङ्गिता वृद्धा वा न तेषां तत्क्षेत्रमाभवति उपलक्षणमेतत् । तेनादेशिनां कुडुक्कादीनां च नाभवति क्षेत्रम् ।

**[भा.३९१६]** पत्ताण अनुन्नवणा सारूविय सिद्धपुत्त सन्नी य ।
भोईय महयर आविय निवेयण दुगाउयाई ॥

**[भा.३९१७]** सग्गामसन्नि असति पडिवसभे पल्लिए व गंतूणं ।
अम्हं एइयं खेत्तं नायं खु करेह अन्नेसिं ॥

वृ- क्षेत्रप्रत्युपेक्षकाणां यत्र वर्षारात्रः कर्तव्यस्तत् क्षेत्रं प्राप्तानामनुज्ञापना भवत्यमीषां कर्तव्या तानेवाह- सारूपिकसिद्धपुत्रौ प्रागभिहितौ संज्ञिनो गृहीताणुव्रतदर्शनश्रावकाः भोजिको ग्रामस्वामी महत्तर ग्रामप्रधानाः पुरुषा नापिता नखशोधिका वारिका इत्यर्थः, एतेषामनुज्ञापना कर्तव्या यथा वयमत्र

वर्षारात्रंकर्तुकामास्तद्यथान्ये केचित्साधव आगच्छेयुस्तदा तेषामेतत् यूयं कथयतेति 'दुगाउयाइं' चेत्यादि यदि तत्र स्वग्रामे संज्ञी श्रावको न विद्यते तदा द्वे गव्यूते गत्वा प्रतिवसमे अन्तरपल्ल्यां वा गत्वा यदि श्रावकोऽस्ति ततस्तस्य निवेदना कर्तव्या । यथास्माकमिदं रुचितं क्षेत्रमेतत् ज्ञातमन्येषां कुरुतेति ।

**[भा.३९१८]** जयणाए समणाणं अनुन्नविता वसंति खेत्तवहिं ।
वासावासट्ठाणं आसाढे सुद्धदसमीए ॥

**वृ-** यतनया सारूपिकादिकं सन्तमनुज्ञाप्य क्षेत्रस्य वहिर्वसन्ति वर्षावासस्थानं पुनराषाढे शुद्धदशम्यां । साम्प्रतं जयणाए इत्यस्य व्याख्यानमाह-

**[भा.३९१९]** सारूवियादि जयणा अन्नेसिं वावि साहए बाहिं ।
बाहिं वा वि ठिया संता पायोग्गं ताधि गेण्हए ॥

**वृ-** सारूपिकादीनामन्येषां वा यत्साधयति कथयति एषा यतना इयं च प्रागेवोक्ता । अथवा पूर्वगाथाप्रथमार्धस्यैवं व्याख्या-सन्तं सारूपिकादिकमनुज्ञाप्य क्षेत्रस्य बहिर्यतनया वसन्ति । तत्र तामेव यतनामाह-वहिर्वापि स्थितास्तत्र वर्षाप्रायोग्यमुपधिं गृह्णन्ति उत्पादयन्ति तत्रैवं संघाटकाः सर्वासु दिक्षु प्रत्यासन्नं प्रेक्षन्ते । एकैकश्च सङ्घाट आत्मनः परिपूर्णमुपधिमुत्पादयति । एकस्य च जनस्याधिकस्येति।

**[भा.३९२०]** दोण्हं जतो एगस्सा निप्फज्जइ तत्तियं बहिठियाओ ।
दुगुणप्पनुवासबहिं संथरे पल्लिं च वज्जंति ॥

**वृ-** द्वयोरुपधिर्यस्मादेकस्यान्यस्य निष्पद्यते उपधिरात्मनश्च संघाटस्य तदपेक्षया द्विगुण-स्तावन्मात्रमुपधिं वर्षायोग्यं सर्वासु दिक्षु बहिःस्थिता उत्पादयन्ति यदि पुनः संस्तरन्ति तदा बहिः प्रतिवृषभग्रामान् अन्तरपल्लीं च वर्जयंति न तत्र गच्छन्ति-

**[भा.३९२१]** उच्चारमत्तगादी छारादी चेव वासपाउग्गं ।
संथार फलगसेज्जा तत्थ ठिया चेव मुन्नवणा ॥

**वृ-** तथा तत्र बहिः स्थिता एव उच्चारमात्रकादि आदिशब्दात् प्रश्रवणमात्रकपरिग्रहस्तथा क्षारादि आदिशब्दात् डगलगादिपरिग्रहः वर्षाप्रायोग्यं तथा संस्तारकफलकशय्या अनुज्ञापयति । अथ कस्मा-त्सर्वेषां सारूपिकादीनामनुज्ञापना क्रियते ? उच्यते एकस्य कथिते कदाचित्सोऽसद्भूतः स्यात्ततो-ऽनुज्ञापितमननुज्ञापितमेव जायते, सर्वेषां पुनः कथिते यदि केचिदसद्भूती भवन्तितदेते ये शेषाः सन्तस्ते अन्येषां साधूनामागतानां कथयन्ति । ते च बहिस्तिष्ठन्ति, प्रतिवृषभे अंतर पल्लयां वा तत्र वा न भोक्ष्यन्ती

**[भा.३९२२]** पुन्नो य तेसिं तहि मासकप्पे, अन्नं च दूरं खलु वासजोग्गं ।
ठायंति तो अंतरपल्लियाए, जं एस काले य न भुंजिहत्ती ॥

**वृ-** पूर्णः खलु तेषां तत्र वर्षप्रायोग्यतया संभाविते क्षेत्रेऽथवा आषाढशुद्धदशमी । अन्यच्चापि दूरे अन्यच्च वर्षाकालयोग्यं क्षेत्रं दूरे तत्र आषाढशुद्धदशमी प्रविक्षणार्थं यामेष्यति काले न भोक्ष्यन्ते तस्यामन्तरपल्ल्यामुपलक्षणमेतत् प्रतिवृषभे वा ग्रामे तिष्ठन्ति । अत्र आषाढशुद्धदशम्यां वर्षायोग्ये क्षेत्रे समागच्छन्ति ।

**[भा.३९२३]** संविग्गबहुलकाले एसा मेरा पुरा व आसी य ।
इयरबहुले उ संपइ पविसंति अनागयं चेव ॥

वृ- एषा मर्यादा पुरा संविग्नबहुले काले आसीत् । सम्प्रति इतरबहुले पार्श्वस्थादिबहुले अनागतमेव प्रविशन्ति । किं कारणमत आह-

[भा.३१२४] पेहिए न हु अन्नेहिं पविसंता य पढिया ।
इयरे उ कालमासज्ज पल्लेजा परिवड्ढिया ॥

वृ- अन्यैः प्रेक्षितक्षेत्रे नहु नैवायतार्थिनो मोक्षार्थिनः प्रविशन्ति, इतरे तु पार्श्वस्थादयः कालमासाद्य परिवर्धिताः पूर्वप्रत्युपेक्षितक्षेत्रानपि प्रेरयेयुस्ततोऽनागतमेव प्रविशन्ति । तत्रार्थे कल्पित-मुदाहरणमाह-

[भा.३१२५] रुन्नं तगराहारं वएहिं कुसुमसुयं तेहिं ।
उज्जान पडिसवत्तीहिं वत्थूला हिवयंतीहिं ॥

वृ- तगराहारे आम्रकास्तगराहाराम्रकास्तैरम्रोद्यानप्रतिसपत्नैर्बत्थूलैः वृत्तिकरणाय स्थाप्यमानैर्गाथायां स्त्रीत्वं प्राकृतत्वात् वयमाच्छदिता इति हेतोः कुसुमाश्रुभिर्मुच्यमानैः रुदितम् । इयमत्र भावना तगराहारे पूर्वं बहव आम्रा आसीरन् स्तोका वत्थूलास्ततो लोकेन वत्थुलानाच्छिद्य तैराम्रोद्यानस्य वृत्ति कृतास्तत्र बब्बूलफलपतनतो बब्बूला जातास्तैः परिवर्धमानैः शालिसस्यमिव तृणैराम्रा विनाशितास्ततः उत्प्रेक्षितमाम्रोद्यानप्रतिसपत्नैर्बब्बूलैर्वृत्तिकरणाय स्थाप्यमानैर्वयमाच्छादिता नूनमेतैरिति कुसुमाश्रुमोक्षणेनाम्रै रुदितमिति अत्रोपनयमाह ।

[भा.३१२६] एवं आरामसमी उ कालेण परिवड्ढिया ।
पेल्लेज्जा माइठाणेहिं संजाहीतं इमे पुनो ॥

वृ- एवं आम्रस्थानीयान् वत्थूलस्थानीयाः पार्श्वस्थादयः कालेन परिवर्धिताः संतो मातृस्थानैः प्रेरयंति, किं विशिष्टाः पार्श्वस्थादय इत्याह-

[भा.३१२७] सोच्चा उड्डी अनापुच्छा, माया पुच्छा जयट्ठिते ।
अजयट्ठिए भंडंते ततिए समणुन्नया दोएहं ॥

वृ- एके श्रुत्वा उपेत्य समागताः अपरे अनापृच्छाः समाययुरथवा मायापृच्छाः एते द्वयेऽप्ययतस्थिता स्तृतीयायतस्थितास्तत्राद्यानां द्वयानां भण्डमानानां कलहयतां गाथायां सप्तमी षष्ठ्यर्थे बहुवचने एकवचनं प्राकृतत्वान्न किंचिदाभाव्यं । तृतीये यतस्थिते समनोज्ञता साधारणं क्षेत्रमेष द्वारगाथासमासार्थः । साम्प्रतमेनामेव विवरीषुः प्रथमतः सोच्चा उड्डीति पदं व्याख्यानमति ।

[भा.३१२८] गुरुणो सुंदरखेत्तं साहंतं सोच्च पाहुणो ।
नएज्ज अप्पणो गच्छं । एस आउड्डिया ठितो ॥

वृ- गुरोराचार्यस्यात्मीयस्य क्षेत्रं प्रत्युपेक्ष्य समागतैः सुन्दरं क्षेत्रमिति कथ्यमानं श्रुत्वा प्राघूर्णिक आत्मनो गच्छं तत्र नयति । एष श्रुत्वा उपेत्य स्थित उच्यते । सम्प्रत्यनापृच्छां च दर्शयति ।

[भा.३१२९] पेहितमपेहितं वा ठायइ अन्नो अपुच्छियं खेत्तं ।
गोवालवत्थवाले पुच्छइ अन्नो उ दुपुच्छी ॥

वृ- प्रेक्षितमिदं क्षेत्रमन्यैरप्रेक्षितं वेत्यन्योऽनापृच्छ्य तिष्ठति अन्यः पुनर्दुःपृच्छी ये न किमपि जानते तान् गोपालवत्सपालान् पृच्छति अन्यैरिदं क्षेत्रं प्रत्युपेक्षितं किं वा नेति ।

[भा.३१३०] अविहिठिया उ दोवेते ततिओ पुच्छिउं विहीए ठितो ।

सारूवियमादि काउं वितन्नेहिं न पेहियं ॥

[भा.३९३१] तं तु वीसरियं तेसिं पउत्था वावि ते भवे ।
खेत्तिओ य तहिं पत्तो तत्थिमा होइ मग्गणा ॥

वृ- तावनन्तरोदितौ द्वावपि श्रुत्वोपेत्य स्थितोऽनापृच्छया मायापृच्छया च स्थित इत्येवं लक्षणावविधिस्थितौ, तृतीयः पुनः सारूपिकभादि कृत्वा सूत्रोक्तेन विधिना पृष्ट्वा स्थितः । यतस्तेषां सारूपिकादीनां यत् पूर्वैरनुज्ञापितं तत् विस्मृतम् । अथवा येऽनुज्ञापितास्ते प्रोषिता अभवन् । अन्ये च स्वरूपं न जानते ततस्ते ब्रुवते अन्यैर्न प्रेक्षितमिदं क्षेत्रमिति येन च पूर्वसंघाटकप्रेक्षणेन क्षेत्रं प्रत्युपेक्षितं स क्षेत्रिकस्तत्रागतस्तत्रेयं वक्ष्यमाणा भवति मार्गणा । तामेवाह-

[भा.३९३२] आउट्टिताठितो जे न तस्स नामंपि नेच्छिमो ।
अणापुच्छिय दुप्पुच्छी भंडंते खेत्तकारणा ॥

वृ- तत्र य उपेत्य स्थितस्य नामापि नेच्छामः । सर्वथा सर्वज्ञाज्ञा प्रतिकूलतया दुर्गृहीतनामधेयत्वात् । यस्त्वनापृच्छी दुःपृच्छी वा तौ द्वावपि क्षेत्रकारणेन भण्डीते कलहं कुरुतः ।

[भा.३९३३] अहवावि दोवि भंडंते जयणाए ठिएण ते ।
खेत्तितो दोवि जेऊण भत्तं देह न उग्गहं ॥

वृ- अथवा द्वावपि तौ यतनास्थितेन सह भण्डते ततो व्यवहारे जाते क्षेत्रिकः सूत्रोक्तेन विधिना तौ जित्वा तयोर्भक्तं ददाति, अनुजानाति नत्ववग्रहं सचित्तमुपधिं वा नानुजानातीति भावः ।

[भा.३९३४] तइयाण सयं सोच्चा सड्ढादी एव पुणियं ।
होइ साहारणं खेत्तं ठिंतो खमएण ऊ ॥

वृ- तृतीयानां यतनास्थितानां तद्वचनतः क्षेत्रिकः स्वयं श्रुत्वा श्राद्धादीन्वा पृष्ट्वा ज्ञातं स्वरूपं यथा पृष्ट्वा विधिनैते स्थिता इयमत्र भावना क्षेत्रिकेण यतना स्थिता अपि पृष्टाः किं भवन्तोऽत्र स्थितास्ते-ऽवादिपुर्वयमत्र पृष्ट्वा स्थिताः परं न केनापि कथितं यथान्यैरनुज्ञापितमिदं क्षेत्रमिति ततस्तेन क्षेत्रिकेण श्राद्धादयः पृष्टास्तेऽप्यूचुर्यतो युष्माभिरनुज्ञापितं तदस्माकं विस्मृतं, यदि वा वयं प्रोषिता अभूमयेऽप्येतैरनुज्ञापितास्तैरप्यस्माकं कथितं यथैतैर्वयमनुज्ञापिता इति, एवं तेषां यथास्थिते स्वरूपे ज्ञाते साधारणमुभयेषां भवति क्षेत्रं, विधिना पृच्छातो यतनास्थितानामपि शुद्धत्वात्, अत्र दृष्टान्तः क्षपकेण पिंडनिर्युक्तिप्रसिद्धेन यथा पायसक्षपको विधिना शुद्धं गवेषयन् आधाकर्मण्यपि शुद्धस्तथा इमे यतना स्थिता अपि एतदेवाह-

[भा.३९३५] सुद्धं गवेसमाणो पायसखमतो जहा भवे सुद्धो ।
तह पुच्छिउ ठायंता सुद्धा उ भवे असढभावा ॥

वृ- यथा पायसस्य क्षीरान्नस्य प्रतिग्राहकः पायसक्षपकः शुद्धं गवेषयन् आधाकर्मण्यपि पायसे गृह्यमाणे शुद्धस्तथा विधिना पृष्ट्वास्तिष्ठन्तोऽशठभावाः शुद्धा भवन्ति । अत्रैव प्रकारान्तरमाह-

[भा.३९३६] अतिसंथरणे तेसिं उवसंपन्ना उ खेततो इयरे ।
अविहिठिया उ दोवी अहवा इमा मग्गणा अन्ना ॥

वृ- अतिसंस्तरणे संस्तरणातिक्रमेण तेषां क्षेत्रिकाणामितरे यतना स्थायिनः क्षेत्रत उपसम्पन्ना द्वौ पुनः प्रागुक्तावविधिस्थितौ तेषामथवा इयमन्या मार्गणा तामेवाह-

[भा.३९३७] पेहेऊणं खेत्ते केई ण्हाणादि गंतु तु सरणं ।
पुच्छंताण कहंती अमुगत्थ वयं तु गच्छामो ।।

वृ- केचित्साधवो वर्षावासयोग्यं क्षेत्रं प्रत्युपेक्ष्यानुज्ञाप्य चेदं चिन्तयन्ति, यथाऽत्र प्रत्यासन्नेषु स्थानेषु समन्ततो बहवो गच्छाः क्षेत्राणि च वर्षाप्रायोग्याणि तत्र प्रचुराणि न सन्ति, समासन्नश्च वर्षाकालस्ततो मा केचिदन्येऽजानन्तोऽत्र स्थिर्युरिति स्नानादिसमवसरणे सर्वेऽपि मिलिता भविष्यन्तीति तत्र गत्वा सर्वेषां विदितं कुर्मः । एतच्चिन्तयित्वा तदनन्तरं स्नानादिसमवसरणं गत्वा तेषां पृच्छतां कथयन्ति अमुकत्र वयं वर्षाकरणाय गच्छाम इति ।

[भा.३९३८] घोसणय सोच्च सन्निस्य पच्छिणा पुव्वमतिगए पुच्छा ।
पुव्वठिते परिणते एत्थ भणंते न से इच्छा ।।

वृ- प्रागुक्तं घोषणां श्रुत्वा कोऽपि धर्मकथालब्धिसम्पन्नो धर्मश्रद्धिकास्तत्र श्रावका भूयांसः तिष्ठन्तीति परिभाव्य निर्मर्यादस्तत्र पूर्वतरं गतो गत्वा च संज्ञिनः संज्ञिवर्गस्य प्रेक्षणा संस्तवधर्म-कथादिभिरात्मीकरणं ततः पश्चादागताः क्षेत्रिकास्तैः स पृष्टो युष्माकमग्रे कथितं ततः कस्मादिह त्वमागतः स तूष्णीक आसीत् । तत क्षेत्रिकैरुक्तं गच्छत यूयं, सम्प्रत्यपि श्रावकवर्गश्च तस्मिन् पूर्वस्थिते परिणत आसीत् ततः पश्चात् ब्रूते मा निर्गच्छन्तु वयं द्वयोरपि वर्तिष्यामहे । अत्र यत् क्षेत्रिकाणामाभवति । न से तस्य निर्मर्यादस्य वा इच्छा प्रभवति । साम्प्रतमिमामेव गाथां व्याचिख्यासुः प्रथमतो घोषणकं भावयति-

[भा.३९३९] बाहुल्ला संजयाणं उवग्गो यावि पाउसे ।
ठियामो अमुगे खेत्ते घोसण न्नोन्न साहणं ।।

वृ- संयतानां समन्ततः प्रत्यासन्नेषु बाहुल्यात् उपाग्रश्चातिप्रत्यासन्नश्च अपिशब्दादन्यानि च वर्षाप्रायोग्याणि क्षेत्राणि न सन्ति ततो मा अन्ये प्रविशन्त्विति स्नानादिसमवसरणे घोषणादिमन्योन्य-कथनं कृतवन्तो यथा वयममुकक्षेत्रे स्थिताः स्म इति घोषणस्यैव प्रकारान्तरमाह-

[भा.३९४०] विभिज्जंते च ते पत्ता, ण्हाणादीसु समागमो ।
पहु प्पत्ते य नो काले सन्ना घोसणयं ततो ।

वृ- साधूनां स्नानादिषु समागमे यो यत आगतः स तत्र संस्थितस्ते च विवक्षिताः क्षेत्रमनुज्ञाप्य तत्र प्राप्तास्तत्र यदैकैकगच्छस्य समीपे गत्वा क्रमेण कथ्यते तदा कालो न प्राप्यते उत्सूरस्य भवनात्ततो ये सङ्घसमवायाः चैत्याद्या संप्रस्थितास्तान् आसन्नान् कृत्वा मेलापकं मेलयित्वा महता शब्देन घोषणकं कुर्वते । यथा शृणुत साधवोऽस्माभिरमुकं क्षेत्रं वर्षानिमित्तमनुज्ञापितमिति सोच्चा सन्निसेत्यादि व्याख्यानार्थमाह-

[भा.३९४१] दानादि सड्ढ कलियं सोऊण तत्थ कोइ गच्छेज्जा ।
रमणिज्जं खेत्तंति य धम्मकहा लद्धि संपन्नो ।।

वृ- तत् घोषणकं श्रुत्वा कोऽपि धर्मकथालब्धिसम्पन्नो दानादिप्रधानश्राद्धकलितं तत् रमणीयं क्षेत्रमिति कृत्वा तत्र गच्छेत्-

[भा.३९४२] संथव कहाहि आउट्टिऊण अत्ती करेइ ते सड्ढे ।
तेवि य तेसु परिनया इयरेवि तेहिं अनुपत्ता ।।

वृ- संस्तवेन धर्मकथाभिश्च तान् श्राद्धान् आवर्त्य आवर्ज्य आत्मीकरोति तेऽपि च श्राद्धास्तेषु परिणता इतरेऽपि च क्षेत्रिकास्तत्रानुपश्चादागता-

[भा. ३९४३] नीहत्ति तेन भणिते सङ्के पुच्छंति तेवि य भणंति ।
अच्छह भंते दोण्हवि न तेसि इच्छाए सच्चित्तं ॥

वृ- तैः क्षेत्रिकैर्निर्गच्छतेति भणिते ते पूर्वागताः श्राद्धान् पृच्छन्ति यामो (न) वयं निष्काश्य-मानास्तिष्ठामः । तेऽपि च श्राद्धाः क्षेत्रिकान् [illegible] यतो द्वयोरपि वयं वर्तिष्यामहे तत्र तेषां पूर्वगतानामिच्छया सचित्तमुपलक्षणमेतदुपधिश्च न भवति किंतु क्षेत्रिकाणामेवेति ।

[भा. ३९४४] असंथरे अनिंताणं कुलगणे संघे य होइ ववहारो ।
केवइयं पुन खेत्तं होइ पमाणेण बोधव्वं ॥

वृ- असंस्तरे अन्यत्रासंस्तरणे पुनरनिर्गच्छतां कुले गणे सङ्घे च भवति व्यवहारः किं पुनः क्षेत्रं भवति प्रमाणेन बोद्धव्यम् । तत्राह-

[भा. ३९४५] एत्थ सकोसमकोसं मूलनिबद्धं गाममनुयंताणं ।
सच्चित्ते अच्चित्ते मीसे य विदिन्नकालम्मि ॥

वृ- अत्र क्षेत्रमार्गणायां तत्क्षेत्रं मासप्रयोग्यं वा तत् सक्रोशमक्रोशं च । तत्र यत् सक्रोशं तत्पूर्वादिषु दिक्षु प्रत्येकं सगव्यूतमूर्ध्वमधश्चार्धक्रोशं अर्धयोजने च समन्ततो यस्य ग्रामाः सन्ति, अक्रोशं नाम यस्य मूलनिबन्धात्परतः षण्णां दिशामन्यतरस्यामेकस्यां द्वयोस्तिसृषु वा दिक्षु अटवीजलश्वापदस्तेन-पर्वतनदीव्याघातेन गमनं भिक्षाचर्या च न संभवति । तन्मूलनिबद्धमात्रमक्रोशं तं ग्राममनुञ्चतां, किमुक्तं भवति तस्मिन् सक्रोशेऽक्रोशे वा क्षेत्रे स्थितानामृतुबद्धे काले निष्कारणमेकैको मासकल्पो वितीर्णोऽनुज्ञातः । कारणेन पुनर्भूयानपि काले, वर्षासु निष्कारणं चत्वारो मासाः कालो वितीर्णः, । कारणेन पुनरतिप्रभूतोऽपि, एवं वितीर्णे काले सचित्ते अचित्ते मिश्रे वावग्रहो भवति । नावितीर्णे काले, तेषामसंस्तरणे अनिर्गच्छतां तत् साधारणं भवति क्षेत्रं तत्र चायं क्षेत्रव्यवहारः ।

[भा. ३९४६] अत्थि हु वसहग्गामा कुदेसनगरोवम सुहविहारो ।
बहुगच्छुवग्गहकरा सीमाच्छेएण वसियव्वं ॥

वृ- विवक्षितस्य स्थानस्य समन्ततः सन्ति वृषभग्रामाः । किं विशिष्टा इत्याह कुदेशनगरोपमा बहुगच्छोपग्रहकारिणस्तेषु सीमाच्छेदेन वस्तव्यं । तत्र वृषभक्षेत्रं द्विविधमृतुबद्धे वर्षाकाले वा एकैकं त्रिविधं, तद्यथा- जघन्यं मध्यममुत्कृष्टं च, तत्र ऋतुबद्धे जघन्यमाह-

[भा. ३९४७] जहियं व तिन्नि गच्छा पन्नरसुभया जना परिवसंति ।
एयं वसभखेत्तं तव्विवरीयं भवे इयरं ॥

वृ- उभौ जनौ आचार्यो गणावच्छेदकश्च तत्राचार्य आत्मद्वितीयो गणावच्छेदी आत्मतृतीयः सर्वसंख्यया पञ्च इदृशा यत्र त्रयो गच्छाः साधुसंख्यया पंचदश परिवसन्ति । एतत् जघन्यमृतुबद्धे काले वृषभक्षेत्रं । तद्विपरीतं यत्र तादृशाः पञ्चजना न संस्तरन्ति, तत् भवति इतरत् न वृषभक्षेत्रं भवतीति भावः उत्कृष्टं वृषभक्षेत्रं । यत्र द्वात्रिंशत्साधुसहस्राणि संस्तरन्ति यथा ऋषभस्वामिकाले ऋषभशासनस्य गणधरस्य, जघन्योत्कृष्टयोर्मध्ये मध्यमं वर्षाकाले यत्राचार्य आत्मतृतीयो गणावच्छेदीत्वात्मचतुर्थः

सर्वसंख्यया सप्त । एवं प्रमाणा यत्र च ये गच्छाः संस्तरंति एतत् जघन्यं वर्षाकालप्रायोग्यं, वृषभक्षेत्रं उत्कृष्टं मध्यमं च यथा ऋतुबद्धे काले इदृशेषु बहुगच्छोपग्रहकरेषु वृषभग्रामेषु सत्सु यदि वा एतेष्वेव साधारणेषु क्षेत्रेषु न परस्परं भण्डनं कर्तव्यं सचित्तादिनिमित्तं, किंतु सीमाच्छेदेन वस्तव्यं, ।

[भा.३९४८] तुब्भंतो मम बाहिं तुज्झ सचित्तं ममेतरं वावि ।
आगंतुगवत्थव्वा थी पुरिसकुलेसु व विरेगो ।

वृ- परस्परं वागन्तिको व्यवहार एवं कर्तव्यः । मूलग्रामस्यान्तर्मध्ये यत् सचित्तादि तत् युष्माकं, अस्माकं तु बहिः प्रतिवृषभादिषु अथवा युष्माकमुभयत्रापि सचित्तमस्माकमितरत् अचित्तं यदि वा युष्माकमागन्तुका अस्माकं वास्तव्या अथवा युष्माकं स्त्रियोऽस्माकं पुरुषा यदि वा एतेषु कुलेषु यो लभः स युष्माकमेतेषु तु कुलेष्वस्माकमिति ।

[भा.३९४९] एवं सीमच्छेदं करेंति साहरणंमि खेत्तंमि ।
पुव्वं ठितेसु जे पुन पच्छा एज्जा हि अन्ने उ ।।

वृ- एवमुक्तेन प्रकारेण साधारणे क्षेत्रे सीमाच्छेदं कुर्वन्ति ये पुनरन्ये तत्र पूर्वं स्थितेष्वन्येषां क्षेत्राणामभावे समागच्छन्ति ।

[भा.३९५०] खेत्ते उवसंपन्ना ते सव्वे नियमसो उ बोधव्वा ।
आभव तत्थ तेसिं सचित्तादीण किं भवे ।।

वृ- ते सर्वे नियमसो नियमेन क्षेत्रत उपसम्पन्ना ज्ञातव्याः । अथ तत्र क्षेत्रे तेषां तथा स्थितानां सचित्तादीनां मध्ये किमाभाव्यं भवति किं वा नेति तत्राह-

[भा.३९५१] नालपुरुस संथुय मित्ता य वयंसया सचित्ते ।
आहारमत्तगतिगं संथारगा वसहि मचित्ते ।।

[भा.३९५२] उग्गहंमि परे एयं लभते उ अखेत्तितो ।
वत्थगादि विदिन्नं तु कारणंमि वि सो लभे ॥

वृ- नालबद्धाः पूर्व संस्तुताः, पश्चात्संस्तुता मित्राणि वयस्याश्च एतत्सचित्ते परे परकीये अवग्रहे अक्षेत्रिको लभते । अचित्ते आहारमशनादिकं मात्रकत्रिकमुच्चारमात्रकं प्रश्रवणमात्रकं खेलमात्रकं च, संस्तारकं परिशाटिरूपं वा वसतिं च वस्त्रादिकं पुनर्दत्तं लभते, कारणेऽनिस्तरणादिलक्षणे पुनरदत्तमपि, ।

[भा.३९५३] दुविहा सुयोवसंपय अभिधारेंते तहा पढंते य ।
एक्केक्कावि य दुविहा अनंतर परंपरा चेव ।।

वृ- द्विविधा श्रुतसम्पत् तद्यथा-अभिधारयति पठति च एकैका द्विविधा-अनन्तरा परम्परा च । तत्राभिधारयत्वानन्तरा नाम एकः साधुः किंचिदाचार्यमभिधारयति यो ऽसावभिधार्यमाणः सन् । किंचिदन्यमभि संधारयति, परंपरा नाम एको यतिः कंचिदाचार्यमभि संधारयति सोऽप्यभिधार्य-माणोऽन्यमभि धारयति सोऽप्यन्यं, सोऽप्यन्यमेवमनियतं परिमाणं । तदेवाह-

[भा.३९५४] एत्थं सुयं अहीहमि, सुयवं सो य अन्नहं ।
वच्चंतो सोभिधारंतो सोवि अन्नत्तमेव वा ।।

[भा.३९५५] दोण्हं अनंतरा होति, तिगमादी परंपरा ।
सहाणं पुनरेतस्स केवलं तु निवेयणा ।।

वृ- अत्र अस्य पार्श्वे श्रुतमध्येष्ये इति कश्चिदभिधारयन् व्रजति, सोऽपि श्रुतवान् अन्यत्राभिधारयन् व्रजति । सोऽप्यन्यं यदि वा तमे वाभिधारयति । तत्र द्वयोरनन्तरा श्रुतोपसम्पद्भवति त्रिकादीनां तु परम्परा स्वस्थानं पुनरागच्छः केवलं तस्याभिधारितस्य निवेदना कर्तव्या, यथाहं स्वस्थानं गच्छामीति साम्प्रतमनन्तरायां परम्परायां चाभिधारणायामाभवन्तमाह-

**[भा.३९५६]** अच्छिन्नोवसंपयाए गमणं इहाणं जत्थ वा छिन्नं ।
मग्गणकहण परंपर छम्मीसं चेव वल्लिदुगं ॥

वृ- अच्छिन्नोपसम्पन्नमभिधार्यमाणो यदन्यं वाभिधारयति तस्य हि लाभो नान्येन च्छिद्यते तस्यामभिन्नोपसम्पदि योऽभिधारयतां लाभः स स्वस्थानं गच्छति, योऽभिधारितस्तस्यान्येनाच्छिन्नः सन् गच्छतीत्यर्थः । अथ च्छिन्ना उपसम्पत् तत आदित आरभ्य यत्र सर्वेषां लाभो गच्छति, इहाभिधारयन् योऽभिधारितस्तं प्रति संप्रस्थितः स चापान्तराले यदन्यमभिधारयति, आत्मीये वा गच्छे निवर्तते, तदा यदभिधारयता पथि लब्धं सचित्तं तदभिधारितस्य स्वयं वा गत्वा समर्पयति । अन्यस्य वा हस्ते प्रेषयति, । अथ नार्पयति, स्वयमन्यप्रेपणेन वा, तत्राह-मग्गणेत्यादि तत्र कहण परंपरत्ति यैः स दृष्ट आगच्छन् तैर्यः पूर्वमभिधारितस्तस्य परंपरकेणाख्यातं, यथा युष्मानभि धारयिता तेन संप्रस्थितेन सचित्तेन लब्धं ततो युष्माकं तेन न प्रेषितं । मग्गणत्ति स चैतत् श्रुत्वा तं मार्गयति । क्व गतो भवेन्मम सचित्तहारीति मृगय-माणैश्च स्नानादिसमवसरणे दृष्टः पृष्टश्च यथाऽमुककाले अस्मानभिधारयता समागच्छता सचित्तं लब्धं तन्मह्यं देहि-यदि न ददाति, तदा बलात् व्यवहारेण दाप्यते, मायानिष्पन्नश्च तस्य गुरुको मासः प्रायश्चित्तं, सचित्ते चत्वारो गुरुकाः अचित्ते उपधिनिष्पन्नं स पुनरभिधारयन् यैः सचित्तैः सोऽभिधारयति तेषां मध्ये किं लभते इत्याह-छम्मीसं चेव वल्लि दुगमिति षट्नाल्बद्धानि निर्मिश्राणि लभते, मिश्रं च एवं रूपं निर्मिश्रमिश्रलक्षणं वल्लिद्विकं लभते, । साम्प्रतमेनामेव गाथां विवृण्वन्नाह-

**[भा.३९५७]** अभिधारेंते पढंते वा छिन्नाए गतियंतए ।
मंडलीए उ संठाणं, वयते नो उ मज्झिमो ॥

वृ- अभिधारयति पठति वा यो लाभः सच्छिन्नायामुपसम्पदि अन्तके पर्यन्ते तिष्ठति सर्वेषां लाभस्तत्र विश्राम्यतीत्यर्थः । मण्डल्यां तु यो लाभः स स्वस्थानं लभते व्याख्यातुरुपतिष्ठत इत्यर्थः । न तु मध्यमे मण्डलीमध्यवर्तिनि कस्मादित्याह ।

**[भा.३९५८]** जो उ मज्झिल्लए जाति नियमा सो उ अंतिमं ।
पावते तिन्नि भूमि तु पानियं व पलोट्टियं ॥

वृ- यो मण्डली मध्यवर्तिनि लाभो याति, सोऽपि नियमादन्तिमं व्याख्यातृलक्षणं वा प्राप्नोति, निम्नभूमि पानीयं प्रलोठितं पूर्वं षट् निर्मिश्राण्युक्तानि तानि सम्प्रति दर्शयति -

**[भा.३९५९]** माया पिता य भाया भगिनी पुत्तो तहेव धूया य ।
एसा अनंतरा खलु निम्मीसा होंति वल्ली उ ॥

वृ- माता पिता भ्राता भगिनी पुत्रो दुहिता च एषा खल्वनन्तरा निर्मिश्रा भवति वल्ली ।

**[भा.३९६०]** सेसाण उ वल्लीणं परलाभो होइ दोन्नि चउरो वा ।
एवं परंपराए विभास ततो य जा परतो ॥

वृ- शेषाणां तु वल्लीनां यो लाभो भवति द्वे पुत्रदुहितरौ यदि वा चत्वारि मातृपितृभ्रातृभगिनीरूपाणि

समस्तोऽपि परलाभोऽपि धारितस्य लाभ इत्यर्थः । एवं परम्परयामपि विभाषा कर्तव्या, । ततोऽपि वा परतो वल्ली तस्य याः परतस्ताः सर्वा अपि परलाभः, । सम्प्रति मिश्रवल्लीप्रतिपादनार्थमाह-

[भा.३९६१] माउम्माया पिया भाया भगिनी एवं पिउणो वि ।
पुत्तो धुया य तहा भाउयमादी चउण्हंपि ।।

[भा.३९६२] अट्ठ य पज्जयाणं चउवीसं भाउभगिनि सहिं चाति ।
एवइम्मियमाउल सुयादयो परयरा वल्ली ।।

वृ- मातुर्माता पिता भ्राता भगिनी च । एवं पितुरपि चत्वारि वक्तव्यानि तद्यथा माता पिता भ्राता भगिनी च भ्रात्रादीनां चतुर्णां प्रत्येकं द्वौ द्वौ द्रष्टव्यो तद्यथा पुत्रो दुहिता च भ्रातुः पुत्रो दुहिता, भगिन्या अपि पुत्रो दुहिता च, अष्टौ च प्रार्यकाणि भ्रातृभगिनीसहितानि तद्यथा मातामह्या अपि माता पिता भ्राता भगिनी, पितामहस्यापिमातापिता भ्राता भगिनी । सर्वसंख्यया मिश्रवर्णा चतुर्विंशतिः अष्टावार्यकाणि अष्टौ प्रार्यकाणि अष्टौ च मात्रादिचतुष्टयस्य प्रत्येकं द्विधा भवनात्तथा चाह एतावत्येव मिश्रवल्ली मातुलसुतादयः परतरा वल्ली ते च मातुलसुतादयो यदि तमपि धारयन्ति तदा स लभते आचार्यमभिधारयन्ति तदा आचार्यस्य, ये पुनः परतरे स्वजना ये चान्ये ते सर्वेऽनभिधारयतो वा आचार्यस्य वा भवन्ति-

[भा.३९६३] दुविहो अभिधारेंतो दिट्ठऽदिट्ठो य होंति नायव्वो ।
अभिधारेंतगसं तएहिं दिट्ठो य अन्नेहिं ।।

वृ- अभिधारयन् द्विविधो द्रष्टव्यस्तद्यथा-दृष्टोऽदृष्टश्च । तत्र दृष्टोऽभिधार्यमाणसत्कैः साधुभिरन्यैर्वा अदृष्टो न केनापि दृष्टः ।

[भा.३९६४] सच्चित्ते अंतरा लद्धे जो उ गच्छति अन्नहिं ।
जातं पेसे सयं वावि नेइ तत्थ अदोसवं ।।

वृ- सचित्ते अन्तरा पथि लब्धे योऽभिधारयन् अन्यत्र गच्छति, स्वगच्छं वा प्रतिनिवर्तते, तत्र यस्तत् सचित्तं लब्धमभिधारितस्य प्रेषयति स्वयं वा नयति, सोऽदोषवान् ।

[भा.३९६५] जो उ लद्धं वए अन्नं सगणं पेसएइ वा ।
दिट्ठा वा अदिट्ठा वा मायी होंति विदोन्निवी ।।

वृ- यस्तु सचित्तं लब्ध्वा अन्यमाचार्यं व्रजति, स्वगणं वा तत्सचित्तं प्रेषयति । दृष्टोऽदृष्टो वा सन् तौ दृष्टादृष्टरूपौ द्वावपि मायिनौ भवतः ।

[भा.३९६६] ण्हाणाइएसु तं दिस्सा पुच्छा सिठे हरंति से ।
गुरुगा चेव सचित्ते अचित्ते तिविहं पुन ।।

वृ- परम्परया कथमपि श्रुतं यथाऽमुकोऽस्मानभिधार्य समागच्छत् अन्तरा पथि सचित्तं लब्धवान्, परं सोऽन्यत्र गतः स्वगणं वा गतवान् ततस्तं मृगयमाणैस्तैः स्नानादिसमवसरणेषु तं दृष्ट्वा पृच्छा कृता यथा त्वममुके कालेऽस्माकमभिधार्य समागच्छन्नंतरा सचित्तमुत्पादित वान् । तेन च यथावस्थितं शिष्टं ततः स तस्य सकाशात्तम् सचित्तं हरंति । अथ स न ददाति तर्हि व्यवहारेण दाप्यते मायाप्रत्ययश्च तस्य गुरुको मासः प्रायश्चित्तं सचित्तापहरणे चत्वारो गुरुकाः, अचित्ते पुनस्त्रिविधं जघन्योपधिनिष्पन्नं मध्यमोपधिनिष्पन्नमुत्कृष्टोपधि निष्पन्नं च । अत्रैवान्यकर्तृकविधिशेषसूचकं गाथाद्वयम् ।।

[भा.३९६७] दुविहो अभिधारंतो दिट्ठमदिट्ठो य होइ नायव्वो ।
अभिधारिज्जंतगस्सं एहिं दिट्ठो वा अन्नेहिं ।।

[भा.३९६८] दिठ्ठो माई अमाई एवमदिट्ठो वि होइ दुविहो उ ।
अमाई उ अप्पिणितीसाईउ न अप्पिणे जो उ ।।

वृ- आद्यगाथा व्याख्यानं प्राग्वत् । दृष्टो द्विविधो मायी अमायी च । एवमदृष्टोऽपि द्विविधो भवति-मायी अमायी च । तत्र अमायी लब्धं सचित्तादिकमर्पयति यस्तु मायी स नार्पयति । ततः स बलवान् व्यवहारेण दाप्यते शेषं तथैव ।

[भा.३९६९] एवं ता जीवंते अभिधारेंतो उ एइ जो साहू ।
कालगते एयम्मि उ इणमन्नो होइ ववहारो ।।

वृ- एवं तावत् जीवत्यभिधार्यमाणे योऽभिधारयन् साधुरागच्छति तस्य व्यवहारः, कालगते पुनरेतस्मिन्नभिधार्यमाणेऽयमन्यो भवति व्यवहारः । तमेवाह-

[भा.३९७०] अप्पत्ते कालगते, सुद्धमसुद्धे दिंतअदिंते य ।
पुव्विं पच्छा निग्गय संतमसंते सुते बलिया ।।

वृ- कंचिदाचार्यमभिधारयन् संप्रस्थितस्तत्र यं गच्छमभिधार्य संप्रस्थितस्तमप्राप्ते एव स आचार्यः कालगतोऽत्र च त्रयः प्रकाराः पुव्वं पच्छा निग्गयत्ति स यदैवाभिधारयन् निर्गतस्तदैव कालगत आचार्यः । १ अथवा पूर्वमभिधारयन् निर्गतः पश्चादाचार्यः कालगतः २, यदि वा पूर्वमाचार्यः कालगतः स पश्चादभिधारयन् निर्गतः ३ । अत्र प्रथमे प्रकारे यत्तेनाभिधारयता पथि सचित्तादि लब्धं, तत्कालगताचार्य शिष्याणामाभवति । द्वितीये प्रकारे लब्धेऽलब्धे वा सचित्तादिके यद्युपरताः स्थविरास्तदापि तत्सचित्तादि तच्छिष्याणामाभवति । तृतीये प्रकारेऽभिधारयता दूरादागच्छता तावन्न ज्ञातं यावत्तं गच्छं प्राप्तस्ततो यन्निमित्तं स तत्रागतस्तत् श्रुतं यदि तस्य शिष्यस्यास्ति तदा स तत् श्रुतं तस्मै दातुमिच्छति । ततः कालगताचार्याणामेव तत् सचित्ताद्याभवति, । अथ तत् श्रुतं नास्ति न वा ददाति तदा न लभन्ते कालगताचार्यशिष्याः सचित्तादिकं; आह- किं कारणं तृतीयेऽपि प्रकारे कालगताचार्यशिष्याणामेवाभवति तत आह- बलियत्ति बलवन्ती श्रुताज्ञा तत् श्रुतं तदवस्थामेव यन्निमित्तं तेनाभिधारितं शुद्धमशुद्धे अदिन्तदिंते य इति यत्कालगताचार्यस्य शिष्याणामाभवति तद्यद्यभिधारको ददाति तदा शुद्धो अप्रायश्चित्तीत्यर्थः । अथ न ददाति तदा अशुद्धः प्रायश्चित्तभाग् भवतीत्यर्थः । तत्र सचित्तस्यादाने प्रायश्चित्तं चत्वारो गुरुकाः, आदेशान्तरेणानवस्थाप्यमचित्ते उपधिनिष्पन्नं योऽपि वानाभाव्यमादत्ते तस्याप्येवमेव प्रायश्चित्तम् । सम्प्रति पुव्विं पच्छानिग्गते संतमसंते इत्यस्य किंचिद् व्याख्यानमाह-

[भा.३९७१] लद्धे उवरया थेरा तस्स सिस्साण सो भवे ।
मए वि लभते सीसो जइ से अत्थि देइ वा ।।

वृ- तत्र प्रथमप्रकारेऽभिहितं प्राक् तथैव द्वितीये प्रकारे लब्धे उपलक्षणेतत् । अलब्धे वा सचित्ते स्थविरा उपरतास्ततः स सचित्तादिको लाभस्तस्य शिष्याणामाभवति । तृतीये पुनः प्रकारे मृतेऽप्यभिधारिते लभते शिष्यो यदि से तस्य श्रुतमस्ति ददाति वा, अथवा नास्ति न ददाति वा तदा न लभते । एतावता संतमसंते इत्यपि व्याख्यातं उपसंहारमाह-

[भा.३९७२] एवं नाणे तह दंसणे य सुत्तत्थ तदुभए चेव ।
वत्तण संधणगहणे नवनव भेया य एक्केक्के ॥

वृ- एवमुक्तप्रकारेण ज्ञाननिमित्तमधिधार्यमाणे यदाभवति तत् भणितं, तथा तेनैव प्रकारेण दर्शनेऽपि दर्शनप्रभावकशास्त्राणामर्थ्यर्थायाभिधार्यमाणे आभवत् प्रतिपत्तव्यं, । तत्र ज्ञानार्थं दर्शनार्थं वा योऽभिधार्यते, स सुत्तत्थतदुभए चेवत्ति सूत्रार्थतया अर्थार्थतया तदुभयार्थतया तत्र च सूत्रार्थतया अधिधारण तद्वर्तनार्थतया सन्धनार्थतया ग्रहणमिति, एवं त्रयो भेदाः । सूत्रार्थतया अर्थार्थतया तदुभयार्थतया च प्रत्येकं द्रष्टव्याः सर्वसंख्यया ज्ञाने दर्शने च प्रत्येकं नवनवभेदास्तथा चाह-नवनवभेया एक्केक्के ।

[भा.३९७३] पासत्थमगीयत्था उवसंपज्जंति ते उ चरणट्ठा ।
सुत्तोवसंपयाए जो लाभो सो उ तेसिं उ ॥

वृ- ये पार्श्वस्थादयोऽगीतार्थाश्चरणार्थमुपसम्पद्यते तेषां चरणोपसम्पन्निमित्तं कमभ्यभिधावरन् समागच्छतां श्रुतोपसम्पदि यान्तरो यो लाभो भवति स तेषामभिधार्यमाणानां भवति, नालबद्धवल्ल्यादिकं तु तेषामभिधारयतामिति ॥

[भा.३९७४] गीयत्था ससहाया असमत्ता जं तु लहति सुहदुक्खी ।
सुतत्थे अतक्कंत समत्तकप्पी उ न दलंति ॥

वृ- ये पुनः पार्श्वस्थादयो गीतार्थाः ससहाया संभोगनिमित्तमालोचनां दास्यामइत्यभिधारयन्तः सूत्रार्थान् अतर्कयन्तोऽनपेक्षमाण आगच्छन्तोऽन्तरा यल्लभन्ते, सचित्तमचित्तं वा येऽपि च गीतार्था असमाप्ता असमाप्तकल्पा आगच्छन्तो लभन्ते यच्च एकाकी एकाकिदोषपरिवर्जनार्थमुपसम्पत्तुकामो लभते यच्च समाप्तकल्पिनस्ते तेषामेव भवन्ति । न तु येषां समीपं प्रस्थितास्तेषामेवं निर्ग्रन्थीनामपि द्रष्टव्यम् ।

[भा.३७९५] अभिधारिज्जंत अपत्ते एस वुत्तो गमो खलु ।
पढंते उ विहिं वुच्छं सो उ पाढो इमो भवे ॥

वृ- एषोऽनन्तरोदितः खलु गमः प्रकारोऽभिधार्यमाणेऽप्राप्ते उक्तः । अत ऊर्ध्वं तु प्राप्ते सति पठति विधिं वक्ष्यामि, स च पाठोऽयं वक्ष्यमाणो भवति तमेवाह ॥

[भा.३७९६] धम्मकहा सुत्ते या कालिय तह दिट्ठिवाय अत्थे य ।
उपसंपयसंजोगे दुगमाइ जहुत्तरं बलिया ॥

वृ- धर्मकथायां सूत्रे कालिके तथा दृष्टिवादे अर्थे च पाठार्थमुपसम्पद्भवति तत्र सूत्रतोऽर्थतश्च सूत्रार्थयोश्च स्वस्थाने द्विकादिसंयोगे यथोत्तरं बलिका बलवन्तः सूत्रचिन्तायां परस्परं सूत्रं पाठयत् अर्थचिन्तायां परस्परमर्थं व्याख्यानयन् सूत्रार्थयोरेव परस्परं चिन्तायामर्थप्रदाता बलीयानिति भावः ।

[भा.३९७७] आवलिया मंडलिकमो पुव्वुत्तो छिन्नच्छिन्न भेदेणं ।
एसा सु उवसंपय एत्तो सुहदुक्खसंपयं वोच्छं ॥

वृ- या सा श्रुतोपसम्पत् परंपरागता आवलिका ज्ञातव्या यात्वनन्तरा सा मण्डली सा च अच्छिन्ना कथमिति चेदुच्यते यस्मादभिधारकस्य लाभोऽन्येनाच्छिन्नः सन्नभिधार्यमाणमागच्छति । ततोऽच्छिन्नो लाभयोगात् सा उपसम्पदच्छिन्नेत्युच्यते या चावलिका सा छिन्ना यतस्तस्यां यो लाभ आदित आरभ्य परम्परया छिद्यमानोऽन्तिमेऽभिधार्येऽन्यमनभिधारयति विश्राम्यति ततः सा छिन्नोपसम्पत् । एवं

छिन्नाछिन्नभेदेनावलिकाभण्डिकाक्रम: पञ्चत्र्यादि पूर्वोक्ते द्रष्टव्य: । तदेवमुक्तेयाश्रुतोपसम्पत् अत ऊर्ध्वं सुखदु:खोपसम्पदं वक्ष्ये । तामेवाह-

**[भा.३९७८]** अभिधारे उवसंपन्नो दुविहो सुहदुखितो मुनेयव्वो ।
तस्स उ किं आभवती सचित्ताचित्त लाभस्स ।।

**वृ-** सुखदु:खितो द्विविधो ज्ञातव्यस्तद्यथा-अभिधारयतीत्यभिधारो अभिधारयत् उपसम्पन्न: सुखदु:खोपसम्पदं प्राप्त: तस्य द्विविधस्यापि सचित्तलाभस्याचित्तलाभस्य वा मध्ये किमाभवतीति च वक्तव्यम् । अथ क: सुखदु:खोपसम्पदमुपपद्यते तत आह-

**[भा.३९७९]** सहायगो तस्स उ नत्थि कोती सुत्तं च तक्केइ न सो परत्तो ।
एगानिए दोसगणं विदित्ता सो गच्छमज्झेइ समत्तकप्पं ।।

**वृ-** तस्य सहायक: कोऽपि न विद्यते न च परस्मात्सूत्रमपेक्षो स्वयं सूत्रार्थपरिपूर्णत्वात् । केवल-मेकाकिनी दोषगणं विदित्वा स गच्छं समाप्तकल्पमभ्येति अभ्युपगच्छति । तत्रोपसम्पन्नमधि-कृत्याभवद्व्यवहारमाह-

**[भा.३९८०]** खित्ते सुहदुक्खी उ अभिधारंताइं दोन्नि वी लभति ।
पुरपच्छसंथुयाई हेट्ठिल्लाणं च जो लाभो ।।

**वृ-** सुखदु:खी सुखदु:खोपसम्पदमुपसम्पन्न: क्षेत्रे परक्षेत्रेऽपि एतदर्थमेव क्षेत्रग्रहणमन्यथैतन्निरर्थकं स्यात् द्वयान्यपि पूर्वसंस्तुतानि वाभिधार्यन्ते । लभन्ते ये च तेन दीक्षिता: तेषामधस्तनानां यो लाभ: सोऽपि तस्यापि भवति । सम्प्रति क्षेत्रे इत्यस्य विवरणमाह-

**[भा.३९८१]** परखेत्तंमि वि लभति सो दोवी तेन गहणखेत्तस्स ।
जस्स वि उवसंपन्नो सोवि य से न गिण्हए ताइ ।।

**वृ-** मातापितृप्रभृतीनि श्वश्रूश्वशुरप्रभृतीनि च यदि तं सुखदु:खोपसम्पन्नमभिधारयन्त्युपतिष्ठन्ते व्रतग्रहणाय परक्षेत्रेऽपि लभते इति प्रतिपत्ति: स्यादित्येवं लक्षणेन कारणेन क्षेत्रस्य ग्रहणं कृतमन्यथा न कमप्यर्थं पुष्णाति यस्यापि समीपे स उपसम्पन्न: सोऽपि तानि न गृह्णाति सूत्रादेशतोऽनाभाव्यत्वात् ।

**[भा.३९८२]** परखेत्ते व समाणे अतिकमंतो वा न लभति असन्निं ।
छंदेण पुव्वसन्नी गाहियस्स समादियो लभइ ।।

**वृ-** परकीय क्षेत्रे तिष्ठन् व्यतिक्रमन् वा यस्तस्य सुखदु:खोपसम्पन्नस्य उपतिष्ठति स यदि असंज्ञी अविदितपूर्वस्तदा तमसंज्ञिनं न लभते, केवलं स क्षेत्रिकस्याभवति, य: पुन: पूर्वसंज्ञी पूर्वविदितस्वरूपस्तं पूर्वसंज्ञितं च्छन्देन लभते यदि स वल्लीसम्बन्धो भवति तं च सुखदु:खितमभिधारयति तदा लभते । अथ तं नाभिधारयति । अभिधारयन्नपि च वल्लीसबन्धो भवति, ततो यस्य समीपे सुखदु:खोपसम्पदं जिघृक्षु: संप्रस्थितस्तस्याभवति । गाहियस्स समादिसो लभते इति, यदि स सुखदु:खितेन सम्यक्त्वं ग्राहित: आदिशब्देन मद्यमांस विरतिं वा तत: पश्चात्प्रव्रज्या परिणाम परिणत: स यद्यपि वल्लीद्विकं सम्बन्धो न भवति तथापि यदि तस्य सुखदु:खितस्य समीपे उपतिष्ठते तदा स तं लभते । एतदेव सविशेषम-भिधित्सुराह-

**[भा.३९८३]** सुह दुक्खिएण जऊ पक्खेव सामितो नहिं कोई ।

वेंति अभिनिक्खामिं सोउ क्खेत्तिस्स आभवइ ।।

वृ- तेन सुखदुःखितेन यदि तत्र परक्षेत्रे कोऽप्युपशमितः सम्यक्त्वं ग्राहितो भवति तत्कालमेव ब्रूते-अभिनिष्क्रमामि प्रव्रज्यां प्रतिपद्ये तदा क्षेत्रिणः क्षेत्रिकस्याभवति न तु सुखदुःखितस्य ।।

[भा.३९८४] अह गुण गाहितो दंसण ताहे स होति उवसगंतस्स ।
कम्हा जम्हा सावए तिन्नि वरिसाणि पुव्वदिसा ।।

वृ- अथ पुनर्दर्शनं सम्यक्त्वं तेन सुखदुःखितेन पूर्वग्राहितस्तः स तस्य उपशमयतः सद्देशनया प्रतिबोधितः स आभवति कस्मादिति चेदत आह-यस्मात् श्रावके त्रीणि वर्षाणि पूर्वदिग् भवति पूर्वापन्नता भवति ।

[भा.३९८५] एएण कारणेण सम्मदिट्ठं तु न लभते खेत्ती ।
एसो उवसंपन्नो अभिधारेंतो इमो होइ ।।

वृ- एतेन कारणेन सम्यग्दृष्टिं पूर्वग्राहितसम्यग्दर्शनं क्षेत्री क्षेत्रिको न लभते, एष सुखदुःखोपसम्पदमुपसम्पन्न उक्तः । साम्प्रतमभिधारयन् वक्तव्यः । सोऽयं वक्ष्यमाणो भवति ।

[भा.३९८६] मग्गण कहणपरंपर अभिधारेंतेण मंडली च्छिन्ना ।
एवं खलु सुह दुक्खे सच्चित्तादी उ मग्गणा कया ।।

वृ- सुखदुःखनिमित्तमन्यं गच्छमुपसंपद्यमानस्य मार्गणा भवति, । कुत्र स गच्छो विद्यते गवेषयन् गच्छति, ततः केनापि तस्य कथनं भवति; यथामुकस्थाने स गच्छोऽस्तीति, ततस्तेनाभिधारयता परम्परा आवली च्छिन्ना, अनन्तरा मण्डली अच्छिन्ना प्रागिव परिभाव्या, परिभाव्य च यत् यस्माभवति तत्तस्मै दातव्यं, इयमत्र भावना-आवलिकायां मण्डल्यां वा वल्लीद्विकमभिधारयत आभवति, शेषं तु यत्स लभते तत्तेनाभिधारितस्य भवति, । तदपि च परम्परया व्रजदन्तिमस्याविधार्यमाणस्य विश्राम्यति, मण्डल्यामन्येनाच्छिद्यमानो लाभोऽनन्तरस्याभिधार्यमाणस्योपतिष्ठति । एवमुक्तेन प्रकारेण सुखदुःखोपसम्पदभिजिघृक्षोरभिधारयतः सचित्तादौ मार्गणा कृता, सम्प्रति प्रतिकारेण सुखदुःखोपसम्पदमुपसम्पन्ने अभिधारयति सचित्तादौ मार्गणां करोति ।

[भा.३९८७] जइ से अत्थि सहाया जइ वावि करेंति तस्स तं किच्चं ।
तो लभते इहरा पुन तेसि मणुन्नाण साहारं ।।

वृ- यदि स तस्य सुखदुःखोपसम्पन्नस्य सहायाः सन्ति यदि वा त एव येषां समीपे उपसम्पन्नस्तस्य तत्कृत्यं वैयावृत्यादि कुर्वन्ति तदा यत्तस्योपतिष्ठन्ति तं लभते इतरथा पुनस्तेषां समनोज्ञानां सांभोगिकानां साधारणं तद्भवति ।

[भा.३९८८] अपुण्णा कप्पिया जे उ अन्नोन्नमभिधारए ।
अन्नोन्नस्स लाभो उ तेसिं साहारणो भवे ।।

वृ- अपूर्णकल्पिकानाम गीतार्था असहाया य अपूर्णकल्पिका अन्योन्यमभिधारयन्ति अन्योन्यस्य सुखदुःखोपसम्पदं प्रतिपद्यते तेषां यो लाभः सोऽन्योऽन्यस्य परस्परस्य साधारणो भवति ।

[भा.३९८९] जाव एक्केक्कगो पुन्नो ताव तं सारवेइओ ।
कुलाइथविरगाणं वा देंति जो वावि सम्मतो ।।

वृ- यावत्तेषामेकैकस्य पूर्णो गच्छो भवति, किमुक्तं भवति यावदेकैकस्य प्रत्येकं गच्छो नोपजायते,

तावत्तमभ्युपपन्नगच्छमेकतरे सारयन्ति । यथामवग्रहे वर्तन्ते, अथ ते सारयन्तः परिताम्यन्ति तदा कुलस्थविराणामादिशब्दात् गणस्थविराणां सङ्घस्थविराणां वा तान् ददति अर्पयन्ति यो वा कोऽपि तेषां सम्मतस्तस्य समर्पयति । गता सुखदुःखोपसम्पत् । सम्प्रति मार्गोपसम्पद्वक्तव्या तथा चाह-

[भा.३९९०] सुखदुक्खे उवसंपयए सा खलु वण्णिया समासेणं ।
अह एत्तो उवसंपय मग्गोगह वज्जिए वुच्छं ॥

वृ- एषा अनन्तरोदिता खलु उपसम्पद्वर्णिता समासेन सुखदुःखे । अथानन्तरमत ऊर्ध्वं मार्गे अवग्रहवर्जितं वक्ष्ये, मार्गोपसम्पदं वक्ष्ये इत्यर्थः । अत्र चेयं व्युत्पत्तिर्मार्गदिशनायोपसम्पत् मार्गोपसम्पत्।

[भा.३९९१] मग्गोवसंपयाए गीयत्थेणं परिग्गहीयस्स ।
अगीयस्सवि लाभो का पुन नवसंपया मग्गे ॥

वृ- मार्गोपसम्पदि प्रतिपन्नायामगीतार्थस्यापि सतो गीतार्थेन परिगृहीतस्य लाभो भवति, अन्यथा अगीतार्थस्य न किंचिदाभवतीति यथनात्र कोऽपि लाभः स्यात्, का पुनरुपसम्पत् मार्गे इति चेदत आह-

[भा.३९९२] जह कोइ मगन्नू अन्नं देसं तु वज्जती साहू ।
उपसंपज्जइ उ तगं तत्थण्णो गंतुकामो उ ॥

वृ- यथेति मार्गोपसम्पत्प्रदर्शने यथा कश्चित्साधुर्मार्गज्ञोऽन्यं देशं व्रजति तत्र देशेऽन्यो गन्तुकामस्तकं साधुमुपसम्पद्यते, अहमपि युष्माभिः सह समागमिष्यामि । अथ कीदृशो मार्गोपदर्शननिमित्तमुपसम्पद्यते

[भा.३९९३] अव्वत्तो अविहाडो अदिट्ठदेसी अभासितो वावि ।
एगमनेगे उवसंपयाए चउभंगो जा पंथो ॥

वृ- अव्यक्तो वयसा अविहाडोऽप्रगल्भः अदृष्टदेशी अदृष्टपूर्वदेशान्तरोऽभाषिको देशभाषा-परिज्ञानविकलः सा चोपसम्पद् एकस्यानेकस्य च तत्र चतुर्भङ्गी । तद्यथा-एकक एकं संपद्यते १ एकमनेकः २ अनेकमेकः ३ अनेकमनेकः ४ सा चोपसम्पत् तावत् यावत्पन्थाः । किमुक्तं भवति यावत्पन्थानं व्रजति ततो वा प्रत्यागच्छतीति । एतदेव सविशेषमभिधित्सुराह-

[भा.३९९४] गयागते गयनियत्ते फिडियगविठे तहेव अगविट्ठे ।
उब्भामग सन्नायग नियट्ट अदिट्ठे अभासीय ॥

वृ- अव्यक्ता अविहाडा अदेशिका अभाषिका वा अन्यं साधुमुपसंपद्यते, अस्माकममुकप्रदेशेन यथा वा यत्र तेषां गन्तव्यं तत्र ये विवक्षितसाधोरन्ये ऽव्यक्तविहाडादयो गन्तुकामास्तान् ब्रुवते वयं युष्माभिः सह गमिष्यामस्तत्र यत्र गन्तुकामास्ततो यदि प्रत्यागच्छन्ति तदेतत् गतागतमित्युच्येत तस्मिन् मार्गोपसम्पत् गयनियत्ते इति अनुसंपन्ना एववात्मीयेन व्यक्तविहाडादिना समं गतास्तस्य च कालगततया प्रति भग्नत्वादिना वा कारणेन प्रत्यागन्तव्यं नाभवत्ततः प्रत्यागच्छन्तस्तं साधुमुपसंपद्यते। एषा गतनिवृत्ते मार्गोपसम्पत्तथा फिडियगविट्ठे तहेव अगविठे इति स्फिटितो नाम नष्टः तत आह उब्भामगेत्यादि उद्भ्रामकभिक्षाचर्यया अदृष्टपूर्वे विषये गतस्ततो न जानाति कुतो गन्तव्यमिति स्फिटितः। अथ स्वज्ञातयो गवेषमाणाः समागतास्तत स्तस्मात् स्थानादृष्टपूर्वे विषये नष्टः ततः स्फिटितस्तथा अभाषकोऽदृष्टपूर्वे विषये पृष्टो पृष्टतो लग्नो याति, परं मिलितुं न शक्नोति, स (च) दृष्ट्वा पि प्रतिपृच्छनीयदेशभाषामजानन् न प्रतिपृच्छति, ततो यथा तत्परिभ्रष्टो नश्यति, स च नष्टो गवेषणीयः।

तत्र स्फिटिते गवेषिते तथैव चागवेषिते अभावेन मार्गणा कर्तव्या ।

तत्र तदेव गवेषयतां वाभवनमनाभवनमाह-

[भा.३९९५] उवगट्ठ अन्नपंथेण वा गयं अगेवसित न लभंति ।
अगवेट्ठोति परिणत गवेसमाणा खलु लभंति ।।

वृ- उपेत्य स्वज्ञातिकान् दृष्ट्वा उपनष्टो अन्येन वा यथास विवक्षिते स्थाने गतो भविष्यतीत्येवं संकल्पा ये मार्गोपदेशनायोपसम्पन्नास्ते यदि तं न गवेषयन्ति, तदा तेऽगवेषयन्तस्तस्य सत्कं न किंचिल्लभन्ते, यदि पुनरद्यापि न गवेषित इति परिणते चेतसि प्रयत्नं विधाय गवेषयन्ति, तदा तस्यादर्शनेऽपि खलु तत्सत्कं लभन्ते, । अथोपसम्पद्यमानानां किमाभवति किं वा नेत्यत आह-

[भा.३९९६] अम्मापिति संबद्धा मित्ता य वयंसगा य जे तस्स ।
दिट्ठा भट्ठा य तहा मग्गुवसंपन्नतो लभति ।।

वृ- व्रजतः प्रत्यागच्छतो वा यते उपसम्पद्यमानाः सचित्तादिकमुत्पादयन्ति तत्सर्वं मार्गोपदेशकस्य नेतुराभवति, ये पुनर्मातापितृसम्बद्धा नालबद्धवल्लीद्विकमिति भावः । मित्राणि वयस्या दृष्टा भाषिताश्च ये तमभिधारयन्ति तान्मार्गोपसम्पन्नो मार्गोपसम्पदं प्रतिपन्नो लभते । तदेवं गता मार्गोपसम्पत् ।

[भा.३९९७] विनयोपसंपयातो पुच्छणसाहण अपुच्छगहणे य ।
नायमनाये दोन्निवि नमंति पक्किल्लसाली वा ।।

वृ- अत ऊर्ध्वं विनयोपसम्पद्वक्तव्या इति शेषः । स चैवं कारणतो वा केचिद्विहरंतोऽकारणतो वा केचिद्विहरन्तो ऽदृष्टपूर्वदिशं गतास्तैर्वास्तव्यानां सांभोगिकानां समीपे प्रच्छनं कर्तव्यम् । यथा कानि मासप्रायोग्यानि क्षेत्राणि कानि वर्षावासप्रायोग्याणि । एवं पृष्टैरपि साधनं कथनं कर्तव्यमन्यथा वक्ष्यमाणप्रायश्चित्तप्रसक्तेरथ तथैवागन्तुका न पृच्छन्ति तदा तेषामपि प्रायश्चित्तं, गहणे यत्ति सचित्तादिकस्य ग्रहणे सति परस्परं निवेदनं कर्तव्यं, यथैतत्सचित्तं वा लब्धं यूयं गृह्णीतेति अनिवेदने असमाचारी तथा नाएत्ति ते आगन्तुका वास्तव्याश्च परस्परं जानन्ति । तथा यतन्ते न प्रमादिनः अनाएत्ति न जानन्ति, कियन्तस्ते किंवा प्रमादिनस्तत्र ज्ञाता न ज्ञाता वा द्रव्यादिभिः परीक्ष्योपसम्पद्येरन् नान्यथा, दोन्निवि नमंतित्ति ते च परीक्षापूर्वकमुपसम्पद्यमाना द्वयेऽपि परस्परं नमन्ति किमुक्तं भवति रत्नाधिकस्य प्रथमतोऽवमरत्नाधिकेनालोचना दातव्या पश्चात् रत्नाधिकस्य । अत्र पक्वशालयो दृष्टान्तः । यथा पक्वशालयः परस्परं नमन्ति तथात्रापीति भावः ।

साम्प्रतमेनामेव गाथां विवरीषु प्रथमतः पुच्छणसाहण अपुच्छत्ति व्याख्यानार्थमाह-

[भा.३९९८] कारणमकारणे वा अदिट्ठदेसं गया विहरमाणा ।
पुच्छाविहारखेत्ते अपुछ लहुतो य जं चावि ।।

वृ- कारणे अशिवादिलक्षणे अकारणे विहारप्रत्ययं सुखविहारो भविष्यतीति बुद्ध्या विहरन्तो यथा सुखमक्लेशेन सूत्रार्थान् कुर्वन्तोऽदृष्टपूर्वं देशं गतास्तत्र च तेषां सांभोगिकाः सन्ति, ततस्तैरागन्तुकैस्ते वास्तव्याः सांभोगिकाः पुच्छाविहारखेत्तेति मासकल्पप्रयोग्यानि वर्षाकल्पप्रायोग्यानि वा विहारक्षेत्राणि प्रष्टव्यास्तानि च तैः कथयितव्यानि, । यदि न पृच्छन्ति, पृष्टा वा ते न कथयन्ति तदा द्वयानामपि प्रत्येकं प्रायश्चित्तं लघुको मासः, । यच्च पृच्छामन्तरेण वा स्तेन स्वापदादिभ्यो अनर्थं साधवः प्राप्नुवन्ति

तन्निष्पन्नमपि तेषां द्वयानामपि प्रायश्चित्तमधुना गहणे य इति अस्य व्याख्यानमाह-

[भा.३९९९] सचित्तंमि उ लद्धे अन्नोन्न अनिवेयणे लहुगो ।
ववहारेण उ हाउं पुनरवि दानं नवरं मासो ।।

वृ- यत्तं आगन्तुका वास्तव्या वा सचित्तं लभंते उपलक्षणमेतदचित्तं वा तस्मिन् लब्धे अन्योन्यस्य निवेदना कर्तव्या यथैतन्मया सचित्तमचित्तं वा लब्धं यूयं प्रतिगृह्णीत । एवं निवेदने कृते द्वितीयो न गृह्णाति, परं सामाचारी एषेत्यवश्यं निवेदनं कर्त्तव्यमनिवेदने प्रायश्चित्तं लघुको मासः । एतदेव सविशेषमाह-ववहारेण उ इत्यादि न निवेदयति तदा असमाचारी प्रतिषेधनार्थं व्यवहारेणागमप्रसिद्धेन तत् हृत्वा मासलघुप्रायश्चित्तं दत्वा तस्यैव पुनः प्रतिगच्छन्ति । सम्प्रति नायमनाये इत्यस्य व्याख्यानमाह-

[भा.४०००] नाए व अनाए वा होइ परिच्छविही जहा हेठा ।
अपरिच्छणंमि गुरुगा जो उ परिच्छाए अविसुद्धो ।।

वृ- ज्ञाते अज्ञाते वा भवति द्रव्यादिभिः परीक्षा विधिर्यथाधस्ताद्वर्णितस्तथा कर्तव्यः । यदि पुनरपरीक्ष्योपसम्पद्यते योऽपि च गच्छः परीक्षायामविशुद्धः प्रमादीति कृत्वा तमपि ये उपसम्पद्यन्ते तेषां प्रत्येकं प्रायश्चित्तं चत्वारो गुरुकाः । सम्प्रति दोन्निवि नमन्तीत्यत्र मतान्तरमाह-

[भा.४००१] केई उ भणंति उमो नियमेन निवेइ इच्छ इयरस्स ।
तं तु न जुज्जइ जम्हा, पक्किल्लग सालिदिठंतो ।।

वृ- केचित् ब्रुवते नियमेनाऽवमोऽवमरत्नाधिको निवेदयति इतरस्य रत्नाधिकस्य इच्छा यदि प्रतिभासेत ततो निवेदयति, नो चेन्नेति तन्न न युज्यते यस्मात्पक्कशालिदृष्टान्त उपन्यस्तः स चोभयनमनसूचक इति । सम्प्रति द्वयोर्नमनमाह-

[भा.४००२] वंदना लोयणा चेव तहेव य निवेयणा ।
सेहेग उवउत्तंमि इयरो पच्छ कुव्वती ।।

वृ- शैक्षेण अवमरत्नाधिकेन वन्दने आलोचनायां तथैव च निवेदने सचित्तादेः कृते पश्चादितरो रत्नाधिकरत्स्य पुरतो वन्दनमालोचनां निवेदनं च करोति । सम्प्रति क्षेत्रश्रुतसुखदुःखे मार्गविनयोपसम्पत्सु यदाभाव्यं तदुपदर्शयति ।

[भा.४००३] सुयसुहदुक्खे खेत्ते मग्गे विन उवसंपयाए य ।
बावीसपुव्वसंथुय वयंस दिट्ठा भट्ठे य सव्वे य ।।

वृ- श्रुतोपसम्पदि उपसम्पद्यमाना द्वाविंशतिं लभन्ते । तद्यथा-षट् अमिश्रवल्ल्यां माता पिता भ्राता भगिनी पुत्रो दुहिता इत्येवं रुपान्, षोडशमिश्रवल्ल्यां तद्यथा-मातुर्माता पिता भ्राता भगिनी । एवं पितुरपि, भ्रात्रादीनां चतुर्णा प्रत्येकं द्वौ द्वौ तद्यथा-पुत्रो दुहिता च । सुखदुःखोपसम्पदि पूर्वसंस्तुतान् मातापितृसम्बन्धान् उपलक्षणमेतत् मित्रवयस्यप्रभृतीति च क्षेत्रोपसम्पदि वयस्यान् । इदमप्युपलक्षणं पूर्वसंस्तुतान् पश्चाच्च संस्तुतान् नालबद्धवल्लीद्विकं च लभते । मार्गोपसम्पदि दृष्टाभाषितान् च शब्दाद्वल्लीद्विकं मित्राणि च विनयोपसम्पदि सर्वान् लभते नवरं निवेदयति । एतदेवाह-

[भा.४००४] खेत्ते मित्तादीया सुतोपसंपन्नतो उ छल्लभते ।
अम्माउ पिउ संबद्धो सुहदुक्खी इयरो दिट्ठो ।।

वृ- क्षेत्रे उपसम्पद्यमानो मित्रादीन् लभते, आदिशब्दात् पूर्वपश्चात्संस्तुतान् नालवल्लीद्विकमाहारं

मात्रकत्रिकं संस्तारं वसतिं चेति परिग्रहः, श्रुतोपसम्पन्नं लभते षट् मात्रादिकान् मिश्रां च वल्लिं मातृपितृसम्बद्धां सुखदुःखोपसम्पन्नो मातापितृसम्बन्धान् लभते वयस्यादीन् च, इतरो मार्गोपसम्पन्नो दृष्टान् दृष्टाभाषितानुपलक्षणमेतत् वल्लिद्विकं मित्राणि च लभते विनयोपसम्पन्नस्याभाव्यं सुप्रतीतमिति न व्याख्यातम् ।

[भा.४००५] इच्चेयं पंचविहं जिनान आणाए कुणइ सठाणे ।
पावइ धुवमाराहं तव्विवरीए विवच्चासं ।।

वृ- इत्येवं पञ्चविधक्षेत्रश्रुतादिभेदतः पञ्चप्रकारमाभवद्व्यवहारं स्वस्थाने आत्मीये स्थाने यथा क्षेत्रोपसम्पदि यत् उपसम्पद्यमानस्य वा भवति तत्तथैव व्यवहरति । एवं शेषेष्वपि स्थानेषु वक्तव्यं जिनानामाज्ञया करोति परिपालयति स ध्रुवमन्ते आराधनां प्राप्नोति, जिनाज्ञया परिपालितत्वात् । तद्विपरीत आभवद्व्यवहारविपर्यासकारी विपर्यासं प्राप्नोति नाराधनामन्तकाले प्राप्नोतीति भावः ।

[भा.४००६] एसो पंचविहो ववहारे आभवंति तो नाम ।
पच्छित्ते ववहारं सुण वच्छ समासओ वुच्छं ।।

वृ- इत्येष आभवतिकोनाम व्यवहारः पञ्चविध उक्तः । अत ऊर्ध्वं प्रायश्चित्ते व्यवहारं समासतो वक्ष्ये, तद्य वत्स वक्ष्यमाणं शृणु ।

[भा.४००७] सो पुनचउव्विहो दव्वखेत्तकालभावे य ।
सचित्ते अचित्ते य दुविहो होइ दुव्वंमि ।।

वृ- स पुनः प्रायश्चित्तव्यवहारश्चतुर्विधस्तद्यथा द्रव्ये क्षेत्रे काले भावे च । तत्र द्रव्ये पुनर्द्विविधो भवति तद्यथा-सचित्ते अचित्ते च । तत्र प्रथमतः सचित्ते विवक्षुरिदमाह-

[भा.४००८] पुढविदगअगनिमारुय वणस्सइ तसेसु होइ सचित्ते ।
अचित्ते पिंड उवही दसपन्नरसेव सोलसगे ।।

[भा.४००९] संघट्टण परियावण उद्दवणा वज्जणा एसट्ठाणं ।
दानं तु चउत्थादी तत्तियमित्ता व कल्लाणे ।।

वृ- पृथिव्यादीनां संघट्टनादौ प्रत्येकं यथापत्तिप्रायश्चित्तं तत् स्वस्थानमित्युच्यते, । तच्च छक्काय चउसु लहुया इत्यादिना प्रागेवाभिहितमिदं तु दानप्रायश्चित्तमभिधीयते, । किं तदित्याह-चतुर्थादि, तद्यथा-पृथिव्यादिकं वनस्पतिपर्यन्तमेकेन्द्रियमपद्रावयति जीवितादृव्यपरोपयति तदा अभक्तार्थः । द्वीन्द्रियमपद्रावयतः षष्ठं त्रीन्द्रियमपद्रावयतोऽष्टमं चतुरिन्द्रियं दशमं, पञ्चेन्द्रियं द्वादशमम्, । तत्तियमित्ता च कल्लाणे इति अथवा यस्य यावन्ति इन्द्रियाणि तस्य तावन्ति कल्याणानि प्रायश्चित्तं, तद्यथा-एककल्याणकमेकेन्द्रियाणां परितापने, द्वेकल्याणके द्वीन्द्रियाणां पूर्वार्द्धमित्यर्थः । त्रीणि कल्याणकानि त्रीन्द्रियाणामेकाशनकमिति भावः । चतुरिन्द्रियाणामाचाम्लं पञ्चेन्द्रियाणामभक्तार्थः । अथवेदं वर्जनायां सचित्ते प्रायश्चित्तं ।

[भा.४०१०] अहवावि अट्ठारसगं पुरिसे इत्थीसु वज्जिया वीसुं ।
दसगं य नपुंसेसुं आरोवणवन्निया तत्थ ।।

वृ- वर्जना नाम प्रव्राजनायां निषेधस्तत्र पुरुषे अष्टादशकं वर्जितं स्त्रीषु वर्जिता विंशतिर्दशकं नपुंसकेषु । तत्राह अथवा आरोपणाप्रायश्चित्तं प्राक्कल्पाध्ययने सप्रपञ्चमभिहितमिति ततोऽवधार्य,।

अचित्ते पिण्डउवही इत्यादि अचित्ते प्रायश्चित्तं पिंडे पिंडविषयमुपधिविषयं च कथमित्याह-दशके षोडशके च । इयमत्र भावना-पिण्डमुपधिं वा दशभिरेषणादोषैः पञ्चदशभिरुद्गमदोषैरिहाध्यपूरकस्य मिश्रेऽन्तर्भावविवक्षणं तु पञ्चदशभिरित्युच्यते, षोडशभिरुत्पादनादोषैरविशुद्धं गृह्णानस्य प्रायश्चित्तं तदपि च प्राक्कल्पाध्ययनेऽभिहितमिति न भूयो भण्यते । तदेवं सचित्ते अचित्ते इति द्वारद्वयं गतम् ।

[भा.४०११] जनवयअद्धाणरोधए मग्गाईए य होंति खेत्तंमि ।
दुब्भिक्खे य सुभिक्खे दिया व रातो व कालंमि ॥

वृ- जनपदे अध्वनि रोधके मार्गातीते च यत् प्रायश्चित्तं तत्क्षेत्रे क्षेत्रविषयं, भवति, । इयमत्र भावना-जनपदेऽपि च सन् संस्तरन्नपि चाध्वानं प्रतिपन्नानां यः कल्पस्तमाचरति, । अध्वानं प्रतिपन्नो वा न यतनां करोति दर्पेण वाध्वानं प्रतिपद्यते, तथा रोधकेऽपि सेनासूत्रे यो विधिरभिहितस्तं न करोति, मार्गातीतं क्षेत्रातिक्रान्तमशनादिकमाहारयति, । एतेषु यत्प्रायश्चित्तं तत् क्षेत्रविषयमिति, । सम्प्रति कालद्वारम्-दुर्भिक्षे सुभिक्षे, दिवारात्री च काले कालविषयं किमुक्तं भवति, । सुभिक्षेऽपि काले संस्तरन्नपि दुर्भिक्षकल्पमाचरति, यदि वा दुर्भिक्षे अयतनां करोति, तथा दिवसे यः कल्पस्तं रजन्यामाचरति, रजन्यामपि यः कल्पस्तं दिवा दिवसकल्पमूनमधिकं वा करोति, एवं रात्रिकल्पमपि । एतेषु यत्प्रायश्चित्तं तत्कालविषयम् । साम्प्रतमेनामेव गाथां विवृणोति ॥

[भा.४०१२] वसिमे वि अ विहिकरणं संथरमाणं मखित्तपच्छित्तं ।
अद्धाणे उ अजयणं पवज्जणा चेव दप्पेणं ॥

[भा.४०१३] कालंमि उ संथरणे पडिसेवइ अजयणाव एमंसि ।
दियनिसिमेराकरणं उणाहियं वावि कालेन ॥

वृ- वसिमेऽपि संस्तरन्तोऽपि यदविधिकरणं तन्निष्पन्नं क्षेत्रप्रायश्चित्तं तथा अध्वनि प्रयन्ने अयतनायां अध्वनः प्रपदने वा दर्पेण यत् प्रायश्चित्तं तथा काले सुभिक्षे संस्तरणेऽपि दुर्भिक्षकल्पं समाचरति दुर्भिक्षे वा समापतिते अयतना दिवानिका मर्यादाया अकरणं दिवस्य कल्पस्य रात्रौ रात्रिकल्पस्य दिवसे समाचरणमिति भावो यदि वा दिवसकल्पस्य रात्रिकल्पस्य ऊनमधिकं वा करणं तन्निष्पन्नं कालविषयं प्रायश्चित्तं, भावविषयमाह-

[भा.४०१४] जोगतिए करणतिए दप्पपमायपुरिसभावंमि ।
एएसिं तु विभागं वुच्छामि अहानुपुव्वीए ॥

वृ- योगत्रिकं मनोवाक्कायलक्षणं, करणत्रिकं करणकारणानुमोदनात्मं, दर्पो निष्कारणमकल्पस्य प्रतिषेवनं, प्रमादः पञ्चविधः, पुरुषो गुर्वादिलक्षणो वक्ष्यमाण एतेषु यत्प्रायश्चित्तं तद्भावविषयं, । साम्प्रतमेतेषामेव पदानां विभागमहं समासेन वक्ष्ये । तत्र योगत्रिककरणत्रिकभावनामाह-

[भा.४०१५] जोगतिए करणतिए सुभासुभे तिविहकालभेएण ।
सत्तावीसं भंगा दुगुणा वा बहुतरा वावि ॥

वृ- योगत्रिके करणत्रिके प्रत्येकं शुभे अशुभे च त्रिविधकालभेदेन संचार्यमाणे सप्तविंशतिर्भङ्गा भवन्ति । द्विगुणा वा बहुतरा वा तद्यथा मनसा करोति १ मनसा कारयति २ मनसा कुर्वन्तमनुजानाति ३ । एवं वचसा ३ कायेन च ३ सर्वसंख्यया नव एते वातीतानागतः वर्तमानरुपकालत्रिके चिंत्यमानाः सप्तविंशतिर्भवन्ति । एते चाशुभव्यापारसमाचरणविषये, तथा च शुभव्यापारसमाचारविषयेऽपि

द्रष्टव्याः । यथा मनसा न करोति कालप्राप्तमपि शक्तावपि च सत्यां शुभं व्यापारं १ न च कारयति २ कुर्वन्तं नानुजानीते ३ इत्यादि तथैव उभयमीलने चतुःपञ्चाशत् । तत उक्तं द्विगुणा वा एते एकएकसंयोगे द्विकत्रिकसंयोगे च बहुतरा भवन्ति । ते चावश्यक टीकायां प्रत्याख्यानचिन्तायामिव भावनीयास्ततोऽवादि बहुतरा वापि, अथ मनसा कथं करणं कारणमनुमननं वा तत आह-

[भा.४०१६] थाडे मह्मंबवनं मनसकरणं तुहा अनुतोथ ।
अणजाणसु जावुप्पइ मनकारणमो अवारेंते ।।

वृ- कोऽपि संयतः कश्चित् प्रदेशं दृष्ट्वा चिन्तयति अस्मिन्नवकाशे अहमाम्रवनं वपामि । यद्यपि तेन तथा चिन्तयित्वा नोप्तमाम्रवणं तथापि तत्तेन मनसा कृतमपि मनसा करणं तथा केनचित् गृहस्थेन संयत उक्तो यथा संयत ! यदित्वमनुजानासि तत एतस्मिन्नवकाशे आम्रवणं वपामि तस्मादनुजानीहि येनोप्यते इति । एवमुक्ते यदि न निवारयति तदा अनुक्तोऽपि मनसा कारापणं द्रष्टव्यमेतदेव भावयति-

[भा.४०१७] मागहा इंगिएणं तु पेहिएण य कोसला ।
अद्धुत्तेण उ पंचाला नाणुत्तं दक्खिणावहा ।।

[भा.४०१८] एवं तु अनुत्ते वि मनसा कारावणं तु बोधव्वं ।
मनसाणुन्ना सा हु चूयवणं वुत्तवुप्पति वा ।।

वृ- मागधा मगधदेशोद्भवाः प्रतिपन्नमप्रतिपन्नं वाइङ्गिताकारविशेषेण जानन्ति, कौशलाः प्रेक्षितेन अवलोकितेन, पञ्चालाः अर्धोक्तेन, नानुक्तं दक्षिणापथाः किन्तु साक्षाद्वचसा व्यक्तीकृतं ते जानते, प्रायो जडप्रज्ञत्वात्, । तत एवंसति वचसानुक्तेऽपि निवारणाभावात् मनसा कारापणं बोद्धव्यम् । सम्प्रति मनसानुज्ञातं भावयति चूतवनमुप्तं पूर्वमारोपितं, यदि वा उप्यते आरोप्यमाणं तिष्ठतीति कृत्वा साधुश्चिन्तयति । शोभनं यदिह चूतवनमुप्तमुप्यते वा एषा मनसानुज्ञा ।

[भा.४०१९] एवं वयकायम्मी तिविहं करणं विभासबुद्धीए ।
हत्थदिसन्नच्छोटिं इय काये कारणमणुन्ना ।।

वृ- एवमुक्तप्रकारेण वचसि काये च त्रिविधं करणं करणकारणानुमननलक्षणं स्वबुद्ध्या विभावेत तत्र वचसि सुप्रतीतं काये तु दुर्विभावमिति तद्भावनामाह-इत्थादि हत्थादि । अत्रापि कायेन स्वयं करणमिति प्रतीतं ततः कारणमाह-हस्तादिसंज्ञा कायेन गाथायां सप्तमी तृतीयार्थे कारणं तथा च्छोटिं नखच्छोटिकां ददतः कायेन अनुज्ञा ।।

[भा.४०२०] एवं नवभेएणं पाणाइवायादिगे उ अइयारे ।
निरवेक्खाण मनेवि पहित्तियरेसि उभएन ।।

वृ- एवमुक्तेन प्रकारेण नवभेदेन समाहारोयं नवभिर्भेदैः प्राणातिपातादिके अतीचारे यत्प्रायश्चित्तं तद्भावविषयमिति भावः । तत्र निरपेक्षाणां प्रतिमाप्रतिपन्नादीनां मनसाप्यतीचारसेवने प्रायश्चित्तमितरेषां गच्छस्थितानामुभयेन वा कायेन चातीचारसेवने प्रायश्चित्तमिति ।

[भा.४०२१] वायामवग्गणादी धावण डेवण य होइ दप्पेण ।
पंचविह पमायंमी जं जहि आवज्जई तं तु ।।

वृ- यन्निष्कारणं व्यायाम वल्गनादि करोति यदि वा धावनं वेपनं वा, लोष्ट्रादेः प्रक्षेपणं तद्विषयं प्रायश्चित्तं भवति ज्ञातव्यं, दर्पेण तथा पंचविधे पञ्चप्रकारे प्रमादे यं प्रमादमापद्यते यत्र तद्भवति

प्रमादविषयं प्रायश्चित्तं । सम्प्रति पुरुषानाह-

[भा.४०२२] गुरुमाईया पुरिसा तुल्लवराहे वि तेसि नाणत्तं ।
परिणामगाइया वा इड्डिमनिक्खंत असहू या ॥

[भा.४०२३] पुमं वाल थिरा चेव कयजोगा य सेयरा ।
अहवा सभावतो पुरिसा होति दारुण भद्दगा ॥

वृ- गुर्वादयः पुरुषास्तेषां तुल्येऽप्यपराधे प्रायश्चित्तमधिकृत्य भवति नानात्वं । अथवा त्रिविधाः पुरुषाः परिणामकादयः परिणामिका अपरिणामका अतिपरिणामिकाश्च । तेषामपि तुल्येऽप्यपराधे प्रायश्चित्तमथवान्यथा भवति । अथवा अनेकविधा पुरुषाः, तद्यथा-ऋद्धिमन्निष्क्रान्ताः अऋद्धिमन्निष्क्रान्ताश्च असहाः ससहाश्च पुरुषाः पुरुषाः स्त्री नपुंसकानि च बालास्तरुणाश्च स्थिरा अस्थिराश्च कृतयोगाश्च सेतरा नाम सप्रतिपक्षा एतेषामपि तुल्येऽप्यपराधे पुरुषभेदेन प्रायश्चित्तभेदः अथवा स्वभावतः पुरुषा द्विविधा भवन्ति तद्यथा दारुणा भद्रकाश्च । तत्र तुल्येऽप्यपराधे दारुणानामन्यत् प्रायश्चित्तमन्यत् भद्रकाणामिति । सांप्रतमुपसंहारमाह-

[भा.४०२४] पायच्छित्ता भवंते य ववहारे सो समासतो भणितो ।
जेणं तु ववहरिज्जइ इयाणि तं तू पवक्खामि ॥

वृ- एषोऽनन्तरोदितः प्रायश्चित्ते आभवति च प्रत्येकं पञ्चविधो व्यवहारः समासतो भणितः इदानीं तु येन व्यवह्रियते तं व्यवहारं प्रवक्ष्यामि । प्रतिज्ञातमेव करोति ।

[भा.४०२५] पंचविहो ववहारो दुग्गतिभयसुरोहिं पन्नतो ।
आगम सुय आणा धारणा य जीए य पंचमए ॥

वृ- येन व्यवह्रियते स व्यवहारो दुर्गतिभयचूरकैर्दुर्गतिभयविध्वंसकैः पञ्चविधः प्रज्ञप्तस्तद्यथा आगमः श्रुतमाज्ञाधारणा जीतं च पञ्चमः ।

[भा.४०२६] आगमतो ववहारो सुणह जहा धीरपुरिसपन्नत्तो ।
पच्चक्खो य परोक्खो सो वि य दुविहो मुनेयव्वो ॥

वृ- तत्रागमतो व्यवहारो तथा धीरपुरुषैः प्रज्ञप्तस्तथा शृणुत स आगमतो व्यवहारो द्विविधो ज्ञातव्यस्तद्यथा-प्रत्यक्ष परोक्षश्च ।

[भा.४०२७] पच्चक्खो वि य दुविहो इंदियजो चेव नोय इंदियजो ।
इंदियपच्चक्खो वि य पंचसु विसएसु नेयव्वो ॥

वृ- प्रत्यक्षोऽपि द्विविधस्तद्यथा-इन्द्रियजो नोइन्द्रियजश्च । तत्र इन्द्रियजः प्रत्यक्षः पञ्चसु रूपादिषु विषयेषु ज्ञातव्यः ।

[भा.४०२८] नोइंदियपच्चक्खो ववहारो सो समासतो तिविहो ।
ओहि मणपज्जवे या केवलनाणे य पच्चक्खे ॥

वृ- यस्तु नो इन्द्रियजः प्रत्यक्षो व्यवहारः समासतस्त्रिविधस्तद्यथा-अवधिप्रत्यक्षं, मनःपर्यवप्रत्यक्षं, केवलज्ञानप्रत्यक्षं । तत्रावधिप्रत्यक्षमाह-

[भा.४०२९] उही गुणपच्चइए जे वट्टंती सुयंगवी धीरा ।
ओहि विसयनाणत्थे जाणसु ववहारसोहिकरे ॥

वृ- अवधिर्द्विधा भवप्रत्ययो गुणप्रत्ययश्च । तत्र संयतानां गुणप्रत्यय एव न भवप्रत्ययस्तत आह- अवधौ गुणप्रत्यये ये वर्तन्ते श्रुताङ्गविदो धीरास्तान् अवधिविषयज्ञानस्थान् जानीत व्यवहारशोधिकरान् शुद्धव्यवहारकारिणः ।

**[भा.४०३०]** उज्जुमती विउलमती जे वट्टंती सुयंगवी धीरा ।
मनपज्जवनाणत्थे जाणसु ववहारसोहिकरे ।।

वृ- ये ऋजुमतौ विपुलमतौ वा मनःपर्यवज्ञाने श्रुताङ्गविदो धीरा वर्तन्ते तान्मयः पर्यवज्ञानस्थान् जानीत व्यवहारशोधिकरान् शुद्धव्यवहारकारिणः ।

**[भा.४०३१]** आदिगरा धम्माणं चारित्तवरनाणदंसणसमग्गा ।
सव्वत्तगनाणेणं ववहारं ववहरंति जिना ।।

वृ- ये धर्मयोः श्रुतधर्मस्य चारित्रधर्मस्य चादिकरास्तत्प्रथमतया प्रवर्तनशीलाश्चारित्र-वरज्ञानदर्शनसमग्रास्ते जिनाः सर्वत्रगज्ञाने व्यवहारं व्यवहरन्ति । उक्तः प्रत्यक्षः । सम्प्रति परोक्षमाह-

**[भा.४०३२]** पच्चक्खागमसरिसो होति परोक्खो वि आगमो जस्स ।
चंदमुही विव सोवि हु आगमो ववहारवं होइ ।।

वृ- यद्यपि पूर्वादिकं श्रुतं तथापि यस्यागमश्चतुर्दशपूर्वादिकः परोक्षोऽपि प्रत्यक्षागमसदृशः प्रत्यक्षावध्यादितुल्यरूपो भवति सोप्यागमव्यवहारवान् वक्तव्यो भवति । यथा चन्द्रसदृशमुखी कन्या चन्द्रमुखीति एतदुक्तं भवति यद्यपि पूर्वाणि श्रुतं नागमतुल्यानीति (तदपि) तैर्व्यवहरन् आगमव्यवहारवान् उच्यते इति । सम्प्रत्यागमस्य व्याख्यानमाह-

**[भा.४०३३]** नायं आगमयंति एगट्ठं जस्स सो परायत्तो ।
सो परोक्खो वुच्चइ तस्स पएसा इमे हुंति ।।

वृ- ज्ञानमागमितमित्येकार्थमेवं च ज्ञानमागम इत्येकार्थमापतितं । तत्र यस्य स आगमोऽपराधीनः स प्रत्यक्ष उच्यते । स चावध्यादिरूपो यस्य तु परायत्तः स परोक्ष उच्यते । स च चतुर्दशपूर्वादिसमुत्थस्तस्य परोक्षस्यागमस्य प्रदेशाः प्रतिभागा भेदा इत्यर्थः । इमे वक्ष्यमाणा भवन्ति । तानेवाह-

**[भा.४०३४]** पारोक्खं ववहारं आगमतो सुयधरा ववहरंति ।
चोदसदसपुव्वधरा नवपुव्वियगंधहत्थी य ।।

वृ- ये श्रुतधराश्चतुर्दशपूर्वधरा दशपूर्वधरा नव पूर्विणो वा गन्धहस्तिनो गन्धहस्तिसमानाः ते आगमतः परोक्षं व्यवहारं व्यवहरन्ति । अत्राक्षेपपरिहारावभिधित्सुराह-

**[भा.४०३५]** किह आगम ववहारी जम्हा जीवादयो पयत्था उ ।
उवलद्धा तेहिं तु सव्वेहिं नयविगप्पेहिं ।।

वृ- कथं केन प्रकारेण साक्षात् श्रुतेन व्यवहरन्तः आगमव्यवहारिणः प्रोच्यन्ते सूरिराह-यस्मात् जीवादयः पदार्थास्तैश्चतुर्दशपूर्वधरादिभिः सर्वे नयविकल्पैर्नैगमादिनयभेदैरुपलब्धाः एतदेव सविशेषमाह-

**[भा.४०३६]** जह केवली वि जाणइ दव्वं च खेत्तं च कालभावं च ।
तह चउलक्खणमेवं सुयनाणीमेव जाणाति ।।

वृ- यथा केवली केवलज्ञानेन सर्वं द्रव्यं सर्वं क्षेत्रं कालं भावं च सर्वात्मना स्वपरपर्यायभेदभिन्नं जानाति

एवं श्रुतज्ञान्यापि चतुर्लक्षणं द्रव्यक्षेत्रकालभावरूपं श्रुतबलेन जानाति । तत एतेऽप्यागमव्यवहारिण उच्यन्ते एतदेव प्रस्तुतं प्रायश्चित्त-शुद्धयधिकारमधिकृत्य योजयति ।

[भा.४०३७] पणगं मासविवड्ढी मासगहानी य पणगहानी य ।
एगाहे पंचाहं पंचाहे चेव एगाहं ॥

[भा.४०३८] रागदोसविवड्ढिं हाणिं वा नाउ देंति पच्चक्खी ।
चोद्दसपुव्वादीवि हु तह नाउं देंति हीनहियं ॥

वृ- यथा प्रत्यक्षिणः प्रत्यक्षागमज्ञानिनस्तुल्येऽप्यपराधे पञ्चक पञ्चक योग्ये एकस्य पञ्चकं ददति । अपरस्य रागद्वेषविवृद्धिमुपलभ्य मासेन मासाभ्यां मासैर्वा वृद्धिं प्रयच्छन्ति । उपलक्षणमेतत् मूलमनवस्थाप्यं पाराश्चितं वा यच्छन्ति । यथा तुल्येऽपि पाराश्चितं योग्यापराधे एकस्य पाराश्चितमपरस्यानवस्थाप्यं मूलं च्छेदं वा मासेन मासाभ्यां मासै र्वा हान्या तपो वा च शब्दात् पञ्चकं यावदन्ते नमस्कार सहितं हा दुष्ठुकृतं हा दुष्ठुकारितं हा दुष्ठु अनुमोदितमित्येवं वैराग्यभावनातो रागद्वेषहानिं भूयसीमति भूयस्तरामुपलभ्य प्रयच्छन्ति, तथा कस्यचित् मासप्रतिसेवनायामल्पां रागद्वेषहानिमुपलभ्य पञ्चकहान्या मासिकं ददति पञ्चविंशतिं दिनानि ददतीत्यर्थः । तथा एकाहनाम अभक्तार्थं प्रतिसेविते पञ्चाहं ददति पञ्चाहे वा प्रतिसेविते एकाहमुपलक्षणत्वादाचाम्लमेकाशनं पूर्वार्द्धं निर्विकृतं पौरुषी नमस्कारसहितं वा प्रयच्छन्ति । एवं चतुर्दशपूर्व्यादयोऽपि हु निश्चितं रागद्वेषहानिवृद्धी उपलभ्य हीनमधिकं वा प्रायश्चित्त ददति । अत्र परस्य प्रश्नमुदीरयति-

[भा.४०३९] चोदगपुच्छा पच्चक्खनाणिणो थोवं कह बहुं देंति ।
दिठ्ठंतो वाणियए जिनचोदस पुव्विए धमए ॥

वृ- चोदकस्यात्र पृच्छा प्रत्यक्षज्ञानिनो जिनादयः स्तोकेऽपराधे कथं बहु प्रयच्छन्ति प्रायश्चित्तमुपलक्षणमेतत् भूयसि वापराधे स्तोकमत्र सूरिराह-दृष्टान्तोऽत्र वणिजा दृष्टव्यः । तथा भूयः परस्य पृच्छा जिनादयः केवलज्ञानादिबलेन परस्य भावं जानते चतुर्दशपूर्विणस्तु कथं येन स्तोकेऽपि बहु, बहावपि स्तोकं ददति । सूरिराह-अत्र धमको दृष्टान्तः तत्र प्रथमतो वणिगदृष्टान्तं भावयति-

[भा.४०४०] जं जह मोल्लं रयणं तं जाणइ रयणवाणितो निउणो ।
थोवं तु महल्लस्स वि कासइ अप्पस्स वि बहुं तु ॥

वृ- यथा निपुणो रत्नवणिक् यत् रत्नं यथा मूल्यं तत्तथा सम्यक् जानाति । ज्ञात्वा च कस्यचित् महतोऽपि रत्नस्य स्तोकं मूल्यं ददाति, कस्यचिदल्पस्याप्यद्भुतगुणोपेतस्य बहु, इमामेव दृष्टान्तभावनां प्रकारान्तरेणाह-

[भा.४०४१] अहवा कायमणिस्स उ सुमहल्लस्स वि उ कागणी मोल्लं ।
वइरस्स उ अप्पस्स वि मोल्लं होती सयसहस्सं ॥

वृ- अथवेति प्रकारान्तरे रत्नपरीक्षको वणिक् काचमणेः सुमहतोऽपि मूल्यं काकिनीं करोति । वज्रस्य तु रत्नस्याल्पस्यापि मूल्यं तेन क्रियमाणं शतसहस्रं भवति । अत्रोपनयमाह-

[भा.४०४२] इय मासाण बहूण विरागदोसप्पयाए थोवं तु ।
रागदोसोवचया पणगे वि उ तो बहुं देंति ॥

वृ- इति अमुना दृष्टान्तप्रकारेण बहूनामपि मासानां योग्येऽपराधे वैराग्यभावनाच्छलतो रागद्वेषाल्पतया

स्तोकं प्रायश्चित्तं ददति, सिंहव्यापादकस्येव, रागद्वेषोपचयात् पश्चकेऽप्यपराधे बहुप्रायश्चित्तं ददति । अधुना जिन चोद्दसपुव्विएधमए इत्यस्य व्याख्यानमाह-

[भा.४०४३] पच्चक्खी पच्चक्खं पासइ पडिसेवगस्स सो भावं ।
किए जाणइ परोक्खी नायमिणं तत्थ धमएणं ।।

वृ- प्रत्यक्षी जिनादिः प्रत्यक्ष प्रतिसेवस्य भावं जानाति, परोक्षी चतुर्दशपूर्वादिः कथं जानाति येन सोऽपि तथैव व्यवहरति ? सूरिराह तत्र तस्मिन् विषये ज्ञातमुदाहरणमिदं वक्ष्यमाणं धमकेन शंखध्यामात्रा तदेव दर्शयति-

[भा.४०४४] नालीधमएण जिना उवसंहारं करेंति परोक्खे ।
जह सो कालं जाणइ सुएण सोहिं तहा सोउं ।।

वृ- जिनास्तीर्थकृतः परोक्षे आगमे उपसंहारं नालीधमकेन कुर्वन्ते इयमत्र भावना-नाडिकायां गलन्त्यामुदकगलनपरिमाणतो जानाति एतावत्युदके गलिते यामो दिवसस्य रात्रेर्वागत इति ततोऽन्यस्य परिज्ञानाय शङ्खं धमति । तत्र यथा सोऽन्यो जनः शङ्खस्य शब्देन श्रुतेन कालं वा यामलक्षणं जानाति तथा परोक्षागमगामिनोऽपि शोधिमालोचनां श्रुत्वा तस्य यथावस्थितं भावं जानन्ति । ज्ञात्वा च तदनुसारेण प्रायश्चित्तं ददति । अथ कीदृशास्ते श्रुतज्ञानिनो ये प्रत्यक्षज्ञानिन इव शोधिं जानन्ति । तत आह-

[भा.४०४५] जेसिं जीवाजीवा उवलद्धा सव्वभावपरिणामा ।
सव्वाय नयविहीहिं केन कयं आगमेन कयं ।।

वृ- येषां श्रुतबलेन सर्वे जीवा अजीवाश्च उपलब्धा द्रव्यतः सर्वेषामपि च भावनां पदार्थानामुपलब्धाः श्रुतज्ञानविषयाः परिणामाः पर्यायाः कैरित्याह-सर्वैर्नैगमादिभिर्नयविकल्पैस्ते प्रत्यक्षज्ञानिन इव परस्य शोधिं जानन्ति । अत्र परप्रश्नः केन कृतं तत् श्रुतज्ञानं यस्येदृशं माहात्म्यमत आह आगमेन केवलज्ञानेन कृतमेतावेवाक्षेपपरिहारौ भावयति-

[भा.४०४६] तुं पुन केन कयं सुयनाणं जेन जीवमादीया ।
नज्जंति सव्वभावा केवलनाणेण तं तु कयं ।।

वृ- यत्पुनः श्रुतज्ञानं केन कृतं, येन जीवादयः सर्वे भावा ज्ञायन्ते । सूरिराह केवलज्ञानिभिः कृतं गाथायां षष्ठी तृतीयार्थे प्राकृतत्वात् तदेवं यथा श्रुतज्ञानिनोऽपि जानन्ति तथा प्रतिपादितमधुना शोधिविधिमाह-

[भा.४०४७] आगमतो ववहारं परसोच्चा संकियंमि उ चरित्ते ।
आलोइयंमि आराधना अनालोइए भयणा ।।

वृ- आगमतः प्रत्यक्षज्ञानी चापरे परस्मिन् व्यवहारं करोति । परस्यालोचनां श्रुत्वा नान्यथा । तत्र यदि कलुषितचारित्रत्या न सम्यगा लोचयति, किंत्वामर्यादामतिक्रम्य वर्त्तते, तदा शंकितमिति भिन्नमिति वा कलुषितमिति वा एकार्थं चारित्रे सति न सम्यगनेनालोचितमिति ज्ञात्वा तं ब्रूते अन्यत्र गत्वा शोधिं कुरु यदि पुनः सम्यगालोचयति तदा ददाति प्रायश्चित्त अथ यदि प्रत्यक्षागमज्ञानिनः परोक्षागमज्ञानिनो वा सर्वभावपरिज्ञानाततः कस्मात्तस्य पुरत आलोच्यते, किंतु तस्य समीपमुपगम्य वक्तव्यम् अपराधान्मे भवन्तो जानते तस्य शोधिं प्रयच्छत तत आह-आलोइयादि । आलोचिते बहुगुणसंभवतः सम्यगाराधना भवति । अनालोचित आराधनाया भजना विकल्पना कदाचिद्भवति कदाचिन्नेति । एतच्चाग्र भावयिष्यते

तत्रागमतो ववहारं पंचं सो चेति व्याख्यानयति-

[भा.४०४८] आगमववहारी छव्विहो वि आलोयणं निसामेत्ता ।
देति ततो पच्छित्तं पडिवज्जइ सारिउं जइ य ।।

वृ- आगमव्यवहारी षड्विधोऽपि परस्यालोचनां निशम्य ततः प्रायश्चित्तं ददाति, । यदि च कमप्य-पराधं विस्मृतः स्मारितः सन् सम्यक् प्रतिपद्यते तदा स्मारयति च । अन्यथा तस्यालोचनामेव न ददाति ।

[भा.४०४९] आलोइय पडिक्कंतस्स होइ आराधना सुनियमेन ।
अनालोयंमि भयणा किह पुन भयणा हवइ तस्स ।।

वृ- पूर्वमपराधजातमालोचितं ततस्तस्मात् प्रतिक्रान्तस्य अपुनःकरणतया प्रतिनिवृत्तस्य नियमेन पर्यन्ते सम्यगाराधना भवति । अनालोचिते पुनर्भजना । आह-कथं पुनरनालोचिते तस्याराधना-विषयभजना भवति । अत्राह-

[भा.४०५०] कालं कुव्वेज्ज सयं अमुहो वा हुज्ज अहव आयरितो ।
अप्पत्ते पत्ते वा आराधन तहवि भयणेवं ।।

वृ- कोऽपि आलोचनां ग्रहीष्यामीत्यालोचनापरिणामपरिणत आलोचनाग्रहणाय सम्प्रस्थित आलोचनार्हसमीपं, स च तमप्राप्त एवापान्तराले स्वयं कालं कुर्यात् । यदि वा पातोऽपि रोगवशादमुखो जातोऽथवा तस्याप्राप्तवत एव स आलोचनार्ह आचार्यः कालगतो, यदि वा प्राप्तवतोऽप्यमुखो जातः । ततः स एवमालोचनां परिणतः आलोचनाया असंभवेऽपि काले कुर्वन्नाराधको यदि पुनर्न सम्यगालोचनापरिणामपरिणतस्तदा सोऽनाराधकः स च तथा कालगतो दीर्घसंसारी भवति, एवमाराधना आलोचना हि प्राप्तेऽप्राप्ते वा भजनया भवति ।

सम्प्रत्यागमव्यवहारिणामपि पुरत आलोचनायां गुणानुपदर्शयति ।

[भा.४०५१] अवराहं वियाणंति तस्स सोहिं च जहवी ।
तहा वि आलोयणा वुत्ता आलोयंते बहुगुणा ।।

वृ- यद्यप्यागमव्यवहारिणस्तथालोचकस्यापराधं विजानन्ति शोधिं च तथापि तेषामपि पुरत आलोचना दातव्या उक्ता तीर्थकरगणधरैर्यत आलोचयति बहवो गुणास्तथाह्यालोचनाचार्येण स आलोचकः प्रोत्साह्यते यथा वत्स, त्वं धन्यस्त्वं सभाग्यः यदेवं मानं निहत्यात्महितार्थतया स्वरहस्यानि प्रकटयति । महादुष्करमेतत्, एवं च स प्रोत्साहितः सन् वर्धमानपरिणामः सम्यग् निःशल्यो भूत्वा यथावस्थितमालोचयति शोधिं च सम्यक् प्रतिपद्यते, । ततः पर्यन्ते आराधना स्तोककालेन च मोक्षगमनमिति । अथ कथमागमिनो व्यवहारं प्रयुंजते तत आह-

[भा.४०५२] दव्वे हिं पज्जवेहिं य कमक्खेत्ते कालभावपरिसुद्धं ।
आलोयणं सुणेत्ता तो ववहारं पउंजंति ।।

वृ- द्रव्यैः सचित्तादिभिः पर्यायैस्तेषामेव सचित्तादिद्रव्यामाणवस्थाविशेषैः परिणामविशेषैस्तथा क्रमतः क्षेत्रतः कालतो भावतश्च परिशुद्धामालोचनां श्रुत्वा ततस्तदनन्तरं व्यवहारं शोधिव्यवहारं प्रयुञ्जते नान्यथा, तत्र यदि सचित्तं सेवित्वा सचित्तमेवालोचयति तदा द्रव्यशुद्धा सा आलोचना यदा तु सचित्तं प्रतिसेव्याचित्तमालोचयति तदा द्रव्याशुद्धा, तथा यामवस्थामुपगतं सचित्तं प्रतिसेव्य तामवस्थागतं तदालोचयति तदा सा पर्यायशुद्धा; यदान्यामवस्थामुपगतं प्रतिसेव्यान्यावस्थामालोचयति तदा

पर्यायाशुद्धा तथा यदि प्रतिसेवनानुलोममालोचयति तदा सा क्रमशुद्धा उत्क्रमेणालोचयतः क्रमाशुद्धा। तथा यद्यत्र जनपदेऽध्वनि वा प्रतिसेवितं तत्तथैव आलोचयतः क्षेत्रशुद्धा आलोचना जनपदे प्रतिसेवितमध्वनि कथयतः क्षेत्राशुद्धा । यथा यत् यदा दुर्भिक्षे सुभिक्षे वा दिवारात्री वा प्रतिसेवितं तत्तदालोचयतः कालशुद्धा सुभिक्षे प्रतिसेव्य दुर्भिक्षे कथयतो रात्री वा प्रतिसेव्य दिवसे कथयतः कालाशुद्धा । तथा येनानाभोगादिना सेवितं तं भावं कथयतो भावशुद्धा, उपेत्य प्रतिसेव्यानाभोगादिना कथयतो भावाशुद्धा । सम्प्रति भावमेवोपदर्शयति-

[भा.४०५३] सहसा अन्नाणे न व भीएण व पेल्लिएण व परेण ।
वसनेन पमादेन व मूढेन व रागदोसेहिं ।।

वृ- तेन प्रतिसेवकेन सहसा अज्ञानेन वा परेण वा प्रेरितेन वा व्यसनेन वा द्यूतादिना प्रमादेन वा मूढेन वा रागद्वेषाभ्यां वा प्रतिसेव्य यदि तथैवालोच्यते प्रायश्चित्ताय मे ददाति नान्यथेति वाक्यशेषः ।

[भा.४०५४] पुव्वं अपासिऊणं छूढे पायंमि जं पुणो पासे ।
न य तरइ नियत्तेउं पायं सहसा करणमेयं ।।

वृ- पूर्वमग्रेतनप्रदेशे कुलिङ्गिनमदृष्ट्वा क्षिप्ते उत्पादिते पादे यत्पुनः पश्यति कुलिङ्गिनं समापतितं न पादं निवर्तयितुं शक्नोति तत एवं यत्तस्य व्यापादनमेतत्सहसाकरणं । साम्प्रतमज्ञानमाह-

[भा.४०५५] अन्नयरपमाएणं असंपउत्तस्स नोवउत्तस्स ।
इरियाइसु भूयत्थे अवट्टतो एयमन्नाणं ।।

वृ- पञ्चानां प्रमादानामन्यतरेणापि प्रमादेनासंप्रयुक्तस्याक्रोडीकृतस्यात एव ईर्यादिषु समितिषु भूतार्थेन तत्वतोऽवर्तमानस्य यद्भवनमेतदज्ञानं अधुना भीएण व पेल्लिएण व परेण इत्यस्य व्याख्यानमाह-

[भा.४०५६] भीतो पलायमाणो अभियोगभएन वावि जं कुज्जा ।
पडितो वाऽपडितो वा पेल्लिज्जउ पेल्लिउ पाणे ।।

वृ- अभियोगभयेन भीतः पलायमानो यत् कुर्यात् प्राणव्यपरोपणादि तत् भीतेनेति द्रष्टव्यम् । तथा परेण प्रेरितः सन्पतितोऽपतितो वा प्राणान् द्वीन्द्रियादीन एकेन्द्रियान्वा प्रेरयेत ।

सम्प्रति व्यसनादिपदानि व्याचष्टे ।

[भा.४०५७] जूयादि होइ वसनं पंचविहो खलु भवे पमादो उ ।
मिच्छत्तभावना उ मोहो तह रागदोसा य ।।

वृ- द्युतादि भवति व्यसनं, प्रमादः खलु मद्यादिभेदाद्भवति पञ्चविधः, मिथ्यात्वं भावना मोहः रागद्वेषाः सुप्रतीताः ।

[भा.४०५८] एएसिं ठाणाणं अन्नयरे कारणे समुप्पन्ने ।
तो आगमवीमंसं करेति अत्ता तदुभएणं ।।

वृ- एतेषामनन्तरोदितानां सहसाप्रभृतीनां स्थानानामन्यतरस्मिन्कारणे समुत्पन्ने सति आलोचनायां प्रदत्तायामागमविमर्शमाप्ता उभयेन सूत्रार्थलक्षणेन कुर्वन्ति । यथायं सहोऽयमसहः अयमेतावता शोत्स्यति अयं नेति । अथवा किमनेन सम्यगालोचितं किं वा नेति ।

साम्प्रतमागमविमर्शमेव व्याख्यानयति-

भा.[४०५९] जइ आगमो य आलोयणा य दोन्नि विसमं तु निवयंति।
एसा खलु वीमंसा जो व सह जेण वा सुज्झे ॥

वृ. यद्यागमश्चालोचना च एते द्वे अपि समकं परस्परमविसंवादिता निपततौ यथैव तस्यागम-
स्तथैवेतरस्यालोचना यथैव तस्यालोचना तथैवागमिन आगमः। एष खलु आगमविमर्श
उच्यते। अस्मिन् सति शोधिं ददति नान्यथा यदि वा यः सहोऽसहो वा येन वा यः शुद्धयति।
एतत्परिभावनमागमविमर्शः। सम्प्रत्याप्तशब्दव्याख्यानमाह-

भा.[४०६०] नाणमादीनि अत्ताणि, जेन अत्तो उ सो भवे।
रागदोसप्पहीणो वा, जे व इट्ठा विसोधीए ॥

वृ. ज्ञानादीनि ज्ञानदर्शनचारित्राणि येनाप्तानि स भवत्याप्तः ज्ञानादिभिराप्यते स्म आप्त इति
व्युत्पत्तेः यो वा रागद्वेषप्रहीणः स आप्तः। यदि वा ये इष्टाः शोधौ शोधिविषये ये आप्ताः।

भा.[४०६१] सुत्तं अत्थो उभयं आलोयण आगमो व इति उभयं।
जं तदुभयंति वुत्तं तत्थ इमा होइ परिभासा।

वृ. सूत्रमर्थ इत्युभयं तेनागमविमर्शं कुर्वन्ति किमयं सह इल्विद अथवा आलोचनामागशविमर्शं
विदधति। यथा किं यथावस्थितास्या लोचना किं वा नेति। तत्र यत्तदुभयमित्युक्तं। तत्र इयं
वक्ष्यमाणा परिभाषा भवति। तामेवाह-

भा.[४०६२] पडिसेवणाइयारे जइ नाउट्टइ जहक्कमं सव्वे।
न हु देंती पच्छित्तं आगम ववहारिणो तस्स ॥

वृ. यदि प्रतिसेवनातिचारान् यथाक्रमं सर्वान् यदि नाकुट्टयति नालोचयति तदा तस्याग-
मव्यवहारिणः प्रायश्चित्तं न ददति। यदि पुनः प्रतिसेवनातिचारान् यथाक्रमं सर्वान् आकुट्टयति
आलोचयति तदा तस्यागमव्यवहारिणः प्रायश्चित्तं ददति।

भा.[४०६३] कहेहि सव्वं जो वुत्तो जाणमणो वि गूहति।
न तस्स दिंत्त पच्छित्तं, बिंति अन्नत्थ सोहय।

वृ. यान् सर्वानालोचयन् कथय सर्वं मा निगूहयेति य उक्तः सन् जानानोऽपि गूहयति तस्य
प्रायश्चित्तमागव्यवहारिणो न ददति। किन्तु ब्रुवते अन्यस्य समीपे गत्वा शोधय, शोधिं गृहाण।

भा.[४०६४] न संभरति जो दोसे सब्भावा न य मायया।
पच्चक्खी साहए ते न माइणो उ न साहए ॥

वृ. यो दोषान् सद्भावतो न स्मरति न मायया, तस्य प्रत्यक्षी, प्रत्यक्षागमज्ञानी कथयति।

भा.[४०६५] जइ आगमतो व आलोयणा व दोवि विसमं निवइयाई।
न हु होंति पच्छित्तं आगम ववहारिणो तस्स ॥

वृ. यद्यागम आलोचना च एते द्वे अपि विषमं निपतिते यथा तेनालोचितं तथागमज्ञानी
तस्यातीचारं न प्रेक्षते किन्त्वन्यादृशमूनमधिकं वा इत्यर्थः। तदा तस्यागमव्यवहारिणः प्रायश्चित्तं
न ददति।

भा.[४०६६] जइ आगमोय आलोयणा य दोन्निवि समं निवडियाई।
देंति ततो पच्छित्तं आगमववहारिणो तस्स ॥

वृ. यथागम आलोचना च एते द्वे अपि समं निपतिते यथापराधमालोचनामागमज्ञानी पश्यतीत्यर्थः । ततस्तस्यागमव्यवहारिणः प्रायश्चित्तं ददाति । अथ कीदृश आलोचनार्हः कीदृशो नेत्याह

भा. [४०६७] अट्ठारसेहिं ठाणेहिं जो होइ अपरिनिट्ठितो ।
नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥

वृ. अष्टादशसु वक्ष्यमाणेषु स्थानेषु गाथायां तृतीया सप्तम्यर्थे यो भवति अपरिनिष्ठितः सम्यगऽपरिज्ञानी स तादृशो व्यवहारं व्यवहर्तुं नालमर्थः-

भा. [४०६८] अट्ठारसेहिं ट्ठाणेहिं जो होइ परिनिट्ठितो ।
अलमत्थो तारिसो होइ ववहारं ववहरित्तए ।

वृ. अष्टादशसु वक्ष्यमाणेषु स्थानेषु यो भवति परिनिष्ठितः । सम्यग् ज्ञाता स तादृशो व्यवहारं व्यवहर्तुमलमर्थः पर्याप्तो भवति ।

भा. [४०६९] अट्ठारसेहिं ट्ठाणेहिं जो होति अपतिट्ठितो ।
नलमत्थो तारिसो होइ ववहारं ववहरित्तए ।

भा. [४०७०] अट्ठारसेहिं ट्ठाणेहिं जो होति सुपतिट्ठितो ।
नलमत्थो तारिसो होइ ववहारं ववहरित्तए ।

वृ. श्लोकद्वयमपि पूर्ववत्, नवमप्रतिष्ठितः तेषु सम्यगवर्तमानः, प्रतिष्ठितस्तेषु सम्यग् वर्तमानः । सम्प्रति तान्येवाष्टादशस्थानान्याह-

भा. [४०७१] वयछक्ककायछक्कं अकप्पो गिहिभायणं पलियंको ।
गोयरनिसिज्ज न्हाणे भूसा अट्ठारसट्ठाणे ॥

वृ. व्रतषट्कं प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहरात्रिभोजनलक्षणं, कायषट्कं पृथिव्यप्तेजोवायुवनस्पतिसलक्षणं, अकल्पः पिण्डशय्या वस्त्रपात्ररूपं चतुष्टयमकल्पनीयं गृहिभाजनं कांस्यपात्रादिः, पल्यङ्कः शय्याविशेषो गृहस्थोचितो गोचरनिषद्यागोचरगतस्य निषदनं, स्नानं देशतः सर्वतो वा शरीरस्य प्रक्षालनं विभूषामण्डनमष्टादशं स्थानमधुना परिनिष्ठितप्रतिष्ठितशब्दयोरर्थमाह-

भा. [४०७२] परिनिट्ठितो परिन्नाया परिट्ठिओ जो ट्ठितो उ तेसि भवे ।
अविऊ सोहिं न याणेइ अट्ठितो पुण अनहा कुज्जा ॥

वृ. परिनिष्ठितो नाम यथायोगं विधेयतया वा सम्यक् परिज्ञातः प्रतिष्ठितो, यस्तेष्वाष्टादशसु स्थानेष्वागमानुसारतोऽविधायकतयावस्थितोऽथापरिनिष्ठितोऽप्रतिष्ठितो वा, को दोषो येन तस्यालोचनार्हत्वप्रतिषेधस्तत आह- अविद्वान् अपरिनिष्ठितः शोधिं न जानाति, अप्रतिष्ठितो निःशूकतया मा ममपि गुरुतरं प्रायश्चित्तमापतेदिति भयतो वान्यथा व्यवहारं कुर्यात्तेनोभयोरप्यालोचनार्हत्वप्रतिषेधः ।

भा. [४०७३] बत्तीसाए ट्ठाणेसु जो होइ अपरिनिट्ठितो ।
नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥

भा. [४०७४] बत्तीसाए ट्ठाणेसु जो होइ परिनिट्ठितो ।

अलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥

भा. [४०७५] बत्तीसाए ट्ठाणेसु जो होइ अपतिट्ठितो ।

नलमत्थो तारिसो होइ ववहारं ववहारित्तए ॥

भा. [४०७६] बत्तीसाए ट्ठाणेसु जो होइ सुपतिट्ठितो ।

नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥

वृ. श्लोक चतुष्टयमपि पूर्ववत् । सम्प्रति तान्येव द्वात्रिंशत् स्थानान्याह-

भा. [४०७७] अट्ठविहा गणिसंपय एक्केक्का चउव्विहा मुनेयव्वा ।

एसो खलु बत्तीसा ते पुण ट्ठाणा इमे हुंति ॥

वृ. गणिन आचार्यस्य सम्पदष्टविधा अष्टप्रकारा एकैका च भवति चतुर्विधा ज्ञातव्या, एष खलु द्वात्रिंशत् स्थानानि भवन्ति । तत्र यानि सम्पदोऽष्टौ स्थानानि तानीमानि भवन्ति । तान्येवाह-

भा. [४०७८] आयारसुयसरीरे वयणे वायणमती पउगमती ।

एतेसु संपया खलु अट्ठमिया संगहपरिन्ना ॥

वृ. आचारे श्रुते शरीरे वचने वाचनायां मतौ प्रयोगमतौ एतेषु स्थानेषु सम्पदो भवन्ति । ताश्च सर्वसंख्यया सप्त, अष्टमिका सम्पत्संग्रहपरिज्ञा ।

भा. [४०७९] एसा अट्ठविहा खलु एक्केक्काए चउव्विहो भेदो ।

इणमो उ समासेणं वुच्छामि अहानुपुव्वीए ॥

वृ. एषा अनन्तरोदिता अष्टविधा खलु सम्पत्तदेकैकस्याश्च सम्पदश्चतुर्विधोऽयं वक्ष्माणो भेदः तं समासेन यथानुपूर्व्या परिपाट्या वक्ष्यमि प्रतिज्ञामेव निर्वाहयति-

भा. [४०८०] आयार संपयाए संजमधुवजोगजुत्तया पढमा ।

बिइया य असंपग्गहिया अनिययवित्ती भवे तइया ।

भा. [४०८१] तत्तो य वुड्ढसीले आयारे संपया चउब्भेया ।

चरणं तु संजमो उ तहियं निच्चं उवउत्तो ॥

वृ. आचारसम्पद्यावान्तरभेदश्चतस्रः सम्पदस्तद्यथा-प्रथमा संयमध्रुवयोगयुक्तता, द्वितीया असंप्रग्रगहिता संप्रग्रहरहितता, तृतीया भवत्यनियतवृत्ति स्ततश्चतुर्थी यत् वृद्धशीलो वसंते । एषा आचारे संपच्चतुर्धा । तत्र संयमध्रुवयोगयुक्तता नामसंयमश्चरणं तस्मिन् ध्रुवं नित्यं योगे युक्तता उपयुक्तता संयमध्रुवयोगयुक्तता । असंप्रग्रहिता नाम जात्यादिमदैरनुत्सिक्तता ।

भा. [४०८२] आयरितो बहुस्सुतो तवसि जच्चादिगेहि व मएहिं ।

जो होइ अनुस्सितो असंपग्गहितो भवे सो उ ॥

वृ. आचार्योऽहं बहुश्रुतोऽहं तेजस्वी अहमिति मदैर्जात्यादिभिर्वा मदैर्यो भवत्यनुत्सिक्तः स भवत्यसंप्रग्रहितो मदसंप्रग्रहरहितत्वात् अनियतवृत्तिता अनियतचारिता । तथा चाह-

भा. [४०८३] अनिययचारी अनिययवित्ती अगिहितो वि होइ अनिकेतो ।

निहुय स भवे अचंचल नायव्वो वुड्ढसीलत्ति ॥

वृ. अनियतवृत्तिर्नाम अनियतचारी अथवा अगृहिकोऽविद्यमाननिकेतोऽनियतवृत्तिस्तथा

निवृत्त एतदेव व्याचष्टे-अचञ्चलो वृद्धशीलो ज्ञातव्यः उक्ता आचारसम्पच्चतुर्धा ।

भा. [४०८४] बहुसुय परिचियसुत्ते विचित्तसुत्ते य होइ बोधव्वे ।
घोसविसुद्धिकरे वा चउहा सुयसंपया होइ ॥

वृ. श्रुतसम्पच्चतुर्धा चतुःप्रकारा भवति, तद्यथा-बहुश्रुतः परिचितसूत्रः विचित्रसूत्रो घोष-विशुद्धिकरः । सम्पत्सद्वतो भेदेनाभिधानं श्रुतश्रुतवतोः कथंचिद् भेदात् । एवमुत्तरत्र पूर्वं च परिभावनीयं । तत् बहुश्रुतमाह-

भा. [४०८५] बहुसुत्तजुगपहाणे अब्भिंतर बाहिरं सुयं बहुहा ।
होइ व सद्दग्गहणा चारित्तं वि सुबहुयंपि ॥

वृ. यस्य बहुधा बहुप्रकारमभ्यन्तमङ्गप्रविष्टं बाह्यमङ्गं बाह्यश्रुतं भवति विद्यते । घोषविशुद्धिकर इत्यत्र च शब्दग्रहणात् सुबहुकमं चारित्रमपि यस्य स युगप्रधानो बहुश्रुतः ।

भा. [४०८६] सगनामं व परिचियं उक्कमउक्कमतो बहूहिं विगमेहिं ।
ससमयपरसमएहिं य उस्सग्गोववायतो चित्तं ॥

वृ. यस्य श्रुतं उत्क्रमतः क्रमेण च तथा क्रमेण उत्क्रमेण वा एकैकपदमोचनेन इत्यादिभिरपि बहुनिर्गमैः स्वनामेव स्वाभिधानिव परिचितं सूत्रं सपरिचितसूत्रस्तथा यस्य स्वसमयपरसमया-भ्यां स्वसमयपरसमयवक्तव्यताभ्यामुत्सर्गापवादेन उत्सर्गानुविद्धमपवादानुविद्धं विचित्रं सूत्रं सविचित्रसूत्रः । घोषविशुद्धमाह-

भा. [४०८७] घोसा उदत्तमादी तेहिं विसुद्धं तु घोसपरिसुद्धं ।
एसा सुत्तोवसंपय सरीरउवसंपयं अतो वुच्छं ॥

वृ. घोषाः उदात्तादयस्तैर्विशुद्धं घोषविशुद्धं तत्करणशीलो घोषविशुद्धिकरः एषा चतुर्धा श्रुतोपसम्पत् । अत ऊर्ध्वं शरीरोपसम्पदं वक्ष्ये । तामेवाह-

भा. [४०८८] परीणाहो तह अनुत्तप्पया सरीरंमि ।
पडिपुण्ण इंदियएहिं य थिरसंघयणो य बोधव्वो ॥

वृ. शरीरस्य आरोहः समपरिणाहः तथा अनुतप्यता अलज्जनीयता तथा परिपूर्णमिन्द्रयैः स्थिरसंहननश्चतुर्थो बोद्धव्यः । तत्रारोहपरिणाहमाह ॥

भा. [४०८९] आरोहो दिग्घत्तं विक्खंभो वि जइ तेत्तितो चेव ।
आरोह परिणाहे उवसंपया एस नायव्वा ॥

वृ. आरोहो दीर्घत्वं परिणामो विष्कंभो विशालता । तत्र यावनारोहस्तवान् यदि विष्कंभो भवति तदा एषा उपसम्पत् आरोहपरिणाहे ज्ञातव्या । अनुतप्यतामाह-

भा. [४०९०] तवु लज्जाए धाऊ अलज्जणीयो अहीन सव्वंगो ।
होइ अनुतप्पे सो अविगलइंदियपडिपुण्णे ॥

वृ. त्रपुधातुर्लज्जायां वर्तते त्रपौपि लज्जायामिति वचनात् । तत उत्प्राबल्येन त्रप्यते येन तत् उत्त्रप्यं । न उत्त्रप्यमनउत्त्रप्यमलज्जनीयं तथा च शरीरशरीरमतोरभेदमधिकृत्याह- अलज्जनीयः किमुक्तं भवति अहीनसर्वाङ्ग एष भवत्यनुत्त्रप्यः । तथा अविकलानि स्पष्टं सम्पूर्णानि इन्द्रियाणि यस्य सोऽविकलेन्द्रियः । परिपूर्णः परिपूर्णेन्द्रिय उच्यते । स्थिरसंहननमाह-

भा. [४०९१] पढमगसंघयणथिरो बली य सरीरो च होइ नायव्वो।
एसा शरीरसंपया एत्तो वयणंमि वुच्छामि ॥

वृ. प्रथम संहननः स्थिरः स्थिरसंहननो ज्ञातव्यः । एषा चतुःप्रकारा शरीरसम्पदुक्ता। अत ऊर्ध्वमिदानीं वचने सम्पदं व्याख्यामि तामेवाह-

भा. [४०९२] आदेज्ज महुरवयणो य अनिस्सिय वयणो तहा असंदिद्धो।
आदेज्जगब्भवक्को अत्थवगाढं भवे महुरं ॥

भा. [४०९३] अहवा अपरुसवयणो खीरासवमादिलद्धिजुत्तो वा।
निस्सिय कोहाईहिं अहवावी रागदोसेहिं ॥

वृ. आदेज्जति पदैकदेशे पदसमुदायोपचारादादेयवचन इति द्रष्टव्यमेवमन्यत्रापि । तथा मधुरवचनोऽनिश्रितवचनोऽसन्दिग्धोऽसन्दिग्धवचनः । तत्रादेय आदेयवचनो नाम ग्राह्यवाक्यः । अर्थावगाढं भवति मधुरं, मधुरं वचनं यस्यासौ मधुरवचनः । अथवा अपरुषवचनो यदि वा क्षीराश्रवादिलब्धियुक्तो मधुरवचनः । तथा निश्रितं क्रोधादीनामथवा रागद्वेषाणां निश्रा मुपगतं गाथायां तृतीयाकरणविवक्षातो न निश्रितं वचनं यस्य स तथा असन्दिग्धवचनमाह-

भा. [४०९४] अव्वत्तं अफुडत्थं अथ बहुत्ता व होंति संदिद्धं।
विवरीयंमसंदिद्धं वयणे सा संपया चउहा ॥

वृ. अव्यक्तवचो व्यक्ताया अभावतः अस्फुटार्थमक्षराणां सन्निवेशविशेषतो विवक्षितार्थसम्पदाकत्वाभावात्, अर्थबहुत्वाद्वा भवति। सन्दिग्धं तद्विपरीतमसंदिग्धं तद्वचनं यस्य सोऽसंदिग्धवचनः । एषा वचने सम्पच्चतुर्धा चतुःप्रकारा। सम्प्रति वाचनासम्पदं चतुःप्रकारामाह-

भा. [४०९५] वायणभेया चउरो विजिओद्देसण, समुद्दिसणयाओ।
परिनिव्वय निवायाए निज्जवणे चेव अत्थस्स ॥

वृ. वाचनाया भेदाश्चत्वारस्तद्यथा- विचिन्त्य सम्यक् योग्यतां परिनिश्चित्योद्देशनं १, विचिन्त्यैव समुदेश (नं) समुद्देशनता च २, तथा परिनिर्वाप्य वाचयति ३, अर्थस्य निर्यापना ४। तत्र विचिन्त्योद्देशनाह-

भा. [४०९६] तेणेव गुणेणं तू वाएयव्वा परिक्खिउंसी।
सा उद्दिसति वियाणेउं जं जस्स उ जोग्गं तं तस्स ॥

वृ. अयमस्य वाचना योग्योऽयमयोग्य इति तेनैव वाचनाविषयेन गुणेन शिष्याः परीक्ष्य वाचयितव्या नान्यथा ततो यत् यस्य योग्यं तत्तस्य विज्ञाय उद्दिशति। अत्रैव प्रकारान्तरमाह-

भा. [४०९७] अपरिणामगादी वियाणिउ अभयाणे न वाएत्ति।
जह आममट्टिय घडे, अंबेव नछुब्भती खीरं ॥

वृ. अपरिणामिकादीन आदिशब्दादतिपरिणामिकपरिग्रहः छेदसूत्राणामभाजनानि विज्ञाय न वाचयति नोद्देतीत्यर्थः । यथा आमे अपक्वे मृत्तिका घटे पक्के वा अम्लेन क्षीरं क्षिप्यते।

भा. [४०९८] जइ छुब्भती विनस्सइ नस्सइ वा एवमपरिणामादी।
नोद्देसे च्छेयसुत्तं समुद्दिसे वाचितं चेव ॥

वृ. यद्यम्ले क्षीरं क्षिप्यते तदा विनश्यते यदि वा आममृत्तिकाघटे घटस्य भङ्गतो विनश्यति।

एवमपरिणामादौ च्छेदसूत्रं विनश्यति नश्यति वा ततो नोद्दिशति एषा विचिन्त्योद्देशनता, समुद्दिशे-दपि तदेव योग्यं नान्यत्। एषा विचिन्त्य समुद्देशन्।

**भा. [४०९९]** परिनिव्ववियावाए जत्तियमेत्तं तु तरइ उप्पेउं।
जाहगदिट्ठंतेणं गरिचिते ताव तामुद्दिसति ॥

**वृ.** परिनिर्वाप्य वाचयति। किमुक्तं भवति ? जाहकदृष्टान्तेन यावन्मात्रमवग्रहीतुं शक्नोति तावन्मात्रमग्रतेनपरिचिते उद्दिशति। एषा परिनिर्वाप्य वाचना, अर्थस्य निर्यापणामाह-

**भा. [४१००]** निज्जवग्गो अत्थस्स जो वियाणाइ अत्थ सुत्तस्स।
अत्थेण व निव्वहती अत्थंपि कहेइ जं भणियं ॥

**वृ.** अर्थस्य निर्यापक इति यद्भणितं तस्यामर्थः। यो नाम सूत्रस्यार्थं कथ्यमानं विजानाति यदि वा अर्थेन निर्वहति अर्थावधारणाबलेन सूत्रपातो निर्वाहमुपयाति तस्यार्थमपि कथयति, आस्तां सूत्रं ददातीत्यपि शब्दार्थः। सम्प्रति मतिसम्पदं चतुर्भेदामाह-

**भा. [४१०१]** मइसंपयचउभेया उग्गह ईहा अवाय धारणा य।
उग्गहमति छब्भेया तत्थ इमा होइ नायव्वा ॥

**वृ.** मतिसम्पच्चतुर्भेदा। तद्यथा-अवग्रह इहा अवायः धारणा च। तत्रावग्रहमवग्रहः अनिर्देश्य सामान्यमात्रग्रहणमोहनमीहा अवग्रहीतस्यार्थस्यासद्भूतविशेष परित्यागेन सद्भूविशेषादाना-भिमुखो बोधविशेषः। अवायो निश्चयः। धारणा स्मृतिस्तत्रावग्रहमतिरियं वक्ष्यमाणे षड्भेदा भवति ज्ञातव्या। तामेवाह-

**भा. [४१०२]** खिप्प बहुविहं व धुवअनिस्सिय तह य होई असंदिद्धं।
उगेण्हइ एविहा अवायमवि धारणा चेव ॥

**वृ.** १ क्षिप्रं २ बहु ३ बहुविधं ४ ध्रुव ५ निश्रित ६ असन्दिग्धमवगृह्णाति। एवं अवग्रहस्य षट् भेदं एवं षट् भेदा ईहा अवायो धारणापि च प्रत्येकं ज्ञातव्या। तत्र क्षिप्रमवग्रहं व्याख्यानयति।

**भा. [४१०३]** सीसेण कुतित्थीप व उच्चरियमेत्तमेवाउगिण्हे।
तं खिप्पं बहुगं पुण पंच व छ स्सत्त गंथसया ॥

**वृ.** शिष्येन कुतीर्थिना वा यत् उच्चरितमात्रमेवावगृह्णाति तत् क्षिप्रमवग्रहणमुच्यते। बहुकं पुनरवग्रहणमिदं यत् पञ्च षट् सप्त वा ग्रन्थशतान्येकवारमवगृह्णाति;

**भा. [४१०४]** बहुहानेगपयारं जह लिहति वधारए गणेइ निया,
अक्खाणगं कहेइ सद्दसमूहं व नेगविहं ॥

**वृ.** बहुविधमवग्रहणं नाम अनेकप्रकारं यथा स्वयं लिखति अन्येन भण्यमानमवधार-यति। अन्यच्च संख्येयवस्तु गणयति। अथवा नानापुरुषाश्रितं नानातोद्याश्रितं वा शब्दसमूह-मनेकविधं अनेकप्रकारं प्रत्येकमवगृह्णाति एतत् बुहविधमवग्रहण्।

**भा. [४१०५]** न विस्सरति धुवं ता अनिस्सियं जन्न पोत्थए लिहिया,
अनभासियं च गेण्हए निस्संकिय होइ संदिद्धं ॥

**वृ.** यन्नैव विस्मरति तत् ध्रुवम्। अनिश्रितं नाम यन्न पुस्तके लिखितमपेक्षते अभाषितं वा परैर्व्याजेन उदीरितं वा यदवगृह्णाति तदनिश्रितं, निःशङ्कितं भवत्यसन्दिग्धं। एवं ग्रहणस्य

षड्भेदा। साम्प्रतमीहादीनां षड्भेदान् प्रत्येकं योजयन्नाह-

भा. [४१०६] उग्गहियस्स उ ईहा ईहिता पच्छा अनंतरमवातो।
अवगते एच्छ धारण तीए विसेसो इमो नवरं॥

वृ. अवग्रहीतार्थस्य विषये ईहा प्रवर्त्तते, ईहाया अपि उक्तप्रकारेण षड्भेदा भावनीयाः। ईहिते सति पश्चादनन्तरमवाय उपजायते। ततस्तस्याप्युक्तप्रकारेण षड्भेदाः। अवगते सति पश्चाद्धारणातस्तस्या अपि षडेभेदाः नवरं तस्यां धारणायामयं वक्ष्यमाणो विशेषस्तमेवाह-

भा. [४१०७] बहु बहुविहं पुराणं दुद्धरमनिस्सिय तहेव असंदिद्धं।
पोराण पुरा वाचितं दुद्धरनयभंगगुविलत्ता॥

वृ. बहु बहुविधं पौराणं दुर्धरमनिश्रितं तथैवासन्दिग्धं धरणमिति धारणायाः षड्भेदास्तत्र बहुबहुविधाऽनिश्रिताऽसन्दिग्धानि तथैव पौराणं नाम यत् पुरा चिरकालो वाचितं। दुर्द्धरं नाम नयभंगैर्गुपिलत्वान्महता कष्टेन धार्यम् सम्प्रति प्रयोगमतिसम्पदं चतुर्भेदामाह।

भा. [४१०८] एत्तो उ पउगमती चउव्विहा होइ आनुपुव्वीए।
आयपुरिसं च खेत्तं वत्थुं वि य पउंजए वायं॥

वृ. अत ऊर्ध्वं प्रयगमतिश्चतुर्धा आनुपूर्व्या परिपाट्य वक्ष्यते। तामेवाह-आत्मानं पुरुषं क्षेत्रं वस्तु दितित्वा ज्ञात्वा वादं प्रयुंक्ते उपलक्षणमेतत्। धर्मकथादिकं वा तत्रात्मद्वारमाह-

भा. [४१०९] जाणति पयोगभिसजो वाही जेनातुरस्स छिज्जइ।
ओइय वातो य कहा वा नियसत्तिं नाउ कायव्वा॥

वृ. यथा प्रयोगभिषक् येनौषधेनातुरस्य व्याधिः च्छिद्यते तत् जानाति ज्ञात्वा च तत् प्रयुंक्ते इत्येवमधुना प्रकारेण निजशक्तिं ज्ञात्वा वादो धर्मकथा वा कर्त्तव्या नान्यथा। गतं आत्मद्वारम्

भा. [४११०] पुरिसं उवासगादी अहवावी जाणगा इयं परिसं।
पुव्वं तु गमेऊणं ताहे वातो पतोत्तव्वो॥

वृ. पुरुषमुपासकादि कथमथवा ज्ञापिकादिकां विद्यां वा पर्षद् पूर्वं गमयित्वा पश्चात् वादः प्रयोक्तव्यो नान्यथा। गतं पुरुषद्वारमधुना क्षेत्रद्वारमाह-

भा. [४१११] खेत्तं मालवमादी अहवावी साहुभावियं जं तु।
नाऊण तहा विहिणा वातो य तहिं पतोत्तव्वो॥

वृ. क्षेत्रं मालवादिकं यद्वा साधुभावितं तत्तथारूपेण ज्ञात्वा विधिना जिनभणितेन वादः प्रयोक्तव्यो नान्यथा। गतं क्षेत्रद्वारं। वस्तुद्वारमाह-

भा. [४११२] वत्थुं परवादी उ बहु आगमितो न वा च नाऊणं।
रायावरायमच्चो दारुणभद्दस्स भावोत्ति॥

वृ. वस्तु परिवादी बह्वागमिको न वा यदि वा राजा राजामात्यो वा दारुणस्वभावो भद्रस्वभावो वा इति ज्ञात्वा वादः प्रयोक्तव्यः तदेवमुक्ता प्रयोगमतेः सम्पच्चतुःप्रकारा। सम्प्रति संग्रहपरिज्ञां चतुःप्रकारामाह-

भा. [४११३] बहुजनजोग्गं खेत्तं पेहे तह फलगपीढमादित्तो।
वासासु एए दोन्नि वि काले य समाणए कालं॥

भा. [४११४] पूए अहो गुरुंमि य चउहा एसा उ संगह परिण्णा।
एएसिं तु विभागं वुच्छामि अहानुपुव्वीए ॥

वृ. वर्षासु बहुजनयोग्यं क्षेत्रं प्रेक्षयति तथा फलकपीठं समाहारो द्वन्द्वः। पीठफलकानीत्यर्थः। यद्वर्षासु एते द्वे अपि पीठफलके आचीर्थे तथा काले स्वाध्यायादिसम्बन्धिनि प्राप्तवसरे तं कालं स्वाध्यायादिना समनायति। तथा यथा गुरुरत्नाधिकतरं पूजयति एषा चतुर्धा संग्रहपरिज्ञा। साम्प्रतमेतेषां पादानां विभागं यथानुपूर्व्या क्रमेण वक्ष्यते तमेवाह-

भा. [४११५] वासे बहुजनजोग्गं विच्छिन्नं जंतु गच्छपाओग्गं।
अहवा वि बाल दुब्बल गिलाण आदेसमादीणं ॥

वृ. बहुजनयोग्यं नाम विस्तीर्णं यतः समस्तस्यापि गच्छस्य प्रायोग्यं अथवा बालदुर्बलग्लानादेशादीनां प्रायोग्यं बहुजनयोग्यं। एवंभूतक्षेत्राप्रत्युपेक्षणे दोषानाह-

भा. [४११६] खेत्ते असति असंगहिया ताहे वच्चंति ते उ अन्नत्थ।
न उ मइलेंति निसेज्जा पीढफलगाण गहणंमि ॥

वृ. बहुजनयोगस्य क्षेत्रस्य असति अभावे ते साधवोऽसंगृहीता भवन्ति ततस्तेऽन्यत्र गच्छान्तरे व्रजन्ति, तस्मादवश्यं बुहजनयोग्यं क्षेत्रं वर्षासु प्रत्युपेक्षं, तथा पीठफलकादीनां ग्रहणे तु नैव मलिनयति न मलिनीभवन्ति निषद्याः संस्तारकादिरूपाः।

भा. [४११७] वियरे न तु वासासुं अन्नकाले उ गम्मते नत्थ।
पाणासीयलकुंथादिया ततो गहण वासासु ॥

वृ. न चान्यत्संस्तारकादिवर्षासु साधूनां वितरति श्रावकजनस्तथा समाचार्यभावात् अथान्यत्र क्षेत्रान्तरे गम्यते यत्र न पानीयस्पन्दस्तत आह-अन्यत्र गम्यते काले ऋतुबद्धेन वर्षासु भूमेः शीतलायाः प्राणाःकुन्थ्वादयः संमूर्च्छिन्ति ततो ग्रहणं वर्षासु पीठफलकानामेतेन आचीर्णे द्वे अपी वर्षास्विति व्याख्यात्। सम्प्रति काले य समाणए कालमित्यस्य व्याख्यानमाह-

भा. [४११८] जं जंमि होइ काले कायव्वं तं समाणए तंमि।
सज्झाया पह उवही उप्पायण भिक्खमादी य ॥

वृ. यत् स्वाध्याय उपकरणस्य प्रत्युपेक्षा उपधिरुत्पादनं भिक्षादिकं च यस्मिन् काले कर्त्तव्यं तस्मिन् काले समानयति। एष तृतीयः संग्रहपरिज्ञाभेदः। चतुर्थमाह-

भा. [४११९] अह गुरु जेणं पव्वावितो उ जस्स व अहीति पासंमि।
अहवा अहागुरू खलु हवति रायनियतरागा उ ॥

वृ. येन प्रव्रजितो यस्य वा पार्श्वेऽधीतः स यथा गुरुरथवा गुरवो नाम ये तस्य रत्नाधिकतरास्तेषां पूजनामाह-

भा. [४१२०] तेसिं अब्भुट्ठाणं दंडग्गह तह य होइ आहारे।
उवहि वहणं विस्सामणं य संपूयणा एसा ॥

वृ. तेषां यथा गुरूणामेषा संपूजना आगच्छतामभ्युत्थानं दण्डस्य ग्रहणं तथा भवत्याहारे आहारस्य काले प्रायोग्यस्य सम्पादनमुपधिर्वहनं विश्रामणं च। उपसंहारमाह-

भा. [४१२१] एसा खलु बत्तीसा एयं जाणाति जो ठ्ठितो वेत्थ।

ववहारे अलमत्थो अहवावि भवे इमेहिं तु ॥

वृ. एषा अनन्तरोदिता खलु स्थानानां द्वात्रिंशत् एतेषां यो जानाति यो वाऽत्र स्थितः स व्यवहारे अलमर्थः । अथवा एषु षड्त्रिंशत्संख्येषु वक्ष्यमाणेषु स्थानेषु ज्ञाता स्थितो वा व्यवहार-समर्थो भवति । एतदेवान्वयव्यतिरेकत आह–

भा. [४१२२] छत्तीसाए ट्ठाणेहिं जो होइ अपरिनिट्ठितो ।
नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥

भा. [४१२३] छत्तीसाए ट्ठाणेहिं जो होइ परिनिट्ठितो ।
अलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥

भा. [४१२४] छत्तीसाए ट्ठाणेहिं जो होइ अपतिट्ठितो ।
नलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥

भा. [४१२५] छत्तीसाए ट्ठाणेहिं जो होइ सुपतिट्ठितो ।
अलमत्थो तारिसो होइ ववहारं ववहरित्तए ॥

वृ. श्लोकचतुष्टयमपि गतार्थम् । सम्प्रत्येतामेव षट्त्रिंशतमाह–

भा. [४१२६] जा भणिया बत्तीसा तं च्छोढूण विनयपडिवत्तिं ।
चउभेयं तो होही छत्तीसा एस ट्ठाणाणं ॥

वृ. या पूर्वं स्थानानां द्वात्रिंशदुक्ता तस्यां चतुर्भेदां विनयप्रतिपत्तिं प्रक्षिप्यते, तत एषां स्थानानां षट्त्रिंशद्भवति ज्ञातव्या ।

भा. [४१२७] बत्तीसवण्णिय च्चिय वोच्छं चउभेयविनयपडिवत्तिं ।
आयरियोऽतेवासिं जह विनयित्ता भवे निरिणो ॥

वृ. द्वात्रिंशत्प्राग् वर्णितैव ततः सम्प्रति वक्ष्यामि चतुर्भेदां विनयप्रतिपत्तिं । यथा-चार्योऽन्तेवासिनं विनयित्वा विनयं ग्राहयित्वा निरुणो भवति तामेव चतुर्भेदां विनयप्रतिपत्तिमाह–

भा. [४१२८] आयारे सुय विनए विक्खेवण चेव होइ बोधव्वे ।
दोसस्स निग्घाए विनए चउहेस पडिवत्ती ॥

वृ. आचारे विनयः श्रुतविनयः विक्षेपणे चैव विनयो भवति बोद्धव्यः । विक्षेपणाविनयः दोषनिर्घातविनयश्च । एषा चतुर्धा विनये प्रतिपत्तिस्तत्राचारविनयमाह–

भा. [४१२९] आयारे विनओ खलु चउव्विहो होइ आनुपुव्वीए ।
संजमसामाचारी तवे य गणविहरणा चेव ॥

भा. [४१३०] एगल्लविहारे या सामाचारी य एस चउभेया ।
एयासिं तु विभागं वुच्छामि अहानुपुव्वीए ॥

वृ. आचारे आचारविषयः खलु विनयश्चतुर्विधो भवति अनुपूर्व्या परिपाट्या तद्यथा-संयम-सामाचारी, तपः सामाचारी, गणविहरणसामाचारी, एकलविहारसामाचारी । एवमेषा चतुर्भेदा सामाचारी । एतासां सामाचारीणां विभागं यथानुपूर्व्या वक्ष्यामि ।

भा. [४१३१] संयममायरति सयं परं च गाहेति संयमं नियमा ।
सीयंते उज्जयचरणं च उववूहे ॥

**वृ.** स्वयं संयममाचरति परं च नियमात् संयमं ग्राहयति। तथा संयमविषये सीदति स्थिरि-करणं उद्यतचरणं तु उपबृंहयति। एषा संयमसामाचारी। सम्प्रति संयममेव कथयति-

**भा. [४१३२]** सो सत्तरसो पुढवादियाण घट्ट परिताव उद्दवणं।
परिहरियव्वं नियमा संजमगो एस बोधव्वो ॥

**वृ.** स संयमः सप्तदशः सप्तदशप्रकारो विस्तरतः। संक्षेपतः पुनः पृथिव्यादीनां षण्णां कायानां घट्टनं परितापनमपद्रावणं न नियमात्परिहर्तव्यमित्येष संयमो बोद्धव्यः। संयमक इति प्राकृतत्वात्स्वार्थो कप्रत्ययः उक्ता संयमसामाचारी। तपःसामाचारीमाह-

**भा. [४१३३]** पक्खियपोसहिएसुं कारयति तवं सयं करेति व।
भिक्खायरियाए तहा निजुंजति परं सयं वावी ॥

**वृ.** पाक्षिके ऽर्धमासपर्वणि पौषधिकेषु च अष्टम्यादिषु पर्वसु परं तपः कारयति स्वयमपि च करोति। तथा भिक्षाचर्यायां परं नियुंक्ते प्रयोजनामपेक्ष्य स्वयमपि भिक्षाचर्यां गच्छति-

**भा. [४१३४]** सव्वंमि बारसविहे निउंजइ परं सयं च उज्जुत्तो।
गणसामायारीए गणं विसीयंतं तु चोएति ॥

**वृ.** सर्वस्मिन् द्वादशविधे तपसि यथायोगं परं नियुंक्ते, स्वयं च सर्वत्र यथाशक्ति उद्यु-क्तः। एषा तपःसामाचारी। गणसामाचार्यां गणं विषीदन्तं चोदयन्ति कथमित्याह-

**भा. [४१३५]** पडिलेहण पप्फोडण बालगिलाणाइ वेयव्वइ चेव।
सीदंतं गाहेई सयं च उज्जुत्तो एएसु ॥

**वृ.** प्रत्युपेक्षणं चक्षुषा निरीक्षणं प्रस्फोटनमाखोटादिकमेतयोर्बालग्लनादिवैयावृत्ये च सीदन्तं प्रत्युपेक्षणादि ग्राहयति कारयति। स्वयं च एतेषु स्थानेषु सततमुद्युक्त उक्ता गणसामाचारी, साम्प्रतमेककविहारसामाचारीमाह-

**भा. [४१३६]** एगल्लविहारादी पडिमा पडिवज्जती सयण्णं व।
पडिवज्जावे एवं अप्पाण परं च विनएती ॥

**वृ.** एककविहारदय आदिशब्दात्प्रतिमागतविशेषानुष्ठानपरिग्रहः। एवं भूताः प्रतिमाः स्वयं प्रतिपद्यन्ते अन्यं च प्रतिपादयति। एवं आचारविनयमात्मानं परं च विनयति, गत आचार-विनयः। सम्प्रति श्रुतविनयमाह-

**भा. [४१३७]** सुत्तं अत्थं च तहा हियं निस्सेयं तहा पवाएइ।
एसो चउव्विहो खलु सुयविणिओ होइ नायव्वो ॥

**वृ.** सूत्रं प्रवाचयति तथा अर्थमपि हितं यत् यस्योचितं तत् प्रवाचयन्ति नेतरत्। तथा निःशेषं परिपूर्णमेष चतुर्विधः खलु श्रुतविनयो भवति ज्ञातव्यः। एतमेव व्याचष्टे-

**भा. [४१३८]** सुत्तं गाहेइ उज्जुत्ते अत्थं च सुणावए पयत्तेण।
जं जस्स होइ जोग्गं परिणामगमाइणं तु हियं ॥

**भा. [४१३९]** निस्सेसमपरिसेसं जाव समत्तं तु ताव वाएइ।
एसो सुयविण्णतो खलु वोच्छं विक्खेवणाविनयं ॥

**वृ.** उद्युक्तः सन् शिष्यं सूत्रं ग्राहयति। एष सूत्रग्राहणविनयः तथा प्रयत्नेन शिष्यमर्थं

श्रावयति एषोऽर्थश्रावणविनयः परिणामकादीनां यत् यत् यस्य भवति योग्यं तत्तु तस्य हितं सूत्रतोऽर्थतश्च ददाति एष हितप्रदानविनयः। तथा निःशेषं किमुक्तं भवति यावत्समाप्तं भवति तावद्वाचयति। एष निःशेषवाचनाविनयः। उपसंहारमाह-एष चतुर्विधः खलु श्रुतविनयोऽत ऊर्ध्वं विक्षेपणाविनयं वक्ष्ये। प्रतिज्ञा करोति।

भा. [४१४०] अदिट्ठं दिट्ठं खलु दिट्ठं साहम्मियत्तविनएणं।
चुयधम्म ठ्ठावे तस्से व हियट्ठमब्भुट्ठे ॥

वृ. अदृष्टं अदृष्टधर्माणं दृष्टमिव दृष्टपूर्वमिव धर्मं ग्राहयति। दृष्टं दृष्टपूर्वकं श्रावकं साधर्मिकत्वविनयेन विनयति प्रव्राजयतीत्यर्थः। तथा च्युतधर्मं धर्मात्प्रभ्रष्टं पुनर्धर्मे स्थापयति। तथा तस्यैव चारित्रधर्मस्य वृद्धये हितमभ्युत्तिष्ठति ४। तत्र प्रथमभेदव्याख्यानार्थमाह-

भा. [४१४१] विनाण भावंमी खिवि पेरणे विक्खवत्तु परसमया।
ससमयं तेणमभिच्छुभे अदिट्ठधम्मं तु दिट्ठंवा ॥

वृ. विशब्दो नानाभावे क्षिपप्रेरणे परसमयाद्विनिक्षिप्य नानाप्रकारं प्रेर्यादृष्टधर्माणं दृष्टं वेति वाशब्द उपमायां। दृष्टधर्माणमिव स्वसमयान्तेन स्वसमयाभिमुखमभिक्षिपति। एनमेव चरमपदं-

भा. [४१४२] धम्मसभावो सम्मं दंसणं तु जेण पुव्वि न उ लद्धं।
सो होइ दिट्ठपुव्वो तं गाहेई पुव्वदिट्ठंमि व ॥

वृ. धर्मस्वभावः सम्यग् दर्शनमित्येकार्थं तत्सम्यग् दर्शनं येन पूर्वं न लब्धं स भवत्यदृष्टपूर्वोऽदृष्टपूर्वधर्मस्तं पूर्वदृष्टमिवाविविक्तो विश्रान्ततया पूर्वोपलब्धमिव धर्मं ग्राहयति। अदृष्टं दृष्टमित्यस्यान्यथा व्याख्यानमाह।

भा. [४१४३] जह मायरं च पियरं वा मिच्छादिट्ठंपि गाहिसम्मत्तं।
दिट्ठपुव्वो सावग साहम्मि करेति पव्वावे ॥

वृ. अदृष्टं अदृष्टं पूर्वदृष्टमिव धर्मं ग्राहयति। किमुक्तं भवति ? यथा भ्रातरं पितरं वा सम्यक्त्वं ग्राहयति एवमदृष्टपूर्वं मिथ्यादृष्टमपि सम्यक्त्वं ग्राहयति-दिट्ठसाहम्मियत्ति विनएण इत्यस्य व्याख्यानमाह-दृष्टो नाम दृष्टपूर्वः। स च श्रावकस्तं साधर्मिकत्वविनयेन शिष्ययति साधर्मिकं करोति प्रव्राजयतीत्यर्थः। चुयधम्मधम्मे ठावए इत्यस्य व्याख्यानमाह-

भा. [४१४४] चुयधम्मो चरित्तधम्मातो दंसणातो वा।
तं ठ्ठावेइ तहिं चिय पुणो वि धम्मे जहोदिट्ठो ॥

वृ. च्युतधर्मो नाम भ्रष्टधर्मः। धर्माद्भ्रष्टो भ्रष्टधर्मः। राजदन्तादिदर्शनात् धर्मशब्दस्य परिनिपातः। कस्मात् च्युत इत्याह-चारित्रधर्मात् दर्शनाद्वा तं च्युतधर्माणं तत्रैव चारित्रधर्मे सम्यग् दर्शने वा यथोचिते पुनः स्थापयति। एष तृतीयभेदश्चतुर्थभेदमाह-

भा. [४१४५] तस्सत्ती तस्सेव उ चरित्तधम्मस्स वुड्ढिहेतुं तु।
वारेयणेसणादी न य गिण्हे सयं हियट्ठाए ॥

वृ. तस्सेव हियट्ठमब्भुट्ठे इति तस्येति तस्यैव चारित्रधर्मस्य वृद्धिहेतोरनेषणादि वारयति। हितार्थमभ्युत्तिष्ठतीति हितार्थाय न च स्वयमनेषादि गृह्णाति हितार्थमित्युपलक्षणं तेन हिताय सुखाय क्षेमाय निःश्रेयसाय आनुगामिकोऽभ्युत्तिष्ठतीति द्रष्टव्यं। ततो हितादिपदानां व्याख्यानम

भा. [४१४६] जं इह परलोगे वा हितं सुहं तं खमं मुणेयव्वं।
निस्सेयस मोक्खाय उ अनुगच्छते जं तु ॥

वृ. यत् यस्मात्कारणात् तदभ्युत्थानमिह लोके वा हितं तेन हितमित्युच्यते। सुखं इह परलोके सुखकरणात्। क्षेममैहिकपारत्रिकप्रयोजनक्षमत्वात्। निःश्रेयसं कल्याणकारिकत्वात्। अनुगामि यन्मोक्षाय अनुगच्छति सम्प्रति दोषनिर्घातविनयमभिधित्सुः प्रथमतो दोषनिर्घातशब्दार्थमाह-

भा. [४१४७] दोसा कसायमादी बंधो अहवा वि अट्ठपयडीतो।
नियतं व निच्छियं वाघातो विनासो य एगट्ठा ॥

वृ. दोषाः क्रोधादयः। अथवा बन्धोऽष्टप्रकारो यदि वा पूर्वबद्धा अष्टौ कर्मप्रकृतयो दोषास्तेषां नियतं निश्चितं व्याघातो विनाश इत्येकार्थं दोषनिर्घातः। साम्प्रतमस्य भेदानाह-

भा. [४१४८] कुद्धस्स कोहविनयण दुट्ठस्स य दोसविनयणं जं तु।
कंखिय कंखाच्छेदो आयप्पणिहाण चउहेसो ॥

वृ. क्रुद्धस्य क्रोधविनयनं, दुष्टस्य यत् दोषविनयनं कांक्षिते कांक्षाच्छेदः। तथा आत्मप्रणिधानमित्येष दोषनिर्घातश्चतुर्धा। तत्र प्रथमं भेदमाह-

भा. [४१४९] सीयघरम्मिव दाहं वंजुलरुक्खो व जह उ उरगविसं।
कुद्धस्स तहा कोहं पविनेती उवसमेतित्ति ॥

वृ. शीतगृहमिव जलयन्त्रगृहमिव दाहं तथा वञ्जुलवृक्ष उरगविषयं प्रविनयति यथा क्रुद्धस्य क्रोधं प्रविनयति किमुक्तं भवति? उपशमयति-

भा. [४१५०] दुट्ठो कसायविसए हि मानमाया सभाव दुट्ठो वा।
तस्स पविनेइ दोसं नासयए धंसए वत्ति ॥

वृ. कषायैर्विषयैर्यादि वा मानमायाभ्यामथवा स्वभावेन दुष्टस्तस्य दोषं प्रविनयति। अस्यैवार्थमाह-नाशयति ध्वंसते इति तृतीये भेदव्याख्यानार्थमाह-

भा. [४१५१] कंखा उ भत्तपाने परसमए अहव संखडीमादी।
तस्स पवयणेइ कंखं संखडि अन्नापएसेणं ॥

वृ. यस्य भक्तपाने कांक्षा परसमये वा। अथवा संख्यादौ तस्य कांक्षा प्रविनयति स्फेटयति। संखड्यां संखडी कांक्षामन्यापदेशेनापनयति चतुर्थमात्मप्रणिधानरूपं भेदमाह-

भा. [४१५२] जो एएसु न वट्टइ कोहे दोसे तहेव कंखाए।
सो होइ सुप्पणिहितो सोहणपरिहाणजुत्तो वा ॥

वृ. एतेषु क्रोधे दोषे तथा कांक्षायां न वर्त्तते स भवति सुप्रणिहित आत्मप्रणिधानवान्। उपसंहारमाह-

भा. [४१५३] छत्तीसेयाणि ट्ठाणाणि भणियाणनुपुव्वसो।
जो कुसलो एएहिं ववहारी सो समक्खातो ॥

वृ. एतान्यन्तरोदितानां स्थानानि षट्त्रिंशदानुपूर्व्या क्रमशः क्रमेण भणितानि यस्तेषु कुशलः स व्यवहारी आगमव्यवहारी समाख्यातः पुनरपि यादृशा आगमव्यवहारिणस्तादृशानाह-

भा. [४१५४] अट्ठहिं अट्ठारसहिं व दसहिं य ट्ठाणेहिं जे अपरोक्खा।
आलोयण दोसेहिं छहियं ट्ठाणेहिं जे अपरोक्खा॥

भा. [४१५५] आलोयणठाणेहि छहियं ठाणेहिं जे अपरोक्खा।
पंचहि नियंठेहि पंचहि य चरित्तमंतेहि॥

वृ. अष्टसु आचारवत्त्वप्रभृतिषु स्थानेषु अष्टादशसु व्रतषट्कप्रमुखेषु दशसु च प्रायश्चित्त-स्थानेषु ये अपरोक्षाः प्रत्यक्षज्ञानिनः तथा दशसु आलोचनादोषेषु वा ये अपरोक्षविज्ञानाः प्रत्यक्ष-विज्ञानिनः। तथा दशस्वालोचनागुणेषु षट्सु च स्थानेषु अनन्तरभाविषु ये अपरोक्षाः साक्षात् ज्ञानिनस्तथा पञ्चसु पुलकादिषु निर्ग्रन्थेषु पञ्चसु चारित्रवत्सु सामायिकादिसयमवत्सु ये प्रत्यक्ष-ज्ञानिनस्ते आगमव्यवहारिणः। एतदेव गाथाद्वयं व्याचिख्यासुराह-

भा. [४१५६] अट्ठाया खमादी वयछक्कादी एवइ अट्ठरसा।
दसविह पायच्छित्ते आलोयण दोसदसहिं वा॥

वृ. अष्टौ स्थानानि आचारवत्त्वादीनि तानि च प्रागभिहितानी वालोचनार्हत्वनिबन्धनानि। तथा चोक्तं स्थानाङ्गे-अट्ठहिं ट्ठाणेहिं जाति संपन्ने भवति तो आलोयणारिहो तं जहा आयारव-मित्यादि। अष्टादशस्थानादिव्रतषट्कादीनि भवन्ति पुनरष्टादशग्रहणमेतेषु अपराधास्तेषु प्रायश्चित्तविधिपरिज्ञानप्रतिपत्त्यर्थं दशस्थानानि दशविधिमालोयणपडिक्कमणेत्यादिरूपं प्राय-श्चित्तं आलोचनादोषेषु दशसु अकम्पयित्ता इत्यादिरूपेषु तथा-

भा. [४१५७] छहिं काएहिं वएहि व गुणेहिं आलोयणाए दसहिं च।
छट्ठाणावडिएहिं छहि चेव उ जे अपरोक्खा॥

वृ. षट्स्विति कायेषु व्रतेषु वा तथा आलोचनायाः सम्बन्धिषु गुणेषु दशसु जातिसम्पन्न-प्रभृतिषु। उक्तं च स्थानाङ्गे-दसहिं ट्ठाणेहिं संपन्ने अरिहइ अत्तदोसमालोइत्तए। तं जहा-जातिसम्पन्ने कुलसम्पन्ने इत्यादि तथा षट्सु स्थानेष्विति षट्स्थानपतितेषु स्थानेषु ये अपरोक्षाः साक्षाद्वेदितारः कियन्ति षट्स्थानपतितानि स्थानानीत्यत आह-

भा. [४१५८] संखादीआ ट्ठाणा छहि ट्ठाणेहि पडियाण ट्ठाणा०।
जे संजया सरागा सेसा एक्कंमि ट्ठाणंमि॥

वृ. षट्सु स्थानेष्वनन्तभागवृद्धा असंख्यातभागवृद्धा संख्यातभागवृद्धा संख्यातगुणवृद्धाऽ-संख्यातगुणवृद्धानन्तगुणवृद्धेषु यानि पतितानि स्थानानि तेषां सम्बन्धिनो ये सरागाः संयतास्ते वेदितव्याः। षट्स्थानपतितेषु सरागसंयता वर्तन्ते इति भावः। तेषां च तानि षट्स्थानपतितानि स्थानानि संयमस्थानानि संख्यातीतानि असंख्येयलोकाकाशप्रदेशप्रमाणानि अत एव सरागसंयतानां केषाञ्चिद्वर्द्धते केषाञ्चित् हीयते केषाञ्चित् वर्धते हीयते च। ये तु शेषवीतराग-संयतास्ते एकस्मिन् स्थाने हि तथाहि न तेषां चारित्रं वर्धते नापि हानिमुपगच्छति। कषायाणाम-भावात्, किन्त्ववस्थितमेकमेव परमप्रकार्षप्राप्तं संयमस्थानमिति एतेषां वस्तूनां ये साक्षाद्वेदि-तारस्ते आगमव्यवहारिणस्तथा चाह-

भा. [४१५९] ए आगम ववहारी पन्नेता रागदोस नीहूया।
आणाए जिणिंदाणं जे ववहारं ववहरंति॥

वृ. रागद्वेषनिभृता रागद्वेषाव्यापाररहिता आगमव्यवहारिणाः प्रज्ञप्ता ये जिनेन्द्राणामाज्ञया व्यवहारं व्यवहरन्ति।

भा. [४१६०] एवं भणिते भणती ते वोच्छिन्ना उपसंपयं इहइं।
तेसु य वोच्छिन्नेसु नत्थि विसुद्धी चरित्तस्स॥

भा. [४१६१] देंतावि न दीसंती न विकरेंता उपसंपयं केई।
तित्थं च नाण दंसण निज्जवगा चेव वोच्छिन्ना॥

वृ. एवं प्रागुक्तेन प्रकारेण भणिते चोदको भणति व्यवच्छिन्ना खल्विह भरतक्षेत्रे साम्प्रतमागमव्यवहारिणस्तेषु च व्यवच्छिन्नेषु चारित्रस्य विशुद्धिर्नास्ति सम्यक् परिज्ञानभावतो यथावस्थितशुद्धिदायकाभावात्। अन्यच्च मासिकं पाक्षिकमित्यादि प्रायश्चित्तं ददतोऽपि न केचित् दृश्यन्ते नापि केचित्तथा रूपं प्रायश्चित्तं कुर्वन्तस्ततो ददतां कुर्वतां वा भावे सम्प्रति तीर्थं ज्ञानदर्शनं ज्ञानदर्शनात्मकमनुवर्तते नानुचारित्रात्मकं यतश्चारित्रस्य पर्यन्तसमये निर्यापका एव यथावस्थितशोधिप्रदानत उत्तरोत्तरचारित्रनिर्वाहका एव व्यवच्छिन्नाः। सम्प्रत्येतदेव विभावयिषुः प्रथमतश्चारित्रस्यशुद्धिर्नास्तीति भावयति-

भा. [४१६२] चोद्दसपुधवराणं वोच्छेदो केवलीण वुच्छेए।
केसिं वी आदेसो पायच्छित्तं पि वोच्छिन्नं॥

वृ. केवलिनां व्यवच्छेदे सति तदनन्तरं स्तोकेन काले चतुर्दशपूर्वधराणामपि व्यवच्छेदो भवति। ततः शोधिदायकाभावान्नास्ति शुद्धिश्चारित्रस्य, अन्यच्च केषांचिदमयादेशो यथा प्रायश्चित्तमपि व्यवच्छिन्नं। एतदेव भावयति -

भा. [४१६३] जं जत्तिएण सुज्झइ पावं तस्स तहा देंति पच्छित्तं।
जिन चोद्दसपुव्वधरा तव्विवरीया जहिच्छाए॥

वृ. जिनाः केवलिप्रभृतयश्चतुर्दशपूर्वधरा यत्पापं यस्य यावता प्रायश्चित्तेन शुद्धयति तस्य तावन्मात्रं प्रायश्चित्तं ददति ये तु तद्विपरीताः कल्पव्यवहारनिशीथधरास्ते आगमव्यवहाराभावात् यदृच्छया प्रायश्चित्तं दद्युः। कदाचिन्न्यूनं कदाचिदधिकं वा ततः परमार्थतः सम्प्रति प्रायश्चित्तं व्यवच्छिन्नं तद्व्यवच्छेदान्निर्यापका अपि चारित्रस्य व्यवच्छिन्ना एतदेव स्पष्टयति-(भावयति)

भा. [४१६४] पारगमपारगं वा जाणंते जस्स जं च करणिज्जं।
देइ तहा पच्चक्खी धुणक्खरसमो उ परोक्खी॥

वृ. एष संवरीतुकामः पारगामी भविष्यति। एष नेति। पारगमपारगं वा प्रत्यक्षागमव्यवहारिणः सम्यग् जानते यच्च यस्य करणीयं कर्तुं शक्यं तस्य तत् ज्ञात्वा तथा ददति तथा ते पारापारगादिज्ञानं समास्थितास्ततस्तादृशमुपायमुपदिशन्ति येन स पारगामी भवति। यथा चाराधक उपजायते यस्तु परोक्षी परोक्षज्ञानी स धृणाक्षरसमः किमुक्तं भवति धुणाक्षरवत्। यदृच्छया ततः कदाचिन पापशुद्धिर्नावश्यमिति। अन्यच्च तस्य परोक्षज्ञानिनः प्रायश्चित्तं ददतो महत्प्रायश्चित्तं पापं तथा चाह-

भा. [४१६५] जायऊणाहिएदाने वुत्ता मग्गविराधना।
न सुज्झेइ वि देंतो उ असुद्धो कं च सोहए॥

वृ. स हि परोक्षज्ञानी यदृच्छया व्यवहरन् कदाचिदूनमधिकं वा प्रायश्चित्तं दद्यात् ततो वा ऊनाधिके प्रायश्चित्ते दाने मार्गविराधना मोक्षपथसम्यग्दर्शनज्ञानचारित्रविराधनाः जिनैरुक्ता तयाः स दाता न शुद्धयति । स्वयमशुद्धश्च कथमन्यं शोधयेदिति भावः अथ सोऽपि सूत्रबलेन प्रायश्चित्तं ददाति तत्कथं शोधयेदिति भावः तदप्यसम्यक् सूत्रार्थस्थाप्यपरिज्ञानात् तथा चाह-

भा. [४१६६] अत्थ पडुच्चसुत्तं अनागयं तं तु किंचिआमुसति ।
अत्थोवि कोइसुत्तं अनागयं चेव आमुसति ॥

वृ. अर्थं प्रतीत्य किंचित्सूत्रमनागतमेव भवति, किंचित्पुनः सूत्रं स्वस्थानगतं वा अर्थमामृशति, विचित्रासूत्रस्य वृत्तिरिति वचनात् अर्थोपि कश्चित् सूत्रमनागतं वामृशति, एतच्च सम्यग् जानाति चतुर्दशपूर्वधराः गतास्ते ततः संप्रति सूत्रार्थस्थाप्यज्ञानात् न प्रायश्चितदानशुद्धिस्तदभावाच्चानिर्यापकाणामप्यसिद्धिः संप्रति देता वि न दीसंति इत्यादि व्याख्यार्थमाह-

भा. [४१६७] देंतावि न दीसंती मास चउमासिया उ सोहीतो ।
कुणमाणे य विसोहिं न पासिमो संपइ केइं ॥

वृ. मासिकीं चातुर्मासिकीं उपलक्षणमेतत् । पञ्चमासिक्यादिमपि वा शोधिं सम्प्रति कंचित् ददतोऽपि न दृश्यते । नापि कांश्चित् तां मासिकीं चातुर्मासिकीं वा कुर्वाणान् संप्रति पश्यामः ।

भा. [४१६८] सोहीए य अभावे देंताण य करेंतगाण अभावे ।
वट्टइ संपइ काले तित्थं सम्मत्तनाणेहिं ॥

वृ. उक्तप्रकारेण शोधेरभावे शोधिं ददतां कुर्वतां वा अभावे सम्प्रति काले तीर्थं वर्तते सम्यक्त्वज्ञानाभ्यां ।

भा. [४१६९] एवं तु चोइयम्मी आयरितो भणइ न हु तुमे नायं ।
पच्छित्तं कहियंतू किं धरती किं व वोच्छिन्नं ॥

वृ. इदमुक्तेन प्रकारेण चोदिते प्रश्ने कृते सति आचार्यो ब्रूते नहु नैव त्वया ज्ञातं तथा प्रायश्चित्तं प्रथमतः कोक्तं वा संप्रति प्रायश्चित्तस्य धरते विद्यते किं वा व्यवच्छिन्नं तत्र प्रथमतो यत्र प्रायश्चित्तमभिहितं तदभिधित्सुराह-

भा. [४१७०] सव्वं पि य पच्छित्तं पच्चक्खाणस्स ततिय वत्थुंमि ।
ततो वि य निज्जूढा पकप्पकप्पो य ववहारो ॥

वृ. सर्वमपि प्रायश्चित्तं नवमस्य प्रत्याख्यानाभिधस्य पूर्वस्य तृतीये वस्तूनि तत एव च निर्व्यूढं दृष्टं प्रकल्पो निशीथाध्ययनं, कल्पो व्यवहारश्च । सम्प्रति किं धरती किं च वोच्छिन्नमित्यस्य व्याख्यानार्थमाह-

भा. [४१७१] सपयरूवणं अनुसज्जणा य दसचोद्दस अट्ठ दुप्पसेह ।
अत्थि न दीसइ भणिएण विना तित्थं च निज्जवए ॥

वृ. स्वपदं नाम निजं स्थानं तच्च प्रज्ञापकस्य प्रायश्चित्तं तथा हि चारित्रस्य प्रवर्तकः प्रज्ञापक उच्यते । प्रज्ञापना चातीवाप्रायश्चित्तदान इति स्वपदं प्रज्ञापकस्य प्रायश्चित्तं तस्य प्ररूपणा कर्तव्या । तथा यावच्चतुर्दशपूर्विणः तावद्दशानामपि प्रायश्चित्तानामनुषजना अष्टानामन्तिमविकल्पानां यावत् दुःप्रसभ आचार्यस्तावदनुषंजना यदप्युच्यते ददतः कुर्वाणा वा

कोऽपि न दृश्यते केवलीति तदप्युक्तं यत आह- अस्थिरंति संति तेपि केचन न दृश्यंते उपायेन वहनात्। अत्र च विनेति दृष्टान्तो धनिकेन वक्तव्यः। तथा तीर्थं च चारित्रसहितमनुवर्तते यदप्युक्तं निर्यामको नास्तीति तदप्ययुक्तं यत आह- निज्जवएंति निर्यापकोऽस्ति। एष- द्वारगाथासंक्षेपार्थः। साम्प्रतमेनामेव विवरीषुः सपय परूवगेत्यस्य व्याख्यानमाह--

भा. [४१७२] पन्नवगस्स उ सपयं पच्छित्तं चोयगस्स तमनिट्ठं।
तं संपयं पि वज्जइ जहा तहा मे निसामेहि॥

वृ. प्रज्ञापकस्य स्वपदं प्रायश्चित्तमेतत् प्रागेव भावितं। तच्चोटकस्यानिष्टं नास्तीति मा रूढं तथा युक्तं यतः साम्प्रतमपि तद्विद्यते यथावद्विद्यते तथा कथ्यमानं निशामय

भा. [४१७३] पासाय सउ निम्मं लिहाविहं चित्तकारगहिं जहा।
लीलाविहूणं नवरं आगारो होइ सा चेव॥

वृ. चक्रवर्तिनो वर्धकिरत्नेन प्रासादो निर्मापितस्तमन्ये राजानो दृष्ट्वा आत्मीयन् वर्धकीना- दिशन्ति यथा चक्रवर्तिनः प्रासाद ईदृशान् अस्माकं प्रासादान् कुरुत ते च ब्रुवते देव स तादृशः प्रासादोऽस्माभिन दृष्टस्ततः कप्यालेख्य दर्शयन्तु येन तं दृष्ट्वा तदनुरूपान् प्रासादान्निर्मापया- मस्ततस्तैः राजभिश्चक्रवर्तिनगरे प्रविष्टैः स्वकीयैश्चित्रकारैः प्रासादस्य निर्मापणां फलकेषु लिखा- पीतं निजनिजप्रधानवर्धकीनां समर्पितं तैरपि तदनुरूपाः प्रासादा निर्मापिताः परं यादृशी लीला चक्रवर्ती प्रासादस्य न तादृशी तेषां तथा चाह तेषां प्राकृतवर्धकिनिष्पादितानां प्रासादानां निर्मापणं, नवरं लीलाविहीनं जातमाकारः, पुनर्भवति स एव यादृशश्चक्रवर्तिप्रासादस्स्यय एतदेव किंचिद्भावयति।

भा. [४१७४] भुंजइ चक्की भोए पासए सिप्पि रयणनिम्मविए।
किं च न कारेइ तहा पासए पगय जनोवि॥

वृ. चक्री चक्रवर्ती शिल्पिरत्ननिर्मापिते वर्धकिरत्ननिष्पादिते प्रासादे स्थितः सन् भोगान् भुंक्ते, तं च तथा दृष्ट्वा किं प्राकृतजनोऽपी प्राकृतराजलोकोऽपि तथा प्रासादान् न कारयति कारयत्येवेति भावः, परं न तादृशस्तेषां रूपविशेषः ततः किमित्याह-

भा. [४१७५] जह रूवादिविसेसा परिहीना होंति पागयजनस्स।
न च तेन होंति गेहा एमेव इमंपि पासामो॥

वृ. यथा प्राकृतजनस्य प्राकृतवर्धकिलोस्य तथारूपः सम्यक् परिज्ञानाभावतो रूपादिविशेषाः कर्तव्यतया परिहीनाः प्रासादानां भवन्ति, न च ते न भवन्ति गेहाः प्रासादा एवमिदमपि प्रायश्चित्तं पश्यामः। एतदेव भावयति-

भा. [४१७६] एमेवय पारोक्खी तयानुरूवं तु सो वि ववहरति।
किं पुण ववहरियव्वं पायछित्तं इमं दसहा॥

वृ. एवमेव वर्धिकी दृष्टान्तगतेन प्रकारेण तदनुरूपं प्रत्यक्षागमव्यवहारानुरूपं परोक्षी परोक्ष- ज्ञानी व्यवहारति किं पुनर्व्यवहर्तव्यसूच्यते इदं वक्ष्यमाणं दशधा दशप्रकारं प्रायश्चित्तं। तदेवाह-

भा. [४१७७] आलोयण पडिक्कमणे मीस विवगे तहा वि उस्सग्गो।
तवच्छेयमूल अनवट्ठिया य पारंचिए चेव॥

वृ. आलोचनं प्रायश्चित्तं प्रतिक्रमणं मिथ्यादुष्कृतप्रदानलक्षणं मिश्रमालोचनाप्रतिक्रमणात्मकं विवेकः परिष्ठापनं व्युत्सर्गः तपश्चतुर्थादिषण्मासपर्यन्तं । च्छेदप्रव्रज्यापर्यायस्य दिनैर्मासैर्वा परिहानिः । मूलं पुनर्व्रतारोपणं । अनवस्थाप्यं पाराश्चितं च अमीषां च दशानां स्वरूपं प्रपञ्चतः पीठिकायामुक्तं कल्पाध्ययने वा । ततस्तस्मादवधार्यं तदेवं सपयपरूवणेति गतमधुना अनुसज्जणा य दस चोद्दस अट्ठदुप्पसेह इत्यस्य व्याख्यानमाह-

भा. [४१७८] दस जा अनुसज्जंती चोद्दसपुव्वीए पढमसंघयणं ।
तेण परेण दुविहं जातित्थं ताव बोधव्वं ॥

वृ. यावत्प्रथमं संहननं चतुर्दशपूर्वी च तावद्दशप्रायश्चित्तानि अनुषजन्तिस्य । एतौ च प्रथमसंहननचतुर्दशपूर्विणौ समकं व्यवच्छिन्नौ तयोश्च व्यवच्छिन्नयोरनवस्थाप्यं पाराञ्चितं च व्यवच्छिन्नं । ततः परेणानवस्थाप्यपाराञ्चितव्यवच्छेदादर्वाक् अष्टविधप्रायश्चित्तं तावदनुपजतु अनुवर्तमानं बोद्धव्यम् । यावतीर्थं तीर्थव्यवच्छेदकाले च दुःप्रसभो नाम सूरिर्भविष्यति तस्मिन् कालगते तीर्थं चारित्रं च व्यवच्छेदयति । यदप्युक्तं देंता वि न दीसन्ति इत्यादि तत्राह-

भा. [४१७९] दोसु उ वोच्छिन्नेसु अट्ठविहं देंतया करेंतु य ।
न वि केई दीसंति वयमाणे भारिया चउरो ॥

वृ. द्वयोरनवस्थाप्यपाराञ्चितयोरथवा प्रथमं संहननचतुर्दशपूर्विणो व्यवच्छिन्नयोरष्टविधं प्रायश्चित्तं ददतः कुर्वतौ वा केचित् न दृश्यन्ते इति वदति परस्मिन् प्रायश्चित्तं चत्वारो भारिता गुरुमासाः ।

भा. [४१८०] दोसु वि वोच्छिन्नेसु अट्ठविहं देंतया करेंता य ।
पच्चक्खं दीसंते जहा तहा मे निसामेहि ॥

वृ. द्वयोरन्तिमयोः प्रायश्चित्तोः प्रथमसंहननचतुर्दशपूर्विणोर्वा व्यवच्छिन्नयोरष्टविधं प्रायश्चित्तं ददतः कुर्वतश्च प्रत्यक्षं दृश्यन्ते यथा तथा मम कथयतो निशामय-

भा. [४१८१] पंचेव य निग्गंथा खलु पुलाग बकुसा कुसील निग्गंथा ।
तह य सिणाया तेसिं पच्छित्त जहक्कमं वोच्छं ॥

वृ. पंचैव खलु निर्ग्रन्था भवन्ति तद्यथा-पुलाको बकुशः कुशीलः निर्ग्रन्थः स्नातकश्च । एतेषां च स्वरूपं व्याख्या प्रज्ञप्तेरवसेयं । एतेषां प्रायश्चित्तं यथाक्रमं वक्ष्ये प्रतिज्ञां पूरयति-

भा. [४१८२] आलोयण पडिक्कमणे मीसविवेगे तहेव विउस्सग्गे ।
एए छ पच्छित्ता पुलागनियंठुस्स बोधव्वा ॥

वृ. आलोचना २ प्रतिक्रमणं २ मिश्रं ३ विवेकः ४ तपः ५ व्युत्सर्ग ६ एतानि षट् प्रायश्चित्तानि पुलाकनिर्ग्रन्थस्य बोधव्यानि ।

भा. [४१८३] बउसपडिसेवगाणं पायच्छित्ता हवंति सव्वेवि ।
थेराण भवे कप्पे जिनकप्पे अट्ठहा होंति ॥

वृ. सेवकयोर्बकुशस्य प्रतिसेवनाकुशीलस्य च सर्वाण्यपि प्रायश्चित्तानि भवन्ति । तौ च बकुशप्रतिसेवनाकुशीलौ स्थविराणां कल्पभवतो जिनकल्प उपलक्षणमेतत् । यथालन्दकल्पे च तयोः प्रायश्चित्तमष्टधा भवति अनवस्थाप्यपाराञ्चितयोरभावात् ।

भा. [४१८४] आलोयणा विवेगो य नियंठस्स दुवे भवे।
विवेगो य सिणायस्स एमेया पडिवत्तितो॥

वृ. आलोचनाप्रायश्चित्तं विवेकप्रायश्चित्तमित्येते द्वे प्रायश्चित्ते निर्ग्रन्थस्य भवतः। स्नातकस्य केवल एको विवेकः एवमेताः पुलाकादिषु प्रतिपत्तयः।

भा. [४१८५] पंचेव संजया खलु नायसुणए कहिया जिनवरेणं।
तेसिं पायच्छित्तं अहक्कमं कित्तइस्सामि॥

वृ. ज्ञातसुतेन जिनवरेण वर्धमानस्वामिना पञ्चैव खलु संयताः कथितास्तेषां यथाक्रमं प्रायश्चित्तं कीर्तयिष्यामि। तदेव कीर्तयति-

भा. [४१८६] सामाइसंजयाणं पायच्छित्ता च्छेदमूलरहियट्ठा।
थेराण जिणाणं पुण तवमंतं छव्विहं होइ॥

वृ. सामायिकसंयतानां स्थविराणां स्थविरकल्पिकानां च्छेदमूलरहितानि शेषाण्यष्टौ प्रायश्चित्तानि भवन्ति, जिनानां जिनकल्पिकानां पुनः सामायिकसंयतानां तपः पर्यन्तं षड्विधं प्रायश्चित्तं भवति॥

भा. [४१८७] छेदोवट्ठावणिए पायच्छित्ता हवंति सव्वेवि।
थेराण जिणाण पुण मूलत अट्ठहा होइ॥

वृ. छेदोपस्थापनीये संयमे वर्त्तमानानां स्थविराणां सर्वाण्यपि प्रायश्चित्तानि भवंति, जिन-कल्पिकानां पुनर्मूलपर्यन्तमष्टधा भवति,

भा. [४१८८] परिहारविसुद्धीए मूलं ता अट्ठाति पच्छिता।
थेराणं जिणाणं पुण छव्विहं छेयादिवज्जं वा॥

वृ. परिहारविशुद्धके संयमे वर्तमानानां स्थविराणां मूलान्तान्यष्टौ प्रायश्चित्तानि भवन्ति, जिनानां पुनः च्छेदादिवर्ज्यं षड्विधं।

भा. [४१८९] आलोयणा विवेगो य तइयं तु न विज्जती।
सुहुमे य संपराए अहक्खाए तहेव य॥

वृ. सूक्ष्मसंपराये यथाख्याते च संयमे वर्त्तमानानामालोचना विवेक इत्येवं रूपे द्वे प्रायश्चित्ते भवतस्तृतीयं तु न विद्यते, ततः प्रस्तुते किमायातमिति चेदत आह-

भा. [४१९०] बउसपडिसेवया खलु इत्तरिच्छेया य संजया दोन्नि।
जातित्थणुसंजती अत्थि हु तेणं तु पच्छित्तं॥

वृ. निर्ग्रन्थचिन्तायां बकुशः प्रतिसेवकः प्रतिसेवनाकुशील इत्येतौ द्वौ निर्ग्रन्थौ संयतचिन्तायां इत्वरीत्वरसामायिकवान् च्छेदं च्छेदोपस्थाप्यश्चेति द्वौ संयतौ यावत्तीर्थं तावदनुषजतोऽनुवर्त्तेते तेन ज्ञायते। अस्ति सम्प्रत्यपि प्रायश्चित्तं, गतमस्तीति द्वारमधुना न दीसइ धणिएण विनेति व्याख्यानार्थमाह-

भा. [४१९१] जइ अत्थि न दीसंति केइ करेंति तत्थ वणिज्ज दिट्ठंतो।
संतमसंते विहिणा मोयंता दोवि मुच्चंति॥

वृ. चोदकः प्राह- यद्यस्ति प्रायश्चित्तं ततः कस्मात्केचित् कुर्वन्तो न दृश्यन्ते। सूरिराह-

उपायेन कुर्वन्ति ततो न दृश्यन्ते तथा चात्र धनिकेन दृष्टान्तो धारके सत्यसति च विभवे तौ च धारकौ द्वावपि सद्विभवसाद्विभवौ विधिना मोच्यमानौ ऋणान्मुच्येते। एतदेव भावयति-

भा. [४११२] संभवविभवो उ जाहे मग्गितो ताहे देति त सव्वं।
जो पुण असंतविभवो तत्थ विसेसो इमो होइ॥

वृ. धनिकस्य द्वौ धारकौ संभवतस्तद्यथा-साद्विभवोऽसद्विभवश्च। तत्र यः सद्विभवः सदैव याच्यते तत्सर्वं दातव्यं ददाति। यः पुनरसद्विभवस्तत्रायं वक्ष्यमाणो विशेषो भवति। तमेवाह-

भा. [४११३] निरवेक्खो तिन्नि चयती अप्पाण धनागमं च धारणगं।
सावेक्खो पुण रक्खइ अप्पाणधनं च धारणगं॥

वृ. धनिको द्विधा-सापेक्षो निरपेक्षश्च। तत्र सापेक्षो नाम यो धारकादसद्विभवात् धनमुपायेन गृह्णाति, निरपेक्षः कर्कशग्रहेण धनस्य गृहीता तत्र निरपेक्षस्त्रीण्यि त्यजति, तद्यथा-आत्मानं धनागमं धारकं च। सापेक्षः पुनस्त्रीण्यपि रक्षयति। आत्मानं धनं धारणकं च कथमित्याह-

भा. [४११४] जो उ असंते विभवे पाए घेत्तूण पडइ पाडेणं।
सो अप्पाण धणंपि य धारणगं चेव नासेति॥

वृ. यो धनिको निरपेक्षोऽसद्विभवे असद्विभवस्य पदौ गृहीत्वा आत्मीयपादेन सह बध्वा पातेन पतित स आत्मानं धारणकं च नाशयति ततः स विलश्यमानो धनिकं जीवितादृपरोप्य नश्येत्। यदि वात्मानं विनाशयेत् यद्वा उभयमपि ततस्त्रयस्यापि विनाशः।

भा. [४११५] जो पुण सहती कालं सो अत्थं लभते रक्खई तं च।
न किलस्सइ सयंपी एव उवातो उ सव्वत्थ॥

वृ. यः पुनर्धनिको धारणकमसद्विभवं ज्ञात्वा उपायेनास्माद्धनमुपादेयमिति विचिन्त्य कालं सहते वक्ष्यमाणप्रकारेण कालं विलंबयति सोऽर्थं तं च धारणकं रक्षति, न च स्वयमपि विलश्यति। एवमुपायः पुरुषेण सर्वत्र कर्तव्यः। अथ कथं कालं सहते इत्याह-

भा. [४११६] जो उ धारेज्ज वड्ढंतं असतं विभवा सयं।
कुणमाणो उ कमंतु निव्विसे करिसावणं॥

भा. [४११७] अणमप्पेण कालेणं सो तगं तु विमोयए।
दिट्ठंते सो भणितो अत्थोवणउ इमो तस्स॥

वृ. यो धारणको रूपकशतं दातव्यं धनिकानुमत्या प्रतिमासं वा काकिनी वृद्ध्या वर्धमानं धारयति। स्वयं वासद्विभवो धनिकस्य गृहे कर्म कुर्वन् कार्षापणं निवेशयति धनिकस्य प्रवेशयति सोऽल्पेन कालेन तत् ऋणं मोचयति। एप दृष्टान्तोऽयमर्थोपनयस्तस्य।

भा. [४११८] संतविभवो वि तुल्ला धिसंघयाण हि जे उ संपन्ना।
ते आवण्णा सव्वं वहंति निरनुग्गहं धीरा॥

वृ. ये धृतिसंहननाभ्यां सम्पन्ना युक्ताः सद्विभवैस्तुल्यास्ते धीराः सर्वमापन्नप्रायश्चित्तं निरनुग्रहमनुग्रहरहितं वहन्ति।

भा. [४११९] संघयण धिती हीना असंतविभवेहिं होंति तुल्ला उ।

निरवेक्खो जइ तेसिं देति ततो ते विनस्संति ॥

वृ. ये पुनर्धृतिसंहननाभ्यां हीनास्ते असद्भिर्भवैस्तुल्यास्तेषां यदि निरपेक्षः सन् यन्निरवशेषं प्रायश्चित्तं ददाति ततस्ते विनश्यंति। तथाहि तत्प्रायश्चित्तं निरवशेषं वोढुमशक्नुवन्तस्तपसा कृशीकृता जीवितादपगच्छेयुः।

भा. [४२००] ते तेन परिच्चत्ता लिंगविवेगं तु काउ वच्चंति।
तित्थुदो अप्पा एगाणि य तेण चत्तो य ॥

वृ. यदि वा ते प्रायश्चित्तभग्ना लिङ्गविवेकं कृत्वा व्रजन्ति ततस्तेन निरवशेषप्रायश्चित्तदात्रा परित्यक्ता यथैवमेके एवमन्येऽप्येवमपरेपि ततः सर्वसाधुव्यपगमतस्तीर्थस्योच्छेदस्तथा तेनाचार्येण निरवशेपंअ प्रायश्चित्तं साधूनां ददता प्रायश्चित्तभग्नभयात् साधूनामपगमत आत्मा एकाकीकृतः एकाकितया च त्यक्तश्च शब्दात् गच्छोऽपि त्यक्तस्तथाहि साधूनामपगमे बालवृद्धग्लानादीनामुपग्रहेन कोऽपि वर्तते। ततस्तेऽपि तेन तत्त्वतः परित्यक्तास्तथा अवधाविताः सन्तो ये दीर्घकालं संसारमादि(वि)हिण्डिष्यंते सोऽपि तन्निमित्त इति तस्य महत्पापं तदेव निरपेक्षस्य दोप उक्तः। सम्प्रति सापेक्षस्य गुणमाह-

भा. [४२०१] सावेक्खो पवयणम्मी अनवत्थपसंगवारणाकुसलो।
चारित्तरक्खणत्थं आवोडित्ती पउवि सज्झे ॥

वृ. यः पुनराचार्यः प्रवचने सापेक्षोऽनवस्थाप्रसङ्गवारणाकुशलः स चारित्रस्य रक्षार्थं भवति तीर्थस्य चाव्यवच्छेदस्तथोपायेन साधयतीत्यर्थः उपायमेवाह-

भा. [४२०२] कल्लाणगमावन्ने अतरंते जहक्कमेण काउं जो।
दसकारेंति चउत्थे तद्दिगुणायंबिलतते वा ॥

भा. [४२०३] एक्कासणए पुरिमड्ढ निव्विगती चेव विगुणविगुणा उ।
पत्तेयासहुवा करेइ वा सन्निगासं तु ॥

वृ. पञ्च अभक्तार्थाः पञ्च आचाम्लानि पञ्च एकाशनकानि पञ्चपूर्वार्धानि पञ्च निर्विकृतिकानि एतत् पञ्चकल्याणं तत् जयेष्ठापन्ना यथाक्रमेण न कर्तुमशक्नुवन्तस्तान् दश चतुर्थान् कारयन्ति तथाप्यशक्नुवस्तद्विगुणाचाम्लवान् तपः कारयंति विंशतिमायामाम्लानि कारयन्तीत्यर्थः। एवमेकाशने पूर्वार्ध निर्विकृतीर्द्विगुणाः कारयन्ति। किमुक्तं भवति ? विंशत्यायामाम्ले कारणाशक्तौ अशीति पूर्वार्द्धानि कारयन्ति। तत्राप्यशक्तौ षष्ठिशतं निर्विकृतिकानां कारयन्ति। एतत् पञ्चसु कल्याणेष्वेकैकं कल्याणं प्रत्येकमव्यवच्छिद्य कर्तुमर्हस्यासमर्थस्य दातुमुक्तमथवायमन्यो विकल्पः करिति व सन्निगासं तु। सन्निकाशं सन्निभं वा कारयति। इयमत्र भावना-यत्तत्पञ्चकल्याणमापन्नस्तन्यमध्यादाद्यं द्वितीयं तृतीयं वा कल्याणकमेकतरं यथाक्रमेण वहति शेषमायाम्लादिभिः प्रदर्शयति। पुनरस्यथानुग्रहप्रकारमाह-

भा. [४२०४] चउतियदुगकल्लाणं एगकल्लाणगं च कारेती।
जं जो उत्तरति तं तस्स देंति असहुस्स भासंति ॥

वृ. यदि वा पञ्चकल्याणकमुक्तस्वरूपं यथाक्रमेण व्यवच्छित्या कर्तुमशक्नुवन्तं चतुःकल्याणकं कारयति। तदप्यशक्नुवन्तं त्रिकल्याणकं यथाप्यसमर्थतया द्विकल्याणकं कारयति,

किं बहुना यत् यः कर्तुं शक्नोति, तस्य तद्ददति नाधिकमाबाधासंभवात् अथैकमपि कल्याणं कर्तुं न शक्नोति तदा तस्यासहस्य सर्वं भाषयित्वा एकभक्तार्थं दीयते। अथवा एकमायामाम्लं यदि वा एकमेकाशनकमथवैकं पूर्वार्धमथवा निर्विकृतिकं अथ न किंचिद्ददति तदा अनवस्थाप्रसङ्गः। एतदेव स्पष्टयति-

भा. [४२०५] एवं सदयं दिज्जति जेणं सो संजमे थिरो होति।
न य सव्वहा न दिज्जति अनवत्थपसंगदोसातो॥

वृ. एवममुना प्रकारेण सानुकम्पं दीयते प्रायश्चित्तं येन स संयमे स्थिरो भवति न च सर्वथा न दीयते, अनवस्थाप्रसङ्ग दोषात्। अत्र दृष्टान्तो बालकतिलस्तेनकद्वयेन। एको कप्पट्ठतो अंगोहलिं काऊण रमंतो तिल्लरासिम्मि निम्मज्जितो बालतिलकाऊण न केइ वारितो तिला शरीरे लग्गा ततो सो सतिलो धरमागतो जननीए तिला दिट्ठा पक्खोडिया गहिया य ततो तिललोभेण पुणो अंगोहलेऊण दारगं पेसेइ। ततो कालेण तिले वि तेणावेइ। ततो सो पसंगदोसेण तेणो जातो रायपुरिसेहिं गहितो मारितो माउ दोसेण बालो वि एस तेणो जातो ति माऊथणच्छेया इमवराहं पाविया बितितो कप्पट्ठगो तहेव अंहोहलिं काऊण रमंतो तिलरासिंभि निमज्जितो सतिलो घरमागतो माउए वारितो मा पुणो एवं कुज्जा। तिला य पक्खोडेऊण तिलरासिंभि पक्खित्ता सो कालंतरेण जीवियभोगाण अ भोगी जातो नेव जननी थणच्छेयादियमवराहं पत्ता

भा. [४२०६] दिट्ठंतो तेन एत्थं पसंगदोसेन जह वहं पत्तो।
पावंति अनेगाइं मरणाइं अवारियपसंगा॥

वृ. अनवस्थाप्रसङ्गदोषे दृष्टान्तं स्तेनकेन बालकेन तिलापहारिणा यथा प्रसङ्गदोषतो वधं प्राप्तस्तथा साधवोऽप्यनिवारितप्रसङ्गा अनन्तानि मरणानि प्राप्नुवन्ति।

भा. [४२०७] निब्भत्थणाए बितियाए वारितो जीवियाणं आभागी।
नेव य थणच्छेयादी पत्ता जननी य अवराहं॥

भा. [४२०८] इय अनिवारिय दोसा संसारे दुखसागरमुवेंती।
विनियत्तपसंगा खलु करेंति संसारवोच्छेयं॥

वृ. द्वितीयया बालं तिलान् शरीरे लग्नानादाय समागतं निभर्त्सनया वारितस्ततः स जीवितानां जीवितसुखानामाभागी जातो नैव च जननी स्तनच्छेदादिकमपराधं प्राप्ता इति एवममुना दृष्टान्तद्वयगतेन प्रकारेणानिवारिता दोषाः संसारे दुःखसागरमुपयन्ति।

भा. [४२०९] एवं धरती सोही देंती करेंता वि एवं दीसंति।
जंपि य दंसणनाणे हि जा तित्थंति तं सुणसु॥

वृ. एवममुना प्रकारेण धरते विद्यते शोधिः तदा ददतः कुर्वन्तश्च शोधिमेवमुक्तप्रकारेण दृश्यन्ते। यदपि चोक्तं दर्शनज्ञानाभ्यां तीर्थं यातीति तदप्युक्तं यथा भवति तथा शृणुत युक्ततामेव कथयति-

भा. [४२१०] एवं तु भणंतेणं सेणियमादी वित्थाविया समणा।
समणस्स य जुत्तस्स य नत्थी नरएसु उववातो॥

वृ. यदि नाम ज्ञानदर्शनाभ्यां तीर्थं तर्हि प्रवचनं तच्च श्रमणेषु व्यवस्थितं तत एवं भणता

त्वया श्रेणिकादयोऽपि श्रमणा व्यवस्थापितास्तेषामपि ज्ञानदर्शनभावान्न चैतदुपपन्नं यत् श्रमणस्य श्रमणगुणैर्युक्तस्य नास्ति नरकेषूपपातः। अथ च श्रेणिकादीनां संभवात्।

भा. [४२११] जंपि जहु एक्कवीसं वाससहस्साणि होहिंति तित्थं।
ते मिच्छासिद्धो वि सव्वगतीसुं व होज्जाहि ॥

वृ. यदपि सूत्रे च भणितं एकविंशतिवर्षसहस्राणि तीर्थमनुवर्तमानं भविष्यति इति तदपि तन्मतेन मिथ्या प्राप्नोति। षट्स्वपि समासु ज्ञानदर्शनभावतीश्वरकालमपि तीर्थानुषंजनप्रसक्ते यथा सर्वास्वपि च गतिषु सिद्धिरप्येवमनिवारितप्रसरा भवेत् सम्यग्दर्शनज्ञानयुक्तानां चारित्र-रहितानां सर्वगतिष्वपि जीवानां भावात्। ये चानुत्तरोपपातिनो देवास्ते नियमस्तद्भव-सिद्धि-गामिनो भवेयुः तेषामनुत्तरज्ञानदर्शनोपेतत्वात्। न चैतदिष्टं तस्मादिदमागतं यावच्चारित्रं

भा. [४२१२] पायच्छित्ते असंतंमि चरित्तंपि न वट्टती।
चरितंमिअसंतंमि तित्थे नो सचरित्तया ॥

वृ. असति अविद्यधाने प्रायश्चित्ते चारित्रं न तिष्ठति, प्रायश्चित्तमन्तरेण चारित्रस्य शुद्धेरभावात् चारित्रे चासति तीर्थस्य न चारित्रता।

भा. [४२१३] अचरित्तयाए तित्थस्स निव्वाणंमि न गच्छइ।
निव्वाणंमि असंतंमि सव्वा दिक्खा निरत्थया ॥

वृ. तीर्थस्याचारित्रतायां साधुर्निर्वाणं न गच्छति, असति च निर्वाणे सर्वा दीक्षा निरर्थका--

भा. [४२१४] न विना तित्थं नियंठेहि नियंठा वा अतित्थगा।
छक्कायसंजमो जाव ताव अनुसज्जणा दोण्हं ॥

वृ. निग्रन्थैर्विना तीर्थं न भवति, तेनापि निर्ग्रन्था अतीर्थिकास्तीर्थरहिता भवन्ति परस्परव्यव-च्छिन्नतया एकस्यापरस्य भावात् निर्ग्रन्थग्रहणं संयतानामुपलक्षणं तत एतदपि द्रष्टव्यं। संयतैर्विना न तीर्थं नापि तीर्थमन्तरेण संयता निर्ग्रन्थाः संयताश्च प्रथमसंहननचतुर्दशपूर्वधरव्यवच्छेदेऽपि विद्यन्ते। यतो यावत् षट्कायसंयमस्तावत् द्वयानामनुषंजनानुवर्तमाना समास्ति षट्कायसंयमश्च प्रत्यक्षतोऽद्यापि लभ्यते ततः सन्ति निर्ग्रन्थाः सन्ति संयता इति प्रतिपत्तव्यं, तत्सत्वप्रतिपत्तौ च तीर्थं सचारित्रमित्यपि प्रत्येकं भव्यं चारित्रे सति प्रायश्चित्तमिति, अन्यच्च,

भा. [४२१५] सव्वण्णुहिं परूविय छक्कायमहव्वया य समितीतो।
सव्वेय य पन्नवणा संपति काले वि साहूणं ॥

भा. [४२१६] ततो वच्चति तित्थं दंसणनाणेहिं न य सिद्धं तु।
निज्जवगा वोच्छिन्ना जंपि य भणियं तु तं न तहा ॥

वृ. पूर्वसाधूनां सर्वज्ञैश्चारित्रस्य प्रतिपत्तये रक्षणाय च षट्कायानां महाव्रतानि समितयश्च प्ररूपिताः। सैव च प्रज्ञापना सम्यगाराध्यतथा सम्प्रति कालेऽपि साधूनामस्ति, तत उपसम्पन्नं सम्प्रतयपि चारित्रमस्ति। एवं च सिद्धं न तीर्थं ज्ञानदर्शनाभ्यां व्रजति, किन्तु ज्ञानदर्शनचारित्रै-रिति:, यदप्युक्तं निर्यापका व्यवच्छिन्ना इति तदपि न तथा कथमिति चेदतआह–

भा. [४२१७] सुण जह निज्जवगत्थीहिं दीसंति जहा य निज्जविज्जंता।
इह दुविहा निज्जवगा अत्ताण परे य बोधव्वा ॥

वृ. श्रृणु यथा निर्यापकैर्निर्याप्यमाना दृश्यंते निर्यापकैर्निर्याप्यमाना इह द्विविधा निर्यापकास्तद्यथा-आत्मनः परस्य च उभयानप्याह-

भा. [४२१८] पातोवगमे इंगिनि दुविहा खलु होंति आयनिज्जवगा।
निज्जवगा उ परेण उ भत्तपरिन्ना य बोधव्वा ॥

वृ. आत्मनिर्यापकाः खलु द्विविधा भवन्ति तद्यथा-पादपोपगमे इंगिनीमरणे च परेण पुनर्निर्यापना भक्तपरिज्ञायां बोद्धव्या।

भा. [४२१९] पाउवगमइंगिनि दोन्नि विचिट्ठं तु भावमरणाइं।
भत्तपरिण्णाए विहिं वुच्छामि अहानुपुव्वीए ॥

वृ. पादपस्योपगमो यस्य तत् पादपोपगमं इङ्गिनीमरणं च द्वे अपि तावन्मरणे तिष्ठतः पश्चात् वक्ष्यमाणत्वात् सम्प्रति भक्तपरिज्ञायाविधिमानुपूर्व्या वक्ष्यामि। प्रतिज्ञातमेव निर्वाहयति-

भा. [४२२०] पव्वज्जादीकाउं नेयव्वं ताव जा आवोच्छित्ती।
पंच तुलेउणप्पा सा भत्तपरिण्णं परिणतो उ ॥

वृ. प्रव्रज्यामादिं कृत्वा तावन्नेतव्यं यावदव्यवच्छित्ति किमुक्तं भवति ? प्रथमतः प्रव्रज्यां तदनन्तरं ग्रहणासेवनरूपां शिक्षां, ततः परं पञ्च-हान्नतानि तागन्तरमर्थग्रहणं तदोऽनियतो वासस्ततः परिपूर्णां गच्छस्य निष्पत्तिं कृत्वा तदनन्तरं तवेण सत्तेणसुत्तेण बलेण य। इत्येवं रूपाभिः पञ्चभिस्तुलनाभिरात्मानं तोलयित्वा भक्तपरिज्ञां प्रति परिणतो भवति।

भा. [४२२१] सपरक्कमे य अपरकम्मे य वाधाए आनुपुव्वीए।
सुत्तत्थजाणएण समाहिमरणं तु कायव्वं ॥

वृ. भक्तपरिज्ञारूपं नाममरणं द्विधा सपराक्रममपराक्रमं च। तत्र सपराक्रमं द्विविधं व्याघातिमं निर्व्याघातं च। तत्र सपराक्रमे एकैकस्मिन् व्याघाते कर्मणि धत्र प्रत्ययानयनात् व्याघातिमे चशब्दान्निर्व्याघाते च समुपस्थिते सूत्रार्थज्ञापकेन समाधिमरणं कर्तव्यं। एतदेव व्याचष्टे-

भा. [४२२२] भिक्खवियारसमत्थो जो अन्नगणं च गंतु वाएइ।
एस सपरक्कमो खलु तव्विवरीतो भवे इयरो ॥

वृ. यः स्वस्य परस्य च निमित्तं भिक्षायां विचारे च गन्तुं समर्थो यदि वान्यगणं गत्वा वाचयति सभक्तप्रत्याख्यानं प्रतिपित्सुः पराक्रमस्तद्विपरीतो भिक्षादावसमर्थो भवति इतरोऽपराक्रमस्तद्गतं मरणमपि यथाक्रमं सपराक्रममपराक्रमं च।

भा. [४२२३] एक्केक्कं तु दुविहं निव्वाधायं तहेव वाघायं।
वाघातो वि य दुविहो कालतियरो इयरो वा ॥

वृ. तत्सपराक्रमगपराक्रमं च मरणमेकैकं द्विविधं निर्व्याघातं व्याघातं च। तत्र व्याघातो नाम यथा अच्छभल्लेन कालादौ ? (ओ?) द्वौ च खादितौ, अथवा रोगे व्याघातः ततो मरणं प्रतिपद्यते। निर्व्याघातं यथोक्तव्याघातरहितं। व्याघातोऽपि च द्विविधः कालातिचार इतरश्च। कालमतिचरति अतिक्रामतीति कालातिचारः कालसहो। यतश्चिरेण मरणं यथा पूतिगोनशेन दष्टस्य तं दष्टकालमतीत्यविंशति रात्रिंदिवादिषु मरणं, इतरः कालानतिचारो यत्तद्दिवसमेव मर्तुकामो भक्तं प्रत्याचष्टे इति ॥

भा. [४२२४] तं पुण अनुगंतव्वं दारेहिं इमेहिं आनुपुव्वीए।
गणनिसरणादिएहिं तेसि विभागं तु वुच्छामि ॥

वृ. तेन पुनर्निर्व्याघातिरभिर्वक्ष्यमाणैर्गणान्निः सरणादिद्वारैरानुपुर्व्या क्रमेणानुगन्तव्यं तेषां च द्वाराणां विभागं वक्ष्यामि। तमेव वस्तुकाम आह-

भा. [४२२५] गण निसरणे परगणे सिति संलेह अगीय असंविग्गो।
एगाभोगण अन्ने अनापुच्छपरिच्छ आलोए ॥

भा. [४२२६] द्वाण वसहीए सत्थे निज्जवगा दव्व दायणा चरिमे।
हानी अपरियंतनिज्जर संथारुवत्तणादीनि ॥

भा. [४२२७] सारेत्तणयकवयं निव्वाधाएण चिंधकरणं तु।
अंतो बहि वाधातो भत्तपरिन्नाए कायव्वो ॥

वृ. गणात् स्वगणान्निस्सरणा वक्तव्या परगणगमनं। तथा सितित्ति द्रव्यभावरूपानिः श्रेणिर्वक्तव्या। तथा संलेख संलेखना तथा अगीतस्य अगीतार्थस्य पार्श्वे न भक्तप्रत्याख्यातव्यं तथा असंविग्गेत्ति। असंविग्नस्यापि समीपे न प्रत्याख्यातव्यं। तथा एगत्ति एको निर्यापको न कर्तव्यः। किन्तु बहवः, परतो वा भक्तं प्रत्याख्यातुकामस्य विषये आभोगनं कर्तव्यम्। तथा अन्यो यदि भक्तं प्रत्याख्यातुमुद्यतस्तर्हि यदि निर्यापकाः पूर्यन्ते तदा स प्रतिष्यते, शेषकाले नेति, तथा आचार्येण गच्छस्यानापृच्छया स भक्तप्रत्याख्यानं न प्रतिपादयितव्यः। तथा तेन भक्तं प्रत्याख्यातुकामेन गच्छस्य गच्छेऽपि अवश्य परीक्षा कर्तव्या। तथा भक्तपरिज्ञां प्रति-पत्तुकामेन नियत आलोचना दातव्या। तथा प्रशस्ते स्थाने प्रशस्तायां वसतौ भक्तपरिज्ञा प्रति-पत्तव्याः। तथा निर्यापका गुणसम्पन्नाः समर्पणीयाः। तथा आलोचना चरमकाले तस्य भक्त--प्रत्याख्यातुकामस्य द्रव्यदर्शनं प्रधानसमस्ताहारद्रव्योपदर्शनं विधेयं। हाणित्ति भक्तं प्रत्याख्यातु-कामस्य प्रतिदिवसमाहारस्यानिर्विधेया तथा अपरिश्रान्ताः सर्वकर्माणि प्रतिचारका वर्तन्ते। निज्जरत्ति निर्जरा वक्तव्या तथा संस्तारको यादृशो भवति कृतभक्तप्रत्याख्यानस्यहाकर्तव्य-स्तादृशो वक्ष्यते। तथा तस्य कृतभक्तप्रत्याख्यानस्योद्वर्तनादीनि यथा समाधिकरणीयानि तथा प्रथमद्वितीयपरीषहाभ्यां त्याजितः स्मारयित्वा स्वं स्वरूपं (मा)नर्थत्वादिलक्षणं कवचं कवच-भूतमशनं प्रयोक्तव्यम्। तथा जीमतो मृतस्य च तस्य चिन्हकरणं विधेयं, एतं निर्व्याघाते भक्तपरिज्ञाव्याघाताभावेन प्रतिपत्तव्यं। अथान्तर्ग्रामादिर्बहिरुद्यानादिषु भक्तपरिज्ञाया व्याघातः संजातस्ततोगीतार्थानामुपायो भवति कर्तव्यः। एष द्वारगाथा। साम्प्रतमेतदेव विवरीषुराह-

भा. [४२२८] गणनिसरणंमि उ विही जो कप्पे वण्णितो समासेणं।
सो चेव निरवसेसो भत्तपरिन्नाए दसमंमि ॥

वृ. गणनिस्सरणे यो विधिः कल्पे कल्पाध्ययने सर्वविधः सप्रप्रकारो वर्णितः स एव व्यवहारो दशमे उद्देशके भक्तपरिज्ञायां भक्तज्ञानाधिकारो निरवशेषो वक्तव्यः। गणनिस्सरणं द्वारं गतमिदानीं परगणद्वारं परगणे गत्वा भक्तप्रत्याख्यानं कर्तव्यम्।

भा. [४२२९] किं कारणं चंकमणं थेराण इहं तवो किलंताणं।
अब्भुज्जयंमि मरणे कालुणियाज्झाणवाधातो ॥

वृ. किं कारणं स्वगणादपक्रमणं क्रिया सूरिराह-स्थविराणामाचार्याणां संलेखनातपोभिः क्लान्तानामिह स्वगणे अभ्युद्यते भक्तपरिज्ञा लक्षणमरणे समुपस्थितानां शिष्याणां आचार्यानुरागेण रोदनक्रन्दनादीनि कुर्युः । रोदनादिकं च तेषामाकर्ण्याश्रुपातं दृष्ट्वा तेषामुपरि कारुण्यमुपजायते । ततो व्याघातः । अन्यच्च-

भा. [४२३०] सगणे आणाहानी अप्पत्ति य होइ एवमादीयं ।
परगणगुरुकुलवासो अप्पत्ति य वज्जितो होइ ॥

वृ. यो गणधरः स्थापितस्तस्याज्ञां केचित् कुर्वन्ति तथा केषांचिदपकरणनिमित्तमप्रीति-रादिशब्दात् गणभेदो बालादीनामुचिताद्यकरणदर्शनमित्यादि परिग्रहः । तत एवं स्वगणे आज्ञाहारनिरप्रीतिरसेवनादिकं ध्यानव्याघातकारणमुपतिष्ठते । ततः, परगणे गत्वा भक्तप्रत्याख्यानं प्रति-पद्यते । यत एवं गुरुकुलवास आसेवितो भवति । किं विशिष्ट इत्याह-प्रीतिवर्जितोऽप्रीतिश्च समस्तापि परिहृता भवतीति भावः । अप्रीत्यादिकं यथा स्वगणे भवति तथा प्रदर्शयति ।

भा. [४२३१] उवगरणनिमित्तं तु वुग्गहं दिस्सवा विगणभेयं ।
बालादी थेराण व उचियाकरणंमि वाघातो ॥

वृ. उपकरणनिमित्तं साधूनामाचार्ये कृतभक्तप्रत्याख्याने व्युद्ग्रहः कलहो भवति । अथवा तं गणधरं केचिन्न मन्यन्ते ततः स्वस्वपक्षे परिग्रहो गणभेदस्तत एवमुपकरणनिमित्तं गणभेदं दृष्ट्वा उपलभ्य तथा बालादीनां बालवृद्धासहग्लानादीनां स्थविराणां चात्र विकरणे उचितकरणा-दर्शनेऽप्रीतिरुपजायते । तथा चाप्रीत्या ध्यानव्याघातः । अयं च परगणे प्रतिपन्ने गुणः ।

भा. [४२३२] सिनेहो पेलवो होइ निग्गते उभयस्स उ ।
आहच्च वावि वाघातो ना सेहादि तिउब्भमो ॥

वृ. स्वगणान्निर्गतोभयस्यापि गणस्याचार्यस्य वा स्नेहः परस्परं पेलवः प्रतनुर्भवति । अन्यच्च आहच्च-काचित् प्रथमपरीषहेनत्याजितस्य भक्तपरिज्ञां यो व्याघातेऽपि त्रिलोपः स्यात्, तस्मिन् व्याघातेन स्वगणात् शैक्षकादीनां व्युद्ग्रहो जायते आघातपरिज्ञानाभावात् । अथवा विपरिणा-मोऽपि स्यात्, तथाहि स्वगुणे स्थितं भग्नपरिज्ञं जानन्ति । ज्ञात्वा च सर्वा अपि प्रतिज्ञा एतेषा-मीदृशा एवेति विपरिणामं गत्वा संयमं लोपयन्ति । सम्प्रति सीतिद्वारमाह-

भा. [४२३३] दव्वसिती भावसिती अनुयोगधराण जेसिमुवलद्धा ।
न हु उड्ढगमनकाट्ठा हेट्ठिल्लपयं पसंसंति ।

भा. [४२३४] संजमट्ठाणेणं कंडगाणालसावित्ती विसेसाणं ।
उवरिल्लपयकमलं भावसिती केवलं जाव ॥

वृ. सितिनाम ऊर्ध्वमधो वा गच्छतः सुखोत्तरोवतारहेतुः पन्थाः । सा द्विधा-द्रव्ये भावे च । तत्र द्रव्येशितिर्निःश्रेणिः सा द्विधा ऊर्ध्वगमने च तत्र अधोगमने च तत्र ययाधस्तनात् भूमिग्रहादिष्ववतीर्यते साऽधो गमने, ययोर्ध्वपरिमाणे आरुह्यते सा ऊर्ध्वगमने, भावशीतिरपि द्विधा प्रशस्ताऽप्रशस्ता च । तत्र यैर्हेतुभिस्तेषामेव संयमस्थानानां संयमकंडकानां लेश्यापरिणामविशेषाणां वा अधस्तात् संयमस्थानेष्वपि गच्छति, सा अप्रशस्ता भावशीतिः यैः पुनर्हेतुभिस्तेषा-मेव संयमादिस्थानानामुपरितनेषूपरितनेषु विशेषेष्वध्यारोहति, सा प्रशस्तोच्चोपरितन एव क्रमेण

भावशीतिस्तावद्द्रष्टव्यं। यावत्केवलज्ञानं, तत्र येषामनुयोगधराणामाचार्याणामेवं द्रव्ये भावे च शीतिरुपलब्धा भवति, ते न हु नैव ऊर्ध्वगमने कार्ये कर्तव्येऽधस्तनपदं प्रशंसन्ति। न तासु सपदगमनायाशुभव्यवसायप्रवृत्तिमातन्वते किंतु शुभेषु व्यवसायेष्वारोहन्ति। गतं सीतिद्वारं।

भा. [४२३५] उक्कोसा य जहन्ना दुविहा संलेहणा समासेन।
छम्मासा उ जहन्ना उक्कोसा बारससमा उ ॥

वृ. संलेखना समासेन द्विविधा प्रज्ञप्तास्तद्यथा-उत्कृष्टा जघन्या चशब्दात् मध्यमा च। तत्र जघन्या षण्मासा उत्कृष्टा द्वादशसमा द्वादशवर्षा।

भा. [४२३६] चिट्ठउ जाव जहन्ना, उक्कोसं तत्थ ताव वोच्छामि।
जं संलहिऊण मुनी साहंती अत्तणो अत्थं ॥

वृ. तत्र तयोर्जघन्योत्कृष्टयोर्मध्ये जघन्यतो वेति। अनुपश्चाद्वक्ष्यमाणत्वादुत्कृष्टं तावद्वक्ष्यामि यदित्यव्ययं यथा मुनय आत्मानं संलिख्यात्मनोऽर्थं साधयन्ति तामेवाह-

भा. [४२३७] चत्तारि विचित्ताइं विगई निज्जूहियाइं चत्तारि।
एगंतरमायामे नाति विगिच्छेय विगेहे ॥

वृ. चत्वारि वर्षाणि विचित्राणि विचित्रतपांसि करोति। किमुक्तं भवति? चत्वारि वर्षाणि यावत्कदाचित् चतुर्थं कदाचित् षष्ठं कदाचिदष्टममेवं दश द्वादशादीन्यापि करोति, कृत्वा च पारणकं सर्वकामगुणितेनाहारेण भवति ततः परमन्यानि चत्वारि वर्षाण्युक्तप्रकारेण विचित्रतपांसि करोति। विकृतिनिज्जूहितानि किमुक्तं भवति विचित्रं तपः कृत्वा पारणके निर्विकृतिकं भुंक्ते। उत्कृष्टरसवर्जं च ततः परतोऽन्ये द्वे वर्षे एकान्तरमायामं करोति। एकान्तरं चतुर्थं कृत्वा आयामेन पारयति। एवमेतानि दश वर्षाणि गतानि एकादशस्य वर्षस्यादेशान् नातिविकृष्टं तपः कृत्वा आयामेन परिमितं भुंक्ते, नातिविकृष्टं नाम तपश्चतुर्थं षष्ठं वावगन्तव्यम्। ततः परमन्यान् विकृष्टं तपः कृत्वा मा शीघ्रमेव मरणं यायासमिति कृत्वा पारणके परिपूर्णश्चाण्या आयामं करोति विकृष्टं नामाष्टमादिकं साम्प्रतमेतदेव व्याचिख्यासुराह-

भा. [४२३८] संवच्छराणि चउरो होंति विचित्तं चउत्थमादीयं।
काऊण सव्वगुणियं पारेई उग्गमविसुद्धं ॥

वृ. आदिमानी चत्वारि संवत्सराणि विचित्रं तपः चतुर्थादिकं भवति। तच्च कृत्वा पारयति भुंक्ते सर्वगुणितं सर्वगुणितमाहारमुद्गमविशुद्धम्।

भा. [४२३९] पुनरवि चउरन्ने उ विचित्तकाउण विगतिवज्जं तु।
पारेइ सो महप्पा निद्धं पणियं च वज्जेइ ॥

वृ. पुनरप्यन्यानि चत्वारि वर्षाणि विचित्रं तपः कृत्वा स महात्मा विकृतिवर्जं पारयति। तत्रापि स्निग्धं प्रणीतं चोत्कृष्टरसं वर्जयति।

भा. [४२४०] अन्नातो दोन्नि समा चउत्थकाऊण पारेति।
आयामं कंज्जिएणं तु ततो अवक्कसमं इमं कुणइ ॥

वृ. अन्यद्वे समे वर्षे चतुर्थं कृत्वा आयामं पारयति। एवं दश वर्षाणि गतानि। ततः परमन्यामेकां समां वर्षमिमां वक्ष्यमाणां काञ्जिकेनायामपारणकेन करोति, कथमित्याह-

भा. [४२४१] तत्थेकं छम्मासं चउत्थ छट्ठं तु काउ पारेइ।
आयंबिलेण नियमा बिइए छम्मासिए विगिट्ठं॥

भा. [४२४२] अट्ठमदसमदुवालसकाऊणायंबिलेण पारेइ।
अन्नेकहायणं तू कोडिसहियं तु काऊण ॥

वृ. तत्र एकादशे वर्षे एकमाद्यं पण्मासं यावत् चतुर्थं षष्ठं वा कृत्वा नियमादायमोन पारयति। द्वितीये षण्मासे विकृष्टमष्टमं दशमं द्वादशं वा कृत्वा आयामाम्लेन पारयति। एवमेकादशवर्षाणि गतानि। अन्यमेकं द्वादशं हायनं कोटीसहितं कृत्वा किमित्याह-

भा. [४२४३] आयंबिल उसुणोदेण परिहावेंतो आनुपुव्वीए।
जह दीवे तेल्लवत्ती खउसमं तह सरीराउ ॥

वृ. आयामो च उष्णोदकेन पारयति। अयमत्र सम्प्रदायो-द्वादशो वर्षे कोटी सहितं प्रत्याख्यानं चतुर्थविषयं कृत्वा प्रथमं पारणकमायामेनोष्णोदकेन करोति, द्वितीयं पारणकं निर्विकृतिकेन, तृतीयं पुनरायामेन यथोक्तरूपेण चतुर्थं निर्विकृतिकेन। एवमेकान्तरितं पारणकेष्वायामं करोति। कोटीसहितं नाम प्रथमदिवसे पुनरभक्तार्थं कृत्वा पारयति। एतच्चतुर्थे कोटीसहितं प्रत्याख्यानं। एवं षष्ठाष्टमादि कोटीसहितान्यपि भावनीयानि अथवायमन्यो द्वितीयः प्रकार एकस्मिन् दिने चतुर्थं कृत्वा द्वितीये दिवसे पारयति तृतीये दिवसे पुनश्चतुर्थं करोति चतुर्थे दिवसे पारयति, एतच्चतुर्थकोटीसहितमेवं षष्ठं कृत्वा पारयति पुनः षष्ठं करोति, ततः पारयति एवमष्टमादिकोटीसहितान्यपि भावनीयानि। हावेंतो आणुपुव्वीए इति तस्मिन् द्वादशे वर्षे पारणकेषु यथाक्रममेकैकं कवलं हापयन् पारयति यावदेकं कवलं। ततः शेषेषु पारणकेषु क्रमश एकेन शिक्थेनोनमेकं कवलमाहारयति। द्वाभ्यां शिक्थाभ्यां त्रिभिः शिक्थैरेवं यावदन्ते एकसिक्थमाहारयति। कस्मादेवं करोतीति चेदत आह-यथा दीपे सममेककालं तैलवर्त्तिक्षयं भवति तथा शरीरायुषः समकं क्षयः स्यादिति हेतोः।

भा. [४२४४] पच्छित्तहायणे रूवचउरो धारे तु तेल्लयं इसा।
निसिरेज्जा खलमल्ले किं कारणगल्लधरणं तु ॥

भा. [४२४५] लुक्खता मुहजत्तं माहु खुभेज्जइ तेन धारेइ।
माहु नमोक्कारस्स अपच्चलो सो हवेज्जाहि॥

वृ. तस्मिन् पश्चिमे द्वादशे हायने येऽन्तिमाश्चत्वारो मासास्तेष्वेकैकस्मिन् पारणके एकान्तरितं तैलं गंडूषं चिरकालं धारयति। धारयित्वा खेलमल्लके सक्षारे निसृजति त्यजति। ततो वदनं प्रक्षालयति। किं कारणं गल्ले गंडूषधारणं क्रियते उच्यते-मा मुखयन्त्रं रूक्षत्वाद्वातेन क्षुभ्येतैकत्र संपिण्डीभूयते तथा च सति मा स नमस्कारस्य भणनेऽप्रत्यलोऽसमर्थो भवेदिति हेतोर्गल्ले तैलधारणं करोति।

भा. [४२४६] उक्कोसगा उ एसा संलेहा मज्झिमा जहन्ना या।
संवच्छर छम्मासा एमेव य मासपक्खेहिं॥

वृ. एषा अनन्तरोदिताः संलेखा संलेखना उत्कृष्टा भणिता। मध्यमा संलेखना संवत्सरप्रमाणा एव प्रागुक्तेन प्रकारेण द्वादशभिर्मासैः परिभावनीया-जघन्या एषा षण्मासा द्वादशभिः

पक्षेवर्षस्थाने मासान्पक्षांश्च स्थापयित्वा तपोविधि: प्रागिव निरवशेष उभयत्रापि भावनीयम्

भा. [४२४७] एत्तो एगतरेणं, संलेहणं खवेसु अप्पाणं ।
कुज्जा भत्तपरिण्णं इंगिनि पाओवगमणं वा ॥

वृ. एतेषामुत्कृष्टमध्यमजघन्यानां संलेखनानामेकतरेण संलेखनेनात्मानं क्षिपयित्वा कुर्यात् भक्तपरिज्ञामिङ्गिनीमरणं पादपो गमनं वा, गतं संलेखनाद्वारमधुना अगीतद्वारमाह-

भा. [४२४८] अग्गीयसगासंमी भत्तपरिण्णं तु जो करेज्जाहि ।
चउ गुरुगा तस्स भवे किं कारणिज्जेणिमे दोसा ॥

वृ. गीतार्थस्य समीपे भक्तप्रत्याख्यातव्यं, यस्त्वगीतस्यागीतार्थस्य सकाशे समीपं भक्तपरिज्ञा भक्तप्रत्याख्यानं करोति तस्य प्रायश्चित्तं चत्वारो गुरुका: किं कारणमुच्यते येन कारणेन इमे वक्ष्यमाणादोषास्तेन कारणेन तत्र तानेव दोषानाह-

भा. [४२४९] नासेती अग्गीतो चउरंगं सव्वलोयसारंगं ।
नट्ठंमिय चउरंगे न हू सुलभं होइ चउरंगं ॥

वृ. अगीतो अगीतार्थो निर्यापकस्तस्यकृतभक्तप्रत्याख्यानस्य चतुरङ्गं चतुर्णामंगानां समाहारश्चतुरङ्गं वक्ष्यमाणं कथंभूतमित्याह--सर्वलोकसाराङ्गं अङ्गवरं प्रधानमित्यनर्थान्तरं सर्वेषामपि त्रयाणामपि लोकानां यानि अङ्गानि तेषां सारमिति विशिष्टमङ्ग प्रधानं सर्वलोकसारांगं नष्टे च चतुरङ्गे न पुन: सुलभं प्रापं भवति चतुरङ्गं, किन्तु चुल्लकादिदृष्टान्तैरतिशयेन दु:प्रापं तताऽगीतस्य समीपे भक्तं न प्रत्याख्येयम्-

भा. [४२५०] किं पुन तं चउरंगं जं नट्ठं दुल्लहं पुणो होइ ।
मानुस्सं धम्मसुती सद्धा तव संजमे विरियं ॥

वृ. किं पुनस्तच्चतुरङ्गं यन्नष्टं सत् पुनर्दुर्लभं भवति । सूरिराह-मानुष्यं मानुषत्वं धर्मश्रुति धर्मश्रवणं श्रद्धा तपसि संयमे च वीर्यमिति ।

भा. [४२५१] किह नासेति अगीतो पढमबितिएहिं अद्दितो सो उ ।
उहासे कालियाए तो निद्धम्मोत्ति छड्डेज्जा ॥

वृ. कथं केन प्रकारेण सोऽगीतार्थस्तस्य चतुरङ्गं नाशयति । सूरिराह प्रथमद्वितीयाभ्यां क्षुत्पिपासालक्षणाभ्यां परीषहाभ्यामर्दित: पीडित: स भक्तप्रत्याख्याता कदाचित् कालिकायां रात्रौ भक्तं च पानं च अवभाषेत, याचेत । तत: सोऽगीतार्थो न कल्पते इति कृत्वा न दद्यात्, चिन्तयति च भक्तं प्रत्याख्याय पुनर्याचते भक्तं तत्रापि रात्रौ एष निर्धर्मा असंयताभूत इति कृत्वा तं त्यजेत् त्यक्त्वा गच्छेत् ॥

भा. [४२५२] अंतो वा बाहिं वा दिवा य रातो य सो विचित्तो उ ।
अट्ट दुहट्टवसट्टो पडिगमनादीनि कुज्जाहि ॥

वृ. अन्तरुपाश्रयस्य यदि वा बहिरुपाश्रयस्य दिवा वा रात्रौ वा तेनागीतार्थेन विविक्त: सन् आर्त: दु:खार्त: वशार्त: स: प्रतिगमनादीनि प्रतिगमनं नाम प्रतिभञ्जनं व्रतमोक्षमित्यर्थ: ।
आदिशब्दात् मृत्वा कुगतिविनिपातान्वा कुर्यात्तांश्च कुगतिविनिपातानेवाह--

भा. [४२५३] मरिऊणट्टज्झाणो गच्छे तिरिएसु वणयरेसुं वा ।

संभरिऊण य रुट्ठो पडिनीयत्तं करेज्जाहि ॥

वृ. स आर्तध्यानो मृत्वा तिर्यक्षु वा तिर्यग् योनिषु गच्छेत् यदि वा वनचरेषु वानमन्तरेषु मध्ये स समुत्पद्येत्तत्र जातिं स्मृत्वा त्यक्तोऽहं तस्यामवस्थायामिति रुष्टः सन् बहुविधं प्रत्यनीकत्वं कुर्यात्।

भा. [४२५४] अहवा विसव्वरीए मोयं दिज्जाहि जायमाणस्स।
सो दंडियादि हुज्जा रुट्ठो साहे निवादीणं ॥

भा. [४२५५] कुज्जा कुलादि पत्थारं सो वा रुट्ठो उ गच्छे।
मिच्छत्तं तप्पयं च दीहं भमेज्ज संसारकंतारं ॥

वृ. अथवा सर्वपर्यायनीयं याचमानस्य रात्रौ पानीयं नास्तीति मोकं प्रश्रवणं सोऽगीतार्थो दद्यात्। स च दण्डिकादीनां सम्बन्धी निष्क्रान्तः स्यात् ततः स धातुवैषम्येन रुष्टः सन् अवधावेत्। अवधाव्य च नृपादीनां कथयेत्ततः प्रवचनस्य महानुड्डाहः। यदि वा स राजादिस्तत्पक्षपतितः सोऽपि वा स्वयं रुष्टकुलादिप्रस्तारं कुलस्य गणस्य वा विनाशं कुर्यात्। यद्यपि च एवमादयो दोषा न भवन्ति। तथा प्रथमद्वितीयपरीषहाभ्यां परितप्यमानोऽसमाधिना मृतो दुष्कर(रा)मपि कृत्वान्तक्रियां कल्पविमानोपपत्तिं वा न प्राप्नुयात्। किन्तु वानमन्तरादिषूपपद्येत यदि वा कषायपीडितो दृष्टिविषः सर्पो जायेत। गच्छे मिच्छत्तमिति इह भवे वा मिथ्यात्वं गच्छेत् तत्प्रत्ययं च मिथ्यात्वप्रत्ययं च दीर्घसंसारकान्तारं भ्रमेत्।

भा. [४२५६] सो उ विविंचिय दिट्ठो संविग्गेहिं तु अन्नसाहूहिं।
आसासियमनुसिट्ठो भरणो वि पडिवन्नं ॥

वृ. स प्रत्यख्यातभक्तो भक्तं याचमानो अगीतार्थैः साधुर्विविक्तः परित्यक्तोऽन्यैः संविग्नैगीतार्थसाधुभिर्दृष्टस्ततस्तैराश्वासित आश्वास्य च अनुशिष्टोऽतिशयेन दूरमुत्साहितस्ततो यत् अभ्युद्यतमरणं त्यक्तं तत्पुनरपि तेन प्रतिपन्नं ततः सुगति भागी जातः।

भा. [४२५७] एए अन्ने य तहिं बहू दोसा य पच्चवाया य।
एएहिं कारणेहिंऽगीयत्थ न कप्पति परिण्णा ॥

वृ. यस्मादेतेऽनन्तरोदिता अन्ये चानुक्ता बहवो दोषाः प्रत्यवायाश्चागीतार्थस्य समीपे भक्तपरिज्ञाप्रतिपत्तौ तस्मादेतैः कारणैरगीतार्थस्य समीपे परिज्ञा भक्तपरिज्ञा न कल्पते। संविग्नगीतार्थानां च समीपे बहवो गुणास्तस्मात्तन्मार्गणा कर्तव्या। सा च द्विधा-क्षेत्रतः कालतश्च।

भा. [४२५८] पंच व छ सत्तसए अहवा एत्तो वि सातिरेगतरे।
गीयत्थपायमूलं परिमग्गेज्जा अपरितंतो ॥

वृ. पञ्च षट् सप्त वा योजनशतान्यथवा इतोऽपि सातिरेकतराणि योजनशतानि संविग्नपादमूलमपरिश्रान्तो अनिवृत्तो मृगयते। उक्ता क्षेत्रतो मार्गणा। कालत आह-

भा. [४२५९] एक्कं च दोव तिन्नि च उक्कोसं बारसेव वासाणि।
गीयत्थ पायमूलं परिमग्गेज्जा अपरितंतो ॥

वृ. एको द्वे त्रीणि वा उत्कर्षतो द्वादशवर्षाणि यावदपरिश्रान्तो अनिर्विण्णो गीतार्थपादमूलं परिमृगयते।

भा. [४२६०] गीयत्थ दुल्लभं खलु पडुच्च य काले तु मग्गणा एसा।
ते खलु गवेसमाणा खेत्ते काले य परिमाणं ॥

वृ. गीतार्थो दुर्लभो यस्मिन् काले तं गीतार्थदुर्लभं कालं प्रतीत्याश्रित्य एषानन्तरोदिता क्षेत्रतः कालतश्च मार्गणाभिहिता ते खलु गीतार्थं गवेषयन्तः क्षेत्रविषये कालविषये च परिमाण-मुत्कृष्टमेतावत् कुर्वन्ति।

भा. [४२६१] तम्हा गीयत्थेणं पवयण गहियत्थ सव्वसारेणं।
निज्जवगेण समाही कायव्वा उत्तमट्ठंमि ॥

वृ. यस्मात् क्षेत्रतः कालतश्च गीतार्थमार्गणायामेतावानादरः कृतस्तस्मात्तेन गीतार्थेन प्रवचन-गीतार्थसर्वसारेण प्रवचनस्य गृहीतोऽर्थस्य सर्वसारो येन स तथा तेन निर्यापकेण उत्तमार्थे व्यवस्थितस्य समाधिः कर्तव्या। गतमगीतार्थद्वारमसंविग्नद्वारमाह-

भा. [४२६२] असंविग्गसमीवे वी पडिवज्जंतस्स होइ गुरुगा उ।
किं कारणं तु जहिं जम्हा दोसा हवंति इमे ॥

वृ. असंविग्नसमीपेऽपि भक्तपरिज्ञां प्रतिपद्यमानस्य भवन्ति चत्वारो गुरुकाः प्रायश्चित्तं। किं कारणं यत्र यस्मादिमे वक्ष्यमाणा दोषा भवन्ति तानेवाह-

भा. [४२६३] नासेति चउरंगं सव्वलोयसारंगं।
नट्ठंमि उ चउरंगं न हु सुलभं होंति चउरंगं ॥

वृ. नाशयत्यसंविग्नश्चतुरङ्गं मानुषत्वादिरूपं सर्वलोकसाराङ्गसर्वलोकप्रधानतराङ्गेन हु नैव सुलभं प्राप्यं भवति चतुरङ्गं नाशयतीत्यत आह-

भा. [४२६४] आहाकम्मि य पानग पुप्फासीया बहु जने नायंल।
सेज्जा संथारो वि.य उवही वि य होइ अविसुद्धो ॥

वृ. असंविग्नो बहुजनस्य यथा तथा वा ज्ञातं करोति यथा एष कृतभक्तप्रत्याख्यानस्ततः स आधाकर्मिकं पानमानयति पुष्पाणि च ढौकयति। सेचनं च चन्दनादिना करोति। तथा शय्या संस्तारक उपधिश्च तेनानीतोऽविशुद्धो भवति।

भा. [४२६५] एते अन्ने य तहिं बहवे दोसा य पच्चवाया य;
एएण कारणेणं असंविग्गे न कप्पइ परिन्ना ॥

वृ. एतेऽनन्तरोदिताऽन्ये चानुक्ता बहवो दोषाः प्रत्यवायाश्च तत्र प्रत्यवायाः प्रागिवास-माभिमरणतो वानमन्तरेषूत्पादितो नृपादिकथनतो वा वेदितव्या एतेन कारणेनासंविग्नेऽसंविग्नस्य समीपे परिज्ञा न कल्पते। किन्तु संविग्नस्यान्तिके ततः क्षेत्रतः कालतश्च मार्गणामाह-

भा. [४२६६] पंचेव छ सत्तया अहवा एत्तो वि सातिरेगं।
संविग्गपायमूलं परिमग्गिज्जा अपरितंतो ॥

वृ. इयं क्षेत्रतः कालत आह-

भा. [४२६७] एक्कं व दोव तिन्नि व उक्कोसं बारसेव वासाणि।
संविग्गपायमूलं परिमग्गिज्जा अपरितंतो ॥

भा. [४२६८] संविग्ग दुल्लभं खलु कालं तु पमुच्च मग्गणा एसा।

ते खलु गवेसमाणा खेत्ते काले य अपरिमाणं ॥

वृ. यस्मादेवं क्षेत्रतः कालतश्च मार्गणायामादरः कृतः ।

भा. [४२६९] तम्हा संविग्गेणं पवयणगहियत्थ सव्वसारेणं ।
निज्जवगेण समाही, कायव्वा उत्तमट्ठंमि ॥

वृ. गाथा चतुष्टयमपि प्राग्वत् । गतं संविग्नद्वारमिदानीमेकद्वारमेको निर्यापको न कर्तव्यः । किन्तु बहवोऽन्यथा विराधनादिदोषप्रसङ्गात्तमेवोपदर्शयति,

भा. [४२७०] एक्कंमि उ निज्जवग्गे विराधना होइ कज्जहानी य ।
सो सेहा वि य चत्ता पावयणं चेव उम्माहो ॥

वृ. एकस्मिन् निर्यापके संयमविराधना आत्मविराधना च भवति, । तथा हि-कृतभक्तप्रत्याख्याननिमित्तं पानकग्रहणायाटन् यदा क्वापि न लभते, तदा माभत पश्चात् ग्लानस्यासमाधिरित्याधाकर्मिकमपि पानकं गृह्णीयादिति संयमविराधना, निरन्तरमेकस्य क्लिश्यमानस्यात्मविराधना तथा कार्यहानिश्च भवति । तथाहि मरणसमये समाध्युत्पादनाय सोपेक्षते । स च कदाचित्तत्समये पानकादिनिमित्तमन्यत्र गतो भवेत् तथा स भक्तप्रत्याख्यानस्त्यक्तः शैक्षा अपि च त्यक्ताः प्रवचनतस्त्यक्तमुड्डाहश्चोपजायते । एतद्विभावनार्थमाह-

भा. [४२७१] तस्सट्ठ गतोहासणादि अदाने सो परिच्चत्तो ।
दाउं च अदाउं वा भवंति सेहा व निद्धम्मा ॥

वृ. तस्य प्रत्याख्यानभक्तस्यार्थाय पानकादीनां मागणाय गतो निर्यापकस्तस्य समीपे शैक्षकोऽपरिणतो वा मुक्तस्तस्य समीपे उहासणेति भक्तं याचितं ते च शैक्षकादयो न कल्पते । एतस्य च भक्तं कृतप्रत्याख्यानत्वादिति न ददति दाने च सोऽसमाधिना मरणं प्राप्नुयदिति चैतदेवमेव हिंसादिप्रत्याख्यानान्यपि ततः कल्पन्ते हिंसादयोऽपीति निर्धर्माणो जायंते ।

भा. [४२७२] कूयइ अदिज्जमाणे, मारेन्ति बलत्ति पवयणं चत्तं
सेहा य पडिगया जणे अवण्णं पयासेंति ॥

वृ. तैः शैक्षकैरेवादीयमाने भक्ते स महता शब्देन कूजति यथा मामेते बलान्मारयन्ति इत्येवमुक्तेन प्रकारेण प्रवचनं त्यक्तं । तथा शैक्षा ये प्रतिगताः प्रतिभग्नाः सन्तो जनेऽवज्ञां प्रकाशयन्ति । एष उड्डाहः । गतमेकद्वारमाभोगेन द्वारमाह-

भा. [४२७३] परतो सयं व नच्चा पारगमिच्छंति अपारगे गुरुगा ।
असती खेमसुभिक्खे निव्वाघाएण पडिवत्ती ॥

वृ. भक्तं प्रत्याख्यातुकामः कोऽपि समागतस्ततः आचार्येणाभोगः कर्तव्यो यावदस्य भक्तप्रत्याख्यानं समाप्तिमुपयाति तावदशिवाद्युपद्रवो नगरादीनां वोत्थानं भविष्यति किं वा नेति, तच्च कथं ज्ञातव्यं ते (तत्) स्वयमाचार्यस्यातिशयोऽस्ति तेन ज्ञातव्यं, यदि वा निमित्तमासोगमीमथवा स्वयं देवता कथयति यथा कंचनपुर गाथा इत्यादि । अथ स्वतोऽतिशयो निमित्तं वा नास्ति तर्हि येषां ते स्वयं प्रष्टव्याः एवं स्वतः परतो वा अशिवादीनां नगरोत्थानादीनां वा भावमवबुद्ध्य पुनरिदं ज्ञातव्यं । किमेष प्रत्याख्यानस्य पारगो भविष्यति किं वा नेति । तत्र यदि पारगतो ज्ञायते ततस्तं पारगमिच्छन्ति अथ चापारगं नेच्छन्ति, तथा अपारगे इष्यमाणे

प्रायश्चित्तं चत्वारो गुरुका: । अथ स्वस्य परस्य चातिशयादिर्न विद्यते ततोऽसति अविद्यमाने आभोगे यदि क्षेमं सुभिक्षं तदा निर्व्याघातेन प्रतिपत्तिः कारयितव्या, वर्षाकाले प्रतिपत्तिः कार्यते इत्यर्थः । एतदेवाह–

भा. [४२७४] सव्वेव चिरं वासो वासावासे भवंसि नं ।
तेन तस्स विसेसेन वासासु पडिवज्जाणा ॥

वृ. वर्षारात्रे वर्षोदककर्दमादिकारणतश्चतुरः पञ्चषट् वा मासानुग्रामादीनामुत्थानं न भवति, क्षेमं सुभिक्षं च स्वभावो वर्तते तपस्विनां च वर्षावासे चिरं वासः स्वयमेव प्रवृत्तस्तेन कारणेन तस्य भक्तप्रत्याख्यातुकामस्य विशेषतो भक्तप्रत्याख्यानप्रतिपादनके कर्तव्या, पूर्वमिदमुक्तं स्वयं देवता कथयति तच्च निदर्शनमाह–

भा. [४२७५] कंचनपुरगुरु अन्ना देवय रुवणा य पुच्छ कहणा य ।
पारणगखीररुहिरं आमंतण संघानसणया ॥

वृ. कलिङ्गेषु जनपदेषु काञ्चनपुरे नगरे बहुश्रुताः बहुशिष्यपरिवाराः केचिदाचार्याः विहरंति, ते अन्यदा शिष्येभ्यः सूत्रपौरुषीं अर्थपौरुषीं च दत्वा संज्ञाभूमौ गतास्ते च गच्छन्तोऽपांतराले अतिशये महापादपस्याधः कांचिद्देवतां स्त्रीरूपेण रुदन्तीं पश्यन्ति । एवं द्वितीयतृतीयदिनेऽपि ततो गुरुभिर्जातशङ्कैः पृष्टं कस्मात् रोदिषि । तस्याः कथनमहमेतस्य नगरस्याधिष्ठात्री । एतच्च सर्वं नगरमचिराज्जलप्रवाहेण विनंक्ष्यति । अत्र च बहवः स्वाध्यायवन्तो वर्तन्ते ततो रोदिमि । कोऽत्र प्रत्यय इति पृष्टे सा प्राह–अमुकस्य क्षपकस्य पारणके क्षीरं रुधिरंभविष्यति, तच्च यत्र गतानां स्वभावीभूतं भविष्यति तत्र क्षेमम् वसितव्यमिति । एवमुक्ता सा, एतद्द्वितीयदिने क्षपकस्य पारणके क्षीरं रुधिरीभूतं । ततः समस्तस्यापि संघप्रधानवर्यस्यामंत्रणं पर्यालोचनं च ततोनशनं समस्तस्यापि सङ्घस्येति । यदि पुनरशिवाद्युत्थाने विज्ञाते यदि भक्तं प्रख्यापयति तदा सगच्छसाधवः प्रवचनं च तेन त्यक्तं कथमित्याह–

भा. [४२७६] असिवादीहिं वहंता तत्थ च कारणं च संजया चत्ता ।
उवहिं विनायच्छम्मण चत्तो सो पवयणं चेव ॥

वृ. यदि अशिवाद्युपद्रवं ग्रामाद्युत्थानं च ज्ञात्वा भक्तं प्रख्यापयति तदा तस्मिन् निर्यापिते एवाशिवाद्युत्थाने जाते यदि संयतास्तत्प्रतिबन्धतो न निर्गच्छन्ति । गच्छन्तो वा यदि तं कृतभक्त–प्रत्याख्यानं तस्योपकरणं च वहंति तदा ते संयता अशिवादिभिः कारणैस्तमुपकरणं च वहन्त–स्त्यक्ताः अथोपधिं विनिर्वहन्ति त्यक्त्वा वा सर्वथा पलायन्ते तदा स भक्तप्रत्याख्याता परित्यक्तः । स च त्यक्तः सन् उड्डाहं कुर्यात् । मां त्यक्तावा ते गता इति तदा प्रवचनस्य महती हीलनेति प्रवचनं त्यक्तं तस्मादशिवाद्युत्थाने अपारगे च तस्मिन् ज्ञाते स भक्तं न प्रत्याख्यातयितव्यः ।

गतमाभोगेन द्वारमिदानीमन्यद्वारमाह–

भा. [४२७७] एगो संथारगतो बिइतो संलेहे तइय पडिसेहो,
अपहुच्चंत समाही तस्स वा तेसिं च असतीए ॥

वृ. यदि तत्र द्वौ जनावग्रे स्तस्तद्यथा एकः संस्तारगतः संस्तारगतो नाम संलिख्यकृत–प्रत्याख्यानो द्वितीयः संलिखति संलेखनां करोति तथा तृतीयो यद्यन्य उपतिष्ठति तर्हि तस्य

तृतीयस्य प्रतिषेधः कर्तव्यः । किं कारणमिति चेदत आह- अपहुच्चन्तेत्यादि, न प्रभवन्ति न प्राप्यन्ते त्रयाणामपि योग्या निर्यापका न च संस्तरन्ति। ततोऽप्रभवः अप्राप्यमाणेषु तेषु संस्तारण-स्यास्य वा सति तस्य तृतीयस्य तयोर्वाग्रेतनयोस्तेषां वा निर्यापकाणां असमाधिरुपजायते । प्रथमं सन्ति बहवो निर्यापकाः संस्तरन्ति च तदा न कश्चिदनन्तरो दोषः प्रसजतीति तृतीयामपि प्रतीच्छन्ति ।

**भा. [४२७८]** हवेज्ज जइ वाघातो बितियं तत्थ ठावए ।
चिलिमिलि अंतरा चेव बहिं विंदावए जनं ॥

**वृ.** यदि तस्य कृतभक्तप्रत्याख्यानस्य व्याघातो भवेत् व्याघातो नाम प्रत्याख्यानेनासंस्त-रणं स च बहिः सर्वत्र ज्ञातो दृष्टश्च भूयसा लोकेन एष कृतभक्तप्रत्याख्यान इति, ततः एषा यतना कर्तव्या। योऽसौ द्वितीयः संलेखनां कुर्वन् तिष्ठति स तत्र स्थाप्यते तस्यान्तरा चिलिमिलि कर्तव्या। ततो यदि ये ज्ञातो दृष्टः ते वन्दकाः समागच्छेयुः तदा स तेषां न दर्शयितव्यः किन्तु ते भण्यन्ते बहिः स्थिता यूय वन्दध्वमिति। एवं बहिः स्थितं जनं वन्दापयेत्। गतमन्यद्वारम्

**भा. [४२७९]** अनापुच्छा एगस्स पडिच्छंतं जती गुरू गुरुगा ।
चत्तारि वि विन्नेया गच्छमनिच्छंते जं पावे ॥

**वृ.** गच्छस्यानापृच्छया यदि तं भक्तं प्रत्याख्यातुकामं गुरुः प्रतीच्छति अभ्युपगच्छति तदा तस्य प्रायश्चित्तं चत्वारो गुरुका विज्ञेयाः गच्छे वाऽनिच्छति स भक्तप्रत्याख्याता यत्प्राप्नोति असमाधिप्रभृतिकं तन्निमित्तमपि तस्य प्रायश्चित्तं(ततः) गच्छ आपृष्टव्याः । किं कारणमिति चेदुच्यते। स गच्छसाधवः सर्वं परिभ्रमन्तो जानते, यथा एतस्मिन् क्षेत्रे एतत्सुलभमेतत् दुर्लभं ततो गुरुः पृच्छति किमेतस्मिन् क्षेत्रे यानि कृतभक्तप्रत्याख्यानस्य समाधिकरणानि द्रव्याणि तानी सुलभानि किं वा दुर्लभानि। तत्र यदि सुलभानि तत् भक्तप्रत्यख्यानं प्रतिपाद्यते। अथ दुर्लभानि तर्हि प्रतिषिध्यते। अन्यत्र गत्वा प्रतिपद्यस्वेति, अनापृच्छायां दोषानाह-

**भा. [४२८०]** पानगादीनि जोगाणि जानि तस्स समाहिए ।
अलंभे तस्स जा हानी परिक्वोसा य जायणे ॥

**भा. [४२८१]** असंथरं अजोग्गा वा जोगवाही व ते भवे ।
एसणाए परिक्कोसा जाया तस्स विराधना ॥

**वृ.** गणस्यानापृच्छायां यानि तस्य कृतभक्तप्रत्यख्यानस्य समाहिते समाधाननिमित्तानि पानकादीनि योग्यानि आदिग्रहणेन भक्तपरिग्रहः तेषामलाभे तस्य प्रत्याख्यातुः यदि निःसमाधिः परिभ्रंश उपजायते, यश्च गच्छसाधूनां योग्या पानकादेर्याचने परिमार्गणे परिक्लेशस्तथा असंस्तरः संस्तरणाभावे यः परिक्लेशो अयोग्या वा तत्र निर्यापका भवेयुः योगवाहिनोप्येते तत्र योगवाहिनां समाधिकारकाणि पानकादीन्युद्गमानि शुद्धानि मृगयमाणानां यः परिक्लेशो वाऽयोग्य-निर्यापकसंपर्कतस्तस्य कृतप्रत्याख्यानस्य विराधना अनागाढादिपरितापना असमाधिमरणादिकं तत्सर्वं तन्निमित्तमतो गच्छस्य पृच्छा कर्तव्या। गतमनापृच्छाद्वारमधुना परीक्षाद्वारमाह-

**भा. [४२८२]** अपरिच्छणंमि गुरुगा दोण्हवि अन्नोन्नयं जहा कमसो ।
होइ विराधना दुविहा एक्को एक्को वज्जं पावे ॥

वृ. यो भक्तं प्रत्यख्यातुकामस्तेन गच्छसाधवः परीक्षितव्याः किमेते भाविता इति गच्छ-साधुभिरपि स परीक्षणीयः । किमेष निस्तारको भवेत् किं वा नेति, आचार्येणापि परीक्षित-व्यः । अन्योन्यं पुनर्यथा क्रमशो वक्ष्यमाणक्रमेणपरीक्षणे द्वयोरपि गच्छस्य भक्तं प्रत्यख्यातुकाम-स्य च प्रायश्चित्तं प्रत्येकं चत्वारो गुरुकाः । तथा अपरीक्षणे भवति द्विविधा विराधना, आत्म-विराधना संयमविराधना च, तत्र गच्छस्यात्मविराधनाऽसमाधिमरणतः प्रत्यवायसंभवात् भक्त-प्रत्यख्यातुः आत्मविराधना असमाध्युत्पादात् संयमविराधना गच्छस्याभावितत्वेन एषणाया असंभवात् । एक्को एक्को व जं पावे एको गच्छो यमनर्थं प्राप्नोति एको वा स भक्तप्रत्याख्याता तन्निमित्तमपि तस्य प्रायश्चित्तमापद्यते-

भा. [४२८३] तम्हा परिच्छेणं तु दव्वे भावे य होइ दोण्हंपि ।
संलेहे पुच्छदायण दिट्ठंतो अवच्चकोंकणए ॥

वृ. यत एवपरीक्षणे प्रायश्चित्तं दोषाश्च तस्माद्‌द्वयोरपि परस्परं द्रव्ये भावे च भवति परीक्षणं तच्चैवं भक्तं प्रत्यख्यातुकामेन परीक्षानिमित्तं गच्छसाधवो भणिता यथा आनयत मम योग्यं कलमशालिकूरं कथितं क्षीरं, ततो भक्ष्येऽथवाऽन्यद्‌भोजनं प्रणीतं यत्स्वभावतो रुचिकरं तत् आनयतेति याचते तत्रैवं याचने यदि ते हसन्ति कृष्णमुखा वा जायन्ते तदा ज्ञेयमभाविता एते इती तेषां समीपे न प्रत्याख्यातव्यमथ ते ब्रुवते यद् भणसि तत् कुर्म इति तदा ज्ञेयं योग्य एते इति, तथा गच्छसाधुभिः परीक्षानिमित्तं कलमशालिकूरप्रभृतिकमुत्कृष्टं द्रव्यमानेतव्यं, तस्मिन्ना-नीते यदि स ब्रूते-अहो सुन्दरमानीतं भुञ्जेऽहमिति तदा ज्ञातव्यमेष आहारलुब्ध इति न निस्तरिष्यति वक्तव्यश्च स यदा त्वमाहारगृद्धिं त्यक्ष्यसि तदा ते भक्तपरिज्ञायां योग्यता भविष्यति नान्यदा । अथ स तमुपनीतमाहारं जुगुप्सते किं ममैतेनाहरितेन पर्याप्तं नाहमाहारयामीति तदा ज्ञातव्यमेष निस्तरिष्यति तस्मिन् वक्तव्यं प्रत्याख्याहि, वयं ते निर्यापका इति इह तु याचितस्य द्रव्य-सम्पादनमसम्पादनं च सा गच्छस्य द्रव्यतः परीक्षा यत्पुनः सकषायित्वमकषायित्वं वा ज्ञायते तद्‌भावपरीक्षणं । तथा भक्तप्रत्यारूयातुरप्यानीतसुन्दरस्य ग्रहणमग्रहणं वा द्रव्यतः परीक्षणं, भावतो गृद्ध्यगृद्धिपरिज्ञानमिति आचार्यस्य तत्परीक्षणमाह संलेहपुच्छइत्यादि यदा स आचा र्याणामुपस्थितो भवति भक्तप्रत्याख्यातेनाहं तिष्ठामि । तदा स आचार्येण प्रष्टव्यः किमत्र संलिखितं त्वया न वेति ततः स चिन्तयति पश्यति मे अस्थिचर्मावशेषं शरीरं तथापि प्रश्नयति संलिखितं न वेति । एवं चिन्तयित्वा क्रोधे दर्शिते क्षिप्रमङ्गुलिं भंक्त्वा दर्शयति पश्य, यत्र किंचिन्मद्यं (रक्तं) मांसं वा द्रक्ष्यसि भवति संलिखितं किं वानेति । एवमुक्ते गुरुराह-न तेद्रव्यसंलेखं पृच्छामि कृशशरीरंप्रत्यक्षत एवोपलभ्यमानत्वात् । किन्तु भावसंलेखं । स चाद्यापि न विद्यते इति भावसंलेखं कुरु । श्रूयतां चात्र दृष्टान्तोऽमात्यकोंकणविषये ।

साम्प्रतमेनामेव गाथां व्याचिख्यातुर्गच्छपरीक्षामाह-

भा. [४२८४] कलमोयणपयकढियादि दव्वे आनेहि मित्ति उदिते ।
भावे कसाइज्जंती तेसि सगासे न पडिवज्जे ॥

वृ. कलमोदनं कलमशालिकूरं पयो दुग्धं क्वथितमादिशब्दात् अन्यस्याप्यभीष्टस्य, भोजनस्य परिग्रहो मम योग्यमानयतेति द्रव्ये उदिते यदि भावे भावतः कषायन्ति कषायं कुर्वन्ति ।

ततस्तेषां समीपे भक्तपरिज्ञां न प्रतिपद्यते, अयोग्यत्वात्।

भा. [४२८५] अह पुन विरूवरूवे आनीय दुगुंच्छिय भणंतन्नं।
आनसुवत्ति ववसिए पडिवज्जति तेसि तो एसो ॥

वृ. अथ पुनर्विरूपरूपे अनेकप्रकारे आहारे आनीते जुगुप्सते भणन्ते भणंत्यन्यमाहार-मानयामस्तथैव नेतुं व्यवसितस्तेषां पार्श्वे प्रतिपद्यते। यथाभिलषितवस्तुसम्पादकया तेषां योग्यत्वात्। सम्प्रति गच्छस्य तत् परीक्षामाह-

भा. [४२८६] कलमोयणे अपयसा अन्नं च सभाव अनुमयं जस्स।
उवनीयं जो कुत्थइ तं तु अलद्धं पडिच्छंति ॥

वृ. कलमोदनं कलमशालिकूरं पयसा सहोपनीतमिति अन्यद्वा तस्य स्वभावतोऽनुमतं तस्य तदुपनीतं सत् यः कुत्सते(कुत्सयते) निन्दति किं ममैतेन कार्यमिति तमलुब्धमिति ज्ञात्वा प्रतिच्छन्ति। यस्तु कलमोदनादिके उपनीते अहो सुन्दरमहं भुञ्जे इति स लुब्ध इति न प्रत्येप-णीयः। आचार्यस्य तत्परीक्षामाह-

भा. [४२८७] अज्जो संलेहो ते किं कतो न कओत्ति एवमुदीयंमि।
भत्तं अंगुलिदावे पेच्छह किं कतो न कतो ॥

वृ. अयं संलेखस्त्वया किं कृतो वेत्येवमुदिते अङ्गुलिं भंक्त्वा दर्शयति। प्रेक्षस्व किं कृतः किं वा न कृत इति तत आचार्य आह-

भा. [४२८८] न हु ते दव्वसंलेहं पुच्छि पासामि ते किसं।
किसे ते अंगुली भग्गा भावसंलेहमाउरो ॥

वृ. न हु नैव ते तव द्रव्यसंलेखं पृच्छामि यतः पश्यामि ते कृशं शरीरं तस्मात्किमिति त्वया अङ्गुलिर्भग्ना पृच्छामि भावसंलेखं, मा क्रोधवशादातुरो भव। सम्प्रति दिट्ठंतोऽमच्चकोंकणए इत्येतद्भावयति

भा. [४२८९] रन्ना कोंकण मच्चा दोवि निव्विसया कया।
दोछिए कंचियं छोढुं कोंकणे तक्खणा गतो ॥

भा. [४२९०] भंडीओ वइल्लएकाए अमच्चो जा भरेति उ।
ताव पुन्नं तु पंचाहं नलिए निहणं गतो ॥

वृ. केनापि राज्ञा एकः कौंकणकोऽपरोऽमात्य एतौ द्वावपि कस्मिंश्चदपराधे समकमाज्ञप्तौ। यदी पञ्चाहाभ्यन्तरे निर्विषयौ न व्रजतस्तोऽवश्यं वध्याविति तत्र कौङ्कणको दोग्धिके तुम्बके काञ्जिकं काञ्जिकपर्यासि क्षित्वा तत् क्षणात् गतः अमात्यः पुनर्यावत् भण्डी ग्रन्थी बलीवर्दान् कायानुकापौती बिभर्ति तावत् पूर्णं पञ्चाहमिति नलिके शूलिकामारोपिता निधनं गतो विनाशं प्राप्तः,। यथा सोऽमात्यः कुटुम्बोपकरणप्रतिबद्धो विनाशमुपगतः। एवं त्वमपि भावप्रतिबद्धो नाराधनाजीवितं प्राप्स्यसि तस्मात्।

भा. [४२९१] इंदियाणि कसाए य गारवे य किसे कुरु।
न चेयं ते पसंसामो किसं साहु सरीरगं ॥

वृ. इन्द्रियाणि चक्षुरादीनि कषायान् क्रोधप्रभृतीन् गौरवाणि ऋद्धिगौरवप्रमुखाणि कृशानि (कुरु) न चेदं ते साधो: कृशं शरीरकं प्रशंसामो भावसंलेखव्यतिरेकेण द्रव्यसंलेखस्यापि किञ्चित्करत्वात्। गतं संलेखनाद्वारमिदानीमालोचनाद्वारमाह-

भा. [४२१२] आयरियपायमूलं गंतूणं सइ परक्कमे।
ताहे सव्वेण अत्तसोही कायव्वा एस उवएसो ॥

वृ. ततो द्रव्यसंलेखना भावसंलेखनानन्तरं भक्तप्रत्याख्यानकामेन सर्वेण स्वयं शोधिं जानताऽजानता च सति पराक्रमे आचार्यपादमूले गत्वा शोधि: कर्तव्या। एष तीर्थकृतां गण- भृतां चोपदेश: तत्र स्वयं शोधिं जानन्त: प्रत्याह-

भा. [४२१३] जह सकुसलो वि वेज्जो अन्नस्स कहेइ अत्तणो वाहिं।
वेज्जस्स य सो सोउंतो पडिक्कमं समारभते ॥

भा. [४२१४] जाणंतेण वि एवं पायच्छित्तविहिमप्पणो निउणं।
तह वि य पागडतरयं आलोएयव्वयं होइ ॥

वृ. यथा सुकुशलोऽपि वैद्योऽन्यस्यात्मनो व्याधिं कथयति सोऽपि वैद्यस्य श्रुत्वा व्याधिकथनं तत: प्रतिकर्म समारभते। एवं प्रायश्चित्तविधिमात्मनो निपुणं जानतापि तथापि प्रकटतर- मालोचयितव्यं भवतीति कृत्वा अन्यस्य समीपे आलोचयितव्यं। ततोऽप्यनेन किं कर्तव्यम्

भा. [४२१५] छत्तीसगुणसमन्नागएण तेन वि अवस्स कायव्वा।
परिपक्खिया विसोही सुट्ठुविवहार कुसलेणं ॥

वृ. तेनाप्यनेनाचार्येण षट्त्रिंशद्गुणसमन्वागतेन षट्त्रिंशद्गुणा अट्ठविहा गणिसंपया इत्यादिना प्रागेवाभिहिता:। सुष्ठुअपि व्यवहारकुशलेन परपक्षिका परपक्षे गता विशोधिरवश्यं कर्तव्या। कथं पुनरात्मन: शोधिजातमप्यालोचयदित्याह-

भा. [४२१६] जह बालो जपंतो कज्जमकज्जं च उज्जुयं भणइ।
तं तह आलोइज्जा मायामयविप्पमुक्को उ ॥

वृ. अथ बालो जल्पेन् कार्यमकार्यं च ऋजुकममायं भणति तथा मायामदविप्रमुक्त- स्तत्कार्यमकार्यं वा गुरो: पुरत आलोचयेत्। सम्प्रति मायानिर्घातने उपदेशमाह-

भा. [४२१७] उप्पन्ना उप्पन्ना माया अनुमग्गतो निहंतव्वा।
आलोयणनिंदणगरहणेहिं न पुनो अविततहेत्ति ॥

वृ. उत्पन्ना उत्पन्ना माया मार्गत: पृष्ठे लग्नेन आलोचननिन्दनगर्हणैर्निहन्तव्या। कथमित्याह- न पुनरेवं द्वितीयं वारं करिष्यामीति प्रतिपत्त्या, संप्रत्यालोचनायां ये गुणा भवन्ति तानुपदर्शयति;

भा. [४२१८] आयारविनयगुण कप्पदीवणा अत्तसोहि उजुभावो।
अज्जवमद्दवलाघव तुट्ठीपल्हायजननं च ॥

वृ. आलोचनायां दत्तायामाचार: पञ्चविध आसेवितो भवति, विनयगुणश्च प्रवर्तितो भवति, कल्पदीपनानामवश्यमालोचयितव्यो अतीचार इत्यस्य कल्पस्य प्रकाशनमन्येषामुपदर्शनं, ततस्तेऽप्यन्ते एवं कुर्वन्ति। तथा आत्मनो विशोधिर्नि:शल्यता कृता भवति। तथा ऋजुसंयम- स्तस्य भावो भवनं तत्कृतं भवति, । तथा आर्यभवमार्यत्वं, मार्दवममानत्वम् लाघवमलोभत्वमेतानि

कृतानि भवन्ति। तथा आलोचिते सति निःशल्योभूतोऽहमिति तुष्टिरुपजायते। तथानालेचितऽतीचारे सशल्योऽहमिति या मनस्यऽधृतिः (तस्याः) परिदाहापगमात् प्रल्हादजननं प्रल्हादोत्पादः, शीतीभवनं भवति। कः पुनः सोऽपि अतिचारः कुतो वा प्रभृत्यालोचयितव्यमताह–

भा. [४२९९] पव्वज्जादी आलोयणा उ तिण्हं चउक्कगंवि सोही।
जह अप्पणो तह परे कायव्वा उत्तमट्ठंमि॥

वृ. त्रयाणां ज्ञानदर्शनचारित्राणां अतीचारेषु प्रव्रज्यादेरारभ्य यावदुत्तमार्थाभ्युपगमस्तावदालोचना दातव्या कथमित्याह– चतुष्कः विशोध्या एकैकस्मिन् द्रव्यतः क्षेत्रतः कालतो भावतश्चातीचारविशुद्ध्या पुनः कथमित्याह– यथात्मनः सम्यक् ज्ञेयतया तिष्ठति तथा परस्मिन् आलोचना कर्तव्या देशतः सर्वतो न किञ्चिदपि गूहीतव्यमिति भाव उत्तमार्थे उत्तमार्थप्रतिपत्तौ कर्तव्यता। तत्र ज्ञाननिमित्तं द्रव्यतोऽतीचारालोचनमाह–

भा. [४३००] नाणानिमित्तं आसेवियं तु वितहं परूवियं वावि।
चेयणमचेयणं वा दव्वं सेसेसु इमगं तु॥

वृ. ज्ञाननिमित्तं सचित्तं अचित्तं द्रव्यमुद्गमाद्यशुद्धं तथा सचेतनमचेतनं वा वितथं प्ररूपितं भवेत्तद्यथा–सचित्तमचित्तं वा सचित्तमिति एतत् द्रव्यतोऽतीचारालोचनं शेषेषु तु क्षेत्रादिष्विदमतीचारालोचनं तदेवाह–

भा. [४३०१] नाणनिमित्तमद्धाणमेति उमे य अच्छति तदट्ठा।
नाण व आगमेस्संति कुणंति परिकम्मणं देहे॥

भा. [४३०२] पडिसेवति विगतीतो मज्झदव्वो व एसति वि वत्ती।
वायंतस्सवि किरियाइ कया पणगाइहाणीए॥

वृ. ज्ञाननिमित्तमध्वानं पन्थानमिति प्रतिपद्यते अध्वानं प्रतिपन्ने च यस्तत्रचित्तमकल्पिकमयतनया यतनया वा च तत् आलोचयति, । इदं क्षेत्रतोऽतीचारालोचनं । तथाऽवमेऽपि दुर्भिक्षेऽपि तदर्थं ज्ञानार्थं तिष्ठति, तत्र च तिष्ठिता यदकल्पिकमासेवितमयतनया यतनया वा तदालोचयति, इदं कालतोऽतीचारालोचनम्। भावत आह–नाणं चेत्यादि ज्ञानमहमागमिष्यामि ग्रहीष्यामीति हेतोर्देहे शरीरस्य परिकर्म करोति, यथा व्याख्याप्रज्ञप्तेर्महाकल्पश्रुतस्य वा योगं वोढुकामो घृतं पिबति, प्रणीतं चाहारमुपभुङ्क्ते। तत्र या अयतना कृता, अथवा कश्चिद्रोग आसीत्। मा स तत्काले उद्रेकं यायादिति परिकर्म करोति, तच्च कुर्वता या अयतना कृता निर्विकृता विकृतीर्नानाप्रकारा निरन्तरं प्रतिसेवते तत्रापि या अयतना कृता मेध्यानि द्रव्याणि–नामयैर्मेधा उपक्रियते। तानि द्रव्याणि एषयता परिमार्गयता पिबता वा या अयतना व्यधायि तथा वाचयतो वाचनाचार्यस्य पञ्चकादिहान्या क्रिया कृता अपि शब्दात्पञ्चकादिहान्यातिक्रमेण वा या कृता क्रिया तामप्यालोचयन्ति। तदेवं ज्ञाननिमित्तं द्रव्याद्यतीचारालोचनमुपदर्शितमधुना दर्शननिमित्तं चारित्रनिमित्तं चाह–

भा. [४३०३] एमेवदंसणम्मि वि सद्दहणा नवरि तत्थ नाणत्तं।
एसण इत्थी दोसो वयातिचरणे सिया सेवा॥

वृ. एवमेव अनेनैव प्रकारेण ज्ञानगतेन प्रकारेण दर्शनेऽपि दर्शननिमित्तमपि द्रव्याद्यतीचार–

जातमालोचयितव्यं नवरं तत्र नानात्वं दर्शनं नाम श्रद्धानं चरणेऽपि चारित्रेऽपि स्यादियमतीचारता सेविता, तद्यथा-एषणायामेषणाविषये दोषोपेतबसतिविषये व्रतविषयो वेति।

सम्प्रत तिण्हं चउक्कमविसोहो इथ्यस्यान्यथा व्याख्यातुमाह-

भा.[४३०४] अहवा तिगसालंबेण दव्वमादी चउक्कमाहच्च।
आसेवियं निरालंतोव्व आलोअए तं तु॥

वृ. अथवेति प्रकारान्तरे त्रिकसालंबेनोपेतेन द्रव्यादिचतुष्कं द्रव्यक्षेत्रकालभावलक्षणमाहच्च कदाचित्। अकल्पनीयमयतनया यतनया वा सेवितमथवा निरालम्बको ज्ञानाद्यालम्बनरहितो द्रव्यादिचतुष्कमकल्पिकमासेवितवान्। एतेनैतत् ख्यापितं यत् प्रतिसेव्यते किञ्चिदकल्पिकं तत् दर्पतः कल्पतो भावतः परमपरप्रकारान्तरमस्तीति एतेत् आलोचयेत्।

भा.[४३०५] पडिसेवणातियारा जइ वीसरिया कहं चिहुज्जाणु।
तेसु कह वट्टियव्वं सल्लुद्धरणंपि समणाणं॥

वृ. प्रतिसेवनातिचारा यदि कथमपि विस्मृता भवेयुस्तेषु शल्योद्धरणे कर्त्तव्ये कथं श्रमणेन वर्तितव्यं। सूरिर्वर्तनप्रकारमाह-

भा.[४३०६] जे मे जाणंति जिना अवराहे जेसु जेसु ट्ठाणेसु।
तेहिं आलोएउं उवट्ठितो सव्वभावेणं॥

भा.[४३०७] एवं आलोएंतो विसुद्धभावपरिणामसंजुत्तो।
आराहओ तह वि सो गारव पडिकुंचना रहितो॥

वृ. यान्ममापराधान् येषु येषु स्थानेषु जिनाःकेवलिनो भगवन्तो जानन्ति तानहं सर्वभावेन सर्वात्मना आलोचयितुमुपस्थितः परं न स्मरामि वचसा न प्रकटीकर्तुं शक्नोमि,। तस्माज्जिन-दृष्टान्तमेव प्रमाणमित्यालोचयितव्यं। यद्यप्येवं संमुग्धाकारमालोचयति। तथापि स गौरव-प्रतिकुञ्चनारहितो विशुद्धेन भावपरिणामेन संयुक्त एवमालोचयेत् आराधकः प्रतिकुञ्चना नाम माया, गतमालोचनाद्वारमधुना प्रशस्तस्थानद्वारमाह-

भा.[४३०८] ठ्ठाणं पुन केरिसगं होइ पसत्थंतु जस्स जं जोग्गं।
भण्णति जत्थ न होज्जा कारणस्स उ तस्स वाघातो॥

वृ. तस्य भक्तं प्रत्याख्यातुर्यत्प्रशस्तं योग्यस्थानं तत् कीदृशं सूरिराह- भण्यते यत्र तस्य कृतभक्तप्रत्याख्यानस्य ध्यानव्याघातो भवति तान्युपदर्शयति।

भा.[४३०९] गंधव्वनट्टजड्डो स्स चक्कजन्तग्गिकम्म पुरुसे य
नंतिक्क रयग देवडडोंब पाहिडिग रायपहे॥

भा.[४३१०] चारगकोट्टग वट्टाण, कप्पपुप्फदगसमीवं मि,
आरामे अहवियटे नागघरे पुव्वभणिए य॥

वृ. गन्धर्वशालायं यत्र गन्धर्विका: संगीतं कुर्वन्ति तत्र गन्धर्वशालासमीपे वा न स्थातव्यं ध्यानव्याघातभावात्। तथा नृत्यशालासमीपे वा तत्राप्युक्तदोषसंभवात्। तथा जड्डो हस्ती अश्वस्तुरङ्गमो हस्तिशालासमीपे वा तुरंगमशालासमीपे वा हस्तिकादिविरूपशब्दश्रवणतो ध्यानव्याघातभावात् तथा चक्रशालायां तिलपीडनशालायां तिलपीडनशालासमीपे वा जन्तति

इक्षुयंत्रशालायाम् इक्षुपीडनशाला समीपे वा तिलादिदर्शनतः कर्मकरगानशब्दश्रवणतो वा ध्यानभङ्गोपपत्तेः अग्निकर्म लोहकारकर्म तच्छाला अग्निकर्मलोहकारकर्मशालायां अग्निकर्मशालासमीपे वा पुरुषः कुंभकारः कुंभकारशालायां कुंभकारशालासमीपे वा अग्निपरितापतो लोहकुट्टनादिशब्दश्रवणतो वाध्यते व्याघातसंभवात् तथा नन्तिक्ताः छिपास्तच्छालासमीपे वा रजकशालायां रजकशालासमीपे वा देवडशालायं समीपे वा जुगुप्सादोषात् डोम्बलंखकास्तेऽपि गायन्ति। अथवा चण्डालविशेषगायना डोम्बास्तेषां शालायां तच्छालासमीपे वा जुगुप्सादोषात्। गानशब्दश्रवणतो ध्यानव्याघातभावाच्च तथा पाडहिक-शालायां पाडहिकसमीपे वा वादित्रशब्दश्रवणतो ध्यानव्याघातः राजपथे समीपे वा राज्ञ आगच्छता गच्छता वा समृद्धिदर्शनतो निदानकरणप्रसक्तेः, तथा चारको गुप्तिगृहं तत्र तस्य समीपे धारयता शब्दश्रवणतो ध्यानव्याघातभावात् कोष्टाका नाम वट्टानां शाला, कोष्टूके कोष्टूकसमीपे वा वट्टा अपि गायन्ति, विरूपरूपाणि च भाष्यते, ततो ध्यानव्याघातः, तथा कल्पपालाः सुरादिविक्रयकारिणो मद्यपा वा तेषां शालायां तच्छाला समीपे वा यसस्तत्र मत्तप्रमत्ता गायन्ति पूत्कुर्वन्ति ततो ध्याने व्याघातसंभवः तथा क्रकचके यत्र काष्टानि क्रकच्यन्ते क्रकचसमीपे वा। काष्टक्रकचशब्दश्रवणतः कारपत्रिकगानशब्दश्रवणतो ध्यानभ्रंशोपपत्तेः पुष्फफलदगसमी-वम्मित्ति पुष्पसमीपे फलसमीपे उदकसमीपे वा पुष्पादिदर्शनतः तद्विषयाभिलाषोपपत्तेः। तथा आरामे तत्राप्यनन्तरोदितदोषप्रसङ्गात यथा विकटं नाम असंगुप्तद्वारम्(च)। तत्र पानके पाने कायिक्यादि परिस्थापने च सागारिकसंभवात् तथा नागगृहे उपलक्षणमेतत्। यक्षगृहादिषु तत्रापि भूयसां लोकानां नानाविधविकुर्वितवेषाणामागत्यागत्यगाननर्तनकरणात्तथा च सति ध्याने व्याघातसंभवः। यदि वा नागादयोऽनुकम्पया प्रत्यनीकतया विमर्शेन वा अनुलोमान् प्रतिलो-मान्वा उपसर्गान् कुर्युः। पूर्वभणिते च प्राक्कल्पाध्ययनाभिहिते च भक्तप्रत्याख्यातुकामे तदेव भावयति।

भा. [४३११] पढमबिइएसु कप्पे उद्देसेसु उवस्सया जे उ।
विहिसुत्ते य निसिद्धा तव्विवरीए गवेसेज्जा ॥

वृ. कल्पे कल्पाध्ययने द्वितीयतृतीययोरुद्देशयोर्विधिसूत्रे च आचाराङ्गे शय्याध्ययने अवग्रह-प्रतिमास्थाननिषीदनके च ये उपाश्रया निषिद्धास्तेषुनस्थातव्यं। किन्तु तद्विपरीतान् प्रदेशान् गवेषयेत्। तथा -

भा. [४३१२] उज्जाणरुक्खमूले सुन्नघरअनिसट्ठ हरिय मग्गे य।
एवं विहे न ट्ठायइ हुज्जा समाहीए वाघातो ॥

वृ. उद्याने वृक्षमूले शून्यगृहे अनिसृष्टे अननुज्ञाते हरिते हरिताकुले मार्गे च अन्यस्मिन्नपि च एवंविधे स्थाने न तिष्ठति भक्तप्रत्याख्याता, यतस्तत्र समाधेः व्याघातो भवति।

गतमप्रशस्तस्थानद्वारमधुना प्रशस्तवसतिद्वारमाह-

भा. [४३१३] इंदियपडिसंचारो मनसंखोभकरणं जहिं नत्थि।
चाउस्सालादि दुवे, अनुन्नवेउण ट्ठायन्ति ॥

वृ. यत्र इन्द्रियप्रतिसंचारो न भवति, किमुक्तं भवति ? यत्र अनिष्टा इष्टा वा शब्दा न

श्रूयन्ते, नापीष्टानिष्टानि रूपाणि। एवं गन्धादिष्वपि भावनीयं। मनःसंक्षोभकरणं च तत्र नास्ति, तत्र चतुःशालादिके द्वे वसती अनुज्ञाप्य प्रतिग्राह्ये आदिशब्दात् त्रिशालद्विशालादिपरिग्रहः वसतिद्वयं च गृहित्वा एकत्र भक्तप्रत्याख्याता स्थापत्ये अपरत्र शेषा गच्छ साधवः किं कारणमिति चेदुच्यते अशनादीनां गन्धेन भक्तप्रत्याख्यातुरभिलाषो माभूतिदि हेतोः।

भा. [४३१४] पानगजोग्गाहारे उ ठन्ति से तत्थ जत्थ न ठ इंति।
अपरिणया व सो वा अप्पच्छयगेहिं रक्खट्ठा॥

वृ. पानकं योग्यमाहारं च से भक्तप्रत्याख्यातुस्तत्र प्रदेशे वृषभाः स्थापयन्ति यत्र न तु नैव अपरिणताः साधवः स वा भक्तप्रत्याख्याता समागच्छन्ति। किं कारणं तत्र स्थापयन्तीत्यत आह- अप्रत्ययगृद्धिरक्षार्थं कृतभक्तप्रत्याख्यानेऽस्य दीयमानं दृष्ट्वा माभूदपरिणतानामप्रत्ययो भक्तप्रत्याख्यातस्तु तत् दृष्ट्वा गृद्धिरिति हेतोः। अथाह-यदि तेन भावतस्त्यक्त आहारस्ततः कथं तस्य गृद्धिरुपजायते। तत आह-

भा. [४३१५] भुत्तो भोगी पुरा जोवि गीयत्थो वि य भाविओ।
संत साहारधम्मेसु सो पि खिप्पं तु खुब्भए॥

वृ. योऽपि पुरा पूर्वं भुक्तभोगी गीतार्थो भावितोऽपि च सोऽपि सत्सु आहारधर्मेषु आहार-ग्रहणधर्मेषु क्षिप्रं शीघ्रमाहारदर्शनतः क्षुभ्यति, स्वप्रतिज्ञां विलुप्याहारं याचते। तथा-

भा. [४३१६] पडिलोमानुलोभा वा विसया जत्थ दूरतो।
ठ्ठवेत्ता तत्थ से निच्चं कहणा जाणेगस्सवि॥

वृ. यत्र पडिलोमा अनुलोमा वा विषयाः दूरतस्तत्र तं स्थापयित्वा सेतस्य ज्ञानतोऽपि नित्यं कथना भवति। गतं वसतिद्वारमिदानिं निर्यापक द्वारमाह-

भा. [४३१७] पासत्थोसन्नकुसीलट्ठाण परिवज्जिया उ निज्जवगा।
पियधम्मवज्जभीरू गुणसम्पन्ना अपरितंता॥

वृ. पार्श्वस्थाऽवसन्नकुशीलस्थानपरिवर्जिताः प्रियधर्माणोऽवद्यभीरवो गुणसम्पन्ना अपरि-त्रान्ता अपरिश्रान्ता निर्यापका अथ पुनस्ते निर्यापकास्तस्य कृतभक्तप्रत्याख्यानस्य किं कुर्वन्ति कियंतो वा इष्यन्ते-

भा. [४३१८] उच्चत्त १ दार २ संथार ३ कहग ४ वादीअ ५ अग्ग दारम्मि। ६
भत्तो ७ पाण ८ विआरे ९ कहग १० दिसो १२ जे समत्था य॥

वृ. ये तं कृतभक्तप्रत्याख्यानं उद्वर्तयन्तन्ति परावर्तयन्ते च चत्वारः (१) ये अभ्यन्तरमूले तिष्ठन्ति तेऽपि चत्वारः (२) संस्तारकारका अपि चत्वारो ३ येऽपि तस्य धर्मं कथयन्ति, तेऽपि चत्वारः ४ वादिनो लोकस्योत्क्षण्ठवचनप्रतिकारिणश्चत्वारः ५ अग्रद्वारे ये तिष्ठन्ति तेऽपि चत्वारः ६ ये योग्यं भक्तमानयन्ति ते चत्वारः ७ पानकस्यापि तद्योग्यास्यानेतारश्चत्वारः ८ उच्चारपरिष्ठापकाश्चत्वारः ९ प्रश्रवणपरिष्ठापका अपि चत्वारः। १० बहिर्लोकस्य धर्म-कथकाश्चत्वारः ११ चतसृष्वपि दिक्षु साहस्रकमल्लाश्चत्वारः। १२ एते द्वादशचतुष्कका अष्टा-चत्वारिंशद्भवन्ति कीदृशा पुनरमी निर्यापका इत्यत आह-

भा. [४३१९] जो जारिसतो कालो भरहेरवएसु होइ वासेसु।

ते तारिसया तइया अडयालीसं तु निज्जवगा ॥

वृ. यो यादृशः कालो भरतेष्वैरवतेषु च वर्षेषु भवति ते तादृशास्तत्कालानुरूपाणो निर्यापका अष्टचत्वारिंशदवसातव्याः ।

भा. [४३२०] एए खलु उक्कोसा परिहायंता हवंति तिन्नेव ।
दो गीयत्था तईए असुन्नकरणं जहन्नेणं ॥

वृ. एतेऽनन्तरोदितसंख्याकाः खलु उत्कर्षा उत्कृष्टास्तथैककपरिहान्या परिहीयमानास्तावद्भवन्ति यावज्जघन्येन कृतभक्तप्रत्याख्यानेन सह त्रयः । तत्र द्वौ गीतार्थौ निर्यापकौ तृतीयो भक्तप्रत्याख्याताः तत्रायं च विधिरेकस्य गीतार्थस्य भक्तपानमार्गणाय गमनं, द्वितीयेन तृतीये तृतीयस्य भक्तप्रत्याख्यातुरशून्यकरणमेकस्तत्पार्श्वे तिष्ठित्यपरो भक्तपाने मार्गणाय गच्छतीति भावः । गतं निर्यापकद्वारमधुना दव्वदायणे चरिमे इत्यस्य द्वारस्य व्याख्यानार्थमाह-

भा. [४३२१] तस्स य चरिमाहारो इट्ठो दायव्वो तन्हाछेयट्ठा ।
सव्वस्स चरिमकाले अतीव तण्हा समुप्पज्जे ॥

वृ. भक्तप्रत्याख्यास्य सर्वस्यापि चरमकाले अतीवतृष्णा आहारकांक्षा समुत्पद्यते तेन तस्य भक्तप्रत्याख्यातुकामस्य तृष्णाच्छेदार्थमाहारकांक्षा व्यवच्छेदाय इष्टश्चरमाहारो दातव्यः ।

भा. [४३२२] नवविगति सत्तउयणा अड्डारसवंजणुच्च पानं च ।
अनुपुव्विविहारीणं समाहिकामाण उवहरिउं ॥

वृ. नवविकृतयोऽनवगाहिमदशमाः शाल्यादिभेदतः सप्तविधओदनोऽष्टादशव्यञ्जनानि शास्त्रप्रसिद्धानि उच्चरमतिप्रशस्तं पानं द्राक्षापानादि एतत्सर्वमनुपूर्वी । विहारिणामानुपूर्व्या शनैराहारमोचनेन भक्तप्रत्याख्यानं प्राप्तवतां समाधिकामानां समाधिमभिलषतां समाधिकरण निमित्तमुपहृत्य दत्वा तस्य तृष्णाव्यवच्छेदः क्रियते अथवा

भा. [४३२३] कालसहावानुमतो पुव्वं झुसितो सुओ व दिट्ठो वा ।
झोसिज्जइ सो से तह जयणाए चउव्विहाहारो ॥

वृ. कालानुमतः स्वभावानुमतश्च तेन यः पूर्वमाहारो योषितः सेवतः स कथं साधुभिर्ज्ञातव्यः । ईदृश एतस्य काल स्वभावानुमतः आहारः श्रुतो वा कस्यापि कथनतो दृष्टो वा कदाचित्साक्षाद्दर्शनात् परिज्ञाको यथैतस्य ईदृश आहारो रोचत इति । स चतुर्विधोऽशनपानखादिमस्वादिमरूपो यतनया प्रथमत उद्गमादि शुद्धस्य लाभे पञ्चकपरिहान्या याचित्वा से तस्य भक्त प्रत्याख्यातुकामस्य जोष्यते दीयत इत्यर्थः । अथ को गुणस्तस्य चरमाहारेण दत्तेनेत्यत आह-

भा. [४३२४] तन्हाछेयम्मि कए न तस्स तहियं पवत्तए भावो ।
चरमं च जे स भुंजइ सद्धा जननं दुपक्खेवि ॥

वृ. तेन चरमाहारेण प्रदत्तेन तृष्णाच्छेद आहारकांक्षा व्यवच्छेदे कृते न भूयस्तत्राहारविषये तस्य भाव इच्छाया प्रवर्तते । वक्ष्यमाणवैराग्यभावनाप्रवृत्तेः तथा चरमाहारमेष भुङ्क्ते इति श्रद्धाजननं द्विपक्षेऽपि भक्तप्रत्याख्यातनिर्यापकाणां चेत्यर्थः । तथाहि भक्तप्रत्याख्याता इदं चिन्तयति । अमयभ्युद्यतमरणसमुद्रस्य तीरं प्राप्तो दुर्लभमेतत् निस्तीर्णोऽहं संसारादिति गाढतरं ध्यानमुपागतो भवति निर्यापका अप्येवं चिन्तयन्ति-वयमेवाभ्युद्यतमरणस्य तीरं प्राप्ता भविष्यामो

यस्मादेतस्य चरमाहारदाने गुणास्तस्मादवश्यं स दातव्यः । अथ तृष्णाव्यवच्छेदः केनाकारेण तस्य वैराग्यभावना प्रवर्तत इति आह -

**भा. [४३२५]** किं च तत्रोवभुतं मे परिणामासुइं सुइं ।
दिठसारो सुहं ज्झाति चोयणे सेव सीयति ॥

**वृ.** चरमाहारे प्रदत्ते तृष्णाव्यवच्छेदे च जाते स एवं वैराग्यमापन्नश्चिन्तयति । किं वा तदस्ति भोज्यं यत्पूर्वगृहवासे प्रव्रज्यापर्याये वा मया नोपभुक्तं परं शुध्यते तत् भुङ्क्तं परिणामात् परिणामवशेन अशुचिः संजायते तथा आहारसंज्ञोपयुक्तो जीवः कर्मणा बन्धको भवति । तथा आहारगृद्धे निवृत्तः सुखभागी, एवं प्रत्यक्षत आगमतश्च दृष्टः सार उपलब्धतत्त्व सुखं धर्मध्यानं ध्यायते, तथा यदि च आहारे प्रदत्ते भूयः तत्रैवनुबन्धतः प्रसीदति तदेतस्य तदा सीदत एषैवाधिकृत-श्लोकार्थरूपा चोदना प्रज्ञापना कर्तव्या झोसिज्जइ सो से तह जयणाए चउव्विहारो

**भा. [४३२६]** तिविहं तु वोसिरोहिइ सो ताहे उक्कोसगाइं दव्वाइं ।
मग्गित्ता जयणाए चरमाहारं पदंसंति ॥

**वृ.** त्रिविधं मनसा वाचा कायेन भक्तं प्रत्याख्यातुकाम आहारं व्युत्सृक्ष्यति । तत उत्कृष्टानि द्रव्याणि यतनया उद्गमादिशुद्धलाभे पञ्चकपरिहान्या याचित्वा चरममाहारं तस्य प्रदर्शयन्ति ।

**भा. [४३२७]** पासित्तु तानि कोई तीरप्पत्तस्स किं मम तेहिं ।
वेरग्गमनुप्पत्तो संवेगपरायणो होइ ॥

**वृ.** तानि उत्कृष्टानि द्रव्याणि दृष्ट्वा कश्चित्तीरप्राप्तस्याभ्युपगमरणसमुद्रपारमुपागतस्य ममैतै किं कार्यमित्येवं वैराग्यमनुप्राप्तः संवेगपरायणः सर्वथा निवृत्ताहाराभिलाषो भवति ।

**भा. [४३२८]** सव्वं भोच्चा कोई मणुन्नरसपरिणतो भवेज्जाहि ।
तं चेवनुबंधंतो देसं सव्वं च गेहीए ॥

**वृ.** कोऽपि पुनः सर्वमुत्कृष्टं भुक्त्वा मनोज्ञरसपरिणत उत्कृष्टरसगृद्धो भवति । ततो देशं सर्वं वा गृद्ध्यातमेवोत्कृष्टमाहारमनुबध्नन् अभिलषन् तिष्ठति ।

**भा. [४३२९]** विगती कयानुबंधे आहारनुबंधिणाएवोच्छेदो ।
परिहायमाणदव्वे गुणवुड्ढि समाहि अनुकंपा ॥

**वृ.** विकृतीषु कृतो योऽनुबन्धस्तस्मिन् सति आहारानुबन्धनायां च सत्यां तस्य विकृत्यनुबन्धस्याहारनुबन्धस्य च किंच नोवभुत्तं मे परिणामासुइं इति प्रकारेण व्यवच्छेदः कर्तव्यः । सम्प्रतिहानिद्वारमाह-परिहायमाणा इत्यादि यानि चरमाहारद्रव्याण्यानीतानि तानि तद्विषयमनुबन्धं कुर्वन्तः परिणामतो द्रव्यतश्च परिहीयमानानि कर्तव्यानि । अथ किं कारणं यदाहारे अनुबन्धं कुर्वन्तो भक्तं पानं च दीयते । उच्यते-गुणवुड्ढिसमाहिअनुकंपा इति स भक्तं प्रत्याख्यातुकामोऽनुकम्पनीयोऽनुकम्पमानस्यासमाधिमरणप्रसक्तेस्ततोऽनुकम्पते, आहारे प्रदत्ते सति तस्य समाधिरुपजायते । समाधितश्च प्रज्ञापयितुं शक्यः प्रज्ञापितश्चाहारव्यवच्छेदं करिष्यति । ततोऽभ्युद्यतमरणे गाढं ध्यानोपगतस्य गुणवृद्धिः कर्मनिर्जरा भवति । अथ चरमाहारे द्रव्याणां परिणामतो द्रव्यतश्च परिहानिः कथं कर्तव्येत्यत आह-

**भा. [४३३०]** दविय परिणामतो वा हवंति दिनेदिने जाव तिन्नि ।

खिंति न लब्भंति दुलभे सुलभंमि अहो इमा जयणा ॥

वृ. चरमाहारद्रव्याणि द्रव्यसंख्या परिमाणतश्च दिने दिने तावत्त्रीणि दिनानि तत्र परिणामतो दिने दिने स्तोकतरमानयंति। द्रव्यपरिहानिः पुनरेवं। यदि क्षीरं चरमाहारार्थतया समानीतं ततो द्वितीयदिवसे तन्नानयन्ति किन्तु दध्यादिकं। अथ चरमाहारार्थतया दध्यानीतं ततो द्वितीयदिने क्षीराद्यानयन्ति, न तु दधि। एवं द्रव्यपरिहानिस्त्रिन् दिवसान् ततः परतः किञ्चिदानीयते। तत्र दुर्लभद्रव्यविषये एवं ब्रुवते न लभ्यते, सुलभे तु द्रव्य इयं वक्ष्यमाणा यतना भवति। तामेवाह-

भा. [४३३१] आहारे ताव च्छिंदाहि गेहिं तोणि चइस्ससि।
जं वा भुत्तं न पुव्वं ते, तीरं पत्तो तमिच्छसि ॥

वृ. आहारे आहारविषयां तावत् गृद्धिच्छिद्धि ततः शरीरं त्यक्ष्यासि नान्यथा यथा पूर्वं त्वया निस्पृहतया न भुक्तस्तदानीमभ्युद्यतमरणसमुद्रस्य तीरं प्राप्त इच्छसि एवमनुशासनेन तस्या-हाराकांक्षा विनिवर्त्यते। गतं हानिद्वारमिदानीं अपरित्रान्तद्वारमाह-

भा. [४३३२] वट्टंति अपरितंता दिया व राओ स सव्वपडिकम्मं।
पडियरगा गुणरयणा कम्मरयं निज्जरेमाणा ॥

वृ. प्रतिचरका गुणरत्नाः रजो निर्जरयतस्यस्य कृतभक्तप्रत्याख्यातस्य प्रतिकर्मणि दिवारात्रौ वा परित्रान्ता वर्तन्ते।

भा. [४३३३] जो जत्थ होइ कुसलो सो उ न हावेइ तं सइ बलंमि।
उज्जुत्ता सअधोगे तस्स वि दोवेंति त सद्धा ॥

वृ. यो यत्र प्रतिकर्मणि भवति कुशलः, स तत् प्रतिकर्म सति बले न हापयति। किन्तु सर्वेपि स्वस्वनियोगे उद्युक्तास्तथा वर्तन्ते, तद्यथा तस्यापि कृतभक्तप्रत्याख्यानस्य तामभ्यु-पगतमरणसमुद्रतीरप्राप्तत्वविषयां श्रद्धां दीपयति।

भा. [४३३४] देहवियोगो खिप्पं वहेज्ज अहवा वि कालहरणेणं।
दोण्हंपि निज्जरा वद्धमाणगच्छो उ एयट्ठा ॥

वृ. तस्य कृतभक्तप्रत्याख्यानस्य देहवियोगः क्षिप्रं वा भवेदथवा कालहरणेन तथापि स्वस्व-नियोगयुक्तैस्तैर्भवितव्यं, एवं च द्वयानामपि प्रतिचारकाणां प्रतिचर्यस्य च प्रवर्धमाना निर्जरा कर्मनिर्जरा भवति, । गच्छो ह्येतदर्थं परस्परोपकारेणोभयेषां निर्जरा स्यादित्येमर्थमासेव्यते गतं परित्रान्तद्वारमधुना निर्जराद्वारमाह-

भा. [४३३५] कम्ममसंखेज्जभवं खवेइ अनुसमयमेव आउत्तो।
अन्नतरगम्मि जोगे सज्झायंमी विसेसेणं ॥

वृ. अन्यतरस्मिन् योगे प्रतिलेखनादिरूपे आयुक्तः उपयुक्तः सन् अनुसमयमेव प्रतिक्षणमेव कर्म असंख्येयभवोपार्जितं क्षपयति, । कर्मणोऽनन्तकालमनवस्थानाभावदसंख्येनभवमित्युक्तं स्वाध्याये पुनरायुक्तः सन् विशेषेण कर्म क्षपयति।

भा. [४३३६] कम्ममसंखेज्जभवं खवेई अनुसमयमेव आउत्तो।
अन्नतरगंमि जोगे काउस्सग्गे विसेसेणं ॥

भा. [४३३७] कम्ममसंखेज्जभवं खवेइ अनुसमयमेव आउत्तो।

अन्नतरगंमि जोगे वेयावच्चे विसेसेण ॥

भा. [४३३८]　　कम्ममसंखेज्जभवं खवेइ अनुसमयमेव आउत्तो ।
अन्नतरगंमि जोगे विसेसउ उत्तमट्ठंमि ॥

वृ. गाथात्रयमपि प्राग्वत् । नवरमुत्तमार्थे प्रतिपन्नस्य वैयावृत्ये च विशेषतः कर्मनिर्जरा भवतीति विशेषत उभयत्रापि यतितव्यं । निर्जराद्वारं संस्तारकद्वारमाह--

भा. [४३३९]　　संथारो उत्तमठे भूमीसिलाफलगमादि नायव्वा,
संथारपट्टमादी दुगवीराई बहूवानि ॥

वृ. उत्तमार्थे व्यवस्थितस्य संस्तारको दातव्यो भूमिर्भूमिरूपः, शिला वा प्रधानशिला तलरूपः । एतौ द्वावपि अस्फुटता च झुषिरौ कर्तव्यौ, तत्र स्थितो वा निपन्नो वा यथासमाधि तिष्ठतु, फलकं वा संस्तारको ज्ञातव्यः । तच्च फलकमेकाङ्गिकमानेतव्यं, तस्याभावे द्व्यादि फलकात्मकः । तस्याप्यभावे निरन्तरकं त्यात्मको ज्ञातव्यः एतत् आदिशब्दस्य व्याख्यानं, । इदानीमास्तरणमाह--संस्तारकोत्तरपट्ट इत्येतत्प्रस्तरणमुत्सर्गतो अपवादत आह-बहूवानि यदि सोत्तरपट्टसंस्तारकमात्रे तस्यासमाधिरुपजायते तदा बहून्यपि प्रस्तार्यते तस्य कल्पप्रभृतीति -

भा. [४३४०]　　तह वि असंथरमाणे कुसमादीणिसु अझुसिरतणाई ।
ते ससइ संथाराण झुसिरतणाइ ततो पच्छा ॥

वृ. अथ कल्पप्रभृति संस्तरणेपि तस्यासमाधिरुपजायते तत्रा कुशादीनि दर्भादीनि अझुषि-राणि तृणानि प्रस्तार्यन्ते, । तेषामसत्यभावे २६ असंस्तरणे वा सति ततः पश्चात् झुषिराणि अपि तृणान्यानीयन्ते ।

भा. [४३४१]　　कोअव पावारग नवय तूलिआलिंगिनी अभूमीए ।
एमेव अनहियासे संथारमाइपल्लंके ॥

वृ. यदि तृणेष्वपि प्रस्तारितेषु न समाधिस्तदा कोयवो देअट्ठीए प्रस्तार्यंते तत्रापि समाधि-रनुत्पादे प्रावरणकस्तत्राप्यसमाधौ नवतं जीर्णं तत्रापि समाध्यलाभे तूली आलिङ्गिनी चोभयतः प्रस्तार्यते । एतत्सर्वं भूमौ कर्तव्यमथैवमपि नाध्यास्ते न समाधिं प्राप्नोति तदा संस्तारकादि--पूर्वक्रमेण पल्यङ्के प्रस्तारणीयं यावत्पर्यन्ते तूलिका उभयते आलिङ्गिनी वा गतं संस्तार कद्वारमिदानीमुद्वर्तनादिद्वारमाह-

भा. [४३४२]　　पडिलेहणसंथारं पानगउव्वत्तणाइ निग्गमनं ।
सयमेव करेइ सहू असहूस्स करेंति अन्नेउ ॥

वृ. यो कृतभक्तप्रत्याख्या सहः समर्थःस स्वयमेवात्मीयस्योपकरणस्य प्रत्युपेक्षणं संस्तारकं संस्तारकप्रदानं पानकं पानकरणमुद्धर्तनादि उद्वर्तनाप्रवर्तनेऽन्तः प्रदेशात् बहिः प्रदेशादन्तः प्रवेशनं करोति । असहस्य असमर्थस्य पुनः अन्ये सर्वं कुर्वन्ति, कथमित्याह-

भा. [४३४३]　　कायोवचितो बलवं निक्खमणपवेसणं च से कुणइ ।
तह अविसहमाणं संथारगयं तु संचारे ॥

वृ. कायेन(यो)शरीरेणोपचितो बलवान् स तस्यान्तः प्रदेशाद्बहिर्निष्क्रमणं बहिःप्रदेशान्तः प्रवेशनं करोति, च शब्दादन्यच्चोद्वर्तनादिकं प्रवर्तनादिकं संचार्यमाणोऽपि सोऽवष्टंभतः संचार्यते ।

अथ तथापि स न त्रिसहते न समाधिं प्राप्नोति तदा तं तथाप्यविषहमाणं संस्तारगतं संचारयन्ति-

भा. [४३४४] संथारो मउओ तस्स समाहिहेउं तु होइ कायव्वो।
तह वि य अविसहमाणो समाहिहेउं उदाहरणं ॥

वृ. समाधिहेतोः समाधेरुत्पादनाय यस्तस्य संस्तारको मृदुको भवति कर्तव्यो यावत्पल्यङ्क तुल्या आलिङ्गनपट्टिकायाश्च समास्तरणमिति तथापि अविषहमाणे समाधिमलभमाणे समाधिहेतोः समाधिसम्पादनाय इदं वक्ष्यमाणमुदाहरणं प्रोत्साह्यते ऽनेनेत्युदाहरणं प्रोत्साहनं कर्तव्यं।

भा. [४३४५] धीरपुरिसपन्नत्ते सप्पुरिसनिसेविए परमरम्मे।
धन्ना सिलायलगया निरवेयक्खा निवज्जन्ति ॥

वृ. धन्याः केचन धीरपुरुषप्रज्ञप्ते तीर्थकरगणधरप्ररूपिते सत्पुरुष निषेविते तीर्थंकरादि भिरासेविते परमरम्ये शिलातले गता व्यवस्थिता निरपेक्ष्याः परापेक्षारहिता निर्वाप्यन्ते नितरामभ्युद्यतमरणं प्रपद्यन्ते।

भा. [४३४६] जति ताव सावयाकुल गिरिकंदर विसमकडयदुग्गेसु।
सोहित्ति उत्तिमट्ठं धितिधणियसहागया धीरो ॥

भा. [४३४७] किं पुन अनगारसहायगेण अन्नेनं संगहबलेन।
परलोइए न सक्का साहेउं उत्तमो अट्ठो ॥

वृ. यदि तावत् धृतिरेव केवला धणियमत्यर्थं सहायो येषां ते धृतिधनिनः सहायका धीराः श्वापदाकुलेषु गिरिकन्दरेषु विषमेषु कटकेषु विषमेषु च दुर्गेषु उत्तमार्थं साधयन्ति। किं पुनरनगारसहायकेन परलोकेन परलोकार्थिनो अन्योन्यसंग्रबलेन शक्य साधयितुमुत्तमार्थः इति

भा. [४३४८] जिनवयणमप्पमेए महुरं कन्ना हुतिं सुणेतूणं।
सक्का हु साहू मज्झे संसारमहोयहिं तरिउं ॥

वृ. जिनवचनमप्रमेयं मधुरं ललितपदविन्यासात्मकत्वात् कर्णयोराहुतिमिव कर्णाहुतिं पावकस्य घृताहुतिरिव कर्णयोराप्या(प्या)यमिति भावः शृण्वतां साधुमध्ये स्थितानां अक्लेशेन शक्यः संसारमहोदधिः तरितुमिति।

भा. [४३४९] सव्वे सव्वद्धाए सव्वन्नू सव्वकम्मभूमीसु।
सव्वगुरु सव्वमहिया सव्वे मेरुंमि अहिसित्ता ॥

भा. [४३५०] सव्वाहिं वि लद्धीहिं सव्वे वि परीसहे पराइत्ता।
सव्वे वि य तित्थयरा पातोवगया उ सिद्धिगया ॥

वृ. सर्वे सर्वज्ञाः सर्वासुकर्मभूमिषु सर्वस्यामद्धायामतीतानागतरूपायां सर्वगुरवः सर्वमहिताः सर्वे मेरावभिषिक्ताः सर्वे आमर्पौषध्यादिभिलब्धिभिरुपेताः सर्वे च तीर्थकराः तीर्थप्रवर्तनशीलाः सर्वान् परीषहान् पराजित्य पादपोपगताः सिद्धिं गताः।

भा. [४३५१] अवसेसा अनगारा अतीय पडुप्पन्नणा गया सव्वे।
केइ पादोवगया पच्चक्खाणं गिणिं केई ॥

वृ. सर्वेऽपि च अनगाराः अतीताः प्रत्युत्पन्ना अनागताश्च केचित्प्रथमसंहननोपेताः पादपोपगताः केचित्प्रत्याख्यानं भक्तपरिज्ञां केचिदिङ्गिनीं प्रतिपन्नाः।

भा. [४३५२] सव्वातो अज्जातो सव्वे वि य पढमसंघयण वज्जा।
सव्वे य देसविरया पच्चक्खाणेण उ मरंति ॥

वृ. सर्वा अप्यार्यिकाः सर्वेऽपि च प्रथमसंहननवर्जाः सर्वेऽपि च देशविरताः प्रत्याख्यानेन भक्तपरिज्ञारूपेण वा म्रियंते।

भा. [४३५३] सव्वसुहप्पभवा उ जीवियसारा उ सव्वजनगातो।
आहाराउ रयणं न विज्जइ हु उत्तमं लोए।

वृ. सर्वस्य सुखस्य प्रभव उत्पादकारणं सर्वसुखप्रभवस्तस्मात् जीवितसारादन्नं वै प्राणा इति वचनात्सर्वस्य गतो जनकः तस्मादाहारमन्तरेण कस्याप्युत्पत्तेरभावात्। इत्थंभूतादाहाराद्, अन्यदुत्तमं रत्नं लोके न विद्यते किन्त्वाहार एव सर्वोत्तमं रत्नं रत्नत्वमेव भावयति।

भा. [४३५४] विग्गहगए य सिद्धे य मोत्तुं लोयंमि जत्ति या जीवा।
सव्वे सव्वावत्थं आहारे हुंति उवउत्ता ॥

वृ. विग्रहगतान् विग्रहगत्यापन्नान् सिद्धांश्च मुक्त्वा शेषा यावन्तो लोके जीवास्ते सर्वे सर्वावस्थं सर्वास्ववस्थास्वाहारे उपयुक्ता भवन्ति। तत आहारः परमन्नम्।

भा. [४३५५] तं तारिसयं रयणं सारं जं सव्वलोअरयणाणं।
सव्वं परिच्चइत्ता पादोवगया पविहरंति ॥

वृ. यत्सर्वलोके रत्नानां मध्ये सारं तेषु सत्स्वपि तृप्तेरभावात् आहाररूपं रत्नं तत्तादृशं सर्वं परित्यज्य धन्याः पादपोपगताः प्रविहरन्ति।

भा. [४३५६] एयं पादोवगमं निपरिकम्मं जिनेहिं पन्नत्तं।
जं सोऊण खमओ ववसायपरक्कमं कुणइ ॥

वृ. एतत्पादपोपगमं मरणं जिनैर्निःप्रतिकर्मं प्रज्ञप्तं यत् श्रुत्वा क्षपको व्यवसायपराक्रमं करोति। गतमुद्वर्तनादिद्वारमधुना सारेऊण य कयमितिद्वारव्याख्यानार्थमाह-

भा. [४३५७] कोई परीसहेहिं वाउलि वेयणाट्टिउ वावि।
उहासेज्जकयाती पढमं बितीयं च आसज्ज ॥

वृ. कश्चित्प्रथमाद्वितीयपरीषहाभ्यां व्याकुलितो ध्यानाच्चालितो यदि वा वेदनया पीडया अर्दितः पीडितोऽवभाषेत याचेत्कदाचित् प्रथममनशनं द्वितीयं वा पानकमासाद्याधिकृत्य ततः किं कर्तव्यमत आह-

भा. [४३५८] गीयत्थमगीयत्थं सारेउं मतिविबोहणं काउं।
तो परिबोहयछट्ठे पढमे पगयं सिया बिइए ॥

वृ. स भक्तप्रत्याख्यानः कदाचित् प्रान्तदेवतयाधिष्ठितोवभाषेत, ततः परिज्ञानमित्तं स्मरणं कारयितव्यः भण्यते त्वं गीतार्थोऽगीतार्थो वा अथवा दिवसो वर्त्तते रात्रि वा तत्र यदि समस्त-मवितथं ब्रूते, तदा ज्ञायते न प्रांतदेवतयाधिष्ठितः किन्तु परीषहत्याजितो याचते, तदेवं गीतार्थ-मगीतार्थं चात्मानं स्मारयित्वा स्मरणोत्पादनेन यथावस्थितमतिविबोधनं कृत्वा ततः प्रतिबोध्य षष्ठे रात्रिभोजने प्रथमे अशने प्रकृतं स्यात्। द्वितीये वा पानके विमुक्तं भवति। अशने पानके च याचिते तस्य भक्तपानात्मकः कवचभूत आहारो दातव्यः। अथ किं कारणं प्रत्याख्याप्य

पुनराहारो दीयते। तत आह

भा. [४३५९] हंदि परीसहचमू जोहेयव्वा मणेण काएण।
तो मरणदेसकाले कवयभूओ उ आहारो ॥

वृ. हंदीति चोदकामन्त्रणे! हे चोदक परीषहचमूः परीषहसेना मनसा कायेनोपलक्षणमेतत् वाचा च योधेन योधयितव्या ततस्तस्याः पराजयनिमित्तं मरणदेशकाले मरणसमये योधस्य कवचभूत आहारो दीयते। एतदेव बिभावयिषुरिदमाह-

भा. [४३६०] संगामदुगं महसिलरहं मुसले चेव परूवणा।
असुरसुरिंदावरणं, चेडग एगो गहं सरस्स ॥

वृ. चेटकस्य कोणिकस्य च परस्परं विग्रहे कोणिकपक्षे संग्रामद्वयमसुरेन्द्रोऽमरः कृतवान् तद्यथा- महाशिलाकंटकं रथमुशलं च तस्य प्ररूपणा-यथा व्याख्याप्रज्ञप्तौ तथा कर्तव्या। असुरेन्द्रेण च शक्रेण कोणिकस्यावरणं कृतं कठिनवज्रमयप्रतिरूपके स क्षिप्त इत्यर्थः। ततश्चेटकस्य एकः सारथिः कोणिकवधाय शरस्य कनकप्रवहणविशेषरूपस्य यद्ग्रहं कृतवान्।

भा. [४३६१] महसिलकंटे तहियं वट्टंते कोणिउ उरहिएण।
रुक्खग्गविलग्गेण पट्ठे पहउ उ कनगेणं ॥

भा. [४३६२] उप्फिडिउ सो कनगो कवयावरणंमि तो तउ पडिउ।
तो तस्स कोणिएण सीसं छिन्नं खुरप्पेणं ॥

वृ. ततो महाशिलाकण्टके संग्रामे वर्तमाने कोणिकश्चेटकस्य रथिकेन निरन्तरशरमोक्षणतः आच्छादितः परं ते सर्वेऽपि शराः कठिनप्रतिरूपकेऽभ्यत्य बहोः पतितं ततो वृक्षमारुह्य तद्विलग्नेन कोणिकः पृष्ठे कनकेन प्रवहणविशेषेण प्रहतः सोऽपि कवचावरणे कठिनप्रतिरूपके उत्स्फट्य पतितः ततः कोणिकेन तं तथाध्यवसायं वृक्षविलग्नमवलोक्य कोपावेशात्तस्य शिरः क्षुरप्रेण च्छिन्नम्।

भा. [४३६३] दिट्ठंतस्सोवणउ कवयत्थाणी इहं तहाहारो।
सत्तू परीसहा खलु आराधनरज्जथाणीया ॥

वृ. एषो अनन्तरोदिषो दृष्टान्तोऽयं तस्योपनयः-कवचस्थानीय इह तथा रूप आहारः, शत्रवः परीषहा राज्यस्थानीया आराधना यथा शत्रुपराजयाय कवचमारोप्यते सङ्ग्रामे, तथा परीषहजयाय चरमकाले दातव्य आहारः। अत्रैव दृष्टान्तान्तरमाह-

भा. [४३६४] जह वा उंढिय पादे पाउं काउण हत्थिणो पुरिसे।
आरुहइ त(ह)प्परिण्णी आहारेणं तु ज्झाणवरं ॥

वृ. यथा वा कोऽपि हस्तिनमारोढुमशक्तो हस्तिनं पादमाकुञ्चापयति, आकुञ्चाप्य तस्मिन् पादे आत्मीयं पादं कृत्वा हस्तिनमारोहति तथा परिज्ञी भक्तपरिज्ञावान् आहारेण ध्यानवरमुत्तमं ध्यानमारोहति।

भा. [४३६५] उवकरणेहिं विहूणो जह वा पुरिसो न साहए कज्जं।
एवाहार परिण्णी दिट्ठंता तत्थिमे हुंति ॥

वृ. यथा पुरुष उपकरणैर्दात्रादीभिर्विहीनो न साधयति लघनादिकं कार्यमेवमाहारमन्तरेण

परिज्ञी भक्तपरिज्ञावान् परीपहपराजयं, तत्रेमे वक्ष्यमाणा दृष्टान्ता भवन्ति। तानेवाह-

भा. [४३६६] लावए पावए जोहे संगामे पंथगेवि य।
आउरे सिक्खए चेव दिट्ठंतो कवएत्ति य ॥

भा. [४३६७] दात्तेण नावाए आउह पहेणोसहेहिं च।
उवकरणेहिं च विना जह संखमसाहगा सव्वे ॥

वृ. यथा प्रथमश्लोकोक्ता लावकादयः सर्वे यथासंख्यं दात्रादिभिर्द्वितीयगोथोक्तैर्विना न साधकास्तयाहि लावको दात्रेण विना लवितुं न शक्नोति प्लोवको नावा विना नद्यादिकं लङ्घयितुं, संग्रामयोध आयुधैर्विनाशत्रुपराजयं, पथिकः पन्थानं गन्तुं उपानम्द्यां विना, आतुरः प्रगुणी भवितुमोषधैर्विना, शिष्यको वादित्रकर्मादि वादित्रादिभिरुपकरणैर्विना।

भा. [४३६८] एवाहारेण विना समाहिकामो न साहए समाहिं।
तम्हा समाहि हेउ दायव्वो तस्स आहारो ॥

वृ. एवं समाधिकाम आहारेण विना समाधिं न साधयति यस्मात्समाधिहेतोस्तस्याहारो दातव्यः। अत्राक्षेपपरिहारावाह-

भा. [४३६९] सरीरमुज्झियं जेनं को संगो तस्स भोयणे।
समाधिसंधणा हेउं दिज्जए सो उ अन्नए ॥

वृ. अथ येन शरीरमुज्झितं तस्य भोजने कः संयोगो येन तत् याचते, उच्यते न च जीविता-शनिमित्तमाहारं याचते, किन्तु समाधिमसहमानस्तत एतदस्माभिर्ज्ञात्वा मा तस्यासमाधेर्व्याघातो भूयादिति समाधिसन्धानहेतोः आहारे अन्तःसमये दीयते केन विधिनेत्यत आह-

भा. [४३७०] सुद्धं एसित्तु ठ्वेंत्ति हानीतो वा दिने दिने।
पुव्वुत्ताए उ य जयणाए तं तु गोवेंति अन्नेहिं ॥

वृ. शुद्धमुद्गमादिदोषरहितमेषित्वा गवेषित्वा स्थापयन्ति। हानौ वा शुद्धलाभे दिने दिने पूर्वोक्तया पञ्चकहानिलक्षणया यतनया गवेषयित्वा तत् अन्यत्र गोपयन्ति गोपयित्वा यदि प्रतिदिनसंशुद्धस्य यतनया वा अलाभे पर्युषितमपि क्रियते। ततो यथावसरं प्रयच्छन्ति।

भा. [४३७१] निव्वाघाएणेवं कालगए विगिंचणाए विहि पुव्वं।
कायव्वं चिंधकरणमचिंधकरणे भवे गुरुवा ॥

वृ. एवमुक्तेन प्रकारेण निर्व्याघातेन व्याघाताभावेन कालगते तस्य विधिपूर्वं विवेचना परिष्ठापना कर्तव्या, तथा कर्तव्यम् चिह्नकरणमचिह्नकरणे चिह्नकरणस्याभावे प्रायश्चित्तं चत्वारो गुरुकाः। तच्च चिह्नकरणं द्विधा शरीरे उपकरणे च तत्र शरीरे भक्तं प्रत्याख्यानुकामेन क्रियते चोलपट्टश्चाग्रतो मुखे च मुखपोतिका चिह्नकरणाभावे दोषानाह-

भा. [४३७२] सरीरे उवगरणंमि य अचिंधकरणंमि सो उ राइनिओ।
मग्गणगवेसणाए गामाणं घायणं कुणइ ॥

वृ. शरीरे उपकरणं च अचिह्नकरणे चिह्ने अकृते ऽयमन्यो दोषः। स कालगतो रत्नाधिकः स्यात्। तं चाकृतचिह्नं भद्राकृतं दृष्ट्वा केचित् गृहस्थाश्चिन्तयन्ति केनाप्यप गृहस्थो बलात्कारेण मारयित्वा व्यक्तः। ततस्तैर्दण्डिकस्य कथितं सोऽपि दण्डिकः श्रुत्वा कैश्चिन्मारितो भवेदिति

तेषां मार्गणगवेषणार्थे तत्प्रत्यासन्नग्रामाणां पञ्चानां दशानां वा भ्रमतन दण्डनं कुर्यात्।

सम्प्रति अन्तर्बहिर्व्याघात इति द्वारमाह-

भा. [४३७३] न पगासिज्ज लहुत्तं परीसह उदएण हुज्ज वाघातो।
उप्पन्ने वाघाते जो गीयत्थाण उववातो ॥

वृ. स भक्तप्रत्याख्याता गृहिणां न प्रकाश्यते। यतः कदाचित्परीषहस्योदयेन प्रत्याख्यानस्य व्याघातो विलोपः स्यात्, ततः समस्तस्यापि प्रवचनस्य लघुता जायते, उत्पद्यते च व्याघाते यो गीतार्थानामुपायः स प्रयोक्तव्य इति वाक्यशेषः।

भा. [४३७४] को गीयाण उवाओ संलेहगतो उ विज्जए अन्नो।
अत्थहतो जो अन्नो इतरे उ गिलाण पडिकम्मं ॥

भा. [४३७५] वसभो वा ठाविज्जइ अन्नसास्सतीए तंमि संथारे।
कालगउत्तिय काउं संज्झाकालम्मि णीणंति ॥

वृ. भक्तप्रत्याख्याता द्विविध एकोऽनेकश्च। ते द्विविधा ज्ञाता अज्ञाताश्च। ज्ञातो नाम दण्डिकादीनां प्राकृतजनानां च विदितस्वरूपो यथा यावज्जीवमेव भक्त प्रत्याख्यातवान् तद्विपरीतोऽज्ञातः। तत्र यदि ज्ञातो भक्तपरिज्ञां न निस्तरति, तदा को गीतार्थानामुपायः प्रयोक्तव्यः? उच्यते-तदा स जवनिकान्तरितः स्थापितो यो वान्य उत्सहते स स्थाप्यते इतरस्य तु भक्तपरिज्ञाव्याघातवतो ग्लानपरिकर्म क्रियते। अथान्यसंलेखगतो न विद्यते नाप्यन्यः कश्चिदुत्सहते तदान्यस्यासत्यभावे वृषभः स्थाप्यते। तस्मिन् पूर्वभक्तप्रत्याख्यापकसक्ते संस्तारे ततो जवनिकान्तरितया लोकवन्दापनादि यतनया स करोति। यस्तु भक्तपरिज्ञाविलोपवान् सोऽल्पसागारिकमेकांते भ्रियते धृतस्य च ग्यानपरिकर्म तावत् क्रियते यावत् प्रथमालिकां करोति ततो जनमध्ये रात्रौ स कालगत इति प्रकाशः। स्वयं गमनेन सहायप्रदानतो वा सन्ध्याकाले तं निष्काशयन्ति। एतदेव भावयति -

भा. [४३७६] एवं तु नायम्मी दंडगमादीहिं होइ जयणा उ।
सयं गमनपेसणं वा खिसण चउरोनुग्धाया ॥

वृ. एवमुक्तेन प्रकारेण दण्डिकादिभिर्ज्ञायते भवति यतनां ज्ञातव्या प्रथमालिकाकरणे च स्वयं सर्वेषां साधूनां गमनं भवति। यदि वा स सहायस्यान्यत्र तस्य प्रेषणं यस्तु तं भक्तप्रत्याख्यानप्रतिभग्न एष इति तस्य प्रायश्चित्तं चत्वारो मासा अनुद्घाता गुरुकाः। यस्तु न ज्ञातः स यदि न निस्तरति तथापि न प्रवचनस्योड्डाहः। गतं सपराक्रमं भक्तप्रत्याख्यानमपराक्रममाह-

भा. [४३७७] सपरिक्कमे जो उ गमो नियमा अपरक्कमंमि सो चेव।
नवरं पुन नाणत्तं खीणे जंघाबले गच्छे ॥

वृ. सपराक्रमे भक्तप्रत्याख्याने यो गमोऽभिहितः स एवापराक्रमेऽपि नियमाद्वेदितव्यो नवरं पुनरिदं नानात्वमपराक्रमां क्षीणे जङ्घाबले भवति स्वगच्छे च। तथाहि क्षीणजङ्घाबले वृद्धत्वेन मर्तुकामः स गच्छे भक्तं प्रत्याचष्टे। सम्प्रति व्याघातिममाह-

भा. [४३७८] एमेव आनुपुव्वी रोगायंकेहिं नवरि अभिभूतो।
बालमरणंपि सिया मरिज्जउ इमेहिं हेऊहिं ॥

वृ. एवमेवानेनैव प्रकारेणानुपूर्व्या क्रमेण व्याघातिमं प्रतिपत्तव्यं नवरं रोगातंकैरभिभूतः सन् तत् प्रतिपद्यते। एतावान् विशेषः, यदि पुनरेभिर्वक्ष्यमाणैर्हेतुभिर्भ्रियेत तदा तत् व्याघातिमं बालमरणमपि स्यात्। तानेव हेतुनाह-

भा. [४३७९] वालच्छभल्ल विसविसूइकाए आयंकसन्निकोसलए।
उसास गद्ध रज्जु उम सिवे घाए संबद्धो ॥

वृ. व्यालो गोनसादिरच्छभल्लरुक्षो विषं विसूचिकाश्च प्रतीताः आतङ्कक्षयादिव्याधिः संज्ञिकोशलके कोशलश्रावके प्रत्यनीके संजात उच्छ्वासिरोधो गृध्रपृष्टकरणरज्वा तत्कालंबनं अवमे दुर्भिक्षे अशिवे घातो विद्युदादिभिरभिघातः। संबद्धं वातेन हस्तपादादिजातमेतैर्हेतुभिर्व्याघातिमं बालमरणमपि भवति। कथमित्याह-

भा. [४३८०] वालेन गोणसादी खदितो हुज्जा सडितुमारद्धो।
कण्णोडनासिगादी विभंगया वच्छभल्लेहिं ॥

वृ. व्यालेन गोनसादिना स खादितो भवेत्ततः शटितुमारब्धवान् बालमरणमपि कुर्यात्, यदि वा अच्छभल्लेन रुक्षेण कर्णौष्ठनाशिकादीनि विभग्नानि भवेयुस्ततो बालमरणमाश्रयतो विहादिहेतुनाह-

भा. [४३८१] विसेण लद्धो होज्जा वा विसूइगा वा से उट्ठिया।
आयंको वा कोई खइमादी उट्ठिया होज्जा ॥

भा. [४३८२] तिण्णि उ वारा किरिया तस्स कय हवेज्ज नो उ उवसंतो।
जहवोमे कोसलेणं सण्णिणा पंचसयाइं साहूणं ॥

भा. [४३८३] रुद्धाइं अहंजं, भत्तं तु तुज्झ दाहामो,
लाभंतरं च नाउं लद्धेणं धन्नविक्कीयं ॥

वृ. विषेण वा कश्चित् लब्धो भवेत् विसूचिका वा से तस्य उपस्थिता। आतङ्को वा कोऽपि क्षयादिस्तस्योत्थितो भवेत् तस्य च त्रीन् वारान् क्रिया कृता परं नोपशान्तास्ततो बालमरणं प्रतिपद्यते। तथा वा अवमे दुर्भिक्षे कोशलेन संज्ञिना श्रावकेण साधूनां पञ्चशतान्यन्यत्र गच्छन्ति निरुद्धानि, यथाहं भक्तं युष्माकं दास्यामि। तेन च पापीयसा लुब्धेन लाभान्तरालं लाभविशेषं ज्ञात्वा धान्यं विक्रीतं। ततः। किमित्याह-

भा. [४३८४] तेनो उ वितिच्छेयं ऊसासनिरोहमादीनि कयाइ।
अनहीयसि तेहिं तु वेयणसाहूहिं उमंमि ॥

वृ. ज्ञात्वा वृत्तिच्छेदं दुर्भिक्षे वेदनामनध्यासीतैरसद्भानैरुच्छ्वासनिरोधादीनि कृतानि केचिदुच्छ्वासनिरोधकरणोतोऽपरे गृध्रपृष्टकरणतोऽन्ये रज्वा वैहायसविधानतो बालमरणं प्रतिपन्नवन्तः।

भा. [४३८५] अभिघातो वा विज्जु गिरिभित्ती कोणयाइ वा हुज्जा।
संबद्धहत्थपायाइ तेन वातेन होज्जाहिं ॥

वृ. प्रतिघातो विद्युता गिरिभित्तेः पतन्त्या गिरिकोणकाद्वा पततो भवेत्ततो बालमरणमथवा हस्तपादादयो वातेन सम्बद्धा भवेयुः। तत्र आश्रयते बालमरणं तथा चाह-

भा. [४३८६] एएहिं कारणेहिं पंडियमरणं तु काउसमत्थो ।
ऊसासगद्धपट्ठं रज्जुग्गहणं व कुज्जाहि ॥

वृ. एतैरनन्तरोदितैर्व्यालभक्षणप्रभृतिभिः कारणैः पण्डितमरणं यथोक्तप्रत्याख्यानरूपं कर्तुमसमर्था उच्छ्वासनिरोधं गृध्रपृष्ठं रज्जुग्रहणं वा कुर्युः । अथ किमिति ते व्यालभक्षितादय आत्मानं घातयन्ति । उच्यते -

भा. [४३८७] अनुपुव्विहारीणं उस्सग्ग निवाइयाणं जा सोही ।
विहरंतए न सोही भणिया आहारलोवेण ॥

वृ. ये व्यालऋच्छभल्लादि कृतव्याघातरहितास्तेषामानुपूर्व्या ऋतुबद्धे मासकल्पेन वर्षावासुचतुर्मासकल्पेन विहारिणामुत्सर्गं निपातिनामुत्सर्गनिपातिनामुत्सर्गेण संयममनुपालयतां या चारित्रशोधिर्भवति सा व्यालाऋच्छभल्लादि व्याघातवति विहरति न भणिता शोधिर्न भवतीत्यर्थः कस्मान्न भवतीत्यत आह--आहारलोपेन ते हि व्यङ्गत्वादिकारणेन न शक्नुवन्ति परिपूर्णामुत्तरगुणविशुद्धिं कर्तुं, ततो यथावस्थिताहारविलोपतो बालमरणमभ्युपगच्छन्ति तदेवमुक्तं भक्तप्रत्याख्यानमिदानीमिङ्गिनीमरणमाह-

भा. [४३८८] पव्वज्जादी काउं नेयव्वं जाव होत वोच्छित्ती ।
पंचतुलेऊण ततो इंगिनीमरणं परिणओ उ ॥

वृ. प्रव्रज्यादिकं प्रव्रज्याशिक्षाग्रहणं व्रतारोहणमर्थग्रहणमनियतं वासं गच्छस्य परिपूर्णस्य निवृत्तिं गच्छनिर्वृत्तिकरणेन च तीर्थस्याव्यवच्छेदः कृतस्तत आह तावत् ज्ञातव्यं यावद्भवति-(अ) व्यवच्छित्तिः । तत्पर्यन्तं कृत्वा पञ्च च तपः । सूत्रसत्त्वैकत्वबललक्षणानि तोलयित्वा सं इङ्गिनीमरणं परिणतः प्रतिपन्नो भवति । अथ भक्तपरिज्ञातोऽस्यां को विशेष इत्याह-

भा. [४३८९] आयप्परपडिकम्मं भत्तपरिन्नाए दो अनुन्नाया ।
परिवज्जिया इंगिनि चउव्विहाहारविरई या ॥

वृ. भक्तपरिज्ञायां द्वे अपरिज्ञाते तद्यथा-आत्मना स्वयं परिकर्म परेण च, इङ्गिनी पुनः परिवर्जिता परेण परिकर्म न कार्यते तथा भक्तपरिज्ञायां चतुर्विधस्य त्रिविधाहारस्य विरतिर्भवति । इङ्गिन्यां तु नियमाच् चतुर्विधाहारविरतिः । परपरिकर्मविवर्जनमेव भावयति-

भा. [४३९०] ठाणनिसीय तुयट्टण इत्तरियाइं जहा समाहीए ।
सयमेवय सो कुणती उवसग्गपरीसह हियासी ॥

भा. [४३९१] संघयणधितीजुत्तो नवदसपुव्वा सुएण अंगा वा ।
इंगिनिपातोवगमं नीहारी वा अनीहारी ॥

वृ. स्थानमूर्ध्वस्थानं, निषदनमुपवेशनं, त्वग् वर्तनं शयनं, एतानि, चत्वारकाणि स यथा समाधिः स्वयमेव करोति न तु परतः कारयति । तथा दीव्यादीन् उपसर्गान् चक्षुरादिपरीषहांश्च सम्यगभ्यास्ते सहते, । तथाहि-चतुर्विधाहारप्रत्याख्यानान्नास्यपानकमपि भवति, नाप्यपवादतश्चरमाहारदानमिति तथा संहनने तु त्रयाणामाद्यानामन्यतमेन धृत्या च युक्तास्तथा श्रुतेन सूत्रतो यस्य पूर्वाणि नव दश वा केवलानि अङ्गानि स इङ्गिनीमरणं प्रतिपद्यते । गतमिङ्गिनीद्वारमधुना

पादपोपगमनमुच्यते तदपि प्रव्रज्यादितीर्थाव्यवच्छेदपर्यन्तं कृत्वा पञ्च तपः सूत्रादि तोलयित्वा च प्रतिपद्यते। तत्र नियमतो निःप्रतिकर्म निश्चलंया,तथाहि-ऊर्ध्वस्थानेन उपवेशनेन पार्श्वेण वाऽन्येन वा येन स्थानेन स्थितः स यावज्जीवमपि तेन स्थानेन तिष्ठति न पुनरन्यत्स्थानं तस्य कर्तुं तस्य स्वप्रयोगेण कल्पते। तच्च द्विधा-निर्हारिमं नाम यत् ग्रामदीनामन्तः प्रतिपद्यते ततो हि मृतस्य स ततस्तस्य शरीरं निष्काशनीयं भवति। अनिर्हारितं नाम यत् ग्रामादीनां बहिः प्रतिपद्यते,। सम्प्रति पादपोपगमस्य निरुक्तमाह-

भा. [४३९२] पातोवगमं भणियं समविसमे पायवो जहा पडितो।
नवरं परप्पउगा कंपेज्ज जहा चल तरुव्व ॥

वृ. पादपपोगमं नाम भणितं यथा समे विषमे वा पादपः पतितस्तथैवावतिष्ठते तथा यो यथा समे विषमे वा पतितः स यावज्जीवं तथा तिष्ठति। नवरं परप्रयोगात् कम्पेत यथा तरुः परप्रयोगाच्चलः। पादपस्येवोपगमोऽभ्युपगमः पतनस्य यत्र तत्तथेति व्युत्पत्तिः।

भा. [४३९३] तसपाणबीयरहिए विच्छिन्नवियार थंडिल विसुद्धे।
निद्दोसा निद्दोसे अवेंति अब्भुज्जया मरण ॥

वृ. विशुद्धे स्थण्डिले निर्दोषे निर्दोषत्वमेवाह-त्रसप्राणबीजरहितेऽविस्तीर्णविचारे विपुलप्रचारे यत्र कृष्यमाणस्याप्यस्थण्डिलगमनदोषा न भवन्ति। तत्र निर्दोषाः साधवोऽभ्यु-द्यतमरणं पादपोपगमनमरणमुपयन्ति प्रतिपद्यन्ते।

भा. [४३९४] पुव्वभवियवेरेणं देवो साहरति कोवि पायाले।
मासो चरमसरीरो न वेयणं किंचि पाविहिति ॥

वृ. पूर्वभवकर्मवैरेण कोऽपि देवस्तं प्रतिपन्नपादपोपगमनं पातालकलशेषु संहरेत्। नासौ चरमशरीर न कांचिदपि वेदनां प्राप्स्यतीति कृत्वा स तथा हृतः सम्यक् तमुपसर्गं सहते। न केवलमेनमन्यानापि तथा चाह-

भा. [४३९५] उत्पन्ने उवसग्गे दिव्वे मानुस्सए तिरिच्छे य।
सव्वे पराइणित्ता पाओवगया परिहरंति ॥

वृ. उत्पन्नान् उपसर्गान् दिव्यान्मानुषान् तैरश्चांश्च सर्वान् पराजित्य पादपोपगताः प्रवितरन्ति।

भा. [४३९६] जह नाम असीकोस अन्नो कोसे असीवि खलु अन्ने।
इय मे अन्नो देहो अन्नो जीवोत्ति मन्नंति ॥

वृ. यथा नाम असिः खङ्गं कोशे प्रत्यागारे वर्तते। तत्रान्यः पृथग् खलु कोशोऽन्यो असि-रिति। एवममुना दृष्टान्तप्रकारेण ममान्यो देहोऽन्यो जीवः पर अ प्रभवति देहेन जीव इति न काचिन्मे क्षतिरिति मन्यते। तथा मननाच्च सम्यक् उपसर्गान् सहते।

भा. [४३९७] पुव्वावरदाहिणउत्तरेहिं वाएहिं आवयंतेहिं।
जह न वि कंपइ मेरू तह ते ज्झाणाओ न चलंति ॥

वृ. यथा मेरुः पूर्वापरदक्षिणोत्तरैर्वा तैरापतद्भिर्न च कम्पते तथा ते पादपोपगता उपसर्ग-निपातेऽपि ध्यानान्न चलन्ति।

भा. [४३९८] पढमंमि य संघयणा वट्टंतो सेलुकुड्डु समाणा।

तेसिं पिय वुच्छेदो चोद्दसपुव्वीण वुच्छेए ॥

**वृ.** प्रथमे च ऋषभनाराचलक्षणसंहनने वर्तमाना धृत्या शैलकुड्यसमानाः पादपोपगमनं प्रतिपन्नाः पादपोपगमनं प्रतिपद्यन्ते। तेषामपि च पादपोपगमप्रतिपत्तॄणां चतुर्दशपूर्विव्यवच्छेदे व्यवच्छेदो भवेत्।

भा. [४३९९] दिव्वमनुया उ दुग तिग अस्से पक्खेवगं सिया कुज्जा।
वोसट्ठ चत्तदेहो अहाउयं कोइ पालेज्जा ॥

**वृ.** देवा मानुष्या वा अनुलोमानि प्रतिलोमानि वा द्रव्याणि द्विकमनुलोमप्रतिलोमलक्षणो-भयसहितं तदेवत्रिकमथवा सचित्तमचित्तं वा द्विकं तदेव हि मिश्रसहितं त्रिकं तस्य द्विकस्य त्रिकस्यवा आस्ये मुखे प्रक्षेपं कुर्युः। स तेन द्वारेण मुखे प्रक्षिप्तेन व्युत्सृष्टः प्रतिबन्धाभावत-स्त्यक्तपरिकर्मकरणतो देहो येन स व्युत्सृष्ट त्यक्तदेहः। कोऽपि यथायुर्यथावस्थितमात्मीयमायुः पालयति द्विकत्रिकाहारव्याख्यानार्थमाह-

भा. [४४००] अनुलोभा पडिलोमा दुगं तु उभयसहिया तिगं होंति।
अहवा चित्तमचित्तं दुगं तिगं मीसगसमग्गं ॥

**वृ.** अनुलोमानि द्रव्याणि प्रतिलोमानि चेति द्विकं तान्येवोभयसहितानि त्रिकमथवा सचित्त-मचित्तमिति द्विकं तदेव मिश्रसमग्रं त्रिकमिति।

भा. [४४०१] पुढविदग अगनिमारुय वणस्सइ तासु कोवि साहरइ।
वोसट्ठचत्तदेहो अहाउयं कोवि पालेज्जा ॥

**वृ.** कोऽपि पादपोपगमं प्रतिपन्नं पृथिव्यां पृथिवीकायमध्ये उदके अप्काये ऽग्नौ मारुते वायुकाये वनस्पतिषु त्रसेषु च संहरन्ति। स च तथा संहृतो व्युत्सृष्टत्यक्तदेहो यथायुः कोऽपि पालयति।

भा. [४४०२] एगंतनिज्जरा से दुविहा आराधना धुवा तस्स।
अंतकिरियं व साहू करेज्ज देवोववत्तिं वा ॥

**वृ.** एकान्तेन स तथास्थितस्य निर्जरा भवति तथा तस्य ध्रुवा द्विविधा सिद्धिगमनयोग्या कल्पोपपत्तियोग्या चाराधना यया साधुरन्तक्रियां वा कुर्यात् देवोपपत्तिं वा।

भा. [४४०३] मज्जणगंध पुप्फोवयार परिचारणं सिया कुज्जा।
वोसट्ठ चत्तदेहो अहाउयं कोइ पालेज्जा ॥

**वृ.** केचित् रूपातिशयलुब्धाः तस्य कृतपादपोपगमस्य मज्जनं स्नानं ततः पटवासादिगन्धं तदनन्तरं पुष्पोपचारं ततः परिचारणं गले लगित्वा परिशयनपरिचुम्बनादिरूपं स्यात्। कदाचित् कुर्यात्। तत्र स व्युत्सृष्टत्यक्तदेहो यथायुः कोऽपि पालयति। अरिक्तद्विष्टः सन सम्यक्तत्सहमानो यावज्जीवमवतिष्ठते।

भा. [४४०४] पुव्वभविय पेम्मेण देवो देवकुरु उत्तरकुरासु।
कोई तु साहरेज्ज सव्वसुहार जत्थ अनुभावा ॥

**वृ.** पूर्वभविकेन पेम्णा कोऽपि देवो यत्र अनुभवाः सर्वे शुभास्तासु देवकुरुषूत्तरकुरुषु वा संहरेत्। स च तथा तत्र संहृतो व्युत्सृष्टत्यक्तदेहो यथायु कोऽपि पालयति।

भा. [४४०५] पुव्वभवियपेम्मेणं देवो साहरइ नागभवणंमि।
जहियं इट्ठा कंता सव्वसुहा होंति अनुभावा॥

वृ. पूर्वभविकेन प्रेम्णा कोऽपि देवो यत्र सर्वेषु शुभा अनुभावा इष्टाः कान्ताश्च भवन्ति। तत्र नागभवने संहरेत्। सोऽपि तत्र तथैवावतिष्ठते।

भा. [४४०६] बत्तीसलक्खणधरो पातोवगतो य पागडसरीरो।
पुरिसव्वेसिणि कण्णा राइ विइण्णा उ गेण्हेज्जा॥

वृ. द्वात्रिंशल्लक्षणधरः पादपोपगतः सन् प्रकटशरीरो जातस्तं पुरुषद्वेषिणी कन्या राजवितीर्णा राज्ञा अनुज्ञाता सती गृह्णीयात्। गृहीत्वा किं करोत्यत आह-

भा. [४४०७] मज्जनगंधं पुप्फोवयारपरिचारणं सयं कुज्जा।
वोसट्ठ चत्तदेहो अहाउयं कोवि पालेज्जा॥

वृ. अस्य व्याख्या प्राग्वत्। तथा-

भा. [४४०८] नवंगसुत्त परिबोहियाए अट्ठारसतिविसेसकुसलाए।
बायत्तारिकला पंडियाए चोसट्ठि महिलागुणेहिं॥

वृ. द्वे अक्षीणि द्वौ कर्णौ द्वौ नाशापुटौ द्विजिह्वा स्पर्शने नवमं मनः। एतानि नव अङ्गानि यावदद्यापि यौवनं न भवति तावत्सुप्तानि भवन्ति। न खलु तदानीमेतेषामतीवाऽभिष्वङ्गा सुखं भवति, ततः सुप्तानीति व्यपदिश्यन्ते। यौवने तु प्राप्तकलस्य गुणेन प्रतिबुद्धानि जायन्ते। नवाङ्गानि सुप्तानि प्रतिबोधितानि यया सा तथा तया तथा अष्टादश देशीभाषास्तासु मध्ये यस्य यत्र कामरतिविशेषस्तत्र कुशलतया तथा द्वासप्ततिकलापण्डितया चतुःषष्ट्या महेलागुणैरुपेतया, नवाङ्गादि व्याख्यानं तावदाह-

भा. [४४०९] दो सोआ नेत्तमादी नवंग सुत्ता हवंती एए उ।
देसी भास ट्ठारसती विसेसा उ इगवीसं॥

भा. [४४१०] कोसल्लमेकवीसंइविहं तु गुणेहिं जुत्ताए।
रूवजोव्वणविलास लावन्नकलियाए॥

वृ. द्वे श्रोत्रे द्वे नेत्रे आदिशब्दान्नाशात्नाशापुटद्वयजिह्वास्पर्शन मनसां परिग्रह एतानि नवकं नवसंख्यानि सुप्तानिभवंति, देशीभाषा अष्टादश ताः शास्त्रप्रसिद्धा रतिविशेष एकोनविंशति तमः,। तत्र कोशलमेकविंशतिविधं शास्त्रप्रसिद्धं। एवमादिभिर्गुणैर्युक्तया तथा रूपयौवन-विलासलावण्यकलितया च।

भा. [४४११] चउकण्णंमि रहस्से रागेणं रायदिन्नपसराए।
तिमिमयरेहिं च उदही, न खोभिओ जो मनो मुनित्तो॥

भा. [४४१२] जाहे पराजिया सा न समत्था सीलखंभणं काउं।
नेऊण सेलसिहरं तो से सिलमुंचाए उवरिं॥

वृ. चतुःकर्णे रहस्ये रागेणानुरागेण राजदत्तप्रसराया गृह्यते गृहीत्वा चानेकप्रकारसंक्षोभ आपद्यते तत्र यन्मुनेर्मनस्तत् न याति। तिमिमकरैर्वोदधिर्न क्षोभितः ततो यदा सा पराजिता न शीलखण्डनं कर्तुं समर्था तदा रोषात् शैलशिखरं नीत्वा से तस्योपरि शिलां मुञ्चति।

भा. [४४१३] एगंतं निज्जरा से दुविहा आराधना धुवा तस्स।
अंतकिरियं व साहू करेज्ज देवोववत्तिं य ॥

वृ. इयं प्राग्वत्।

भा. [४४१४] मुनिसुव्वयंतेवासी खंदगदाहे य कुंभगारधडे।
देवी पुरंदरजसा दंडयपालक मरुओ य ॥

वृ. कुम्भकारकृते नगरे दण्डकिर्नाम राजा तस्य देवी पुरन्दरयशाः। पालको नाम मरुकः पुरोहितः। तत्र भगवतो मुनिसुव्रतस्वामिनो अन्तेवासी स्कन्दको नाम विहारक्रमेण गतः स स्वशिष्याणां यन्त्रपीडनेन मरणं विशेषतो बालक्षुल्लकस्योपलभ्य संजातकोपो यंत्रपीडन-मारितोऽग्निकुमारेषूत्पन्नजातिं स्मृत्वा समस्तस्यापि देशस्य दाहं कृतवान् शिष्यास्तु समाधिं प्राप्ता मृत्युमुपागतास्तथा चाह-

भा. [४४१५] पंचसया जंतेन रुट्ठेण पुरोहिएण मलियाइं।
रागद्दोसतुलग्गं समकरणं चिंतयंताणं ॥

वृ. रागद्वेषतुलाग्रं समकरणं समभावं चिन्तयतां साधूनां पञ्चशतानि रुष्टेन पुरोहितेन यन्त्रेण मलितानि (पीलितानि) तथापि न तेषां मनागपि ध्यानविक्षोभोऽभवत्। एवमन्यैरपि सोढव्यं।

भा. [४४१६] जं तेन ककएण सत्थेण व सावएहिं विविहेहिं।
देहे विद्धिस्संते न हु ते ज्झाणाओ फिट्टंति ॥

वृ. यन्त्रेण क्रकचेन शस्त्रेण वा खड्गादिना स्वापदैर्वा विविधैः शृगालिकाप्रभृतिभिर्देहे विध्वस्यमाने न हु नैव ते पादपोपगता ध्यानात् स्फिटन्ति परिभ्रश्यन्ति।

भा. [४४१७] पडिनीययाए कोई अग्गिं से सव्वतो पदेज्जाहि।
पादोवगए सन्ते जह चाणक्कस्स व करीसे ॥

वृ. पादपोपगते सति कोऽपि प्रत्यनीकतया से तस्य सर्वतः सर्वासु दिक्षु अग्निं प्रदद्यात्। यथा चाणकस्य करीषमध्ये व्यवस्थितस्य सुबंधुनामामात्यः सर्वतोऽग्निं प्रदीपितवानिति।

भा. [४४२८] पडिनीययाए कोई व मंसे कीलएहिं विहुणत्ता।
महुघयमक्खियं देहं पिपीलियाणं तु देज्जाहि ॥

वृ. प्रत्यनीकतया कोऽपि से तस्य पादपोपगमनस्य कीलकैर्लोहमयैश्चर्मविधून्य तदनन्तरं तं मधुघृतम्रक्षितदेहं कृत्वा पिपीलिकानां दद्यात्। तथापि सम्यक् सहेत तत्र सहने दृष्टान्तमाह-

भा. [४४२९] जह सो चिलायपुत्तो वोसट्ठ निसट्ठ चत्तदेहो उ।
सोणियगंधेन पिवीलियाहिं चालंकिओ धीरो ॥

वृ. यथा स चिलायपुत्तो निसृष्टमतिशयेन व्युत्सृष्टत्यक्तदेहः शोणितगन्धेन पिपीलिका-भिश्चालांकृतश्चालिनीकृतो धीरो मनागपि ध्यानाच्चलितवान्; एवं सर्वैरपि सोढव्यम्।

अन्यदृष्टान्तमाह-

भा. [४४२२] जह सो कालासवेसितो वि मोग्गल्लसेलसिहरम्मि।
खइओ विउव्विऊणं देवेन सियालरूवेण ॥

वृ. यथा स ब्रह्मचर्याध्ययनप्रसिद्धकालादवैश्यो मोद्गलशैलशिखरे स्थितो देवेन शृगालरूपं

विकुर्वित्वा(य) शृगालरूपेण खादितो भक्षितः तथापि स सम्यगधिसोढवान्। एवं सर्वैरपि सोढव्यम्।

भा. [४४२१] जह सो वंसिपएसी वोसट्ठ चत्तदेहो उ।
वंसीपत्तेहिं विनिग्गएहिं आगासमुक्खित्तो ॥

वृ. साधुरेकः पादपोपगतः स प्रत्यनीकैरुत्क्षिप्य वंशीकुडगस्योपरि मुक्तोऽधस्ताच्च वंशा उत्थितास्तैर्वंशैः प्रवर्धमानैः स साधुर्विद्धो दूरमुत्क्षिप्य आकाशं प्रापितः सम्यक् सोढवान् अक्षरगमनिका त्वेवम्-यथा स वंशी वंशीप्रदेशैः क्षिप्तो निसृष्टमतिशयेन व्युत्सृष्टस्त्यक्तदेशो वंशी पत्रैरंकुररूपैर्विनिर्गतैर्दूरमाकाशमुत्क्षिप्तो वेदनां सोढवान्। एवं सर्वैरपि सोढव्यम्।

भा. [४४२२] जहवंतीसुकुमालो वोसट्ठनिसट्ठ चत्तदेहो ऊ।
धीरो सपेल्लयाए सिवाए खतितो तिरत्तेण ॥

वृ. यथा अवन्तिसुकुमालो व्युत्सृष्टस्त्यक्तदेहो धीरः सपेल्लयाए पेल्लकसहितया बालसपुत्र-भाण्डसहितया शिवया शृगाल्या त्रिरात्रेण रात्रित्रिकेण भक्षितः सम्यक् सोढवान्।

एवमन्यैरपि सोढव्यम्।

भा. [४४२३] जह ते गोट्ठट्ठाणे वोसट्ठनिसट्ठ चत्तदेहागा,
उदएण वोज्झमाणा वियरम्मि उ संकरे लग्गा ॥

वृ. ग्रामासन्नप्रदेशे केचित्साधवः पादपोपगतास्तता यथा ते गोष्टस्थाने प्रदेशविशेषे निसृष्टं निरसहतया व्युत्सृष्टस्त्यक्तदेहा आन्तरिक्षेण पतितेनोदकेन उह्यमाना वितरके नद्याः श्रोतसि शंकरे लग्नाः सम्यग् वेदनां सहमानाः कालगताः। एवं शेषैरपि सोढव्यमेतदेवाह-

भा. [४४२४] बावीसमानुपुव्वी तेरिक्खमनुया व भंसणत्थाए।
विसयानुकंपरक्खं करेज्ज देवा व मनुओ वा ॥

वृ. द्वाविंशति परीषहान् आनुपूर्व्या पश्चादानुपूर्व्या अनानुपूर्व्या वा तिर्यञ्चो मनुष्या वा चारित्र-भ्रंशनार्थमुदीरयंस्तथा देवा मनुष्या वा विषयाणामिन्द्रियविषयाणा प्रत्यनीकतया अनिष्टानामनु-कम्पया इष्टानामुदीरणमनुकम्पया रक्षणं कुर्युः। तत्रारिक्तद्विष्टः सन् सम्यक् सहेत।

भा. [४४२५] जह सा बत्तीसघडा वोसट्ठनिसट्ठ चत्तदेहा उ।
धीराधातेन उ दारिएण दियलंभि उलइया ॥

वृ. यथा सा द्वात्रिंशत् गोष्ठीपुरुषा इत्यर्थः व्युत्सृष्टस्तत्प्रतिबन्धपरित्यागेनानिसृष्टातिशय त्यक्तो मनागपि परिचेष्टा अकरणात् देहो यया सा तथा पादपोपगताघ्रातेन तृप्तेन द्वीपान्तरवासिना म्लेच्छेन दृष्टा ततः कल्ये ममैते भक्ष्यं भविष्यंतीति चिन्तयित्वा वृक्षं विलग्नापयित्वा दियलंभि वलीएव ते उलइया। अवलंबिता ते सम्यग् वेदनां सहमानाः कालगताः उपसंहारमाह-

भा. [४४२६] एवं पातोवगमं निप्पडिकम्मं तु वण्णितं;
समए तित्थयरगणहरेहिं य साहु वि य सेवि य ॥

वृ. एतत्पादपोपगमं सूत्रे आगमे निःप्रतिकर्मवर्णितं तीर्थकरैर्गणधरैः शेषसाधुभिश्चोत्तम भृतिसंहननोपेतैः उदारं स्फीतं यथा भवत्येवमासेवितं। अत्र चायं क्रमो यःपादपोपगमनस्येङ्गिनीमरणस्य च करणे असमर्थः स भक्तप्रत्याख्यानं करोति। ततोऽपि यः समर्थतर

पादपोपगमनं च कर्तुमसमर्थः स इंगिनीमरणं ततोऽपि समर्थतरः पादपोगमं एतानि च मरणानि कुर्वन्तो यथा यथोपरितनमरणस्तथा तथा महानिर्जरतरा मूलोपसंहारमाह-

भा. [४४२७] एसागमववहारो जहोवएसं जहक्कमं कहिओ।
एत्तो सुयववहारं सुण वच्छ जहानुपुव्वीए॥

वृ. एषोऽनन्तरोदित आगमव्यवहारो यथोपदेशं यथाक्रमं विकथित अत ऊर्ध्वं यथानुपूर्व्या परिपाट्या कथ्यमानं श्रुतव्यवहारं च शृणु तमेव कथयति-

भा. [४४२८] निज्जूढं चोद्दसपुव्विएण जं भद्दबाहुणा सुत्तं।
पंचविहो ववहारो दुवालसंगस्स नवनीतं॥

वृ. यत् भद्रबाहुस्वामिना चतुर्दशपूर्विकेण चतुर्दशपूर्वधरेण पञ्चविधो व्यवहारः पञ्चविधव्यवहारात्मकं निर्व्यूढं द्वादशाङ्गस्य नवनीतमिव नवनीतं मथितस्य नवनीतमेव द्वादशाङ्गस्य सारमित्यर्थः। एतेन द्वादशाङ्गान्निर्व्यूढमावेदितव्यम् तत् सूत्रं श्रुतमुच्यते तेन व्यवहारः श्रुतव्यवहारः।

भा. [४४२९] जो सुयमहिज्जइ बहुं सुत्तत्थं च निउणं न याणेइ।
कप्पे ववहारंभि य सो न पमाणं सुयहराणं॥

भा. [४४३०] जो सुयमहिज्जइ बहुं सुत्तत्थं च निउणं विजाणाति।
कप्पे ववहारंमि य सो उ पमाणं सुयहराणं॥

वृ. यः कल्पव्यवहारे च सूत्रं बह्वधीतेन सूत्रार्थं निपुणं न जानाति स व्यवहारविषये न प्रमाणं श्रुतधराणां, यस्तु कल्पे व्यवहारे च सूत्रं बह्वधीते सूत्रार्थं च निपुणं विजानाति, स प्रमाणं व्यवहारे श्रुतधराणां।

भा. [४४३१] कप्पस्स य निज्जुत्तिं ववहारस्स व परमनिउणस्स;
जो अत्थतो न याणइ ववहारी सो न णुन्नातो॥

भा. [४४३२] कप्पस्स य निज्जुत्तिं ववहारस्स व परमनिउणस्स।
जो अत्थतो वियाणइ ववहारी सो अणुन्नातो॥

वृ. कल्पस्य कल्पाध्ययनस्य व्यवहारस्य च परमनिपुणस्य यो निर्युक्तिमर्थतो न जानाति स व्यवहारी नानुज्ञातः। यस्तु कल्पस्य व्यवहारस्य च परमनिपुणस्य निर्युक्तिमर्थतो जानाति स व्यवहारी अनुज्ञातः।

भा. [४४३३] तं चेवनुमज्जते ववहारविहिं पउंजंति जहुत्तं।
एसो सुअववहारी पन्नत्तो धीरपुरिसेहिं॥

वृ. कुलादिकार्येषु व्यवहारे उपस्थिते यद् भगवता भद्रबाहुस्वामिना कल्पव्यवहारात्मकं सूत्रं निर्यूढं तदेवानुमज्जननिपुणतरार्थं परिभावनेन तन्मध्ये प्रविशन् व्यवहारविधिं यथोक्तं सूत्रमुच्चार्य तस्यार्थं यः प्रयुंक्ते स श्रुतव्यवहारी धीरपुरुषैः प्रज्ञप्तः।

भा. [४४३४] एसो सुयववहारो जहोवएसं जहक्कमं भणितो।
आणाए ववहारं सुण वच्छ जहक्कमं वुच्छं॥

वृ. एष श्रुतव्यवहारो यथोपदेशं यथाक्रमं कथितः अत ऊर्ध्वमाज्ञया व्यवहारं यथाक्रमं यथा वक्ष्ये तं च वक्ष्यमाणं वत्स शृणु।

भा. [४४३५] समणस्स उत्तमट्ठे सल्लुद्धरणकरणे अभिमुहस्स।
दूरत्था जत्थ भवे छत्तीसगुणा उ आयरिया ॥

वृ. श्रमणस्य उत्तमार्थे भक्तप्रत्याख्याने व्यवसितस्य यत् किमपि शल्यमनुध्भृतमस्त तदु-द्धरणकरणे अभिमुखस्य तत्र प्रायश्चित्तव्यवहारे षट्त्रिंशद्गुणा आचार्या दूरस्था भवेयुस्तत्राज्ञया व्यवहारः कथमित्याह-

भा. [४४३६] अपरक्कमो सि जाओ गंतुंजे कारणं च उप्पन्नं।
अठ्ठारसमन्नयरे वसणगतो इच्छिमो आणं ॥

वृ. स आलोचयितुकामश्चिन्तयति साम्प्रतमहमपराक्रमो जातोऽस्मि ततस्तेषां समीपे गन्तुं न शक्नोमि कारणं च मम तत् पार्श्वगमननिमित्तं समुत्पन्नं यतोऽष्टादशानां व्रतषट्कादीनां अन्यतर-स्मिन्नतीचारे व्यसनगतः पतितस्तस्मादिच्छाम्याज्ञाव्यवहारमिति। एतदेव सविशेषं भावयति।

भा. [४४३७] अपरकम्मो तवस्सी गंतु जे सोहिकारगसमीवं।
आगंतुं न वाएई सो सोहिकारोवि देसाउ ॥

वृ. स आलोचयितुकामस्तपस्वी शोधिकारकसमीपे गन्तुमपराक्रमो। यस्य समीपे शोधिः कर्तव्या सोऽपि देशादालोचयितुः समीपमागन्तुं न शक्नोति।

भा. [४४३८] अह पट्ठवेइ सीसं देसंतरगमणनट्ठचेट्ठागो।
इच्छामज्जो काउं सोहिं तुब्भं सगासम्मि ॥

वृ. अथानंतरमालोचयितुकामो देशान्तरगमननिर्वोढुमक्षम आलोचनाचार्यस्य समीपे शिष्यं आर्य! युष्माकं सकाशे शोधिं कर्तुमिच्छामीत्येतत्कथयित्वा प्रेषयति।

भा. [४४३९] सोवि अपरक्कमगती सीसं पेसेइ धारणाकुसलं।
एयस्स दानि पुरओ करेइ सोहिं जहावत्तं ॥

वृ. सोऽपि आलोचनाचार्योऽपराक्रमगतिर्न विद्यते पराक्रमो गतौ यस्येति विग्रहः शिष्यं धारणाकुशलं प्रेपयति यस्त्वालोचयितुकामेन प्रेषितस्तस्य सन्देशं कथयति।

यथेदानीमेतस्य पुरतो यथावृत्तां शोधिं कुरु।

भा. [४४४०] अपरक्कमो य सीसं आणापरिणामगं परिच्छेज्जा।
रुक्खे य बीय काए सुत्ते वा मोहणाधारिं॥

वृ. स आलोचनाचार्योऽपराक्रमः शिष्यमाज्ञापरिणामकं परीक्षेत किमेष आज्ञापरिणामकः किं वा नेति। आज्ञापरिणामको नाम यत् आज्ञाप्यते तत्कारणं न पृच्छति किमर्थमेतदिति किन्त्वाज्ञयैव कर्तव्यतया श्रद्दधाति। यदत्र कारणं तत् पूज्या एव जानते एवं यः परिणामयति स आज्ञापरिणामकस्तत्परीक्षा च वृक्षे बीजकाये च वक्ष्यमाणरीत्या कर्तव्या। आज्ञापरिणामत्वं परीक्ष्य पुनरिदं परीक्षणीयं यथा किमेषोऽवग्रहेण समर्थो धारणासमर्थश्च किं वा नेति। तत्राध्यय-नादिपरीक्षया सूत्रे चशब्दादर्थे वाऽमोहनं मोहरहितं समस्तमासमन्तात् धारयतीत्येवं शीलोऽ-मोहनाधारी तं परीक्षेत तत्र वृक्षेणाज्ञापरिणामित्वपरीक्षामाह-

भा. [४४४१] दट्ठुमहंते रुक्खोअ गणिउ चेइ विलग्गउं ठेव।
अपरिणयवेति तहिं न वट्टइ रुक्खेवि आरोढुं ॥

भा. [४४४२] किं वा मारेयव्वो अहयंतो वेह डेव रुक्खाउ।
अतिपरिणामो भणती इयहेऊ अम्ह वेसिच्छा ॥

वृ. दृष्ट्वा महतो महीरुहान् गणिक आचार्यो ब्रूते-अस्मिन्नुच्चैस्त्वेन तालप्रमाणे वृक्षे विलग्य तत आत्मनं डिप, प्रपातं कुर्वित्यर्थः। एवमुक्तेन तत्रापरिणामको ब्रूते न वर्तते वृक्षे विलगितुं साधोः सचित्तत्वाद्वृक्षस्य प्रपातं च कुर्वन् आत्मविराधना भवति। स च भगवता निषिद्धा किं वाहं किमुपायेन मारयितव्योऽभिप्रेतो ब्रूथ-वृक्षादात्मानं डिपेति अतिपरिणामकः पुनरिदं भणति-इत्येवं भवतु करोमि प्रपातमिति भावोऽस्माकमप्येषा इच्छा वर्तते।

भा. [४४४३] बेइ गुरू अहतंतू अपरिच्छियत्थे पभाससे एवं।
किं चमएतं भणितो आरुहरुक्खे सचित्ते ॥

वृ. अथानन्तरमतिपरिणामकं शिष्यं ब्रूते अपरीक्षिते अपरिभाषिते मद्वचनस्यार्थे त्वमेवमुक्त-प्रकारेण प्रभाषसे यथा करोमि प्रपातमस्माकमप्येषेच्छा वर्तते। अपरिणामकमधिकृत्य ब्रूते-त्वं वा मया किमेवं भणितो यथा सचित्ते वृक्षे आरोह येनोच्यते न वर्तते साधोर्वृक्षे विलगितु-मिति। किन्त्वेतन्मयेदं तद्वेनाह-

भा. [४४४४] तवनियमनाणरुक्खं आरुहिउं भवमहण्णवापन्नं।
संसारगम्म कूलं डेवे हंती मए भणितो ॥

वृ. तपो नियमज्ञानमयं वृक्षं भवार्णवापन्नं भवसमुद्रमध्यप्राप्तमारुह्य संसारगतां कूलं डिप उल्लङ्घयेति मया भणितः।

भा. [४४४५] जो पुन परिणामो खलु आरुह भणितो विसोवि चिंतेइ।
नेच्छंति पावमेते जीवाणं थावरादीणंपि ॥

भा. [४४४६] किं पुन पंचेंदीणं तं भविसव्वेत्थकारणेणं तु।
आरुहण ववसियं तू वारेइ गुरू ववत्थंतो ॥

वृ. यः पुनः खलु परिणाम आज्ञापरिणामकः स आरोहेति भणितश्चिन्तयति-नेच्छन्ति पापमेते मदीया गुरवो जीवानां स्थावराणामपि किं पुनः पञ्चेन्द्रियाणां तस्मादत्र कारणेन भवि-तव्यमेवं विचिन्त्यारोहणे व्यवस्थितः तमारोहणव्यवस्थितं गुरुरप्यवष्टभ्य बाहौ धृत्वा वारयति तदेवमुक्तं वृक्षे परीक्षणमधुना बीजेषु तदाह-

भा. [४४४७] एवानेह य बीयाइं, भणितो पडिसेहे अपरिणामो।
अइपरिणामगो पोट्टल बंधूण आगतो तहियं ॥

वृ. एवममुना प्रकारेण बीजानि आनयतेत्युक्तो अपरिणामः प्रतिषेधयति न कल्पन्ते बीजानि ग्रहीतुमिति यस्त्वतिपरिणामकः स बीजान पोट्टलं बध्वा तत्र गुरुसमीपे समागतः।

भा. [४४४८] तेवि भणिया गुरूणं भणिया नेह अम्बिलबीयाइं।
नविरोह समत्थाहं सचित्ताई व भणियाइं ॥

वृ. तावद्योऽपरिणामको गुरुणा भणितो मया भणितमानय अम्लिकाबीजानि काञ्जिकानि बीजानि, यदि वा सचित्तानि विध्वस्तयोनिमयानि, यानि नविरोहसमर्थानि तान्यानयेति भणितानि।

भा. [४४४९] तत्थवि परिणामो तू भणती आनेसि केरिमाइं तु।

कत्तियमित्ताइं वा विरोहमविरोहजोग्गाइं ॥

वृ. तत्रापि यः परिणामकः स भणति कीदृशानि बीजान्यानयामि। विरोहयोग्यान्यविरोह-योग्यानि वा कियन्मात्राणि वा।

भा. [४४५०] सोवि गुरूहिं भणितो न ताव कज्जं पुणो भणिहामि।
हासितोव मए तासि वीमसत्थं व भणितोसि ॥

वृ. सोऽप्याज्ञापरिणामको गुरुभिर्भणितो न तावदिदानीं कार्यं यदा तु कार्यं भविष्यति तदा पुनर्भणिष्यामः। अथवा हासितोसि मया तावदिदानीं न पुनर्बीजैः प्रयोजनं यदि वा विमर्शार्थं तव विमर्शपरिक्षाणार्थं त्वमेव भणितोऽसि। सम्प्रत्यमोहनाधारि परीक्षामाह-

भा. [४४५१] पयमक्खमुद्देसं संधीसुतत्थ तदुभयं चेव।
अक्खर वंजण सुद्धं, जहा भणितं सो परिकहेइ ॥

वृ. पदमक्षरमुद्देशं सन्धिमधिकारविशेषं सूत्रमर्थं तदुभयं च अक्षरव्यञ्जनशुद्धं पूर्वमवग्राहयति। किमेष ग्रहणधारणायोग्यः किं वा नेति अवग्राह्य ततो ब्रूते उच्चारय प्रेक्षे किमपि गृहीतं न वा किं वा गृहीतमपि किं स्मृतं किं वा नेति। तत्र यदि यथा भणितं तथा सर्वं परिकथयति तदा ज्ञातव्य एष ग्रहणधारणे कुशल इति।

भा. [४४५२] एवं परिच्छिऊणं जोग्गं नाउण पेसवे तं तु।
वच्चाहि तस्सगासं सोहिं सोऊण आगच्छ ॥

वृ. एवं परीक्ष्य योग्यं ज्ञात्वा तं प्रेषयेत् सन्दिशति च व्रज, तस्य साधोरालोचयितुकामस्य शोधिमालोचनां श्रुत्वा पुनरत्रागच्छ।

भा. [४४५३] अह सो गतो उ तहियं तस्स सगासम्मि सो करे सोहिं।
दुगतिगचउविसुद्धं तिविहे काले विगडभावो ॥

वृ. अथ प्रेषणानन्तरं यत्रालोचयितुकामो विद्यते तत्र गतस्तस्यागतस्य समीपे आलोचयितु-कामः प्रशस्तेषु द्रव्यादिषु शोधिमालोचनां करोति। कथमित्याह-द्विकदर्शनातिचारं चारित्राचार-मालोचयतीत्यर्थः। दर्शनग्रहणं ज्ञानग्रहणमपीति ज्ञानातिचारं चेत्यापि द्रष्टव्यम्। चारित्रातीचारा-लोचनेऽपि च द्विभेदा मूलगुणातिचारविषया उत्तरगुणविषया च तां करोति पुनस्त्रिकामाहा-रोपधीशय्याभेदत एकैकां त्रिप्रकारां चतुर्विशुद्धां प्रशस्तद्रव्यक्षेत्रकालभावोपेता त्रिविधे काले अतीते प्रत्युत्पन्ने च यत्सेवितमनागते च यत्सेविष्ये इत्यध्यवसितं विकटभावः प्रकटभावोऽप्रति-कुञ्चन इत्यर्थः॥ सम्प्रति द्विकादिपदजातस्य व्याख्यानं किंचिदन्यथा किंचित्तदेव दर्शयति।

भा. [४४५४] दुविहं दप्पकप्पे तिविहं नाणाइणं तु अट्ठाए।
दव्वे खेत्ते काले, भावे य चउव्विहं एयं ॥

भा. [४४५५] तिविहे अतीअकाले पच्चुप्पन्ने विसेसियं जं तु।
सेविस्स वा एस्से पागडभावो विगडभावो ॥

वृ. द्विविधां शोधिं करोति दर्पे दर्पविषयां कल्पे कल्पविषयां। त्रिविधां ज्ञानादीनां ज्ञानदर्शन-चारित्राणां अर्थायातीचारविशुद्धिलाभाय करोति। प्रशस्ते द्रव्ये प्रशस्ते क्षेत्रे प्रशस्ते काले प्रशस्ते भावे एतच्चतुर्विधं विशोधनं द्रष्टव्यं, तथा त्रिविधे अतीते प्रत्युत्पन्ने च काले यत्सेवितं

यत् एष्यति काले सेविस्येऽहमित्यध्यवसितं तदविकटभावः प्रकटभाव आलोचयति।

भा. [४४५६] किं पुन आलोएई अतियारं सो इमो य अतियारो।
वयछक्कादी ते खलु नायव्वो आनुपुव्वीए॥

वृ. किं पुनस्तादालोचयति। सूरिराह-अतीचारं पुनरतीचारोऽयं वक्ष्यमाणो व्रतषट्कादिको व्रतषट्कादिविषयः खल्वानुपूर्व्या ज्ञातव्यस्तमेव दर्शयति।

भा. [४४५७] वयछक्कं कायछक्कं अकप्पो गिहिभायणं।
पलियंकं निसेज्जा य सिणाणं सोभवज्जणं॥

वृ. व्रतषट्कं प्राणातिपातनिवृत्यादिरात्रिभोजनविरमणपर्यन्तं कायषट्कं पृथिव्याद्यकल्प-पिण्डादिको गृहिभाजनं कांश्यपात्र्यादि पल्यङ्कः प्रतीतो निषद्यागोचरप्रविष्टस्य निषदनं, स्नानं देशतः सर्वतो वा स्नानस्य वर्जनं, भूषा परित्यागः एतत् विधेयतया प्रतिषेध्यतया वा यत् यथोक्तं नाचरितं तत् आलोचयति-

भा. [४४५८] तं पुन होज्जा सेविय दप्पेणं अहव होज्ज कप्पेण।
दप्पेण दसविहं तू इणमो वुच्छं समासेणं॥

वृ. तत्पुनर्विरुद्धं सेवितं दर्पेण अथवा कल्पेन तत्र यत् दर्पेण सेवितं तदिदं वक्ष्यमाणं दशविधं तदेव समासेन वक्ष्ये प्रतिज्ञामेव करोति-

भा. [४४५९] दप्प व अकप्प निरालंब वियत्ते अप्पसत्थ वीसत्थो।
अपरिच्छ अकडजोगी अनानुयावीय निस्संको॥

वृ. दर्पो निष्कारणं धावनवल्गनवीरयुद्धादिकरणं १। अकल्पोऽपरिणतपृथ्वीकायादि-ग्रहणमगीतार्थानीतोपधिशय्याहाराद्युपभोगश्च २। निरालम्बो ज्ञानाद्यालम्बनरहितप्रतिसेवनाको ३। वियत्तेति पदैकदेशे पदसमुदायोपचारात्त्यक्तकृत्यः संस्तरन्नपि सन्नकृत्यं प्रतिसेव्य त्यक्त-चारित्र इत्यर्थः ४। अप्रशस्तो बलवर्णादिनिमित्तं प्रतिसेवी, ५। विश्वस्तः स्वपक्षतः परपक्षतो वा निर्भयं प्राणातिपातादिसेवी ६। अपरीक्षी युक्तायुक्तपरीक्षाविकलः ७। अकृतयोगी अगीतार्थः। त्रीन् वारान् कल्पमेषणीयं चापरिभाव्य प्रथमवेलायामपि यतस्ततोऽल्पानेषणीय-मपि ग्राही ८। अननुतापी अपवादपदेन कायानामुपद्रवेऽपि कृते पश्चात् अनुतापरहितः ९। निःशङ्को निर्दयः इह परलोकशङ्कारहित इत्यर्थः १०।

भा. [४४६०] एयं दप्पेण भवे इणमन्नं कप्पियं मुनेयव्वं।
चउवीसई विहाणं तमहं वुच्छं समासेन॥

वृ. एतदनन्तरोक्तेन प्रकारेण सेवितं दर्पेण भवति। इदमन्यत्कल्पिकं चतुर्विंशतिविधानं ज्ञातव्यं तदहं समासेन वक्ष्ये तदेवाह-

भा. [४४६१] दंसणनाणचरित्ते तवपवयण समिति गुत्तिहेउ वा।
साहम्मिय वच्छल्लेण वावि कुलतो गणस्से वा॥

भा. [४४६२] संघस्सायरियस्स असहुस्स गिलाण बालवुड्डस्स।
उदयग्गिचोर सावय भयकंतारावती वसने॥

वृ. दर्शने दर्शनप्रभावकं शास्त्रग्रहणं कुर्वन्नसंस्तरणे १। ज्ञाने सूत्रमर्थं चाधीयमानो असंस्तरणे

२। चारित्रे अनेषणादोषतः स्त्रीदोषतो वा चारित्ररक्षणाय: ततः स्थानादन्यत्र गमने ३। तपसि विकृष्टतपो निमित्तं धृतपानादि प्रवचने प्रवचनरक्षादिनिमित्तं विष्णुकुमारादिरिव वैक्रियकुर्वाणादि ५। समितावीर्यासमित्यादिरक्षणनिमित्तं चक्षुः सावद्यचिकित्साकरणादि ६। गुप्तौ भावितकारणतो विकटपाने कृते मनोगुप्त्यादिरक्षणनिमित्तमकल्पादि ७। साधर्मिकवात्सल्यनिमित्तं ८। कुलतः कार्यनिमित्तं ९। एवं गणकार्यनिमित्तः १०, सङ्घकार्यनिमित्तं ११, आचार्यनिमित्तं १२, असह-निमित्तं १३, ग्लाननिमित्तं १४, प्रतिषिद्धबालदीक्षितसमाधिनिमित्तं १५। प्रतिषिद्धवृद्धदीक्षित-समाधिनिमित्तं १६, उदके जलप्लवे १७, अग्नौ दवाग्न्यादौ १८, चौरे शरीरोपकरणापहारिणी १९। श्वापदे हिंसा व्याघ्रादावा पतित यद्वृक्षारोहणादि २०। तथा भये म्लेच्छादिसमुत्थे २१ कान्तारे अटव्यमानभक्तपानेऽध्वनि २२ आपदि द्रव्याद्यापत्सु २३। व्यसनं मद्यपानगीतगानादि-विषये पूर्वाभ्यासतः प्रवृत्ति २४। तत्र यद्यतनया प्रतिसेवते स कल्पः। एतदेवाह-

भा. [४४६३] एयन्नतरागाढे दंसणनाणे चरणसालंबो।
परिसेविउं कयाई होइ समत्थो पसत्थेसु॥

वृ. एतेषामनन्तरोदितानामन्यतरस्मिन् आगाढे समुत्थितदर्शनज्ञानचरणसालम्बः प्रतिसेव्या-कल्प्यप्रतिसेवना कृत्वा कदाचित्प्रशस्तेषु शुभेषु प्रयोजनेषु कर्तव्येषु समर्थो भवति।

तत एषा कल्पिका प्रतिसेवना।

भा. [४४६४] ठावेउ दप्पकप्पे हेट्ठा दप्पस्स दसपए ठावे।
कप्पस्स चउव्वीसति एतेसिमह ठारसपयाइं॥

वृ. प्रथमतो दर्पकल्पौ स्थापयित्वा तदनन्तरं दर्पस्याधस्तात् दर्पादीनि पदानि स्थाप्य (स्थापयित्वा?) कल्पस्याधो दर्शनादीनि चतुर्विंशति पदानी तेषां दश चतुर्विंशति पदानामधो व्रतषट्कादीन्याष्टादशपदानि स्थापयेत् सम्प्रत्यालोचनाक्रममाह-

भा. [४४६५] पढमस्स य कज्जस्स य पढमेण पएण सेवियं जं तु।
पढमे छक्के अब्भितरं तु पढमं भवे ठाणं॥

वृ. इह प्रथमं कार्यं दर्पलक्षणं तस्य प्रथमतः स्थापयित्वा तस्य प्रथमस्य कार्यस्य सम्बन्धिना प्रथमेन दर्पलक्षणेन यत्सेवितं कथंभूतमित्याह-प्रथमे षट्के व्रतषट्करूपे अभ्यन्तरमन्तर्गतं तत्कतरदित्याह-प्रथमं प्राणातिपातलक्षणं भवेत्स्थानं। एवं मृषावादे अदत्तादाने मैथुने परिग्रहे रात्रिभोजन च वक्तव्यम्। पाठोऽप्येवमुच्चारणीयः।

भा. [४४६६] पढमस्स य कज्जस्स य पढमेन पएण सेवियं जंतु।
पढमे छक्के अब्भितरं तु बीयं भवे ठाणं॥

वृ. एवं तइयं भवे ठाणं जाव छट्ठं भवे ठाणं। एतदेव कथयन्नाह-

भा. [४४६७] पढमस्स य कज्जस्स य पढमेन पएण सेवियं जंतु।
पढमे छक्के अब्भितरंमि सेसुसुवि पएसु॥

वृ. अक्षरगमनिका प्रागवत्। नवरं सेसेसु वि पएसु इति आद्यं पादत्रयमुच्चता शेषेष्वपि मृषावादादिषु बिइयं भवे ठाणं तइयं भवे ठाणमित्यादि पदसंचारतो वक्तव्यम्।

भा. [४४६८] पढमस्स य कज्जस्स य पढमेन पएण सेवियं जंतु।

बिइए छक्के अब्भितरंमि तु पढमं भवे ट्ठाणं ॥

वृ. प्रथमस्य कार्यस्य दर्पलक्षणस्य प्रथमेन पदेन दर्परूपेण यत्सेवितं द्वितीये षट्के कायषट्के अभ्यन्तरमन्तर्गतं तत्कतरदित्याह-प्रथमं पृथिवीकायलक्षणं भवेत् स्थानमेवमप्काये तेजस्काये वायुकाये वनस्पतिकाये त्रसकाये च यथाक्रमं बिइयं भवे ट्ठाणमित्यादिपदसंचारतः पूर्वक्रमेण पञ्चगाथा व्यक्तव्याः । एतदेवाह-

भा. [४४६९] पढमस्स य कज्जस्स य पढमेन पएन सेवियं जंतु ।

बिइए छक्के अब्भितरंमि सेसेसु वि पएसु ॥

वृ. इयमपि प्राग्वत् । नवरं सेसेसु इति शेषेष्वप्यप्कायादिषु वदेत् ।

भा. [४४७०] पढमस्स य कज्जस्स य पढमेन पएन सेवियं जंतु ।

तइए छक्के अब्भितरंपि तु पढमं भवे ट्ठाणं ॥

वृ. प्रथमस्य कार्यस्य दर्पलक्षणस्य प्रथमेन पदेन दर्परूपेण यत्सेवितं कथंभूतमित्याह-तृतीये षट्के अकल्पगृहिभाजनादिलक्षणे अभ्यन्तरमन्तर्गतं कतरदित्याह-प्रथमकल्पलक्षणं भवेत् स्थानमेवं गृहिभाजने पल्यङ्के निषद्यायां स्त्रे शोभायां च यथाक्रमं च बिइयं भवे ट्ठाणं तइयं भवे ट्ठाणमित्यादि पदसंचारतः पञ्च गाथा वक्तव्याः तथा चाह-

भा. [४४७१] पढमस्स य कज्जस्स य पढमेन पएन सेवियं जं तु ।

तइए छक्के अब्भितरंमि तु सेसेसु वि पएसु ॥

वृ. अक्षरगमनिका प्राग्वत् । तदेवं प्रथमस्य कार्यस्य प्रथमं पदं दर्पलक्षणं पदममुंचता अष्टादशपदानि । एवमकल्पादिभिरपि द्वितीयादिभिः पदैः संचारणीयानि पाठोऽप्येवं-पढमस्स य कज्जस्स य बीएण पएण सेवियं जं तु । पढमे छक्के अब्भितर तु पढमं भवे ट्ठाणमित्यादि सर्वसंख्या भङ्गानामशीतिशतम् तदेवं प्रथमं दर्परूपं विशुद्धमिदानीं द्वितीयं

भा. [४४७२] बिइयस्स य कज्जस्स य पढमेन पएन सेवियं जं तु ।

पढमे छक्के अब्भितरं तु पढमं भवे ट्ठाणं ॥

वृ. द्वितीयस्य कार्यस्य कल्पलक्षणस्य सम्बन्धिना प्रथमेन पदेन दर्शनलक्षणेन यत्सेवितं कथंभूतमित्याह-प्रथमे षट्के उभयषट्करूपे अभ्यन्तरमन्तर्गतकतरत्तदित्याह-प्रथमं प्राणातिपातलक्षणं भवेत् स्थानमेवं मृषावादे अदत्तादाने मैथुने परिग्रहे रात्रिभोजने च पूर्वक्रमेण यथाक्रमं पञ्च गाथा वक्तव्यास्तथा चाह-

भा. [४४७३] बिइयस्स य कज्जस्स य पढमेन पएन सेवियं जं तु ।

पढमे छक्के अब्भितरं तु सेसेसु वि पएसु ॥

वृ. अक्षरगमनिका प्राग्वत् द्वितीयषट्कं कायरूपमधिकृत्याह-

भा. [४४७४] बिइयस्स य कज्जस्स य पढमेन पएन सेवियं जं तु ।

बिइए छक्के अब्भितरं तु पढमं भवे ट्ठाणं ॥

वृ. अत्र प्रथम स्थानं पृथिवीकायलक्षणमेवमप्काये अग्निकाये वायुकाये वनस्पतिकाये त्रसकाये प्रागुक्तेन प्रकारेण पञ्च गाथा वक्तव्यास्तथा चाह-

भा. [४४७५] बिइयस्स य कज्जस्स य पढमेन पएन सेवियं जं तु ।

बिइए छक्के अब्भितरं तु सेसेसु वि पएसु ॥

वृ. प्रागवत् तृतीयकल्पादिषट्कमधिकृत्याह–

भा. [४४७६] बिइयस्स य कज्जस्स य पढमेन पएन सेवियं जं तु ।
तइए छक्के अब्भितरं तु पढमं भवे ट्ठाणं ॥

वृ. अत्र प्रथमं स्थानं कल्पलक्षणमेवं गृहिभाजने पल्यङ्के निषद्यायां स्नाने शोभायां च प्रागुक्तप्रकारेण पञ्चगाथा वक्तव्याः । एतदेव सूचयति–

भा. [४४७७] बिइयस्स य कज्जस्स य पढमेन पएन सेवियं जं तु ।
तइए छक्के अब्भितरं तु सेसेसु वि पएसु ॥

वृ. व्याख्या प्रागवत् । तदेवं द्वितीयस्य कार्यस्य कल्पलक्षणस्य प्रथमं दर्शनरूपं पदममुञ्चता अष्टादशपदानि संचारितान्येवं ज्ञानादिलक्षणैर्द्वितीयादिभिरपि पदैस्त्रयोविंशतिसंख्याकैः प्रत्येकमष्टादशपदानि संचारयितव्यानि । सर्वसंख्या भंगाना द्वात्रिंशदधिकानि चत्वारि शतानि अष्टादशानां चतुर्विंशत्या गुणने एतावत्याः संख्याया भावात् ।

सम्प्रति [illegible] इत्यादि पद व्याख्यानार्थमाह–

भा. [४४७८] पढमं कज्जं नाम निक्कारणं दप्पउ पढमं ।
एवं पढमे छक्के पढमं पाणाइवादो मुनेव्यवो ॥

वृ. अत्र निष्कारणं नाम दर्पः प्रथमं पदं दर्पको दर्पः । शेषं सुगमम् ।

भा. [४४७९] एवं मुसावातो अदिन्नादाण मेहुण परिग्गहो चेव ।
बिइछक्के पुढवादी तइय छक्के अकप्पादी ॥

वृ. एवमुक्तप्रकारेण मृषावादोऽदत्तमदत्तादानं मैथुनं परिग्रहश्चशब्दात् रात्रिभोजनं च संचारणं द्वितीये षट्के क्रमेण पृथिव्यादयः संचारणीयास्तृतीये षट्के अकल्पादयः ।

भा. [४४८०] निक्कारणदप्पेणं अट्ठारस चारियाइं एयाइं ।
एवमकप्पादीसु वि एक्केक्के होंति अट्ठारस ॥

वृ. एवं निष्कारणस्य दर्पलक्षणस्य कार्यस्य सम्बन्धिना प्रथमेन पदेन दर्पेण एतानि व्रतषट्क–प्रभृतीन्याष्टादशपदानि संचरितानि । एवमकल्पादिष्वपि नवसु पदेषु एकैकस्मिन् प्रत्येकमष्टा–दशपदानि संचारयित्वानि भवन्ति ।

भा. [४४८१] बिइयं कज्जं कारण पढमपयं तत्थ दंसण निमित्तं ।
पढमछक्के वयाइं तत्थ वि पढमं तु पाणवहो ॥

वृ. द्वितीयं कार्यं नाम करणं कल्प इत्यर्थः । तत्र प्रथमं पदं दर्शननिमित्तं प्रथमं षट्कं व्रतानि, तत्र प्रथमं पदं प्राणवधः ।

भा. [४४८२] दंसणममुयंतेन पुव्वकमेणं तु चारणीयाइं ।
अट्ठारसट्ठाणाइं एवं नाणाइ एक्केक्के ॥

वृ. दर्शनं दर्शनपदं प्रथममुञ्चता पूर्वक्रमेणाष्टादशस्थानानि चारणीयानि । एवं ज्ञानादिरेकैकाः भेदः संचारयितव्यः ।

भा. [४४८३] चउवीसठारसगा एवं एए हवंति कप्पंति ।

दस होंति अकप्पम्मी सव्वसमासेण मुण संखा ॥

वृ. एवमुक्तेन प्रकारेण कल्पे चतुर्विंशतिरष्टादशका भवन्ति चत्वारि शतानि द्वात्रिंशतानि भङ्गानां भवन्तीति भाव:। अकल्पे दर्पे दशाष्टादशका भवन्ति अशीतिशतं भङ्गानां भवन्तीति भाव:। एतां कल्पे दर्पे च सर्वसमासेन संख्यां जानीहि-

भा. [४४८४] सोऊण तस्स पडिसेवणं तु आलोअणा कमविहिं तु।
आगमपुरिसजायं परियागबलं च खेत्तं च ॥

वृ. श्रुत्वा तस्यालोचनकस्य प्रतिसेवनामालोचनाक्रमविधिं च आलोचनाक्रमपरिपार्टी चावधार्यय तथा तस्य यावानागमोऽसर्वत तावन्तमागमं तथा पुरुषजातं तमष्टमादिभिर्भावितम् · मावितं वा पर्यायं गृहस्थपर्यायो यावानासीत् यावांश्च तस्य व्रतपर्याय: तावन्तमुभयं पर्यायं बलं शारीरिकं तस्य तथा यादृशं तत् क्षेत्रमेतत्सर्वमालोचकाचार्यकथनतः स्वतो दर्शनतश्चावधार्य स्वदेशं गच्छति। तथा चाह-

भा. [४४८५] आहारेउ सव्वं सो गंतूणं पुणो गुरुसगासं।
तेसिं निवेदइ तहा जहानुपुव्विं गतं सव्वं ॥

वृ. स आलोचनाकार्यं प्रेषित: सर्वमनन्तरोदितमासमन्तात् धारयित्वा पुनरपि स्वदेशागमनेन गुरुसकाशं गत्वा तेषां गुरूणां सर्वं तथा निवेदयति यथा आनुपूर्व्या परिपाट्या गतमवधारितम्।

भा. [४४८६] सो ववहारविहण्णू अनुज्जित्ता सुत्तोवएसेणं।
सीसस्स देइ आणं तस्स इमं देहि पच्छित्तं ॥

वृ. स आलोचनाचार्यो व्यवहारविधिज्ञ: कल्पव्यवहारात्मके च्छेदश्रुते अनुमय्य पौर्वापर्या-लोचनेन श्रुततात्पर्यो निषण्णो भूत्वा श्रुतोपदेशेन रागद्वेषतोऽन्यथा तस्य पूर्वप्रेषितस्य स्वशिष्याज्ञां ददाति। यथा गत्वा तस्येदं प्रायश्चित्तं देहि। किं तदित्याह-

भा. [४४८७] पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता।
नक्खत्ते भे पीडासुक्के मासं तवं कुणसु ॥

वृ. प्रथमस्य कार्यस्य दर्पलक्षणस्य सम्बन्धिनीं दर्पादिपदभेदतो दशविधां दशप्रकारामालोचनां निशम्याकर्ण्य परिभावितं यथा नक्षत्रशब्देनात्र मास: सूचित:। मासे मासप्रमेयप्रायश्चित्तविषयौ भवत: पीडाव्रतषट्कपीडा कायषट्कपीडा कल्पादिषट्कपीडा वा आसीत् सापि च सुक्के त्ति शुक्ले इति सांकेतिकी संज्ञेति उद्घातं मासं तप: कुर्यात्। यदि चातुर्मासं षण्मासं वा लघुप्रायश्चित्त-मापन्नो भवेत् तदेवं कथयति-

भा. [४४८८] पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता।
नक्खत्ते भे पीमा चउमासतवं कुणसु सुक्के ॥

भा. [४४८९] पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता।
नक्खत्ते भे पीला छम्मासतवं कुणसु सुक्के ॥

वृ. गाथा द्वयमपि व्याख्यातार्थम्।

भा. [४४९०] एवं ताव उग्घाए अनुग्घाए चेव किण्हंमि।
मासे चउमास छमासियाणि छेयं अतो वुच्छं ॥

**वृ.** एवमुक्तेन प्रकारेण तावदुद्धाते लघुरूपे मासचतुर्मासषण्मासलक्षणे प्रायश्चित्ते समापतितेऽभिहितमनुद्धाते गुरुके समापतिते साम्येव मासे चतुर्मासषण्मासानि किण्हमीत्यनेन पदेन विशेषितानि वक्तव्यानि । तद्यथा-

**भा. [४४९१]** पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता ।
नक्खत्ते भे पीला कण्णे मासं तवं कुज्जा ॥

**भा. [४४९२]** पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता ।
नक्खत्ते भे पीला चउमास तवं कुणसु किण्हे ॥

**भा. [४४९३].** पढमस्स य कज्जस्स य दसविहमालोयणं निसामेत्ता ।
नक्खत्ते भे पीला छम्मास तवं कुणसु किण्हे ॥

**वृ.** छेयं अतो वोच्छामिति अतः परं च्छेदमुपलक्षणमेतत् । मूलादिकं च प्रायश्चित्तं वक्ष्ये ।

**भा. [४४९४]** च्छिंदितु व भायण गच्छंतु य तस्स साहूणो मूलं ।
अव्वावडा य गच्छे अबिइया वा पविहरंतु ॥

**वृ.** वा शब्दो विकल्पने अथवा यदि च्छेदप्रायश्चित्तमापन्नो भवति तदेवं संदिशति भाजनं छिंदतु । अत्र विशेषव्याख्यानार्थमिदं गाथाद्वयमाह–

**भा. [४४९५]** छब्भागंगुलपणगे दसरायतिभागअद्धपन्नरसे ।
वीसाए ति भागूणं तु छब्भागूनं तु पणुवीसे ॥

**भा. [४४९६]** मास चउमास छक्के अंगुलचउरो तहेव छच्चेव ।
एए छेयवियप्पा नायव्व जहक्कमेणं तु ॥

**वृ.** पञ्चके पञ्चरात्रि दिवप्रमाणे च्छेदे समापन्ने एवं संदेशं कथयति–भाजनस्वरूपस्यांगुलषड्भागे छिन्दन्तु दशरात्रे च्छेदे समापतिते त्रिभागमंगुलस्य भाजनं च्छिन्दतु पञ्चदशे पञ्चदशरात्रे च्छेदे अर्धमंगुलस्य, विंशतौ विंशति रात्रिंदिवच्छेदे त्रिभागोनमंगुलं पञ्चविंशतौ पञ्चविंशतिरात्रिंदिव च्छेदे षड्भागोनमंगुलं मासे मासप्रमाणे च्छेदे प्राप्ते परिपूर्णमेकमंगुलं चतुर्मासे चत्वार्यंगुलानि षण्मासे षड्ंगुलानि छेद्यानि संदिशती । एवमेते यथाक्रमेण च्छेदविकल्पाः संदेशा ज्ञातव्याः । गच्छंतु तस्स साहूणो मूलमिति यदि मूलं प्रायश्चित्तमापन्नो भवति तदेव संदशिति : योऽन्योऽसौ दूरे साधुर्गच्छाधिपतिर्विहरति तस्य मूलं समीपं गच्छन्तु तस्य समीपं गत्वा प्रायश्चित्तं प्रतिपद्यतामिति भावः । अव्वावडा व गच्छे इति अथानवस्थाप्यं प्रायश्चित्तमापन्नस्तत एवं कथयत सन्देशं यथा गच्छे अव्यापृता भवत, कंचित्कालं गच्छस्य वर्तमाननिकामवहन्तस्तिष्ठन्तु । अबिइया वा प्रविहरन्तु इति पाराञ्चितप्रायश्चित्तापत्तौ पुनरेवं संदिशति किंचित्कालमद्वितीयका एकाकिनः प्रविहरन्तु । तदेवं दर्पेण सेविते प्रायश्चित्तमधुना कल्पे यतनया सेविते प्राह–

**भा. [४४९७]** बिइयस्स य कज्जस्स य तहियं चउवीसतिं निसामेत्ता ।
नमोकारे आउत्ता भवंतु एवं भणिज्जसि ॥

**वृ.** द्वितीयस्य कार्यस्य कल्पलक्षणस्य सम्बन्धिनीं चतुर्विशति निशम्याकर्ण्य तत्रैवं संदिशति नमस्कारे भवन्त आयुक्ता भवन्तु । एवं भणेत् ब्रूयात्–

भा. [४४९८] एवं गंतूण तहिं जहोवएसेण देहि पच्छित्तं ।
आणाए एस भणितो ववहारो धीरपुरसेहिं ॥

वृ. एवमुक्तप्रकारेणाचार्यवचनमुपगृह्य तत्र गत्वा यथोपदेशेन ददाति प्रायश्चित्तमेव आज्ञया व्यवहारो धीरपुरुषैर्भाणितः ।

भा. [४४९९] एसाणाववहारो जहोवएसं जहक्कमं भणितो ।
धारण ववहारो पुन सुण वच्छ जहक्कमं वुच्छं ॥

वृ. एष आज्ञाव्यवहारो यथोपदेशं यथाक्रमं भणितः कथितः । अत ऊर्ध्वं धारणाव्यवहारो वक्तव्यस्तं यथाक्रममहं वक्ष्ये इति शृणु ॥

भा. [४५००] उद्धारणं विधारणा संधारण संपधारणा चेव ।
नाऊण धीरपुरिसा धारणववहारं तं बिंति ॥

वृ. धारणायाश्चत्वार्येकार्थिकानि । तद्यथा--उद्धारणा, विधारणा, संधारणा, संप्रधारणा च । तया धारणया च्छेदश्रुतार्थावधारणलक्षणया यः सम्यक् ज्ञात्वा व्यवहारः प्रयुज्यते, तं धारणाव्यवहारं ब्रुवते, । सम्प्रति तेषामेव चतुर्णामेकार्थिकानां शब्दव्युत्पत्तिमाह--

भा. [४५०१] पाबल्लेण उवेच्च व उद्धियपयधारणा उ उद्धारा ।
विविहेहिं पगारेहिं धारेयव्वं वि धारेउ ॥

भा. [४५०२] सं एगी भावम्मी दियकरणा तानि एक्कभावेन
धारेयत्थपयाणि उ तम्हा संधारणा होइ ॥

भा. [४५०३] जम्हा संपहारेउं ववहारं पउंजती ।
तम्हा कारणा तेन नायव्वा संपहारणा ॥

वृ. उत्प्राबल्येन उपेत्य वा उद्धृतानामर्थपदानां धारणा उद्धारा विविधैः प्रकारैः विशिष्टं चार्थमुद्धृतमर्थपदं यया धारणया स्मृत्वा धारयति सा विधारा विधारणा । तथा समशब्द एकाकी भावे धृतानुधारणा तान्यर्थपदानि आत्मना सह एकभावेन यस्माद्धारयति तस्माद् धारणा संधारणा भवतिः, तथा यस्मात् सन्धार्य सम्यक् प्रकर्षेणावधार्य व्यवहारः प्रयुंक्ते तस्मात्कारणात्तेन शिष्येण सम्प्रधारणा भवति ज्ञातव्या । धारणाववहारे सो पउंजियव्वो ।

भा. [४५०४] धारणाववहारे सो पउंजियव्वो केरिसे पुरिसे ॥
भण्णति गुणसंपन्ने जारिसए तं सुणेहिति ॥

वृ. एष धारणाव्यवहारः कीदृशे पुरुषे प्रयोक्तव्यः । सूरिराह भण्यते-यादृशे गुणसम्पन्ने प्रयोक्तव्यस्तं वक्ष्यमाणं शृणु तमेवाह-

भा. [४५०५] पयवण जसंसि पुरिसे अनुग्गह विसारए तवस्सिम्मि ।
सुस्सुयबहुस्सुयंमि य विवक्कपरियागसुद्धम्मि ॥

वृ. प्रवचनं द्वादशाङ्गं श्रमणसंघो वा तस्य यस्य कीर्तिमिच्छति यः प्रवचनयशस्वी तस्मिन्, तथा यो दीयमानं प्रायश्चित्तं दीयमानव्यवहारं त्वानुग्रहं मन्यते सोऽनुग्राह विशारदोऽग्रहविशारदस्तस्मिन्, तपस्विनि तथा श्रुतं शोभनमाकर्णितं बहुश्रुतं येन स बहुश्रुतः किमुक्तं भवति ?

यस्य बह्वपि श्रुतं न विस्मृतिपथमुपयाति स श्रुतबहुश्रुतः । अथवा बहुश्रुतोऽपि सन् यस्तस्यो-पदेशेन वर्तते स मार्गानुसारि श्रुतत्वात् सुश्रुत बहुश्रुतः तथा तस्मिन् तथा विशिष्टो विनयौचित्या-न्वितो वाक् परिपाको विशुद्धिर्यश्च यस्मिन् पुरुषे प्रयोक्तव्यः । एतदेवाह-

भा. [४५०६] एएसु धीरपुरिसा पुरिसज्जाएसु किंचि खलिएसु ।
रहिएवि धारयंता जहारिहं देंति पच्छित्तं ॥

वृ. एतेष्वनन्तरोदिते गुणसम्पन्नेषु पुरुषजातेषु किञ्चिन् मनाक् प्रमादवशान्मूलगुणविषये उत्तरगुणविषये वा स्खलितेषु रहितेऽपि असत्यप्यादिमे व्यवहारत्रये धीरपुरुषा अर्थपदानि कल्पप्रकल्पव्यवहारगतानि कानिचित् धारयित्वा यथार्हं ददति प्रायश्चित्तं ।

सम्प्रति रहिएवि धारइत्ता इतस्य व्याख्यानमाह-

भा. [४५०७] रहिए नाम असन्ते आइल्लम्मि ववहारतियगंमि ।
ताहेवि धारइत्ता वीमंसेऊण जं भणियं ॥

वृ. रहिते नाम असति अविद्यमानके व्यवहारत्रिके सति ततोपि धारयित्वा यद् भणिते भवति । किमुक्तं भवति ? विमृश्य पूर्वालोचनेन देशकालाद्यपेक्षया सम्यक् छेदश्रुतार्थं परि-भाव्य किमित्याह-

भा. [४५०८] पुरिसस्स अइयारं वियारइत्ताण जस्स जं जोग्गं ।
तं देंति उ पच्छित्तं जेणं देंती उ तं सुणए ॥

वृ. पुरुषस्यातीचारं द्रव्यतः क्षेत्रतः कालतो भावतश्च विचार्य यस्य यदर्हं प्रायश्चित्तं तस्य तत् ददाति । आचार्यः प्राह-येन ददाति तत् श्रृणु । तदेवाह-

भा. [४५०९] जो धारितो सुत्तत्थो अनुओगविहीए धीरपुरिसेहिं ।
आलीणपलीणेहिं जयणाजुत्तेहिं दंतेहिं ॥

वृ. यो नाम धीरपुरुषैरालीनप्रलीनैर्यतनायुक्तैश्चानुयोगविधौ व्याख्यानवेलायां श्रुतस्य धारितोऽविस्मृतीकृतस्तेन ददति साम्प्रत मालीनादि पदानां व्याख्यानमाह-

भा. [४५१०] अल्लीणो नाणादिसु पदे पदे लीआ उ होंति पलीणा ।
कोहादी वा पलयं जेसि गया ते पलीणा उ ॥

भा. [४५११] जयणाजुत्ता पयत्तवा दंतो जो उवरतो उ पावेहिं ।
अहवा दंतो इंदिय दमेण नोइंदिएणं च ॥

वृ. ज्ञानदिषु आ समन्तात् लीना आलीनाः पदे पदे लीना भवन्ति प्रलीयनाऽथवा येषां क्रोधादयः प्रलयं गतास्ते प्रलीनाः । प्रकर्षेण लीना लयं विनाशं गताः क्रोधादयो येषामिति व्युत्पत्तेः । यतनायुक्तो नाम सूत्रानुसारतः प्रयत्नवान् दान्तो यः पापेभ्य उपरतोऽथवा दान्तो नाम इन्द्रियदमेन नोइन्द्रियदमेन चान्यतः । तदेवं च्छेदश्रुतार्थधरणवशतो धारणाव्यवहार उक्तः ।

भा. [४५१२] अहवा जेणऽइया दिट्ठा सोही परस्स कीरंति ।
तारिसयं चेव पुणो उप्पन्नं कारणं तस्स ॥

भा. [४५१३] सो तंमि चेव दव्वे खेत्ते काले य कारिणे पुरिसो ।
तारिसयं अकरेंतो न हु सो आराहतो होइ ॥

भा. [४५१४] सो तंपि चेव दव्वे खेत्ते काले य कारणे पुरिसे।
तारिसयं चिय भुया, कुव्वं आराहगो होइ॥

वृ. अथवेति प्रकारान्तरे येनान्यदा परस्य शोधिः क्रियमाणा दृष्टा स तत् सर्वं स्मरति। यथा एवं भूतेषु द्रव्यादिष्वेवंभूते कारणे जाते एवंभूतं प्रायश्चित्तं दत्तमिति पुनरन्यदास्य पुरुषस्योपलक्षणमेतदन्यस्य वा तादृशमेव पुनः कारणं समुत्पन्नं ततो यदि तस्मिन्नेव तादृश एवेत्यर्थः। द्रव्ये क्षेत्रे काले चशब्दाद्‌भावे च तादृश एव कारणे तस्मिन्नेव तादृशे वा पुरुषे तादृशः कुर्वन् रागेण वा दोषेण वा अन्यथा प्रायश्चित्तं ददानो वर्तते। तदा स न हु नैवं आराधको भवति। अथ स तस्मिन्नैव द्रव्ये क्षेत्रे काले भावे च कारणे पुरुषे च तादृशं करोति, स तदा आराधको भवति, धारणा व्यवहारस्यैव पुनरन्यथा प्रकारमाह-

भा. [४५१५] वेयावच्चकरो वा सीसो वा देसहिंडगो वावि।
दुम्मेहत्ता न तरइ आराहेउ बहुं जो उ॥

भा. [४५१६] तस्स उ उद्धरिऊण अत्थपयाइं देंति आयरियो।
जेहिं उ करेइ कज्जं आहारेन्तो उ सो देसं॥

वृ. यथाचार्याणां वैयावृत्यकारो यो वा संमतः शिष्यो यस्तु वा देशहिण्डको देशदर्शनं कुर्वतः सहाय आसीत्। स समस्तच्छेदश्रुतार्थं दुर्मेधस्त्वान्नावधारयितु शक्नोति, ततस्तस्योऽभृत्यानुगृहात् कानिचिदर्थपदान्याचार्या ददति यैः सं च्छेदश्रुतस्य देशमवधारयन् कार्यं करोति, एष धारणाव्यवहारः। उपसंहारमाह-

भा. [४५१७] धारणाववहारो सो जहक्कमं वन्नितो समासेन।
जीएणं ववहारं सुण वच्छ जहक्कमं वुच्छं॥

वृ. एष धारणाव्यवहारो यथाक्रमं समासेन वर्णितः साम्प्रतं जीतेन व्यवहारं यथाक्रमं वक्ष्ये, तं वत्स वक्ष्यमाणं शृणु। तथा चाह-

भा. [४५१८] वत्तनुवत्तपवत्तो बहुसो अनुवत्तिउ महाजनेनं।
एसो य जीयकप्पो पंचमओ होइ ववहारो॥

वृ. यो व्यवहारो वृत्त एकवारं प्रवृत्तो भूयः प्रवृत्तो वारद्वयं प्रवृत्त इति भावः तथा बहुशोऽनेकवारं प्रवृत्तः महाजनेन चानुर्तितो एष पञ्चमको जीतकल्पो व्यवहारो भवति।

वृत्तादिपदानां व्याख्यानमाह-

भा. [४५१९] वत्तोनामं एक्कसि अनुवत्तो जो पुणो बितिय वारं,
तइयवारं पवत्तो परिग्गहितो महाजणेण॥

वृ. एकस्मिमेकवारं यः प्रवृत्तः स प्रवृत्तो नाम, यः पुनर्द्वितीयवारं प्रवृत्तः सोऽनुवृत्तः तृतीयवारं वृत्तः प्रवृत्तोऽनुवृत्तः प्रवृत्तोऽनुवर्तितो स परिगृहीतो महाजनेनात्र परस्य प्रश्नमाह-

भा. [४५२०] चोदेती वोच्छिन्नो सिद्धपहे तइयगम्मि पुरिसजुगे।
वोच्छिन्ने तिविहे संजमंमि जीएण ववहारो॥

वृ. परश्चोदयति किं तृतीये पुरुषयुगे जम्बूस्वामिनाम्नि सिद्धिपथे व्यवच्छिन्ने च त्रिविधे संयमे परिहारविशुद्धप्रभृतिके जीतेन व्यवहारः। अत्र केचिदुत्तरमाहु-

भा. [४५२१] संघयणं संठाणं च पढम जो य पुव्व उवओगो ।
ववहारे चउकंपि य चोद्दसपुव्वंमि वोच्छिन्न ॥

वृ. प्रथमसंहननं वज्रर्षभनाराचं । प्रथमसंस्थानं समचतुरस्रं यश्चान्तर्मुहूर्तेन चतुर्दशानामपि पूर्वाणामुपयोगोऽनुप्रेक्षणं यच्चादिमं आगमश्रुताज्ञाधारणालक्षणं व्यवहारे चतुष्कमेतत्सर्वं चतुर्दश-पूर्विणी चतुर्दशपूर्वधरे व्यवच्छिन्नं । एतन्निराकुर्वन् भाष्यकृदाह-

भा. [४५२२] अहायरितो एवं ववहहारचउक्कं जे उ वोच्छिन्नं ।
चउद्दसपुव्वधरम्मी घोसंती तेसिमनुग्घाया ॥

वृ. एवं परेणोत्तरे कृते आचार्यः प्राह-ये एवं प्रागुक्तप्रकारेण व्यवहारचतुष्कं चतुर्दशपूर्वधरे व्यवच्छिन्नं घोषयन्ति तेषां प्रायश्चित्तं चत्वारो मासा अनुद्घाता गुरुका मिथ्यावादित्वात्, मिथ्यावादित्वमेव प्रविकटयिषुरिदमाह-

भा. [४५२३] जे भावा जहियं पुण चोद्दसपुव्वंमि जंबुनामे य ।
वोच्छिन्ना ते इणमो सुणसु समासेन सीसंतो ॥

वृ. ये भावा यस्मिन् चतुर्दशपूर्विणि ये जम्बूनाम्नि व्यवच्छिन्नास्तान् समासेन शिष्यमाणा-निमान शृणुत । तानेवाह-

भा. [४५२४] मनपरमोहिपुलाए आहारग खवग उवसम्मे कप्पे ।
संजमतियकेवलि सिज्झणा य जंबुम्मि वोच्छिन्ना ॥

वृ. मनःपर्यायज्ञानिनः परमावधयः पुलाको लब्धिपुलाकः आहारकः आहारशरीरलब्धिमान् क्षपकः क्षपकश्रेणिरुपशमे उपशमश्रेणिः कल्पो जिनकल्पः संयमत्रिकपरिहारविशुद्धिसूक्ष्म - सम्पराय: यथाख्यातलक्षणं केवलिनः सिधना चैते भावा जम्बूस्वामिनि व्यवच्छिन्नाः इह केवलिग्रहणेन सिज्झणा ग्रहणेन वा गतेन यत् उभयोपादानं ततः यः केवली स नियमात् सिध्यति । यश्च सिध्यति स नियमात्केवली सन्निति ख्यापनार्थम् ।

भा. [४५२५] संघयण संठाणं च पढमगं जो य पुव्वउवउगो ।
एते तिन्नि वि अत्था चोद्दसपुव्विम्मि वोच्छिन्नाः ॥

वृ. प्रथमं सहननं संस्थानं यश्चान्तोमौहूर्तिकः समस्तपूर्वविषयउपयोगः एते त्रयोऽप्यर्था न जम्बूस्वामिनि तृतीयपुरुषयुगे व्यवच्छिन्नाः किन्तु चतुर्दशपूर्विणि भद्रबाहौ, व्यवहारचतुष्कं पुनः पश्चादप्यनुवृत्तं यत आह-

भा. [४५२६] केवलमनपज्जवनाणिणो य तत्तो य ओहिनाणजिना ।
चोद्दसदसनवपुव्वी आगमववहारिणो धीरा ॥

भा. [४५२७] सुत्तेण ववहरंते कप्पववहार धारिणो धीरा ।
अत्थधरववहारंते आणाए धारणा ए य ॥

भा. [४५२८] ववहारचउक्कस्स, चोद्दसपुव्विम्मि छेदो जं ।
भणियं तं ते भिन्ना, जम्हा सुत्तं अत्थो य धरए य ॥

वृ. केवलिनो मनः पर्यायज्ञानिनोऽवधिज्ञानजिनाश्चतुर्दशपूर्विणो दशपूर्विणो नवपूर्विणश्च एते षट् धीरा आगमव्यवहारिणः ये पुनः कल्पव्यवहारिणो धीरास्ते सूत्रेण कल्पव्यवहारगतेन

व्यवहरन्ति। ये पुनश्छेदश्रुतस्यार्थधरास्ते आज्ञया धारणया च व्यवहरन्ति। छेदश्रुतस्य च सूत्रमर्थश्चाद्यापि धरते विद्यते दशपूर्वधरा अपि चागमव्यवहारिणस्ततो व्यवहारचतुष्कस्य चतुर्दशपूर्विणि व्यवच्छेद इति यद् भणितं तान्मिथ्या। अन्यच्च-

भा. [४५२९] तित्थोगालीएत्थं, वत्तव्वा होइ आनुपुव्वीए;
जे तस्स उ अंगस्स, वुच्छेदा जहिं विनिद्दिट्ठो॥

वृ. तेषां मिथ्यावादित्वप्रकटनाय यो यस्यां यो यस्यान्यस्य वा यत्र व्यवच्छेदो निर्दिष्टः सा तीर्थोगालिरत्रानुपूर्व्या क्रमेण वक्तव्या, येन विशेषस्तेषां प्रत्यय उपजायते।

अथ कोऽसौ जीतव्यवहारं प्रयुञ्जीतेत्यत आह-

भा. [४५३०] जो आगमेन सुत्ते य सुन्नतो आणधारणाए य।
सो ववहारं जीएण कुणइ वत्तानुवत्तेण॥

वृ. य आगमेन सूत्रेण च तथा आज्ञया धारणया च शून्यो रहितः स जीतेन वृत्तानुवृत्तेन, अस्य व्याख्यानं प्राग्वद्व्यवहारं करोति। वृत्तानुवृत्तत्वमेव भावयति-

भा. [४५३१] अमुगो अमुगत्थ कउ जह अमुगस्स अमुएण ववहारो।
अमुगस्सवि य तह कतो अमुगो अमुगेन ववहारो॥

भा. [४५३२] तं चेवणुमज्जंतो ववहारविहिं पउंजति जहुत्तं।
जीएण एस भणितो ववहारो धीरपुरिस्सेहिं॥

वृ. अमुको व्यवहारोऽमुके कारणे समुत्पन्ने अमुकस्य पुरुषस्यामुकेनाचार्येण यथा कृत एतेन वृत्तत्वं भावितं, तथैव वामुकस्य यादृशे एव कारणेनामुकेनाचार्येणामुको व्यवहारः कृतः एतेनानुवृत्तत्वमुपदर्शितं तमेव वृत्तानुवृत्तं जीतमनुमज्जन् आश्रयन् यथोक्तं व्यवहारविधिं यत् प्रयुक्ते एष जीतेन व्यवहारो धीरपुरुषैर्भणितः।

भा. [४५३३] धीरपुरिसपन्नत्तो पंचमगो आगमो वि उ पसत्थो।
पियधम्मवज्जभीरू पुरिसज्जायाणुचिन्नो य॥

वृ. एष पञ्चमको जीतव्यवहारो धीरपुरुषप्रज्ञप्तस्तीर्थकरगणधरैः प्ररूपितः आगमपञ्चविधः व्यवहारसूत्रात्मकतया श्रुतज्ञानविदश्चतुर्दशपूर्विणस्तैः कालं प्रतीत्य प्रशस्तः प्रशंसितस्तथापि प्रियधर्मभिरवद्यभीरुभिः पुरुषजातैरनुचीर्णस्तस्मात्सत्यतया प्रत्येतव्यो अर्थतः सूत्रतश्चयथाक्रमं तीर्थकरगणधरैरभिहितत्वात्। तथाहि-पञ्चविहे ववहारे पण्णत्ते इत्यस्य सूत्रस्यर्थः। तीर्थकरैर्भाषितो गणधरैश्च श्रद्धाय सूत्रीकृतोऽत एवोतमैः पुरुषजातै आचीर्णस्ततः कथमत्र न प्रत्यय इति। अधुना जीतव्यवहारे निदर्शमाह-

भा. [४५३४] सो जह कालादीनं, अप्पडिकंतस्स निव्विगईयं तु।
मुहनंतफिडियपाणग असंवरणे एवमादीसु॥

वृ. स जीतव्यवहारो यथेत्युदाहरणमात्रोपदर्शनकालादिभ्य आदिशद्वात् स्वाध्यायादिपरिग्रहो अप्रतिक्रान्तस्तस्य ते मुखानान्तके मुखे पोतिकायां स्फिटितायां मुखपोतिकामन्तरेणेत्यर्थः। तथा पानकस्यासंवरणे पानाहारप्रत्याख्यानाकरणे निर्विकृतिकं प्रायश्चित्तम्।

भा. [४५३५] एगिंदियानंतवज्जे घट्टण तावण गाढगाढे य;

निव्वितिगमादीयं जा आयामं तु उद्दावणे ॥

वृ. एकेन्द्रियस्य...पृथिव्यप्तेजोवायुप्रत्येकवनस्पतीनामित्यर्थः घट्टने अनागाढे तापने आगाढे च निर्विकृतिकादिकं यावदायाममाम्लमपद्रावणे जीवितात् व्यपरोपणे इयमत्र भावना-पृथिवीकायिकाप्कायिकतेजस्कायकवायुकायिकप्रत्येकवनस्पतीनां घट्टने निर्विकृतिकमनागाढे परितापने पूर्वार्धमागाढपरितापने एकाशनमपद्रावणे आयामाम्लमिति।

भा. [४५३६] विगलिंदियघट्टण तावणा गाढगाढे तहेव उद्दवणा।
पुरिमड्ढाइ कमेण नायव्वं जाव खमणं तु ॥

भा. [४५३७] पंचेंदिय घट्टण तावणा य गाढगाढे तहेव उद्दवणे।
एकासण आयामं खमणं तह पंचकल्लाणं ॥

वृ. विकलेन्द्रियाणां द्वीन्द्रियप्रभृतीनां घट्टने तापने अनागाढे आगाढे च तथा अपद्रावणे पूर्वार्धादिक्रमेण ज्ञातव्यं यावत्क्षपणं किमुक्तं भवति। घट्टने पूर्वार्धमनागाढपरितापने एकाशनं गाढपरितापने आयामाम्लमपद्रावणे क्षपणमिति, तथा पंचेंद्रियाणाकघट्टने एकाशनमनागाढ-परितापने आयामाम्लमागाढपरितापने अभक्तार्थमपद्रावणे पञ्चकल्याणं निर्विकृतिकपूर्वार्ध-एकाशनकायामाम्लक्षपणरूपम्।

भा. [४५३८] एमाईउ एसो नायव्वो होइ जीयववहारो।
आयरियपरंपरएण आवतो जाव जस्स भवे ॥

वृ. एवमादिक एष जीतव्यवहारो भवति ज्ञातव्यः यो वा यस्य आचार्यपरम्परकेणागतः से तस्य जीतव्यवहारो ज्ञातव्यः

भा. [४५३९] बहुसो बहुस्सुए हिं जा वत्तो न य निवारितो होइ।
वत्तणुवत्तपमाणं जीएण कयं भवति एयं ॥

वृ. यो व्यवहारोबहुश्रुतैं बहुशो अनेकवारं वृत्तः प्रवर्तितो न चान्यैर्बहुभिः श्रुतैर्भवति विद्यते निवारितः। एतेन वृत्तानवृत्तं जीतेन प्रमाणं कृतं भवति। स जीतव्यवहारः प्रमाणीकृत इति।

भा. [४५४०] जं जीतं सावज्जं न तेन जीएन होइ ववहारो।
जं जीयमसावज्जं तेन उ जीएन ववहारो ॥

वृ. यत् जीतं सावद्यं न तेन जीतेन भवति व्यवहारः, यत् जीतमसावद्यं तेन जीतेन व्यवहारः। अथ किं सावद्यजीतमित्यत आह-

भा. [४५४१] छारहडिहडमालापोट्टेण य रिंगणं तु सावज्जं।
दसविह पायच्छित्तं होइ असावज्जं जीयं तु ॥

वृ. यत् प्रवचने लोके चापराधविशुद्धये समाचारितं क्षारवगण्डनं हडौ गुप्तिगृहप्रवेशनं खरमारोपणं पोट्टेण उदरेण रंगणं तु शब्दत्वात् स्वरारूढं कृत्वा ग्रामे सर्वतः पर्यटनमित्येवमादि सावद्यं जीतं, यत्तु दशविधमालोचनादिकं प्रायश्चित्तं तदसावद्यं जीतं अपवादतः कदाचित्साव द्यमपि जीतं दद्यात्। तथा चाह-

भा. [४५४२] उस्सन्नबहूदोसे निद्धंधसे पवयणे य निरवेक्खो।
एयारिसंमि पुरिसे दिज्जइ सावज्जं जीयंपि ॥

वृ. उत्सन्नेन प्रायेण बहुदोषे निद्धंधसे सर्वथा निर्दये तथा प्रवचने पवचनविषये निरपेक्षे एतादृशे पुरुषेऽनवस्थाप्रसङ्गनिवारणाय सा वद्यमपि जीतं दीयते ।

भा. [४५४३] संविग्गे पियधम्मे अप्पमत्ते य वज्जभीरुम्मि ।
कम्हिइयमाइ खलिए देयमसावज्जं जीयं तु ॥

वृ. संविग्ने प्रियधर्मिणी अप्रमत्तेऽवद्यभीरौ । कस्मिंश्चित्प्रमादशवशतः स्खलिते देयमसावद्यं जीतं-

भा. [४५४४] जं जीयमसोहिकरं न तेन जीएण होइ ववहारो
जं जीयं सोहिकरं तेन उ जीएन ववहारो ॥

वृ. यत् जीतमशोधिकरं न तेन जीतेन भवति व्यवहारः कर्तव्यः, यत्पुनः जीतं शोधिकरं तेन जीतेन व्यवहारो विधयेः, शोधिकराशोधिकरजीतप्रतिपादनार्थमाह-

भा. [४५४५] जं जीयमसोहिकरं पासत्थपमत्तसंजयाईण्णं ।
जइवि महाजनाइन्नं न तेन जीएण ववहारो ॥

भा. [४५४६] जं जीयं सोहिकरं संवेगपरायणेन दत्तेण ।
एगेन वि आइन्नं तेन उ जीएन ववहारो ॥

वृ. यत् जीतं पार्श्वस्थप्रमत्तसंयताचीर्णमतएवाशोधिकरं तत् यद्यपि महाजनाचीर्थं तथापि न जीतेन व्यवहारः कर्तव्यः । तस्याशोधिकरत्वात् यत्पुनर्जीतं संवेगपरायणेन दान्तेन एकेनाप्याचीर्णं तत् शोधिकरं कर्तव्यम् ।

भा. [४५४७] एवं जहोवदिट्ठस्स धीरविउद्देसियपसत्थस्स ।
नीसंदो ववहारस्स कोवि कहिओ समासेण ॥

वृ. एवमुक्तेन प्रकारेण पञ्चविधस्य धीरैस्तीर्थकरणधरैर्यथा यथा क्रमतः सूत्रतश्च दर्शितो विदश्चतुर्दशपूर्वधरास्तैः प्रशस्तः प्रशंसितस्तस्य निष्पन्दः कोऽपि कथितः समासेन विस्तरेणाभिधातुमशक्तत्वात् । तथा चाह-

भा. [४५४८] को वित्थरेण वोत्थूण समत्थो निरवसेसिए अत्थे ।
ववहारे जस्स मुहे हवेज्ज जीहासयसहस्सं ॥

भा. [४५४९] किं पुण गुणोवएसो ववहारस्स उचिउ पसत्थस्स ॥
एसो भे परिकहिओ दुवालसंगस्स नवनीयं ॥

वृ. यस्य मुखे जिह्वा शतसहस्र जिह्वालक्षं भवेत् । सोऽपि को नाम व्यवहारे व्यवहारसूत्रस्य निरवशेषितान् वक्तुं समर्थो नैव कश्चित् किन्त्वेष व्यवहारस्य व्यवहारसूत्रस्य उचितः प्रशस्तस्य चतुर्दशपूर्वधरभद्रबाहुस्वामिना दत्तस्य गुणोपदेशो गुणोत्पादननिमित्तमुपदेशो भे भवतां कथितः किं विशिष्ट इत्याह- द्वादशाङ्गस्य नवनीतमित्यर्थः ॥

*मू. ( २५२ ) चत्तारि पुरिसज्जाया पन्नत्ता । तं जहा- अट्ठकरे नामं एगे नो मानकरे, मानकरे नामं एगे नो अट्ठकरे, २ । एगे अट्ठकरे वि मानकरे वि ३ एगे नो अट्ठकरे नो मानकरे ४, ।*

वृ. एतत्प्रभृतीनां च पुरुषजातसूत्राणामयं सम्बन्धः ॥

भा. [४५५०] ववहारकोविदप्पा तदट्ठे नो पमायए जोगे ।

मा य हु तदुज्जमत्ते कुणमाणं एस संबंधो ॥

वृ. पञ्चविधव्यवहारकोविदात्मा तदर्थे व्यवहारार्थे योमे न मनोवाकायान् प्रमादयति न व्यवहार-विषये प्रमादमाचरतीति भावः । मा च हु निश्चितं तस्मिन् व्यवहारे उद्यच्छति उद्यमं कुर्वति मानमहंकारं कार्षीदति ज्ञापयत्येवमादीनि सूत्राणि । एष पुरुषजातसूत्राणां सम्बन्धः ।

भा. [४५५१]　　पुव्वुत्ता व पुरिसजाया अत्थतो न वि गंथउ ।
तेसिं परूवणत्थं तदिदं सुत्तमागयं ॥

वृ. वा शब्दः प्रकारान्तरद्योतने अथवा अनेन व्यवहारेण सूत्रेण अर्थतः पुरुषजाता उक्ताः सूचिता न वै ग्रन्थत उक्ता तेषां प्ररूपणार्थं तादिदं सूत्रं पुरुषजातसूत्रमागतम् । अस्याक्षरगमनिका तु प्रतीता । विस्तरार्थं भाष्यकृदाह -

भा. [४५५२]　　पुरिसज्जाया चउरो वि भासियव्वा उ आनुपुव्वीए ।
अत्थकरे मानकरे उभयकरे नोभयकरे य ॥

वृ. अधिकृतभङ्गसूचिताश्चत्वारः पुरुषा इमे आनुपूर्व्या परिपाट्य विभावितव्यास्तद्यथा - प्रथमभङ्गेऽर्थकरो, द्वितीयभङ्गे मानकरः, तृतीय उभयकरश्चतुर्थे नोभयकरः चतुष्टयं ।

भा. [४५५३]　　पढमतइया एएसिं तु सफला निप्फला दुवे इयरे ।
दिट्ठंतो सगतेना सेवता अन्नरायाणं ॥

वृ. अत्र एषु चतुर्षु पुरुषेषु मध्ये प्रथमतृतीयौ सफलावितरौ द्वितीयचतुर्थौ निष्फलावेषु चतुर्ष्वपि दृष्टान्तोऽन्यराजानां सेवमानाः शकस्तेनास्तमेव दृष्टान्तमभिधित्सुराह-

भा. [४५५४]　　उज्जेनी सगरायं नीयागव्वा न सुट्ठु सेवेंति ।
वित्तियदानं चोज्जं निवेसया अन्ननिवे सेवा ॥

भा. [४५५५]　　धावयपुरतो तह मग्गतो य सेवइ य आसनं नीयं ।
भूमियंपि य निसीयइ । इंगियकारी उ पढमो ॥

भा. [४५५६]　　चिक्खल्ले अन्नया पुरतो उगतो से एगो नवरि सव्वतो ।
तुट्ठेण तहा रन्ना वित्ती उ सुपुक्खला दिन्ना ॥

वृ. यदा कालिकाचार्येण शका आनीतास्तदा उज्जयिन्यां नगर्यां शको राजा जातः । तस्य निजकात्मीया एकेऽस्माकं जात्या सदृश इति गर्वात्तं राजानं न सुष्ठु सेवन्ते । ततो राजा तेषां वृत्तिं नादात् । अवृत्तिकाश्चते चौर्यं कर्तुं प्रवृत्ताः । ततो राज्ञा बहुभिर्जनैर्विज्ञसेन निर्विषयाः कृताः ततस्तै देशान्तरं गत्वा अन्यस्य नृपस्य सेवा कर्तुमारब्धा । तत्रैकः पुरुषो राज्ञो गच्छतो आगच्छतश्च पुरतो धावति तथा मार्गतश्च कदाचित्स धावति राज्ञः चोर्ध्वस्थितस्योपविष्टस्य वा पुरतः स्थितः सेवते यद्यपि चोपविष्टः सन् (ते) राजानुजानाति । तथापि स नीचमासनमाश्रयते । कदाचिच्च राज्ञः पुरतो भूमावपि निषीदति राज्ञश्चेङ्गितं ज्ञात्वाऽनाज्ञसोपि विवक्षितप्रयोजनकारी अन्यदा च राजा पानीयस्य कर्दमस्य मध्येन धावितः शेषश्च भूयान् लोको निःकर्दमप्रदेशेन गन्तुं प्रवृत्तः स पुनः शकपुरुषोऽश्वस्याग्रतः पानीयेन कर्दमेन च सेव्यमान एकः से तस्य पुरतो धावति ततस्तस्य राज्ञा तुष्टेन सुपुष्कला अतिप्रभूता वृत्तिर्दत्ता ।

भा. [४५५७]　　बितिओ न करे अट्ठं मानं च करेइ जाइकुलमानी ।

न निवसति भूमीए न य धावति तस्य पुरतो उ ॥

वृ. द्वितीय: पुरुषोऽहमपि राजवंशिक इति गर्वात् न कमप्यर्थं राज्ञ: प्रयोजनं करोति। जातिकुलमानी सन्मानं च भूयांसमात्मनि करोति न च भूमौ निवसति, न च तस्य राज्ञ: पुरतो धावति। तृतीयमाह-

भा.[४५५८] सेवति नितोविदिन्नेवि आसनेपेसितो कुणइ अट्ठं।
बिइओभयकरो तइउ जुज्जइ य रणे समाभट्ठो ॥

वृ. तृतीय पुरुषो राजानं प्रथमपुरुषवत् सेवते नवरमश्वस्य पुरतो न धावति किन्तु पृष्ठस्तथा ऊर्ध्वस्थित: सेवते, वितीर्णे आसने स्थितोऽप्युपविष्टोऽपि आसने सेवते, न भूमौ निषीदति। तथा प्रेषित: सन् अर्थं करोति नाप्रेषितो मानवशादिति। एवमेष उभयकर:, रणे न राजपुत्र इति समाभाषितो युध्यते।

भा.[४५५९] उभयनिसेहो चऊत्थो वेइय चउत्थेहिं तत्थ न उलद्धा।
विती इयरेहिं लद्धा दिट्ठं तस्सुवणतो उ।

वृ. चतुर्थे पुरुषे उभयस्य अर्थस्य मानस्य च निषेध:। तत्र द्वितीयचतुर्थाभ्यानं वृत्तिर्लब्धा दृष्टान्तस्य एव वक्ष्यमाण उपनयस्तमेवाह-

भा.[४५६०] एमेवायरिस्स वि कोइ अट्ठं करेइ न व मानं।
अट्ठो उ उच्चमाणो वेयावच्चं दसविहं तु ॥

भा.[४५६१] अहवा अब्भुट्ठाणं आसणकितिकम्ममत्तए य संथारो।
उववायबहुविहा इच्चादि एवंति अट्ठा उ ॥

वृ. एवमेव शकपुरुषदृष्टान्तगतेन प्रमाणेन कोऽप्याचार्यस्यार्थं करोति। न च मानं अर्थो वक्ष्यमाणसूत्रेणोच्यमान: क: पुन: स इत्याह- दशविधं वैयावृत्यमथवा समागच्छतो अभ्युत्थान-मासनदानं कृतिकर्मविश्रामणा यथा क्षेलमुच्चारमात्रकस्य प्रश्रवणमात्रकस्य श्लेष्ममात्रकस्य चोपनय: संस्तारकस्य करणमुपपाताश्च समीपभवनलक्षणा बहुविधास्तत्प्रयोजनभेदतोऽनेक-प्रकारा इत्यादयो अर्था भवन्ति

भा.[४५६२] बितितो मानकरो ऊ को पुन मानो हवेज्ज तस्स इमो।
अब्भुत्थाणब्भत्थण होइ पसंसा य एमादी ॥

वृ. द्वितीयो भवति मानकर: क: पुनस्तस्य मान उच्यतेऽयं वक्ष्यमाणस्तमेवाह- अब्भुट्ठाण-मित्यादि। आगच्छतोऽभ्युत्थानं न कृतं यदि वा न मेऽभ्यर्थना, न वा कृता मम प्रशंसा इत्यादि।

भा.[४५६३] तइओ भय नोभयतो चउत्थ दोपि निप्फलगा।
सुत्तत्थो भयनिज्जरलाभो दोण्हं भवे तत्थ ॥

वृ. तृतीय उभयकरोऽर्थकरो मानकरश्चतुर्थो नोभयकरस्तत्र नो द्वितीयचतुर्थोभयनिर्जरा अलाभात्। तथाहि- न तयोराचार्या: सूत्रमर्थमुभयं वा प्रयच्छन्ति नापि ते निर्जरां प्राप्नुत:। द्वयो: प्रथमतृतीययो: सूत्रार्थौ भयनिर्जरालाभोऽर्थकारितया सर्वस्यापि संभवात्। तस्मात् प्रथमतृतीयाभ्यामिव वर्तितव्यं न द्वितीयचतुर्थाभ्यामिव-

*मू. ( २५३ ) चत्तारि पुरिसज्जाया पन्नत्ता तं जहा- गणट्ठकरे नामं एगे नो मानकरे १ मान-*

*करे नामं एगे नोगणट्ठकरे २ एगे गणट्ठकरे वि मानकरे वि ३ एगे नो गणट्ठकरे नो मानकरे४ ।*

वृ. अस्याक्षरगमनिका सुप्रतीता। प्रपञ्चो भाष्यकृदाह॥

भा.[४५६४] एमेव होंति भंगा चत्तारि गणट्ठकारिणो जइणो।
रन्नो सारूविय देवचिंतगा तत्थ आहरणं॥

वृ. एमेवानन्तरसूत्रोक्तप्रकारेण गणार्थकारिणोऽपि यतेश्चत्वारो भङ्गा भवन्ति। ते च सूत्रतः स्पष्टा एव। तेषु च चतुर्ष्वपि पुरुषजातेषु ये सारूपिका यतेः समानरूपधारिणो मुण्डितशिरस्का भिक्षाटनशीला इत्यादि प्रागुक्तस्वरूपा देवचिन्तका नाम ये शुभाशुभं राज्ञः कथयन्ति ते आहरणं दृष्टान्तस्तमेव भावयति-

भा.[४५६५] पुट्ठापुट्ठो पढमो उ साहइं न उ करेइ मानं तु।
बितिउ मानकरेइं पुट्ठो विना साहई किंचि॥

भा.[४५६६] तइओ पुट्ठो साहइ नो पुट्ठ चउत्थमेव सेवइ उ।
दो सफला दो अफला एवं गच्छे वि नायव्वा॥

वृ. प्रथमो राज्ञा पृष्टोऽपृष्टो वा यत्र शुभाशुभं वा साधयति, न मानं करोति, द्वितीयो मानं करोति, न च मानादेव पृष्टोऽपि किंचित् कथयति। तृतीयः पृष्टः नापृष्टश्चतुर्थः सेवते एव राजानं नेति। अत्र द्वौ प्रथमतृतीयो सफलौ द्वौ च द्वितीयचतुर्थावफलौ एवममुना दृष्टान्तगतेन प्रकारेण गच्छेऽपि द्वौ प्रथमतृतीयौ सफलौ द्वौ च द्वितीयचतुर्थावफलौ च ज्ञातव्यौ। तेषां चतुर्णामपि स्वरूपमाह-

भा.[४५६७] आहार उवहि सयनाइ एहिं गच्छस्सुपग्गहं कुणति।
बिइओ मानं उभयं च तइओ नोभय चउत्थो॥

वृ. प्रथम आहारोपधिशयनादिभिर्गच्छस्योपग्रहं करोति न च मानं, द्वितीयो मानः तृतीय उभयं गच्छस्योपग्रहं मानं च, चतुर्थो नोभयं गच्छस्योपग्रहं नापि मानमिति।

*मू. ( २५४ ) चत्तारि पुरिसज्जाया पन्नत्ता तं जहा- गणसंगहकरे नामं एगे नो मानकरे। एगे मानकरे नो गणसंगहकरे। एगे गणसंगहकरे वि मानकरे वि। एगे नो गणसंहकरे नो मानकरे॥*

वृ. अत्र सम्बन्धमाह-

भा.[४५६८] सो पुन गणस्स अट्ठो संगहो तत्थ संगहो।
दुविहो दव्वे भावे नियमा उ दोन्नि आहारनाणादी॥

वृ. अनन्तरसूत्रे गणार्थकर उक्तः स पुनर्गणस्यार्थं वा संग्रहस्ततसंग्रहकरप्रतिपादनार्थमिदं सूत्रं। तत्र सङ्ग्रहो द्विधा-द्रव्यतो भावतश्च। तत्र द्रव्ये भावे च द्वौ त्रिको द्रष्टव्यौ तद्यथा-आहारादिकं द्रव्ये ज्ञानादित्रिकं भावे तदेवं संग्रहं व्याख्याय संग्रहकरत्वयोजनामाह-

भा.[४५६९] आहारोवहिसेज्जाइएहिं दव्वंमि संगहं कुणइ।
सीस परिच्छे वाए भावे न तरंति जाहे गुरू॥

वृ. द्रव्यतः संग्रहं करोति आहारोपधिशय्यादिभिरत्रादिशब्द आहारादीनां स्वगतानेकभेदसूचकः। भावे न यदा गुरवः शक्नुवन्ति तथा शिष्यान् प्रतीच्छिकान् वा वाचयति। एष प्रथमः पुरुषः। द्वितीयो मानं करोतिन तु द्रव्यतो भावतो वा गणस्य संग्रहं, तृतीय उभयं, चतुर्थो नोभयमिति।

*मू. ( २५५ ) चत्तारि पुरिसज्जाया पन्नत्ता तं जहा- गणसोहकरे नामं एगे नो मानकरे एगे मानकरे नो गणसोहकरे, एगे गणसोहकरे वि मानकरे वि, एगे नो गणसोहकरे नो मानकरे ॥*

भा.[४५७०] एवं गणसोहंमि वि चउरो पुरिसा हवंति नायव्वा।
सो भावेत्ति गणं खलु इमेहिं ते कारणेहिं तु ॥

**वृ.** एवमुक्तेन प्रकारेण शोभायामपि कर्तव्यायां चत्वारः पुरुषा भवन्ति ज्ञातव्याः । तच्च सूत्रपाठसिद्धा एव । गणशोभाकरो नाम यो गणं शोभयति ते च गणं शोभापयन्ति शोभा खलु एभिर्वक्ष्यमाणैः कारणैः प्रयोननैर्वादादिभिस्तानेव वाद्यादीन् दर्शयति-

भा.[४५७१] गणसोभी खलु वादी उद्देसे सो उ पढमए भणितो।
धम्मकहि निमित्ती वा विज्जातिसएण वा जुत्तो ॥

**वृ.** गणं वादप्रदानतः शोभीयतीत्येवं शीलोः गणशोभी खलु वादी । स च वादेन यथा गणं शोभयति तथा प्रथमे उद्देशके भणितः न केवलं वादी गणशोभी किन्तु धर्मकथी । तथाहि- धर्मकथायां यथोक्तं स्वरूपमाक्षेपतः कथयतो जनयपि गणस्य महतीं शोभां तथा निमित्ती अतीतादिनिमित्त कथयतो विद्यातिशयेन वा युक्तो गुणशोभी महतोऽपि सङ्घप्रयोजनस्य विद्या-प्रभावतः साधनात् ॥

*मू. ( २५६ ) चत्तारि पुरिसज्जाया पन्नत्ता । तं जहा- गणसोही करे नामं एगे नो मानकरे एगे मानकरे, नो गणसोहीकरे । एगे गणसोहिकरेवि मानकरे वि, एगे नो गणसोहि नो मानकरे ॥*

भा.[४५७२] एवं गणसोहीकरा चउरो पुरिसा हवंति विन्नेया।
किह पुण गणस्स सोहिं करेज्ज सो कारणेमेहिं ॥

**वृ.** एवमुक्तेन प्रकारेण गणशोधिकाराश्चत्वारः पुरुषा भवन्ति विज्ञेयाः । कथं पुनः स प्रथम-स्तृतीयो वा गणस्य शोधिं कुर्यात् । सूरिराह- एभिर्वक्ष्यमाणैः कारणैरोजस्वित्वादिभिस्तान्येवाह-

भा.[४५७३] एगदव्वेगघरएगालो अणाए सका उ।
उयस्सि सम्मओ संथुओ य तं दुप्पवेसं च ॥

**वृ.** एकस्मिन् गृहेऽनेकैः संघाटकैः एकं द्रव्यं लब्धं । तद्यथा एकेन संघाटकेन एकस्मिन् गृहे पूपलिका लब्धा । अन्येनापि संघाटकेन तस्मिन्नेव गृहे तादृश्य एव पूपलिका लब्धाः । एवं तृतीयेन चतुर्थेन पञ्चमेन वा लब्धाः । तैः सन्निवृत्तैर्गुरुसमीपमागत्यालोचितं दर्शिताश्च पूपूलिका-स्ततो जाता सर्वेषां शङ्का जाता उद्गमाऽशुद्धा भवेयुः एवं शङ्किते गत्वा तद्गृहं द्रष्टव्यम् । किं युष्माकं गृहेऽद्य संखडिभत्तलाभनकं समागतमथवा प्राघूर्णकाः समागता यदि वा साधूनामर्थाय कृतः क्रीता वा । तेऽन्न च गृहे भिक्षावेलायां न कोऽपि प्रवेशं लभते । तत्र साधुरेक ओजस्वी गृहमानुषाणां संस्तुतः । संस्तुततया च तस्मिन् गृहे संमतो अनिवारितप्रसरस्तत् दुःप्रवेशं गृहं प्रविशति । प्रविश्य च निःशंकितं करोति । अत्र योऽप्रेषितो गत्वा निःशङ्की(कृ)त्य समागच्छति स प्रथमपुरुषजातः यस्तु मानेन गच्छति ॥

*मू. ( २५७ ) चत्तारि पुरिसज्जाया तं जहा- रूवं नामेगे जहइ नो धम्मं, धम्मं नामेगे जहइ नो रूवं एगे रूवंपि जहइ धम्मं पि जहइ, एगे नो रूवं जहइ नो धम्मं जहइ ॥*

**वृ.** अस्य सम्बन्धमाह-

भा.[४५७४] हेट्ठानंतरसुत्ते गणसोही एस सुत्तसंबंधो।
सोहत्ति व धम्मोत्ति व एगट्ठं सो दुहा होइ॥

वृ. अधस्तनेऽनन्तरसूत्रे गणस्य शोधिरुक्ता। शोधिरिति वा धर्मो इति वा एकार्थः। स च धर्मो द्विधा भवति रूपतो भावतश्च। तत्र तत्प्रतिपादनार्थमिदं सूत्रमित्येष सूत्रसम्बन्धः।

भा.[४५७५] रूवं होति सलिगं धम्मो नाणादियं तियं होइ।
रूवेण य धम्मेण य जढमजढे भंगचत्तारि॥

वृ. रूपं नाम भवति स्वलिंगं रजोहरणादिधर्मो ज्ञानादिकं त्रिकं रूपेण च त्यक्तेऽत्यक्ते च भंगाश्चत्वारः। ते न सूत्रपाठसिद्धा एव तेषां विषयभागमाह-

भा.[४५७६] रूवजढमन्नलिंगे धम्मजढे खलु तहा सलिगम्मि।
उभयजढो गिहिलिंगे दुहितो सहिओ लिंगेन॥

वृ. रूपं त्यक्तं येन स धर्मस्वरूपत्यक्तः सुखादिदर्शनात्पाक्षिकः त्यक्तस्य परनिपातः। सोऽन्यस्य लिङ्गे द्रष्टव्यः। इयमत्र भावना भावतो ज्ञानादित्रिकसमन्वितः कारणवशेनान्यलिङ्गं गृहलिङ्गं वा यः प्रतिपद्यते। अत्र निदर्शनं यथा-कोऽपि राजा महामिथ्यादृष्टिर्नास्तिकवादी वावदूकः पण्डिताऽभिमानी दर्शनिभिः सह वादं दत्वा तद्बुद्धिमुपजीव्य दर्शनिनो हीलयति। अन्यदा साधूनुपद्रावयितुं प्रवृत्तो मया सह वादो दीयतां। तत्रैकः साधुर्वादलब्धिसम्पन्नः खचरलब्धिमानभूत् सङ्घस्यापभ्राजनेति गृहिलिङ्गमन्यलिंगं वा कृत्वा राज्ञः समीपे वादेनोपस्थितः प्रवृत्तो द्वयोरपि वादः। तत्र राजाऽल्पशक्तिकत्वात् स्वपक्षं निर्वाहयितुमशक्नुवन हीलनां तस्य कृतवान्। ततः स वाददर्पस्फेटनाय तस्य राज्ञो मूर्धानं पदेनाक्रम्याकाशेन वायुरिव पलायित्वा। स्वस्थानं गतः एतदेवाह-

भा.[४५७७] तस्स पंडियमानस्स बुद्धिलस्स दुरप्पणो।
मुद्धं पाएण अकम्म वादी वाउरिवागतो॥

वृ. तस्य नास्तिकवादिनो राज्ञः पण्डितमानिनो बुद्धिः परस्य बुद्धि लात्युपजीवति इति बुद्धिलः तस्य दुरात्मनो मूर्धानं पादेनाक्रम्य वादी वायुरिव पलायित्वा स्वस्थानमागतः। एष प्रथमपुरुषो द्वितीयो धर्मत्यक्तो न रूपत्यक्त इत्येवं रूपः खलु स्वलिङ्गे सति प्रतिपत्तव्यः। स च पार्श्वस्थादी-नामन्यतमो निष्कारणप्रतिसेवी अवधावितुकामो वा वेदितव्यः। तस्य भावतस्त्यक्तधर्मत्वा-त्स्वलिङ्गस्य च धारणादिति। उभयजढो गिहिलिङ्गे इति उभयत्यक्तो मिथ्यादृष्टिर्गृहिलिङ्गे वर्तमान उभयसहितः स्वलिङ्गेन सहितो ज्ञानादित्रिकोपेतः।

*मू. ( २५८ ) चत्तारि पुरिसज्जाया पन्नत्ता तं जहा-गणसंट्ठितिं नामेगे जहति नो धम्मं, एगे धम्मं जहति, नो गणसंट्ठितिं। एगे धम्मंपि जहति गणसंट्ठितिं पि एगे नो धम्मं जहति नो गणसंट्ठितिं॥*

भा.[४५७८] गणसंट्ठितिं धम्मे या चउरो भंगा हवंति नायव्वा।
गणसंट्ठिति असिस्से महकप्पसुयं न दायव्वं।

वृ. पूर्वप्रकारेण गणसंस्थितौ धर्मे च भङ्गाश्चत्वारो भवन्ति ज्ञातव्यास्ते च तत्र पाठसिद्धा एव गणसंस्थितिर्नाम गणस्य मर्यादा यथा अशिष्येऽयोग्ये शिष्ये महाकल्पश्रुतं न दातव्यम्। सम्प्रति चतुर्णामपि भङ्गाना विषयविभागमाह-

भा.[४५७९] सातिसयं इयरं वा अन्नगणे ते न देयमज्झयणं।
पूइगणसंठितितो करेति सच्छंदतो केइ ॥

भा.[४५८०] देंतो दाता पढमो बितितो भंगो न कस्स इवि देते,
जो पुन अपत्त दायी, तइओ भंगो पडिच्छए वा जो देंति ॥

भा.[४५८१] उभयमवलंबमानं कामं तु तगंपि पुज्जामो।
सातिसयं देवेंदोपपातिकादि इतरद्धा ॥

वृ. महाकल्पश्रुतमन्यद्वाध्ययनमन्यगणसक्तस्य न दातव्यमिति एवं प्रकारा गणसंस्थितिः स्वच्छन्दं तीर्थकरानुपदेशेन कुर्वन्ति। तत्रैवं गणसंस्थितौ कृतायां योऽन्यगणसक्तेऽपि पात्रे महाकल्पश्रुतादिकमध्ययन ददाति तेन गणसंस्थितस्त्यक्तः न धर्मस्तीर्थकरोपदेशेन वर्तमानत्वात्। एष हि भगवतां तीर्थकृतामुपदेशः सर्वस्यापि पात्रस्याविशेषेण दातव्या। यस्तु गणसंस्थितौ कृतायां न कस्यापि परगणसक्तस्य ददाति स द्वितीयः अपात्रस्य ददाति तं प्राप्य तृतीयो भङ्गः। तेन गणस्थितेस्तीर्थकराज्ञाखण्डनतो धर्मस्य च त्यक्तत्वात्। यस्त्वन्यथा व्यवच्छेदं पश्यन् मेधावी प्रवचनोपग्रहकरो भविष्यतीत्यादिगुणसमन्वितं प्रतीच्छिकमुपलभ्य तस्य स्वयमेवं निजं दिग्बन्धं कृत्वा सातिशयन्यद्वाध्ययनं ददाति। तमप्यास्तां प्रथमभङ्गवर्तिनमित्यपि शब्दार्थः। उभयं गणसंस्थितिधर्मं चावलम्बमानं पूजयामः। एष चतुर्थपुरुषः।

*मू. ( २५९ ) चत्तारि पुरिसज्जाया पन्नत्ता। तं जहा- पियधम्मे नामं एगे नो दढधम्मे नोपियधम्मे दढधम्मे नाम एगे पियधम्मे वि दढधम्मे वि, एगे नो पियधम्मे नो दढधम्मे ॥*

वृ. अस्य सम्बन्धमाह-

भा.[४५८२] धम्मो न जहियव्वो गणसंठितिमिच्छतो पंससामो।
जस्स पिओ सो धम्मो सो न जहंति तस्सिमो जोग्गो ॥

वृ. अनन्तरसूत्रे इदमुक्तम्-गणसंठिति नामेगे जहति नो धम्मं। तत्र यस्य प्रियो धर्मः। स एवं चिन्तयति धर्मो न त्यक्तव्यो गणसंस्थितिमत्र न प्रशंसामः एवं चिन्तयित्वा धर्मं न जहाति एष तस्य प्रियधर्मसूत्रस्य योगः। सम्प्रति प्रियधर्मादिव्याख्यानार्थमाह-

भा.[४५८३] वेयावच्चेण मुनी उवचिट्ठइ संगहेण पियधम्मो ॥
उवचिट्ठइ दढधम्मो सव्वेसिं निरतिरायो य ॥

वृ. प्रियधर्मा मुनिर्यावत् द्रव्यत आहारादिना भावतो वाचनादि येन संगृह्यते तावत् वैयावृत्येन तस्योपतिष्ठते। नान्यदा अन्यस्य वा दढधर्मः। सर्वेषामविशेषेण वैयावृत्त्येनोपतिष्ठते तावत्सर्वत्र निरतिचारः। सम्प्रति भङ्गयोजनामाह-

भा.[४५८४] दसविहवेयावच्चे अन्नयरे खिप्पमुज्जमं कुणइ।
अच्चंतमनिव्वाही धिति विरय किसे पढमभंगो ॥

वृ. यो दशविधस्य वैयावत्यस्य वक्ष्यमानस्यान्तरस्मिन् वैयावृत्ये प्रियधर्मतया क्षिप्रमुद्यमं करोति, केवलमदढधर्मतया अत्यन्तमनिर्वाही तस्मिन् धृतिवीर्यकृशे प्रथमभङ्ग।

भा.[४५८५] दुक्खेन उगाहिज्जइ बिइओ गहियं ते नेइ जा तीरं।
उभयतो कल्लाणो तइतो चरितो चरिमो अ परिकुट्ठो ॥

वृ. द्वितीयस्तुनो प्रियधर्मत्वात् दुःखेन महता कष्टेन प्रथमतो वैयावृत्यं ग्राह्यते। गृहीतं तु यावत् प्रतिज्ञायास्तीरं तावन्नयति, उभयतः कल्याणस्तृतीयः, चरमे न प्रियधर्मो नापि दृढधर्म इत्येवं रूपो गच्छे प्रतिकुष्टो निराकृतः।

*मू. (२६०) चत्तारि आयरिया पन्नत्ता, तं जहा- पव्वायणायरिए एगे नामं नो उवट्ठावण आयरिए, उवट्ठावणायरिए नामं एगे नो पव्वावणायरिए। एगे पव्वायणायरिएवि उवठावणायरि-एवि। एगे नो पव्वायणायरिए नो उवट्ठायणायरिए धम्मायरिए।*

वृ. अस्य सम्बन्धमाह-

भा.[४५८६] अदढापियधम्मानं तव्विवरीए करेंति आयरिए।
तेसि विहाणंमि इमं कमेण सुत्तं समुद्दिट्ठं तु॥

वृ. अदृढधर्माणामप्रियधर्माणं चानुशासनाय स्थविराश्चाचार्या व्याख्यानार्थमाह-

भा.[४५८७] पव्वत्रण उट्ठावण उभय नोभयमिति चउत्थो।
अत्तट्ठ परट्ठा वा पव्वावणा केवला पढमे॥

भा.[४५८८] एमेव य बितितो वी कवलमेत्तं उवठवे सो उ।
तइउ पुन उभयं पीयत्तठ परट्ठ वा कुणउ॥

भा.[४५८९] जो पुन नो भयकारी सो कम्हा भवति आयरियो उ।
भण्णति धम्मायरितो सो पुन गहितो वसमाने वा॥

वृ. प्रथमे प्रव्राजनाचार्यः द्वितीये द्वितीयभंगेन सूचितः उपस्थापनाचार्यः तृतीयभंगसूचित उभयः, प्रव्राजनोपस्थापनाचार्यः तत्र प्रथमस्यात्मार्थस्य पारर्थस्य केवला प्रव्राजना किमुक्तं भवति आत्मनिमित्ते परनिमित्ते वा यः केवलं प्रव्राजयति, स प्रथम प्रव्राजनाचार्य एवमेवानेनैव प्रकारेण द्वितीयः स केवलं मात्रं उपस्थापयति, यः प्रव्राजितस्य सत उपस्थापनामात्रं करोति स द्वितीय इत्यर्थः,। तृतीयः पुनरपि प्रव्राजनमुपस्थापनं चात्मार्थं परार्थं वा करोति, यः पुनर्नोभयकारी स चतुर्थः। अथ स कस्माद्भवत्याचार्यः उभयविकलत्वात्। सूरिराह- भण्यते स धर्माचार्यो धर्मदेशकत्वात् स पुनर्गृही श्रमणो वा वेदितव्यः। एवं च यत्राचार्यास्तथाह-

भा.[४५९०] धम्मायरि पव्वायण तहय उठावणा गुरूतइओ।
कोइ तिहिं संपन्नो दोहिं वि एक्केक्कएण वा॥

वृ. प्रथमो धर्माचार्यो यस्तत्प्रथमतया धर्मं ग्राहयति। द्वितीयः प्रव्राजनाचार्यो यः प्रव्राजयति। तृतीयोगुरुरुपस्थापनाचार्यो यो महाव्रतेषूपस्थापयति। तत्र कश्चित्त्रिभिरपि सम्पन्नो भवति। तथाहि- कदाचित्स एवधर्मं ग्राहयति स एव प्रव्राजयति स एवोपस्थापयति। कश्चिद्द्वा-भ्यां। तद्यथा धर्मग्राहकत्वेन प्रव्राजनेन च अथवा धर्मग्राहकत्वेनोपस्थापनेन अथवा प्रव्राजनेनो-पस्थापनेन। केचिदेकैकेन गुणेन तद्यथा- कश्चित् धर्ममेव ग्राहयति कश्चित्प्रव्राजयत्येव कश्चिदुप-स्थापयत्येव

*मू. (२६१) चत्तारि आयरिया पन्नत्ता तं जहा- उद्देसणायरिए एगे नामं एगे नो वायणायरिए, वायणायरिए एगे नामं एगे नोद्देसणायरिए। एगे उद्देसणायरिएवि वायणायरिएवि। एगे नोद्देस-णायरिए नो वायणायरिए॥*

**वृ.** अमीषां स्वरूपमाह-

**भा.[४५११]** एगो उद्देसए सुयं एगो वाएइ तेन उद्दिट्ठं।
उद्दिसई वाएइ य धम्मायरिओ चउत्थो य ॥

**वृ.** एकः प्रथमः श्रुतमुद्दिशति न वाचयति। यथा मङ्गलबुद्ध्या प्रथमत आचार्य उद्दिशति तत उपाध्यायः,। अत्राचार्यः प्रथमभङ्गवर्ती उपाध्यायो द्वितीयभङ्गे। तथा चाह- एको द्वितीय उपाध्यायस्तेनाचार्येणोद्दिष्टं वाचयति। य एवोद्दिशति स एव वाचयति एष तृतीयः। उभयविकलश्चतुर्थो धर्माचार्यः

*मू.( २६२ ) चत्तारि अंतेवासी पन्नत्ता तं जहा- पव्वावणंतेवासी नाममेगे नो उवट्ठावणंतेवासी, उवट्ठावणंतेवासी नाममेगे नो पव्वावणंतेवासी, एगे पव्वावणंतेवासी वि उवट्ठावणंतेवासी वि एगे नो पव्वा वणंतेवासी नो उवट्ठावणंतेवासी*

*मू.( २६३ ) चत्तारि अंतेवासी पन्नत्ता, तं जहा - उद्देसणंतेवासी*नामं एगे नो वायणंतेवासी वायणंतेवासीनामं एगे नो उद्देसणंतेवासी एगे उद्देसणंतेवासी वि वायणंतेवासी वि । एगे नोउद्देसणंतेवासी नोवायणंतेवासी ॥

अस्य सूत्रस्य सम्बन्धप्रतिपादनार्थमाह -

**भा.[४५१२]** पमुच्चायरियं होइ अंतेवासी उ मेलणा।
अंतिगमज्झासमासन्नं समीवं चेव आहियं ॥

**वृ.** अधस्तनानन्तरसूत्रे आचार्याः प्रोक्ताः। आचार्यं च प्रतीत्यान्तेवासी भवति। ततो अन्तेवासी सूत्रमित्येषामेलनासम्बन्धः। अत्रान्तेवासी तत्र योऽन्तशब्दव्याख्यानार्थमेकार्थिकान्याह- अन्तं नाम अन्तिकमध्यास आसन्नं समीपं चैवाख्यातं। तत्र वसतीत्येवं शीलो अन्तेवासी।

सम्प्रति भङ्गभावनार्थमाह-

**भा.[४५१३]** जह चेव उ आयरिया अंतेवासी वि होइ एमेव।
अंते य वसति जम्हा अंतेवासी ततो होइ ॥

**वृ.** यथा चैव आचार्या उद्देशनादिभेदतश्चतुर्धा भवन्ति एवमेव अन्तेवासिनोऽपि यस्मादाचार्यस्यान्ते वसति तस्माद्भवत्याचार्यचतुर्द्धान्तेवासी। इयमत्र भावना- यो यस्यान्ते उद्देशनमेवाधिकृत्य वसति वर्तते स तं प्रत्युद्देशनान्तेवासी यस्यान्ते वाचनामेवाधिकृत्य वसति तस्य वाचनान्तेवासी। यस्तूद्देशनं वाचनां चाधिकृत्य यस्मान्ते भवति स तं प्रत्युभयान्तेवासी यस्यान्ते नोद्देशनं नापि वाचनामधिकृत्यान्ते वसति किन्तु धर्मश्रवणमधिकृत्य स तं प्रत्युभयविकलो धर्मान्तेवासी। एवं च त्रयोऽन्तेवासिनस्तथा धर्मान्तेवासी उद्देशनान्तेवसी वाचनान्तेवासी च। तत्र कश्चित्त्रिभिरपि प्रकारैः समन्वितो भवति, कश्चिद् द्वाभ्यां कश्चिदेकेन।

*मू.( २६४ ) तओ थेरभूमीतो पन्नत्ता तं जहा- जातिथेरे सुयथेरे परियायथेरे य। सट्ठिवरिसजाए जातिथेरे ठाणसमवायधरे सुयथेरे, वीसवासपरियाए परियायथेरे ॥*

**भा.[४५१४]** थेराणमंतिए वासो सो व थेरो इमो तिहा।
भूमिं निय ट्ठाणंत्ति य एगट्ठा होंति कालो य ॥

**वृ.** अनन्तरसूत्रे अन्तेवासिन उक्ताः। अन्तिके वासः स्थविराणां स च स्थविरोऽयं वक्ष्यमान

त्रिधेत्यनेन प्रक्रमेण समापिततमित्येष सूत्रसम्बन्धः। साम्प्रत्यस्य व्याख्या-तिस्त्रः स्थविराणां भूमयः प्रज्ञप्ताः भूमिरिति स्थानमिति अवस्थारूपकाल इति त्रयोऽपि शब्दा एकार्थाः। उक्तं च थेरभूमिति वा थेरट्ठाणंति वा थेरकालोत्ति वा एगट्ठमिति।

भा.[४५९५] तिविहम्मि य थेरम्मी परूवणा जा जहिं सए ट्ठाणे।
अनुकंपसुए पूआ परियाए वंदनादीणि॥

वृ. त्रिविधस्थविरे त्रिविधस्थविरविषये च यत्र यस्मिन् स्थाने प्ररूपणा सा सूत्रतः कर्तव्या। तद्यथा -षष्टिर्वर्षजातो जातिस्थविरः स्थानसमवायधरः श्रुतस्थविरः विंशतिवर्षपर्यायः पर्यायस्थविरस्तथा जातिस्थविरस्यानुकम्पा कर्तव्या। श्रुते श्रुतिस्थविरस्य पूजा पर्याये पर्यायस्थविरस्य वन्दनादीनि साम्प्रतमेतान्येव त्रीणि कर्तव्यानि विस्तरेणाह-

भा.[४५९६] आहारोवहि सेज्जा संथारो खेत्तसंकमे।
किति छंदानुवत्तीहिं नु वत्तंति थेरगं॥

भा.[४५९७] उट्ठाणासनदानादी जोग्गाहारपसंसणा।
नीया सेज्जाएनिदेसवत्तितो पूएइ संथुयं॥

भा.[४५९८] उट्ठाणं वंदनं चेव गहणं दंडगस्स य।
परियायथेरगस्स करेंति अगुरोवि॥

वृ. जातिस्थविरस्य कालस्वभावानुगत आहारो दातव्यः। उपधिर्यावता संस्तरति तावत्प्रमानः शय्या वसतिः। सा ऋतुक्षमा दातव्या संस्तरको मृदुकः क्षेत्रसंक्रमे क्षेत्रान्तरे संक्रामयितव्ये तस्योपधिमन्ये वहन्ति। पानीयेन चानुकम्पते। उक्ता जातिस्थविरस्यानुकम्पा, श्रुतस्थविरस्य पूजामाह- किइ इत्यादि कृतिच्छदोनुवृत्तिभ्यां स्थविरं श्रुतस्थविरमनुवर्तयन्ति। किमुक्तं भवति? श्रुतस्थविरस्य कृतिकर्मवन्दनकं दातव्यं, च्छन्दतश्च तस्यानुवर्तनीयम्। तथा उट्ठाणत्ति आगतस्याभ्युत्थानं कर्तव्यं, आसनप्रदानामादिशब्दात्, पादप्रमार्जनादिपरिग्रहः,। तथा योग्याहारोपनयं समक्षं परोक्षत्वात्प्रशंसना गुणकीर्तन, तथा तत्समक्षनीचशय्यायामवस्थातव्यम्। निर्देशवर्तिकत्वमेवं श्रुतं श्रुतस्थविरं पूजयेत्। तथा पर्यायस्थविरस्यागुरोरप्यप्रव्राजकस्यप्यवाचनाचार्यस्यापि आगच्छत उत्थानं (कुर्वन्ति) कुर्वीशाः। वन्दनकं च क्षमाश्रमणतो दण्डकस्य च ग्रहणमिति।

*मू.( २६५ )ततो सेहभुमीओ पन्नत्ताओ तं जहा- सत्तराइंदिया चउमासिया छम्मासिया, छम्मासिया य उक्कोसिया चाउम्मासिया मज्झमिया सत्तराइंदिया जहन्ना।*

भा.[४५९९] तुल्ला भुमिसंखाविया च ट्ठावेंति ते इमे हुंति।
पडिवक्खतो व सुत्तं परीयाए दीहहस्से य॥

वृ. तुल्या भूमीसंख्या शैक्षिणकाणामिति कृत्वा अथवा पूर्वसूत्रे स्थविरा उक्ताः। ते च स्वयं स्थित्वा अन्यान् स्थापयन्ति। ते चाप्येवं स्थाप्यामाना इमे वक्ष्यमाना भवन्तीति तत्प्रतिपादनार्थमिदं सूत्रमथवा प्रतिपक्षत इद सूत्रपातितं। तद्यथा- पूर्वसूत्रे स्थविरास्तेषां च प्रतिपक्षाः शैक्षा यदि वा स्थविराणां दीर्घः पर्यायः शैक्षकाणां शैक्षकत्वेन ह्रस्व इति स्थविरसूत्रानन्तरं शैक्षकसूत्रम्। अस्याक्षरगमनिका प्राग्वत्। सम्प्रति शैक्षकाणां यद्वक्तव्यं तत्संसूचनाय द्वारगाथामाह-

भा.[४६००] सेहस्स तिन्निभूमीतो दुविहा परिणामगा दुवे जम्मा।

पत्तजहंते संभुजणा य भूतित्तिय विवेगो ॥

वृ. शैक्षकस्य तिस्रो भूमयो वक्तव्याः। सूत्रोपात्तत्वात्तथा शैक्षका द्विविधाः परिणामका वक्तव्याः। द्वौ च जड्डौ तथा प्रात्राणि पात्रभूतान् त्यजति दोषा वक्तव्याः। संभोजना च तथा भूमित्रिकस्यं जलमूककरणजड्डलक्षणस्य विवेकः परित्यागो वक्तव्यः एष गाथाद्वारसंक्षेपार्थः। व्यासार्थस्तु प्रतिद्वारमभिधातव्यः। तत्र प्रथमतो भूमिद्वारमाह-

भा.[४६०१] सेहस्स तिन्नि भूमी जहन्न तह मज्झिमा य उक्कोसा।
राइंदिव सत्त चउमासिया य छम्मासिया चेव ॥

वृ. शैक्षकस्य तिस्रो भूमयस्तद्यथा- जघन्या मध्यमा उत्कृष्टा च तत्र जघन्या सप्तरात्रिं दिवा, मध्यमा चातुर्मासिकी उत्कृष्टा षण्मासिकी।

भा.[४६०२] पुव्वोवट्ठपुराणे करणजयट्ठा जहन्निया भूमी।
उक्कोसा दुम्मेहं पमुच्च असद्दहाणं च।

वृ. पूर्वमुपस्थ उपस्थितः पूर्वोपस्थः स चासौ पुराणश्च पूर्वोपस्थपुराणस्तस्मिन् करणजयाय जघन्या भूमिर्भवति। इयमत्र भावना--यः पूर्वप्रव्रज्योत्प्रव्रजितः पश्चात्पुनरपि प्रव्रज्यां प्रतिपन्नवान् स सप्तमे दिवसे उपस्थापयितव्यः। तस्य हि सप्तभिर्दिवसैः पूर्वविस्मृतसामाचारीकरणमत्यन्तदुःप्रभवति। एष जघन्या भूमिर्दुर्मेधसमग्रदधानं च प्रतीत्य उत्कृष्टा षण्मासिकी भूमिः।

भा.[४६०३] एमेव य मज्झमिया अनहिज्जंते य सद्दहंते य।
भावियमेहाविस्सविकरणजयट्ठाय मज्झमिया ॥

वृ. एवमुक्ते उत्कृष्टे च अनधियाने अश्रद्दधाने च माध्यमिकाः भूमिः प्रतिपत्तव्या। अथवा भावितस्यापि श्रद्धानस्यापि मेधाविनश्चापि च करणजयार्थं मध्यमिका भूमिः।

भा.[४६०४] आणा दिट्ठंतेन य दुविहो परिणामगो समासेणं।
आया परिणामो खलु तत्थ इमो होइ नायव्वो ॥

वृ. स द्विविधः परिणामको भवति तद्यथा आज्ञया दृष्टान्तेन, तत्र समासेन संक्षेपेण आज्ञापरिणामः खल्वयं वक्ष्यमानो भवति तमेवाह-

भा.[४६०५] तमेव सच्चं नीसंकं, जं जिणेहिं पवेइयं।
आणाए अक्खातो जिनेहिं परिणामगो ॥

वृ. तदेव सत्यं यज्जिनैः प्रवेदितमित्येवं यो निःशङ्कं श्रद्धाति न च कारणं जानीते एष आज्ञया परिणामको जिनैराख्यातः। दृष्टान्तपरिणामकमाह-

भा.[४६०६] परोक्खं हेउगं अत्थं पच्चक्खेण उ साहयं।
जिनेहिं एस अक्खातो दिट्ठंतपरिणामगो ॥

वृ. परोक्षहेतुकं हेतुना लिङ्गेन गम्यं तं हेतुकमर्थं प्रत्यक्षेण प्रत्यक्षप्रसिद्धेन दृष्टान्तेन साधयन् आत्मबुद्धावारोपयन् यो वर्तते एष दृष्टान्तपरिणामको जिनैराख्यातो दृष्टान्तेन विवक्षितमर्थं परिणामयत्यात्मबुद्धावारोपयतीति दृष्टान्तपरिणामक इति व्युत्पत्तेस्तत्राज्ञापरिणामक आज्ञयैव कायान् श्रद्धाति। दृष्टान्तपरिणामकस्तु दृष्टान्तेन श्रद्धापयितव्य इति तस्य कायश्रद्धानोत्पाद-

नार्थमिदमाह-

भा.[४६०७] तस्सिंदियाणि पुव्वं सीसंते जइ उ ताणि सद्दहइ।
तो से नाणावरणं सीसइ ताहे दसविहं तु ॥

वृ. तस्य दृष्टान्तपरिणमास्यं पूर्वमिन्द्रियाणि श्रोत्रादीनि शिष्यन्ति। तत्र यदि तानीन्द्रियाणि श्रद्धाति ततः तमेतस्य ज्ञानावरणं दशविधं शिष्यते। कथमित्याह-

भा.[४६०८] इंदियावरणं चेव नाणावरणाइयं।
तो नाणावरणं चेवमाहियं तु दुपंचहा ॥

वृ. इन्द्रियावरणं ज्ञानावरणं च तत्रेन्द्रियावरणं नाम इन्द्रियविषयशब्दादिसामान्योपयोगावरणं, ज्ञानावरणं इन्द्रियविषयेष्वेव शब्दादिषु विशेषोपयोगावरणमिन्द्रियावरणं, ज्ञानावरणं च श्रोत्रेन्द्रिया-दिभेदतः प्रत्येकं पञ्चप्रकारमेव ज्ञानवरणं द्विपञ्चधा दशप्रकारमाख्यातम्। तानेव दश भेदा नाह-

भा.[४६०९] सोयावरणं चेव नाणावरणं च होइ तस्सेव।
एवं दुयभेएणं नायव्वं जाव फासतत्ति ॥

वृ. श्रोतावरणं तथा तस्यैव श्रोतस्य ज्ञानावरणमेवं द्विकभेदेन तावत् ज्ञातव्यं यावत्स्पर्शस्तद्यथा-चक्षुरिन्द्रियावरणं चक्षुरिन्द्रियज्ञानवरणं घ्राणेन्द्रियावरणं घ्राणेन्द्रियज्ञानावरणं रसनेन्द्रियावरणं रसनेन्द्रियज्ञानावरणं स्पर्शेन्द्रियावरणं स्पर्शेन्द्रियज्ञानावरणमिति। साम्प्रतमिन्द्रियावरणस्य विज्ञानावरणस्य विषयविभागार्थमिदमाह-

भा.[४६१०] बहिरस्स उ विन्नाणं आवरियं तउण सोयमावरियं।
अपटुप्पण्णो बालो अतिवुड्ढो तह असन्नी वा।

भा.[४६११] विन्नाणावरियं तेसिं कम्हा जम्हा उ तेसुणं तावि।
न वि जाणंते किमयं सद्दो संखस्स पगहस्स ॥

वृ. बधिरस्य विज्ञानं श्रोत्रेन्द्रियविज्ञानमावृतं सामान्यतः शब्दमात्रश्रवणेऽपि तद्गतविशेषा-परिज्ञानात्। न तु श्रोत्रमावृतं सामान्यतः शब्दमात्रश्रवणात् तथा योऽपटुप्रज्ञो बालो यश्चातिवृद्धो यो वाऽसंज्ञी अमनस्कः पंचेन्द्रियः एतेषां विज्ञानमावृतं कस्मात् यस्मात् ते शृण्वन्तोऽपि नो वै जानते। किमयं शब्दः शंखस्य उत पटहस्येति।

भा.[४६१२] किं ते जीवमजीवाजीवत्ति य एव तेन उदियम्मि।
भण्णइ एव वियाणसु जीवा चउरिंदिया बिंति ॥

वृ. किं ते बधिरादयो जीवा उताजीवास्तत्र जीवा एवेति तेनोदितं भण्यते एवं बधिरादिवत् चतुरिन्द्रिया अपि जीवा इति विजानीहि श्रोतावरणमात्रेण जीवत्वाप्रच्युतेः।

भा.[४६१३] एवं चक्खुदिय घाणिंदिय जिब्भिंदियोवघाएहिं।
एक्केक्कगहाणीए जावउ एगिंदिया नेया ॥

वृ. एवमेकैकहान्या एकैकेन्द्रियपरिहानितः चक्षुरिन्द्रिय घ्राणेन्द्रिय जिह्वेन्द्रियोपघातैः क्रमेण त्रीन्द्रियादयः तावत् ज्ञेया यावदेकेन्द्रियाः चक्षुरिन्द्रियोपघाते त्रीन्द्रिया घ्राणेन्द्रियोपघातेऽपि द्वीन्द्रियाः जिह्वेन्द्रियोपघातेऽप्येकेन्द्रियाः। इह पूर्वं विज्ञानावरणेऽपीन्द्रियमनावृतमुक्त मिदानीमिन्द्रियावरणेऽपि विज्ञानमनावृतमुपदर्शयति।

भा.[४६१४] सन्निस्सिंदियघाए वि तन्नाणं नावरिज्जइ।
विन्नाणं न तत्थ सन्नीणं विज्जमाणे वि इंदिए॥

वृ. संज्ञिन इन्द्रियघातेऽपि न ज्ञानमुपहतेन्द्रियज्ञानं नाव्रियते। एतच्चाग्रे भावयिष्यते। असंज्ञिनां पुनर्विद्यमानेऽपीन्द्रिये विज्ञानं नास्ति। यथोक्तं प्राक् यथा चाग्रे वक्ष्ये। एतदेव भावयति-

भा.[४६१५] जो जाणइ य जच्चंधो वन्ने रूवे विकप्पसो।
न ते वावरिते तस्स विन्नाणं तं तु चिट्ठइ॥

भा.[४६१६] पासत्ता वि न याणंति विसेसं वण्णमादिणं।
बाला असन्निणो चेव विन्नाणाववरियम्मि उ॥

वृ. यो नाम जायन्धः स्पष्टचक्षुर्वर्णान् रूपाणि च विकल्पशोऽनेकप्रकारं जानाति तस्य नेत्रेऽप्यावृते तत् विज्ञानं तिष्ठति अन्धीभूतोऽपि वर्णविशेषान् रूपविशेषांश्च तथैव स्पर्शतो जानातीत्यर्थः। तथा बाला असंज्ञिनश्च पश्यन्तोऽपि विज्ञाने आवृते वर्णादीनां विशेषं न जानन्ति। तदेवमिन्द्रियोपघातेऽपि न विज्ञानोपघातो विज्ञानोपघातेऽपि नेन्द्रियोपघात इति विज्ञानेन्द्रिययोर्भेद-स्तथैव तदावरणयोरपि भेद इति ज्ञानावरणं दशधा, सांप्रतमेकैकेन्द्रियहान्या यत् एकेन्द्रियत्वं पूर्वमुक्तं तद्भावयति-

भा.[४६१७] इंदिय उवधाएणं कमसो एगिंदि उव संवुत्तो।
अनुवहए बहुकरणे विसुज्झती उसहादीहिं॥

भा.[४६१८] अववज्जिए उवज्जिए य जह इंदिएहिं सो पुरिसो।
एस उवमा पसत्था संसारीणिंदिय विभागे॥

वृ. कोऽपि पुरुषः क्रमशः क्रमेणेन्द्रियाणां श्रोत्रादीनामुपघातेन एकेन्द्रिय एव संवृत्तः। तत्र चानुपहते उपकरणे उपकरणेन्द्रिये पुनरौषधादिभिर्विशुद्ध्यति सर्वस्पष्टेन्द्रियो भवति। तत्र यथा स पुरुष इन्द्रियैरपचीयते उपचीयते च। एषा उपमा संसारिणामिन्द्रियविभागे प्रशस्ता तथैव संसारिणोऽपि पञ्चेन्द्रिया भूत्वा चतुरिन्द्रियास्त्रीन्द्रिया द्वीन्द्रिया एकेन्द्रियाश्च परिणमंति, पुन-र्द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियाश्च भवन्तीत्यर्थः।

भा.[४६१९] परिणामतो जं भणियं जिनेहिं अह करणं न याणति।
दिठंते परिणामेण परिवाडी उक्कमकंमाणं॥

वृ. अथ यदुक्तं जिनैः परिणामतः संसारिणामिन्द्रियविभागस्तत्र कारणं न जानाति। एवं तेनोक्ते दृष्टान्तेन परिणाममधिकृत्य क्वचिदुत्क्रमपरिपाटी वक्तव्या। एतदेव सविस्तरमाह-

भा.[४६२०] चरिएण कप्पिएण व दिठंते न व तहा तयं अत्थ।
उवनेइ जहानुपरो पत्तियइ अजोग्गरूवम्मि॥

वृ. चरितेन कल्पितेन वा दृष्टान्तेन यथा तं विवक्षितमर्थमुपनयति। यथा परे अयोग्यरूपमपि प्रत्येति।

भा.[४६२१] दिठंतो परिणामे कहिज्जते उक्कमेण वि कयाइ।
जह ऊ एगिंदीण वणसइ कत्थई पुव्वं॥

वृ. दृष्टान्तात्परिणामयतीति परिणामस्तास्मिन् दृष्टान्तपरिणामके इत्यर्थः। कदाचिद्वो धो-

त्पादानुगुण्येन उत्क्रमेणपि कथ्यते। यथा शस्त्र परिज्ञायामेकेन्द्रियाणां जीवत्वप्रसाधनविधौ पूर्वं प्रथमोद्देशके वनस्पतिः कथ्यते। अन्तिमे चोद्दशके वायुकायिकः। तत्र प्रथमत उत्क्रमेण वनस्पतीनां जीवत्वख्यापनार्थमाह-

**भा.[४६२२]** पत्तंति पुप्फंति फलं ददंती, कालं वियाणंति तहेंदियत्थे।
जाती य वुड्ढी य जरा य जेहिं, कहं न जीवा उ भवंति ते ऊ॥

**वृ.** ये पत्रयन्ति पत्राणि मुञ्चन्ति। पुप्फंति पुष्पभाजो भवन्ति फलं च ददति कालं च स्वपत्र-पुष्पफलनिमित्तं जानन्ति। इन्द्रियार्थांश्च गीतादीन् ये विजानन्ति बकुलादीनं तथा दर्शनात्। तथा तेषां जातिर्वृद्धिर्जरा च, ते कथं न जीवा भवन्ति? भवन्त्येवेति भावः। पुरुषादिधर्माणां सर्वेषामपि तत्रोपम्यमानत्वात्, प्रयोगश्च वनस्पतयो जीवा जातिजरावृद्ध्याद्युपेतत्वात् मनुष्यवत्-

**भा.[४६२३]** जाहे ते सद्दहिया ताहे कहिज्जंति पुढविकाइया।
जह उ पवालग लोणा उवल गिरीणं च परिवुड्ढी॥

**वृ.** यदा ते वनस्पतयो जीवत्वेन श्रद्धिता भवन्ति तदा पृथिवीकायिका जीवाः (कथ्यन्ते, यथा) प्रवालादिषु परिवृद्धिदर्शनात्।

**भा.[४६२४]** कललंडरसादीया जह जीवा तहेव आउजीवावि।
जोईंगणखज्जुए वा जहुण्ह तह तेउ जीवावि॥

**वृ.** यथा कललं गर्भप्रथमावस्थारूपमण्डरस इत्येवमादयो जीवास्तथैवाप्कायजीवा अपि प्रतिपत्तव्याः, प्रयोगः अप्कायिका जीवा अनुपहत्वे सति द्रवत्वात् कललं च रसादिवत्। तथा यथा ज्योतिरङ्गणः स्वद्योतकः यथा वा ज्वरिते उपमेति स जीवनस्तथा तेजोजीवा अपि। प्रयोग-भावना त्वेवम्-तैजस्कायिका जीवा असूर्यकिरणत्वे सत्यूपमधर्मोपेतत्वात्।

**भा.[४६२५]** जाहे सद्दहिते तेऊ वाऊ जीवा से ताहे सीसंति।
सत्थपरिण्णाएवि य नुक्कमणं तु एयट्ठा॥

**वृ.** यदा तेजस्कायिकान् जीवत्वेन श्रद्धाति तदा से तस्य वायवो जीवाः शिष्यन्ते तथा वायवो जीवा अपरे प्रेरितत्वे सति तिर्यग्गति गमनात् गवादिवत् शस्त्रपरिज्ञायामप्युत्क्रमकरणं पूर्वं वनस्पत्युद्देशस्यान्ते वायुकायिकोद्देशस्य करणमित्यर्थः। तदर्थं सुखेन जीवत्वप्रतिप्रत्त्यर्थं; उपसंहारमाह-

**भा.[४६२६]** एस परिणामगो भणितो अहुणा उ जम्मं वुच्छामि।
सो दुविहो नायव्वो भासाए सरीरजम्मो उ॥

**वृ.** एष द्विविधोऽपि परिणामक उक्तोऽधुना जड्डं वक्ष्ये। स जड्डो द्विविधो ज्ञातव्य, तद्यथा-भाषणायां भाषाजड्डः शरीरजड्डश्च।

**भा.[४६२७]** जलमुगएलमूगो मम्मणमूगो य भासजड्डो य।
दुविहो सरीरजड्डो तुल्लो करणे अनिपुणो अ।

**वृ.** भाषाजड्डस्त्रिविधस्तद्यथा-जडमूक एडकमूक मन्मनमूकश्च। शरीरजड्डो द्विविधस्तद्यथा-*शरीरेण क्रियायामनिपुणश्च।*

**भा.[४६२८]** पढमस्स नत्थि सद्दो जलमज्झे व भासए।

बीयउ एलगो चेव अच्चंत वुच्छुयायइ ॥

वृ. अथ मत्स्यजलमूकस्य जलमध्ये इव भाषमाणस्य नास्ति शब्दः, द्वितीय एडमूकः एडकमिव लुच्छुयायते।

भा. [४६२९] मम्मणो पुण भासंतो खलए अंतरंतरा।
चिरेण नीति से वाया अविसुद्धा व भासते ॥

वृ. मन्मनः पुनर्भाषमाणो अन्तरंतरा स्खलित यदि वा तस्य भाषमाणस्य वाक् चिरेण तस्य निर्गच्छति अविशुद्धा वा। सम्प्रति वन्तजहंति द्वारमाह-

भा. [४६३०] दुविहेहि जड्डदोसे विसुद्धं जो उ उज्जती।
काया चत्ता भवे तेनं मासा चत्तारि भारिया ॥

वृ. द्विविधेन जड्डदोषेन विशुद्धं य उज्झति तेन कायाः षट्कायास्त्यक्ता भवेयुः न संरक्षिता-स्तस्य प्रायश्चित्तं चत्वारो गुरुका मासाः। एतेन संभोग द्वारं व्याख्यातम्।

भा. [४६३१] कहिए सद्दहिए चेव उवविंति परिग्गहे।
मंडलीए उवट्ठत्तु इमे दोसा य अंतरा ॥

वृ. षट् जीवनिकाये कथिते श्रद्धिते च पतत्गृहे उपवेन्ति पतगृहे तत्र समुद्देशाप्यते इत्यर्थः। एतदनुपस्थापितो भवति तदा तं मण्डल्यां समुद्देशयेत्। अन्तरा पुनर्भेद्यमाने इमे वक्ष्यमाणा दोषास्तानेवाह-

भा. [४६३२] पायस्स विराधन अतिहीदट्ठूण उद्धगमनं वा।
सेहस्स दुंगुच्छा सवे दुद्दिट्ठधम्मत्ति ॥

वृ. उत्पाट्यतो नयत आनयतो नयतो वा पात्रस्य विराधना स्यात्। यदि वा अतिथीन् दृष्ट्वा तस्य वंति वमनं प्रवर्तते गमनत्वात्त एव प्रदेशात् कुर्यात्। शैक्षकस्य वा जुगुप्सा जनेन क्रियते यथा केनापि दोषेण दुष्ट एप ततः पृथग् भुङ्क्ते। सर्वान्वा कश्चित् जुगुप्सीत यथा पात्रमप्येवं भूतं भोजनात् बहिः कुर्वन्ति अहो दुष्टधर्माण इति। सम्प्रति भूमित्तिय विवेगो इति व्याख्यानार्थमाह-

भा. [४६३३] जलमूग एलमुगो सरीरजड्डो य जो जायइ तुल्लो।
जं वुसंति विवेगो भूमित्तिय ते न दिक्खिज्जा ॥

वृ. यदुक्तम्-भूमित्रिकस्य विवेक इति। तस्यायमर्थः जलमूक एडमुकः शरीरजड्डश्च। योऽतिस्थूलस्तानेतान् त्रीन् न दीक्षयेत्।

भा. [४६३४] दुम्मेहमणतिसेसी न जाएती जो य करणतो जड्डो।
ते दुन्निवि तेन न सो दिक्खेइ सिया सो अतिसेसी ॥

वृ. दुर्मेधसंयतश्च करणतो जड्डस्तमनतिशेषी अनतिशायी न जानाति तेन कारणेन तौ द्वावपि स दीक्षयेत्। अथ स्यात्सौऽतिशेषी ततो न दीक्षयति।

भा. [४६३५] अहव न भासा जड्डुं जहाइति परं परागतं च्छउमो।
इयरंपि देसहिंडग असतीए चावि दुविज्जा ॥

वृ. अथवा भापाजड्डत्ति दुर्मेधसं परं परागतं मातृपक्षपरं परागतं गुरुपक्षपरं परागतं च छद्मस्थो न त्यजति इतरमपि करणजड्डं देशहिण्डकस्य देशदर्शनाय असति चान्यस्मिन् साधौ दीक्षयेदन्यथा

विवेचयेत् न दीक्षयेत् दीक्षयन् वा परिष्ठापयेत्। अत्रैव मतान्तरं दुषयति-

भा.[४६३६] मासतुसानाएणं दुम्मेहतंपि केइ इच्छंति।
तं न भवति पलिमंथो नयावि चर विना नाणं ॥

वृ. केचित्त मापतुषज्ञातेन दुर्मेधास्तमपि दीक्षितुमिच्छन्ति तन्न भवति यतो दुर्मेधसः पाठने स्वयं सूत्रार्थयोः पलिमन्थः न चापि तस्य ज्ञानं विना चरणं तत आत्मनः परस्य च केवलक्लेशान्न तद्दीक्षणमिति॥

भा.[४६३७] नातिथुल्लं न उज्झत्ति मेहावी जो अ बोवडो।
जलमुगमेलमुगं च परिठावेज्ज दोन्निवि।

वृ. नातिस्थूलं नोज्झयन्तीत्यर्थः। यश्च मेधावी बोव्वडो भाषाजड्डुस्तपि नोज्झति। जलमूकं मेडकमूकं द्वावप्येतौ परिष्ठापयेत् -

भा.[४६३८] मुत्तूण करणजड्डं परियट्टंति जाव सेस छम्मासा।
एक्केक्कं छम्मासो जस्स य दतुं विविंचएग्रा॥

वृ. मुक्त्वा करणजड्डं शेषं दुर्मेधसं भाषाजड्डं यावत्षण्मासास्तावत् परिवर्तयन्ति अनुवर्तयन्ति। ततः परमन्यस्याचार्यस्य समर्प्यते। सोऽपि षण्मासान् परिवर्तयति तदनन्तरमन्यस्य सोऽपि षण्मासात्परमेकैकं तस्य षण्मासास्तत्र त्रयाणामाचार्याणां मध्ये यस्य समीपं संख्यां गृहीतवान्। यावन्तं दृष्ट्वा याचते ममैनं शिक्षां देहीति तस्य विवेचनं तस्य दानमित्यर्थः।

भा.[४६३९] तिण्हं आयरियाणं जोणं गाहेइ सीस तस्सेव।
जइ एत्तिएण गाहितो न परिठ्ठावए ताहे॥

वृ. त्रयाणामाचार्याणां मध्ये यो ग्राहयति तस्यैव शिष्यः स दीयते। यदि एतावता आचार्यत्रिकेण परिपाट्य मिलित्वा ग्राहितो भवत्ति ततस्तदा न परिस्थाप्यते।

भा.[४६४०] देंति य जंगमथेराण वावि अहवा वि दत्तूणं जो उ।
भणती मज्झं कज्जं दिज्जति तस्सेव सो ताहे॥

वृ. अथवा अजङ्गमस्थविराणां स वैयावृत्यकरणाय दीयते यदि वा यस्तं दृष्ट्वा भणति-मम कार्यमेतेन तस्मादीयतामिति। ततस्तस्यैव दीयते-

भा.[४६४१] जो पुण करणे जड्डो उक्कोसं तस्स होइ छम्मासा।
कुलगणसंघनिवेयण एयं तु विहिं तहिं कुज्जा॥

वृ. यः पुनः करणे जड्डः तस्योत्कृष्टं परिपालनं भवति यावत् षण्मासाः। ततः परं कुलस्य गणस्य संघस्य वा निवेदनं क्रियते। स यत्करोति तत्प्रमाणमेतं विधिं कुर्यात्।

*मू.(२६६)नो कप्पइ निग्गंथाण वा निग्गंथीण वा खुड्डगं वा खुड्डियं वा उणट्ठ वासजायं उवट्ठावेत्तए वा संभुज्जित्तएवा।*

*मू.(२६७)कप्पइ निग्गंथाणवा निग्गंथीण वा खुड्डगं वा खुड्डियं वा साइरेगअट्ठवासजायं उवट्ठावेत्त ए वा संभुज्जित्तए वा।*

वृ.अस्य संबंधप्रतिपादनार्थमाह-

भा.[४६४२] पवज्जा परियातो वुत्तो सेहो ठ विज्जए जत्थ।

जम्मण परियागस्स उ विजाणणट्ठा इमं सुत्तं ॥

वृ. प्रव्रज्यापर्यायाऽनन्तरमूत्रेणे क्तोऽयं शिष्य- स्थाप्यते । संप्रति तस्यैव जन्मपर्यायस्य विज्ञानार्थमिदं सूत्रमित्येष सम्बन्धः । सूत्राक्षरगमनिका--न कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा क्षुल्लकं वा क्षुल्लिकां वा ऊनाष्टवर्षजातमुपस्थापयितुं वा संभोक्तुं वा मण्डल्यां, तथा कल्पते निर्ग्रन्थानां वा क्षुल्लकं वा क्षुल्लिकां वा सातिरेकाष्टवर्षजातमुपस्थापयितुं वा उपास्थाप्य मण्डल्यां संभोक्तु वा अथ कस्मादूनाष्टं वर्षजातस्योपस्थापनादि न कल्पते । अत आह--

भा.[४६४३] ऊणट्ठए चरित्तं न चिट्ठए चालणीए उदगं वा ।
बालस्स य जे दोसा भणिया आरोवणा दोसा ॥

वृ. ऊनाष्टकेनाष्टवर्षजाते बाले चालिन्यामुदकमिव चारित्रं न तिष्ठते तथा ये बालस्य दोषा भणिता या च बालस्योपस्थापने आरोपणा स प्रसजति । बालस्य दोषानाह--

भा.[४६४४] कायवइमनोजोगो हवंति तस्स न वट्ठिया जम्हा ।
संबंध अनाभोगे ऊमे सहसा ववादेणं ॥

वृ. तस्य बालस्य कायवाङ्मनोयोगा यस्मादनवस्थिता भवन्ति तस्मान्नोपस्थापयेत । यत्रैवापवादमाह--सम्बन्धिनमनाभोगे अवमे दुर्भिक्षे सहसाकारेणं संभोजनेऽपवादेनोपस्थापयेत् ऊनाष्टवर्षजातमपि । तत्र सम्बन्धिद्वारव्याख्यानार्थमाह--

भा.[४६४५] भुंजिस्से समयासद्धिं नीयो निच्छइ संपयं ।
सो अ नेहेण संबंधो कहं चिठेज्ज तं विना ॥

वृ. एष बालको मया सह भोक्ष्यते इत्येत्र भणित्वा नीतो मण्डल्यां स च सम्प्रति तमाचार्यं विना भोक्तुं नेच्छति । स वाचार्यस्यस्नेहेन सम्बधस्ततः कथं प्रव्रज्यायां गृहीतायां सह भोजनं विना तिष्ठेत्, नैव तिष्ठेदिति भावः ।

भा.[४६४६] अनुवट्ठविउ एसो संभुंजइ मा बुवेज्ज अपरिणयो ।
ताहोवट्ठाविज्जइ तो नं संभुजए ताहे ॥

वृ. तत्र हु निश्चितमपरिणता मा ब्रूयुरेव यथैषोऽनुपस्थापितो मण्डल्यां संभुङ्क्ते ततः स तदा उपास्थाप्यते तदनन्तरं संभोजनं-मण्डल्यामिति ।

भा.[४६४७] अहव अनाभोगेण सहसक्कारेणं वावि हुज्ज संभुत्तो ।
उमम्मि वि सह तत्तो विप्परिणामं तु गच्छेज्जा ॥

वृ. अथवा अनाभोगेन सहसाकारेण वा मण्डल्यां स युक्तो भूयात् । ततोऽस्य मा प्रापदनवस्थाप्रसङ्ग इति तमूनाष्टवर्षजातमप्युपस्थाप्य मण्डल्यां संभोजयेत् । अवमे दुर्भिक्षे जाते मा विपरिणामं गच्छेदिति उपस्थाप्य मण्डल्यां संभोज्यते । एतदेव भावयति

भा.[४६४८] अदिक्खायंतो मा मे मं इमे पच्छभोजिनो ।
अपरोहमिति भावेज्जा तेनावि सह भुंजते ॥

वृ. इमे प्रच्छन्नभोजिनो मा मेऽवमे दुर्भिक्षे अदीक्षयन्ति अदीक्षां कर्तुमिच्छन्ति तेन कारणेनाहं परः कृत इति स भावयेत् । ततस्तेनापि सह झटित्येवोपस्थापितेन संभुंक्ते ।

*मू. ( २६८ ) नो कप्पइ निग्गंथाण वा निग्गंथीण वा खुड्डगस्स वा खुड्डियाए वा अवञ्जण-*

जायस्स आयारपकप्पे नाम अज्झयणे उद्दिसित्तए।

*मू.(२६९)कप्पइ निग्गंथाण वा निग्गंथीण वा खुड्डगस्स खुड्डियाए वा वञ्जणजायस्स आयारपकप्पे नाम अज्झयणे उद्दिसित्तए॥*

भा.[४६४९] लेहट्ठमचरिमे उवट्ठामो पसंगओ।
उद्देसो सेससुत्तंपि सुत्तस्सेव उवक्कमो॥

वृ. रेखास्थं परिपूर्णमष्टमं वर्षं यस्य से रेखास्थाष्टवर्षस्तस्मिन् प्रमत्तसूत्रेणोपस्थापनाज्ञानातत्तो मा तत्रसङ्गत: शेषसूत्रमप्युद्दिशेदिती सूत्रस्याधिकृतस्य एष उपक्रम: सम्बन्ध:। सूत्रस्य व्याख्या न कल्पते निर्ग्रन्थानां वा क्षुल्लकस्य वा क्षुल्लिकाया वा अव्यञ्जनजातस्य न व्यञ्जनान्युपस्थारोमाणि जातानि यस्य स तथा तस्य आचारप्रकल्पो नामाध्ययनं निशीथापरपर्यायमुद्देष्टं।

भा.[४६५०] अहिअट्ठमवरिसस्स वि ओरेणं पढितेव उवचारे।
देंति अवंजणजातस्स वंजणाणं परूवणा॥

भा.[४६५१] जहा चरित्तं धारेउ ऊणठो वज्ज पच्चको।
तहावि तुकं तुङ्गी उ अववायस्स नो सहू॥

वृ. अधिकाष्टवर्षस्यास्य पठितेऽप्युपचारे अव्यञ्जनजातस्य अत्र व्यञ्जनानां प्ररूपणा कर्तव्या। सा च सूत्रव्याख्यायां कृता, न तु नैव सूरय: प्रकल्पमाचारप्रकल्पं नामाध्ययनं ददति। कुत इत्याह-जहेत्यादि यथा ऊनाष्ठ ऊनाष्टवर्षश्चारित्रं धारयितुमप्रत्यलोऽयमर्थ:। तथा अजातव्यंजनतया अपक्वबुद्धिरपरिपाका या बुद्धिरपवादस्य धारणे न ददति; तथा कल्पते निर्ग्रन्थानाकनिर्ग्रन्थीनां वा क्षुल्लकस्य वा क्षुल्लिकाया वा व्यञ्जनजातस्य आचारप्रकल्पो नामाध्ययनमुद्देष्टुं अथ स्तोककालाद् दीक्षितश्चापि जातव्यञ्जनस्य दीयते न किं वा नेत्यत आह-

*मू.(२७०)तिवासपरियायस्स समणस्सनिग्गंथस्स कप्पइ आयारपकप्प नामं अज्झयणे उद्दिसित्तए॥*

वृ. जातव्यंजनस्यापि त्रिवर्षपर्यायस्य श्रमणस्य निर्ग्रन्थस्य कल्पते आचारप्रकल्पो नामाध्ययनमुद्देष्टुं यदि पुनस्त्रयाणां वर्षाणां आरत उद्दिशति ततस्तस्य प्रायश्चित्तं चत्वारो गुरुका:। त्रिवर्षपर्यायस्याप्यपरिणामकस्यातिपरिणामकस्य चोद्दिशतश्चतुर्गुरुकं।

*मू.(२७१)चउवासपरियागस्स समणस्स निग्गंथस्स कप्पइ सुयगडे नामं अंगे उद्दिसित्तए।*

*मू.(२७२) पंचवासपरियागस्स समणस्स निग्गंथस्स कप्पति दसाकप्पववहारोओदिसित्तएवि॥*

*मू.(२७३)अट्ठवासपरियागस्स समणस्स निग्गंस्थ कप्पति ठाणसमवाए उद्दिसित्तए॥*

*मू.(२७४)दसवासपरियागस्स समणस्स निग्गंथस्स कप्पति विवाहे नामं अंगं उद्दिसित्तए॥*

वृ. चतुर्वर्षपर्यायस्य श्रमणनिर्ग्रन्थस्य कल्पते सूत्रकृतं नामाङ्गमुद्देष्टुं पञ्चवर्षपर्यायस्य दशाकल्पस्य व्यवहारा विकृष्टो नाम षड्भ्य आरभ्य नव वर्षाणि यावत् तत्पर्यायस्य स्थानं समवायस्य दशवर्षपर्यायस्य व्याख्याप्रज्ञप्ति:। पञ्चममङ्गमेतदेव सहेतुकं वक्तुकामो भाष्यकृदाह-

भा.[४६५२] चउवासे सुयगडं कप्पववहार पंचवासस्स।
विगट्ठ ठाणस्स समवातो दसवरिसविवाहपन्नत्ती॥

वृ. चतुश्चतुर्वर्षपर्यायस्य सूत्रकृतं पञ्चवर्षस्य कल्पव्यवहारावुपलक्षणमेतत्। दशाश्रुतस्कन्धश्चाविकृष्टपर्यायस्य स्थानं समवायश्च दशवर्षपर्यायस्य व्याख्याप्रज्ञप्तिमुद्दिशति।

किं कारणमेतावत् कालातिक्रमणे तत आह-

भा.[४६५३] चउवासो गाढमती न कुसमएहिं तु हीरए सो उ।
पंचवरिसे उ जोग्गो अववायस्सत्ति तो देंति ॥

भा.[४६५४] पंचण्हुवरि विगिट्ठो सुयथेरा जेण तेन उ विगिट्ठो।
ठाणं महिड्डियंति य तेनं दसवासपरियाए ॥

वृ. सूत्रकृताङ्गे त्रयाणां त्रिषष्ठ्यधिकानां पाषण्डिकशतानां दृष्टयः प्ररूप्यन्ते ततो हीनपर्यायो मतिभेदेन मिथ्यात्वं यायात्। चतुर्वर्षपर्यायस्य धर्मेऽवगाढमतिं भवति ततः कुसमयैर्नापहियते तेन चतुर्वर्षपर्यायस्य तदुद्देशमनुज्ञातं तथा पञ्चवर्षोपवादस्य योग्य इति कृत्वा पञ्चवर्षस्य दश-कल्पव्यवहारान् ददाति। तथा पञ्चानां वर्षाणामुपरि पर्यायो विकृष्ट उच्यते तेन कारणेन स्थाने समवाये नवाधीतेन श्रुतस्थविरा भवन्ति तेन कारणेन तदुद्देशनं प्रति विकृष्टपर्यायो गृहीतस्तथा स्थानं समवायश्च महर्धिकं प्रायेण द्वादशानामप्यङ्गानां तेन सूचनादिति तेन तत्परिकर्मितमतौ दशवर्षपर्याये व्याख्याप्रज्ञप्तिरुद्दिश्यते।

*मू.( २७५ )एक्कारसवासपरियागस्स समणस्स निग्गंथस्स कप्पइ खुड्डिया विमानपविभत्ति महल्लिया विमानपवित्ती अंगचूलिया वंगचूलिया विवाहचूलिया नामं अज्झयणमुद्दिसित्तए॥*

वृ. अस्य व्याख्या –

भा.[४६५५] एक्कारस वासस्स खुड्डीया महल्ली विमाणपविभत्ती।
कप्पइ य अंगवंगे विवाह च्चेव चूलीओ ॥

भा.[४६५६] अंगाणमंगचूली महकप्पसुयस्स वग्गचूलीओ।
विवाहचूलिया पुण पुन्नत्तीए मुनेयव्वा ॥

वृ. एकादशवर्षस्य क्षुल्लिकाविमानप्रविभक्तिर्यत्र कल्पेषु विमानानि वर्ण्यन्ते। महती-विमानप्रविभक्तिर्यत्र विमानान्येव विस्तरेणाभिधीयन्ते। अङ्गानामुपासकदशाप्रभृतीनां पञ्चानां चूलिका निरावलिका अङ्गचूलिका महाकल्पश्रुतस्य चूलिका, वर्गचूलिका व्याख्या पुनः प्रज्ञप्ते-र्व्याख्याप्रज्ञप्ते श्चूलिकामंतव्या।

*मू.( २७६ )बारसवासपरियागस्स समणस्स निग्गंथस्स कप्पइ। अरुणोववाए गरुलोववाए वरुणोववाए वेसमणोववाए वेलंधरोववाए नामअज्झयणं उद्दिसिउं॥*

भा.[४६५७] बारसवासे अरुणोववाय वरुणो य गरुल वेलंधरो।
वेसमनुववाए य तहाय ते कप्पइ उद्दिसिउं॥

वृ. द्वादशवर्षपर्यायस्य अरुणोपपातो वरुणोपपातो गरुडोपपातो वेलंधरोपपातो वैश्रमणो-पपातश्च। एतानि पञ्चाध्ययनानि उद्देष्टुं कल्पन्ते।

भा.[४६५८] तेसिं सिरिनामा खलु परियट्टंति एंति देवा उ।
अंजलि मउलिय हत्था नज्जावेत्ता दसदिसा उ॥

भा.[४६५९] नागावरुणो वासं अरुणा गरुला य वीयगं देंति।

आगंतूण य बेंती संदिसह किं करेमिति ॥

वृ. तेषामरुणोपपातादीनामध्ययनानां ये सदृशनामानः खल्वरुणादयो देवास्ते यदि तान् प्रणिधायाध्ययनानि परावर्तन्ते तदा ते अञ्जलिमुकुलितहस्ता दशापि दिश उद्योतयन्ति समागच्छन्ति समागत्य च किङ्करभूताः पर्युपासते; तथा नामानो वरुणाश्च गन्धोदकादिवर्षं वर्षन्ति। अरुणो गरुडाश्च बीजकं सुवर्णं ददतः प्रत्यासन्नमागत्य च ब्रूवते सन्दिशत किं कूर्मो वयमिति।

*मू. ( २७७ ) तेरस वासपरियागस्स समणस्स निग्गंथस्स कप्पइ उट्ठाणसुए समुट्ठाणसुए देविंदोववाए नागपरियावणियाए ॥*

भा.[४६६०] तेरसवासे कप्पइ उट्ठाणसुए तहा समुट्ठाणे
देविंद परियावण नागाण तहेव परियावणीया ॥

वृ. त्रयोदशवर्षस्य कल्पते उत्थानश्रुतं तथा समुत्थानं श्रुतं देवेन्द्रपरियापनिका नागानां तथैव परियापनिका नागपरियापनिका इत्यर्थः। साम्प्रतममीषामध्ययनानामतिशयमाह-

भा.[४६६१] परियट्टिज्जइ अहियं उट्ठाणसुयं तु तत्थ उट्ठेइ।
कुलगामदेसनामादी समुट्ठाणसुए निविस्ससिं ॥

भा.[४६६२] देविंदा नागा विय परियाणीमुवेंति ते दोवी।
चोद्दसवासुद्देसो महसुमिणभावणज्झयणं ॥

वृ. यत्र प्रणिधय उत्थानश्रुतं परावर्त्यते तत्र कुलग्रामदेशादि उत्तिष्ठति उद्वसी भवतीत्यर्थः। ततः कार्ये निष्पन्ने समुत्थानश्रुते परावर्त्यमाने ते कुलग्रामदेशादयः स्वस्थीभूय पुनर्निविशन्ति;। देवेन्द्रपरियापनिकायां परावर्त्यमानायां देवेन्द्रा नागपरियापनिकायां नागाः समागच्छन्ति।

*मू. ( २७८ ) चउद्दसपरियागस्स समणस्स निग्गंथस्स कप्पति सुमिणभावणा नामं अज्झयण मुद्दिसित्तए ॥*

वृ. चतुर्दशवर्षपर्यायस्य श्रमणस्य निर्ग्रन्थस्य कल्पते महास्वपनभावनानामाध्ययनमुद्देष्टुं चोद्दसवासुद्दिसए इत्यादि भाष्यगाथोत्तरार्धं सुप्रतीतमधुनाध्ययनार्थमाह-

भा.[४६६३] इच्छंती सुसुमिणा बायाला चेव हुंति महासुमिणा।
बायत्तरि सव्वसुमिणा वन्निज्जंते फलं तेसिं ॥

वृ. अत्र महास्वप्नभावनाध्ययने त्रिंशत्सामान्यस्वप्नाः द्वाचत्वारिंशन्महास्वप्ना वर्ण्यन्ते फलं च तेषां वर्ण्यन्ते।

*मू. ( २७९ ) पन्नरसवासपरियास्स समणस्स निग्गंथस्स कप्पइ चारणभावणा नामज्झयण- मुद्दिसित्तए ॥*

भा.[४६६४] पन्नरसे चारणभावणंति उद्दिसिए उ अज्झयणं।
चारणलद्धी तहियं उपज्जंति तु अहियम्मि ॥

वृ. पञ्चदशे पञ्चदशवर्षपर्यायस्य चारणभावेनत्यध्ययनमुद्दिश्यते। तस्य कोऽतिशय इत्याह- चारणलब्धिः तस्मिन्नधीते उत्पद्यते येन वा तपसा कृता चारणलब्धिरुपजायते तदुपवर्ण्यते।

*मू. ( २८० ) सोलसवासपरियायस्स समणस्स निग्गंथस्स कप्पइ ते अनिसग्गा नाम अज्झयणमुद्दिसित्तए।*

*मू. ( २८१ ) सत्तरसवासपरियायस्स समणस्स निग्गंथस्स आसीविसभावना नाममज्झायणमुद्दिसित्तए ॥*

*मू. ( २८२ ) अट्ठारसवासपरियायस्स समणस्स निग्गंथस्स कप्पति दिट्ठीविसभावणा नाम-मज्झयणमुद्दिसित्तए ॥*

*मू. ( २८३ ) एगुणवीसवासपरियायस्स समणस्स निग्गंथस्स कप्पइ दिट्ठिवायनामंग उद्दिसित्तए ॥*

*मू. ( २८४ ) विसतिवासपरियाए समणे निग्गंथे सव्वसुयाणुवाती भवति ॥*

भा. [४६६५] तेअनिसज्जा सोलसआसीविसभावनं च सत्तरसे।
दिट्ठिविसमट्ठारस उगुणवीसे दिट्ठिवाओ उ॥

वृ. षोडशवर्षे तेजोनिसर्गोनामाध्ययनमुद्दिश्यते। सप्तदशे वर्षे आसीविसभावनामुद्दिश्यते। दृष्टीविषभावनामष्टादशे वर्षे एकोनविंशतितमे वर्षे दृष्टिवादोनाम द्वादशमङ्गमुद्दिश्यते।

साम्प्रत-मेतेषामध्ययनानामतिशयानाह-

भा. [४६६६] तेयस्स निसरणं खलु आसीविसत्तं तहेव दिट्ठिविसं
लद्धीतो समुप्पज्जे समहीएसुं तु एएसु॥

वृ. एतेषु तेजोनिसर्गप्रभृतिष्वध्ययनेषु यथाक्रमं तेजसो निस्सरणमासीविषत्वं दृष्टीविषमित्येव लब्धयः समुत्पद्यन्ते। इयमत्र भावना तेजोनिसर्गेऽध्ययनेऽधीतो तेजोनिस्सरणलब्धिरुत्पद्यते-येन वा तपसा कृता तेजोलब्धिर्भवति। तच्च उपवर्ण्यते, आशीविषसंभावनायां पठितायां आशी-विषत्वलब्धेर्यैर्वा समाचरणैरासीविषतया कर्म बध्यते, तान्युपवर्ण्यन्ते। एवं दृष्टीविषभावनाया-मपि भावनीयम्।

भा. [४६६७] दिट्ठिवाए पुण होइ सव्वभावाण रूपणं।
नियमा सव्वसुयाणुवाइवीसइ वासे उ बोधव्वो॥

वृ. दृष्टिवादे पुनर्भवति सर्वभावनां रूपणं प्ररूपणं नियमात् विंशतिवर्षः पुनः सर्व श्रुतानुपाती भवति। सर्वमपि श्रुतं यथा भणितेन योगेन तस्य पठनीयं भवति। अथ कस्य तीर्थकरस्य काले कियन्ति प्रकीर्णकान्याभवन्त्यत आह-

भा. [४६६८] चउद्दसय सहस्साइं पइण्णगाणं तु वद्धमाणस्स।
सेसाण जत्तिया खलु सीसा पत्तेयबुद्धाओ॥

वृ. भगवतो वर्धमानस्वामिनः तीर्थे चतुर्दशप्रकीर्णकसहस्राण्यभवन् शेषाणां च तीर्थकृतां यस्य यावन्तः शिष्यास्तस्य तावन्ति प्रकीर्णकानि प्रत्येकबुद्धा अपि तस्य तावन्तः॥

भा. [४६६९] पत्तस्स पत्तकाले एयाणि जो उ उद्दिसे तस्स।
निज्जरलाभो विपुलो किह पुन तं मे निसामेह॥

वृ. पात्रस्य योग्यस्य परिणामकस्येयर्थः। एतेनापात्रेऽतिपरिणामके वा ददानो महती श्रुता-शातनेति प्रतिपादितम्। प्राप्ते काले यथोदिते एतानि प्रकीर्णकानि य उद्दिशति तस्य सुविपुलो निर्जरालाभः कथं पुनः सविपुलो निर्जरालाभः। सूरिराह-तं विपुलं निर्जरलाभं कथ्यमानं निशमयत मेते कथयति।

भा.[४६७०] कम्ममसंखेज्जभवं खवेइ अनुसमयमेव आउत्तो।
अन्नयम्मि जोगे सज्झायम्मी विसेसेन॥

वृ. कर्म ज्ञानावरणीयादिकमसंख्येयभवोपार्जितमन्यतरकेऽपि योगे प्रतिलेखनादावायुक्तो अनुसमयमेव क्षपयति, विशेषतः स्वाध्याये आयुक्तः।

भा.[४६७१] आयारमादियाणं अंगाणं जाव दिट्ठिवातो उ।
एसविही विण्णेओ सव्वेसिं आनुपुव्वीए॥

वृ. आचारादिकानामङ्गानां यावत् दृष्टिवादो दृष्टिवादपर्यन्तानां सर्वेषामानुपूर्व्या एषोऽनन्तरोदितो विधिर्विज्ञेयः। पात्रस्योचिते काले यदुचितमङ्गं तद्दातव्यं, न शेषमित्यर्थः॥

*मू.(२८५) दसविहे वेयावच्चे पन्नत्ते। तं जहा- आयरियवेयावच्चे। उवज्झायवेयावच्चे, थेरवेयावच्चे तवस्सि वेयावच्चे, सेहवेयावच्चे, गिलाणवेयावच्चे, साहम्मियवेयावच्चे, कुल-वेयावच्चे, गणवेयावच्चे, संघवेयावच्चे। आयरियवेयावच्चे करेमाणे समणे निग्गंथे महानिज्जरे महापज्जवसाणे भवति।*

वृ. अस्याक्षरगमनिका नवरं वैयावृत्त्यं त्रयोदशभिः पदैस्तान्यग्रे वक्ष्यन्ते। तथा महानिर्जरः प्रतिसमयमनन्यनन्तकर्म परमाणुनिर्जरणात् महापर्यवसानसिद्धिगमनात्॥

भा.[४६७२] दसविह वेयावच्चं इमं समासेण होइ विन्नेयं।
आयरियउवज्झाए थेरे य तवस्सि सेहे य॥

भा.[४६७३] अतरंतकुलगणे या संघे साहम्मि वेज्जवच्चे य।
एतेसिं तु दसण्हं कायव्वं तेरसपएहिं॥

वृ. दशविधमिदं वक्ष्यमाणं समासेन विज्ञेयं। तद्यथा- आचार्यस्य उपाध्यायस्य स्थविरस्य तपस्विनः शैक्षकस्य अतरन् ग्लानस्तस्य संघस्य साधर्मिकवैयावृत्त्यं गाथायां सप्तमी सर्वत्र प्रति-पत्तव्या; एतेषां त्वाचार्यादीनां दशानामपि यथा योगं त्रयोदशभिः पदैर्वैयावृत्त्यं कर्तव्यं तान्येव त्रयोदशपदान्याह-

भा.[४६७४] भत्ते पाने सयनासने य पडिलेहण पायमच्छिमद्धाणे।
राया तेनं दंडग्गहे य गेलन्नमत्ते य॥

वृ. भक्तेन भक्तानयनेन वैयावृत्त्यं कर्तव्यं ?, १ पानीयेन पानीयानयनेन २, शयनेन शय्या संस्तारकेन ३ आसनेन आसनप्रदानेन ४ प्रतिलेखनेन क्षेत्रस्योपधर्वा प्रत्युपेक्षणेनापि। पाएत्ति पादप्रमार्जनेन यदि वा औषधपानेन अक्ष्णि अक्षिरोगिणो भेषजप्रदानेन ७। अध्वनि अध्वनं प्रपन्नानामुपग्रहेण ८ राजद्विष्टे निस्तारणेन ९। तेनत्ति शरीरस्तेनेभ्यश्च संरक्षणेन १०। तथा विचारादिभ्य आगतानां दण्डग्रहणात्॥, ग्लानत्वे जाग्रतो यत् योग्यं तत्सम्पादनेन १२। मत्तेयत्ति मातृकत्रिकढौकनेन १३। एतानि त्रयोदशपदानि॥

भा.[४६७५] जा जस्स होइ लद्धी तं तु न हावेइ संतविरयम्मि।
एयाणुत्तत्थाणी उपायं किंचित्थ वुच्छामि॥

वृ. या यस्य भवति लब्धिः स तां सति वीर्ये पराक्रमे न हापयेदेति। ख्यापनार्थं त्रयोदशपदा-न्युपात्तानि। एतानि चोक्तार्थानि सुप्रतीतानि तथापि किंचिदत्र विनेयजनानुग्रहाय वक्ष्यामि।

भा.[४६७६] पायपरिकम्मपाए उसह भेसज्ज देइ अच्छीणं।
अद्धाणे उवग्गेण्हइ रायदुट्ठे य नित्थारे ॥

वृ. पायत्ति पादपरिकर्म प्रमार्जनादि करोति यदि वा औषधं पाययन्ति। अच्छित्ति अक्ष्णो रोगे समुत्पन्ने भेषजं ददाति अध्वनी प्रतिपन्नान् उपगृह्णाति उपधिग्रहणो विश्रामणाकरणेन चोपष्टभ्राति। राजद्विष्टे समुत्पन्ने ततो निस्तारयति।

भा.[४६७७] सरीरेणवहि तेने हि सा रक्खति सति बलंमि संतंमि।
दडंग्गहणं कुणंतो गेलन्ने यावि जं जोग्गं ॥

वृ. शरीरस्तेनेभ्य उपधिस्तेनेभ्यश्च सति विद्यमाने बले सति विचारभूम्यादिभ्य आगतानां पर्यायादिवृद्धानां साधूनां दण्डग्रहणं करोति। ग्लानत्वे च जाते यत् योग्यं तत्सम्पादयति।

भा.[४६७८] उच्चारे पासवणे खेले मत्तयतिय त्तिविहमे य।
सव्वेसिं कायव्वं साहम्मिए तत्थिमो विसेसो ॥

वृ. उच्चारे प्रश्रवणे खेले श्लेष्मणि मात्रकत्रिकमेतत्। त्रयोदशपदात्मकं वैयावृत्त्यं त्रिविधं मनसा वाचा कायेन च सर्वेषामाचार्यादीनां दशानामपि कर्तव्यम् तत्रायं साधर्मिके विशेषस्तमेवाह-

भा.[४६७९] होज्ज गिलाणो निन्हवो न यत्थ विसेसं जाणइ जनो उ।
तुब्भेत्थं पव्वतितो न तरति किं न कुणह तस्स ॥

भा.[४६८०] ताहे मा उड्डाहो उत्ताहो तस्स फासुएणंति।
पडुयारेण करो निच्चो एत्ती एत्थ अह सीसो ॥

वृ. कोऽपि निन्हवः कोऽपि ग्लानो भवेत् न च तत्र जनो विशेषं जानाति एष निन्हव एते च सुसाधव इति ततो जनो ब्रूयात्-युष्माकमत्र प्रव्रजितो न तरति, न शक्नोति, तस्याः किन्तु कुरुत प्रतिजागरणं ततो मा भूत प्रवचनस्योड्डाह इति तस्यापि प्रासुकेन प्रत्यवतारेण भक्तपानादिना वैयावृत्त्यं करोति। अथानन्तरमत्र शिष्यश्चोदयति। किं तदित्याह-तित्थगरवेयावच्चं किं वा न होति निज्जरतहियं अहवेति आयरितो अत्र तीर्थकरवैयावृत्त्यं कस्मान्न भणितं किंनु न कर्तव्यं किं वा तत्र निर्जरा न भवति एवं शिष्येणोदितो अथानन्तरमाचार्यो ब्रवीति-

भा.[४६८१] आयरियग्गहणेण तित्थयरो तित्थ होइ गहिओ उ।
किं वा न होयायरिउ आयारं उवदिसंतो उ ॥

भा.[४६८२] निदरिसणत्थ जह खंदएण पुट्ठो य गोयमो भवयं।
केण उ तुज्झं सिट्ठंति धम्मायरिए पच्चाह ॥

वृ. आचार्यग्रहणेन तत्र दशानां मध्ये तीर्थकरो गृहीतो द्रष्टव्यः। अथ किं वा केन वा कारणेन न भवत्याचार्यो भवत्येवेति भावः। स्वयमाचारकरणं परेषामित्याचारोपदेशनमित्याचार्यशब्दप्रवृत्तिनिमित्तं ततः तीर्थकरेऽपि समस्तीति भवति तीर्थकरः। आचार्योऽत्र निदर्शनार्थं। यथा स्कन्दकेन भगवान् गौतमः पृष्टः-केनेदं तव शिष्टं कथितमिति। स प्रत्याह-धर्माचार्येणेति।

भा.[४६८३] तह्मा सिद्धं एयं आयरियगहणेण गहिय तित्थयरो।
आयरियादी दसवी तेरस गुण होंति कायव्वा ॥

भा.[४६८४] तीसु तरसयमेग ठाणण वन्निये तु सुत्तंमि।

वेयावच्चे सुविहियं निम्मं निव्वाणमग्गस्स ॥

**वृ.** यस्मात् युक्तिनिदर्शनं चास्ति तस्मात्सिद्धमेतत् आचार्यग्रहणेन तीर्थकरो गृहीतः। आचार्यादीनि च दशापि पदानि त्रयोदशगुणानि भवन्ति कर्तव्यानि। एकैकस्मिन् पदे त्रयोदशभिः पदैः वैयावृत्त्यकरणात्। एवं च सति वैयावृत्त्येवैयावृत्त्यविषये सूत्रे त्रिंशदुत्तरं स्थानानां शतं वर्णितं किं विशिष्टमित्याह-सुविहितानां प्रापणं निर्वाणमार्गस्य।

**भा.[४६८५]** ववहारे दसमए दसविह साहुस्स जुत्तजोग्गस्स।
एगंत निज्जरा से न हु नवरि कयम्मि सज्झाए ॥

**वृ.** व्यवहारे दशमे उद्देशके यद् दशविधं वैयावृत्त्यमुक्तं तस्मिन्साधोर्युक्तयोगस्यैकान्तनिर्जरा भवति। न हु नवरि केवलं स्वाध्याये कृते से तस्यैकान्तनिर्जरेति ॥

**भा.[४६८६]** एसोनुगमो भणितो अहुणा उ नउ सो य होइ दुविहो उ;
नाण नओ चरणनओ ते समासं तु वुच्छामि ॥

**वृ.** तदेवमेषोऽनुगमो भणितोऽधुना नयो वक्तव्यः। तत्र यद्यपि नयाः शतसंख्यास्तथापि ते सर्वे नयद्वये अन्तर्भवन्ति। तत्र आह- नयो द्विविधो भवति, ज्ञाननयश्चरणनयो नाम क्रियानयस्तयोः समासं संक्षेपं वक्ष्यामि। तमेवाह-

**भा.[४६८७]** नायंमि गिण्हियव्वे अगिण्हियव्वंमि चेव अत्थंमि।
जइयव्वमेव इई जो उवदेस सो नयो नाम ॥

**वृ.** ज्ञाने सम्यक् परिच्छिन्ने गृहीतव्ये उपादेये अग्रीहतव्येऽनुपादेये हेय इत्यर्थः। चशब्दः खलूभयो ग्रहीतव्याग्रहीतव्ययोरनुकर्षणार्थः उपेक्षणीयवस्तुसमुच्चार्थो वा एवकारस्त्ववधारणे। तस्य चैवं व्यवहितप्रयोगः। ज्ञात एव ग्रहीतव्ये अग्रहीतव्ये उपेक्षणीये च नाज्ञाते अर्थे ऐहिकामुष्मिकरूपे तत्र ऐहिको ग्रहीतव्यः स्रक् चन्दनादिः, अग्रहीतव्यो विषशस्त्रकंटकादिः, उपेक्षणीयस्तृणादिरामुष्मिको ग्रहीतव्यः सम्यग् दर्शनादिः, उपेक्षणीयो विवक्षया अभ्युदयादिस्तस्मिन्नर्थे यतितव्यमेवेति अनुस्वालोपात् एवममुनाक्रमेण ज्ञानपुरस्सरणरूपेण ऐहिकामुष्मिकफलप्राप्त्यर्थिना सत्वेन यतितव्यं प्रवृत्त्यादिलक्षणो यत्नः कार्यः। इत्थं चैतदङ्गीकर्तव्यं सम्यक् ज्ञानप्रवर्तमानस्य फलविसंवाद दर्शनात्तथा चोक्तमन्यैरपि 'विज्ञप्तिः फलदा पुंसा न क्रिया फलदा मता। मिथ्याज्ञानात् प्रवृत्तस्य, फलसंवाददर्शनात् ॥" तथा मुष्मिक फलनार्थिनापि ज्ञात एव यतितव्यमागमोऽपि तथा प्रतिपादनात्। उक्तं च- "पढमं नाणं ततो दया एवं चिट्ठइ सव्वसंजए। अन्नाणी किं काही किं वा नाहीच्छेयपावगं" ॥ इतश्चैतदेवमङ्गीकर्तव्यं यस्मात्तीर्थकरगणधरैरगीतार्थानां केवलानां विहारक्रियापि निषिद्धा। तथा चागमः-

**भा.[४६८८]** गीयत्थो अ विहारो बीइतो गीयत्थमीसितो भणितो।
एत्तो तइय विहारो नाणुन्नातो जिनवरेहिं ॥

**वृ.** न खल्वन्धेनान्धः समाकृष्यमाणः सम्यक्पन्थानं प्रतिपद्यते इत्यभिप्रायः। एवं तावत्क्षायोपशमिकं ज्ञानमाभिकृत्योक्तम्। क्षायिकमप्यङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव प्रतिपत्तव्यं। यस्मादर्हतोऽपि भवाम्भोधितटस्थस्य दीक्षाप्रतिपन्नस्य तपश्चरणवतोऽपि न तावदपवर्गप्राप्तिरुपजायते यावज्जीवाजीवाद्यखिलवस्तुपरिच्छेदरूपं केवलज्ञानं नोत्पन्नमिति तस्मात् ज्ञानमेव

प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितं, इति जोउवदेसो सो नयो नाम इति, एवमुक्तेन प्रकारेण य उपदेशो ज्ञानप्राधान्यख्यापनपरः स नयो नाम ज्ञाननय इत्यर्थः । उक्तो ज्ञाननयः । सम्प्रति क्रियानयावसरः । तद्दर्शनं चेदं क्रियैव ऐहिकामुष्मिकफलप्राप्तिकारणं प्रधानं युक्ति-युक्तत्वात् । तथा चायमप्युक्तस्वरूपामेव स्वपक्षसिद्धये गाथामाह - नायम्मि गिण्हियव्वे इत्यादि अस्याः क्रियानयदर्शनानुसारेण व्याख्या ज्ञाते गृहीतव्ये चार्थे ऐहिकामुष्मिकफलप्राप्ति कारणं अर्थिना यतितव्यमेव यस्मात् प्रवृत्त्यादिलक्षणप्रयत्नव्यतिरेकेण न ज्ञानवतोऽपि अभिलषितार्था-वाप्तिरुपजायते । तथा चोक्तमन्यैरपि-

क्रियैव फलदा पुंसां न ज्ञानं फलदं मतम् ।
यतः स्त्री भक्ष्यभोगज्ञो न ज्ञानात्सुखितो भवेत् ॥

तथा आमुष्मिकफलार्थिनापि क्रियैव कर्तव्या । तथा च भगवद्वचनमप्येवमेव व्यवस्थितं ।

चेइय कुलगणसंघे आयरियाण च पवयणसुए य ।
सव्वेसुवि तेन कयं तवसंजममुज्जमंतेन ॥

इतश्चेदमङ्गीकर्तव्यं यस्मात्तीर्थकरगणधरैः क्रियाविकलानां ज्ञानमपि विफलमेवोक्तम् ।

सुबहुंपी सुयमहियं किं काही चरणविप्पहीनस्स ।
अंधस्स जह पलित्ता दीवसयसहस्सकोडी वि ॥"

इति क्रिया विकलत्वात्तस्येत्यभिप्रायः । एवं तावत् क्षायोपशमिकं चारित्रमङ्गीकृत्योक्तं चारित्रं क्रियेत्यनर्थान्तरत्वात् । क्षायिकमङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव यस्मादर्हतो भगवतः समुत्पन्नकेवलज्ञानस्यापि तावन्मुक्त्यवाप्तिः संभवति यावदखिलकर्मेन्धनानल भूता ह्रस्व-पञ्चाक्षरोद्गरणकालमात्रा सर्वसंवररूपा चारित्रक्रिया नावाप्येत ततः क्रियैव प्रधानमैहिका-मुष्मिकफलप्राप्तिकारणमिति । इति जो उपदेसो सो नयो नाम इति एवमुक्तेन प्रकारेण यः उपदेशः क्रियाप्राधान्यख्यापनपरः स नयो नाम क्रियानयः इत्यर्थः । उक्तः क्रियानयः । इत्थं ज्ञाननयक्रियानयस्वरूपं श्रुत्वा विदिततदभिप्रायो विनेयः संशयापन्नः सन्नाह-किमत्र तत्त्वं पक्षद्वयेऽपि युक्तिसंभवात् । आचार्य सह--

भा.[४६८९] सव्वेसिं पि नयानं बहुविहवत्तव्वयं निसामित्ता ।
तं सव्वनयविसुद्धं जं चरणगुणठितो साहू ॥

वृ. सर्वेषामपि मूलनयानामपि शब्दात्तद्भेदानामपि नायानां द्रव्यास्तिकादीनां बहुविधवक्तव्यां सामान्यमेव विशेष एव उभयमेव परस्परनिरपेक्ष्यमित्यादिरूपाथवा नामादिनयानां मध्ये को नयः कं साधुमिच्छतीत्यादि रूपां निशम्य श्रुत्वा तत्सर्वनयविशुद्धं सर्वनयसम्मतं वचनं यच्चरणगुणस्थितश्चारित्रज्ञानस्थितः साधुर्यस्मात्सर्वे नया भावतो भावनिक्षेपमिच्छन्ति । तदेवं नयवक्तव्यतापि कृता भाष्यस्तुतिरायणमिदं गम्यकर्तृकत्वं गाथाद्वयम् -

कप्पववहाराणं भासं मुत्तूणं वित्थरं सव्वं ।
पुव्वायरिएहिं कयं सीसाणहिओवएसत्थं ॥
भवसयसहस्समहणं एवंतो यंति जे उ काहिति ।
कम्मरसयविप्पमुक्का मुक्खमविग्घेण गच्छंति ॥

देशक इव निर्दिष्टा विषमस्थानेषु तत्वमार्गस्य।
विदुषामतिप्रशस्यो जयति श्री चूर्णिकारोऽसौ ॥
विषयोऽपि व्यवहारो व्यधायि सुगमो गुरूपदेशेन।
यदवादि तत्र पुण्यं तेन जनः स्यात्सुगतिभागी ॥
दुर्बोधातपकष्ट, व्यपगमलब्धैकविमलकीर्तिभरः।
टीकामिमामकार्षीत् मलयगिरिः पेशलवचोभिः ॥
व्यवहारस्य भगवतो यथास्थितार्थप्रदर्शनदक्षं।
विवरणमिदं समाप्तं श्रमणगणानाममृतभूतम् ॥
जीयाद्वै सुगुरुः सदा मुनिवरो बोधिप्रदो मोहनो,
हर्षोमि व्रतदायकः सुचरणः पन्यासभूषावृतः;
माणिक्येन सुबोधशांतमनसा संशोधितं तेन यद्,
ध्यातव्यं व्यवहारसूत्रमिदमानंदप्रदं मुक्तये ॥

उद्देशकः-१० समाप्तः

मुनि दीपरत्नसागरेण संशोधिता सम्पादिता व्यवहार सूत्रस्य (भद्रबाहु स्वामि रचिता निर्युक्ति-युक्तं) संघदासगणि विरचितं भाष्यं एवं मलयगिरि आचार्य विरचिता टीका परिसमाप्ता।

| ३६ | तृतीयंछेदसूत्रं "व्यवहारं" समाप्तम् |
|---|---|

भागः-२१
पीठिका एवं उद्देशकाः १, २, ३

भागः-२२
उद्देशकाः ४-५-६-७-८-९-१०